# THE MAHÁBHÁRATA,

## AN EPIC POEM,

WRITTEN BY

## THE CELEBRATED VEDA VYA'SA RISHI.

## VOL. III.

CONTAINING

PART VIII.—KARNA PARVA.
IX.—SAILA PARVA.
X.—SAUPTIKA PARVA.
XI.—STRI PARVA.
XII.—SANTI PARVA.

EDITED AND CAREFULLY COLLATED WITH THE BEST MANUSCRIPTS IN THE LIBRARY OF THE SANSCRITA COLLEGE OF CALCUTTA, BY NIMACHAND SIROMANI AND JAYA GOPA'LA TRKALANKA, PANDITS OF THE COLLEGE, AND RA'MA GOVINDA, PANDIT TO THE ASIATIC SOCIETY,

AND

PUBLISHED BY THE ASIATIC SOCIETY OF BENGAL.

Calcutta:

PRINTED AT THE BAPTIST MISSION PRESS, CIRCULAR ROAD.

1837.

# श्रीमहाभारतं

श्रीमन्महर्षिवेदव्यासविरचिता

श्रीमन्महाभारतसंहिता

कर्णशैलसौप्तिकस्त्रीशान्तिपर्व्वघटितः

तृतीयखण्डः ।


साधारणविद्योत्कर्षार्थकसमितिधनव्ययेन मुद्रितुमारब्धस्तत्परित्यक्तत्वात्

गौडदेशीयाया एसियाटिकाख्यसभाया अनुज्ञया

कलिकाताख्यराजधान्यां तन्मुद्रायन्त्रालये

मुद्रितः

संस्कृतपाठशालाख्यपण्डिताभ्यां श्रीनिमाइचन्द्रशिरोमणिश्रीजयगोपालतर्कालङ्काराभ्यां

एसियाटिकाख्यसभाख्यपण्डितेन श्रीरामगोविन्दतर्करत्नेनापि

संशोधितश्च

शकाब्दाः १७५९

खृ० १८३७

# श्रीमहाभारतं

## ॥ कर्णपर्व्व ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं। देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्।

॥ वैशम्पायन उवाच ॥ ततो द्रोणे हते राजन् दुर्य्योधनमुखा नृपाः। भृशमुद्विग्नमनसो द्रोणपुत्त्रमुपागमन्।
ते द्रोणमनुशोचन्तः कश्मलाभिहतौजसः। पर्य्युपासन्त शोकार्त्तास्ततः शारद्वतीसुतं।
ते मुहूर्त्तं समाश्वस्य हेतुभिः शास्त्रसम्मितैः। रात्र्यागमे महीपालाः स्वानि वेश्मानि भेजिरे।
ते वेश्मस्वपि कौरव्य पृथ्वीशा नाप्नुवन् सुखं। चिन्तयन्तः क्षयं तीव्रं दुःखशोकसमन्विताः।
विशेषतः सूतपुत्त्रो राजा चैव सुयोधनः। दुःशासनश्च शकुनिः सौबलश्च महाबलः। ५
उषितास्ते निशान्तान्तु दुर्य्योधननिवेशने। चिन्तयन्तः परिक्लेशान् पाण्डवानां महात्मनां।
यत्तद्द्यूते परिक्लिष्टा कृष्णा चानयिता सभां। तत् स्मरन्तोऽनुशोचन्तो भृशमुद्विग्नचेतसः।
तथा तु सञ्चिन्तयतां तान् क्लेशान् द्यूतकारितान्। दुःखेन क्षणदा राजन् जगामाब्दशतोपमा।
ततः प्रभाते विमले स्थिता दिष्टस्य शासने। चक्रुरावश्यकं सर्व्वे विधिदृष्टेन कर्म्मणा।
ते कृत्वावश्यकार्य्याणि समाश्वस्य च भारत। योगमाज्ञापयामासुर्युद्धाय च विनिर्य्ययुः। १०
कर्णं सेनापतिं कृत्वा कृतकौतुकमङ्गलाः। पूजयित्वा द्विजश्रेष्ठान् दधिपात्रघृताक्षतैः।
निष्कैर्गोभिर्हिरण्यैश्च वासोभिश्च महाधनैः। वन्द्यमानं जयाशीर्भिः सूतमागधवन्दिभिः।
तथैव पाण्डवा राजन् कृतपूर्व्वाह्णिकक्रियाः। शिबिरान्निर्य्ययुस्तूर्णं युद्धाय कृतनिश्चयाः।
ततः प्रववृते युद्धं तुमुलं लोमहर्षणं। कुरूणां पाण्डवानाञ्च परस्परजयैषिणां।
तयोर्द्वौ दिवसौ युद्धं कुरुपाण्डवसेनयोः। कर्णे सेनापतौ राजन् अभूदद्भुतदर्शनं। १५
ततः शत्रुक्षयं कृत्वा सुमहान्तं रणे वृषः। पश्यतां धार्त्तराष्ट्राणां फाल्गुनेन निपातितः।
ततस्तु सञ्जयः सर्व्वं गत्वा नागपुरं द्रुतं। आचष्ट धृतराष्ट्राय यद्वृत्तं कुरुजाङ्गले।
॥ जनमेजय उवाच ॥ आपगेयं हतं श्रुत्वा द्रोणञ्चापि महारथं। आजगाम परामार्त्तिं वृद्धो राजाऽम्बिकासुतः।
स श्रुत्वा निहतं कर्णं दुर्य्योधनहितैषिणं। कथं द्विजवर प्राणानधारयत दुःखितः।

यस्मिन् जयाशा पुत्त्राणां सममन्यत पार्थिवः । तस्मिन् हते स कौरव्यः कथं प्राणानधारयत् । २०
दुर्म्मरतमहं मन्ये नृणां कृच्छ्रेऽपि वर्त्ततां । यत्र कर्णं हतं श्रुत्वा नात्यजज्जीवितं नृपः ।
तथा शान्तनवं वृद्धं ब्रह्मन् वाह्लीकमेव च । द्रोणञ्च सोमदत्तञ्च भूरिश्रवसमेव च ।
तथैव चान्यान् सुहृदः पुत्त्रान् पौत्त्रांश्च पातितान् । श्रुत्वा यन्नाजहत्प्राणांस्तन्मन्ये दुष्करं द्विज ।
एतन्मे सर्व्वमाचक्ष्व विस्तरेण महामुने । नहि तृप्यामि सर्व्वेषां शृण्वानश्चरितं महत् ।

इति श्रीमहाभारते कर्णपर्व्वणि जनमेजयवाक्यं नाम प्रथमोध्यायः ॥ १ ॥

॥ वैशम्पायन उवाच ॥ हते कर्णे महाराज निशि गावल्गणिस्तदा । दीनो ययौ नागपुरमश्वैर्व्वातसमैर्ज्जवे । २५
स हास्तिनपुरं गत्वा भृशमुद्विग्नचेतनः । जगाम धृतराष्ट्रस्य क्षयं प्रक्षीणबान्धवं ।
स तमुद्वीक्ष्य राजानं कश्मलाभिहतौजसं । ववन्दे प्राञ्जलिर्भूत्वा मूर्द्ध्ना पादौ नृपस्य ह ।
सम्पूज्य च यथान्यायं धृतराष्ट्रं महीपतिं । हाकष्टमिति चोक्त्वा स ततो वचनमाददे ।
सञ्जयोऽहं क्षितिपते कच्चिदास्से सुखं भवान् । स्वदोषैरापदं प्राप्य कच्चिन्नाद्य विमुह्यसि ।
हितान्युक्तानि विदुरद्रोणगाङ्गेयकेशवैः । अगृहीतान्यनुस्मृत्य कच्चिन्न कुरुषे व्यथां । ३०
रामनारदकण्वाद्यैर्हितमुक्तं सभातले । न गृहीतमनुस्मृत्य कच्चिन्न कुरुषे व्यथां ।
सुहृदस्त्वद्धिते युक्तान् भीष्मद्रोणमुखान् परैः । निहतान् युधि संस्मृत्य कच्चिन्न कुरुषे व्यथां ।
तमेवंवादिनं राजा सूतपुत्त्रं कृताञ्जलिं । सुदीर्घमथ निःश्वस्य दुःखार्त्त इदमब्रवीत् ।
॥ धृतराष्ट्र उवाच ॥ आपगेये हते शूरे दिव्यास्त्रवति सञ्जय । द्रोणे च परमेष्वासे भृशं मे व्यथितं मनः ।
यो रथानां सहस्राणि दंशितानां दशैव तु । अहन्यहनि तेजस्वी निजघ्ने वसुसम्भवः । ३५
तं हतं यज्ञसेनस्य पुत्त्रेणेह शिखण्डिना । पाण्डवेयाभिगुप्तेन श्रुत्वा मे व्यथितं मनः ।
भार्गवः प्रददौ यस्मै परमास्त्रं महाहवे । साक्षाद्रामेण यो बाल्ये धनुर्व्वेद उपाकृतः ।
यस्य प्रसादात् कौन्तेयराजपुत्त्रा महारथाः । महारथत्वं संप्राप्तास्तथाऽन्ये वसुधाधिपाः ।
तं द्रोणं निहतं श्रुत्वा धृष्टद्युम्नेन संयुगे । सत्यसन्धं महेष्वासं भृशं मे व्यथितं मनः ।
ययोर्लोके पुमानस्ते न समोऽस्ति चतुर्विधे । तौ द्रोणभीष्मौ श्रुत्वा तु हतौ मे व्यथितं मनः । ४०
त्रैलोक्ये यस्य चास्त्रेषु न पुमान् विद्यते समः । तं द्रोणं निहतं श्रुत्वा किमकुर्व्वत मामकाः ।
संशप्तकानाञ्च बले पाण्डवेन महात्मना । धनञ्जयेन विक्रम्य गमिते यमसादनं ।
नारायणास्त्रे च हते द्रोणपुत्त्रस्य धीमतः । विप्रद्रुतेष्वनीकेषु किमकुर्व्वत मामकाः ।
विप्रद्रुतानहं मन्ये निमग्नान् शोकसागरे । प्लवमानान् हते द्रोणे सन्ननौकानिवार्णवे ।
दुर्य्योधनस्य कर्णस्य भोजस्य कृतवर्म्मणः । मद्रराजस्य शल्यस्य द्रौणेश्चैव कृपस्य च । ४५
मत्पुत्त्रस्य च शेषस्य तथान्येषाञ्च सञ्जय । विप्रद्रुतेष्वनीकेषु मुखवर्णोऽभवत्कथं ।
एतत्सर्व्वं यथावृत्तं यथा गावल्गणे मम । आचक्ष्व पाण्डवेयानां मामकानाञ्च विक्रमं ।
॥ सञ्जय उवाच ॥ तवापराधाद्यद्वृत्तं कौरवेयेषु मारिष । तत् श्रुत्वा मा व्यथां कार्षीर्दिष्टे न व्यथते बुधः ।

तस्मादभावी भावी वा भवेदर्थो नरं प्रति । अप्राप्तौ तस्य वा प्राप्तौ न कश्चिद्व्यथते बुधः ।
॥ धृतराष्ट्र उवाच ॥ न व्यथाभ्यधिका काचित् विद्यते मम सञ्जय । दिष्टमेतत् पुरा मन्ये कथयस्व यथेच्छकं । ५०
इति श्रीमहाभारते कर्णपर्व्वणि सञ्जयधृतराष्ट्रसंवादे द्वितीयोऽध्यायः ॥ २ ॥
॥ सञ्जय उवाच ॥ हते द्रोणे महेष्वासे तव पुत्त्रा महारथाः । बभूवुरस्वस्थमुखा विषण्णा गतचेतसः ।
अवाङ्मुखाः शस्त्रभृतः सर्व्व एव विशाम्पते । अवेक्षमाणाः शोकार्त्ता नाभ्यभाषन् परस्परं ।
तान् दृष्ट्वा व्यथिताकारान् सैन्यानि तव भारत । ऊर्द्ध्वमेव निरैक्षन्त दुःखत्रस्तान्यनेकशः ।
शस्त्राण्येषान्तु राजेन्द्र शोणिताक्तानि सर्व्वशः । प्राभ्रश्यन्त कराग्रेभ्यो दृष्ट्वा द्रोणं हतं युधि ।
तानि बद्धान्यरिष्टानि लम्बमानानि भारत । अदृश्यन्त महाराज नक्षत्राणि यथा दिवि । ५५
तथा तु स्तिमितं दृष्ट्वा गतसत्त्वमिव स्थितं । बलं तव महाराज राजा दुर्य्योधनोऽब्रवीत् ।
भवतां बाहुवीर्य्यञ्च समाश्रित्य मया युधि । पाण्डवेयाः समाहूता युद्धञ्चेदं प्रवर्त्तितं ।
तदिदं निहते द्रोणे विषण्णमिव लक्ष्यते । युध्यमानाश्च समरे योधा वध्यन्ति सर्व्वशः ।
जयो वाऽपि वधो वाऽपि युध्यमानस्य संयुगे । भवेत् किमत्र चित्रं वै युध्यध्वं सर्व्वतोमुखाः ।
पश्यध्वञ्च महात्मानं कर्णं वैकर्त्तनं युधि । प्रचरन्तं महेष्वासं दिव्यैरस्त्रैर्म्महाबलं । ६०
यस्य वै युधि सन्त्रासात् कुन्तीपुत्त्रो धनञ्जयः । निवर्त्तते सदा मन्दः सिंहात् क्षुद्रमृगो यथा ।
येन नागायुतप्राणो भीमसेनो महाबलः । मानुषेणैव युद्धेन तामवस्थां प्रवेशितः ।
येन दिव्यास्त्रविच्छूरो मायावी स घटोत्कचः । अमोघया रणे शक्त्या निहतो भैरवान्नदन् ।
तस्य दुर्व्वारवीर्य्यस्य सत्यसन्धस्य धीमतः । बाह्वोर्द्रविणमक्षय्यमद्य द्रक्ष्यथ संयुगे ।
द्रोणपुत्त्रस्य विक्रान्तं राधेयस्यैव चोभयोः । पश्यन्तु पाण्डुपुत्त्रास्ते विष्णुवासवयोरिव । ६५
सर्व्व एव भवन्तश्च शक्ताः प्रत्येकशोऽपि वा । पाण्डुपुत्त्रान् रणे हन्तुं ससैन्यान् किमु संहताः ।
वीर्य्यवन्तः कृतास्त्राश्च द्रक्ष्यथाद्य परस्परं ।
॥ सञ्जय उवाच ॥ एवमुक्त्वा ततः कर्णं चक्रे सेनापतिं तदा । तव पुत्त्रो महावीर्य्यो भ्रातृभिः सहितोऽनघ ।
सैनापत्यमवाप्याथ कर्णो राजन् महारथः । सिंहनादं विनद्योच्चैः प्रायुध्यत रणोत्कटः ।
स सृञ्जयानां सर्व्वेषां पाञ्चालानाञ्च मारिष । केकयानां विदेहानां चकार कदनं महत् । ७०
तस्येषुधाराः शतशः प्रादुरासन् शरासनात् । अग्रे पुङ्खेषु संसक्ता यथा भ्रमरपङ्क्तयः ।
स पीडयित्वा पाञ्चालान् पाण्डवांश्च तरस्विनः । हत्वा सहस्रशो योधानर्ज्जुनेन निपातितः ।
इति श्रीमहाभारते कर्णपर्व्वणि संजयवाक्ये तृतीयोऽध्यायः ॥ ३ ॥
॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा महाराज धृतराष्ट्रो ऽम्बिकासुतः । शोकस्यान्तमपश्यन् वै हतं मेने सुयोधनं ।
विह्वलः पतितो भूमौ नष्टचेता इव द्विपः । तस्मिन्निपतिते भूमौ विह्वले राजसत्तमे ।
आर्त्तनादो महानासीत् स्त्रीणां भरतसत्तम । स शब्दः पृथिवीं कृत्स्नां पूरयामास सर्व्वशः । ७५
शोकार्णवे महाघोरे निमग्ना भरतस्त्रियः । रुरुदुर्दुःखशोकार्त्ता भृशमुद्विग्नचेतसः ।

राजानञ्च समासाद्य गान्धारी भरतर्षभ। निःसंज्ञा पतिता भूमौ सर्व्वाण्यन्तःपुराणि च।
ततस्ताः सञ्जयो राजन् समाश्वासयदातुराः। मुह्यमानाः सुबहुशो मुञ्चन्तीर्व्वारि नेत्रजं।
समाश्वस्तास्त्रियस्तास्तु वेपमाना मुहुर्म्मुहुः। कदल्य इव वातेन धूयमानाः समन्ततः।
राजानं विदुरश्चापि प्रज्ञाचक्षुषमीश्वरं। आश्वासयामास तदा सिञ्चंस्तोयेन कौरवं। ८०
स लब्ध्वा शनकैः संज्ञां ताश्च दृष्ट्वा स्त्रियो नृपः। उन्मत्त इव राजेन्द्र स्थितस्तूष्णीं विशाम्पते।
ततो ध्यात्वा चिरं कालं निःश्वस्य च पुनः पुनः। स्वान् पुत्त्रान् गर्हयामास बहु मेने च पाण्डवान्।
गर्हयंश्चात्मनो बुद्धिं शकुनेः सौवलस्य च। ध्यात्वा तु सुचिरं कालं वेपमानो मुहुर्म्मुहुः।
संस्तभ्य च मनो भूयो राजा धैर्य्यसमन्वितः। पुनर्गावल्गणिं सूतं पर्य्यपृच्छत सञ्जयं।
यत्त्वया कथितं वाक्यं श्रुतं सञ्जय तन्मया। कच्चिद्दुर्य्योधनः सूत न गतो वै यमक्षयं। ८५
जये निराशः पुत्त्रो मे सततं जयकामुकः। ब्रूहि सञ्जय तत्त्वेन पुनरुक्तां कथामिमां।
एवमुक्तोऽब्रवीत्सूतो राजानं जनमेजय। हतो वैकर्त्तनो राजन् सह पुत्त्रैर्म्महारथः।
भ्रातृभिश्च महेष्वासैः सूतपुत्त्रैस्तनुत्यजैः। दुःशासनश्च निहतः पाण्डवेन यशस्विना।
पीतञ्च रुधिरं कोपाद्भीमसेनेन संयुगे।
इति श्रीमहाभारते कर्णपर्व्वणि धृतराष्ट्रशोको नाम चतुर्थोऽध्यायः॥ ४ ॥
॥ वैशम्पायन उवाच ॥ इति श्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः। अब्रवीत्सञ्जयं सूतं शोकसंविग्नमानसः। ९०
दुष्प्रणीतेन मे तात पुत्त्रस्यादीर्घदर्शिनः। हतं वैकर्त्तनं श्रुत्वा शोको मर्म्माणि कृन्तति।
तस्य मे संशयं छिन्धि दुःखपारं तितीर्षतः। कुरूणां सृञ्जयानाञ्च के च जीवन्ति के मृताः।
॥ सञ्जय उवाच ॥ हतः शान्तनवो राजन् दुराधर्षः प्रतापवान्। हत्वा पाण्डवयोधानामर्व्वुदं दशभिर्द्दिनैः।
तथा द्रोणो महेष्वासः पाञ्चालानां रथव्रजान्। निहत्य युधि दुर्द्धर्षः पश्चाद्रुक्मरथो हतः।
हतशेषस्य भीष्मेण द्रोणेन च महात्मना। अर्द्धं निहत्य सैन्यस्य कर्णो वैकर्त्तनो हतः। ९५
विविंशतिर्म्महाराज राजपुत्त्रो महाबलः। आनर्त्तयोधान् शतशो निहत्य निहतो रणे।
तथा पुत्त्रो विकर्णस्ते क्षत्त्रव्रतमनुस्मरन्। क्षीणवाहायुधः शूरः स्थितोऽभिमुखतः परान्।
घोररूपान् परिक्लेशान् दुर्य्योधनकृतान् बहून्। प्रतिज्ञां स्मरता चैव भीमसेनेन पातितः।
विन्दानुविन्दावावन्त्यौ राजपुत्त्रौ महारथौ। कृत्वा त्वसुकरं कर्म्म गतौ वैवस्वतक्षयं।
सिन्धुराष्ट्रमुखानीह दशराष्ट्राणि यानि ह। वशे तिष्ठन्ति वीरस्य यः स्थितस्तव शासने। १००
अक्षौहिणीर्दशैकाञ्च विनिर्ज्जित्य शितैः शरैः। अर्ज्जुनेन हतो राजन् महावीर्य्यो जयद्रथः।
तथा दुर्य्योधनसुतस्तरस्वी युद्धदुर्म्मदः। वर्त्तमानः पितुः शास्त्रे सौभद्रेण निपातितः।
तथा दौःशासनिः शूरो बाहुशाली रणोत्कटः। द्रौपदेयेन संगम्य गमितो यमसादनं।
किरातानामधिपतिः सागरानूपवासिनां। देवराजस्य धर्म्मात्मा प्रियो बहुमतः सखा।
भगदत्तो महीपालः क्षत्त्रधर्म्मरतः सदा। धनञ्जयेन विक्रम्य गमितो यमसादनं। १०५

तथा कौरवदायादो न्यस्तशस्त्रो महायशाः। हतो भूरिश्रवा राजन् शूरः सात्यकिना युधि।
श्रुतायुरपि चाम्बष्ठः क्षत्रियाणां धुरन्धरः। चरन्नभीतवत् संख्ये निहतः सव्यसाचिना।
तव पुत्रः सदामर्षी कृतास्त्रो युद्धदुर्म्मदः। दुःशासनो महाराज भीमसेनेन पातितः।
यस्य राजन् गजानीकं बहुसाहस्रमद्भुतं। सुदक्षिणः स संग्रामे निहतः सव्यसाचिना।
कोशलानामधिपतिर्हत्वा बहुमतान् परान्। सौभद्रेणेह विक्रम्य गमितो यमसादनं। ११०
बहुशो योधयित्वा तु भीमसेनं महारथं। चित्रसेनस्तव सुतो भीमसेनेन पातितः।
मद्रराजात्मजः शूरः परेषां भयवर्द्धनः। असिचर्म्मधरः श्रीमान् सौभद्रेण निपातितः।
समः कर्णस्य समरे यः स कर्णस्य पश्यतः। वृषसेनो महातेजाः शीघ्रास्त्रो दृढविक्रमः।
अभिमन्योर्व्वधं श्रुत्वा प्रतिज्ञामपि चात्मनः। धनञ्जयेन विक्रम्य गमितो यमसादनं।
नित्यं प्रसक्तवैरो यः पाण्डवैः पृथिवीपतिः। विश्राव्य वैरं पार्थेन श्रुतायुः स निपातितः। ११५
शल्यपुत्रस्तु विक्रान्तः सहदेवेन मारिष। हतो रुक्मरथो राजन् भ्राता मातुलजो युधि।
राजा भगीरथो वृद्धो वृहत्क्षत्रश्च केकयः। पराक्रमन्तौ विक्रान्तौ निहतौ वीर्य्यवत्तरौ।
भगदत्तसुतो राजन् कृतप्रज्ञो महाबलः। श्येनवच्चरता संख्ये नकुलेन निपातितः।
पितामहस्तव तथा वाह्लिकः सह वाह्लिकैः। निहतो भीमसेनेन महाबलपराक्रमः।
जयत्सेनस्तथा राजन् जारासन्धिर्म्महाबलः। मागधो निहतः संख्ये सौभद्रेण महात्मना। १२०
पुत्रस्ते दुर्म्मुखो राजन् दुःसहश्च महारथः। गदया भीमसेनेन निहतौ शूरमानिनौ।
दुर्म्मर्षणो दुर्विषहो दुर्ज्जयश्च महारथः। कृत्वा त्वसुकरं कर्म्म गतो वैवस्वतक्षयं।
उभौ कलिङ्गवृषकौ भ्रातरौ युद्धदुर्म्मदौ। कृत्वा चासुकरं कर्म्म गतौ वैवस्वतक्षयं।
सचिवो वृषवर्म्मा ते शूरः परमवीर्य्यवान्। भीमसेनेन विक्रम्य गमितो यमसादनं।
तथैव पौरवो राजा नागायुतबलो महान्। समरे पाण्डुपुत्रेण निहतः सव्यसाचिना। १२५
वसातयो महाराज द्विसहस्राः प्रहारिणः। शूरसेनाश्च विक्रान्ताः सर्व्वे युधि निपातिताः।
अभीषाहाः कवचिनः प्रहरन्तो रणोत्कटाः। शिवयश्च रथोदाराः कलिङ्गसहिता हताः।
गोकुले नित्यसंवृद्धा युद्धे परमकोपनाः। तेऽपावृत्तकवीराश्च निहताः सव्यसाचिना।
श्रेणयो बहुसाहस्राः संशप्तकगणाश्च ये। ते सर्व्वे पार्थमासाद्य गता वैवस्वतक्षयं।
स्यालौ तव महाराज राजानौ वृषकाचलौ। त्वदर्थमतिविक्रान्तौ निहतौ सव्यसाचिना। १३०
उग्रकर्म्मा महेष्वासो नामतः कर्म्मतस्तथा। शाल्वराजो महाबाहुर्भीमसेनेन पातितः।
ओघवांश्च महाराज वृहन्तः सहितौ रणे। पराक्रमन्तौ मित्रार्थे गतौ वैवस्वतक्षयं।
तवैव रथिनां श्रेष्ठः क्षेमधूर्त्तिर्विशाम्पते। निहतो गदया राजन् भीमसेनेन संयुगे।
तथा राजन्महेष्वासो जलसन्धो महाबलः। सुमहत् कदनं कृत्वा हतः सात्यकिना रणे।
अलम्बुषो राक्षसेन्द्रः खरबन्धुरयानवान्। घटोत्कचेन विक्रम्य गमितो यमसादनं। १३५

राधेयः सूतपुत्रश्च भ्रातरश्च महारथाः । केकयाः सर्वशश्चापि निहताः सव्यसाचिना ।
मालवा मद्रकाश्चैव द्राविडाश्चोग्रकर्मिणः । यौधेयाश्च ललित्थाश्च क्षुद्रकाश्चाप्युशीनराः ।
मावेल्लकास्तुण्डिकेराः सावित्रीपुत्रकाश्च ये । प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याश्च मारिष ।
पत्तीनां निहताः सङ्घा हयानामयुतानि च । रथव्रजाश्च निहता हताश्च वरवारणाः ।
सध्वजाः सायुधाः शूराः सवर्माम्बरभूषणाः । कालेन महता यत्ताः कुलैर्ये च विवर्द्धिताः । १४०
ते हताः समरे राजन् पार्थेनाक्लिष्टकर्मणा । अन्ये तथाऽमितबलाः परस्परवधैषिणः ।
एते चान्ये च बहवो राजानः सगणा रणे । हताः सहस्रशो राजन् यन्मां त्वं परिपृच्छसि ।
एवमेष क्षयो वृत्तः कर्णार्जुनसमागमे । महेन्द्रेण यथा वृत्रो यथा रामेण रावणः ।
यथा कृष्णेन नरको मुरश्च निहतो रणे । कार्तवीर्यश्च रामेण भार्गवेण यथा हतः ।
सज्ञातिबान्धवः शूरः समरे युद्धदुर्मदः । रणे कृत्वा महायुद्धं घोरं त्रैलोक्यमोहनं । १४५
यथा स्कन्देन महिषो यथा रुद्रेण चान्धकः । तथाऽर्जुनेन स हतो द्वैरथे युद्धदुर्मदः ।
सामात्यबान्धवो राजन् कर्णः प्रहरतां वरः । जयाशा धार्त्तराष्ट्राणां वैरस्य च मुखं यतः ।
तीर्णं तत् पाण्डवो राजन् यत् पुरा नावबुध्यसे । उच्यमानो महाराज बन्धुभिर्हितकाङ्क्षिभिः ।
तदिदं समनुप्राप्तं व्यसनं सुमहात्ययं । पुत्राणां राज्यकामानां त्वया राजन् हितैषिणा ।
अहितान्येव चीर्णानि तेषां तत्फलमागतं । १५०

इति श्रीमहाभारते कर्णपर्वणि सञ्जयवाक्ये पञ्चमोऽध्यायः ॥ ५ ॥

॥ धृतराष्ट्र उवाच ॥ आख्याता मामकास्तात निहता युधि पाण्डवैः । हतांश्च पाण्डवेयानां मामकैर्ब्रूहि सञ्जय ।
॥ सञ्जय उवाच ॥ कुन्तयो युधि विक्रान्ता महासत्त्वा महाबलाः । सानुबन्धाः सहामात्या गाङ्गेयेन निपातिताः ।
नारायणा बालभद्राः शूराश्च शतशोऽपरे । अनुरक्ताश्च वीरेण भीष्मेण युधि शातिताः ।
समः किरीटिना संख्ये वीर्येण च बलेन च । सत्यजित् सत्यसन्धेन द्रोणेन निहतो युधि ।
पाञ्चालानां महेष्वासाः सर्वे युद्धविशारदाः । द्रोणेन सह संगम्य गता वैवस्वतक्षयं । १५५
तथा विराटद्रुपदौ वृद्धौ ससुतौ नृपौ । पराक्रमन्तौ मित्रार्थे द्रोणेन निहतौ रणे ।
यो बाल एव समरे संमितः सव्यसाचिना । केशवेन च दुर्द्धर्षो बलदेवेन वा विभो ।
परेषां कदनं कृत्वा महारथविशारदः । परिवार्य महामात्रैः षड्भिः परमकै रथैः ।
अशक्नुवद्भिर्बीभत्सुमभिमन्युर्निपातितः । कृतं तं विरथं वीरं क्षत्रधर्मे व्यवस्थितं ।
दौःशासनिर्महाराज सौभद्रं हतवान् रणे । सपत्नानां निहन्ता च महत्या सेनया वृतः । १६०
अम्बष्ठस्य सुतः श्रीमान् मित्रहेतोः पराक्रमन् । आसाद्य लक्ष्मणं वीरं दुर्योधनसुतं रणे ।
सुमहत् कदनं कृत्वा गतो वैवस्वतक्षयं । बृहन्तः सुमहेष्वासः कृतास्त्रो युद्धदुर्मदः ।
दुःशासनेन विक्रम्य गमितो यमसादनं । मणिमान् दण्डधारश्च राजानौ युद्धदुर्मदौ ।
पराक्रमन्तौ मित्रार्थे द्रोणेन युधि पातितौ । अंशुमान् भोजराजश्च सहसैन्यो महारथः ।

भारद्वाजेन विक्रम्य गमितो यमसादनं । सामुद्रश्चित्रसेनश्च सह पुत्रेण भारत ।    १९५
समुद्रसेनेन बलात् गमितो यमसादनं । अनूपवासी नीलश्च व्याघ्रदत्तश्च वीर्य्यवान् ।
अश्वत्थाम्ना विकर्णेन गमितो यमसादनं । चित्रायुधश्चित्रयोधी कृत्वा च कदनं महत् ।
चित्रमार्गेण विक्रम्य विकर्णेन हतो मृधे । वृकोदरसमो युद्धे वृतः कैकेययोधिभिः ।
कैकेयेन च विक्रम्य भ्राता भ्रात्रा निपातितः । जनमेजयो गदायोधी पार्व्वतीयः प्रतापवान् ।
दुर्मुखेन महाराज तव पुत्रेण पातितः । रोचमानौ नरव्याघ्रौ रोचमानौ ग्रहाविव ।    २००
द्रोणेन युगपद्राजन् दिवं संप्रापितौ शरैः । नृपाश्च प्रतियुध्यन्तः पराक्रान्ता विशाम्पते ।
कृत्वा न सुकरं कर्म गता वैवस्वतक्षयं । पुरुजित् कुन्तिभोजश्च मातुलौ सव्यसाचिनः ।
संग्रामनिर्जितान् लोकान् गमितौ द्रोणसायकैः । अभिभूः काशिराजश्च काशिकैर्बहुभिर्वृतः ।
वसुदानस्य पुत्रेण न्यासितो देहमाहवे । अमितौजा युधामन्युरुत्तमौजाश्च वीर्य्यवान् ।
निहत्य शतशः शूरानस्मदीयैर्न्निपातिताः । मित्रवर्म्मा च पाञ्चाल्यः क्षत्रधर्म्मा च भारत ।    २०५
द्रोणेन परमेष्वासौ गमितौ यमसादनं । शिखण्डितनयो युद्धे क्षत्रदेवो युधाम्पतिः ।
लक्ष्मणेन हतो राजन् तव पौत्रेण भारत । सुचित्रश्चित्रवर्म्मा च पितापुत्रौ महारथौ ।
प्रचरन्तौ महावीरौ द्रोणेन निहतौ रणे । वार्द्धक्षेमिर्म्महाराज समुद्र इव पर्व्वणि ।
आयुधक्षयमासाद्य प्रशान्तिं परमां गतः । सेनाबिन्दुसुतःश्रेष्ठः शस्त्रवान् प्रवरो युधि ।
वाह्लीकेन महाराज कौरवेन्द्रेण पातितः । धृष्टकेतुर्म्महाराज चेदीनां प्रवरो रथः ।    २१०
कृत्वा न सुकरं कर्म्म गतो वैवस्वतक्षयं । तथा सत्यधृतिर्व्वीरः कृत्वा कदनमाहवे ।
पाण्डवार्थे पराक्रान्तो गमितो यमसादनं । सेनाबिन्दुः कुरुश्रेष्ठः कृत्वा कदनमाहवे ।
पुत्रस्तु शिशुपालस्य सुकेतुः पृथिवीपतिः । निहत्य शात्रवान् संख्ये द्रोणेन निहतो युधि ।
तथा सत्यधृतिर्व्वीरो मदिराश्वश्च वीर्य्यवान् । सूर्य्यदत्तश्च विक्रान्तो निहतो द्रोणसायकैः ।
श्रेणिमांश्च महाराज युध्यमानः पराक्रमी । कृत्वा नसुकरं कर्म्म गतो वैवस्वतक्षयं ।    २१५
तथैव युधि विक्रान्तो मगधः परमास्त्रवित् । भीष्मेण निहतो राजन् शेतेऽद्य परवीरहा ।
विराटपुत्रः शङ्खस्तु उत्तरश्च महारथः । कुर्व्वन्तौ सुमहत् कर्म्म गतौ वैवस्वतक्षयं ।
वसुदानश्च कदनं कुर्व्वाणोऽतीव संयुगे । भरद्वाजेन विक्रम्य गमितो यमसादनं ।
एते चान्ये च बहवः पाण्डवानां महारथाः । हता द्रोणेन विक्रम्य यन्मां त्वं परिपृच्छसि ।
इति श्रीमहाभारते कर्णपर्व्वणि सञ्जयवाक्ये षष्ठोऽध्यायः ॥ ६ ॥
॥ धृतराष्ट्र उवाच ॥ मामकस्यास्य सैन्यस्य हतश्रेष्ठस्य सञ्जय । अवशेषं न पश्यामि ककुदे मृदिते सति ।    २१८
तौ हि वीरौ महेष्वासौ मदर्थे कुरुसत्तमौ । भीष्मद्रोणौ हतौ श्रुत्वा कोऽन्वर्थो जीवितेऽद्य मे ।
न पश्यामि च राधेयं हतमाहवशोभिनं । यस्य बाह्वोर्बलं तुल्यं कुञ्जराणां शतं शतं ।
हतप्रवरसैन्यं मे यथा शंससि सञ्जय । अहो तानपि मे शंस केऽत्र जीवन्ति के च न ।

एतेषु हि हतेष्वद्य ये त्वया परिकीर्त्तिताः। येऽपि जीवन्ति ते सर्व्वे हता इति मतिर्मम।

॥ सञ्जय उवाच ॥ यस्मिन्महास्त्राणि समर्पितानि चित्राणि शुभ्राणि चतुर्विधानि। दिव्यानि राजन् विहितानि चैव द्रोणेन वीरे द्विजसत्तमेन। १९५

महारथः कृतिमान् क्षिप्रहस्तो दृढायुधो दृढमुष्टिर्दृढेषुः। स वीर्य्यवान् द्रोणपुत्रस्तरस्वी व्यवस्थितो योद्धुकामस्त्वदर्थे।

आनर्त्तवासी हृदिकात्मजोऽसौ महारथः सात्वतानां वरिष्ठः। स्वयं भोजः कृतवर्म्मा कृतास्त्रो व्यवस्थितो योद्धुकामस्त्वदर्थे।

आर्त्तायनिः समरे दुःप्रकम्प्यः सेनाग्रणीः प्रथमस्तावकानां। यः स्वस्रीयान् पाण्डवेयान् विसृज्य सत्या वाचं तां चिकीर्षुस्तरस्वी।

तेजो वधं सूतपुत्रस्य संख्ये प्रतिश्रुत्याजातशत्रोः पुरस्तात्। दुराधर्षः शक्रसमानवीर्य्यः शल्यः स्थितो योद्धुकामस्त्वदर्थे।

आजानेयैः सैन्धवैः पार्वतीयैर्नदीजकाम्बोजवनायुजैश्च। गान्धारराजः स्वबलेन युक्तो व्यवस्थितो योद्धुकामस्त्वदर्थे। २००

शारद्वतो गौतमश्चापि राजन् महाबाहुर्ब्बहुचित्रास्त्रयोधी। धनुश्चित्रं सुमहद्भारसाहं व्यवस्थितो योद्धुकामस्त्वदर्थे।

महारथः कैकयराजपुत्रः सदश्वयुक्तश्च पताकिनश्च। रथं समारुह्य कुरुप्रवीर व्यवस्थितो योद्धुकामस्त्वदर्थे।

तथा सुतस्ते ज्वलनार्कवर्णं रथं समास्थाय कुरुप्रवीरः। व्यवस्थितः पुरुमित्रो नरेन्द्र व्यभ्रे सूर्य्यो भ्राजमानो यथा खे।

दुर्य्योधनो नागकुलस्य मध्ये व्यवस्थितः सिंह इवावभासे। रथेन जाम्बूनदभूषणेन व्यवस्थितः समरे योत्स्यमानः।

स राजमध्ये पुरुषप्रवीरो रराज जाम्बूनदचित्रवर्म्मा। पद्मप्रभो वह्निरिवाल्पधूमो मेघान्तरे सूर्य्य इव प्रकाशः। २०५

तथा सुषेणोऽप्यसिचर्म्मपाणिस्तवात्मजः सत्यसेनश्च वीरः। व्यवस्थितौ चित्रसेनेन सार्द्धं हृष्टात्मानौ समरे योद्धुकामौ।

ह्रीनिषेवो भारतराजपुत्र उग्रायुधः क्षणभोजी सुदर्शः। जारासन्धिः प्रथमश्चादृढश्च चित्रायुधः श्रुतिवर्म्मा जयश्च।

शलश्च सत्यव्रतदुःशलौ च व्यवस्थिताः सहसैन्या नराग्र्याः। कैतव्यानामधिपः शूरमानी रणे रणे शत्रुहा राजपुत्रः।

रथी हयी नागपत्तिप्रयायी व्यवस्थितो योद्धुकामस्त्वदर्थे। वीरः श्रुतायुश्च धृतायुधश्च चित्राङ्गदश्चित्रसेनश्च वीरः।

व्यवस्थिताः सहसैन्या नराग्र्याः प्रहारिणो मानिनः सत्यसन्धाः। कर्णात्मजः सत्यसन्धो महात्मा व्यवस्थितः समरे योद्धुकामः। २१०

तथापरौ कर्णसुतौ वरास्त्रौ व्यवस्थितौ लघुहस्तौ नरेन्द्र। महद्बलं दुर्भिदमल्पवीर्य्यैः समाश्रितौ योद्धुकामौ त्वदर्थे।

एतैश्च मुख्यैरपरैश्च राजन् योधप्रवीरैरमितप्रभावैः। व्यवस्थितो नागकुलस्य मध्ये यथा महेन्द्रः कुरुराजो जयाय।

॥ धृतराष्ट्र उवाच ॥ आख्याता जीवमाना ये परेभ्योऽन्ये यथायथं। इतीदमवगच्छामि व्यक्तमर्थाभिपत्तितः।

॥ वैशम्पायन उवाच ॥ एवं ब्रुवन्नेव तदा धृतराष्ट्रोऽम्बिकासुतः। हतप्रवीरं विध्वस्तं किञ्चिच्छेषं स्वकं बलं।

श्रुत्वा व्यामोहमागच्छच्छोकव्याकुलितेन्द्रियः। मुह्यमानोऽब्रवीच्चापि मुहूर्त्तं तिष्ठ सञ्जय। २१५

व्याकुलं मे मनस्तात श्रुत्वा सुमहदप्रियं। मनो मुह्यति चाङ्गानि न च शक्नोमि धारितुं।

इत्येवमुक्त्वा वचनं धृतराष्ट्रोऽम्बिकासुतः। भ्रान्तचित्तस्ततः सोऽथ बभूव जगतीपतिः।

इति श्रीमहाभारते कर्णपर्व्वणि सञ्जयवाक्ये सप्तमोऽध्यायः ॥ ७ ॥

॥ जनमेजय उवाच ॥ श्रुत्वा कर्णं हतं युद्धे पुत्रांश्चैवापलायिनः। नरेन्द्रः किञ्चिदाश्वस्तो द्विजश्रेष्ठ किमब्रवीत्।

प्राप्तवान् परमं दुःखं पुत्रव्यसनजं महत्। तस्मिन् यदुक्तवान् काले तन्ममाचक्ष्व पृच्छतः।
॥ वैशम्पायन उवाच ॥ श्रुत्वा कर्णस्य निधनमश्रद्धेयमिवाद्भुतं। भूतसंमोहनं भीमं मेरोः संसर्पणं यथा। २२०
चित्तमोहमिवायुक्तं भार्गवस्य महामते। पराजयमिवेन्द्रस्य द्विषद्भ्यो भीमकर्म्मणः।
दिवः प्रपतनं भानोरुर्व्यामिव महाद्युतेः। संशोषणमिवाचिन्त्यं समुद्रस्याक्षयाम्भसः।
महीवियद्दिगम्बूनां सर्व्वनाशमिवाद्भुतं। कर्म्मणामिव वैफल्यमुभयोः पुण्यपापयोः।
सञ्चिन्त्य निपुणं बुद्ध्या धृतराष्ट्रो जनेश्वरः। नेदमस्तीति सञ्चिन्त्य कर्णस्य समरे वधं।
प्राणिनामेवमन्येषां स्यादपीति विनाशनं। शोकाग्निना दह्यमानो धम्यमान इवाशये। २२५
विश्रस्ताङ्गः श्वसन् दीनो हा हेत्युक्त्वा सुदुःखितः। विललाप महाराज धृतराष्ट्रोऽम्बिकासुतः।
॥ धृतराष्ट्र उवाच ॥ सञ्जयाधिरथिर्वीरः सिंहद्विरदविक्रमः। वृषभप्रतिमस्कन्धो वृषभाक्षगतिस्वरन्।
वृषभो वृषभस्येव यो युद्धे न निवर्त्तते। शत्रोरपि महेन्द्रस्य वज्रसंहननो युवा।
यस्य ज्यातलशब्देन शरवृष्टिरवेण च। रथाश्वनरमातङ्गा नावतिष्ठन्ति संयुगे।
यमाश्रित्य महाबाहुं विद्विषां जयकाङ्क्षया। दुर्य्योधनोऽकरोद्वैरं पाण्डुपुत्रैर्महारथैः। २३०
स कथं रथिनां श्रेष्ठः कर्णः पार्थेन संयुगे। निहतः पुरुषव्याघ्रः प्रसह्यासह्यविक्रमः।
यो नामन्यत वै नित्यमच्युतञ्च धनञ्जयं। न वृष्णीन् सहितानन्यान् स्वबाहुबलदर्पितः।
शार्ङ्गगाण्डीवधन्वानौ सहितावपराजितौ। अहं दिव्याद्रथादेकः पातयिष्यामि संयुगे।
इति यः सततं मन्दमवोचल्लोभमोहितं। दुर्य्योधनमवाचीनं राज्यकामुकमातुरं।
यो जयेत् सर्व्वकाम्बोजानावन्त्यान् केकयैः सह। गान्धारान्मद्रकान् मत्स्यांस्त्रिगर्त्तांस्तङ्गणान् शकान्। २३५
पाञ्चालांश्च विदेहांश्च कुलिन्दान् काशिकोशलान्। सुह्मानङ्गांश्च वङ्गांश्च निषादान् पुण्ड्रचीरकान्।
वत्सान् कलिङ्गांस्तरलानश्मकानृषिकानपि। जित्वैतान् समरे वीरान् चक्रे बलिभृतः पुरा।
शरव्रातैः सुनिशितैः सुतीक्ष्णैः कङ्कपत्रिभिः। दुर्य्योधनस्य वृद्ध्यर्थं राधेयो रथिनां वरः।
दिव्यास्त्रविन्महातेजाः कर्णो वैकर्त्तनो वृषः। सेनागोपश्च स कथं शत्रुभिः परमास्त्रवित्।
घातितः पाण्डवैः शूरैः समरे वीर्य्यशालिभिः। वृषो महेन्द्रो देवेषु वृषः कर्णो नरेष्वपि। २४०
तृतीयमन्यं लोकेषु वृषं नैवानुशुश्रुम। उच्चैःश्रवा वरोऽश्वानां राज्ञां वैश्रवणो वरः।
वरो महेन्द्रो देवानां कर्णः प्रहरतां वरः। सोऽजितः पार्थिवैः शूरैः समर्थैर्वीर्य्यशालिभिः।
दुर्य्योधनस्य वृद्ध्यर्थं कृत्स्नामुर्व्वीमथाजयत्। यं लब्ध्वा मागधो राजा सान्त्वमानोऽथ सौहृदैः।
अरौत्सीत् पार्थिवं क्षत्रमृते यादवकौरवान्। तं श्रुत्वा निहतं कर्णं द्वैरथे सव्यसाचिना।
शोकार्णवे निमग्नोऽहं भिन्ना नौरिव सागरे। तं वृषं निहतं श्रुत्वा द्वैरथे रथिनां वरः। २४५
शोकार्णवे निमग्नोऽहमप्लवः सागरे यथा। ईदृशैर्यद्यहं दुःखैर्न विनश्यामि सञ्जय।
वज्राद्दृढतरं मन्ये हृदयं मम दुर्भिदं। ज्ञातिसम्बन्धिमित्राणामिमं श्रुत्वा पराभवं।

को मदन्यः पुमाँल्लोके न जह्यात् सूत जीवितं । विषमग्निप्रपातञ्च पर्व्वताग्रादहं वृणे ।
नहि शक्ष्यामि दुःखानि सोढुं कष्टानि सञ्जय ।
इति श्रीमहाभारते कर्णपर्व्वणि धृतराष्ट्रवाक्ये अष्टमोऽध्यायः ॥ ८ ॥

॥ सञ्जय उवाच ॥ श्रिया कुलेन यशसा तपसा च श्रुतेन च । त्वामद्य सन्तो मन्यन्ते ययातिमिव नाहुषं । २५०
श्रुते महर्षिप्रतिमः कृतकृत्योऽसि पार्थिव । पर्य्यवस्थापयात्मानं मा विषादे मनः कृथाः ।
॥ धृतराष्ट्र उवाच ॥ दैवमेव परं मन्ये धिक् पौरुषमनर्थकं । यत्र शालप्रतीकाशः कर्णोऽहन्यत संयुगे ।
हत्वा युधिष्ठिरानीकं पाञ्चालानां रथव्रजान् । प्रताप्य शरवर्षेण दिशः सर्व्वा महारथः ।
मोहयित्वा रणे पार्थान् वज्रहस्त इवासुरान् । स कथं निहतः शेते वायुरुग्ण इव द्रुमः ।
शोकस्यान्तं न पश्यामि पारं जलनिधेरिव । चिन्ता मे वर्द्धतेऽतीव मुमूर्षा चापि जायते । २५५
कर्णस्य निधनं श्रुत्वा विजयं फाल्गुनस्य च । अश्रद्धेयमहं मन्ये वधं कर्णस्य सञ्जय ।
वज्रसारमयं नूनं हृदयं दुर्भिदं मम । यत् श्रुत्वा पुरुषव्याघ्रं हतं कर्णं न दीर्य्यते ।
आयुर्नूनं सुदीर्घं मे विहितं दैवतैः पुरा । यत्र कर्णं हतं श्रुत्वा जीवामीह सुदुःखितः ।
धिग्जीवितमिदञ्चैव सुहृद्धीनस्य सञ्जय । अद्य चाहं दशामेतां गतः सञ्जय गर्हितां ।
कृपणं वर्त्तयिष्यामि शोच्यः सर्व्वस्य मन्दधीः । अहमेव पुरा भूत्वा सर्व्वलोकस्य सत्कृतः । २६०
परिभूतः कथं सूत परैः शक्ष्यामि जीवितुं । दुःखात् सुदुःखं व्यसनं प्राप्तवानस्मि सञ्जय ।
भीष्मद्रोणवधेनैव कर्णस्य च महात्मनः । नावशेषं प्रपश्यामि सूतपुत्त्रे हते युधि ।
स हि पारं महानासीत् पुत्त्राणां मम सञ्जय । युद्धे हि निहतः शूरो विसृजन् सायकान् बहून् ।
को हि मे जीवितेनार्थस्तमृते पुरुषर्षभं । रथादधिरथिर्नूनं न्यपतत् सायकार्द्दितः ।
पर्व्वतस्येव शिखरं वज्रपाताद्विदारितं । स शेते पृथिवीं नूनं शोभयन् रुधिरोक्षितः । २६५
मातङ्ग इव मत्तेन द्विपेन्द्रेण निपातितः । यो बलं धार्त्तराष्ट्राणां पाण्डवानां यतो भयं ।
सोऽर्ज्जुनेन हतः कर्णः प्रतिमानं धनुष्मतां । स हि वीरो महेष्वासो मित्राणामभयङ्करः ।
शेते विनिहतो वीरो देवेन्द्रेण इवाचलः । पङ्गोरिवाध्वगमनं दरिद्रस्येव कामितं ।
दुर्य्योधनस्य चाकूतं तृषितस्येव विप्रुषः । अन्यथा चिन्तितं कार्य्यमन्यथा तत्तु जायते ।
अहो नु बलवद्दैवं कालश्च दुरतिक्रमः । पलायमानः कृपणो दीनात्मा दीनपौरुषः । २७०
कच्चिन्निहतः सूत पुत्त्रो दुःशासनो मम । कच्चिन्न दीनाचरितं कृतवांस्तात संयुगे ।
कच्चिन्न निहतः शूरो यथाऽन्ये क्षत्त्रियर्षभाः । युधिष्ठिरस्य वचनं मा युध्यस्वेति सर्व्वदा ।
दुर्य्योधनो नाभ्यगृह्णान्मूढः पथ्यमिवौषधं । शरतल्पे शयानेन भीष्मेण सुमहात्मना ।
पानीयं याचितः पार्थः सोऽविध्यन्मेदिनीतलं । जलस्य धारां जनितां दृष्ट्वा पाण्डुसुतेन च ।
अब्रवीत् स महाबाहुस्तात संशाम्य पाण्डवैः । प्रशमाद्धि भवेच्छान्तिर्म्मदन्तं युद्धमस्तु वः । २७५

भ्रातृभावेन पृथिवीं भुङ्क्ष्व पाण्डुसुतैः सह । अकुर्व्वन् वचनं तस्य नूनं शोचति पुत्रकः ।
तदिदं समनुप्राप्तं वचनं दीर्घदर्शिनः । अहन्तु निहतामात्यो हतपुत्रश्च सञ्जय ।
द्यूततः कृच्छ्रमापन्नो लूनपक्ष इव द्विजः । यथा हि शकुनिं गृह्य छित्त्वा पक्षौ च सञ्जय ।
विसर्ज्जयन्ति संहृष्टाः क्रीडमानाः कुमारकाः । लूनपक्षतया तस्य गमनं नोपपद्यते ।
तथाऽहमपि संप्राप्तो लूनपक्ष इव द्विजः । क्षीणः सर्व्वार्थहीनश्च निर्ज्ञातिर्बन्धुवर्ज्जितः । २८०
कां दिशं प्रतिपत्स्यामि दीनः शत्रुवशं गतः ।
इति श्रीमहाभारते कर्णपर्व्वणि धृतराष्ट्रविलापे नवमोऽध्यायः ॥ ९ ॥
॥ वैशम्पायन उवाच ॥ इत्येवं धृतराष्ट्रोऽथ विलप्य बहुदुःखितः । प्रोवाच सञ्जयं भूयः शोकव्याकुलमानसः ।
॥ धृतराष्ट्र उवाच ॥ योऽजयत् सर्व्वकाम्बोजानम्बष्ठान् कैकयैः सह । गान्धारांश्च विदेहांश्च जित्वा कार्य्यार्थमाहवे ।
दुर्य्योधनस्य वृद्ध्यर्थं योऽजयत् पृथिवीं प्रभुः । स जितः पाण्डवैः शूरैः समरे बाहुशालिभिः ।
तस्मिन् हते महेष्वासे कर्णे युधि किरीटिना । के वीराः पर्य्यतिष्ठन्त तन्ममाचक्ष्व सञ्जय । २८५
कच्चिन्नैकः परित्यक्तः पाण्डवैर्निहतो रणे । उक्तं त्वया पुरा तात यथा वीरो निपातितः ।
भीष्ममप्रतियुध्यन्तं शिखण्डी सायकोत्तमैः । पातयामास समरे सर्व्वशस्त्रभृतां वरं ।
तथा द्रौपदिना द्रोणो न्यस्तसर्व्वायुधो युधि । उक्तयोगो महेष्वासः शरैर्ब्बहुभिराचितः ।
निहतः खड्गमुद्यम्य धृष्टद्युम्नेन सञ्जय । अन्तरेण हतावेतौ छलेन च विशेषतः ।
अश्रौषमहमेतद्वै भीष्मद्रोणौ निपातितौ । भीष्मद्रोणौ हि समरे न हन्याद्वज्रभृत् स्वयं । २९०
न्यायेन युध्यमानौ हि तद्वै सत्यं ब्रवीमि ते । कर्णन्त्वस्त्रसमस्त्राणि दिव्यानि च बहूनि च ।
कथमिन्द्रोपमं वीरं मृत्युर्युद्धे समस्पृशत् । यस्य विद्युत्प्रभां शक्तिं दिव्यां कनकभूषणां ।
प्रायच्छद्द्विषतां हन्त्रीं कुण्डलाभ्यां पुरन्दरः । यस्य सर्पमुखो दिव्यः शरः काञ्चनभूषणः ।
स शेते निहतः सङ्ख्ये कर्णश्चारिरिसूदनः । भीष्मद्रोणप्रमुखान् वीरान् योऽवमन्य महारथान् ।
जामदग्न्यान्महाघोरं ब्राह्ममस्त्रमशिक्षत । यश्च द्रोणमुखान्दृष्ट्वा विमुखानर्द्दितान् शरैः । २९५
सौभद्रस्य महाबाहुर्व्यधमत् कार्म्मुकं शितैः । यश्च नागायुतप्राणं वज्ररंहसमच्युतं ।
विरथं सहसा कृत्वा भीमसेनमथाहसत् । सहदेवञ्च निर्ज्जित्य शरैः सन्नतपर्व्वभिः ।
कृपया विरथं कृत्वा नाहनद्धर्म्मचिन्तया । यश्च मायासहस्राणि विकुर्व्वाणं जयैषिणं ।
घटोत्कचं राक्षसेन्द्रं शक्रशक्त्या निजघ्निवान् । एतांश्च दिवसान् यस्य युद्धे भीतो धनञ्जयः ।
नागमद्द्वैरथं वीरः स कथं निहतो रणे । रथभङ्गो न चेत्तस्य धनुर्वा न व्यशीर्य्यत । ३००
न चेदस्त्राणि निर्णेतुः स कथं निहतः परैः । को हि शक्तो रणे कर्णं विधुन्वानं महद्धनुः ।
विमुञ्चन्तं शरान् घोरान् दिव्यान्यस्त्राणि चाहवे । जेतुं पुरुषशार्दूलं शार्दूलमिव वेगिनं ।
ध्रुवं तस्य धनुश्छिन्नं रथो वापि महीं गतः । अस्त्राणि वा प्रणष्टानि यथा शंससि मे हतं ।
न ह्यन्यदपि पश्यामि कारणं तस्य नाशने । निहन्मि फाल्गुनं यावत्तावत् पादौ न धावये ।

इति यस्य महाघोरं व्रतमासीन्महात्मनः । यस्य भीतो रणे निद्रां धर्म्मराजो युधिष्ठिरः । २०५
त्रयोदशसमा नित्यं नाभजत् पुरुषर्षभः । यस्य वीर्य्यवतो वीर्य्यमुपाश्रित्य महात्मनः ।
मम पुत्त्रः सभां भार्य्यां पाण्डूनां नीतवान् बलात् । तथापि च सभामध्ये पाण्डवानाञ्च पश्यतां ।
दासभार्य्येति पाञ्चालीमब्रवीत् कुरुसन्निधौ । न सन्ति पतयः कृष्णे सर्व्वे षण्ढतिलैः समाः ।
उपतिष्ठस्व भर्त्तारमन्यं वा वरवर्णिनि । इत्येवं यः पुमान् वाचो रूक्षाः संश्रावयत्पुरा ।
सभायां सूतजः कृष्णां स कथं निहतः परैः । यदि भीष्मो रणश्लाघी द्रोणो वा युधि दुर्म्मदः । २१०
न हनिष्यति कौन्तेयान् पक्षपातात् सुयोधन । सर्व्वानेव हनिष्यामि व्येतु ते मानसो ज्वरः ।
किं करिष्यति गाण्डीवमक्षय्यौ च महेषुधी । स्निग्धचन्दनदिग्धस्य मच्छरस्याभिधावतः ।
स नूनमृषभस्कन्धो ह्यर्ज्जुनेन कथं हतः । यश्च गाण्डीवमुक्तानां स्पर्शमुग्रमचिन्तयन् ।
अपतिर्ह्यसि कृष्णेति ब्रुवन् पार्थानवैक्षत । यस्य नासीद्भयं पार्थैः सपुत्त्रैः सजनार्द्दनैः ।
स्वबाहुबलमाश्रित्य मुहूर्त्तमपि सञ्जय । तस्य नाहं वधं मन्ये देवैरपि सवासवैः । २१५
प्रतीपमभिधावद्भिः किं पुनस्तात पाण्डवैः । नहि ज्यां संस्पृशानस्य तनुत्रं चापि गृह्णतः ।
पुमानाधिरथेः स्थातुं कश्चित् प्रमुखतोऽर्हति । अपि स्यान्मेदिनी हीना सोमसूर्य्यप्रभांशुभिः ।
न वधं पुरुषेन्द्रस्य संयुगेष्वपलायिनः । येन मन्दः सहायेन भ्रात्रा दुःशासनेन च ।
वासुदेवस्य दुर्ब्बुद्धिः प्रत्याख्यानमरोचयत् । स नूनं वृषभस्कन्धं कर्णं दृष्ट्वा निपातितं ।
दुःशासनञ्च निहतं मन्ये शोचति पुत्त्रकः । हतं वैकर्त्तनं राजा द्वैरथे सव्यसाचिना । २२०
जयतः पाण्डवान् दृष्ट्वा किं स्विद्दुर्य्योधनोऽब्रवीत् । दुर्म्मर्षणं हतं दृष्ट्वा वृषसेनञ्च संयुगे ।
प्रभग्नञ्च बलं दृष्ट्वा वध्यमानं महारथैः । पराङ्मुखांश्च राज्ञस्तु पलायनपरायणान् ।
विद्रुतान् रथिनो दृष्ट्वा मन्ये शोचति पुत्त्रकः । अनेयश्चाभिमानी च दुर्ब्बुद्धिरजितेन्द्रियः ।
हतोत्साहं बलं दृष्ट्वा किंस्विद्दुर्य्योधनोऽब्रवीत् । स्वयं वैरं महत्कृत्वा वार्य्यमाणः सुहृद्गणैः ।
प्रधने हतभूयिष्ठे किंस्विद्दुर्य्योधनोऽब्रवीत् । द्यूतं कृत्वा पुरा हृष्टो वञ्चयित्वा च पाण्डवान् । २२५
शकुनिः सौबलस्तात हते कर्णे किमब्रवीत् । कृतवर्म्मा महेष्वासः सात्वतानां महारथः ।
हतं वैकर्त्तनं दृष्ट्वा हार्द्दिक्यः किमभाषत । ब्राह्मणाः क्षत्त्रिया वैश्या यस्य शिक्षामुपासते
धनुर्व्वेदं चिकीर्षन्तो द्रोणपुत्त्रस्य धीमतः । युवा रूपेण सम्पन्नो दर्शनीयो महायशाः ।
अश्वत्थामा हते कर्णे किमभाषत सञ्जय । आचार्य्यश्च यो धनुर्व्वेदे गौतमो रथसत्तमः ।
कृपः शारद्वतस्तात हते कर्णे किमब्रवीत् । मद्रराजो महेष्वासः शल्यः समितिशोभनः । २३०
दृष्ट्वा विनिहतं कर्णं सारथ्ये रथिनां वरः । किमभाषत सौवीरो मद्राणामधिपो बली ।
दृष्ट्वा विनिहतं सर्व्वे योधा वारणदुर्ज्जयाः । ये च केचन राजानः पृथिव्यां योद्धुमागताः ।
वैकर्त्तनं हतं दृष्ट्वा कान्यभाषन्त सञ्जय । कर्णे तु निहते वीरे रथव्याघ्रे नरर्षभे ।
को वा मुखमनीकानामासीत् सञ्जय भागशः । मद्रराजः कथं शल्यो नियुक्तो रथिनां वरः ।

वैकर्त्तनस्य सारथ्ये तन्ममाचक्ष्व सञ्जय। केऽरक्षन् दक्षिणं चक्रं सव्यं के च युयुत्सवः। २२५
वामं चक्रं ररक्षुर्वा के वा वीरस्य पृष्ठतः। के कर्णं न जहुः शूराः के क्षुद्राः प्राद्रवन् भयात्।
कथञ्च वः समेतानां हतः कर्णो महारथः। पाण्डवाश्च कथं शूराः प्रत्युद्याता महारथम्।
सृजन्तः शरवर्षाणि वारिधारा इवाम्बुदाः। स च सर्पमुखो दिव्यो महेषुप्रवरस्तदा।
व्यर्थः कथं समभवत्तन्ममाचक्ष्व सञ्जय। मामकस्यास्य सैन्यस्य हतोत्सेधस्य सञ्जय।
अवशेषं न पश्यामि ककुदे मृदिते सति। तौ हि वीरौ महेष्वासौ मदर्थे त्यक्तजीवितौ। २३०
भीष्मद्रोणौ हतौ श्रुत्वा कोन्वर्थो जीवितेन मे। पुनः पुनर्न मृष्यामि हतं कर्णञ्च पाण्डवैः।
यस्य बाह्वोर्बलं तुल्यं कुञ्जराणां शतं शतैः। द्रोणे हते कौरवाणां तन्ममाचक्ष्व सञ्जय।
यथा कर्णस्य कौन्तेयैः सह युद्धमवर्त्तत। तथा च विपतां हन्तुं रणे तन्ममाचक्ष्व तत्।
इति श्रीमहाभारते कर्णपर्व्वणि धृतराष्ट्रप्रश्ने दशमोऽध्यायः॥ १०॥

॥ सञ्जय उवाच॥ हते द्रोणे महेष्वासे तस्मिन्नहनि भारत। कृते च मोघसंकल्पे द्रोणपुत्रे महारथे।
द्रवमाणे महाराज कौरवाणां बलार्णवे। व्यूह्य पार्थः स्वकं सैन्यमतिष्ठद्भ्रातृभिर्वृतः। २३५
तमवस्थितमाज्ञाय पुत्रस्ते भरतर्षभ। विद्रुतं स्वबलं दृष्ट्वा पौरुषेण न्यवारयत्।
स्वमनीकमवस्थाप्य बाहुवीर्य्यमुपाश्रितः। युद्ध्वा च सुचिरं कालं पाण्डवैः सह भारत।
लब्धलक्ष्यैः परैर्हृष्टैर्व्यायच्छद्भिश्चिरं तदा। सन्ध्याकाले समासाद्य प्रत्याहारमकारयत्।
कृत्वाऽवहारं सैन्यानां प्रविश्य शिबिरं स्वकं। कुरवः हितं मन्त्रं मन्त्रयाञ्चक्रिरे मिथः।
पर्य्यङ्केषु परार्द्ध्येषु स्पर्द्ध्यास्तरणवत्सु च। वरासनेषूपविष्टाः सुखशय्यास्विवामराः। २४०
ततो दुर्य्योधनो राजा साम्ना परमवल्गुना। तानाभाष्य महेष्वासान् प्राप्तकालमभाषत।
मतं मतिमतां श्रेष्ठाः सर्व्वे प्रब्रूत मा चिरं। एवं गते तु किं कार्य्यं किञ्च कार्य्यतरं नृपाः।
॥ सञ्जय उवाच॥ एवमुक्ते नरेन्द्रेण नरसिंहा युयुत्सवः। चक्रुर्नानाविधाश्चेष्टाः सिंहासनगतास्तदा।
तेषां निशम्येङ्गितानि युद्धे प्राणान् जुहूषतां। समुद्वीक्ष्य मुखं राज्ञो बालार्कसमवर्च्चसं।
आचार्य्यपुत्रो मेधावी वाक्यज्ञो वाक्यमाददे। रागो योगस्तथा दाक्ष्यं नयश्चेत्यर्थसाधकाः। २४५
उपायाः पण्डितैः प्रोक्तास्ते तु दैवमुपाश्रिताः। लोकप्रवीरा येऽस्माकं देवकल्पा महारथाः
नीतिमन्तस्तथा युक्ता दक्षा रक्ताश्च ते हताः। नत्वेव कार्य्यं नैराश्यमस्माभिर्विजयं प्रति।
सुनीतैरिह सर्व्वार्थैर्दैवमप्यनुलोम्यते। ते वयं प्रवरं नृणां सर्व्वैर्गुणगणैर्युतं।
कर्णमेवाभिषेक्ष्यामः सैनापत्येन भारत। कर्णं सेनापतिं कृत्वा प्रमथिष्यामहे रिपून्।
एष ह्यतिबलः शूरः कृतास्त्रो युद्धदुर्म्मदः। वैवस्वत इवासह्यः शक्तो जेतुं रणे रिपून्। २५०
एतदाचार्य्यतनयात् श्रुत्वा राजंस्तवात्मजः। आशशंस महतीं कर्णं प्रति स वै तदा।
हते भीष्मे च द्रोणे च कर्णो जेष्यति पाण्डवान्। तामाशां हृदये कृत्वा समाश्वस्य च भारत।
ततो दुर्य्योधनः प्रीतः प्रियं श्रुत्वाऽस्य तद्वचः। प्रीतिसंस्कारसंयुक्तं तथ्यमात्महितं शुभं।

एवं मनः समवस्थाप्य बाहुवीर्य्यमुपाश्रितः । दुर्य्योधनो महाराज राधेयमिदमब्रवीत् ।
कर्ण जानामि ते वीर्य्यं सौहृदं परमं मयि । तथापि त्वां महाबाहो प्रवक्ष्यामि हितं वचः । १९५
श्रुत्वा यथेष्टञ्च कुरु वीर यत्तव रोचते । भवान् प्राज्ञतमो नित्यं मम चैव परा गतिः ।
भीष्मद्रोणावतिरथौ हतौ सेनापती मम । सेनापतिर्भवानस्तु ताभ्यां द्रविणवत्तरः ।
वृद्धौ च तौ महेष्वासौ सापेक्षौ च धनञ्जये । मानितौ च मया वीरौ राधेय वचनात्तव ।
पितामहत्वं संप्रेक्ष्य पाण्डुपुत्त्रा महारणे । रक्षितास्तात भीष्मेण दिवसानि दशैव तु ।
न्यस्तशस्त्रे च भवति हतो भीष्मः पितामहः । शिखण्डिनं पुरस्कृत्य फाल्गुनेन महाहवे । २००
हते तस्मिन् महेष्वासे शरतल्पगते तदा । त्वयोक्ते पुरुषव्याघ्र द्रोणो ह्यासीत् पुरःसरः ।
तेनापि रक्षिताः पार्थाः शिष्यत्वादिति मे मतिः । स चापि निहतो वृद्धो धृष्टद्युम्नेन सत्वरं ।
निहताभ्यां प्रधानाभ्यां ताभ्याममितविक्रमं । त्वत्समं समरे योधं नान्यं पश्यामि चिन्तयन् ।
भवानेव तु नः शक्तो विजयाय न संशयः । पूर्व्वं मध्ये च पश्चाच्च तथैव विहितं हितं ।
स भवान् धूर्य्यवत् सङ्ख्ये धुरमुद्वोढुमर्हति । अभिषेचय सेनान्ये स्वयमात्मानमात्मना । २०५
देवतानां यथा स्कन्दः सेनानीः प्रभुरव्ययः । तथा भवानिमां सेनां धार्त्तराष्ट्रीं बिभर्त्तु वै ।
जहि शत्रुगणान् सर्व्वान् महेन्द्रो दानवानिव । अवस्थितं रणे दृष्ट्वा पाण्डवास्त्वां महारथाः ।
द्रविष्यन्ति च पाञ्चाला विष्णुं दृष्ट्वेव दानवाः । तस्मात्त्वं पुरुषव्याघ्र प्रकर्षैतां महाचमूं ।
भवत्यवस्थिते यत्ते पाण्डवा मन्दचेतसः । द्रविष्यन्ति सहामात्याः पाञ्चालाः सृञ्जयाश्च ह ।
यथा ह्यभ्युदितः सूर्य्यः प्रतपन् स्वेन तेजसा । व्यपोहति तमस्तीव्रं तथा शत्रून् प्रतापय । २१०
॥ सञ्जय उवाच ॥ आशा बलवती राजन् पुत्त्रस्य तव साऽभवत् । हते भीष्मे च द्रोणे च कर्णो जेष्यति पाण्डवान् ।
तामाशां हृदये कृत्वा कर्णमेवं तदाब्रवीत् । सूतपुत्त्र न ते पार्थः स्थित्वाऽग्रे संयुयुत्सति ।
॥ कर्ण उवाच ॥ उक्तमेतन्मया पूर्व्वं गान्धारे तव सन्निधौ । जेष्यामि पाण्डवान् सर्व्वान् सपुत्त्रान् सजनार्द्दनान् ।
सेनापतिर्भविष्यामि तवाहं नात्र संशयः । स्थिरो भव महाराज विजितान् विद्धि पाण्डवान् ।
॥ सञ्जय उवाच ॥ एवमुक्तो महाराज ततो दुर्य्योधनो नृपः । उत्तस्थौ राजभिः सार्द्धं देवैरिव शतक्रतुः । २१५
सैनापत्येन सत्कर्त्तुं कर्णं स्कन्दमिवामराः । ततोऽभिषिषिचुः कर्णं विधिदृष्टेन कर्म्मणा ।
दुर्य्योधनमुखा राजन् राजानो विजयैषिणः । शातकुम्भमयैः कुम्भैर्माहेयैश्चानुमन्त्रितैः ।
तोयपूर्णैर्विषाणैश्च द्विपखड्गमहर्षभैः । मणिमुक्तायुतैश्चान्यैः पुण्यगन्धैस्तथौषधैः ।
औडुम्बरे सुखासीनमासने क्षौमसंवृते । शास्त्रदृष्टेन विधिना सम्भारैश्च सुसंभृतैः ।
ब्राह्मणाः क्षत्त्रिया वैश्यास्तथा शूद्राश्च संमताः । तुष्टुवुस्तं महात्मानमभिषिक्तं वराननं । २२०
ततोऽभिषिक्तो राजेन्द्र निष्कैर्गोभिर्धनेन च । वाचयामास विप्राग्र्यान्राधेयः परवीरहा ।
जय पार्थान् सगोविन्दान् सानुगांस्त्वं महाहवे । इति तं वन्दिनः प्राहुर्द्विजाश्च पुरुषर्षभं ।
जहि पार्थान् सपाञ्चालान् राधेय विजयाय नः । उद्यन्निव सदा भानुस्तमांस्युग्रैर्गभस्तिभिः ।

नश्यन्ते तदिषुस्पृष्टानां शराणां वै सकेशवाः । उलूकाः सूर्य्यरश्मीनां ज्वलतामिव दर्शने
नहि पार्थाः सपाञ्चालाः स्थातुं शक्तास्तवाग्रतः । आत्तशस्त्रस्य समरे महेन्द्रस्येव दानवाः । ३९५
अभिषिक्तस्तु राधेयः प्रभया सोऽमितप्रभः । अत्यरिच्यत रूपेण दिवाकर इवापरः ।
सैनापत्ये तु राधेयमभिषिच्य सुतस्तव । अमन्यत तदात्मानं कृतार्थं कालचोदितः ।
कर्णोऽपि राजन् संप्राप्य सैनापत्यमरिन्दम । योगमाज्ञापयामास सूर्य्यस्योदयनं प्रति ।
तव पुत्रैर्वृतः कर्णः शुशुभे तत्र भारत । देवैरपि यथा स्कन्दः संग्रामे तारकामये ।
इति श्रीमहाभारते कर्णपर्व्वणि कर्णाभिषेके एकादशोऽध्यायः ॥ ११ ॥
॥ धृतराष्ट्र उवाच ॥ सैनापत्यन्तु संप्राप्य कर्णो वैकर्त्तनस्तदा । तथोक्तश्च स्वयं राज्ञा स्निग्धं भ्रातृसमं वचः । ४००
योगमाज्ञाप्य सेनानामादित्येऽभ्युदिते तदा । अकरोत् किं महाप्राज्ञस्तन्ममाचक्ष्व सञ्जय ।
॥ सञ्जय उवाच ॥ कर्णस्य मतमाज्ञाय पुत्रास्ते भरतर्षभ । योगमाज्ञापयामासुर्नन्दितूर्य्यपुरःसरं ।
महत्यपररात्रे च तव सैन्यस्य मारिष । योगयोगेति सहसा प्रादुरासीन्महास्वनः ।
कल्पतां नागमुख्यानां रथानाञ्च वरूथिनां । सन्नह्यतां पदातीनां वाजिनाञ्च विशाम्पते ।
क्रोशताञ्चैव योधानां त्वरितानां परस्परं । बभूव तुमुलः शब्दो दिवस्पृक् सुमहांस्ततः । ४०५
ततः श्वेतपताकेन बलाकावर्णवाजिना । हेमपृष्ठेन धनुषा नागकक्षेण केतुना ।
तूणीरशतपूर्णेन साङ्गदेन वरूथिना । शतघ्नीकिङ्किणीशक्तिशूलतोमरधारिणा ।
कार्म्मुकैरुपपन्नेन विमलादित्यवर्च्चसा । रथेनाभिपताकेन सूतपुत्रोऽभ्यदृश्यत ।
ध्मापयन् वारिजं राजन् हेमजालविभूषितं । विधुन्वानो महच्चापं कार्त्तस्वरविभूषितं ।
दृष्ट्वा कर्णं महेष्वासं रथस्थं रथिनां वरं । भानुमन्तमिवोद्यन्तं तमो निघ्नन् दुरासदं । ४१०
न भीष्मव्यसनं केचिन्नापि द्रोणस्य मारिष । नान्येषां पुरुषव्याघ्र मेनिरे तत्र कौरवाः ।
ततस्तु त्वरयन् योधान् शङ्खशब्देन मारिष । कर्णो निष्कर्षयामास कौरवाणां महद्बलं ।
व्यूह्य व्यूहं महेष्वासो मकरं शत्रुतापनः । प्रत्युद्ययौ तथा कर्णः पाण्डवान् विजिगीषया ।
मकरस्य तु तुण्डे वै कर्णो राजन् व्यवस्थितः । नेत्राभ्यां शकुनिः शूर उलूकश्च महारथः ।
द्रोणपुत्रस्तु शिरसि ग्रीवायां सर्व्वसोदराः । मध्ये दुर्य्योधनो राजा बलेन महता वृतः । ४१५
वामपादे तु राजेन्द्र कृतवर्म्मा व्यवस्थितः । नारायणबलैर्युक्तो गोपालैर्युद्धदुर्म्मदैः ।
पादे तु दक्षिणे राजन् गौतमः सत्यविक्रमः । त्रिगर्त्तैः सुमहेष्वासैर्दाक्षिणात्यैश्च संवृतः ।
अनुपादस्तु यो वामस्तत्र शल्यो व्यवस्थितः । महत्या सेनया सार्द्धं मद्रदेशसमुत्थया ।
दक्षिणे तु महाराज सुषेणः सत्यसङ्गरः । वृतो रथसहस्रेण दन्तिनाञ्च त्रिभिः शतैः ।
पुच्छेह्यास्तां महावीर्य्यौ भ्रातरौ पार्थिवौ तदा । चित्रश्च चित्रसेनश्च महत्या सेनया वृतौ । ४२०
तथा प्रयाते राजेन्द्र कर्णे नरवरोत्तमे । धनञ्जयमभिप्रेक्ष्य धर्म्मराजोऽब्रवीदिदं ।
पश्य पार्थ यथा सेना धार्त्तराष्ट्रीह संयुगे । कर्णेन विहिता वीर गुप्ता वीरैर्महारथैः ।

हतवीरतमा ह्येषा धार्त्तराष्ट्री महाचमूः । फल्गुरेषा महाबाहो विजयस्व फाल्गुन ।
उद्धृतश्च भवेच्छल्यो मम द्वादशवार्षिकः । एवं ज्ञात्वा महाबाहो व्यूहं व्यूह यथेच्छसि ।
भ्रातुरेतद्वचः श्रुत्वा पाण्डवः श्वेतवाहनः । अर्द्धचन्द्रेण व्यूहेन प्रत्यव्यूहत तां चमूं । ४२५
वामपार्श्वे तु तस्याथ भीमसेनो व्यवस्थितः । दक्षिणे च महेष्वासो धृष्टद्युम्नो व्यवस्थितः ।
मध्ये व्यूहस्य राजा तु पाण्डवश्च धनञ्जयः । नकुलः सहदेवश्च धर्म्मराजस्य पृष्ठतः ।
चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ । नार्ज्जुनं जहतुर्युद्धे पाल्यमानौ किरीटिना ।
शेषा नृपतयो वीराः स्थिता व्यूहस्य दंशिताः । यथाभागं यथोत्साहं यथायत्नञ्च भारत । ४३०
एवमेतन्महाव्यूहं व्यूह्य भारत पाण्डवाः । तावकाश्च महेष्वासा युद्धायैव मनो दधुः ।
दृष्ट्वा व्यूढान्तव चमूं सूतपुत्त्रेण संयुगे । निहतान् पाण्डवान्मेने धार्त्तराष्ट्रः सबान्धवः ।
तथैव पाण्डवीं सेनां व्यूढां दृष्ट्वा युधिष्ठिरः । धार्त्तराष्ट्रान् हतान्मेने सकर्णान् वै जनाधिपः ।
ततः शङ्खाश्च भेर्य्यश्च पणवानकदुन्दुभिः । डिण्डिमाश्चाप्यहन्यन्त झर्झराश्च समन्ततः ।
सेनयोरुभयो राजन् प्रावाद्यन्त महास्वनाः । सिंहनादश्च संजज्ञे शूराणां जयगृद्धिनां । ४३५
हयहेषितशब्दाश्च वारणानाञ्च बृंहितं । रथनेमिस्वनाश्चोग्राः सम्बभूवुर्जनाधिप ।
न द्रोणव्यसनं कश्चिज्जानीते भरतर्षभ । दृष्ट्वा कर्णं महेष्वासं मुखे व्यूहस्य दंशितं ।
उभे सैन्ये महाराज प्रहृष्टनरसंकुले । योद्धुकामे स्थिते राजन् हन्तुमन्योन्यमोजसा ।
तत्र यत्तौ सुसंरब्धौ दृष्ट्वाऽन्योन्यं व्यवस्थितौ । अनीकमध्ये राजेन्द्र चेरतुः कुरुपाण्डवौ ।
नृत्यमाने च ते सेने समेयातां परस्परं । तेषां पक्षैः प्रपक्षैश्च निर्जग्मुस्ते युयुत्सवः ।
ततः प्रववृते युद्धं नरवारणवाजिनां । रथानाञ्च महाराज अन्योन्यमपि निघ्नतां । ४४०
इति श्रीमहाभारते कर्णपर्व्वणि व्यूहनिर्म्माणे द्वादशोऽध्यायः ॥ १२ ॥
॥ सञ्जय उवाच ॥ ते सेनेऽन्योन्यमासाद्य प्रहृष्टाश्वनरद्विपे । बृहत्यौ सम्प्रजह्राते देवासुरचमूपमे ।
ततो नररथाश्वेभाः पत्तयश्चोग्रविक्रमाः । सम्प्रहाराः परं चक्रुर्देहपाप्मप्रणाशनाम् ।
पूर्णचन्द्रार्कपद्मानां कान्तित्विड्गन्धतः समैः । उत्तमाङ्गैर्नृसिंहानां नृसिंहास्तस्तरुर्महीं ।
अर्द्धचन्द्रैस्तथा भल्लैः क्षुरप्रैरसिपट्टिशैः । परश्वधैश्चाप्यकृन्तन्नुत्तमाङ्गानि युध्यतां ।
व्यायतायतबाहूनां व्यायतायतबाहुभिः । बाहवः पातिता रेजुर्धरण्यां साङ्गदायुधाः । ४४५
तैः स्फुरद्भिर्मही भाति रक्ताङ्गुलितलैस्तथा । गरुडप्रहितैरुग्रैः पञ्चास्यैरुरगैरिव ।
द्विरदस्यन्दनाश्वेभ्यः पेतुर्वीरा द्विषद्धताः । विमानेभ्यो यथा क्षीणे पुण्ये स्वर्गसदस्तथा ।
गदाभिरन्ये गुर्व्वीभिः परिघैर्मुषलैरपि । पोथिताः शतशः पेतुर्वीरा वीरतरैर्रणे ।
रणे रथैर्व्विमथिता मत्ता मत्तैर्द्विपा द्विपैः । सादिनः सादिभिश्चैव तस्मिन् परमसङ्कुले ।
रथैर्नरा रथा नागैरश्वारोहाश्च पत्तिभिः । अश्वारोहैः पदाताश्च निहता युधि शेरते । ४५०
रथाश्वपत्तयो नागै रथाश्वेभाश्च पत्तिभिः । रथपत्तिद्विपाश्वाश्वैस्तथापि नरद्विपाः ।

रथाश्वेभनराणान्तु नराश्वेभरथैः क्षणं। सम्भिन्नानीव प्रैक्षन्त रथैश्च कदनं महत्।
तथा तस्मिन् बले शूरैर्वध्यमाने हतेऽपि च। अभ्यागमंस्ततः पार्था वृकोदरपुरोगमाः।
धृष्टद्युम्नः शिखण्डी च द्रौपदेयाः प्रभद्रकाः। सात्यकिश्चेकितानश्च द्राविडैः सैनिकैः सह।
वृता व्यूहेन महता पाण्ड्याश्चोलाः सकेरलाः। व्यूढोरस्का दीर्घभुजाः प्रांशवः पृथुलोचनाः। ३५५
आपीडिनो रक्तदन्ता मत्तमातङ्गविक्रमाः। नानाविरागवसना गन्धचूर्णावचूर्णिताः।
बद्धासयः पाशहस्ता वारणप्रतिवारणाः। समानमृत्यवो राजन्ननीकस्था परस्परं।
कलापिनश्चापहस्ता दीर्घकेशाः प्रियंवदाः। पत्तयः सादिनश्चान्ये घोररूपपराक्रमाः।
अथापरे पुनः शूराश्चेदिपाञ्चालकेकयाः। कारूषाः कोसलाः काश्या मागधाश्चापि दुद्रुवुः।
तेषां रथाश्च नागाश्च प्रवराश्चापि पत्तयः। नानावाद्यरवैर्हृष्टा नृत्यन्ति च हसन्ति च। ३६०
तस्य सैन्यस्य महतो महामात्रवरैर्वृतः। मध्ये वृकोदरोऽभ्यायात्त्वदीयान्नागधूर्गतः।
स नागप्रवरोऽत्युग्रो विधिवत् कल्पितो बभौ। उदयाद्र्यग्र्यभवनं यथाभ्युदितभास्करं।
तस्यायसं वर्मवरं वररत्नविभूषितं। तारौघाकीर्णनभसः शारदस्य समत्विषं।
स तोमरप्रासकरश्चारुमौलिः स्वलङ्कृतः। शरन्मध्यन्दिनार्काभस्तेजसा व्यदहद्रिपून्।
तं दृष्ट्वा द्विरदं दूरात् क्षेमधूर्त्तिर्द्विपस्थितः। आह्वयन्नभिदुद्राव प्रमनाः प्रमनस्तरं। ३६५
तयोः समभवद्युद्धं द्विपयोरुग्ररूपयोः। यदृच्छया द्रुमवतोर्महापर्वतयोरिव।
संसक्तनागौ तौ वीरौ तोमरैरितरेतरं। बलवत्सूर्यरश्म्याभैर्भित्त्वाऽन्योन्यं विनेदतुः।
व्यपसृत्य तु नागाभ्यां मण्डलानि विचेरतुः। प्रगृह्य चैव धनुषी जघ्नतुर्वै परस्परं।
क्ष्वेडितास्फोटितरवैर्बाणशब्दैश्च सर्वतः। तौ जनं हर्षयन्तौ च सिंहनादं प्रचक्रतुः।
समुद्यतकराभ्यान्तौ द्विपाभ्यां कृतिनावुभौ। वातोद्धूतपताकाभ्यां युयुधाते महाबलौ। ३७०
तावन्योन्यस्य धनुषी छित्त्वाऽन्योन्यं विनेदतुः। शक्तितोमरवर्षेण प्रावृण्मेघाविवाम्बुभिः।
क्षेमधूर्त्तिस्तदा भीमं तोमरेण स्तनान्तरे। निर्बिभेदातिवेगेन षड्भिश्चाप्यपरैर्नदन्।
स भीमसेनः शुशुभे तोमरैरङ्गमाश्रितैः। क्रोधदीप्तवपुर्मेघैः सप्तसप्तिरिवांशुमान्।
ततो भास्करवर्णाभमञ्जोगतिमयस्मयं। ससर्ज तोमरं भीमः प्रत्यमित्राय यत्नवान्।
ततः कुलूताधिपतिश्चापमायम्य सायकैः। दशभिस्तोमरं छित्त्वा षष्ट्या विव्याध पाण्डवं। ३७५
अथ कार्मुकमादाय भीमो जलदनिःस्वनं। रिपोरभ्यर्दयन्नागमुन्नदन् पाण्डवः शरैः।
स शरौघार्द्दितो नागो भीमसेनेन संयुगे। निगृह्यमाणोऽपि नातिष्ठद्वातोद्धूत इवाम्बुदः।
तमभ्यधावद्द्विरदं भीमो भीमस्य नागराट्। महावातेरितं मेघं वातोद्धूत इवाम्बुदः।
सन्निवार्यात्मनो नागं क्षेमधूर्त्तिः प्रतापवान्। विव्याधाभिद्रुतं बाणैर्भीमसेनस्य कुञ्जरं।
ततः साधुविसृष्टेन क्षुरेणानतपर्वणा। छित्त्वा शरासनं शत्रोर्नागमामित्रमार्द्दयत्। ३८०
ततः क्रुद्धो रणे भीमं क्षेमधूर्त्तिः पराक्रमन्। जघान चास्य द्विरदं नाराचैः सर्वमर्मसु।

स पपात महानागो भीमसेनस्य भारत । पुरा नागस्य पतनादवप्लुत्य स्थितो महीं ।
तस्य भीमोऽपि विरदं गदया समपोथयत् । तस्मात् प्रमथितान्नागात् क्षेमधूर्त्तिमवप्लुतं ।
उद्यदायुधमायान्तं गदयाहन् वृकोदरः । स पपात हतः सासिर्व्यसुस्तमभितो द्विपं
वज्रप्रभग्नमचलं सिंहो वज्रहतो यथा । तं हतं नृपतिं दृष्ट्वा कुलूतानां यशस्करं । ४८५
पाद्रवद्व्यथिता सेना त्वदीया भरतर्षभ ।

इति श्रीमहाभारते कर्णपर्व्वणि क्षेमधूर्त्तिवधे द्वादशोऽध्यायः ॥ १२ ॥

॥ सञ्जय उवाच ॥ ततः कर्णो महेष्वासः पाण्डवानामनीकिनीं । जघान समरे शूरः शरैः सन्नतपर्व्वभिः ।
तथैव पाण्डवा राजंस्तव पुत्रस्य वाहिनीं । कर्णस्य प्रमुखे क्रुद्धा निजघ्नुस्ते महारथाः ।
कर्णोऽपि राजन् समरे व्यहनत् पाण्डवीं चमूं । नाराचैरर्कवर्णाभैः कर्म्मारपरिमार्ज्जितैः ।
तत्र भारत कर्णेन नाराचैस्ताडिता गजाः । नेदुः सेदुश्च मम्लुश्च बभ्रमुश्च दिशो दश । ४९०
बध्यमाने बले तस्मिन् सूतपुत्रेण मारिष । नकुलोऽभ्यद्रवत्तूर्णं सूतपुत्रं महारणे ।
भीमसेनस्तथा द्रौणिं कुर्व्वाणं कर्म्म दुष्करं । विन्दानुविन्दौ कैकेयौ सात्यकिः समवारयत् ।
श्रुतकर्म्माणमायान्तं चित्रसेनो महीपतिः । प्रतिविन्ध्यस्तथा चित्रं चित्रकेतनकार्म्मुकं ।
दुर्य्योधनस्तु राजानं धर्म्मपुत्रं युधिष्ठिरं । संशप्तकगणान् क्रुद्धो ह्यभ्यधावद्धनञ्जयः ।
धृष्टद्युम्नः कृपेणाथ तस्मिन् वीरवरक्षये । शिखण्डी कृतवर्म्माणं समासादयदच्युतं । ४९५
श्रुतकीर्त्तिस्तथा शल्यं माद्रीपुत्रः सुतन्तव । दुःशासनं महाराज सहदेवः प्रतापवान् ।
कैकेयौ सात्यकिं युद्धे शरवर्षेण भास्वता । सात्यकिः कैकयौ चापि च्छादयामास भारत ।
तावेनं भ्रातरौ वीरौ जघ्नतुर्हृदये भृशं । विषाणाभ्यां यथा नागौ प्रतिनागं महावने ।
शरसम्भिन्नवर्म्माणौ तावुभौ भ्रातरौ रणे । सात्यकिं सत्यकर्म्माणं राजन् विविधतुः शरैः ।
तौ सात्यकिर्म्महाराज प्रहसन सर्व्वतो दिशः । छादयन् शरवर्षेण वारयामास भारत । ५००
वार्य्यमाणौ ततस्तौ हि शैनेयशरवृष्टिभिः । शैनेयस्य रथं तूर्णं छादयामासतुः शरैः ।
तयोस्तु धनुषी चित्रे छित्त्वा शौरिर्म्महायशाः । अथ तौ सायकैस्तीक्ष्णैर्व्वारयामास संयुगे ।
तथाऽन्ये धनुषी चित्रे प्रगृह्य च महाशरान् । सात्यकिं छादयन्तौ तौ चेरतुर्लघु सुष्ठु च ।
ताभ्यां मुक्ता महाबाणाः कङ्कबर्हिणवाससः । द्योतयन्तो दिशः सर्व्वाः सम्पेतुः स्वर्णभूषणाः ।
बाणान्धकारमभवत्तयोराजन्महामृधे । अन्योन्यस्य धनुश्चैव चिच्छिदुस्ते महारथाः । ५०५
ततः क्रुद्धो महाराज सात्यकिर्युद्धदुर्म्मदः । धनुरन्यत् समादाय सज्यं कृत्वा तु संयुगे ।
क्षुरप्रेण सुतीक्ष्णेन अनुविन्दशिरोऽहरत् । अपतत्तच्छिरो राजन् कुण्डलोपचितं महत् ।
शम्बरस्य शिरो यद्वन्निहतस्य महारणे । शोचयन् केकयान् सर्व्वान् जगामाशु वसुन्धरां ।
तं दृष्ट्वा निहतं शूरं भ्राता तस्य महारथः । सज्यमन्यद्धनुः कृत्वा शैनेयं पर्य्यवारयत् ।
स षष्ट्या सात्यकिं विद्ध्वा स्वर्णपुङ्खैः शिलाशितैः । ननाद बलवान्नादं तिष्ठ तिष्ठेति चाब्रवीत् । ५१०

सात्यकिश्च ततस्तूर्णं कैकेयानां महारथः । शरैरनेकसाहस्रैर्बाह्लीकारपि चार्पयत् ।
स शरैः क्षतसर्व्वाङ्गः सात्यकिः सत्यविक्रमः । रराज समरे राजन् सपुष्प इव किंशुकः ।
सात्यकिः समरे विद्धः कैकेयेन महात्मना । कैकेयं पञ्चविंशत्या विव्याध प्रहसन्निव ।
तावन्योन्यस्य समरे संछिद्य धनुषी शुभे । हत्वा च सारथी तूर्णं हयांश्च रथिनाम्वरौ ।
विरथावसियुद्धाय समाजग्मतुराहवे । शतचन्द्रचिते गृह्य चर्म्मणी सुभुजौ तथा । ५१५
व्यरोचेतां महारङ्गे निस्त्रिंशवरधारिणौ । यथा देवासुरे युद्धे जम्भशक्रौ महाबलौ ।
मण्डलानि ततस्तौ तु विचरन्तौ महारणे । अन्योन्यमभितस्तूर्णं समाजग्मतुराहवे ।
अन्योन्यस्य वधे चैव चक्रतुर्यत्नमुत्तमं । कैकेयस्य द्विधा चर्म्म ततश्चिच्छेद सात्वतः ।
सात्यकेस्तु तथैवासौ चर्म्म चिच्छेद पार्थिवः । चर्म्म छित्वा तु कैकेयस्तारागणशतैर्वृतं ।
चचार मण्डलान्येव गतप्रत्यागतानि च । तञ्चरन्तं महारङ्गे निस्त्रिंशवरधारिणं । ५२०
अपहस्तेन चिच्छेद शैनेयस्त्वरयाऽन्वितः । सवर्म्मा कैकयो राजन् द्विधा छिन्नो महारणे ।
निपपात महेष्वासो वज्राहत इवाचलः । तं निहत्य रणे शूरः शैनेयो रथसत्तमः ।
युधामन्युरथं तूर्णमारुरोह परन्तपः । ततोऽन्यं रथमास्थाय विधिवत् कल्पितं पुनः ।
कैकेयानां महत्सैन्यं व्यधमत् सात्यकिः शरैः । सा वध्यमाना समरे कैकेयानां महाचमूः ।
तमुत्सृज्य रणे शत्रुः प्रदुद्राव दिशो दश । ५२५
इति श्रीमहाभारते कर्णपर्व्वणि विन्दानुविन्दवधे त्रयोदशोऽध्यायः ॥ १३ ॥
॥ सञ्जय उवाच ॥ श्रुतकर्म्मा ततो राजंश्चित्रसेनं महीपतिं । आजघ्ने समरे क्रुद्धः पञ्चाशद्भिः शिलीमुखैः ।
अभिसारस्तु तं राजन् नवभिर्नतपर्व्वभिः । श्रुतकर्म्माणमाहत्य सूतं विव्याध पञ्चभिः ।
श्रुतकर्म्मा ततः क्रुद्धश्चित्रसेनं चमूमुखे । नाराचेन सुतीक्ष्णेन मर्म्मदेशे समार्पयत् ।
सोऽतिविद्धो महाराज नाराचेन महात्मना । मूर्च्छामभिययौ वीरः कश्मलञ्च विवेश ह ।
एतस्मिन्नन्तरे चैनं श्रुतकीर्त्तिर्महायशाः । नवत्या जगतीपालं छादयामास पत्रिभिः । ५३०
प्रतिलभ्य ततः संज्ञां चित्रसेनो महारथः । धनुश्चिच्छेद भल्लेन तञ्च विव्याध सप्तभिः ।
सोऽन्यत् कार्म्मुकमादाय वेगघ्नं रुक्मभूषितं । चित्ररूपधरञ्चक्रे चित्रसेनं शरोर्म्मिभिः ।
स शरैश्चित्रितो राजा चित्रमाल्यधरो युवा । युवेव समरेऽशोभद्गोष्ठीमध्ये स्वलङ्कृतः ।
श्रुतकर्म्माणमथ वै नाराचेन स्तनान्तरे । बिभेद तरसा शूरस्तिष्ठतिष्ठेति चाब्रवीत् ।
श्रुतकर्म्माऽपि समरे नाराचेन समर्पितः । सुस्राव रुधिरं तत्र गैरिकार्द्र इवाचलः । ५३५
ततः स रुधिराक्ताङ्गो रुधिरेण कृतच्छविः । रराज समरे वीरः सपुष्प इव किंशुकः ।
श्रुतकर्म्मा ततो राजन् शत्रुणा समभिद्रुतः । शत्रुसंवारणं क्रुद्धो द्विधा चिच्छेद कार्म्मुकं ।
अथैनं छिन्नधन्वानं नाराचानां शतैस्त्रिभिः । छादयन् समरे राजन् विव्याध च सुपत्रिभिः ।
ततोऽपरेण भल्लेन तीक्ष्णेन निशितेन च । जहार सशिरस्त्राणं शिरस्तस्य महात्मनः ।

तच्छिरो न्यपतद्भूमौ चित्रसेनस्य दीप्तिमत्। यदृच्छया यथा चन्द्रश्च्युतः स्वर्गान्महीतले। ५४०
राजानं निहतं दृष्ट्वा तेऽभिद्यारन्तु मारिष। अभ्यद्रवन्त वेगेन चित्रसेनस्य सैनिकाः।
ततः क्रुद्धो महेष्वासस्तत्सैन्यं प्राद्रवच्छरैः। अन्तकाले यथा क्रुद्धः सर्व्वभूतानि प्रेतराट्।
ते वध्यमानाः समरे तव पौत्रेण धन्विना। व्यद्रवन्त दिशस्तूर्णं दावदग्धा इव द्विपाः।
तांस्तु विद्रवतो दृष्ट्वा निरुत्साहान् द्विषज्जये। द्रावयन्निषुभिस्तीक्ष्णैः श्रुतकर्म्मा व्यरोचत।
प्रतिविन्ध्यस्ततश्चित्रं भित्त्वा पञ्चभिराशुगैः। सारथिञ्च त्रिभिर्व्विद्ध्वा ध्वजमेकेषुणाऽपि च। ५४५
तं चित्रो नवभिर्भल्लैर्ब्बाह्वोरुरसि चार्पयत्। स्वर्णपुङ्खैः प्रसन्नाग्रैः कङ्कबर्हिणवाजितैः।
प्रतिविन्ध्यो धनुश्छित्त्वा तस्य भारत सायकैः। पञ्चभिर्न्निशितैर्ब्बाणैरथैनं स हि जघ्निवान्।
ततः शक्तिं महाराज स्वर्णघण्टां दुरासदां। प्राहिणोत्तव पौत्राय घोरामग्निशिखामिव।
तामापतन्तीं सहसा महोल्काप्रतिमां तदा। द्विधा चिच्छेद समरे प्रतिविन्ध्यो हसन्निव।
सा पपात द्विधा छिन्ना प्रतिविन्ध्यशरैः शितैः। युगान्ते सर्व्वभूतानि त्रासयन्ती यथाऽशनिः। ५५०
शक्तिं तां प्रहतां दृष्ट्वा चित्रो गृह्य महागदां। प्रतिविन्ध्याय चिक्षेप रुक्मजालविभूषितां।
सा जघान हयांस्तस्य सारथिञ्च महारणे। रथं प्रमृद्य वेगेन धरणीमन्वपद्यत।
एतस्मिन्नेव काले तु रथादाप्लुत्य भारत। शक्तिं चिक्षेप चित्राय स्वर्णदण्डामलङ्कृतां।
तामापतन्तीं जग्राह चित्रो राजन्महामनाः। ततस्तामेव चिक्षेप प्रतिविन्ध्याय पार्थिव।
समासाद्य रणे शूरं प्रतिविन्ध्यं महाप्रभा। निर्भिद्य दक्षिणं बाहुं निपपात महीतले। ५५५
पतिताऽभासयच्चैव तं देशमशनिर्यथा। प्रतिविन्ध्यस्ततो राजंस्तोमरं हेमभूषितं।
प्रेषयामास संक्रुद्धश्चित्रस्य वधकाङ्क्षया। स तस्य वर्म्मावरणं भित्त्वा हृदयमेव च।
जगाम धरणीं तूर्णं महोरग इवाशयं। स पपात तदा राजा तोमरेण समाहतः।
प्रसार्य्य विपुलौ बाहू पीनौ परिघसन्निभौ। चित्रं संप्रेक्ष्य निहतं तावका रणशोभिनः।
अभ्यद्रवन्त वेगेन प्रतिविन्ध्यं समन्ततः। सृजन्तो विविधान् बाणान् शतघ्नीश्च सकिङ्किणीः। ५६०
तमवच्छादयामासुः सूर्य्यमभ्रगणा इव। तान् विधम्य महाबाहुः शरजालेन संयुगे।
व्यद्रावयत्तव चमूं वज्रहस्त इवासुरीं। ते वध्यमानाः समरे तावकाः पाण्डवैर्नृप।
विप्रकीर्य्यन्त सहसा वातनुन्ना घना इव। विप्रद्रुते बले तस्मिन् वध्यमाने समन्ततः।
द्रौणिरेकोऽभ्ययात्तूर्णं भीमसेनं महाबलं। ततः समागमो घोरो बभूव सहसा तयोः।
यथा देवासुरे युद्धे वृत्रवासवयोरिव। ५६५

इति श्रीमहाभारते कर्णपर्व्वणि चित्रवधे चतुर्द्दशोऽध्यायः ॥ १४ ॥

॥ सञ्जय उवाच ॥ भीमसेनं ततो द्रौणी राजन् विव्याध पत्रिणा। परया त्वरया युक्तो दर्शयन्नस्त्रलाघवं।
अथैनं पुनराजघ्ने नवत्या निशितैः शरैः। सर्व्वमर्म्माणि संप्रेक्ष्य मर्म्मज्ञो लघुहस्तवत्।
भीमसेनः समाकीर्णो द्रौणिना निशितैः शरैः। रराज समरे राजन् रश्मिवानिव भास्करः।

ततः शरसहस्रेण सुप्रयुक्तेन पाण्डवः । द्रोणपुत्रमवच्छाद्य सिंहनादममुञ्चत ।
शरैः शरांस्ततो द्रौणिः संवार्य्य युधि पाण्डवं । ललाटेऽभ्यहनद्राजन् नाराचेन स्मयन्निव । ५०
ललाटस्थं ततो वाणं धारयामास पाण्डवः । यथा शृङ्गं वने दृप्तः खड्गी धारयते नृप ।
ततो द्रौणिं रणे भीमो यतमानं पराक्रमी । त्रिभिर्व्विव्याध नाराचैर्ल्ललाटे विस्मयन्निव ।
ललाटस्थैस्ततो वाणैर्ब्राह्मणोऽसौ व्यशोभत । प्रावृषीव यथा सिक्तस्त्रिशृङ्गः पर्व्वतोत्तमः ।
ततः शरशतैर्द्रौणिरर्द्दयामास पाण्डवं । न चैनं कम्पयामास मातरिश्वेव पर्व्वतं ।
तथैव पाण्डवो युद्धे द्रौणिं शरशतैः शितैः । नाकम्पयत संहृष्टो वार्य्योघ इव पर्व्वतं । ५५
तावन्योन्यं शरैर्घोरैश्छादयानौ महारथौ । रथवर्य्यगतौ वीरौ शुशुभाते बलोत्कटौ ।
आदित्याविव संदीप्तौ लोकक्षयकरावुभौ । स्वरश्मिभिरिवान्योन्यं तापयन्तौ शरोत्तमैः ।
ततः प्रतिकृते यत्नं कुर्व्वाणौ तौ महारणे । कृतप्रतिकृते यत्तौ शरसङ्घैरभीतवत् ।
व्याघ्राविव च संग्रामे चेरतुस्तौ नरोत्तमौ । शरदंष्ट्रौ दुराधर्षौ चापवक्त्रभयङ्करौ ।
अभूतान्तावदृश्यौ च शरजालैः समन्ततः । मेघजालैरिवाच्छन्नौ गगने चन्द्रभास्करौ । ६०
चकाशेते मुहूर्त्तेन ततस्तावप्यरिन्दमौ । विमुक्तावभ्रजालेन अङ्गारकबुधाविव ।
अथ तत्रैव संग्रामे वर्त्तमाने सुदारुणे । अपसव्यन्ततश्चक्रे द्रौणिस्तत्र वृकोदरं ।
किरञ्छरशतैरुग्रैर्द्धाराभिरिव पर्व्वतं । न तु तन्ममृषे भीमः शत्रोर्व्विजयलक्षणं ।
प्रतिचक्रे ततो राजन् पाण्डवोऽप्यपसव्यतः । मण्डलानां विभागेषु गतप्रत्यागतेषु च ।
बभूव तुमुलं युद्धं तयोः पुरुषसिंहयोः । चरित्वा विविधान् मार्गान् मण्डलस्थानमेव च । ६५
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः । अन्योन्यस्य बधे चैव चक्रतुर्यत्नमुत्तमं ।
ईषतुर्व्विरथं चैव कर्त्तुमन्योन्यमाहवे । ततो द्रौणिर्म्महास्त्राणि प्रादुश्चक्रे महारथः ।
तान्यस्त्रैरेव समरे प्रतिजघ्नेऽथ पाण्डवः । ततो घोरं महाराज अस्त्रयुद्धमवर्त्तत ।
ग्रहयुद्धं यथा घोरं प्रजासंहरणे ह्यभूत् । ते वाणाः समसज्जन्त मुक्तास्ताभ्यान्तु भारत ।
द्योतयन्तो दिशः सर्व्वास्तव सैन्यं समन्ततः । वाणसङ्घैर्वृतं घोरमाकाशं समपद्यत । ७०
उल्कापाताकृतं युद्धं प्रजानां संक्षये नृप । बाणाभिघातात् संजज्ञे तत्र भारत पावकः ।
स विस्फुलिङ्गो दीप्ताग्निर्योऽदहद्वाहिनीमिव । तत्र सिद्धा महाराज सम्पतन्तोऽब्रुवन् वचः ।
युद्धानामतिगं सर्व्वेषां युद्धमेतदिति प्रभो । सर्व्वयुद्धानि चैतस्य कलां नार्हन्ति षोडशीं ।
नेदृशञ्च पुनर्युद्धं न भविष्यति कदाचन । अहो ज्ञानेन सम्पन्नावुभौ ब्राह्मणक्षत्रियौ ।
अहो शौर्य्येण सम्पन्नावुभौ चोग्रपराक्रमौ । अहो भीमबलो भीम एतस्य च कृतास्त्रता । ७५
अहो वीर्य्यस्य सारत्वमहो सौष्ठवमेतयोः । स्थितावेतौ हि समरे कालान्तकयमोपमौ ।
रुद्रौ द्वाविव सम्भूतौ यथा द्वाविव भास्करौ । यमौ वा पुरुषव्याघ्रौ घोररूपावुभौ रणे ।
इति वाचः स्म श्रूयन्ते सिद्धानां वै मुहुर्मुहुः । सिंहनादश्च संजज्ञे समेतानां दिवौकसां ।

अद्भुतञ्चाप्यचिन्त्यञ्च दृष्ट्वा कर्म्म तयो रणे । सिद्धचारणसङ्घानां विस्मयः समपद्यत ।
प्रशशंसुस्तदा देवाः सिद्धाश्च परमर्षयः । साधु द्रौणे महाबाहो साधु भीमेति चाब्रुवन् । ६००
तौ शूरौ समरे राजन् परस्परकृतागसौ । परस्परमुदैक्षेतां क्रोधादुद्वृत्य चक्षुषी ।
क्रोधरक्तेक्षणौ तौ तु क्रोधात् प्रस्फुरिताधरौ । क्रोधात् सन्दष्टदशनौ तथैव दशनच्छदौ ।
अन्योन्यं छादयन्तौ स्म शरवृष्ट्या महारथौ । शराम्बुधारौ समरे शस्त्रविद्युत्प्रकाशिनौ ।
तावन्योन्यं ध्वजं विद्ध्वा सारथिञ्च महारणे । अन्योन्यस्य हयान् विद्ध्वा बिभिदाते परस्परं ।
ततः क्रुद्धौ महाराज वाणौ गृह्य महाहवे । उभौ चिक्षिपतुस्तूर्णमन्योन्यस्य वधैषिणौ । ६०५
तौ सायकौ महाराज द्योतमानौ चमूमुखे । आजघ्नतुः समासाद्य वज्रवेगौ दुरासदौ ।
तौ परस्परवेगाच्च शराभ्याञ्च भृशाहतौ । निपेततुर्महावीर्य्यौ रथोपस्थे तयोस्तदा ।
ततस्तु सारथिर्ज्ञात्वा द्रोणपुत्त्रमचेतनं । अपोवाह रणाद्राजन् सर्व्वसैन्यस्य पश्यतः ।
तथैव पाण्डवं राजन् विह्वलन्तं मुहुर्म्मुहुः । अपोवाह रथेनाजौ सारथिः शत्रुतापनं ।
इति श्रीमहाभारते कर्णपर्व्वणि अश्वत्थामभीमसेनयुद्धे पञ्चदशोऽध्यायः ॥ १५ ॥
॥ धृतराष्ट्र उवाच ॥ यथा संशप्तकैः सार्द्धमर्ज्जुनस्याभवद्रणः । अन्येषाञ्च महीपानां पाण्डवैस्तद्ब्रवीहि मे । ६१०
अश्वत्थाम्नस्तु यद्युद्धमर्ज्जुनस्य च सञ्जय । अन्येषाञ्च महीपानां पाण्डवैस्तद्ब्रवीहि मे ।
॥ सञ्जय उवाच ॥ शृणु राजन् यथा वृत्तं संग्रामं ब्रुवतो मम । वीराणां शत्रुभिः सार्द्धं देहपाप्मविनाशनं ।
पार्थः संशप्तकबलं प्रविश्यार्णवसन्निभं । व्यक्षोभयदमित्रघ्नो महावात इवार्णवं ।
शिरांस्युन्मथ्य वीराणां शितैर्भल्लैर्धनञ्जयः । पूर्णचन्द्राभवक्त्राणि स्वक्षिभ्रूदशनानि च ।
सन्तस्तार क्षितिं क्षिप्रं विनालैर्नलिनैरिव । सुवृत्तानायतान् पुष्टान् चन्दनागुरुभूषितान् । ६१५
सायुधान् सतलत्रांश्च पञ्चास्योरगसन्निभान् । बाहून् क्षुरैरमित्राणां चिच्छेद समरेऽर्ज्जुनः ।
धूर्य्यान् धूर्य्यगतान् सूतान् ध्वजांश्चापानि सायकान् । पाणीन् सरत्नानसकृत् भल्लैश्चिच्छेद पाण्डवः ।
रथान् द्विपान् हयांश्चैव सारोहानर्ज्जुनो युधि । शरैरनेकसाहस्रैर्निन्ये राजन् यमक्षयं ।
तं प्रवीराः सुसंरब्धा नर्द्दमाना इवर्षभाः । वासितार्थमिव क्रुद्धमभिद्रुत्य मदोत्कटाः ।
निघ्नन्तमभिजघ्नुस्ते शरैः शृङ्गैरिवर्षभाः । तस्य तेषाञ्च तद्युद्धमभवल्लोमहर्षणं । ६२०
त्रैलोक्यविजये यद्वद्दैत्यानां सह वज्रिणा । अस्त्रैरस्त्राणि संवार्य्य द्विषतां सर्व्वतोऽर्ज्जुनः ।
इषुभिर्व्बहुभिस्तूर्णं विद्ध्वा प्राणान् जहार सः । छिन्नत्रिवेणुचक्राक्षान् हतयोधान् ससारथीन् ।
विध्वस्तायुधतूणीरान् समुन्मथितकेतनान् । संछिन्नयोक्त्ररश्मीकान् विवरूथान् विकूवरान् ।
विध्वस्तबन्धुरयुगान् विध्वस्ताक्षप्रमण्डलान् । रथान् विशकलीकुर्व्वन् महाभ्राणीव मारुतः ।
विस्मापयन् प्रेक्षणीयं द्विषतां भयवर्द्धनं । महारथसहस्रस्य समं कर्म्माकरोज्जयः । ६२५
सिद्धा देवर्षिसंघाश्च चारणाश्चापि तुष्टुवुः । देवदुन्दुभयो नेदुः पुष्पवर्षाणि चापतन् ।
केशवार्ज्जुनयोर्मूर्द्ध्नि प्राह वाक् चाशरीरिणी । चन्द्रार्काग्न्यनिलस्थ्यर्णं कान्तिदीप्तिबलद्युती ।

यौ सदा बिभृतुर्वीराविमौ तौ केशवार्जुनौ । शङ्खप्रानाविताजय्यौ वीरावेकरथे स्थितौ ।
सर्व्वभूतवरौ वीरौ नरनारायणाविमौ । इत्येतन्महदाश्चर्य्यं दृष्ट्वा श्रुत्वा च भारत ।
अश्वत्थामा सुसंयत्तः कृष्णावभ्यद्रवद्रणे । अथ पाण्डवमस्यन्तममित्रघ्नकराञ्छरान् । ६६०
सेषुणा पाणिनाहूय प्रहसन् द्रौणिरब्रवीत् । यदि मां मन्यसे वीर प्राप्तमर्हमिहातिथिं ।
ततः सर्व्वात्मना त्वद्य युद्धातिथ्यं प्रयच्छ मे । एवमाचार्य्यपुत्रेण समाहूतो युयुत्सया ।
बहु मेनेऽर्ज्जुनोत्मानमिति चाह जनार्द्दनं । संशप्तकाश्च मे वध्या द्रौणिराह्वयते च मां ।
यदत्रानन्तरं प्राप्तं शंस मे तद्धि माधव । आतिथ्यकर्म्माभ्युत्थाय दीयतां यदि मन्यसे ।
एवमुक्तोऽवहत् पार्थं कृष्णो द्रोणात्मजान्तिके । जैत्रेण विधिनाहूतं वायुरिन्द्रमिवाध्वरे । ६६५
तमामन्त्र्यैकमनसं केशवो द्रौणिमब्रवीत् । अश्वत्थामन् स्थिरो भूत्वा प्रहराशु सहस्व च ।
निर्व्वेष्टुं भर्तृपिण्डं हि कालोऽयमुपजीविनां । सूक्ष्मो विवादो विप्राणां स्थूलौ क्षात्रौ जयाजयौ ।
यामभ्यर्थयसे मोहाद्दिव्यां पार्थस्य सत्क्रियां । तामाप्तुमिच्छन् युध्यस्व स्थिरो भूत्वाऽद्य पाण्डवं ।
इत्युक्तो वासुदेवेन तथेत्युक्त्वा द्विजोत्तमः । विव्याध केशवं षष्ट्या नाराचैरर्ज्जुनं त्रिभिः ।
तस्यार्ज्जुनः सुसंक्रुद्धस्त्रिभिर्भल्लैः शरासनं । चिच्छेद चान्यदादत्त द्रौणिर्घोरतरं धनुः । ६७०
सज्यं कृत्वा निमेषाच्च विव्याधार्ज्जुनकेशवौ । त्रिभिः शतैर्व्वासुदेवं सहस्रेण च पाण्डवं ।
ततः शरसहस्राणि प्रयुतान्यर्ब्बुदानि च । ससृजे द्रौणिरायत्तः संस्तभ्य च रणेऽर्ज्जुनं ।
इषुधेर्धनुषश्चैव ज्यायाश्चैवाथ मारिष । बाह्वोः कराभ्यामुरसो वदनघ्राणनेत्रतः ।
कर्णाभ्यां शिरसोऽङ्गेभ्यो लोमवर्त्मभ्य एव च । रथध्वजेभ्यश्च शरा निष्पेतुर्ब्रह्मवादिनः ।
शरजालेन महता विद्ध्वा माधवपाण्डवौ । ननाद मुदितो द्रौणिर्महामेघौघनिःस्वनं । ६७५
तस्य तं निनदं श्रुत्वा पाण्डवोऽच्युतमब्रवीत् । पश्य माधव दौरात्म्यं गुरुपुत्रस्य मां प्रति ।
वधं प्राप्तौ मन्यते नौ प्रवेश्य शरवेश्मनि । एषोऽस्मि हन्मि सङ्कल्पं शिक्षया च बलेन च ।
अश्वत्थाम्नः शरानस्तान् छित्त्वैकैकं त्रिधा त्रिधा । व्यधमद्भरतश्रेष्ठो नीहारमिव मारुतः ।
ततः संशप्तकान् भूयः साश्वसूतरथद्विपान् । ध्वजपत्तिगणानुग्रैर्बाणैर्विव्याध पाण्डवः ।
ये ये ददृशिरे तत्र यद्यद्रूपास्तदा जनाः । ते ते तत्र शरैर्व्याप्तं मेनिरेत्मानमात्मना । ६८०
ते गाण्डीवप्रमुक्तास्तु नानारूपाः पतत्रिणः । क्रोशे साग्रे स्थितान् घ्नन्ति द्विपांश्च पुरुषान्रणे ।
भल्लैश्छिन्नाः कराः पेतुः करिणां मदवर्षिणां । यथा वने परश्वभिर्निकृत्ताः सुमहाद्रुमाः ।
पश्चात्तु शैलवत् पेतुस्ते गजाः सह सादिभिः । वज्रिवज्रप्रमथिता यथैवाद्रिचयास्तथा ।
गन्धर्व्वनगराकारान् रथांश्चैव सुकल्पितान् । विनीतैर्ज्जवनैर्युक्तानास्थितान् युद्धदुर्मदैः ।
शरैर्विशकलीकुर्व्वन्नमित्रानभ्यवीवृषत् । स्वलङ्कृतानश्वसादीन् पत्तींश्चाहन् धनञ्जयः । ६८५
धनञ्जययुगान्तार्कः संशप्तकमहार्णवं । व्यशोषयत दुःशोषं तीव्रैः शरगभस्तिभिः ।
पुनर्द्रौणिर्महाशैलं नाराचैर्व्वज्रसन्निभैः । निर्विभेद महावेगैस्त्वरन् वज्रीव पर्व्वतं ।

प्रतीपकारिणि रणादश्वत्थाम्नि हृते हयैः । मन्त्रौषधिक्रियायोगैर्व्याधौ देहादिवाहृते । १८८

संशप्तकानभिमुखौ प्रयातौ केशवार्ज्जुनौ । वातोद्धूतपताकेन स्यन्दनेनौघनादिना ।

इति श्रीमहाभारते कर्णपर्व्वण्यश्वत्थामपराजये सप्तदशोऽध्यायः ॥ १७ ॥

॥ सञ्जय उवाच ॥ अथोत्तरेण पाण्डूनां सेनायां ध्वनिरुत्थितः । रथनागाश्वपत्तीनां दण्डधारेण वध्यतां ।

निवर्त्तयित्वा तु रथं केशवोऽर्ज्जुनमब्रवीत् । वाहयन्नेव तुरगान् गरुडानिलरंहसः ।

मागधोऽप्यतिविक्रान्तो द्विरदेन प्रमाथिना । भगदत्तादनवरः शिक्षया च बलेन च ।

एनं हत्वा निहन्तासि पुनः संशप्तकानिति । वाक्यान्ते प्रापयत् पार्थं दण्डधारान्तिकं प्रति ।

स मागधानां प्रवरोऽङ्कुशग्रहे ग्रहे प्रसह्यो विकचो यथा ग्रहः । सपत्नसेनां प्रममाथ दारुणो महीं समग्रां विकचो
यथा ग्रहः । १९०

सुकल्पितं दानवनागसन्निभं महाभ्रनिर्ह्रादममित्रमर्द्दनं । रथाश्वमातङ्गगणान् सहस्रशः समास्थितो हन्ति शरैर्नरानपि ।

रथानधिष्ठाय सवाजिसारथीन्नरांश्च पादैर्द्विरदो व्यपोथयत् । द्विपांश्च पद्भ्यां ममृदे करेण द्विपोत्तमो हन्ति च कालचक्रवत् ।

नरांस्तु कार्ष्णायसवर्म्मभूषणान् निपात्य साश्वानपि पत्तिभिः सह । व्यपोथयद्दन्तिवरेण शुष्मिणा सशब्दवत् स्थूलनलं
यथा तथा ।

अथार्ज्जुनं ज्यातलनेमिनिःस्वने मृदङ्गभेरीबहुशङ्खनादिते । रथाश्वमातङ्गसहस्रसङ्कुले रथोत्तमेनाभ्यपतद्द्विपोत्तमं ।

ततोऽर्ज्जुनं द्वादशभिः शरोत्तमैर्ज्जनार्द्दनं षोडशभिः समार्पयत् । स दण्डधारस्तुरगांस्त्रिभिस्त्रिभिस्ततो ननाद प्रजहास
चाऽसकृत् । १९५

ततोऽस्य पार्थः सगुणेषुकार्म्मुकं चकर्त्त भल्लैर्ध्वजमप्यलङ्कृतं । पुनर्नियन्तॄन् सह पादगोप्तृन् ततः स चुक्रोध गिरिव्रजेश्वरः ।

ततोऽर्ज्जुनं भिन्नकटेन दन्तिना घनाघनेनानिलतुल्यवर्च्चसा । अतीव चुक्षोभयिषुर्ज्जनार्द्दनं धनञ्जयञ्चाभिजघान तोमरैः ।

अथाऽस्य बाहू द्विपहस्तसन्निभौ शिरश्च पूर्णेन्दुनिभाननं त्रिभिः । क्षुरैः प्रचिच्छेद सहैव पाण्डवस्ततो द्विपं बाणशतैः
समार्पयत् ।

स पार्थबाणैस्तपनीयभूषणैः समाचितः काञ्चनवर्म्मभृद्द्विपः । तथा चकाशे निशि पर्व्वतो यथा दवाग्निना प्रज्वलितो
षधिद्रुमः ।

स वेदनार्त्तोऽम्बुदनिःस्वनो नदंश्चरन् भ्रमन् प्रस्खलितान्तरो द्रवन् । पपात रुग्णः सनियन्तृकस्तथा यथा गिरिर्व्वज्रवि
दारितस्तथा । २००

हिमावदातेन सुवर्णमालिना हिमाद्रिकूटप्रतिमेन दन्तिना । हते रणे भ्रातरि दण्ड आव्रजज्जिघांसुरिन्द्रावरजं धनञ्जयं ।

स तोमरैरर्क्ककरप्रभैस्त्रिभिर्ज्जनार्द्दनं पञ्चभिरर्ज्जुनं शितैः । समर्पयित्वा विननाद गर्द्दयंस्ततोऽस्य बाहू निचकर्त्त पाण्डवः ।

क्षुरप्रकृत्तौ सुभृशं सुतोमरौ शुभाङ्गदौ चन्दनरूषितौ भुजौ । गजात् पतन्तौ युगपद्विरेजतुर्यथाऽद्रिशृङ्गाद्रुचिरौ म
होरगौ ।

तथाऽर्द्धचन्द्रेण हृतं किरीटिना पपात दण्डस्य शिरः क्षितिं द्विपात् । स शोणितार्द्रं निपतद्विरेजे दिवाकरोऽस्तादिव प
श्चिमां दिशं ।

अथ द्विपं श्वेतवराभ्रसन्निभं दिवाकरांशुप्रतिमैः शरोत्तमैः । बिभेद पार्थः स पपात नादयन् हिमाद्रिकूटं कुलिशाहतं यथा । ७०५

ततोऽपरे तत्प्रतिमा गजोत्तमा जिगीषवः संयति सव्यसाचिना । तथा कृतास्ते च तथैव तौ द्विपौ ततः प्रभग्नं सुमहद्रिपोर्ब्बलं ।

गजा रथाश्वाः पुरुषाश्च संघशः परस्परघ्नाः परिपेतुराहवे । परस्परं प्रस्खलिताः समाहता भृशं निपेतुर्बहुभाषिणो हताः ।

अथार्ज्जुनं स्वे परिवार्य्य सैनिकाः पुरन्दरं देवगणा इवाब्रुवन् । अभैष्म यस्मान्मरणादिव प्रजाः स वीर दिष्ट्या निहतस्त्वया रिपुः ।

न चेदरक्षिष्य इमं जनं भयाद्द्विषद्भिरेवं बलिभिः प्रपीडितं । तथाभविष्यद्द्विषतां प्रमोदनं तथा हतेष्वेषु च नोऽरिसूदन ।

इतीव भूयश्च सुहृद्भिरीरिता निशम्य वाचः सुमनास्ततोऽर्ज्जुनः । यथानुरूपं प्रतिपूज्य तं जनं जगाम संशप्तकसंघहा पुनः । ७१०

इति श्रीमहाभारते कर्णपर्व्वणि दण्डवधेऽष्टादशोऽध्यायः ॥ १८ ॥

॥ सञ्जय उवाच ॥ प्रत्यागत्य पुनर्जिष्णुर्जघ्ने संशप्तकान् बहून् । वक्रातिवक्रगमनादङ्गारक इव ग्रहः ।

पार्थवाणहता राजन्नराश्वरथकुञ्जराः । विचेलुर्बभ्रमुर्नेदुः पेतुर्म्मम्लुश्च भारत ।

धुर्य्यान् धुर्य्यगतान् सूतान् ध्वजांश्चापांश्च सायकान् । पाणीन् पाणिगतं शस्त्रं बाहूनपि शिरांसि च ।

भल्लैः क्षुरैरर्द्धचन्द्रैर्वत्सदन्तैश्च पाण्डवः । चिच्छेदामित्रवीराणां समरे प्रतियुध्यतां ।

वाशितार्थे युयुत्सन्तो वृषभा वृषभं यथा । निपतन्त्यर्ज्जुनं शूराः शतशोऽथ सहस्रशः । ७१५

तेषां तस्य च तद्युद्धमभवल्लोमहर्षणं । त्रैलोक्यविजये यादृग्दैत्यानां सह वज्रिणा ।

तमविध्यत्त्रिभिर्ब्बाणैर्दन्दशूकैरिवाहिभिः । उग्रायुधसुतस्तस्य शिरः कायादपाहरत् ।

तेऽर्ज्जुनं सर्व्वतः क्रुद्धा नानाशस्त्रैरवीवृषन् । मरुद्भिः प्रेरिता मेघा हिमवन्तमिवोष्णगे ।

अस्त्रैरस्त्राणि संवार्य्य द्विषतां सर्व्वतोऽर्ज्जुनः । सम्यगस्तैः शरैः सर्व्वानहितानहनद्बहून् ।

छिन्नत्रिवेणुसंघातान् हताश्वपार्ष्णिसारथीन् । विध्वस्तहस्ततूणीरान् विचक्ररथकेतनान् । ७२०

संछिन्नरश्मियोक्त्राक्षान् व्यनुकर्षयुगान् रथान् । विध्वस्तसर्व्वसन्नाहान् बाणैश्चक्रेऽर्ज्जुनस्तदा ।

ते रथास्तत्र विध्वस्ताः परार्द्ध्या भान्त्यनेकशः । धनिनामिव वेश्मानि हतान्यग्न्यनिलाम्बुभिः ।

द्विपाः संभिन्नवर्म्माणो वज्राशनिसमैः शरैः । पेतुर्गिर्य्यग्रवेश्मानि वज्रपाताग्निभिर्यथा ।

सारोहास्तुरगाः पेतुर्बहवोऽर्ज्जुनताडिताः । निर्जिह्वान्त्राः क्षितौ क्षीणा रुधिरार्द्राः सुदुर्दृशः ।

नराश्वनागनाराचैः संस्यूताः सव्यसाचिना । बभ्रमुश्चस्खलुः पेतुर्नेदुर्म्मम्लुश्च मारिष । ७२५

अनेकैश्च शिलाधौतैर्वज्राशनिविषोपमैः । शरैर्निजघ्निवान् पार्थो महेन्द्र इव दानवान् ।

महार्हवर्म्माभरणा नानारूपा वरायुधाः । सरथाः सध्वजा वीरा हताः पार्थेन शेरते ।

विजिताः पुण्यकर्म्माणो विशिष्टाभिजनश्रुताः । गताः शरीरैर्व्वसुधामूर्ज्जितैः कर्म्मभिर्द्दिवं ।

अथार्ज्जुनं रथवरं त्वदीयाः समभिद्रवन्। नानाजनपदाध्यक्षाः सगणा जातमन्यवः।
उह्यमाना रथाश्वैश्च पत्तयश्च जिघांसवः। समभ्यधावन्नस्यन्तो विविधं क्षिप्रमायुधं। ७१०
तदायुधमहावर्षं युक्तं योधमहाम्बुदैः। व्यधमन्निशितैर्ब्बाणैः क्षिप्रमर्ज्जुनमारुतः।
साश्वपत्तिद्विपरथं महाशस्त्रौघसंकुलं। सहसा सन्तितीर्षन्तं पार्थमस्त्रास्त्रसेतुना।
अथाब्रवीद्वासुदेवः पार्थ किं क्रीडसेऽनघ। संशप्तकान् प्रमथ्यैनांस्ततः कर्णवधे त्वर।
तथेत्युक्त्वाऽर्ज्जुनः क्षिप्रं शिष्टान् संशप्तकांस्तदा। आक्षिप्य शस्त्रेण बलाद्दैत्यानिन्द्र इवावधीत्।
आददत् सन्दधन्नेषून् दृष्टः कैश्चिद्रणेऽर्ज्जुनः। विमुञ्चन् वा शरान् शीघ्रं दृश्यते ऽवहितैरपि। ७१५
आश्चर्य्यमिति गोविन्दः सममन्यत भारत। हंसांशुगौरास्ते सेनां हंसाः सर इवाविशन्।
ततः संग्रामभूमिञ्च वर्त्तमाने जनक्षये। अवेक्षमाणो गोविन्दः सव्यसाचिनमब्रवीत्।
एष पार्थ महारौद्रो वर्त्तते भरतक्षयः। पृथिव्यां पार्थिवानां वै दुर्य्योधनकृते महान्।
पश्य भारत चापानि रुक्मपृष्ठानि धन्विनां। महतामपविद्धानि कलापानिषुधींस्तथा।
जातरूपमयैः पुङ्खैः शरांश्च नतपर्व्वणः। तैलधौतांश्च नाराचान् विमुक्तानिव पन्नगान्। ७२०
आकीर्णांस्तोमरांश्चापि विचित्रान् हेमभूषितान्। चर्म्माणि चापविद्धानि रुक्मपृष्ठानि भारत।
सुवर्णविकृतान् प्रासान् शक्तीः कनकभूषिताः। जाम्बूनदमयैः पट्टैर्ब्बद्धाश्च विपुला गदाः।
जातरूपमयीश्चर्ष्टीः पट्टिशान् हेमभूषितान्। दण्डैः कनकचित्रैश्च विप्रविद्धान् परश्वधान्।
परिघान् भिन्दिपालांश्च भुशुण्डीः कणपायिनः। अयस्कुन्तांश्च पतितान् मुषलानि गुरूणि च।
नानाविधानि शस्त्राणि प्रगृह्य जयगृद्धिनः। जीवन्त इव दृश्यन्ते गतसत्त्वास्तरस्विनः। ७२५
गदाविमथितैर्गात्रैर्मुषलैर्भिन्नमस्तकान्। गजवाजिरथक्षुण्णान् पश्य योधान् सहस्रशः।
मनुष्यगजवाजीनां शरशक्त्यृष्टितोमरैः। निस्त्रिंशैः पट्टिशैः प्रासैर्नखरैर्लगुडैरपि।
शरीरैर्बहुधा छिन्नैः शोणितौघपरिप्लुतैः। गतासुभिरमित्रघ्न संवृता रणभूमयः।
बाहुभिश्चन्दनादिग्धैः साङ्गदैः शुभभूषणैः। सतलत्रैः सकेयूरैर्भाति भारत मेदिनी।
साङ्गुलित्रैर्भुजाग्रैश्च विप्रविद्धैरलङ्कृतैः। हस्तिहस्तोपमैश्छिन्नैरूरुभिश्च तरस्विनां। ७३०
बद्धचूडामणिवरैः शिरोभिश्च सकुण्डलैः। रथांश्च बहुधा भग्नान् हेमकिङ्किणिनः शुभान्।
अश्वांश्च बहुधा पश्य शोणितेन परिप्लुतान्। अनुकर्षानुपासङ्गान् पताका विविधान् ध्वजान्।
योधानाञ्च महाशङ्खान् पाण्डुरांश्च प्रकीर्णकान्। निरस्तजिह्वान्मातङ्गान् शयानान् पर्व्वतोपमान्।
वैजयन्तीर्व्विचित्राश्च हतांश्च गजयोधिनः। वारणानां परिस्तोमान् सुयुक्तानेव कम्बलान्।
विपाटिता विचित्राश्च रूपचित्राः कुथास्तथा। भिन्नाश्च बहुधा घण्टाः पतद्भिश्चूर्णिता गजैः। ७३५
वैदूर्य्यमणिदण्डांश्च पतितांश्चाङ्कुशान् भुवि। अश्वानाञ्च युगापीडान् रत्नचित्रानुरश्छदान्।
विद्धाः सादिध्वजाग्रेषु सुवर्णविकृताः कुथाः। विचित्रान्मणिचित्रांश्च जातरूपपरिष्कृतान्।
अश्वास्तरपरिस्तोमान् राङ्कवान् पतितान् भुवि। चूडामणीन्नरेन्द्राणां विचित्राः काञ्चनस्रजः।

छत्राणि चापविद्धानि चामरव्यजनानि च । चन्दनवनभासैश्च वदनैश्चारुकुण्डलैः ।
कृतश्मश्रुभिराकीर्णां पूर्णचन्द्रनिभैर्महीं । कुमुदोत्पलपद्मानां खण्डैः फुल्लं यथा सरः । ७६०
तथा महीभृतां वक्त्रैः कुमुदोत्पलसन्निभैः । तारागणविचित्रस्य निर्मलेन्दुद्युतित्विषः ।
पश्येमां नभसस्तुल्यां शरज्ज्वलनमालिनीं । एतत्तवैवानुरूपं कर्म्मार्ज्जुन महाहवे ।
दिवि वा देवराजस्य त्वया यत्कृतमाहवे । एवं तां दर्शयन् कृष्णो युद्धभूमिं किरीटिने ।
गच्छन्नेवाशृणोच्छब्दं दुर्य्योधनबले महत् । शङ्खदुन्दुभिनिर्घोषं भेरीपणवनिःस्वनं ।
रथाश्वगजनादांश्च शस्त्रशब्दांश्च दारुणान् । प्रविश्य तद्बलं कृष्णस्तुरगैर्व्वातवेगितैः । ७६५
पाण्ड्येनाभ्यर्द्दितं सैन्यं त्वदीयं वीक्ष्य विस्मितः । स हि नानाविधैर्ब्बाणैरिष्वस्त्रप्रवरो युधि ।
न्यहनद्द्विषतां पूगान् गतासूनन्तको यथा । गजवाजिमनुष्याणां शरीराणि शितैः शरैः ।
भित्त्वा प्रहरतां श्रेष्ठो विदेहासूनपातयत् । शत्रुप्रवीरैरस्तानि नानाशस्त्राणि सायकैः ।
छित्त्वा तानवधीच्छत्रून् पाण्ड्यः शक्र इवासुरान् ।
इति श्रीमहाभारते कर्णपर्व्वणि संकुलयुद्धे ऊनविंशोऽध्यायः ॥ १९ ॥
॥ धृतराष्ट्र उवाच ॥ प्रोक्तस्त्वया पूर्व्वमेव प्रवीरो लोकविश्रुतः । न त्वस्य कर्म्म सङ्ग्रामे त्वया सञ्जय कीर्त्तितं । ७७०
तस्य विस्तरशो ब्रूहि प्रवीरस्याद्य विक्रमं । शिक्षां प्रभावं वीर्य्यञ्च प्रमाणं दर्पमेव च ।
॥ सञ्जय उवाच ॥ भीष्मद्रोणकृपद्रौणिकर्णार्ज्जुनजनार्द्दनान् । समाप्तविद्यान् धनुषि श्रेष्ठान् यान्मन्यसे रथान् ।
यो ह्याक्षिपति वीर्य्येण सर्व्वानेतान्महारथान् । न मेने चात्मना तुल्यं कञ्चिदेव जनेश्वरं ।
तुल्यतां द्रोणभीष्माभ्यामात्मनो यो न मृष्यते । वासुदेवार्ज्जुनाभ्याञ्च न्यूनतां नैच्छतात्मनि ।
स पाण्ड्यो नृपतिश्रेष्ठः सर्व्वशस्त्रभृतां वरः । कर्णस्यानीकमहनत् पराभूत इवान्तकः । ७७५
तदुदीर्णरथाश्वञ्च पत्तिप्रवरसङ्कुलं । कुलालचक्रवद्भ्रान्तं पाण्ड्येनाभ्याहतं बलात् ।
व्यश्वसूतध्वजरथान् विप्रविद्धायुधद्विपान् । सम्यगस्तैः शरैः पाण्ड्यो वायुर्म्मेघानिवाक्षिपत् ।
द्विरदान् द्विरदारोहान् विपताकायुधध्वजान् । सपादरक्षानहनद्वज्रेणाद्रीनिवाद्रिहा ।
सशक्तिप्रासतूणीरानश्वारोहान् हयानपि । पुलिन्दखसबाह्लीकनिषादान्ध्रककुन्तलान् ।
दाक्षिणात्यांश्च भोजांश्च शूरान् सङ्ग्रामकर्क्कशान् । विशस्त्रकवचान् बाणैः कृत्वा चैवाकरोद्व्यसून् । ७८०
चतुरङ्गबलं बाणैर्निघ्नन्तं पाण्ड्यमाहवे । दृष्ट्वा द्रौणिरसंभ्रान्तमसम्भ्रान्ततरोऽभ्ययात् ।
आभाष्य चैनं मधुरमभीतस्तमभीतवत् । प्राह प्रहरतां श्रेष्ठः स्मितपूर्व्वं समाह्वयत् ।
राजन् कमलपत्राक्ष विशिष्टाभिजनश्रुत । वज्रसंहननप्रख्य प्रख्यातबलपौरुष ।
मुष्टिश्लिष्टायतज्याभ्यां व्यायताभ्यां महद्धनुः । दोर्भ्यां विस्फारयन् भासि महाजलदवद्भृशं ।
शरवर्षैर्महावेगैरमित्रानभिवर्षतः । मदन्यं नानुपश्यामि प्रतिवीरं तवाहवे । ७८५
रथद्विरदपत्त्यश्वानेकः प्रमथसे बहून् । मृगसङ्घानिवारण्ये विभीर्भीमबलो हरिः ।
महता रथघोषेण दिवं भूमिञ्च नादयन् । वर्षान्ते सस्यहा मेघो भासि ह्रादीव पार्थिव ।

संस्पृशन्तः शरांस्तीक्ष्णांस्तूणादाशीविषोपमान् । मयैवैकेन युध्यस्व त्र्यम्बकेनान्धको यथा ।
एवमुक्तस्तथेत्युक्त्वा प्रहरेति च ताडितः । कर्णिना द्रोणतनयं विव्याध मलयध्वजः ।
मर्म्मभेदिभिरत्युग्रैर्व्वाणैरग्निशिखोपमैः । स्मयन्नभ्यहनत् द्रौणिः पाण्ड्यमाचार्य्यसत्तमः । ७९०
ततोऽपरान् सुतीक्ष्णाग्रान्नाराचान्मर्म्मभेदिनः । गत्या दशम्या संयुक्तानश्वत्थामाऽप्यवासृजत् ।
तान् शरानच्छिनत् पाण्ड्यो नवभिर्निशितैः शरैः । चतुर्भिरर्द्दयच्चाश्वानाशु ते व्यसवोऽभवन् ।
अथ द्रोणसुतस्येषूंस्तांश्छित्त्वा निशितैः शरैः । धनुर्ज्ज्यां विततां पाण्ड्यश्छिच्छेदादित्यतेजसः ।
दिव्यं धनुरथाधिज्यं कृत्वा द्रौणिरमित्रहा । प्रेक्ष्य चाशु रथे युक्तान् शरैरन्यान् हयोत्तमान् ।
ततः शरसहस्राणि प्रेषयामास वै द्विजः । इषुसम्बाधमाकाशमकरोद्दिश एव च । ७९५
ततस्तानस्यतः सर्व्वान् द्रौणेर्व्वाणान्महात्मनः । जानानोऽप्यक्षयान् पाण्ड्योऽशातयत् पुरुषर्षभः ।
प्रयुक्तांस्तान् प्रयत्नेन छित्त्वा द्रौणेरिषूनरिः । चक्ररक्षौ रणे तस्य प्राणुदन्निशितैः शरैः ।
अथारेर्लाघवं दृष्ट्वा मण्डलीकृतकार्म्मुकः । प्रास्य द्रोणसुतो वाणान् वृष्टिं पूषात्मजो यथा ।
अष्टावष्टगवान्यूहुः शकटानि यदायुधं । अह्नस्तदष्टभागेन द्रौणिश्चिक्षेप मारिष ।
तमन्तकमिव क्रुद्धमन्तकस्यान्तकोपमं । ये ये ददृशिरे तत्र विसंज्ञाः प्रायशोऽभवन् । ८००
पर्ज्जन्य इव घर्म्मान्ते वृष्ट्या साद्रिद्रुमां महीं । आचार्य्यपुत्रस्तां सेनां वाणवृष्ट्या व्यवीवृषत
द्रौणिपर्ज्जन्यमुक्तान्तां वाणवृष्टिं सुदुःसहां । वायव्यास्त्रेण सङ्क्षिप्य मुदा पाण्ड्यानिलोऽनदत् ।
तस्य नानदतः केतुं चन्दनागुरुभूषितं । मलयप्रतिमं द्रौणिश्छित्त्वाऽश्वांश्चतुरो हयान् ।
सूतमेकेषुणा हत्वा महाजलदनिःस्वनं । धनुश्छित्त्वाऽर्द्धचन्द्रेण तिलशो व्यधमद्रथं ।
अस्त्रैरस्त्राणि संवार्य्य छित्त्वा सर्व्वायुधानि च । प्राप्तमप्यहितं द्रौणिर्न जघान रणेप्सया । ८०५
एतस्मिन्नन्तरे कर्णो गजानीकमुपाद्रवत् । द्रावयामास स तदा पाण्डवानां महद्बलं ।
विरथान् रथिनश्चक्रे गजानश्वांश्च भारत । गजान् बहुभिरानर्च्छच्छरैः सन्नतपर्व्वभिः ।
अथ द्रौणिर्महेष्वासः पाण्ड्यं शत्रुनिवर्हणं । विरथं रथिनां श्रेष्ठं नाहनद्युद्धकाङ्क्षया ।
तं वारणं वारणयुद्धकोविदो द्विपोत्तमं पर्व्वतसानुसन्निभं । समाभ्यतिष्ठन्मलयध्वजस्त्वरन् यथाद्रिशृङ्गं हरिरुन्नदंस्तथा ।
ह्वतेश्वरो दन्तिवरः सुकल्पितस्त्वराऽभिसृष्टः प्रतिशत्रुगो बली । तमाद्रवद्द्रौणिशराहतस्त्वरन् जवेन कृत्वा प्रतिहस्तिगर्ज्जितं । ८१०
स तोमरं भास्कररश्मिवर्च्चसं बलास्त्रसर्गोत्तमयत्नमन्युभिः । ससर्ज्ज शीघ्रं परिपीडयन् गजं गुरोः सुताया[illegible]द्रिपतीश्वरो नदन् ।
मणिप्रवेकोत्तमवज्रहाटकैरलङ्कृतं चांशुकमाल्यमौक्तिकैः । हतो हतोऽसीत्यसकृन्मुदा नदन् पराहनद्द्रौणिवराङ्गभूषणं ।
तदर्कचन्द्रग्रहपावकत्विषं भृशातिपातात्पतितं विचूर्णितं । महेन्द्रवज्राभिहतं महास्वनं यथाद्रिशृङ्गं धरणीतले तदा ।
ततः प्रजज्वाल परेण मन्युना पदाहतो नागपतिर्यथा तथा । समाददे चान्तकदण्डसन्निभानिषूनमित्रान्तिकरांश्चतुर्द्दश ।

द्विपस्य पादाग्रकरान् स पञ्चभिर्नृपस्य बाहू च शिरोऽथ च त्रिभिः। जघान षड्भिः षडनुत्तमद्विषः स पाण्ड्यराजानुचरांश्च हारयान्। ८२५

सुदीर्घवृत्तौ वरचन्दनोचितौ सुवर्णमुक्तामणिवज्रभूषणौ। भुजौ धरायां पतितौ नृपस्य तौ विचेष्टतुस्तार्क्ष्यहताविवोरगौ।
शिरश्च तत् पूर्णशशिप्रभाननं सरोषताम्रायतनेत्रमुन्नसं। क्षितावपि भ्राजति तत् सकुण्डलं विशाखयोर्मध्यगतः शशी यथा।
स तु द्विपः पञ्चभिरुत्तमेषुभिः हतः षडंशश्चतुरो नृपस्त्रिभिः। हतो दशांशः कुशलेन युध्यता यथा हविस्तद्वदरेऽवतं यथा।
स पादशो राक्षसभोजनान् बहून् प्रदाय पाण्ड्योऽश्वमनुष्यकुञ्जरान्। स्वधामिवाप्य ज्वलनः पितृप्रियस्ततः प्रशान्तः सलिलप्रहारतः।

समाप्तविद्यन्तु गुरोः सुतं नृपः समाप्तकर्म्माणमुपेत्य ते सुतः। सुहृद्वृतोऽत्यर्थमपूजयन्मुदा जिते बलौ विष्णुमिवामरेश्वरः। ८३०

इति श्रीमहाभारते कर्णपर्व्वणि पाण्ड्यवधे विंशोऽध्यायः ॥ २० ॥

॥ धृतराष्ट्र उवाच ॥ पाण्ड्ये हते किमकरोदर्ज्जुनो युधि सञ्जय। एकवीरेण कर्णेन द्राविते परेषु च।
समाप्तविद्यो बलवान् युक्तो वीरः सपाण्डवः। सर्व्वभूतेष्वनुज्ञातः शङ्करेण महात्मना।
तस्मान्महद्भयं तीव्रममित्रघ्नाद्धनञ्जयात्। स यत्तत्राकरोत्पार्थस्तन्ममाचक्ष्व सञ्जय।
॥ सञ्जय उवाच ॥ हते पाण्ड्येऽर्ज्जुनं कृष्णस्त्वरन्नाह वचो हितं। पश्यामि नाहं राजानमपयातांश्च पाण्डवान्।
निवृत्तैश्च पुनः पार्थैर्भग्नशत्रुबलं महत्। अश्वत्थाम्नश्च सङ्कल्पात् हताः कर्णेन सृञ्जयाः। ८३५
तथाश्वरथनागानां कृतञ्च कदनं महत्। सर्व्वमाख्यातवान् वीरो वासुदेवः किरीटिने।
एतच्छ्रुत्वा च दृष्ट्वा च भ्रातुर्घोरं महद्भयं। वाहयाश्वान् हृषीकेश क्षिप्रमित्याह पाण्डवः।
ततः प्रायात् हृषीकेशो रथेनाप्रतियोधिना। दारुणश्च पुनस्तत्र प्रादुरासीत् समागमः।
ततः पुनः समाजग्मुरभीताः कुरुपाण्डवाः। भीमसेनमुखाः पार्थाः सूतपुत्रमुखा वयं।
ततः प्रववृते भूयः संग्रामो राजसत्तम। कर्णस्य पाण्डवानाञ्च यमराष्ट्रविवर्द्धनः। ८४०
धनूंषि वाणान् परिघानसिपट्टिशतोमरान्। मुषलानि भुशुण्डीश्च शक्त्यृष्टिपरश्वधान्।
गदाः प्रासान् शितान् कुन्तान् भिन्दिपालान् महाङ्कुशान्। प्रगृह्य क्षिप्रमापेतुः परस्परजिघांसया।
वाणज्यातलशब्देन द्यां दिशः प्रदिशो वियत्। पृथिवीं नेमिघोषेण नादयन्तोऽभ्ययुः परान्।
तेन शब्देन महता संहृष्टाः कुरुपाण्डवाः। वीरा वीरैर्महाघोरं कलहान्तं तितीर्षवः।
ज्यातलत्रधनुःशब्दः कुञ्जराणाञ्च बृंहतां। पादातानाञ्च पततां नृणां नादो महानभूत्। ८४५
तालशब्दांश्च विविधान् शूराणाञ्चाभिगर्ज्जतां। श्रुत्वा तत्र भृशं त्रेसुः पेतुर्म्मम्लुश्च सैनिकाः।
तेषां निनदतां चैव शस्त्रवर्षञ्च मुञ्चतां। बहूनाधिरथिर्व्वीरः प्रममाथेषुभिः परान्।
पञ्च पाञ्चालवीराणां रथान्दश च पञ्च च। साश्वसूतध्वजान् कर्णः शरैर्निन्ये यमक्षयं।
योधमुख्या महावीर्य्याः पाण्डूनां कर्णमाहवे। शीघ्रास्त्रा दिवमावृत्य परिवव्रुः समन्ततः।
ततः कर्णो द्विषत्सेनां शरवर्षैर्व्विलोडयन्। विजगाहाण्डजाकीर्णां पद्मिनीमिव यूथपः। ८५०

द्विपमध्यमवस्कन्द्य राधेयो धनुरुत्तमं। विधुन्वानः शितैर्व्वाणैः शिरांस्युन्मथ्य पातयन्।
चर्म्मवर्म्माणि संच्छिन्नान्यपतन् भुवि देहिनां। विषेहुर्नास्य संस्पर्शं द्वितीयस्य पतत्त्रिणः।
वर्म्मदेहासुमथनैर्धनुषः प्रच्युतैः शरैः। मौर्व्व्या तलत्रैर्न्यहनत्कशया वाजिनो यथा।
पाण्डुसृञ्जयपाञ्चालान् शरगोचरमागतान्। ममर्द्द तरसा कर्णः सिंहो मृगगणानिव।
ततः पाञ्चालराजश्च द्रौपदेयाश्च मारिष। यमौ च युयुधानश्च सहिताः कर्णमभ्ययुः। ८४५
तेषु व्यायच्छमानेषु कुरुपाञ्चालपाण्डुषु। प्रियानसूनरणे त्यक्ता योधा जग्मुः परस्परं।
सुसन्नद्धाः कवचिनः सशिरस्त्राणभूषणाः। गदाभिर्मुषलैश्चान्यैः परिघैश्च महाबलाः।
समभ्यधावन्त भृशं कालदण्डैरिवोद्यतैः। नर्द्दन्तश्चाह्वयन्तश्च प्रवल्गन्तश्च मारिष।
ततो निर्ज्जघ्नुरन्योन्यं पेतुश्चान्योन्यताडिताः। वमन्तो रुधिरं गात्रैर्व्विमस्तिष्केक्षणायुधाः।
दन्तपूर्णैः सरुधिरैर्व्वक्त्रैर्द्दाडिमसन्निभैः। जीवन्त इव चाप्येके तस्थुः शस्त्रोपष्टंहिताः। ८५०
परस्वधैश्चाप्यपरे पट्टिशैरसिभिस्तथा। शक्तिभिर्भिन्दिपालैश्च नखरप्रासतोमरैः।
ततक्षुश्चिच्छिदुश्चान्ये बिभिदुश्चिक्षिपुस्तथा। सञ्चकर्त्तुश्च जघ्नुश्च क्रुद्धा रणमहार्णवे।
पेतुरन्योन्यनिहता व्यसवो रुधिरोक्षिताः। क्षरन्तः सहसा रक्तं प्रकृत्ताश्चन्दना इव।
रथै रथा विनिहता हस्तिभिश्चापि हस्तिनः। नरैर्नरा हताः पेतुरश्वैरश्वाः सहस्रशः।
ध्वजाः शिरांसि छत्राणि द्विपहस्ता नृणां भुजाः। क्षुरैर्भल्लार्द्धचन्द्रैश्च छिन्नाः पेतुर्महीतले। ८५५
नरांश्च नागान् सरथान् हयांश्चामृद्नन्नाहवे। अश्वारोहैर्हताः शूराश्छिन्नहस्ताश्च दन्तिनः।
सपताका ध्वजाः पेतुर्व्विशीर्णा इव पर्व्वताः। पत्तिभिश्च समाप्लुत्य द्विरदाः स्यन्दनास्तथा।
हताश्च हन्यमानाश्च पातिताश्चैव सर्व्वशः। अश्वारोहाः समासाद्य त्वरिताः पत्तिभिर्हताः।
सादिभिः पत्तिसङ्घाश्च निहता युधि शेरते। मृदितानीव पद्मानि प्रम्लाना इव च स्रजः।
हतानां वदनान्यासन् गात्राणि च महाहवे। रूपाण्यत्यर्थकान्तानि द्विरदाश्वनृणां नृप। ८६०
समुन्नानीव वस्त्राणि ययुर्दुर्दर्शतां परां।
इति श्रीमहाभारते कर्णपर्व्वणि सङ्कुलयुद्धे एकविंशोऽध्यायः ॥ २१ ॥
॥ सञ्जय उवाच ॥ हस्तिभिस्तु महामात्रास्तव पुत्रेण चोदिताः। धृष्टद्युम्नं जिघांसन्तः क्रुद्धाः पार्षतमभ्ययुः।
प्राच्याश्च दाक्षिणात्याश्च प्रवरा गजयोधिनः। अङ्गा वङ्गाश्च पुण्ड्राश्च मागधास्ताम्रलिप्तकाः।
मेकलाः कोशला मद्रा दशार्णा निषधास्तथा। गजयुद्धेषु कुशलाः कलिङ्गैः सह भारत।
शरतोमरनाराचैर्वृष्टिमन्त इवाम्बुदाः। सिषिचुस्ते ततः सर्व्वे पाञ्चालबलमाहवे। ८६५
तान् सिमर्द्दयिषून्नागान् पार्ष्ण्यङ्गुष्ठाङ्कुशैर्भृशं। चोदितान् पार्षतो बाणैर्नाराचैरभ्यवीवृषत्।
एकैकं दशभिः षड्भिरष्टाभिरपि भारत। द्विरदानभिविव्याध क्षिप्तैर्गिरिनिभान् शरैः।
प्रच्छाद्यमानं द्विरदैर्मेघैरिव दिवाकरं। प्रययुः पाण्डुपाञ्चाला नदन्तो निशितायुधाः।
तान्नागानभिवर्षन्तो ज्यातन्त्रीतलनादितैः। वीरनृत्यं प्रनृत्यन्तः शूरतालप्रमोदितैः।

नकुलः सहदेवश्च द्रौपदेयाः प्रभद्रकाः । सात्यकिश्च शिखण्डी च चेकितानश्च वीर्य्यवान् । ८७०
समन्तात् सिषिचुर्व्वीरा मेघास्तोयैरिवाचलान् । ते म्लेच्छैः प्रेषिता नागा नरानश्वान् रथानपि ।
हस्तैराक्षिप्य ममृदुः पद्भिश्चाप्यतिमन्यवः । बिभिदुश्च विषाणाग्रैः समाक्षिप्य च चिक्षिपुः ।
विषाणलग्नाश्चाप्यन्ये परिपेतुर्व्विभीषणाः । प्रमुखे वर्त्तमानन्तु द्विपमङ्गस्य सात्यकिः ।
नाराचेनोग्रवेगेन भित्त्वा मर्म्माण्यपातयत् । तस्यावर्ज्जितकायस्य द्विरदादुत्पतिष्यतः ।
नाराचेनाहनद्वक्षः सात्यकिः सोऽपतद्भुवि । पुण्ड्रस्यापततो नागं चलन्तमिव पर्व्वतं । ८७५
सहदेवः प्रयत्नात्तैर्नाराचैरहनत्त्रिभिः । विपताकं वियन्तारं विवर्म्मध्वजजीवितं ।
तं हत्वा द्विरदं भूयः सहदेवोऽङ्गमभ्ययात् । सहदेवन्तु नकुलो वारयित्वाङ्गमार्द्दयत् ।
नाराचैर्यमदण्डाभैस्त्रिभिर्नागं शतेन च । दिवाकरकरप्रख्यानङ्गश्चिक्षेप तोमरान् ।
नकुलाय शतान्यष्टौ त्रिधैकैकन्तु सोऽच्छिनत् । तथार्द्धचन्द्रेण शिरस्तस्य चिच्छेद पाण्डवः ।
स पपात हतो म्लेच्छस्तेनैव सह दन्तिना । अथाङ्गपुत्त्रे निहते हस्तिशिक्षाविशारदे । ८८०
अङ्गाः क्रुद्धा महामात्रा नागैर्नकुलमभ्ययुः । चलत्पताकैः सुमुखैर्हेमकक्षातनुच्छदैः ।
मिमर्द्दिषन्तस्त्वरिताः प्रदीप्तैरिव पर्व्वतैः । मेकलोत्कलकालिङ्गा निषधास्ताम्रलिप्तकाः ।
शरतोमरवर्षाणि विमुञ्चन्तो जिघांसवः । तैश्छाद्यमानं नकुलं दिवाकरमिवाम्बुदैः ।
परिपेतुः सुसंरब्धाः पाण्डुपाञ्चालसोमकाः । ततस्तदभवद्युद्धं रथिनां हस्तिभिः सह ।
सृजतां शरवर्षाणि तोमरांश्च सहस्रशः । नागानां प्रास्फुटन् कुम्भा मर्म्माणि विविधानि च । ८८५
दन्ताश्चैवातिविद्धानां नाराचैर्भूषणानि च । तेषामष्टौ महानागांश्चतुःषष्ट्या सुतेजनैः ।
सहदेवो जघानाशु तेऽपतन् सह सादिभिः । अञ्जोगतिभिरायम्य प्रयत्नाद्धनुरुत्तमं ।
नाराचैरहनन्नागान् नकुलः कुलनन्दनः । ततः पाञ्चालशैनेयौ द्रौपदेयाः प्रभद्रकाः ।
शिखण्डी च महानागान् सिषिचुः शरवृष्टिभिः । ते पाण्डुयोधाम्बुधरैः शत्रुद्विरदपर्व्वताः ।
वाणवर्षैर्हताः पेतुर्व्वज्रवर्षैरिवाचलाः । एवं हत्वा तव गजांस्ते पाण्डुरथकुञ्जराः । ८९०
द्रुतं सेनामवैक्षन्त भिन्नकूलामिवापगां । तां ते सेनां समालोड्य पाण्डुपुत्त्रस्य सैनिकाः ।
विक्षोभयित्वा च पुनः कर्णं समभिदुद्रुवुः ।
इति श्रीमहाभारते कर्णपर्व्वणि सङ्कुलयुद्धे द्वाविंशोऽध्यायः ॥ २२ ॥
॥ सञ्जय उवाच ॥ सहदेवं तथा क्रुद्धं दहन्तं तव वाहिनीं । दुःशासनो महाराज भ्राता भ्रातरमभ्ययात् ।
तौ समेतौ महायुद्धे दृष्ट्वा तत्र महारथाः । सिंहनादरवांश्चक्रुर्व्वासांस्यादुधुवुश्च ह ।
ततो भारत क्रुद्धेन तव पुत्त्रेण धन्विना । पाण्डुपुत्त्रस्त्रिभिर्व्वाणैर्व्वक्षस्यभिहतो बली । ८९५
सहदेवस्ततो राजन् नाराचेन तवात्मजं । विद्ध्वा विव्याध सप्तत्या सारथिञ्च त्रिभिः शरैः ।
दुःशासनस्ततश्चापं छित्त्वा राजन्महाहवे । सहदेवं त्रिसप्तत्या बाह्वोरुरसि चार्पयत् ।
सहदेवस्तु संक्रुद्धः खड्गं गृह्य महाहवे । आविध्य प्रासृजत्तूर्णं तव पुत्त्ररथं प्रति ।

समार्गणगुणं चापं छित्त्वा तस्य महामतिः। निपपात ततो भूमौ च्युतः सर्प इवाम्बरात्।
अथान्यद्धनुरादाय सहदेवः प्रतापवान्। दुःशासनाय चिक्षेप बाणमन्तकरं ततः। ९००
तमापतन्तं विशिखं यमदण्डोपमत्विषं। खड्गेन शितधारेण द्विधा चिच्छेद कौरवः।
ततस्तं निशितं खड्गमाविध्य युधि सत्वरः। धनुश्चान्यत् समादाय शरं जग्राह वीर्य्यवान्।
तमापतन्तं सहसा निस्त्रिंशं निशितैः शरैः। पातयामास समरे सहदेवो हसन्निव।
ततो बाणांश्चतुःषष्टिं तव पुत्रो महारणे। सहदेवरथं तूर्णं प्रेषयामास भारत।
तच्छरान् समरे राजन् वेगेनापततो बहून्। एकैकं पञ्चभिर्बाणैः सहदेवो न्यकृन्तत। ९०५
सन्निवार्य्य महाबाणांस्तव पुत्रेण प्रेषितान्। अथास्मै सुबहून् बाणान् प्रेषयामास संयुगे।
तान् बाणांस्तव पुत्रोऽपि छित्त्वैकैकं त्रिभिः शरैः। ननाद सुमहानादं दारयाणो वसुन्धरां।
ततो दुःशासनो राजन् विद्ध्वा पाण्डुसुतं रणे। सारथिं नवभिर्बाणैर्माद्रेयस्य समार्पयत्।
ततः क्रुद्धो महाराज सहदेवः प्रतापवान्। समाधत्त शरं घोरं मृत्युकालान्तकोपमं।
विकृष्य बलवच्चापं तव पुत्राय सोऽसृजत्। स तं निर्भिद्य वेगेन भित्त्वा च कवचं महत्। ९१०
प्राविशद्धरणीं राजन्वल्मीकमिव पन्नगः। ततः संमुमुहे राजंस्तव पुत्रो महारथः।
मूढञ्चैनं समालोक्य सारथिस्त्वरितो रथं। अपोवाह भृशं त्रस्तो वध्यमानः शितैः शरैः।
पराजित्य रणे तन्तु कौरव्यं पाण्डुनन्दनः। दुर्य्योधनबलं दृष्ट्वा प्रममाथ समन्ततः।
पिपीलिकपुटं राजन् यथा मृद्नन्नरो रुषा। तथा सा कौरवी सेना मृदिता तेन भारत।
इति श्रीमहाभारते कर्णपर्व्वणि सहदेवदुःशासनयुद्धे त्रयोविंशोऽध्यायः॥ २३॥

॥ सञ्जय उवाच ॥ नकुलं रभसं युद्धे द्रावयन्तं वरूथिनीं। कर्णो वैकर्त्तनो राजन् वारयामास वै रुषा। ९१५
नकुलस्तु ततः कर्णं प्रहसन्निदमब्रवीत्। चिरस्य बत दृष्टोऽहं दैवतैः सौम्यचक्षुषा।
पश्य मां त्वं रणे पाप चक्षुर्व्विषयमागतं। त्वं हि मूलमनर्थानां वैरस्य कलहस्य च।
त्वद्दोषात् कुरवः क्षीणाः समासाद्य परस्परं। त्वामद्य समरे हत्वा कृतकृत्योऽस्मि विज्वरः।
एवमुक्तः प्रत्युवाच नकुलं सूतनन्दनः। सदृशं राजपुत्रस्य धन्विनश्च विशेषतः।
प्रहरस्व च मे वीर पश्यामस्तव पौरुषं। कर्म्म कृत्वा रणे शूर ततः कत्थितुमर्हसि। ९२०
अनुक्त्वा समरे तात शूरा युध्यन्ति शक्तितः। प्रयुध्यस्व मया शक्त्या हनिष्ये दर्पमेव ते।
इत्युक्त्वा प्राहरत्तूर्णं पाण्डुपुत्राय सूतजः। विव्याध चैनं समरे त्रिसप्तत्या शिलीमुखैः।
नकुलस्तु ततो विद्धः सूतपुत्रेण भारत। अशीत्याशीविषप्रख्यैः सूतपुत्रमविध्यत।
तस्य कर्णो धनुश्छित्त्वा स्वर्णपुङ्खैः शिलाशितैः। त्रिंशता परमेष्वासः शरैः पाण्डवमर्द्दयन्।
ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे। आशीविषा यथा नागा भित्त्वा गां सलिलं पपुः। ९२५
अथान्यद्धनुरादाय हेमपृष्ठं दुरासदं। कर्णं विव्याध विंशत्या सारथिञ्च त्रिभिः शरैः।
ततः क्रुद्धो महाराज नकुलः परवीरहा। क्षुरप्रेण सुतीक्ष्णेन कर्णस्य धनुराच्छिनत्

अथैनं छिन्नधन्वानं सायकानां शतैस्त्रिभिः। आजघ्ने प्रहसन् वीरः सर्व्वलोकमहारथं ।
कर्णमभ्यर्द्दितं दृष्ट्वा पाण्डुपुत्रेण मारिष। विस्मयं परमं जग्मू रथिनः सह दैवतः।
अथान्यद्धनुरादाय कर्णो वैकर्त्तनस्तदा। नकुलं पञ्चभिर्व्वाणैर्ज्जत्रुदेशे समार्पयत्।
तत्रस्थैरथ तैर्व्वाणैर्माद्रीपुत्रो व्यरोचयत्। स्वरश्मिभिरिवादित्यो भुवने विसृजन् प्रभां। ९३०
नकुलस्तु ततः कर्णं विद्ध्वा सप्तभिराशुगैः। अथास्य धनुषः कोटिं पुनश्चिच्छेद मारिष।
सोऽन्यत् कार्म्मुकमादाय समरे वेगवत्तरं। नकुलस्य ततो वाणैः समन्ताच्छादयद्दिशः।
सञ्छाद्यमानः सहसा कर्णचापच्युतैः शरैः। चिच्छेद च शरांस्तूर्णं शरैरेव महारथः।
ततो वाणमयं जालं विततं व्योम्नि दृश्यते। खद्योतानामिव व्रातैः सम्पतद्भिर्यथा नभः।
तैर्व्विमुक्तैः शरशतैश्छादितं गगनं तदा। शलभानां यथा व्रातैस्तद्वदासीद्विशाम्पते। ९३५
ते शरा हेमविकृताः सम्पतन्तो मुहुर्मुहुः। श्रेणीकृता व्यकाशन्त क्रौञ्चाः श्रेणीकृता इव।
वाणजालावृते व्योम्नि छादिते च दिवाकरे। न स्म सम्पतते भूमिं किञ्चिदप्यन्तरीक्षगं।
निरुद्धे तत्र मार्गे च शरसङ्घैः समन्ततः। व्यरोचेतां महात्मानौ कालसूर्याविवोदितौ।
कर्णचापच्युतैर्व्वाणैर्वध्यमानास्तु सोमकाः। अवालीयन्त राजेन्द्र वेदनार्त्ता भृशार्द्दिताः।
नकुलस्य तथा वाणैर्हन्यमाना चमूस्तव। व्यशीर्य्यत दिशो राजन् वातनुन्ना इवाम्बुदाः। ९४०
ते सेने हन्यमाने तु ताभ्यां दिव्यैर्महाशरैः। शरपातमपाक्रम्य तस्थतुः प्रेक्षिके तदा।
प्रोत्सारितजने तस्मिन् कर्णपाण्डवयोः शरैः। अविध्येतां महात्मानावन्योन्यं शरवृष्टिभिः।
विदर्शयन्तौ दिव्यानि शस्त्राणि रणमूर्द्धनि। छादयन्तौ च सहसा परस्परवधैषिणौ।
नकुलेन शरा मुक्ताः कङ्कबर्हिणवाससः। सूतपुत्रमवच्छाद्य व्यतिष्ठन् यथाम्बरे।
तथैव सूतपुत्रेण प्रेषिताः परमाहवे। पाण्डुपुत्रमवच्छाद्य व्यतिष्ठन्ताम्बरे शराः। ९४५
शरवेश्मप्रविष्टौ तौ ददृशाते न कैश्चन। सूर्य्याचन्द्रमसौ राजन् छाद्यमानौ घनैरिव।
ततः क्रुद्धो रणे कर्णः कृत्वा घोरतरं वपुः। पाण्डवं छादयामास समन्ताच्छरवृष्टिभिः।
सोऽतिच्छन्नो महाराज सूतपुत्रेण पाण्डवः। न चकार व्यथां राजन् भास्करो जलदैर्यथा।
ततः प्रहस्याधिरथिः शरजालानि मारिष। प्रेषयामास समरे शतशोऽथ सहस्रशः।
एकच्छायमभूत् सर्व्वं तस्य वाणैर्महात्मनः। अभ्रच्छायेव सञ्जज्ञे सम्पतद्भिः शरोत्तमैः। ९५०
ततः कर्णो महाराज धनुश्छित्त्वा महात्मनः। सारथिं पातयामास रथनीडाद्धसन्निव।
ततोऽश्वांश्चतुरश्चास्य चतुर्भिर्निशितैः शरैः। यमस्य भवनं तूर्णं प्रेषयामास भारत।
अथास्य तं रथं दिव्यं तिलशो व्यधमच्छरैः। पताकाश्चक्ररक्षांश्च गदां खड्गञ्च मारिष।
शतचन्द्रञ्च तच्चर्म्म सर्व्वोपकरणानि च। हताश्वो विरथश्चैव विवर्म्मा च विशाम्पते।
अवतीर्य्य रथात्तूर्णं परिघं गृह्य धिष्ठितः। तमुद्यन्तं महाघोरं परिघं तस्य सूतजः। ९५५
व्यहनत् सायकै राजन् सुतीक्ष्णैर्भारसाधनैः। व्यायुधञ्चैनमालक्ष्य शरैः सन्नतपर्व्वभिः।

अर्द्दयद्भिः कर्णो न चैनं समपीडयत्। स हन्यमानः समरे ह्यश्वाह्नेव बलीयसा।
प्राद्रवत् सरसा राजन्नस्तुते व्याकुलेन्द्रियः। तमभिद्रुत्य राधेयः प्रहसन् वै पुनः पुनः।
सज्यमस्य धनुः कण्ठे व्यवासृजत भारत। ततः स शुशुभे राजन् कण्ठासक्तमहाधनुः।
परिवेषमनुप्राप्तो यथा स्याद्व्योम्नि चन्द्रमाः। यथैव शाक्रिणो मेघः शक्रचापेन शोभितः।　　९९०
तमब्रवीत्ततः कर्णो व्यर्थं व्याहृतवानसि। वदेदानीं पुनर्हृष्टो वध्यमानः पुनः पुनः।
मा योत्सीः कुरुभिः सार्द्धं बलवद्भिश्च पाण्डव। यद्गृहे तात युध्यस्व व्रीडां मा कुरु पाण्डव।
गृहे वा गच्छ माद्रेय यत्र वा कृष्णफाल्गुनौ। एवमुक्त्वा महाराज व्यसर्ज्जयत तं तदा।
वधप्राप्तन्तु तं शूरो नाहनद्धर्म्मवित्तदा। स्मृत्वा कुन्त्या वचो राजंस्तत एनं व्यसर्ज्जयत्।
विसृष्टः पाण्डवो राजन् सूतपुत्रेण धन्विना। व्रीडन्निव जगामाथ युधिष्ठिररथं प्रति।　　९९५
आरुरोह रथञ्चापि सूतपुत्रप्रतापितः। निःश्वसन् दुःखसन्तप्तः कुम्भस्थ इव पन्नगः।
तं विजित्याऽथ कर्णोऽपि पाञ्चालांस्त्वरितो ययौ। रथेनातिपताकेन चन्द्रवर्णहयेन च।
तत्राक्रन्दो महानासीत् पाण्डवानां विशाम्पते। दृष्ट्वा सेनापतिं यान्तं पाञ्चालानां रथव्रजान्।
तत्राकरोन्महाराज कदनं सूतनन्दनः। मध्यं प्राप्ते दिनकरे चक्रवद्विचरन् प्रभुः।
भग्नचक्ररथैः कांश्चित् छिन्नध्वजपताकिभिः। हताश्वैर्हतसूतैश्च भग्नाक्षैश्च मारिष।　　१०००
ह्रियमाणानपश्याम पाञ्चालानां रथव्रजान्। तत्र तत्र च सम्भ्रान्ता विचेरुर्मत्तकुञ्जराः।
दावाग्निपरिदग्धाङ्गा यथैव सुमहावने। भिन्नकुम्भार्द्ररुधिराश्छिन्नहस्ताश्च वारणाः।
छिन्नगात्रावराश्चैव छिन्नवालधयोऽपरे। छिन्नाभ्राणीव सम्पेतुर्वध्यमाना महात्मना।
अपरे त्रासिता नागा नाराचशततोमरैः। तमेवाभिमुखं जग्मुः शलभा इव पावकं।
अपरे निष्टनन्तश्च व्यदृश्यन्त महाद्विपाः। क्षरन्तः शोणितं गात्रैर्नागा इव जलस्रवाः।　　१००५
उरश्छदैर्विमुक्ताश्च वालबन्धैश्च वाजिनः। राजतैश्च तथा कांस्यैः सौवर्णैश्चैव भूषणैः।
हीनांश्चाभरणैश्चैव खलीनैश्च विवर्ज्जितान्। चामरैश्च कुथाभिश्च तूणीरैः पतितैरपि।
निहतैः सादिभिश्चैव शूरैराहवशोभिभिः। अपश्याम रणे तत्र भ्राम्यमाणान् हयोत्तमान्।
प्रासैः खड्गैश्च संस्यूतानृष्टिभिश्चापि भारत। हयसादीनपश्याम कञ्चुकोष्णीषधारिणः।
निहतान् वध्यमानांश्च वेपमानांश्च भारत। नानाङ्गावयवैर्हीनांस्तत्र तत्रैव भारत।　　१०१०
रथान् हेमपरिष्कारान् संयुक्तान् जवनैर्हयैः। भ्राम्यमाणानपश्याम हतेषु रथिषु द्रुतं।
भग्नाक्षकूवरान् कांश्चिद्भग्नचक्रांश्च भारत। विपताकध्वजांश्चान्यान् छिन्नेषादण्डबन्धुरान्।
विहतान् रथिनस्तत्र धावमानांस्ततस्ततः। सूतपुत्रशरैस्तीक्ष्णैर्हन्यमानान् विशाम्पते।
विशस्त्रांश्च तथैवान्यान् सशस्त्रांश्च हतान् बहून्। तारकाजालसंच्छन्नान् वरघण्टाविशोभितान्।
नानावर्णविचित्राभिः पताकाभिरलङ्कृतान्। वारणाननुपश्यामो धावमानान् समन्ततः।　　१०१५
शिरांसि बाहूनूरूंश्च छिन्नानन्यांस्तथैव च। कर्णचापच्युतैर्बाणैरपश्याम समन्ततः।

महान् व्यतिकरो रौद्रो योधानामन्वपद्यत । कर्णचापकनुन्नानां युध्यताञ्च शितैः शरैः ।
ते वध्यमानाः समरे सूतपुत्रेण सृञ्जयाः । तमेवाभिमुखं यान्ति पतङ्गा इव पावकं ।
तं दहन्तमनीकानि तत्र तत्र महारथं । क्षत्रिया वर्जयामासुर्युगान्ताग्निमिवोत्थितं ।
हतशेषास्तु ये वीराः पाञ्चालानां महारथाः । तान् प्रभग्नान् द्रुतान्वीरः पृष्ठतो विकिरञ्छरैः । ९९०
अभ्यधावत तेजस्वी विशीर्णकवचध्वजान् । पातयामास तान् बाणैः सूतपुत्रो महाबलः ।
मध्यन्दिनमनुप्राप्तो भूतानीव तमोनुदः ।
इति श्रीमहाभारते कर्णपर्व्वणि कर्णयुद्धे चतुर्व्विंशतितमोऽध्यायः ॥ २४ ॥
॥ सञ्जय उवाच ॥ युयुत्सुं तव पुत्रस्य द्रावयन्तं बलं महत् । उलूकोऽभ्यपतत्तूर्णं तिष्ठतिष्ठेति चाब्रवीत् ।
युयुत्सुश्च ततो राजन् शितधारेण पत्रिणा । उलूकं ताडयामास वज्रेणेव महाबलं ।
उलूकस्तु ततः क्रुद्धस्तव पुत्रस्य संयुगे । क्षुरप्रेण धनुश्छित्त्वा ताडयामास कर्णिना । ९९५
तदपास्य धनुश्छिन्नं युयुत्सुर्वेगवत्तरं । अन्यदादत्त सुमहच्चापं संरक्तलोचनः ।
शाकुनिन्तु ततः षष्ट्या विव्याध भरतर्षभ । सारथिं त्रिभिरानर्च्छत्तञ्च भूयो न्यविध्यत ।
उलूकस्तन्तु विंशत्या विद्ध्वा स्वर्णविभूषितैः । अथास्य समरे क्रुद्धो ध्वजं चिच्छेद काञ्चनं ।
स छिन्नयष्टिः सुमहान् शीर्य्यमाणो महाध्वजः । पपात प्रमुखे राजन् युयुत्सोः काञ्चनध्वजः ।
ध्वजमुन्मथितं दृष्ट्वा युयुत्सुः क्रोधमूर्च्छितः । उलूकं पञ्चभिर्बाणैराजघान स्तनान्तरे १०००
उलूकस्तस्य समरे तैलधौतेन मारिष । शिरश्चिच्छेद भल्लेन यन्तुर्भरतसत्तम ।
तच्छिन्नमपतद्भूमौ युयुत्सोः सारथेस्तदा । तारारूपं यथा चित्रं निपपात महीतले ।
जघान चतुरोऽश्वांश्च तञ्च विव्याध सप्तभिः । सोऽतिविद्धो बलवता प्रत्ययाद्रथान्तरं ।
तं निर्ज्जित्य रणे राजन्नुलूकस्त्वरितो ययौ । पाञ्चालान् सृञ्जयांश्चैव विनिघ्नन्निशितैः शरैः ।
शतानीकं महाराज श्रुतकर्म्मा सुतस्तव । व्यश्वसूतरथञ्चक्रे निमेषार्द्धादसम्भ्रमः । १००५
हताश्वे तु रथे तिष्ठन् शतानीको महारथः । गदां चिक्षेप संक्रुद्धस्तव पुत्रस्य मारिष ।
सा कृत्वा स्यन्दनं भस्म हयांश्चैव ससारथीन् । पपात धरणीं तूर्णं दारयन्तीव भारत ।
तावुभौ विरथौ वीरौ कुरूणां कीर्त्तिवर्द्धनौ । अपाक्रमेतां युद्धात्तु प्रेक्षमाणौ परस्परं ।
पुत्रस्तु तव सम्भ्रान्तो विविंशो रथमारुहत् । शतानीकोऽपि त्वरितः प्रतिविन्ध्यरथं गतः ।
सुतसोमन्तु शकुनिर्व्विद्ध्वा तु निशितैः शरैः । नाकम्पयत् सुसंक्रुद्धो वार्य्योघ इव पर्व्वतं । १०१०
सुतसोमस्तु तं दृष्ट्वा पितुरत्यन्तवैरिणं । शरैरनेकसाहस्रैश्छादयामास भारत ।
तान् शरान् शकुनिस्तूर्णं चिच्छेदान्यैः पतत्रिभिः । लघ्वस्त्रश्चित्रयोधी च जितकाशी च संयुगे ।
निवार्य्य समरे चापि शरांस्तान्निशितैः शरैः । आजघान सुसंक्रुद्धः सुतसोमन्त्रिभिः शरैः ।
तस्याश्वान् केतनं सूतं तिलशो व्यधमच्छरैः । श्यालस्तव महाराज तत उच्चुक्रुशुर्जनाः ।
हताश्वो विरथश्चैव छिन्नकेतुश्च मारिष । धन्वी धनुर्व्वरं गृह्य रथाद्भूमावतिष्ठत । १०१५

व्यसृजत् सायकांश्चैव स्वर्णपुङ्खान् शिलाशितान्। छादयामास समरे तव श्यालस्य तं रथं।
शलभानामिव व्रातान् शरव्रातान्महारथः। रथोपगान् समीक्ष्यैव विव्यथे नैव सौबलः।
प्रममाथ शरांस्तस्य शरव्रातैर्महायशाः। तत्रातुष्यन्त योधाश्च सिद्धाश्चापि दिवि स्थिताः
सुतसोमस्य तत् कर्म्म दृष्ट्वा श्रद्धेयमद्भुतं। रथस्थं शकुनिं यत्तं पदातिः समयोधयत्।
तस्य तीक्ष्णैर्महावेगैर्भल्लैः सन्नतपर्व्वभिः। व्यहनत् कार्मुकं राजंस्तूणीरांश्चैव सर्व्वशः। १०२०
स च्छिन्नधन्वा विरथः खड्गमुद्यम्य चानदत्। वैदूर्य्योत्पलवर्णाभं दन्तिदन्तमयत्सरुं।
भ्राम्यमाणं ततस्तन्तु विमलाम्बरवर्च्चसं। कालदण्डोपमं मेने सुतसोमस्य धीमतः।
सोऽचरत् सहसा खड्गी मण्डलानि सहस्रशः। चतुर्द्दश महाराज शिक्षाबलसमन्वितः।
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं स्रुतं। सम्पातं समुदीर्णञ्च दर्शयामास संयुगे।
सौबलस्तु ततस्तस्य शरांश्चिक्षेप वीर्य्यवान्। तानापतत एवाशु चिच्छेद परमासिना। १०२५
ततः क्रुद्धो महाराज सौबलः पुनरेव च। प्राहिणोत् सुतसोमाय शरानाशीविषोपमान्।
चिच्छेद तांश्च खड्गेन शिक्षया च बलेन च। दर्शयन् लाघवं युद्धे तार्क्ष्यतुल्यपराक्रमः।
तस्य सञ्चरतो राजन्मण्डलावर्त्तने तदा। क्षुरप्रेण सुतीक्ष्णेन खड्गं चिच्छेद सुप्रभं।
स च्छिन्नः सहसा भूमौ निपपात महानसिः। अर्द्धमस्य स्थितं हस्ते त्सरुस्तत्र भारत।
छिन्नमाज्ञाय निस्त्रिंशमवप्लुत्य पदानि षट्। प्राविध्यत ततः शेषं सुतसोमो महारथः। १०३०
स छित्त्वा सगुणञ्चापं रणे तस्य महात्मनः। पपात धरणीं तूर्णं स्वर्णवज्रविभूषितं।
सुतसोमस्ततोऽगच्छच्छ्रुतकीर्त्तेर्महारथं। सौबलोऽपि धनुर्गृह्य घोरमन्यत् सुदुर्ज्जयं।
अभ्ययात् पाण्डवानीकं निघ्नन् शत्रुगणान् बहून्। तत्र नादो महानासीत् पाण्डवानां विशाम्पते।
सौबलं समरे दृष्ट्वा विचरन्तमभीतवत्। तान्यनीकानि दृप्तानि शस्त्रवन्ति महान्ति च।
द्राव्यमाणान्यदृश्यन्त सौबलेन महात्मना। यथा दैत्यचमूं राजन् देवराजो ममर्द्द ह १०३५
तथैव पाण्डवीं सेनां सौबलेयो व्यनाशयत्।
इति श्रीमहाभारते कर्णपर्व्वणि सुतसोमसौबलयुद्धे पञ्चविंशोऽध्यायः ॥ २५ ॥
॥ सञ्जय उवाच ॥ धृष्टद्युम्नं कृपो राजन् वारयामास संयुगे। यथा दृष्ट्वा वने सिंहं शरभो वारयेद्युधि।
निरुद्धः पार्षतस्तेन गौतमेन बलीयसा। पदात्पदं विचलितुं नाशक्नोत्तत्र भारत।
गौतमस्य रथं दृष्ट्वा धृष्टद्युम्नरथं प्रति। वित्रेसुः सर्व्वभूतानि क्षयं प्राप्तञ्च मेनिरे।
तत्रावोचन् विमनसो रथिनः सादिनस्तथा। द्रोणस्य निधनान्नूनं संक्रुद्धो द्विपदाम्वरः। १०४०
शारद्वतो महातेजा दिव्यास्त्रविदुदारधीः। अपि स्वस्ति भवेदद्य धृष्टद्युम्नस्य गौतमात्।
अपीयं वाहिनी कृत्स्ना मुच्येत महतो भयात्। अप्ययं ब्राह्मणः सर्व्वान्न नो हन्यात् समागतान्।
यादृशं दृश्यते रूपमन्तकप्रतिमं भृशं। गमिष्यत्यद्य पदवीं भारद्वाजस्य गौतमः।

आचार्य्यः शिष्यहन्ता च विजयी च सदा युधि । अस्त्रवान् वीर्य्यसम्पन्नः क्रोधेन च समन्वितः ।
पार्षतस्य महायुद्धे विमुखोऽद्याभिलक्ष्यते । इत्येवं विविधा वाचस्तावकानां परैः सह । १०५५
व्यश्रूयन्त महाराज तयोस्तत्र समागमे । विनिःश्वस्य ततः क्रोधात् कृपः शारद्वतो नृप ।
पार्षतञ्चार्द्दयामास निश्चेष्टं सर्व्वमर्म्मसु । स हन्यमानः समरे गौतमेन महात्मना ।
कर्त्तव्यं न स्म जानाति मोहेन महता वृतः । तमब्रवीत्ततो यन्ता कच्चित् क्षेमन्तु पार्षत
ईदृशं व्यसनं युद्धे न ते दृष्टं मया क्वचित् । दैवयोगात्तु ते वाणा न्यपतन्मर्म्मभेदिनः ।
प्रेषिता द्विजमुख्येन मर्म्माण्युद्दिश्य सर्व्वतः । व्यावर्त्तये रथं तूर्णं नदीवेगमिवार्णवात् । १०६०
अवध्यं ब्राह्मणं मन्ये येन ते विक्रमो हतः । धृष्टद्युम्नस्ततो राजन् शनकैरब्रवीद्वचः ।
मुह्यते मे मनस्तात गात्रस्वेदश्च जायते । वेपथुश्च शरीरे मे रोमहर्षश्च जायते ।
वर्ज्जयन् ब्राह्मणं युद्धे शनैर्याहि यतोऽर्ज्जुनः । अर्ज्जुनं भीमसेनं वा समरे प्राप्य सारथे ।
क्षेममद्य भवेदेवमेषा मे नैष्ठिकी मतिः । ततः प्रायान्महाराज सारथिस्त्वरयन् हयान् ।
यतो भीमो महेष्वासो युयुधे तव सैनिकैः । प्रद्रुतञ्च रथं दृष्ट्वा धृष्टद्युम्नस्य मारिष । १०६५
किरन् शरशतान्येव गौतमोऽनुययौ तदा । शङ्खञ्च पूरयामास मुहुर्मुहुररिन्दमः ।
पार्षतं त्रासयामास महेन्द्रो नमुचिं यथा । शिखण्डिनन्तु समरे भीष्ममृत्युं दुरासदं ।
हार्द्दिक्यो वारयामास स्मयन्निव मुहुर्मुहुः । शिखण्डी तु समासाद्य हृदिकानां महारथं ।
पञ्चभिर्निशितैर्भल्लैर्ज्जत्रुदेशे समाहनत् । कृतवर्म्मा तु संक्रुद्धो भित्त्वा षष्ट्या पतत्रिभिः ।
धनुरेकेन चिच्छेद हसन् राजन्महारथः । अथान्यद्धनुरादाय द्रुपदस्यात्मजो बली । १०७०
तिष्ठतिष्ठेति संक्रुद्धो हार्द्दिक्यं प्रत्यभाषत । ततोऽस्य नवतिं वाणान् रुक्मपुङ्खान् सुतेजनान् ।
प्रेषयामास राजेन्द्र तेऽस्याभ्रश्यन्त वर्म्मणः । विलोलांस्तान् समालक्ष्य पतितांश्च महीतले ।
क्षुरप्रेण सुतीक्ष्णेन कार्म्मुकं चिच्छिदे भृशं । अथैनं छिन्नधन्वानं भग्नशृङ्गमिवर्षभं ।
अशीत्या मार्गणैः क्रुद्धो बाह्वोरुरसि चार्पयत् । कृतवर्म्मा तु संक्रुद्धो मार्गणैः क्षतविक्षतः ।
ववाम रुधिरं गात्रैः कुम्भवक्त्रादिवोदकं । रुधिरेण परिक्लिन्नः कृतवर्म्मा व्यराजत । १०७५
वर्षेण क्लेदितो राजन् यथा गैरिकपर्व्वतः । अथान्यद्धनुरादाय समार्गणगुणं प्रभुः ।
शिखण्डिनं वाणगणैः स्कन्धदेशे व्यताडयत् । स्कन्धदेशे स्थितैर्व्वाणैः शिखण्डी तु व्यराजत ।
शाखाप्रशाखाविपुलः सुमहान् सप्तपर्णो यथा । तावन्योन्यं भृशं विद्ध्वा रुधिरेण समुक्षितौ ।
अन्योन्यशृङ्गाभिहतौ रेजतुर्वृषभाविव । अन्योन्यस्य वधे यत्नं कुर्व्वाणौ तौ महारथौ ।
रथाभ्यां चेरतुस्तत्र मण्डलानि सहस्रशः । कृतवर्म्मा महाराज पार्षतं निशितैः शरैः । १०८०
रणे विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः । ततोऽस्य समरे वाणं भोजः प्रहरतां वरः ।
जीवितान्तकरं घोरं व्यसृजत्त्वरयाऽन्वितः । स तेनाभिहतो राजन् मूर्च्छामाशु समाविशत् ।

ध्वजयष्टिश्च सहसा शिशिये कम्पताहतः । अपोवाह रणात्तूर्णं सारथी रथिनाम्वरं ।
हार्दिक्यं शरसन्तप्तं निःश्वसन्तं पुनः पुनः । पराजिते ततः शूरे हृदिकस्यात्मजे प्रभो ।
अद्रवत् पाण्डवी सेना वध्यमाना समन्ततः । १०७५
इति श्रीमहाभारते कर्णपर्व्वणि संकुलयुद्धे षड्विंशोऽध्यायः ॥ २६ ॥
॥ सञ्जय उवाच ॥ श्वेताश्वोऽथ महाराज व्यधमत्तावकं बलं । यथा वायुः समासाद्य तूलराशिं समन्ततः ।
प्रत्युद्ययुस्त्रिगर्त्तास्तं शिवयः कौरवैः सह । शाल्वाः संशप्तकाश्चैव नारायणबलञ्च यत् ।
सत्यसेनश्चन्द्रदेवो मित्रदेवः सुतञ्जयः । सौश्रुतिश्चित्रसेनश्च मित्रवर्म्मा च भारत ।
सुशर्म्मा वसुधर्म्मा च सुवर्म्मा चैव भारत । त्रिगर्त्तराजः समरे भ्रातृभिः परिवारितः ।
पुत्रैश्चैव महेष्वासैर्नानाशस्त्रविशारदैः । व्यसृजन्त शरव्रातान् किरन्तोऽर्जुनमाहवे । १०८०
अभ्यवर्त्तन्त सहसा वार्य्योघा इव सागरं । ते त्वर्जुनं समासाद्य योधाः शतसहस्रशः ।
अगच्छन् विलयं सर्व्वे तार्क्ष्यं दृष्ट्वेव पन्नगाः । ते हन्यमानाः समरे नाजहुः पाण्डवं रणे ।
हन्यमाना महाराज शलभा इव पावकं । सत्यसेनस्त्रिभिर्व्वाणैर्व्विव्याध युधि पाण्डवं ।
मित्रदेवस्त्रिषष्ट्या तु चन्द्रसेनश्च सप्तभिः । मित्रवर्म्मा त्रिसप्तत्या सौश्रुतिश्चापि सप्तभिः ।
शत्रुञ्जयस्तु विंशत्या सुशर्म्मा नवभिः शरैः । स विद्धो बहुभिः संख्ये प्रतिविव्याध तान्नृपान् । १०८५
सौश्रुतिं सप्तभिर्व्विद्ध्वा सत्यसेनं त्रिभिः शरैः । शत्रुञ्जयञ्च विंशत्या चन्द्रदेवं तथाऽष्टभिः ।
मित्रदेवं शतेनैव श्रुतसेनं त्रिभिः शरैः । नवभिर्म्मित्रवर्म्माणं सुशर्म्माणं तथाऽष्टभिः ।
शत्रुञ्जयञ्च राजानं हत्वा तत्र शिलाशितैः । सौश्रुतेः सशिरस्त्राणं शिरः कायादपाहरत् ।
त्वरितश्चन्द्रदेवञ्च शरैर्निन्ये यमक्षयं । तथेतरान्महाराज यतमानान्महारथान् ।
पञ्चभिः पञ्चभिर्व्वाणैरेकैकं प्रत्यवारयत् । सत्यसेनस्तु संक्रुद्धस्तोमरं व्यसृजन्महत् । १०९०
समुद्दिश्य रणे कृष्णं सिंहनादं ननाद च । स निर्भिद्य भुजं सव्यं माधवस्य महात्मनः ।
अयस्मयो हेमदण्डो जगाम धरणीं तदा । माधवस्य तु विद्धस्य तोमरेण महारणे ।
प्रतोदः प्रापतद्धस्ताद्रश्मयश्च विशाम्पते । वासुदेवं विभिन्नाङ्गं दृष्ट्वा पार्थो धनञ्जयः ।
क्रोधमाहारयत्तीव्रं कृष्णञ्चेदमुवाच ह । प्रापयाश्वान्महाबाहो सत्यसेनं प्रति प्रभो ।
यावदेनं शरैस्तीक्ष्णैर्नयामि यमसादनं । प्रतोदं गृह्य सोऽन्यन्तु रश्मीनपि यथा पुरा । १०९५
वाहयामास तानश्वान् सत्यसेनरथं प्रति । विष्वक्सेनन्तु निर्भिन्नं दृष्ट्वा पार्थो धनञ्जयः ।
सत्यसेनं शरैस्तीक्ष्णैर्व्वारयित्वा महारथः । ततः सुनिशितैर्भल्लै राज्ञस्तस्य महच्छिरः ।
कुण्डलोपचितं कायात् चकर्त्त पृतनान्तरे । तं निहत्य शितैर्व्वाणैर्म्मित्रवर्म्माणमाक्षिपत् ।
वत्सदन्तेन तीक्ष्णेन सारथिञ्चास्य मारिष । ततः शरशतैर्भूयः संशप्तकगणान् बली ।
पातयामास संक्रुद्धः शतशोऽथ सहस्रशः । ततो रजतपुङ्खेन राजन् शीर्षं महात्मनः । ११००
मित्रसेनस्य चिच्छेद क्षुरेण महारथः । सुशर्म्माणञ्च संक्रुद्धो जत्रुदेशे समाहनत् ।

ततः संशप्तकाः सर्व्वे परिवार्य्य धनञ्जयं। शरौघैर्व्यवहन् क्रुद्धा नादयन्तो दिशो दश।
अभ्यर्द्दितस्तु तैर्जिष्णुः शक्रतुल्यपराक्रमः। ऐन्द्रमस्त्रममेयात्मा प्रादुश्चक्रे महारथः।
ततः शरसहस्राणि प्रादुरासन् विशाम्पते। ध्वजानां छिद्यमानानां कार्म्मुकाणाञ्च मारिष।
रथानां सपताकानां तूणीराणां युगैः सह। अक्षाणामथ चक्राणां योक्त्राणां रश्मिभिः सह। ११०५
कूबराणां वरूथानां पृषत्कानाञ्च संयुगे। अश्मनां पततां चापि प्रासानामृष्टिभिः सह।
गदानां परिघाणाञ्च शक्तितोमरपट्टिशैः। शतघ्नीनां सचक्राणां भुजानामूरुभिः सह।
कण्ठसूत्राङ्गदानाञ्च केयूराणाञ्च मारिष। हाराणामथ निष्काणां तनुत्राणाञ्च भारत।
छत्राणां व्यजनानाञ्च शिरसां मुकुटैः सह। अश्रूयत महाशब्दस्तत्र तत्र विशाम्पते।
सकुण्डलानि स्वक्षाणि पूर्णचन्द्रनिभानि च। शिरांस्युर्व्व्यामदृश्यन्त ताराजालमिवाम्बरे। १११०
सुस्रग्वीणि सुवासांसि चन्दनेनोक्षितानि च। शरीराणि व्यदृश्यन्त निहतानां महीतले।
गन्धर्व्वनगराकारं घोरमायोधनं तदा। निहतै राजपुत्रैश्च क्षत्रियैश्च महाबलैः।
हस्तिभिः पतितैश्चैव तुरङ्गैश्चाभवन्मही। अगम्यरूपा समरे विशीर्णैरिव पर्व्वतैः।
नासीच्चक्रपथस्तत्र पाण्डवस्य महात्मनः। निघ्नतः शात्रवान् भल्लैर्हस्त्यश्वं चामितं महत्।
आतङ्कादिव सीदन्ति रथचक्राणि मारिष। चरतस्तस्य संग्रामे तस्मिन् लोहितकर्द्दमे। १११५
सीदमानानि चक्राणि समूहुस्तुरगा भृशं। श्रमेण महता युक्ता मनोमारुतरंहसः।
बध्यमानन्तु तत् सैन्यं पाण्डुपुत्रेण धन्विना। प्रायशो विमुखं सर्व्वं नावतिष्ठत भारत।
तान् जित्वा समरे जिष्णुः संशप्तकगणान् बहून्। विरराज तदा पार्थो विधूमोऽग्निरिव ज्वलन्।
इति श्रीमहाभारते कर्णपर्व्वणि संशप्तकजये सप्तविंशोऽध्यायः॥ २७ ॥
॥ सञ्जय उवाच ॥ युधिष्ठिरं महाराज विसृजन्तं शरान् बहून्। स्वयं दुर्य्योधनो राजा प्रत्यगृह्णादभीतवत्।
तमापतन्तं सहसा तव पुत्रं महारथं। धर्म्मराजो द्रुतं विद्ध्वा तिष्ठतिष्ठेति चाब्रवीत्। ११२०
स तु तं प्रतिविव्याध नवभिर्निशितैः शरैः। सारथिञ्चास्य भल्लेन भृशं क्रुद्धोऽभ्यताडयत।
ततो युधिष्ठिरो राजन् स्वर्णपुङ्खान् शिलीमुखान्। दुर्य्योधनाय चिक्षेप त्रयोदश शिलाशितान्।
चतुर्भिश्चतुरो वाहांस्तस्य हत्वा महारथः। पञ्चमेन शिरः कायात् सारथेश्च समाक्षिपत्।
षष्ठेन तु ध्वजं राज्ञः सप्तमेन तु कार्म्मुकं। अष्टमेन तथा खड्गं पातयामास भूतले।
पञ्चभिर्नृपतिञ्चापि धर्म्मराजोऽर्द्दयद्भृशं। हताश्वात्तु रथात्तस्मादवप्लुत्य सुतस्तव। ११२५
उत्तमं व्यसनं प्राप्तो भूमावेवावतिष्ठत। तन्तु कृच्छ्रगतं दृष्ट्वा कर्णद्रौणिकृपादयः।
अभ्यवर्त्तन्त सहसा परीप्सन्तो नराधिपं। अथ पाण्डुसुताः सर्व्वे परिवार्य्य युधिष्ठिरं।
अन्वयुः समरे राजंस्ततो युद्धमवर्त्तत। ततस्तूर्य्यसहस्राणि प्रावाद्यन्त महामृधे।
ततः किलकिलाशब्दः प्रादुरासीन्महीपते। यत्राभ्यगच्छन् समरे पाञ्चालाः कौरवैः सह।
नरा नरैः समाजग्मुर्व्वारणा वरवारणैः। रथाश्च रथिभिः सार्द्धं हयाश्च हयसादिभिः। ११३०

दृष्टान्यासन्महाराज प्रेक्षणीयानि संयुगे । विविधान्यप्यचिन्त्यानि शस्त्रवन्त्युत्तमानि च ।
ते शूराः समरे सर्व्वे चित्रं लघु च सुष्ठु च । अयुध्यन्त महावेगाः परस्परवधैषिणः ।
अन्योन्यं समरे जघ्नुर्योधा युद्धसमुच्छ्रिताः । न हि ते समरं चक्रुः पृष्ठतो वै कथञ्चन ।
मुहूर्त्तमिव तद्युद्धमासीन्मधुरदर्शनं । तत उन्मत्तवद्राजन्निर्मर्य्यादमवर्त्तत ।
रथी नागं समासाद्य दारयन्निशितैः शरैः । प्रेषयामास कालाय शरैः सन्नतपर्व्वभिः । ११३५
नागा हयान् समासाद्य विक्षिपन्तो कक्षपथे । दारयामासुरत्युग्रं तत्र तत्र तदा तदा ।
हयारोहाश्च बहवः परिवार्य्य हयोत्तमान् । तलशब्दरवांश्चक्रुः सम्पतन्तस्ततस्ततः ।
धावमानांस्ततस्तांस्तु द्रवमाणान्महागजान् । पार्श्वतः पृष्ठतश्चैव निजघ्नुर्हयसादिनः ।
विद्राव्य च बहूनश्वान्नागा राजन्मदोत्कटाः । विषाणैश्चापरे जघ्नुर्ममृदुश्चापरे भृशं ।
साश्वारोहांश्च तुरगान् विषाणैर्व्विभिदू रुषा । अपरे चिक्षिपुर्न्नागाः प्रसह्यातिबलास्तदा । ११४०
पादातैराहता नागा विवरेषु समन्ततः । चक्रुरार्त्तस्वरं घोरं दुद्रुवुश्च दिशो दश ।
पदातीनान्तु सहसा प्रद्रुतानां महाहवे । उत्सृज्याभरणं तूर्णमवप्लुत्य रणाजिरे ।
निमित्तं मन्यमानास्तु परिणाम्य महागजाः । जगृहुर्बिभिदुश्चैव चित्राण्याभरणानि च ।
तांस्तु तत्र प्रसक्तान् वै परिवार्य्य पदातयः । हस्त्यारोहान्निजघ्नुस्ते महावेगा बलोत्कटाः ।
अपरे हस्तिभिर्हस्तैः खे विक्षिप्ता महाहवे । निपतन्तो विषाणाग्रैर्भृशं विद्धाः सुशिक्षितैः । ११४५
अपरे सहसा गृह्य विषाणैरेव सूदिताः । सेनान्तरं समासाद्य केचित्तत्र महागजैः ।
क्षुण्णगात्रा महाराज विक्षिप्य च पुनः पुनः । अपरे व्यजनानीव विभ्राम्य निहता मृधे ।
पुरःसराश्च नागानामपरेषां विशाम्पते । शरीराण्यतिविद्धानि तत्र तत्र रणाजिरे ।
प्रतिमानेषु कुम्भेषु दन्तवेष्टेषु चापरे । निगृहीता भृशं नागाः प्रासतोमरशक्तिभिः ।
निगृह्य च गजाः केचित् पार्श्वस्थैर्भृशदारुणैः । रथाश्वसादिभिस्तत्र संछिन्ना न्यपतन् भुवि । ११५०
सहयाः सादिनस्तत्र तोमरेण महामृधे । भूमावमृद्नन् वेगेन सवर्म्माणं पदातिनं ।
तथा सावरणान् कांश्चित्तत्र तत्र विशाम्पते । रथान्नागाः समासाद्य परिगृह्य च मारिष ।
व्याक्षिपन् सहसा तत्र घोररूपे भयानके । नाराचैर्निहताश्चापि गजाः पेतुर्महाबलाः ।
पर्व्वतस्येव शिखरं वज्ररुग्णं महीतले । योधा योधान् समासाद्य मुष्टिभिर्व्यहनन् युधि ।
केशेष्वन्योन्यमाक्षिप्य चिक्षिपुर्बिभिदुश्च ह । उद्यम्य च भुजानन्ये निःक्षिप्य च महीतले । ११५५
पदा चोरः समाक्रम्य स्फुरतोऽपाहरच्छिरः । पततश्चापरो राजन् विजहारासिना शिरः ।
जीवतश्च तथैवान्यः शस्त्रं काये न्यमज्जयत् । मुष्टियुद्धं महच्चासीत् योधानां तत्र भारत ।
तथा केशग्रहश्चोग्रो बाहुयुद्धञ्च भैरवं । समासक्तस्य चान्येन अविज्ञातस्तथा परः ।
जहार समरे प्राणान्नानाशस्त्रैरनेकधा । संसक्तेषु च योधेषु वर्त्तमाने च सङ्कुले ।
कबन्धान्युत्थितानि स्युः शतशोऽथ सहस्रशः । शोणितैः सिच्यमानानि शस्त्राणि कवचानि च । ११६०

महारागानुरक्तानि वस्त्राणीव चकाशिरे। एवमेतन्महद्युद्धं दारुणं भृशसङ्कुलं।
उन्मत्तगङ्गप्रतिमं शब्देनापूरयज्जगत्। नैव स्वे न परे राजन् विज्ञायन्ते शरातुराः।
योद्धव्यमिति युध्यन्ते राजानो जयगृद्धिनः। स्वान् स्वे जघ्नुर्महाराज परांश्चैव समागतान्।
उभयोः सेनयोर्वीरैर्व्याकुलं समपद्यत। रथैर्भग्नैर्महाराज वारणैश्च निपातितैः।
हयैश्च पतितैस्तत्र नरैश्च विनिपातितैः। अगम्यरूपा पृथिवी क्षणेन समपद्यत। ११६५
क्षणेनासीन्महीपाल क्षतजौघप्रवर्त्तिनी। पाञ्चालानहनत्कर्णस्त्रिगर्त्तांश्च धनञ्जयः।
भीमसेनः कुरून् राजन् हस्त्यनीकञ्च सर्वशः। एवमेष क्षयो वृत्तः कुरुपाण्डवसेनयोः।
अपराह्णे गते सूर्य्ये काङ्क्षतां विपुलं यशः।

इति श्रीमहाभारते कर्णपर्व्वणि सङ्कुलयुद्धे अष्टाविंशोऽध्यायः॥ २८ ॥

॥ धृतराष्ट्र उवाच ॥ अतितीव्राणि दुःखानि दुःसहानि बहूनि च। त्वत्तोऽहं सञ्जयाश्रौषं पुत्राणाञ्चैव सङ्क्षयं।
यथा त्वं मे कथयसे यथा युद्धमवर्त्तत। न सन्ति सूत कौरव्या इति मे निश्चिता मतिः। ११७०
दुर्य्योधनश्च विरथः कृतस्तत्र महारथः। धर्म्मपुत्रः कथञ्चक्रे तस्य वा नृपतिः कथं।
अपराह्णे कथं युद्धमभवल्लोमहर्षणं। तन्ममाचक्ष्व तत्त्वेन कुशलो ह्यसि सञ्जय।

॥ सञ्जय उवाच ॥ संसक्तेषु तु सैन्येषु वध्यमानेषु भागशः। रथमन्यं समास्थाय पुत्रस्तव विशाम्पते।
क्रोधेन महता युक्तः सविषो भुजगो यथा। दुर्य्योधनः समालक्ष्य धर्म्मराजं युधिष्ठिरं।
प्रोवाच सूतं त्वरितो याहि याहीति भारत। तत्र मां प्रापय क्षिप्रं सारथे यत्र पाण्डवः। ११७५
ध्रियमाणातपत्रेण राजा राजति दंशितः। स सूतश्चोदितो राज्ञा राज्ञः स्यन्दनमुत्तमं।
युधिष्ठिरस्याभिमुखं प्रेषयामास संयुगे। ततो युधिष्ठिरः क्रुद्धः प्रभिन्न इव कुञ्जरः।
सारथिञ्चोदयामास याहि यत्र सुयोधनः। तौ समाजग्मतुर्वीरौ भ्रातरौ रथसत्तमौ।
समेत्य च महावीरौ संरब्धौ युद्धदुर्म्मदौ। ववर्षतुर्महेष्वासौ शरैरन्योन्यमाहवे।
ततो दुर्य्योधनो राजा धर्म्मशीलस्य मारिष। शिलाशितेन भल्लेन धनुश्चिच्छेद संयुगे। ११८०
तन्नामृष्यत संक्रुद्धो ह्यवमानं युधिष्ठिरः। अपविध्य धनुश्छिन्नं क्रोधसंरक्तलोचनः।
अन्यत्कार्म्मुकमादाय धर्म्मपुत्रश्चमूमुखे। दुर्य्योधनस्य चिच्छेद ध्वजं कार्म्मुकमेव च।
अथान्यद्धनुरादाय प्रविध्य च युधिष्ठिरं। तावन्योन्यं सुसंक्रुद्धौ शरवर्षाण्यमुञ्चतां।
सिंहाविव सुसंरब्धौ परस्परजिगीषया। जघ्नतुस्तौ रणेऽन्योन्यं नर्दमानौ वृषाविव।
अन्तरं मार्गमाणौ च चेरतुस्तौ महारथौ। ततः पूर्णायतोत्सृष्टैः शरैस्तौ तु कृतव्रणौ। ११८५
विरेजतुर्महाराज किंशुकाविव पुष्पितौ। ततो राजन् विमुञ्चन्तौ सिंहनादान् मुहुर्मुहुः।
तलयोश्च तथा शब्दान् धनुषश्च महाहवे। शङ्खशब्दवरांश्चैव चक्रतुस्तौ नरेश्वरौ।
अन्योन्यं तौ महाराज पीडयाञ्चक्रतुर्भृशं। ततो युधिष्ठिरो राजा पुत्रं तव शरैस्त्रिभिः।
आजघानोरसि क्रुद्धो वज्रवेगैर्दुरासदैः। प्रतिविव्याध तं तूर्णं तव पुत्रो महीपतिः।

पञ्चभिर्निशितैर्बाणैः स्वर्णपुङ्खैः शिलाशितैः। ततो दुर्य्योधनो राजा शक्तिं चिक्षेप भारत। ११९०
सर्व्वपारशवीं तीक्ष्णां महोल्काप्रतिमां तदा। तामापतन्तीं सहसा धर्म्मराजः शितैः शरैः।
चिच्छेद सहसा तञ्च विव्याध पञ्चभिः। निपपात ततः साऽथ स्वर्णदण्डा महास्वना।
निपतन्ती महोल्केव व्यराजच्छिखिसन्निभा। शक्तिं विनिहतां दृष्ट्वा पुत्रस्तव विशाम्पते।
नवभिर्निशितैर्भल्लैर्निजघान युधिष्ठिरं। सोऽतिविद्धो बलवता शत्रुणा शत्रुतापनः।
दुर्य्योधनं समुद्दिश्य बाणं जग्राह सत्वरः। समाधत्त च तं बाणं धनुर्य्युग्रे महाबलः। ११९५
चिक्षेप च महाराज ततः क्रुद्धः पराक्रमी। स तु बाणः समासाद्य तव पुत्रं महारथं।
व्यामोहयत राजानं धरणीञ्च जगाम ह। ततो दुर्य्योधनः क्रुद्धो गदामुद्यम्य वेगितः।
विधित्सुः कलहस्यान्तं धर्म्मराजमुपाद्रवत्। तमुद्यतगदं दृष्ट्वा दण्डहस्तमिवान्तकं।
धर्म्मराजो महाशक्तिं प्राहिणोत्तव सूनवे। दीप्यमानां महावेगां महोल्कां ज्वलितामिव।
रथस्थः स तया विद्धो वर्म्म भित्त्वा स्तनान्तरे। भृशं संविग्नहृदयः पपात च मुमोह च। १२००
भीमस्तमाह च ततः प्रतिज्ञामनुचिन्तयन्। नायं वध्यस्तव नृप इत्युक्तः संन्यवर्त्तत।
ततस्त्वरितमागम्य कृतवर्म्मा तवात्मजं। प्रत्यपद्यत राजानं निमग्नं व्यसनार्णवे।
गदामादाय भीमो हि हेमपट्टपरिष्कृतां। अभिदुद्राव वेगेन कृतवर्म्माणमाहवे।
एवन्तदभवद्युद्धं त्वदीयानां परैः सह। अपराह्णे महाराज काङ्क्षतां विजयं युधि।
इति श्रीमहाभारते कर्णपर्व्वणि सङ्कुलयुद्धे एकोनत्रिंशोऽध्यायः॥ २९॥

॥ सञ्जय उवाच॥ ततः कर्णं पुरस्कृत्य त्वदीया युद्धदुर्म्मदाः। पुनरावृत्य सङ्ग्रामं चक्रुर्देवासुरोपमं। १२०५
द्विरदनररथाश्वशङ्खशब्दैः परिहृषिता विविधैश्च शस्त्रपातैः। द्विरदरथपदातिसादिसङ्घाः परिकुपिताभिमुखाः प्रजघ्निरे ते।
शितपरश्वधसासिपट्टिशैरिषुभिरनेकविधैश्च सूदिताः। द्विरदरथहया महाहवे वरपुरुषैः पुरुषाश्ववाहनैः।
कमलदिनकरेन्दुसन्निभैः सितदशनैः सुमुखाक्षिनासिकैः। रुचिरमुकुटकुण्डलैर्म्मही पुरुषशिरोभिरवस्तृता बभौ।
परिघमुसलशक्तितोमरैर्न्नखरभुशुण्डिगदाशतैर्हताः। द्विरदनरहयाः सहस्रशो रुधिरनदीप्रवहास्तदाऽभवन्।
प्रहतरथनराश्वकुञ्जरं प्रतिभयदर्शनमुल्बणव्रणं। तदभिहतमथावभौ बलं पितृपतिराष्ट्रमिव प्रजाक्षये। १२१०
अथ तव नरदेव सैनिकास्तव च सुताः सुरसूनुसन्निभाः। अमितबलपुरःसरा रणे कुरुवृषभाः शिनिपुत्रमभ्ययुः।
तदतिरुचिरभीममाबभौ पुरुषवराश्वरथद्विपाकुलं। लवणजलसमुद्धतस्वनं बलमसुराधिपसैन्यसप्रभं।
सुरपतिसमविक्रमस्ततस्त्रिदशवरावरजोपमं युधि। दिनकरकिरणप्रभैः पृषत्कै रवितनयोऽभ्यहनच्छिनिप्रवीरं।
तमपि सरथवाजिसारथिं शिनिवृषभो विविधैः शरैस्त्वरन्। भुजगविषसमप्रभै रणे पुरुषवरं समवास्तृणोत्तदा।
शिनिवृषभशरप्रपीडितास्तव सुहृदो वसुषेणमभ्ययुः। त्वरितमतिरथा रथर्षभं द्विरदरथाश्वपदातिभिः सह। १२१५
तदुदधिनिभमाद्रवद्बलं त्वरिततरैः समभिद्रुतं परैः। द्रुपदसुतमुखैस्तदाभवत् पुरुषरथाश्वगजक्षयो महान्।
अथ पुरुषवरौ कृताह्निकौ भवमभिपूज्य यथाविधि प्रभुं। अरिवधकृतनिश्चयौ द्रुतं तव बलमर्ज्जुनकेशवौ सृतौ।

जलदनिनदनिःस्वनं रथं पवनविधूतपताककेतनं । सितहयमुपयान्तमन्तिकं हृतमनसो ददृशुस्तदाऽरयः ।
अथ विस्फार्य्य गाण्डीवं रथे नृत्यन्निवार्ज्जुनः । शरसम्बाधमकरोत् खं दिशः प्रदिशस्तथा ।
रथान् विमानप्रतिमान् सज्जयन्त्रायुधध्वजान् । ससारथींस्तदा बाणैरभ्राणीवानिलोऽवधीत् । १२२०
गजांश्च गजयन्तॄंश्च वैजयन्त्यायुधध्वजान् । सादिनोऽश्वांश्च पत्तींश्च शरैर्निन्ये यमक्षयं ।
तमन्तकमिव क्रुद्धमनिवार्य्यं महारथं । दुर्य्योधनोऽभ्ययादेको निघ्नन् बाणैरजिह्मगैः ।
तस्यार्ज्जुनो धनुः सूतमश्वान् केतुञ्च सायकैः । हत्वा सप्तभिरेकेन छत्रं चिच्छेद पत्रिणा ।
नवमञ्च समाधाय व्यसृजत् प्राणघातिनं । दुर्य्योधनायेषुवरं तं द्रौणिः सप्तधाऽच्छिनत् ।
ततो द्रौणेर्धनुश्छित्त्वा हत्वा चाश्वरथाञ्छरैः । कृपस्यापि तदत्युग्रं धनुश्चिच्छेद पाण्डवः । १२२५
हार्द्दिक्यस्य धनुश्छित्त्वा ध्वजञ्चाश्वांस्तदाऽवधीत् । दुःशासनस्येष्वसनं छित्त्वा राधेयमभ्ययात् ।
अथ सात्यकिमुत्सृज्य त्वरन् कर्णोऽर्ज्जुनं त्रिभिः । विद्ध्वा विव्याध विंशत्या कृष्णं पार्थं पुनः पुनः ।
न ग्लानिरासीत् कर्णस्य निघ्नतः सायकान् बहून् । रणे विनिघ्नतः शत्रून् क्रुद्धस्येव शतक्रतोः ।
अथ सात्यकिरागत्य कर्णं विद्ध्वा शितैः शरैः । नवत्या नवभिश्चोग्रैः शतेन पुनरार्पयत् ।
ततः प्रवीराः पार्थानां सर्व्वे कर्णमपीडयन् । युधामन्युः शिखण्डी च द्रौपदेयाः प्रभद्रकाः । १२३०
उत्तमौजा युयुत्सुश्च यमौ पार्षत एव च । चेदिकारूषमत्स्यानां केकयानाञ्च यद्बलं ।
चेकितानश्च बलवान् धर्म्मराजश्च सुव्रतः । एते रथाश्वद्विरदैः पत्तिभिश्चोग्रविक्रमैः ।
परिवार्य्य रणे कर्णं नानाशस्त्रैरवाकिरन् । भाषन्तो वाग्भिरुग्राभिः सर्व्वे कर्णवधे कृताः ।
तां शस्त्रवृष्टिं बहुधा कर्णश्छित्त्वा शितैः शरैः । अपोवाहास्त्रवीर्य्येण द्रुमं भङ्क्त्वेव मारुतः ।
रथिनः समहामात्रान् गजानश्वान् ससादिनः । पत्तिव्रातांश्च संक्रुद्धो निघ्नन् कर्णो व्यदृश्यत । १२३५
तद्वध्यमानं पाण्डूनां बलं कर्णास्त्रतेजसा । विशस्त्रपत्रदेहासु प्राय आसीत् पराङ्मुखं ।
अथ कर्णास्त्रमस्त्रेण प्रतिहत्यार्ज्जुनः स्मयन् । दिशः खञ्चैव भूमिञ्च प्रावृणोच्छरवृष्टिभिः ।
मुषलानीव संपेतुः परिघा इव चेषवः । शतघ्न्य इव चाप्यन्ये वज्राण्युग्राणि चापरे ।
तैर्व्वध्यमानं तत् सैन्यं सपत्त्यश्वरथद्विपं । निमीलिताक्षमत्यर्थं बभ्राम च ननाद च ।
निष्कैवल्यं तदा युद्धं प्रापुरश्वनरद्विपाः । हन्यमानाः शरैरार्त्तास्तदा भीताः प्रदुद्रुवुः । १२४०
त्वदीयानां तदा युद्धे संसक्तानां जयैषिणां । गिरिमस्तं समासाद्य प्रत्यपद्यत भानुमान् ।
तमसा च महाराज रजसा च विशेषतः । न किञ्चित् प्रत्यपश्याम शुभं वा यदि वाऽशुभं ।
ते त्रसन्तो महेष्वासा रात्रियुद्धस्य भारत । अपयानं ततः क्रुद्धः सहिता सर्व्वयोधिभिः ।
कौरवेष्वपयातेषु तदा राजन् दिनक्षये । जयं सुमनसः प्राप्य पार्थाः स्वशिबिरं ययुः ।
वादित्रशब्दैर्व्विविधैः सिंहनादैः सगर्ज्जितैः । परानुपहसन्तश्च स्तुवन्तश्चाच्युतार्ज्जुनौ । १२४५
कृतेऽवहारे तैर्व्वीरैः सैनिकाः सर्व्व एव ते । आशीर्व्वाचः पाण्डवेषु प्रायुञ्जत नरेश्वराः ।

ततः क्षतेऽवहारे च प्रहृष्टास्तत्र पाण्डवाः। निशायां शिविरं गत्वा न्यवसन्त नरेश्वराः।
ततो रक्षःपिशाचाश्च श्वापदाश्चैव संघशः। जग्मुरायोधनं घोरं रुद्रस्याक्रीडसन्निभं।
इति श्रीमहाभारते कर्णपर्व्वणि प्रथमयुद्धदिवसे त्रिंशोऽध्यायः॥ ३०॥

॥ धृतराष्ट्र उवाच॥ स्वेन च्छन्देन नः सर्व्वानवधीद्व्यक्तमर्ज्जुनः। न ह्यस्य समरे मुच्येतान्तकोऽप्याततायिनः।
पार्थश्चैकोऽहरद्भद्रामेकश्चाग्निमतर्पयत्। एकश्चेमां महीं जित्वा चक्रे बलिभृतो नृपान्। १२५०
एको निवातकवचानहनद्दिव्यकार्म्मुकः। एकः किरातरूपेण स्थितं शर्व्वमयोधयत्।
एको ह्यरक्षद्भरतानेको भवमतोषयत्। तेनैकेन जिताः सर्व्वे महीपा ह्युग्रतेजसा।
ततोऽनिन्द्याः प्रशस्यास्ते यत्ते चक्रुर्ब्रवीहि तत्। ततो दुर्य्योधनः सूत पश्चात् किमकरोत्तदा।
॥ सञ्जय उवाच॥ हतप्रहतविध्वस्तविमर्म्मायुधवाहनाः। दीनस्वरा दूयमाना मानिनः शत्रुनिर्ज्जिताः।
शिविरस्थाः पुनर्म्मन्त्रं मन्त्रयन्ति स्म कौरवाः। भग्नदंष्ट्रा हतविषाः पादाक्रान्ता इवोरगाः। १२५५
तानब्रवीत्ततः कर्णः क्रुद्धः सर्प इव श्वसन्। करं करेण निष्पीड्य प्रेक्षमाणस्तवात्मजं।
यत्तो दृढश्च दक्षश्च धृतिमानर्ज्जुनः सदा। सम्बोधयति चाप्येनं यथाकालमधोक्षजः।
सहसाऽस्त्रविसर्गेण वयन्तेनाद्य वञ्चिताः। श्वस्त्वहन्तस्य सङ्कल्पं सर्व्वं हन्ता महीपते।
एवमुक्तस्तथेत्युक्त्वा सोऽनुजज्ञे नृपोत्तमान्। तेऽनुज्ञाता नृपाः सर्व्वे स्वानि वेश्मानि भेजिरे।
सुखोषितास्तां रजनीं हृष्टा युद्धाय निर्ययुः। तेऽपश्यन् विहितं व्यूहं धर्म्मराजेन दुर्ज्जयं। १२६०
प्रयत्नात् कुरुमुख्येन बृहस्पत्युशनोमतं। अथ प्रतीपकर्त्तारं प्रवीरं परवीरहा।
संस्मरन् वृषभस्कन्धं कर्णं दुर्य्योधनस्तदा। पुरन्दरसमं युद्धे मरुद्गणसमं बले।
कार्त्तवीर्य्यसमं वीर्य्ये कर्णं राज्ञोऽगमन्मनः। सर्व्वेषाञ्चैव सैन्यानां कर्णमेवागमन्मनः।
सूतपुत्रं महेष्वासं बन्धुमात्ययिकेष्विव।

॥ धृतराष्ट्र उवाच॥ ततो दुर्य्योधनः सूत पश्चात् किमकरोत्तदा। यदोऽगमन् मनो मन्दाः कर्णं वैकर्त्तनं प्रति। १२६५
अप्यपश्यत राधेयं शीतार्त्ता इव भास्करं। क्षतेऽवहारे सैन्यानां प्रवृत्ते च रणे पुनः।
कथं वैकर्त्तनः कर्णस्तत्रायुध्यत सञ्जय। कथं वा पाण्डवाः सर्व्वे युयुधुस्तत्र सूतजं।
कर्णो ह्येको महाबाहुर्हन्यात् पार्थान् ससृञ्जयान्। कर्णस्य भुजयोर्वीर्य्यं शक्रविष्णुसमं युधि।
तस्य शस्त्राणि घोराणि विक्रमश्च महात्मनः। कर्णमाश्रित्य संग्रामे मत्तो दुर्य्योधनो नृप।
दुर्य्योधनं तदा दृष्ट्वा पाण्डवेन भृशार्द्दितं। पराक्रान्तान् पाण्डुसुतान् दृष्ट्वा चापि महारथः। १२७०
कर्णमाश्रित्य संग्रामे मन्दो दुर्य्योधनः पुनः। जेतुमुत्सहते पार्थान् सपुत्रान् सह केशवान्।
अहो बत महद्दुःखं यत्र पाण्डुसुतान् रणे। नातरद्रभसः कर्णो दैवं नूनं परायणं।
अहो द्यूतस्य निष्ठेयं घोरा संप्रति वर्त्तते। अहो तीव्राणि दुःखानि दुर्य्योधनकृतान्यहं।
सहिष्यामि सुघोराणि शल्यभूतानि सञ्जय। सौबलञ्च तदा तात नीतिमानिति मन्यते।
कर्णश्च रभसो नित्यं राजा तञ्चाप्यनुव्रतः। यदेवं वर्त्तमानेषु महायुद्धेषु सञ्जय। १२७५

अश्रौषं निहतान् पुत्रान्नित्यमेव च निर्ज्जितान्। न पाण्डवानां समरे कश्चिदस्ति निवारकः।
स्त्रीमध्यमिव गाहन्ते दैवन्तु बलवत्तरं।
॥ सञ्जय उवाच ॥ राजन् पूर्व्वनिमित्तानि धर्म्मिष्ठानि विचिन्तय। अतिक्रान्तं हि यत् कार्य्यं पश्चात् चिन्तयते नरः।
तच्चास्य न भवेत् कार्य्यं चिन्तया च विनश्यति। तदिदं तव कार्य्यन्तु दूरप्राप्तं विजानता।
न कृतं यत्त्वया पूर्व्वं प्राप्ताप्राप्तविचारणं। उक्तोऽसि बहुधा राजन् मा युध्यस्वेति पाण्डवैः। १२८०
गृह्णीषे न च तन्मोहाद्वचनञ्च विशाम्पते। त्वया पापानि घोराणि समाचीर्णानि पाण्डुषु।
यत्कृते वर्त्तते घोरः पार्थिवानां जनक्षयः। तत्त्विदानीमतिक्रान्तं मा शुचो भरतर्षभ।
शृणु सर्व्वं यथा वृत्तं घोरं वैशसमच्युत। प्रभातायां रजन्यान्तु कर्णो राजानमभ्ययात्।
समेत्य च महाबाहुर्दुर्य्योधनमथाब्रवीत्।
॥ कर्ण उवाच ॥ अद्य राजन् समेष्यामि पाण्डवेन यशस्विना। निहनिष्यामि तं वीरं स वा मां निहनिष्यति। १२८५
बहुत्वान्मम कार्य्याणां तथा पार्थस्य भारत। नाभूत् समागमो राजन् मम चैवार्जुनस्य च।
इदन्तु मे यथाप्रज्ञं शृणु वाक्यं विशाम्पते। अनिहत्य रणे पार्थं नाहमेष्यामि भारत।
हतप्रवीरे सैन्येऽस्मिन् मयि चावस्थिते युधि। अभियास्यति मां पार्थः शक्रशक्तिविनाकृतं।
ततः श्रेयस्करं यच्च तं निबोध जनेश्वर। आयुधानाञ्च मे वीर्य्यं दिव्यानामर्ज्जुनस्य च।
कार्य्यस्य महतो भेदे लाघवे दूरपातने। सौष्ठवे चास्त्रपाते च सव्यसाची न मत्समः। १२९०
प्राणे शौर्य्येऽथ विज्ञाने विक्रमे चापि भारत। निमित्तज्ञानयोगे च सव्यसाची न मत्समः।
सर्व्वायुधमहामात्रं विजयं नाम तद्धनुः। इन्द्रार्थं प्रियकामेन निर्म्मितं विश्वकर्म्मणा।
येन दैत्यगणान् राजन् जितवान् वै शतक्रतुः। यस्य घोषेण दैत्यानां व्यामुह्यन्त दिशो दश।
तद्भार्गवाय प्रायच्छच्छक्रः परमसम्मतं। तद्दिव्यं भार्गवो मह्यमददद्धनुरुत्तमं।
तेन योत्स्ये महाबाहुमर्ज्जुनं जयतांवरं। यथेन्द्रः समरे सर्व्वान् दैतेयान् वै समागतान्। १२९५
धनुर्घोरं रामदत्तं गाण्डीवात्तद्विशिष्यते। त्रिःसप्तकृत्वः पृथिवी धनुषा येन निर्ज्जिता।
धनुषो ह्यस्य कर्म्माणि दिव्यानि प्राह भार्गवः। तद्रामो ह्यददन्मह्यं येन योत्स्यामि पाण्डवं।
अद्य दुर्य्योधनाहं त्वां नन्दयिष्ये सबान्धवं। निहत्य समरे वीरमर्ज्जुनं जयतांवरं।
सपर्व्वतवनद्वीपा हतवीरा ससागरा। पुत्त्रपौत्त्रप्रतिष्ठा ते भविष्यत्यद्य पार्थिव।
नाशक्यं विद्यते मेऽद्य त्वत्प्रियार्थं विशेषतः। सम्यग्धर्म्मानुरक्तस्य सिद्धिरात्मवतो यथा। १३००
न हि मां समरे सोढुं स शक्तोऽग्निं तरुर्यथा। अवश्यं हि मया वाच्यं येन हीनोऽस्मि फाल्गुनात्।
ज्या तस्य धनुषो दिव्या तथाऽक्षय्ये महेषुधी। सारथिस्तस्य गोविन्दो मम तादृङ्ग विद्यते।
तस्य दिव्यं धनुः श्रेष्ठं गाण्डीवमजितं युधि। विजयञ्च महद्दिव्यं ममापि धनुरुत्तमं।
तत्राहमधिकः पार्थाद्धनुषा तेन पार्थिव। येन चाप्यधिको वीरः पाण्डवस्तं निबोध मे।
रश्मिग्राहश्च दाशार्हः सर्व्वलोकनमस्कृतः। अग्निदत्तश्च वै दिव्यो रथः काञ्चनभूषणः। १३०५

अश्वेषु सर्व्वथा वीर वाजिनश्च मनोजवाः । ध्वजश्च दिव्यो द्युतिमान् वानरो विस्मयङ्करः ।
कृष्णश्च स्रष्टा जगतो रथं तमभिरक्षति । एतैर्द्रव्यैरहं हीनो योद्धुमिच्छामि पाण्डवं ।
अयन्तु सदृशः शौरेः शल्यः समितिशोभनः । सारथ्यं यदि मे कुर्य्यात् ध्रुवस्ते विजयो भवेत् ।
तस्य मे सारथिः शल्यो भवत्वसुकरः परैः । नाराचान् गार्द्धपत्रांश्च शकटानि वहन्तु मे ।
रथाश्च मुख्या राजेन्द्र युक्ता वाजिभिरुत्तमैः । आयान्तु पश्चात् सततं मामेव भरतर्षभ ।        १२१०
एवमभ्यधिकः पार्थाद्भविष्यामि गुणैरहं । शल्योऽप्यभ्यधिकः कृष्णादर्ज्जुनादपि चाप्यहं ।
यथाऽश्वहृदयं वेद दाशार्हः परवीरहा । तथा शल्योऽपि जानीते हयज्ञानं महारथः ।
बाहुवीर्य्ये समो नास्ति मद्रराजस्य कश्चन । तथाऽस्त्रैर्म्मत्समो नास्ति कश्चिदेव धनुर्धरः ।
तथा शल्यसमो नास्ति हयज्ञाने हि कश्चन । सोऽयमभ्यधिकः कृष्णाद्भविष्यति रथो मम ।
एवं कृते रथस्थोऽहं गुणैरभ्यधिकोऽर्ज्जुनात् । भवे युधि जयेयञ्च फाल्गुनं कुरुसत्तम ।        १२१५
समुद्यातुं न शक्ष्यन्ति देवा अपि सवासवाः । एतत्कृतं महाराज त्वयेच्छामि परन्तप ।
क्रियतामेष कामो मे मा वः कालोऽत्यगादयं । एवं कृते कृतं सह्यं सर्व्वकामैर्भविष्यति ।
ततो द्रक्ष्यसि संग्रामे यत्करिष्यामि भारत । सर्व्वथा पाण्डवान् संख्ये विजेष्ये वै समागतान् ।
न हि मे समरे शक्ताः समुद्यातुं सुरासुराः । किमु पाण्डुसुता राजन् रणे मानुषयोनयः ।
॥ सञ्जय उवाच ॥ एवमुक्तस्तव सुतः कर्णेनाहवशोभिना । सम्पूज्य संप्रहृष्टात्मा ततो राधेयमब्रवीत् ।        १२२०
॥ दुर्य्योधन उवाच ॥ एवमेतत् करिष्यामि यथा त्वं कर्ण मन्यसे । सोपासङ्गा रथाः साश्वाः स्वनुयास्यन्ति संयुगे ।
नाराचान् गार्द्धपत्रांश्च शकटानि वहन्तु ते । अनुयास्याम कर्ण त्वां वयं सर्व्वे च पार्थिवाः ।
॥ सञ्जय उवाच ॥ एवमुक्त्वा महाराज तव पुत्रः प्रतापवान् । अभिगम्याब्रवीद्राजा मद्रराजमिदं वचः ।
इति श्रीमहाभारते कर्णपर्व्वणि कर्णदुर्य्योधनसंवादे एकत्रिंशोऽध्यायः ॥ ३१ ॥
॥ सञ्जय उवाच ॥ पुत्रस्तव महाराज मद्रराजं महारथं । विनयेनोपसङ्गम्य प्रणयाद्वाक्यमब्रवीत् ।
सत्यव्रत महाभाग द्विषतां तापवर्द्धन । मद्रेश्वर रणे शूर परसैन्यभयङ्कर ।        १२२५
श्रुतवानसि कर्णस्य ब्रुवतो वदतां वर । यथा नृपतिसिंहानां मध्ये त्वां वरये स्वयं ।
तत्त्वामप्रतिवीर्य्याद्य शत्रुपक्षक्षयाय च । मद्रेश्वर प्रयाचेऽहं शिरसा विनयेन च ।
तस्मात् पार्थविनाशार्थं हितार्थं मम चैव हि । सारथ्यं रथिनां श्रेष्ठ प्रणयात् कर्त्तुमर्हसि ।
त्वयि यन्तरि राधेयो विद्विषो मे विजेष्यते । अभीषूणां हि कर्णस्य ग्रहीताऽन्यो न विद्यते ।
ऋते हि त्वां महाभाग वासुदेवसमं युधि । स पाहि सर्व्वथा कर्णं यथा ब्रह्मा महेश्वरं ।        १२३०
यथा च सर्व्वथापत्सु वार्ष्णेयः पाति पाण्डवं । तथा मद्रेश्वराद्य त्वं राधेयं प्रतिपालय ।
भीष्मो द्रोणः कृपः कर्णो भवान् भोजश्च वीर्य्यवान् । शकुनिः सौबलो द्रौणिरहमेव च नो बलं ।
एवमेष कृतो भागो नवधा पृथिवीपते । न च भागोऽत्र भीष्मस्य द्रोणस्य च महात्मनः ।
ताभ्यामतीत्य तौ भागौ निहता मम शत्रवः । वृद्धौ हि तौ नरव्याघ्रौ छलेन निहतौ युधि ।

कृत्वा न सुकरं कर्म्म गतौ स्वर्गमितोऽनघ । तथाऽन्ये पुरुषव्याघ्राः परैर्व्विनिहता युधि । १२३५
अस्मदीयाश्च बहवः स्वर्गायोपगता रणे । त्यक्त्वा प्राणान् यथाशक्ति चेष्टां कृत्वा च पुष्कलां ।
तदिदं हतभूयिष्ठं बलं मम नराधिप । पूर्व्वमप्यल्पकैः पार्थैर्हतं किमुत साम्प्रतं ।
बलवन्तो महात्मानः कौन्तेयाः सत्यविक्रमाः । बलं शेषं न हन्युर्मे यथा तत् कुरु पार्थिव ।
हतवीरमिदं सैन्यं पाण्डवैः समरे विभो । कर्णो ह्येको महाबाहुरस्मत्प्रियहिते रतः ।
भवांश्च पुरुषव्याघ्र सर्व्वलोकमहारथः । शल्य कर्णोऽर्ज्जुनेनाद्य योद्धुमिच्छति संयुगे । १२४०
तस्मिन् जयाशा विपुला मद्रराज नराधिप । तस्याभीशुग्रहवरो नान्योऽस्ति भुवि कश्चन ।
पार्थस्य समरे कृष्णो यथाऽभीशुग्रहो वरः । तथा त्वमपि कर्णस्य रथेऽभीशुग्रहो भव ।
तेन युक्तो रणे पार्थो रक्ष्यमाणश्च पार्थिव । यानि कर्म्माणि कुरुते प्रत्यक्षाणि तथैव तत् ।
पूर्व्वं नः समरे ह्येवमवधीदर्ज्जुनो रिपून् । इदानीं विक्रमो ह्यस्य कृष्णेन सहितस्य च ।
कृष्णेन सहितः पार्थो धार्त्तराष्ट्रीं महाचमूं । अहन्यहनि मद्रेश द्रावयन् दृश्यते युधि । १२४५
भागोऽवशिष्टः कर्णस्य तव चैव महाद्युते । तं भागं सह कर्णेन युगपन्नाशयाद्य हि ।
अरुणेन यथा सार्द्धं तमः सूर्य्यो व्यपोहति । तथा कर्णेन सहितो जहि पार्थं महाहवे ।
उद्यन्तौ च यथा सूर्य्यौ बालसूर्य्यसमप्रभौ । कर्णशल्यौ रणे दृष्ट्वा विद्रवन्तु महारथाः ।
सूर्य्यारुणौ यथा दृष्ट्वा तमो नश्यति मारिष । तथा नश्यन्तु कौन्तेयाः सपाञ्चालाः ससृञ्जयाः ।
रथिनां प्रवरः कर्णो यन्तॄणां प्रवरो भवान् । संयोगो युवयोर्लोके नाभून्न च भविष्यति । १२५०
यथा सर्व्वास्ववस्थासु वार्ष्णेयः पाति पाण्डवं । तथा भवान् परित्रातु कर्णं वैकर्त्तनं रणे ।
त्वया सारथिना ह्येष अप्रधृष्यो भविष्यति । देवतानामपि रणे सशक्राणां महीपते ।
किं पुनः पाण्डवेयानां माविशङ्कीर्व्वचो मम ।
॥ सञ्जय उवाच ॥ दुर्य्योधनवचः श्रुत्वा शल्यः क्रोधसमन्वितः । त्रिशिखां भ्रुकुटीं कृत्वा धुन्वन् हस्तौ पुनः पुनः ।
क्रोधरक्ते महानेत्रे परिवृत्य महाभुजः । कुलैश्वर्य्यश्रुतबलैर्दृप्तः शल्योऽब्रवीदिदं । १२५५
॥ शल्य उवाच ॥ अवमन्यसि गान्धारे ध्रुवञ्च परिशङ्कसे । यन्मां ब्रवीषि विस्रब्धं सारथ्यं क्रियतामिति ।
अस्मत्तोऽभ्यधिकं कर्णं मन्यमानः प्रशंससि । न चाहं युधि राधेयं गणये तुल्यमात्मनः ।
आदिश्यतामभ्यधिको ममांशः पृथिवीपते । तमहं समरे जित्वा गमिष्यामि यथागतं ।
अथवा प्येक एवाहं योत्स्यामि कुरुनन्दन । पश्य वीर्य्यं ममाद्य त्वं संग्रामे दहतो रिपून् ।
यथाऽभिमानं कौरव्य निधाय हृदये पुमान् । अस्मद्विधः प्रवर्त्तेत मा मां त्वमभिशङ्किथाः । १२६०
युधि चाऽप्यवमानो मे न कर्त्तव्यः कथञ्चन । पश्य पीनौ मम भुजौ वज्रसंहननोपमौ ।
धनुः पश्य च मे चित्रं शरांश्चाशीविषोपमान् । रथं पश्य च मे क्लृप्तं सदश्वैर्व्वातवेगितैः ।
गदाञ्च पश्य गान्धारे हेमपट्टविभूषितां । दारयेयं महीं कृत्स्नां विकिरेयञ्च पर्व्वतान् ।
शोषयेयं समुद्रांश्च तेजसा स्वेन पार्थिव । तं ममैवंविधं राजन् समर्थमरिनिग्रहे ।

कथमाधुनिकं सारथ्ये नीचस्याधिरथे रणे । न मामधुरि राजेन्द्र नियोक्तुं त्वमिहार्हसि । १२६५
न हि पापीयसः श्रेयान् भूत्वा प्रेष्यत्वमुत्सहे । यो ह्यभ्युपगतं प्रीत्या गरीयांसं वशे स्थितं ।
वशे पापीयसो धत्ते तत्पापमधरोत्तरं । ब्राह्मणा ब्रह्मणा सृष्टा मुखात् क्षत्रमथ बाहुतः ।
ऊरुभ्यामसृजद्वैश्यान् शूद्रान् पद्भ्यामिति श्रुतिः । तेभ्यो वर्णविशेषाश्च प्रतिलोमानुलोमजाः ।
अथाऽन्योन्यस्य संयोगाच्चातुर्वर्ण्यस्य भारत । गोप्तारः संग्रहीतारो दातारः क्षत्रियाः स्मृताः ।
याजनाध्यापनैर्व्विप्रा विशुद्धैश्च प्रतिग्रहैः । लोकस्यानुग्रहार्थाय स्थापिता ब्राह्मणा भुवि । १२७०
कृषिश्च पाशुपाल्यञ्च विशां दानञ्च धर्मतः । ब्रह्मक्षत्रविशां शूद्रा विहिताः परिचारकाः ।
ब्रह्मक्षत्रस्य विहिताः सूता वै परिचारकाः । न क्षत्रियो वै सूतानां शृणुयाच्च कथञ्चन ।
अहं मूर्द्धाभिषिक्तो हि राजर्षिकुलजो नृप । महारथः समाख्यातः सेव्यः स्तुत्यश्च वन्दिनां ।
सोऽहमेतादृशो भूत्वा नेहारिबलसूदन । सूतपुत्रस्य संग्रामे सारथ्यं कर्त्तुमुत्सहे ।
अवमानमहं प्राप्य न योत्स्यामि कथञ्चन । आपृच्छे त्वाऽद्य गान्धारे गमिष्यामि गृहाय वै । १२७५
॥ सञ्जय उवाच ॥ एवमुक्त्वा महाराज शल्यः समितिशोभनः । उत्थाय प्रययौ तूर्णं राजमध्यादमर्षितः ।
प्रणयाद्बहुमानाच्च तं निगृह्य सुतस्तव । अब्रवीन्मधुरं वाक्यं साम्ना सर्व्वार्थसाधकं ।
यथा शल्य विजानीषे एवमेतदसंशयं । अभिप्रायस्तु मे कश्चित् तन्निबोध जनेश्वर ।
न कर्णोऽभ्यधिकस्त्वत्तो न शङ्के त्वाञ्च पार्थिव । न हि मद्रेश्वरो राजा कुर्य्याद्यदनृतं भवेत् ।
ऋतमेव हि पूर्व्वास्ते वदन्ति पुरुषोत्तमाः । तस्मादार्त्तायनिः प्रोक्तो भवानिति मतिर्मम । १२८०
शल्यभूतस्तु शत्रूणां यस्मात्त्वं युधि मानद । तस्माच्छल्यो हि ते नाम कथ्यते पृथिवीतले ।
यदेतद्व्याहृतं पूर्व्वं भवता भूरिदक्षिण । तदेव कुरु धर्मज्ञ मदर्थं यद्यदुच्यते ।
न च त्वत्तो हि राधेयो न चाहमपि वीर्य्यवान् । वृणेऽहं त्वां हयाग्र्याणां यन्तारमिह संयुगे ।
मन्ये चाभ्यधिकं शल्य गुणैः कर्णं धनञ्जयात् । भवन्तं वासुदेवाच्च लोकोऽयमिति मन्यते ।
कर्णो ह्यभ्यधिकः पार्थादस्त्रैरेव नरर्षभ । भवानभ्यधिकः कृष्णादश्वज्ञाने बले तथा । १२८५
यथाऽश्वहृदयं वेद वासुदेवो महामनाः । द्विगुणं त्वं तथा वेत्सि मद्रराजेश्वरात्मज ।
॥ शल्य उवाच ॥ यन्मां ब्रवीषि गान्धारे मध्ये सैन्यस्य कौरव । विशिष्टं देवकीपुत्रात् प्रीतिमानस्म्यहं त्वयि ।
एष सारथ्यमातिष्ठे राधेयस्य यशस्विनः । युध्यतः पाण्डवाग्र्येण यथा त्वं वीर मन्यसे ।
समयश्च हि मे वीर कश्चिद्वैकर्त्तनं प्रति । उत्सृजेयं यथाश्रद्धमहं वाचोऽस्य सन्निधौ ।
॥ सञ्जय उवाच ॥ तथेति राजन् पुत्रस्ते सह कर्णेन भारत । अब्रवीन्मद्रराजस्य मतं भरतसत्तम । १२९०
इति श्रीमहाभारते कर्णपर्व्वणि शल्यसारथ्ये द्वात्रिंशोऽध्यायः ॥ ३२ ॥
॥ दुर्य्योधन उवाच ॥ भूय एव तु मद्रेश यत्ते वक्ष्यामि तच्छृणु । यथा पुरा वृत्तमिदं युद्धे देवासुरे विभो ।
यदुक्तवान् पितुर्मह्यं मार्कण्डेयो महानृषिः । तदशेषेण ब्रुवतो मम राजर्षिसत्तम ।
निबोध मनसा चात्र न ते कार्य्या विचारणा । देवानामसुराणाञ्च परस्परजिगीषया ।

बभूव प्रथमो राजन् संग्रामस्तारकामयः। निर्ज्जिताश्च ततो दैत्या दैवतैरिति नः श्रुतिः।
निर्ज्जितेषु च दैत्येषु तारकस्य सुतास्त्रयः। ताराक्षः कमलाक्षश्च विद्युन्माली च पार्थिव। १३९५
तप उग्रं समास्थाय नियमे परमे स्थिताः। तपसा कर्षयामासुर्देहान् स्वान् शत्रुतापन।
दमेन तपसा चैव नियमेन समाधिना। तेषां पितामहः प्रीतो वरदः प्रददौ वरं।
अवध्यत्वं च ते राजन् सर्व्वभूतस्य सर्व्वदा। सहिता वरयामासुः सर्व्वलोकपितामहं।
तानब्रवीत्तदा देवो लोकानां प्रभुरीश्वरः। नास्ति सर्व्वामरत्वं वै निवर्त्तध्वमितोऽसुराः।
अन्यं वरं वृणुध्वं वै यादृशं सम्प्ररोचते। ततस्ते सहिता राजन् सम्प्रधार्य्यासकृत्प्रभुं। १४००
सर्व्वलोकेश्वरं वाक्यं प्रणम्यैनमथाब्रुवन्। अस्माकं त्वं वरं देव संप्रयच्छ पितामह।
वयं पुराणि त्रीण्येव समास्थाय महीमिमां। विचरिष्याम लोकेऽस्मिन् त्वत्प्रसादात् पुरस्कृताः।
ततो वर्षसहस्रे तु समेष्यामः परस्परं। एकीभावं गमिष्यन्ति पुराण्येतानि चानघ।
समागतानि चैतानि यो हन्याद्भगवंस्तदा। एकेषुणा देववरः स नो मृत्युर्भविष्यति।
एवमस्त्विति तान् देवः प्रत्युक्त्वा प्राविशद्दिवं। ते तु लब्धवराः प्रीताः संप्रधार्य्य परस्परं। १४०५
पुरत्रयविसृष्ट्यर्थं मयं वव्रुर्महासुरं। विश्वकर्म्माणमजरं दैत्यदानवपूजितं।
ततो मयः स्वतपसा चक्रे धीमान् पुराणि च। त्रीणि काञ्चनमेकं वै रौप्यं कार्ष्णायसं तथा।
काञ्चनं दिवि तत्रासीदन्तरीक्षे च राजतं। आयसञ्चाभवद्भूमौ चक्रस्थं पृथिवीपते।
एकैकं योजनशतं विस्तारायामतः समं। गृहाट्टालकसंयुक्तं बहुप्राकारतोरणं।
गृहप्रवरसम्बाधं असम्बाधमहापथं। प्रासादैर्व्विविधैश्चापि द्वारैश्चैवोपशोभितं। १४१०
पुरेषु चाभवन् राजन् राजानो वै पृथक् पृथक्। काञ्चनं तारकाक्षस्य चित्रमासीन्महात्मनः।
राजतं कमलाक्षस्य विद्युन्मालिन आयसं। त्रयस्ते दैत्यराजानस्त्रीँल्लोकानस्त्रतेजसा।
आक्रम्य तस्थुर्व्वर्षपूगान् क्व नाम प्रजापतिः। तेषां दानवमुख्यानां प्रयुतान्यर्ब्बुदानि च।
कोट्यश्चाप्रतिवीराणां समाजग्मुस्ततस्ततः। मांसाशिनः सुदृप्ताश्च सुरैर्व्विनिकृताः पुरा।
महदैश्वर्य्यमिच्छन्तस्त्रिपुरं दुर्गमाश्रिताः। सर्व्वेषाञ्च पुनस्तेषां सर्व्वयोगवहो मयः। १४१५
तमाश्रित्य हि ते सर्व्वे वर्त्तयन्तेऽकुतोभयाः। यो हि यं मनसा कामं दध्यौ त्रिपुरसंश्रयः।
तस्मै कामं मयस्तन्तं विदधे मायया तदा। तारकाक्षसुतो वीरो हरिर्नाम महाबलः।
तपस्तेपे परमकं येनातुष्यत् पितामहः। सन्तुष्टमवृणोद्देवं वापी भवतु नः पुरे।
शस्त्रैर्व्विनिहता यत्र क्षिप्ताः स्युर्ब्बलवत्तराः। स तु लब्ध्वा वरं वीरस्तारकाक्षसुतो हरिः।
ससृजे तत्र वापीं तां मृतानां जीवनीं प्रभो। येन रूपेण दैत्यस्तु येन वेशेन चैव हि। १४२०
मृतस्तस्यां परिक्षिप्तस्तादृशेनैव जज्ञिवान्। तां प्राप्य ते पुनस्तांस्तु लोकान् सर्व्वान् बबाधिरे।
महता तपसा सिद्धाः सुराणां भयवर्द्धनाः। न तेषामभवद्राजन् क्षयो युद्धे कदाचन।
ततस्ते लोभमोहाभ्यामभिभूता विचेतसः। निर्ह्रीकाः संस्थिताः सर्व्वे स्थापिताः समलूलुपन्।

विद्राव्य समरणान् देवांस्तत्र तत्र तदा तदा । ऋषीन् स्वेन कामेन वरदानेन दर्पिताः ।
देवोद्यानानि सर्व्वाणि प्रियाणि च दिवौकसां । ऋषीणामाश्रमान् पुण्यान् रम्यान् जनपदांस्तथा । १४२५
व्यनाशयन्त मर्य्यादां दानवा दुष्टचारिणः । पीड्यमानेषु लोकेषु ततः शक्रो मरुद्वृतः ।
पुराण्यायोधयाञ्चक्रे वज्रपातैः समन्ततः । नाशकत्तान्यभेद्यानि यदा भेत्तुं पुरन्दरः ।
पुराणि वरदत्तानि धात्रा तेन नराधिप । तदा भीतः सुरपतिर्मुक्त्वा तानि पुराण्यथ ।
तैरेव विबुधैः सार्द्धं पितामहमरिन्दमः । जगामाथ तदाख्यातुं विप्रकारं सुरेतरैः ।
ते तत्त्वं सर्व्वमाख्याय शिरोभिः संप्रणम्य च । वधोपायमपृच्छन्त भगवन्तं पितामहं । १४३०
श्रुत्वा तद्भगवान् देवो देवानिदमुवाच ह । ममापि सोऽपराध्नोति यो युष्माकमसौम्यकृत् ।
असुरा हि दुरात्मानः सर्व्व एव सुरद्विषः । अपराध्नन्ति सततं ये युष्मान् पीडयन्त्युत ।
अहं हि तुल्यः सर्व्वेषां भूतानां नात्र संशयः । अधार्म्मिकास्तु हन्तव्या इति मे व्रतमाहितं ।
एकेषुणा विभेद्यानि तानि दुर्गाणि नान्यथा । न च स्थाणुमृते शक्तो भेत्तुमेकेषुणा परः ।
ते यूयं स्थाणुमीशानं जिष्णुमक्लिष्टकारिणं । योद्धारं वृणुतादित्याः स तान् हन्ताऽसुरेतरान् । १४३५
इति तस्य वचः श्रुत्वा देवाः शक्रपुरोगमाः । ब्रह्माणमग्रतः कृत्वा वृषाङ्कं शरणं ययुः ।
तपोनियममास्थाय गृणन्तो ब्रह्म शाश्वतं । ऋषिभिः सह धर्म्मज्ञा भवं सर्व्वात्मना गताः ।
तुष्टुवुर्व्वाग्भिरुग्राभिर्भयेष्वभयदं नृप । सर्व्वात्मानं महात्मानं येनाप्तं सर्व्वमात्मना ।
तपोविशेषैर्व्विविधैर्य्योगं यो वेद चात्मनः । यः सांख्यमात्मनो वेत्ति यस्य चात्मा वशे सदा ।
तं ते ददृशुरीशानं तेजोराशिमुमापतिं । अनन्यसदृशं लोके भगवन्तमकल्मषं । १४४०
एकञ्च भगवन्तन्ते नानारूपमकल्पयन् । आत्मनः प्रतिरूपाणि रूपाण्यथ महात्मनि ।
परस्परस्य चापश्यन् सर्व्वे परमविस्मिताः । सर्व्वभूतमयं दृष्ट्वा तमजं जगतः पतिं ।
देवा ब्रह्मर्षयश्चैव शिरोभिर्धरणीं गताः । तान् स्वस्तिवादेनाभ्यर्च्य समुत्थाप्य च शङ्करः ।
ब्रूत ब्रूतेति भगवान् स्मयमानोऽभ्यभाषत । त्र्यम्बकेणाभ्यनुज्ञाता स्वस्थास्ते स्वस्थचेतसः ।
नमो नमो नमस्तेऽस्तु प्रभो इत्यब्रुवन् वचः । नमो देवाधिदेवाय धन्विने वनमालिने । १४४५
प्रजापतिमखघ्नाय प्रजापतिभिरीड्यते । नमःस्तुताय स्तुत्याय स्तूयमानाय शम्भवे ।
विलोहिताय रुद्राय नीलग्रीवाय शूलिने । अमोघाय मृगाक्षाय प्रवरायुधयोधिने ।
अर्हाय चैव शुद्धाय क्षयाय क्रथनाय च । दुर्व्वारणाय काथाय ब्रह्मणे ब्रह्मचारिणे ।
ईशानाय प्रमेयाय नियन्त्रे चर्म्मवाससे । तपोरताय पिङ्गाय व्रतिने कृत्तिवाससे ।
कुमारपित्रे त्र्यक्षाय प्रवरायुधधारिणे । प्रपन्नार्त्तिविनाशाय ब्रह्मद्विट्सङ्घघातिने । १४५०
वनस्पतीनां पतये नराणां पतये नमः । गवाञ्च पतये नित्यं यज्ञानां पतये नमः ।
नमोऽस्तु ते ससैन्याय त्र्यम्बकायामितौजसे । मनो वाक्कर्म्मभिर्द्देव त्वां प्रपन्नान् भजस्व नः ।

ततः प्रसन्नो भगवान् स्वागतेनाभिनन्द्य च । प्रोवाच व्येतु वस्त्रासो ब्रूत किं करवाणि वः ।

इति श्रीमहाभारते कर्णपर्व्वणि त्रिपुराख्याने त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

दुर्य्योधन उवाच ॥ पितृदेवर्षिसङ्घेभ्योऽभये दत्ते महात्मना । सत्कृत्य शङ्करं प्राह ब्रह्मा लोकहितं वचः ।

तवातिसर्गाद्देवेश प्राजापत्यमिदं पदं । मयाऽधितिष्ठता दत्तो दानवेभ्यो महान् वरः । १४५५

ताननतिक्रान्तमर्य्यादान् नान्यः संहर्त्तुमर्हति । त्वामृते भूतभव्येश त्वं ह्येषां प्रत्यरिर्व्विधे ।

स त्वं देव प्रपन्नानां याचताञ्च दिवौकसां । कुरु प्रसादं देवेश दानवान् जहि शङ्कर ।

त्वत्प्रसादाज्जगत् सर्व्वं सुखमाप्नोतु मानद । शरण्यस्त्वं हि लोकेश ते वयं शरणं गताः ।

॥ स्थाणुरुवाच ॥ हन्तव्याः शत्रवः सर्व्वे युष्माकमिति मे मतिः । न त्वेक उत्सहे हन्तुं बलस्था हि सुरद्विषः ।

ते यूयं संहताः सर्व्वे मदीयेनार्द्धतेजसा । जयध्वं युधि तान् शत्रून् सङ्घातो हि महाबलः । १४६०

॥ देवा ऊचुः ॥ अस्मत्तेजो बलं यावत्तावद्द्विगुणमाहवे । तेषामिति हि मन्यामो दृष्टतेजोबला हि ते ।

॥ श्रीभगवानुवाच ॥ बध्यास्ते सर्व्वतः पापा ये युष्मास्वपराधिनः । मम तेजोबलार्द्धेन सर्व्वान् निघ्नत शात्रवान् ।

॥ देवा ऊचुः ॥ विभर्त्तुं तव तेजोऽर्द्धं न शक्ष्यामो महेश्वर । सर्व्वेषां नो बलार्द्धेन त्वमेव जहि शात्रवान् ।

॥ श्रीभगवानुवाच ॥ यदि शक्तिर्न वः काचित् विभर्त्तुं मामकं बलं । अहमेतान् हनिष्यामि युष्मत्तेजोऽर्द्धबृंहितः ।

॥ दुर्य्योधन उवाच ॥ ततस्तथेति देवेशस्तैरुक्तो राजसत्तम । अर्द्धमादाय सर्व्वेषां तेजसाऽभ्यधिकोऽभवत् । १४६५

स तु देवो बलेनासीत् सर्व्वेभ्यो बलवत्तरः । महादेव इति ख्यातस्ततः प्रभृति शङ्करः ।

ततोऽब्रवीन्महादेवो धनुर्ब्बाणधरो ह्यहं । हनिष्यामि रथेनाजौ तान्त्रिपून् वो दिवौकसः ।

ते यूयं मे रथञ्चैव धनुर्ब्बाणं तथैव च । पश्यध्वं यावदद्यैतान् पातयामि महीतले ।

॥ देवा ऊचुः ॥ मूर्त्तीः सर्व्वाः समाधाय त्रैलोक्यस्य ततस्ततः । रथं ते कल्पयिष्यामो देवेश्वर सुवर्चसं ।

तथैव बुद्ध्या विहितं विश्वकर्म्मकृतं शुभं । ततो विबुधशार्दूलास्तं रथं समकल्पयन् । १४७०

विष्णुं सोमं हुताशञ्च तस्येषुं समकल्पयन् । शृङ्गमग्निर्बभूवास्य भल्लः सोमो विशाम्पते ।

कुड्मलञ्चाभवद्विष्णुस्तस्मिन्निषुवरे तदा । रथं वसुन्धरां देवीं विशालपुरमालिनीं ।

सपर्व्वतवनद्वीपां चक्रुर्भूतधरान्तदा । मन्दरः पर्व्वतश्चाक्षं जङ्घा तस्य महानदी ।

दिशश्च प्रदिशश्चैव परिवारो रथस्य तु । ईषा नक्षत्रवंशाश्च युगः कृतयुगोऽभवत् ।

कूवरश्च रथस्यासीद्वासुकिर्भुजगोत्तमः । अपस्करमधिष्ठाने हिमवान् विन्ध्यपर्व्वतः । १४७५

उदयास्तावधिष्ठाने गिरी चक्रुः सुरोत्तमाः । समुद्रमक्षमसृजन् दानवालयमुत्तमं ।

सप्तर्षिमण्डलञ्चैव रथस्यासीत् परिस्करः । गङ्गा सरस्वती सिन्धुर्धुरमाकाशमेव च ।

उपस्कारो रथस्यासन्नापः सर्व्वाश्च निम्नगाः । अहोरात्राः कलाश्चैव काष्ठाश्च ऋतवस्तथा ।

अनुकर्षं ग्रहा दीप्ता वरूथञ्चापि तारकाः । धर्म्मार्थकामसंयुक्तं त्रिवेणुं चापि बन्धुरं ।

ओषधीर्व्वीरुधश्चैव घण्टाः पुष्पफलोपगाः । सूर्य्याचन्द्रमसौ कृत्वा चक्रे रथवरोत्तमे । १४८०

पक्षौ पूर्व्वापरौ तत्र कृते रात्र्यहनी शुभे । दश नागपतीनीषां धृतराष्ट्रमुखांस्तदा ।
योक्त्राणि चक्रुर्नागांश्च निश्वसन्तो महोरगान् । द्यां युगं युगचर्म्माणि संवर्त्तकबलाहकान् ।
कालपृष्ठोऽथ नहुषः कर्क्कोटकधनञ्जयौ । इतरे चाभवन्नागा हयानां वालबन्धनाः ।
दिशश्च प्रदिशश्चैव रश्मयो रथवाजिनां । सन्ध्यां धृतिञ्च मेधाञ्च स्थितिं सन्नतिमेव च ।
ग्रहनक्षत्रताराभिश्चर्म्म चित्रं नभस्तलं । सुराम्बुप्रेतवित्तानां पतीन् लोकेश्वरान् हयान् । १४८५
सिनीवालीमनुमतिं कुहूं राकाञ्च सुव्रतां । योक्त्राणि चक्रुर्वाहानां रोहकांस्तत्र कण्टकान् ।
धर्म्मः सत्यं ततोऽर्थश्च विहितास्तत्र रश्मयः । अधिष्ठानं मनश्चासीत् परिरथ्या सरस्वती ।
नानावर्णाश्च चित्राश्च पताकाः पवनेरिताः । विद्युदिन्द्रधनुर्नद्धं रथं दिव्यं व्यदीपयन् ।
वषट्कारः प्रतोदोऽभूद्गायत्री शीर्षबन्धना । यो यज्ञे विहितः पूर्व्वमीशानस्य महात्मनः ।
संवत्सरो धनुस्तद्वै सावित्री ज्या महास्वना । दिव्यञ्च वर्म्म विहितं महार्हं रत्नभूषितं । १४९०
अभेद्यं विरजस्कं वै कालचक्रबहिष्कृतं । ध्वजयष्टिरभून्मेरुः श्रीमान् मैनाकपर्व्वतः ।
पताकाश्चाभवन्मेघास्तडिद्भिः समलङ्कृताः । रेजुरध्वर्युमध्यस्था ज्वलन्त इव पावकाः ।
कॢप्तं तु तं रथं दृष्ट्वा विस्मिता देवताऽभवन् । सर्व्वलोकस्य तेजांसि दृष्ट्वैकस्थानि मारिष ।
युक्तं निवेदयामासुर्देवास्तस्मै महात्मने । एवं तस्मिन्महाराज कल्पिते रथसत्तमे ।
देवैर्मनुजशार्दूल द्विषतामभिमर्द्दने । स्वान्यायुधानि मुख्यानि न्यदधाच्छङ्करो रथे । १४९५
ध्वजयष्टिं वियत्कृत्वा स्थापयामास गोवृषं । ब्रह्मदण्डः कालदण्डो रुद्रदण्डस्तथा ज्वरः ।
परिस्कन्दा रथस्यासन् सर्व्वतोदिशमुद्यताः । अथर्व्वाङ्गिरसावास्तां चक्ररक्षौ महात्मनः ।
ऋग्वेदः सामवेदश्च पुराणञ्च पुरःसराः । इतिहासयजुर्व्वेदौ पृष्ठरक्षौ बभूवतुः ।
दिव्या वाचश्च विद्याश्च परिपार्श्वचराः स्थिताः । स्तोत्रादयश्च राजेन्द्र वषट्कारस्तथैव च ।
ओंकारश्च मुखे राजन्नतिशोभाकरोऽभवत् । विचित्रमृतुभिः षड्भिः कृत्वा संवत्सरं धनुः । १५००
छायामेवात्मनश्चक्रे धनुर्ज्यामक्षयां रणे । कालो हि भगवान् रुद्रस्तस्य संवत्सरो धनुः ।
तस्माद्रौद्री कालरात्री ज्या कृता धनुषोऽजरा । इषुश्चाप्यभवद्विष्णुर्ज्वलनः सोम एव च ।
अग्नीषोमं जगत् कृत्स्नं वैष्णवं चोच्यते जगत् । विष्णुश्चात्मा भगवतो भवस्यामिततेजसः ।
तस्माद्धनुर्ज्यासंस्पर्शं न विषेहुर्हरस्य ते । तस्मिन् शरे तिग्ममन्युं मुमोचासह्यमीश्वरः ।
भृग्वङ्गिरोमन्युभवं क्रोधाग्निमतिदुःसहं । स नीललोहितो धूम्रः कृत्तिवासा भयङ्करः । १५०५
आदित्यायुतसङ्काशस्तेजोज्वालावृतो ज्वलन् । दुश्च्यावच्यावनो जेता हन्ता ब्रह्मद्विषां हरः ।
नित्यं त्राता च हन्ता च धर्म्माधर्म्माश्रितान्नरान् । प्रमाथिभिर्भीमबलैर्भीमरूपैर्मनोजवैः ।
विभाति भगवान् स्थाणुस्तैरेवात्मगुणैर्वृतः । तस्याङ्गानि समाश्रित्य स्थितं विश्वमिदं जगत् ।
जङ्गमाजङ्गमं राजन् शुशुभेऽद्भुतदर्शनं । दृष्ट्वा तु तं रथं युक्तं कवची सशरासनी ।
बाणमादाय तं दिव्यं सोमविष्ण्वग्निसम्भवं । तस्य राजंस्तदा देवाः कल्पयाञ्चक्रिरे प्रभो । १५१०

पुण्यगन्धवहं राजन् श्वसनं देवसत्तमं । तमास्थाय महादेवस्त्रासयन् दैवतान्यपि ।
आरुरोह तदा यत्तः कम्पयन्निव मेदिनीं । तमारुरुक्षुं देवेशं तुष्टुवुः परमर्षयः ।
गन्धर्व्वा देवसंघाश्च तथैवाप्सरसां गणाः । ब्रह्मर्षिभिः स्तूयमानो वन्द्यमानश्च वन्दिभिः ।
तथैवाप्सरसां वृन्दैर्नृत्यद्भिर्नृत्यकोविदैः । स शोभमानो वरदः खड्गी वाणी शरासनी ।
हसन्निवाब्रवीद्देवः सारथिः को भविष्यति । तमब्रुवन् देवगणा यं भवान् संनियोक्ष्यते । ५५३५
स भविष्यति देवेश सारथिस्ते न संशयः । तानब्रवीत् पुनर्द्देवो मत्तः श्रेष्ठतरो हि यः ।
तं सारथिं कुरुध्वं मे स्वयं सञ्चिन्त्य मा चिरं । एतच्छ्रुत्वा ततो देवा वाक्यमुक्तं महात्मना ।
गत्वा पितामहं देवाः प्रसाद्येदं वचोऽब्रुवन् । यथा त्वत्कथितं देव त्रिदशारिविनिग्रहे ।
तथा च कृतमस्माभिः प्रसन्नो वृषभध्वजः । रथश्च विहितोऽस्माभिर्व्विचित्रायुधसंवृतः ।
सारथिश्च न जानीमः कः स्यात्तस्मिन्रथोत्तमे । तस्माद्विधीयतां कश्चित् सारथिर्द्देवसत्तमः । ५५४०
सफलान्तां गिरं देव कर्त्तुमर्हसि नो विभो । एवमस्मासु हि पुरा भगवन्नुक्तवानसि ।
हितं कर्त्तास्मि भवतामिति तत्कर्त्तुमर्हसि ।
स देवयुक्तो रथसत्तमो नो दुराधरो द्रावणः शात्रवाणां । पिनाकपाणिर्व्विहितोऽत्र योद्धा विभीषयन् दानवानुद्यतोऽसौ ।
तथैव वेदाश्चतुरो हयाग्र्या धरा सशैला च रथो महात्मनः । नक्षत्रवंशानुगतो वरूथी हरो योद्धा सारथिर्नाभिलक्ष्यः ।
तत्र सारथिरेष्टव्यः सर्व्वैरेतैर्व्विशेषवान् । तत्प्रतिष्ठो रथो देव हया योद्धा तथैव च । ५५४५
कवचानि सशस्त्राणि कार्म्मुकञ्च पितामह । त्वामृते सारथिं तत्र नान्यं पश्यामहे वयं ।
त्वं हि सर्व्वगुणैर्युक्तो दैवतेभ्योऽधिकः प्रभो । स रथं तूर्णमारुह्य संयच्छ परमान् हयान् ।
जयाय त्रिदिवेशानां बधाय त्रिदशद्विषां । इति ते शिरसा गत्वा त्रिलोकेशं पितामहं ।
देवाः प्रसादयामासुः सारथ्यायेति नः श्रुतं ।
॥ पितामह उवाच ॥ नात्र किञ्चिन्मृषा वाक्यं यदुक्तं त्रिदिवौकसः । संयच्छामि हयानेष युध्यतो वै कपर्द्दिनः । ५५५०
ततः स भगवान् देवो लोकस्रष्टा पितामहः । सारथ्ये कल्पितो देवैरीशानस्य महात्मनः ।
तस्मिन्नारोहति क्षिप्रं स्यन्दने लोकपूजिते । शिरोभिरगमन् भूमिं ते हया वातरंहसः ।
आरुह्य भगवान् देवो दीप्यमानः स्वतेजसा । अभीषून् हि प्रतोदञ्च संजग्राह पितामहः ।
तत उत्थाप्य भगवांस्तान् हयाननिलोपमान् । बभाषे च तदा स्थाणुमारोहेति सुरोत्तमः ।
ततस्तमिषुमादाय विष्णुसोमाग्निसम्भवं । आरुरोह तदा स्थाणुर्धनुषा कम्पयन् परान् । ५५५५
तमारूढन्तु देवेशं तुष्टुवुः परमर्षयः । गन्धर्व्वा देवसंघाश्च तथैवाप्सरसां गणाः ।
स शोभमानो वरदः खड्गी वाणी शरासनी । प्रदीपयन्रथे तस्थौ त्रीन् लोकान् स्वेन तेजसा ।
ततो भूयोऽब्रवीद्देवो देवानिन्द्रपुरोगमान् । न हन्यादिति कर्त्तव्यो न शोको वः कथञ्चन ।
हतानित्येव जानीत वाणेनानेन चासुरान् । ते देवाः सत्यमित्याहुर्निहता इति चाब्रुवन् ।
न च तद्वचनं मिथ्या यदाह भगवान् प्रभुः । इति सञ्चिन्त्य वै देवाः परां तुष्टिमवाप्नुवन् । ५५६०

ततः प्रयातो देवेशः सर्व्वैर्देवगणैर्वृतः । रथेन महता राजन्नुपमा नास्ति यस्य ह ।
स्वैश्च पारिषदैर्देवः पूज्यमानो महायशाः । नृत्यद्भिरपरैश्चैव मांसभक्षैर्दुरासदैः ।
धावमानैः समन्ताच्च तर्ज्जमानैः परस्परं । ऋषयश्च महाभागास्तपोयुक्ता महागुणाः ।
आशंसुर्व्विजयं देवा महादेवस्य सर्व्वशः । एवं प्रयाते देवेशे लोकानामभयङ्करे ।
तुष्टमासीज्जगत् सर्व्वं देवताश्च नरोत्तम । ऋषयस्तत्र देवेशं स्तुवन्तो बहुभिः स्तवैः ।　१५४५
तेजश्चास्मै वर्द्धयन्तो राजन्नासन् पुनः पुनः । गन्धर्व्वाणां सहस्राणि प्रयुतान्यर्ब्बुदानि च ।
वादयन्ति प्रयाणेऽस्य वाद्यानि विविधानि च । ततोऽधिरूढे वरदे प्रयाते चासुरान् प्रति ।
साधुसाध्विति विश्वेशः स्मयमानोऽभ्यभाषत । याहि देव यतो दैत्याश्चोदयाश्वानतन्द्रितः ।
पश्य बाह्वोर्ब्बलं मेऽद्य निघ्नतः शात्रवान् रणे । ततोऽश्वांश्चोदयामास मनोमारुतरंहसः ।
येन तत्त्रिपुरं राजन् दैत्यदानवरक्षितं । पिबद्भिरिव चाकाशं तैर्हयैर्लोकपूजितैः ।　१५५०
जगाम भगवान् क्षिप्रं जयाय त्रिदिवौकसां । प्रयाते रथमास्थाय त्रिपुराभिमुखे भवे ।
ननाद सुमहन्नादं वृषभः पूरयन् दिशः । वृषभस्यास्य निनदं श्रुत्वा भयकरं महत् ।
विनाशमगमंस्तत्र तारकाः सुरशत्रवः । अपरेऽवस्थितास्तत्र युद्धायाभिमुखास्तदा ।
ततः स्थाणुर्महाराज शूलधृक् क्रोधमूर्च्छितः । त्रस्तानि सर्व्वभूतानि त्रैलोक्यं भूः प्रकम्पते ।
निमित्तानि च घोराणि तत्र सन्दधतः शरं । तस्मिन् सोमाग्निविष्णूनां क्षोभेन ब्रह्मरुद्रयोः ।　१५५५
स रथो धनुषः क्षोभादतीव ह्यवसीदति । ततो नारायणस्तस्माच्छरभागाद्विनिःसृतः ।
वृषरूपं समास्थाय उज्जहार महारथं । सीदमाने रथे चैव नर्द्दमानेषु शत्रुषु ।
स सम्भ्रमात्तु भगवान्नादञ्चक्रे महाबलः । वृषभस्य स्थितो मूर्द्ध्नि हयपृष्ठे च मानद ।
तदा स भगवान् रुद्रो निरैक्षद्दानवं पुरं । वृषभस्यास्थितो रुद्रो हयस्य च नरोत्तम ।
स्तनांस्तदा शातयत खुरांश्चैव द्विधाकरोत् । ततः प्रभृति भद्रन्ते गवां द्वैधीकृताः खुराः ।　१५६०
हयानाञ्च स्तना राजंस्तदा प्रभृति नाभवन् । पीड़ितानां बलवता रुद्रेणाद्भुतकर्म्मणा ।
तथाऽधिज्यं पुनः कृत्वा शर्व्वः सन्धाय तं शरं । युक्त्वा पाशुपतास्त्रेण त्रिपुरं समचिन्तयत् ।
तस्मिन् स्थिते महाराज रुद्रे विष्टतकार्म्मुके । पुराणि तानि कालेन जग्मुरेकतां तदा ।
एकीभावं गते चैव त्रिपुरत्वमुपागते । बभूव तुमुलो हर्षो देवतानां महात्मनां ।
ततो देवगणाः सर्व्वे सिद्धाश्च परमर्षयः । जयेति वाचो मुमुचुः संस्तुवन्तो महेश्वरं ।　१५६५
ततोऽग्रतः प्रादुरभूत्त्रिपुरं निघ्नतोऽसुरान् । अनिर्द्देश्योग्रवपुषो देवस्यासह्यतेजसः ।
स तद्विकृष्य भगवान् दिव्यं लोकेश्वरो धनुः । त्रैलोक्यसारं तमिषुं मुमोच त्रिपुरं प्रति ।
उत्सृष्टे वै महाभाग तस्मिन्निषुवरे तदा । महानार्त्तस्वरो ह्यासीत् पुराणां पततां भुवि ।
तान् सोऽसुरगणान् दग्ध्वा प्राक्षिपत् पश्चिमार्णवे । एवन्तु त्रिपुरं दग्धं दानवाश्चाप्यशेषतः ।
महेश्वरेण क्रुद्धेन त्रैलोक्यस्य हितैषिणा । स चात्मक्रोधजो वह्निर्हाहेत्युक्त्वा निवारितः ।　१५७०

मा कार्षीर्भस्मसाल्लोकानिति त्र्यक्षोऽब्रवीच्च तं। ततः प्रकृतिमापन्ना देवा लोकास्तथर्षयः।
तुष्टुवुर्व्वाग्भिरग्र्याभिः स्थाणुमप्रतिमौजसं। तेऽनुज्ञाता भगवता जग्मुः सर्व्वे यथागतं।
कृतकामाः प्रयत्नेन प्रजापतिमुखाः सुराः। एवं स भगवान् देव लोकस्रष्टा महेश्वरः।
देवासुरगणाध्यक्षो लोकानां विदधे शिवं। यथैव भगवान् ब्रह्मा लोकधाता पितामहः।
सारथ्यमकरोत्तत्र रुद्रस्य परमोऽव्ययः। तथा भवानपि क्षिप्रं रुद्रस्येव पितामहः। १५७५
संयच्छतु हयानस्य राधेयस्य महात्मनः। त्वं हि कृष्णाच्च कर्णाच्च फाल्गुनाच्च विशेषतः।
विशिष्टो राजशार्दूल नास्ति तत्र विचारणा। युद्धे ह्ययं रुद्रकल्पस्त्वञ्च ब्रह्मसमो नये।
तस्माच्छक्तो भवान् जेतुं मच्छत्रूंस्तानिवासुरान्। यथा शल्याद्य कर्णोऽयं श्वेताश्वं कृष्णसारथिं।
प्रमथ्य हन्यात् कौन्तेयं तथा शीघ्रं विधीयतां। त्वयि मद्रेश राज्याशा जीविताशा तथैव च।
विजयश्च तथैवाद्य कर्णसाचिव्यकारितः। त्वयि कर्णश्च राज्यञ्च वयञ्चैव प्रतिष्ठिताः। १५८०
विजयश्चैव संग्रामे संयच्छाद्य हयोत्तमान्। इदञ्चाप्यपरं भूय इतिहासं निबोध मे।
पितुर्मम सकाशे यद्ब्राह्मणः प्राह धर्म्मवित्। श्रुत्वा चैतद्वचश्चित्रं हेतुकार्य्यार्थसंहितं।
कुरु शल्य विनिश्चित्य माभूदत्र विचारणा। भार्गवाणां कुले जातो जमदग्निर्महायशाः।
तस्य रामेति विख्यातः पुत्रस्तेजोगुणान्वितः। स तीव्रं तप आस्थाय प्रसादयितवान् भवं।
अस्त्रहेतोः प्रसन्नात्मा नियतः संयतेन्द्रियः। तस्य तुष्टो महादेवो भक्त्या च प्रशमेन च। १५८५
हृद्गतञ्चास्य विज्ञाय दर्शयामास शङ्करः।
॥ महेश्वर उवाच ॥ राम तुष्टोऽस्मि भद्रन्ते विदितं मे तवेप्सितं। कुरुष्व पूतमात्मानं सर्व्वमेतदवाप्स्यसि।
दास्यामि ते तदाऽस्त्राणि यदा पूतो भविष्यसि। अपात्रमसमर्थञ्च दहन्त्यस्त्राणि भार्गव।
इत्युक्तो जामदग्न्यस्तु देवदेवेन शूलिना। प्रत्युवाच महात्मानं शिरसाऽवनतः प्रभुं।
यदा जानासि देवेश पात्रं मामस्त्रधारणे। तदा शुश्रूषवेऽस्त्राणि भवान्मे दातुमर्हति। १५९०
॥ दुर्य्योधन उवाच ॥ ततः स तपसा चैव दमेन नियमेन च। पूजोपहारबलिभिर्होममन्त्रपुरस्कृतैः।
आराधयितवान् शर्व्वं बहून् वर्षगणांस्तदा। प्रसन्नश्च महादेवो भार्गवस्य महात्मनः।
अब्रवीत्तस्य बहुशो गुणान् देव्याः समीपतः। भक्तिमानेष सततं मयि रामो दृढव्रतः।
एवं तस्य गुणान् प्रीतो बहुशोऽकथयत् प्रभुः। देवतानां पितृणाञ्च समक्षमरिसूदन।
एतस्मिन्नेव काले तु दैत्या ह्यासन् महाबलाः। तैस्तदा दर्पमोहान्धैरबाध्यन्त दिवौकसः। १५९५
ततः सम्भूय विबुधास्तान् हन्तुं कृतनिश्चयाः। चक्रुः शत्रुवधे यत्नं न शेकुर्जेतुमेव तान्।
अभिगम्य ततो देवा महेश्वरमुमापतिं। प्रासादयंस्तदा भक्त्या जहि शत्रुगणानिति।
प्रतिज्ञाय ततो देवो देवतानां रिपुक्षयं। रामं भार्गवमाहूय सोऽभ्यभाषत शङ्करः।
रिपून् भार्गव देवानां जहि सर्व्वान् समागतान्। लोकानां हितकामार्थं मत्प्रीत्यर्थं तथैव च।
एवमुक्तः प्रत्युवाच त्र्यम्बकं वरदं प्रभुं। १६००

॥ राम उवाच ॥ का शक्तिर्मम देवेश अकृतास्त्रस्य संयुगे। निहन्तुं दानवान् सर्व्वान् कृतास्त्रान् युद्धदुर्म्मदान्।

॥ महेश्वर उवाच ॥ गच्छ त्वं मदनुज्ञातो निहनिष्यसि दानवान्। विजित्य च रिपून् सर्व्वान् गुणान् प्राप्स्यसि पुष्कलान्।

एतत् श्रुत्वा तु वचनं प्रतिगृह्य च सर्व्वशः। रामः कृतस्वस्त्ययनः प्रययौ दानवान् प्रति।

अब्रवीद्देवशत्रूंस्तान् मदद्दर्पबलान्वितान्। मम युद्धं प्रयच्छध्वं दैत्या युद्धमदोत्कटाः।

प्रेषितो देवदेवेन वो विजेतुं महासुराः। इत्युक्ता भार्गवेनाथ दैत्या युद्धं प्रचक्रमुः। ११०५

स तान्निहत्य समरे दैत्यान् भार्गवनन्दनः। वज्राशनिसमस्पर्शैः प्रहारैरेव भार्गवः।

स दानवैः क्षततनुर्जामदग्न्यो द्विजोत्तमः। संस्पृष्टः स्थाणुना सद्यो निर्व्रणः समजायत।

प्रीतश्च भगवान् देवः कर्म्मणा तेन तस्य वै। वरान् प्रादाद्बहुविधान् भार्गवाय महात्मने।

उक्तश्च देवदेवेन प्रीतियुक्तेन शूलिना। निपातात्तव शस्त्राणां शरीरे याऽभवद्रुजा।

तया ते मानुषं कर्म्म व्यपोढं भृगुनन्दन। गृहाणास्त्राणि दिव्यानि मत्सकाशाद्यथेप्सितं। १११०

॥ दुर्य्योधन उवाच ॥ ततोऽस्त्राणि समस्तानि वरांश्च मनसेप्सितान्। लब्ध्वा बहुविधान् रामः प्रणम्य शिरसा भवं।

अनुज्ञां प्राप्य देवेशाज्जगाम स महातपाः। एवमेतत् पुरावृत्तं तदा कथितवानृषिः।

भार्गवोऽपि ददौ दिव्यं धनुर्व्वेदं महात्मने। कर्णाय पुरुषव्याघ्र सुप्रीतेनान्तरात्मना।

वृजिनं हि भवेत् किञ्चिद्यदि कर्णस्य पार्थिव। नास्मै ह्यस्त्राणि दिव्यानि प्रादास्यद्भृगुनन्दनः।

नापि सूतकुले जातं कर्णं मन्ये कथञ्चन। देवपुत्त्रमहं मन्ये क्षत्त्रियाणां कुलोद्भवं। १११५

विसृष्टं महतो गोत्रादिति मे नैष्ठिकी मतिः। सर्व्वथा न ह्ययं शल्य कर्णः सूतकुलोद्भवः।

सकुण्डलं सकवचं दीर्घबाहुं महारथं। कथमादित्यसदृशं मृगी व्याघ्रं जनिष्यति।

यथा ह्यस्य भुजौ पीनौ नागराजकरोपमौ। वक्षः पश्य विशालञ्च सर्व्वशत्रुनिवर्हणं।

न त्वेषः प्राकृतः कश्चित् कर्णो वैकर्त्तनो वृषः। महात्मा ह्येष राजेन्द्र रामशिष्यः प्रतापवान्।

इति श्रीमहाभारते कर्णपर्व्वणि त्रिपुरवधोपाख्याने चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

॥ दुर्य्योधन उवाच ॥ एवं स भगवान् देवः सर्व्वलोकपितामहः। सारथ्यमकरोत्तत्र यत्र रुद्रोऽभवद्रथी। ११२०

रथिनोऽभ्यधिको वीरः कर्त्तव्यो रथसारथिः। तस्मात्त्वं पुरुषव्याघ्र नियच्छ तुरगान् युधि।

यथा देवगणैस्तत्र वृतो यत्नात् पितामहः। तथाऽस्माभिर्भवान् यत्नात् कर्णादभ्यधिको वृतः।

यथा देवैर्म्महाराज ईश्वरादधिको वृतः। तथाभवानपि क्षिप्रं रुद्रस्येव पितामहः।

नियच्छ तुरगान् युद्धे राधेयस्य महाद्युते।

॥ शल्य उवाच ॥ मयाऽप्येतन्नरश्रेष्ठ बहुशो नरसिंहयोः। कथ्यमानं श्रुतं दिव्यमाख्यानमतिमानुषं। ११२५

यथा च चक्रे सारथ्यं भवस्य प्रपितामहः। यथाऽसुराश्च निहता इषुणैकेन भारत।

कृष्णस्य चापि विदितं सर्व्वमेतत् पुरा ह्यभूत्। यथा पितामहो जज्ञे भगवान् सारथिस्तदा।

अनागतमतिक्रान्तं वेद कृष्णोऽपि तत्त्वतः। एतदर्थं विदित्वाऽपि सारथ्यमुपजग्मिवान्।

स्वयम्भूरिव रुद्रस्य कृष्णः पार्थस्य भारत । यदि हन्याच्च कौन्तेयं सूतपुत्रः कथञ्चन ।
दृष्ट्वा पार्थं हि निहतं स्वयं योत्स्यति केशवः । शङ्खचक्रगदापाणिर्धक्ष्यते तव वाहिनीं । १६३०
न चापि तस्य क्रुद्धस्य वार्ष्णेयस्य महात्मनः । स्थास्यते प्रत्यनीकेषु कश्चिदत्र नृपस्तव ।
॥ सञ्जय उवाच ॥ तं तथाभाषमाणन्तु मद्रराजमरिन्दमः । प्रत्युवाच महाबाहुरदीनात्मा सुतस्तव ।
माऽवमंस्था महाबाहो कर्णं वैकर्त्तनं रणे । सर्व्वशस्त्रभृतां श्रेष्ठं सर्व्वशास्त्रार्थपारगं ।
यस्य ज्यातलनिर्घोषं श्रुत्वा भयकरं महत् । पाण्डवेयानि सैन्यानि विद्रवन्ति दिशो दश ।
प्रत्यक्षन्ते महाबाहो यथा रात्रौ घटोत्कचः । मायाशतानि कुर्व्वाणो हतो मायापुरस्कृतः । १६३५
न चातिष्ठत बीभत्सुः प्रत्यनीके कथञ्चन । एतांश्च दिवसान् सर्व्वान् भयेन महता वृतः ।
भीमसेनश्च बलवान् धनुष्कोट्याऽभिचोदितः । उक्तश्च संज्ञया राजन् मूढ औदरिको यथा ।
माद्रीपुत्रौ तथा शूरौ येन जित्वा महारणे । कमप्यर्थं पुरस्कृत्य न हतौ युधि मारिष ।
येन वृष्णिप्रवीरस्तु सात्यकिः सात्वताम्बरः । निर्जित्य समरे वीरो विरथश्च बलात् कृतः ।
सृञ्जयाश्चेतरे सर्व्वे धृष्टद्युम्नपुरोगमाः । असकृन्निर्जिताः संख्ये स्मयमानेन संयुगे । १६४०
तं कथं पाण्डवा युद्धे विजेष्यन्ति महारथं । यो हन्यात् समरे क्रुद्धो वज्रहस्तं पुरन्दरं ।
त्वञ्च सर्व्वास्त्रविद्वीरः सर्व्वविद्यास्त्रपारगः । बाहुवीर्य्येण ते तुल्यः पृथिव्यां नास्ति कश्चन ।
त्वं शल्यभूतः शत्रूणामविषह्यः पराक्रमे । ततस्त्वमुच्यसे राजन् शल्य इत्यरिसूदन ।
तव बाहुबलं प्राप्य न शेकुः सर्व्वसात्वताः । तव बाहुबलाद्राजन् किन्नु कृष्णो बलाधिकः ।
यथा हि कृष्णेन बलं धार्य्यं वै फाल्गुने हते । तथा कर्णात्ययीभावे त्वया धार्य्यं महद्बलं । १६४५
किमर्थं समरे सैन्यं वासुदेवो न्यवारयत् । किमर्थञ्च भवान् सैन्यं न हनिष्यति मारिष ।
त्वत्कृते पदवीं गन्तुमिच्छेयं युधि मारिष । सोदराणाञ्च वीराणां सर्व्वेषाञ्च महीक्षितां ।
॥ शल्य उवाच ॥ यन्मां ब्रवीषि गान्धारे अग्रे सैन्यस्य मानद । विशिष्टं देवकीपुत्रात् प्रीतिमानस्म्यहं त्वयि ।
एष सारथ्यमातिष्ठे राधेयस्य यशस्विनः । युध्यतः पाण्डवाग्र्येण यथा त्वं वीर मन्यसे ।
समयश्च हि मे वीर कश्चिद्वैकर्त्तनं प्रति । उत्सृजेयं यथाश्रद्धमहं वाचोऽस्य सन्निधौ । १६५०
॥ सञ्जय उवाच ॥ तथेति राजन् पुत्रस्ते सह कर्णेन मारिष । अब्रवीन्मद्रराजानं सर्व्वक्षत्रस्य सन्निधौ ।
सारथ्यस्याभ्युपगमाच्छल्येनाश्वासितस्तदा । दुर्य्योधनस्तदा हृष्टः कर्णं तमभिषस्वजे ।
अब्रवीच्च पुनः कर्णं स्तूयमानः सुतस्तव । जहि पार्थान् रणे सर्व्वान् महेन्द्रो दानवानिव ।
स शल्येनाभ्युपगते हयानां सन्नियच्छने । कर्णो हृष्टमना भूयो दुर्य्योधनमभाषत ।
नातिहृष्टमना ह्येष मद्रराजोऽभिभाषते । राजन्मधुरया वाचा पुनरेनं ब्रवीहि वै । १६५५
ततो राजा महाप्राज्ञः सर्व्वास्त्रकुशलो बली । दुर्य्योधनोऽब्रवीच्छल्यं मद्रराजं महीपतिं ।
पूरयन्निव घोषेण मेघगम्भीरया गिरा । शल्य कर्णोऽर्ज्जुनेनाद्य योद्धव्यमिति मन्यते ।

तस्य त्वं पुरुषव्याघ्र नियच्छ तुरगान् युधि। कर्णो ह्यनेतरान् सर्व्वान् फाल्गुनं हन्तुमिच्छति
तस्याभीषुग्रहे राजन् प्रसादे त्वां पुनः पुनः। पार्थस्य सचिवः कृष्णो यथाऽभीषुग्रहो वरः।
तथा त्वमपि राधेयं सर्व्वतः परिपालय। १६६०
॥ सञ्जय उवाच ॥ ततः शल्यः परिष्वज्य सुतं ते वाक्यमब्रवीत्। दुर्य्योधनममित्रघ्नं प्रीतो मद्राधिपस्तदा।
॥ शल्य उवाच ॥ एवं चेन्मन्यसे राजन् गान्धारे प्रियदर्शन। तस्मात्ते यत् प्रियं किञ्चित्तत् सर्व्वं करवाण्यहं।
यत्रास्मि भरतश्रेष्ठ योग्यः कर्म्मणि कर्हिचित्। तत्र सर्व्वात्मना युक्तो वक्ष्ये कार्य्यधुरं तव।
यत्तु कर्णमहं ब्रूयां हितकामः प्रियाप्रिये। मम तत् क्षमतां सर्व्वं भवान् कर्णश्च सर्व्वशः।
॥ कर्ण उवाच ॥ ईशानस्य यथा ब्रह्मा यथा पार्थस्य केशवः। तथा नित्यं हिते युक्तो मद्रराज भवस्व नः। १६६५
॥ शल्य उवाच ॥ आत्मनिन्दात्मपूजा च परनिन्दा परस्तवः। अनाचरितमार्य्याणां वृत्तमेतच्चतुर्व्विधं।
यत्तु विद्वन् प्रवक्ष्यामि प्रत्ययार्थमहन्तव। आत्मनस्तव संयुक्तं तन्निबोध यथातथं।
अहं शक्रस्य सारथ्ये योग्यो मातलिवत् प्रभो। अप्रमादप्रयोगाच्च ज्ञानविद्याचिकित्सितैः।
ततः पार्थेन संग्रामे युध्यमानस्य तेऽनघ। वाहयिष्यामि तुरगान् विज्वरो भव सूतज।
इति श्रीमहाभारते कर्णपर्व्वणि शल्यसारथ्यस्वीकारे पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
॥ दुर्य्योधन उवाच ॥ अयन्ते कर्ण सारथ्यं मद्रराजः करिष्यति। कृष्णादभ्यधिको यन्ता देवेशस्येव मातलिः। १६७०
यथा हरिहयैर्युक्तं संगृह्णाति स मातलिः। शल्यस्तथा तवाद्यायं संयन्ता रथवाजिनां।
योधे त्वयि रथस्थे च मद्रराजे च सारथौ। रथश्रेष्ठो ध्रुवं संख्ये पार्थानभिभविष्यति।
॥ सञ्जय उवाच ॥ ततो दुर्य्योधनो भूयो मद्रराजं तरस्विनं। उवाच राजन् संग्रामेऽभ्युषिते पर्य्युपस्थिते।
कर्णस्य यच्छ संग्रामे मद्रराज हयोत्तमान्। त्वयाऽभिगुप्तो राधेयो विजेष्यति धनञ्जयं।
इत्युक्तो रथमास्थाय तथेति प्राह भारत। शल्येऽभ्युपगते कर्णः सारथिं सुमनाऽब्रवीत्। १६७५
त्वं सूत स्यन्दनं मह्यं कल्पयेत्यसकृत्त्वरन्। ततो जैत्रं रथवरं गन्धर्व्वनगरोपमं।
विधिवत् कल्पितं भद्रं जयेत्युक्त्वा न्यवेदयत्। तं रथं रथिनां श्रेष्ठः कर्णोऽभ्यर्च्य यथाविधि।
सम्पादितं ब्रह्मविदा पूर्व्वमेव पुरोधसा। कृत्वा प्रदक्षिणं यत्नादुपस्थाय च भास्करं।
समीपस्थं मद्रराजमारोह त्वमथाब्रवीत्। ततः कर्णस्य दुर्द्धर्षं स्यन्दनप्रवरं महत्।
आरुरोह महातेजाः शल्यः सिंह इवाचलं। ततः शल्यास्थितं दृष्ट्वा कर्णः स रथमुत्तमं। १६८०
अध्यतिष्ठद्यथाऽम्भोदं विद्युत्वन्तं दिवाकरः। तावेकरथमारूढावादित्याग्निसमत्विषौ।
अभ्राजेतां यथा मेघं सूर्य्याग्नी सहितौ दिवि। संस्तूयमानौ तौ वीरौ तदास्तां द्युतिमत्तमौ।
ऋत्विक्सदस्यैरिन्द्राग्नी स्तूयमानाविवाध्वरे। स शल्यसंगृहीताश्वे रथे कर्णः स्थितो बभौ।
धनुर्व्विस्फारयन् घोरं परिवेषीव भास्करः। आस्थितः स रथश्रेष्ठं कर्णः शरगभस्तिमान्।
प्रबभौ पुरुषव्याघ्रो मन्दरस्थ इवांशुमान्। तं रथस्थं महाबाहुं युद्धायामिततेजसं। १६८५
दुर्य्योधनस्तु राधेयमिदं वचनमब्रवीत्। अकृतं द्रोणभीष्माभ्यां दुष्करं कर्म्म संयुगे।

कुरुष्वाधिरथे वीर मिषतां सर्व्वधन्विनां । ममापि मतमासीद्धि भीष्मद्रोणौ महारथौ ।
अर्ज्जुनं भीमसेनञ्च निहन्ताराविति ध्रुवं । ताभ्यां यदकृतं वीर वीरकर्म्म महामृधे ।
तत् कर्म्म कुरु राधेय वज्रपाणिरिवापरः । गृहाण धर्म्मराजं वा जहि वा त्वं धनञ्जयं ।
भीमसेनञ्च राधेय माद्रीपुत्त्रौ यमावपि । जयश्च तेऽस्तु भद्रन्ते प्रयाहि भरतर्षभ । ९९०
पाण्डुपुत्त्रस्य सैन्यानि कुरु सर्व्वाणि भस्मसात् । ततस्तूर्य्यसहस्राणि भेरीणामयुतानि च ।
वाद्यमानान्यरोचन्त मेघशब्दा यथा दिवि । प्रतिगृह्य तु तद्वाक्यं रथस्थो रथसत्तमः ।
अभ्यभाषत राधेयः शल्यं युद्धविशारदं । चोदयाश्वान् महाबाहो यावद्धन्मि धनञ्जयं ।
भीमसेनं यमौ चोभौ राजानञ्च युधिष्ठिरं । अद्य पश्यतु मे शल्य बाहुवीर्य्यं धनञ्जयः ।
अस्यतः कङ्कपत्राणां सहस्राणि शतानि च । अद्य क्षेप्स्याम्यहं शल्य शरान् परमतेजनान् । ९९५
पाण्डवानां विनाशाय दुर्य्योधनजयाय च ।
॥ शल्य उवाच ॥ सूतपुत्त्र कथं नु त्वं पाण्डवानवमन्यसे । सर्व्वास्त्रज्ञान् महेष्वासान् सर्व्वानेव महाबलान् ।
अनिवर्त्तिनो महाभागानजय्यान् सत्यविक्रमान् । अपि सञ्जनयेयुर्ये भयं साक्षाच्छतक्रतोः ।
यदा श्रोष्यसि निर्घोषं विस्फूर्ज्जितमिवाशनेः । राधेय गाण्डिवस्याजौ तदा नैवं वदिष्यसि ।
यदा द्रक्ष्यसि भीमेन कुञ्जरानीकमाहवे । विशीर्णदन्तं निहतं तदा नैवं वदिष्यसि । १०००
यदा द्रक्ष्यसि संग्रामे धर्म्मपुत्त्रं यमौ तथा । शितैः पृषत्कैः कुर्व्वाणमभ्रच्छायामिवाम्बरे ।
अस्यतः क्षिण्वतश्चारीन् लघुहस्तान् दुरासदान् । पार्थिवानपि चान्यांस्त्वं तदा नैवं वदिष्यसि ।
॥ सञ्जय उवाच ॥ अनादृत्य तु तद्वाक्यं मद्रराजेन भाषितं । याहीत्येवाब्रवीद्वाक्यं मद्रराजं तरस्विनं ।
इति श्रीमहाभारते कर्णपर्व्वणि कर्णशल्यसंवादे षट्त्रिंशोऽध्यायः ॥ ३६ ॥
॥ सञ्जय उवाच ॥ दृष्ट्वा कर्णं महेष्वासं युयुत्सुं समवस्थितं । चुक्रुशुः कुरवः सर्व्वे हृष्टरूपाः समन्ततः ।
ततो दुन्दुभिनिर्घोषैर्भेरीणां निनदेन च । बाणशब्दैश्च विविधैर्गर्ज्जितैश्च तरस्विनां । १००५
निर्य्ययुस्तावका युद्धे मृत्युं कृत्वा निवर्त्तनं । प्रयाते तु ततः कर्णे योधेषु मुदितेषु च ।
चचाल पृथिवी राजन् ररास च सुविस्तरं । निःसरन्तो व्यदृश्यन्त सूर्य्यात् सप्त महाग्रहाः ।
उल्कापाताश्च सञ्जज्ञुर्दिशां दाहास्तथैव च । शुष्काशन्यश्च सम्पेतुर्व्ववुर्व्वाताश्च भैरवाः ।
मृगपक्षिगणाश्चैव पृतनां बहुशस्तव । अपसव्यं तदा चक्रुर्वेदयन्तो महाभयं ।
प्रस्थितस्य च कर्णस्य निपेतुस्तुरगा भुवि । अस्थिवर्षञ्च पतितमन्तरीक्षाद्भयानकं । १०१०
जज्वलुश्चैव शस्त्राणि ध्वजाश्चैव चकम्पिरे । अश्रूणि च व्यमुञ्चन्त वाहनानि विशाम्पते ।
एते चान्ये च बहव उत्पातास्तत्र दारुणाः । समुत्पेतुर्व्विनाशाय कौरवाणां सुदारुणाः ।
न च तान् गणयामासुः सर्व्वे दैवेन मोहिताः । प्रस्थितं सूतपुत्त्रञ्च जयेत्यूचुर्नराधिपाः ।
निर्ज्जितान् पाण्डवांश्चैव मेनिरे तत्र कौरवाः ।
ततो रथस्थः परवीरहन्ता भीष्मद्रोणावतिवीर्य्यौ समीक्ष्य । समुज्ज्वलद्भास्करपावकाभो वैकर्त्तनोऽसौ रथकुञ्जरो नृप । १०१५

स शल्यमाभाष्य जगाद वाक्यं पार्थस्य कर्म्मातिशयं विचिन्त्य। मानेन दर्पेण विदह्यमानः क्रोधेन दीप्यन्निव निःश्वसंश्च।
नाहं महेन्द्रादपि वज्रपाणेः क्रुद्धाद्विभेम्यायुधवान् रथस्थः। दृष्ट्वा हि भीष्मप्रमुखान् शयानानतीव मां ह्यस्थिरता जहाति।
महेन्द्रविष्णुप्रतिमावनिन्दितौ रथाश्वनागप्रवरप्रमाथिनौ। अवध्यकल्पौ निहतौ यदा परैस्ततो न मेऽप्यस्ति रणेऽद्य साध्वसं।१०२०
समीक्ष्य संख्येऽतिबलान्नराधिपान् ससूतमातङ्गरथान् परैर्हतान्। कथं न सर्व्वानहितान्वधेऽवधीन्महास्त्रविद्ब्राह्मणपुङ्गवो गुरुः।
स संस्मरन् द्रोणमहं महाहवे ब्रवीमि सत्यं कुरवो निबोधत। न वो मदन्यः प्रसहेद्रणेऽर्ज्जुनं समागतं मृत्युमिवोग्ररूपिणं।
शिक्षा प्रसादश्च बलं धृतिश्च द्रोणे महास्त्राणि च सन्नतिश्च। स चेदगान्मृत्युवशं महात्मा सर्व्वानन्यानातुरानद्य मन्ये।
नेह ध्रुवं किञ्चिदपि प्रचिन्तयन् विद्यां लोके कर्म्मणो दैवयोगात्। सूर्य्योदये को हि विमुक्तसंशयो भावं कुर्व्वीताद्य गुरौ विपातिते।
न नूनमस्त्राणि बलं पराक्रमः क्रिया सुनीतं परमायुधानि वा। अलं मनुष्यस्य सुखाय वर्त्तितुं तथा हि युद्धे निहतः परैर्गुरुः। १०२५
हुताशनादित्यसमानतेजसं पराक्रमे विष्णुपुरन्दरोपमं। नये बृहस्पत्युशनोः सदा समं न चैनमस्त्रं तदुपास्त दुःसहं।
सम्प्राक्रुष्टे रुदिते स्त्रीकुमारे पराभूते पौरुषे धार्त्तराष्ट्रे। मया कृत्यमिति जानामि शल्य प्रयाहि तस्माद्द्विषतामनीकं।
यत्र राजा पाण्डवः सत्यसन्धो व्यवस्थितो भीमसेनार्ज्जुनौ च। वासुदेवः सात्यकिः सृञ्जयाश्च यमौ च कस्तान् विषहेन्मदन्यः।
तस्मात् क्षिप्रं मद्रपते प्रयाहि रणे पाञ्चालान् पाण्डवान् सृञ्जयांश्च। तान् वा हनिष्यामि समेत्य संख्ये यास्यामि वा द्रोणपथा यमाय।
न त्वेवाहं न गमिष्यामि मध्ये तेषां शूराणामिति मां शल्य विद्धि। मित्रद्रोहो मर्षणीयो न मेऽयं त्यक्त्वा प्राणाननुयास्यामि द्रोणं। १०३०
प्राज्ञस्य मूढस्य च जीवितान्ते नास्ति प्रमोक्षोऽन्तकसत्कृतस्य। अतो विद्वन्नभियास्यामि पार्थान् दिष्टं न शक्यं व्यतिवर्त्तितुं वै।
कल्याणवृत्तः सततं हि राजा वैचित्रवीर्य्यस्य सुतो ममासीत्। तस्यार्थसिद्ध्यर्थमहं त्यजामि प्रियान् भोगान् दुस्त्यजं जीवितञ्च।
वैयाघ्रचर्म्माणमकूजनाक्षं हेमत्रिकोशं रजतत्रिवेणुं। रथप्रबर्हं तुरगप्रबर्हैर्युक्तं प्रादान्मह्यमिमं हि रामः।
धनूंषि चित्राणि निरीक्ष्य शल्य ध्वजान् गदाः सायकांश्चोग्ररूपान्। असिञ्च दीप्तं परमायुधञ्च शङ्खञ्च शुभ्रं स्वनवन्तमुग्रं
पताकिनं वज्रनिपातनिःस्वनं सिताश्वयुक्तं शुभतूणशोभितं। इमं समास्थाय रथं रथर्षभं रणे हनिष्याम्यहमर्ज्जुनं बलात्।१०३५
तञ्चेन्मृत्युः सर्व्वहरोऽभिरक्षेत् सदा प्रमत्तः समरे पाण्डुपुत्त्रं। तं वा हनिष्यामि रणे समेत्य यास्यामि वा भीष्ममुखो यमाय।
यमवरुणकुवेरवासवा वा यदि युगपत् सगणा महाहवे। जुगुपिषव इहाद्य पाण्डवं किं बहुना सह तैर्ज्जयामि तं।
॥ सञ्जय उवाच॥ इति रणरभसस्य कत्थतस्तदुपनिशम्य वचः स मद्रराट्। अवहसदवमन्य वीर्य्यवान् प्रतिषिषिधे च जगाद चोत्तरं।
॥ शल्य उवाच॥ विरम विरम कर्ण कत्थनादतिरभसोऽप्यतिवाच्यमुक्तवान्। क्व च हि नरवरो धनञ्जयः क्व पुनरहो पुरुषाधमो भवान्।
यदुसदनमुपेन्द्रपालितं त्रिदिवमिवामरराजरक्षितं। प्रसभमतिविलोड्य को हरेत् पुरुषवरावरजामृतेऽर्ज्जुनात्। १०४०
त्रिभुवनविभुमीश्वरेश्वरं क इह पुमान् भवमाह्वयेद्युधि। मृगवधकलहे ऋतेऽर्ज्जुनात् सुरपतिवीर्य्यसमप्रभावतः।

असुरसुरमहोरगान्नराण् गरुडपिशाचसयक्षराक्षसान् । इषुभिरजयदग्निगौरवात् स्वभिलषितञ्च हविर्ददौ जयः ।
स्मरसि ननु यदा परैर्हृतः स च धृतराष्ट्रसुतोऽपि मोक्षितः । दिनकरसदृशैः शरोत्तमैर्यदा कुरुषु बहून् विनिहत्य तानरीन् ।
प्रथममपि पलायिते त्वयि प्रियकलहा धृतराष्ट्रसूनवः । स्मरसि ननु यदा प्रमोचिताः खचरगणानवजित्य पाण्डवैः ।
समुदितबलवाहनाः पुनः पुरुषवरेण जिताः स्म गोग्रहे । सगुरुगुरुसुताः सभीष्मकाः किमुत जितः स तदा त्वयाऽर्जुनः । १०४५
इदमपरमुपस्थितं पुनस्तव निधनाय सुयुद्धमद्य वै । यदि न रिपुभयात् पलायसे समरगतोऽद्य हतोऽसि सूतज ।
॥ सञ्जय उवाच ॥ इति बहुपरुषं प्रभाषति प्रमनसि मद्रपतौ रिपुस्तवं । भृशमभिरुषितः परन्तपः कुरुपृतनापतिराह मद्रपं ।
॥ कर्ण उवाच ॥ भवतु भवतु किं विकत्थसे ननु मम तस्य हि युद्धमुद्यतं । यदि स जयति मामिहाहवे तत इदमस्तु सुकत्थितं तव ।

॥ सञ्जय उवाच ॥ एवमस्त्विति मद्रेश उक्त्वा नोत्तरमुक्तवान् । याहि शल्येति चाप्येनं कर्णः प्राह युयुत्सया ।
स रथः प्रययौ शत्रून् श्वेताश्वः शल्यसारथिः । निघ्नन्नमित्रान् समरे तमो घ्नन् सविता यथा । १०५०
ततः प्रायात् प्रीतिमान् वै रथेन वैयाघ्रेण श्वेतयुजाऽथ कर्णः । स चालोक्य ध्वजिनीं पाण्डवानां धनञ्जयं त्वरया पर्यपृच्छत् ।

इति श्रीमहाभारते कर्णपर्व्वणि मद्रराजकर्णसंवादे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

॥ सञ्जय उवाच ॥ प्रयाणे च ततः कर्णो हर्षयन् वाहिनीं तव । एकैकं समरे दृष्ट्वा पाण्डवान् पर्यपृच्छत ।
यो ममाद्य महात्मानं दर्शयेच्छ्वेतवाहनं । तस्मै दद्यामभिप्रेतधनं यन्मनसेच्छति ।
न चेत्तदभिमन्येत तस्मै दद्यामहं पुनः । शकटं रत्नसंपूर्णं यो मे ब्रूयाद्धनञ्जयं । १०५५
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् । शतं दद्यां गवां तस्मै नैत्यकं कांस्यदोहनं ।
शतं ग्रामवरांश्चैव दद्यामर्जुनदर्शिने । तथा तस्मै पुनर्दद्यां श्वेतमश्वतरीरथं ।
युक्तमञ्जनकेशीभिर्यो मे ब्रूयाद्धनञ्जयं । न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यं तस्मै पुनर्दद्यां सौवर्णं हस्तिषड्गवं । तथाऽप्यस्मै पुनर्दद्यां स्त्रीणां शतमलङ्कृतं ।
श्यामानां निष्ककण्ठीनां गीतवाद्यविपश्चितां । न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् । १०६०
तस्मै दद्यां शतं नागान् शतं ग्रामान् शतं रथान् । सुवर्णस्य च मुख्यस्य हयाग्र्याणां शतं शतान् ।
ऋद्ध्या गुणैः सुदान्तांश्च धुर्य्यवाहान् सुशिक्षितान् । तथा सुवर्णशृङ्गीणां गोधेनूनां चतुःशतं ।
दद्यां तस्मै सुवत्सानां यो मे ब्रूयाद्धनञ्जयं । न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यदस्मै वरं दद्यां श्वेतान् पञ्चशतान् हयान् । हेमभाण्डपरिच्छन्नान् सुमृष्टमणिभूषणान् ।
सुदान्तानपि चैवाहं दद्यामष्टादशापरान् । रथञ्च शुभ्रं सौवर्णं दद्यां तस्मै स्वलङ्कृतं । १०६५
युक्तं परमकाम्बोजैर्यो मे ब्रूयाद्धनञ्जयं । न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यदस्मै वरं दद्यां कुञ्जराणां शतानि षट् । काञ्चनैर्विविधैर्भाण्डैराच्छन्नान् हेममालिनः ।
उत्पन्नानपरान्तेषु विनीतान् हस्तिशिक्षकैः । न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान्
अन्यं तस्मै वरं दद्यां वैश्यग्रामांश्चतुर्दश । सुस्फीतान् धनसंयुक्तान् प्रत्यासन्नवनोदकान् ।
अकुतोभयान् सुसम्पन्नान् राजभोज्यांश्चतुर्दश । दासीनां निष्ककण्ठीनां मागधीनां शतन्तथा । १०७०

प्रत्यक्षमथवा दद्यां यो मे ब्रूयाद्धनञ्जयं । न चेत्तदभिमन्येत पुरुषोऽर्ज्जुनदर्शिवान् ।
अन्यं तस्मै वरं दद्यां यमसौ कामयेत् स्वयं । पुत्रदारान् विहारांश्च यदन्यद्वित्तमस्ति मे ।
तच्च तस्मै पुनर्दद्यां यद्यच्च मनसेच्छति । हत्वा च सहितौ कृष्णौ तयोर्वित्तानि सर्व्वशः ।
तस्मै दद्यामहं यो मे प्रब्रूयात् केशवार्ज्जुनौ । एता वाचः सुबहुशः कर्ण उच्चारयन् युधि ।
दध्मौ सागरसम्भूतं सुस्वरं शङ्खमुत्तमं । ता वाचः सूतपुत्रस्य तथा युक्ता निशम्य तु ।　　१७७५
दुर्य्योधनो महाराज संहृष्टः सानुगोऽभवत् । ततो दुन्दुभिनिर्घोषो मृदङ्गानाञ्च सर्व्वशः ।
सिंहनादः सवादित्रः कुञ्जराणाञ्च निःस्वनः । प्रादुरासीत्तदा राजन् त्वत्सैन्ये पुरुषर्षभ ।
योधानां सम्प्रहृष्टानां तथा समभवत् स्वनः । तथा प्रहृष्टे सैन्ये तु प्लवमानं महारथं ।
विकत्थमानञ्च तदा राधेयमरिकर्षणं । मद्रराजः प्रहस्येदं वचनं प्रत्यभाषत ।
इति श्रीमहाभारते कर्णपर्व्वणि कर्णविकत्थने अष्टत्रिंशोऽध्यायः ॥ ३८ ॥　　१७८०
॥ शल्य उवाच ॥ मा सूतपुत्र दानेन सौवर्णं हस्तिषड्गवं । प्रयच्छ पुरुषायाद्य द्रक्ष्यसि त्वं धनञ्जयं ।
बाल्यादिह त्वं त्यजसि वसु वैश्रवणो यथा । अयत्नेनैव राधेय द्रष्टास्यद्य धनञ्जयं ।
परासृजसि वित्तं किञ्चित्त्वं बहु मूढवत् । अपात्रदाने ये दोषास्तान् मोहान्नावबुध्यसे ।
यत्त्वं प्रेरयसे वित्तं बहु तेन खलु त्वया । शक्यं बहुविधैर्यज्ञैर्यष्टुं सूत यजस्व तैः ।
यच्च प्रार्थयसे हन्तुं कृष्णौ मोहाद्वृथैव तत् । न हि शुश्रुम सम्मर्द्दे क्रोष्ट्रा सिंहौ निपातितौ ।　　१७८५
अप्रार्थितं प्रार्थयसे सुहृदो न हि सन्ति ते । ये त्वां निवारयन्त्याशु प्रपतन्तं हुताशने ।
कार्य्याकार्य्यं न जानीषे कालपक्वोऽस्यसंशयं । बह्वबद्धमकर्णीयं को हि ब्रूयाज्जिजीविषुः ।
समुद्रतरणं दोर्भ्यां कण्ठे बद्ध्वा यथा शिलां । गिर्य्यग्राद्वा निपतनं तादृक् तव चिकीर्षितं ।
सहितः सर्व्वयोधैस्त्वं व्यूढानीकैः सुरक्षितः । धनञ्जयेन युध्यस्व श्रेयश्चेत् प्राप्तुमिच्छसि ।
हितार्थं धार्त्तराष्ट्रस्य ब्रवीमि त्वां न हिंसया । श्रद्धत्स्वैवं मया प्रोक्तं यदि तेऽस्ति जिजीविषा ।　　१७९०
॥ कर्ण उवाच ॥ स्वबाहुवीर्य्यमाश्रित्य प्रार्थयाम्यर्ज्जुनं रणे । त्वन्तु मित्रमुखः शत्रुर्मां भीषयितुमिच्छसि ।
न मामस्मादभिप्रायात् कश्चिदद्य निवर्त्तयेत् । अपीन्द्रो वज्रमुद्यम्य किन्नु मर्त्त्यः कथञ्चन ।
॥ सञ्जय उवाच ॥ इति कर्णस्य वाक्यान्ते शल्यः प्राहोत्तरं वचः । चुकोपयिषुरत्यर्थं कर्णं मद्रेश्वरः पुनः ।
यदा वै त्वां फाल्गुनवेगयुक्ता ज्याचोदिता हस्तवता विसृष्टाः । अन्वेतारः कङ्कपत्राः शिताग्रास्तदा तप्स्यस्यर्ज्जुनस्यानुयोगात् ।
यदा दिव्यं धनुरादाय पार्थः प्रतापयन् पृतनां सव्यसाची । त्वां मर्द्दयिष्यन्निशितैः पृषत्कैस्तदा पश्चात्तप्स्यसे सूतपुत्र । १७९५
बालश्चन्द्रं मातुरङ्के शयानो यथा कश्चित् प्रार्थयतेऽपहर्त्तुं । तद्वन्मोहात् द्योतमानं रथस्थं स प्रार्थयस्यर्ज्जुनं जेतुमद्य ।
त्रिशूलमाश्रित्य सुतीक्ष्णधारं सर्व्वाणि गात्राणि निघर्षसि त्वं । सुतीक्ष्णधारोपमकर्म्मणा त्वं युयुत्ससे योऽर्ज्जुनेनाद्य कर्ण ।
क्रुद्धं सिंहं केशरिणं बृहन्तं बालो मूढः क्षुद्रमृगस्तरस्वी । समाह्वयेत्तद्वदेतत्तवाद्य समाह्वानं सूतपुत्रार्ज्जुनस्य ।
मा सूतपुत्राह्वय राजपुत्रं महावीर्य्यं केशरिणं यथैव । वने शृगालः पिशितेन तृप्तो मा पार्थमासाद्य विनङ्क्ष्यसि त्वं ।
ईषादन्तं महानागं प्रभिन्नकरटामुखं । शशको ह्वयसे युद्धे कर्ण पार्थं धनञ्जयं ।　　१८००

भीरूणां त्रासजननं शल्य हर्षकरं मम। त्वन्तु दुष्प्रकृतिर्मूढो महायुद्धेष्वकोविदः। १८३०
भयावतीर्णः संत्रासादबद्धं बहु भाषसे। संस्तौषि तौ तु केनापि हेतुना त्वं कुदेशज।
तौ हत्वा समरे हन्ता त्वामद्य सहबान्धवं। पापदेशज दुर्बुद्धे क्षुद्र क्षत्रियपांसन।
सुहृद्भूत्वा रिपुः किं मां कृष्णाभ्यां भीषयिष्यसि। तौ वा मामद्य हन्तारौ हनिष्ये वाऽपि तावहं।
नाहं बिभेमि कृष्णाभ्यां विजानन्नात्मनो बलं। वासुदेवसहस्रं वा फाल्गुनानां शतानि वा।
अहमेको हनिष्यामि जोषमास्स्व कुदेशज। स्त्रियो बालाश्च वृद्धाश्च प्रायः क्रीडागता जनाः। १८३५
या गाथाः सम्प्रगायन्ति कुर्वन्तोऽध्ययनं यथा। ता गाथाः शृणु मे शल्य मद्रकेषु दुरात्मसु।
ब्राह्मणैः कथिताः पूर्वं यथावद्राजसन्निधौ। श्रुत्वा चैकमना मूढ क्षम वा ब्रूहि चोत्तरं।
मित्रध्रुङ्मद्रको नित्यं यो नो द्वेष्टि स मद्रकः। मद्रके सङ्गतं नास्ति क्षुद्रवाक्ये नराधमे।
दुरात्मा मद्रको नित्यं नित्यमानृतिकोऽनृजुः। यावदन्तं हि दौरात्म्यं मद्रकेष्विति नः श्रुतं।
पिता पुत्रश्च माता च श्वश्रूश्वशुरमातुलाः। जामाता दुहिता भ्राता नप्ता ये ते च बान्धवाः। १८४०
वयस्याभ्यागताश्चान्ये दासीदासञ्च सङ्गतं। पुम्भिर्विमिश्रा नार्यश्च ज्ञाताज्ञाताः स्वयेच्छया।
येषां गृहेष्वशिष्टानां सक्तुमत्स्याशिनां तथा। पीत्वा सीधु सगोमांसं क्रन्दन्ति च हसन्ति च।
गायन्ति चाप्यबद्धानि प्रवर्त्तन्ते च कामतः। कामप्रलापिनोऽन्योन्यं तेषु धर्मः कथम्भवेत्।
मद्रकेष्ववलिप्तेषु प्रख्याताशुभकर्मसु। नापि वैरं न सौहार्दं मद्रकेण समाचरेत्।
मद्रके सङ्गतं नास्ति मद्रको हि सदा मलः। मद्रकेषु च संसृष्टं शौचं गान्धारकेषु च। १८४५
राजयाजकयाज्ये च नष्टं दत्तं हविर्भवेत्। शूद्रसंस्कारको विप्रो यथा याति पराभवं।
यथा ब्रह्मद्विषो नित्यं गच्छन्तीह पराभवं। तथैव सङ्गतं कृत्वा नरः पतति मद्रकैः।
मद्रके सङ्गतं नास्ति हतं वृश्चिक ते विषं। आथर्व्वणेन मन्त्रेण यथा शान्तिः कृता मया।
इति वृश्चिकदष्टस्य विषवेगहतस्य च। कुर्व्वन्ति भेषजं प्राज्ञाः सत्यं तच्चापि दृश्यते।
एवं विद्वन् जोषमास्स्व शृणु चात्रोत्तरं वचः। वासांस्युत्सृज्य नृत्यन्ति स्त्रियो या मद्यमोहिताः। १८५०
मैथुनेऽसंयताश्चापि यथाकामचराश्च ताः। तासां पुत्रः कथं धर्मं मद्रको वक्तुमर्हति।
यास्तिष्ठन्त्यः प्रमेहन्ति यथैवोष्ट्रदशेरकाः। तासां विभ्रष्टधर्म्माणां निर्लज्जानां ततस्ततः।
त्वं पुत्रस्तादृशीनां हि धर्मं वक्तुमिहेच्छसि। सुवीरकं याच्यमाना मद्रिका कर्षति स्फिचौ।
अदातुकामा वचनमिदं वदति दारुणं। मा मां सुवीरकं कश्चिद्याचतां दयितं मम।
पुत्रं दद्यां पतिं दद्यां न तु दद्यां सुवीरकं। गौर्य्यो बृहत्यो निर्ह्रीका मद्रिकाः कम्बलावृताः। १८५५
घस्मरा नष्टशौचाश्च प्राय इत्यनुशुश्रुम। एवमादि मयाऽन्यैर्वा शक्यं वक्तुं भवेद्बहु।
आकेशाग्रनखाग्राच्च वक्तव्येषु कुवर्त्मसु। मद्रकाः सिन्धुसौवीरा धर्मं विद्युः कथन्त्विह।
पापदेशोद्भवा म्लेच्छा धर्माणामविचक्षणाः। एष मुख्यतमो धर्मः क्षत्रियस्येति नः श्रुतं।
यदाजौ निहतः शेते सद्भिः समभिपूजितः। आयुधानां साम्पराये यन्मुच्येयमहं ततः।

भवानेव विशिष्टो हि पतत्रिभ्यो विहङ्गम । प्रसार्य्यमाणास्तैः सर्व्वैरल्पबुद्धिर्विहङ्गजः ।
तद्वचः सत्यमित्येव मौर्ख्याद्दर्पाच्च मन्यते । तान् सोऽभिपत्य जिज्ञासुः क एषां श्रेष्ठभागिति । १८९०
उच्छिष्टदर्पितः काको बहूनां दूरपातिनां । तेषां च प्रवरं मेने हंसानां दूरपातिनां ।
तमाह्वयत दुर्ब्बुद्धिः पताम इति पक्षिणं । तच्छ्रुत्वा प्राहसन् हंसा ये तत्रासन् समागताः ।
भाषतो बहु काकस्य बलिनः पतताम्बराः । इदमूचुः स्म चक्राङ्गा वचः काकं विहङ्गमाः ।
॥ हंसा ऊचुः ॥ वयं हंसाश्चरामेमां पृथिवीं मानसौकसः । पक्षिणाञ्च वयं नित्यं दूरपातेन पूजिताः ।
कथं नु हंसं बलिनं चक्राङ्गं दूरपातिनं । काको भूत्वा निपतने समाह्वयसि दुर्म्मते । १८९५
कथं त्वं पतिता काक सहास्माभिर्ब्रवीहि तत् । अथ हंसवचो मूढः कुत्सयित्वा पुनः पुनः ।
प्रजगादोत्तरं काकः कत्थनो जातिलाघवात् ।
॥ काक उवाच ॥ शतमेकञ्च पातानां पतिताऽस्मि न संशयः । शतयोजनमेकैकं विचित्रं विविधं तथा ।
उड्डीनमवडीनञ्च प्रडीनं डीनमेव च । निडीनमथ संडीनं तिर्य्यग्डीनगतानि च ।
विडीनं परिडीनञ्च पराडीनं सुडीनकं । अतिडीनं महाडीनं निडीनं परिडीनकं । १९००
अवडीनं प्रडीनञ्च संडीनं डीनडीनकं । संडीनोड्डीनडीनञ्च पुनर्डीनं विडीनकं ।
सम्पातं समुदीर्णञ्च ततोऽन्यद्व्यतिरिक्तकं । गतागतं प्रतिगतं बह्वीश्च निकुडीनिकाः ।
कर्त्ताऽस्मि मिषतां वोऽद्य ततो द्रक्ष्यथ मे बलं । तेषामन्यतमेनाहं पतिष्यामि विहायसं ।
प्रदिशध्वं यथान्यायं केन हंसाः पताम्यहं । ते वै ध्रुवं विनिश्चित्य पतध्वं न मया सह ।
पातैरेभिः खलु खगाः पतितुं खे निराश्रये । एवमुक्ते तु काकेन प्रहस्यैको विहङ्गमः । १९०५
उवाच काकं राधेय वचनं तन्निबोध मे ।
॥ हंस उवाच ॥ शतमेकञ्च पातानां त्वं काक पतिता ध्रुवं । एकमेव तु यं पातं विदुः सर्व्वे विहङ्गमाः ।
तमहं पतिता काक नान्यं जानामि कञ्चन । पत त्वमपि रक्ताक्ष येन पातेन मन्यसे ।
अथ काकाः प्रजहसुर्ये तत्रासन् समागताः । कथमेकेन पातेन हंसः पातशतं जयेत् ।
एकेनैव शतस्यैव पातेनाभिपतिष्यति । हंसस्य पतितं काको बलवानाशुविक्रमः । १९१०
प्रपेततुः स्पर्द्धया च ततस्तौ हंसवायसौ । एकपाती च चक्राङ्गः काकः पातशतेन च ।
पतिता वाऽथ चक्राङ्गः पतिता वाऽथ वायसः । विसिस्मापयिषुः पातैराचक्षाणोऽऽत्मनः क्रियाः ।
अथ काकस्य चित्राणि पतितानि मुहुर्म्मुहुः । दृष्ट्वा प्रमुदिताः काका विनेदुरधिकैः स्वरैः ।
हंसांश्चावहसन्ति स्म प्रावदन्नप्रियाणि च । उत्पत्योत्पत्य च मुहुर्म्मुहूर्त्तमिति चेति च ।
वृक्षाग्रेभ्यः स्थलेभ्यश्च निपतन्त्युत्पतन्ति च । कुर्व्वाणा विविधान्रावानाशंसन्तो जयं तथा । १९१५
हंसस्तु मृदुनैकेन विक्रान्तुमुपचक्रमे । प्रत्यहीयत काकाच्च मुहूर्त्तमिव मारिष ।
अवमन्य च हंसांस्तानिदं वचनमब्रुवन् । योऽसावुत्पतितो हंसः सोऽयमेवं प्रहीयते ।
अथ हंसः स तच्छ्रुत्वा प्रापतत् पश्चिमां दिशं । उपर्य्युपरि वेगेन सागरं मकरालयं ।

भ्रातरं निहतं दृष्ट्वा समरे सव्यसाचिना । पश्यतां कुरुवीराणां प्रथमं त्वं पलायितः ।
तथा द्वैतवने कर्ण गन्धर्वैः समभिद्रुतः । कुरून् समग्रानुत्सृज्य प्रथमं त्वं पलायितः । १९५०
हत्वा जित्वा च गन्धर्वांश्चित्रसेनमुखान् रणे । कर्ण दुर्योधनं पार्थः सभार्यं सममोचयत ।
पुनः प्रभावः पार्थस्य पौराणः केशवस्य च । कथितः कर्ण रामेण सभायां राजसंसदि ।
सततञ्च त्वमश्रौषीर्वचनं द्रोणभीष्मयोः । अवध्यौ वदतः कृष्णौ सन्निधौ च महीक्षितां ।
कियन्तं तत् प्रवक्ष्यामि येन येन धनञ्जयः । त्वत्तोऽतिरिक्तः सर्वेभ्यो भूतेभ्यो ब्राह्मणो यथा ।
इदानीमेव द्रष्टासि प्रधाने स्यन्दने स्थितौ । पुत्रञ्च वसुदेवस्य कुन्तीपुत्रञ्च पाण्डवं । १९५५
यथाश्रयत चक्राङ्गं वायसो बुद्धिमास्थितः । तथाश्रयस्व वार्ष्णेयं पाण्डवञ्च धनञ्जयं ।
यदा त्वं युधि विक्रान्तौ वासुदेवधनञ्जयौ । द्रष्टास्येकरथे कर्ण तदा नैवं वदिष्यसि ।
यदा शरशतैः पार्थो दर्पं तव वधिष्यति । तदा त्वमन्तरं द्रष्टा आत्मनश्चार्ज्जुनस्य च ।
देवासुरमनुष्येषु प्रख्यातौ यौ नरोत्तमौ । तौ मावमंस्था मौर्ख्यात्त्वं खद्योत इव रोचनौ ।
सूर्याचन्द्रमसौ यद्वत्तद्वदर्ज्जुनकेशवौ । प्रकाशेनाभिविख्यातौ त्वन्तु खद्योतवन्नृषु । १९६०
एवं विद्वन्माऽवमंस्थाः सूतपुत्राच्युतार्ज्जुनौ । नृसिंहौ तौ महात्मानौ जोषमास्स्व विकत्थने ।
इति श्रीमहाभारते कर्णपर्व्वणि हंसकाकीयोपाख्याने एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

॥सञ्जय उवाच॥ मद्राधिपस्याधिरथिर्महात्मा वचो निशम्याप्रियमप्रतीतः । उवाच शल्यं विदितं ममैतद्यथाविधावर्ज्जुनवासुदेवौ ।
शौरी रथं वाहयतेऽर्ज्जुनस्य बलं महास्त्राणि च पाण्डवस्य । अहं विजानामि यथावदद्य परोक्षभूतं तव तत्तु शल्य ।
तौ चाप्यहं शस्त्रभृतां वरिष्ठौ व्यपेतभीर्योधयिष्यामि कृष्णौ । सन्तापयत्यभ्यधिकन्तु रामाच्छापोऽद्य मां ब्राह्मणसत्तमाच्च ।
अवसं वै ब्राह्मणच्छद्मनाऽहं रामे पुरा दिव्यमस्त्रं चिकीर्षुः । तत्रापि मे देवराजेन विघ्नो हितार्थिना फाल्गुनस्यैव शल्य । १९६५
कृतो विभेदेन ममोरुमेत्य प्रविश्य कीटस्य तनुं विरूपां । ममोरुमेत्य प्रबिभेद कीटः सुप्ते गुरौ तत्र शिरो निधाय ।
उरुप्रभेदाच्च महान् बभूव शरीरतो मे घनशोणितौघः । गुरोर्भयाच्चापि न चेलिवानहं ततो विबुद्धो ददृशे स विप्रः ।
स धैर्य्ययुक्तं प्रसमीक्ष्य मां वै न त्वं विप्रः कोऽसि सत्यं वदेति । तस्मै तदात्मानमहं यथावदाख्यातवान् सूत इत्येव शल्य ।
स मां निशम्याथ महातपस्वी संशप्तवान् रोषपरीतचेताः । सूतोपधावाप्तमिदं तवास्त्रं न कर्म्मकाले प्रतिभास्यति त्वां ।
अन्यत्र तस्मात्तव मृत्युकालादब्राह्मणे ब्रह्म न हि ध्रुवं स्यात् । तदद्य पर्य्याप्तमतीव चास्त्रमस्मिन् संग्रामे तुमुलेऽतीव भीमे । १९७०
योऽयं शल्य भरतेषूपपन्नः प्रकर्षणः सर्व्वहरोऽतिभीमः । सोऽभिमन्ये क्षत्रियाणां प्रवीरान् प्रतापिता बलवान् वै विमर्द्दः ।
शल्योग्रधन्वानमहं वरिष्ठं तरस्विनं भीमसहप्रवीर्य्यं । सत्यप्रतिज्ञं युधि पाण्डवेयं धनञ्जयं मृत्युमुखं नयिष्ये ।
अस्त्रं हि मे तत् प्रतिपन्नमद्य येन क्षेप्स्ये समरे शत्रुपूगान् । प्रतापिनं बलवन्तं कृतास्त्रं तमुग्रधन्वानममितौजसञ्च ।
क्रूरं शूरं रौद्रममित्रसाहं धनञ्जयं संयुगेऽहं हनिष्ये । अपाम्पतिर्वेगवानप्रमेयो निमज्जयिष्यन् बहुलाः प्रजाश्च ।
महावेगं संकुरुते समुद्रो वेला चैनं धारयत्यप्रमेयं । प्रमुञ्चन्तं बाणसङ्घानमेयान् मर्म्मच्छिदो वीरहणः सुपत्त्रान् । १९७५
कुन्तीपुत्रं प्रत्ययोत्स्यामि युद्धे ज्याकर्षतामुत्तममद्य लोके । एवं बलेनातिबलं महास्त्रं समुद्रकल्पं सुदुरापमुग्रं ।
शरौघिणं पार्थिवान्मज्जयन्तं वेलेव पार्थमिषुभिः संसहिष्ये । अद्याहवे यस्य न तुल्यमन्यं मन्ये मनुष्यं धनुरादधानं ।

सुरासुरान् युधि वै यो जयेत तेनाद्य मे पश्य युद्धं सुघोरं । अतीव मानी पाण्डवो युद्धकामो ह्यमानुषैरेष्यति मे महास्त्रैः ।
तस्यास्त्रमस्त्रैः प्रतिहत्य संख्ये शरोत्तमैः पातयिष्यामि पार्थं । सहस्ररश्मिप्रतिमं ज्वलन्तं दिशश्च सर्व्वाः प्रपतन्तमुग्रं ।
तमोनुदं मेघ इवातिमात्रं धनञ्जयं छादयिष्यामि वाणैः । वैश्वानरं धूमशिखं ज्वलन्तं तेजस्विनं लोकमिमं दहन्तं । १९८०

पर्ज्जन्यभूतः शरवर्षैर्यथाऽग्निं तथा पार्थं शमयिष्यामि युद्धे । आशीविषं दुर्द्धरमप्रमेयं सुतीक्ष्णदंष्ट्रं ज्वलनप्रभावं ।
क्रोधप्रदीप्तं त्वहितं महान्तं कुन्तीपुत्रं शमयिष्यामि भल्लैः । प्रमाथिनं बलवन्तं प्रहारिणं प्रभञ्जनं मातरिश्वानमुग्रं ।
युद्धे सहिष्ये हिमवानिवाचलो धनञ्जयं क्रुद्धममृष्यमाणं । विशारदं रथमार्गेषु शक्तं धुर्य्यं नित्यं समरेषु प्रवीरं ।
लोके वरं सर्व्वधनुर्धराणां धनञ्जयं संयुगे संसहिष्ये । अद्याहवे यस्य न तुल्यमन्यं मन्ये मनुष्यं धनुराददानं ।

सर्व्वामिमां यः पृथिवीं विजिग्ये तेन प्रयोत्स्याम्यहमेत्य संख्ये । यः सर्व्वभूतानि सदैवकानि प्रस्थेऽजयत् खाण्डवे सव्यसाची । १९८५

को जीवितं रक्षमाणो हि तेन युयुत्सते मामृते मानुषोऽन्यः । मानी कृतास्त्रः कृतहस्तयोगो दिव्यास्त्रविच्छ्वेतहयः प्रमाथी ।
तस्याहमद्यातिरथस्य कायाच्छिरो हरिष्यामि शितैः पृषत्कैः । योत्स्याम्येनं शल्य धनञ्जयं वै मृत्युं पुरस्कृत्य रणे जयं वा ।
अन्यो हि न ह्येकरथेन मर्त्यो युध्येत यः पाण्डवमिन्द्रकल्पं । तस्याहवे पौरुषं पाण्डवस्य ब्रूयां हृष्टः समितौ क्षत्रियाणां ।
किं त्वं मूर्खः प्रसभं मूढचेता ममावोचः पौरुषं फाल्गुनस्य । अप्रियो यः परुषो निष्ठुरो हि क्षुद्रः क्षेप्ताक्षमिणश्चाक्षमावान् ।
हन्यामहं त्वादृशानां शतानि क्षमाम्यहं क्षमया कालयोगात् । अवोचस्त्वं पाण्डवार्थे प्रियाणि प्रधर्षयन्मां मूढवत्पापकर्म्मन् । १९९०

मय्यार्ज्जवे जिह्ममतिर्हतस्त्वं मित्रद्रोही सप्तपदं हि मैत्रं । कालस्त्वयं प्रत्युपयाति दारुणो दुर्य्योधनो युद्धमुपागमद्यत् ।
तस्यार्थसिद्धिं त्वभिकाङ्क्षमाणस्तमन्वये यत्र नैकान्त्यमस्ति । मित्रं मिन्देर्नन्दतेः प्रीयतेर्व्वा संत्रायतेर्म्मिनुतेर्म्मोदतेर्व्वा ।
ब्रवीमि ते सर्व्वमिदं ममास्ति तच्चापि सर्व्वं समवैति राजा । शत्रुः शदेः शासतेर्व्वा श्यतेर्व्वा शृणोतेर्व्वा श्वसतेः सीदतेर्व्वा ।

उपसर्गाद्बहुधा सूदतेश्च प्रायेण सर्व्वं त्वयि तच्च मह्यं । दुर्य्योधनार्थं तव च प्रियार्थं यशोऽर्थमात्मार्थमपीश्वरार्थं ।
तस्मादहं पाण्डववासुदेवौ योत्स्ये यत्नात् कर्म्म तत् पश्य मेऽद्य । अस्त्राणि पश्याद्य ममोत्तमानि ब्राह्म्याणि दिव्यान्यथ मानुषाणि । १९९५

आसादयिष्याम्यहमुग्रवीर्य्यं द्विपो द्विपं मत्तमिवातिमत्तः । अस्त्रं ब्राह्मं मनसा युद्धजय्यं क्षेप्स्ये पार्थायाप्रमेयं जयाय ।
तेनापि मे नैव मुच्येत युद्धे न चेत् पतेद्विषमे मेऽद्य चक्रं ।
वैवस्वतात् दण्डहस्ताद्वरुणाद्वाऽपि पाशिनः । सगदाद्वा धनपतेः सवज्राद्वाऽपि वासवात् ।
अन्यस्मादपि कस्माच्चिदमित्रादाततायिनः । इति शल्य विजानीहि यथा नाहं बिभेम्यतः ।
तस्मान्न मे भयं पार्थान्नापि चैव जनार्द्दनात् । सह युद्धं हि मे ताभ्यां साम्पराये भविष्यति । २०००
कदाचिद्विजयस्याहमस्त्रहेतोरटन्नृप । अज्ञानाद्धि क्षिपन् वाणान् घोररूपान् भयानकान् ।
होमधेन्वा वत्समस्य प्रमत्त इषुणाऽहनं । चरन्तं विजने शल्य ततोऽनुव्याजहार मां ।
यस्मात्त्वया प्रमत्तेन होमधेन्वा हतः सुतः । श्वभ्रे ते पततां चक्रमिति मां ब्राह्मणोऽब्रवीत् ।

युध्यमानस्य सङ्ग्रामे प्राप्तस्यैकायनं भयं । तस्माद्बिभेमि बलवद्ब्राह्मणव्याहृतादहं ।

एते हि सोमराजान ईश्वराः सुखदुःखयोः । अदां तस्मै गोसहस्रं बलीवर्द्दांश्च षट्शतान् । २००५

प्रसादं न लभे शल्य ब्राह्मणान्मद्रकेश्वर । ईषादन्तान् सप्तशतान् दासीदासशतानि च ।

ददतो द्विजमुख्यो मे प्रसादं न चकार सः । कृष्णानां श्वेतवत्सानां सहस्राणि चतुर्दश ।

आहरन्न लभे तस्मात् प्रसादं द्विजसत्तमात् । ऋद्धं गृहं सर्व्वकामैर्यच्च मे वसु किञ्चन ।

तत् सर्व्वमस्मै सत्कृत्य प्रयच्छामि न चेच्छति । ततोऽब्रवीन्मां याचन्तमपराधं प्रयत्नतः ।

व्याहृतं मच्छया सूत तत्तथा न तदन्यथा । अनृतोक्तं प्रजां हन्यात्ततः पापमवाप्नुयां । २०१०

तस्माद्धर्म्माभिरक्षार्थं नानृतं वक्तुमुत्सहे । मा त्वं ब्रह्मगतिं हिंस्याः प्रायश्चित्तं कृतं त्वया ।

मद्वाक्यं नानृतं लोके कश्चित् कुर्य्यात् समाप्नुहि । इत्येतत्ते मया प्रोक्तं क्षिप्तेनापि सुहृत्तया ।

जानामि त्वां विक्षिपन्तं जोषमास्स्वोत्तरं शृणु ।

इति श्रीमहाभारते कर्णपर्व्वणि कर्णशल्यसंवादे द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

॥ सञ्जय उवाच ॥ ततः पुनर्म्महाराज मद्रराजमरिन्दमः । अभ्यभाषत राधेयः सन्निवार्य्योत्तरं वचः ।

यत्त्वं निदर्शनार्थं मां शल्य जल्पितवानसि । नाहं शक्यस्त्वया वाचा विभीषयितुमाहवे । २०१५

यदि मां देवताः सर्व्वा योधयेयुः सवासवाः । तथापि मे भयं न स्यात् किमु पार्थात् सकेशवात् ।

नाहं भीषयितुं शक्यो वाङ्मात्रेण कथञ्चन । अन्यं जानीहि यः शक्यस्त्वया भीषयितुं रणे ।

नीचस्य बलमेतावत् पारुष्यं यत्त्वमात्थ मां । अशक्तो मद्गुणान् वक्तुं वल्गसे बहु दुर्म्मते ।

न हि कर्णः समुद्भूतो भयार्थमिह मद्रक । विक्रमार्थमहं जातो यशोऽर्थञ्च तथात्मनः ।

सखिभावेन सौहार्द्दान्मित्रभावेन चैव हि । कारणैस्त्रिभिरेतैस्त्वं शल्य जीवसि साम्प्रतं । २०२०

राज्ञश्च धार्त्तराष्ट्रस्य कार्य्यं सुमहदुद्यतं । मयि तच्चाहितं शल्य तेन जीवसि मे क्षणं ।

कृतश्च समयः पूर्व्वं क्षन्तव्यं विप्रियं तव । ऋते शल्यसहस्रेण विजयेयमहं परान् ।

मित्रद्रोहस्तु पापीयानिति जीवसि साम्प्रतं ।

इति श्रीमहाभारते कर्णपर्व्वणि कर्णशल्यसंवादे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

॥ शल्य उवाच ॥ ननु प्रलापाः कर्णैते न ब्रवीषि परान् प्रति । ऋते कर्णसहस्रेण शक्या जेतुं परान् युधि ।

॥ सञ्जय उवाच ॥ तथा ब्रुवन्तं परुषं कर्णं मद्राधिपस्तथा । परुषं द्विगुणं भूयः प्रोवाचाप्रियदर्शनं । २०२५

॥ कर्ण उवाच ॥ इदन्तु मे त्वमेकाग्रः शृणु मद्रजनाधिप । सन्निधौ धृतराष्ट्रस्य प्रोच्यमानं मया श्रुतं ।

देशांश्च विविधांश्चित्रान् पूर्व्वदत्तांश्च पार्थिवान् । ब्राह्मणाः कथयन्ति स्म धृतराष्ट्रनिवेशने ।

तत्र वृद्धः पुरावृत्ताः कथाः कश्चिद्द्विजोत्तमः । वाहीकदेशान् मद्रांश्च कुत्सयन् वाक्यमब्रवीत् ।

वहिष्कृता हिमवता गङ्गया च वहिष्कृताः । सरस्वत्या यमुनया कुरुक्षेत्रेण चापि ये ।

पञ्चानां सिन्धुषष्ठानां नदीनां येऽन्तराश्रिताः । तान् धर्म्मवाह्यानशुचीन् वाहीकान् परिवर्ज्जयेत् । २०३०

गोवर्द्धनो नाम वटः सुभद्रं नाम चत्वरं । एतद्राजकुलद्वारमाकुमारात् स्मराम्यहं ।

कार्य्येणात्यर्थगूढेन वाहीकेषूषितं मया । तत एषां समाचारः संवासाद्विदितो मया ।
शाकलं नाम नगरमापगा नाम निम्नगा । जर्त्तिका नाम वाहीकास्तेषां वृत्तं सुनिन्दितं ।
धाना गौड्यासवं पीत्वा गोमांसं लशुनैः सह । अपूपमांसवाट्यानामाशिनः शीलवर्ज्जिताः ।
गायन्त्यथ च नृत्यन्ति स्त्रियो मत्ता विवाससः । नगरागारवप्रेषु वहिर्माल्यानुलेपनाः । २०३५
मत्तावगीतैर्व्विविधैः खरोष्ट्रनिनदोपमैः । अनावृता मैथुने ताः कामचाराश्च सर्व्वशः ।
आहुरन्योन्यसूक्तानि प्रब्रुवाणा मदोत्कटाः । हे हते हे हतेत्येवं स्वामिभर्त्तृहतेति च ।
आक्रोशन्त्यः प्रनृत्यन्ति व्रात्याः पर्व्वस्वसंयताः । तासां किलावलिप्तानां निवसन् कुरुजाङ्गले ।
कश्चिद्वाहीकदुष्टानां नातिहृष्टमना जगौ । सा नूनं बृहती गौरी सूक्ष्मकम्बलवासिनी ।
मामनुस्मरती शेते वाहीकं कुरुजाङ्गले । शतद्रुकामहं तीर्त्वा तां च रम्यामिरावतीं । २०४०
गत्वा स्वदेशं द्रक्ष्यामि स्थूलशङ्खाः शुभाः स्त्रियः । मनःशिलोज्ज्वलापाङ्गा गौर्य्यस्त्रिककुदोऽञ्जनाः ।
कम्बलाजिनसंवीताः क्रन्दन्त्यः प्रियदर्शनाः । मृदङ्गानकशङ्खानां मर्द्दलानाञ्च निःस्वनैः ।
खरोष्ट्राश्वतरैश्चैव मत्ता यास्यामहे सुखं । शमीपीलुकरीराणां वनेषु सुखवर्त्मसु ।
अपूपान् सक्तुपिण्डांश्च प्राश्नन्तो मथितान्वितान् । पथि सुप्रबला भूत्वा कदा सम्पततोऽध्वगान् ।
चेलापहारं कुर्व्वाणास्ताडयिष्याम भूयशः । एवंशीलेषु व्रात्येषु वाहीकेषु दुरात्मसु । २०४५
कश्चेतयानो निवसेत् मुहूर्त्तमपि मानवः । ईदृशा ब्राह्मणेनोक्ता वाहीका मोघचारिणः ।
येषां षड्भागहर्त्ता त्वमुभयोः शुभपापयोः । इत्युक्त्वा ब्राह्मणः साधुरुत्तरं पुनरुक्तवान् ।
वाहीकेष्वविनीतेषु प्रोच्यमानं निबोध तत् । तत्र स्म राक्षसी गौति सदा कृष्णचतुर्द्दशीं ।
नगरे शाकले स्फीते आहत्य निशि दुन्दुभिं । कदा वाहेयिका गाथाः पुनर्गास्यामि शाकले ।
गव्यस्य तृप्ता मांसस्य पीत्वा गौडं सुरासवं । गौरीभिः सह नारीभिर्बृहतीभिः स्वलङ्कृता । २०५०
पलाण्डुगण्डूषयुतान् खादन्ती चैडकान् बहून् । वाराहं कौक्कुटं मांसं गव्यं गार्द्दभमौष्ट्रकं ।
ऐडञ्च ये न खादन्ति तेषां जन्म निरर्थकं । इति गायन्ति ये मत्ताः शीधुना शाकलाश्च ये ।
सबालवृद्धाः क्रन्दन्तस्तेषु धर्म्मः कथम्भवेत् । इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
यदन्योऽप्युक्तवानस्मान् ब्राह्मणः कुरुसंसदि । पञ्च नद्यो वहन्त्येता यत्र पीलुवनान्युत ।
शतद्रुश्च विपाशा च तृतीयैरावती तथा । चन्द्रभागा वितस्ता च सिन्धुषष्ठा वहिर्गिरेः । २०५५
आरट्टा नाम ते देशा नष्टधर्म्मा न तान् व्रजेत् । व्रात्यानां दासमीयानां वाहीकानामयज्वनां ।
न देवाः प्रतिगृह्णन्ति पितरो ब्राह्मणास्तथा । तेषां प्रनष्टधर्म्माणां वाहीकानामिति श्रुतिः ।
ब्राह्मणेन तथा प्रोक्तं विदुषा साधुसंसदि । काष्ठकुण्डेषु वाहीका मृण्मयेषु च भुञ्जते ।
सक्तुमद्यावलिप्तेषु श्वावलीढेषु निर्घृणाः । आविकञ्चौष्ट्रिकञ्चैव क्षीरं गार्द्दभमेव च ।
तद्विकारांश्च वाहीकाः खादन्ति च पिवन्ति च । पुत्त्रसङ्करिणो जाल्माः सर्व्वान्नक्षीरभोजनाः । २०६०
आरट्टा नाम वाहीका वर्ज्जनीया विपश्चिता । हन्त शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।

यदन्योऽप्युक्तवाक्यं ब्राह्मणः कुरुसंसदि । युगन्धरे पयः पीत्वा प्रोष्य चाप्यच्युतस्थले ।
तद्वद्भूतिलये स्नात्वा कथं स्वर्गं गमिष्यति । पञ्च नद्यो वहन्त्येता यत्र निःसृत्य पर्व्वतात् ।
आरट्टा नाम वाहीका न तेष्वार्य्यो द्व्यहं वसेत् । वहिश्च नामह्नीकश्च विपाशायां पिशाचकौ ।
तयोरपत्यं वाहीका नैषा सृष्टिः प्रजापतेः । ते कथं विविधान् धर्म्मान् ज्ञास्यन्ते हीनयोनयः । २०६९
कारस्करान् माहिषकान् कालिङ्गान् कीरलांस्तथा । कर्क्कोटकान् वीरकांश्च दुर्धर्म्मांश्च विवर्ज्जयेत् ।
इति तीर्थानुसर्त्तारं राक्षसी काचिदब्रवीत् । एकरात्रशयी गेहे महोलूखलमेखला ।
आरट्टा नाम ते देशा वाहीकं नाम तज्जलं । ब्राह्मणापसदा यत्र तुल्यकालाः प्रजापतेः ।
वेदा न तेषां वेद्यञ्च यज्ञो यजनमेव च । व्रात्यानां दासमीयानामन्नं देवा न भुञ्जते ।
प्रस्थला मद्रगान्धारा आरट्टा नामतः खशाः । वसातिसिन्धुसौवीरा इति प्रायोऽतिकुत्सिताः । २०७०
इति श्रीमहाभारते कर्णपर्व्वणि कर्णशल्यसंवादे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
॥ कर्ण उवाच ॥ हन्त शल्य विजानीहि हन्त भूयो ब्रवीमि ते । उच्यमानं मया सम्यक् त्वमेकाग्रमनाः शृणु ।
ब्राह्मणः किल नो गेहमध्यगच्छत् पुराऽतिथिः । आचारं तत्र सम्प्रेक्ष्य प्रीतो वचनमब्रवीत् ।
मया हिमवतः शृङ्गमेकेनाध्युषितं चिरं । दृष्टाश्च बहवो देशा नानाधर्म्मसमावृताः ।
न केनचिद्धर्म्मेण विरुध्यन्ते प्रजा इमाः । सर्व्वं हि तेऽब्रुवन् धर्म्मं यदुक्तं वेदपारगैः ।
अटता तु ततो देशान् नानाधर्म्मसमाकुलान् । आगच्छता महाराज वाहीकेषु निशामितं । २०७५
तत्र वै ब्राह्मणो भूत्वा ततो भवति क्षत्रियः । वैश्यः शूद्रश्च वाहीकस्ततो भवति नापितः ।
नापितश्च ततो भूत्वा पुनर्भवति ब्राह्मणः । द्विजो भूत्वा च तत्रैव पुनर्दासोऽभिजायते ।
भवत्येकः कुले विप्रः प्रसृष्टाः कामचारिणः । गान्धारमद्रकाश्चैव वाहीकाश्चाल्पचेतसः ।
एतन्मया श्रुतं तत्र धर्म्मसङ्करकारकं । कृत्स्नामटित्वा पृथिवीं वाहीकेषु विपर्य्ययः ।
हन्त शल्य विजानीहि हन्त भूयो ब्रवीमि ते । यदप्यन्योऽब्रवीद्वाक्यं वाहीकानाञ्च कुत्सितं । २०८०
सती पुरा हृता काचिदारट्टात् किल दस्युभिः । अधर्म्मतश्चोपयाता सा तानभ्यशपत्ततः ।
बालां बन्धुमतीं यन्मामधर्म्मेणोपगच्छत । तस्मान्नार्य्यो भविष्यन्ति बन्धक्यो वै कुलस्य च ।
न चैवास्मात् प्रमोक्षध्वं घोरात् पापान्नराधमाः । तस्मात्तेषां भागहरा भागिनेया न सूनवः ।
कुरवः सहपाञ्चालाः शाल्वा मत्स्याः सनैमिषाः । कोशलाः काशपौण्ड्राश्च कालिङ्गा मागधास्तथा ।
चेदयश्च महाभागा धर्म्मं जानन्ति शाश्वतं । नानादेशेष्वसन्तश्च प्रायो वाह्लीकयादृते । २०८५
आमत्स्येभ्यः कुरुपाञ्चालदेश्या आनैमिषाच्चेदयो ये विशिष्टाः । धर्म्मं पुराणमुपजीवन्ति सन्तो मद्रानृते पाञ्चनदांश्च
जिह्मान् ।
एवं विद्वान् धर्म्मकथासु राजंस्तूष्णींभूतो जडवच्छल्य भूपः । त्वं तस्य गोप्ता च जनस्य राजा षड्भागहर्त्ता शुभदुष्कृतस्य ।
अथवा दुष्कृतस्य त्वं हर्त्ता तेषामरक्षिता । रक्षिता पुण्यभाग्राजा प्रजानां त्वं त्वपुण्यभाक् ।
पूज्यमाने पुरा धर्म्मे सर्व्वदेशेषु शाश्वते । धर्म्मं पाञ्चनदं दृष्ट्वा धिगित्याह पितामहः ।

आत्यानां दासमीयानां कलेऽप्यशुभकर्म्मणां । ब्रह्मणा निन्दिते धर्म्मे स त्वं लोके किमब्रवीः । २०९०

इति पाञ्चनदं धर्म्ममवमेने पितामहः । स्वधर्म्मस्थेषु वर्णेषु सोऽप्येतान्नाभ्यपूजयत् ।

हन्त शल्य विजानीहि हन्त भूयो ब्रवीमि ते । कल्माषपादः सरसि निमज्जन् राक्षसोऽब्रवीत् ।

क्षत्रियस्य मलं भैक्ष्यं ब्राह्मणस्याव्रतं मलं । मलं पृथिव्या वाहीकाः स्त्रीणां मद्रस्त्रियो मलं ।

निमज्जमानमुद्धृत्य कश्चिद्राजा निशाचरं । अपृच्छत्तेन चाख्यातं प्रोक्तवान् यन्निबोध मे ।

मानुषाणां मलं म्लेच्छा म्लेच्छानामौष्ट्रिका मलं । औष्ट्रिकाणां मलं षण्ढाः षण्ढानां राजयाजकाः । २०९५

राजयाजकयाज्यानां मद्रकाणाञ्च यन्मलं । तद्भवेद्वै तव मलं यद्यस्मान्न विमुञ्चसि ।

इति रक्षोपसृष्टेषु विषवीर्य्यहतेषु च । राक्षसं भेषजं प्रोक्तं संसिद्धं वचनोत्तरं ।

ब्राह्मं पाञ्चालाः कौरवेयास्तु धर्म्मं सत्यं मत्स्याः शूरसेनाश्च यज्ञं । प्राच्या दासा वृषला दाक्षिणात्याः स्तेना वाहीकाः सङ्करा वै सुराष्ट्राः ।

कृतघ्नता परवित्तापहारो मद्यपानं गुरुदारावमर्द्दः । वाक्पारुष्यं गोवधो रात्रिचर्य्या वहिर्गेहं परवस्त्रोपभोगः ।

येषां धर्म्मस्तान् प्रति नास्त्यधर्म्मो आरट्टानां पञ्चनदान् धिगस्तु । आपाञ्चालेभ्यः कुरवो नैमिषाश्च मत्स्याश्चैतेऽप्यथ जानन्ति धर्म्मं । २१००

अथोदीच्याश्चाङ्गका मागधाश्च शिष्टान् धर्म्मानुपजीवन्ति वृद्धाः ।

प्राचीं दिशं श्रिता देवा जातवेदःपुरोगमाः । दक्षिणां पितरो गुप्तां यमेन शुभकर्म्मणा ।

प्रतीचीं वरुणः पाति पालयानः सुरान् बली । उदीचीं भगवान् सोमो ब्राह्मणैः सह रक्षति ।

तथा रक्षःपिशाचाश्च हिमवन्तं नगोत्तमं । गुह्यकाश्च महाराज पर्व्वतं गन्धमादनं ।

ध्रुवः सर्व्वाणि भूतानि विष्णुः पाति जनार्द्दनः । इङ्गितज्ञाश्च मगधाः प्रेक्षितज्ञाश्च कोशलाः । २१०५

अर्द्धोक्ताः कुरुपाञ्चालाः शाल्वाः कृत्स्नानुशासनाः । पार्व्वतीयाश्च विषमा यथैव गिरयस्तथा ।

सर्व्वज्ञा यवना राजन् शूराश्चैव विशेषतः । म्लेच्छाः स्वसंज्ञानियता नानुक्तमितरे जनाः ।

प्रतिरब्धास्तु वाहीका न च केचन मद्रकाः । स त्वमेतादृशः शल्य नोत्तरं वक्तुमर्हसि ।

पृथिव्यां सर्व्वदेशानां मद्रको मलमुच्यते ।

सीधोः पानं गुरुतल्पावमर्द्दो भ्रूणहत्या परवित्तापहारः । येषां धर्म्मस्तान् प्रति नास्त्यधर्म्म आरट्टजान् पञ्चनदान् धिगस्तु । २११०

एतज्ज्ञात्वा जोषमास्स्व प्रतीपं मा स्म वै कृथाः । मा त्वां पूर्व्वमहं हत्वा हनिष्ये केशवार्ज्जुनौ ।

॥ शल्य उवाच ॥ आतुराणां परित्यागः स्वदारसुतविक्रयः । अङ्गे प्रवर्त्तते कर्ण येषामधिपतिर्भवान् ।

रथातिरथसंख्यायां यत्त्वां भीष्मस्तदाऽब्रवीत् । तान् विदित्वात्मनो दोषान् निर्म्मन्युर्भव मा क्रुधः ।

सर्व्वत्र ब्राह्मणाः सन्ति सन्ति सर्व्वत्र क्षत्रियाः । वैश्याः शूद्रास्तथा कर्ण स्त्रियः साध्व्यश्च सुव्रताः ।

रमन्ते चोपहासेन पुरुषाः पुरुषैः सह । अन्योन्यमवतक्षन्तो देशे देशे समैथुनाः । २११५

परवाच्येषु निपुणः सर्व्वो भवति सर्व्वदा । आत्मवाच्यं न जानीते जानन्नपि च मुह्यति ।

सर्व्वत्र सन्ति राजानः स्वं स्वं धर्म्ममनुव्रताः । दुर्म्मनुष्यान्निगृह्णन्ति सन्ति सर्व्वत्र धार्म्मिकाः ।

न कर्णं देशसामान्यात् सर्व्वः पापं निषेवते। यादृशः स्वस्वभावेन देशा अपि न तादृशाः।
॥ सञ्जय उवाच ॥ ततो दुर्य्योधनो राजा कर्णशल्याववारयत्। सखिभावेन राधेयं शल्यं साञ्जलिकेन च।
ततो निवारितः कर्णो धार्त्तराष्ट्रेण मारिष। कर्णोऽपि नोत्तरं प्राह शल्योऽप्यभिमुखः परान्। २१२०
ततः प्रहस्य राधेयः पुनर्य्याहीत्यचोदयत्।
इति श्रीमहाभारते कर्णपर्व्वणि कर्णशल्यसंवादे पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
॥ सञ्जय उवाच ॥ ततः परानीकभिदं व्यूहमप्रतिमं कृतं। समीक्ष्य कर्णः पार्थानां धृष्टद्युम्नाभिरक्षितं।
प्रययौ रथघोषेण सिंहनादरवेण च। वादित्राणाञ्च निनदैः कम्पयन्निव मेदिनीं।
वेपमान इव क्रोधाद्युद्धशौण्डः परन्तपः। प्रतिव्यूह्य महातेजा यथावद्भरतर्षभ।
व्यधमत् पाण्डवीं सेनामासुरीं मघवानिव। युधिष्ठिरञ्चाभ्यहनदपसव्यञ्चकार ह। २१२५
॥ धृतराष्ट्र उवाच ॥ कथं सञ्जय राधेयः प्रत्यव्यूहत पाण्डवान्। धृष्टद्युम्नमुखान् सर्व्वान् भीमसेनाभिरक्षितान्।
सर्व्वानेव महेष्वासानजय्यानमरैरपि। के च प्रपक्षौ पक्षौ वा मम सैन्यस्य सञ्जय।
प्रविभज्य यथान्यायं कथं वा समवस्थिताः। कथं पाण्डुसुताश्चापि प्रत्यव्यूहत मामकान्।
कथञ्चैव महद्युद्धं प्रावर्त्तत सुदारुणं। क्व च बीभत्सुरभवत् यत् कर्णोऽयाद्युधिष्ठिरं।
को ह्यर्ज्जुनस्य सान्निध्ये शक्तोऽभेत्तुं युधिष्ठिरं। सर्व्वभूतानि यो ह्येकः खाण्डवे जितवान् पुरा। २१३०
कस्तमन्यस्तु राधेयात् प्रतियुध्येज्जिजीविषुः।
॥ सञ्जय उवाच ॥ शृणु व्यूहस्य रचनामर्ज्जुनश्च यथा गतः। परिवार्य्य नृपं स्वं स्वं सङ्ग्रामश्चाभवद्यथा।
कृपः शारद्वतो राजन् मागधाश्च तरस्विनः। सात्वतः कृतवर्म्मा च दक्षिणं पक्षमाश्रिताः।
तेषां प्रपक्षे शकुनिरुलूकश्च महारथः। सादिभिर्व्विमलप्रासैस्तवानीकमरक्षतां।
गान्धारिभिरसम्भ्रान्तैः पार्व्वतीयैश्च दुर्ज्जयैः। शलभानामिव व्रातैः पिशाचैरिव दुर्दृशैः। २१३५
चतुस्त्रिंशत्सहस्राणि रथानामनिवर्त्तिनां। संशप्तका युद्धशौण्डा वामं पार्श्वमपालयन्।
समन्वितास्तव सुतैः कृष्णार्ज्जुनजिघांसवः। तेषां प्रपक्षाः काम्बोजाः शकाश्च यवनैः सह।
निदेशात् सूतपुत्रस्य सरथाः साश्वपत्तयः। आह्वयन्तोऽर्ज्जुनं तस्थुः केशवञ्च महाबलं।
मध्ये सेनामुखे कर्णोऽप्यवातिष्ठत दंशितः। चित्रवर्म्माङ्गदः स्रग्वी पालयन् वाहिनीमुखं।
रक्ष्यमाणैः सुसंरब्धैः पुत्रैः शस्त्रभृताम्बरः। वाहिनीप्रमुखे वीरः सम्प्रकर्षन्नशोभत। २१४०
अभ्यवर्त्तन्महाबाहुः सूर्य्यवैश्वानरप्रभः। महाद्विपस्कन्धगतः पिङ्गाक्षः प्रियदर्शनः।
दुःशासनो वृतः सैन्यैः स्थितो व्यूहस्य पृष्ठतः। तमन्वयान्महाराज स्वयं दुर्य्योधनो नृपः।
चित्रास्त्रैश्चित्रसन्नाहैः सोदर्य्यैरभिरक्षितः। रक्ष्यमाणो महावीर्य्यैः सहितैर्म्मद्रकेकयैः।
अशोभत महाराज देवैरिव शतक्रतुः। अश्वत्थामा कुरूणाञ्च ये प्रवीरा महारथाः।
नित्यं मत्ताश्च मातङ्गाः शूरैर्म्लेच्छैः समन्विताः। अन्वयुस्तद्रथानीकं वर्षन्त इव तोयदाः। २१४५
ते ध्वजैर्व्वैजयन्तीभिर्ज्वलद्भिः परमायुधैः। सादिभिश्चास्थिता रेजुर्द्रुमवन्त इवाचलाः।

तेषां पदातिनागानां पादरक्षाः सहस्रशः । पट्टिशासिधराः शूरा बभूवुरनिवर्त्तिनः ।
वाजिभिः स्यन्दनैर्नागैरधिकं समलङ्कृतैः । स व्यूहराजो विबभौ देवासुरचमूपमः ।
बार्हस्पत्यः सुविहितो नायकेन विपश्चिता । नृत्यतीव महाव्यूहः परेषां भयमादधत् ।
तस्य पक्षप्रपक्षेभ्यो निष्पतन्ति युयुत्सवः । हयाश्वरथमातङ्गाः प्रावृषीव बलाहकाः । ११५०
ततः सेनामुखे कर्णं दृष्ट्वा राजा युधिष्ठिरः । धनञ्जयममित्रघ्नमेकवीरमुवाच ह ।
पश्यार्ज्जुन महाव्यूहं कर्णेन विहितं रणे । युक्तं पक्षैः प्रपक्षैश्च परानीकं प्रकाशते ।
तदेतद्वै समालोक्य प्रत्यमित्रं महद्बलं । यथा नाभिभवत्यस्मांस्तथा नीतिर्विधीयतां ।
एवमुक्तोऽर्ज्जुनो राज्ञा प्राञ्जलिर्नृपमब्रवीत् । यथा भवानाह तथा तत्सर्वं न तदन्यथा ।
यस्त्वस्य विहितो घातस्तं करिष्यामि भारत । प्रधानवध एवास्य विनाशस्तं करोम्यहं । ११५५
॥ युधिष्ठिर उवाच ॥ तस्मात्त्वमेव राधेयं भीमसेनः सुयोधनं । वृषसेनञ्च नकुलः सहदेवोऽपि सौबलं ।
दुःशासनं शतानीको हार्द्दिक्यं शिनिपुङ्गवः । पाण्ड्यो द्रोणसुतं याञ्चं स्वयं योत्स्याम्यहं कृपं ।
द्रौपदेया धार्त्तराष्ट्रान् शिष्टान् सह शिखण्डिना । ते ते च तांस्तान् अहितानस्माकं घ्नन्तु मामकाः ।
॥ सञ्जय उवाच ॥ इत्युक्तो धर्म्मराजेन तथेत्युक्त्वा धनञ्जयः । व्यादिदेश स्वसैन्यानि जगामाग्रे चमूमुखे ।
अग्निर्वैश्वानरः पूर्व्वो ब्रह्मेन्दुः सवितां गतः । तमाद्यः प्रथमं जातस्तं देवा ब्राह्मणं विदुः । ११६०
ब्रह्मेशानेन्द्रवरुणान् क्रमशो योऽवहत् पुरा । तमाद्यं रथमास्थाय प्रयातौ केशवार्ज्जुनौ ।
अथ तं रथमायान्तं दृष्ट्वात्यद्भुतदर्शनं । उवाचाधिरथिं शल्यः पुनस्तं युद्धदुर्म्मदं ।
अयं स रथ आयातः श्वेताश्वः कृष्णसारथिः । दुर्व्वारः सर्व्वसैन्यानां विपाकः कर्म्मणामिव ।
निघ्नन्नमित्रान् कौन्तेयो यं कर्ण परिपृच्छसि । श्रूयते तुमुलः शब्दो यथा मेघस्वनो महान् ।
ध्रुवमेतौ महात्मानौ वासुदेवधनञ्जयौ । एष रेणुः समुद्भूतो दिवमावृत्य तिष्ठति । ११६५
चक्रनेमिप्रणुन्नेव कम्पते कर्ण मेदिनी । प्रवात्येष महावायुरभितस्तव वाहिनीं ।
क्रव्यादा व्याहरन्त्येते मृगाः क्रन्दन्ति भैरवं । पश्य कर्ण महाघोरं भयदं लोमहर्षणं ।
कबन्धं मेघसङ्काशं भानुमावृत्य संस्थितं । पश्य यूथैर्बहुविधैर्मृगाणां सर्व्वतो दिशं ।
बलिभिः कर्ण शार्दूलैरादित्योऽभिनिरीक्ष्यते । पश्य कङ्कांश्च गृध्रांश्च समवेतान् सहस्रशः ।
स्थितानभिमुखान् घोरानन्योन्यमभिभाषतः । रञ्जिताश्चामरा युक्तास्तव कर्ण महारथे । ११७०
प्रदराः प्रज्वलन्त्येते ध्वजश्चैव प्रकम्पते । सवेपथून् हयान् पश्य महाकायान्महाजवान् ।
प्लवमानान् दर्शनीयानाकाशे गरुडानिव । ध्रुवमेषु निमित्तेषु भूमिमाश्रित्य पार्थिवाः ।
स्वप्स्यन्ति निहताः कर्ण शतशोऽथ सहस्रशः । शङ्खानां तुमुलः शब्दः श्रूयते लोमहर्षणः ।
आनकानाञ्च राधेय मृदङ्गानाञ्च सर्व्वशः । बाणशब्दान् बहुविधान् नराश्वगजवाजिनां ।
ज्यातलत्रेषुशब्दांश्च शृणु कर्ण महात्मनां । हेमरूप्यप्रमृष्टानां वाससां शिल्पिनिर्म्मिताः । ११७५
नानावर्णा रथे भान्ति श्वसनेन प्रकम्पिताः । सहेमचन्द्रताराक्षाः पताकाः किङ्किणीयुताः ।

पश्य कर्णार्ज्जुनस्यैताः सौदामिन्य इवाम्बुदे। ध्वजाः कणकणायन्ते वातेनाभिसमीरिताः।
विभ्राजन्ति रणे कर्ण विमाने दैवते यथा। सपताका रथाश्चैते पाञ्चालानां महात्मनां।
पश्य कुन्तीसुतं वीरं वीभत्सुमपराजितं। प्रधर्षयितुमायान्तं कपिप्रवरकेतनं।
एष ध्वजाग्रे पार्थस्य प्रेक्षणीयः समन्ततः। दृश्यते वानरो भीमो द्विषतामघवर्द्धनः। २१८०
एतच्चक्रं गदा शार्ङ्गं शङ्खं कृष्णस्य धीमतः। अत्यर्थं भ्राजते कृष्णे कौस्तुभस्तु मणिस्ततः।
एष शार्ङ्गगदापाणिर्व्वासुदेवोऽतिवीर्य्यवान्। वाहयन्नेति तुरगान् पाण्डुरान् वातरंहसः।
एतत् कूजति गाण्डीवं विकृष्टं सव्यसाचिना। एते हस्तवता मुक्ता घ्नन्त्यमित्रान् शिताः शराः।
विशाला यत्र ताम्राक्षैः पूर्णचन्द्रनिभाननैः। एषा भूः कीर्य्यते राज्ञां शिरोभिरपलायिनां।
एते सुपरिघाकाराः पुण्यगन्धानुलेपनाः। उद्यतायुधशौण्डानां पात्यन्ते सायुधा भुजाः। २१८५
निरस्तनेत्रजिह्वाश्च वाजिनः सह सादिभिः। पतिताः पात्यमानाश्च क्षितौ क्षीणाश्च शेरते।
एते पर्व्वतशृङ्गाणां तुल्यरूपा हता द्विपाः। संछिन्नभिन्नाः पार्थेन प्रपतन्त्यद्रयो यथा।
गन्धर्व्वनगराकारा रथा हतनरेश्वराः। विमानानीव पुण्यान्ते स्वर्गिणां निपतन्त्यमी।
व्याकुलीकृतमत्यर्थं पश्य सैन्यं किरीटिना। नानामृगसहस्राणां यूथं केशरिणा यथा।
घ्नन्त्येते पार्थिवान् वीराः पाण्डवाः समभिद्रुताः। नागाश्वरथपत्त्यौघांस्तावकान् समभिघ्नतः। २१९०
एष सूर्य्य इवाम्भोदैश्छन्नः पार्थो न दृश्यते। ध्वजाग्रं दृश्यते तस्य ज्याशब्दश्चापि श्रूयते।
अद्य द्रक्ष्यसि तं वीरं श्वेताश्वं कृष्णसारथिं। निघ्नन्तं शात्रवान् संख्ये यं कर्ण परिपृच्छसि।
अद्य तौ पुरुषव्याघ्रौ लोहिताक्षौ परन्तपौ। वासुदेवार्ज्जुनौ कर्ण द्रष्टास्येकरथे स्थितौ।
सारथिर्यस्य वार्ष्णेयो गाण्डीवं यस्य कार्म्मुकं। तञ्चेद्धन्तासि राधेय त्वन्नो राजा भविष्यसि।
एष संशप्तकाहूतस्तानेवाभिमुखो गतः। करोति कदनञ्चैषां संग्रामे द्विषतां बली। २१९५
इति ब्रुवाणं मद्रेशं कर्णः प्राहातिमन्युना। पश्य संशप्तकैः क्रुद्धैः सर्व्वतः समभिद्रुतः।
एष सूर्य्य इवाम्भोदैश्छन्नः पार्थो न दृश्यते। एतदन्तोऽर्ज्जुनः शल्य निमग्नो योधसागरे।
॥ शल्य उवाच ॥ वरुणं कोऽम्भसा हन्यादिन्धनेन च पावकं। को वाऽनिलं निगृह्णीयात् पिबेद्वा को महार्णवं।
ईदृग्रूपमहं मन्ये पार्थस्य युधि निग्रहं। नहि शक्योऽर्ज्जुनो जेतुं युधि सेन्द्रैः सुरासुरैः।
अथवा परितोषस्ते वाचोक्त्वा सुमना भव। न स शक्यो युधा जेतुमन्यं कुरु मनोरथं। २२००
बाहुभ्यामुद्धरेद्भूमिं दहेत्क्रुद्ध इमाः प्रजाः। पातयेत्त्रिदिवाद्देवान् योऽर्ज्जुनं समरे जयेत्।
पश्य कुन्तीसुतं वीरं भीममक्लिष्टकारिणं। प्रभासन्तं महाबाहुं स्थितं मेरुमिवापरं।
अमर्षी नित्यसंरब्धश्चिरं वैरमनुस्मरन्। एष भीमो जयं प्रेप्सुर्युधि तिष्ठति वीर्य्यवान्।
एष धर्म्मभृतां श्रेष्ठो धर्म्मराजो युधिष्ठिरः। तिष्ठत्यसुकरः संख्ये परैः परपुरञ्जयः।
एतौ च पुरुषव्याघ्रावश्विनाविव सोदरौ। नकुलः सहदेवश्च तिष्ठन्तौ युधि दुर्जयौ। २००५
अमी स्थिता द्रौपदेयाः पञ्च पञ्चाचला इव। व्यवस्थिता योद्धुकामाः सर्व्वेऽर्ज्जुनसमा युधि।

एते द्रुपदपुत्राश्च धृष्टद्युम्नपुरोगमाः । सहिताः सत्यजितो वीरास्तिष्ठन्ति परमौजसः ।
अथाविन्द्र इवासह्यः सात्यकिः सात्वताम्बरः । युयुत्सुरुपयात्यस्मान् क्रुद्धान्तकसमः पुरा ।
इति संवदतोरेव तयोः पुरुषसिंहयोः । ते सेने समसज्जेतां गङ्गायमुनवद्भृशं ।
इति श्रीमहाभारते कर्णपर्व्वणि कर्णशल्यसंवादे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

॥ धृतराष्ट्र उवाच ॥ तथा व्यूढेष्वनीकेषु संसक्तेषु च सञ्जय । संशप्तकान् कथं पार्थो गतः कर्णश्च पाण्डवान् । २२१०
एतद्विस्तरशो युद्धं प्रब्रूहि कुशलो ह्यसि । न हि तृप्यामि वीराणां शृण्वानो विक्रमान्रणे ।
॥ सञ्जय उवाच ॥ तदास्थितमवज्ञाय प्रत्यमित्रबलं महत् । अव्यूहतार्ज्जुनो व्यूहं पुत्रस्य तव दुर्णये ।
तत्सादिनागकलिलं पदातिरथसङ्कुलं । धृष्टद्युम्नमुखं व्यूहमशोभत महद्बलं ।
पारावतसवर्णाश्वश्चन्द्रादित्यसमद्युतिः । पार्षतः प्रबभौ धन्वी कालो विग्रहवानिव ।
पार्षतं जुगुपुः सर्व्वे द्रौपदेया युयुत्सवः । दिव्यवर्म्मायुधधराः शार्दूलसमविक्रमाः । २२१५
सानुगा दीप्तवपुषश्चन्द्रं तारागणा इव । अथ व्यूढेष्वनीकेषु प्रेक्ष्य संशप्तकान्रणे ।
क्रुद्धोऽर्ज्जुनोऽभिदुद्राव व्याक्षिपन् गाण्डिवं धनुः । अथ संशप्तकाः पार्थमभ्यधावन् वधैषिणः ।
विजये धृतसङ्कल्पा मृत्युं कृत्वा निवर्त्तनं । तन्नराश्वौघबहुलं मत्तनागरथाकुलं ।
पत्तिमच्छूरवीरौघं द्रुतमर्ज्जुनमार्द्दयत् । स सम्प्रहारस्तुमुलस्तेषामासीत् किरीटिना ।
तस्यैव नः श्रुतो यादृक् निवातकवचैः सह । रथानश्वान् ध्वजान्नागान् पत्तीन्रणगतानपि । २२२०
इषून् धनूंषि खड्गांश्च चक्राणि च परश्वधान् । सायुधानुद्यतान् बाहून् विविधान्यायुधानि च ।
चिच्छेद द्विषतां पार्थः शिरांसि च सहस्रशः । तस्मिन् सैन्यमहावर्त्ते पातालतलसन्निभे ।
निमग्नन्तं रथं मत्वा नेदुः संशप्तकास्तथा । स पुनस्तानरीन् हत्वा पुनरुत्तरतोऽवधीत् ।
दक्षिणेन च पश्चाच्च क्रुद्धो रुद्रः पशूनिव । अथ पाञ्चालचेदीनां सृञ्जयानाञ्च मारिष ।
त्वदीयैः सह संग्राम आसीत् परमदारुणः । कृपश्च कृतवर्म्मा च शकुनिश्चापि सौबलः । २२२५
हृष्टसेनाः सुसंरब्धा रथानीकप्रहारिणः । कोशलैः काश्यमत्स्यैश्च कारूषैः केकयैरपि ।
शूरसेनैः शूरवरैर्युयुधुर्युद्धदुर्मदाः । तेषामन्तकरं युद्धं देहपाप्मासुनाशनं ।
क्षत्रविट्शूद्रवीराणां धर्म्म्यं स्वर्ग्यं यशस्करं । दुर्य्योधनोऽथ सहितो भ्रातृभिर्भरतर्षभ ।
गुप्तः कुरुप्रवीरैश्च मद्राणाञ्च महारथैः । पाण्डवैः सह पाञ्चालैश्चेदिभिः सात्यकेन च ।
युध्यमानं रणे कर्णं कुरुवीरोऽभ्यपालयत् । कर्णोऽपि निशितैर्व्वाणैर्व्विनिहत्य महाचमूं । २२३०
प्रमृद्य च रथश्रेष्ठान् युधिष्ठिरमपीडयत् । विवस्त्ररथदेहासून् हत्वा शत्रून् सहस्रशः ।
युक्त्वा स्वर्गयशोभ्याञ्च स्वेभ्यो मुदमुदावहत् । एवं मारिष संग्रामो नरवाजिगजक्षयः ।
कुरूणां सृञ्जयानाञ्च देवासुरसमोऽभवत् ।
इति श्रीमहाभारते कर्णपर्व्वणि सङ्कुलयुद्धे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

॥ धृतराष्ट्र उवाच ॥ यत्तत् प्रविश्य पार्थानां सैन्यं कुर्व्वन् जनक्षयं । कर्णो राजानमभ्येत्य तन्ममाचक्ष्व सञ्जय ।

के च प्रवीराः पार्थानां युधि कर्णमवारयन् । कांश्च प्रमथ्याधिरथिर्युधिष्ठिरमपीडयत् ।　२२३५

॥ सञ्जय उवाच ॥ धृष्टद्युम्नमुखान् पार्थान् दृष्ट्वा कर्णो व्यवस्थितान् । समभ्यधावत्त्वरितः पाञ्चालान् शत्रुकर्षणः ।

तन्तूर्णमभिधावन्तं पाञ्चाला जितकाशिनः । प्रत्युद्ययुर्महात्मानं हंसा इव महार्णवं ।

ततः शङ्खसहस्राणां निस्वनो हृदयङ्गमः । प्रादुरासीदुभयतो भेरीशब्दाश्च दारुणाः ।

नानावाणनिपाताश्च द्विपाश्वरथनिस्वनः । सिंहनादश्च वीराणामभवद्दारुणस्तदा ।

साद्रिद्रुमार्णवा भूमिः सवाताम्बुदमम्बरं । सार्केन्दुग्रहनक्षत्रा द्यौश्च व्यक्तं विघूर्णिता ।　२२४०

इति भूतानि तं शब्दं मेनिरे ते च विव्यथुः । यानि चाप्यल्पसत्त्वानि प्रायस्तानि मृतानि च ।

अथ कर्णो भृशं क्रुद्धः शीघ्रमस्त्रमुदीरयन् । जघान पाण्डवीं सेनामासुरीं मघवानिव ।

स पाण्डवबलं कर्णः प्रविश्य विसृजञ्छरान् । प्रभद्रकाणां प्रवरानहनत् सप्तसप्ततिं ।

ततः सुपुङ्खैर्निशितैरथश्रेष्ठो रथेषुभिः । अवधीत् पञ्चविंशत्या पाञ्चालान् पञ्चविंशतिं ।

सुवर्णपुङ्खैर्नाराचैः परकायविदारणैः । चेदिकानवधीद्वीरः शतशोऽथ सहस्रशः ।　२२४५

तं तथा समरे कर्म कुर्व्वाणमतिमानुषं । परिवव्रुर्महाराज पाञ्चालानां रथव्रजाः ।

ततः सन्धाय विशिखान् पञ्च भारत दुःसहान् । पाञ्चालानवधीत् पञ्च कर्णो वैकर्त्तनो वृषः ।

भानुदेवं चित्रसेनं सेनाविन्दुञ्च भारत । तपनं शूरसेनञ्च पाञ्चालानहनद्रणे ।

पाञ्चालेषु च शूरेषु वध्यमानेषु सायकैः । हाहाकारो महानासीत् पाञ्चालानां महाहवे ।

परिवव्रुर्महाराज पाञ्चालानां रथा दश । पुनरेव च तान् कर्णो जघानाशु पतत्रिभिः ।　२२५०

चक्ररक्षौ तु कर्णस्य पुत्रौ मारिष दुर्जयौ । सुषेणः सत्यसेनश्च त्यक्त्वा प्राणानयुध्यतां ।

पृष्ठगोप्ता तु कर्णस्य ज्येष्ठः पुत्रो महारथः । वृषसेनः स्वयं कर्णं पृष्ठतः पर्य्यपालयत् ।

धृष्टद्युम्नः सात्यकिश्च द्रौपदेया वृकोदरः । जनमेजयः शिखण्डी च प्रवीराश्च प्रभद्रकाः ।

चेदिकैकेयपाञ्चाला यमौ मत्स्याश्च दंशिताः । समभ्यधावन्राधेयं जिघांसन्तः प्रहारिणं ।

त एनं विविधैः शस्त्रैः शरधाराभिरेव च । अभ्यवर्षन् विमर्द्दन्तं प्रावृषीवाम्बुदा गिरिं ।　२२५५

पितरन्तु परीप्सन्तः कर्णपुत्राः प्रहारिणः । त्वदीयाश्चापरे राजन् वीरा वीरानवारयन् ।

सुषेणो भीमसेनस्य छित्वा भल्लेन कार्म्मुकं । नाराचैः सप्तभिर्विद्ध्वा हृदि भीमं ननाद ह ।

अथान्यद्धनुरादाय सुदृढं भीमविक्रमः । सज्यं वृकोदरः कृत्वा सुषेणस्याच्छिनद्धनुः ।

विव्याध चैनं दशभिः क्रुद्धो नृत्यन्निवेषुभिः । कर्णञ्च तूर्णं विव्याध त्रिसप्तत्या शितैः शरैः ।

भानुसेनञ्च दशभिः साश्वसूतायुधध्वजं । पश्यतां सुहृदां मध्ये कर्णपुत्रमपातयत् ।　२२६०

क्षुरप्रणुन्नं तत्तस्य शिरश्चन्द्रनिभाननं । शुभदर्शनमेवासीन्नालभ्रष्टमिवाम्बुजं ।

हत्वा कर्णसुतं भीमस्तावकान् पुनरार्द्दयत् । कृपहार्द्दिक्ययोश्छित्वा चापौ तावप्यथार्द्दयत् ।

दुःशासनं त्रिभिर्विद्ध्वा शकुनिं षड्भिरायसैः । उलूकञ्च पतत्रिञ्च चकार विरथावुभौ ।

हा सुषेण हतोऽसीति ब्रुवन्नादत्त सायकं । तमस्य कर्णश्चिच्छेद त्रिभिश्चैनमताडयत् ।

अथान्यं परिजग्राह सुपर्व्वाणं सुतेजनं। सुषेणायास्त्रजद्भीमसेनमप्याच्छिनन्नृप:। २२६५
पुन: कर्णस्त्रिसप्तत्या भीमसेनमथेषुभि:। पुत्रं परीप्सन् विव्याध क्रूरं क्रूरैर्जिघांसया।
सुषेणस्तु धनुर्गृह्य भारसाधनमुत्तमं। नकुलं पञ्चभिर्बाणैर्बाह्वोरुरसि चार्पयत्।
नकुलस्तन्तु विंशत्या विद्ध्वा भारसहैर्दृढै:। ननाद बलवन्नादं कर्णस्य भयमादधत्।
तं सुषेणो महाराज विद्ध्वा दशभिराशुगै:। चिच्छेद च धनु: शीघ्रं क्षुरप्रेण महारथ:।
अथान्यद्धनुरादाय नकुल: क्रोधमूर्च्छित:। सुषेणं नवभिर्बाणैर्वारयामास संयुगे। २२७०
स तु बाणैर्दिशो राजन्नाच्छाद्य परवीरहा। आजघ्ने सारथिञ्चास्य सुषेणञ्च ततस्त्रिभि:।
चिच्छेद चास्य सुदृढं धनुर्भल्लैस्त्रिभिस्त्रिधा। अथान्यद्धनुरादाय सुषेण: क्रोधमूर्च्छित:।
आविध्य नकुलं षष्ट्या सहदेवञ्च सप्तभि:। तद्युद्धं सुमहद्घोरमासीद्देवासुरोपमं।
निघ्नतां सायकैस्तूर्णमन्योन्यस्य वधं प्रति। सात्यकिर्वृषसेनस्य सूतं हत्वा त्रिभि: शरै:।
धनुश्चिच्छेद भल्लेन जघानाश्वांश्च सप्तभि:। ध्वजमेकेषुणोन्मथ्य त्रिभिस्तं हृद्यताडयत्। २२७५
अथावसन्न: स रथे मुहूर्त्तात् पुनरुत्थित:। स रणे युयुधानेन विसूताश्वरथध्वज:।
कृतो जिघांसु: शैनेयं खड्गचर्म्मधृगभ्यधात्। तस्य चाप्लवत: शीघ्रं वृषसेनस्य सात्यकि:।
वराहकर्णैर्दशभिरविध्यदसिचर्म्मणी। दु:शासनस्तु तं दृष्ट्वा विरथं व्यायुधं कृतं।
आरोप्य स्वरथं तूर्णमपोवाह रथान्तरं। अथान्यं रथमास्थाय वृषसेनो महारथ:।
द्रौपदेयांस्त्रिसप्तत्या युयुधानञ्च पञ्चभि:। भीमसेनञ्चतु:षष्ट्या सहदेवञ्च पञ्चभि:। २२८०
नकुलं त्रिंशता बाणै: शतानीकञ्च सप्तभि:। शिखण्डिनञ्च दशभिर्धर्म्मराजं शतेन च।
एतांश्चान्यांश्च राजेन्द्र प्रवीरान् जयगृद्धिन:। अभ्यर्द्दयन्महेष्वास: कर्णपुत्रो विशाम्पते।
कर्णस्य युधि दुर्द्धर्षस्तत: पृष्ठमपालयत्। दु:शासनञ्च शैनेयो विद्ध्वा नवभिरायसै:।
विसूताश्वरथं कृत्वा ललाटे त्रिभिरार्प्पयत्। स त्वन्यं रथमास्थाय विधिवत् कल्पितं पुन:।
युयुधे पाण्डुभि: सार्द्धं कर्णस्याप्याययन् बलं। धृष्टद्युम्नस्तत: कर्णमविध्यद्दशभि: शरै:। २२८५
द्रौपदेयास्त्रिसप्तत्या युयुधानस्तु सप्तभि:। भीमसेनश्चतु:षष्ट्या सहदेवस्तु सप्तभि:।
शिखण्डी दशभिर्वीरो धर्म्मराज: शतेन च। एते चान्ये च राजेन्द्र प्रवीरा जयगृद्धिन:।
अभ्यर्द्दयन्महेष्वासं सूतपुत्रं महामृधे। तान् सूतपुत्रो विशिखैर्दशभिर्दशभि: शरै:।
रथेनानुचरन् वीर: प्रत्यविध्यदरिन्दम:। तत्रास्त्रवीर्य्यं कर्णस्य लाघवञ्च महात्मन:।
अपश्याम महाभाग तदद्भुतमिवाभवत्। न ह्याददानं ददृशु: सन्दधानञ्च सायकान्। २२९०
विमुञ्चन्तञ्च संरम्भादपश्यन्त हतानरीन्। द्यौर्व्वियद्भूर्दिशश्चैव प्रपूर्णा निशितै: शरै:।
अरुणाभ्रावृताकारं तस्मिन्देशे बभौ वियत्। नृत्यन्निव हि राधेयश्चापहस्त: प्रतापवान्।
यैर्व्विद्ध: प्रत्यविध्यत्तानेकैकं त्रिगुणै: शरै:। शतैश्च दशभिश्चैतान् पुनर्व्विद्ध्वा ननाद च।
साश्वसूतरथच्छत्रास्ततस्ते विवरं ददु:। तान् प्रमथ्य महेष्वासान् राधेय: शरवृष्टिभि:।

गजानीकमसंबाधं प्राविशच्छत्रुकर्षणः । स रथांस्त्रिंशतं हत्वा चेदीनामनिवर्त्तिनां । २१९५
राधेयो निशितैर्व्वाणैस्ततोऽभ्यर्च्छद्युधिष्ठिरं । ततस्ते पाण्डवा राजञ्छिखण्डी च ससात्यकिः ।
राधेयात् परिरक्षन्तो राजानं पर्य्यवारयन् । तथैव तावकाः सर्व्वे कर्णं दुर्व्वारणं रणे ।
यत्ताः शूरा महेष्वासाः पर्य्यरक्षन्त सर्व्वशः । नानावादित्रघोषाश्च प्रादुरासन् विशाम्पते ।
सिंहनादश्च संजज्ञे शूराणामभिगर्ज्जतां । ततः पुनः समाजग्मुरभीताः कुरुपाण्डवाः ।
युधिष्ठिरमुखाः पार्थाः सूतपुत्रमुखा वयं । २२००
इति श्रीमहाभारते कर्णपर्व्वणि सङ्कुलयुद्धे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
॥ सञ्जय उवाच ॥ विदार्य्य कर्णस्तां सेनां युधिष्ठिरमथाद्रवत् । रथहस्त्यश्वपत्तीनां सहस्रैः परिवारितः ।
नानायुधसहस्राणि प्रेरितान्यरिभिर्वृषः । छित्त्वा बाणशतैरुग्रैस्तानविध्यदसम्भ्रमात् ।
निचकर्त्त शिरांस्येषां बाहूनूरूंश्च सूतजः । ते हता वसुधां पेतुर्भग्नाश्चान्ये प्रदुद्रुवुः ।
द्राविडास्तु निषादास्तु पुनः सात्यकिचोदिताः । अभ्यद्रवन् जिघांसन्तः पत्तयः कर्णमाहवे ।
ते विबाहुशिरस्त्राणाः प्रहताः कर्णसायकैः । पेतुः पृथिव्यां युगपच्छिन्नं शालवनं यथा । २२०५
एवं योधशतान्याजौ सहस्राण्ययुतानि च । हतानीयुर्महीं देहैर्यशसा पूरयन् दिशः ।
अथ वैकर्त्तनं कर्णं रणे क्रुद्धमिवान्तकं । रुरुधुः पाण्डुपाञ्चाला व्याधिं मन्त्रौषधैरिव ।
स तान् प्रमृद्याभ्यपतत् पुनरेव युधिष्ठिरं । मन्त्रौषधिक्रियाऽतीतो व्याधिरत्युल्वणो यथा ।
स राजगृद्धिभी रुद्धः पाण्डुपाञ्चालकेकयैः । नाशकत्तानतिक्रान्तुं मृत्युर्ब्रह्मविदो यथा ।
ततो युधिष्ठिरः कर्णमदूरस्थं निवारितं । अब्रवीत् परवीरघ्नं क्रोधसंरक्तलोचनः । २२१०
कर्ण कर्ण वृथा दृष्टे सूतपुत्र वचः शृणु । सदा स्पर्द्धसि संग्रामे फाल्गुनेन तरस्विना ।
तथाऽस्मान् बाधसे नित्यं धार्त्तराष्ट्रमते स्थितः । यद्बलं यच्च ते वीर्य्यं प्रद्वेषो यश्च पाण्डुषु ।
तत् सर्व्वं दर्शयस्वाद्य पौरुषं महदास्थितः । युद्धश्रद्धाञ्च तेऽद्याहं विनेष्यामि महाहवे ।
एवमुक्त्वा महाराज कर्णं पाण्डुसुतस्तदा । सुवर्णपुङ्खैर्दशभिर्विव्याधायसमयैः शरैः ।
तं सूतपुत्रो दशभिः प्रत्यविध्यदरिन्दमः । वत्सदन्तैर्महेष्वासः प्रहसन्निव भारत । २२१५
सोऽवज्ञाय तु निर्विद्धः सूतपुत्रेण मारिष । प्रजज्वाल ततः क्रोधाद्धविषेव हुताशनः ।
ज्वालामालापरिक्षिप्तो राज्ञो देहो व्यदृश्यत । युगान्ते दग्धुकामस्य संवर्त्ताग्नेरिवापरः
ते प्रदीप्तायुधधरा दीप्तचक्राम्बरध्वजाः । सैनिकाश्चाथ राजेन्द्र व्यद्रवन्त दिशो दश ।
ततो विस्फार्य्य सुमहच्चापं हेमपरिष्कृतं । समाधत्त शितं बाणं गिरीणामपि दारणं ।
ततः पूर्णायतोत्कृष्टं यमदण्डनिभं शरं । मुमोच त्वरितो राजा सूतपुत्रजिघांसया । २२२०
स तु वेगवता मुक्तो बाणो वज्राशनिस्वनः । विवेश सहसा कर्णं सव्ये पार्श्वे महारथं ।
स तु तेन प्रहारेण पीडितः प्रमुमोह वै । स्रस्तगात्रो महाबाहुर्धनुरुत्सृज्य स्यन्दने ।
ततो हाहाकृतं सैन्यं धार्त्तराष्ट्रस्य महत् । विवर्णमुखभूयिष्ठं कर्णं दृष्ट्वा तथागतं ।

सिंहनादश्च सञ्जज्ञे क्ष्वेडाः किलकिलास्तथा। पाण्डवानां महाराज दृष्ट्वा राज्ञः पराक्रमं।
प्रतिलभ्य तु राधेयः संज्ञां नातिचिरादिव। दध्रे राजविनाशाय मनः क्रूरपराक्रमः। २१२५
स हेमविकृतं चापं विस्फार्य्य विजयं महत्। अवाकिरदमेयात्मा पाण्डवं निशितैः शरैः।
ततः क्षुराभ्यां पाञ्चाल्यौ चक्ररक्षौ महात्मनः। जघान चन्द्रदेवञ्च दण्डधारञ्च संयुगे।
तावुभौ धर्म्मराजस्य प्रवीरौ परिपार्श्वतः। रथाभ्याशे चकाशेते चन्द्रस्येव पुनर्व्वसू।
युधिष्ठिरः पुनः कर्णमविध्यत्त्रिंशता शरैः। सुषेणं सत्यसेनञ्च त्रिभिस्त्रिभिरताडयत्।
शल्यं नवत्या विव्याध त्रिसप्तत्या च सूतजं। तांश्चास्य गोप्तॄन् विव्याध त्रिभिस्त्रिभिरजिह्मगैः। २१३०
ततः प्रहस्याधिरथिर्व्विधुन्वानः स कार्म्मुकं। छित्त्वा भल्लेन राजानं विद्ध्वा षष्ट्याऽनदत्तदा।
ततः प्रवीराः पाण्डूनामभ्यधावन्नमर्षिताः। युधिष्ठिरं परीप्सन्तः कर्णमभ्यर्द्दयञ्छरैः।
सात्यकिश्चेकितानश्च युयुत्सुः पाण्ड्य एव च। धृष्टद्युम्नः शिखण्डी च द्रौपदेयाः प्रभद्रकाः।
यमौ च भीमसेनश्च शिशुपालस्य चात्मजः। कारूषा मत्स्यशेषाश्च कैकेयाः काशिकोशलाः।
एते च त्वरिता वीरा वसुषेणमताडयन्। जनमेजयश्च पाञ्चाल्यः कर्णं विव्याध सायकैः। २१३५
वराहकर्णनाराचैर्नालीकैर्निशितैः शरैः। वत्सदन्तैर्व्विपाठैश्च क्षुरप्रैश्चटकामुखैः।
नानाप्रहरणैश्चोग्रै रथहस्त्यश्वसादिभिः। सर्व्वतोऽभ्यद्रवन् कर्णं परिवार्य्य जिघांसया।
स पाण्डवानां प्रवरैः सर्व्वतः समभिद्रुतः। उदीरयत् ब्राह्ममस्त्रं शरैरापूरयन् दिशः।
ततः शरमहाज्वालो वीर्य्योष्मा कर्णपावकः। निर्द्दहन् पाण्डववनं वीरः पर्य्यचरद्रणे।
स सन्धाय महास्त्राणि महेष्वासो महामनाः। प्रहस्य पुरुषेन्द्रस्य शरैश्चिच्छेद कार्म्मुकं। २१४०
ततः सन्धाय नवतिं निमेषान्नतपर्व्वणः। बिभेद कवचं राज्ञो रणे कर्णः शितैः शरैः।
तद्वर्म्म हेमविकृतं रत्नचित्रं बभौ पतत्। सविद्युदभ्रं सवितुः श्लिष्टं वातहतं यथा।
तदङ्गात् पुरुषेन्द्रस्य भ्रष्टं वर्म्म व्यरोचत। रत्नैरलङ्कृतं दिव्यैर्व्यभ्रं निशि यथा नभः।
छिन्नवर्म्मा शरैः पार्थो रुधिरेण समुक्षितः। ततः सर्व्वायसीं शक्तिं चिक्षेपाधिरथिं प्रति।
तां ज्वलन्तीमिवाकाशे शरैश्चिच्छेद सप्तभिः। सा छिन्ना भूमिमगमन्महेष्वासस्य सायकैः। २१४५
ततो बाह्वोर्ललाटे च हृदि चैव युधिष्ठिरः। चतुर्भिस्तोमरैः कर्णं ताडयित्वाऽनदन्मुदा।
उद्भिन्नरुधिरः कर्णः क्रुद्धः सर्प इव श्वसन्। ध्वजं चिच्छेद भल्लेन त्रिभिर्व्विव्याध पाण्डवं।
इषुधी चास्य चिच्छेद रथञ्च तिलशोऽच्छिनत्। कालवालास्तु ये पार्थं दन्तवर्णा वहन् हयाः।
तैर्युक्तं रथमास्थाय प्रायाद्राजा पराङ्मुखः। एवं पार्थोऽभ्युपायात्स निहतः पार्ष्णिसारथिः।
अशक्नुवन् प्रमुखतः स्थातुं कर्णस्य दुर्म्मनाः। अभिद्रुत्य तु राधेयः पाण्डुपुत्रं युधिष्ठिरं। २१५०
वज्रच्छत्राङ्कुशैर्म्मत्स्यैर्ध्वजकूर्म्माम्बुजादिभिः। लक्षणैरुपपन्नेन पाण्डुना पाण्डुनन्दनं।
पवित्रीकर्त्तुमात्मानं स्कन्धे संस्पृश्य पाणिना। ग्रहीतुमिच्छन् स बलात् कुन्तीवाक्यञ्च सोऽस्मरत्।
तं शल्यः प्राह मा कर्ण गृहीथाः पार्थिवोत्तमं। गृहीतमात्रो हत्वा त्वां मा करिष्यति भस्मसात्।

अब्रवीत् प्रहसन् राजन् कुत्सयन्निव पाण्डवं । कथं नाम कुले जातः क्षत्रधर्म्मव्यवस्थितः ।
प्रजह्यात् समरं भीतः प्राणान् रक्षन् महाहवे । न भवान् क्षत्रधर्म्मेषु कुशलोऽस्तीति मे मतिः । 　　२२५५
ब्राह्मे बले भवान् युक्तः स्वाध्याये यज्ञकर्म्मणि । मा स्म युध्यस्व कौन्तेय मा स्म वीरान् समासदः ।
मा चैतानप्रियं ब्रूहि मा वै व्रज महारणं । एवमुक्त्वा ततः पार्थं विसृज्य च महाबलः ।
न्यहनत् पाण्डवीं सेनां वज्रहस्त इवासुरीं । ततोऽपायद्द्रुतं राजन् व्रीडन्निव नरेश्वरः ।
अथापयातं राजानं मत्वाऽन्वीयुस्तमच्युतं । चेदिपाण्डवपाञ्चालाः सात्यकिश्च महारथः ।
द्रौपदेयास्तथा शूरा माद्रीपुत्रौ च पाण्डवौ । ततो युधिष्ठिरानीकं दृष्ट्वा कर्णः पराङ्मुखं । 　　२२६०
कुरुभिः सहितो वीरः प्रहृष्टः पृष्ठतोऽन्वगात् । भेरीशङ्खमृदङ्गानां कार्म्मुकाणाञ्च निस्वनः ।
बभूव धार्त्तराष्ट्राणां सिंहनादरवस्तथा । युधिष्ठिरस्तु कौरव्य रथमारुह्य सत्वरं ।
श्रुतकीर्त्तेर्म्महाराज दृष्टवान् कर्णविक्रमं । काल्यमानं बलं दृष्ट्वा धर्म्मराजो युधिष्ठिरः ।
स्वान् योधानब्रवीत् क्रुद्धो निघ्नतैतान् किमासत । ते च राज्ञाऽभ्यनुज्ञाताः पाण्डवानां महारथाः ।
भीमसेनमुखाः सर्व्वे पुत्रांस्ते प्रत्युपाद्रवन् । अभवत्तुमुलः शब्दो योधानां तव भारत । 　　२२६५
रथहस्त्यश्वपत्तीनां शस्त्राणाञ्च ततस्ततः । उत्तिष्ठत प्रहरत प्रैताभिपततेति च ।
इति ब्रुवाणा ह्यन्योन्यं जघ्नुर्योधा महारणे । अभ्रच्छायेव तत्रासीच्छरवृष्टिभिरम्बरे ।
समावृतैर्न्नरवरैर्न्निघ्नद्भिरितरेतरं । विपताकध्वजच्छत्रा व्यश्वसूतायुधा रणे ।
व्यङ्गाङ्गावयवाः पेतुः क्षितौ क्षीणाः क्षितीश्वराः । प्रवरादिव शैलानां शिखराणि द्विपोत्तमाः ।
सारोहा निहताः पेतुर्व्वज्रभिन्ना इवाद्रयः । छिन्नभिन्नविपर्य्यस्तैर्व्वर्म्मालङ्कारभूषणैः । 　　२२७०
प्रतिवीरैश्च संमर्द्दे पत्तिसङ्घाः सहस्रशः । विशालायतताम्राक्षैः पद्मेन्दुसदृशाननैः ।
शिरोभिर्युद्धशौण्डानां सर्व्वतः संवृता मही । यथा भुवि तथा व्योम्नि निस्वनं शुश्रुवुर्ज्जनाः ।
विमानैरप्सरःसङ्घैर्गीतवादित्रनिस्वनैः । हतानभिमुखान् वीरान् वीरैः शतसहस्रशः ।
आरोप्यारोप्य गच्छन्ति विमानेष्वप्सरोगणाः । तद्दृष्ट्वा महदाश्चर्य्यं प्रत्यक्षं स्वर्गलिप्सया ।
प्रहृष्टमनसः शूराः क्षिप्रं जघ्नुः परस्परं । रथिनो रथिभिः सार्द्धं चित्रं युयुधुराहवे । 　　२२७५
पत्तयः पत्तिभिर्न्नागाः सह नागैर्हयैर्हयाः । एवं प्रवृत्ते सङ्ग्रामे गजवाजिनरक्षये ।
सैन्येन रजसा वृत्ते स्वे स्वान् जघ्नुः परे परान् । कचाकचि युद्धमासीद्दन्तादन्ति नखानखि ।
मुष्टियुद्धं नियुद्धञ्च देहपाप्मासुनाशनं । तथा वर्त्तति सङ्ग्रामे गजवाजिनरक्षये ।
नराश्वनागदेहेभ्यः प्रसृता लोहितापगा । नराश्वनरदेहान् सा व्युवाह पतितान् बहून् ।
नराश्वगजसम्बाधे नराश्वगजसादिनां । लोहितोदा महाघोरा मांसशोणितकर्द्दमा । 　　२२८०
नराश्वगजदेहानां वहन्ती भीरुभीषणा । तस्याः पारमपारञ्च व्रजन्ति विजयैषिणः ।
गाधेन चाप्लवन्तश्च निमज्ज्योन्मज्ज्य चापरे । ते तु लोहितदिग्धाङ्गा रक्तवर्म्मायुधाम्बराः ।
सस्नुस्तस्यां पपुश्चास्यां मम्लुश्च भरतर्षभ । रथानश्वान्नरान्नागानायुधाभरणानि च ।

वसनान्यथ वर्म्माणि वध्यमानान् हतानपि । भूमिं खं द्यान्दिशश्चैव प्रायः पश्याम लोहितां ।
लोहितस्य तु गन्धेन स्पर्शेन च रसेन च । रूपेण चातिरिक्तेन शब्देन च विसर्पता । २२८५
विषादः सुमहानासीत् प्रायः सैन्यस्य भारत । तत्तु विप्रहतं सैन्यं भीमसेनमुखास्तदा ।
भूयः समाद्रवन् वीराः सात्यकिप्रमुखास्तदा । तेषामापततां वेगमविषह्य महात्मनां ।
पुत्राणां ते महासैन्यमासीद्राजन् पराङ्मुखं । तत्प्रकीर्णरथाश्वेभं नरवाजिसमाकुलं ।
विध्वस्तचर्म्मकवचं प्रविद्धायुधकार्मुकं । व्यद्रवत्तावकं सैन्यं लोड्यमानं समन्ततः ।
सिंहार्द्दितमिवारण्ये यथा गजकुलं तथा । २२९०

इति श्रीमहाभारते कर्णपर्व्वणि सङ्कुलयुद्धे ऊनपञ्चाशोऽध्यायः ॥ ४९ ॥

॥ सञ्जय उवाच ॥ तानभिद्रवतो दृष्ट्वा पाण्डवांस्तावकं बलं । दुर्य्योधनो महाराज वारयामास सर्व्वशः ।
योधांश्च स्वबलञ्चैव समन्ताद्भरतर्षभ । क्रोशतस्तव पुत्रस्य न स्म राजन् न्यवर्त्तत ।
ततः पक्षः प्रपक्षश्च शकुनिश्चापि सौबलः । तदा सशस्त्राः कुरवो भीममभ्यद्रवन्रणे ।
कर्णोऽपि दृष्ट्वा द्रवतो धार्त्तराष्ट्रान् सराजकान् । मद्रराजमुवाचेदं याहि भीमरथम्प्रति ।
एवमुक्तस्तु कर्णेन शल्यो मद्राधिपस्तदा । हंसवर्णान् हयानग्र्यान् प्रैषीद्यत्र वृकोदरः । २२९५
ते प्रेरिता महाराज शल्येनाहवशोभिना । भीमसेनरथं प्राप्य समसज्जन्त वाजिनः ।
दृष्ट्वा कर्णं समायान्तं भीमः क्रोधसमन्वितः । मतिञ्चक्रे विनाशाय कर्णस्य भरतर्षभ ।
सोऽब्रवीत् सात्यकिं वीरं धृष्टद्युम्नञ्च पार्षतं । यूयं रक्षत राजानं धर्म्मात्मानं युधिष्ठिरं ।
संशयान्महतो मुक्तं कथञ्चित् प्रेक्षतो मम । अग्रतो मे कृतो राजा छिन्नसर्व्वपरिच्छदः ।
दुर्य्योधनस्य प्रीत्यर्थं राधेयेन दुरात्मना । अन्तमद्य गमिष्यामि तस्य दुःखस्य पार्षत । २३००
हन्ताऽस्म्यद्य रणे कर्णं स वा मां निहनिष्यति । सङ्ग्रामेण सुघोरेण सत्यमेतत् ब्रवीमि ते ।
राजानमद्य भवतां न्यासभूतं ददामि वै । तस्य संरक्षणे सर्व्वे यतध्वं विगतज्वराः ।
एवमुक्त्वा महाबाहुः प्रायादाधिरथिं प्रति । सिंहनादेन महता सर्व्वाः सन्नादयन् दिशः ।
दृष्ट्वा त्वरितमायान्तं भीमं युद्धाभिनन्दिनं । सूतपुत्रमथोवाच मद्राणामीश्वरो विभुः ।
॥ शल्य उवाच ॥ पश्य कर्ण महाबाहुं सङ्क्रुद्धं पाण्डुनन्दनं । दीर्घकालार्ज्जितं क्रोधं मोक्तुकामं त्वयि ध्रुवं । २३०५
ईदृशं नास्य रूपं मे दृष्टपूर्व्वं कदाचन । अभिमन्यौ हते कर्ण राक्षसे च घटोत्कचे ।
त्रैलोक्यस्य समस्तस्य शक्तः क्रुद्धो निवारणे । बिभर्त्ति यादृशं रूपं युगान्ताग्निसमप्रभं ।
॥ सञ्जय उवाच ॥ इति ब्रुवति राधेयं मद्राणामीश्वरे नृप । अभ्यवर्त्तत वै कर्णं क्रोधदीप्तो वृकोदरः ।
अथागतन्तु सम्प्रेक्ष्य भीमं युद्धाभिनन्दिनं । अब्रवीद्वचनं शल्यं राधेयः प्रहसन्निव ।
यदुक्तं वचनं मेऽद्य त्वया मद्रजनेश्वर । भीमसेनं प्रति विभो तत् सत्यं नात्र संशयः । २३१०
एष शूरश्च वीरश्च क्रोधनश्च वृकोदरः । निरपेक्षः शरीरे च प्राणतश्च बलाधिकः ।
अज्ञातवासं वसता विराटनगरे तदा । द्रौपद्याः प्रियकामेन केवलं बाहुसंश्रयात् ।

गूढभावं समाश्रित्य कीचकः सगणो हतः। सोऽद्य संग्रामशिरसि संनद्धः क्रोधमूर्च्छितः।
किङ्करोद्यतदण्डेन मृत्युनाऽपि व्रजेद्रणं। चिरकालाभिलषितो ममायन्तु मनोरथः।
अर्ज्जुनं समरे हन्यां मां वा हन्याद्धनञ्जयः। स मे कदाचिदद्यैव भवेद्भीमसमागमात्। २४१५
निहते भीमसेने वा यदि वा विरथीकृते। अभियास्यति मां पार्थस्तन्मे साधु भविष्यति।
अत्र यन्मन्यसे प्राप्तं तच्छीघ्रं सम्प्रधारय। एतच्छ्रुत्वा तु वचनं राधेयस्यामितौजसः।
उवाच वचनं शल्यः सूतपुत्रं तथागतं। अभियाहि महाबाहो भीमसेनं महाबलं।
निरस्य भीमसेनन्तु ततः प्राप्स्यसि फाल्गुनं। यस्ते कामोऽभिलषितश्चिरात् प्रभृति हृद्गतः।
स वै संपत्स्यते कर्ण सत्यमेतत् ब्रवीमि ते। एवमुक्ते ततः कर्णः शल्यं पुनरभाषत। २४२०
हन्ताऽहमर्ज्जुनं संख्ये मां वा हन्याद्धनञ्जयः। युद्धे मनः समाधाय याहि यत्र वृकोदरः।
॥ सञ्जय उवाच ॥ ततः प्रायाद्रथेनाशु शल्यस्तत्र विशाम्पते। यत्र भीमो महेष्वासो व्यद्रावयत वाहिनीं।
ततस्तूर्य्यनिनादश्च भेरीणाञ्च महास्वनः। उदतिष्ठच्च राजेन्द्र कर्णभीमसमागमे।
भीमसेनोऽथ संक्रुद्धस्तव सैन्यं दुरासदं। नाराचैर्व्विमलैस्तीक्ष्णैर्द्दिशः प्राद्रावयद्बली।
स सन्निपातस्तुमुलो घोररूपो विशाम्पते। आसीद्रौद्रो महाराज कर्णपाण्डवयोर्मृधे। २४२५
ततो मुहूर्त्ताद्राजेन्द्र पाण्डवः कर्णमाद्रवत्। समागतन्तं सम्प्रेक्ष्य कर्णो वैकर्त्तनो वृषः।
आजघान सुसंक्रुद्धो नाराचेन स्तनान्तरे। पुनश्चैनममेयात्मा शरवर्षैरवाकिरत्।
स विद्धः सूतपुत्रेण च्छादयामास पत्रिभिः। विव्याध निशितैः कर्णं नवभिर्नतपर्व्वभिः।
तस्य कर्णो धनुर्मध्ये द्विधा चिच्छेद पत्रिभिः। अथैनं छिन्नधन्वानं प्रत्यविध्यत् स्तनान्तरे।
नाराचेन सुतीक्ष्णेन सर्व्वावरणभेदिना। सोऽन्यत् कार्म्मुकमादाय सूतपुत्रं वृकोदरः। २४३०
राजन् मर्म्मसु मर्म्मज्ञो विव्याध निशितैः शरैः। ननाद बलवन्नादं कम्पयन्निव रोदसी।
तं कर्णः पञ्चविंशत्या नाराचेन समार्पयत्। मदोत्कटं वने दृप्तमुल्काभिरिव कुञ्जरं।
ततः सायकभिन्नाङ्गः पाण्डवः क्रोधमूर्च्छितः। संरम्भामर्षताम्राक्षः सूतपुत्रवधेप्सया।
स कार्म्मुके महावेगं भारसाधनमुत्तमं। गिरीणामपि भेत्तारं सायकं समयोजयत्।
विकृष्य बलवच्चापमाकर्णादतिमारुतिः। तं मुमोच महेष्वासः क्रुद्धः कर्णजिघांसया। २४३५
स विसृष्टो बलवता वाणो वज्राशनिस्वनः। अदारयद्रणे कर्णं वज्रवेगो यथाऽचलं।
भीमसेनेनाभिहतः सूतपुत्रः कुरूद्वह। निषसाद रथोपस्थे विसंज्ञः पृतनापतिः।
ततो मद्राधिपो दृष्ट्वा विसंज्ञं सूतनन्दनं। अपोवाह रथेनाजौ कर्णमाहवशोभिनं।
ततः पराजिते कर्णे धार्त्तराष्ट्रीं महाचमूं। व्यद्रावयद्भीमसेनो यथेन्द्रो दानवान् पुरा।
इति श्रीमहाभारते कर्णपर्व्वणि कर्णापयाने पञ्चाशोऽध्यायः॥ ५० ॥
॥ धृतराष्ट्र उवाच ॥ सुदुष्करमिदं कर्म्म कृतं भीमेन सञ्जय। येन कर्णो महाबाहूरथोपस्थे निपातितः। २४४०
कर्णो ह्येको रणे हन्ता पाण्डवान् सृञ्जयैः सह। इति दुर्य्योधनः सूत प्राब्रवीन्मां मुहुर्मुहुः।

पराजितन्तु राधेयं दृष्ट्वा भीमेन संयुगे। ततः परं किमकरोत् पुत्रो दुर्योधनो मम ॥

॥ सञ्जय उवाच ॥ विमुखं प्रेक्ष्य राधेयं सूतपुत्रं महाहवे। पुत्रस्तव महाराज सोदर्य्यान् समभाषत ॥

शीघ्रं गच्छत भद्रं वो राधेयं परिरक्षत। भीमसेनभयागाधे मज्जन्तं व्यसनार्णवे ॥

ते तु राज्ञा समादिष्टा भीमसेनं जिघांसवः। अभ्यवर्त्तन्त संक्रुद्धाः पतङ्गाः पावकं यथा ॥ २९४५

श्रुतवान् दुर्द्धरः क्राथो विवित्सुर्विकटः समः। निषङ्गी कवची पाशी तथा नन्दोपनन्दकौ ॥

दुष्प्रधर्षः सुबाहुश्च वातवेगसुवर्च्चसौ। धनुर्ग्राहो दुर्मदश्च जलसन्धः शलः सहः ॥

एतै रथैः परिवृता वीर्य्यवन्तो महाबलाः। भीमसेनं समासाद्य समन्तात् पर्य्यवारयन् ॥

ते व्यमुञ्चञ्छरव्रातान्नानालिङ्गान् समन्ततः। स तैरभ्यर्द्यमानस्तु भीमसेनो महाबलः ॥

तेषामापततां क्षिप्रं सुतानां ते जनाधिप। रथैः [illegible] सार्द्धं [illegible] ॥ २९५०

विविंशतेस्ततः क्रुद्धो भल्लेनापाहरच्छिरः। भीमसेनो महाराज तत् पपात हतं भुवि ॥

सकुण्डलशिरस्त्राणं पूर्णचन्द्रसमं तथा। तं दृष्ट्वा निहतं शूरं भ्रातरः सर्व्वतः प्रभो ॥

अभ्यद्रवन्त समरे भीमं भीमपराक्रमं। ततोऽपराभ्यां भल्लाभ्यां पुत्रयोस्ते महाहवे ॥

जहार समरे प्राणान् भीमो भीमपराक्रमः। तौ धरामन्वपद्येतां वातरुग्णाविव द्रुमौ ॥

विकटश्च समश्चोभौ देवपुत्रसमौ नृप। ततस्तु त्वरितो भीमः क्राथं निन्ये यमक्षयं ॥ २९५५

नाराचेन सुतीक्ष्णेन स हतो न्यपतद्भुवि। हाहाकारस्ततस्तीव्रः सम्बभूव जनेश्वर ॥

वध्यमानेषु वीरेषु तव पुत्रेषु धन्विषु। तेषां सुलुलिते सैन्ये भीमसेनो महाबलः ॥

नन्दोपनन्दौ समरे प्रापयद्यमसादनं। ततस्ते प्राद्रवन् भीताः पुत्रास्ते विह्वलीकृताः ॥

भीमसेनं रणे दृष्ट्वा कालान्तकयमोपमं। पुत्रांस्ते निहतान् दृष्ट्वा सूतपुत्रः सुदुर्मनाः ॥

हंसवर्णान् हयान् भूयः प्रैषयद्यत्र पाण्डवः। ते प्रेषिता महाराज मद्रराजेन वाजिनः ॥ २९६०

भीमसेनरथम्प्राप्य समसज्जन्त वेगिताः। स सन्निपातस्तुमुलो घोररूपो विशाम्पते ॥

आसीद्रौद्रो महाराज कर्णपाण्डवयोर्मृधे। दृष्ट्वा मम महाराज तौ समेतौ महारथौ ॥

आसीद्बुद्धिः कथं युद्धमेतदद्य भविष्यति। ततो भीमो रणश्लाघी छादयामास पत्रिभिः ॥

कर्णं रणे महाराज पुत्राणां तव पश्यतां। ततः कर्णो भृशं क्रुद्धो भीमं नवभिरायसैः ॥

विव्याध परमास्त्रज्ञो भल्लैः सन्नतपर्व्वभिः। आहतः स महाबाहुर्भीमो भीमपराक्रमः ॥ २९६५

आकर्णपूर्णैर्विशिखैः कर्णं विव्याध सप्तभिः। ततः कर्णो महाराज आशीविष इव श्वसन् ॥

शरवर्षेण महता छादयामास पाण्डवं। भीमोऽपि तं शरव्रातैश्छादयित्वा महारथं ॥

पश्यतां कौरवेयाणां विननर्द महाबलः। ततः कर्णो भृशं क्रुद्धो दृढमादाय कार्मुकं ॥

भीमं विव्याध दशभिः कङ्कपत्रैः शिलाशितैः। कार्मुकञ्चास्य चिच्छेद भल्लेन निशितेन च ॥

ततो भीमो महाबाहुर्हेमपट्टविभूषितं। परिघं घोरमादाय मृत्युदण्डमिवापरं ॥ २९७०

कर्णस्य निधनाकाङ्क्षी चिक्षेपातिबलो नदन्। तमापतन्तं परिघं वज्राशनिसमस्वनं ॥

चिच्छेद बहुधा कर्णः शरैराशीविषोपमैः । ततः कार्मुकमादाय भीमो दृढतरं तदा ।
छादयामास विशिखैः कर्णं परबलार्द्दनं । ततो युद्धमभूद्घोरं कर्णमारुतयोर्मृधे ।
हरीन्द्रयोरिव मुहुः परस्परवधैषिणोः । ततः कर्णो महाराज भीमसेनं त्रिभिः शरैः ।
आकर्णमूलं विव्याध दृढमायम्य कार्मुकं । सोऽतिविद्धो महेष्वासः कर्णेन बलिनाम्वरः । २५७५
घोरमादत्त विशिखं कर्णकायावदारणं । तस्य भित्त्वा तनुत्राणं भित्त्वा कायञ्च सायकः ।
प्राविशद्धरणीं राजन् वल्मीकमिव पन्नगः । स तेनातिप्रहारेण व्यथितो विह्वलन्निव ।
सञ्चचाल रथे कर्णः क्षितिकम्पे यथाऽचलः । ततः कर्णो महाराज रोषामर्षसमन्वितः ।
पाण्डवं पञ्चविंशत्या नाराचानां समार्पयत् । आजघ्ने बहुभिर्बाणैर्ध्वजमेकेषुणाऽहनत् ।
सारथिञ्चास्य भल्लेन प्रेषयामास मृत्यवे । छित्त्वा च कार्मुकं तूर्णं पाण्डवस्याशु पत्रिणा । २५८०
ततो मुहूर्त्ताद्राजेन्द्र नातिकृच्छ्राद्धसन्निव । विरथं भीमकर्माणं भीमं कर्णश्चकार ह ।
विरथो भरतश्रेष्ठ प्रहसन्ननिलोपमः । गदां गृह्य महाबाहुरपतत् स्यन्दनोत्तमात् ।
अवप्लुत्य च वेगेन तव सैन्यं विशाम्पते । व्यधमद्गदया भीमः शरन्मेघानिवानिलः ।
नागान् सप्तशतान्राजन्नीषादन्तान् प्रहारिणः । व्यधमत्सहसा भीमः क्रुद्धरूपः परन्तपः ।
दन्तवेष्टेषु नेत्रेषु कुम्भेषु च कटेषु च । मर्म्मस्वपि च मर्म्मज्ञस्तान्नागानवधीद्बली । २५८५
ततस्ते प्राद्रवन् भीताः प्रतीपं प्रहिताः पुनः । महामात्रैस्तमावव्रुर्मेघा इव दिवाकरं ।
तान् स सप्तशतान्नागान् सारोहायुधकेतनान् । भूमिष्ठो गदया जघ्ने वज्रेणेन्द्र इवाचलान् ।
ततः सुबलपुत्त्रस्य नागानतिबलान् पुनः । पोथयामास कौन्तेयो द्विपञ्चाशदरिन्दमः ।
तथा रथशतं साग्रं पत्तींश्च शतशोऽपरान् । न्यहनत् पाण्डवो युद्धे तापयंस्तव वाहिनीं ।
प्रताप्यमानं सूर्य्येण भीमेन च महात्मना । तव सैन्यं सञ्चुकोच चर्म्माग्नावाहितं यथा । २५९०
ते भीमभयसन्त्रस्तास्तावका भरतर्षभ । विहाय समरे भीमं दुद्रुवुर्वै दिशो दश ।
रथाः पञ्चशताश्चान्ये ह्लादिनश्चर्म्मवर्म्मिणः । भीमममभ्यद्रवन् घ्नन्तः शरपूगैः समन्ततः ।
तान् स सप्तशतान् वीरान् सपताकध्वजायुधान् । पोथयामास गदया भीमो विष्णुरिवासुरान् ।
ततः शकुनिनिर्द्दिष्टाः सादिनः शूरसम्मताः । त्रिसाहस्रा ययुर्भीमं शक्त्यृष्टिप्रासपाणयः ।
प्रत्युद्गम्य जवेनाशु साश्वारोहान्सदाऽरिहा । विविधान् विचरन् मार्गान् गदया समपोथयत् । २५९५
तेषामासीन्महाशब्दस्ताडितानाञ्च सर्व्वशः । अश्मभिर्भिद्यमानानां नागानामिव भारत ।
एवं सुबलपुत्त्रस्य त्रिसाहस्रान् हयोत्तमान् । हत्वाऽन्यं रथमास्थाय क्रुद्धो राधेयमभ्ययात् ।
कर्णोऽपि समरे राजन् धर्म्मपुत्त्रमरिन्दमं । स शरैश्छादयामास सारथिञ्चाप्यपातयत् ।
ततः स प्रद्रुतं संख्ये रथं दृष्ट्वा महारथः । अन्वधावत् किरन् बाणैः कङ्कपत्रैरजिह्मगैः ।
राजानमभिधावन्तं शरैरावृत्य रोदसी । क्रुद्धः प्रच्छादयामास शरजालेन मारुतिः । २६००
सन्निवृत्तस्ततस्तूर्णं राधेयः शत्रुकर्षणः । भीमं प्रच्छादयामास समन्तान्निशितैः शरैः ।

भीमसेनरथं प्राप्तं कर्णं भारत सात्यकिः । अभ्यर्द्दयदमेयात्मा पार्ष्णिग्रहणकारणात् ।
अभ्यवर्त्तत कर्णस्त्वर्द्दितोऽपि शरैर्भृशं । तावन्योन्यं समासाद्य वृषभौ सर्व्वधन्विनां ।
विसृजन्तौ शरान् दीप्तान् विभ्राजेतां मनस्विनौ । ताभ्यां वियति राजेन्द्र विततं भीमदर्शनं ।
क्रौञ्चपृष्ठारुणं रौद्रं वाणजालं व्यदृश्यत । नैव सूर्य्यप्रभा राजन् न दिशः प्रदिशस्तथा । २५०५
प्राज्ञासिष्म वयन्ते वा शरैर्मुक्तैः सहस्रशः । मध्याह्ने तपतो राजन भास्करस्य महाप्रभाः ।
हृताः सर्व्वाः शरौघैस्तैः कर्णपाण्डवयोस्तथा । सौबलं कृतवर्म्माणं द्रौणिमाधिरथिं कृपं ।
संसक्तान् पाण्डवैर्दृष्ट्वा निवृत्ताः कुरवः पुनः । तेषामापततां शब्दस्तीव्र आसीद्विशाम्पते ।
उद्धृतानां यथा वृष्ट्या सागराणां भयावहः । ते सेने भृशसंमत्ते दृष्ट्वाऽन्योन्यं महाहवे ।
हर्षेण महता युक्ते परिगृह्य परस्परं । ततः प्रववृते युद्धं मध्यं प्राप्ते दिवाकरे । २५१०
यादृशं न कदाचिद्धि दृष्टपूर्व्वं न च श्रुतं । बलौघस्तु समासाद्य बलौघं सहसा रणे ।
उपासर्पत वेगेन वार्य्यौघ इव सागरं । आसीन्निनादः सुमहान् वाणौघानां परस्परं ।
एकीभावमनुप्राप्ते नद्याविव समागमे । ततः प्रववृते युद्धं घोररूपं विशाम्पते ।
कुरूणां पाण्डवानाञ्च लिप्सतां सुमहद्यशः । शूराणां गर्ज्जतां तत्र अविच्छेदकृता गिरः ।
श्रूयन्ते विविधा राजन् नामान्युद्दिश्य भारत । यस्य यद्धि रणे व्यङ्गं पितृतो मातृतोऽपि वा । २५१५
कर्म्मतः शीलतो वाऽपि स तच्छ्रावयते युधि । तान् दृष्ट्वा समरे शूरांस्तर्ज्जमानान् परस्परं ।
अभवन्मे मतीराजन् नैषामस्तीति जीवितं । तेषां दृष्ट्वा तु क्रुद्धानां वपूंष्यमिततेजसां ।
अभवन्मे भयं तीव्रं कथमेतद्भविष्यति । ततस्ते पाण्डवा राजन् कौरवाश्च महारथाः ।
ततक्षुः सायकैस्तीक्ष्णैर्निघ्नन्तो हि परस्परं ।
इति श्रीमहाभारते कर्णपर्व्वणि सङ्कुलयुद्धे एकपञ्चाशोऽध्यायः ॥ ५१ ॥
॥ सञ्जय उवाच ॥ क्षत्रियास्ते महाराज परस्परवधैषिणः । अन्योन्यं समरे जघ्नुः कृतवैराः परस्परं । २५२०
रथौघाश्च हयौघाश्च नरौघाश्च समन्ततः । गजौघाश्च महाराज संसक्ताश्च परस्परं ।
गदानां परिघाणाञ्च कुणपानाञ्च क्षिप्यतां । प्रासानां भिन्दिपालानां भुशुण्डीनाञ्च सर्व्वशः ।
सम्पातञ्चानुपश्यामः सङ्ग्रामे भृशदारुणे । शलभा इव सम्पेतुः शरवृष्ट्यः समन्ततः ।
नागा नागान् समासाद्य व्यधमन्त परस्परं । हया हयांश्च समरे रथिनो रथिनस्तथा ।
पत्तयः पत्तिसङ्घांश्च हयसङ्घांश्च पत्तयः । पत्तयो रथमातङ्गान्रथा हस्त्यश्वमेव च । २५२५
नागाश्च समरे त्र्यङ्गं ममृदुः शीघ्रगा नृप । बध्यतां तत्र शूराणां क्रोशताञ्च परस्परं ।
घोरमायोधनं जज्ञे पशूनां वैशसं यथा । रुधिरेण समास्तीर्णा भाति भारत मेदिनी ।
शक्रगोपगणाकीर्णा प्रावृषीव यथा धरा । यथा वा वाससी शुक्ले महारजनरञ्जिते ।
बिभृयाद्युवती श्यामा तद्वदासीद्वसुन्धरा । मांसशोणितचित्रेव शातकुम्भमयीव च ।
भिन्नानाञ्चोत्तमाङ्गानां बाहूनां चोरुभिः सह । कुण्डलानां प्रवृद्धानां भूषणानाञ्च भारत । २५३०

निष्काणामथ शूराणां शरीराणाञ्च धन्विनां । चर्म्मणां सपताकानां सङ्घास्तत्रापतन् भुवि ।
गजा गजान् समासाद्य विषाणैरार्द्दयन्नृप । विषाणाभिहतास्तत्र भ्राजन्ते द्विरदास्तथा ।
रुधिरेणावसिक्ताङ्गा गैरिकप्रस्रवा इव । यथा भ्राजन्ति स्यन्दन्तः पर्व्वता धातुमण्डिताः ।
तोमरान् भुजनिर्मुक्तान् प्रतीपानास्थितान् बहून् । हस्तैर्व्विचेरुस्ते नागा बभञ्जुश्चापरे तथा ।
नाराचैश्छिन्नवर्म्माणो भ्राजन्ति स्म गजोत्तमाः । हिमागमे यथा राजन् व्यभ्रा इव महीधराः । २५३५
शरैः कनकपुङ्खैश्च चिता रेजुर्गजोत्तमाः । उल्काभिः सम्प्रदीप्ताग्राः पर्व्वता इव भारत ।
केचिदभ्याहता नागैर्नागा नगनिभोपमाः । विनेशुः समरे तस्मिन् पक्षवन्त इवाद्रयः ।
अपरे प्राद्रवन्नागाः शल्यार्त्ता व्रणपीडिताः । प्रतिमानैश्च कुम्भैश्च पेतुरुर्व्व्यां महाहवे ।
विनेदुः सिंहवच्चान्ये नदन्तो भैरवान् रवान् । बभ्रमुर्ब्बहवो राजंश्चुक्रुशुश्चापरे गजाः ।
हयाश्च निहता बाणैर्हेमभाण्डविभूषिताः । निषेदुश्चैव मम्लुश्च बभ्रमुश्च दिशो दश । २५४०
अपरे कृष्यमाणाश्च विचेष्टन्तो महीतले । भावान् बहुविधांश्चक्रुस्ताडिताः शरतोमरैः ।
नरास्तु निहता भूमौ कूजन्तस्तत्र मारिष । दृष्ट्वा च बान्धवानन्ये पितॄनन्ये पितामहान् ।
धावमानान् परांश्चान्ये दृष्ट्वाऽन्ये तत्र भारत । गोत्रनामानि ख्यातानि शशंसुरितरेतरं ।
तेषां छिन्ना महाराज भुजाः कनकभूषणाः । उद्वेष्टन्ते विचेष्टन्ते पतन्ते चोत्पतन्ति च ।
निपतन्ति तथैवान्ये स्फुरन्ति च सहस्रशः । वेगांश्चान्ये रणे चक्रुः पञ्चास्या इव पन्नगाः । २५४५
ते भुजा भोगिभोगाभाश्चन्दनाक्ता विशाम्पते । लोहितार्द्रा भृशं रेजुस्तपनीयध्वजा इव ।
वर्त्तमाने तथा घोरे सङ्कुले सर्व्वतो दिशं । अविज्ञाताः स्म युध्यन्ते विनिघ्नन्तः परस्परं ।
भौमेन रजसा कीर्णे शस्त्रसम्पातसंकुले । नैव स्वे न परे राजन् व्यज्ञायन्त तमोवृताः ।
तथा तदभवद्युद्धं घोररूपं भयानकं । लोहितोदा महानद्यः प्रसस्रुस्तत्र चासकृत् ।
शीर्षपाषाणसंछन्नाः केशशैवालशाद्वलाः । अस्थिमीनसमाकीर्णा धनुःशरगदोडुपाः । २५५०
मांसशोणितपङ्किन्यो घोररूपाः सुदारुणाः । नदीः प्रवर्त्तयामासुः शोणितौघविवर्द्धिनीः ।
भीरुवित्रासकारिण्यः शूराणां हर्षवर्द्धनाः । ता नद्यो घोररूपास्तु नयन्त्यो यमसादनं ।
अवगाढा मज्जयन्त्यः क्षत्रस्याजनयन् भयं । क्रव्यादानां नरव्याघ्र नर्द्दतां तत्र तत्र ह ।
घोरमायोधनं जज्ञे प्रेतराजपुरोपमं । उत्थितान्यगणेयानि कबन्धानि समन्ततः ।
नृत्यन्ति वै भूतगणाः सुतृप्ता मांसशोणितैः । पीत्वा च शोणितं तत्र वसां पीत्वा च भारत । २५५५
मेदोमज्जावसामत्तास्तृप्ता मांसस्य चैव ह । धावमानाः स्म दृश्यन्ते काककङ्कवकास्तथा ।
शूरास्तु समरे राजन् भयं त्यक्त्वा सुदुस्त्यजं । योधव्रतं समाख्याताश्चक्रुः कर्म्माण्यभीतवत् ।
शरशक्तिसमाकीर्णे क्रव्यादगणसङ्कुले । व्यचरन्त रणे शूराः ख्यापयन्तः स्वपौरुषं ।
अन्योन्यं श्रावयन्ति स्म नामगोत्राणि भारत । पितृनामानि च रणे गोत्रनामानि वा विभो ।
श्रावयाणाश्च बहवस्तत्र योधा विशाम्पते । इतस्ततश्च बहवस्तत्र योधा विशाम्पते । २५६०

अन्योन्यमवमृद्नन्तः शक्तितोमरपट्टिशैः । वर्त्तमाने तथा युद्धे घोररूपे सुदारुणे ।
व्यसीदत् कौरवी सेना भिन्ना नौरिव सागरे ।
इति श्रीमहाभारते कर्णपर्व्वणि सङ्कुलयुद्धे द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
॥ सञ्जय उवाच ॥ वर्त्तमाने महायुद्धे क्षत्रियाणां निमज्जने । गाण्डीवस्य महाघोषः श्रूयते युधि मारिष ।
संशप्तकानां कदनमकरोद्यत्र पाण्डवः । कोशलानां तथा राजन्नारायणबलस्य च ।
संशप्तकास्तु समरे शरवृष्टीः समन्ततः । अपातयन् पार्थमूर्द्ध्नि जयगृद्धाः समन्यवः । २५६५
ता वृष्टीः सहसा राजंस्तरसा धारयन् प्रभुः । व्यगाहत रणे पार्थो विनिघ्नन् रथिनाम्वरान् ।
विगाह्य तद्रथानीकं कङ्कपत्रैः शिलाशितैः । आससाद ततः पार्थः सुशर्म्माणं वरायुधं ।
स तस्य शरवर्षाणि ववर्ष रथिनाम्वरः । तथा संशप्तकाश्चैव पार्थं बाणैः समार्पयन् ।
सुशर्म्मा तु ततः पार्थं विद्ध्वा दशभिराशुगैः । जनार्द्दनं त्रिभिर्बाणैरहनद्दक्षिणे भुजे ।
ततोऽपरेण भल्लेन केतुं विव्याध मारिष । स वानरवरो राजन् विश्वकर्म्मकृतो महान् । २५७०
ननाद सुमहानादं भीषयाणो ननर्द्द च । कपेस्तु निनदं श्रुत्वा सन्त्रस्ता तव वाहिनी ।
भयं विपुलमाधाय निश्चेष्टा समपद्यत । ततः सा शुशुभे सेना निश्चेष्टाऽवस्थिता नृप ।
नानापुष्पसमाकीर्णं यथा चैत्ररथं वनं । प्रतिलभ्य ततः संज्ञां योधास्ते कुरुसत्तम ।
अर्ज्जुनं सिषिचुर्बाणैः पर्व्वतं जलदा इव । परिवव्रुस्ततः सर्व्वे पाण्डवस्य महारथं ।
निगृह्य तं प्रचुक्रुशुर्वध्यमानाः शितैः शरैः । ते हयान् रथचक्रे च रथेषाश्चापि मारिष । २५७५
निग्रहीतुमुपाक्रामन् क्रोधाविष्टाः समन्ततः । निगृह्य तं रथं तस्य योधास्तेषु सहस्रशः ।
निगृह्य बलवत्सर्व्वे सिंहनादमथानदन् । अपरे जगृहुश्चैव केशवस्य महाभुजौ ।
पार्थमन्ये महाराज रथस्थं जगृहुर्मुदा । केशवस्तु ततो बाहू विधुन्वन् रणमूर्द्धनि ।
पातयामास तान् सर्व्वान् दुष्टहस्तीव हस्तिपान् । ततः क्रुद्धो रणे पार्थः संवृतस्तैर्महारथैः ।
निगृहीतं रथं दृष्ट्वा केशवञ्चाप्यभिद्रुतं । रथारूढांस्तु सुबहून् पदातींश्चाप्यपातयत् । २५८०
आसन्नांश्च ततो योधाञ्छरैरासन्नयोधिभिः । छादयामास समरे केशवञ्चेदमब्रवीत् ।
पश्य कृष्ण महाबाहो संशप्तकगणान् बहून् । कुर्व्वाणान् दारुणं कर्म्म वध्यमानान् सहस्रशः ।
रथबन्धमिमं घोरं पृथिव्यां नास्ति कश्चन । यः सहेत पुमाँल्लोके मदन्यो यदुपुङ्गव ।
इत्येवमुक्त्वा बीभत्सुर्देवदत्तमथाधमत् । पाञ्चजन्यञ्च कृष्णोऽपि पूरयन्निव रोदसी ।
तन्तु शङ्खस्वनं श्रुत्वा संशप्तकवरूथिनी । सञ्चचाल महाराज वित्रस्ता चाद्रवद्भृशं । २५८५
पादबन्धं ततश्चक्रे पाण्डवः परवीरहा । नागमस्त्रं महाराज सम्प्रकीर्य्य मुहुर्मुहुः ।
ते बद्धाः पादबन्धेन पाण्डवेन महात्मना । निश्चेष्टा चाभवन् राजन्नश्मसारमया इव ।
निश्चेष्टांस्तु ततो योधानवधीत् पाण्डुनन्दनः । यथेन्द्रः समरे दैत्यांस्तारकस्य वधे पुरा ।
ते वध्यमानाः समरे मुमुचुस्तं रथोत्तमं । आयुधानि च सर्व्वाणि विस्रष्टुमुपचक्रमुः ।

ते बद्धाः पादबन्धेन न शेकुश्चेष्टितुं नृप। ततस्तानवधीत् पार्थः शरैः सन्नतपर्व्वभिः। २५९०
सर्व्वयोधा हि समरे भुजगैर्व्वेष्टिता भवन्। यानुद्दिश्य रणे पार्थ पादबन्धं चकार ह।
ततः सुशर्म्मा राजेन्द्र गृहीतां वीक्ष्य वाहिनीं। सौपर्णमस्त्रं त्वरितः प्रादुश्चक्रे महारथः।
ततः सुपर्णाः सम्पेतुर्भक्षयन्तो भुजङ्गमान्। ते वै विदुद्रुवुर्नागा दृष्ट्वा तान् खेचरान्नृप।
बभौ बलं तद्विमुक्तं पादबन्धाद्विशाम्पते। मेघवृन्दाद्यथा मुक्तो भास्करस्तापयन् प्रजाः।
विप्रमुक्तास्तु ते योधाः फाल्गुनस्य रथम्प्रति। ससृजुर्ब्बाणसङ्घांश्च शस्त्रसङ्घांश्च मारिष। २५९५
विविधानि च शस्त्राणि प्रत्यविध्यन्त सर्व्वशः। तां महास्त्रमयीं वृष्टिं सञ्छिद्य शरवृष्टिभिः।
न्यवधीच्च ततो योधान् वासविः परवीरहा। सुशर्म्मा तु ततो राजन् बाणेनानतपर्व्वणा।
अर्ज्जुनं हृदये विद्धा विव्याधान्यैस्त्रिभिः शरैः। स गाढविद्धो व्यथितो रथोपस्थ उपाविशत्।
तत उच्चुक्रुशुः सर्व्वे हतः पार्थ इति स्म ह। ततः शङ्खनिनादश्च भेरीशब्दाश्च पुष्कलाः।
नानावादित्रनिनदाः सिंहनादाश्च जज्ञिरे। प्रतिलभ्य ततः संज्ञां श्वेताश्वः कृष्णसारथिः। २६००
ऐन्द्रमस्त्रममेयात्मा प्रादुश्चक्रे त्वरान्वितः। ततो बाणसहस्राणि समुत्पन्नानि मारिष।
सर्व्वदिक्षु व्यदृश्यन्त निघ्नन्ति तव वाहिनीं। हयान् रथांश्च समरे शस्त्रैः शतसहस्रशः।
बध्यमाने ततः सैन्ये भयं सुमहदाविशत्। संशप्तकगणानाञ्च गोपालानाञ्च भारत।
न हि तत्र पुमान् कश्चिद्योऽर्ज्जुनं प्रत्यविध्यत। पश्यतां तत्र वीराणामहन्यत बलं तव।
हन्यमानमपश्यंश्च निश्चेष्टं स्म पराक्रमे। अयुतं तत्र योधानां हत्वा पाण्डुसुतो रणे। २६०५
व्यभ्राजत महाराज विधूमोऽग्निरिव ज्वलन्। चतुर्द्दशसहस्राणि यानि दृष्टानि भारत।
रथानामयुतश्चैव त्रिसाहस्राश्च दन्तिनः। ततः संशप्तका भूयः परिवव्रुर्धनञ्जयं।
मर्त्तव्यमिति निश्चित्य जयं वाऽप्यनिवर्त्तनं। तत्र युद्धं महच्चासीत्तावकानां विशाम्पते।
शूरेण बलिना सार्द्धं पाण्डवेन किरीटिना।
इति श्रीमहाभारते कर्णपर्व्वणि संकुलयुद्धे त्रिपञ्चाशोऽध्यायः॥ ५३॥
॥ सञ्जय उवाच॥ कृतवर्म्मा कृपो द्रौणिः सूतपुत्रश्च मारिष। उलूकः सौबलश्चैव राजा च सह सोदरैः। २६१०
सीदमानां चमूं दृष्ट्वा पाण्डुपुत्रभयार्द्दितां। समुज्जह्रुः स्म वेगेन भिन्नां नावमिवार्णवे।
ततो युद्धमतीवासीत् मुहूर्त्तमिव भारत। भीरूणां त्रासजननं शूराणां हर्षवर्द्धनं।
कृपेण शरवर्षाणि प्रतिमुक्तानि संयुगे। सृञ्जयांश्छादयामासुः शलभानां व्रजा इव।
शिखण्डी च ततः क्रुद्धो गौतमं त्वरितो ययौ। ववर्ष शरवर्षाणि समन्तात् द्विजपुङ्गवे।
कृपस्तु शरवर्षन्तद्विनिहत्य महास्त्रवित्। शिखण्डिनं रणे क्रुद्धो विव्याध दशभिः शरैः। २६१५
ततः शिखण्डी कुपितः शरैः सप्तभिराहवे। कृपं विव्याध कुपितं कङ्कपत्रैरजिह्मगैः।
ततः कृपः शरैस्तीक्ष्णैः सोऽतिविद्धो महारथः। व्यश्वसूतरथञ्चक्रे शिखण्डिनमथो द्विजः।
हताश्वात्तु ततो यानादवप्लुत्य महारथः। खड्गं चर्म्म तथा गृह्य सत्वरं ब्राह्मणं ययौ।

तमापतन्तं सहसा शरैः सन्नतपर्व्वभिः । छादयामास समरे तदद्भुतमिवाभवत् ।
तत्राद्भुतमपश्याम शिलानां प्लवनं यथा । निश्चेष्टस्तु रणे राजञ्छिखण्डी समतिष्ठत । २१२०
शरेण च्छादितं दृष्ट्वा नृपोत्तम शिखण्डिनं । प्रत्युद्ययौ कृपं तूर्णं धृष्टद्युम्नो महारथः ।
धृष्टद्युम्नं ततो यान्तं शारद्वतरथं प्रति । प्रतिजग्राह वेगेन कृतवर्म्मा महारथः ।
युधिष्ठिरमथायान्तं शारद्वतरथं प्रति । सपुत्त्रं सहसैन्यञ्च द्रोणपुत्त्रो न्यवारयत् ।
नकुलं सहदेवञ्च त्वरमाणौ महारथौ । प्रतिजग्राह ते पुत्त्रः शरवर्षेण वारयन् ।
भीमसेनं करूषांश्च केकयान् सह सृञ्जयैः । कर्णो वैकर्त्तनो युद्धे वारयामास भारत । २१२५
शिखण्डिनस्ततो वाणान् कृपः शारद्वतो युधि । प्राहिणोत्त्वरया युक्तो दिधक्षुरिव मारिष ।
ताञ्छरान् प्रेषितांस्तेन समन्तात् स्वर्णभूषितान् । चिच्छेद खड्गमाविध्य भ्रामयंश्च पुनः पुनः ।
शतचन्द्रञ्च तच्चर्म्म गौतमस्तस्य भारत । व्यधमत् सायकैस्तूर्णं तत उच्चुक्रुशुर्जनाः ।
स विचर्म्मा महाराज खड्गपाणिरुपाद्रवत् । कृपस्य वशमापन्नो मृत्योरास्यमिवातुरः ।
शारद्वतशरैर्ग्रस्तं क्लिश्यमानं महाबलः । चित्रकेतुसुतो राजन् सुकेतुस्त्वरितो ययौ । २१३०
विकिरन् ब्राह्मणं युद्धे बहुभिर्निशितैः शरैः । अभ्यापतदमेयात्मा गौतमस्य रथं प्रति ।
दृष्ट्वा च युक्तं तं युद्धे ब्राह्मणञ्चरितव्रतं । अपयातस्ततस्तूर्णं शिखण्डी राजसत्तमः ।
सुकेतुस्तु ततो राजन् गौतमं नवभिः शरैः । विद्ध्वा विव्याध सप्तत्या पुनश्चैनं त्रिभिः शरैः ।
अथास्य सशरञ्चापं पुनश्चिच्छेद मारिष । सारथिञ्च शरेणास्य भृशं मर्म्मण्यताडयत् ।
गौतमस्तु ततः क्रुद्धो धनुर्गृह्य नवं दृढं । सुकेतुं त्रिंशता वाणैः सर्व्वमर्म्मस्वताडयत् । २१३५
स विह्वलितसर्व्वाङ्गः प्रचचाल रथोत्तमे । भूमिकम्पे यथा वृक्षश्चचाल कम्पितो भृशं ।
चलतस्तस्य कायात्तु शिरो ज्वलितकुण्डलं । सोष्णीषं सशिरस्त्राणं क्षुरप्रेण न्यपातयत् ।
तच्छिरः प्रापतद्भूमौ श्येनाहृतमिवामिषं । ततोऽस्य कायो वसुधां पश्चात् प्रापतदच्युतं ।
तस्मिन् हते महाराज त्रस्तास्तस्य पुरोगमाः । गौतमं समरे त्यक्त्वा दुद्रुवुस्ते दिशो दश ।
धृष्टद्युम्नन्तु समरे सन्निवार्य्य महारथः । कृतवर्म्माऽब्रवीद्धृष्टस्तिष्ठ तिष्ठेति भारत । २१४०
तदभूत्तुमुलं युद्धं वृष्णिपार्षतयो रणे । आमिषार्थे यथा युद्धं श्येनयोः क्रुद्धयोर्नृप ।
धृष्टद्युम्नस्तु समरे हार्द्दिक्यं नवभिः शरैः । आजघानोरसि क्रुद्धः पीडयन् हृदिकात्मजं ।
कृतवर्म्मा तु समरे पार्षतेन दृढाहतः । पार्षतं सरथं साश्वं छादयामास सायकैः ।
स रथश्छादितो राजन् धृष्टद्युम्नो न दृश्यते । मेघैरिव परिच्छन्नो भास्करो जलधारिभिः ।
विधूय तं वाणगणं शरैः कनकभूषणैः । व्यरोचत रणे राजन् धृष्टद्युम्नः कृतव्रणः । २१४५
ततस्तु पार्षतः क्रुद्धः शस्त्रवृष्टिं सुदारुणां । कृतवर्म्माणमासाद्य व्यसृजत् पृतनापतिः ।
तामापतन्तीं सहसा शस्त्रवृष्टिं सुदारुणां । शरैरनेकसाहस्रैर्हार्द्दिक्यो व्यधमद्युधि ।
दृष्ट्वा तु वारितां युद्धे शरवृष्टिं दुरासदां । कृतवर्म्माणमासाद्य वारयामास पार्षतः ।

सारथिञ्चास्य तरसा प्राहिणोद्यमसादनं । भल्लेन शितधारेण स हतः प्रापतद्रथात् ।
धृष्टद्युम्नस्तु बलवान् जित्वा शत्रुं महाबलं । कौरवान् समरे तूर्णं वारयामास सायकैः । २८५०
ततस्ते तावका योधा धृष्टद्युम्नमुपाद्रवन् । सिंहनादरवं कृत्वा ततो युद्धमवर्त्तत ।
इति श्रीमहाभारते कर्णपर्व्वणि संकुलयुद्धे चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

॥ सञ्जय उवाच ॥ द्रौणिर्युधिष्ठिरं दृष्ट्वा शैनेयेनाभिरक्षितं । द्रौपदेयैस्तथा शूरैरभ्यवर्त्तत हृष्टवत् ।
किरन्निषुगणान् घोरान् स्वर्णपुङ्खान् शिलाशितान् । दर्शयन् विविधान् मार्गान् शिक्षाश्च लघुहस्तवत् ।
ततः खं पूरयामास शरैर्दिव्यास्त्रमन्त्रितैः । युधिष्ठिरञ्च समरे परिवार्य्य महास्त्रवित् ।
द्रौणायनिशरच्छन्नं न प्राज्ञायत किञ्चन । बाणभूतमभूत्सर्व्वमायोधनशिरो महत् । २८५५
बाणजालं दिवि च्छन्नं स्वर्णजालविभूषितं । शुशुभे भरतश्रेष्ठ वितानमिव धिष्ठितं ।
तेन च्छन्नं नभो राजन् बाणजालेन भास्वता । अभ्रच्छायेव संजज्ञे बाणरुद्धे नभस्तले ।
तत्राश्चर्य्यमपश्याम बाणभूते तथाविधे । न स्म संपतते भूतं किञ्चिदेवान्तरीक्षगं ।
सात्यकिर्यतमानस्तु धर्म्मराजश्च पाण्डवः । तथेतराणि सैन्यानि न स्म चक्रुः पराक्रमं ।
लाघवं द्रोणपुत्रस्य दृष्ट्वा तत्र महारथाः । व्यस्मयन्त महाराज न चैनं प्रत्युदीक्षितुं । २८६०
शेकुस्ते सर्व्वराजानस्तपन्तमिव भास्करं । वध्यमाने ततः सैन्ये द्रौपदेया महारथाः ।
सात्यकिर्धर्म्मराजश्च पञ्चालाश्चापि संगताः । त्यक्त्वा मृत्युभयं घोरं द्रौणायनिमुपाद्रवन् ।
सात्यकिः पञ्चविंशत्या द्रौणिं विद्धा शिलीमुखैः । पुनर्व्विव्याध नाराचैः सप्तभिः स्वर्णभूषितैः ।
युधिष्ठिरस्त्रिसप्तत्या प्रतिविन्ध्यश्च सप्तभिः । श्रुतकर्म्मा त्रिभिर्व्बाणैः श्रुतकीर्त्तिश्च सप्तभिः ।
सुतसोमस्तु नवभिः शतानीकश्च सप्तभिः । अन्ये च बहवः शूरा विविधुस्तं समन्ततः । २८६५
स तु क्रुद्धस्ततो राजन्नाशीविष इव श्वसन् । सात्यकिं पञ्चविंशत्या प्राविध्यत शिलीमुखैः ।
श्रुतकीर्त्तिञ्च नवभिः सुतसोमञ्च पञ्चभिः । अष्टाभिः श्रुतकर्म्माणं प्रतिविन्ध्यं त्रिभिः शरैः ।
शतानीकञ्च नवभिर्धर्म्मपुत्रञ्च पञ्चभिः । तथेतरांस्ततः शूरान् द्वाभ्यां द्वाभ्यामताडयत् ।
श्रुतकीर्त्तेस्तथा चापं चिच्छेद निशितैः शरैः । अथान्यद्धनुरादाय श्रुतकीर्त्तिर्महारथः ।
द्रौणायनिं त्रिभिर्व्विद्ध्वा विव्याधान्यैः शितैः शरैः । ततो द्रौणिर्महाराज शरवर्षेण मारिष । २८७०
छादयामास तत्सैन्यं समन्ताद्भरतर्षभ । ततः पुनरमेयात्मा धर्म्मराजस्य कार्म्मुकं ।
द्रौणिश्चिच्छेद विहसन् विव्याध च शरैस्त्रिभिः । ततो धर्म्मसुतो राजन् प्रगृह्यान्यन्महद्धनुः ।
द्रौणिं विव्याध सप्तत्या बाह्वोरुरसि चार्पयत् । सात्यकिस्तु ततः क्रुद्धो द्रौणेः प्रहरतो रणे ।
अर्द्धचन्द्रेण तीक्ष्णेन धनुश्छित्वाऽनदद्भृशं । छिन्नधन्वा ततो द्रौणिः शक्त्या शक्तिमतांवरः ।
सारथिं पातयामास शैनेयस्य रथाद्द्रुतं । अथान्यद्धनुरादाय द्रोणपुत्रः प्रतापवान् । २८७५
शैनेयं शरवर्षेण च्छादयामास भारत । तस्याश्वाः प्रद्रुताः संख्ये पतिते रथसारथौ ।
तत्र तत्रैव धावन्तः समदृश्यन्त भारत । युधिष्ठिरपुरोगास्तु द्रौणिं शस्त्रभृतांवरं ।

अभ्यवर्षन्त वेगेन विसृजन्तः शिताञ्छरान्। आगच्छमानांस्तान् दृष्ट्वा क्रुद्धरूपान् परन्तपः।
प्रहसन् प्रतिजग्राह द्रोणपुत्रो महारथे। ततः शरशतज्वालः सेनाकक्षं महारथः।
द्रौणिर्ददाह समरे कक्षमग्निर्यथा वने। तद्बलं पाण्डुपुत्रस्य द्रोणपुत्रः प्रतापितं। १९८०
चुक्षुभे भरतश्रेष्ठ तिमिनेव नदीमुखं। दृष्ट्वा चैव महाराज द्रोणपुत्रपराक्रमं।
निहतान् मेनिरे सर्व्वान् पाण्डून् द्रोणसुतेन वै। युधिष्ठिरस्तु त्वरितो द्रोणशिष्यो महारथः।
अब्रवीद्द्रोणपुत्राय रोषामर्षसमन्वितः। नैव नाम तव प्रीतिर्नैव नाम कृतज्ञता।
यतस्त्वं पुरुषव्याघ्र मामेवाद्य जिघांससि। ब्राह्मणेन तपः कार्य्यं दानमध्ययनन्तथा।
क्षत्रियेण धनुर्नाम्यं स भवान् ब्राह्मणब्रुवः। मिषतस्ते महाबाहो युधि जेष्यामि कौरवान्। १९८५
कुरुष्व समरे कर्म्म ब्रह्मबन्धुरसि ध्रुवं। एवमुक्तो महाराज द्रोणपुत्रः स्मयन्निव।
युक्तं तत्त्वञ्च सञ्चिन्त्य नोत्तरं किञ्चिदब्रवीत्। अनुक्त्वा च ततः किञ्चिच्छरवर्षेण पाण्डवं।
छादयामास समरे क्रुद्धोऽन्तक इव प्रजाः। स च्छाद्यमानस्तु तदा द्रोणपुत्रेण मारिष।
पार्थोऽपयातः शीघ्रं वै विहाय महतीं चमूं। अपयाते ततस्तस्मिन् धर्म्मपुत्रे युधिष्ठिरे।
द्रोणपुत्रस्ततो राजन् प्रत्यगात् स महामनाः। ततो युधिष्ठिरो राजंस्त्यक्त्वा द्रौणिं महाहवे। १९९०
प्रययौ तावकं सैन्यं युक्तः क्रूराय कर्म्मणे।

इति श्रीमहाभारते कर्णपर्व्वणि पार्थापयाने पञ्चपञ्चाशोऽध्यायः॥ ५५ ॥

॥ सञ्जय उवाच ॥ भीमसेनञ्च पाञ्चाल्यं चेदिकेकयसंवृतं। वैकर्त्तनः स्वयं रुद्ध्वा वारयामास सायकैः।
ततस्तु चेदिकारूषान् सृञ्जयांश्च महारथान्। कर्णो जघान समरे भीमसेनस्य पश्यतः।
भीमसेनस्ततः कर्णं विहाय रथसत्तमं। प्रययौ कौरवं सैन्यं कक्षमग्निरिव ज्वलन्।
सूतपुत्रोऽपि समरे पाञ्चालान् केकयांस्तथा। सृञ्जयांश्च महेष्वासान्निजघान सहस्रशः। १९९५
संशप्तकेषु पार्थश्च कौरवेषु वृकोदरः। पाञ्चालेषु तथा कर्णः क्षयञ्चक्रुर्महारथाः।
ते क्षत्रिया दह्यमानास्त्रिभिस्तैः पावकोपमैः। जग्मुर्व्विनाशं समरे राजन् दुर्म्मन्त्रिते तव।
ततो दुर्य्योधनः क्रुद्धो नकुलं नवभिः शरैः। विव्याध भरतश्रेष्ठ चतुरश्चास्य वाजिनः।
ततः पुनरमेयात्मा तव पुत्रो जनाधिप। क्षुरेण सहदेवस्य ध्वजञ्चिच्छेद काञ्चनं।
नकुलस्तु ततः क्रुद्धस्तव पुत्रञ्च सप्तभिः। जघान समरे राजन् सहदेवश्च पञ्चभिः। २०००
तावुभौ भरतश्रेष्ठौ श्रेष्ठौ सर्व्वधनुष्मतां। विव्याधोरसि संक्रुद्धः पञ्चभिः पञ्चभिः शरैः।
ततोऽपराभ्यां भल्लाभ्यां धनुषी समकृन्तत। यमयोः सहसा राजन् विव्याध च त्रिसप्तभिः।
तावन्ये धनुषी श्रेष्ठे शक्रचापनिभे शुभे। प्रगृह्य रेजतुः शूरौ देवपुत्रसमौ युधि।
ततस्तौ रभसौ युद्धे भ्रातरौ भ्रातरं युधि। शरैर्व्ववृषतुर्घोरैर्महामेघौ यथाऽचलं।
ततः क्रुद्धो महाराज तव पुत्रो महारथः। पाण्डुपुत्रौ महेष्वासौ वारयामास पत्रिभिः। २००५
धनुर्म्मण्डलमेवास्य दृश्यते युधि भारत। सायकाश्चैव दृश्यन्ते निश्चरन्तः समन्ततः।

आच्छादयन् दिशः सर्व्वाः सूर्य्यस्येवांशवो यथा । प्राच्छन्ने ततस्तस्मिन् सञ्छन्ने च नभस्तले ।
यमयोर्ददृशे रूपं कालान्तकयमोपमं । पराक्रमन्तु तं दृष्ट्वा तव सूनोर्महारथाः ।
मृत्योरुपान्तिकं प्राप्तौ माद्रीपुत्त्रौ स्म मेनिरे । ततः सेनापती राजन् पाण्डवस्य महारथः ।
पार्षतः प्रययौ तत्र यत्र राजा सुयोधनः । माद्रीपुत्त्रौ ततः शूरौ व्यतिक्रम्य महारथौ । २३१०
धृष्टद्युम्नस्तव सुतं वारयामास सायकैः । तमविध्यदमेयात्मा तव पुत्त्रो ह्यमर्षणः ।
पाञ्चाल्यं पञ्चविंशत्या प्रहस्य पुरुषर्षभः । ततः पुनरमेयात्मा तव पुत्त्रो ह्यमर्षणः ।
विद्ध्वा ननाद पाञ्चाल्यं षष्ट्या पञ्चभिरेव च । तथाऽस्य सशरं चापं हस्तावापञ्च मारिष ।
क्षुरप्रेण सुतीक्ष्णेन राजा चिच्छेद संयुगे । तदपास्य धनुश्छिन्नं पाञ्चाल्यः शत्रुकर्षणः ।
अन्यदादत्त वेगेन धनुर्भारसहं नवं । प्रज्वलन्निव वेगेन संरम्भाद्रुधिरेक्षणः । २३१५
अशोभत महेष्वासो धृष्टद्युम्नः कृतव्रणः । स पञ्चदश नाराचान् श्वसतः पन्नगानिव ।
जिघांसुर्भरतश्रेष्ठं धृष्टद्युम्नो व्यपासृजत् । ते वर्म्म हेमविकृतं भित्त्वा राज्ञः शिलाशिताः ।
विविशुर्वसुधां वेगात् कङ्कबर्हिणवाससः । सोऽतिविद्धो महाराज पुत्त्रस्तेऽतिव्यराजत ।
वसन्तकाले सुमहान् प्रफुल्ल इव किंशुकः । सच्छिन्नवर्म्मा नाराचप्रहारैर्जर्जरीकृतः ।
धृष्टद्युम्नस्य भल्लेन क्रुद्धश्चिच्छेद कार्म्मुकं । अथैनं छिन्नधन्वानं त्वरमाणो महीपतिः । २३२०
सायकैर्दशभी राजन् भ्रुवोर्म्मध्ये समार्पयत् । तस्य तेऽशोभयन् वक्त्रं कर्म्मारपरिमार्ज्जिताः ।
प्रफुल्लपङ्कजं यद्वद्भ्रमरा मधुलिप्सवः । तदपास्य धनुश्छिन्नं धृष्टद्युम्नो महामनाः ।
अन्यदादत्त वेगेन धनुर्भल्लांश्च षोडश । ततो दुर्य्योधनस्याश्वान् हत्वा सूतञ्च पञ्चभिः ।
धनुश्चिच्छेद भल्लेन जातरूपपरिष्कृतं । रथं सोपस्करं छत्रं शक्तिं खड्गं गदां ध्वजं ।
भल्लैश्चिच्छेद दशभिः पुत्त्रस्य तव पार्षतः । तपनीयाङ्गदं चित्रं नागं मणिमयं शुभं । २३२५
ध्वजं कुरुपतेश्छिन्नं ददृशुः सर्व्वपार्थिवाः । दुर्य्योधनन्तु विरथं छिन्नवर्म्मायुधं रणे ।
भ्रातरः पर्य्यरक्षन्त सोदरा भरतर्षभ । तमारोप्य रथे राजन् दण्डधारो जनाधिपः ।
अपाहरदसम्भ्रान्तो धृष्टद्युम्नस्य पश्यतः । कर्णस्तु सात्यकिं जित्वा राजगृद्धी महाबलः ।
द्रोणहन्तारमुग्रेषुं ससाराभिमुखो रणे । तं पृष्ठतोऽभ्ययात्तूर्णं शैनेयो वितुदञ्शरैः ।
वारणं जघनोपान्ते विषाणाभ्यामिव द्विपः । स भारत महानासीद्योधानां सुमहात्मनां । २३३०
कर्णपार्षतयोर्म्मध्ये त्वदीयानां महारणः । न पाण्डवानां नास्माकं योधः कश्चित् पराङ्मुखः ।
प्रत्यदृश्यन्ततः कर्णः पाञ्चालांस्त्वरितो ययौ । तस्मिन् क्षणे नरश्रेष्ठ गजवाजिजनक्षयः ।
प्रादुरासीदुभयतो राजन्मध्यं गतेऽहनि । पाञ्चालास्तु महाराज त्वरिता विजिगीषवः ।
ते सर्व्वेऽभ्यद्रवन् कर्णं पतत्त्रिण इव द्रुमं । तांस्तथाधिरथिः क्रुद्धो यतमानान्मनस्विनः ।
विचिन्वन्निव बाणाग्रैः समासादयदग्रतः । व्याघ्रकेतुं सुशर्म्माणं चित्रं चोग्रायुधं जयं । २३३५
शुक्रञ्च रोचमानञ्च सिंहसेनञ्च दुर्ज्जयं । ते वीरा रथमार्गेण परिवव्रुर्नरोत्तमं ।

सृजन्तं सायकान् क्रुद्धं कर्णमाशीविषोपमैः । युधामन्युश्च तान् शूरान् मनुजेन्द्रः प्रतापवान् ।
अष्टाभिरष्टौ राधेयोऽभ्यर्द्दयन्निशितैः शरैः । तथापरान्महाराज सूतपुत्रः प्रतापवान् ।
जघान बहुसाहस्रान् योधान् युद्धविशारदान् । जिष्णुञ्च जिष्णुकर्माणं देवापिं भद्रमेव च ।
दण्डञ्च राजन् समरे चित्रं चित्रायुधं हरिं । सिंहकेतुं रोचमानं शलभञ्च महारथं । २०४०
निजघान सुसंक्रुद्धश्चेदीनाञ्च महारथान् । तेषामाददतः प्राणानासीदाधिरथेर्वपुः ।
शोणिताभ्युक्षिताङ्गस्य रुद्रस्येवातिवन् महत् । तत्र भारत कर्णेन मातङ्गास्ताडिताः शरैः ।
सर्व्वतोऽभ्यद्रवन् भीताः कुर्व्वन्तो महदाकुलं । निपेतुरुर्व्व्यां समरे कर्णसायकताडिताः ।
कुर्व्वन्तो विविधान्नादान् वज्रनुन्ना इवाचलाः । गजवाजिमनुष्यैश्च निपतद्भिः समन्ततः ।
रथैश्चाधिरथेर्म्मार्गे समास्तीर्य्यत मेदिनी । नैव भीष्मो न च द्रोणो नाप्यन्ये युधि तावकाः । २०४५
चक्रुः स्म तादृशं कर्म्म यादृशं वै कृतं रणे । सूतपुत्रेण नागेषु हयेषु च रथेषु च ।
नरेषु च महाराज कृतं स्म कदनं महत् । मृगमध्ये यथा सिंहो दृश्यते निर्भयश्चरन् ।
पाञ्चालानां तथा मध्ये कर्णोऽचरदभीतवत् । यथा मृगगणांस्त्रस्तान् सिंहो द्रावयते दिशः ।
पाञ्चालानां रथव्रातान् कर्णो व्यद्रावयत्तथा । सिंहास्यञ्च यथा प्राप्य न जीवन्ति मृगाः क्वचित् ।
तथा कर्णमनुप्राप्य न जीवन्ति महारथाः । वैश्वानरं यथा प्राप्य प्रतिदह्यन्ति वै जनाः । २०५०
कर्णाग्निना वने दग्धा भारत सृञ्जयाः । कर्णेन चेदिकैकेयपाञ्चालेषु च भारत ।
विश्राव्य नाम निहता बहवः शूरसंमताः । मम चासीन्मती राजन् दृष्ट्वा कर्णस्य विक्रमं ।
नैकोऽप्याधिरथेर्जीवन् पाञ्चालो मोक्ष्यते युधि । पाञ्चालान् व्यधमत्संख्ये सूतपुत्रः पुनः पुनः ।
पाञ्चालानथ निघ्नन्तं कर्णं दृष्ट्वा महारणे । अभ्यधावत्सुसंक्रुद्धो धर्म्मराजो युधिष्ठिरः ।
धृष्टद्युम्नश्च राधेयं द्रौपदेयाश्च मारिष । परिवव्रुरमित्रघ्नं शतशश्चापरे जनाः । २०५५
शिखण्डी सहदेवश्च नकुलो नाकुलिस्तथा । जनमेजयः शिनेर्नप्ता बहवश्च प्रभद्रकाः ।
एते पुरोगमा भूत्वा धृष्टद्युम्नस्य संयुगे । कर्णमस्यन्तमिष्वस्त्रैर्व्विभेदुरमितौजसः ।
तांस्तत्राधिरथिः संख्ये चेदिपाञ्चालपाण्डवान् । एको बहूनभ्यपतत् गरुत्मान् पन्नगानिव ।
तः कर्णस्याभवद्युद्धं घोररूपं विशाम्पते । तादृग्यादृक् पुरा वृत्तं देवानां दानवैः सह ।
तान् समेतान् महेष्वासान् शरवर्षौघवर्षिणः । एको व्यधमदव्यग्रस्तमांसीव दिवाकरः । २०६०
भीमसेनस्तु संसक्ते राधेये पाण्डवैः सह । सर्व्वतोऽभ्यहनत् क्रुद्धो यमदण्डनिभैः शरैः ।
वाह्लीकान् केकयान् मत्स्यान् वासात्यान् मद्रसैन्धवान् । एकः संख्ये महेष्वासो योधयन् बह्वशोभत ।
तत्र मर्म्मसु भीमेन नाराचैस्ताडिता गजाः । प्रपतन्तो हतारोहाः कम्पयन्ति स्म मेदिनीं ।
वाजिनश्च हतारोहाः पत्तयश्च गतासवः । शेरते युधि निर्भिन्ना वमन्तो रुधिरं बहु ।
सहस्रशश्च रथिनः पतिताः पतितायुधाः । ते हताः समदृश्यन्त भीमभीता गतासवः । २०६५
रथिभिः सादिभिः सूतैः पादातैर्व्वाजिभिर्गजैः । भीमसेनशरैश्छिन्नैराच्छन्ना वसुधाऽभवत् ।

तत्स्तम्भितमिवातिष्ठद्भीमसेनभयार्द्दितं । दुर्य्योधनबलं सर्व्वं निरुत्साहं कृतव्रणं ।
निश्चेष्टन्तु बलं दीनं बभौ तस्मिन् महारणे । प्रसन्नसलिले काले यथा स्यात् सागरो नृप ।
तद्वत्तव बलं तद्वै निश्चलं समवस्थितं । मन्युवीर्य्यबलोपेतं दर्पात् प्रत्यवरोपितं ।
अभवत्तव पुत्त्रस्य तत्सैन्यं निष्प्रभं तदा । तद्बलं भरतश्रेष्ठ बध्यमानं परस्परं । २७७०
रुधिरौघपरिक्लिन्नं रुधिरार्द्रं बभूव ह । जगाम भरतश्रेष्ठ बध्यमानं परस्परं ।
सूतपुत्त्रो रणे क्रुद्धः पाण्डवानामनीकिनीं । भीमसेनः कुरूंश्चापि द्रावयन्तौ विरेजतुः ।
वर्त्तमाने तथा रौद्रे संग्रामेऽद्भुतदर्शने । निहत्य पृतनामध्ये संशप्तकगणान् बहून् ।
अर्ज्जुनो जयतां श्रेष्ठो वासुदेवमथाब्रवीत् । प्रभग्नं बलमेतद्धि योत्स्यमानं जनार्द्दन ।
एते द्रवन्ति सगणाः संशप्तकमहारथाः । अपारयन्तो मद्बाणान् सिंहशब्दं मृगा इव । २७७५
दीर्य्यते च महत्सैन्यं सृञ्जयानां महारणे । हस्तिकक्षो ह्यसौ कृष्ण केतुः कर्णस्य धीमतः ।
दृश्यते राजसैन्यस्य मध्ये विचरतो मुदा । न च कर्णं रणे शक्ता जेतुमन्ये महारथाः ।
जानीते हि भवान् कर्णं वीर्य्यवन्तं पराक्रमे । तत्र याहि यतः कर्णो द्रावयत्येष नो बलं ।
वर्जयित्वा रणे याहि सूतपुत्त्रं महारथं । एष मे रोचते कृष्ण यथा वा तव रोचते ।
एतच्छ्रुत्वा वचस्तस्य गोविन्दः प्रहसन्निव । अब्रवीदर्ज्जुनं तूर्णं कौरवान् जहि पाण्डव । २७८०
ततस्तव महासैन्यं गोविन्दप्रेरिता हयाः । हंसवर्णाः प्रविविशुर्व्वहन्तः कृष्णपाण्डवौ ।
केशवप्रेरितैरश्वैः श्वेतैः काञ्चनभूषणैः । प्रविशद्भिस्तव बलं चतुर्द्दिशमभिद्यत ।
मेघस्तनितनिर्ह्रादः स रथो वानरध्वजः । चलत्पताकस्तां सेनां विमानं द्यामिवाविशत् ।
तौ विदार्य्य महासेनां प्रविष्टौ केशवार्ज्जुनौ । क्रुद्धौ संरम्भरक्ताक्षौ व्यभ्राजेतां महाद्युती ।
युद्धशौण्डौ समाहूतावागतौ तौ रणाध्वरं । यज्वभिर्व्विधिना हूतौ मखे देवाविवाश्विनौ । २७८५
क्रुद्धौ तौ तु नरव्याघ्रौ वेगवन्तौ बभूवतुः । तलशब्देन रुषितौ यथा नागौ महावने ।
विगाह्य तु रथानीकमश्वसङ्घांश्च फाल्गुनः । व्यचरत् पृतनामध्ये पाशहस्त इवान्तकः ।
तं दृष्ट्वा युधि विक्रान्तं सेनायां तव भारत । संशप्तकगणान् भूयः पुत्त्रस्ते समचूचुदत् ।
ततो रथसहस्रेण द्विरदानां त्रिभिः शतैः । चतुर्द्दशसहस्रैस्तु तुरगाणां महाहवे ।
द्वाभ्यां शतसहस्राभ्यां पदातीनाञ्च धन्विनां । शूराणां लब्धलक्षाणां विदितानां समन्ततः । २७९०
अभ्यवर्त्तन्त कौन्तेयं छादयन्तो महारथाः । शरवर्षैर्म्महाराज सर्व्वतः पाण्डुनन्दनं ।
स च्छाद्यमानः समरे शरैः परबलार्द्दनः । दर्शयन्रौद्रमात्मानं पाशहस्त इवान्तकः ।
निघ्नन् संशप्तकान् पार्थः प्रेक्षणीयतरोऽभवत् । ततो विद्युत्प्रभैर्व्वाणैः कार्त्तस्वरविभूषितैः ।
निरन्तरमिवाकाशमासीच्छन्नं किरीटिना । किरीटिभुजनिर्मुक्तैः सम्पतद्भिर्म्महाशरैः ।
समाच्छन्नं बभौ सर्व्वं काद्रवेयैरिव प्रभो । रुक्मपुङ्खान् प्रसन्नाग्रान् शरान् सन्नतपर्व्वणः । २७९५
अवासृजदमेयात्मा दिक्षु सर्व्वासु पाण्डव । मही वियद्दिशः सर्व्वाः समुद्रा गिरयोऽपि वा ।

स्फुटन्तीति जना जज्ञुः पार्थस्य तलनिःस्वनात् । हत्वा दश सहस्राणि पार्थिवानां महारथः ।
संशप्तकानां कौन्तेयः प्रत्यग्रं त्वरितोऽभ्ययात् । प्रत्यग्रञ्च समासाद्य पार्थः काम्बोजरक्षितं ।
प्रममाथ बलाद्बाणैर्दानवानिव वासवः । प्रचिच्छेदाशु भल्लैश्च द्विषतामाततायिनां ।
शस्त्रपाणिं तथा बाहुं तथाऽपि च शिरांसुत । अङ्गाङ्गावयवैश्छिन्नैर्व्यायुधास्तेऽपतन् भुवि । २८००
विष्वग्वाताभिसंभग्ना बहुशाखा इव द्रुमाः । हस्त्यश्वरथपत्तीनां व्रातान्निघ्नन्तमर्जुनं ।
सुदक्षिणादवरजः शरवृष्ट्याऽभ्यवीवृषत् । तस्यास्यतोऽर्द्धचन्द्राभ्यां बाहू परिघसन्निभौ ।
पूर्णचन्द्राभवक्त्रञ्च क्षुरेणाभ्यहरच्छिरः । स पपात ततो वाहात् सुलोहितपरिस्रवः ।
मनःशिलागिरेः शृङ्गं वज्रेणेवावदारितं । सुदक्षिणादवरजं काम्बोजं ददृशुर्हतं ।
प्रांशुं कमलपत्राक्षमत्यर्थं प्रियदर्शनं । काञ्चनस्तम्भसदृशं भिन्नं हेमगिरिं यथा । २८०५
ततोऽभवत् पुनर्युद्धं घोरमत्यर्थमद्भुतं । नानावस्थाश्च योधानां बभूवुस्तत्र युध्यतां ।
एकेषुनिहतैरश्वैः काम्बोजैर्यवनैः शकैः । शोणिताक्तैस्तदा रक्तं सर्व्वमासीद्विशाम्पते ।
रथैर्हताश्वसूतैश्च हतारोहैश्च वाजिभिः । द्विरदैश्च हतारोहैर्महामात्रैर्हतद्विपैः ।
अन्योन्येन महाराज कृतो घोरो जनक्षयः । तस्मिन् प्रपक्षे पक्षे च निहते सव्यसाचिना ।
अर्ज्जुनं जयतां श्रेष्ठं त्वरितो द्रौणिरभ्ययात् । विधुन्वानो महच्चापं कार्त्तस्वरविभूषितं । २८१०
आददानः शरान् घोरान् स्वरश्मीनिव भास्करः । क्रोधामर्षविवृत्तास्यो लोहिताक्षो बभौ बली ।
अन्तकाले यथा क्रुद्धो मृत्युःकिङ्करदण्डभृत् । ततः प्राक्षिपदुग्राणि शरवर्षाणि संघशः ।
तैर्व्विसृष्टैर्महाराज व्यद्रवत् पाण्डवी चमूः । स दृष्ट्वैव तु दाशार्हं स्यन्दनस्थं विशाम्पते ।
पुनः प्राक्षिपदुग्राणि शरवर्षाणि मारिष । तैः पतद्भिर्महाराज द्रौणिमुक्तैः समन्ततः ।
सञ्छादितौ रथस्थौ तावुभौ कृष्णधनञ्जयौ । ततः शरशतैस्तीक्ष्णैरश्वत्थामा प्रतापवान् । २८१५
निश्चेष्टौ तावुभौ युद्धे कृत्वा माधवपाण्डवौ । हाहाकृतमभूत् सर्व्वं स्थावरं जङ्गमन्तथा ।
चराचरस्य गोप्तारौ दृष्ट्वा सञ्छादितौ शरैः । सिद्धचारणसङ्घाश्च संपेतुस्ते समन्ततः ।
चिन्तयन्तो भवेदद्य लोकानां स्वस्त्यपीति च । न मया तादृशो राजन् दृष्टपूर्व्वः पराक्रमः ।
संग्रामो यादृशो द्रौणेः कृष्णौ सञ्छादयिष्यतः । द्रौणेस्तु धनुषः शब्दमहितत्रासनं रणे ।
अश्रौषं बहुशो राजन् सिंहस्य निनदो यथा । ज्या चास्य चरतो युद्धे सव्यदक्षिणमस्यतः । २८२०
विद्युदम्बुदमध्यस्था भ्राजमानेव साऽभवत् । स तथा क्षिप्रकारी च दृढहस्तश्च पाण्डवः ।
प्रमोहं परमं गत्वा प्रैक्षत तं द्रोणजं ततः । विक्रमं विहतं मेने आत्मनः स महायशाः ।
तस्यासीत् समरे राजन् वपुरासीत् सुदुर्दृशं । द्रौणिपाण्डवयोरेवं वर्त्तमाने महारणे ।
वर्द्धमाने च राजेन्द्र द्रोणपुत्रे महाबले । हीयमाने च कौन्तेये कृष्णं रोषः समाविशत् ।
स रोषान्निःश्वसन् राजन् निर्द्दहन्निव चक्षुषा । द्रौणिं ह्यपश्यत् संग्रामे फाल्गुनञ्च मुहुर्मुहुः । २८२५
ततः क्रुद्धोऽब्रवीत् कृष्णः पार्थं सप्रणयं तदा । अत्यद्भुतमिदं पार्थ तव पश्यामि संयुगे ।

अतिरेको हि यत्र त्वां द्रोणपुत्रोऽद्य भारत । कच्चिद्वीर्य्यं यथा पूर्व्वं भुजयोर्व्वा बलं तव ।
कच्चित्ते गाण्डिवं हस्ते रथे तिष्ठसि चार्ज्जुन । कच्चित् कुशलिनौ बाहू मुष्टिर्व्वा न व्यशीर्य्यत ।
उदीर्य्यमाणं हि रणे पश्यामि द्रौणिमाहवे । गुरुपुत्र इति ह्येनं मानयन् भरतर्षभ ।
उपेक्षां कुरु मा पार्थ नायं काल उपेक्षितुं । एवमुक्तस्तु कृष्णेन गृह्य भल्लांश्चतुर्द्दश । २८३०
त्वरमाणस्त्वराकाले द्रौणेर्धनुरथाच्छिनत् । ध्वजं छत्रं पताकाञ्च रथं शक्तिं गदां तथा ।
जत्रुदेशे च सुभृशं वत्सदन्तैरताडयत् । स मूर्च्छां परमां गत्वा ध्वजयष्टिं समाश्रितः ।
तं विसंज्ञं महाराज [illegible] भृशपीडितं । अपोवाह रथात् सूतो रक्षमाणो धनञ्जयात् ।
एतस्मिन्नेव काले च विजयः शत्रुतापनः । न्यहनत्तावकं सैन्यं शतशोऽथ सहस्रशः ।
पश्यतस्तस्य वीरस्य तव पुत्रस्य भारत । एवमेष क्षयो वृत्तस्तावकानां परैः सह । २८३५
क्रूरो विशसनो घोरो राजन् दुर्म्मन्त्रिते तव । संशप्तकांश्च कौन्तेयः कुरूंश्चापि वृकोदरः ।
वसुषेणश्च पाञ्चालान् क्षणेन व्यधमद्रणे । वर्त्तमाने तथा रौद्रे राजन् वीरवरक्षये ।
उत्थितान्यगणेयानि कबन्धानि समन्ततः । युधिष्ठिरोऽपि संग्रामे प्रहारैर्गाढवेदनः ।
क्रोशमात्रमपक्रम्य तस्थौ भरतसत्तम ।
इति श्रीमहाभारते कर्णपर्व्वणि संकुलयुद्धे षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
॥ सञ्जय उवाच ॥ दुर्य्योधनस्ततः कर्णमुपेत्य भरतर्षभ । अब्रवीन्मद्रराजञ्च तथैवान्यांश्च पार्थिवान् । २८४०
यदृच्छयैतत्संप्राप्तं स्वर्गद्वारमपावृतं । सुखिनः क्षत्रियाः कर्ण लभन्ते युद्धमीदृशं ।
सदृशैः क्षत्रियैः शूरैः शूराणां युध्यतां युधि । इष्टं भवति राधेय तदिदं समुपस्थितं ।
हत्वा च पाण्डवान् युद्धे स्फीतामुर्व्वीमवाप्स्यथ । निहता वा परैर्युद्धे वीरलोकमवाप्स्यथ ।
दुर्य्योधनस्य तच्छ्रुत्वा वचनं क्षत्रियर्षभाः । हृष्टा नादानुदक्रोशन् वादित्राणि च सर्व्वशः ।
ततः प्रमुदिते तस्मिन् दुर्य्योधनबले तदा । हर्षयंस्तावकान् योधान् द्रौणिर्व्वचनमब्रवीत् । २८४५
प्रत्यक्षं सर्व्वसैन्यानां भवतां चापि पश्यतां । न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ।
स तेनाहममर्षेण मित्रार्थे चापि पार्थिवाः । सत्यं वः प्रतिजानामि तद्वाक्यं मे निबोधत ।
धृष्टद्युम्नमहत्वाऽहं न विमोक्ष्यामि दंशनं । अनृतायां प्रतिज्ञायां नाहं स्वर्गमवाप्नुयां ।
अर्ज्जुनो भीमसेनश्च योधो यो रक्षिता रणे । धृष्टद्युम्नस्य तं संख्ये निहनिष्यामि सायकैः ।
एवमुक्ते ततः सर्व्वा सहिता भारती चमूः । अभ्यद्रवत कौन्तेयांस्तथा ते चापि पाण्डवाः । २८५०

स सन्निपातो रथयूथपानां बभूव राजन्नतिभीमरूपः । जनक्षयः कालयुगान्तकल्पः प्रावर्त्तताग्रे कुरुसृञ्जयानां ।
ततः प्रवृत्ते युधि संप्रहारे भूतानि सर्व्वाणि सदैवतानि । आयन् समेतानि सहाप्सरोभिर्दिदृक्षमाणानि नरप्रवीरान् ।
दिव्यैश्च माल्यैर्व्विविधैश्च गन्धैर्दिव्यैश्च रत्नैर्व्विविधैर्नराग्र्यान् । रणे स्वकर्म्मोद्वहतः प्रवीरानवाकिरन्नप्सरसः प्रहृष्टाः ।
समीरणस्तांश्च निषेव्य गन्धान् सिषेव सर्व्वानपि योधमुख्यान् । निषेव्यमाणास्त्वनिलेन योधाः परस्परघ्ना धरणीं निपेतुः ।
सा दिव्यमाल्यैरवकीर्य्यमाणा सुवर्णपुङ्खैश्च शरैर्व्विचित्रैः । नक्षत्रसंघैरिव चित्रिता द्यौः क्षितिर्व्वभौ योधवरैर्व्विचित्रा । २८५५

ततोऽन्तरीक्षादपि साधुवादैर्व्वादित्रघोषैः समुदीर्य्यमाणः। ज्याघोषनेमिस्वननादमिश्रः समाकुलः सोऽभवत्सम्प्रहारः।

इति श्रीमहाभारते कर्णपर्व्वणि अश्वत्थामप्रतिज्ञायां सप्तपञ्चाशोऽध्यायः ॥ ५७॥

॥ सञ्जय उवाच ॥ एवमेष महानासीत्संग्रामः पृथिवीक्षितां। क्रुद्धेऽर्ज्जुने तथा कर्णे भीमसेने च पाण्डवे।
द्रोणपुत्रं परित्यज्य जित्वा चान्यान्महारथान्। अब्रवीदर्ज्जुनो राजन् वासुदेवमिदं वचः।
पश्य कृष्ण महाबाहो द्रवन्तीं पाण्डवीं चमूं। कर्णं पश्य च संग्रामे कालयन्तं महारथान्।
न च पश्यामि दाशार्ह धर्म्मराजं युधिष्ठिरं। नापि केतुर्युधां श्रेष्ठ धर्म्मराजस्य दृश्यते। २८६०
त्रिभागश्चावशिष्टोऽयं दिवसस्य जनार्द्दन। न च मां धार्त्तराष्ट्रेषु कश्चिद्युध्यति संयुगे।
तस्मात्त्वं मत्प्रियं कुर्व्वन् याहि यत्र युधिष्ठिरः। दृष्ट्वा कुशलिनं युद्धे धर्म्मपुत्रं सहानुजं।
पुनर्योद्धाऽस्मि वार्ष्णेय शत्रुभिः सह संयुगे। ततः प्रायाद्रथेनाशु बीभत्सोर्व्वचनाद्धरिः।
ततो युधिष्ठिरो राजा सृञ्जयाश्च महारथाः। अयुध्यंस्तावकैः सार्द्धं मृत्युं कृत्वा निवर्त्तनं।
ततः संग्रामभूमिं तां वर्त्तमाने जनक्षये। अवेक्षमाणो गोविन्दः सव्यसाचिनमब्रवीत्। २८६५
पश्य पार्थ महारौद्रो वर्त्तते भरतक्षयः। पृथिव्यां क्षत्रियाणां वै दुर्य्योधनकृते महान्।
पश्य भारत चापानि रुक्मपृष्ठानि धन्विनां। मृतानामपविद्धानि कलापांश्च महाधनान्।
जातरूपमयैः पुङ्खैः शरांश्चानतपर्व्वणः। तैलधौतांश्च नाराचान्निर्मुक्तान् पन्नगानिव।
हस्तिदन्तत्सरून् खड्गान् जातरूपपरिष्कृतान्। वर्म्माणि चापविद्धानि रुक्मगर्भाणि भारत।
सुवर्णविकृतान् प्रासान् शक्तीः कनकभूषणाः। जाम्बूनदमयैः पट्टैर्बद्धाश्च विपुला गदाः। २८७०
जातरूपमयीश्चर्ष्टीः पट्टिशान् हेमभूषणान्। दण्डैः कनकचित्रैश्च विप्रविद्धान् परश्वधान्।
अयःकुन्तांश्च पतितान् मुषलानि गुरूणि च। शतघ्नीः पश्य चित्राश्च विपुलान् परिघांस्तथा।
चक्राणि चापविद्धानि तोमरांश्च महारणे। नानाविधानि शस्त्राणि प्रगृह्य जयगृद्धिनः।
जीवन्त इव दृश्यन्ते गतसत्त्वास्तरस्विनः। गदाविमथितैर्गात्रैर्मुषलैर्भिन्नमस्तकान्।
गजवाजिरथक्षुण्णान् पश्य योधान् सहस्रशः। मनुष्यहयनागानां शरशक्त्यृष्टिपट्टिशैः। २८७५
परिघैरायसैर्घोरैरयःकुन्तैः परश्वधैः। शरीरैर्बहुभिश्छिन्नैः शोणितौघपरिप्लुतैः।
गतासुभिरमित्रघ्न संवृता रणभूमयः। बाहुभिश्चन्दनादिग्धैः साङ्गदैर्हेमभूषितैः।
सतलत्रैः सकेयूरैर्भाति भारत मेदिनी। साङ्गुलित्रैर्भुजाग्रैश्च विप्रविद्धैरलङ्कृतैः।
हस्तिहस्तोपमैश्छिन्नैरूरुभिश्च तरस्विनां। बद्धचूडामणिवरैः शिरोभिश्च सकुण्डलैः।
पतितैर्वृषभाक्षाणां विराजति वसुन्धरा। कबन्धैः शोणितादिग्धैश्छिन्नगात्रशिरोधरैः। २८८०
भूर्भाति भरतश्रेष्ठ शान्तार्च्चिर्भिरिवाग्निभिः। रथांश्च बहुधा भग्नान् हेमकिङ्किणिनः शुभान्।
वाजिनश्च हतान् पश्य निष्कीर्णान्त्रान् शराहतान्। अनुकर्षानुपासङ्गान् पताका विविधध्वजान्।
रथिनाञ्च महाशङ्खान् पाण्डुरांश्च प्रकीर्णकान्। निरस्तजिह्वान् मातङ्गान् शयानान् पर्व्वतोपमान्।
वैजयन्तीविचित्रांश्च हतांश्च गजवाजिनः। वारणानां परिस्तोमांस्तथैवाजिनकम्बलान्।

विपाटितैर्विचित्रांश्च हयचित्रान् रथाङ्कुशान्। भिन्नाश्च बहुधा बद्धा महद्भिः पतितैर्गजैः। २८८५
वैदूर्यदण्डांश्च शुभान् पतितानङ्कुशान् भुवि। बद्धाः सादिभुजाग्रेषु सुवर्णविकृताः कशाः।
विचित्रमणिचित्रांश्च जातरूपपरिष्कृतान्। अश्वास्तरपरिस्तोमान् राङ्कवान् पतितान् भुवि।
चूडामणीन्नरेन्द्राणां विचित्राः काञ्चनस्रजः। छत्राणि चापविद्धानि चामरव्यजनानि च।
चन्द्रनक्षत्रभासैश्च वदनैश्चारुकुण्डलैः। कॢप्तश्मश्रुभिरत्यर्थं वीराणां समलङ्कृतैः।
वदनैः पश्य संछन्नां महीं शोणितकर्दमाम्। सजीवांश्चापरान् पश्य कूजमानान् समन्ततः। २८९०
उपास्यमानान् बहुभो न्यस्तशस्त्रैर्विशाम्पते। ज्ञातिभिः सहितांस्तत्र रोदमानैर्मुहुर्मुहुः।
व्युत्क्रान्तानपरान् योधांश्छादयित्वा तरस्विनः। पुनर्युद्धाय गच्छन्ति जयगृद्धाः समन्यवः।
अपरे तत्र तत्रैव परिधावन्ति मानवाः। ज्ञातिभिः पतितैः शूरैर्याच्यमानास्तथोदकं।
जलार्थञ्च गताः केचिन्निष्प्राणा बहवोऽर्जुन। सन्निवृत्ताश्च ते शूरास्तान् वै दृष्ट्वा विचेतसः।
जलं त्यक्त्वा प्रधावन्ति क्रोशमानाः परस्परं। जलं पीत्वा मृतान् पश्य पिबन्तोऽन्यांश्च मारिष। २८९५
परित्यज्य प्रियानन्ये बान्धवान् बान्धवप्रियाः। व्युत्क्रान्ताः समदृश्यन्त तत्र तत्र महारणे।
तथा पराञ्नरश्रेष्ठ सन्दष्टौष्ठपुटान् पुनः। भ्रुकुटीकुटिलैर्वक्त्रैः प्रेक्षमाणान् समन्ततः।
एवं ब्रुवंस्तदा कृष्णो ययौ यत्र युधिष्ठिरः। अर्जुनश्चापि नृपतेर्दर्शनार्थं महारणे।
याहि याहीति गोविन्दं मुहुर्मुहुरचोदयत्। तां युद्धभूमिं पार्थस्य दर्शयित्वा च माधवः।
त्वरमाणस्ततः कृष्णः पार्थमाह शनैरिदं। पश्य पाण्डव राजानमुपयातांश्च पार्थिवान्। २९००
कर्णं पश्य महारङ्गे ज्वलन्तमिव पावकं। असौ भीमो महेष्वासः संनिवृत्तो रणं प्रति।
तमेते विनिवर्त्तन्ते धृष्टद्युम्नपुरोगमाः। पाञ्चालसृञ्जयानाञ्च पाण्डवानाञ्च ये मुखं।
निवृत्तैश्च पुनः पार्थैर्भग्नं शत्रुबलं महत्। कौरवान् द्रवतो ह्येष कर्णो रोधयतेऽर्जुन।
अन्तकप्रतिमो वेगे शक्रतुल्यपराक्रमः। असौ गच्छति कौरव्य द्रौणिः शस्त्रभृतां वरः।
तमेव प्रद्रुतं संख्ये धृष्टद्युम्नो महारथः। अनुप्रयाति सङ्ग्रामे हतान् पश्य च सृञ्जयान्। २९०५
सर्व्वमाह सुदुर्द्धर्षो वासुदेवः किरीटिने। ततो राजन्महाघोरः प्रादुरासीन्महारणः।
सिंहनादरवाश्चैव प्रादुरासन् समागमे। उभयोः सेनयो राजन् मृत्युं कृत्वा निवर्त्तनं।
एवमेष क्षयो वृत्तः पृथिव्यां पृथिवीपते। तावकानां परेषाञ्च राजन् दुर्म्मन्त्रिते तव।
इति श्रीमहाभारते कर्णपर्व्वणि वासुदेववाक्ये अष्टपञ्चाशोऽध्यायः॥ ५८॥
॥ सञ्जय उवाच ॥ ततः पुनः समाजग्मुरभीताः कुरुसृञ्जयाः। युधिष्ठिरमुखाः पार्थाः सूतपुत्रमुखा वयं।
ततः प्रववृते भीमः सङ्ग्रामो लोमहर्षणः। कर्णस्य पाण्डवानाञ्च यमराष्ट्रविवर्द्धनः। २९१०
तस्मिन् प्रवृत्ते संग्रामे तुमुले शोणितोदके। संशप्तकेषु शूरेषु किञ्चिच्छिष्टेषु भारत।
धृष्टद्युम्नो महाराज सहितः सर्व्वराजभिः। कर्णमेवाभिदुद्राव पाण्डवाश्च महारथाः।
आगच्छमानांस्तान् संख्ये प्रहृष्टान् विजयैषिणः। दधारैको रणे कर्णो जलौघानिव पर्व्वतः।

समासाद्य तु ते कर्णं व्यशीर्य्यन्त महारथाः । यथाऽचलं समासाद्य वार्य्योघाः सर्व्वतोदिशं ।
तयोरासीन्महाराज संग्रामो लोमहर्षणः । धृष्टद्युम्नस्तु राधेयं शरेणानतपर्व्वणा । २९१५
ताडयामास समरे तिष्ठतिष्ठेति चाब्रवीत् । विजयन्तु धनुः श्रेष्ठं विधुन्वानो महारथः ।
पार्षतस्य धनुश्छित्त्वा शरांश्चाशीविषोपमान् । ताडयामास संक्रुद्धः पार्षतं नवभिः शरैः ।
ते वर्म्म हेमविकृतं भित्त्वा तस्य महात्मनः । शोणिताक्ता व्यराजन्त शक्रगोपा इवानघ ।
तदपास्य धनुश्छिन्नं धृष्टद्युम्नो महारथः । अथान्यद्धनुरादाय शरांश्चाशीविषोपमान् ।
कर्णं विव्याध सप्तत्या शरैः सन्नतपर्व्वभिः । तथैव राजन् कर्णोऽपि पार्षतं शत्रुतापनं । २९२०
छादयामास समरे शरैराशीविषोपमैः । द्रोणशत्रुर्महेष्वासो विव्याध निशितैः शरैः ।
तस्य कर्णो महाराज शरं कनकभूषणं । प्रेषयामास संक्रुद्धो मृत्युदण्डमिवापरं ।
तमापतन्तं सहसा घोररूपं विशाम्पते । चिच्छेद सहसा राजन् शैनेयः कृतहस्तवत् ।
दृष्ट्वा विनिहतं वाणं शरैः कर्णो विशाम्पते । सात्यकिं शरवर्षेण समन्तात् पर्य्यवारयत् ।
विव्याध चैनं समरे नाराचैः सप्तभि. । तं प्रत्यविध्यच्छैनेयः शरैर्हेमपरिष्कृतैः । २९२५
ततो युद्धं महाराज चक्षुःश्रोत्रभयानकं । आसीद्घोरञ्च चित्रञ्च प्रेक्षणीयं समन्ततः ।
सर्व्वेषां तत्र भूतानां लोमहर्षोऽभ्यजायत । तद्दृष्ट्वा समरे कर्म्म कर्णशैनेययोर्नृप ।
एतस्मिन्नन्तरे द्रौणिरभ्ययात्सुमहाबलं । पार्षतं शत्रुदमनं शत्रुवीर्य्यासुनाशनं ।
अभ्यभाषत संक्रुद्धो द्रौणिः परपुरञ्जयः । तिष्ठ तिष्ठाद्य ब्रह्मघ्न न मे जीवन् विमोक्ष्यसे ।
इत्युक्त्वा सुभृशं वीरं शीघ्रकृन्निशितैः शरैः । पार्षतं छादयामास घोररूपैः सुतेजनैः । २९३०
यतमानं परं शक्त्या यतमानो महारथः । यथा हि समरे द्रोणः पार्षतं वीक्ष्य मारिष ।
तथा द्रौणिं रणे दृष्ट्वा पार्षतः परवीरहा । नातिहृष्टमना भूत्वा मन्यते मृत्युमात्मनः ।
स ज्ञात्वा समरेत्मानं शस्त्रेणावध्यमेव तु । जवेनाभ्याययौ द्रौणिं कालः कालमिव क्षये ।
द्रौणिस्तु दृष्ट्वा राजेन्द्र धृष्टद्युम्नमवस्थितं । क्रोधेन निःश्वसन् वीरः पार्षतं समुपाद्रवत् ।
तावन्योन्यन्तु दृष्ट्वैव संरम्भं जग्मतुः परं । अथाब्रवीन्महाराज द्रोणपुत्रः प्रतापवान् । २९३५
धृष्टद्युम्नं समीपस्थं त्वरमाणो विशाम्पते । पाञ्चालापसदाद्य त्वां प्रेषयिष्यामि मृत्यवे ।
पापं हि यत्त्वया कर्म्म घ्नता द्रोणं पुरा कृतं । अद्य त्वां तप्स्यते तद्वै यथा न कुशलं तथा ।
अरक्ष्यमाणः पार्थेन यदि तिष्ठसि संयुगे । नापक्रामसि वा मूढ सत्यमेतद्ब्रवीमि ते ।
एवमुक्तः प्रत्युवाच धृष्टद्युम्नः प्रतापवान् । प्रतिवाक्यं स एवासिर्म्मामको दास्यते तव ।
येनैव ते पितुर्द्दत्तं यतमानस्य संयुगे । यदि तावन्मया द्रोणो निहतो ब्राह्मणब्रुवः । २९४०
त्वामिदानीं कथं युद्धे न हनिष्यामि विक्रमात् । एवमुक्त्वा महाराज सेनापतिरमर्षणः ।
निशितेनातिवाणेन द्रौणिं विव्याध पार्षतः । ततो द्रौणिः सुसंक्रुद्धः शरैः सन्नतपर्व्वभिः ।
आच्छादयद्दिशो राजन् धृष्टद्युम्नस्य संयुगे । नवान्तरीक्षं न दिशो नापि योधाः समन्ततः ।

दृश्यन्ते वै महाराज शरैश्छन्नाः सहस्रशः । तथैव पार्षतो राजन् द्रौणिमाहवशोभिनं ।
शरैः संछादयामास सूतपुत्रस्य पश्यतः । राधेयोऽपि महाराज पाञ्चालान् सह पाण्डवैः । २८४५
द्रौपदेयान् युधामन्युं सात्यकिञ्च महारथं । एकः संवारयामास प्रेक्षणीयः समन्ततः ।
धृष्टद्युम्नस्तु समरे द्रौणेश्चिच्छेद कार्म्मुकं । तदपास्य धनुर्द्रौणिरन्यदादाय कार्म्मुकं ।
वेगवान् समरे घोरं शरांश्चाशीविषोपमान् । स पार्षतस्य राजेन्द्र धनुः शक्तिं गदां ध्वजं ।
हयान् सूतं रथञ्चैव निमेषाद्व्यधमच्छरैः । स छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
खड्गमादत्त विपुलं शतचन्द्रञ्च भानुमत् । द्रौणिस्तदपि राजेन्द्र भल्लैः क्षिप्रं महारथः । २८५०
चिच्छेद समरे वीरः क्षिप्रहस्तो दृढायुधः । रथादनवरूढस्य तदद्भुतमिवाभवत् ।
धृष्टद्युम्नं हि विरथं हताश्वं छिन्नकार्म्मुकं । शरैश्च बहुधा विद्धमस्त्रैश्च शकलीकृतं ।
नाशकद्भरतश्रेष्ठ यतमानो महारथः । तस्यान्तमिषुभी राजन् यदा द्रौणिर्न शक्तिवान् ।
अथ त्यक्त्वा धनुर्व्वीरः पार्षतं त्वरितोऽन्वगात् । आसीदाद्रवतो वेगस्तस्य राजन्महात्मनः ।
गरुडस्येव पततो जिघृक्षोः पन्नगोत्तमं । एतस्मिन्नेव काले तु माधवोऽर्जुनमब्रवीत् । २८५५
पश्य पार्थ यथा द्रौणिः पार्षतस्य वधं प्रति । यत्नं करोति विपुलं हन्याच्चैनं न संशयः ।
तं मोचय महाबाहो पार्षतं शत्रुकर्षण । द्रौणेरास्यमनुप्राप्तं मृत्योरास्यगतं यथा ।
एवमुक्त्वा महाराज वासुदेवः प्रतापवान् । प्रैषयत्तुरगांस्तत्र यत्र द्रौणिर्व्यवस्थितः ।
ते हयाश्चन्द्रसङ्काशाः केशवेन प्रचोदिताः । आपिबन्त इव व्योम जग्मुर्द्रौणिरथं प्रति ।
दृष्ट्वा यान्तौ महावीर्य्यावुभौ कृष्णधनञ्जयौ । धृष्टद्युम्नवधे यत्नं चक्रे राजन् महाबलः । २८६०
विकृष्यमाणं दृष्ट्वैव धृष्टद्युम्नं नरेश्वर । शरांश्चिक्षेप वै पार्थो द्रौणिं प्रति महाबलः ।
ते शरा हेमविकृता गाण्डीवप्रेषिता भृशं । द्रौणिमासाद्य विविशुर्व्वल्मीकमिव पन्नगाः ।
स विद्धस्तैः शरैर्घोरैर्द्रोणपुत्रः प्रतापवान् । उत्सृज्य समरे राजन् पाञ्चाल्यममितौजसं ।
रथमारुरुहे वीरो धनञ्जयशरार्दितः । प्रगृह्य च धनुः श्रेष्ठं पार्थं विव्याध सायकैः ।
एतस्मिन्नन्तरे वीरः सहदेवो जनाधिप । अपोवाह रथेनाजौ पार्षतं शत्रुतापनं । २८६५
अर्ज्जुनोऽपि महाराज द्रौणिं विव्याध पत्रिभिः । तं द्रोणपुत्रः संक्रुद्धो बाह्वोरुरसि चार्पयत् ।
क्रोधितस्तु रणे पार्थो नाराचं कालसम्मितं । द्रोणपुत्राय चिक्षेप कालदण्डमिवापरं ।
ब्राह्मणस्यांसदेशे स निपपात महाद्युतिः । स विह्वलो महाराज शरवेगेन संयुगे ।
निषसाद रथोपस्थे वैक्लव्यञ्च परं ययौ । ततः कर्णो महाराज व्याक्षिपद्विजयं धनुः ।
अर्ज्जुनं समरे क्रुद्धः प्रेक्षमाणो मुहुर्मुहुः । द्वैरथञ्चापि पार्थेन कामयानो महारणे । २८७०
विह्वलं तन्तु वीक्ष्याथ द्रोणपुत्रस्य सारथिः । अपोवाह रथेनाजौ त्वरमाणो रणाजिरात् ।
अथोत्क्रुष्टं महाराज पाञ्चालैर्ज्जितकाशिभिः । मोक्षितं पार्षतं दृष्ट्वा द्रोणपुत्रञ्च पीडितं ।
वादित्राणि च दिव्यानि प्रावाद्यन्त सहस्रशः । सिंहनादांश्च चक्रुस्ते दृष्ट्वा संख्ये तदद्भुतं ।

एवं कृत्वाऽब्रवीत्पार्थो वासुदेवं धनञ्जयः। याहि संशप्तकान् कृष्ण कार्य्यमेतत् परं मम।
ततः प्रयातो दाशार्हः श्रुत्वा पाण्डवभाषितं। रथेनातिपताकेन मनोमारुतरंहसा। २९७५
इति श्रीमहाभारते कर्णपर्व्वणि द्रौण्यपयाने ऊनषष्टोऽध्यायः ॥ ५९ ॥

॥ सञ्जय उवाच ॥ एतस्मिन्नन्तरे कृष्णः पार्थं वचनमब्रवीत्। दर्शयन्निव कौन्तेयं धर्म्मराजं युधिष्ठिरं।
एष पाण्डव ते भ्राता धार्त्तराष्ट्रैर्महाबलैः। जिघांसुभिर्महेष्वासैर्द्रुतं पार्थोऽनुसार्य्यते।
तथानुयान्ति संरब्धाः पाञ्चाला युद्धदुर्म्मदाः। युधिष्ठिरं महात्मानं परीप्सन्तो महाबलाः।
एष दुर्य्योधनः पार्थ रथानीकेन दंशितः। राजा सर्व्वस्य लोकस्य राजानमनुधावति। २९८०
जिघांसुः पुरुषव्याघ्र भ्रातृभिः सहितो बली। आशीविषसमस्पर्शैः सर्व्वयुद्धविशारदैः।
एते जिघृक्षवो यान्ति द्विपाश्वरथपत्तयः। युधिष्ठिरं धार्त्तराष्ट्रा रत्नोत्तममिवार्थिनः।
पश्य सात्वतभीमाभ्यां निरुद्धा धिष्ठिताः पुनः। जिहीर्षवोऽमृतं दैत्याः शक्राग्निभ्यामिवावृताः।
एते बहुत्वात्त्वरिताः पुनर्गच्छन्ति पाण्डवं। समुद्रमिव वार्य्योघाः प्रावृट्काले महारथाः।
नदन्तः सिंहनादांश्च धमन्तश्चापि वारिजान्। बलवन्तो महेष्वासा विधुन्वन्तो धनूंषि च। २९८५
मृत्योर्मुखगतं मन्ये कुन्तीपुत्रं युधिष्ठिरं। हुतमग्नौ च कौन्तेय दुर्य्योधनवशं गतं।
यथाविधमनीकन्तु धार्त्तराष्ट्रस्य पाण्डव। नास्य शक्रोऽपि मुच्येत सम्प्राप्तो बाणगोचरं।
दुर्य्योधनस्य वीरस्य शरौघान् शीघ्रमस्यतः। संक्रुद्धस्यान्तकस्येव को वेगं संसहेद्रणे।
दुर्य्योधनस्य वीरस्य द्रौणेः शारद्वतस्य च। कर्णस्य चेषुवेगो वै पर्व्वतानपि शातयेत्।
कर्णेन च कृतो राजा विमुखः शत्रुतापनः। बलवान् लघुहस्तश्च कृती युद्धविशारदः। २९९०
राधेयः पाण्डवश्रेष्ठं शक्तः पीडयितुं रणे। सहितो धृतराष्ट्रस्य पुत्रैः शूरैर्महाबलैः।
तस्यैभिर्युध्यमानस्य सङ्ग्रामे संशितात्मनः। अन्यैरपि च पार्थस्य कृतं कर्म्म महारथैः।
उपवासकृतो राजा भृशं भरतसत्तमः। ब्राह्मे बले स्थितो ह्येष न क्षात्रे हि बले विभुः।
कर्णेन चाभियुक्तोऽयं भूपतिः शत्रुतापनः। संशयं समनुप्राप्तः पाण्डवो वै युधिष्ठिरः।
न जीवति महाराजो मन्ये पार्थ युधिष्ठिरः। यद्भीमसेनः सहते सिंहनादममर्षणः। २९९५
नर्द्दतां धार्त्तराष्ट्राणां पुनः पुनररिन्दम। धमतां च महाशङ्खान् सङ्ग्रामे जितकाशिनां।
युधिष्ठिरं पाण्डवेयं हतेति भरतर्षभ। चोदयत्येव कर्णो धार्त्तराष्ट्रान् महाबलान्।
स्थूणाकर्णेन्द्रजालेन पार्थपाशुपतेन च। प्रच्छादयन्ति राजानं शस्त्रजालैर्महारथाः।
आतुरो हि कृतो राजा सन्निषण्णश्च भारत। यथैनमनुवर्त्तन्ते पाञ्चालाः सह पाण्डवैः।
त्वरमाणास्त्वराकाले सर्व्वशस्त्रभृताम्बराः। मज्जन्तमिव पाताले बलिनोऽप्युज्जिहीर्षवः। ३०००
न केतुर्दृश्यत राज्ञः कर्णेन निहतः शरैः। पश्यतोर्यमयोः पार्थसात्यकेश्च शिखण्डिनः।
धृष्टद्युम्नस्य भीमस्य शतानीकस्य वा विभो। पाञ्चालानाञ्च सर्व्वेषां चेदीनाञ्चैव भारत।
एष कर्णो रणे पार्थ पाण्डवानामनीकिनीं। शरैर्विध्वंसयति वै नलिनीमिव कुञ्जरः।

एते द्रवन्ति रथिनस्त्वदीयाः पाण्डुनन्दन । पश्य पश्य यथा पार्थ गच्छन्त्येते महारथाः ।
एते भारत मातङ्गाः कर्णेनाभिहताः शरैः । आर्त्तनादान् विकुर्व्वाणा विद्रवन्ति दिशो दश । ४००५
रथानां द्रवते वृन्दमेतच्चैव समन्ततः । द्राव्यमाणं रणे पार्थ कर्णेनामित्रकर्षिणा ।
हस्तिकक्षां रणे पश्य चरन्तीं तत्र तत्र ह । रथस्थं सूतपुत्रस्य केतुं केतुमतां वर ।
असौ धावति राधेयो भीमसेनरथं प्रति । किरन् शरशतान्येव विनिघ्नंस्तव वाहिनीं ।
एतान् पश्य च पाञ्चालान् द्राव्यमाणान् महारथान् । शक्रेणेव यथा दैत्यान् हन्यमानान् महाहवे ।
एष कर्णो रणे जित्वा पाञ्चालान् पाण्डुसृञ्जयान् । दिशो विप्रेक्षते सर्व्वास्त्वदर्थमिति मे मतिः । ४०१०
तथा पार्थ धनुः श्रेष्ठं विकर्षन् साधु शोभते । शत्रुं जित्वा यथा शक्रो देवसङ्घैः समावृतः ।
एते नर्द्दन्ति कौरव्या दृष्ट्वा कर्णस्य विक्रमं । त्रासयन्तो रणे पाण्डून् सृञ्जयांश्च समन्ततः ।
एष सर्व्वात्मना पाण्डून् त्रासयित्वा महारणे । अभिभाषति राधेयः सर्व्वसैन्यानि मानद ।
अभिद्रवत भद्रं वो द्रुतं द्रवत कौरवाः । यथा जीवन् वः कश्चिन्मुच्येत युधि सृञ्जयाः ।
तथा कुरुत सम्पन्ना वयं यास्याम पृष्ठतः । एवमुक्त्वा गतो ह्येष पृष्ठतो विकिरञ्छरान् । ४०१५
पश्य कर्णं रणे पार्थ श्वेतच्छत्रविराजितं । उदयं पर्व्वतं यद्वच्चन्द्रेणाभिशोभितं ।
पूर्णचन्द्रनिकाशेन मूर्द्ध्नि छत्रेण भारत । प्रेक्षमाणेन समरे श्रीमच्छतशलाकिना ।
एष त्वां प्रेक्षते कर्णः सकटाक्षं विशाम्पते । उत्तमं यत्नमास्थाय ध्रुवमेष्यति संयुगे ।
पश्य ह्येनं महाबाहो विधुन्वानं महद्धनुः । शरांश्चाशीविषाकारान् विसृजन्तं महारणे ।
असौ निवृत्तो राधेयो दृष्ट्वा ते वानरध्वजं । प्रार्थयन् समरे पार्थ त्वया सह परन्तपः । ४०२०
वधाय चात्मनोऽभ्येति दीप्तास्यं शलभो यथा । कर्णमेकाकिनं दृष्ट्वा रथानीकेन भारत ।
रिरक्षिषुः सुसंरब्धो धार्त्तराष्ट्रो निवर्त्तते । सर्व्वैः सहैभिर्दुष्टात्मा वध्यताञ्च प्रयत्नतः ।
त्वया यशश्च राज्यञ्च सुखञ्चोत्तममिच्छता । अहीनयोर्व्विश्रुतयोर्युवयोर्योत्स्यमानयोः ।
देवासुरे पार्थ मृधे देवदानवयोरिव । त्वाञ्च दृष्ट्वाऽतिसंरब्धं कर्णञ्च भरतर्षभ ।
असौ दुर्य्योधनः क्रुद्धो नोत्तरं प्रतिपद्यते । आत्मानञ्च कृतात्मानं समीक्ष्य भरतर्षभ । ४०२५
कृतागसञ्च राधेयं धर्म्मात्मनि युधिष्ठिरे । प्रतिपद्यस्व कौन्तेय प्राप्तकालमनन्तरं ।
आर्य्यां युद्धे मतिं कृत्वा प्रत्येहि रथयूथपं । पञ्च ह्येतानि मुख्यानि रथानां रथसत्तम ।
शतान्यायान्ति समरे बलिनाममिततेजसां । पञ्च नागसहस्राणि द्विगुणा वाजिनस्तथा ।
अभिसंहत्य कौन्तेय पदातिप्रयुतानि च । अन्योन्यरक्षितं वीरबलं त्वामभिवर्त्तते ।
सूतपुत्रं महेष्वासं दर्शयात्मानमात्मना । उत्तमं यत्नमास्थाय प्रत्येहि भरतर्षभ । ४०३०
असौ कर्णः सुसंरब्धः पाञ्चालानभिधावति । केतुमस्य हि पश्यामि धृष्टद्युम्नरथं प्रति ।
समुपैष्यति पाञ्चालानिति मन्ये परन्तप । आचक्षे प्रियं पार्थ तवेदं भरतर्षभ ।
राजाऽसौ कुशली श्रीमान् धर्म्मपुत्रो युधिष्ठिरः । असौ भीमो महाबाहुः संनिवृत्तश्चमूमुखे ।

वृतः सृञ्जयसैन्येन शैनेयेन च भारत। वध्यन्त एते समरे कौरवा निशितैः शरैः।
भीमसेनेन कौन्तेय पाञ्चालैश्च महात्मभिः। सेना हि धार्त्तराष्ट्रस्य विमुखा प्राद्रवद्रणे। २०३५
विप्रधावति वेगेन भीमस्याभिहता शरैः। विपन्नसस्येव मही रुधिरेण समुक्षिता।
भारती भरतश्रेष्ठ सेना कृपणदर्शना। निवृत्तं पश्य कौन्तेय भीमसेनं युधां पतिं।
आशीविषमिव क्रुद्धं द्रावयन्तं वरूथिनीं। पीतरक्तासितसितास्तारा चन्द्रार्कमण्डिताः।
पताका विप्रकीर्य्यन्ते छत्राण्येतानि चार्जुन। सौवर्णा राजताश्चैव तैजसाश्च पृथग्विधाः।
केतवोऽभिनिपात्यन्ते हस्तिनश्च प्रकीर्य्यते। रथेभ्यः प्रपतन्त्येते रथिनो विगतासवः। २०४०
नानावर्णैर्हता बाणैः पाञ्चालैरपलायिभिः। निर्मनुष्यान् गजानश्वान् रथांश्चैव धनञ्जय।
समाद्रवन्ति पाञ्चाला धार्त्तराष्ट्रांस्तरस्विनः। विमृद्नन्ति नरव्याघ्रा भीमसेनबलाश्रयात्।
बलं परेषां दुर्द्धर्षास्त्यक्त्वा प्राणानरिन्दम। एते नर्दन्ति पाञ्चाला ध्मापयन्ति च वारिजान्।
अभिद्रवन्ति च रणे मृद्नन्तः सायकैः परान्। पश्यस्वैषां च माहात्म्यं पाञ्चाला हि पराक्रमात्।
धार्त्तराष्ट्रान् विनिघ्नन्ति क्रुद्धाः सिंहा इव द्विपान्। अस्त्रमाच्छिद्य शत्रूणां सायुधानां निरायुधाः। २०४५
तेनैवैतानमोघास्त्रा निघ्नन्ति च नदन्ति च। शिरांस्येतानि पात्यन्ते शत्रूणां बाहवोऽपि च।
रथनागहया वीरा यशस्याः सर्व एव च। सर्वतश्चाभिपन्नैषा धार्त्तराष्ट्री महाचमूः।
पाञ्चालैर्भीमसादेत्य हंसैर्गङ्गेव वेगितैः। कुर्वन्ति च पराक्रान्ताः पाञ्चालानां निवारणे।
कृपकर्णादयो वीरा वृषभाणामिवर्षभाः। भीमास्त्रेण सुनिर्भग्नान् धार्त्तराष्ट्रानवारयन्।
धृष्टद्युम्नमुखा वीरा घ्नन्ति शत्रून् सहस्रशः। पाञ्चालेष्वभिभूतेषु द्विषद्भिरपभीर्नदन्। २०५०
अनुपक्षमवस्कन्द्य शरानस्यति मारुतिः। विपक्षभूयिष्ठतरा धार्त्तराष्ट्री महाचमूः।
रथाश्चैते सुवित्रस्ता भीमसेनभयार्दिताः। पश्य भीमेन नाराचैश्छिन्ना नागाः पतन्त्यमी।
वज्रिवज्राहतानीव शिखराणि धराभृतां। भीमसेनस्य निर्भिन्ना बाणैः सन्नतपर्व्वभिः।
स्वान्यनीकानि मृद्नन्तो द्रवन्त्येते महागजाः। अभिजानीहि भीमस्य सिंहनादं सुदुःसहं।
नदतोऽर्ज्जुन संग्रामे वीरस्य जितकाशिनः। एष नैषादिरभ्येति द्विपमुख्येन पाण्डव। २०५५
जिघांसुस्तोमरैः क्रुद्धो दण्डपाणिरिवान्तकः। सतोमरावस्य भुजौ छिन्नौ भीमेन गर्ज्जतः।
तीक्ष्णैरग्निरविप्रख्यैर्नाराचैर्दशभिर्हतः। हत्वैनं पुनरायाति नागानन्यान् प्रहारिणः।
पश्य नीलाम्बुदनिभान् महामात्रैरधिष्ठितान्। शक्तितोमरसंघातैर्व्विनिघ्नन्तं वृकोदरं।
सप्त सप्त च नागांस्तान् वैजयन्तीश्च सध्वजाः। निहत्य निशितैर्बाणैश्छिन्नाः पार्थाग्रजेन ते।
दशभिर्दशभिश्चैको नाराचैर्निहतो गजः। न चासौ धार्त्तराष्ट्राणां श्रूयते निनदस्तथा। २०६०
पुरन्दरसमे क्रुद्धे निवृत्ते भरतर्षभ। अक्षौहिण्यस्तथा तिस्रो धार्त्तराष्ट्रस्य संहताः।
क्रुद्धेन भीमसेनेन नरसिंहेन वारिताः।
॥ सञ्जय उवाच॥ भीमसेनेन तत् कर्म्म कृतं दृष्ट्वा सुदुष्करं। अर्ज्जुनो व्यधमच्छिष्टानहितान्निशितैः शरैः।

ते वध्यमानाः समरे संशप्तकगणाः प्रभो । प्रभग्नाः समरे भीता दिशो दश महाबलाः ।
शक्रस्यातिथितां गत्वा विशोका ह्यभवंस्तदा । पार्थश्च पुरुषव्याघ्र शरैः सन्नतपर्व्वभिः । ३०६५
जघान धार्त्तराष्ट्रस्य चतुर्व्विधबलां चमूं ।
इति श्रीमहाभारते कर्णपर्व्वणि संकुलयुद्धे षष्टितमोऽध्यायः ॥ ६० ॥
॥ धृतराष्ट्र उवाच ॥ निवृत्ते भीमसेने च पाण्डवे च युधिष्ठिरे । वध्यमाने बले चापि मामके पाण्डुसृञ्जयैः ।
द्रवमाणे बलौघे च निरानन्दे मुहुर्म्मुहुः । किमकुर्व्वन्त कुरवस्तन्ममाचक्ष्व सञ्जय ।
॥ सञ्जय उवाच ॥ दृष्ट्वा भीमं महाबाहुं सूतपुत्त्रः प्रतापवान् । क्रोधरक्तेक्षणो राजन् भीमसेनमुपाद्रवत् ।
तावकञ्च बलं दृष्ट्वा भीमसेनात् पराङ्मुखं । यत्नेन महता राजन् पर्य्यवस्थापयद्बली । ३०७०
व्यवस्थाप्य महाबाहुस्तव पुत्त्रस्य वाहिनीं । प्रत्युद्ययौ तदा कर्णः पाण्डवान् युद्धदुर्म्मदान् ।
प्रत्युद्ययुस्तु राधेयं पाण्डवानां महारथाः । धुन्वानाः कार्म्मुकाण्याजौ विक्षिपन्तश्च सायकान् ।
भीमसेनः शिनेर्नप्ता शिखण्डी जनमेजयः । धृष्टद्युम्नश्च बलवान् सर्व्वे चापि प्रभद्रकाः ।
जिघांसन्तो नरव्याघ्राः समन्तात्तव वाहिनीं । अभ्यद्रवन्त संक्रुद्धाः समरे जितकाशिनः ।
तथैव तावका राजन् पाण्डवानामनीकिनीं । अभ्यद्रवन्त त्वरिता जिघांसन्तो महारथाः । ३०७५
रथनागाश्वकलिलं पत्तिध्वजसमाकुलं । बभूव पुरुषव्याघ्र सैन्यमद्भुतदर्शनं ।
शिखण्डी च ययौ कर्णं धृष्टद्युम्नः सुतं तव । दुःशासनं महाराज महत्या सेनया वृतं ।
नकुलो वृषसेनन्तु चित्रसेनं युधिष्ठिरः । उलूकं समरे राजन् सहदेवः समभ्ययात् ।
सात्यकिः शकुनिञ्चापि द्रौपदेयाश्च कौरवान् । अर्ज्जुनञ्च रणे यत्तो द्रोणपुत्त्रो महारथः ।
युधामन्युं महेष्वासं गौतमोऽभ्यपतद्रणे । कृतवर्म्मा च बलवानुत्तमौजसमाद्रवत् । ३०८०
भीमसेनः कुरून् सर्व्वान् पुत्त्रांश्च तव मारिष । सहानीकान्महाबाहुरेक एव न्यवारयत् ।
शिखण्डी तु ततः कर्णं विचरन्तमभीतवत् । भीष्महन्ता महाराज वारयामास पत्त्रिभिः ।
प्रतिरुद्धस्ततः कर्णो रोषात् प्रस्फुरिताधरः । शिखण्डिनं त्रिभिर्ब्बाणैर्भ्रुवोर्म्मध्येऽभ्यताडयत् ।
धारयंस्तु स तान् बाणान् शिखण्डी बह्वशोभत । राजतः पर्व्वतो यद्वत् त्रिभिः शृङ्गैरिवोत्थितैः ।
सोऽतिविद्धो महेष्वासः सूतपुत्त्रेण संयुगे । कर्णं विव्याध समरे नवत्या निशितैः शरैः । ३०८५
तस्य कर्णो हयान् हत्वा सारथिञ्च त्रिभिः शरैः । उन्ममाथ ध्वजञ्चास्य क्षुरप्रेण महारथः ।
हताश्वात्तु ततो यानादवप्लुत्य महारथः । शक्तिं चिक्षेप कर्णाय संक्रुद्धः शत्रुतापनः ।
तां छित्त्वा समरे कर्णस्त्रिभिर्भारत सायकैः । शिखण्डिनमथाविध्यन्नवभिर्निशितैः शरैः ।
कर्णचापच्युतान् बाणान् वर्ज्जयंस्तु नरोत्तम । अपयातस्ततस्तूर्णं शिखण्डी भृशविक्षतः ।
ततः कर्णो महाराज पाण्डुसैन्यान्यशातयत् । तूलराशिं समासाद्य यथा वायुर्म्महाबलः । ३०९०
धृष्टद्युम्नो महाराज तव पुत्त्रेण पीडितः । दुःशासनं त्रिभिर्ब्बाणैः प्रत्यविध्यत् स्तनान्तरे ।
तस्य दुःशासनो बाहुं सव्यं विव्याध मारिष । स तेन रुक्मपुङ्खेन भल्लेनानतपर्व्वणा ।

धृष्टद्युम्नस्तु निर्व्विद्धः शरं घोरममर्षणः । दुःशासनाय संक्रुद्धः प्रेषयामास भारत ।
आपतन्तं महावेगं धृष्टद्युम्नसमीरितं । शरैश्चिच्छेद पुत्त्रस्ते त्रिभिरेव विशाम्पते ।
अथापरैः सप्तदशैर्भल्लैः कनकभूषणैः । धृष्टद्युम्नं समासाद्य बाह्वोरुरसि चार्पयत् । १०९५
ततः स पार्षतः क्रुद्धो धनुश्चिच्छेद मारिष । क्षुरप्रेण सुतीक्ष्णेन तत उच्चुक्रुशुर्जनाः ।
अथान्यद्धनुरादाय पुत्त्रस्ते प्रहसन्निव । धृष्टद्युम्नं शरव्रातैः समन्तात् पर्य्यवारयत् ।
तव पुत्त्रस्य ते दृष्ट्वा विक्रमं सुमहात्मनः । व्यस्मयन्त रणे योधाः सिद्धाश्चाप्सरसस्तथा ।
धृष्टद्युम्नं न पश्याम घटमानं महाबलं । दुःशासनेन संरुद्धं सिंहेनेव महागजं ।
ततः सरथनागाश्वाः पाञ्चालाः पाण्डुपूर्व्वज । सेनापतिं परीप्सन्तो रुरुधुस्तनयं तव । ११००
ततः प्रववृते युद्धं तावकानां परैः सह । घोरं प्राणभृतां काले भीमरूपं परन्तप ।
नकुलं वृषसेनस्तु भित्त्वा पञ्चभिरायसैः । पितुः समीपे तिष्ठन् वै त्रिभिरन्यैरविध्यत ।
नकुलस्तु ततः शूरो वृषसेनं हसन्निव । नाराचेन सुतीक्ष्णेन विव्याध हृदये भृशं ।
सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्षणः । शत्रुं विव्याध विंशत्या स च तं पञ्चभिः शरैः ।
ततः शरसहस्रेण तावुभौ पुरुषर्षभौ । अन्योन्यमाच्छादयतामथोऽभज्यत वाहिनी । ११०५
स दृष्ट्वा प्रद्रुतां सेनां धार्त्तराष्ट्रस्य सूतजः । निवारयामास बलादनुपत्य विशाम्पते ।
निवृत्ते तु ततः कर्णे नकुलः कौरवान् ययौ । कर्णपुत्त्रस्तु समरे हित्वा नकुलमेव तु ।
जुगोप चक्रं त्वरितो राधेयस्यैव मारिष । उलूकस्तु रणे क्रुद्धः सहदेवेन वारितः ।
तस्याश्वांश्चतुरो हत्वा सहदेवः प्रतापवान् । सारथिं प्रेषयामास यमस्य सदनं प्रति ।
उलूकस्तु ततो यानादवप्लुत्य विशाम्पते । त्रिगर्त्तानां बलं तूर्णं जगाम पितृनन्दनः । १११०
सात्यकिः शकुनिं विद्ध्वा विंशत्या निशितैः शरैः । ध्वजं चिच्छेद भल्लेन सौबलस्य हसन्निव ।
सौबलस्तस्य समरे क्रुद्धो राजा प्रतापवान् । विदार्य्य कवचं भूयो ध्वजं चिच्छेद काञ्चनं ।
अथैनं निशितैर्बाणैः सात्यकिः प्रत्यविध्यत । सारथिञ्च महाराज त्रिभिरेव समार्पयत् ।
अथास्य वाहांस्त्वरितः शरैर्निन्ये यमक्षयं । ततोऽवप्लुत्य सहसा शकुनिर्भरतर्षभ ।
आरुरोह रथं तूर्णमुलूकस्य महात्मनः । अपोवाहाथ शीघ्रं स शैनेयाद्युद्धशालिनः । १११५
सात्यकिस्तु रणे राजंस्तावकानामनीकिनीं । अभिदुद्राव वेगेन ततोऽनीकमभज्यत ।
शैनेयशरसंछन्नं तव सैन्यं विशाम्पते । भेजे दश दिशस्तूर्णं न्यपतच्च गतासुवत् ।
भीमसेनं तव सुतो वारयामास संयुगे । तन्तु भीमो मुहूर्त्तेन व्यश्वसूतरथध्वजं ।
चक्रे लोकेश्वरं तत्र तेनातुष्यन्त वै जनाः । ततोऽपायान्नृपस्तत्र भीमसेनस्य गोचरात् ।
कुरुसैन्यं ततः सर्व्वं भीमसेनमुपाद्रवत् । तत्र नादो महानासीत् भीमसेनं जिघांसतां । ११२०
युधामन्युः कृपं विद्ध्वा धनुरस्याशु चिच्छिदे । अथान्यद्धनुरादाय कृपः शस्त्रभृताम्वरः ।
युधामन्योर्ध्वजं सूतं छत्रञ्चापातयत् क्षितौ । ततोऽपायाद्रथेनैव युधामन्युर्महारथः ।

उत्तमौजाश्च हार्द्दिक्यं भीमं भीमपराक्रमं । छादयामास सहसा मेघो वृष्ट्येव पर्व्वतं ।
तद्युद्धमासीत् सुमहत् घोररूपं परन्तप । यादृशं न मया युद्धं दृष्टपूर्व्वं विशाम्पते ।
कृतवर्म्मा ततो राजन्नुत्तमौजसमाहवे । हृदि विव्याध सहसा रथोपस्थ उपाविशत् । ३१०५
सारथिस्तमपोवाह रथेन रथिनाम्वरं । कुरुसैन्यं ततः सर्व्वं भीमसेनमुपाद्रवत् ।
दुःशासनः सौबलश्च गजानीकेन पाण्डवं । महता परिवार्य्यैव क्षुद्रकैरभ्यताडयत् ।
ततो भीमः शरशतैर्दुर्य्योधनममर्षणं । विमुखीकृत्य तरसा गजानीकमुपाद्रवत् ।
तमापतन्तं सहसा गजानीकं वृकोदरः । दृष्ट्वैव सुभृशं क्रुद्धो दिव्यमस्त्रमुदैरयत् ।
शरैर्गजानभ्यहनदवज्रेणेन्द्र इवासुरान् । ततोऽन्तरीक्षं वाणौघैः शलभैरिव पावकं । ३११०
छादयामास समरे गजान्निघ्नन् वृकोदरः । ततः कुञ्जरयूथानि समेतानि सहस्रशः ।
व्यधमत्तरसा भीमो मेघसङ्घानिवानिलः । सुवर्णजालपिहिता मणिजालैश्च कुञ्जराः ।
रेजुरभ्यधिकं संख्ये विद्युत्वन्त इवाम्बुदाः । ते वध्यमाना भीमेन गजा राजन् विदुद्रुवुः ।
केचिद्विभिन्नहृदयाः कुञ्जरा न्यपतन् भुवि । पतितैर्निपतद्भिश्च गजैर्हेमविभूषितैः ।
अशोभत मही तत्र विशीर्णैरिव पर्व्वतैः । दीप्ताभिरत्नवद्भिश्च पतितैर्गजयोधिभिः । ३११५
रराज भूमिः पतितैः क्षीणपुण्यैरिव ग्रहैः । ततो भिन्नकटा नागा भिन्नकुम्भकराश्च ये ।
दुद्रुवुः शतशः संख्ये भीमसेनशराहताः । केचिद्वमन्तो रुधिरं भयार्त्ताः पर्व्वतोपमाः ।
व्यद्रवञ्छरविद्धाङ्गा धातुचित्रा इवाचलाः । महाभुजगसङ्काशौ चन्दनागुरुरूषितौ ।
अपश्यं भीमसेनस्य धनुर्व्विक्षिपतौ भुजौ । तस्य ज्यातलनिर्घोषं श्रुत्वाऽशनिसमस्वनं ।
विमुञ्चन्तं शकृन्मूत्रं गजाः प्राद्रुद्रुवुर्भृशं । भीमसेनस्य तत् कर्म्म राजन्नेकस्य धीमतः । ३१२०
निघ्नतः सर्व्वभूतानि रुद्रस्येव च निर्व्वभौ ।

इति श्रीमहाभारते कर्णपर्व्वणि संकुलयुद्धे एकषष्टोऽध्यायः ॥ ६१ ॥

॥ सञ्जय उवाच ॥ ततः श्वेताश्वसंयुक्ते नारायणसमाहिते । तिष्ठन् रथवरे श्रीमानर्ज्जुनः समपद्यत ।
तद्बलं नृपतिश्रेष्ठ तावकं विजयो रणे । व्यक्षोभयदुदीर्णाश्वं महोदधिमिवानिलः ।
दुर्य्योधनस्तव सुतः प्रमत्ते श्वेतवाहने । अभ्येत्य सहसा क्रुद्धः सैन्यार्द्धेनाभिसंवृतः ।
पर्य्यवारयदायान्तं युधिष्ठिरममर्षणं । क्षुरप्राणां त्रिसप्तत्या ततोऽविध्यत पाण्डवं । ३१२५
अक्रुध्यत भृशं तत्र कुन्तीपुत्त्रो युधिष्ठिरः । स भल्लांस्त्रिंशतस्तूर्णं तव पुत्त्रे न्यवेशयत ।
ततोऽधावन्त कौरव्या जिघृक्षन्तो युधिष्ठिरं । दुष्टभावान् परान् ज्ञात्वा समवेता महारथाः ।
आजग्मुस्तं परीप्सन्तः कुन्तीपुत्त्रं युधिष्ठिरं । नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः ।
अक्षौहिण्या परिवृतास्तेऽभ्यधावन् युधिष्ठिरं । भीमसेनश्च समरे मृद्नंस्तव महारथान् ।
अभ्यधावदभिप्रेप्सू राजानं शत्रुभिर्वृतं । तांस्तु सर्व्वान् महेष्वासान् कर्णो वैकर्त्तनो नृपः । ३१३०
शरवर्षेण महता प्रत्यवारयदागतान् । शरौघान् विसृजन्तस्ते प्रेरयन्तश्च तोमरान् ।

न शेकुर्य्यतवन्तोऽपि राधेयं प्रतिवीक्षितुं । तांश्च सर्व्वान् महेष्वासान् सर्व्वशस्त्रास्त्रपारगान् ।
महता शरवर्षेण राधेयः प्रत्यवारयत् । दुर्य्योधनश्च विंशत्या शीघ्रमस्त्रमुदीरयन् ।
अविध्यत्तूर्णमभ्येत्य सहदेवः प्रतापवान् । स विद्धः सहदेवेन रराजाचलसन्निभः ।
प्रभिन्न इव मातङ्गो रुधिरेण परिप्लुतः । दृष्ट्वा तव सुतं तत्र गाढविद्धं सुतेजनैः । ३१५५
अभ्यधावद्दृढं क्रुद्धो राधेयो रथिनाम्वरः । दुर्य्योधनं तदा दृष्ट्वा शीघ्रमस्त्रमुदीर्य्य सः ।
तेन यौधिष्ठिरं सैन्यमवधीत् पार्षतं तथा । ततो यौधिष्ठिरं सैन्यं वध्यमानं महात्मना ।
सहसा प्राद्रवद्राजन् सूतपुत्रशरार्द्दितं । विविधा विशिखास्तत्र सम्पतन्तः परस्परं ।
फलैः पुङ्खान् समाजघ्नुः सूतपुत्रधनुश्च्युताः । अन्तरीक्षे शरौघाणां पततां च परस्परं ।
सङ्घर्षेण महाराज पावकः समजायत । ततो दश दिशः कर्णः शलभैरिव पातिभिः । ३१६०
अभ्यघ्नंस्तरसा राजन् शरैः परशरीरगैः । रक्तचन्दनसन्दिग्धौ मणिहेमविभूषितौ ।
बाहू व्यत्यक्षिपत् कर्णः परमास्त्रं विदर्शयन् । ततः सर्व्वा दिशो राजन् सायकैर्व्विप्रमोहयन् ।
अपीडयद्भृशं कर्णो धर्म्मराजं युधिष्ठिरं । ततः क्रुद्धो महाराज धर्म्मपुत्रो युधिष्ठिरः ।
निशितैरिषुभिः कर्णं पञ्चाशद्भिः समार्पयत् । बाणान्धकारमभवत्तद्युद्धं घोरदर्शनं ।
हाहाकारो महानासीत्तावकानां विशाम्पते । वध्यमाने तदा सैन्ये धर्म्मपुत्रेण मारिष । ३१६५
सायकैर्व्विविधैस्तीक्ष्णैः कङ्कपत्रैः शिलाशितैः । भल्लैरनेकैर्व्विविधैः शक्तृष्टिमुषलैरपि ।
यत्र यत्र स धर्म्मात्मा दुष्टां दृष्टिं व्यसर्ज्जयत । तत्र तत्र व्यशीर्य्यन्त तावका भरतर्षभ ।
कर्णोऽपि भृशसंक्रुद्धो धर्म्मराजं युधिष्ठिरं । नाराचैरर्द्धचन्द्रैश्च वत्सदन्तैश्च संयुगे ।
अमर्षी क्रोधनश्चैव रोषप्रस्फुरिताननः । सायकैरप्रमेयात्मा युधिष्ठिरमभिद्रवत् ।
युधिष्ठिरश्चापि सूतं स्वर्णपुङ्खैः शितैः शरैः । प्रहसन्निव तं कर्णः कङ्कपत्रैः शिलाशितैः । ३१७०
उरस्यविध्यद्राजानं त्रिभिर्भल्लैश्च पाण्डवं । स पीडितो भृशं तेन धर्म्मराजो युधिष्ठिरः ।
उपविश्य रथोपस्थे सूतं याहीत्यचोदयत् । प्राक्रोशन्त ततः सर्व्वे धार्त्तराष्ट्राः सराजकाः ।
गृह्णीध्वमिति राजानमभ्यधावन्त सर्व्वशः । ततः शताः सप्तदश केकयानां प्रहारिणां ।
पाञ्चालैः सहिता राजन् धार्त्तराष्ट्रान् न्यवारयन् । तस्मिन् सुतुमुले युद्धे वर्त्तमाने जनक्षये ।
दुर्य्योधनश्च भीमश्च समेयातां महाबलौ । ३१७५
इति श्रीमहाभारते कर्णपर्व्वणि संकुलयुद्धे द्विषष्टोऽध्यायः ॥ ६२ ॥
॥ सञ्जय उवाच ॥ कर्णोऽपि शरजालेन केकयानां महारथान् । व्यधमत् परमेष्वासानग्रतः पर्य्यवस्थितान् ।
तेषां प्रयतमानानां राधेयस्य निवारणे । रथान् पञ्चशतान् कर्णः प्राहिणोद्यमसादनं ।
अविषह्यं ततो दृष्ट्वा राधेयं युधि योधिनः । भीमसेनमुपागच्छन् कर्णबाणप्रपीडिताः ।
रथानीकं विदार्य्यैव शरजालैरनेकधा । कर्ण एकरथेनैव युधिष्ठिरमुपाद्रवत् ।
सेनानिवेशमार्च्छन्तं मार्गणैः क्षतविक्षतं । यमयोर्म्मध्यगं वीरं शनैर्यान्तं विचेतसं । ३१८०

समासाद्य तु राजानं दुर्य्योधनहितेप्सया । सूतपुत्रस्त्रिभिस्तीक्ष्णैर्विव्याध परमेषुभिः ।
तथैव राजा राधेयं प्रत्यविध्यत् स्तनान्तरे । शरैस्त्रिभिश्च यन्तारं चतुर्भिश्चतुरो हयान् ।
चक्ररक्षौ तु पार्थस्य माद्रीपुत्रौ परन्तपौ । तावप्यधावतां कर्णं राजानं मा वधीरिति ।
तौ पृथक् शरवर्षाभ्यां राधेयमभ्यवर्षतां । नकुलः सहदेवश्च परमं यत्नमास्थितौ ।
तथैव तौ प्रत्यविध्यत् सूतपुत्रः प्रतापवान् । भल्लाभ्यां शितधाराभ्यां महात्मानावरिन्दमौ । ३१८५
दन्तवर्णांस्तु राधेयो निजघान मनोजवान् । युधिष्ठिरस्य सङ्ग्रामे कालवालान् हयोत्तमान् ।
ततोऽपरेण भल्लेन शिरस्त्राणमपातयत् । कौन्तेयस्य महेष्वासः प्रहसन्निव सूतजः ।
तथैव नकुलस्यापि हयान् हत्वा प्रतापवान् । ईषां धनुश्च चिच्छेद माद्रीपुत्रस्य धीमतः ।
तौ हताश्वौ हतरथौ पाण्डवौ भृशविक्षतौ । भ्रातरावारुरुहतुः सहदेवरथं तदा ।
तौ दृष्ट्वा मातुलस्तत्र विरथौ परवीरहा । अभ्यभाषत राधेयं मद्रराजोऽनुकम्पया । ३१९०
योद्धव्यमद्य पार्थेन फाल्गुनेन त्वया सह । किमर्थं धर्मराजेन युध्यसे भृशरोषितः ।
क्षीणशस्त्रास्त्रकवचः क्षीणबाणो विबाणधिः । श्रान्तसारथिवाहश्च छन्नोऽस्त्रैररिभिस्तथा ।
पार्थमासाद्य राधेय उपहास्यो भविष्यसि । एवमुक्तोऽपि कर्णस्तु मद्रराजेन संयुगे ।
तथैव कर्णः संरब्धो युधिष्ठिरमताडयत् । शरैस्तीक्ष्णैः पराविध्यत् माद्रीपुत्रौ च पाण्डवौ ।
प्रहस्य समरे कर्णश्चकार विमुखं शरैः । ततः शल्यः प्रहस्येदं कर्णं पुनरुवाच ह । ३१९५
रथस्थमतिसंरब्धं युधिष्ठिरवधे भृशं । यदर्थं धार्त्तराष्ट्रेण सततं मानितो भवान् ।
तं पार्थं जहि राधेय किन्ते हत्वा युधिष्ठिरं । शङ्खयोर्ध्मातयोः शब्दः सुमहानेष कृष्णयोः ।
श्रूयते चापघोषोऽयं प्रावृषीवाम्बुदस्य हि । असौ निघ्नन् रथोदारानर्ज्जुनः शरवृष्टिभिः ।
सर्व्वां ग्रसति नः सेनां कर्ण पश्यैनमाहवे । पृष्ठरक्षौ तु शूरस्य युधामन्यूत्तमौजसौ ।
उत्तरञ्चास्य वै शूरश्चक्रं रक्षति सात्यकिः । धृष्टद्युम्नस्तथा चास्य चक्रं रक्षति दक्षिणं । ३२००
भीमसेनश्च वै राज्ञा धार्त्तराष्ट्रेण युध्यते । यथा न हन्यात्तं भीमः सर्व्वेषां नोऽद्य पश्यतां ।
तथा राधेय क्रियतां राजा मुच्येत नो यथा । पश्यैनं भीमसेनेन ग्रस्तमाहवशोभिनं ।
यदि त्वासाद्य मुच्येत विस्मयः सुमहानभूत् । परित्राह्येनमभ्येत्य संशयं परमं गतं ।
किन्नु माद्रीसुतौ हत्वा राजानञ्च युधिष्ठिरं । इति शल्यवचः श्रुत्वा राधेयः पृथिवीपते ।
दृष्ट्वा दुर्य्योधनञ्चैव भीमग्रस्तं महाहवे । राजगृद्धी भृशञ्चैव शल्यवाक्यप्रचोदितः । ३२०५
अजातशत्रुमुत्सृज्य माद्रीपुत्रौ च पाण्डवौ । तव पुत्रं परित्रातुमभ्यधावत वीर्य्यवान् ।
मद्रराजप्रणुदितैरश्वैराकाशगैरिव । गते कर्णे तु कौन्तेयः पाण्डुपुत्रो युधिष्ठिरः ।
अपायाज्जवनैरश्वैः सहदेवश्च मारिष । ताभ्यां च सहितस्तूर्णं व्रीडन्निव नरेश्वरः ।
प्राप्य सेनानिवेशञ्च मार्गणैः क्षतविक्षतः । अवतीर्णो रथात्तूर्णमविशच्छयनं शुभं ।
अपनीतशल्यः सुभृशं हृच्छल्याभिनिपीडितः । सोऽब्रवीद् भ्रातरौ राजा माद्रीपुत्रौ महारथौ । ३२१०

अनीकं भीमसेनस्य पाण्डवावाशु गच्छतां । जीमूत इव नर्द्दंस्तु युध्यते स वृकोदरः ।
ततोऽन्यं रथमास्थाय नकुलो रथपुङ्गवः । सहदेवश्च तेजस्वी भ्रातरौ शत्रुकर्षणौ ।
तुरगैर्व्वातरंहोभिर्यात्वा भीमस्य शुष्मिणौ । पश्यन्तौ विविधान् योधान् पातितान् युधिविक्रमात् ।
अनीकैः सहितौ तत्र भ्रातरौ समवस्थितौ ।
इति श्रीमहाभारते कर्णपर्व्वणि संकुलयुद्धे त्रिषष्टोऽध्यायः ॥ ६३ ॥
॥ सञ्जय उवाच ॥ द्रौणिस्तु रथवंशेन महता परिवारितः । अपतत् सहसा राजन् यत्र पार्थो व्यवस्थितः । ३२१५
तमापतन्तं सहसा शूरः शौरिसहायवान् । दधार सहसा पार्थो वेलेव मकरालयं ।
ततः क्रुद्धो महाराज द्रोणपुत्त्रः प्रतापवान् । अर्ज्जुनं वासुदेवञ्च छादयामास सायकैः ।
अवच्छन्नौ ततः कृष्णौ दृष्ट्वा तत्र महारथाः । विस्मयं परमं गत्वा प्रैक्षन्त कुरवस्तदा ।
अर्ज्जुनस्तु ततो दिव्यमस्त्रं चक्रे हसन्निव । तदस्त्रं वारयामास ब्राह्मणो युधि भारत ।
यद्यद्धि व्याक्षिपद्युद्धे पाण्डवोऽस्त्रं जिघांसया । तत्तदस्त्रं महेष्वासो द्रोणपुत्त्रो व्यशातयत् । ३२२०
अस्त्रयुद्धे ततो राजन् वर्त्तमाने महाभये । अपश्याम रणे द्रौणिं व्यात्ताननमिवान्तकं ।
स दिशः प्रदिशश्चैव छादयित्वा त्वजिह्मगैः । वासुदेवं त्रिभिर्ब्बाणैरविध्यद्दक्षिणे भुजे ।
ततोऽर्ज्जुनो हयान् हत्वा सर्व्वांस्तस्य महात्मनः । चकार समरे भूमिं शोणितौघतरङ्गिणीं ।
सर्व्वलोकवहां रौद्रां परलोकवहां नदीं । सरथान्रथिनः सर्व्वान् पार्थचापच्युतैः शरैः ।
द्रौणेरपहतान् संख्ये ददृशुः स च तां तथा । प्रावर्त्तयन्महाघोरां नदीं परवहां तथा । ३२२५
तयोस्तु व्याकुले युद्धे द्रौणेः पार्थस्य दारुणे । अमर्य्यादं योधयन्तः पर्य्यधावन्त पृष्ठतः ।
रथैर्हताश्वसूतैश्च हतारोहैश्च वाजिभिः । द्विरदैश्च हतारोहैर्म्महामात्रैर्हतद्विपैः ।
पार्थेन समरे राजन् कृतो घोरो जनक्षयः । निहता रथिनः पेतुः पार्थचापच्युतैः शरैः ।
हयाश्च पर्य्यधावन्त मुक्तयोक्त्रास्ततस्ततः । तद्दृष्ट्वा कर्म्म पार्थस्य द्रौणिराहवशोभिनः ।
अर्ज्जुनं जयतां श्रेष्ठं त्वरितोऽभ्येत्य वीर्य्यवान । विधुन्वानो महच्चापं कार्त्तस्वरविभूषितं । ३२३०
अवाकिरत्ततो द्रौणिः समन्तान्निशितैः शरैः । भूयोऽर्ज्जुनं महाराज द्रौणिरायम्य पत्रिणा ।
वक्षोदेशे भृशं पार्थं ताडयामास निर्द्दयं । सोऽतिविद्धो रणे तेन द्रोणपुत्त्रेण भारत ।
गाण्डीवधन्वा प्रसभं शरवर्षैरुदारधीः । सञ्छाद्य समरे द्रौणिं चिच्छेद चास्य कार्म्मुकं ।
स च्छिन्नधन्वा परिघं वज्रस्पर्शसमं युधि । आदाय चिक्षेप तदा द्रोणपुत्त्रः किरीटिनं ।
तमापतन्तं परिघं जाम्बूनदपरिष्कृतं । चिच्छेद सहसा राजन् प्रहसन्निव पाण्डवः । ३२३५
स पपात तदा भूमौ निकृत्तः पार्थसायकैः । विकीर्णः पर्व्वतो राजन् यथा वज्रेण ताडितः ।
ततः क्रुद्धो महाराज द्रोणपुत्त्रो महारथः । रौद्रेण चास्त्रवेगेन बीभत्सुं समवाकिरत् ।
तस्यैन्द्रजालावततं समीक्ष्य पार्थो राजन् गाण्डीवमाददे सः । ऐन्द्रं जालं प्रत्यहनत्तरस्वी वरास्त्रमादाय महेन्द्रसृष्टं ।
विदार्य्य तज्जालमहेन्द्रयुक्तं पार्थस्ततो द्रौणिरथं क्षणेन । प्रच्छादयामास ततोऽभ्युपेत्य द्रौणिस्तदा पार्थशराभिभूतः ।

विगाह्य तां पाण्डववाणवृष्टिं शरैः परं नाम ततः प्रकाश्य । शतेन कृष्णं सहसाऽभ्यविध्यत्त्रिभिः शतैरर्ज्जुनं क्षुद्रकाणां । ३२४०
ततोऽर्ज्जुनः सायकानां शतेन गुरोः सुतं मर्म्मसु निर्ब्बिभेद । अश्वांश्च सूतञ्च तथा धनुर्ज्ज्यामवाकिरत् पश्यतां तावकानां ।

स विद्ध्वा मर्म्मसु द्रौणिं पाण्डवः परवीरहा । सारथिञ्चास्य भल्लेन रथनीडादपातयत् ।
स संगृह्य स्वयं वाहान् कृष्णौ प्राच्छादयच्छरैः । तत्राद्भुतमपश्याम द्रौणेराशु पराक्रमं ।
प्रायच्छत्तुरगान् यच्च फाल्गुनञ्चाप्ययोधयत् । तदस्य समरे राजन् सर्व्वे योधाः प्रपूजयन् ।
ततः प्रहस्य बीभत्सुर्द्रौणपुत्त्रस्य संयुगे । क्षिप्रं रश्मीनथाश्वानां क्षुरप्रैश्चिच्छिदे जयः । ३२४५
प्राद्रवंस्तुरगास्ते तु शरवेगप्रपीडिताः । ततोऽभून्निनदो घोरस्तव सैन्यस्य भारत ।
पाण्डवास्तु जयं लब्ध्वा तव सैन्यं समाद्रवन् । समन्तान्निशितान् वाणान् विमुञ्चन्तो जयैषिणः ।
पाण्डवैस्तु महाराज धार्त्तराष्ट्री महाचमूः । पुनः पुनरथो वीरैः संयुगे जितकाशिभिः ।
पश्यतां ते महाराज पुत्त्राणाञ्चित्रयोधिनां । शकुनेः सौवलेयस्य कर्णस्य च विशाम्पते ।
वार्य्यमाणा महासेना पुत्त्रैस्तव जनेश्वर । न चातिष्ठत संग्रामे पीड्यमाना समन्ततः । ३२५०
अभवद्व्याकुलं भीतं पुत्त्राणां ते महद्बलं । तिष्ठ तिष्ठेति च ततः सूतपुत्त्रस्य जल्पतः ।
नावतिष्ठति सा सेना वध्यमाना महात्मभिः । अथोत्क्रुष्टं महाराज पाण्डवैर्ज्जितकाशिभिः ।
धार्त्तराष्ट्रबलं दृष्ट्वा विद्रुतं वै समन्ततः । ततो दुर्य्योधनः कर्णमब्रवीत् प्रणयादिव ।
पश्य कर्ण महासेना पाञ्चालैरर्द्दिता भृशं । त्वयि तिष्ठति सन्त्रासात् पलायनपरायणा ।
एतज्ज्ञात्वा महावाहो कालप्राप्तमरिन्दम । सहस्राणि च योधानां त्वामेव पुरुषोत्तम । ३२५५
क्रोशन्ति समरे वीर द्राव्यमाणानि पाण्डवैः । एतत् श्रुत्वा तु राधेयो दुर्य्योधनवचो महत् ।
मद्रराजमिदं वाक्यमब्रवीत् प्रहसन्निव । पश्य मे भुजयोर्वीर्य्यमस्त्राणाञ्च जनेश्वर ।
अद्य हन्मि रणे सर्व्वान् पाञ्चालान् पाण्डुभिः सह । वाहयाश्वान्नरव्याघ्र भद्रेणैव न संशयः ।
एवमुक्त्वा महाराज सूतपुत्त्रः प्रतापवान् । प्रगृह्य विजयं वीरो धनुः श्रेष्ठं पुरातनं ।
सज्यं कृत्वा महाराज संमृज्य च पुनः पुनः । सन्निवार्य्य च योधान् स सत्येन शपथेन च । ३२६०
प्रायोजयदमेयात्मा भार्गवास्त्रं महाबलः । ततो राजन् सहस्राणि प्रयुतान्यर्ब्बुदानि च ।
कोटिशश्च शरास्तीक्ष्णा निरगच्छन्महामृधे । ज्वलितैस्तैः शरैर्घोरैः कङ्कबर्हिणवाजितैः ।
संछन्ना पाण्डवी सेना न प्राज्ञायत किञ्चन । हाहाकारो महानासीत्पाञ्चालानां विशाम्पते ।
पीडितानां वलवता भार्गवास्त्रेण संयुगे । निपतद्भिर्गजै राजन्नश्वैश्चापि सहस्रशः ।
रथैश्चापि नरव्याघ्र नरैश्चापि समन्ततः । प्राकम्पत मही राजन्निहतैस्तैः समन्ततः । ३२६५
व्याकुलं सर्व्वमभवत पाण्डवानां महद्बलं । कर्णस्त्वेको युधां श्रेष्ठो विधूम इव पावकः ।
दहन् शत्रून्नरव्याघ्र शुशुभे स परन्तप । ते वध्यमानाः कर्णेन पाञ्चालाश्चेदिभिः सह ।
तत्र तत्र व्यमुह्यन्त वनदाहे यथा द्विपाः । चुक्रुशुश्च नरव्याघ्र यथा व्याघ्रा नरोत्तमाः ।
तेषान्तु क्रोशतामासीद्भीतानां रणमूर्द्धनि । धावताञ्च ततो राजंस्त्रस्तानाञ्च समन्ततः ।

आर्त्तनादो महांस्तत्र भूतानामिव संप्लवे । वध्यमानांस्तु तान् दृष्ट्वा सूतपुत्रेण मारिष । ३३७०
वित्रेसुः सर्व्वभूतानि तिर्य्यग्योनिगतान्यपि । ते वध्यमानाः समरे सूतपुत्रेण सृञ्जयाः ।
अर्ज्जुनं वासुदेवञ्च क्रोशन्ति च मुहुर्मुहुः । प्रेतराजपुरे यद्वत्प्रेतराजं विचेतसः ।
श्रुत्वा तु निनदं तेषां वध्यतां कर्णसायकैः । अथाब्रवीद्वासुदेवं कुन्तीपुत्रो धनञ्जयः ।
भार्गवास्त्रं महाघोरं दृष्ट्वा तत्र समीरितं । पश्य कृष्ण महाबाहो भार्गवास्त्रस्य विक्रमं ।
नैतदस्त्रं हि समरे शक्यं हन्तुं कथञ्चन । सूतपुत्रञ्च संरब्धं पश्य कृष्ण महारणे । ३३७५
अन्तकप्रतिमं वीर्य्ये कुर्व्वाणं कर्म्म दारुणं । अभीक्ष्णञ्चोदयन्नश्वान् प्रेक्षते मां मुहुर्मुहुः ।
न च पश्यामि समरे कर्णस्य प्रपलायितुं । जीवन् प्राप्नोति पुरुषः संख्ये जयपराजयौ ।
मृतस्य तु हृषीकेश भङ्ग एव कुतो जयः । एवमुक्तस्तु पार्थेन कृष्णो मतिमतां वरं ।
धनञ्जयमुवाचेदं प्राप्तकालमरिन्दम । कर्णेन हि दृढं राजा कुन्तीपुत्रः परिक्षतः ।
तं दृष्ट्वाश्वास्य च पुनः कर्णं पार्थ वधिष्यसि । एवमुक्त्वा पुनः प्रायात् द्रष्टुमिच्छन् युधिष्ठिरं । ३३८०
श्रमेण ग्राहयिष्यंश्च युद्धे कर्णं विशाम्पते । ततो धनञ्जयो द्रष्टुं राजानं वाणपीडितं ।
रथेन प्रययौ क्षिप्रं संग्रामात् केशवाज्ञया । गच्छन्नेव तु कौन्तेयो धर्म्मराजदिदृक्षया ।
सैन्यमालोकयामास नापश्यत्तत्र चाग्रजं । युद्धं कृत्वा तु कौन्तेयो द्रोणपुत्रेण भारत ।
दुःसहं वज्रिणा संख्ये पराजित्य गुरोः सुतं ।

इति श्रीमहाभारते कर्णपर्व्वणि संकुलयुद्धे चतुःषष्टोऽध्यायः ॥ ६४ ॥

॥ सञ्जय उवाच ॥ द्रौणिं परित्यज्य ततोऽपयन्वा कृत्वा महद्दुष्करं शूरकर्म्म । आलोकयामास ततः स्वसैन्यं धनञ्जयः शत्रुभिरप्रधृष्यः । ३३८५

अयुध्यमानान् पृतनामुखस्थान् शूरान् शूरो हर्षयन् सव्यसाची । पूर्व्वप्रहारैर्ग्रथितान् प्रशंसन् स्थितान्महात्मा स्वरथाननेकान् ।
अपश्यमानस्तु किरीटमाली युधिष्ठिरं भ्रातरमाजमीढं । उवाच भीमं तरसाऽभ्युपेत्य राज्ञः प्रवृत्तिं त्विह कुत्र राजा ।
॥ भीमसेन उवाच ॥ अपयात इतो राजा धर्म्मपुत्रो युधिष्ठिरः । कर्णबाणाभितप्ताङ्गो यदि जीवेत् कथञ्चन ।
॥ अर्ज्जुन उवाच ॥ तस्माद्भवान् शीघ्रमितः प्रयातु राज्ञः प्रवृत्त्यै कुरुसत्तमस्य । नूनं स विद्धोऽतिभृशं पृषत्कैः कर्णेन राजा शिबिरं गतोऽसौ ।
यः सम्प्रहारैर्निशितैः पृषत्कैर्द्रोणेन विद्धोऽतिभृशं तरस्वी । तस्थौ स तत्रापि जयप्रतीक्षो द्रोणोऽपि यावन्न हतः किलासीत् । ३३९०
स संशयं गमितः पाण्डवाग्र्यः संख्येऽद्य कर्णेन महानुभावः । ज्ञातुं प्रयाह्याशु तमद्य भीम स्थास्याम्यहं शत्रुगणान्निरुध्य ।
॥ भीमसेन उवाच ॥ त्वमेव जानीहि महानुभाव राज्ञः प्रवृत्तिं भरतर्षभस्य । अहं हि यद्यर्ज्जुन यास्यमित्रा वदन्ति मां भीत इति प्रवीराः ।
ततोऽब्रवीदर्ज्जुनो भीमसेनं संशप्तकाः प्रत्यनीकस्थिता मे । एतानहत्वाऽद्य मया न शक्यमितोऽपयातुं रिपुसङ्घगोष्ठात् ।
अथाब्रवीदर्ज्जुनं भीमसेनः स्ववीर्य्यमासाद्य कुरुप्रवीर । संशप्तकान् प्रतियोत्स्यामि संख्ये सर्व्वानहं याहि धनञ्जय त्वं ।
तद्भीमसेनस्य वचो निशम्य सुदुष्करं भ्रातुरमित्रमध्ये । संशप्तकानीकमसह्यमेकः सुदुष्करं धारयामीति पार्थः । ३३९५

उवाच नारायणमप्रमेयं कपिध्वजः सत्यपराक्रमस्य । श्रुत्वा वचो भ्रातुरदीनसत्त्वस्तदाहवे सत्यवचो महात्मा ।

द्रष्टुं कुरुश्रेष्ठमभिप्रयास्यन् प्रोवाच वृष्णिप्रवरं तदानीं ।

॥ अर्ज्जुन उवाच ॥ चोदयाश्वान् हृषीकेश विहायैतद्बलार्णवं । अजातशत्रुं राजानं द्रष्टुमिच्छामि केशव ।

॥ सञ्जय उवाच ॥ ततो हयान् सर्व्वदाशार्हमुख्यः प्रचोदयन् भीममुवाच चेदं । नैतच्चित्रं तव कर्म्माद्य भीम यास्याम्यहं जहि पार्थारिसङ्घान् ।

ततो ययौ हृषीकेशो यत्र राजा युधिष्ठिरः । शीघ्राच्छीघ्रतरं राजन् वाजिभिर्गरुडोपमैः । ११००

प्रत्यनीके व्यवस्थाप्य भीमसेनमरिन्दमं । सन्दिश्य चैनं राजेन्द्र युद्धं प्रति वृकोदरं ।

ततस्तु गत्वा पुरुषप्रवीरौ राजानमासाद्य शयानमेकं । रथादुभौ प्रत्यवरुह्य तस्मादवन्दतुर्धर्म्मराजस्य पादौ ।

तं दृष्ट्वा पुरुषव्याघ्रं क्षेमिणं पुरुषर्षभं । मुदाऽभ्युपगतौ कृष्णावश्विनाविव वासवं ।

तावभ्यनन्दद्राजाऽपि विवस्वानश्विनाविव । हते महासुरे जम्भे शक्रविष्णू यथा गुरुः ।

मन्यमानो हतं कर्णं धर्म्मराजो युधिष्ठिरः । हर्षगद्गदया वाचा प्रीतः प्राह परन्तपः । ११०५

॥ सञ्जय उवाच ॥ अथोपयातौ पृथुलोहिताक्षौ शराचिताङ्गौ रुधिरप्रदिग्धौ । समीक्ष्य सेनाग्रनरप्रवीरौ युधिष्ठिरो वाक्यमिदं बभाषे ।

महासत्त्वौ हि तौ दृष्ट्वा सहितौ केशवार्ज्जुनौ । हतमाधिरथिं मेने संख्ये गाण्डीवधन्वना ।

तावभ्यनन्दत् कौन्तेयः साम्ना परमवल्गुना । स्मितपूर्व्वममित्रघ्नं पूजयन् भरतर्षभ ।

इति श्रीमहाभारते कर्णपर्व्वणि सङ्कुलयुद्धे पञ्चषष्टोऽध्यायः ॥ ६५ ॥

॥ युधिष्ठिर उवाच ॥ स्वागतं देवकीमातः स्वागतन्ते धनञ्जय । प्रियं मे दर्शनं गाढं युवयोरच्युतार्ज्जुनौ ।

अक्षताभ्यामरिष्टाभ्यां हतः कर्णो महारथः । आशीविषसमं युद्धे सर्व्वशस्त्रविशारदं । १११०

अग्रगं धार्त्तराष्ट्राणां सर्व्वेषां शर्म्म वर्म्म च । रक्षितं वृषसेनेन सुषेणेन च धन्विना ।

अनुज्ञातं महावीर्य्यं रामेणास्त्रे सुदुर्ज्जयं । अग्र्यं सर्व्वस्य लोकस्य रथिनं लोकविश्रुतं ।

त्रातारं धार्त्तराष्ट्राणां गन्तारं वाहिनीमुखे । हन्तारं परसैन्यानाममित्रगणमर्द्दनं ।

दुर्य्योधनहिते युक्तमस्मद्दुःखाय चोद्यतं । अप्रधृष्यं महायुद्धे देवैरपि सवासवैः ।

अनलानिलयोस्तुल्यं तेजसा च बलेन च । पातालमिव गम्भीरं सुहृदां नन्दिवर्द्धनं । १११५

अन्तकं मम मित्राणां हत्वा कर्णं महामृधे । दिष्ट्या युवामनुप्राप्तौ जित्वाऽसुरमिवामरौ ।

घोरं युद्धमदीनेन मया ह्यद्याच्युतार्ज्जुनौ । कृतं तेनान्तकेनेव प्रजाः सर्व्वजिघांसता ।

तेन केतुश्च मे छिन्नो हतौ च पार्ष्णिसारथी । हतवाहस्ततश्चास्मि युयुधानस्य पश्यतः ।

धृष्टद्युम्नस्य यमयोर्वीरस्य च शिखण्डिनः । पश्यतां द्रौपदेयानां पाञ्चालानाञ्च सर्व्वशः ।

एतान् जित्वा महावीर्य्यः कर्णः शत्रुगणान् बहून् । जितवान्मां महाबाहो यतमानो महारणे । ११२०

अभिसृत्य च मां युद्धे परुषाण्युक्तवान् बहून् । तत्र तत्र युधां श्रेष्ठ परिभूय न संशयः ।

भीमसेनप्रभावात्तु यज्जीवामि धनञ्जय । बहुनाऽत्र किमुक्तेन न हि तत् सोढुमुत्सहे ।

त्रयोदशाहं वर्षाणि यस्माद्भीतो धनञ्जय । न स्म निद्रां लभे रात्रौ न चाहनि सुखं क्वचित् ।
तस्य द्वेषेण संयुक्तः परिदह्ये धनञ्जय । आत्मनो मरणे यातो वाध्रीणस इव द्विजः ।
तस्यायमगमत् कालश्चिन्तयानस्य मे चिरं । कथं कर्णो मया शक्यो युद्धे क्षपयितुं भवेत् । ३३२५
जाग्रत्स्वपंश्च कौन्तेय कर्णमेव सदा ह्यहं । पश्यामि तत्र तत्रैव कर्णभूतमिदं जगत् ।
यत्र यत्र हि गच्छामि कर्णाद्भीतो धनञ्जय । तत्र तत्र हि पश्यामि कर्णमेवाग्रतः स्थितं ।
सोऽहन्तेनैव वीरेण समरेष्वपलायिना । सहयः सरथः पार्थ जित्वा जीवन् विसर्ज्जितः ।
को नु मे जीवितेनार्थो राज्येनार्थो भवेत् पुनः । ममैवं धिक्कृतस्याद्य कर्णेनाहवशोभिना ।
न प्राप्तपूर्व्वं यद्भीष्मात् कृपाद्द्रोणाच्च संयुगे । तत्प्राप्तमद्य मे युद्धे सूतपुत्रान्महारथात् । ३३३०
स त्वां पृच्छामि कौन्तेय यथाऽद्य कुशलं तथा । तन्ममाचक्ष्व कार्त्स्न्येन यथा कर्णो हतस्त्वया ।
शक्रतुल्यबलो युद्धे यमतुल्यः पराक्रमे । रामतुल्यस्तथाऽस्त्रेषु स कथं वै निसूदितः ।
महारथः समाख्यातः सर्व्वयुद्धविशारदः । धनुर्धराणां प्रवरः सर्व्वेषामेकपूरुषः ।
पूजितो धृतराष्ट्रेण सपुत्रेण विशाम्पते । त्वदर्थमेव राधेयः स कथं निहतस्त्वया ।
धार्त्तराष्ट्रो हि योधेषु सर्व्वेष्वेव सदाऽर्ज्जुनः । तव मृत्युं रणे कर्णं मन्यते पुरुषर्षभ । ३३३५
स त्वया पुरुषव्याघ्र कथं युद्धे निसूदितः । तन्ममाचक्ष्व कौन्तेय यथा कर्णो हतस्त्वया ।
युध्यमानस्य च शिरः पश्यतां सुहृदां हृतं । त्वया पुरुषशार्दूल सिंहेनेव यथा रुरोः ।

यः पर्य्युपासीत् प्रदिशो दिशश्च त्वां सूतपुत्रः समरे परीप्सन् । दित्सुः कर्णः समरे हस्तिषट्कं यः स हीदानीं कङ्कपत्रैः सुतीक्ष्णैः ।

त्वया रणे निहतः सूतपुत्रः कच्चिच्छेते भूमितले दुरात्मा । प्रियश्च मे परमो वै कृतोऽयं त्वया रणे सूतपुत्रं निहत्य ।

यः सर्व्वतः पर्य्यपतत्त्वदर्थे सदाऽर्च्चितो गर्व्वितः सूतपुत्रः । स शूरमानी समरे समेत्य कच्चित्त्वया निहतः संयुगेऽसौ । ३३४०

रौक्मं वरं हस्तिगवाश्वयुक्तं रथं प्रदित्सुर्यः परेभ्यस्त्वदर्थे । सदा रणे स्पर्द्धते यः स पापः कच्चित्त्वया निहतस्तात युद्धे ।

योऽसौ सदा शूरमदेन मत्तो विकत्थते संसदि कौरवाणां । प्रियोऽत्यर्थं तस्य सुयोधनस्य कच्चित् स पापो निहतस्त्वयाऽद्य ।

कच्चित् समागम्य धनुः प्रयुक्तैस्त्वत्प्रेषितैर्लोहिताङ्गैर्विहङ्गैः । शेते पापः सुविभिन्नगात्रः कच्चिद्भग्नौ धार्त्तराष्ट्रस्य बाहू ।

योऽसौ सदा श्लाघते राजमध्ये दुर्य्योधनं हर्षयन् दर्पपूर्णः । अहं हन्ता फाल्गुनस्येति मोहात् कच्चिद्वचस्तस्य न वै तथा तत् ।

नाहं पादौ धावयिष्ये कदाचिद्यावत् स्थितः पार्थ इत्यल्पबुद्धेः । व्रतं तस्यैतत् सर्व्वदा शक्रसूनो कच्चित्त्वया निहतः सोऽद्य कर्णः । ३३४५

योऽब्रवीत् कृष्णामब्रवीद्दुष्टबुद्धिः कर्णः सभायां कुरुवीरमध्ये । किं पाण्डवांस्त्वं न जहासि कृष्णे सुदुर्ब्बलान् पतितान् हीनसत्त्वान् ।

योऽसौ कर्णः प्रत्यजानात्त्वदर्थे नाहं हत्वा सह कृष्णेन पार्थं । इहोपयातेति स पापबुद्धिः कच्चिच्छेते शरसंभिन्नगात्रः ।

कच्चित् संग्रामो विदितो वै तवायं समागमे सृञ्जयकौरवाणां । यत्रावस्थामीदृशीं प्रापितोऽहं कच्चित्त्वया सोऽद्य हतो दुरात्मा ।

कच्चित्त्वया तस्य सुमन्दबुद्धेर्गाण्डीवमुक्तैर्विशिखैर्ज्वलद्भिः । सकुण्डलं भानुमदुत्तमाङ्गं कायात्प्रकृत्तं युधि सव्यसाचिन् ।
यत्तन्मया बाणसमर्पितेन ध्यातोऽसि कर्णस्य बधाय वीर । तन्मे त्वया कच्चिदमोघमद्य ध्यानं कृतं कर्णनिपातनेन । ११५०
यद्दर्पपूर्णः स सुयोधनोऽस्मानुदीक्षते कर्णसमाश्रयेण । कच्चित्त्वया सोऽद्य समाश्रयोऽस्य भग्नः पराक्रम्य सुयोधनस्य ।
यो नः पुरा षण्ढतिलानवोचत् सभामध्ये कौरवाणां समक्षं । स दुर्मतिः कच्चिदुपेत्य संख्ये त्वया हतः सूतपुत्रो ह्यमर्षी ।
यः सूतपुत्रः प्रहसन् दुरात्मा पुराऽब्रवीन्निर्जितां सौबलेन । स्वयं प्रसह्यानय याज्ञसेनीमपीह कच्चित् स हतस्त्वयाऽद्य ।
यः शस्त्रभृच्छ्रेष्ठतमं पृथिव्यां पितामहं व्याक्षिपदल्पचेताः । संख्यायमानोऽर्द्धरथः स कच्चित्त्वया हतोऽद्याधिरथिर्महात्मन् ।
अमर्षजं निकृतिसमीरणेरितं हृदि स्थितं ज्वलनमिमं सदा मम । हतो मया सोऽद्य समेत्य कर्ण इति ब्रुवन् प्रशमय मेऽद्य फाल्गुन । ११५५
ब्रवीहि मे दुर्लभमेतदद्य कथं त्वया निहतः सूतपुत्रः । अनुध्याये त्वां सततं प्रवीर वृत्रे हतेऽसौ भगवानिवेन्द्रः ।

इति श्रीमहाभारते कर्णपर्व्वणि युधिष्ठिरवाक्ये षट्षष्ठोऽध्यायः ॥ ६६ ॥

॥ सञ्जय उवाच ॥ तद्धर्म्मशीलस्य वचो निशम्य राज्ञः क्रुद्धस्यातिरथो महात्मा । उवाच दुर्द्धर्षमदीनसत्त्वं युधिष्ठिरं जिष्णुरनन्तवीर्य्यः ।
॥ अर्ज्जुन उवाच ॥ संशप्तकैर्युध्यमानस्य मेऽद्य सेनाग्रयायी कुरुसैन्येषु राजन् । आशीविषाभान् खगमान् प्रमुञ्चन् द्रौणिः पुरस्तात् सहसाऽभ्यतिष्ठत् ।
दृष्ट्वा रथं मेघरवं ममैव समस्तसेनावरणेऽभ्यतिष्ठत् । तेषामहं पञ्चशतानि हत्वा तथा द्रौणिमगमं पार्थिवाग्र्य ।
स मां समासाद्य नरेन्द्र यत्तः समाभ्ययात् सिंहमिव द्विपेन्द्रः । अकार्षीच्च रथिनामुज्जिहीर्षां महाराज बध्यतां कौरवाणां । ११६०
ततो रणे भारत दुष्प्रकम्प्य आचार्य्यपुत्रः प्रवरः कुरूणां । मामर्द्दयामास शितैः पृषत्कैर्ज्जनार्द्दनञ्चैव विषाग्निकल्पैः ।
अष्टागवामष्ट शतानि बाणान् मया प्रयुक्तस्य वहन्ति तस्य । तांस्तेन मुक्तानहमस्य बाणैर्व्यनाशयं वायुरिवाऽभ्रजालं ।
ततोऽपरान् बाणसङ्घाननेकानाकर्णपूर्णायतविप्रमुक्तान् । ससर्ज्ज शिक्षास्त्रबलप्रयत्नैस्तथा यथा प्रावृषि कालमेघः ।
नैवाददानं न च सन्दधानं जानीमहे कतरेणास्यतीति । वामेन वा यदि वा दक्षिणेन स द्रोणपुत्रः समरे पर्य्यवर्त्तत् ।
तस्याततं मण्डलमेव सज्यं प्रदृश्यते कार्म्मुकं द्रोणसूनोः । सोऽविध्यन्मां पञ्चभिर्द्रोणपुत्रः शितैः शरैः पञ्चभिर्व्वासुदेवं । ११६५
अहं हि तं त्रिंशता वज्रकल्पैः समार्द्दयं निमिषस्यान्तरेण । क्षणात् श्वावित् समरूपो बभूव समार्द्दितो मद्विसृष्टैः पृषत्कैः ।
स विक्षरन् रुधिरं सर्व्वगात्रैरथानीकं सूतसूनोर्विवेश । मयाऽभिभूतान् सैनिकानां प्रबर्हानसौ प्रपश्यन् रुधिरप्रदिग्धान् ।
ततोऽभिभूतं युधि वीक्ष्य सैन्यं वित्रस्तयोधं द्रुतवाजिनागं । पञ्चाशता रथमुख्यैः समेत्य कर्णस्त्वरन् मामुपायात् प्रमाथी ।
तान् सूदयित्वाऽहमपास्य कर्णं द्रष्टुं भवन्तं त्वरयाऽभियातः । सर्व्वे पाञ्चाला ह्युद्विजन्ते स्म कर्णाद्दृष्ट्वा गावः केशरिणं यथैव ।
मृत्योरास्यं व्यात्तमिवाभ्यपद्यन् प्रभद्रकाः कर्णमासाद्य राजन् । रथांस्तु तान् सप्तशतान्निमग्नांस्तदा कर्णः प्राहिणोन्मृत्युसद्म । ११७०
न चाप्यभूत् क्लान्तमनाः स राजन् यावन्नास्मान् दृष्टवान् सूतपुत्रः । श्रुत्वा तु त्वां तेन दृष्टं समेतमश्वत्थाम्ना पूर्व्वतरं क्षतञ्च ।

मन्ये कालमपयानस्य राजन् क्रूरात्कर्णात्तेऽहमचिन्त्यकर्म्मन्। मया कर्णस्यास्त्रमिदं पुरस्ताद्युद्धे दृष्टं पाण्डव चित्ररूपं।

न ह्यस्यान्यो विद्यते सृञ्जयानां महारथं योऽद्य सहेत कर्णं। शैनेयो मे सात्यकिश्चक्ररक्षौ धृष्टद्युम्नश्चापि तथैव राजन्।

युधामन्युश्चोत्तमौजाश्च शूरौ पृष्ठतो मां रक्षतां राजपुत्रौ। रथप्रवीरेण महानुभाव द्विषत्सैन्ये वर्त्तता दुस्तरेण।

समेत्याहं सूतपुत्रेण संख्ये वृत्रेण वज्रीव नरेन्द्रमुख्य। योत्स्याम्यहं भारत सूतपुत्रमस्मिन् संग्रामे यदि वै दृश्यतेऽद्य। ११७५

आयाहि पश्याद्य युयुत्समानं मां सूतपुत्रस्य रणे जयाय। महर्षभस्येव मुखं प्रपन्नाः प्रभद्रकाः कर्णमभिद्रवन्ति।

बहवो हता भारत राजपुत्राः स्वर्गाय लोकाय रणे निमग्नाः। कर्णं न चेदद्य निहन्मि राजन् सबान्धवं युध्यमानं प्रसह्य।

प्रतिश्रुत्याऽकुर्व्वतो वै गतिर्य्या कष्टा याता तामहं राजसिंह। आमन्त्रये त्वां ब्रूहि जयं रणे मे पुरा भीमं धार्त्तराष्ट्रा ग्रसन्ते।

सौतिं हनिष्यामि नरेन्द्रसिंह सैन्यन्तथा शत्रुगणांश्च सर्व्वान्।

इति श्रीमहाभारते कर्णपर्व्वणि अर्ज्जुनप्रतिज्ञायां सप्तषष्टोऽध्यायः ॥ ६७ ॥

॥ सञ्जय उवाच ॥ श्रुत्वा कर्णं कल्यमुदारवीर्य्यं क्रुद्धः पार्थः फाल्गुनस्यामितौजाः। धनञ्जयं वाक्यमुवाच चेदं युधिष्ठिरः कर्णशराभितप्तः। ११८०

विप्रद्रुता तात चमूस्त्वदीया तिरस्कृता चाद्य यथा न साधु। भीतो भीमं त्यज्य चायास्तथा त्वं यन्नाशकः कर्णमथो निहन्तुं।

स्नेहस्त्वया पार्थ कृतः पृथाया गर्भं समाविश्य यथा न साधु। त्यक्त्वा रणे यदपायाः स भीमं यन्नाशकः सूतपुत्रं निहन्तुं।

यत्तद्वाक्यं द्वैतवने त्वयोक्तं कर्णं हन्ताऽस्म्येकरथेन सत्यं। त्यक्त्वा तदै कथमद्यापयातः कर्णाद्भीतो भीमसेनं विहाय।

इदं यदि द्वैतवनेऽप्यवक्ष्यः कर्णं योद्धुं न प्रशक्ष्ये नृपेति। वयन्ततः प्राप्तकालञ्च सर्व्वे कृत्यान्युपैष्याम तथैव पार्थ।

मयि प्रतिश्रुत्य वधं हि तस्य न वै कृतं तच्च तथैव वीर। आनीय नः शत्रुमध्यं स कस्मात् समुत्क्षिप्य स्थण्डिले प्रत्यपिष्टाः। ११८५

अथाशिष्म वयमर्ज्जुन त्वयि यियासवो बहु कल्याणमिष्टं। तच्चः सर्व्वं विफलं राजपुत्र फलार्थिनामफल इवातिपुष्पः।

प्रच्छादितं वडिशमिवामिषेण सञ्छादितं गरलमिवाशनेन। अनर्थकं मे दर्शितवानसि त्वं राज्यार्थिनो राज्यरूपं विनाशं।

त्रयोदशेमा हि समाः सदा वयं त्वामन्वजीविष्म धनञ्जयाशया। काले वर्षं देवमिवोप्तबीजं तन्नः सर्व्वान्नरके त्वं न्यमज्जः।

यत्तत्पृथावागुवाचान्तरीक्षे सप्ताहजाते त्वयि मन्दबुद्धौ। जातः पुत्रो वासवविक्रमोऽयं सर्व्वान् शूरान् शात्रवान् जेष्यतीति।

अयं जेता खाण्डवे देवसंघान् सर्व्वाणि भूतान्यपि चोत्तमौजाः। अयं जेता मद्रकलिङ्गकेकयानयं कुरूनाजमध्ये निहन्ता। ११९०

अस्मात् परो नो भविता धनुर्धरो नैनं भूतं किञ्चन जातु जेता। इच्छन्नयं सर्व्वभूतानि कुर्य्यादशे वशी सर्व्वसमाप्तविद्यः।

कान्त्या शशाङ्कस्य जवेन वायोः स्थैर्य्येण मेरोः क्षमया पृथिव्याः। सूर्य्यस्य भासा धनदस्य लक्ष्म्या शौर्य्येण शक्रस्य बलेन विष्णोः।

तुल्यो महात्मा तव कुन्ति पुत्त्रो जातो दितेर्व्विष्णुरिवारिहन्ता । स्वेषां जयाय द्विषतां वधाय ख्यातोऽमितौजाः कुल तन्तुकर्त्ता ।

इत्यन्तरीक्षे शतशृङ्गमूर्द्ध्नि तपस्विनां शृण्वतां वागुवाच । एवंविधं तच्च नाभूत्तथा च देवापि नूनमनृतं वदन्ति ।

तथा परेषामपि सत्तमानां श्रुत्वा गिरः पूजयतां सदा त्वां । न सन्नतिं प्रैमि सुयोधनस्य न त्वां जानाम्याधिरथेर्भयार्त्तं । २४९५

त्वष्ट्रा कृतं वाहमकूजनाक्षं शुभं समास्थाय कपिध्वजन्तं । खड्गं गृहीत्वा हेमपट्टावनद्धं धनुश्चेदं गाण्डिवं तालमात्रं ।

स केशवेनोह्यमानः कथं त्वं कर्णाद्भीतो व्यपयातोऽसि पार्थ । धनुश्च तत् केशवाय प्रयच्छ यन्ता भविष्यस्त्वं रणे केशवस्य ।

तदाऽहनिष्यत् केशवः कर्णमुग्रं मरुत्पतिर्वृत्रमिवात्तवज्रः । राधेयमेतं यदि नाद्य शक्तश्चरन्तमुग्रं प्रतिधावनाय ।

प्रयच्छान्यस्मै गाण्डिवमेतदद्य त्वत्तो योऽस्त्रैरभ्यधिको नरेन्द्रः । अस्मानेवं पुत्त्रदारैर्व्विहीनान् सुखाद्भ्रष्टांश्चाव्यनाशाच्च भूयः ।

द्रष्टा लोकः पतितानप्यगाधे पापैर्जुष्टे नरके पाण्डवेय । मासेऽपतिष्यः पञ्चमे त्वं सुकृच्छ्रे न वा गर्भेऽप्यभविष्यः पृथायाः । २५००

तत्ते श्रेयो राजपुत्त्राभविष्यन्न चेत् संग्रामादपयानं दुरात्मन् । धिग्गाण्डीवं धिक् च ते बाहुवीर्य्यमसंख्येयान् बाणगणांश्च धिक् ते ।

धिक् ते केतुं केशरिणः सुतस्य कृशानुदत्तञ्च रथञ्च धिक् ते ।

इति श्रीमहाभारते कर्णपर्व्वणि युधिष्ठिरवाक्ये अष्टषष्टोऽध्यायः ॥ ६८ ॥

॥ सञ्जय उवाच ॥ युधिष्ठिरेणैवमुक्तः कौन्तेयः श्वेतवाहनः । असिं जग्राह संक्रुद्धो जिघांसुर्भरतर्षभ ।

तस्य कोपं समुद्वीक्ष्य चित्तज्ञः केशवस्तदा । उवाच किमिदं पार्थ गृहीतः खड्ग इत्युत ।

न हि पश्यामि योद्धव्यं त्वया किञ्चिद्धनञ्जय । ते ग्रस्ता धार्त्तराष्ट्रा हि भीमसेनेन धीमता । २५०५

अपयातोऽसि कौन्तेय राजा द्रष्टव्य इत्यपि । स राजा भवता दृष्टः कुशली च युधिष्ठिरः ।

स दृष्ट्वा नृपशार्दूलं शार्दूलसमविक्रमं । हर्षकाले च संप्राप्ते किमिदं मोहकारितं ।

न तं पश्यामि कौन्तेय यस्ते वध्यो भविष्यति । प्रहर्त्तुमिच्छसे कस्मात् किं वा ते चित्तविभ्रमः ।

कस्माद्भवान् महाखड्गं परिगृह्णाति सत्वरः । तत्त्वां पृच्छामि कौन्तेय किमिदन्ते चिकीर्षितं ।

परामृषसि यत् क्रुद्धः खड्गमद्भुतविक्रमः । एवमुक्तस्तु कृष्णेन प्रेक्षमाणो युधिष्ठिरं । २५१०

अर्ज्जुनः प्राह गोविन्दं क्रुद्धः सर्प इव श्वसन् । अन्यस्मै देहि गाण्डीवमिति मां योऽभिचोदयेत् ।

भिन्द्यामहं तस्य शिर इत्युपांशुव्रतं मम । तदुक्तं मम चानेन राज्ञाऽमितपराक्रम ।

समक्षं तव गोविन्द न तत् क्षन्तुमिहोत्सहे । तस्मादेनं वधिष्यामि राजानं धर्म्मभीरुकं ।

प्रतिज्ञां पालयिष्यामि हत्वैनं नरसत्तमं । एतदर्थं मया खड्गो गृहीतो यदुनन्दन ।

सोऽहं युधिष्ठिरं हत्वा सत्यस्यानृण्यतां गतः । विशोको विज्वरश्चापि भविष्यामि जनार्द्दन । २५१५

किं वा त्वं मन्यसे प्राप्तमस्मिन् काल उपस्थिते । त्वमस्य जगतस्तात वेत्थ सर्व्वं गतागतं ।

तत्तथा प्रकरिष्यामि यथा मां वक्ष्यते भवान् ।

॥ सञ्जय उवाच ॥ धिग्धिगित्येव गोविन्दः पार्थमुक्त्वाऽब्रवीत्पुनः ।

॥ कृष्ण उवाच ॥ इदानीं पार्थ जानामि न वृद्धाः सेवितास्त्वया । कालेन पुरुषव्याघ्र संरम्भं यद्भवानगात् ।

न हि धर्म्मविभागज्ञः कुर्य्यादेवं धनञ्जय । तथा त्वं पाण्डवाद्येह धर्म्मभीरुरपण्डितः । ३४२०
अकार्य्याणां क्रियाणाञ्च संयोगं यः करोति वै । कार्य्याणामक्रियाणाञ्च स पार्थ पुरुषाधमः ।
अनुसृत्य तु यं धर्म्मं कवयः समुपस्थिताः । समासविस्तरविदां न तेषां वेत्सि निश्चयं ।
अनिश्चयज्ञो हि नरः कार्य्याकार्य्यविनिश्चये । अवशो मुह्यते पार्थ यथा त्वं मूढ एव तु ।
न हि कार्य्यमकार्य्यं वा सुखं ज्ञातुं कथञ्चन । श्रुतेन ज्ञायते सर्व्वं तच्च त्वं नावबुध्यसे ।
अविज्ञानाद्भवान् यच्च धर्म्मं रक्षति धर्म्मवित् । प्राणिनां त्वं वधं पार्थ धार्म्मिको नावबुध्यसे । ३४२५
प्राणिनामवधस्तात सर्व्वज्यायान्मतो मम । अनृतं वा वदेद्वाचं न तु हिंस्यात् कथञ्चन ।
स कथं भ्रातरं ज्येष्ठं राजानं धर्म्मकोविदं । हन्याद्भवान्नरश्रेष्ठ प्राकृतोऽन्यः पुमानिव ।
अयुध्यमानस्य वधस्तथा शत्रोश्च मानद । पराङ्मुखस्य द्रवतः शरणञ्चापि गच्छतः ।
कृताञ्जलेः प्रपन्नस्य प्रमत्तस्य तथैव च । न वधः पूज्यते सद्भिस्तच्च सर्व्वं गुरौ तव ।
त्वया चैव व्रतं पार्थ बालेनेव कृतं पुरा । तस्मादधर्म्मसंयुक्तं मौर्ख्यात् कर्म्म व्यवस्यसि । ३४३०
स गुरुं पार्थ कस्मात्त्वं हन्तुकामोऽभिधावसि । असंप्रधार्य्य धर्म्माणां गतिं सूक्ष्मां दुरत्ययां ।
इदं धर्म्मरहस्यञ्च तव वक्ष्यामि पाण्डव । यद्ब्रूयात्तव भीष्मो हि पाण्डवो वा युधिष्ठिरः ।
विदुरो वा तथा क्षत्ता कुन्ती वाऽपि यशस्विनी । तत्ते वक्ष्यामि तत्त्वेन निबोधैनं धनञ्जय ।
सत्यस्य वदिता साधुर्न सत्याद्विद्यते परं । तत्त्वेनैव सुदुर्ज्ञेयं पश्य सत्यमनुष्ठितं ।
सत्यमेव तु वक्तव्यं वक्तव्यमनृतं भवेत् । यत्रानृतं भवेत् सत्यं सत्यञ्चाप्यनृतं भवेत् । ३४३५
विवाहकाले रतिसंप्रयोगे प्राणात्यये सर्व्वधनापहारे । विप्रस्य चार्थे ह्यनृतं वदेत पञ्चानृतान्याहुरपातकानि ।
तादृशं मन्यते बालो यस्य सत्यमनुष्ठितं । सत्यानृते विनिश्चित्य ततो भवति धर्म्मवित् ।
किमाश्चर्य्यं कृतप्रज्ञः पुरुषोऽपि सुदारुणः । सुमहत्प्राप्नुयात् पुण्यं बलाकोऽन्धवधादिव ।
किमाश्चर्य्यं पुनर्मूढो धर्म्मकामो ह्यपण्डितः । सुमहत्प्राप्नुयात्पापमापगास्विव कौशिकः ।
॥ अर्ज्जुन उवाच ॥ आचक्ष्व भगवन्नेतद्यथा विन्द्याम्यहं तथा । बलाकस्यानुसम्बन्धं नदीनां कौशिकस्य च । ३४४०
॥ वासुदेव उवाच ॥ पुरा व्याधोऽभवत् कश्चिद्बलाको नाम भारत । यात्रार्थं पुत्रदारस्य मृगान् हन्ति न कामतः ।
वृद्धौ च मातापितरौ बिभर्त्त्यन्यांश्च संश्रितान् । स्वधर्म्मनिरतो नित्यं सत्यवागनसूयकः ।
स कदाचिन्मृगं लिप्सुर्नाभ्यविन्दन् मृगं क्वचित् । अपः पिबन्तं ददृशे श्वापदं घ्राणचक्षुषं ।
अदृष्टपूर्व्वमपि तत् सत्त्वं तेन हतं तदा । अन्धे हते ततो व्योम्नः पुष्पवर्षं पपात च ।
अप्सरोगीतवादित्रैर्नादितञ्च मनोरमं । विमानमागमत् स्वर्गान्मृगव्याधनिनीषया । ३४४५
तद्भूतं सर्व्वभूतानामभावाय किलार्ज्जुन । तपस्तप्त्वा वरं प्राप्तं कृतमन्धं स्वयम्भुवा ।
तद्धत्वा सर्व्वभूतानामभावकृतनिश्चयं । ततो बलाकः स्वरगादेवं धर्म्मः सुदुर्व्विदः ।
कौशिकोऽप्यभवद्विप्रस्तपस्वी नो बहुश्रुतः । नदीनां सङ्गमे ग्रामाददूरात् स किलावसत् ।
सत्यं मया सदा वाच्यमिति तस्याभवद्व्रतं । सत्यवादीति विख्यातः स तदासीद्धनञ्जय ।

अथ दस्युभयात् केचित्तदा तद्वनमाविशन् । तत्रापि दस्यवः क्रुद्धास्तानमार्गन्त यत्नतः । ३४४१

अथ कौशिकमभ्येत्य प्राहुस्ते सत्यवादिनं । कतमेन पथा याता भगवन् बहवो जनाः ।

सत्येन पृष्टः प्रब्रूहि यदि तान् वेत्थ शंस नः । स पृष्टः कौशिकः सत्यं वचनं तानुवाच ह ।

बहुवृक्षलतागुल्ममेतद्वनमुपाश्रिताः । इति तान् ख्यापयामास तेभ्यस्तत्त्वं स कौशिकः ।

ततस्ते तान् समासाद्य क्रूरा जघ्नुरिति श्रुतिः । तेनाधर्म्मेण महता वाग्दुरुक्तेन कौशिकः ।

गतः स कष्टं नरकं सूक्ष्मधर्म्मेष्वकोविदः । यथा चाल्पश्रुतो मूढो धर्म्माणामविभागवित् । ३४४५

वृद्धानपृष्ट्वा सन्देहं महत् श्वभ्रमितोऽर्हति । तत्र ते लक्षणोद्देशः कश्चिदेवं भविष्यति ।

दुष्करं परमं ज्ञानं तर्केणानुव्यवस्यति । श्रुतेर्धर्म्म इति ह्येके वदन्ति बहवो जनाः ।

तत्ते न प्रत्यसूयामि न च सर्व्वं विधीयते । प्रभवार्थाय भूतानां धर्म्मप्रवचनं कृतं ।

यत्स्यादहिंसासंयुक्तं स धर्म्म इति निश्चयः । अहिंसार्थाय हिंस्राणां धर्म्मप्रवचनं कृतं ।

धारणाद्धर्म्ममित्याहुर्धर्म्मो धारयते प्रजाः । यत्स्याद्धारणसंयुक्तं स धर्म्म इति निश्चयः । ३४५०

ये न्यायेन जिहीर्षन्तो धर्म्ममिच्छन्ति कर्हिचित् । अकूजनेन मोक्षो वा नानुकूजेत् कथञ्चन ।

अवश्यं कूजितव्ये वा शङ्केरन्नप्यकूजतः । श्रेयस्तत्रानृतं वक्तुं तत्सत्यमविचारितं ।

यः कार्य्येभ्यो व्रतं कृत्वा कर्म्मणा नोपपादयेत् । न तत् फलमवाप्नोति एवमाहुर्म्मनीषिणः ।

प्राणात्यये विवाहे वा सर्व्वज्ञातिधनात्यये । कर्म्मण्यभिप्रवृत्ते वा न च प्रोक्तं मृषा भवेत् ।

अधर्म्मं नात्र पश्यन्ति धर्म्मतत्त्वार्थदर्शिनः । यः स्तेनैः सह सम्बन्धान् मुच्यते शपथैरपि । ३४५५

श्रेयस्तत्रानृतं वक्तुं तत्सत्यमविचारितं । न च तेभ्यो धनं देयं शक्ये सति कथञ्चन ।

पापेभ्योऽपि धनं दत्तं दातारमपि पीडयेत् । तस्माद्धर्म्मार्थमनृतमुक्त्वा नानृतभाग्भवेत् ।

एष ते लक्षणोद्देशो मया दिष्टो यथाविधि । यथाधर्म्मं यथाबुद्धि मयाऽद्य वै हितार्थिना ।

एतत् श्रुत्वा ब्रूहि पार्थ यदि वध्यो युधिष्ठिरः ।

॥ अर्ज्जुन उवाच ॥ यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयान्महामतिः । हितञ्चैव यथाऽस्माकं तथैतद्वचनं तव । ३४६०

भवान् मातृसमोऽस्माकं तथा पितृसमोऽपि च । गतिश्च परमा कृष्ण त्वमेव च परायणं ।

न हि ते त्रिषु लोकेषु विद्यतेऽविदितं क्वचित् । तस्माद्भवान् परं धर्म्मं वेद सर्व्वं यथातथं ।

अवध्यं पाण्डवं मन्ये धर्म्मराजं युधिष्ठिरं । अस्मिंस्तु मम सङ्कल्पे ब्रूहि किञ्चिदनुग्रहं ।

इदं चापरमत्रैव शृणु हृत्स्थं विवक्षितं ।

जानासि दाशार्ह मम व्रतं त्वं यो मां ब्रूयात् कश्चन मानुषेषु । अन्यस्मै त्वं गाण्डिवं देहि पार्थ त्वत्तोऽस्त्रैर्व्वा वीर्य्यतो वा विशिष्टः । ३४६५

हन्यामहं केशव तं प्रसह्य भीमो हन्यात्तूवरकेति चोक्तः । तन्मे राजा प्रोक्तवांस्ते समक्षं धनुर्देहीत्यसकृत् वृष्णिवीर ।

तं हन्याच्चेत् केशव जीवलोके स्थाता नाहं कालमप्यल्पमात्रं । ध्यात्वा नूनं चैनसा चापि मुक्तो वधं राज्ञो भरतश्रेष्ठ निश्चितः ।

यथा प्रतिज्ञा मम लोकबुद्धौ भवेत्सत्या धर्म्मभृतां वरिष्ठ । यथा जीवेत् पाण्डवोऽहञ्च कृष्ण तथा बुद्धिं दातुमर्हसि त्वं ।

॥ वासुदेव उवाच ॥ राजा श्रान्तो विक्षतो दुःखितश्च कर्णेन संख्ये निशितैर्बाणसंघैः । यश्चानिशं सूतपुत्रेण वीर शरैर्भृशं ताडितो युध्यमानः ।

अतस्त्वमेतेन सरोषमुक्तो दुःखान्वितेनेदमयुक्तरूपं । आकोपितो ह्येष यदि स्म संख्ये कर्णं निहन्या इति चाब्रवीत् सः । ३४८०

जानाति तं पाण्डव एष चापि पापं लोके कर्णमसह्यमन्यैः । अतस्त्वमुक्तो भृशरुषितेन राज्ञा समक्षं परुषाणि पार्थ ।

नित्योद्युक्ते सततञ्चाप्रसह्ये कर्णे द्यूतं ह्यद्य रणे निबद्धं । तस्मिन् हते कुरवो निर्ज्जिताः स्युरेवं बुद्धिः पार्थिवे धर्म्मपुत्रे ।

अतो वधं नार्हति धर्म्मपुत्रस्त्वया प्रतिज्ञाऽर्ज्जुन पालनीया । जीवन्नयं येन मृतो भवेद्धि तन्मे निबोधेह तवानुरूपं ।

यदा मानं लभते माननार्हस्तदा स वै जीवति जीवलोके । यदाऽवमानं लभते महान्तं तदा जीवन्मृत इत्युच्यते सः ।

संमानितः पार्थिवोऽयं सदैव त्वया च भीमेन तथा यमाभ्यां । वृद्धैश्च लोके पुरुषैश्च शूरैस्तस्यापमानं कलया प्रयुङ्क्ष्व । ३४८५

त्वमित्यत्र भवन्तं हि ब्रूहि पार्थ युधिष्ठिरं । त्वमित्युक्तो हि निहतो गुरुर्भवति भारत ।

एवमाचर कौन्तेय धर्म्मराजे युधिष्ठिरे । अधर्म्मयुक्तं संयोगं कुरुष्वैनं कुरूद्वह ।

अथर्व्वाङ्गिरसी ह्येषा श्रुतीनामुत्तमा श्रुतिः । अविचार्य्यैव कार्य्यैषा श्रेयस्कामैर्नरैः सदा ।

अवधेन वधः प्रोक्तो यद्गुरुस्त्वमिति प्रभुः । तद्ब्रूहि त्वं यन्मयोक्तं धर्म्मराजस्य धर्म्मवित् ।

वधं ह्ययं पाण्डव धर्म्मराजस्त्वत्तो युक्तं वेत्स्यते चैवमेषः । ततोऽस्य पादावभिवाद्य पश्चात् समं ब्रूयाः सान्त्वयित्वा च पार्थं । ३४९०

भ्राता प्राज्ञस्तव कोपं न जातु कुर्य्याद्राजा धर्म्ममवेक्ष्य चापि । मुक्तोऽनृताद्भ्रातृवधाच्च पार्थ हृष्टः कर्णं त्वं जहि सूतपुत्रं ।

इति श्रीमहाभारते कर्णपर्व्वणि कृष्णार्ज्जुनसंवादे ऊनसप्ततोऽध्यायः ॥ ६९ ॥

॥ सञ्जय उवाच ॥ इत्येवमुक्तस्तु जनार्द्दनेन पार्थः प्रशस्याथ सुहृद्वचस्तत् । ततोऽब्रवीदर्ज्जुनो धर्म्मराजमनुक्तपूर्व्वं परुषं प्रसह्य ।

॥ अर्ज्जुन उवाच ॥ मा त्वं राजन् व्याहर व्याहरस्व यस्तिष्ठसे क्रोशमात्रे रणाद्वै । भीमस्तु मामर्हति गर्हणाय यो युध्यते सर्व्वलोकप्रवीरैः ।

काले हि शत्रून् परिपीड्य संख्ये हत्वा च शूरान् पृथिवीपतींस्तान् । रथप्रधानोत्तमनागमुख्यान् सादिप्रवेकानमितांश्च वीरान् ।

यः कुञ्जराणामधिकं सहस्रं हत्वा नदंस्तुमुलं सिंहनादं । काम्बोजानामयुतं पार्व्वतीयान् मृगान् सिंहो विनिहत्येव चाजौ । ३४९५

सुदुष्करं कर्म्म करोति वीरः कर्त्तुं यथा नार्हसि त्वं कदाचित् । रथादवप्लुत्य गदां परामृशंस्तया निहन्त्यश्वरथद्विपान्रणे ।

वरासिना वाजिरथाश्वकुञ्जरांस्तथा रथाङ्गैर्द्धनुषाऽदहत्परान् । प्रमृद्य पद्भ्यामहितान् निहन्ति पुनस्तु दोर्भ्यां शतमन्युविक्रमः ।

महाबलो वैश्रवणान्तकोपमः प्रसह्य हन्ता द्विषतामनीकिनीं । स भीमसेनोऽर्हति गर्हणां मे न त्वं नित्यं रक्ष्यसे यः सुहृद्भिः ।

महारथान्नागवरान् हयांश्च पदातिमुख्यानपि च प्रमथ्य । एको भीमो धार्त्तराष्ट्रेषु मग्नः स मामुपालब्धुमरिन्दमोऽर्हति ।

कलिङ्गवङ्गाङ्गनिषादमागधान् सदा मदान्नीलबलाहकोपमान् । निहन्ति यः शत्रुगणाननेकान् स मामुपालब्धुमरिन्दमोऽर्हति । ३५००

स युक्तमास्थाय रथं हि काले धनुर्व्विधुन्वन् शरपूर्णमुष्टिः । सृजत्यसौ शरवर्षाणि वीरो महाहवे मेघ इवाम्बुधाराः ।
शतान्यष्टौ वारणानामवश्यं विशातितैः कुम्भकराग्रहस्तैः । भीमेनाजौ निहतान्यद्य बाणैः स मां क्रूरं वक्तुमर्हत्यरिघ्नः ।
बलन्तु वाचि द्विजसत्तमानां क्षात्रं बुधा बाहुबलं वदन्ति । त्वं वाग्बलो भारत निष्ठुरश्च त्वमेव मां वेत्थ यथाबलोऽहं ।
यते हि नित्यं तव कर्त्तुमिष्टं दारैः सुतैर्जीवितेनात्मना च । एवं यन्मां वाग्विशिखेन हंसि त्वत्तः सुखं न वयं विद्म किञ्चित् ।
मा माऽवमंस्था द्रौपदीतल्पसंस्थो महारथान् प्रतिहन्मि त्वदर्थे । तेनातिशङ्की भारत निष्ठुरोऽसि त्वत्तः सुखं नाभिजानामि किञ्चित् । ३५०५

प्रोक्तः स्वयं सत्यसन्धेन मृत्युस्तव प्रियार्थं नरदेव युद्धे । वीरः शिखण्डी द्रौपदोऽसौ महात्मा मयाऽभिगुप्तेन हतश्च तेन ।
न चाभिनन्दामि तवाधिराज्यं यतस्त्वमक्षेष्वहिताय सक्तः । स्वयं कृत्वा पापमनार्य्यजुष्टमस्माभिर्व्वा तर्त्तुमिच्छस्यरींस्त्वं ।
अक्षेषु दोषा बहवो विधर्म्माः श्रुतास्त्वया सहदेवोऽब्रवीद्यान् । तान्नैषि त्वं त्यक्तुमसाधुजुष्टांस्तेन स्म सर्व्वे निरयं प्रपन्नाः ।
सुखं त्वत्तो नाभिजानीम किञ्चिद्यतस्त्वमक्षैर्देवितुं सम्प्रमत्तः । स्वयं कृत्वा व्यसनं पाण्डव त्वमस्मांस्तीव्राः श्रावयस्यद्य वाचः ।
शेतेऽस्माभिर्निहता शत्रुसेना छिन्नैर्गात्रैर्भूमितले नदन्ती । त्वया हि तत् कर्म्म कृतं नृशंसं यस्माद्दोषः कौरवाणां वधश्च । ३५१०
हता उदीच्या निहताः प्रतीच्या नष्टाः प्राच्या दाक्षिणात्या विशस्ताः । कृतं कर्म्माप्रतिरूपं महद्भिस्तेषां योधैस्तावकीयैश्च युद्धे ।
त्वं देविता त्वत्कृते राज्यनाशस्त्वत्सम्भवं नो व्यसनं नरेन्द्र । माऽस्मान् क्रूरैर्व्वाक्प्रतोदैस्तुद त्वं भूयो राजन् कोपयेस्त्वल्पभाग्यः ।
॥ सञ्जय उवाच ॥ एता वाचः परुषाः सव्यसाची स्थिरप्रज्ञः श्रावयित्वा तु रूक्षाः । बभूवार्त्तो विमना धर्म्मभीरुः कृत्वा प्राज्ञः पातकं किञ्चिदेवं ।
तदाऽनुतेपे सुरराजपुत्रो विनिश्वसंश्चासिमथोद्बवर्ह । तमाह कृष्णः किमिदं पुनर्भवान् विकोशमाकाशनिभं करोत्यसिं ।
ब्रवीहि मां त्वं पुनरुत्तरं वचस्तथा प्रवक्ष्याम्यहमर्थसिद्धये । इत्येवमुक्तः पुरुषोत्तमेन सुदुःखितः केशवमर्ज्जुनोऽब्रवीत् । ३५१५

अहं हनिष्ये स्वशरीरमेव प्रसह्य येनाहितमाचरं वै । निशम्य तत्पार्थवचोऽब्रवीदिदं धनञ्जयं धर्म्मभृतां वरिष्ठः ।
राजानमेनं त्वमितीदमुक्त्वा किं कश्मलं प्राविशः पार्थ घोरं । त्वञ्चात्मानं हन्तुमिच्छस्यरिघ्न नेदं सद्भिः सेवितं वै किरीटिन् ।
धर्म्मात्मानं भ्रातरं ज्येष्ठमद्य खड्गेन चैनं यदि हन्या नृवीर । धर्म्माद्भीतस्तत्कथं नाम ते स्यात् किञ्चोत्तरं वा करिष्यस्त्वमत्र ।
सूक्ष्मो धर्म्मो दुर्व्विदश्चापि पार्थ विशेषतोऽज्ञैः प्रोच्यमानं निबोध । हत्वात्मानमात्मना प्राप्नुयास्त्वं वधाद्भ्रातुर्नरकं चातिघोरं ।
ब्रवीहि वाचाद्य गुणानिहात्मनस्तथा हतात्मा भवितासि पार्थ । तथाऽस्तु कृष्णेत्यभिनन्द्य तद्वचो धनञ्जयः प्राह धनुर्व्विनाम्य । ३५२०

युधिष्ठिरं धर्म्मभृतां वरिष्ठं शृणुष्व राजन्निति शक्रसूनुः । न मादृशोऽन्यो नरदेव विद्यते धनुर्धरो देवमृते पिनाकिनं ।
अहं हि तेनानुमतो महात्मना क्षणेन हन्यां सचराचरं जगत् । मया हि राजन् सदिगीश्वरा दिशो विजित्य सर्व्वा भवतः कृता वशे ।

स राजसूयस्य समाप्तदक्षिणः सभा च दिव्या भवतो ममौजसा। पाणौ पृषत्का निशिता ममैव धनुश्च सज्यं विततं सबाणं।
पादौ च मे सरथौ सध्वजौ च न मादृशं युद्धगतं जयन्ति। हता उदीच्या निहताः प्रतीच्याः प्राच्या निरस्ता दाक्षिणात्या विशस्ताः।
संशप्तकानां किञ्चिदेवास्ति शिष्टं सर्व्वस्य सैन्यस्य हतं मयार्द्धं। शेते मया निहता भारतीयं चमू राजन् देवचमूप्रकाशा। ३५२९
ये चास्त्रज्ञास्तानहं हन्मि चास्त्रैस्तस्माल्लोकान्नेह करोमि भस्म। जैत्रं रथं भीममास्थाय कृष्ण यावः शीघ्रं सूतपुत्रं निहन्तुं।
राजा भवत्वद्य सुनिर्वृतोऽयं कर्णं रणे नाशयिताऽस्मि बाणैः। इत्येवमुक्त्वा पुनराह पार्थो युधिष्ठिरं धर्म्मभृतां वरिष्ठं।
अद्यापुत्रा सूतमाता भवित्री कुन्ती हते वा मयि चाथवाऽद्य। सत्यं वदाम्यद्य न कर्णमाजौ शरैरहत्वा कवचं विमोक्ष्ये।
॥ सञ्जय उवाच ॥ इत्येवमुक्त्वा पुनरेव पार्थो युधिष्ठिरं धर्म्मभृतां वरिष्ठं। विमुच्य शस्त्राणि धनुर्व्विसृज्य कोषे च खड्गं विनिधाय तूर्णं।
स व्रीडया नम्रशिराः किरीटी युधिष्ठिरं प्राञ्जलिरभ्युवाच। प्रसीद राजन् क्षमयन् मयोक्तं काले भवान् वेत्स्यति तन्नमस्ते। ३५३०
प्रसाद्य राजानममित्रसाहं स्थितोऽब्रवीच्चैव पुनः प्रवीरः। नेदं चिरात् क्षिप्रमिदं भविष्यत्यावर्त्ततेऽस्यावभियामि चैनं।
याम्येष भीमं समरात् प्रमोक्तुं सर्व्वात्मना सूतपुत्रञ्च हन्तुं। तव प्रियार्थं मम जीविते हि ब्रवीमि सत्यं तदवेहि राजन्।
इति प्रयास्यन्नुपस्पृश्य पादौ समुत्थितो दीप्ततेजाः किरीटी। एतत् श्रुत्वा पाण्डवो धर्म्मराजो भ्रातुर्व्वाक्यं परुषं फाल्गुनस्य।
उत्थाय तस्माच्छयनादुवाच पार्थं ततो दुःखपरीतचेताः। कृतं मया पार्थ यथा न साधु येन प्राप्तं व्यसनं वः सुघोरं।
तस्माच्छिरश्छिन्धि ममेदमद्य कुलान्तकस्याधमपूरुषस्य। पापस्य पापव्यसनान्वितस्य विमूढबुद्धेरलसस्य भीरोः। ३५३५
वृद्धावमन्तुः परुषस्य चैव किन्ते प्रियं मे ह्यनुवृत्य रूक्षं। गच्छाम्यहं वनमेवाद्य पापः सुखं भवान् वर्त्ततां मद्विहीनः।
योग्यो राजा भीमसेनो महात्मा क्लीवस्य वा मम किं राज्यकृत्यं। न चापि शक्तः परुषाणि सोढुं पुनस्तवेमानि रुषान्वितस्य।
भीमस्तु राजा मम जीवितेन न कार्य्यमद्यावमतस्य वीर। इत्येवमुक्त्वा सहसोत्पपात राजा ततस्तच्छयनं विहाय।

इयेष निर्गन्तुमथो वनाय तं वासुदेवः प्रणतोऽभ्युवाच।
राजन् विदितमेतद्वै यथा गाण्डीवधन्वनः। प्रतिज्ञा सत्यसन्धस्य गाण्डीवं प्रति विश्रुता। ३५४०
ब्रूयाद्य एवं गाण्डीवमन्यस्मै देयमित्युत। वध्योऽस्य स पुमांल्लोके त्वया चोक्तोऽयमीदृशं।
ततः सत्यं प्रतिज्ञां तां पार्थेन प्रतिरक्षता। मच्छन्दादवमानोऽयं कृतस्तव महीपते।
गुरूणामवमानो हि वध इत्यभिधीयते। तस्मात्त्वं वै महाबाहो मम पार्थस्य चोभयोः।
व्यतिक्रममिमं राजन् सत्यसंरक्षणं प्रति। शरणं त्वां महाराज प्रपन्नौ स्व उभावपि।
क्षन्तुमर्हसि मे राजन् प्रणतस्याभियाचतः। राधेयस्याद्य पापस्य भूमिः पास्यति शोणितं। ३५४५
सत्यं ते प्रतिजानामि हतं विद्ध्यद्य सूतजं। यस्येच्छसि वधं तस्य गतमायुश्च जीवितं।
इति कृष्णवचः श्रुत्वा धर्म्मराजो युधिष्ठिरः। ससम्भ्रमं हृषीकेशमुत्थाप्य प्रणतं तदा।

कृताञ्जलिस्ततो वाक्यमुवाचानन्तरं वचः। एवमेव यथात्थ त्वमेवमेषोऽतिक्रमो मम।
अनुनीतोऽस्मि गोविन्द तारितश्चास्मि माधव। मोक्षिता व्यसनाद्घोरादद्य वयमच्युत।
भवन्तं नाथमासाद्य आवां व्यसनसागरात्। घोरादद्य समुत्तीर्णावुभावज्ञानमोहितौ। ३५५०
त्वद्बुद्धिप्लवमासाद्य दुःखशोकार्णवाद्वयं। समुत्तीर्णाः सहामात्याः सनाथाः स्म त्वयाऽच्युत।
इति श्रीमहाभारते कर्णपर्व्वणि युधिष्ठिरप्रबोधने सप्ततितमोऽध्यायः॥ ७० ॥
॥ सञ्जय उवाच ॥ धर्म्मराजस्य तच्छ्रुत्वा प्रीतियुक्तं वचस्ततः। पार्थं प्रोवाच धर्म्मात्मा गोविन्दो यदुनन्दनः।
इति स्म कृष्णवचनात् प्रत्युचार्य्य युधिष्ठिरं। बभूव विमनाः पार्थः किञ्चित्कृत्वेव पातकं।
ततोऽब्रवीद्वासुदेवः प्रहसन्निव पाण्डवं। कथं नाम भवेदेतद्यदि त्वं पार्थ धर्म्मजं।
असिना तीक्ष्णधारेण हन्या धर्म्मे व्यवस्थितं। त्वमित्युक्त्वाऽथ राजानमेवं कश्मलमाविशः। ३५५५
हत्वा तु नृपतिं पार्थ अकरिष्यः किमुत्तरं। एवं हि दुर्व्विदो धर्म्मो मन्दप्रज्ञैर्व्विशेषतः।
स भवान् धर्म्मभीरुत्वाद्ध्रुवमैष्यन्महत्तमः। नरकं घोररूपञ्च भ्रातुर्ज्येष्ठस्य वै वधात्।
स त्वं धर्म्मभृतां श्रेष्ठं राजानं धर्म्मसंहितं। प्रसादय कुरुश्रेष्ठमेतदत्र मतं मम।
प्रसाद्य भक्त्या राजानं प्रीते चैव युधिष्ठिरे। प्रयावस्त्वरितौ योद्धुं सूतपुत्ररथं प्रति।
हत्वा तु समरे कर्णं त्वमद्य निशितैः शरैः। विपुलां प्रीतिमाधत्स्व धर्म्मपुत्रस्य मानद। ३५६०
एतदत्र महाबाहो प्राप्तकालं मतं मम। एवं कृते कृतञ्चैव तव कार्य्यं भविष्यति।
ततोऽर्ज्जुनो महाराज लज्जया वै समन्वितः। धर्म्मराजस्य चरणौ प्रपद्य शिरसा ततः।
उवाच भरतश्रेष्ठं प्रसीदेति पुनः पुनः। क्षमस्व राजन् यत्प्रोक्तं धर्म्मकामेन भीरुणा।
दृष्ट्वा तु पतितं पद्भ्यां धर्म्मराजो युधिष्ठिरः। धनञ्जयममित्रघ्नं रुदन्तं भरतर्षभ।
उत्थाप्य भ्रातरं राजा धर्म्मराजो धनञ्जयं। समाश्लिष्य च स्नेहेन प्ररुरोद महीपतिः। ३५६५
रुदित्वा सुचिरं कालं भ्रातरौ सुमहाद्युती। कृतशौचौ महाराज प्रीतिमन्तौ बभूवतुः।
तत आश्लिष्य तं प्रेम्णा मूर्द्ध्नि चाघ्राय पाण्डवः। प्रीत्या परमया युक्तो विस्मयंश्च पुनः पुनः।
अब्रवीत्तं महेष्वासं धर्म्मराजो धनञ्जयं। कर्णेन मे महाबाहो सर्व्वसैन्यस्य पश्यतः।
कवचञ्च ध्वजश्चैव धनुः शक्तिर्हयाः शराः। शरैः कृत्ता महेष्वास यतमानस्य संयुगे।
सोऽहं ज्ञात्वा रणे तस्य कर्म्म दृष्ट्वा च फाल्गुन। व्यवसीदामि दुःखेन न च मे जीवितं प्रियं। ३५७०
न चेदद्य हि तं वीरं निहनिष्यसि संयुगे। प्राणानेव परित्यक्ष्ये जीवितार्थो हि को मम।
एवमुक्तः प्रत्युवाच विजयो भरतर्षभ। सत्येन ते शपे राजन् प्रसादेन तथैव च।
भीमेन च नरश्रेष्ठ यमाभ्याञ्च महीपते। यथाऽद्य समरे कर्णं हनिष्यामि हतोऽपि वा।
महीतले पतिष्यामि सत्येनायुधमालभे। एवमाभाष्य राजानमब्रवीन्माधवं वचः।
अद्य कर्णं रणे कृष्ण सूदयिष्ये न संशयः। तव बुद्ध्या हि भद्रं ते वधस्तस्य दुरात्मनः। ३५७५
एवमुक्तोऽब्रवीत्पार्थं केशवो राजसत्तम। शक्तोऽसि भरतश्रेष्ठ हन्तुं कर्णं महाबलं।

एष चापि हि मे कामो नित्यमेव महीरथ । कथं भवान् वधे कर्णं निहन्यादिति सत्तम ।
भूयश्चोवाच मतिमान् माधवो धर्मनन्दनं । युधिष्ठिरेमं बीभत्सुं त्वं सान्त्वयितुमर्हसि ।
अनुज्ञातुञ्च कर्णस्य वधायाद्य दुरात्मनः । श्रुत्वा ह्ययमयञ्चैव त्वां कर्णशरपीडितं ।
प्रवृत्तिं ज्ञातुमायाताविहावां पाण्डुनन्दन । दिष्ट्याऽसि राजन् हतो दिष्ट्या न ग्रहणं गतः । ३५८०
परिसान्त्वय बीभत्सुं जयमाशाधि चानघ ।
॥ युधिष्ठिर उवाच ॥ एह्येहि पार्थ बीभत्सो मां परिष्वज पाण्डव । वक्तव्यमुक्तोऽस्मि हितं त्वया क्षान्तञ्च तन्मया ।
अहं त्वामनुजानामि जहि कर्णं धनञ्जय । मन्युञ्च मा कृथाः पार्थ यन्मयोक्तोऽसि दारुणं ।
॥ सञ्जय उवाच ॥ ततो धनञ्जयो राजन् शिरसा प्रणतस्तदा । पादौ जग्राह पाणिभ्यां भ्रातुर्ज्येष्ठस्य मारिष ।
तमुत्थाप्य ततो राजा परिष्वज्य च पीडितं । मूर्द्ध्न्युपाघ्राय चैवैनमिदं पुनरुवाच ह । ३५८५
धनञ्जय महाबाहो मानितोऽस्मि दृढं त्वया । माहात्म्यं विजयञ्चैव भूयः प्राप्नुहि शाश्वतं ।
॥ अर्ज्जुन उवाच ॥ अद्य तं पापकर्म्माणं सानुबन्धं रणे शरैः । नयाम्यन्तं समासाद्य राधेयं बलगर्व्वितं ।
येन त्वं पीडितो बाणैर्दृढमायम्य कार्म्मुकं । तस्याद्य कर्म्मणः कर्णः फलमाप्स्यति दारुणं ।
अद्य त्वामनुपश्यामि कर्णं हत्वा महीपते । सभाजयितुमाक्रन्दादिति सत्यं ब्रवीमि ते ।
नाहत्वा विनिवर्त्तिष्ये कर्णमद्य रणाजिरात् । इति सत्येन ते पादौ स्पृशामि जगतीपते । ३५९०
॥ सञ्जय उवाच ॥ इति ब्रुवाणं सुमनाः किरीटिनं युधिष्ठिरः प्राह वचो बृहत्तरं । यशोऽक्षयं जीवितमीप्सितन्ते जयं सदा वीर्य्यमरिक्षयं तदा ।
प्रयाहि वृद्धिञ्च दिशन्तु देवता यथाऽहमिच्छामि तवास्तु तत्तथा । प्रयाहि शीघ्रं जहि कर्णमाहवे पुरन्दरो वृत्रमिवात्मवृद्धये ।
इति श्रीमहाभारते कर्णपर्व्वणि युधिष्ठिरार्ज्जुनसंवादे एकसप्ततोऽध्यायः ॥ ७१ ॥
॥ सञ्जय उवाच ॥ प्रसाद्य धर्म्मराजानं प्रहृष्टेनान्तरात्मना । पार्थः प्रोवाच गोविन्दं सूतपुत्रवधोद्यतः ।
कल्प्यतां मे रथो भूयो युज्यन्ताञ्च हयोत्तमाः । आयुधानि च सर्व्वाणि कल्प्यन्तां मे महारथे ।
उपावृत्ताश्च तुरगाः शिक्षिताश्चाश्वसादिभिः । रथोपकरणैः सर्व्वा उपायान्तु त्वरान्विताः । ३५९५
प्रयाहि शीघ्रं गोविन्द सूतपुत्रजिघांसया । एवमुक्ते महाराज फाल्गुनेन महात्मना ।
उवाच दारुकं कृष्णः कुरु सर्व्वं यथाऽब्रवीत् । अर्ज्जुनो भरतश्रेष्ठः श्रेष्ठः सर्व्वधनुष्मतां ।
आज्ञप्तस्त्वथ कृष्णेन दारुको राजसत्तम । योजयामास स रथं वैयाघ्रं शत्रुतापनं ।
सज्जं निवेदयामास पाण्डवस्य महात्मनः । युक्तन्तु तं रथं दृष्ट्वा दारुकेण महात्मना ।
आपृच्छ्य धर्म्मराजानं ब्राह्मणान् स्वस्तिवाच्य च । सुमङ्गलं स्वस्त्ययनमारुरोह रथोत्तमं । ३६००
तस्य राजा महाप्राज्ञो धर्म्मराजो युधिष्ठिरः । आशिषोऽयुङ्क्त स ततः प्रायात् कर्णरथं प्रति ।
तमायान्तं महेष्वासं दृष्ट्वा भूतानि भारत । निहतं मेनिरे कर्णं पाण्डवेन महात्मना ।
बभूवुर्व्विमलाः सर्व्वा दिशो राजन् समन्ततः । चाषाश्च शतपत्राश्च क्रौञ्चाश्चैव जनेश्वर ।
प्रदक्षिणमकुर्व्वन्त तदा वै पाण्डुनन्दनं । बहवः पक्षिणो राजन् पुन्नामानः शुभाः शिवाः ।

त्वरयन्तोऽर्ज्जुनं युद्धे हृष्टरूपा ववाशिरे । कङ्का गृध्रा बकाः श्येना वायसाश्च विशाम्पते । ३३०७

अग्रतस्तस्य गच्छन्ति मांसहेतोर्भयानकाः । निमित्तानि च धन्यानि पाण्डवस्य शशंसिरे ।

विनाशमरिसैन्यानां कर्णस्य च वधं प्रति । प्रयातस्याथ पार्थस्य महान् स्वेदो व्यजायत ।

चिन्ता च विपुला जज्ञे कथन्त्विदं भविष्यति । ततो गाण्डीवधन्वानमब्रवीन्मधुसूदनः ।

दृष्ट्वा पार्थं तथा यान्तं चिन्तापरिगतं तदा ।

॥ वासुदेव उवाच ॥ गाण्डीवधन्वन् संग्रामे ये त्वया धनुषा जिताः । न तेषां मानुषो जेता त्वदन्य इह विद्यते । ३३१०

दृष्टा हि बहवः शूराः शक्रतुल्यपराक्रमाः । त्वां प्राप्य समरे शूरा ये गताः परमां गतिं ।

को हि द्रोणञ्च भीष्मञ्च भगदत्तञ्च मारिष । विन्दानुविन्दावावन्त्यौ काम्बोजञ्च सुदक्षिणं ।

श्रुतायुषं महावीर्य्यमच्युतायुषमेव च । प्रत्युद्गम्य भवेत् क्षेमी यो न स्यात्त्वमिव प्रभो ।

तव ह्यस्त्राणि दिव्यानि लाघवं बलमेव च । असंमोहश्च युद्धेषु विज्ञानस्य च सन्नतिः ।

वेधः पातश्च लक्ष्येषु योगश्चैव तवार्ज्जुन । भवान् देवान् सगन्धर्व्वान् हन्यात् सह चराचरान् । ३३१५

पृथिव्यान्तु रणे पार्थ न योद्धा त्वत्समः पुमान् । धनुर्ग्रहा हि ये केचित् क्षत्रिया युद्धदुर्मदाः ।

आदेवात्त्वत्समन्तेषां न पश्यामि शृणोमि च । ब्रह्मणा च प्रजाः सृष्टा गाण्डीवञ्च महद्धनुः ।

येन त्वं युध्यसे पार्थ तस्मान्नास्ति त्वया समः । अवश्यन्तु मया वाच्यं यत् पथ्यं तव पाण्डव ।

माऽवमंस्था महाबाहो कर्णमाहवशोभिनं । कर्णोऽपि बलवान् दृप्तः कृतास्त्रश्च महारथः ।

कृती च चित्रयोधी च देशकालस्य कोविदः । बहुनाऽत्र किमुक्तेन सङ्क्षेपात् शृणु पाण्डव । ३३२०

त्वत्समं त्वद्विशिष्टं वा कर्णं मन्ये महारथं । परमं यत्नमास्थाय त्वया वध्यो महाहवे ।

तेजसा वह्निसदृशो वायुवेगसमो जवे । अन्तकप्रतिमः क्रोधे सिंहसंहननो बली ।

अष्टरत्निर्महाबाहुर्व्यूढोरस्कः सुदुर्जयः । अभिमानी च शूरश्च प्रवीरः प्रियदर्शनः ।

सर्व्वैर्योधगुणैर्युक्तो मित्राणामभयङ्करः । सततं पाण्डवद्वेषी धार्त्तराष्ट्रहिते रतः ।

सर्व्वैरवध्यो राधेयो देवैरपि सवासवैः । ऋते त्वामिति मे बुद्धिस्तदद्य जहि सूतजं । ३३२५

देवैरपि हि संयत्तैर्ब्बिभ्रद्भिर्मांसशोणितं । अशक्यः स रथो जेतुं सर्व्वैरपि युयुत्सुभिः ।

दुरात्मानं पापवृत्तं नृशंसं दुष्टप्रज्ञं पाण्डवेयेषु नित्यं । हीनस्वार्थं पाण्डवेयैर्व्विरोधे हत्वा कर्णं निश्चितार्थो भवाद्य ।
तं सूतपुत्रं रथिनाम्वरिष्ठं निष्कालिकं कालवशं नयाद्य । तं सूतपुत्रं रथिनाम्वरिष्ठं हत्वा प्रीतिं धर्म्मराजे कुरुष्व ।
जानामि ते पार्थ वीर्यं यथावद्दुर्व्वारणीयञ्च सुरासुरैश्च । सदाऽवजानाति हि पाण्डुपुत्रानसौ दर्पात् सूतपुत्रो दुरात्मा ।

आत्मानं मन्यते वीरं येन पापः सुयोधनः । तमद्य मूलं पापानां जहि सौतिं धनञ्जय । ३३३०

खड्गजिह्वं धनुरास्यं शरदंष्ट्रं तरस्विनं । दृप्तं पुरुषशार्दूलं जहि कर्णं धनञ्जय ।

अहं त्वामनुजानामि वीर्य्येण च बलेन च । जहि कर्णं रणे शूरं मातङ्गमिव केशरी ।

यस्य वीर्य्येण वीर्य्यन्तो धार्त्तराष्ट्रोऽवमन्यते । तमद्य पार्थ संग्रामे कर्णं वैकर्त्तनं जहि ।

इति श्रीमहाभारते कर्णपर्व्वणि कृष्णार्ज्जुनसंवादे द्विसप्ततोऽध्यायः ॥ ७२ ॥

॥ सञ्जय उवाच ॥ ततः पुनरमेयात्मा केशवोऽर्ज्जुनमब्रवीत् । कृतसङ्कल्पमायान्तं वधे कर्णस्य भारत ।
अद्य सप्तदशाहानि वर्त्तमानस्य भारत । विनाशस्यातिघोरस्य नरवारणवाजिनां । २६३५
भूत्वा हि विपुला सेना तावकानां परैः सह । अन्योन्यं समरं प्राप्य किञ्चिच्छेषा विशाम्पते ।
भूत्वा वै कौरवाः पार्थ प्रभूतगजवाजिनः । त्वां वै शत्रुं समासाद्य विनष्टा रणमूर्द्धनि ।
एते ते पृथिवीपालाः सृञ्जयाश्च समागताः । त्वां समासाद्य दुर्द्धर्षं पाण्डवाश्च व्यवस्थिताः ।
पाञ्चालैः पाण्डवैर्मत्स्यैः कारूषैश्चेदिभिः सह । त्वया गुप्तैरमित्रघ्नैः कृतः शत्रुगणक्षयः ।
को हि शक्तो रणे जेतुं कौरवांस्तात संयुगे । अन्यत्र पाण्डवाद्युद्धे त्वया गुप्तान्महारथान् । २६४०
शक्तस्त्वं हि रणे जेतुं ससुरासुरमानुषान् । त्रीँल्लोकान् समरे युक्तान् किं पुनः कौरवं बलं ।
भगदत्तञ्च राजानं कोऽन्यः शक्रस्त्वया विना । जेतुं पुरुषशार्दूल योऽपि स्याद्वासवोपमः ।
तथेमां विपुलां सेनां गुप्तां पार्थ त्वयाऽनघ । न शेकुः पार्थिवाः सर्व्वे चक्षुर्भिरपि वीक्षितुं ।
तथैव सततं पार्थ रक्षिताभ्यां त्वया रणे । धृष्टद्युम्नशिखण्डिभ्यां भीष्मद्रोणौ निपातितौ ।
को हि शक्तो रणे पार्थ भारतानां महारथौ । भीष्मद्रोणौ युधा जेतुं शक्रतुल्यपराक्रमौ । २६४५
को हि शान्तनवं भीष्मं द्रोणं वैकर्त्तनं कृपं । द्रौणिञ्च सौमदत्तिञ्च कृतवर्म्माणमेव च ।
सैन्धवं मद्रराजानं राजानञ्च सुयोधनं । वीरान् कृतास्त्रान् समरे सर्व्वानेवानिवर्त्तिनः ।
अक्षौहिणीपतीनुग्रान् संरब्धान् युद्धदुर्म्मदान् । त्वामृते पुरुषव्याघ्र जेतुं शक्तः पुमानिह ।
श्रेण्यश्च बहुलाः क्षीणाः प्रदीर्णाश्च रथद्विपाः । नानाजनपदाश्चोग्राः क्षत्रियाणाममर्षिणां ।
गोवासदासमीयानां वसातीनाञ्च भारत । प्राच्यानां वाटधानानां भोजानाञ्चाभिमानिनां । २६५०
उदीर्णाश्वगजा सेना सर्व्वक्षत्रस्य भारत । त्वां समासाद्य निधनं गता भीमञ्च भारत ।
उग्राश्च भीमकर्म्माणस्तुषारा यवनाः खसाः । दार्व्वाभिसारा दरदाः शका रामठकौलूताः ।
अन्ध्रकाश्च पुलिन्दाश्च किरातांश्चोग्रविक्रमाः । म्लेच्छाश्च पार्व्वतीयाश्च सागरानूपवासिनः ।
संरम्भिणो युद्धशौण्डा बलिनो दृढपाणयः । एते सुयोधनस्यार्थे संरब्धाः कुरुभिः सह ।
न शक्या युधि निर्ज्जेतुं त्वदन्येन परन्तप । धार्त्तराष्ट्रमुदग्रं हि व्यूढं दृष्ट्वा महाबलं । २६५५
यत्र त्वं न भवेस्त्राता प्रतीयात् को नु मानवः । तत्सागरमिवोद्धूतं रजसा संवृतं बलं ।
विदार्य्य पाण्डवैः क्रुद्धैस्त्वया गुप्तैर्हतं विभो । मागधानामधिपतिर्जयत्सेनो महाबलः ।
अद्य सप्तैव चाहानि हतः संख्येऽभिमन्युना । ततो दशसहस्राणि गजानां भीमकर्म्मणां ।
जघान गदया भीमस्तस्य राज्ञः परिच्छदं । ततोऽन्येऽभिहता नागा रथाश्च शतशो बलात् ।
तदेवं समरे पार्थ वर्त्तमाने महाभये । भीमसेनं समासाद्य त्वाञ्च पाण्डव कौरवाः । २६६०
सवाजिरथमातङ्गा मृत्युलोकमितो गताः । तथा सेनामुखे तत्र निहते पार्थ पाण्डवैः ।
भीष्मः प्रासृजदुग्राणि शरजालानि मारिष । स चेदिकाशिपाञ्चालान् करूषान्मत्स्यकैकयान् ।
शरैः प्रच्छाद्य निधनमनयत् परमास्त्रवित् । तस्य चापच्युतैर्ब्बाणैः परदेहविदारणैः ।

पूर्णमाकाशमभवद्रुक्मपुङ्खैरजिह्मगैः । हन्याद्रथसहस्राणि एकैकेनैव मुष्टिना ।
लक्षं नरद्विपान् हत्वा समेतान् स महाबलान् । गत्या द्वयम्या ते गत्वा जघ्नुर्व्वाजिरथद्विपान् । ३१।५
हित्वा नरगतीर्दृष्टाः स वाणानाहवे त्यजन् । दिनानि दश भीष्मेण निघ्नता तावकं बलं ।
शून्याः कृता रथोपस्था हताश्च गजवाजिनः । दर्शयित्वात्मनो रूपं रुद्रोपेन्द्रसमं युधि ।
पाण्डवानामनीकानि निग्टह्याशो व्यशातयत् । विनिघ्नन् पृथिवीपालांश्चेदिपाञ्चालकैकयान् ।
अदहत् पाण्डवीं सेनां रथाश्वगजसंकुलां । मज्जन्तमप्लवे मन्दमुज्जिहीर्षुः सुयोधनं ।
तथा चरन्तं समरे तपन्तमिव भास्करं । पदातिकोटिसाहस्राः प्रवरायुधपाणयः । ३१।००
न शेकुः सृञ्जया द्रष्टुं तथैवान्ये महीक्षितः । विचरन्तं तथा तन्तु संग्रामे जितकाशिनं ।
सर्व्वोद्यमेन महता पाण्डवान् समभिद्रवत् । स तु विद्राव्य समरे पाण्डवान् सृञ्जयानपि ।
एक एव रणे भीष्म एकवीरत्वमागतः । तं शिखण्डी समासाद्य त्वया गुप्तो महाव्रतं ।
जघान पुरुषव्याघ्रं शरैः सन्नतपर्व्वभिः । स एव पतितः शेते शरतल्पे पितामहः ।
त्वां प्राप्य पुरुषव्याघ्रं गृध्रः प्राप्येव वायसं । द्रोणः पञ्चदिनान्युग्रो विधम्य रिपुवाहिनीं । ३१।०५
कृत्वा व्यूहमभेद्यञ्च पातयित्वा महारथान् । जयद्रथस्य समरे कृत्वा रक्षां महारथः ।
अन्तकप्रतिमश्चोग्रो रात्रियुद्धेऽदहत्प्रजाः । दग्ध्वा योधाञ्छरैर्व्वीरो भारद्वाजः प्रतापवान् ।
धृष्टद्युम्नं समासाद्य स गतः परमां गतिं । यदि वाऽद्य भवान् युद्धे सूतपुत्रमुखान् रथान् ।
न वारयिष्यन् संग्रामे न स्म द्रोणो व्यनङ्क्ष्यत । भवता तु बलं सर्व्वं धार्त्तराष्ट्रस्य वारितं ।
ततो द्रोणो हतो युद्धे पार्षतेन धनञ्जय । एवं वा को रणे कुर्य्यात्त्वदन्यः क्षत्रियो युधि । ३१।१०
यादृशन्ते कृतं पार्थ जयद्रथवधं प्रति । निवार्य सेनां महतीं हत्वा शूरांश्च पार्थिवान् ।
निहतः सैन्धवो राजा त्वयाऽस्त्रबलतेजसा । आश्चर्य्यं सिन्धुराजस्य वधं जानन्ति पार्थिवाः ।
अनाश्चर्य्यं हि तत्त्वत्तस्त्वं हि पार्थ महारथः । त्वां हि प्राप्य रणे क्षत्रमेकाहादिति भारत ।
नश्यमानमहं युक्तं मन्येयमिति मे मतिः । सेयं पार्थ चमूर्घोरा धार्त्तराष्ट्रस्य संयुगे ।
हतसर्व्वस्ववीरा हि भीष्मद्रोणौ यदा हतौ । शीर्णप्रवरयोधाऽद्य हतवाजिरथद्विपा । ३१।१५
हीना सूर्य्येन्दुनक्षत्रैर्द्यौरिवाभाति भारती । विध्वस्ता हि रणे पार्थ सेनेयं भीमविक्रम ।
आसुरीव पुरा सेना शक्रस्येव पराक्रमैः । तेषां हतावशिष्टास्तु सन्ति पञ्च महारथाः ।
अश्वत्थामा कृतवर्म्मा कर्णो मद्राधिपः कृपः । तांस्त्वमद्य नरव्याघ्र हत्वा पञ्च महारथान् ।
हतामित्रः प्रयच्छोर्व्वीं राज्ञे सद्वीपपत्तनां । साकाशजलपातालां सपर्व्वतमहावनां ।
प्राप्नोत्वमितवीर्य्यश्रीरद्य पार्थो वसुन्धरां । एतां पुरा विष्णुरिव हत्वा दैतेयदानवान् । ३१।२०
प्रयच्छ मेदिनीं राज्ञे शक्रायेव हरिर्यथा । अद्य मोदन्तु पाञ्चाला निहतेष्वरिषु त्वया ।
विष्णुना निहतेष्वेव दानवेयेषु देवताः । यदि वा द्विपदां श्रेष्ठ द्रोणं मानयतो गुरुं ।
अश्वत्थाम्नि कृपा तेऽस्ति कृपे चाचार्य्यगौरवात् । अत्यन्तापचितान् बन्धून्मानयन् मातृबान्धवान् ।

हतवर्म्माणमासाद्य न नेष्यसि यमक्षयं । भ्रातरं मातुराशाद्य शल्यं मद्रजनाधिपं ।
यदि त्वमरविन्दाक्ष दयावान्न जिघांससि । इमं पापमतिं क्षुद्रमत्यन्तं पाण्डवान् प्रति। १९९५
कर्णमद्य नरश्रेष्ठ जह्याशु निशितैः शरैः । एतत्ते सुकृतं कर्म्म नात्र किञ्चन युज्यते ।
वयमप्यनुजानीमो नात्र दोषोऽस्ति कश्चन । दहने यत् सपुत्राया निशि मातुस्तवानघ ।
द्यूतार्थे यच्च युष्मासु प्रावर्त्तत सुयोधनः । तस्य सर्व्वस्य दुष्टात्मा कर्णो वै मूलमित्युत ।
कर्णाद्धि मन्यते त्राणं नित्यमेव सुयोधनः । ततो मामपि संरब्धो निग्रहीतुं प्रचक्रमे ।
स्थिरा बुद्धिर्नरेन्द्रस्य धार्त्तराष्ट्रस्य मानद । कर्णः पार्थान् रणे सर्व्वान् विजेष्यति न संशयः। २०००
कर्णमाश्रित्य कौन्तेय धार्त्तराष्ट्रेण विग्रहः । रोचितो भवता सार्द्धं जानताऽपि बलं तव ।
कर्णोऽपि भाषते नित्यमहं पार्थान् समागतान् । वासुदेवञ्च दाशार्हं विजेष्यामि महारथं ।
प्रोत्साहयन् दुरात्मानं धार्त्तराष्ट्रं सुदुर्म्मतिं । समितौ गर्जते कर्णस्तमद्य जहि भारत ।
यच्च युष्मासु पापं वै धार्त्तराष्ट्रः प्रयुक्तवान् । तत्र सर्व्वत्र दुष्टात्मा कर्णः पापमतिर्म्मुखं ।
यच्च तद्धार्त्तराष्ट्रस्य क्रूरैः षड्भिर्महारथैः । अपश्यं निहतं वीरं सौभद्रमृषभेक्षणं । २००५
द्रोणद्रौणिकृपान् वीरान् कम्पयन्तं नरर्षभान् । निर्म्मनुष्यांश्च मातङ्गान् विरथांश्च महारथान्।
व्यश्वारोहांश्च तुरगान् पत्तीन् व्यायुधजीविनः । कुर्व्वन्तमृषभस्कन्धं कुरुवृष्णियशस्करं ।
विधमन्तमनीकानि व्यथयन्तं महारथान् । मनुष्यवाजिमातङ्गान् प्राहिण्वन्तं यमक्षयं ।
शरैः सौभद्रमायान्तं दहन्तमिव वाहिनीं । तन्मे दहति गात्राणि सखे सत्येन ते शपे ।
यत्तत्रापि च दुष्टात्मा कर्णोऽभ्यद्रुह्यत प्रभो । अशक्नुवंश्चाभिमन्योः कर्णः स्थातुं रणेऽग्रतः । २०१०
सौभद्रशरनिर्भिन्नो विसंज्ञः शोणितोक्षितः । निःश्वसन् क्रोधसन्दीप्तो विमुखः सायकाहतः ।
अपयानकृतोत्साहो निराशश्चापि जीविते । तस्थौ सुविह्वलः संख्ये प्रहारजनितश्रमः ।
अथ द्रोणस्य समरे तत्कालसदृशं तदा । श्रुत्वा कर्णो वचः क्रूरं ततश्चिच्छेद कार्म्मुकं ।
ततश्छिन्नायुधं तेन रणे पञ्च महारथाः । तच्चैव निकृतिप्रज्ञाः प्राहरञ्छरवृष्टिभिः ।
तस्मिन् विनिहते वीरे सर्व्वेषां दुःखमाविशत् । प्राहसत् स तु दुष्टात्मा कर्णः स च सुयोधनः । २०१५
यच्च कर्णोऽब्रवीत् कृष्णां सभायां परुषं वचः । प्रमुखे पाण्डवेयानां कुरूणाञ्च नृशंसवत् ।
विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः । पतिमन्यं पृथुश्रोणि वृणीष्व मृदुभाषिणि ।
एषा त्वं धृतराष्ट्रस्य दासीभूता निवेशनं । प्रविशाशु तपक्ष्माक्षि न सन्ति पतयस्तव ।
इत्युक्तवानधर्म्मज्ञस्तदा परमदुर्म्मतिः । पापः पापं वचः कर्णः शृण्वतस्तव भारत ।
अद्य पापस्य तद्वाक्यं सुवर्णविकृताः शराः । शमयन्तु शिलाधौतास्त्वयाऽस्ता जीवितच्छिदः । २०२०
यानि चान्यानि दुष्टात्मा पापानि कृतवांस्त्वयि । तान्यद्य जीवितञ्चास्य शमयन्तु शरास्तव ।
गाण्डीवप्रहितान् घोरानद्य गात्रैः स्पृशञ्छरान् । कर्णः स्मरतु दुष्टात्मा वचनं द्रोणभीष्मयोः ।
सुवर्णपुङ्खा नाराचाः शत्रुघ्ना वैद्युतप्रभाः । त्वयाऽस्तास्तस्य वर्म्माणि भित्त्वा पास्यन्ति शोणितं ।

त्वद्बाहुज्यानिर्मुक्ता मर्म्म भित्त्वा महाशराः। अद्य कर्णं महावेगाः प्रेषयन्तु यमक्षयं।
अद्य हाहाकृता दीना विषण्णास्त्वच्छरार्द्दिताः। प्रपतन्तं रथात् कर्णं पश्यन्तु वसुधाधिपाः। १०२५
अद्य शोणितसंमग्नं शयानं पतितं भुवि। अपविद्धायुधं कर्णं दीनाः पश्यन्तु बान्धवाः।
हस्तिकक्षो महानस्य भल्लेनोन्मथितस्त्वया। प्रकम्पमानः पततु भूमावाधिरथेर्ध्वजः।
त्वया शरशतैश्छिन्नं रथं हेमविभूषितं। हतयोद्धारमुत्सृज्य भीतः शल्यः पलायतां।
ततः सुयोधनो दृष्ट्वा हतमाधिरथिं त्वया। निराशो जीविते त्वद्य राज्ये चैव भवत्वरिः।
एते द्रवन्ति पाञ्चाला वध्यमानाः शितैः शरैः। कर्णेन भरतश्रेष्ठ पाण्डवानुज्जिहीर्षवः। १०३०
पाञ्चालान् द्रौपदेयांश्च धृष्टद्युम्नशिखण्डिनौ। धृष्टद्युम्नतनूजांश्च शतानीकञ्च नाकुलिं।
नकुलं सहदेवञ्च दुर्म्मुखं जनमेजयं। सुधर्म्माणं सात्यकिञ्च विद्धि कर्णवशङ्गतान्।
अभ्याहतानां कर्णेन पाञ्चालानामयं रणे। श्रूयते निनदो घोरस्त्वद्बन्धूनां परन्तप।
न त्वेव भीताः पाञ्चाला भीष्मं नासन् पराङ्मुखाः। न हि मृत्युं महेष्वासा गणयन्ति महारणे।
य एकः पाण्डवीं सेनां शरौघैः समवेष्टयत्। तं समासाद्य पाञ्चाला भीष्मं नासन् पराङ्मुखाः। १०३५
तथा ज्वलन्तमस्त्राग्निं गुरुं सर्व्वधनुष्मतां। निर्द्दहन्तञ्च समरे दुर्द्धर्षं द्रोणमोजसा।
ते नित्यमुदिता जेतुं मृधे शत्रुमरिन्दम। न जात्वाधिरथेर्भीताः पाञ्चालाः स्युः पराङ्मुखाः।
तेषामापततां शूरः पाञ्चालानां तरस्विनां। आदत्तासून् शरैः कर्णः पतङ्गानामिवानलः।
तांस्तथाऽभिमुखान् वीरान् मित्रार्थे त्यक्तजीवितान्। क्षयं नयति राधेयः पाञ्चालान् शतशो रणे।
तद्भारत महेष्वासानगाधे मज्जतोऽप्लवे। कर्णार्णवे प्लवो भूत्वा पाञ्चालांस्त्रातुमर्हसि। १०४०
अस्त्रं हि रामात् कर्णेन भार्गवादृषिसत्तमात्। यदुपात्तं महाघोरं तस्य रूपमुदीर्य्यते।
तापनं सर्व्वसैन्यानां घोररूपं सुदारुणं। समावृत्य महासेनां ज्वलन्तं स्वेन तेजसा।
एते चरन्ति संग्रामे कर्णचापच्युताः शराः। भ्रमराणामिव व्रातास्तापयन्ति स्म तावकान्।
एते द्रवन्ति पाञ्चाला दिक्षु सर्व्वासु भारत। कर्णास्त्रं समरे प्राप्य दुर्न्निवार्य्यमनात्मभिः।
एष भीमो दृढक्रोधो वृतः पार्थ समन्ततः। सृञ्जयैर्योधयन् कर्णं पीड्यते निशितैः शरैः। १०४५
पाण्डवान् सृञ्जयांश्चैव पाञ्चालांश्चैव भारत। हन्यादुपेक्षितः कर्णो रोगो देहमिवागतः।
नान्यं त्वत्तो हि पश्यामि योधं यौधिष्ठिरे बले। यः समासाद्य राधेयं स्वस्तिमानाव्रजेद्गृहं।
तमद्य निशितैर्ब्बाणैर्व्विनिहत्य नरर्षभ। यथाप्रतिज्ञं पार्थ त्वं कृत्वा कीर्त्तिमवाप्नुहि।
त्वं हि शक्तो रणे जेतुं सकर्णानपि कौरवान्। नान्यो युधि युधां श्रेष्ठ सत्यमेतद्ब्रवीमि ते।
एतत् कृत्वा महत् कर्म्म हत्वा कर्णं महारथं। कृतार्थः सफलः पार्थ सुखी भव नरोत्तम। १०५०
इति श्रीमहाभारते कर्णपर्व्वणि अर्ज्जुनोपदेशे त्रिसप्ततोऽध्यायः॥ ७३ ॥
॥ सञ्जय उवाच॥ स केशवस्य बीभत्सुः श्रुत्वा भारत भाषितं। विशोकः संप्रहृष्टश्च क्षणेन समपद्यत।
ततो ज्यामभिमृज्याशु व्याक्षिपद्गाण्डिवं धनुः। दध्रे कर्णविनाशाय केशवञ्चाभ्यभाषत।

त्वया नाथेन गोविन्द ध्रुव एव जयो मम। प्रसादो यस्य मे ऽद्य त्वं लोके भुवनभविष्यत्।
त्वत्सहायो ह्यहं कृष्ण त्रींल्लोकान् वै समागतान्। प्रापयेयं परं लोकं किमु कर्णं महाहवे।
पश्यामि द्रवतीं सेनां पाञ्चालानां जनार्द्दन। पश्यामि कर्णं समरे विचरन्तमभीतवत्। ३७५५
भार्गवास्त्रञ्च पश्यामि ज्वलन्तं कृष्ण सर्व्वशः। सृष्टं कर्णेन वार्ष्णेय शक्रेणेव यथाऽशनिं।
अयं खलु स सङ्ग्रामो यत्र कर्णं मया हतं। कथयिष्यन्ति भूतानि यावद्भूमिर्धरिष्यति।
अद्य कृष्ण विकर्णा मे कर्णं नेष्यन्ति मृत्यवे। गाण्डीवमुक्ताः क्षिपन्तो मम हस्तप्रचोदिताः।
अद्य राजा धृतराष्ट्रः स्वां बुद्धिमवमंस्यते। दुर्य्योधनमराज्यार्हं यया राज्येऽभ्यषिञ्चयत्।
अद्य राज्यात् सुखाच्चैव श्रियो राष्ट्रात्तथा पुरात्। पुत्रेभ्यश्च महाबाहो धृतराष्ट्रो विमोक्ष्यति। ३७६०
अद्य दुर्य्योधनो राज्याज्जीविताच्च निराशकः। भविष्यति हते कर्णे कृष्ण सत्यं ब्रवीमि ते।
अद्य दृष्ट्वा मया कर्णं शरैर्विशकलीकृतं। स्मरतां तव वाक्यानि शमं प्रति जनेश्वरः।
अद्यासौ सौबलः कृष्ण ग्लहान् जानातु वै शरान्। दुरोदरञ्च गाण्डीवं मण्डलञ्च रथं मम।
अद्य कुन्तीसुतस्याहं दृढं राज्ञः प्रजागरं। व्यपनेष्यामि गोविन्द हत्वा कर्णं शितैः शरैः।
अद्य कुन्तीसुतो राजा हते सूतसुते मया। सुप्रहृष्टमनाः प्रीतश्चिरं सुखमवाप्स्यति। ३७६५
अद्य चाहमनाधृष्यं केशवाप्रतिमं शरं। उत्स्रक्ष्यामीह यः कर्णं जीविताद्भ्रंशयिष्यति।
यस्य चैतद्व्रतं मह्यं वधे किल दुरात्मनः। पादौ न धावये तावद्यावद्धन्यां न फाल्गुनं।
मृषा कृत्वा व्रतं तस्य पापस्य मधुसूदन। पातयिष्ये रथात् कायं शरैः सन्नतपर्व्वभिः।
योऽसौ रणे नरं नान्यं पृथिव्यामनुमन्यते। तस्याद्य सूतपुत्रस्य भूमिः पास्यति शोणितं।
अपतिर्ह्यसि कृष्णेति सूतपुत्रो यदब्रवीत्। धृतराष्ट्रमते कर्णः श्लाघमानः स्वकान् गुणान्। ३७७०
अनृतं तत्करिष्यन्ति मामका निशिताः शराः। आशीविषा इव क्रुद्धास्तस्य पास्यन्ति शोणितं।
मया हस्तवता मुक्ता नाराचा वैद्युतत्विषः। गाण्डीवसृष्टा दास्यन्ति कर्णस्य परमां गतिं।
अद्य तप्स्यति राधेयः पाञ्चालीं यत्तदाऽब्रवीत्। सभामध्ये वचः क्रूरं कुत्सयन् पाण्डवान् प्रति।
ये वै षण्डतिलास्तत्र भवितारोऽद्य ते तिलाः। हते वैकर्त्तने कर्णे सूतपुत्रे दुरात्मनि।
अहं वः पाण्डुपुत्रेभ्यस्त्रास्यामीति यदब्रवीत्। धृतराष्ट्रसुतान् कर्णः श्लाघमानोत्मनो गुणान्। ३७७५
अनृतं तत् करिष्यन्ति मामका निशिताः शराः। हन्ताऽहं पाण्डवान् सर्व्वान् सपुत्रानिति योऽब्रवीत्।
तमद्य कर्णं हन्ताऽस्मि मिषतां सर्व्वधन्विनां। यस्य वीर्य्यं समाश्रित्य धार्त्तराष्ट्रो महामनाः।
अवामन्यत दुर्बुद्धिर्नित्यमस्मान् दुरात्मवान्। अद्य कर्णे हते कृष्ण धार्त्तराष्ट्राः सराजकाः।
विद्रवन्तु दिशो भीताः सिंहत्रस्ताः मृगा इव। अद्य दुर्य्योधनो राजा आत्मानमनुशोचतां।
हते कर्णे मया संख्ये सपुत्रे ससुहृज्जने। अद्य कर्णं हतं दृष्ट्वा धार्त्तराष्ट्रोऽत्यमर्षणः। ३७८०
जानातु मां रणे कृष्ण प्रवरं सर्व्वधन्विनां। सपुत्रपौत्रं सामात्यं सभृत्यञ्च निराश्रयं।
अद्य राज्ञे करिष्यामि धृतराष्ट्रं जनेश्वरं। अद्य कर्णस्य चक्राङ्गाः क्रव्यादाश्च पृथग्विधाः।

शरैर्न्निकृत्तानि गात्राणि विचरिष्यन्ति केशव । अद्य राधासुतस्याहं संग्रामे मधुसूदन ।

शिरश्छेत्स्यामि कर्णस्य निघ्नतां सर्व्वधन्विनां । अद्य तीक्ष्णैर्व्विपाठैश्च क्षुरैश्च मधुसूदन ।

रणे छेत्स्यामि गात्राणि राधेयस्य दुरात्मनः । अद्य राजा महत् कृच्छ्रं सन्त्यक्ष्यति युधिष्ठिरः । ३७८५

सन्तापं मानसं वीरश्चिरसंभृतमात्मनः । अद्य केशव राधेयमहं हत्वा सबान्धवं ।

नन्दयिष्यामि राजानं धर्म्मपुत्रं युधिष्ठिरं । अद्याहमनुगान् कृष्ण कर्णस्य कृपणान् युधि ।

हन्ता ज्वलनसङ्काशैः शरैः सर्पविषोपमैः । अद्याहं हेमविकचैर्गार्द्धपत्रैरजिह्मगैः ।

संस्तरिष्यामि गोविन्द वसुधां वसुधाधिपैः । अद्याभिमन्योः शत्रूणां सर्व्वेषां मधुसूदन ।

प्रमथिष्यामि गात्राणि शिरांसि च शितैः शरैः । अद्य निर्धार्त्तराष्ट्रां च भ्रात्रे दास्यामि मेदिनीं । ३७९०

निरर्ज्जुनां वा पृथिवीं केशवानुचरिष्यसि । अद्याहमनृणः कृष्ण भविष्यामि धनुर्भृतां ।

कोपस्य च कुरूणां च शराणां गाण्डिवस्य च । अद्य दुःखमहं मोक्ष्ये त्रयोदशसमार्ज्जितं ।

हत्वा कर्णं रणे कृष्ण शम्बरं मघवानिव । अद्य कर्णे हते युद्धे सोमकानां महारथाः ।

कृतं कार्य्यञ्च मन्यन्तां मित्रकार्य्येप्सवो युधि । मम चैव कथं प्रीतिः शैनेयस्याद्य माधव ।

भविष्यति हते कर्णे मयि चापि जयाधिके । अहं हत्वा रणे कर्णं पुत्रञ्चास्य महारथं । ३७९५

प्रीतिं दास्यामि भीमस्य यमयोः सात्यकस्य च । धृष्टद्युम्नशिखण्डिभ्यां पाञ्चालानाञ्च माधव ।

अद्यानृण्यं गमिष्यामि हत्वा कर्णं महाहवे । अद्य पश्यन्तु संग्रामे धनञ्जयममर्षणं ।

युध्यन्तं कौरवान् संख्ये पातयन्तञ्च सूतजं । भवत्सकाशे वक्ष्ये च पुनरेवात्मसंस्तवं ।

धनुर्व्वेदे मत्समो नास्ति लोके पराक्रमे वा मम कोऽस्ति तुल्यः । को वाऽप्यन्यो मत्समोऽस्ति क्षमायां तथा क्रोधे सदृशोऽन्यो न मेऽस्ति ।

अहं धनुष्मानसुरान् सुरांश्च सर्व्वाणि भूतानि च सङ्गतानि । स्वबाहुवीर्य्याद्गमये पराभवं मत्पौरुषं विद्धि परं परेभ्यः । ३८००

शरार्च्चिषा गाण्डिवेनाहमेकः सर्व्वान् कुरून् बाह्लिकांश्चाभिसृत्य । हिमात्यये कक्षगतो यथाऽग्निस्तथा दहेयं सगणान् प्रसह्य ।

पाणौ पृषत्का लिखिता ममैते धनुश्च दिव्यं विततं सबाणं । पादौ च मे सरथौ सध्वजौ च न मादृशं युद्धगतं जयन्ति ।

इत्येवमुक्त्वाऽर्ज्जुन एकवीरः क्षिप्रं रिपुघ्नः क्षतजोपमाक्षः । भीमं मुमुक्षुः समरे प्रयातः कर्णस्य कायाच्छिरो जिहीर्षुः ।

इति श्रीमहाभारते कर्णपर्व्वणि अर्ज्जुनश्लाघायां चतुःसप्ततोऽध्यायः ॥ ७४ ॥

॥ धृतराष्ट्र उवाच ॥ समागमे पाण्डवसृञ्जयानां महाभये मामकानामगाधे । धनञ्जये तात रणाय याते कर्णेन तद्युद्धमतोऽत्र कीदृक् ।

॥ सञ्जय उवाच ॥ तेषामनीकानि बृहद्ध्वजानि रणे समृद्धानि समागतानि । गर्ज्जन्ति भेरीनिनदोन्मुखानि मेघैर्यथा मेघगणास्तपान्ते । ३८०५

महागजाभ्राकुलमस्त्रतोयं वादित्रनेमीतलशब्दवच्च । हिरण्यचित्रायुधविद्युतञ्च शरासिनाराचमहास्त्रधारं ।

तद्भीमवेगं रुधिरौघवाहि खड्गाकुलं क्षत्रियजीवघाति । अनार्त्तवं क्रूरमनिष्टवर्षं बभूव तत् संहरणं प्रजानां ।

एकं रथं सम्परिवार्य्य मृत्युं नयन्त्यनेके च रथाः समेताः । एकस्तथैकं रथिनं रथाग्र्यस्तथा रथश्चापि रथाननेकान् ।

एतद्दुःखं सारथे धर्म्मराजो यन्मां हित्वा यातवान् शत्रुमध्ये । नैनं जीवन्नाद्य यानाम्यजीवन् बीभत्सुं वा तन्ममाद्यातिदुःखं ।

सोऽहं द्विषत्सैन्यमुदग्रकल्पं विनाशयिष्ये परमप्रतीतः । एतन्निहत्याजिमध्ये समेतं प्रीतो भविष्यामि सह त्वयाऽद्य ।

सर्व्वांस्तूणान् सायकानामवेक्ष्य किं शिष्टं स्यात् सायकानां रथे मे । का वा जातिः किं प्रमाणञ्च तेषां ज्ञात्वा व्यक्तं तत्समाचक्ष्व सूत । ३८७५

॥ विशोक उवाच ॥ षण्मार्गणानामयुतानि वीर क्षुराश्च भल्लाश्च तथायुताख्याः । नाराचानां द्वे सहस्रे च वीर त्रीण्येव च प्रदराणां च पार्थ ।

अस्त्यायुधं पाण्डवेयावशिष्टं न यद्वहेच्छकटं षड्गवीयं । एतद्विद्वन् मुञ्च सहस्रशोऽपि गदाऽसिबाहुद्रविणञ्च तेऽस्ति । प्रासाश्च मुद्गराः शक्तयस्तोमराश्च मा भैषीस्त्वं संक्षयादायुधानां ।

॥ भीमसेन उवाच ॥ सूताद्येमं पश्य भीमप्रमुक्तैः संभिन्दद्भिः पार्थिवानां सुवेगैः । उग्रं कारं घोररूपं नष्टादित्यं मृत्युलोकेन तुल्यं ।

अद्यैतद्वै विदितं पार्थिवानां भविष्यति आकुमारञ्च सूत । निमग्नो वा समरे भीमसेन एकः कुरून् वा समरे व्यजैषीत् । ३८८०

सर्व्वे संख्ये कुरवो निष्पतन्तु मां वा लोकाः कीर्त्तयन्त्वाकुमारं । सर्व्वानेकस्तानहं पातयिष्ये ते वा सर्व्वे भीमसेनं तुदन्तु ।

आशास्तारः कर्म्म चाप्युत्तमं ये तन्मे देवाः केवलं साधयन्तु । आयात्विहाद्यार्ज्जुनः शत्रुघाती शक्रस्तूर्णं यज्ञ इवोपहूतः ।

ईक्षस्वैतां भारतीं दीर्य्यमाणामेते कस्माद्विद्रवन्ते नरेन्द्राः । व्यक्तं धीमान् सव्यसाची नराग्र्यः सैन्यं ह्येतच्छादयत्याशु बाणैः ।

पश्य ध्वजांश्च द्रवतो विशोक नागान् हयान् पत्तिसंघांश्च संख्ये । रथान् विशीर्णान् शरशक्तिताडितान् पश्यस्वैतान् रथिनश्चैव सूत ।

आपूर्य्यते कौरवी चाप्यभीक्ष्णं सेना ह्यसौ सुभृशं हन्यमाना । धनञ्जयस्याशनितुल्यवेगैर्ग्रस्ता शरैः काञ्चनबर्हिवाजैः । ३८८५

एते द्रवन्ति स्म रथाश्वनागाः पदातिसंघानतिमर्द्दयन्तः । संमुह्यमानाः कौरवाः सर्व्व एव द्रवन्ति नागा इव दावभीताः ।

हाहाकृताश्चैव रणे विशोक मुञ्चन्ति नादान् विपुलान् गजेन्द्राः ।

॥ विशोक उवाच ॥ किं भीम नैनं त्वमिहाद्य शृणोषि विस्फारितं गाण्डिवस्यातिघोरं । क्रुद्धेन पार्थेन विकृष्यतोऽद्य कच्चिन्नेमौ तव कर्णौ विनष्टौ ।

सर्व्वे कामाः पाण्डव ते समृद्धाः कपिर्ह्यसौ दृश्यते हस्तिसैन्ये । नीलाद्घनाद्विद्युतमुच्चरन्तीं तथा पश्य विस्फुरन्तीं धनुर्ज्यां ।

कपिर्ह्यसौ वीक्ष्यते सर्व्वतो वै ध्वजाग्रमारुह्य धनञ्जयस्य । वित्रासयन् रिपुसंघान् विमर्द्दे बिभेम्यस्मादात्मनैवाभिवीक्ष्य । ३८९०

विभ्राजते चातिमात्रं किरीटं विचित्रमेतच्च धनञ्जयस्य । दिवाकराभो मणिरेष दिव्यो विभ्राजते चैव किरीटसंस्थः ।

पार्श्वे भीमं पाण्डुराभ्रप्रकाशं पश्यस्व शङ्खं देवदत्तं सुघोषं । अभीषुहस्तस्य जनार्द्दनस्य विगाहमानस्य चमूं परेषां ।

रविप्रभं वज्रनाभं क्षुरान्तं पार्श्वे स्थितं पश्य जनार्द्दनस्य । चक्रं यशोवर्द्धनं केशवस्य सदाऽर्च्चितं यदुभिः पश्य वीर ।

महाद्विपानां सरलद्रुमोपमाः करा निकृत्ताः प्रपतन्त्यमी क्षुरैः । किरीटिना तेन पुनः सवाजिनः शरैर्निकृत्ताः कुलिशैरिवाद्रयः ।

तथैव कृष्णस्य च पाञ्चजन्यं महार्हमेतद्द्विजराजवर्णं । कौन्तेय पश्योरसि कौस्तुभञ्च आज्वल्यमानं विजयां स्रजञ्च । ३८९५

ध्रुवं रथाग्र्यः समुपैति पार्थो विद्रावयन् सैन्यमिदं परेषां । शिताश्ववर्षैरसितप्रकाशैर्दीर्घैर्बलाहैरथिनाम्बरिष्ठः ।
रथान् हयान् पत्तिगणांश्च सायकैर्व्विदारितान् पश्य पतन्त्यमी यथा । तवानुजेनामरराजतेजसा महावनानीव सुपर्णवायुना ।
चतुःशतान् पश्य रथानिमान् हतान् सवाजिसूतान् समरे किरीटिना । महेषुभिः सप्तशतानि दन्तिनां पदातिसादींश्च रथाननेकशः ।
अयं समभ्येति तवान्तिकं बली निघ्नन् कुरूंश्चित्र इव ग्रहोऽर्ज्जुनः । समृद्धकामोऽसि हतास्तवाहिता बलं तवायुश्च चिराय वर्द्धतां ।
॥ भीमसेन उवाच ॥ ददामि ते ग्रामवरांश्चतुर्दश प्रियाख्याने सारथे सुप्रसन्नः । दासीशतञ्चापि रथांश्च विंशतिं यदर्ज्जुनं वेदयसे विशोक । ३८५०

इति श्रीमहाभारते कर्णपर्व्वणि भीमसेनविशोकसंवादे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

॥ सञ्जय उवाच ॥ श्रुत्वा तु रथनिर्घोषं सिंहनादञ्च संयुगे । अर्ज्जुनः प्राह गोविन्दं शीघ्रं नोदय वाजिनः ।
अर्ज्जुनस्य वचः श्रुत्वा गोविन्दोऽर्ज्जुनमब्रवीत् । एष गच्छामि सुक्षिप्रं यत्र भीमो व्यवस्थितः ।
तं यान्तमश्वैर्हिमशङ्खवर्णैः सुवर्णमुक्तामणिजालनद्धैः । जम्भं जिघांसुं प्रगृहीतवज्रं जयाय देवेन्द्रमिवोग्रमन्युं ।
रथाश्वमातङ्गपदातिसङ्घा बाणस्वनैर्नेमिखुरस्वनैश्च । सन्नादयन्तो वसुधां दिशश्च क्रुद्धा नृसिंहा जयमभ्युदीयुः ।
तेषाञ्च पार्थस्य समागमोऽभूत् देहासुपाप्मक्षयः सुयुद्धं । त्रैलोक्यहेतोरसुरैर्यथासीद्देवस्य विष्णोर्ज्जयतां वरस्य । ३८५५
तैरस्तमुच्चावचमायुधन्तमेकः प्रचिच्छेद किरीटमाली । क्षुरार्द्धचन्द्रैर्निशितैश्च भल्लैः शिरांसि तेषां बहुधा च बाहून् ।
छत्राणि वालव्यजनानि केतूनश्वान् रथान् पत्तिगणान् द्विपांश्च । ते पेतुरुर्व्यां बहुधा विरूपा वातप्रभग्नानि यथा वनानि ।
सुवर्णजालावतता महागजाः सवैजयन्तीध्वजयोधकल्पिताः । सुवर्णपुङ्खैरिषुभिः समाचितास्चकाशिरे प्रज्वलिता यथाऽचलाः ।
विदार्य्य नागाश्वरथान्धनञ्जयः शरोत्तमैर्व्वासववज्रसन्निभैः । द्रुतं ययौ कर्णजिघांसया तथा यथा मरुत्वान् बलभेदने पुरा ।

ततः स पुरुषव्याघ्रस्तव सैन्यमरिन्दमः । प्रविवेश महाबाहुर्मकरः सागरं यथा । ३८६०
तं दृष्ट्वा तावका राजन् रथपत्तिसमन्विताः । गजाश्वसादिबहुलाः पाण्डवं समुपाद्रवन् ।
तेषामापततां पार्थमारावः सुमहानभूत् । सागरस्येव क्षुब्धस्य यथा स्यात् सलिलस्वनः ।
ते तु तं पुरुषव्याघ्रं व्याघ्रा इव महारथाः । अभ्यद्रवन्त संग्रामे त्यक्त्वा प्राणकृतं भयं ।
तेषामापततां तत्र शरवर्षाणि मुञ्चतां । अर्ज्जुनो व्यधमत् सैन्यं महावातो घनानिव ।
तेऽर्ज्जुनं सहिता भूत्वा रथवंशैः प्रहारिणः । अभियाय महेष्वासा विव्यधुर्निशितैः शरैः । ३८६५
ततोऽर्ज्जुनः सहस्राणि रथवारणवाजिनां । प्रेषयामास विशिखैर्यमस्य सदनं प्रति ।
ते वध्यमानाः समरे पार्थचापच्युतैः शरैः । तत्र तत्र स्म लीयन्ते भये जाते महारथाः ।
तेषाञ्चतुःशतान् वीरान् यतमानान्महारथान् । अर्ज्जुनो निशितैर्ब्बाणैरनयद्यमसादनं ।
ते वध्यमानाः समरे नानालिङ्गैः शितैः शरैः । अर्ज्जुनं समभित्यज्य दुद्रुवुर्व्वै दिशो दश ।
तेषां शब्दो महानासीद्द्रवतां वाहिनीमुखे । महौघस्येव जलधेर्गिरिमासाद्य दीर्य्यतः । ३८७०

तान्तु सेनां भृशं विद्ध्वा द्रावयित्वाऽर्ज्जुनः शरैः । प्रायादभिमुखः पार्थः सूतानीकं हि मारिष ।
तस्य शब्दो महानासीत् परानभिमुखस्य वै । गरुडस्येव पततः पन्नगार्थे यथा पुरा ।
तन्तु शब्दमभिश्रुत्य भीमसेनो महाबलः । बभूव परमप्रीतः पार्थदर्शनलालसः ।
श्रुत्वैव पार्थमायान्तं भीमसेनः प्रतापवान् । त्यक्त्वा प्राणान्महाराज सेनां तव ममर्द्द ह ।
स वायुवीर्य्यप्रतिमो वायुवेगसमो जवे । वायुवद्व्यचरद्भीमो वायुपुत्त्रः प्रतापवान् । ३८८५
तेनार्द्यमाना राजेन्द्र सेना तव विशाम्पते । व्यभ्रश्यत महाराज भिन्ना नौरिव सागरे ।
तान्तु सेनां तदा भीमो दर्शयन् पाणिलाघवं । शरैरवचकर्त्तोग्रैः प्रेषयिष्यन् यमक्षयं ।
तत्र भारत भीमस्य बलं दृष्ट्वाऽतिमानुषं । व्यभ्रमन्त रणे योधाः कालस्येव युगक्षये ।
तथाऽर्द्दितान् भीमबलान् भीमसेनेन भारत । दृष्ट्वा दुर्य्योधनो राजा इदं वचनमब्रवीत् ।
सैनिकांश्च महेष्वासान् योधांश्च भरतर्षभ । समादिशद्रणे सर्व्वान् हत भीममिति स्म ह । ३८९०
तस्मिन् हते हतं मन्ये पाण्डुसैन्यमशेषतः । प्रतिगृह्य च तामाज्ञां तव पुत्त्रस्य पार्थिवाः ।
भीमं प्रच्छादयामासुः शरवर्षैः समन्ततः । गजाश्च बहुला राजन् नराश्च जयगृद्धिनः ।
रथे स्थिताश्च राजेन्द्र परिवव्रुर्वृकोदरं । स तैः परिवृतः शूरैः शूरो राजन् समन्ततः ।
शुशुभे भरतश्रेष्ठो नक्षत्रैरिव चन्द्रमाः । परिवेषी यथा सोमः परिपूर्णो विराजते ।
स रराज तथा संख्ये दर्शनीयो नरोत्तमः । निर्व्विशेषो महाराज यथा हि विजयस्तथा । ३८९५
तस्य ते पार्थिवाः सर्व्वे शरवृष्टिं समासृजन् । क्रोधरक्तेक्षणाः शूरा हन्तुकामा वृकोदरं ।
तां विदार्य्य महासेनां शरैः सन्नतपर्व्वभिः । निश्चक्राम रणाद्भीमो मत्स्यो जालादिवाम्भसि ।
हत्वा दशसहस्राणि गजानामनिवर्त्तिनां । नृणां शतसहस्रे द्वे द्वे शते चैव भारत ।
पञ्च चाश्वसहस्राणि रथानां शतमेव च । हत्वा प्रास्यन्दयत् भीमो नदीं शोणितवाहिनीं ।
शोणितोदां रथावर्त्तां हस्तिग्राहसमाकुलां । नरमीनाश्वनक्रान्तां केशशैवालशाड्वलां । ३९००
सञ्छिन्नभुजनागेन्द्रां बहुरत्नापहारिणीं । ऊरुग्राहां मज्जपङ्कां शीर्षोपलसमावृतां ।
धनुःकाशां शरावापां गदापरिघकेतनां । हंसच्छत्रध्वजोपेतामुष्णीषवरफेनिलां ।
हारपद्माकराञ्चैव भूमिरेणूर्म्मिमालिनीं । आर्य्यवृत्तवतां संख्ये सुतरां भीरुदुस्तरां ।
योधग्राहवतीं संख्ये वहन्तीं पितृसादनं । क्षणेन पुरुषव्याघ्रः प्रावर्त्तयत निम्नगां ।
यथा वैतरणीमुग्रां दुस्तरामकृतात्मभिः । तथा दुस्तरणीं घोरां भीरूणां भयवर्द्धिनीं । ३९०५
यतो यतः पाण्डवेयः प्रविष्टो रथसत्तमः । ततस्ततोऽपातयत योधाञ्छतसहस्रशः ।
एवं दृष्ट्वा कृतं कर्म्म भीमसेनेन संयुगे । दुर्य्योधनो महाराज शकुनिं वाक्यमब्रवीत् ।
जय मातुल सङ्ग्रामे भीमसेनं महाबलं । अस्मिन् जिते जितं मन्ये पाण्डवेयं महाबलं ।
ततः प्रायान्महाराज सौबलेयः प्रतापवान् । रणाय महते युक्तो भ्रातृभिः परिवारितः ।
स समासाद्य सङ्ग्रामे भीमं भीमपराक्रमं । वारयामास तं वीरो वेलेव मकरालयं । ३९१०

संन्यवर्त्तत तं भीमो वार्य्यमाणः शितैः शरैः । शकुनिस्तस्य राजेन्द्र वामपार्श्वे स्तनान्तरे ।
प्रेषयामास नाराचान् रुक्मपुङ्खान् शिलाशितान् । वर्म्म भित्त्वा तु ते घोराः पाण्डवस्य महात्मनः ।
न्यमज्जन्त महाराज कङ्कबर्हिणवाससः । सोऽतिविद्धो रणे भीमः शरं रुक्मविभूषितं ।
प्रेषयामास स रुषा सौबलं प्रति भारत । तमायान्तं शरं घोरं शकुनिः शत्रुतापनः ।
चिच्छेद सप्तधा राजन् कृतहस्तो महाबलः । तस्मिन्निपतिते भूमौ भीमः क्रुद्धो विशाम्पते । ३८१५
धनुश्चिच्छेद भल्लेन सौबलस्य हसन्निव । तदपास्य धनुश्छिन्नं सौबलेयः प्रतापवान् ।
अन्यदादाय वेगेन धनुर्भल्लांश्च षोडश । तैस्तस्य तु महाराज भल्लैः सन्नतपर्व्वभिः ।
द्वाभ्यां स सारथिं ह्यार्च्छद्भीमं सप्तभिरेव च । ध्वजमेकेन चिच्छेद द्वाभ्यां छत्रं विशाम्पते ।
चतुर्भिश्चतुरो वाहान् विव्याध सुबलात्मजः । ततः क्रुद्धो महाराज भीमसेनः प्रतापवान् ।
शक्तिं चिक्षेप समरे रुक्मदण्डामयस्मयीं । सा भीमभुजनिर्मुक्ता नागजिह्वेव चञ्चला । ३८२०
निपपात रणे तूर्णं सौबलस्य महात्मनः । ततस्तामेव संगृह्य शक्तिं कनकभूषणां ।
भीमसेनाय चिक्षेप क्रुद्धरूपो विशाम्पते । सा निर्भिद्य भुजं सव्यं पाण्डवस्य महात्मनः ।
निपपात तदा भूमौ यथा विद्युन्नभश्च्युता । अथोत्क्रुष्टं महाराज धार्त्तराष्ट्रैः समन्ततः ।
न तु तं ममृषे भीमः सिंहनादं तरस्विनां । अन्यद्गृह्य धनुः सज्यं त्वरमाणो महाबलः ।
मुहूर्त्तादिव राजेन्द्र च्छादयामास सायकैः । सौबलस्य बलं संख्ये त्यक्त्वात्मानं महाबलः । ३८२५
तस्याश्वांश्चतुरो हत्वा सूतञ्चैव विशाम्पते । ध्वजञ्चिच्छेद भल्लेन त्वरमाणः पराक्रमी ।
हताश्वं रथमुत्सृज्य त्वरमाणो नरोत्तमः । तस्थौ विस्फारयंश्चापं क्रोधरक्तेक्षणः श्वसन् ।
शरैश्च बहुधा राजन् भीममार्च्छत्समन्ततः । प्रतिहत्य तु वेगेन भीमसेनः प्रतापवान् ।
धनुश्चिच्छेद संक्रुद्धो विव्याध च शितैः शरैः । सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्षणः ।
निपपात तदा भूमौ किञ्चित्प्राणो नराधिप । ततस्तं विह्वलं ज्ञात्वा पुत्त्रस्तव विशाम्पते । ३८३०
अपोवाह रथेनाजौ भीमसेनस्य पश्यतः । रथस्थे तु नरव्याघ्रे धार्त्तराष्ट्राः पराङ्मुखाः ।
प्रदुद्रुवुर्दिशो भीता भीमाज्जाते महाभये । सौबले निर्ज्जिते राजन् भीमसेनेन धन्विना ।
भयेन महताविष्टः पुत्त्रो दुर्य्योधनस्तव । अपायाज्जवनैरश्वैः सापेक्षो मातुलं प्रति ।
पराङ्मुखन्तु राजानं दृष्ट्वा सैन्यानि भारत । विप्रजग्मुः समुत्सृज्य द्वैरथानि समन्ततः ।
तान् दृष्ट्वा विद्रुतान् सर्व्वान् धार्त्तराष्ट्रान् पराङ्मुखान् । जवेनाभ्यपतद्भीमः किरन् शरशतान् बहून् । ३८३५
ते वध्यमाना भीमेन धार्त्तराष्ट्राः पराङ्मुखाः । कर्णमासाद्य समरे स्थिता राजन् समन्ततः ।
स हि तेषां महावीर्य्यो द्वीपोऽभूत् सुमहाबलः । भिन्ननौका यथा राजन् द्वीपमासाद्य निर्वृताः ।
भवन्ति पुरुषव्याघ्र नाविकाः कालपर्य्यये । तथा कर्णं समासाद्य तावकाः पुरुषर्षभ ।
समाश्वस्ताः स्थिता राजन् सम्प्रहृष्टाः परस्परं । समाजग्मुश्च युद्धाय मृत्युं कृत्वा निवर्त्तनं ।
इति श्रीमहाभारते कर्णपर्व्वणि सौबलेयपराजये सप्तसप्ततोऽध्यायः ॥ ७७ ॥

॥ धृतराष्ट्र उवाच ॥ ततो भग्नेषु सैन्येषु भीमसेनेन संयुगे । दुर्य्योधनोऽब्रवीत् किन्तु सौबलो वाऽपि सञ्जय । ३९४०
कर्णो वा जयतां श्रेष्ठो योधा वा मामका युधि । कृपो वा कृतवर्म्मा च द्रौणिर्दुःशासनोऽपि वा ।
अत्यद्भुतमहं मन्ये पाण्डवेयस्य विक्रमं । यदेकः समरे सर्व्वान् योधयामास मामकान् ।
यथाप्रतिज्ञं योधानां राधेयः कृतवानपि । कुरूणामथ सर्व्वेषां कर्णः शत्रुनिषूदनः ।
शर्म्म वर्म्म प्रतिष्ठा च जीविताशा च सञ्जय । तत् प्रभग्नं बलं दृष्ट्वा कौन्तेयेनामितौजसा ।
राधेयो वाऽप्याधिरथिः कर्णः किमकरोद्युधि । पुत्त्रा वा मम दुर्द्धर्षा राजानो वा महारथाः । ३९४५
॥ सञ्जय उवाच ॥ अपराह्णे महाराज सूतपुत्त्रः प्रतापवान् । जघान सोमकान् सर्व्वान् भीमसेनस्य पश्यतः ।
भीमोऽप्यतिबलं सैन्यं धार्त्तराष्ट्रं व्यपोथयत् । अथ कर्णोऽब्रवीच्छल्यं पाञ्चालान् प्रापयस्व मां ।
द्राव्यमाणं बलं दृष्ट्वा भीमसेनेन धीमता । यन्तारमब्रवीत् कर्णः पाञ्चालानेव मां वह ।
मद्रराजस्ततः शल्यः श्वेतानश्वान्महाजवान् । प्राहिणोच्चेदिपाञ्चालान् करूषांश्च महाबलः ।
प्रविश्य च स तत्सैन्यं शल्यः परबलार्द्दनः । न्ययच्छत्तुरगान् हृष्टो यत्र यत्रैच्छदग्रणीः । ३९५०
तं रथं मेघसङ्काशं वैयाघ्रपरिवारणं । संदृश्य पाण्डुपाञ्चालास्त्रस्ता आसन् विशाम्पते ।
ततो रथस्य निनदः प्रादुरासीन्महारणे । पर्ज्जन्यसमनिर्घोषः पर्व्वतस्येव दीर्य्यतः ।
ततः शरशतैस्तीक्ष्णैराकर्णसमनिःसृतैः । जघान पाण्डवबलं शतशोऽथ सहस्रशः ।
तन्तथा समरे कर्म्म कुर्व्वाणमपराजितं । परिवव्रुर्महेष्वासाः पाण्डवानां महारथाः ।
तं शिखण्डी च भीमश्च धृष्टद्युम्नश्च पार्षतः । नकुलः सहदेवश्च द्रौपदेयाश्च सात्यकिः । ३९५५
परिवव्रुर्जिघांसन्तो राधेयं शरवृष्टिभिः । सात्यकिस्तु तदा कर्णं विंशत्या निशितैः शरैः ।
अताडयद्रणे शूरो जत्रुदेशे नरोत्तमः । शिखण्डी पञ्चविंशत्या धृष्टद्युम्नश्च सप्तभिः ।
द्रौपदेयाश्चतुःषष्ट्या सहदेवश्च सप्तभिः । नकुलश्च शतेनाजौ कर्णं विव्याध सायकैः ।
भीमसेनस्तु राधेयं नवत्या नतपर्व्वणां । विव्याध समरे क्रुद्धो जत्रुदेशे महाबलः ।
अथ प्रहस्याधिरथिर्व्विक्षिपन् धनुरुत्तमं । मुमोच निशितान् बाणान् पीडयन् सुमहाबलः । ३९६०
तान् प्रत्यविध्यद्राधेयः पञ्चभिः पञ्चभिः शरैः । सात्यकेस्तु धनुश्छित्त्वा ध्वजञ्च भरतर्षभ ।
तन्तथा नवभिर्ब्बाणैराजघान स्तनान्तरे । भीमसेनं ततः क्रुद्धो विव्याध त्रिंशता शरैः ।
सहदेवस्य भल्लेन ध्वजञ्चिच्छेद मारिष । सारथिञ्च त्रिभिर्ब्बाणैराजघान परन्तपः ।
विरथान्द्रौपदेयांश्च चकार भरतर्षभ । अक्ष्णोर्निमेषमात्रेण तदद्भुतमिवाभवत् ।
विमुखीकृत्य तान् सर्व्वान् शरैः सन्नतपर्व्वभिः । पाञ्चालानहनच्छूरांश्चेदीनाञ्च महारथान् । ३९६५
ते वध्यमानाः समरे चेदिमत्स्या विशाम्पते । कर्णमेकमभिद्रुत्य शरसङ्घैः समार्पयन् ।
तान् जघान शितैर्बाणैः सूतपुत्त्रो महारथः । एतदत्यद्भुतं कर्म्म दृष्टवानस्मि भारत ।
यदेकः समरे शूरान् सूतपुत्त्रः प्रतापवान् । यतमानान् परं शक्त्या योधयामास धन्विनः ।
पाण्डवेयान्महाराज शरैर्व्वारितवान् रणे । तत्र भारत कर्णस्य लाघवेन महात्मनः ।

तुष्टुवुर्दैवताः सर्व्वाः सिद्धाश्च सह चारणैः । अपूजयन्महेष्वासा धार्त्तराष्ट्रा नरोत्तमं । ३९७०
कर्णं रथवरश्रेष्ठं श्रेष्ठं सर्व्वधनुष्मतां । ततः कर्णो महाराज ददाह रिपुवाहिनीं ।
कक्षमिद्धो यथावह्निर्निदाघे ज्वलितो महान् । ते वध्यमानाः कर्णेन पाण्डवेयास्ततस्ततः ।
प्राद्रवन्त रणे भीताः कर्णं दृष्ट्वा महारथं । तत्राक्रन्दो महानासीत् पाञ्चालानां महारणे ।
वध्यतां सायकैस्तीक्ष्णैः कर्णचापवरच्युतैः । तेन शब्देन वित्रस्ता पाण्डवानां महाचमूः ।
कर्णमेकं रणे योधं मेनिरे तत्र शात्रवाः । तत्राद्भुतं पुनश्चक्रे राधेयः शत्रुकर्षणः । ३९७५
यदेनं पाण्डवाः सर्व्वे न शेकुरभिवीक्षितुं । यथौघः पर्व्वतश्रेष्ठमासाद्याभिप्रदीर्य्यते ।
तथा तत् पाण्डवं सैन्यं कर्णमासाद्य दीर्य्यते । कर्णोऽपि समरे राजन् विधूमोऽग्निरिव ज्वलन् ।
दहन् तस्थौ महाबाहुः पाण्डवानां महाचमूं । शिरांसि च महाराज कर्णांश्चैव सकुण्डलान् ।
बाहूंश्च वीरो वीराणां चिच्छेद लघु चेषुभिः । हस्तिदन्तत्सरून् खड्गान् ध्वजाञ्छक्तीर्हयान् गजान् ।
रथांश्च विविधान् राजन् पताका व्यजनानि च । अक्षांश्च युगयोक्त्राणि चक्राणि विविधानि च । ३९८०
चिच्छेद बहुधा कर्णो योधव्रतमनुष्ठितः । तत्र भारत कर्णेन निहतैर्गजवाजिभिः ।
अगम्यरूपा पृथिवी मांसशोणितकर्द्दमा । विषमञ्च समञ्चैव हतैरश्वपदातिभिः ।
रथैश्च कुञ्जरैश्चैव न प्राज्ञायत किञ्चन । नापि स्वे न परे योधाः प्राज्ञायन्त परस्परं ।
घोरे शरान्धकारे तु कर्णास्त्रे च विजृम्भिते । राधेयचापनिर्म्मुक्तैः शरैः काञ्चनभूषणैः ।
संछादिता महाराज पाण्डवानां महारथाः । ते पाण्डवेयाः समरे राधेयेन पुनः पुनः । ३९८५
अभज्यन्त महाराज यतमाना महारथाः । मृगसङ्घान् यथा क्रुद्धः सिंहो द्रावयते वने ।
पाञ्चालानां रथश्रेष्ठान् द्रावयन् शात्रवांस्तथा । कर्णस्तु समरे योधांस्त्रासयन् सुमहायशाः ।
कालयामास तत् सैन्यं यथा पशुगणान् वृकः । दृष्ट्वा तु पाण्डवीं सेनां धार्त्तराष्ट्राः पराङ्मुखीं ।
तत्र जग्मुर्महेष्वासा रुवन्तो भैरवान् रवान् । दुर्य्योधनो हि राजेन्द्र मुदा परमया युतः ।
वादयामास संहृष्टो नानावाद्यानि सर्व्वशः । पाञ्चालापि महेष्वासा भग्नास्ताश्च नरोत्तमाः । ३९९०
न्यवर्त्तन्त यथा शूरं मृत्युं कृत्वा निवर्त्तनं । तान्निवृत्तान् रणे शूरान् राधेयः शत्रुतापनः ।
अनेकशो महाराज बभञ्ज पुरुषर्षभः । तत्र भारत कर्णेन पाञ्चाला विंशती रथाः ।
निहताः सायकैः क्रोधाच्चेदयश्च परःशताः । कृत्वा शून्यान् रथोपस्थान् वाजिपृष्ठांश्च भारत ।
निर्म्मनुष्यान् गजस्कन्धान् पदातींश्चैव विद्रुतान् । आदित्य इव मध्याह्ने दुर्न्निरीक्ष्यः परन्तपः ।
कालान्तकवपुः शूरः सूतपुत्रोऽभ्यराजत । एवमेतान्महाराज नरवाजिरथद्विपान् । ३९९५
हत्वा तस्थौ महेष्वासः कर्णोऽरिगणसूदनः । यथा भूतगणान् हत्वा कालस्तिष्ठेन्महाबलः ।
तथा स सोमकान् हत्वा तस्थावेको महारथः । तत्राद्भुतमपश्याम पाञ्चालानां पराक्रमं ।
वध्यमानापि यत् कर्णं नाजहू रणमूर्द्धनि । राजा दुःशासनश्चैव कृपः शारद्वतस्तथा ।
अश्वत्थामा कृतवर्म्मा शकुनिश्च महाबलः । न्यहनन् पाण्डवीं सेनां शतशोऽथ सहस्रशः ।

कर्णपुत्रौ तु राजेन्द्र भ्रातरौ सत्यविक्रमौ । निजघ्नाते बलं क्रुद्धौ पाण्डवानामितस्ततः । ४०००
तत्र युद्धं महच्चासीत् क्रूरं विशसनं महत् । तथैव पाण्डवाः शूरा धृष्टद्युम्नशिखण्डिनौ ।
द्रौपदेयाश्च संक्रुद्धा अभ्यघ्नंस्तावकं बलं । एवमेष वधो वृत्तः पाण्डवानां ततस्ततः ।
तावकानामपि रणे भीमं प्राप्य महाबलं ।

इति श्रीमहाभारते कर्णपर्व्वणि संकुलयुद्धे अष्टसप्ततोऽध्यायः ॥ ७८ ॥

॥ सञ्जय उवाच ॥ अर्ज्जुनस्तु महाराज हत्वा सैन्यं चतुर्व्विधं । सूतपुत्रञ्च संक्रुद्धं दृष्ट्वा चैव महारणे ।
शोणितोदां महीं कृत्वा मांसमज्जास्थिपङ्किलां । मनुष्यशीर्षपाषाणां हस्त्यश्वकृतरोधसं । ४००५
शूरास्थिचयसङ्कीर्णां काककङ्कानुनादितां । छत्रहंसप्लवोपेतां वीरवृक्षापहारिणीं ।
हारपद्माकरवतीमुष्णीषवरफेनिलां । धनुःशरध्वजोपेतां नरक्षुद्रकपालिनीं ।
चर्म्मवर्म्मभ्रमोपेतां रथोडुपसमाकुलां । जयैषिणाञ्च सुतरां भीरूणाञ्च सुदुस्तरां ।
नदीं प्रावर्त्तयित्वा च बीभत्सुः परवीरहा । वासुदेवमिदं वाक्यमब्रवीत् पुरुषर्षभः ।
॥ अर्ज्जुन उवाच ॥ एष केतू रणे कृष्ण सूतपुत्रस्य दृश्यते । भीमसेनादयश्चैते योधयन्ति महारथं । ४०१०
एते द्रवन्ति पाञ्चालाः कर्णत्रस्ता जनार्द्दन । एष दुर्य्योधनो राजा श्वेतच्छत्रेण राजते ।
कर्णेन भग्नान् पाञ्चालान् द्रावयन् बहु शोभते । कृपश्च कृतवर्म्मा च द्रौणिश्चैव महारथः ।
एते रक्षन्ति राजानं सूतपुत्रेण रक्षिताः । अवध्यमानास्तेऽस्माभिर्घातयिष्यन्ति सोमकान् ।
एष शल्यो रथोपस्थे रश्मिसञ्चारकोविदः । सूतपुत्ररथं कृष्ण वाहयन् बहु शोभते ।
तत्र मे बुद्धिरुत्पन्ना वाहयात्र महारथं । नाहत्वा समरे कर्णं निवर्त्तिष्ये कथञ्चन । ४०१५
राधेयो ह्यन्यथा पार्थान् सृञ्जयांश्च महारथान् । निःशेषान् समरे कुर्य्यात् पश्यतां नौ जनार्द्दन ।
ततः प्रायाद्रथेनाशु केशवस्तव वाहिनीं । कर्णं प्रति महेष्वासं द्वैरथे सव्यसाचिना ।
प्रयातश्च महाबाहुः पाण्डवानुज्ञया हरिः । आश्वासयन् रथेनैव पाण्डुसैन्यानि सर्व्वशः ।
रथघोषः स संग्रामे पाण्डवेयस्य सम्बभौ । वासवाशनितुल्यस्य महौघस्येव मारिष ।
महता रथघोषेण पाण्डवः सत्यविक्रमः । अभ्ययादप्रमेयात्मा निर्ज्जयंस्तव वाहिनीं । ४०२०
तमायान्तं समीक्ष्यैव श्वेताश्वं कृष्णसारथिं । मद्रराजोऽब्रवीत् कर्णं केतुं दृष्ट्वा महात्मनः ।
अयं स रथ आयाति श्वेताश्वः कृष्णसारथिः । निघ्नन्नमित्रान् समरे यं कर्ण परिपृच्छसि ।
एष तिष्ठति कौन्तेयः संस्पृशन् गाण्डिवं धनुः । तं हनिष्यसि चेदद्य तन्नः श्रेयो भविष्यति ।
त्वामभिप्रेप्सुरायाति कर्ण निघ्नन् वरान्वरान् । असज्जमानो राधेय तं याहि प्रति भारत ।
एषा विदार्य्यते सेना धार्त्तराष्ट्री समन्ततः । अर्ज्जुनस्य भयात्तूर्णं निघ्नतः शात्रवान् बहून् । ४०२५
वर्ज्जयन् सर्व्वसैन्यानि त्वरते हि धनञ्जयः । त्वदर्थमिति मन्येऽहं यथाऽस्योदीर्य्यते वपुः ।
न ह्यवस्थास्यते पार्थो युयुत्सुः केनचित् सह । त्वामृते क्रोधदीप्तो हि पीड्यमाने वृकोदरे ।
विरथं धर्म्मराजन्तु दृष्ट्वा सुदृढविक्षतं । शिखण्डिनं सात्यकिञ्च धृष्टद्युम्नञ्च पार्षतं ।

द्रौपदेयान् युधामन्युमुत्तमौजसमेव च। नकुलं सहदेवञ्च भ्रातरौ द्वौ समीक्ष्य च।

सहैकरथः पार्थस्त्वामभ्येति परन्तपः। क्रोधरक्तेक्षणः क्रुद्धो जिघांसुः सर्व्वपार्थिवान्। ४०३०

त्वरितोऽभिपतत्यस्मांस्त्यक्त्वा सैन्यान्यसंशयं। त्वं कर्ण प्रतियाह्येनं नास्त्यन्यो हि धनुर्द्धरः।

न तं पश्यामि लोकेऽस्मिंस्त्वत्तो ह्यन्यं धनुर्द्धरं। अर्ज्जुनं समरे क्रुद्धं यो वेलामिव धारयेत्।

न चास्य रक्षां पश्यामि पार्श्वतो न च पृष्ठतः। एक एवाभियाति त्वां पश्य साफल्यमात्मनः।

त्वं हि कृष्णौ रणे शक्तः संसाधयितुमाहवे। तवैव भारो राधेय प्रत्युयाहि धनञ्जयं।

समानो ह्यसि भीष्मेण द्रोणद्रौणिकृपेण च। सव्यसाचिनमायान्तं निवारय महारणे। ४०३५

लेलिहानं यथा सर्पं गर्जन्तमृषभं यथा। वनस्थितं यथा व्याघ्रं जहि कर्ण धनञ्जयं।

एते द्रवन्ति समरे धार्त्तराष्ट्रा महारथाः। अर्ज्जुनस्य भयात्तूर्णं निरपेक्षा जनाधिपाः।

द्रवतामथ तेषान्तु नान्योऽस्ति युधि मानवः। भयहा यो भवेद्वीरस्त्वामृते सूतनन्दन।

एते त्वां कुरवः सर्व्वे द्वीपमासाद्य संयुगे। धिष्ठिता पुरुषव्याघ्र त्वत्तः शरणकाङ्क्षिणः।

वैदेहाम्बष्ठकाम्बोजास्तथा नग्नजितास्त्वया। गान्धाराश्च यया धृत्या जिताः संख्ये सुदुर्ज्जयाः। ४०४०

तां धृतिं कुरु राधेय ततः प्रत्येहि पाण्डवं। वासुदेवञ्च वार्ष्णेयं प्रीयमाणं किरीटिना।

प्रत्युयाहि महाबाहो पौरुषे महति स्थितः।

॥ कर्ण उवाच ॥ प्रकृतिस्थोऽसि मे शल्य इदानीं सम्मतस्तथा। प्रतिभासि महाबाहो माभैषीस्त्वं धनञ्जयात्।

पश्य बाह्वोर्ब्बलं मेऽद्य शिक्षितस्य च पश्य मे। एकोऽद्य निहनिष्यामि पाण्डवानां महाचमूं।

कृष्णौ च पुरुषव्याघ्रौ ततः सत्यं ब्रवीमि ते। नाहत्वा युधि तौ वीरौ व्यपयास्ये कथञ्चन। ४०४५

शयिष्ये वा निहतस्ताभ्यामनित्यो हि रणे जयः। कृतार्थोऽद्य भविष्यामि हत्वा वाऽप्यथ वा हतः।

॥ शल्य उवाच ॥ अजय्यमेनं प्रवदन्ति युद्धे महारथाः कर्ण रथप्रवीरं। एकाकिनं किमु कृष्णाभिगुप्तं विजेतुमेनं क इहोत्सहेत।

॥ कर्ण उवाच ॥ नैतादृशो जातु बभूव लोके रथोत्तमो यावदुपश्रुतं नः। तमीदृशं प्रतियोत्स्यामि पार्थं महाहवे पश्य च पौरुषं मे।

रणे चरत्येष रथप्रवीरः सितैर्हयैः कौरवराजपुत्रः। स वाऽद्य मां नेष्यति कृच्छ्रमेतत्कर्णस्यान्तादेतदन्तास्तु सर्व्वे।

अस्वेदिनौ राजपुत्रस्य हस्ताववेपमानौ जातकिणौ बृहन्तौ। दृढायुधः कृतिमान् क्षिप्रहस्तो न पाण्डवेयेन समोऽस्ति योधः। ४०५०

गृह्णात्यनेकानपि कङ्कपत्रानेकं यथा तान् प्रतियोज्य चाशु। ते क्रोशमात्रे निपतन्त्यमोघाः कस्तेन योधोऽस्ति समः पृथिव्यां।

अतोषयत् खाण्डवे यो हुताशं कृष्णद्वितीयोऽतिरथस्तरस्वी। लेभे चक्रं यत्र कृष्णो महात्मा धनुर्गाण्डीवं पाण्डवः सव्यसाची।

श्वेताश्वयुक्तञ्च सुघोषमुग्रं रथं महाबाहुरदीनसत्त्वः। महेषुधी चाक्षयदिव्यरूपे शस्त्राणि दिव्यानि च हव्यवाहात्।

तथेन्द्रलोके निजघान दैत्यानसंख्येयान् कालकेयांश्च सर्व्वान्। लेभे शङ्खं देवदत्तं स्म तत्र को नाम तेनाभ्यधिकः पृथिव्यां।

महादेवं तोषयामास योऽर्च्चैः साक्षाच्चयुद्धेन महानुभावः। लेभे ततः पाशुपतं सुघोरं त्रैलोक्यसंहारकरं महास्त्रं। ४०५५

पृथक् पृथक् लोकपालाः समेता ददुर्म्महास्त्राण्यप्रमेयाणि संख्ये। येनांस्तान् जघानाह्नि रणे नृसिंहः सकालकेयानसुरान् समे-

तान्।

तथा विराटस्य पुरे समेतान् सर्व्वानस्मानेकरथेन जित्वा। जहार तद्गोधनमाजिमध्ये वस्त्राणि चादत्त महारथेभ्यः।

तमीदृशं वीर्य्यगुणोपपन्नं कृष्णद्वितीयं परमं नृपाणां। तमाह्वयन् साहसमुत्तमं वै जाने स्वयं सर्व्वलोकस्य शल्य।

अनन्तवीर्य्येण च केशवेन नारायणेनाप्रतिमेन गुप्तः। वर्षायुतैर्यस्य गुणा न शक्या वक्तुं समेतैरपि सर्व्वलोकैः।

महात्मनः शङ्खचक्रासिपाणेर्व्विष्णोर्जिष्णोर्व्वसुदेवात्मजस्य। भयञ्च मे जायतेऽसाध्वसञ्च दृष्ट्वा कृष्णावेकरथे समेतौ। ४०६०

अतीव पार्थो युधि कार्मुकेभ्यो नारायणश्चाप्रतिमश्च युद्धे। एवंविधौ पाण्डववासुदेवौ चलेत्स्वदेशाद्धिमवान्न कृष्णौ।

उभौ हि शूरौ बलिनौ दृढायुधौ महारथौ संहननोपपन्नौ। एतादृशौ फाल्गुनवासुदेवौ कोऽन्यः प्रतीयान्मदृते तु शल्य।

मनोरथो यस्तु ममाद्य तस्य मद्रेश युद्धं प्रति पाण्डवस्य। नैवं चिरादाशु भविष्यतीदमत्यद्भुतं चित्रमतुल्यरूपं।

एतौ च हत्वा युधि पातयिष्ये मां वाऽपि कृष्णौ निहनिष्यतोऽद्य। इति ब्रुवन् शल्यममित्रहन्ता कर्णो रणे मेघ इवोन्ननाद।

अभ्येत्य पुत्रेण तवाभिनन्दितः समेत्य चोवाच कुरुप्रवीरं। कृपञ्च भोजञ्च महानुभावं तथैव गान्धारपतिं सहानुजं। ४०६५

गुरोः सुतञ्चावरजं तथात्मनः पदातिनोऽथ द्विपसादिनश्च तान्। निरुन्धताभिद्रवताच्युतार्ज्जुनौ श्रमेण संयोजयताशु

सर्व्वशः।

यथा भवद्भिर्भृशविक्षतावुभौ सुखेन हन्यामहमद्य भूमिपाः। तथेति चोक्त्वा त्वरिताः स्म तेऽर्ज्जुनं जिघांसवो वीरतराः समा-

ययुः।

शरैश्च जघ्नुर्युधि तं महारथा धनञ्जयं कर्णनिदेशकारिणः। नदीनदं भूरिजलं महार्णवो यथा तथा तान् समरेऽर्ज्जुनो-

ऽग्रसत्।

न सन्दधानो न तथा शरोत्तमान् प्रमुञ्चमानो रिपुभिः प्रदृश्यते। धनञ्जयास्तैस्तु शरैर्व्विदारिता हता निपेतुर्न्नरवाजि-

कुञ्जराः।

शरार्च्चिषं गाण्डिवचारुमण्डलं युगान्तसूर्य्यप्रतिमानतेजसं। न कौरवाः शेकुरुदीक्षितुं जयं यथा रविं व्याधितचक्षुषो

४०७०

जनाः।

शरोत्तमान् स प्रहितान् महारथैश्चिच्छेद पार्थः प्रहसञ्छरौघैः। भूयश्च तानहनद्बाणसङ्घान् गाण्डीवधन्वायतपूर्णमण्डलं।

यथोग्ररश्मिः शुचिशुक्रमध्यगो सुखं विवस्वान् हरते जलौघान्। तथाऽर्ज्जुनो बाणगणान्निरस्य ददाह सेनां तव पार्थिवेन्द्र।

तमभ्यधावद्विसृजन् कृपः शरांस्तथैव भोजस्तव चात्मजः स्वयं। महारथो द्रोणसुतश्च सायकैरवाकिरंस्तोयधरा यथाऽचलं।

जिघांसुभिस्तान् कुशलः शरोत्तमान् महाहवे सम्प्रहितान् प्रयत्नतः। शरैः प्रचिच्छेद स पाण्डवस्त्वरन् पराभिनद्वक्षसि चेषुभि-

स्त्रिभिः।

स गाण्डिवव्यायतपूर्णमण्डलस्तपन्निपून्नर्ज्जुनभास्करो बभौ। शरोग्ररश्मिः शुचिशुक्रमध्यगो यथैव सूर्य्यः परिवेषवांस्तथा। ४०७५

अथाग्र्यबाणैर्द्दशभिर्धनञ्जयं पराभिनद्द्रोणसुतोऽच्युतं त्रिभिः। चतुर्भिरश्वांश्चतुरः कपिन्ततः शरैश्च नाराचवरैरवाकिरत्।

तथाऽपि तं प्रस्फुरदात्तकार्म्मुकं त्रिभिः शरैर्यन्तृशिरः क्षुरेण। हयांश्चतुर्भिश्च पुनस्त्रिभिर्ध्वजं धनञ्जयो द्रौणिरथादपातयत्।

स रावपूर्णो मणिवज्रहाटकैरलङ्कृतं तक्षकभोगवर्चसं । महाधनं कार्म्मुकमन्यदाददे यथा महाहिप्रवरं गिरेस्तटात् ।
स्वमायुधं चोपनिकीर्य्य भूतले धनुश्च कृत्वा सगुणं गुणाधिकः । समाईयत्तावजितौ नरोत्तमौ शरोत्तमैर्द्रौणिरविध्यदन्तिकात् ।
कृपश्च भोजश्च तवात्मजश्च ते शरैरनेकैर्युधि पाण्डवर्षभं । महारथाः संयुगमूर्द्धनि स्थितास्तमोनुदं वारिधरा इवापतन् । ४०८०
कृपस्य पार्थः सशरं शरासनं हयान् ध्वजान् सारथिमेव पत्रिभिः । समार्प्पयद्बाहुसहस्रविक्रमस्तथा यथा वज्रधरः पुरा बलेः ।
स पार्थवाणैर्व्विनिपातितायुधो ध्वजावमर्द्दे च कृते महाहवे । कृतः कृपो बाणसहस्रयन्त्रितो यथापगेयः प्रथमं किरीटिना ।
शरैः प्रचिच्छेद तवात्मजस्य ध्वजं धनुश्च प्रचकर्त्त नर्द्दतः । जघान चाश्वान् कृतवर्म्मणः शुभान् ध्वजञ्च चिच्छेद ततः प्रतापवान् ।
सवाजिसूतेष्वसनान् सकेतनान् जघान नागाश्वरथांस्त्वरंश्च सः । ततः प्रकीर्णं सुमहद्बलं तव प्रदारितं सेतुमिवाम्भसा यथा ।
ततोऽर्ज्जुनस्याशु रथेन केशवश्चकार शत्रूनपसव्यमातुरान् । ततः प्रयान्तं त्वरितं धनञ्जयं शतक्रतुं वृत्रनिजघ्नुषं यथा । ४०८५
समन्वधावन् पुनरुच्छ्रितैर्ध्वजै रथैः सुयुक्तैरपरे युयुत्सवः । अथाभिसृत्य प्रतिवार्य्य तानरीन् धनञ्जयस्याभिमुखं महारथाः ।
शिखण्डिशैनेययमाः शितैः शरैर्व्विदारयन्तो व्यनदन् सुभैरवं । ततोऽभिजघ्नुः कुपिताः परस्परं शरैस्तदाञ्जोगतिभिः सुतेजनैः ।
कुरुप्रवीराः सह सृञ्जयैर्यथाऽसुराः पुरा देवगणैर्यथाहवे । जयेप्सवः स्वर्गमनाय चोत्सुकाः पतन्ति नागाश्वरथाः परन्तप ।
जगर्ज्जुरुच्चैर्बलवच्च विव्यधुः शरैः सुमुक्तैरितरेतरं पृथक् । शरान्धकारे तु महात्मभिः कृते महामृधे योधवरैः परस्परं ।
चतुर्द्दिशो वै विदिशश्च पार्थिव प्रभा च सूर्य्यस्य तमोवृतोऽभवत् । ४०९०
इति श्रीमहाभारते कर्णपर्व्वणि संकुलयुद्धे ऊनाशीतितमोऽध्यायः ॥ ७९ ॥
॥ सञ्जय उवाच ॥ राजन् कुरूणां प्रवरैर्ब्बलैर्भीममभिद्रुतं । मज्जन्तमिव कौन्तेयमुज्जिहीर्षुर्धनञ्जयः ।
विमृद्य सूतपुत्रस्य सेनां भारत सायकैः । प्राहिणोन्मृत्युलोकाय परवीरान् धनञ्जयः ।
ततोऽस्याम्बरमास्थित्य शरजालानि भागशः । अदृश्यन्त तथाऽन्ये च निघ्नन्तस्तव वाहिनीं ।
सपक्षिसङ्घाचरितमाकाशं पूरयन् शरैः । धनञ्जयो महाबाहुः कुरूणामन्तकोऽभवत् ।
ततो भल्लैः क्षुरप्रैश्च नाराचैर्व्विमलैरपि । गात्राणि प्राच्छिनत् पार्थः शिरांसि च चकर्त्त ह । ४०९५
छिन्नगात्रैर्व्विकवचैर्व्विशिरस्कैः समन्ततः । पतितैश्च पतद्भिश्च योधैरासीत् समावृता ।
धनञ्जयशराभ्यस्तैः स्यन्दनाश्वरथद्विपैः । सञ्छिन्नभिन्नविध्वस्तैर्व्यङ्गाङ्गावयवैस्तथा ।
सुदुर्गमा सुविषमा घोराऽत्यर्थं सुदुर्दृशा । रणभूमिरभूद्राजन् महावैतरणी यथा ।
ईषाचक्राक्षभग्नैश्च व्यश्वैः साश्वैश्च युध्यतां । ससूतैर्हतसूतैश्च रथैस्तीर्णाऽभवन्मही ।
सुवर्णवर्णसन्नाहैर्योधैः कनकभूषणैः । आस्थिता कृतवर्म्माणो भद्रा नित्यमदा द्विपाः । ४१००
क्रुद्धाः क्रूरैर्महामात्रैः पार्ष्ण्यङ्गुष्ठप्रचोदिताः । चतुःशताः शरवरैर्हताः पेतुः किरीटिना ।

पर्य्यस्तानीव शृङ्गाणि सम्भग्नानि महागिरेः । धनञ्जयशराभ्यस्तैः स्तीर्णा भूर्व्वरवारणैः ।
समन्ताज्जलदप्रख्यान् वारणान् मदवर्षिणः । अभिपेदेऽर्ज्जुनरथो घनान् भिन्दन्निवांशुमान् ।
हतैर्गजमनुष्याश्वैर्भिन्नैश्च बहुधा रथैः । विशस्त्रयन्त्रकवचैर्युद्धशौण्डैर्गतासुभिः ।
अपविद्धायुधैर्मार्गः स्तीर्णोऽभूत् फाल्गुनेन वै । व्यस्फारयच्च गाण्डीवं सुमहद्भैरवं रवं । ४१०५
घोरवज्रविनिष्पेषस्तनयित्नोरिवाम्बरे । ततः प्रादीर्य्यत चमूर्धनञ्जयशराहता ।
महावातसमाविद्धा महानौरिव सागरे । नानारूपाः प्राणहराः शरा गाण्डीवचोदिताः ।
अलातोल्काशनिप्रख्यास्तव सैन्यं विनिर्द्दहन् । महागिरौ वेणुवनं निशि प्रज्वलितं यथा ।
तथा तव महासैन्यं प्रास्फुरच्छरपीडितं । सम्पिष्टदग्धविध्वस्तं तव सैन्यं किरीटिना ।
हतं प्रविहतं बाणैः सर्व्वतः प्रद्रुतं दिशः । महावने मृगगणा दावाग्नित्रासिता यथा । ४११०
कुरवः पर्य्यवर्त्तन्त निर्द्दग्धाः सव्यसाचिना । उत्सृज्य च महाबाहुं भीमसेनं तथा रणे ।
बलं कुरूणामुद्विग्नं सर्व्वमासीत् पराङ्मुखं । ततः कुरुषु भग्नेषु बीभत्सुरपराजितः ।
भीमसेनं समासाद्य मुहूर्त्तं सोऽभ्यवर्त्तत । समागम्य च भीमेन मन्त्रयित्वा च फाल्गुनः ।
विशल्यमरुजञ्चास्मै कथयित्वा युधिष्ठिरं । भीमसेनाभ्यनुज्ञातस्ततः प्रायाद्धनञ्जयः ।
नादयन् रथघोषेण पृथिवीं द्याञ्च भारत । ततः परिवृतो वीरैर्दशभिर्योधपुङ्गवैः । ४११५
दुःशासनादवरजैस्तव पुत्रैर्धनञ्जयः । ते तमभ्यर्द्दयन् बाणैरुल्काभिरिव कुञ्जरं ।
आततेष्वासनाः शूरा नृत्यन्त इव भारत । अपसव्यांस्तु तांश्चक्रे रथेन मधुसूदनः ।
नियुक्तान् हि स तान् मेने समायाशु किरीटिना । ततस्ते प्राद्रवन् शूराः पराङ्मुखरथेऽर्ज्जुने ।
तेषामापततां केतूनश्वांश्चापानि सायकान् । नाराचैरर्द्धचन्द्रैश्च क्षिप्रं पार्थो न्यपातयत् ।
अथान्यैर्दशभिर्भल्लैः शिरांस्येषामपातयत् । रोषसंरक्तनेत्राणि सन्दष्टौष्ठानि भूतले । ४१२०
तानि वक्त्राणि विबभुः कमलानीव भूरिशः । तांस्तु भल्लैर्महावेगैर्दशभिर्दश कौरवान् ।
रुक्माङ्गदान् रुक्मपुङ्खैर्हत्वा प्रायादमित्रहा ।
इति श्रीमहाभारते कर्णपर्व्वणि संकुलयुद्धे अशीतितमोऽध्यायः ॥ ८० ॥
॥ सञ्जय उवाच ॥ तं प्रयातं महावेगैरश्वैः कपिवरध्वजं । युद्धायाभ्यद्रवन् वीराः कुरूणां नवतीरथाः ।
कृत्वा संशप्तका घोरं शपथं पारलौकिकं । परिवव्रुर्नरव्याघ्रा नरव्याघ्रं रणेऽर्ज्जुनं ।
कृष्णः श्वेतान्महावेगानश्वान् काञ्चनभूषणान् । मुक्ताजालप्रतिच्छन्नान् प्रैषीत् कर्णरथं प्रति । ४१२५
ततः कर्णरथं यान्तमरिघ्नं धनञ्जयं । बाणवर्षैरभिघ्नन्तः संशप्तकरथा ययुः ।
त्वरमाणांस्तु तान् सर्व्वान् ससूतेष्वासनध्वजान् । जघान नवतिं वीरानर्ज्जुनो निशितैः शरैः ।
तेऽपतन्त हता बाणैर्नानारूपैः किरीटिना । सविमाना यथा सिद्धाः स्वर्गात् पुण्यक्षये तथा ।
ततः सरथनागाश्वाः कुरवः कुरुसत्तमं । निर्भया भरतश्रेष्ठमभ्यवर्त्तन्त फाल्गुनं ।
तदायस्तमनुष्याश्वमुदीर्णवरवारणं । पुत्राणां ते महासैन्यं समरौत्सीद्धनञ्जयं । ४१३०

शक्त्यृष्टितोमरप्रासैर्गदानिस्त्रिंशसायकैः । प्राच्छादयन्महेष्वासाः कुरवः कुरुनन्दनं ।
तामन्तरीक्षे विततां शस्त्रवृष्टिं समन्ततः । व्यधमत् पाण्डवो बाणैस्तमः सूर्य्य इवांशुभिः
ततो म्लेच्छाः स्थिता मत्तैस्त्रयोदशशतैर्गजैः । पार्श्वतो व्यहनत्पार्थं तव पुत्रस्य शासनात् ।
कर्णिनालीकनाराचैस्तोमरप्रासशक्तिभिः । मुषलैर्भिन्दिपालैश्च रथस्थं पार्थमार्द्दयन् ।
तां शस्त्रवृष्टिमतुलां द्विपहस्तैः प्रवेरितां । चिच्छेद निशितैर्भल्लैरर्द्धचन्द्रैश्च फाल्गुनः । ४१३५
अथ तान् द्विरदान् सर्व्वान् नानालिङ्गैः शरोत्तमैः । सपताकध्वजारोहान् गिरीन् वज्रैरिवाहनत् ।
ते हेमपुङ्खैरिषुभिरर्द्दिता हेममालिनः । हताः पेतुर्महानागाः साग्निज्वाला इवाद्रयः ।
ततो गाण्डीवनिर्घोषो महानासीद्विशाम्पते । स्तनतां कूजताञ्चैव मनुष्यगजवाजिनां ।
कुञ्जराश्च हता राजन् दुद्रुवुस्ते समन्ततः । अश्वाश्च पर्य्यधावन्त हतारोहा दिशो दश ।
रथा हीना महाराज रथिभिर्व्वाजिभिस्तथा । गन्धर्व्वनगराकारा दृश्यन्ते स्म सहस्रशः । ४१४०
अश्वारोहा महाराज धावमाना इतस्ततः । तत्र तत्रैव दृश्यन्ते निहताः पार्थसायकैः ।
तस्मिन् क्षणे पाण्डवस्य बाह्वोर्ब्बलमदृश्यत । यत् सादिनो वारणांश्च रथांश्चैकोऽजयद्युधि ।
ततस्त्र्यङ्गेण महता बलेन भरतर्षभ । दृष्ट्वा परिवृतं राजन् भीमसेनः किरीटिनं ।
हतावशेषानुत्सृज्य त्वदीयान् कतिचिद्रथान् । जवेनाभ्यद्रवद्राजन् धनञ्जयरथं प्रति ।
ततस्तत्प्राद्रवत् सैन्यं हतभूयिष्ठमातुरं । दृष्ट्वाऽर्ज्जुनं तदा भीमो जगाम भ्रातरं प्रति । ४१४५
हतावशिष्टांस्तुरगानर्ज्जुनेन महाबलान् । भीमो व्यधमदश्रान्तो गदापाणिर्म्महाहवे ।
कालरात्रिमिवात्युग्रां नरनागाश्वभोजनां । प्राकाराट्टपुरद्वारदारणीमतिदारुणां ।
ततो गदां नृनागाश्वेष्वाशु भीमो व्यवासृजत् । स जघान बहूनश्वानश्वारोहांश्च मारिष ।
कार्ष्णायसतनुत्राणान्नरानश्वांश्च पाण्डव । पोथयामास गदया सशब्दं तेऽपतन् हताः ।
दन्तैर्दशन्तो वसुधां शेरते क्षतजोक्षिताः । भग्नमूर्द्धास्थिचरणाः क्रव्यादगणभोजनाः । ४१५०
असृङ्मांसवसाभिश्च तृप्तिमभ्यागता गदा । अस्थीन्यप्यश्नती तस्थौ कालरात्रीव दुर्दृशा ।
सहस्राणि दशाश्वानां हत्वा पत्तींश्च भूयशः । भीमोऽभ्यधावत् संक्रुद्धो गदापाणिरितस्ततः ।
गदापाणिं ततो भीमं दृष्ट्वा भारत तावकाः । मेनिरे समनुप्राप्तं कालदण्डोद्यतं यमं ।
स मत्त इव मातङ्गः संक्रुद्धः पाण्डुनन्दनः । प्रविवेश गजानीकं मकरः सागरं यथा ।
विगाह्य च गजानीकं प्रगृह्य महतीं गदां । क्षणेन भीमः संक्रुद्धस्तन्निन्ये यमसादनं । ४१५५
गजान् सकङ्कटान् मत्तान् सारोहान् सपताकिनः । पततः समपश्याम सपक्षान् पर्व्वतानिव ।
हत्वा तु तद्गजानीकं भीमसेनो महाबलः । पुनः स रथमास्थाय पृष्ठतोऽर्ज्जुनमभ्ययात् ।
हतं पराङ्मुखप्रायं निरुत्साहं परं बलं । व्यलम्बत महाराज प्रायशः शस्त्रवेष्टितं ।
विलम्बमानं तत् सैन्यमप्रगल्भमवस्थितं । दृष्ट्वा प्राच्छादयद्बाणैरर्ज्जुनः प्राणतापनैः ।
नराश्वरथमातङ्गा युधि गाण्डीवधन्वना । शरव्रातैश्चिता रेजुः कदम्बा इव केशरैः । ४१६०

ततः कुरूणामभवदार्त्तनादो महान्नृप । नराश्वनागासुहरैर्वध्यतामर्ज्जुनेषुभिः ।
हाहाकृतं भृशं त्रस्तं लीयमानं परस्परं । अलातचक्रवत् सैन्यं तदाभ्रमत तावकं ।
ततस्तुमुलमभवत् कुरूणां सुमहत्स्वनैः । न ह्यासीदनिर्भिन्नो रथः सादी हयो गजः ।
आदीप्तमिव तत्सैन्यं शरैश्छिन्नतनुच्छदं । आसीत् स्वशोणितक्लिन्नं फुल्लाशोकवनं यथा ।
तं दृष्ट्वा कुरवस्तत्र विक्रान्तं सव्यसाचिनं । निराशाः समपद्यन्त सर्व्वे कर्णस्य जीविते । ४१६५
अविषह्यन्तु पार्थस्य शरसम्पातमाहवे । मत्वा न्यवर्त्तन् कुरवो जिता गाण्डीवधन्वना ।
ते हित्वा समरे कर्णं वध्यमानाश्च सायकैः । प्रदुद्रुवुर्दिशो भीताश्चुक्रुशुश्चापि सूतजं ।
अभ्यद्रवत तान् पार्थः किरन् शरशतान् बहून् । हर्षयन् पाण्डवान् योधान् भीमसेनपुरोगमान् ।
पुत्त्रास्तु ते महाराज जग्मुः कर्णरथं प्रति । अगाधे मज्जतां तेषां द्वीपः कर्णोऽभवत्तदा ।
कुरवो हि महाराज निर्व्विषाः पन्नगा इव । कर्णमेवोपलीयन्त भयाद्गाण्डीवधन्वनः । ४१७०
यथा सर्व्वाणि भूतानि मृत्योर्भीतानि मारिष । धर्म्ममेवोपलीयन्ते कर्म्मवन्ति हि यानि च ।
तथा कर्णं महेष्वासं पुत्त्रास्तव नराधिप । उपालीयन्त संत्रासात् पाण्डवस्य महात्मनः ।
ताञ्छोणितपरिक्लिन्नान् विषमस्थाञ्छरातुरान् । माभैष्टेत्यब्रवीत् कर्णो ह्यभितो मामितेति च ।
सम्भग्नं हि बलं दृष्ट्वा बलात् पार्थेन तावकं । धनुर्व्विस्फारयन् कर्णस्तस्थौ शत्रुजिघांसया ।
तान् प्रद्रुतान् कुरून् दृष्ट्वा कर्णः शस्त्रभृताम्वरः । सञ्चिन्तयित्वा पार्थस्य वधे दध्रे मनः श्वसन् । ४१७५
विस्फार्य्य सुमहच्चापं ततश्चाधिरथिर्वृषः । पाञ्चालान् पुनराधावत् पश्यतः सव्यसाचिनः ।
ततः क्षणेन क्षितिपाः क्षतजप्रतिमेक्षणाः । कर्णं ववृषुर्वाणौघैर्यथा मेघा महीधरं ।
ततः शरसहस्राणि कर्णमुक्तानि मारिष । व्ययोजयन्त पाञ्चालान् प्राणैः प्राणभृताम्वर ।
अथ शब्दो महानासीत् पाञ्चालानां महामते । वध्यतां सूतपुत्त्रेण मित्रार्थे मित्रगृद्धिना ।
इति श्रीमहाभारते कर्णपर्व्वणि संकुलयुद्धे एकाशीतोऽध्यायः ॥ ८१ ॥

॥ सञ्जय उवाच ॥ ततः कर्णः कुरुषु प्रद्रुतेषु वरूथिना श्वेतहयेन राजन् । पाञ्चालपुत्त्रान् व्यधमत् सूतपुत्त्रो महेषुभि
र्व्वात इवाभ्रसङ्घान् । ४१८०
सूतं रथादञ्जलिकेन निपात्य जघान चाश्वान् जनमेजयस्य । शतानीकं सुतसोमञ्च भल्लैरवाकिरद्धनुषी चाप्यकृन्तत् ।
धृष्टद्युम्नं निर्व्विभेदाथ षड्भिर्जघानाश्वं दक्षिणं तस्य संख्ये । हत्वा चाश्वान् सात्यकेः सूतपुत्त्रः कैकेयपुत्त्रं न्यवधीद्विशोकं ।
तमभ्यधावन्निहते कुमारे कैकेयसेनापतिरुग्रकर्म्मा । शरैर्व्विधुन्वन् भृशमुग्रवेगैः कर्णात्मजञ्चाप्यहनत् प्रसेनं ।
तस्यार्द्धचन्द्रैस्त्रिभिरुच्चकर्त्त प्रहस्य बाहू च शिरश्च कर्णः । स स्यन्दनाद्गामगमत् गतासुः परश्वधैः शाल इवावरुग्णः ।
हताश्वमञ्जोगतिभिः प्रसेनः शिनिप्रवीरं निशितैः पृषत्कैः । प्रच्छाद्य नृत्यन्निव कर्णपुत्त्रः शैनेयवाणाभिहतः पपात । ४१८५
पुत्त्रे हते क्रोधपरीतचेताः कर्णः शिनीनामृषभं जिघांसुः । हतोऽसि शैनेय इति ब्रुवन् स व्यवासृजद्बाणममित्रसाहं ।
तमस्य चिच्छेद शरं शिखण्डी त्रिभिस्त्रिभिश्च प्रतुतोद कर्णं । शिखण्डिनः कार्म्मुकञ्च ध्वजञ्च छित्त्वा क्षुराभ्यां न्यपत
त्सुतेजाः ।

शिखण्डिनं षड्भिरविध्यदुग्रो धार्ष्टद्युम्नेः स शिरश्चोच्चकर्त्त। तथाऽभिनत्सुतसोमं शरेण सुसंशितेनाधिरथिर्महात्मा।
अथाक्रन्दे तुमुले वर्त्तमाने धार्ष्टद्युम्ने निहते तत्र कृष्णः। अपाञ्चाल्यं क्रियते याहि पार्थ कर्णं जहीत्यब्रवीद्राजसिंह।
ततः प्रहस्याशु नरप्रवीरो रथं रथेनाधिरथेर्जगाम। भये तेषां त्राणमिच्छन् सुबाहुरभ्याहतानां रथयूथपेन। ४१९०
विस्फार्य्य गाण्डीवमथोग्रघोषं ज्यया समाहत्य तले भृशञ्च। बाणान्धकारं सहसैव कृत्वा जघान नागाश्वरथध्वजांश्च।
प्रतिश्रुतः प्राचरदन्तरीक्षे गुहा गिरीणामपतन् वयांसि। स मण्डलज्येन विजृम्भमाणो रौद्रे मुहूर्त्तेऽभ्यपतत् किरीटी।
तं भीमसेनोऽनुययौ रथेन पृष्ठे रक्षन् पाण्डवमेकवीरः। तौ राजपुत्रौ त्वरितौ रथाभ्यां कर्णाय यातावरिभिर्विमुक्तौ।
तत्रान्तरे सुमहान् राजपुत्रश्चक्रे युद्धं सोमकान् संप्रमृद्नन्। रथाश्वमातङ्गगणान् जघान प्रच्छादयामास शरैर्दिशश्च।
तमुत्तमौजा जनमेजयश्च क्रुद्धौ युधामन्युशिखण्डिनौ च। कर्णं विभेदुः सहिताः पृषत्कैः संमर्द्दमानाः सह पार्षतेन। ४१९५
ते पञ्च पाञ्चालरथप्रवीरा वैकर्त्तनं कर्णमभिद्रवन्तः। तस्माद्रथाच्च्यावयितुं न शेकुर्धैर्य्यात् कृतात्मानमिवेन्द्रियार्थाः।
तेषां धनूंषि ध्वजवाजिसूतांस्तूर्णं पताकाश्च निकृत्य बाणैः। तान् पञ्चभिस्त्वभ्यहनत् पृषत्कैः कर्णस्ततः सिंह इवोन्ननाद।
तस्यास्यतस्तानभिनिघ्नतश्च ज्याबाणहस्तस्य धनुःस्वनेन। साद्रिद्रुमा स्यात् पृथिवी विशीर्णेत्यतीव मत्वा जनता व्यषीदत्।
स शक्रचापप्रतिमेन धन्वना भृशाततेनाधिरथिः शरान् सृजन्। बभौ रणे दीप्तमरीचिमण्डलो यथांशुमाली परिवेशवांस्तथा।
शिखण्डिनं द्वादशभिः पराभिनच्छितैः शरैः षड्भिरथोत्तमौजसं। त्रिभिर्युधामन्युमविध्यदाशुगैस्त्रिभिस्त्रिभिः सोमकपार्षतात्मजौ। ४२००
पराजिताः पञ्च महारथास्तु ते महाहवे सूतसुतेन मारिष। निरुद्यमास्तस्थुरमित्रनन्दना यथेन्द्रियार्थात्मवता पराजिताः।
निमज्जतस्तानथ कर्णसागरे विपन्ननावो वणिजो यथाऽर्णवे। उद्दध्रिरे नौभिरिवार्णवाद्रथैः सुकल्पितैर्द्रौपदिजाः स्वमातुलान्।
ततः शिनीनामृषभः शितैः शरैर्निकृत्य कर्णप्रहितानिषून् बहून्। विदार्य्य कर्णं निशितैरयस्मयैस्तवात्मजं ज्येष्ठमविध्यदष्टभिः।
कृपोऽथ भोजश्च तवात्मजस्तथा स्वयञ्च कर्णो निशितैरताडयत्। स तैश्चतुर्भिर्युयुधे यदूत्तमो दिगीश्वरैर्दैत्यपतिर्यथा तथा।
समाततेन श्वसनेन कूजता भृशायतेनामितबाणवर्षिणा। बभूव दुर्द्धर्षतरः स सात्यकिः शरन्नभोमध्यगतो यथा रविः। ४२०५
पुनः समास्थाय रथान् सुदंशिताः शिनिप्रवीरं जुगुपुः परन्तपाः। समेत्य पाञ्चालमहारथा रणे मरुद्गणाः शक्रमिवारिनिग्रहे।
ततोऽभवद्युद्धमतीव दारुणं तवाहितानां तव सैनिकैः सह। रथाश्वमातङ्गविनाशनं तथा यथा सुराणामसुरैः पुराऽभवत्।
रथद्विपा वाजिपदातयस्तथा भवन्ति नानाविधशस्त्रवेष्टिताः। परस्परेणाभिहताश्च चस्खलुर्विनेदुरार्त्ता व्यसवोऽपतंस्तथा।
तथा गतं भीममभीस्तवात्मजः ससार राजावरजः किरञ्छरैः। तमभ्यधावत्त्वरितो वृकोदरो महारुरुं सिंह इवाभिपेदिवान्।
ततस्तयोर्युद्धमतीव दारुणं प्रदीव्यतोः प्राणदुरोदरं द्वयोः। परस्परेणाभिनिविष्टरोषयोरुदग्रयोः शम्बरशक्रयोर्यथा। ४२१०
शरैः शरीरान्तिकरैः सुतेजनैर्निजघ्नतुस्तावितरेतरं भृशं। सकृत्प्रभिन्नाविव वासितान्तरे महागजौ मन्मथसक्तचेतसौ।

तवात्मजस्याथ वृकोदरस्त्वरन् धनुः क्षुराभ्यां ध्वजमेव चाच्छिनत्। ललाटमप्यस्य बिभेद पत्रिणा शिरश्च कायात् प्रजहार सारथेः।
स राजपुत्रोऽन्यदवाप्य कार्म्मुकं वृकोदरं द्वादशभिः पराभिनत्। स्वयं नियच्छंस्तुरगानजिह्मगैः शरैश्च भीमं पुनरप्यवीवृषत्।
ततः शरं सूर्य्यमरीचिसप्रभं सुवर्णवज्रोत्तमरत्नभूषितं। महेन्द्रवज्राशनिपातदुःसहं मुमोच भीमाङ्गविदारणक्षमं।
स तेन निर्भिन्नतनुर्वृकोदरो निपातितः स्रस्ततनुर्गतासुवत्। प्रसार्य्य बाहू रथवर्य्यमाश्रितः पुनः स संज्ञामुपलभ्य चानदत्। ४२१५

इति श्रीमहाभारते कर्णपर्व्वणि दुःशासनभीमसेनयुद्धे द्व्यशीतोऽध्यायः॥ ८२ ॥

॥ सञ्जय उवाच ॥ तत्राकरोत् दुष्करं राजपुत्रो दुःशासनस्तुमुलं युध्यमानः। चिच्छेद भीमस्य धनुः शरेण षड्भिः शरैः सारथिमप्यविध्यत्।
स तत् कृत्वा राजपुत्रस्तरस्वी विव्याध भीमं नवभिः पृषत्कैः। ततोऽभिनद्बहुभिः क्षिप्रमेव वरेषुभिर्भीमसेनं महात्मा।
ततः क्रुद्धो भीमसेनस्तरस्वी शक्तिं घोरां प्राहिणोत्ते सुताय। तामापतन्तीं सहसाऽतिघोरां दृष्ट्वा सुतस्ते ज्वलितामिवोल्कां।
आकर्णपूर्णैरिषुभिर्महात्मा चिच्छेद पुत्रो दशभिः पृषत्कैः। दृष्ट्वा तु तत् कर्म्म कृतं सुदुष्करं प्रापूजयन् सर्व्वयोधाः प्रहृष्टाः।
अथाशु भीमस्य शरेण भूयो गाढं स विव्याध सुतस्त्वदीयः। चुक्रोध भीमः पुनराशु तस्मै भृशं प्रजज्वाल रुषाऽभिवीक्ष्य। ४२२०
विद्धोऽस्मि वीराशु भृशं त्वयाऽद्य सहस्व भूयोऽपि गदाप्रहारं। उक्त्वैवमुच्चैः कुपितोऽथ भीमो जग्राह तां भीमगदां वधाय।
उवाच चाद्याहमहं दुरात्मन् पास्यामि ते शोणितमाजिमध्ये। अथैवमुक्तस्तनयस्तवोग्रां शक्तिं वेगात् प्राहिणोन्मृत्युरूपां।
आविध्य भीमोऽपि गदां सुघोरां विचिक्षिपे रोषपरीतमूर्त्तिः। सा तस्य शक्तिं सहसा विरुज्य पुत्रं तवाजौ ताडयामास मूर्द्ध्नि।
स विस्रवन्नाग इव प्रभिन्नो गदामस्मै तुमुले प्राहिणोद्वै। तयाऽहरद्दश धन्वन्तराणि दुःशासनं भीमसेनः प्रसह्य।
तया हतः पतितो वेपमानो दुःशासनो गदया वेगवत्या। हयाः ससूता निहता नरेन्द्र चूर्णीकृतश्चास्य रथः पतन्त्या। ४२२५
विध्वस्तवर्म्माभरणाम्बरस्रक् विचेष्टमानो भृशवेदनातुरः। दुःशासनं पाण्डवाः प्रेक्ष्य सर्व्वे हृष्टाः पाञ्चालाः सिंहनादान् मुमुचुः।
तं पातयित्वाऽथ वृकोदरोऽथ जगर्ज्ज हर्षेण विनादयन् दिशः। नादेन तेनाखिलपार्श्ववर्त्तिनो मूर्च्छाकुलाः पतिता ह्याजमीढ।
भीमोऽपि वेगादवतीर्य्य यानाद्दुःशासनं वेगवानभ्यधावत्। ततः स्मृत्वा भीमसेनस्तरस्वी सापत्नकं यत् प्रयुक्तं सुतैस्ते।
तस्मिन् घोरे तुमुले वर्त्तमाने प्रधानभूयिष्ठतरैः समन्तात्। दुःशासनं तत्र समीक्ष्य राजन् भीमो महाबाहुरचिन्त्यकर्म्मा।
स्मृत्वाऽथ केशग्रहणञ्च देव्या वस्त्रापहारञ्च रजस्वलायाः। अनागसो भर्त्तृपराङ्मुखाया दुःखानि दत्तान्यपि विप्रचिन्त्य। ४२३०
जज्वाल क्रोधादथ भीमसेन आज्यप्रसिक्तो हि यथा हुताशः। तत्राह कर्णञ्च सुयोधनञ्च कृपं द्रौणिं कृतवर्म्माणमेव।
निहन्मि दुःशासनमद्य पापं संरक्ष्यतामद्य समस्तयोधाः। इत्येवमुक्त्वा सहसाऽभ्यधावन्निहन्तुकामोऽतिबलस्तरस्वी।
तथा तु विक्रम्य रणे वृकोदरो महागजं केशरी यद्वदेव। निगृह्य दुःशासनमेकवीरः सुयोधनस्याधिरथेः समक्षं।
रथादवप्लुत्य गतः स भूमौ यत्नेन तस्मिन् प्रणिधाय चक्षुः। असिं समुद्यम्य शितं सुधारं कण्ठे पदाक्रम्य च वेपमानं।
उत्कृत्य वक्षः पतितस्य भूमावथापिबच्छोणितमस्य कोष्णं। ततो निपात्यास्य शिरोऽपहृत्य तेनासिना तव पुत्रस्य राजन्। ४२३५

सत्यां चिकीर्षुर्मतिमान् प्रतिज्ञां भीमोऽपिबच्छोणितमस्य कोष्णं । आस्वाद्य चास्वाद्य च वीक्षमाणः क्रुद्धो हि चैनं निजगाद वाक्यं ।

स्तन्यस्य मातुर्मधुसर्पिषोर्वा माध्वीकपानस्य च सत्कृतस्य । दिव्यस्य वा तोयरसस्य पानात् पयोदधिभ्यां मथितस्य मुख्यात् ।

अन्यानि पानानि च यानि लोके सुधामृतस्वादुरसानि तेभ्यः । सर्वेभ्य एवाभ्यधिको रसोऽयं ममाद्य चास्याहितलोहितस्य ।

अथाह भीमः पुनरुग्रकर्मा दुःशासनं क्रोधपरीतचेताः । गतासुमालोक्य विहस्य सुस्वरं किं वा कुर्य्यां मृत्युना रक्षितोऽसि ।

एवं ब्रुवाणं पुनराद्रवन्तमास्वाद्यमानं वमतिप्रहृष्टं । ये भीमसेनं ददृशुस्तदानीं भयेन तेऽपि व्यथिता निपेतुः । ३२५०

ये चापि तत्रासन् व्यथिता मनुष्यास्तेषां करेभ्यः पतितं हि शस्त्रं । भयाच्च संचुक्रुशुरस्वरैस्ते निमीलिताक्षा ददृशुः समन्तात् ।

ये तत्र भीमं ददृशुः समन्ताद्दौःशासनं तद्रुधिरं पिबन्तं । सर्व्वेऽपलायन्त भयाभिपन्ना न वै मनुष्योऽयमिति ब्रुवाणाः ।

तस्मिन् कृते भीमसेनेन रूपे दृष्ट्वा जनाः शोणितपीयमानं । सम्प्राद्रवंश्चित्रसेनेन सार्द्धं भीमं रक्षो भाषमाणा भयार्त्ताः ।

युधामन्युः प्रद्रुतं चित्रसेनं सहानीकः स्वयमेवाद्रवत्पुनः । विव्याध चैनं निशितैः पृषत्कैर्व्यपेतभीः सप्तभिराशुमुक्तैः ।

संक्रान्तभोग इव लेलिहानो महोरगः क्रोधविषं सिसृक्षुः । निवृत्य पाञ्चालजमभ्यविध्यत्त्रिभिः शरैः सारथिमस्य षड्भिः । ३२५५

ततः सुपुङ्खेन सुसंशितेन सुसंशितेनैव शरेण शूरः । आकर्णमुक्तेन समाहितेन युधामन्युस्तस्य शिरो जहार ।

तस्मिन् हते भ्रातरि चित्रसेने क्रुद्धः कर्णः पौरुषं दर्शयानः । प्राद्रावयत् पाण्डवानामनीकं प्रत्युद्यातो नकुलेनामितौजाः ।

भीमोऽपि हत्वा तत्रैव दुःशासनममर्षणं । पूरयित्वाऽञ्जलिं भूयो रुधिरस्योग्रनिस्वनः ।

शृण्वतां लोकवीराणामिदं वचनमब्रवीत् । एष ते रुधिरं कण्ठात् पिबामि पुरुषाधम ।

ब्रूहीदानीं सुसंरब्धः पुनर्गौरिति गौरिति । ये तदाऽस्मान् प्रनृत्यन्ति पुनर्गौरिति गौरिति । ३२६०

तान् वयं प्रतिनृत्यामः पुनर्गौरिति गौरिति । प्रमाणकोट्यां शयनं कालकूटस्य भोजनं ।

दंशनञ्चाहिभिः कृष्णैर्दाहश्च जतुवेश्मनि । द्यूतेन राज्यहरणमरण्ये वसतिश्च या ।

द्रौपद्याः केशपक्षस्य ग्रहणञ्च सुदारुणं । इष्वस्त्राणि च संग्रामेष्वसुखानि च वेश्मनि ।

विराटभवने यश्च क्लेशोऽस्माकं पृथग्विधः । शकुनेर्धार्त्तराष्ट्रस्य राधेयस्य च मन्त्रिते ।

अनुभूतानि दुःखानि तेषां हेतुस्त्वमेव हि । दुःखान्येतानि जानीमो न सुखानि कदाचन । ३२६५

धृतराष्ट्रस्य दौरात्म्यात् सपुत्रस्य सदा वयं । इत्युक्त्वा वचनं राजन् जयं प्राप्य वृकोदरः ।

पुनराह महाराज स्मयंस्तौ केशवार्जुनौ ।

असृग्दिग्धो विस्रवल्लोहितास्यः क्रुद्धोऽत्यर्थं भीमसेनस्तरस्वी । दुःशासने यद्रणे संश्रुतं मे तद्वै सत्यं कृतमद्येह वीरौ ।

अत्रैव दास्याम्यपरं द्वितीयं दुर्य्योधनं यज्ञपशुं विशस्य । शिरो मृदित्वा च पदा दुरात्मनः शान्तिं लप्स्ये कौरवाणां समक्षं ।

एतावदुक्त्वा वचनं प्रहृष्टो ननाद चोच्चै रुधिरार्द्रगात्रः । ननर्द चैवातिबलो महात्मा वृत्रं निहत्येव सहस्रनेत्रः । ३२७०

इति श्रीमहाभारते कर्णपर्व्वणि दुःशासनवधे त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

॥ सञ्जय उवाच ॥ दुःशासने तु निहते तव पुत्रा महारथाः । महाक्रोधविषा वीराः समरेष्वपलायिनः ।

दश राजन्महावीर्य्या भीमं प्राच्छादयञ्छरैः । निषङ्गी कवची पाशी दण्डधारो धनुर्धरः ।

अलोलुपः सहः षण्ढो वातवेगसुवर्चसौ । एते समेत्य सहिता भ्रातृव्यसनकर्षिताः ।

भीमसेनं महाबाहुं मार्गणैः समवारयन् । स वध्यमानो विशिखैः समन्तात्तैर्महारथैः ।
भीमः क्रोधाग्निरक्ताक्षः क्रुद्धः काल इवाबभौ । तांस्तु भल्लैर्महावेगैर्दशभिर्दश भारतान् । ४२६९
रुक्माङ्गदान् रुक्मपुङ्खैः पार्थो निन्ये यमक्षयं । हतेषु तेषु वीरेषु प्रदुद्राव बलं तव ।
पश्यतः सूतपुत्रस्य पाण्डवस्य भयार्दितं । ततः कर्णो महाराज प्रविवेश महद्भयं ।
दृष्ट्वा भीमस्य विक्रान्तमन्तकस्य प्रजास्विव । तस्य त्वाकारभावज्ञः शल्यः समितिशोभनः ।
उवाच वचनं कर्णं प्राप्तकालमरिन्दमं । मा व्यथां कुरु राधेय नैवं त्वय्युपपद्यते ।
एते द्रवन्ति राजानो भीमसेनभयार्दिताः । दुर्य्योधनश्च संमूढो भ्रातृव्यसनकर्शितः । ४२७०
दुःशासनस्य रुधिरे पीयमाने महात्मना । व्यापन्नचेतसश्चैव शोकोपहतचेतसः ।
दुर्य्योधनमुपासन्ते परिवार्य्य समन्ततः । कृपप्रभृतयश्चैते हतशेषाः सहोदराः ।
पाण्डवा लब्धलक्षाश्च धनञ्जयपुरोगमाः । त्वामेवाभिमुखाः शूरा युद्धाय समुपस्थिताः ।
स त्वं पुरुषशार्दूल पौरुषेण समास्थितः । क्षत्रधर्म्मं पुरस्कृत्य प्रत्युद्याहि धनञ्जयं ।
भारो हि धार्त्तराष्ट्रेण त्वयि सर्व्वः समाहितः । तमुद्वह महाबाहो यथाशक्ति यथाबलं । ४२७५
जये स्याद्विपुला कीर्त्तिर्ध्रुवः स्वर्गः पराजये । वृषसेनश्च राधेय संक्रुद्धस्तनयस्तव ।
त्वयि मोहं समापन्ने पाण्डवानभिधावति । एतत् श्रुत्वा तु वचनं शल्यस्यामिततेजसः ।
हृदि चावश्यकं भावं चक्रे युद्धाय सुस्थिरं ।

ततः क्रुद्धो वृषसेनोऽभ्यधावदवस्थितं प्रमुखे पाण्डवं तं । वृकोदरं कालमिवात्तदण्डं गदाहस्तं योधयन्तं त्वदीयान् ।
तमभ्यधावन्नकुलः प्रवीरो रोषादमित्रं प्रतुदन् पृषत्कैः । कर्णस्य पुत्रं समरे प्रहृष्टं पुरा जिघांसुर्मघवेव जम्भं । ४२८०
ततो ध्वजं स्फटिकविचित्रकम्बुं चिच्छेद वीरो नकुलः क्षुरेण । कर्णात्मजस्येष्वसनञ्च चित्रं भल्लेन जाम्बूनदचित्रनद्धं ।
अथान्यदादाय धनुः स शीघ्रं कर्णात्मजः पाण्डवमभ्यविध्यत् । दिव्यैर्महास्त्रैर्नकुलं कृतास्त्रो दुःशासनस्यापचितिं चिकीर्षुः ।
ततः क्रुद्धो नकुलस्तं महात्मा शरैर्महोल्काप्रतिमैरविध्यत् । दिव्यैरस्त्रैरभ्यवर्षच्च सोऽपि कर्णस्य पुत्रो नकुलं कृतास्त्रः ।
शराभिघाताच्च रुषा च राजन् स्वया च भासास्त्रसमीरणाच्च । जज्वाल कर्णस्य सुतोऽतिमात्रमिद्धो यथाज्याहुतिभिर्हुताशः ।
कर्णस्य पुत्रो नकुलस्य राजन् सर्व्वानश्वानवधीदुत्तमास्त्रैः । वनायुजान् वै नकुलस्य शुभ्रानुदग्रगान् हेमजालावनद्धान् । ४२८५
ततो हताश्वादवरुह्य यानादादाय चर्म्मामलरुक्मचन्द्रं । आकाशसङ्काशमसिं प्रगृह्य दोधूयमानः खगवच्चचार ।
ततोऽन्तरीक्षे च रथाश्वनागं चिच्छेद तूर्णं नकुलश्चित्रयोधी । ते प्रापतन्नसिनाऽऽशु विशस्ता यथाऽश्वमेधे पशवः शमित्रा ।
द्विसाहस्राः पतिता युद्धशौण्डा नानादेश्याः सुभृताः सत्यसन्धाः । एकेन संख्ये नकुलेन कृत्ता जयैषिणाऽनुत्तमचन्दनाङ्गाः ।
तमापतन्तं नकुलं सोऽभिपत्य समन्ततः सायकैः प्रत्यविध्यत् । स तुद्यमानो नकुलः पृषत्कैर्विव्याध वीरं स चुकोप विद्धः ।
महाभये रक्ष्यमाणो महात्मा भ्रात्रा भीमेनाकरोत्तच्च भीमं । तं कर्णपुत्रो व्यधमत् समेतं नराश्वमातङ्गरथाननेकान् । ४२९०
क्रीडन्तमष्टादशभिः पृषत्कैर्विव्याध वीरं नकुलं सरोषः । स तेन विद्धोऽतिभृशं तरस्वी महाहवे वृषसेनेन राजन् ।
क्रुद्धेन धावन् समरे जिघांसुः कर्णात्मजं पाण्डुसुतो नृवीरः । वितत्य पक्षौ सहसा पतन्तं श्येनं यथैवामिषलुब्धमाजौ ।
अवाकिरद्वृषसेनस्ततस्तं शितैः शरैर्नकुलमुदारवीर्य्यं । स तान् मोघांस्तस्य कुर्व्वञ्छरौघान् चचार मार्गान्नकुलश्चित्ररूपान् ।

अथास्य तूर्णं चरतो नरेन्द्र खड्गेन चित्रं नकुलस्य तस्य। महेषुभिर्व्यधमत् कर्णपुत्रो महाहवे चर्म सहस्रतारं।
तच्चायसं निशितं तीक्ष्णधारं विकोषमुग्रं गुरुभारसाहं। द्विषच्छरीरान्तकरं सुघोरमाधुन्वतः सर्पमिवोग्ररूपं। ४१९५
क्षिप्रं शरैः षड्भिरमित्रसाहश्चकर्त्त खड्गं निशितैः सुपुङ्खैः। पुनश्च दीप्तैर्निशितैः पृषत्कैः स्तनान्तरे गाढमथाभ्यविध्यत्।
कृत्वा तु तद्दुष्करमार्य्यजुष्टमन्यैर्नरैः कर्म रणे महात्मा। ययौ रथं भीमसेनस्य राजन् शराभितप्तो नकुलस्त्वरावान्।
स भीमसेनस्य रथं हताश्वो माद्रीसुतः कर्णशराभितप्तः। आपुप्लुवे सिंह इवाचलाग्रं सम्प्रेक्षमाणस्य धनञ्जयस्य।
ततः क्रुद्धो वृषसेनो महात्मा ववर्ष ताविषुजालेन वीरः। महारथावेकरथे समेतौ शरैः प्रभिन्दन्निव पाण्डवेयौ।
तस्मिन् रथे निहते पाण्डवस्य क्षिप्रञ्च खड्गे विशिखैर्विकृत्ते। अन्ये च संहत्य कुरुप्रवीरास्ततो निषङ्गैरवर्षन्नुपेत्य। ४२००
तौ पाण्डवेयौ परितः समन्तात् संहूयमानाविव हव्यवाहौ। भीमार्जुनौ वृषसेनाय क्रुद्धौ ववर्षतुः शरवर्षं सुघोरं।
अथाब्रवीन्मारुतिः फाल्गुनञ्च पश्यस्वैनं नकुलं पीड्यमानं। अयञ्च नो बाधते कर्णपुत्रस्तस्माद्भवान् प्रत्युपयातु कार्ष्णिं।

स तन्निशम्यैव वचः किरीटी रथं समासाद्य वृकोदरस्य। अथाब्रवीन्नकुलो वीक्ष्य वीरमुपागतं शातय शीघ्रमेतं।

इत्येवमुक्तः सहसा किरीटी भ्रात्रा समक्षं नकुलेन संख्ये। कपिध्वजं केशवसंगृहीतं प्रैषीदुदग्रो वृषसेनस्य वाहं।

इति श्रीमहाभारते कर्णपर्व्वणि वृषसेनयुद्धे नकुलपराजये चतुरशीतोऽध्यायः ॥ ८४ ॥

॥ सञ्जय उवाच ॥ नकुलमथ विदित्वा छिन्नबाणासनासिं विरथमरिशरार्त्तं कर्णपुत्रास्त्रभग्नं। पवनधुतपताकाह्रादिनो वल्गिताश्वा वरपुरुषनियुक्तास्ते रथैः शीघ्रमीयुः। ४२०५

द्रुपदसुतवरिष्ठाः पञ्च शैनेयषष्ठा द्रुपददुहितृपुत्राः पञ्च चामित्रसाहाः। द्विरदरथनराश्वान् सूदयन्तस्त्वदीयान् भुजगपतिनिकाशैर्मार्गणैरात्तशस्त्राः।

अथ तव रथमुख्यास्तान् प्रतीयुस्त्वरन्तः कृपहृदिकसुतौ च द्रौणिदुर्य्योधनौ च। शकुनिसुतवृकौ च क्राथदेवावृधौ च द्विरदजलदघोषैः स्यन्दनैः कार्मुकैश्च।

तव नृप रथिवीरांस्ते दशैकश्च वीरा नरवरशरवर्षैस्ताडयन्तोऽभ्यरुन्धन्। नवजलदसवर्णैर्हस्तिभिस्तानुदीयुर्गिरिशिखरनिकाशैर्भीमवेगैः कुलिन्दाः।

सुकल्पिता हैमवता मदोत्कटा रणाभिकामैः कृतिभिः समास्थिताः। सुवर्णजालैर्व्वितता बभुर्गजास्तथा यथा खे जलदाः सविद्युतः।

कुलिन्दपुत्रो दशभिर्महायसैः कृपं ससूताश्वमपीडयद्भृशं। ततः शरद्वत्सुतसायकैर्हतः सहैव नागेन पपात भूतले। ४२१०
कुलिन्दपुत्रावरजस्तु तोमरैर्दिवाकरांशुप्रतिमैरयस्मयैः। रथञ्च विक्षोभ्य ननाद नर्दतस्ततोऽस्य गान्धारपतिः शिरोऽहरत्।
ततः कुलिन्देषु हतेषु तेष्वथ प्रहृष्टरूपास्तव ते महारथाः। भृशं प्रदध्मुर्लवणाम्बुसम्भवान् परांश्च बाणासनपाणयोऽभ्ययुः।
अथाभवद्युद्धमतीव दारुणं पुनः कुरूणां सह पाण्डुसृञ्जयैः। शरासिशक्त्यृष्टिगदापरश्वधैर्नराश्वनागासुहरं भृशाकुलं।
रथाश्वमातङ्गपदातिभिस्ततः परस्परं विप्रहताः पतन् क्षितौ। यथा सविद्युत्स्तनिता बलाहकाः समाहता दिग्भ्य इवोग्रमारुतैः।
ततः शतानीकहतान् महागजांस्तथा रथान् पत्तिगणांश्च तान् बहून्। जघान भोजस्तु हयानथापतन् क्षणाद्विशस्ताः कृतवर्म्मणः शरैः। ४२१५

अथापरे द्रौणिहता महाद्विपास्त्रयः ससर्व्वायुधयोधकेतनाः। निपेतुरुर्व्यां व्यसवो निपातितास्तथा यथा वज्रहता महाऽचलाः।

दुर्य्योधनस्याधमपूरुषस्य यस्यानयादेव महान् क्षयोऽभूत्। स एवमुक्त्वा विनिमृज्य चापं लब्ध्वं हि हत्वा वृषसेनमाजौ। ससर्ज्ज वाणान्विशिखान्महात्मा वधाय राजन् कर्णसुतस्य संख्ये। विव्याध चैनं दशभिः पृषत्कैर्मर्म्मस्वसक्तं प्रहसन् किरीटी। चिच्छेद चास्येष्वसनं भुजौ च क्षुरैश्चतुर्भिर्निशितैः शिरश्च। स पार्थवाणाभिहतः पपात रथाद्विबाहुर्व्विशिरा धरायां। सुपुष्पितो वृक्षवरोऽतिकायो वातेरितः शाल इवाद्रिशृङ्गात्। संप्रेक्ष्य वाणाभिहतं पतन्तं रथात् सुतं सूतजः क्षिप्रकारी। ४२५५
रथं रथेनाशु जगाम रोषात् किरीटिनः पुत्त्रवधाभितप्तः। ततः समक्षं स्वसुतं विलोक्य कर्णो हतं श्वेतहयेन संख्ये।

संरम्भमागम्य परं महात्मा कृष्णार्ज्जुनौ सहसैवाभ्यधावत्।

इति श्रीमहाभारते कर्णपर्व्वणि वृषसेनवधे पञ्चाशीतोऽध्यायः ॥ ८५ ॥

॥ सञ्जय उवाच ॥ तमायान्तमभिप्रेक्ष्य वेलोद्वृत्तमिवार्णवं। गर्ज्जन्तं सुमहाकायं दुर्निवारं सुरैरपि।

अर्ज्जुनं प्राह दाशार्हः प्रहस्य पुरुषर्षभः। अयं स रथ आयाति श्वेताश्वः शल्यसारथिः।

येन ते सह योद्धव्यं स्थिरो भव धनञ्जय। पश्य चैनं समायुक्तं रथं कर्णस्य पाण्डव। ४२६०

श्वेतवाजिसमायुक्तं युक्तं राधासुतेन च। नानापताकाकलिलं किङ्किणीजालमालिनं।

उह्यमानमिवाकाशे विमानं पाण्डुरैर्हयैः। ध्वजञ्च पश्य कर्णस्य नागकक्षं महात्मनः।

आखण्डलधनुःप्रख्यमुल्लिखन्तमिवाम्बरं। पश्य कर्णं समायान्तं धार्त्तराष्ट्रप्रियैषिणं।

शरधारा विमुञ्चन्तं धारासारमिवाम्बुदं। एष मद्रेश्वरो राजा रथाग्रे पर्य्यवस्थितः।

नियच्छति हयानस्य राधेयस्यामितौजसः। शृणु दुन्दुभिनिर्घोषं शङ्खशब्दञ्च दारुणं। ४२६५

सिंहनादांश्च विविधान् शृणु पाण्डव सर्व्वतः। अन्तर्द्धाय महाशब्दान् कर्णेनामिततेजसा।

दोधूयमानस्य भृशं धनुषः शृणु निःस्वनं। एते दीर्य्यन्ति सगणाः पाञ्चालानां महारथाः।

दृष्ट्वा केशरिणं क्रुद्धं मृगा इव महावने। सर्व्वयत्नेन कौन्तेय हन्तुमर्हसि सूतजं।

न हि कर्णशरानन्यः सोढुमुत्सहते नरः। सदेवासुरगन्धर्व्वांस्त्रीँल्लोकान् सचराचरान्।

त्वं हि जेतुं रणे शक्तस्तथैव विदितं मम। भीममुग्रं महात्मानं त्र्यक्षं शर्व्वं कपर्द्दिनं। ४२७०

न शक्ता द्रष्टुमीशानं किं पुनर्योधितुं प्रभुं। त्वया साक्षान्महादेवः सर्व्वभूतशिवः शिवः।

युद्धेनाराधितः स्थाणुर्देवाश्च वरदास्तव। तस्य पार्थ प्रसादेन देवदेवस्य शूलिनः।

जहि कर्णं महाबाहो नमुचिं वृत्रहा यथा। श्रेयस्तेऽस्तु सदा पार्थ युद्धे जयमवाप्नुहि।

॥ अर्ज्जुन उवाच ॥ ध्रुव एव जयः कृष्ण मम नास्त्यत्र संशयः। सर्व्वलोकगुरुर्यस्त्वं तुष्टोऽसि मधुसूदन।

चोदयाश्वान् हृषीकेश रथं मम महारथ। नाहत्वा समरे कर्णं निवर्त्तिष्यति फाल्गुनः। ४२७५

अद्य कर्णं हतं पश्य मच्छरैः शकलीकृतं। मां वा द्रक्ष्यसि गोविन्द कर्णेन निहतं शरैः।

उपस्थितमिदं घोरं युद्धं त्रैलोक्यमोहनं। यज्जनाः कथयिष्यन्ति यावद्भूमिर्धरिष्यति।

एवं ब्रुवंस्तदा पार्थः कृष्णमक्लिष्टकारिणं। प्रत्युद्ययौ रथेनाशु गजं प्रतिगजो यथा।

पुनरप्याह तेजस्वी पार्थः कृष्णमरिन्दमं। चोदयाश्वान् हृषीकेश कालोऽयमतिवर्त्तते।

एवमुक्तस्तदा तेन पाण्डवेन महात्मना। ४२८०

शल्येन सम्पूज्य स पाण्डवं तदा प्रचोदयामास हयान् मनोजवान्। स पाण्डुपुत्रस्य रथो मनोजवः क्षणेन कर्णस्य रथाग्रतोऽभवत्।

इति श्रीमहाभारते कर्णपर्व्वणि कर्णार्ज्जुनद्वैरथे षडशीतोऽध्यायः॥ ८६॥

॥ सञ्जय उवाच ॥ वृषसेनं हतं दृष्ट्वा शोकामर्षसमन्वितः। पुत्रशोकोद्भवं वारि नेत्राभ्यां समवासृजत्।
रथेन कर्णस्तेजस्वी जगामाभिमुखो रिपुं। युद्धायामर्षताम्राक्षः समाहूय धनञ्जयं।
तौ रथौ सूर्य्यसङ्काशौ वैयाघ्रपरिवारितौ। समेतौ ददृशुस्तत्र द्वाविवार्कौ समुद्गतौ।
श्वेताश्वौ पुरुषौ दिव्यावास्थितावरिमर्द्दनौ। शुशुभाते महात्मानौ चन्द्रादित्यौ यथा दिवि। ४२०५
तौ दृष्ट्वा विस्मयं जग्मुः सर्व्वसैन्यानि मारिष। त्रैलोक्यविजये यत्ताविन्द्रवैरोचनाविव।
रथज्यातलनिर्ह्रादैर्ब्बाणसिंहरवैस्तथा। तौ रथावभ्यधावन्तौ समालोक्य महीक्षितां।
ध्वजौ च दृष्ट्वा संसक्तौ विस्मयः समपद्यत। हस्तिकक्षञ्च कर्णस्य वानरञ्च किरीटिनः।
तौ रथौ संप्रसक्तौ तु दृष्ट्वा भारत पार्थिवाः। सिंहनादरवांश्चक्रुः साधुवादांश्च पुष्कलान्।
दृष्ट्वा च द्वैरथं ताभ्यां तत्र योधाः सहस्रशः। चक्रुर्बाहुस्वनांश्चैव तथा चेलावधूननं। ४२१०
आजघ्नुः कुरवस्तत्र वादित्राणि समन्ततः। कर्णं प्रहर्षयिष्यन्तः शङ्खान् दध्मुश्च सर्व्वशः।
तथैव पाण्डवाः सर्व्वे हर्षयन्तो धनञ्जयं। तूर्य्यशङ्खनिनादेन दिशः सर्व्वा व्यनादयन्।
क्ष्वेडितास्फोटितोत्क्रुष्टैस्तुमुलं सर्व्वतोऽभवत्। बाहुशब्दैश्च शूराणां कर्णार्ज्जुनसमागमे।
तौ दृष्ट्वा पुरुषव्याघ्रौ रथस्थौ रथिनाम्वरौ। प्रगृहीतमहाचापौ शरशक्तिध्वजायुतौ।
वर्म्मिणौ बद्धनिस्त्रिंशौ श्वेताश्वौ शङ्खशोभितौ। तूणीरवरसम्पन्नौ द्वावप्येतौ सुदर्शनौ। ४२१५
रक्तचन्दनदिग्धाङ्गौ समदौ गोवृषाविव। चापविद्युद्ध्वजोपेतौ शस्त्रसम्पत्तियोधिनौ।
चामरव्यजनोपेतौ श्वेतच्छत्रोपशोभितौ। कृष्णशल्यरथोपेतौ तुल्यरूपौ महारथौ।
सिंहस्कन्धौ दीर्घभुजौ रक्ताक्षौ हेममालिनौ। सिंहस्कन्धप्रतीकाशौ व्यूढोरस्कौ महाबलौ।
अन्योन्यवधमिच्छन्तावन्योन्यजयकाङ्क्षिणौ। अन्योन्यमभिधावन्तौ गोष्ठे गोवृषभाविव।
प्रभिन्नाविव मातङ्गौ सुसंरब्धाविवाचलौ। आशीविषशिशुप्रख्यौ यमकालान्तकोपमौ। ४२२०
इन्द्रवृत्राविव क्रुद्धौ सूर्य्याचन्द्रमसप्रभौ। महाग्रहाविव क्रुद्धौ युगान्ताय समुत्थितौ।
देवगर्भौ देवबलौ देवतुल्यौ च रूपतः। यदृच्छया समायातौ सूर्य्याचन्द्रमसौ यथा।
बलिनौ समरे दृप्तौ नानाशस्त्रधरौ युधि। तौ दृष्ट्वा पुरुषव्याघ्रौ शार्दूलाविव धिष्ठितौ।
बभूव परमो हर्षस्तावकानां विशाम्पते। संशयः सर्व्वभूतानां विजये समपद्यत।
समेतौ पुरुषव्याघ्रौ प्रेक्ष्य कर्णधनञ्जयौ। उभौ वरायुधधरावुभौ रणकृतश्रमौ। ४२२५
उभौ च बाहुशब्देन नादयन्तौ नभस्तलं। उभौ विश्रुतकर्म्माणौ पौरुषेण बलेन च।
उभौ च सदृशौ युद्धे सम्बरामरराजयोः। कार्त्तवीर्य्यसमौ चोभौ तथा दाशरथेः समौ।
विष्णुवीर्य्यसमौ चोभौ तथा भवसमौ युधि। उभौ श्वेतहयौ राजन् रथप्रवरवाहिनौ।

सारथिप्रवरौ चैव तयोरास्तां महारणे। ततो दृष्ट्वा महाराज राजमानौ महारथौ।
सिद्धचारणसङ्घानां विस्मयः समपद्यत। तव पुत्रास्ततः कर्णं सबला भरतर्षभ। ४४००
परिवव्रुर्महात्मानं क्षिप्रमाहवशोभिनं। तथैव पाण्डवा हृष्टा धृष्टद्युम्नपुरोगमाः।
परिवव्रुर्महात्मानं पार्थमप्रतिमं युधि। तावकानां रणे कर्णो ग्लह आसीद्विशाम्पते।
तथैव पाण्डवेयानां ग्लहः पार्थोऽभवत्तदा। त एव सभ्यास्तत्रासन् प्रेक्षकाश्चाभवन् स्म ते।
तत्रैषां ग्लहमानानां ध्रुवौ जयपराजयौ। ताभ्यां द्यूतं समासक्तं विजयायेतराय वा।
अस्माकं पाण्डवानाञ्च स्थितानां रणमूर्द्धनि। तौ तु स्थितौ महाराज समरे युद्धशालिनौ। ४४०५
अन्योन्यं प्रतिसंरब्धावन्योन्यस्य जयकाङ्क्षिणौ। तावुभौ प्रजिहीर्षन्ताविन्द्रवृत्राविव प्रभो।
भीमरूपधरावास्तां महाधूमाविव ग्रहौ। ततोऽन्तरीक्षे साक्षेपा विवादा भरतर्षभ।
मिथो भेदाश्च भूतानामासन् कर्णार्ज्जुनान्तरे। व्यश्रूयन्त मिथो भिन्नाः सर्व्वलोकाश्च मारिष।
देवदानवगन्धर्व्वाः पिशाचोरगराक्षसाः। प्रतिपक्षग्रहं चक्रुः कर्णार्ज्जुनसमागमे।
द्यौरासीत् सूतपुत्रस्य पक्षे मातेव धिष्ठिता। भूमिर्द्धनञ्जयस्यासीत् मातेव जयकाङ्क्षिणी। ४४१०
गिरयः सागराश्चैव नद्यश्च सजलास्तथा। वृक्षाश्चौषधयश्चैव व्याश्रयन्त परस्परं।
असुरा यातुधानाश्च गुह्यकाश्च परन्तप। ते कर्णं समपद्यन्त प्रहृष्टाः समन्ततः।
मुनयश्चारणाः सिद्धा वैनतेया वयांसि च। रत्नानि निधयः सर्व्वे वेदाश्चाख्यानपञ्चमाः।
सोपवेदोपनिषदः सरहस्याः ससंग्रहाः। वासुकिश्चित्रसेनश्च तक्षको मणिकस्तथा।
सर्पाश्चैव तथा सर्व्वे काद्रवेयाश्च सान्वयाः। विषवन्तो महाराज नागाश्चार्ज्जुनतोऽभवन्। ४४१५
ऐरावताः सौरभेया वैशालेयाश्च भोगिनः। एतेऽभवन्नर्ज्जुनतः क्षुद्रसर्पाश्च कर्णतः।
ईहामृगा व्यालमृगा माङ्गल्याश्च मृगद्विजाः। पार्थस्य विजये राजन् सर्व्वे एवाभिसंश्रिताः।
वसवो मरुतः साध्या रुद्रा विश्वेऽश्विनौ तथा। अग्निरिन्द्रश्च सोमश्च पवनोऽथ दिशो दश।
धनञ्जयस्य ते पक्षे आदित्याः कर्णतोऽभवन्। विशः शूद्राश्च सूताश्च ये च सङ्करजातयः।
सर्व्वशस्ते महाराज राधेयमभजंस्तदा। देवास्तु पितृभिः सार्द्धं सगणाः सपदानुगाः। ४४२०
यमो वैश्रवणश्चैव वरुणश्च यतोऽर्ज्जुनः। ब्रह्मक्षत्रञ्च यज्ञाश्च दक्षिणाश्चार्ज्जुनं श्रिताः।
प्रेताश्चैव पिशाचाश्च क्रव्यादाश्च मृगाण्डजाः। राक्षसाः सह यादोभिः श्वशृगालाश्च कर्णतः।
देवब्रह्मनृपर्षीणां गणाः पाण्डवतोऽभवन्। तुम्बुरुप्रमुखा राजन् गन्धर्व्वाश्च यतोऽर्ज्जुनः।
प्राधेयाः सह मौनेया गन्धर्व्वाप्सरसां गणाः। ईहामृगाः पक्षिगणाः द्विपाश्च रथपत्तिभिः।
उह्यमानास्तथा मेघैर्व्वायुना च मनीषिणः। दिदृक्षवः समाजग्मुः कर्णार्ज्जुनसमागमं। ४४२५
देवदानवगन्धर्व्वा नागयक्षाः पतत्रिणः। महर्षयो वेदविदः पितरश्च स्वधाभुजः।
तपो विद्यास्तथौषध्यो नानारूपबलान्विताः। अन्तरीक्षे महाराज विनदन्तोऽवतस्थिरे।
ब्रह्मा ब्रह्मर्षिभिः सार्द्धं प्रजापतिभिरेव च। भवश्चैव स्थितो याने दिव्यं तं देशमागमत्।

समेतौ तौ महात्मानौ दृष्ट्वा कर्णधनञ्जयौ। अर्ज्जुनो जयतां कर्णमिति शक्रोऽब्रवीत्तदा।
जयतामर्ज्जुनं कर्ण इति सूर्य्योऽभ्यभाषत। हत्वाऽर्ज्जुनं मम सुतः कर्णो जयतु संयुगे। ४४२०
हत्वा कर्णं जयत्वद्य मम पुत्रो धनञ्जयः। इति सूर्य्यस्य चैवासीद्विवादो वासवस्य च।
पक्षसंस्थितयोस्तत्र तयोर्व्विबुधसिंहयोः। द्वैपक्षमासीद्देवानामसुराणाञ्च भारत।
समेतौ तौ महात्मानौ दृष्ट्वा कर्णधनञ्जयौ। अकम्पन्त त्रयो लोकाः सहदेवर्षिचारणाः।
सर्व्वे देवगणाश्चैव सर्व्वभूतानि यानि च। यतः पार्थस्ततो देवा यतः कर्णस्ततोऽसुराः।
रथयूथपयोः पक्षौ कुरुपाण्डववीरयोः। दृष्ट्वा प्रजापतिं देवाः स्वयम्भुवमचोदयन्। ४४२५
कोऽनयोर्व्विजयी देव कुरुपाण्डवयोधयोः। समोऽस्तु विजयो देव एतयोर्नरसिंहयोः।
कर्णार्ज्जुनविवादेन सर्व्वं संशयितं जगत्। स्वयम्भो ब्रूहि नस्तथ्यमेतयोर्व्विजयं प्रभो।
स्वयम्भो ब्रूहि तद्वाक्यं समोऽस्तु विजयोऽनयोः। तदुपश्रुत्य मघवा प्रणिपत्य पितामहं।
विज्ञापयत्तु देवेशमिदं मतिमतांवरं। पूर्व्वं भगवता प्रोक्तं कृष्णयोर्व्विजयो ध्रुवः।
तत्तथाऽस्तु नमस्तेऽस्तु प्रसीद भगवन्मम। ब्रह्मेशानावथो वाक्यमूचतुस्त्रिदशेश्वरं। ४४३०
विजयो ध्रुव एवास्य विजयस्य महात्मनः। खाण्डवे येन हुतभुक् तोषितः सव्यसाचिना।
स्वर्गञ्च समनुप्राप्य साहाय्यं शक्र ते कृतं। कर्णश्च दानवः पक्ष अतः कार्य्यः पराजयः।
एवं कृते भवेत् कार्य्यं देवानामेव निश्चितं। आत्मकार्य्यञ्च सर्व्वेषां गरीयस्त्रिदशेश्वर।
महात्मा फाल्गुनश्चापि सत्यधर्म्मरतः सदा। विजयस्तस्य नियतं जायते नात्र संशयः।
तोषितो भगवान् येन महात्मा वृषभध्वजः। कथं वा तस्य न जयो जायते शतलोचन। ४४३५
यस्य चक्रे स्वयं विष्णुः सारथ्यं जगतः प्रभुः। मनस्वी बलवाञ्छूरः कृतास्त्रोऽथ तपोधनः।
बिभर्त्ति च महातेजा धनुर्व्वेदमशेषतः। पार्थः सर्व्वगुणोपेतो देवकार्य्यमिदं यतः।
क्लिश्यन्ते पाण्डवा नित्यं वनवासादिभिर्भृशं। सम्पन्नस्तपसा चैव पर्य्याप्तः पुरुषर्षभः।
अतिक्रमेण महतादिष्टमर्थस्य पर्य्ययं। अतिक्रान्ते च लोकानामभावो नियतं भवेत्।
न विद्यते व्यवस्थानं क्रुद्धयोः कृष्णयोः क्वचित्। स्रष्टारौ जगतश्चैव सततं पुरुषर्षभौ। ४४४०
नरनारायणावेतौ पुराणावृषिसत्तमौ। अनियन्तौ नियन्तारावेतौ तस्मात् परन्तपौ।
नैतयोस्तु समः कश्चित् दिवि वा मानुषेषु वा। अनुगम्य त्रयो लोकाः सह देवर्षिचारणैः।
सर्व्वे देवगणाश्चापि सर्व्वभूतानि यानि च। अनयोस्तु प्रभावेण वर्त्तते निखिलं जगत्।
कर्णो लोकानयं मुख्यानाप्नोतु पुरुषर्षभः। कर्णो वैकर्त्तनः शूरो विजयस्त्वस्तु कृष्णयोः।
वसूनां समलोकत्वं मरुतां वा समाप्नुयात्। सहितो द्रोणभीष्माभ्यां नाकलोकमवाप्नुयात्। ४४४५
इत्युक्तो देवदेवाभ्यां सहस्राक्षोऽब्रवीद्वचः। आमन्त्र्य सर्व्वभूतानि ब्रह्मेशानानुशासनं।
श्रुतं भवद्भिर्यत्प्रोक्तं भगवद्भ्यां जगद्धितं। तत्तथा नान्यथा तद्धि तिष्ठध्वं विगतज्वराः।
इति श्रुत्वेन्द्रवचनं सर्व्वभूतानि मारिष। विस्मितान्यभवन्राजन् पूजयाञ्चक्रिरे तदा।

व्यसृजंश्च सुगन्धीनि पुष्पवर्षाणि हर्षिताः। नानारूपाणि विबुधा देवतूर्य्याण्यवादयन्।
दिदृक्षवश्चाप्रतिमं द्वैरथं नरसिंहयोः। देवदानवगन्धर्व्वाः सर्व्व एवावतस्थिरे। ४४६०
रथौ तयोः श्वेतहयौ दिव्यौ युक्तौ महात्मनोः। यौ तौ कर्णार्ज्जुनौ राजन् प्रहृष्टौ व्यवतिष्ठतां।
समागता लोकवीराः शङ्खान् दध्मुः पृथक् पृथक्। वासुदेवार्ज्जुनौ वीरौ कर्णशल्यौ च भारत।
तद्भीरुसंत्रासकरं युद्धं समभवत्तदा। अन्योन्यस्पर्द्धिनोरुग्रं शक्रशम्बरयोरिव।
तयोर्ध्वजौ वीतमलौ शुशुभाते रथे स्थितौ। राहुकेतू यथाकाशे उदितौ जगतः क्षये।
कर्णस्याशीविषनिभा रत्नसारमयी दृढा। पुरन्दरधनुःप्रख्या हस्तिकक्षा विराजते। ४४६५
कपिश्रेष्ठस्तु पार्थस्य व्यादितास्य इवान्तकः। दंष्ट्राभिर्भीषयन् भाभिर्दुर्निरीक्ष्यो रविर्यथा।
युद्धाभिलाषुको भूत्वा ध्वजो गाण्डीवधन्वनः। कर्णध्वजमुपातिष्ठत् स्वस्थानाद्वेगवान् कपिः।
उत्पपात महावेगः कक्षामभ्यहनत्तदा। नखैश्च दशनैश्चैव गरुडः पन्नगं यथा।
सा किङ्किणीकाभरणा कालपाशोपमायसी। अभ्यद्रवत् सुसंरब्धा हस्तिकक्षाऽथ तं कपिं।
तयोर्घोरतरे युद्धे द्वैरथे द्यूत आहिते। प्राकुर्व्वतां ध्वजौ युद्धं पूर्व्वं पूर्व्वतरं तदा। ४४७०
हया हयानभ्यहेषन् स्पर्द्धमानाः परस्परं। अविध्यत् पुण्डरीकाक्षः शल्यं नयनसायकैः।
शल्यश्च पुण्डरीकाक्षं तथैवाभिसमैक्षत। तत्राजयद्वासुदेवः शल्यं नयनसायकैः।
कर्णञ्चाप्यजयद्दृष्ट्या कुन्तीपुत्रो धनञ्जयः। अथाब्रवीत् सूतपुत्रः शल्यमाभाष्य सस्मितं।
यदि पार्थो रणे हन्यादद्य मामिह कर्हिचित्। किं करिष्यसि सङ्ग्रामे शल्य सत्यमथोच्यतां।
॥ शल्य उवाच ॥ यदि कर्ण रणे हन्यादद्य त्वां श्वेतवाहनः। उभावेकरथेनाहं हन्यां माधवपाण्डवौ। ४४७५
॥ सञ्जय उवाच ॥ एवमेव तु गोविन्दमर्ज्जुनः प्रत्यभाषत। तं प्रहस्याब्रवीत् कृष्णः सत्यं पार्थमिदं वचः।
पतेद्दिवाकरः स्थानाच्छुष्येदपि महोदधिः। शैत्यमग्निरियान्न त्वां हन्यात् कर्णो धनञ्जय।
यदि चैतत् कथञ्चित् स्यात् लोकपर्य्यासनं भवेत्। हन्यां कर्णं तथा शल्यं बाहुभ्यामेव संयुगे।
इति कृष्णवचः श्रुत्वा प्रहसन् कपिकेतनः। अर्ज्जुनः प्रत्युवाचेदं कृष्णमक्लिष्टकारिणं।
मम तावदपर्य्याप्तौ कर्णशल्यौ जनार्द्दन। सपताकध्वजं कर्णं सशल्यरथवाजिनं। ४४८०
सच्छत्रकवचञ्चैव सशक्तिशरकार्मुकं। द्रष्टाऽस्यद्य रणे कृष्ण शरैश्छिन्नमनेकधा।
अद्यैव सरथं साश्वं सशक्तिकवचायुधं। सञ्चूर्णितमिवारण्ये पादपं दन्तिना यथा।
अद्य राधेयभार्य्याणां वैधव्यं समुपस्थितं। ध्रुवं स्वप्नेष्वनिष्टानि ताभिर्दृष्टानि माधव।
द्रष्टाऽसि ध्रुवमद्यैव विधवाः कर्णयोषितः। न हि मे शाम्यते मन्युर्यदनेन पुरा कृतं।
कृष्णां सभागतां दृष्ट्वा मूढेनादीर्घदर्शिना। अस्मांस्तथाऽवहसता क्षिपता च पुनः पुनः। ४४८५
अद्य द्रष्टाऽसि गोविन्द कर्णमुन्मथितं मया। वारणेनेव मत्तेन पुष्पितं जगतीरुहं।
अद्य ता मधुरा वाचः श्रोताऽसि मधुसूदन। दिष्ट्या जयसि वार्ष्णेय इति कर्णे निपातिते।
अद्याभिमन्युजननीं प्रहृष्टः सान्त्वयिष्यसि। कुन्तीं पितृष्वसारञ्च प्रहृष्टः सन् जनार्द्दन।

अद्य वाष्पमुखीं कृष्णां सान्त्वयिष्यसि माधव । वाग्भिश्चामृतकल्पाभिर्धर्म्मराजञ्च पाण्डवं ।

इति श्रीमहाभारते कर्णपर्व्वणि कर्णार्ज्जुनद्वैरथे सप्ताशीतोऽध्यायः ॥ ८७ ॥

॥ सञ्जय उवाच ॥ तद्देवनागासुरसिद्धयक्षैर्गन्धर्व्वरक्षोऽप्सरसाञ्च सङ्घैः । ब्रह्मर्षिराजर्षिसुपर्णजुष्टं बभौ वियद्विस्मयनीयरूपं । ४४९०

नानद्यमानं निनदैर्म्मनोज्ञैर्व्वादित्रगीतस्तुतिनृत्यहासैः । सर्व्वेऽन्तरीक्षं ददृशुर्म्मनुष्याः खस्थाश्च तद्विस्मयनीयरूपं ।

ततः प्रहृष्टाः कुरुपाण्डुयोधा वादित्रशङ्खस्वनसिंहनादैः । विनादयन्तो वसुधां दिशश्च स्वनेन सर्व्वान् द्विषतो निजघ्नुः ।

नराश्वमातङ्गरथैः समाकुलं शराभिवृष्टिनिपातदुःसहं । अभीरुजुष्टं हतदेहसङ्कुलं रणाजिरं लोहितमाबभौ तदा ।

बभूव युद्धं कुरुपाण्डवानां यथा सुराणामसुरैः सहाभवत् । तथा प्रवृत्ते तुमुले सुदारुणे धनञ्जयस्याधिरथेश्च सायकैः ।

दिशश्च सैन्यञ्च शितैरजिह्मगैः परस्परं प्रावृणुतां सुदंशितैः । ततस्त्वदीयाश्च परे च सायकैः कृतेऽन्धकारे ददृशुर्न किञ्चन । ४४९५

भयातुरा एकरथौ समाश्रयंस्ततोऽभवत्तद्भुतमेव सर्व्वतः । ततोऽस्त्रमस्त्रेण परस्परन्तौ विधूयमानाविव पूर्व्वपश्चिमौ ।

घनान्धकारे वितते तमोनुदौ यथोदितौ तद्वदतीव रेजतुः । न चाभिसर्त्तव्यमिति प्रचोदिताः परे त्वदीयाश्च तथाऽवतस्थिरे ।

महारथौ तौ परिवार्य्य सर्व्वतः सुरासुरा शम्बरवासवाविव । मृदङ्गभेरीपणवानकस्वनैः ससिंहनादैर्व्विबभुर्नरोत्तमैः ।

शशाङ्कसूर्य्याविव मेघनिःस्वनैर्व्विरेजतुस्तौ पुरुषर्षभौ तदा । महाधनुर्म्मण्डलमध्यगावुभौ सुवर्च्चसौ वाणसहस्रदीधिती ।

दिधक्षमाणौ सचराचरं जगद्युगान्तसूर्य्याविव दुःसहौ रणे । उभावजेयावहितान्तकावुभावुभौ जिघांसू कृतिनौ परस्परं । ४५००

महाहवे वीतभयौ समीयतुर्म्महेन्द्रजम्भाविव कर्णपाण्डवौ । ततो महास्त्राणि महाधनुर्द्धरौ विमुञ्चमानाविषुभिर्भयानकैः ।

नराश्वनागानमितौ विजघ्नतुः परस्परञ्चापि महारथौ नृप । ततो विसस्रुः पुनरर्द्दिता नरा नरोत्तमाभ्यां कुरुपाण्डवाश्रयाः ।

सनागपत्त्यश्वरथा दिशो दश तथा यथा सिंहहता वनौकसः । ततस्तु दुर्य्योधनभोजसौबलाः कृपेण शारद्वतसूनुना सह ।

महारथाः पञ्च धनञ्जयाच्युतौ शरैः शरीरार्त्तिकरैरताडयन् । धनूंषि तेषामिषुधीन् ध्वजान् हयान् रथांश्च सूतांश्च धनञ्जयः शरैः ।

समं प्रमथ्याशु परान् समन्ततः शरोत्तमैर्द्दादशभिश्च सूतजं । अथाभ्यधावंस्त्वरिताः शतं रथाः शतङ्गजाश्चार्ज्जुनमाततायिनः । ४५०५

शकास्तथा वा जवनास्तु सादिनः सहैव काम्बोजवरैर्ज्जिघांसवः । वरायुधान् पाणिगतैः शरैः सह क्षुरैर्न्यकृन्तत्त्वरितः शिरांसि च ।

हयांश्च नागांश्च रथांश्च युध्यतां धनञ्जयः शत्रुगणान् क्षितौ क्षिणोत् । ततोऽन्तरीक्षे सुरतूर्य्यनिःस्वनाः ससाधुवादा हृषितैः समीरिताः ।

निपेतुरप्युत्तमपुष्पवृष्टयः सुगन्धिगन्धाः पवनेरिताः शुभाः । तदद्भुतं देवमनुष्यसाक्षिकं समीक्ष्य भूतानि विसिस्मियुस्तदा ।

तवात्मजः सूतसुतश्च न व्यथां न विस्मयं जग्मतुरेकनिश्चयौ । अथाब्रवीद्द्रोणसुतस्तवात्मजं करं करेण प्रतिपीड्य सान्त्वयन् ।

प्रसीद दुर्य्योधन शाम्य पाण्डवैरलं विरोधेन धिगस्तु विग्रहं । हतो गुरुर्ब्रह्मसमो महास्त्रवित्तथैव भीष्मप्रमुखा महारथाः । ४५१०

अहन्त्ववध्यो मम चापि मातुलः प्रशाधि राज्यं सह पाण्डवैश्चिरं। धनञ्जयः शाम्यति वारितो मया जनार्द्दनो नैव विरोधमिच्छति।

युधिष्ठिरो भूतहिते रतः सदा वृकोदरोऽप्यद्यवशस्तथा यमौ। त्वया तु पार्थैश्च कृते च संविदे प्रजाः शिवं प्राप्नुयुरिच्छया तव।

व्रजन्तु शेषाः स्वपुराणि बान्धवा निवृत्तयुद्धाश्च भवन्तु सैनिकाः। न चेद्वचः श्रोष्यसि मे नराधिप ध्रुवं प्रतप्तोऽसि हतोऽरिभिर्युधि।

इदञ्च दृष्टं जगता सह त्वया कृतं यदेकेन किरीटमालिना। यथा न कुर्य्याद्बलभिन्न चान्तको न चापि धाता भगवान्न यक्षराट्।

अतोऽपि भूयान् स्वगुणैर्धनञ्जयो न चातिवर्त्तिष्यति मे वचोऽखिलं। तवानुयात्राञ्च सदा करिष्यति प्रसीद राजेन्द्र शमं समाप्नुहि। ॥११

ममापि मानः परमः सदा त्वयि ब्रवीम्यतस्त्वां परमाच्च सौहृदात्। निवारयिष्यामि च कर्णमप्यहं यदा भवान् सप्रणयो भविष्यति।

वदन्ति मित्रं सहजं विचक्षणास्तथैव साम्ना च धनेन चार्ज्जितं। प्रतापतश्चोपनतं चतुर्विधं तदस्ति सर्वं तव पाण्डवेषु।

निसर्गतस्ते तव वीर बान्धवाः पुनश्च साम्ना समवाप्नुहि प्रभो। त्वयि प्रसन्ने यदि मित्रतां गता ध्रुवं कृतं स्याज्जगतस्त्वयाऽतुलं।

स एवमुक्तः सुहृदा वचो हितं विचिन्त्य निःश्वस्य च दुर्मनाऽब्रवीत्। यथा भवानाह सखे तथैव तन्ममापि विज्ञापयतो वचः शृणु।

निहत्य दुःशासनमुक्तवान् वचः प्रसह्य शार्दूलवदेष दुर्मतिः। वृकोदरस्तद्धृदये मम स्थितं न तत्परोक्षं भवतः कुतः शमं। ॥१०

न चापि कर्णं प्रसहेद्रणेऽर्जुनो महागिरिं मेरुमिवोग्रमारुतः। न चाश्वसिष्यन्ति पृथात्मजा मयि प्रसह्य वैरं बहुशो विचिन्त्य।

न चापि कर्णं गुरुपुत्र संयुगादुपारमेत्यर्हसि वक्तुमच्युत। श्रमेण युक्तो महताऽद्य फाल्गुनस्तमेष कर्णः प्रसभं हनिष्यति।

तमेवमुक्ताऽप्यनुनीय चासकृत् तवात्मजः स्वाननुशास्ति सैनिकान्। समाहिताभिद्रवताहितान्मम सबाणहस्ताः किमु जोषमासत।

इति श्रीमहाभारते कर्णपर्व्वणि अश्वत्थामवाक्ये अष्टाशीतोऽध्यायः ॥ ८८ ॥

॥ सञ्जय उवाच ॥ तौ शङ्खभेरीनिनदे समृद्धे समीयतुः श्वेतहयौ नराग्र्यौ। वैकर्त्तनः सूतपुत्रोऽर्जुनश्च दुर्मन्त्रिते तव पुत्रस्य राजन्।

यथा गजौ हैमवतौ प्रभिन्नौ प्रगृह्यदन्ताविव वाशितार्थे। तथा समाजग्मतुरुग्रवीर्य्यौ धनञ्जयश्चाधिरथिश्च वीरौ। ॥२

बलाहकेनेव महाबलाहको यदृच्छया वा गिरिणा यथा गिरिः। तथा धनुर्ज्यातलनेमिनिःस्वनैः समीयतुस्ताविषुवर्षवर्षिणौ।

प्रवृद्धशृङ्गद्रुमवीरुदोषधी प्रवृद्धनानाविधनिर्झरौकसौ । यथाऽचलौ वा चलितौ महाबलौ तथा महास्त्रैरितरेतरं हतः ।
स सन्निपातस्तु तयोर्महानभूत् सुरेशवैरोचनयोर्यथा पुरा । शरैर्विभुग्नाङ्गनियन्तृवाहयोः सुदुःसहोऽन्यैः कटुशोणितोदकः ।
प्रभूतपद्मोत्पलमत्स्यकच्छपौ महाह्रदौ पक्षिगणैरिवावृतौ । सुसन्निकृष्टावनिलोद्धतौ यथा तथा रथौ तौ ध्वजिनौ समीयतुः ।
उभौ महेन्द्रस्य समानविक्रमावुभौ महेन्द्रप्रतिमौ महारथौ । महेन्द्रवज्रप्रतिमैश्च सायकैर्महेन्द्रवृत्राविव सम्प्रजह्नतुः । ४५८०
सनागपत्त्यश्वरथे उभे बले विचित्रवर्णाभरणाम्बरायुधे । चकम्पतुर्विस्मयनीयरूपे वियद्गताश्चार्जुनकर्णसंयुगे ।
भुजाः सवस्त्राङ्गुलयः समुच्छ्रिताः ससिंहनादैर्हृषितैर्दिदृक्षुभिः । यदार्जुनो मत्त इव द्विपो द्विपं समभ्ययादाधिरथिं जिघांसया ।
उदक्रोशन् सोमकास्तत्र पार्थं पुरःसरा याह्यर्जुन भिन्धि कर्णम् । छिन्ध्यस्य मूर्द्धानमलञ्चिरेण श्रद्धाञ्च राज्याद्धृतराष्ट्रसूनोः ।
तथाऽस्माकं बहवस्तत्र योधाः कर्णं तथा याहि याहीत्यवोचन् । जह्यर्जुनं कर्ण शरैः सुतीक्ष्णैः पुनर्वनं यान्तु चिराय पार्थाः ।
ततः कर्णः प्रथमं तत्र पार्थं महेषुभिर्दशभिः प्रत्यविध्यत् । तञ्चार्जुनः प्रत्यविध्यच्छिताग्रैः कक्षान्तरे दशभिः संप्रहस्य । ४५८५
परस्परं तौ विशिखैः सुपुङ्खैस्ततक्षतुः सूतपुत्रोऽर्जुनश्च । परस्परं तौ विशिखैर्विमर्द्दे सुभीममभ्यापततुश्च हृष्टौ ।
ततोऽर्जुनः प्रामृजद्बद्धगोधौ भुजावुभौ गाण्डिवं चानुमृज्य । नाराचनालीकवराहकर्णान् क्षुरांस्तथा साञ्जलिकार्द्धचन्द्रान् ।
ते सर्व्वतः समकीर्य्यन्त राजन् पार्थेषवः कर्णरथं विशन्तः । अवाङ्मुखाः पक्षिगणा दिनान्ते विशन्ति केतार्थमिवाशु वृक्षं ।
यानर्जुनः सभ्रुकुटीकटाक्षं कर्णाय राजन्नसृजज्जितारिः । तान् सायकैर्ग्रसते सूतपुत्रः क्षिप्तान् क्षिप्तान् पाण्डवस्येषुसङ्घान् ।
ततोऽस्त्रमाग्नेयममित्रसाधनं मुमोच कर्णाय महेन्द्रसूनुः । भूम्यन्तरीक्षे च दिशोऽर्कमार्गं प्रावृत्य देहोऽस्य बभूव दीप्तः । ४५९०
योधाश्च सर्व्वे ज्वलिताम्बरा भृशं प्रदुद्रुवुस्तत्र विदग्धवस्त्राः । शब्दश्च घोरोऽतिबभूव तत्र यथा वने वेणुवनस्य दह्यतः ।
तदीक्ष्य कर्णो ज्वलनास्त्रमच्युतं स वारुणं तत्प्रशमार्थमाहवे । समुत्सृजन् सूतसुतः प्रतापवान् स तेन वह्निं शमयाम्बभूव ।
बलाहकौघश्च दिशस्तरस्वी चकार सर्व्वास्तिमिरेण संवृताः । ततो धरित्रीधरतुल्यरोधसः समन्ततो वै परिवार्य्य वारिणा ।
तैश्चापि रोषात्तु तथाविधोऽपि नीतः शमं वह्निरतिप्रचण्डः । बलाहकैश्चैव दिगन्तराणि व्याप्तानि सर्व्वाणि तथा नभश्च ।
तथा च सर्व्वास्तिमिरेण वै दिशो मेघैर्वृता न प्रदृश्येत किञ्चित् । अथापोवाह्याभ्रसंघांस्ततस्तान् वायव्यास्त्रेण ततः स कर्णात् । ४५९५
ततोऽत्यर्थं दयितं देवराज्ञः प्रादुश्चक्रे वज्रमतिप्रभावं । गाण्डीवं ज्यां विशिखांश्चानुमन्त्र्य धनञ्जयः शत्रुभिरप्रधृष्यः ।
ततः क्षुरप्राञ्जलिकार्द्धचन्द्रा नालीकनाराचवराहकर्णाः । गाण्डीवतः प्रादुरासन् सुतीक्ष्णाः सहस्रशो वज्रसमानवेगाः ।
ते कर्णमासाद्य महाप्रभावाः सुतेजना गार्द्धपत्राः सुवेगाः । गात्रेषु सर्व्वेषु हयेषु चापि शरासने युगचक्रे ध्वजे च ।
निर्भिद्य तूर्णं विविशुः सुतीक्ष्णास्तार्क्ष्यत्रस्ता भूमिमिवोरगास्ते । शराचिताङ्गो रुधिरार्द्रगात्रः कर्णस्तदा रोषविवृत्तनेत्रः ।
दृढज्यमानम्य समुद्रघोषं प्रादुश्चक्रे भार्गवास्त्रं महात्मा । महेन्द्रशस्त्राभिमुखान् विमुक्तान् छित्वा कर्णः पाण्डवस्येषु सङ्घान् । ४६००
तस्यास्त्रमस्त्रेण निहत्य सोऽस्य जघान संख्ये रथनागपत्तीन् । अमृष्यमाणश्च महेन्द्रकर्म्मा महारणे भार्गवास्त्रप्रतापात् ।

पाञ्चालानां प्रवरांश्चापि योधान् क्रोधाविष्टः सूतपुत्त्रस्तरस्वी । वाणैर्विव्याधाहवे शुक्लपुङ्खैः शिलाशितैरुक्मपुङ्खैः प्रसह्य ।
तत्पाञ्चालाः सोमकाश्चापि राजन् कर्णेनाजौ पीड्यमानाः शरौघैः । क्रोधाविष्टा विव्यधुस्तं समन्तात्तीक्ष्णैर्बाणैः सूतपुत्त्रं
समेताः ।
तान् सूतपुत्त्रो निजघान वाणैः पाञ्चालानां रथनागाश्वसंघान् । सम्मर्द्दयन् दाश्चगणैः प्रसह्य विद्धा हर्षात् सङ्गरे सूतपुत्त्रः ।
ते भिन्नदेहा व्यसवो निपेतुः कर्णेषुभिर्भूमितले स्वनन्तः । क्रुद्धेन सिंहेन यथेभयूथा महावने भीमबलेन तद्वत् । ४५५५
पाञ्चालानां प्रवरान् सन्निहत्य प्रसह्य योधानखिलानदीनः । ततः स राजन् विरराज कर्णो यथाऽम्बरे भास्कर उग्ररश्मिः ।
कर्णस्य मत्वा तु जयं त्वदीयाः परां मुदं सिंहनादांश्च चक्रुः । सर्व्वे ह्यमन्यन्त भृशाहतौ च कर्णेन कृष्णाविति कौरवेन्द्र ।
तत्तादृशं प्रेक्ष्य महारथस्य कर्णस्य वीर्य्यञ्च परैरसह्यं । दृष्ट्वा च कर्णेन धनञ्जयस्य तथाजिमध्ये निहतं तदस्त्रं ।
ततस्त्वमर्षी क्रोधसंरक्तनेत्रो वातात्मजः पाणिना पाणिमापीड्य । भीमोऽब्रवीदर्ज्जुनं सत्यसन्धममर्षितो निःश्वसन् जात
मन्युः ।
कथं नु पापोऽयमपेतधर्म्मः सूतात्मजः समरेऽद्य प्रसह्य । पाञ्चालानां योधमुख्याननेकान्निजघ्निवांस्तव जिष्णो समक्षं । ४५६०
पूर्व्वं देवैरजितं कालकेयैः साक्षात् स्थाणोर्ब्बाहुसंस्पर्शमेत्य । कथं नु त्वां सूतपुत्त्रः किरीटिन्नेषुभिर्दशभिः प्रागविध्यत् ।
त्वया क्षिप्तांश्चाग्रसद्वाणसङ्घानाश्चर्य्यमेतत्प्रतिभाति मेऽद्य । कृष्णापरिक्लेशमनुस्मर त्वं यथाऽब्रवीत् षण्ढतिलान् स्म वाचः ।
रूक्षाः सुतीक्ष्णाश्च हि पापबुद्धिः सूतात्मजोऽयं गतभीर्दुरात्मा । संस्मृत्य सर्व्वं तदिहाद्य पापं जह्याशु कर्णं युधि
सव्यसाचिन् ।
कस्मादुपेक्षां कुरुषे किरीटिन्नुपेक्षितुं नायमिहाद्य कालः । यया धृत्या सर्व्वभूतान्यजैषीर्ग्रासं ददत् खाण्डवे पावकाय ।
तया धृत्या सूतपुत्त्रं जहि त्वं अहञ्चैनं गदया पोथयिष्ये । अथाब्रवीद्वासुदेवोऽपि पार्थं दृष्ट्वा रथेषून् प्रतिहन्यमानान् । ४५६५
अमीमृदत् सर्व्वथा तेऽद्य कर्णो ह्यस्त्रैरस्त्रं किमिदं भोः किरीटिन् । स वीर किं मुह्यसि नावधत्से नदन्त्येते कुरवः
सम्प्रहृष्टाः ।
कर्णं पुरस्कृत्य विदुर्हि सर्व्वे तवास्त्रमस्त्रैर्व्विनिपात्यमानं । यया धृत्या निहतास्तामसाश्च युगे युगे राक्षसाश्चापि घोराः ।
दम्भोद्भवाश्चासुराश्चाहवेषु तया धृत्या जहि कर्णं त्वमद्य । अनेन चास्य क्षुरनेमिनाऽद्य संछिन्धि मूर्द्धानमरेः प्रसह्य ।
मया विसृष्टेन सुदर्शनेन वज्रेण शक्रो नमुचेरिवारेः । किरातरूपी भगवान् सुधृत्या त्वया महात्मा परितोषितोऽभूत् ।
तां त्वं पुनर्व्वीर धृतिं गृहीत्वा सहानुबन्धं जहि सूतपुत्त्रं । ततो महीं सागरमेखलां त्वं सपत्तनां ग्रामवतीं समृद्धां । ४५७०
प्रयच्छ राज्ञे निहतारिसङ्घां यशश्च पार्थातुलमाप्नुहि त्वं । स एवमुक्तोऽतिबलो महात्मा चकार बुद्धिं हि वधाय सौतेः ।
स चोदितो भीमजनार्द्दनाभ्यां स्मृत्वा तथात्मानमवेक्ष्य सर्व्वं । इहात्मनश्चागमने विदित्वा प्रयोजनं केशवमित्युवाच ।
प्रादुष्करोम्येष महास्त्रमुग्रं शिवाय लोकस्य वधाय सौतेः । तन्मेऽनुजानातु भवान् सुराश्च ब्रह्मा भवो वेदविदश्च सर्व्वे ।
इत्युच्य देवं स तु सव्यसाची नमस्कृत्वा ब्रह्मणे सोऽमितात्मा । तदुत्तमं ब्राह्ममसह्यमस्त्रं प्रादुश्चक्रे मनसा यद्विधेयं ।
तदस्य हत्वा विरराज कर्णो मुक्त्वा शरांस्मेघ इवाम्बुधाराः । समीक्ष्य कर्णेन किरीटिनस्तु तथाजिमध्ये निहतं तदस्त्रं । ४५७५
ततोऽमर्षी बलवान् क्रोधदीप्तो भीमोऽब्रवीदर्ज्जुनं सत्यसन्धं । न नु त्वाहुर्व्वेदितारं महास्त्रं ब्राह्मं विधेयं परमं जनास्तत् ।
तस्मादन्यद्योजय सव्यसाचिन्निति सोक्तोऽयोजयत् सव्यसाची । ततो दिशः प्रदिशश्चापि सर्व्वाः समावृणोत् सायकैर्भूरितेजाः ।

गाण्डीवमुक्तैर्भुजगैरिवोग्रैर्दिवाकरांशुप्रतिमैर्ज्वलद्भिः । सृष्टास्तु बाणा भरतर्षभेण शतं शतानीव सुवर्णपुङ्खाः ।
प्राच्छादयत् कर्णरथं क्षणेन युगान्तवह्न्यर्क्ककरप्रकाशाः । ततश्च शूलानि परश्वधानि चक्राणि नाराचशतानि चैव ।
निश्चक्रमुर्घोरतराणि योधास्ततो न्यहन्यन्त समन्ततोऽपि । छिन्नं शिरः कस्यचिदाजिमध्ये पपात योधस्य परस्य कायात् । ४५८०
भयेन सोऽप्याशु पपात भूमावन्यः प्रनष्टः पतितं विलोक्य । अन्यस्य सासिर्निपपात कृत्तो योधस्य बाहुः करिहस्ततुल्यः ।
अन्यस्य सव्यः सह चर्म्मणा च क्षुरप्रकृत्तः पतितो धरण्यां । एवं समस्तानपि योधमुख्यान् विध्वंसयामास किरीटमाली ।
शरैः शरीरान्तकरैः सुघोरैर्दौर्य्योधनं सैन्यमशेषमेव । वैकर्त्तनेनापि तथाजिमध्ये सहस्रशो बाणगणा विसृष्टाः ।
ते घोषिणः पाण्डवमभ्युपेयुः पर्ज्जन्यमुक्ता इव वारिधाराः । ततः स कृष्णञ्च किरीटिनञ्च वृकोदरञ्चाप्रतिमप्रभावः ।
त्रिभिस्त्रिभिर्भीमबलो निहत्य ननाद घोरं महता स्वरेण । स कर्णबाणाभिहतः किरीटी भीमं तथा प्रेक्ष्य जनार्द्दनञ्च । ४५८५
अमृष्यमाणः पुनरेव पार्थः शरान् दशाष्टौ च समुद्बबर्ह । स केतुमेकेन शरेण विद्ध्वा शल्यञ्चतुर्भिस्त्रिभिरेव कर्णं ।
ततः सुमुक्तैर्दशभिर्जघान सभापतिं काञ्चनवर्म्मनद्धं । स राजपुत्त्रो विशिरा विबाहुर्व्विवाजिसूतो विधनुर्व्विकेतुः ।
हतो रथाग्रादपतत् स रुग्णः परश्वधैः शाल इवावकृत्तः । पुनश्च कर्णं त्रिभिरष्टभिश्च द्वाभ्यां चतुर्भिर्द्दशभिश्च विद्ध्वा ।
चतुःशतान् विरथान् सायुधान् वै हत्वा रथानष्टशतान् जघान । सहस्रशोऽश्वांश्च पुनः स सादीनष्टौ सहस्राणि च पत्ति
वीरान् ।
कर्णं ससूतं सरथं सकेतुमदृश्यमञ्जोगतिभिः प्रचक्रे । अथाक्रोशन् कुरवो वध्यमाना धनञ्जयेनाधिरथिं समन्तात् । ४५९०
मुञ्चाभिविध्यार्ज्जुनमाशु कर्ण बाणैः पुरा हन्ति कुरून् समग्रान् । स चोदितः सर्व्वयत्नेन कर्णो मुमोच बाणान् सुबहूनभीक्ष्णं ।
ते पाण्डुपाञ्चालगणान्निजघ्नुर्म्मर्म्मच्छिदः शोणितपांशुदिग्धाः । तावुत्तमौ सर्व्वधनुर्धराणां महाबलौ सर्व्वसपत्नसाहौ ।
निजघ्नतुश्चाहितसैन्यमुग्रमन्योन्यमप्यस्त्रविदौ महास्त्रैः । अथोपयातस्त्वरितो दिदृक्षुर्म्मन्त्रौषधीभिर्व्विरुजो विशल्यः ।
नाशत्यदस्राभिमतोद्भवाद्यैरष्टाङ्गविद्यावनमुद्वहद्भिः । आबद्धपट्टप्रणवश्च चेता यथा सुरेशो दितिजैः क्षताङ्गः ।
कृतः सुहृद्भिर्भिषजाम्वरिष्ठैर्युधिष्ठिरस्तत्र सुवर्णवर्म्मा । तथोपयातं युधि धर्म्मराजं दृष्ट्वा मुदा सर्व्वभूतान्यनन्दन् । ४५९५
राहोर्व्विमुक्तं विमलं समग्रं चन्द्रं यथैवाभ्युदितं तथैव । दृष्ट्वा तु मुख्यावथ युध्यमानौ दिदृक्षवः शूरवरावरिघ्नौ ।
कर्णञ्च पार्थञ्च विलोकयन्तः खस्था महीस्थाश्च जनावतस्थुः । स कार्म्मुकज्यातलसन्निपातः सुमुक्तबाणस्तुमुलो बभूव ।
घ्नतोस्तथाऽन्योन्यमिषुप्रवेकैर्धनञ्जयस्याधिरथेश्च तत्र । ततो धनुर्ज्या सहसाऽतिकृष्टा सुघोषमच्छिद्यत पाण्डवस्य ।
तस्मिन् क्षणे पाण्डवं सूतपुत्त्रः समाचिनोत् क्षुद्रकाणां शतेन । निर्म्मुक्तसर्पप्रतिमैरभीक्ष्णं तैलप्रधौतैः खगपत्रवाजैः ।
षष्ट्या बिभेदाशु च वासुदेवमनन्तरं फाल्गुनमष्टभिश्च । पूषात्मजो मर्म्मसु निर्व्विभेद मरुत्सुतं चायुतशः शराग्र्यैः । ४६००
कृष्णञ्च पार्थञ्च तथा ध्वजञ्च पार्थानुगान् सोमकान् पातयंश्च । प्राच्छादयंस्ते निशितैः पृषत्कैर्जीमूतसङ्घा नभसीव सूर्य्यं ।
आगच्छतस्तान् विशिखैरनेकैर्व्यष्टम्भयत् सूतपुत्त्रः कृतास्त्रः । तैरस्त्रमस्त्रैर्व्विनिहत्य सर्व्वं जघान तेषां रथवाजिनागान् ।
तथा तु सैन्यप्रवरांश्च राजन्नभ्यर्द्दयन्मार्गणैः सूतपुत्त्रः । ते भिन्नदेहा व्यसवो निपेतुः कर्णेषुभिर्भूमितले स्वनन्तः ।
क्रुद्धेन सिंहेन यथा स्वयूथ्या महाबला भीमबलेन तद्वत् । पुनश्च पाञ्चालवरास्तथाऽन्ये तदन्तरे कर्णधनञ्जयस्य ।
प्रस्कन्दतो बलिना साधुमुक्तैः कर्णेन बाणैर्निहताः प्रसह्य । जयं मत्वा विपुलं वै त्वदीयास्तलान्निजघ्नुः सिंहनादांश्च
नेदुः । ४६०५

सर्व्वे ह्यमन्यन्त वशं गतौ तौ कर्णेन कृष्णाविति ते विमर्द्दे। ततो धनुर्ज्यामवमृज्य भीमं शरानशानाधिरथेर्व्विधम्य।
सुसंरब्धः कर्णशरक्षताङ्गो रणे पार्थः कौरवान् प्रत्यगृह्णात्। ज्याघातमुक्त्वाभ्यहनत्तलत्रे बाणान्धकारं सहसा च चक्रे।
कर्णञ्च शल्यञ्च कुरूंश्च सर्व्वान् वाणैरविध्यत् प्रसभं किरीटी। न पक्षिणो बभ्रमुरन्तरीक्षे तदा महास्त्रेण कृतेऽन्धकारे।
वायुर्व्वियत्स्थैरीरितो भूतसङ्घैरुवाह दिव्यः सुरभिस्तदानीं। प्रसह्य पार्थो दशभिः पृषत्कैः शल्यं तनुत्रे प्रहसन्नविध्यत्।
ततः कर्णं द्वादशभिः सुमुक्तैर्व्विद्धा पुनः सप्तभिरभ्यविध्यत्। स पार्थवाणासनवेगमुक्तैर्दृढाहतः पत्रिभिरुग्रवेगैः। ४५१०
विभिन्नगात्रः क्षतजोक्षिताङ्गः कर्णो बभौ रुद्र इवाततेषुः। प्रक्रीडमानोऽथ श्मशानमध्ये रौद्रे मुहूर्त्ते रुधिरार्द्रगात्रः।
ततस्त्रिभिस्तं त्रिदशाधिपोपमं शरैर्व्विभेदाधिरथिर्द्धनञ्जयं। शरांश्च पञ्च ज्वलितानिवोरगान् प्रवेशयामास जिघांसयाऽच्युतं।
ते वर्म्म भित्त्वा पुरुषोत्तमस्य सुवर्णचित्रा न्यपतन् सुयुक्ताः। वेगेन गामाविविशुः सुवेगाः स्नात्वा च कर्णाभिमुखाः प्रतीयुः।
तान् पञ्च भल्लैर्दशभिः सुमुक्तैस्त्रिधा त्रिधैकैकमथोच्चकर्त्त। धनञ्जयस्ते न्यपतन् पृथिव्यां महाहयस्तक्षकपुत्रपक्षाः।
ततः प्रजज्वाल किरीटमाली क्रोधेन कक्षं प्रदहन्निवाग्निः। तथा विनुन्नाङ्गमवेक्ष्य कृष्णं सर्व्वेषुभिः कर्णभुजप्रसृष्टैः। ४५१५
स कर्णमाकर्णविकृष्टसृष्टैः शरैः शरीरान्तकरैर्ज्वलद्भिः। मर्म्मस्वविध्यत् स चचाल दुःखाद्दैवाद्यवातिष्ठत धैर्य्यबुद्धिः।
ततः शरौघैः प्रदिशो दिशश्च रवेः प्रभाः कर्णरथश्च राजन्। अदृश्यमासीत् कुपिते धनञ्जये तुषारनीहारवृतं यथा नभः।
स चक्ररक्षानथ पादरक्षान् पुरःसरान् पृष्ठगोपांश्च सर्व्वान्। दुर्य्योधनेनानुमतानरिघ्नः समुच्चितान् सरथान् सारभूतान्।
द्विसाहस्रान् समरे सव्यसाची कुरुप्रवीरानृषभः कुरूणां। क्षणेन सर्व्वान् सरथाश्वसूतान् निनाय राजन् क्षयमेकवीरः।
ततः पलायन्त विहाय कर्णं तवात्मजाः कुरवो ये च शिष्टाः। हतानपाकीर्य्य शरक्षतांश्च लालप्यमानांस्तनयान् पितॄंश्च। ४५२०
स सर्व्वतः प्रेक्ष्य दिशो विशून्या भयावदीर्णैः कुरुभिर्व्विहीनः। न विव्यथे भारत तत्र कर्णः प्रहृष्ट एवार्ज्जुनमभ्यधावत्।

इति श्रीमहाभारते कर्णपर्व्वणि कर्णार्ज्जुनयुद्धे ऊननवतितमोऽध्यायः ॥ ८९ ॥

॥ सञ्जय उवाच ॥ ततः प्रयाताः शरपातमात्रमवस्थिताः कुरवो भिन्नसेनाः। विद्युत्प्रकाशं ददृशुः समन्ताद्धनञ्जयास्त्रं समुदीर्य्यमाणं।
तदर्ज्जुनास्त्रं ग्रसति स्म कर्णो वियद्गतैर्घोरतरैः शरैस्ततः। क्रुद्धेन पार्थेन भृशाभिसृष्टं वधाय कर्णस्य महाविमर्द्दे।
उदीर्य्यमाणं स्म कुरून् दहन्तं सुवर्णपुङ्खैर्व्विशिखैर्व्विमर्द्दे। कर्णस्त्वमोघेष्वसनं दृढज्यं विस्फारयित्वा विसृजञ्छरौघान्।
रामादुपात्तेन महामहिम्ना ह्याथर्व्वणेनारिविनाशनेन। तदर्ज्जुनास्त्रं व्यधमद्दहन्तं कर्णस्तु वाणैर्निशितैर्म्महात्मा। ४५२५
ततो विमर्द्दः सुमहान् बभूव तत्रार्ज्जुनस्याधिरथेश्च राजन्। अन्योन्यमासादयतोः पृषत्कैर्व्विषाणघातैर्द्विपयोरिवोग्रैः।
तथास्त्रसङ्घातसमावृतं तदा बभूव राजन् तुमुलं स्म सर्व्वतः। तत्कर्णपार्थौ शरवृष्टिवर्षैर्निरन्तरं चक्रतुरम्बरं तदा।
ततो जालं वाणमयं महान्तं सर्व्वेऽद्राक्षुः कुरवः सोमकाश्च। नान्यच्च भूतं ददृशुस्तदा ते वाणान्धकारे तुमुलेऽथ किञ्चित्।
तौ सन्दधानावनिशञ्च राजन् समस्यन्तौ चापि शराननेकान्। सन्दर्शयेतां युधि मार्गान् विचित्रान् धनुर्द्धरौ तौ विविधैः कृतास्त्रैः।
तयोरेवं युध्यतोराजिमध्ये सूतात्मजोऽभूदधिकः कदाचित्। पार्थः कदाचित्त्वधिकः किरीटी वीर्य्यास्त्रमायाबलपौरुषेण। ४५३०
दृष्ट्वा तयोस्तं युधि सम्प्रहारं परस्परस्यान्तरमीक्षमाणयोः। घोरं तयोर्दुर्व्विषहं रणेऽन्ये योधाः सर्व्वे विस्मयमभ्यगच्छन्।

ततो भूतान्यन्तरीक्षस्थितानि तौ कर्णपार्थौ प्रशशंसुर्नरेन्द्र। भोः कर्ण साध्वर्जुन साधु चेति वियत्सु वाणी श्रूयते सर्व्वतोऽपि।
तस्मिन् विमर्द्दे रथवाजिनागैस्तदाऽभिघातैर्द्दलिते भूतले च। ततस्तु पातालतले शयानो नागोऽश्वसेनः कृतवैरोऽर्ज्जुनेन।
राजंस्तदा खाण्डवदाहमुक्तो विवेश कोपाद्वसुधातलं यः। सनागवीरोऽथ समुत्पितोऽयतो मातुर्व्वधं संस्मरंस्तस्य वैरं।
अथोर्द्ध्वयातोर्द्ध्वगतिर्ज्जवेन संदृश्य कर्णार्ज्जुनयोर्व्विमर्द्दं। अयं हि कालोऽस्य दुरात्मनो वै पार्थस्य वैरप्रतियातनाय। ४६३५
सञ्चिन्त्य तूर्णं प्रविवेश चैव कर्णस्य राजन् शररूपधारी। ततोऽस्त्रसङ्घातसमाकुलं तदा बभूव जालं विततांशुजालं।
तौ कर्णपार्थौ शरसङ्घवृष्टिभिर्निरन्तरं चक्रतुरम्बरं तदा। तदाणजालैकमयं महान्तं सर्व्वेऽत्रसन् कुरवः सोमकाश्च।

नान्यत् किञ्चिद्ददृशुः सम्पतद्वै वाणान्धकारे तुमुलेऽतिमात्रं।
ततस्तौ पुरुषव्याघ्रौ सर्व्वलोकधनुर्द्धरौ। त्यक्तप्राणौ रणे वीरौ युद्धश्रममुपागतौ।
समुत्क्षेपैर्व्वीज्यमानौ सिक्तौ चन्दनवारिणा। सवालव्यजनैर्द्दिव्यैर्द्दिविस्थैरप्सरोगणैः। ४६४०
शक्रसूर्य्यकराब्जाभ्यां प्रमार्ज्जितमुखावुभौ।

कर्णोऽथ पार्थं न विशेषयेद्यदा भृशञ्च पार्थेन शराभितप्तः। ततस्तु वीरः शरविक्षताङ्गो दध्रे मनो ह्येकशयस्य तस्य।
ततो रिपुघ्नं समधत्त कर्णः सुसञ्चितं सर्पमुखं ज्वलन्तं। रौद्रं शरं सन्नतमुग्रधौतं पार्थार्थमत्यर्थचिराभिगुप्तं।
सदाऽर्च्चितं चन्दनचूर्णशायिनं सुवर्णतूणीरशयं महार्च्चिषं। आकर्णपूर्णञ्च विकृष्य कर्णः पार्थोन्मुखः सन्दधे चोत्तमौजाः।
प्रदीप्तमैरावतवंशसम्भवं शिरो जिहीर्षुर्युधि सव्यसाचिनः। ततः प्रजज्वाल दिशो नभश्च उल्काश्च घोराः शतशः प्रपेतुः। ४६४५
तस्मिंस्तु नागे धनुषि प्रयुक्ते हाहाकृता लोकपालाः सशक्राः। न चापि तं बुबुधे सूतपुत्रो वाणे प्रविष्टं योगबलेन नागं।
दशशततनयनोऽपि हि दृश्य बाणे प्रविष्टं निहत इति सुतो मे स्रस्तगात्रो बभूव। जलजकुसुमयोनिः श्रेष्ठभावो जितात्मा त्रिद
शपतिमवोचत् मा व्यथिष्ठा जयेश्रीः।

ततोऽब्रवीन्मद्रराजो महात्मा दृष्ट्वा कर्णं प्रहितेषुं तमुग्रं। न कर्ण ग्रीवामिषुरेष लप्स्यते समीक्ष्य सन्धत्स्व शरं शिरोघ्नं।
अथाब्रवीत् क्रोधसंरक्तनेत्रो मद्राधिपं सूतपुत्रस्तरस्वी। न सन्धत्ते द्विःशरं शल्य कर्णो न मादृशा जिह्मयुद्धा भवन्ति।
इतीदमुक्त्वा विससर्ज्ज तं शरं प्रयत्नतो वर्षगणाभिपूजितं। हतोऽसि वै फाल्गुन इत्युवाच त्वरन् स राजन् विजयार्थमुद्यतः। ४६५०
स सायकः कर्णभुजप्रसृष्टो हुताशनार्कप्रतिमः सुघोरः। गुणच्युतः कर्णधनुःप्रमुक्तो वियद्गतः प्राज्वलदन्तरीक्षे।
तं प्रेक्ष्य दीप्तं युधि माधवस्तु त्वरान्वितः सत्वरयैव लीलया। पदा विनिष्पिष्य रथोत्तमं स प्रावेशयत्पृथिवीं किञ्चिदेव।

क्षितिं गता जानुभिस्तेऽथ वाहा हेमच्छन्नाश्चन्द्रमरीचिवर्णाः।
सन्नीयमानं भुजगं दृष्ट्वा कर्णेन माधवः। आक्रमत्स्यन्दनं पद्भ्यां बलेन बलिनाम्वरः।
अवक्रान्ते रथे भूमौ जानुभ्यामगमन् हयाः। ४६५५

ततोऽन्तरीक्षे सुमहान्निनादः सम्पूजनार्थं मधुसूदनस्य। दिव्याश्च वाचः सहसा बभूवुर्द्दिव्यानि पुष्पाण्यथ सिंहनादाः।
तस्मिंस्तथा वै धरणीं निमग्ने रथे प्रयत्नान्मधुसूदनस्य। ततः शरः सोऽभ्यहनत् किरीटं तस्येन्द्रदत्तं सुदृढञ्च धीमतः।
अथार्ज्जुनस्योत्तमगात्रभूषणं धराविय़द्द्योसलिलेषु विश्रुतं। व्यालास्त्रसर्गोत्तमयत्नमन्युभिः शरेण मूर्ध्नः प्रजहार सूतजः।
दिवाकरेन्दुज्वलनप्रभत्विषं सुवर्णमुक्तामणिवज्रभूषितं। पुरन्दरार्थं तपसा प्रयत्नतः स्वयङ्कृतं यद्विभुना स्वयम्भुवा।
महार्हरूपं द्विषतां भयङ्करं विभर्त्तुरत्यर्थसुखं सुगन्धिनं। जिघांसते देवरिपून् सुरेश्वरः स्वयं ददौ यत् सुमनाः किरीटिने। ४६६०

हरान्पुपाश्चच्छलवित्तमो नृभिः पिनाकपाण्यग्निवायवेन्द्रोत्तमैः। सुरोत्तमैरप्यभिवन्द्यमर्हितं प्रसह्य नागेन जहार वज्रभृत्।
स दुष्टभावो वितथप्रतिज्ञः किरीटमत्यद्भुतमर्ज्जुनस्य। नागो महार्हं तपनीयचित्रं पार्थोत्तमाङ्गादहरत्तरस्वी।
तद्धेमजालाकततं सुघोरं आज्वलमानं निपपात भूमौ। तदुत्तमेषून्मथितं विषाग्निना प्रदीप्तमर्च्चिष्मदयोजितो प्रियं।
पपात पार्थस्य किरीटमुत्तमं दिवाकरोऽस्तादिव रक्तमण्डलः। स वै किरीटं बहुरत्नभूषितं जहार नागोऽर्ज्जुनमूर्द्धतो बलात्।
गिरेः सुजाताङ्कुरपुष्पितद्रुमं महेन्द्रवज्रः शिखरोत्तमं यथा। महीवियद्द्यौः सलिलञ्च वायुना प्रभग्नमुग्रं विनिघूर्णितं
यथा। ४६६५
अतीव शब्दो भुवनेषु वै तदाजनाश्च वक्तुम् व्यथिताश्च चस्खलुः। विना किरीटं शुशुभे स पार्थः श्यामो युवा नील इवोच्चशृङ्गः।
ततः समुद्ग्रथ्य सितेन वाससा स मूर्द्धजानव्यथितस्तदाऽर्ज्जुनः। विभासितः सूर्य्यमरीचिना दृढं शिरोगतेनोदयपर्व्वतो यथा।
गोकर्णा सुमुखीकृतेन इषुणा गोपुत्रसंप्रेषिता गोशब्दात्मजभूषणं सुविहितं सुव्यक्तगोसुप्रभं।
दृष्ट्वा गोगतकं जहार मुकुटं गोशब्दगोपूरि वै गोकर्णासनमर्द्दनश्च न ययावप्राप्य मृत्योर्व्वशं।
स सायकः कर्णभुजप्रसृष्टो हुताशनार्कप्रतिमो महार्हः। महोरगः कृतवैरोऽर्ज्जुनेन किरीटमाहत्य ततो व्यतीयात्। ४६७०
तद्यापि दग्ध्वा तपनीयचित्रं किरीटमाकृष्य तदर्ज्जुनस्य। इयेष गन्तुं पुनरेव तूर्णं दृष्टश्च कर्णेन ततोऽब्रवीत्तं।
मुक्तस्त्वयाऽहं त्वसमीक्ष्य कर्ण शिरो हृतं यन्न मयाऽर्ज्जुनस्य। समीक्ष्य मां मुञ्च रणे त्वमाशु हन्ताऽस्मि शत्रुं तव चात्मनश्च।
स एवमुक्तो युधि सूतपुत्रस्तमब्रवीत् को भवानुग्ररूपः। नागोऽब्रवीद्विद्धि कृतागसं मां पार्थेन मातुर्व्वधजातवैरं।
यदि स्वयं वज्रधरोऽस्य गोप्ता तथाऽपि याता पितृराजवेश्मनि।
॥ कर्ण उवाच ॥ न नाग कर्णोऽद्य रणे परस्य बलं समास्थाय जयं बुभूषेत्। न सन्दधीयां द्विः शरञ्चैव नाग यद्यर्ज्जुना
नां शतमेव हन्यां। ४६७५
तमाह कर्णः पुनरेव नागं तदाजिमध्ये रविसूनुरुत्तमः। व्यालास्त्रसर्गोत्तमयत्नमन्युभिर्हन्ताऽस्मि पार्थं सुसुखी व्रज त्वं।
इत्येवमुक्तो युधि नागराजः कर्णेन रोषादसहंस्तस्य वाक्यं। स्वयं प्रायात् पार्थवधाय राजन् कृत्वेषुरूपं विजिघांसुरुग्रः।
ततः कृष्णः पार्थमुवाच संख्ये महोरगं कृतवैरं जहि त्वं। स एवमुक्तो मधुसूदनेन गाण्डीवधन्वा रिपुवीर्य्यसाहः।
उवाच को ह्येष ममाद्य नागः स्वयं य आयाद्गरुडस्य वक्त्रं।
॥ कृष्ण उवाच ॥ योऽसौ त्वया खाण्डवे चित्रभानुं सन्तर्पयानेन धनुर्धरेण। वियद्गतो बाणनिकृत्तदेहो ह्यनेकरूपं निहताऽस्य
माता। ४६८०
स एष तद्वैरमनुस्मरन् वै त्वां प्रार्थयत्यात्मवधाय नूनं। नभश्च्युतां प्रज्वलितामिवोल्कां पश्यैनमायान्तममित्रसाह।
॥ सञ्जय उवाच ॥ ततः स जिष्णुः परिवृत्य रोषात् चिच्छेद षड्भिर्निशितैः सुधारैः। नागं वियत्तिर्य्यगिवोत्पतन्तं संच्छिन्नगा
त्रो निपपात भूमौ।
हते च तस्मिन् भुजगे किरीटिना स्वयं विभुः पार्थिव भूतलादथ। समुज्जहाराशु महाभुजः स तं रथं भुजाभ्यां पुरुषोत्तमस्ततः।
तस्मिन् मुहूर्त्ते दशभिः पृषत्कैः शिलाशितैर्व्वर्हिणवर्हवाजितैः। विव्याध कर्णः पुरुषप्रवीरो धनञ्जयं तिर्य्यगवेक्षमाणः।
ततोऽर्ज्जुनो द्वादशभिः सुमुक्तैर्व्वराहकर्णैर्निशितैः समर्प्य। नाराचमाशीविषतुल्यवेगमाकर्णपूर्णायतमुत्ससर्ज। ४६८५
स चित्रवर्म्मेषुवरो विदार्य्य प्राणान्निरस्यन्निव साधुमुक्तः। कर्णस्य पीत्वा रुधिरं विवेश वसुन्धरां शोणितदिग्धवाजः।

ततो ज्वलद्बाणनिपातकोपितो महोरगो दण्डविघट्टितो यथा । तदाशुकारी व्यसृजच्छरोत्तमान् महाविषः सर्प इवोत्तमं विषं ।

जनार्द्दनं द्वादशभिः पुराऽभिनत् नवैर्नवत्या च शरैस्तथाऽर्ज्जुनं । शरेण घोरेण पुनश्च पाण्डवं विदार्य्य कर्णो व्यनदज्जहास च ।

तमस्य हर्षं ममृषे न पाण्डवो बिभेद मर्म्माणि ततोऽस्य मर्म्मवित् । परःशतैः पत्रिभिरिन्द्रविक्रमस्तथा यथेन्द्रो बलमोजसा रणे ।

ततः शराणां नवतिं तदाऽर्ज्जुनः ससर्ज्ज कर्णेऽन्तकदण्डसन्निभां । तैः पत्रिभिर्व्विद्धतनुः स विव्यथे तथा यथा वज्रविदारितोऽचलः । ४६९०

मणिप्रवेकोत्तमवज्रहाटकैरलङ्कृतं चास्य वराङ्गभूषणं । प्रविद्धमुर्व्यां निपपात पत्रिभिर्द्धनञ्जयेनोत्तमकुण्डलेऽपि च ।

महाधनं शिल्पिवरैः प्रयत्नतः कृतं तदस्योत्तमवर्म्म भास्वरं । सुदीर्घकालेन ततोऽस्य पाण्डवः क्षणेन बाणैर्ब्बहुधा व्यशातयत् ।

स तं विवर्म्माणमथोत्तमेषुभिः शितैश्चतुर्भिः कुपितः पराभिनत् । स विव्यथेऽत्यर्थमरिप्रताडितो यथातुरः पित्तकफानिलज्वरैः ।

महाधनुर्म्मण्डलनिःसृतैः शितैः क्रियाप्रयत्नप्रहितैर्ब्बलेन च । ततक्ष कर्णं बहुभिः शरोत्तमैर्ब्बिभेद मर्म्मस्वपि चार्ज्जुनस्त्वरन् ।

दृढाहतः पत्रिभिरुग्रवेगैः पार्थेन कर्णो विविधैः शिताग्रैः । बभौ गिरिर्ग्गैरिकधातुरक्तः क्षरन् प्रपातैरिव रक्तमम्भः । ४६९५

ततोऽर्ज्जुनः कर्णमवक्रगैर्नरैः सुवर्णपुङ्खैः सुदृढैरयस्मयैः । यमाग्निदण्डप्रतिमैः स्तनान्तरे पराभिनत् क्रौञ्चमिवाद्रिमग्निजः ।

ततः शरावापमपास्य सूतजो धनुश्च तच्छक्रशरासनोपमं । ततो रथस्थः स मुमोह च स्खलन् प्रशीर्णमुष्टिः सुभृशाहतः प्रभो ।

न चार्ज्जुनस्तं व्यसने तदेषिवान् निहन्तुमार्य्यः पुरुषव्रते स्थितः । ततस्तमिन्द्रावरजः ससम्भ्रमादुवाच किं पाण्डव हे प्रमाद्यसे ।

नैवाहितानां सततं विपश्चितः क्षणं प्रतीक्षन्त्यपि दुर्ब्बलीयसां । विशेषतोऽरीन् व्यसनेषु पण्डितो निहत्य धर्म्मञ्च यशश्च विन्दते ।

तदेकवीरं तव चाहितं सदा त्वरस्व कर्णं सहसाऽभिमर्द्दितुं । पुरा समर्थः समुपैति सूतजो विध्य त्वमेनं नमुचिं यथा हरिः । ४७००

ततस्तथेवेत्यभिपूज्य सत्वरं जनार्द्दनं कर्णमविध्यदर्ज्जुनः । शरोत्तमैः सर्व्वकुरूत्तमस्त्वरन् तथा यथा शम्बरहा पुरा बलिं ।

साश्वन्तु कर्णं सरथं किरीटी समाचिनोद्भारत वत्सदन्तैः । प्रच्छादयामास दिशश्च बाणैः सर्व्वप्रयत्नात्तपनीयपुङ्खैः ।

स वत्सदन्तैः पृथुपीनवक्षाः समाचितः सोऽधिरथिर्व्विभाति । सुपुष्पिताशोकपलाशशाल्मलिर्यथाऽचलश्चन्दनकाननायुतः ।

शरैः शरीरे बहुभिः समर्पितैर्व्विभाति कर्णः समरे विशाम्पते । महीरुहैराचितसानुकन्दरो यथा गिरीन्द्रः स्फुटकर्णिकारवान् ।

स बाणसङ्घान् बहुधा व्यवासृजन् विभाति कर्णः शरजालरश्मिवान् । सलोहितो रक्तगभस्तिमण्डलो दिवाकरोऽस्ताभिमुखो यथा तथा । ४७०५

बाह्वन्तरादाधिरथेर्व्विमुक्तान् बाणान्महाहीनिव दीप्यमानान् । व्यध्वंसयन्नर्ज्जुनबाहुमुक्ताः शराः समासाद्य दिशः शिताग्राः ।

ततः स कर्णः समवाप्य धैर्य्यं बाणान् विमुञ्चन् कुपिताहिकल्पान् । विव्याध पार्थं दशभिः पृषत्कैः कृष्णञ्च षड्भिः कुपिताहिकल्पैः ।

ततः किरीटी भृशमुग्रनिःस्वनं महाशरं सर्पविषानलोपमं । अयस्मयं रौद्रमहास्त्रसम्भृतं महाहवे क्षेप्तुमना महामतिः ।

कालो ह्यदृश्यो नृप विप्रकोपान्निदर्शयन् कर्णवधं ब्रुवाणः । भूमिस्तु चक्रं ग्रसतीत्यवोचत् कर्णस्य तस्मिन् वधकाल आगते ।
ततस्तदस्त्रं मनसः प्रनष्टं यद्भार्गवोऽस्मै प्रददौ महात्मा । वामं च चक्रं ग्रसते मेदिनी स्म प्राप्ते तस्मिन् वधकाले नृवीर । ४७१०
ततो रथो घूर्णितवान्नरेन्द्र शापात्तदा ब्राह्मणसत्तमस्य । ततश्चक्रमपतत्तस्य भूमौ स विह्वलः समरे सूतपुत्रः ।
सवेदिकश्चैत्य इवातिमात्रः सुपुष्पितो भूमितले निमग्नः । घूर्णे रथे ब्राह्मणस्याभिशापाद्रामादुपात्ते त्वविभाति चास्त्रे ।
छिन्ने शरे सर्पमुखे च घोरे पार्थेन तस्मिन् विषसाद कर्णः । अमृष्यमाणो व्यसनानि तानि हस्तौ विधुन्वन् स विगर्हमाणः ।
धर्मप्रधानं किल पाति धर्म इत्यब्रुवन् धर्मविदः सदैव । वयञ्च धर्मे प्रयताम नित्यं यथाबलं शक्तितया श्रुतञ्च ।
स चापि निघ्नाति न पाति भक्तान् मन्ये न नित्यं परिपाति धर्मः । एवं ब्रुवन् प्रस्खलिताश्वसूतो विचाल्यमानोऽर्जुनबा
णपातैः । ४७१५

मर्माभिघाताच्छिथिलः क्रियासु पुनः पुनर्धर्ममसौ जगर्हे ।
ततः शरैर्भीमतरैरविध्यत्त्रिभिराहवे । हस्ते कृष्णं तथा पार्थमभ्यविध्यच्च सप्तभिः ।
ततोऽर्जुनः सप्तदश तीक्ष्णवेगानजिह्मगान् । इन्द्राशनिसमान् घोरानसृजत् पावकोपमान् ।
निर्भिद्य ते भीमवेगा न्यपतन् पृथिवीतले । कम्पितात्मा ततः कर्णः शक्त्या चेष्टामदर्शयत् ।
बलेनाथ स संस्तभ्य ब्रह्मास्त्रं समुदैरयत् । ऐन्द्रं ततोऽर्जुनश्चापि तं दृष्ट्वाऽभ्युपमन्त्रयत् । ४७२०
गाण्डीवं ज्याञ्च बाणांश्च सोऽनुमन्त्र्य परन्तपः । व्यसृजच्छरवर्षाणि वर्षाणीव पुरन्दरः ।
ततस्तेजोमया बाणा रथात् पार्थस्य निःसृताः । प्रादुरासन् महावीर्याः कर्णस्य रथमन्तिकात् ।
तान् कर्णस्त्वग्रतो न्यस्तान् मोघांश्चक्रे महारथः । ततोऽब्रवीद्वृष्णिवीरस्तस्मिन्नस्त्रे विनाशिते ।
विसृजास्त्रं परं पार्थ राधेयो ग्रसते शरान् । ततो ब्रह्मास्त्रमतुलं संमन्त्र्य समयोजयत् ।
छादयित्वा ततो बाणैः कर्णं प्रत्यस्यदर्जुनः । ततः कर्णः शितैर्बाणैर्ज्यां चिच्छेद सुतेजनैः । ४७२५
द्वितीयाञ्च तृतीयाञ्च चतुर्थीं पञ्चमीन्तथा । षष्ठीमथास्य चिच्छेद सप्तमीञ्च तथाऽष्टमीं ।
नवमीं दशमीञ्चास्य तथैवैकादशीं वृषः । ज्याशतं शतसन्धानः स कर्णो नावबुध्यते ।
ततो ज्यां विनिधायान्यामभिमन्त्र्य च पाण्डवः । शरैरवाकिरत् कर्णं दीप्यमानैरिवाहिभिः ।
तस्य ज्याच्छेदनं कर्णो ज्यावधानञ्च संयुगे । नान्वबुध्यत शीघ्रत्वात्तदद्भुतमिवाभवत् ।
अस्त्रैरस्त्राणि राधेयः प्राहणत् सव्यसाचिनः । चक्रे चाप्यधिकं पार्थात् स्ववीर्य्यमतिदर्शयन् । ४७३०
ततः कृष्णोऽर्जुनं दृष्ट्वा कर्णास्त्रेण च पीडितं । अभ्यस्येत्यब्रवीत् पार्थमातिष्ठास्त्रं व्रजेति च ।
ततोऽग्निसदृशं घोरं शरं सर्पविषोपमं । अश्मसारमयं दिव्यमभिमन्त्र्य परन्तपः ।
रौद्रमस्त्रं समाधाय क्षेप्तुकामः किरीटवान् । ततोऽग्रसन्मही चक्रं राधेयस्य तदा नृप ।
ततोऽवतीर्य्य राधेयो रथादाशु समुद्यतः । चक्रं भुजाभ्यामालम्ब्य समुत्क्षेप्तुमियेष सः ।
सप्तद्वीपा वसुमती सशैलवनकानना । गीर्णचक्रा समुत्क्षिप्ता कर्णेन चतुरङ्गुलं । ४७३५
ग्रस्तचक्रस्तु राधेयः क्रोधादश्रूण्यवर्त्तयत् । अर्जुनं वीक्ष्य संरब्धमिदं वचनमब्रवीत् ।
भो भो पार्थ महेष्वास मुहूर्त्तं परिपालय । यावच्चक्रमिदं ग्रस्तमुद्धरामि महीतलात् ।

सव्यचक्रं महीग्रस्तं दृष्ट्वा दैवादिदं मम। पार्थ कापुरुषाचीर्णमभिसन्धिं विसर्ज्जय।
न त्वं कापुरुषाचीर्णं मार्गमास्थातुमर्हसि। ख्यातस्त्वमसि कौन्तेय विशिष्टो रणकर्म्मसु।
विशिष्टतरमेव त्वं कर्त्तुमर्हसि पाण्डव। प्रकीर्णकेशे विमुखे ब्राह्मणेऽथ कृताञ्जलौ। ४७४०
शरणागते न्यस्तशस्त्रे याचमाने तथाऽर्ज्जुन। अवाणे भ्रष्टकवचे भ्रष्टभग्नायुधे तथा।
न विमुञ्चन्ति शस्त्राणि शूराः साधुव्रते स्थिताः। त्वञ्च शूरतमो लोके साधुवृत्तश्च पाण्डव।
अभिज्ञो युद्धधर्म्माणां वेदान्तावभृथाप्लुतः। दिव्यास्त्रविदमेयात्मा कार्त्तवीर्य्यसमो युधि।
यावच्चक्रमिदं ग्रस्तमुद्धरामि महाभुज। न मां रथस्थो भूमिष्ठं विकलं हन्तुमर्हसि।
न वासुदेवात्त्वत्तो वा पाण्डवेय बिभेम्यहं। त्वं हि क्षत्रियदायादो महाकुलविवर्द्धनः। ४७४५
अतस्त्वां प्रब्रवीम्येष मुहूर्त्तं क्षम पाण्डव।

पराभवो मातृगुरुद्विजेश्वरैः समुद्रपर्य्यङ्कधरा महाद्रिभिः। कृतो ममायं नहि नश्वया कृता नतेऽभिमानं भविता च मो ध्रुवं।

इति श्रीमहाभारते कर्णपर्व्वणि कर्णरथचक्रग्रसने नवतितमोऽध्यायः॥ ९०॥

॥ सञ्जय उवाच॥ तमब्रवीद्वासुदेवो रथस्थो राधेय दिष्ट्या स्मरसीह धर्म्मं। प्रायेण नीचा व्यसनेषु मग्ना निन्दन्ति दैवं कुकृतं न तु स्वं।

यद्द्रौपदीमेकवस्त्रां सभायामानाययेस्त्वञ्च सुयोधनश्च। दुःशासनः शकुनिः सौबलश्च नत्वां कर्ण प्रत्यभात्तत्र धर्म्मः।
यदा सभायां राजानमनक्षज्ञं युधिष्ठिरं। अजैषीच्छकुनिर्ज्ञानात् क्व ते धर्म्मस्तदा गतः। ४७५०
वनवासे व्यतीते च कर्ण वर्षे त्रयोदशे। न प्रयच्छसि यद्राज्यं क्व ते धर्म्मस्तदा गतः।
यद्भीमसेनं सर्पैश्च विषयुक्तैश्च भोजनैः। आचरत्त्वन्मते राजा क्व ते धर्म्मस्तदा गतः।
यद्वारणावते पार्थान् सुप्तान् जतुगृहे तदा। आदीपयस्त्वं राधेय क्व ते धर्म्मस्तदा गतः।
यदा रजस्वलां कृष्णां दुःशासनवशे स्थितां। सभायां प्राहसः कर्ण क्व ते धर्म्मस्तदा गतः।
यदनार्य्यैः पुरा कृष्णां क्लिश्यमानामनागसं। उपप्रेक्षसि राधेय क्व ते धर्म्मस्तदा गतः। ४७५५
विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः। पतिमन्यं वृणीष्वेति वदंस्त्वं गजगामिनीं।
उपप्रेक्षसि राधेय क्व ते धर्म्मस्तदा गतः। राज्यलुब्धः पुनः कर्ण समाह्वयसि पाण्डवान्।
यदा शकुनिमाश्रित्य क्व ते धर्म्मस्तदा गतः। यदाऽभिमन्युं बहवो युद्धे जघ्नुर्महारथाः।
परिवार्य्य रणे बालं क्व ते धर्म्मस्तदा गतः।

यद्येष धर्म्मस्तत्र न विद्यते हि किं सर्व्वथा तालुविशोषणेन। अद्येह धर्म्याणि विधत्स्व सूत तथाऽपि नैवाद्य विमोक्ष्यसे हि। ४७६०
नलो ह्यक्षैर्निर्ज्जितः पुष्करेण पुनर्यशो राज्यमवाप वीर्य्यात्। प्राप्तास्तथा पाण्डवा बाहुवीर्य्यात् सर्व्वे समस्ताः परिवृत्तलोभाः।
निहत्य शत्रून् समरे प्रवृद्धान् ससोमकाः राज्यमवाप्नुयुस्ते। तथा गता धार्त्तराष्ट्रा विनाशं धर्म्माभिगुप्तैः सततं नृसिंहैः।

॥ सञ्जय उवाच॥ एवमुक्तस्तदा कर्णो वासुदेवेन भारत। लज्जयाऽवनतो भूत्वा नोत्तरं किञ्चिदुक्तवान्।
क्रोधात् प्रस्फुरमाणौष्ठो धनुरुद्यम्य भारत। योधयामास वै पार्थं महावेगपराक्रमः।
ततोऽब्रवीद्वासुदेवः फाल्गुनं पुरुषर्षभं। दिव्यास्त्रेणैव निर्भिद्य पातयस्व महाबल। ४७६५

एवमुक्तस्तु देवेन क्रोधमाभात्तदाऽर्ज्जुनः। मन्युमभ्याविशद्‌घोरं स्मृत्वा तत्तु धनञ्जयः।
तस्य क्रुद्धस्य सर्व्वेभ्यः स्रोतोभ्यस्तेजसोऽर्च्चिषः। प्रादुरासंस्तदा राजंस्तदद्भुतमिवाभवत्।
तत्समीक्ष्य ततः कर्णो ब्रह्मास्त्रेण धनञ्जयं। अभ्यवर्षत् पुनर्यत्नमकरोद्रथमज्जने।
ब्रह्मास्त्रेणैव तं पार्थो ववर्ष शरवृष्टिभिः। तदस्त्रमस्त्रेणावार्य्य प्रजहार च पाण्डवः।
ततोऽन्यदस्त्रं कौन्तेयो दयितं जातवेदसः। मुमोच कर्णमुद्दिश्य तत्प्रजज्वाल तेजसा। ४७७०
वारुणेन ततः कर्णः शमयामास पावकं। जीमूतैश्च दिशः सर्व्वाश्चक्रे तिमिरदुर्द्दिनाः।
पाण्डवेयस्त्वसंभ्रान्तो वायव्यास्त्रेण वीर्य्यवान्। अपोवाह तदाऽभ्राणि राधेयस्य प्रपश्यतः।
ततः शरं महाघोरं ज्वलन्तमिव पावकं। आददे पाण्डुपुत्रस्य सूतपुत्रो जिघांसया।
योज्यमाने ततस्तस्मिन् वाणे धनुषि पूजिते। चचाल पृथिवी राजन् सशैलवनकानना।
ववौ सशर्करो वायुर्दिशश्च रजसावृताः। हाहाकारश्च संजज्ञे सुराणां दिवि भारत। ४७७५
तमिषुं सन्धितं दृष्ट्वा सूतपुत्रेण मारिष। विषादं परमं जग्मुः पाण्डवा दीनचेतसः।
स सायकः कर्णभुजप्रमुक्तः शक्राशनिप्रख्यरुचिः शिताग्रः। भुजान्तरं प्राप्य धनञ्जयस्य विवेश वल्मीकमिवोरगोत्तमः।
स गाढविद्धः समरे महात्मा विघूर्णमानः श्लथहस्तगाण्डिवः। चचाल बीभत्सुरमित्रमर्द्दनः क्षितेः प्रकम्पे च यथाऽचलोत्तमः।
तदन्तरं प्राप्य वृषो महारथो रथाङ्गमुर्व्वीगतमुज्जिहीर्षुः। रथादवप्लुत्य निगृह्य दोर्भ्यां शशाक दैवान्न महाबलोऽपि।
ततः किरीटी प्रतिलभ्य संज्ञां जग्राह वाणं यमदण्डकल्पं। ततोऽर्ज्जुनः प्राञ्जलिकं महात्मा ततोऽब्रवीद्वासुदेवोऽपि पार्थं। ४७८०
छिन्ध्यस्य मूर्द्धानमरेः शरेण न यावदारोहति वै रथं वृषः। तथैव संपूज्य स तद्वचः प्रभोस्ततः क्षुरं प्रज्वलितं प्रगृह्य।
जघान कक्षाममलार्कवर्णां महारथे रथचक्रे विमग्ने। तं हस्तिकक्षाप्रवरञ्च केतुं सुवर्णमुक्तामणिवज्रपृष्ठं।
ज्ञानप्रकर्षोत्तमशिल्पियुक्तैः कृतं सुरूपं तपनीयचित्रं। जयास्पदन्तव सैन्यस्य नित्यममित्रवित्रासनमीड्यरूपं।
विख्यातमादित्यसमस्य लोके त्विषा समं पावकभानुचन्द्रैः। ततः क्षुरप्रेण सुसंशितेन सुवर्णपुङ्खेन हुताग्निवर्चसा।
श्रिया ज्वलन्तं ध्वजमुन्ममाथ महारथस्याधिरथेः किरीटी। यशश्च दर्पश्च तदा प्रियाणि सर्व्वाणि कार्य्याणि च तेन केतुना। ४७८५
सार्द्धं कुरूणां हृदयानि चापतद्बभूव हाहेति च निःस्वनो महान्। दृष्ट्वा ध्वजं पातितमाशुकारिणा कुरुप्रवीरेण निकृत्तमाहवे।
नाशंसिरे सूतपुत्रस्य सर्व्वे जयं तदा भारत ये त्वदीयाः। अथ त्वरन् कर्णवधाय पार्थो महेन्द्रवज्रानलदण्डसन्निभं।
आदत्त पार्थोऽञ्जलिकं निषङ्गात् सहस्ररश्मेरिव रश्मिमुत्तमं। मर्म्मच्छिदं शोणितमांसदिग्धं वैश्वानरार्कप्रतिमं महार्हं।
नराश्वनागासुरदस्युहन्तारं पञ्चाशत्प्राणगतिमुग्रवेगं। सहस्रनेत्राशनितुल्यवीर्य्यं कालाननं व्यात्तमिवातिघोरं।
पिनाकनारायणचक्रसन्निभं भयङ्करं प्राणभृतां विनाशनं। जग्राह पार्थः स शरं प्रहृष्टो यो देवसङ्घैरपि दुर्न्निवार्य्यः। ४७९०
संपूजितो यः सततं महात्मा देवासुरान् यो विजयेन्महेषुः। तं वै प्रबद्धं प्रसमीक्ष्य युद्धे चचाल सर्व्वं सचराचरं जगत्।
स्वस्ति जगतस्त्वृषयः प्रचक्रुस्तमुद्यतं प्रेक्ष्य महाहवेषु। ततस्तु तं वै शरमप्रमेयं गाण्डीवधन्वा धनुषि व्ययोजयत्।
युक्त्वा महास्त्रेण परेण चापं विकृष्य गाण्डीवमुवाच सत्वरं। अयं महास्त्रप्रहितो महाशरः शरीरहृच्चासुहरश्च दुर्हृदः।
तपोऽस्ति तप्तं गुरवश्च तोषिता मया यदीष्टं सुहृदां श्रुतं तथा। अनेन सत्येन निहन्त्वयं शरः सुसंशितं कर्णमरिं ममोर्जितं।

इत्यूचिवांस्तं प्रमुमोच बाणं धनञ्जयः कर्णवधाय घोरं । कृत्यामथर्व्वाङ्गिरसीमिवोग्रां दीप्तामसह्यां युधि मृत्युनाऽपि ।४७९९
ब्रुवन् किरीटी नितरां प्रहृष्टो ह्ययं शरो मे विजयावहोऽस्तु । जिघांसुरर्केन्दुसमप्रभावः कर्णं मयाऽस्तो नयतां यमाय ।
तेनेषुवीर्य्येण किरीटमाली प्रहृष्टरूपो विजयावहेन । जिघांसुरर्केन्दुसमप्रभेण चक्रे विषक्तं रिपुमाततायी ।
तथा विमुक्तो बलिनाऽर्कतेजाः प्रज्वालयामास दिशो नभश्च । ततोऽर्ज्जुनस्तस्य शिरो जहार वृत्रस्य वज्रेण यथा महेन्द्रः ।
शरोत्तमेनाञ्जलिकेन राजन् तदा महास्त्रप्रतिमन्त्रितेन । पार्थोऽपराह्णे शिर उच्चकर्त्त वैकर्त्तनस्याथ महेन्द्रसूनुः ।
तत्प्रापतच्चाञ्जलिकेन छिन्नमथास्य कायो निपपात पश्चात् । तदुद्यतादित्यसमानतेजसं शरन्नभोमध्यगभास्करोपमं । ४८००
वराङ्गमुर्व्यामपतच्चमूमुखे दिवाकरोऽस्तादिव रक्तमण्डलः । ततोऽस्य देहं सततं सुखोचितं सुरूपमत्यर्थमुदारकर्म्मणः ।
परेण कृच्छ्रेण शिरः समत्यजद्गृहं महर्द्धीव ससंगमीश्वरः । शरैर्व्विभिन्नं व्यसु तत् सुवर्च्चसः पपात कर्णस्य शरीरमुच्छ्रितं ।
स्रवद्व्रणं गैरिकतोयविस्रवं गिरेर्यथा वज्रहतं महाशिरः । देहाच्च कर्णस्य निपातितस्य तेजः सूर्य्यं खं वितत्याविवेश ।
तदद्भुतं सर्व्वमनुष्ययोधाः संदृष्टवन्तो निहते स्म कर्णे । ततः शङ्खान् पाण्डवा दध्मुरुच्चैर्दृष्ट्वा कर्णं पातितं फाल्गुनेन ।
तथैव कृष्णश्च धनञ्जयश्च हृष्टौ यमौ दध्मतुर्व्वारिजातौ । तं सोमकाः प्रेक्ष्य हतं शयानं सैन्यैः सार्द्धं सिंहनादान् प्रचक्रुः ।४८०५
तूर्य्याणि संजघ्नुरतीव हृष्टा वासांसि चैवादुधुवुर्भुजांश्च । संवर्द्धयन्तश्च नरेन्द्रयोधाः पार्थं समाजग्मुरतीव हृष्टाः ।
बलान्विताश्चापरे ह्यप्यनृत्यन्नन्योन्यमाश्लिष्य नदन्त ऊचुः । दृष्ट्वा तु कर्णं भुवि चाविपन्नं कृत्तं रथात् सायकैरर्ज्जुनस्य ।
महानिलेनाद्रिमिवापविद्धं यज्ञावसानेऽग्निमिव प्रशान्तं । रराज कर्णस्य शिरो निकृत्तमस्तं गतं भास्करस्येव बिम्बं ।
प्रताप्य सेनां स तु पाण्डवीं रणे शरांशुभिर्भास्करतुल्यदीधितिः । किरीटिकालेन सुवर्णभास्करोऽप्यनीयतास्तं दिवसावसाने ।

शरैराचितसर्व्वाङ्गः शोणितौघपरिप्लुतः । विभाति देहः कर्णस्य स्वरश्मिभिरिवांशुमान् । ४८१०

प्रताप्य सेनामामित्रीं दीप्तैः शरगभस्तिभिः । बलिनाऽर्ज्जुनकालेन नीतोऽस्तं कर्णभास्करः ।

अस्तं गच्छन् यथादित्यः प्रभामादाय गच्छति । तथा जीवितमादाय कर्णस्येषुर्जगाम सः ।

अपराह्णेऽपराह्णस्य सूतपुत्रस्य मारिष । छिन्नमञ्जलिकेनाजौ सोत्सेधमपतच्छिरः ।

उपर्य्युपरि सैन्यानामस्य शत्रोस्तदाऽञ्जसा । शिरः कर्णस्य सोत्सेधमिषुः सोऽप्यहरत् द्रुतं ।

कर्णन्तु शूरं पतितं पृथिव्यां शराचितं शोणितदिग्धगात्रं । दृष्ट्वा शयानं भुवि मद्रराजश्छिन्नध्वजेनाथ ययौ रथेन । ४८१५
हते कर्णे कुरवः प्राद्रवन्त भयार्द्दिता गाढविद्धाश्च संख्ये । अवेक्षमाणा मुहुरर्ज्जुनस्य ध्वजं महान्तं वपुषा ज्वलन्तं ।
सहस्रनेत्रप्रतिमानकर्म्मणः सहस्रनेत्रप्रतिमाननं शुभं । सहस्ररश्मिर्द्दिनसंक्षये यथा तथाऽपतत्कर्णशिरो वसुन्धरां ।

इति श्रीमहाभारते कर्णपर्व्वणि कर्णवधे एकनवतोऽध्यायः ॥ ९१ ॥

॥ सञ्जय उवाच ॥ शल्यस्तु कर्णे निहते किरीटिना चलं चलं प्रसमीक्ष्यान्तरूपं । ययौ हते चाधिरथौ पदानुगे रथेन सञ्छिन्नपरिच्छदेन ।

शल्यस्तु कर्णार्ज्जुनयोर्व्विमर्द्दे बलानि दृष्ट्वा मृदितानि बाणैः । ययौ परीतो भृशमन्युनाऽसौ रथेन संछिन्नपरिच्छदेन ।
निपातितस्यन्दनवाजिनागं बलञ्च दृष्ट्वा हतसूतपुत्रं । दुर्य्योधनोऽश्रुपरिपूर्णनेत्रो दीनो मुहुर्न्निःश्वसदार्त्तरूपः । ४८२०
कर्णन्तु शूरं पतितं पृथिव्यां शराचितं शोणितदिग्धगात्रं । यदृच्छया सूर्य्यं इवावनिस्थं दिदृक्षवः संपरिवार्य्य तस्थुः ।
प्रहृष्टवित्रस्तविषण्णविस्मितास्तथाऽपरे शोकहता इवाभवन् । परे त्वदीयाश्च परस्परेण यथा यथैषां प्रकृतिस्तथाऽभवन् ।

प्रविद्धवर्म्माभरणाम्बरायुधं धनञ्जयेनाभिहतं महौजसं । निशम्य कर्णं कुरवः प्रदुद्रुवुर्हतर्षभा गाव इवाजने वने ।
भीमश्च भीमेन तदा स्वनेन नादं कृत्वा रोदसी कम्पयानः । आस्फोटयन् वल्गते नृत्यते च हते कर्णे त्रासयन् धार्त्तराष्ट्रान् ।
तथैव राजन् सोमकाः सृञ्जयाश्च शङ्खान् दध्मुः सस्वजुश्चापि सर्व्वे । परस्परं क्षत्रिया हृष्टरूपाः सूतात्मजे वै निहते तदानीं । ४८१५

कृत्वा विमर्द्दं महदर्ज्जुनेन कर्णो हतः केशरिणेव नागः । तीर्णा प्रतिज्ञा पुरुषर्षभेण वैरस्यान्तं गतवांश्चापि पार्थः ।
मद्राधिपश्चापि विमूढचेतास्तूर्णं रथेनापहृतध्वजेन । दुर्य्योधनस्यान्तिकमेत्य राजन् सवाष्पदुःखादिदं वचनं बभाषे ।

विशीर्णनागाश्वरथप्रवीरं बलं त्वदीयं यमराष्ट्रकल्पं । अन्योन्यमासाद्य हतं महद्भिर्नराश्वनागैर्गिरिकूटकल्पैः ।

नैतादृशं भारत युद्धमासीद्यथा तु कर्णार्ज्जुनयोर्ब्बभूव । ग्रस्तौ हि कर्णेन समेत्य कृष्णावन्ये च सर्व्वे तव शत्रवो ये ।
दैवं ध्रुवं पार्थवशात् प्रवृत्तं यत् पाण्डवान् पाति हिनस्ति चास्मान् । तवार्थसिद्ध्यर्थकरास्तु सर्व्वे प्रसह्य वीरा निहता द्विषद्भिः । ४८२०

कुवेरवैवस्वतवासवानां तुल्यप्रभावा नृपते सुवीराः । वीर्य्येण शौर्य्येण बलेन तेजसा तैस्तैश्च युक्ता विविधैर्गुणौघैः ।
अवध्यकल्पा निहता नरेन्द्रास्तवार्थकामा युधि पाण्डवेयैः । तन्मा शुचो भारत दिष्टमेतत् पर्य्याश्वस त्वं न सदाऽस्ति सिद्धिः ।
एतद्वचो मद्रपतेर्निशम्य स्वं चापनीतं मनसा निरीक्ष्य । दुर्य्योधनो दीनमना विसंज्ञः पुनः पुनर्न्निश्वसदार्त्तरूपः ।

इति श्रीमहाभारते कर्णपर्व्वणि कर्णवधे द्विनवतोऽध्यायः ॥ ९२ ॥

॥ धृतराष्ट्र उवाच ॥ तस्मिंस्तु कर्णार्ज्जुनयोर्विमर्द्दे दग्धस्य रौद्रेऽहनि विद्रुतस्य । बभूव रूपं कुरुसृञ्जयानां बलस्य वाणोन्मथितस्य कीदृक् ।

॥ सञ्जय उवाच ॥ शृणु राजन्नवहितो यथा वृत्तो महाक्षयः । घोरो मनुष्यदेहानामाजौ नरवरक्षयः । ४८२५
यत्तत्कर्णे हते पार्थः सिंहनादमथाकरोत् । तदा तव सुतान् राजन्नाविवेश महद्भयं ।
न सन्धातुमनीकानि नचैवाशु पराक्रमे । आसीद्बुद्धिर्हते कर्णे तव योधस्य कस्यचित् ।
वणिजो नावि भिन्नायामगाधे विप्लवे यथा । अपारे पारमिच्छन्तो हते द्वीपे किरीटिना ।
सूतपुत्रे हते राजन् वित्रस्ताः शस्त्रविक्षताः । अनाथा नाथमिच्छन्तो मृगाः सिंहैरिवार्द्दिताः ।
भग्नशृङ्गा वृषा यद्वद्भग्नदंष्ट्रा इवोरगाः । प्रत्यपायाम सायाह्ने निर्ज्जिताः सव्यसाचिना । ४८३०
हतप्रवीरा विध्वस्ता निकृत्ता निशितैः शरैः । सूतपुत्रे हते राजन् पुत्रास्ते दुद्रुवुर्भयात् ।
विस्रस्तयन्त्रकवचाः कान्दिग्भूता विचेतसः । अन्योन्यमवमृद्नन्तो वीक्षमाणा भयार्द्दिताः ।
मामेव नूनं वीभत्सुर्म्मामेव च वृकोदरः । अभियातीति मन्वानाः पेतुर्म्मम्लुश्च सम्भ्रमात् ।
हयानन्ये गजानन्ये रथानन्ये महारथाः । आरुह्य जवसम्पन्नाः पदातीन् प्रजहुर्भयात् ।
कुञ्जरैः स्यन्दनाः क्षुण्णाः सादिनश्च महारथैः । पदातिसंघाश्चाश्वौघैः पलायद्भिर्भयार्द्दितैः । ४८३५
व्यालतस्करसङ्कीर्णे सार्थहीना यथा वने । सूतपुत्रे हते राजंस्तव योधास्तथाऽभवन् ।
हतारोहा यथा नागाश्छिन्नहस्ता यथा नराः । सर्व्वे पार्थमयं लोकं सम्पश्यन्तो भयार्द्दिताः ।
सम्प्रेक्ष्य द्रवतः सर्व्वान् भीमसेनभयार्द्दितान् । तान् दृष्ट्वा विद्रुतान् सर्व्वान् योधांस्तत्र सहस्रशः ।

दुर्य्योधनोऽथ सूतं स्वं राजा हसन्निदमब्रवीत्। नातिक्रमिष्यते पार्थो धनुष्पाणिमवस्थितं।
जघान सर्व्वसैन्यानि शनैरश्वान् प्रचोदय। युध्यमानं हि कौन्तेयं हनिष्यामि न संशयः। ४८५०
नोत्सहे मामतिक्रान्तुं वेलामिव महोदधिः। अद्यार्ज्जुनं सगोविन्दं मानिनञ्च वृकोदरं।
हन्यां शिष्टांस्तथा शत्रून् कर्णस्यानृण्यमाप्नुयां। तच्छ्रुत्वा कुरुराजस्य शूरार्य्यसदृशं वचः।
सूतो हेमपरिच्छन्नाञ्छनैरश्वानचोदयत्। रथाश्वनागहीनास्तु पादातास्तव मारिष।
पञ्चविंशतिसाहस्राः युद्धायैव व्यवस्थिताः। तान् भीमसेनः संक्रुद्धो धृष्टद्युम्नश्च पार्षतः।
बलेन चतुरङ्गेण संवृत्याजघ्नतुः शरैः। प्रत्ययुध्यन्त समरे भीमसेनं सपार्षतं। ४८५५
पार्थपार्षतयोश्चान्ये जग्टहुस्तत्र नामनी। अक्रुध्यत रणे भीमस्तैस्तदा पर्य्यवस्थितैः।
सोऽवतीर्य्य रथात्तूर्णं गदापाणिरयुध्यत। न तान् रथस्थो भूमिष्ठान् धर्म्मापेक्षी वृकोदरः।
योधयामास कौन्तेयो भुजवीर्य्यव्यपाश्रयः। जातरूपपरिच्छन्नां प्रगृह्य महतीं गदां।
अवधीत्तावकान् सर्व्वान् दण्डपाणिरिवान्तकः। पदातिनोऽपि सन्त्यक्त्वा प्रियं जीवितमात्मनः।
भीममभ्यद्रवन् संख्ये पतङ्गा ज्वलनं यथा। आसाद्य भीमसेनन्तु संरब्धा युद्धदुर्म्मदाः। ४८६०
विनेदुः सहसा दृष्ट्वा भूतग्रामा इवान्तकं। श्येनवद्विचरन् भीमो गदाहस्तो महाबलः।
पञ्चविंशतिसाहस्रांस्तावकानवपोथयत्। हत्वा तत् पुरुषानीकं भीमः सत्यपराक्रमः।
धृष्टद्युम्नं पुरस्कृत्य तस्थौ तत्र महाबलः। धनञ्जयो रथानीकमभ्यवर्त्तत वीर्य्यवान्।
माद्रीपुत्रौ तु शकुनिं सात्यकिस्तु महारथः। जवेनाभ्यपतन् हृष्टा घ्नन्तो दौर्य्योधनं बलं।
तस्याश्वसादीन् सुबहूंस्ते निहत्य शितैः शरैः। समभ्यधावंस्त्वरितास्तत्र युद्धमभून्महत्। ४८६५
धनञ्जयोऽपि चाभ्येत्य रथानीकं तव प्रभो। विश्रुतं त्रिषु लोकेषु गाण्डीवं विक्षिपन् धनुः।
कृष्णसारथिमायान्तं दृष्ट्वा श्वेतहयं रथं। अर्ज्जुनञ्चापि योद्धारं त्वदीयाः प्राद्रवन् भयात्।
विप्रहीनरथाश्चैव शरैश्च परिकर्षिताः। पञ्चविंशतिसाहस्राः कालमार्च्छन् पदातयः।
हत्वा तान् पुरुषव्याघ्रः पाञ्चालानां महारथः। पुत्त्रः पाञ्चालराजस्य धृष्टद्युम्नो महामनाः।
भीमसेनं पुरस्कृत्य न चिरात् प्रत्यदृश्यत। महाधनुर्धरः श्रीमानमित्रगणतापनः। ४८७०
पारावतसवर्णाश्वं कोविदारमयध्वजं। धृष्टद्युम्नं रणे दृष्ट्वा त्वदीयाः प्राद्रवन् भयात्।
गान्धारराजं शीघ्रास्त्रमनुसृत्य यशस्विनौ। न चिरात् प्रत्यदृश्येतां माद्रीपुत्त्रौ ससात्यकी।
चेकितानः शिखण्डी च द्रौपदेयाश्च मारिष। हत्वा तदीयं सुमहत् सैन्यं शङ्खांस्तथाऽधमन्।
ते सर्व्वे तावकान् प्रेक्ष्य द्रवतोऽपि पराङ्मुखान्। अभ्यवर्त्तन्त संरब्धान् वृषान् जित्वा यथा वृषः।
सेनावशेषं तं दृष्ट्वा तव सैन्यस्य पाण्डवः। व्यवस्थितं सव्यसाची चुक्रोध बलवान्नृप। ४८७५
धनञ्जयो रथानीकमभ्यवर्त्तत वीर्य्यवान्। विश्रुतं त्रिषु लोकेषु व्याक्षिपन् गाण्डिवं धनुः।
तत एनं शरव्रातैः सहसा समवाकिरत्। तमसा संवृतेनाथ न स्म किञ्चिददृश्यत।
अन्धकारीकृते लोके रजोभूते महीतले। योधाः सर्व्वे महाराज तावकाः प्राद्रवन् भयात्।

संभज्यमाने सैन्ये तु कुरुराजो विशाम्पते। परानभिमुखांश्चैव सुतस्ते समुपाद्रवत्।
ततो दुर्य्योधनः सर्व्वानाजुहावाथ पाण्डवान्। युद्धाय भरतश्रेष्ठ देवानिव पुरा बलिः। ४८८०
त एनमभिगर्ज्जन्तः सहिताः समुपाद्रवन्। नानाशस्त्रभृतः क्रुद्धा भर्त्सयन्तो मुहुर्म्मुहुः।
दुर्य्योधनोऽप्यसंभ्रान्तस्तान् रणे निशितैः शरैः। तत्रावधीत्ततः क्रुद्धः शतशोऽथ सहस्रशः।
तत् सैन्यं पाण्डवेयानां योधयामास सर्व्वतः। तत्राद्भुतमपश्याम तव पुत्रस्य पौरुषं।
यदेकः सहितान् सर्व्वान् रणेऽयुध्यत पाण्डवान्। ततोऽपश्यन्महात्मा सः स्वसैन्यं भृशदुःखितं।
ततोऽवस्थाप्य राजेन्द्र कृतबुद्धिस्तवात्मजः। हर्षयन्निव तान् योधानिदं वचनमब्रवीत्। ४८८५
न तं देशं प्रपश्यामि यत्र याता भयार्द्दिताः। गतानां यत्र वै मोक्षः पाण्डवात् किं गतेन वः।
अल्पञ्च बलमेतेषां कृष्णौ च भृशविक्षतौ। अद्य सर्व्वान् हनिष्यामि ध्रुवो हि विजयो भवेत्।
विप्रयातांस्ततो भिन्नान् पाण्डवाः कृतकिल्बिषान्। अनुसृत्य वधिष्यन्ति श्रेयान्नः समरे वधः।
सुखं साङ्ग्रामिको मृत्युः क्षत्रधर्म्मेण युध्यतां। मृतो दुःखं न जानीते प्रेत्य चानन्त्यमश्नुते।
शृणुध्वं क्षत्रियाः सर्व्वे यावन्तः स्थ समागताः। यदा शूरञ्च भीरुञ्च मारयत्यन्तकोपमः। ४८९०
को नु मूढो न युध्येत मादृशः क्षत्रियव्रतः। द्विषतो भीमसेनस्य क्रुद्धस्य वशमेष्यथ।
पितामहैराचरितं न धर्म्मं हातुमर्हथ। न स्वधर्म्मोऽस्ति पापीयान् क्षत्रियस्य पलायतः।
न युद्धधर्म्मात् श्रेयो हि पन्थाः स्वर्गस्य कौरवाः। अचिरेण हता लोकान् सद्यो योधाः समश्नुत।
॥ सञ्जय उवाच ॥ एवं ब्रुवति पुत्त्रे ते सैनिका भृशविक्षताः। अनवेक्ष्यैव तद्वाक्यं प्राद्रवन् सर्व्वतो दिशः।
इति श्रीमहाभारते कर्णपर्व्वणि कौरवसैन्यपलायने त्रिनवतोऽध्यायः ॥ ९३ ॥

॥ सञ्जय उवाच ॥ दृष्ट्वा तु सैन्यं परिवर्त्तमानं पुत्त्रेण ते मद्रपतिस्तदानीं। संत्रस्तरूपः परिमूढचेता दुर्य्योधनं वाक्यमिदं बभाषे। ४८९५

॥ शल्य उवाच ॥ पश्येदमुग्रं नरवाजिनागैरायोधनं वीरहतैः सुपूर्णं। महीधराभैः पतितैश्च नागैः सकृत्प्रभिन्नैः शरभिन्नदेहैः।
संविह्वलद्भिश्च गतासुभिश्च प्रध्वस्तवर्म्मायुधचर्म्मखड्गैः। वज्रापविद्धैरिव चाचलोत्तमैर्व्विभिन्नपाषाणमहाद्रुमौषधैः।
प्रविद्धघण्टाङ्कुशतोमरध्वजैः सहेमजालै रुधिरौघसंप्लुतैः। शरावभिन्नैः पतितैस्तुरङ्गमैः श्वसद्भिरार्त्तैः क्षतजं वमद्भिः।
दीनं स्तनद्भिः परिवृत्तनेत्रैर्म्महीं दशद्भिः कृपणं नदद्भिः। तथापविद्धैर्गजवाजियोधैर्म्मन्दापविद्धैर्रथवीरसंघैः।
मन्दासुभिश्चैव मही महाहवे नूनं यथा वैतरणीव भाति। गजैर्न्निकृत्तैर्नरहस्तिमात्रैरुद्वेपमानैः पतितैः पृथिव्यां। ४९००
विशीर्णदन्तैः क्षतजं वमद्भिः स्फुरद्भिरार्त्तैः करुणं नदद्भिः। निकृत्तचक्रेषुयुगैः सयोक्तृभिः प्रविद्धतूणीरपताककेतुभिः।
सुवर्णजालावततैर्भृशाहतैर्म्महारथौघैर्ज्जलदैरिवावृता। यशस्विभिर्नागरथाश्वयोधिभिः पदातिभिश्चाभिमुखैर्हतैः परैः।
विशीर्णवर्म्माभरणाम्बरायुधैर्वृता प्रशान्तैरिव पावकैर्म्मही। शरप्रहाराभिहतैर्म्महाबलैरवेक्ष्यमाणैः पतितैः सहस्रशः।
दिवश्च्युतैर्भूरतिदीप्तिमद्भिर्नक्तं ग्रहैर्न्निर्म्मलप्रदीप्तैः। प्रनष्टसंज्ञैः पुनरुच्छ्वसद्भिर्म्मही बभूवानुगतैरिवार्च्चिभिः।
कर्णार्ज्जुनाभ्यां शरभिन्नगात्रैर्हतैः प्रवीरैः कुरुसृञ्जयानां। शरास्तु कर्णार्ज्जुनबाहुमुक्ता विदार्य्य नागाश्वमनुष्यदेहान्। ४९०५
प्राणान्निरस्याशु महीं प्रतीयुर्म्महोरगा वासमिवाभिनम्राः। हतैर्म्मनुष्याश्वगजैश्च संख्ये शरापविद्धैश्च नरैर्न्नरेन्द्र।

धनञ्जयस्याधिरथेश्च मार्गणैरगम्यरूपा वसुधा बभूव। रथैर्वरेषून्मथितैः सुकल्पैः सयोधशस्त्रैश्च वरायुधैर्ध्वजैः।
विशीर्णयोक्त्रैर्व्विनिकृत्तबन्धनैर्निकृत्तचक्राक्षयुगत्रिवेणुभिः। विमुक्तशस्त्रैश्च तथा व्युपस्करैर्हतानुकर्षैर्व्विनिषङ्गबन्धनैः।
प्रभग्ननीडैर्म्मणिहेमभूषितैस्तृता मही द्यौरिव शारदैर्घनैः। विकृष्यमाणैर्ज्जवनैस्तुरङ्गमैर्हतेश्वरै राजरथैः सुकल्पितैः।
मनुष्यमातङ्गरथाश्वराशिभिर्द्रुतं व्रजन्तो बहुधा विचूर्णिताः। सहेमपट्टाः परिघाः परश्वधाः शिताश्च शूला मुषलानि मुद्गराः।
४९१०

पेतुश्च खड्गा विमला विकोशा गदाश्च जाम्बूनदपट्टनद्धाः। चापानि रुक्माङ्गदभूषणानि शराश्च कार्त्तस्वरचित्रपुङ्खाः।
ऋष्टयश्च पीता विमला विकोशाः प्रासाश्च दण्डैः कनकावभासैः। छत्राणि वालव्यजनानि शङ्खाश्छिन्नापविद्धाश्च स्रजो विचित्राः।

कुथाः पताकाम्बरभूषणानि किरीटमालामुकुटाश्च शुभ्राः। प्रकीर्णका विप्रकीर्णाश्च राजन् प्रवालमुक्तातरलाश्च हाराः।
आपीतकेयूरवराङ्गदानि ग्रैवेयनिष्काः सुसुवर्णसूत्राः। मण्युत्तमा वज्रसुवर्णमुक्ता रत्नानि चोच्चावचमङ्गलानि।
गात्राणि चात्यन्तसुखोचितानि शिरांसि चेन्दुप्रतिमाननानि। देहांश्च भोगांश्च परिच्छदांश्च त्यक्त्वा मनोज्ञानि सुखानि चैव।
४९१५

स्वधर्म्मनिष्ठां महतीमवाप्य व्याप्याशु लोकान् यशसा गतास्ते। निवर्त्त दुर्य्योधन यान्तु सैनिका व्रजस्व राजन् शिविराय मानद।

दिवाकरोऽप्येष विलम्बते प्रभो पुनस्त्वमेवात्र नरेन्द्र कारणं। इत्येवमुक्त्वा विरराम शल्यो दुर्य्योधनं शोकपरीतचेताः।
हा कर्ण हा कर्ण इति ब्रुवाणमार्त्तं विसंज्ञं भृशमश्रुनेत्रं। तं द्रोणपुत्रप्रमुखा नरेन्द्राः सर्व्वे समाश्वास्य मुहुः प्रयान्ति।
निरीक्षमाणा मुहुरर्ज्जुनस्य ध्वजं महान्तं यशसा ज्वलन्तं। नराश्वमातङ्गशरीरजेन रक्तेन सिक्ताञ्च तथैव भूमिं।
रक्ताम्बरस्रक्तपनीययोगान्नारीं प्रकाशामिव सर्व्वगम्यां। प्रच्छन्नरूपां रुधिरेण राजन् रौद्रे मुहूर्त्तेऽतिविराजमाने। ४९२०
नैवावतस्थुः कुरवः समीक्ष्य प्रव्राजिता देवलोकाय सर्व्वे। वधेन कर्णस्य तु दुःखितास्ते हा कर्ण हा कर्ण इति ब्रुवाणाः।
द्रुतं प्रयाताः शिविराणि राजन् दिवाकरं रक्तमवेक्षमाणाः। गाण्डीवमुक्तैस्तु सुवर्णपुङ्खैः शिलाशितैः शोणितदिग्धवाजैः।
शरैश्चिताङ्गो युधि भाति कर्णो हतोऽपि सन् सूर्य्य इवांशुमाली। कर्णस्य देहं रुधिरावसिक्तं भक्तानुकम्पी भगवान् विवस्वान्।
स्पृष्ट्वांऽशुभिर्लोहितरक्तरूपः सिस्नासुरभ्येति परं समुद्रं। इतीव सञ्चिन्त्य सुरर्षिसंघाः संप्रस्थिता यान्ति यथानिकेतनं।
संचिन्तयित्वा जनता विसस्रुर्यथासुखं खञ्च महीतलञ्च। तदद्भुतं प्राणभृतां भयङ्करं निशम्य युद्धं कुरुवीरमुख्ययोः। ४९२५

धनञ्जयस्याधिरथेश्च विस्मिताः प्रशंसमानाः प्रययुस्तदा जनाः।
शरसंकृत्तवर्म्माणं रुधिरोक्षितवाससं। गतासुमपि राधेयं नैव लक्ष्मीर्व्विमुञ्चति।
तप्तजाम्बूनदनिभं ज्वलनार्कसमप्रभं। जीवन्तमिव तं शूरं सर्व्वभूतानि मेनिरे।
हतस्यापि महाराज सूतपुत्रस्य संयुगे। वित्रेसुः सर्व्वतो योधाः सिंहस्येवेतरे मृगाः।
हतोऽपि पुरुषव्याघ्रो जीववानिति लक्ष्यते। नाभवद्विकृतिः काचिद्धतस्यापि महात्मनः। ४९३०
चारुवेशधरं वीरं चारुमौलिशिरोधरं। तन्मुखं सूतपुत्रस्य पूर्णचन्द्रसमद्युति।
नानाभरणवान् राजंस्तप्तजाम्बूनदाङ्गदः। हतो वैकर्त्तनः शेते पादपोऽङ्कुरवानिव।

कनकोत्तमसङ्काशो ज्वलन्निव विभावसुः । स शान्तः पुरुषव्याघ्रः पार्थसायकवारिणा ।
यथा हि ज्वलनो दीप्तो जलमासाद्य शाम्यति । कर्णाग्निः समरे तद्वत् पार्थमेघेन शामितः ।
आहृत्य च यशो दीप्तं सुयुद्धेनात्मनो भुवि । विसृज्य शरवर्षाणि प्रताप्य च दिशो दश । ४९२५
सपुत्रः समरे कर्णः स शान्तः पार्थतेजसा । प्रताप्य पाण्डवान् सर्व्वान् पाञ्चालांश्च तेजसा ।
वर्षित्वा शरवर्षेण प्रताप्य रिपुवाहिनीं । श्रीमानिव सहस्रांशुर्जगत् सर्व्वं प्रताप्य च ।
हतो वैकर्त्तनः कर्णः सपुत्रः सहवाहनः । अर्थिनां पक्षिसंघस्य कल्पवृक्षो निपातितः ।
ददातीत्येव यो वाचं न नास्तीत्यर्थितोऽर्थिभिः । सद्भिः सदा सत्पुरुषः स हतो द्वैरथे वृषः ।
यस्य ब्राह्मणसात् सर्व्वं वित्तमासीन्महात्मनः । नादेयं ब्राह्मणेष्वासीद्यस्य स्वमपि जीवितं । ४९३०
सदा स्त्रीणां प्रियो नित्यं दाता चैव महारथः । स वै पार्थास्त्रनिर्द्दग्धो गतः परमिकां गतिं ।
यमाश्रित्याकरोद्वैरं पुत्रस्ते स गतो दिवं । आदाय तव पुत्राणां जयाशां शर्म्म वर्म्म च ।
हते कर्णे सरितो न प्रसस्रुर्जगाम चास्तं सविता दिवाकरः । ग्रहश्च तिर्य्यक्ज्वलनार्कवर्णः सोमस्य पुत्रोऽभ्युदियाय तिर्य्यक् ।
नभः पफालेव ननाद चोर्व्वी ववुश्च वाताः परुषाः सुघोराः । दिशो बभूवुर्ज्वलिताः सधूमा महार्णवाः सस्वनुश्चुक्षुभुश्च ।
सकाननाः साद्रिचयाश्चकम्पिरे प्रविव्यथुर्भूतगणाश्च सर्व्वे । बृहस्पतिः संपरिवार्य्य रोहिणीं बभूव चन्द्रार्कसमो विशाम्पते । ४९३५
हते तु कर्णे विदिशोऽपि जज्वलुस्तमोवृता द्यौर्व्विचचाल भूमिः । पपात चोल्का ज्वलनप्रकाशा निशाचराश्चाप्यभवन् प्रहृष्टाः ।
शशिप्रकाशाननमर्ज्जुनो यदा क्षुरेण कर्णस्य शिरो न्यपातयत् । तदाऽन्तरीक्षे सहसैव शब्दो बभूव हाहेति सुरैर्व्विमुक्तः ।
स देवगन्धर्व्वमनुष्यपूजितं निहत्य कर्णं रिपुमाहवेऽर्ज्जुनः । रराज राजन् परमेण वर्च्चसा यथा पुरा वृत्रवधे शतक्रतुः ।
ततो रथेनाम्बुदवृन्दनादिना शरन्नभोमध्यदिवाकरार्चिषा । पताकिना भीमनिनादकेतुना हिमेन्दुशङ्खस्फटिकावभासिना ।
महेन्द्रवाहप्रतिमेन तावुभौ महेन्द्रवीर्य्यप्रतिमानपौरुषौ । सुवर्णमुक्तामणिवज्रविद्रुमैरलङ्कृतावप्रतिमेन रंहसा । ४९४०
नरोत्तमौ केशवपाण्डुनन्दनौ तदाहितावग्निदिवाकराविव । रणाजिरे वीतभयौ विरेजतुः समानयानाविव विष्णुवासवौ ।
ततो धनुर्ज्यातलवाणनिःस्वनैः प्रसह्य कृत्वा च रिपून् हतप्रभान् । सच्छादयित्वा तु कुरून् शरोत्तमैः कपिध्वजः पक्षिवर
ध्वजश्च ।
हृष्टौ ततस्तावमितप्रभावौ मनांस्यरीणामवदारयन्तौ । सुवर्णजालावततौ महास्वनौ हिमावदातौ परिगृह्य पाणिभिः ।
चुचुम्बतुः शङ्खवरौ नृणाम्बरौ वराननाभ्यां युगपच्च दध्मतुः ।
पाञ्चजन्यस्य निर्घोषो देवदत्तस्य चोभयोः । पृथिवीञ्चान्तरीक्षञ्च दिशश्चैवानुनादयन् । ४९४५
वित्रस्ताश्चाभवन् सर्व्वे कौरवा राजसत्तम । शङ्खशब्देन तेनाथ माधवस्यार्ज्जुनस्य च ।
तौ शङ्खशब्देन निनादयन्तौ वनानि शैलान् सरितो गुहाश्च । वित्रासयन्तौ तव पुत्रसेनां युधिष्ठिरं नन्दयतां वरिष्ठौ ।
ततः प्रयाताः कुरवो जवेन श्रुत्वैव शङ्खस्वनमीर्य्यमाणं । विहाय मद्राधिपतिं पतिञ्च दुर्य्योधनं भारत भारतानां ।
महाहवे तं बहु रोचमानं धनञ्जयं भूतगणाः समेताः । तदान्वमोदन्त जनार्द्दनञ्च दिवाकरावभ्युदितौ यथैव ।
समाचितौ कर्णशरैः परन्तपावुभौ व्यभातां समरेऽच्युतार्ज्जुनौ । तमो निहत्याभ्युदितौ यथाऽमलौ शशाङ्कसूर्य्यौ दिवि रश्मि
मालिनौ । ४९५०

विहाय तान् वाक्यगणानथागतौ सुहृद्वृतावप्रतिमानविक्रमौ। कुरुं प्रविष्टौ शिबिरं स्वमीश्वरौ सदस्यहूताविव विष्णुवासवौ।
तौ देवगन्धर्व्वमनुष्यचारणैर्महर्षिभिर्यक्षमहोरगैरपि। जयाभिवृद्ध्या परयाऽभिपूजितौ हते तु कर्णे परमाहवे तदा।
यथाऽनुरूपं प्रतिपूजितावुभौ प्रशस्यमानौ स्वगुणौघैः। ननन्दतुस्तौ ससुहृद्गणौ तदा बलिं नियम्येव सुरेशकेशवौ।

इति श्रीमहाभारते कर्णपर्व्वणि शिबिरगमने चतुर्नवतोऽध्यायः॥ ९४ ॥

॥ सञ्जय उवाच ॥ हते वैकर्त्तने राजन् कुरवो भयपीडिताः। वीक्षमाणा दिशः सर्व्वाः पर्य्यधावन्त सङ्घशः।
कर्णन्तु निहतं दृष्ट्वा शत्रुभिः परमाहवे। भीता दिशोऽन्वपद्यन्त तावकाः क्षतविक्षताः। ४९६५
ततोऽवहारं चक्रुस्ते योधाः सर्व्वे समन्ततः। निवार्य्यमाणा उद्विग्नास्तावका भृशदुःखिताः।
तेषां तन्मतमाज्ञाय पुत्त्रो दुर्य्योधनस्तव। अवहारं ततश्चक्रे शल्यस्यानुमते नृप।
कृतवर्म्मा रथैस्तूर्णं वृतो भारत तावकैः। नारायणावशेषेश्च शिबिरायैव दुद्रुवे।
गान्धाराणां सहस्रेण शकुनिः परिवारितः। हतमाधिरथिं दृष्ट्वा शिबिरायैव दुद्रुवे।
कृपः शारद्वतो राजन् नागानीकेन भारत। महामेघनिभेनाशु शिबिरायैव दुद्रुवे। ४९७०
अश्वत्थामा ततः शूरो विनिःश्वस्य पुनः पुनः। पाण्डवानां जयं दृष्ट्वा शिबिरायैव दुद्रुवे।
संशप्तकावशिष्टेन बलेन महता वृतः। सुशर्म्माऽपि ययौ राजन् वीक्षमाणो भयार्दितः।
दुर्य्योधनोऽपि नृपतिर्हतसर्व्वस्वबान्धवः। ययौ शोकसमाविष्टश्चिन्तयन् विमना बहु।
छिन्नध्वजेन शल्यस्तु रथेन रथिनाम्वरः। प्रययौ शिबिरायैव वीक्षमाणो दिशो दश।
ततोऽपरे सुबहवो भारतानां महारथाः। प्राद्रवन्त भयत्रस्ता ह्रियाविष्टा विचेतसः। ४९७५
असृक् क्षरन्तः उद्विग्ना वेपमानास्तथाऽऽतुराः। कुरवो दुद्रुवुः सर्व्वे दृष्ट्वा कर्णं निपातितं।
प्रशंसन्तोऽर्ज्जुनं केचित् केचित्कर्णं महारथाः। व्यद्रवन्त दिशो भीताः कुरवः कुरुसत्तम।
तेषां योधसहस्राणां तावकानां महामृधे। नासीत्तत्र पुमान् कश्चिद्यो युद्धाय मनो दधे।
हते कर्णे महाराज निराशाः कुरवोऽभवन्। जीवितेष्वपि राज्येषु दारेषु च धनेषु च।
तान् समानीय पुत्त्रस्ते यत्नेन महता विभुः। निवेशाय मनो दध्रे दुःखशोकसमन्वितः। ४९८०
तस्याज्ञां शिरसा योधाः परिगृह्य विशाम्पते। विवर्णवदना राजन् न्यविशन्त महारथाः।

इति श्रीमहाभारते कर्णपर्व्वणि कौरवपलायने पञ्चनवतोऽध्यायः॥ ९५ ॥

॥ सञ्जय उवाच ॥ तथा निपातिते कर्णे परसैन्ये च विद्रुते। आश्लिष्य पार्थं दाशार्हो हर्षाद्वचनमब्रवीत्।
हतो वज्रभृता वृत्रस्त्वया कर्णो धनञ्जय। वृत्रकर्णवधं घोरं कथयिष्यन्ति मानवाः।
वज्रेण निहतो वृत्रः संयुगे भूरितेजसा। त्वया तु निहतः कर्णो धनुषा निशितैः शरैः।
तमिमं विक्रमं लोके प्रथितं ते यशस्करं। निवेदयावः कौन्तेय कुरुराजस्य धीमतः। ४९८५
वधं कर्णस्य सङ्ग्रामे दीर्घकालचिकीर्षितं। निवेद्य धर्म्मराजाय त्वमानृण्यं गमिष्यसि।
वर्त्तमाने महायुद्धे तव कर्णस्य चोभयोः। द्रष्टुमायोधनं पूर्व्वमागतो धर्म्मनन्दनः।
भृशन्तु गाढविद्धत्वान्नाशकत् स्थातुमाहवे। ततः स शिबिरं गत्वा स्थितवान् पुरुषर्षभः।

तथेत्युक्तः केशवस्तु पार्थेन यदुपुङ्गवः । पर्य्यवर्त्तयदव्यग्रो रथं रथवरस्य तं ।
एवमुक्त्वाऽर्ज्जुनं कृष्णः सैनिकानिदमब्रवीत् । परानभिमुखा यत्तास्तिष्ठध्वं भद्रमस्तु वः । ४९९०
धृष्टद्युम्नं युधामन्युं माद्रीपुत्त्रौ वृकोदरं । युयुधानञ्च गोविन्द इदं वचनमब्रवीत् ।
यावदावेद्यते राज्ञे हतः कर्णोऽर्ज्जुनेन वै । तावद्भवद्भिर्यत्नैस्तु भवितव्यं नराधिपैः ।
स तैः शूरैरनुज्ञातो ययौ राजनिवेशनं । पार्थमादाय गोविन्दो ददर्श च युधिष्ठिरं ।
शयानं राजशार्दूलं काञ्चने शयनोत्तमे । अगृह्णीताञ्च मुदितौ चरणौ पार्थिवस्य तौ ।
तयोः प्रहर्षमालक्ष्य हर्षादश्रूण्यवर्त्तयत् । राधेयं निहतं मत्वा समुत्तस्थौ युधिष्ठिरः । ४९९५
उवाच च महाबाहुः पुनः पुनररिन्दमः । वासुदेवार्ज्जुनौ प्रेम्णा तावुभौ परिषस्वजे ।
तत्तस्मै यथथा वृत्तं वासुदेवः सहार्जुनः । कथयामास कर्णस्य निधनं यदुपुङ्गवः ।
ईषदुत्स्मयमानस्तु कृष्णो राजानमब्रवीत् । युधिष्ठिरं हतामित्रं कृताञ्जलिरथाच्युतः ।
दिष्ट्या गाण्डीवधन्वा च पाण्डवश्च वृकोदरः । त्वञ्चापि कुशली राजन् माद्रीपुत्त्रौ च पाण्डवौ ।
मुक्ता वीरक्षयादस्मात् सङ्ग्रामाल्लोमहर्षणात् । क्षिप्रमुत्तरकालानि कुरु कार्य्याणि पाण्डव । ५०००
हतो वैकर्त्तनो राजन् सूतपुत्त्रो महारथः । दिष्ट्या जयसि राजेन्द्र दिष्ट्या वर्द्धसि भारत ।
यस्तु द्यूतजितां कृष्णां प्राहसत्पुरुषाधमः । तस्याद्य सूतपुत्त्रस्य भूमिः पिबति शोणितं ।
शेतेऽसौ शरपूर्णाङ्गः शत्रुस्ते कुरुपुङ्गव । तं पश्य पुरुषव्याघ्र विभिन्नं बहुभिः शरैः ।
हतामित्रामिमामुर्व्वीमनुशाधि महाभुज । यत्तो भूत्वा सहास्माभिर्भुङ्क्ष्व भोगांश्च पुष्कलान् ।
॥ सञ्जय उवाच ॥ इति श्रुत्वा वचस्तस्य केशवस्य महात्मनः । धर्म्मपुत्त्रः प्रहृष्टात्मा दाशार्हं वाक्यमब्रवीत् । ५००५
दिष्ट्या दिष्ट्येति राजेन्द्र वाक्यञ्चेदमुवाच ह । नैतच्चित्रं महाबाहो त्वयि देवकिनन्दन ।
त्वया सारथिना पार्थो यत्नवानहनच्च तं । न तच्चित्रं महाबाहो युष्मद्बुद्धिप्रसादजं ।
प्रगृह्य च कुरुश्रेष्ठ साङ्गदं दक्षिणं भुजं । उवाच धर्म्मभृत्पार्थ उभौ तौ केशवार्ज्जुनौ ।
नरनारायणौ देवौ कथितौ नारदेन मे । धर्म्मात्मानौ महात्मानौ पुराणावृषिसत्तमौ ।
असकृच्चापि मेधावी कृष्णद्वैपायनो मम । कथामेतां महाभागां कथयामास तत्त्ववित् । ५०१०
तव कृष्ण प्रसादेन पाण्डवो हि धनञ्जयः । जिगायाभिमुखः शत्रून् न चासीद्विमुखः क्वचित् ।
जयश्चैव ध्रुवोऽस्माकं न त्वस्माकं पराजयः । यदा त्वं युधि पार्थस्य सारथ्यमुपजग्मिवान् ।
भीष्मो द्रोणश्च कर्णश्च महात्मा गौतमः कृपः । अन्ये च बहवः शूरा ये च तेषां पदानुगाः ।
त्वद्बुद्ध्या निहते कर्णे हता गोविन्द सर्व्वथा । इत्युक्त्वा धर्म्मराजस्तु रथं हेमविभूषितं ।
श्वेतवर्णैर्हयैर्युक्तं कालवालैर्मनोजवैः । आस्थाय पुरुषव्याघ्रः स्वबलेनाभिसंवृतः । ५०१५
प्रययौ स महाबाहुर्द्रष्टुमायोधनं तदा । कृष्णार्ज्जुनाभ्यां वीराभ्यामनुमन्य ततः प्रियं ।
आभाषमाणस्तौ वीरावुभौ माधवफाल्गुनौ । स ददर्श रणे कर्णं शयानं पुरुषर्षभं ।
यथा कदम्बकुसुमं केशरैः सर्व्वतो वृतं । चितं शरशतैः कर्णं धर्म्मराजो ददर्श सः ।

गन्धतैलावसिक्ताभिः काञ्चनीभिः सहस्रशः। दीपिकाभिः कृतोद्योतं पश्यते वै वृषं तदा।
वच्छिन्नभिन्नकवचं वाणैश्च विदलीकृतं। सपुत्रं निहतं दृष्ट्वा कर्णं राजा युधिष्ठिरः। ५०१०
सञ्जातप्रत्ययोऽतीव वीक्ष्य चैवं पुनः पुनः। प्रशशंस नरव्याघ्रावुभौ माधवपाण्डवौ।
अद्य राजाऽस्मि गोविन्द पृथिव्यां भ्रातृभिः सह। त्वया नाथेन वीरेण विदुषा परिपालितः।
हतं श्रुत्वा नरव्याघ्रं राधेयमतिमानिनं। निराशोऽद्य हते कर्णे धार्त्तराष्ट्रो भविष्यति।
जीविते चैव राज्ये च हते राधात्मजे रणे। त्वत्प्रसादाद्वयञ्चैव कृतार्थाः पुरुषर्षभ।
दिष्ट्या जयसि गोविन्द दिष्ट्या शत्रुर्निपातितः। दिष्ट्या गाण्डीवधन्वा च विजयी पाण्डुनन्दनः। ५०१५
त्रयोदश समास्तीर्णा जागरेण सुदुःखिताः। स्वप्स्यामोऽद्य सुखं रात्रौ त्वत्प्रसादान्महाभुज।
एवं स बहुशो राजा प्रशशंस जनार्द्दनं। अर्ज्जुनञ्च कुरुश्रेष्ठं धर्म्मराजो युधिष्ठिरः।
॥ सञ्जय उवाच॥ दृष्ट्वा च निहतं कर्णं सपुत्रं पार्थसायकैः। पुनर्जातमिवात्मानं मेने च स महीपतिः।
समेत्य च महाराज कुन्तीपुत्रं युधिष्ठिरं। हर्षयन्ति स्म राजानं हर्षयुक्ता महारथाः।
नकुलः सहदेवश्च पाण्डवश्च वृकोदरः। सात्यकिश्च महाराज वृष्णीनां प्रवरो रथः। ५०२०
धृष्टद्युम्नः शिखण्डी च पाण्डुपाञ्चालसृञ्जयाः। पूजयन्ति स्म कौन्तेयं निहते सूतनन्दने।
ते वर्द्धयित्वा नृपतिं धर्म्मात्मानं युधिष्ठिरं। जितकाशिनो लब्धलक्ष्या युद्धशौण्डाः प्रहारिणः।
स्तुवन्तः स्तवयुक्ताभिर्व्वाग्भिः कृष्णौ परन्तपौ। जग्मुः स्वशिबिरायैव मुदा युक्ता महारथाः।
एवमेष क्षयो वृत्तः सुमहाँल्लोमहर्षणः। तव दुर्म्मन्त्रिते राजन् किमर्थमनुशोचसि।
॥ वैशम्पायन उवाच॥ श्रुत्वैतदप्रियं राजा धृतराष्ट्रोऽम्बिकासुतः। पपात भूमौ निश्चेष्टश्छिन्नमूल इव द्रुमः। ५०२५
तथा सा पतिता देवी गान्धारी दीर्घदर्शिनी। शुशोच बहुलालापैः कर्णस्य निधनं युधि।
तां पर्य्यगृह्णाद्विदुरो नृपतिं सञ्जयस्तथा। पर्य्याश्वासयताञ्चैव तावुभावेव भूमिपं।
तथैवोत्थापयामासुर्गान्धारीं कुरुयोषितः। स दैवं परमं मत्वा भवितव्यञ्च पार्थिवः।
परां पीडां समाश्रित्य नष्टचित्तो महातपाः। चिन्ताशोकपरीतात्मा न जज्ञे मोहपीडितः।
स समाश्वासितो राजा तूष्णीमासीद्विचेतनः। ५०३०

इदं महायुद्धमखं महात्मनोर्द्धनञ्जयस्याधिरथेश्च यः पठेत्। स सम्यगिष्टस्य मखस्य यत्फलं तदाप्नुयात् संश्रवणाच्च भारत।
मखो हि विष्णुर्भगवान् सनातनो वदन्ति तच्चाग्न्यनिलेन्दुभानवः। अतोऽनसूयुः शृणुयात् पठेच्च यः स सर्व्वलोकानुचरः सुखी भवेत्।
तां सर्व्वदा भक्तिमुपागता नराः पठन्ति पुण्यां वरसंहितामिमां। धनेन धान्येन यशसा च मानुषा नन्दन्ति ते नाऽत्र विचारणाऽस्ति।
अतोऽनसूयुः शृणुयात् सदा तु वै नरः स सर्व्वाणि सुखानि चाप्नुयात्। विष्णुः स्वयम्भूर्भगवान् भवश्च तुष्यन्ति ते तस्य नरो त्तमस्य।

वेदे वाग्निर्ब्राह्मणस्येव दृष्ट्वा रथे बलं क्षत्रियाणां तथा युधि । धनस्यैताश्चापि भवन्ति वैश्याः शूद्रा आरोग्यं प्राप्नुवन्तीह सर्वे ।
तथैव विष्णुर्भगवान् सनातनः स चाऽत्र देवः परिकीर्त्यते यतः । ततः स कामान् लभते सुखी नरो महामुनेस्तस्य वचोऽर्चितं यथा । १०७५

कपिलानां सवत्सानां वर्षमेकं निरन्तरं । यो दद्यात् सुकृतं तद्धि श्रवणात् कर्णपर्वणः ।

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि युधिष्ठिरहर्षे सप्तनवतितमोऽध्यायः ॥ ९७ ॥

॥ समाप्तमिदं कर्णपर्व ॥

# श्रीमहाभारतं

## ॥ शल्यपर्व्व ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं। देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्।

॥ जनमेजय उवाच ॥ एवं निपातिते कर्णे समरे सव्यसाचिना। अल्पावशिष्टाः कुरवः किमकुर्व्वत वै द्विज।
उदीर्य्यमाणञ्च बलं स्वकं दृष्ट्वा सुयोधनः। पाण्डवैः प्राप्तकालञ्च किं प्रापद्यत कौरवः।
एतदिच्छाम्यहं श्रोतुं तदाचक्ष्व द्विजोत्तम। नहि तृप्यामि पूर्व्वेषां शृण्वानश्चरितं मुने।
॥ वैशम्पायन उवाच ॥ ततः कर्णे हते राजन् धार्त्तराष्ट्रः सुयोधनः। भृशं शोकार्णवे मग्नो निर्व्विषः सर्व्वतोऽभवत्।
हा कर्ण हा कर्ण इति शोचमानः पुनः पुनः। कृच्छ्रात् स्वशिबिरं प्रायाद्धतशेषैर्नृपैः सह। ५
स समाश्वास्यमानोऽपि हेतुभिः शास्त्रनिश्चितैः। राजभिर्नालभच्छर्म्म सूतपुत्रवधं स्मरन्।
स दैवं बलवन्मत्वा भवितव्यञ्च पार्थिवः। सङ्ग्रामे निश्चयं कृत्वा पुनर्युद्धाय निर्ययौ।
शल्यं सेनापतिं कृत्वा विधिवद्राजपुङ्गवः। रणाय निर्ययौ राजन् हतशेषैर्नृपैः सह।
ततः सुतुमुलं युद्धं कुरुपाण्डवसेनयोः। अभवद्भरतश्रेष्ठ देवासुररणोपमं।
ततः शल्यो महाराज कृत्वा कदनमाहवे। हतसैन्योऽथ मध्याह्ने धर्म्मराजेन पातितः। १०
ततो दुर्य्योधनो राजा हतबन्धू रणाजिरात्। अपसृत्य ह्रदं घोरं विवेश रिपुजाद्भयात्।
अथापराह्णे तस्याह्नः परिवार्य्य महारथैः। ह्रदादाहूय वेगेन भीमसेनेन पातितः।
तस्मिन् हते महेष्वासे हतशिष्टास्त्रयो रथाः। संरम्भान्निशि राजेन्द्र जघ्नुः पाञ्चालसैनिकान्।
ततः पूर्व्वाह्णसमये शिबिरादेत्य सञ्जयः। प्रविवेश पुरं दीनो दुःखशोकसमन्वितः।
प्रविश्य च पुरं सूतो भुजावुच्छ्रित्य दुःखितः। वेपमानस्ततो राज्ञः प्रविवेश निवेशनं। १५
रुरोद स नरव्याघ्र हा राजन्निति दुःखितः। अहो बत विनष्टाः स्मो निधनेन महात्मनः।
अहो सुबलवान् कालो गतिश्च विषमा तथा। शक्रतुल्यबलाः सर्व्वे यथावध्यन्त पाण्डवैः।
दृष्ट्वैव तु पुरो राजन् जनः सर्व्वः ससञ्जयं। क्लेशेन महता युक्तं सर्व्वतो राजसत्तम।
प्ररुरोद भृशोद्विग्नो हा राजन्निति सस्वरं। आकुमारं नरव्याघ्र तत् पुरं वै समन्ततः।

आर्त्तनादं ततश्चक्रे श्रुत्वा विनिहतं नृपं । धावतश्चाप्यपश्यामस्तच स्त्रीपुरुषांस्तदा । २०
नष्टचित्तानिवोन्मत्तान् शोकेन भृशपीडितान् । तथा स विह्वलः सूतः प्रविश्य नृपतिक्षयं ।
ददर्श नृपतिश्रेष्ठं प्रज्ञाचक्षुषमीश्वरं । तथा चासीनमनघं समन्तात् परिवारितं ।
स्नुषाभिर्भरतश्रेष्ठ गान्धार्या विदुरेण च । तथाऽन्यैश्च सुहृद्भिश्च ज्ञातिभिश्च हितैः सदा ।
तमेव चार्थं ध्यायन्तं कर्णस्य निधनं प्रति । रुदन्नेवाब्रवीद्वाक्यं राजानं जनमेजय ।
नातिहृष्टमनाः सूतो वाष्पसन्दिग्धया गिरा । सञ्जयोऽहं नरव्याघ्र नमस्ते भरतर्षभ । २५
मद्राधिपो हतः शल्यः शकुनिः सौबलस्तथा । उलूकः पुरुषव्याघ्र कैतव्यो दृढविक्रमः ।
संशप्तका हताः सर्व्वे काम्बोजाश्च शकैः सह । म्लेच्छाश्च पार्व्वतीयाश्च यवनाश्च निपातिताः ।
प्राच्या हता महाराज दाक्षिणात्याश्च सर्व्वशः । उदीच्या निहताः सर्व्वे प्रतीच्याश्च नराधिप ।
राजानो राजपुत्राश्च सर्व्वशो निहता नृप । दुर्य्योधनो हतो राजा यथोक्तं पाण्डवेन ह ।
भग्नसक्थो महाराज शेते पांशुषु रूषितः । धृष्टद्युम्नो हतो राजन् शिखण्डी चापराजितः । ३०
उत्तमौजा युधामन्युस्तथा राजन् प्रभद्रकाः । पञ्चालाश्च नरव्याघ्र चेदयश्च निषूदिताः ।
तव पुत्त्रा हताः सर्व्वे द्रौपदेयाश्च भारत । कर्णपुत्त्रो हतः शूरो वृषसेनो महाबलः ।
नरा विनिहताः सर्व्वे गजाश्च विनिषूदिताः । रथिनश्च नरव्याघ्र हयाश्च पतिता युधि ।
किञ्चिच्छेषञ्च शिविरं तावकानां कृतं विभो । पाण्डवानां कुरूणाञ्च समासाद्य परस्परं ।
प्रायः स्त्रीशेषमभवत् जगत् कालेन मोहितं । सप्त पाण्डवतः शेषा धार्त्तराष्ट्रास्तथा त्रयः । ३५
ते चैव भ्रातरः पञ्च वासुदेवश्च सात्यकिः । कृपश्च कृतवर्म्मा च द्रौणिश्च जयतां वरः ।
तवाप्येते नरव्याघ्र रथिनो नृपसत्तम । अक्षौहिणीनां सर्व्वासां समेतानां जनेश्वर ।
एते शेषा महाराज सर्व्वेऽन्ये निधनं गताः । कालेन निहतं सर्व्वं जगद्वै भरतर्षभ ।
दुर्य्योधनं वै पुरतः कृत्वा वैरस्य भारत ।
॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा वचः क्रूरं धृतराष्ट्रो जनेश्वरः । निपपात महाराज गतसत्त्वो महीतले । ४०
तस्मिन्निपतिते भूमौ विदुरोऽपि महायशाः । निपपात महाराज शोकव्यसनकर्षितः ।
गान्धारी च नृपश्रेष्ठ सर्व्वाश्च कुरुयोषितः । पतिताः सहसा भूमौ श्रुत्वा क्रूरं वचश्च ताः ।
निःसंज्ञं पतितं भूमौ तदासीद्राजमण्डलं । प्रलापयुक्तं महति चित्रन्यस्तं पटे यथा ।
कृच्छ्रेण तु ततो राजा धृतराष्ट्रो महीपतिः । शनैरलभत प्राणान् पुत्त्रव्यसनकर्षितः ।
लब्ध्वा तु स नृपः संज्ञां वेपमानः सुदुःखितः । उदीक्ष्य च दिशः सर्व्वाः क्षत्तारं वाक्यमब्रवीत् । ४५
विद्वन् क्षत्तर्म्महाप्राज्ञ त्वं गतिर्भरतर्षभ । ममानाथस्य सुभृशं पुत्त्रैर्हीनस्य सर्व्वशः ।
एवमुक्त्वा ततो भूयो विसंज्ञो निपपात ह । तं तथा पतितं दृष्ट्वा बान्धवा येऽस्य केचन ।
शीतैस्ते सिषिचुस्तोयैर्व्विव्यजुर्व्यजनैरपि । स तु दीर्घेण कालेन प्रत्याश्वस्तो महीपतिः ।
तूष्णीं दध्यौ महीपाल पुत्त्रव्यसनकर्षितः । निःश्वसन् पन्नग इव कुम्भक्षिप्तो विशाम्पते ।

सञ्जयोऽप्यरुदत्तत्र दृष्ट्वा राजानमातुरं। तथा सर्व्वाः स्त्रियश्चैव गान्धारी च यशस्विनी। ५०
ततो दीर्घेण कालेन विदुरं वाक्यमब्रवीत्। धृतराष्ट्रो नरश्रेष्ठ मुह्यमानो मुहुर्मुहुः।
गच्छन्तु योषितः सर्व्वा गान्धारी च यशस्विनी। तथेमे सुहृदः सर्व्वे भ्रश्यते मे मनो भृशं।
एवमुक्तस्ततः क्षत्ता ताः स्त्रियो भरतर्षभ। विसर्ज्जयामास शनैर्व्वेपमानाः पुनः पुनः।
निश्चक्रमुस्ततः सर्व्वास्ताः स्त्रियो भरतर्षभ। सुहृदश्च ततः सर्व्वे दृष्ट्वा राजानमातुरं।
ततो नरपतिं तन्तु लब्धसंज्ञं परन्तप। अवैक्षत् सञ्जयो दीनो रोदमानं भृशातुरं। ५५
प्राञ्जलिर्निश्वसन्तञ्च तं नरेन्द्रं मुहुर्मुहुः। समाश्वासयत क्षत्ता वचसा मधुरेण ह।
इति श्रीमहाभारते शल्यपर्व्वणि धृतराष्ट्रप्रमोहे प्रथमोऽध्यायः ॥ १ ॥
॥ वैशम्पायन उवाच ॥ विसृष्टास्वथ नारीषु धृतराष्ट्रोऽम्बिकासुतः। विललाप महाराज दुःखाद्दुःखतरं गतः।
सधूममिव निश्वस्य करौ धुन्वन् पुनः पुनः। विचिन्त्य च महाराज ततो वचनमब्रवीत्।
॥ धृतराष्ट्र उवाच ॥ अहो बत महद्दुःखं यदहं पाण्डवान् रणे। क्षेमिणश्चाव्ययांश्चैव त्वत्तः सूत शृणोमि वै।
वज्रसारमयं नूनं हृदयं सुदृढं मम। यच्छ्रुत्वा निहतान् पुत्त्रान् दीर्य्यते न सहस्रधा। १०
चिन्तयित्वा वयस्तेषां बालक्रीडां च सञ्जय। अद्य श्रुत्वा हतान्पुत्त्रान् भृशं मे दीर्य्यते मनः।
अन्धत्वाद्यदि तेषान्तु न मे रूपनिदर्शनं। पुत्त्रस्नेहकृता प्रीतिर्नित्यमेतेषु धारिता।
बालभावमतिक्रान्तान् यौवनस्थांश्च तानहं। मध्यप्राप्तांस्तथा श्रुत्वा हृष्ट आसं तदाऽनघ।
तानद्य निहतान् श्रुत्वा हतैश्वर्य्यान् हतौजसः। न लभे वै क्वचिच्छान्तिं पुत्त्राधिभिरभिप्लुतः।
एह्येहि पुत्त्र राजेन्द्र ममानाथस्य साम्प्रतं। त्वया हीनो महाबाहो कां नु यास्याम्यहं गतिं। १५
कथं त्वं पृथिवीपालांस्त्यक्त्वा तात समागतान्। शेषे विनिहतो भूमौ प्राकृतः कुनृपो यथा।
गतिर्भूत्वा महाराज ज्ञातीनां सुहृदां तथा। अन्धं वृद्धञ्च मां वीर विहाय क्वाभिगच्छसि।
सा कृपा सा च ते प्रीतिः सा च राजन् सुमानिता। कथं विनिहतः पार्थैः संयुगेष्वपराजितः।
को नु मामुत्थितं काले तात तातेति वक्ष्यति। महाराजेति सततं लोकनाथेति चासकृत्।
परिष्वज्य च मां कण्ठे स्नेहेनाक्लिन्नलोचनः। अनुशाधीति कौरव्य तत्साधु वद मे वचः। २०
ननु नामाहमश्रौषं वचनं तव पुत्त्रक। भूयसी मम पृथ्वीयं यथा पार्थस्य नो तथा।
भगदत्तः कृपः शल्य आवन्त्योऽथ जयद्रथः। भूरिश्रवाः शलश्चैव सोमदत्तोऽथ वाह्लिकः।
अश्वत्थामा च भोजश्च मागधश्च महाबलः। बृहद्बलश्च काशीशः शकुनिश्चापि सौबलः।
म्लेच्छाश्च शतसाहस्राः शकाश्च यवनैः सह। सुदक्षिणश्च काम्बोजस्त्रिगर्त्ताधिपतिस्तथा।
भीष्मः पितामहश्चैव भारद्वाजोऽथ गौतमः। श्रुतायुश्चाच्युतायुश्च शतायुश्चैव वीर्य्यवान्। २५
जलसन्धोऽथार्ष्यशृङ्गी राक्षसश्चाप्यलायुधः। अलम्बुषो महाबाहुः सुबाहुश्च महारथः।
एते चान्ये च बहवो राजानो राजसत्तम। मदर्थमुद्यताः सर्व्वे प्राणांस्त्यक्त्वा महारणे।
तेषां मध्ये स्थितो युद्धे भ्रातृभिः परिवारितः। योधयिष्याम्यहं पार्थान् पाञ्चालांश्चैव सर्व्वशः।

चेदींश्च नृपशार्दूल द्रौपदेयांश्च संयुगे। सात्यकिं कुन्तिभोजञ्च राक्षसञ्च घटोत्कचं।
एकोऽप्येषां महाराज समर्थः सन्निवारणे। समरे पाण्डवेयानां संक्रुद्धोऽप्यभिधावतां। ८०
किं पुनः सहिता वीराः कृतवैराश्च पाण्डवैः। अथवा सर्व्व एवैते पाण्डवस्यानुयायिभिः।
योत्स्यन्ते सह राजेन्द्र हनिष्यन्ति च तान्मृधे। कर्णस्त्वेको मया सार्द्धं निहनिष्यति पाण्डवान्।
ततो नृपतयो वीराः स्थास्यन्ति मम शासने। यश्च तेषां प्रणेता वै वासुदेवो महाबलः।
न स सन्नह्यते राजन्निति मामब्रवीद्वचः। तस्याहं वदतः सूत बहुशो मम सन्निधौ।
शक्तितो ह्यनुपश्यामि निहतान् पाण्डवान् मृधे। तेषां मध्ये स्थिता यत्र हन्यन्ते मम पुत्रकाः। ८५
व्यायच्छमानाः समरे किमन्यद्भागधेयतः। भीष्मश्च निहतो यत्र लोकनाथः प्रतापवान्।
शिखण्डिनं समासाद्य मृगेन्द्र इव जम्बुकं। द्रोणश्च ब्राह्मणो यत्र सर्व्वशस्त्रास्त्रपारगः।
निहतः पाण्डवैः संख्ये किमन्यद्भागधेयतः। भूरिश्रवा हतो यत्र सोमदत्तश्च संयुगे।
वाह्लीकश्च महाराजः किमन्यद्भागधेयतः। भगदत्तो हतो यत्र गजयुद्धविशारदः।
जयद्रथश्च निहतः किमन्यद्भागधेयतः। सुदक्षिणो हतो यत्र जलसन्धश्च पौरवः। ९०
श्रुतायुश्चाच्युतायुश्च किमन्यद्भागधेयतः। महाबलस्तथा पाण्ड्यः सर्व्वशस्त्रभृताम्वरः।
निहतः पाण्डवैः संख्ये किमन्यद्भागधेयतः। बृहद्बलो हतो यत्र मागधश्च महाबलः।
उग्रायुधश्च विक्रान्तः प्रतिमानं धनुष्मतां। आवन्त्यौ निहतौ यत्र त्रैगर्त्तश्च नराधिपः।
संशप्तकाश्च बहवः किमन्यद्भागधेयतः। अलम्बुषस्तथा राजा राक्षसश्चाप्यलायुधः।
आर्ष्यशृङ्गिश्च निहतः किमन्यद्भागधेयतः। नारायणा हता यत्र गोपाला युद्धदुर्म्मदाः। ९५
म्लेच्छाश्च बहुसाहस्राः किमन्यद्भागधेयतः। शकुनिः सौबलो यत्र कैतव्यश्च महाबलः।
निहतः सबलो वीरः किमन्यद्भागधेयतः। यत्र शूरा महात्मानः सर्व्वशस्त्रास्त्रपारगाः।
बहवो निहताः सूत महेन्द्रसमविक्रमाः। नानादेशसमावृत्ताः क्षत्रिया यत्र सञ्जय।
निहताः समरे सर्व्वे किमन्यद्भागधेयतः। पुत्राश्च मे विनिहताः पौत्राश्चैव महाबलाः।
वयस्या भ्रातरश्चैव किमन्यद्भागधेयतः। भागधेयसमायुक्तो ध्रुवमुत्पद्यते नरः। १००
यस्तु भाग्यसमायुक्तः स शुभं प्राप्नुयान्नरः। अहं वियुक्तः सौभाग्यैः पुत्रैश्चैवेह सञ्जय।
कथमद्य भविष्यामि वृद्धः शत्रुवशङ्गतः। नान्यदत्र परम्मन्ये वनवासादृते प्रभो।
सोऽहं वनं गमिष्यामि निर्ब्बन्धुर्ज्ञातिसंक्षये। न हि मेऽन्यद्भवेच्छ्रेयो वनाय गमनादृते।
इमामवस्थां प्राप्तस्य लूनपक्षस्य सञ्जय। दुर्य्योधनो हतो यत्र शल्यश्च निहतो युधि।
दुःशासनो विशस्तश्च विकर्णश्च महाबलः। कथं हि भीमसेनस्य श्रोष्येऽहं शब्दमुत्तमं। १०५
एकेन समरे येन हतं पुत्रशतं मम। असकृद्वदतस्तस्य दुर्य्योधनवधेन च।
दुःखशोकाभिसन्तप्तो न श्रोष्ये परुषा गिरः।
॥ वैशम्पायन उवाच ॥ एवं स शोकसन्तप्तः पार्थिवो हतबान्धवः। मुहुर्मुहुर्मुह्यमानः पुत्राधिभिरभिप्लुतः।

विलप्य सुचिरं कालं धृतराष्ट्रोऽम्बिकासुतः । दीर्घमुष्णञ्च निश्वस्य चिन्तयित्वा पराभवं ।
शोकेन महताविष्टः सन्तप्तो भरतर्षभ । पुनर्गावल्गणिं सूतं पर्य्यपृच्छद्यथातथं । ११०
॥ धृतराष्ट्र उवाच ॥ भीष्मद्रोणौ हतौ श्रुत्वा सूतपुत्त्रञ्च पातितं । सेनापतिं प्रणेतारं कमकुर्व्वत मामकाः ।
यं यं सेनाप्रणेतारं युधि कुर्व्वन्ति मामकाः । अचिरेणैव कालेन तं तं निघ्नन्ति पाण्डवाः ।
रणमूर्द्ध्नि हतो भीष्मः पश्यतां वः किरीटिना । एवमेव हतो द्रोणः सर्व्वेषामेव पश्यतां ।
एवमेव हतः कर्णः सूतपुत्त्रः प्रतापवान् । सराजकानां सर्व्वेषां पश्यतां वः किरीटिना ।
पूर्व्वमेवाहमुक्तो वै विदुरेण महात्मना । दुर्य्योधनापराधेन प्रजेयं विनशिष्यति । ११५
केचिन्न सम्यक् पश्यन्ति मूढाः सम्यगवेक्ष्य च । तदिदं मम मूढस्य तथाभूतं वचस्तु तत् ।
यदब्रवीत्स धर्म्मात्मा विदुरः सर्व्वधर्म्मवित् । तत्तथा समनुप्राप्तं वचनं सत्यमीरितं ।
दैवोपहतचित्तेन यन्मया न कृतं पुरा । अनयस्य फलं तस्य ब्रूहि गावल्गणे पुनः ।
को वै मुखमनीकानामासीत्कर्णे निपातिते । अर्ज्जुनं वासुदेवञ्च को वा प्रत्युद्ययौ रथी ।
केऽरक्षन्दक्षिणं चक्रं मद्रराजस्य संयुगे । वामं वा योद्धुकामस्य के वा वीरस्य पृष्ठतः । १२०
कथञ्च वः समेतानां मद्रराजो महाबलः । निहतः पाण्डवैः संख्ये पुत्त्रो वा मम सञ्जय ।
ब्रूहि सर्व्वं यथा तत्त्वं भरतानां महाक्षयं । यथा च निहतः संख्ये पुत्त्रो दुर्य्योधनो मम ।
पाञ्चालाश्च तथा सर्व्वे निहताः सपदानुगाः । धृष्टद्युम्नः शिखण्डी च द्रौपद्याः पञ्च चात्मजाः ।
पाण्डवाश्च यथा मुक्तास्तथोभौ सात्वतौ युधि । कृपश्च कृतवर्म्मा च भारद्वाजस्य चात्मजः ।
यद्यथा यादृशञ्च युद्धं वृत्तमभूत्ततः । अखिलं श्रोतुमिच्छामि कुशलो ह्यसि सञ्जय । १२५
इति श्रीमहाभारते शल्यपर्व्वणि धृतराष्ट्रविलापे द्वितीयोऽध्यायः ॥ २ ॥
॥ सञ्जय उवाच ॥ शृणु राजन्नवहितो यथा वृत्तो जनक्षयः । कुरूणां पाण्डवानाञ्च समासाद्य परस्परं ।
निहते सूतपुत्त्रे तु पाण्डवेन महात्मना । विद्रुतेषु च सैन्येषु समानीतेषु चासकृत् ।
घोरे मनुष्यदेहानामाजौ नरवरक्षये । यत्तत्कर्णे हते पार्थः सिंहनादमथाकरोत् ।
तदा तव सुतान् राजन् तत्कृतं प्राविशद्भयं । न सन्धातुमनीकानि न चैवाय पराक्रमे ।
आसीद्बुद्धिर्हते कर्णे तव योधस्य कस्यचित् । वणिजो नावि भग्नायामगाधे विप्लवा इव । १३०
अपारे पारमिच्छन्तो हते द्वीपे किरीटिना । सूतपुत्त्रे हते राजन् वित्रस्ताः शस्त्रविक्षताः ।
अनाथा नाथमिच्छन्तो मृगाः सिंहार्द्दिता इव । भग्नशृङ्गा इव वृषाः शीर्णदंष्ट्रा इवोरगाः ।
प्रत्युपायाम सायाह्ने निर्जिताः सव्यसाचिना । हतप्रवीरा विध्वस्ता निकृत्ता निशितैः शरैः ।
सूतपुत्त्रे हते राजन् पुत्त्रास्ते प्राद्रवन् भयात् । विशस्त्रकवचाः सर्व्वे कान्दिशीका विचेतसः ।
अन्योन्यमभिनिघ्नन्तो वीक्ष्यमाणा भयाद्दिशः । मामेव नूनं बीभत्सुर्मामेव च वृकोदरः । १३५
अभियातीति मन्वानाः पेतुर्मम्लुश्च भारत । हयानन्ये रथानन्ये गजानन्ये महारथाः ।
आरुह्य जवसम्पन्नान् पादातानाजहुर्भयात् । कुञ्जरैः स्यन्दना भग्नाः सादिनश्च महारथैः ।

पदातिसङ्घास्त्वश्वौघैः पलायद्भिर्भृशं हताः । व्यालतस्करसङ्कीर्णे सार्थहीना यथा वने ।
तथा त्वदीया निहते सूतपुत्त्रे तदाऽभवन् । हतारोहास्तदा नागाश्छिन्नहस्तास्तथाऽपरे ।
सर्व्वं पार्थमयं लोकमपश्यन् वै भयातुराः । तान्प्रेक्ष्य द्रवतः सर्व्वान् भीमसेनभयार्द्दितान् । १७०
दुर्य्योधनोऽथ स्वं सूतं हाहा कृत्वेदमब्रवीत् । नातिक्रमिष्यते पार्थो धनुष्पाणिमवस्थितं ।
जघने वर्त्तमानं मां तूर्णमश्वान् प्रचोदय । समरे युध्यमानं हि कौन्तेयो मां धनञ्जयः ।
नोत्सहेदभ्यतिक्रान्तुं वेलामिव महार्णवः । अद्यार्ज्जुनं सगोविन्दं मानिनञ्च वृकोदरं ।
निहत्य शिष्टान् शत्रूंश्च कर्णस्यानृण्यमाप्नुयां । तच्छ्रुत्वा कुरुराजस्य शूरार्य्यसदृशं वचः ।
सूतो हेमपरिच्छन्नाञ्छनैरश्वानचोदयत् । गजाश्वरथहीनास्तु पादाताश्चैव मारिष । १७५
पञ्चविंशतिसाहस्राः प्राद्रवञ्छनकैरिव । तान् भीमसेनः संक्रुद्धो धृष्टद्युम्नश्च पार्षतः ।
बलेन चतुरङ्गेण परिक्षिप्याहनच्छरैः । प्रत्ययुध्यन्त ते सर्व्वे भीमसेनं सपार्षतं ।
पार्थपार्षतयोश्चान्ये जगृहुस्तत्र नामनी । अक्रुध्यत रणे भीमस्तैर्मृधे पर्य्यवस्थितैः ।
सोऽवतीर्य्य रथात्तूर्णं गदापाणिरयुध्यत । न तान् रथस्थो भूमिष्ठान् धर्म्मापेक्षी वृकोदरः ।
योधयामास कौन्तेयो भुजवीर्य्यं समाश्रितः । जातरूपपरिच्छन्नां प्रगृह्य महतीं गदां । १८०
न्यवधीत्तावकान्सर्व्वान् दण्डपाणिरिवान्तकः । पदातयोऽतिसंरब्धास्त्यक्त्वा जीवितबान्धवाः ।
भीममभ्यद्रवन् सर्व्वे पतङ्गा ज्वलनं यथा । आसाद्य भीमसेनं ते संरब्धा युद्धदुर्म्मदाः ।
विनेशुः सहसा दृष्ट्वा भूतग्रामा इवान्तकं । श्येनवच्चरन् भीमः खड्गेन गदया तथा ।
पञ्चविंशतिसाहस्रांस्तावकानामपोथयत् । हत्वा तत्पुरुषानीकं भीमः सत्यपराक्रमः ।
धृष्टद्युम्नं पुरस्कृत्य पुनस्तस्थौ महाबलः । धनञ्जयो रथानीकमन्वपद्यत वीर्य्यवान् । १८५
माद्रीपुत्त्रौ तु शकुनिं सात्यकिश्च महारथः । जवेनाभ्यपतन् हृष्टा हन्तुकामा महाबलाः ।
तस्याऽश्ववाहान् सुबहूंस्ते निहत्य शितैः शरैः । तमन्वधावंस्त्वरितास्तत्र युद्धमभून्महत् ।
ततो धनञ्जयो राजन् रथानीकमगाहत । विश्रुतं त्रिषु लोकेषु गाण्डीवं व्याक्षिपन्धनुः ।
कृष्णसारथिमायान्तं दृष्ट्वा श्वेतहयं रथं । अर्ज्जुनं चापि योद्धारं त्वदीयाः पर्य्यवारयन् ।
विप्रहीनरथाश्वाश्च शरैश्च परिवारिताः । पञ्चविंशतिसाहस्राः पार्थमार्च्छन्पदातयः । १९०
हत्वा तत्पुरुषानीकं पञ्चालानां महारथाः । भीमसेनं पुरस्कृत्य न चिरात्प्रत्यपद्यत ।
महाधनुर्द्धरः श्रीमानमित्रगणसूदनः । पुत्त्रः पञ्चालराजस्य धृष्टद्युम्नो महायशाः ।
पारावतसवर्णाश्वं कोविदारवरध्वजं । धृष्टद्युम्नं रणे दृष्ट्वा त्वदीयाः प्राद्रवन् भयात् ।
गान्धारराजं शीघ्रास्त्रमनुसृत्य यशस्विनौ । न चिरात्प्रत्यदृश्येतां माद्रीपुत्त्रौ ससात्यकी ।
चेकितानः शिखण्डी च द्रौपदेयाश्च मारिष । हत्वा त्वदीयं सुमहत्सैन्यं शङ्खानथाधमन् । १९५
ते सर्व्वांस्तावकान् प्रेक्ष्य द्रवतो वै पराङ्मुखान् । अभ्यधावन्त निघ्नन्तो वृषं जित्वा यथा वृषाः ।
सेनावशेषं तं दृष्ट्वा तव पुत्त्रस्य पाण्डवः । अवस्थितं सव्यसाची चुक्रोध बलवान्नृप ।

तत एनं शरै राजन् सहसा समवाकिरत्। रजसा चोद्धतेनाथ न स्म किञ्चन दृश्यते।
अन्धकारीकृते लोके शरभूते महीतले। दिशः सर्व्वा महाराज तावकाः प्राद्रवन् भयात्।
भज्यमानेषु सैन्येषु कुरुराजो विशाम्पते। परेषामात्मनश्चैव समन्तात्समुपाद्रवत्। १७०
ततो दुर्य्योधनः सर्व्वानाजुहावाथ पाण्डवान्। युद्धाय भरतश्रेष्ठो देवानिव पुरा बलिः।
त एनमभिगर्ज्जन्तं सहिताः समुपाद्रवन्। नानाशस्त्रसृजः क्रुद्धा भर्त्सयन्तो मुहुर्म्मुहुः।
दुर्य्योधनोऽप्यसम्भ्रान्तस्तानरीन् व्यधमच्छरैः। तत्राद्भुतमपश्याम तव पुत्रस्य पौरुषं।
यदेनं पाण्डवाः सर्व्वे न शेकुरभिवर्त्तितुं। नातिदूरापयातञ्च कृतबुद्धिं पलायने।
दुर्य्योधनः स्वकं सैन्यमपश्यद्भृशविक्षतं। ततोऽवस्थाप्य राजेन्द्र कृतबुद्धिस्तवात्मजः। १७५
हर्षयन्निव तान् योधानिदं वचनमब्रवीत्। न तं देशं प्रपश्यामि पृथिव्यां पर्व्वतेषु च।
यत्र यातान्न वो हन्युः पाण्डवाः किं सृतेन वः। स्वल्पञ्चापि बलं तेषां कृष्णौ च भृशविक्षतौ।
यदि सर्व्वेऽत्र तिष्ठामो ध्रुवो नो विजयो भवेत्। विप्रयातांस्तु वो भिन्नान् पाण्डवाः कृतकिल्बिषाः।
अनुसृत्य हनिष्यन्ति श्रेयो नः समरे वधः। सुखः सांग्रामिको मृत्युः क्षत्रधर्म्मेण युध्यतः।
मृतो दुःखं न जानीते प्रेत्य चानन्त्यमश्नुते। शृण्वन्तु क्षत्रियाः सर्व्वे यावन्तो वै समागताः। १८०
द्विषतो भीमसेनस्य क्रुद्धस्य वशमेष्यथ। पितामहैराचरितं न धर्म्मं हातुमर्हथ।
न च कर्म्मास्ति पापीयः क्षत्रियस्य पलायनात्। न युद्धधर्म्मात् श्रेयान् हि पन्थाः स्वर्गस्य कौरवाः।
सुचिरेणार्ज्जितान् लोकान् सद्यो योधः समश्नुते। तस्य तद्वचनं राज्ञः पूजयित्वा महारथाः।
पुनरेवाभ्यवर्त्तन्त क्षत्रियाः पाण्डवान्प्रति। पराजयममृष्यन्तः कृतचित्ताश्च विक्रमे।
ततः प्रववृते युद्धं पुनरेव सुदारुणं। तावकानां परेषाञ्च देवासुररणोपमं। १८५
युधिष्ठिरपुरोगांश्च सर्व्वसैन्येन पाण्डवान्। अन्वधावन्महाराज पुत्रो दुर्य्योधनस्तव।
इति श्रीमहाभारते शल्यपर्व्वणि कौरवसैन्यापयाने तृतीयोऽध्यायः ॥ ३ ॥
॥ सञ्जय उवाच ॥ पतितान् रथनीडांश्च रथांश्चापि महात्मनां। रणे विनिहतान्दृष्ट्वा नागान्पत्तींश्च मारिष।
आयोधनञ्चातिघोरं रुद्रस्याक्रीडसन्निभं। अप्रख्यातिं गतानाञ्च राज्ञां शतसहस्रशः।
विमुखे तव पुत्रे तु शोकोपहतचेतसि। भृशोद्विग्नेषु सैन्येषु दृष्ट्वा पार्थस्य विक्रमं।
ध्यायमानेषु सैन्येषु दुःखं प्राप्तेषु भारत। बलानां मथ्यमानानां श्रुत्वा निनदमुत्तमं। १९०
अभिज्ञानं नरेन्द्राणां विक्षतं प्रेक्ष्य संयुगे। कृपाविष्टः कृपो राजन् वयःशीलसमन्वितः।
अब्रवीत्तत्र तेजस्वी सोऽभिसृत्य जनाधिपं। दुर्य्योधनं मन्युवशाद्वचनं वचनक्षमः।
दुर्य्योधन निबोधेदं यत्त्वां वक्ष्यामि भारत। श्रुत्वा कुरु महाराज यदि ते रोचतेऽनघ।
न युद्धधर्म्माच्छ्रेयान् वै पन्था राजेन्द्र विद्यते। यं समाश्रित्य युध्यन्ते क्षत्रियाः क्षत्रियर्षभ।
पुत्रो माता पिता चैव स्वस्रीयो मातुलस्तथा। सम्बन्धिबान्धवाश्चैव योध्या वै क्षत्रजीविना। १९५
वधे चैव परो धर्म्मस्तथाऽधर्म्मः पलायने। तस्माद्घोरां समापन्ना जीविकां जीवितार्थिनः।

तच त्वां प्रतिवक्ष्यामि किञ्चिदेव हितं वचः। हते भीष्मे च द्रोणे च कर्णे चैव महारथे।
जयद्रथे च निहते तव भ्रातृषु चानघ। लक्ष्मणे तव पुत्रे च किं शेषं पर्य्युपास्महे।
येषु भारं समासाद्य राज्ये मतिमकुर्म्महि। ते सन्त्यज्य तनूर्याताः शूरा ब्रह्मविदां गतिं।
वयं त्विह विना भूता गुणवद्भिर्महारथैः। कृपणं वर्त्तयिष्यामः पातयित्वा नृपान्बहून्। २००
सर्व्वैरपि च जीवद्भिर्बीभत्सुरपराजितः। कृष्णनेत्रो महाबाहुर्देवैरपि दुरासदः।
इन्द्रकार्म्मुकवज्राभमिन्द्रकेतुमिवोच्छ्रितं। वानरं केतुमासाद्य सञ्चचाल महाचमूः।
सिंहनादेन भीमस्य पाञ्चजन्यस्वनेन च। गाण्डीवस्य च निर्घोषात्संहृष्यन्ति मनांसि नः।
चरन्तीव महाविद्युन्मुष्णन्ती नयनप्रभां। अलातमिव चाविद्धं गाण्डीवं समदृश्यत।
जाम्बूनदविचित्रञ्च धूयमानं महद्धनुः। दृश्यते दिक्षु सर्व्वासु विद्युदभ्रघनेष्विव। २०५
श्वेताश्ववेगसम्पन्नाः शशिकाशसमप्रभाः। पिबन्त इव चाकाशं रथे युक्तास्तु वाजिनः।
उह्यमानाश्च कृष्णेन वायुनेव बलाहकाः। जाम्बूनदविचित्राङ्गा वहन्ते चार्ज्जुनं रणे।
तावकं तद्बलं राजन्नर्ज्जुनोऽस्त्रविदाम्वरः। गहनं शिशिरे कक्षं ददाहाग्निरिवोत्थितः।
गाहमानमनीकानि महेन्द्रसदृशप्रभं। धनञ्जयमपश्याम चतुर्दंष्ट्रमिव द्विपं।
विक्षोभयन्तं सेनान्ते त्रासयन्तञ्च पार्थिवान्। धनञ्जयमपश्याम नलिनीमिव कुञ्जरं। २१०
त्रासयन्तं तथा योधान् धनुर्घोषेण पाण्डवं। भूय एनमपश्याम सिंहं मृगगणा इव।
सर्व्वलोकमहेष्वासौ वृषभौ सर्व्वधन्विनां। आमुक्तकवचौ कृष्णौ लोकमध्ये व्यराजतां।
अद्य सप्तदशाहानि वर्त्तमानानि भारत। सङ्ग्रामस्यातिघोरस्य वध्यतां चाभितो युधि।
वायुनेव विधूतानि तवानीकानि सर्व्वशः। शरदम्भोदजालानि व्यशीर्य्यन्त समन्ततः।
तां नावमिव पर्य्यस्तां वातभ्रान्तामिवार्णवे। तव सेनां महाराज सव्यसाची व्यकम्पयत्। २१५
क नु ते सूतपुत्रोऽभूत् क नु द्रोणः सहानुगः। अहं क च क चात्मा ते हार्द्दिक्यश्च तथा क नु।
दुःशासनश्च भ्राता ते भ्रातृभिः सहितः क नु। वाणगोचरसम्प्राप्तं प्रेक्ष्य चैव जयद्रथं।
सम्बन्धिनस्तथा भ्रातॄन् सहायान्मातुलांस्तथा। सर्व्वान् विक्रम्य मिषतो लोकं चाक्रम्य मूर्द्धनि।
जयद्रथो हतो राजा किन्नु शेषमुपास्महे। को वेह स पुमानस्ति यो विजेष्यति पाण्डवं।
तस्य चास्त्राणि दिव्यानि विविधानि महात्मनः। गाण्डीवस्य च निर्घोषो वीर्य्याणि हरते हि नः। २२०
नष्टचन्द्रा यथा रात्रिः सेनेयं हतनायका। नागभग्नद्रुमा शुष्का नदीवाकुलतां गता।
ध्वजिन्यां हतनेत्रायां यथेष्टं श्वेतवाहनः। चरिष्यति महाबाहुः कक्षेऽग्निरिव संज्वलन्।
सात्यकेश्चैव यो वेगो भीमसेनस्य चोभयोः। दारयेत गिरीन् सर्व्वान् शोषयेत च सागरान्।
उवाच वाक्यं यद्भीमः सभामध्ये विशाम्पते। कृतञ्च सकलं तेन भूयश्चैव करिष्यति।
प्रमुखस्थे तदा कर्णे बलं पाण्डवरक्षितं। दुरासदं तथा गुप्तं व्यूढं गाण्डीवधन्वना। २२५
युष्माभिस्तानि चीर्णानि यान्यसाधूनि साधुषु। अकारणकृतान्येव तेषां वः फलमागतं।

आत्मनो ऽर्थे त्वया लोको यत्नतः सर्व्व आहृतः। स ते संशयितस्तात आत्मा च भरतर्षभ।
रक्ष दुर्य्योधनात्मानमात्मा सर्व्वस्य भाजनं। भिन्ने हि भाजने तात दिशो गच्छति तद्गतं।
हीयमानेन वै सन्धिः पर्य्येष्टव्यः समेन च। विग्रहो वर्द्धमानेन नीतिरेषा बृहस्पतेः।
ते वयं पाण्डुपुत्रेभ्यो हीनाः स्वबलशक्तितः। तदत्र पाण्डवैः सार्द्धं सन्धिं मन्ये क्षमं विभो। २१०
न जानीते हि यः श्रेयः श्रेयसश्चावमन्यते। स क्षिप्रं भ्रश्यते राज्यान्न च श्रेयोऽनुविन्दति।
प्रणिपत्य हि राजानं राज्यं यदि लभेमहि। श्रेयः स्यान्न तु मौढ्येन राजन् गन्तुं पराभवं।
वैचित्रवीर्य्यवचनात् कृपाशीलो युधिष्ठिरः। विनियुञ्जीत राज्ये त्वां गोविन्दवचनेन हि।
यद्ब्रूयाद्धि हृषीकेशो राजानमपराजितं। अर्ज्जुनं भीमसेनञ्च सर्व्वे कुर्य्युरसंशयं।
नातिक्रमिष्यते कृष्णो वचनं कौरवस्य ह। धृतराष्ट्रस्य मन्ये ऽहं नापि कृष्णस्य पाण्डवः। २१५
एतत्क्षेममहं मन्ये तव पार्थैर्न विग्रहं। न त्वां ब्रवीमि कार्पण्यान्न प्राणपरिरक्षणात्।
पथ्यं राजन् ब्रवीमि त्वां तत्परासुः स्मरिष्यसि। इति वृद्धो विलप्यैतत् कृपः शारद्वतो वचः।
दीर्घमुष्णञ्च निश्वासं मुमोच च मुमोह च।

इति श्रीमहाभारते शल्यपर्व्वणि दुर्य्योधनप्रबोधने चतुर्थोऽध्यायः॥ ४॥

॥ सञ्जय उवाच॥ एवमुक्तस्ततो राजा गौतमेन यशस्विना। निश्वस्य दीर्घमुष्णञ्च तूष्णीमासीद्विशाम्पते।
ततो मुहूर्त्तं स ध्यात्वा धार्त्तराष्ट्रो महामनाः। कृपं शारद्वतं वाक्यमित्युवाच परन्तपः। २२०
यत्किञ्चित्सुहृदा वाच्यं तत्सर्व्वं श्रावितो ह्यहं। कृतं च भवता सार्द्धं प्राणान् सन्त्यज्य युध्यता।
गाहमानमनीकानि युध्यमानं महारथैः। पाण्डवैरतितेजोभिर्लोकस्त्वामनुदृष्टवान्।
सुहृदा यदिदं वाक्यं भवता श्रावितो ह्यहं। न मां प्रीणाति तत्सर्व्वं मुमूर्षोरिव भेषजं।
हेतुकारणसंयुक्तं हितं वचनमुत्तमं। उच्यमानं महाबाहो न मे विप्राग्र्य रोचते।
राज्याद्विनिकृतो ऽस्माभिः कथं सो ऽस्मासु विश्वसेत्। अक्षद्यूतेन नृपतिर्जितो ऽस्माभिर्महाधनः। २२५
स कथं मम वाक्यानि श्रद्दध्याद्भूय एव तु। तथा दौत्येन सम्प्राप्तः कृष्णः पार्थहिते रतः।
विप्रलब्धो हृषीकेशस्तच्च कर्म्माविचारितं। स च मे वचनं ब्रह्मन् कथमेवाभिपद्यते।
विललाप हि यत्कृष्णा सभामध्ये समेयुषी। तन्न मर्षयते कृष्णो न राज्यहरणं तथा।
एकप्राणावुभौ कृष्णावन्योन्यप्रतिसंहतौ। पुरा यच्छ्रुतमेवासीदद्य पश्यामि तत्प्रभो।
स्वस्रीयञ्च हतं श्रुत्वा दुःखं स्वपिति केशवः। कृतागसो वयं तस्य स मदर्थं कथं क्षमेत्। २३०
अभिमन्योर्व्विनाशेन न शर्म्म लभते ऽर्ज्जुनः। स कथं मद्धिते यत्नं प्रकरिष्यति याचितः।
मध्यमः पाण्डवस्तीक्ष्णो भीमसेनो महाबलः। प्रतिज्ञातञ्च तेनोग्रं भज्येतापि न संनमेत्।
उभौ तौ बद्धनिस्त्रिंशावुभौ चाबद्धकङ्कटौ। कृतवैरावुभौ वीरौ यमावपि यमोपमौ।
धृष्टद्युम्नः शिखण्डी च कृतवैरौ मया सह। तौ कथं मद्धिते यत्नं प्रकुर्य्यातां द्विजोत्तम।
दुःशासनेन यत्कृष्णा एकवस्त्रा रजस्वला। परिक्लिष्टा सभामध्ये सर्व्वलोकस्य पश्यतः। २३५

तथा विवसनां दीनां स्मरन्त्यपि पाण्डवाः । न निवारयितुं शक्याः संग्रामात्ते परन्तपाः ।
यदा च द्रौपदी क्लिष्टा मद्विनाशाय दुःखिता । उग्रं तेपे तपः कृष्णा भर्तृणामर्थसिद्धये ।
स्थण्डिले नित्यदा शेते यावद्वैरस्य यातनं । निःक्षिप्य मानं दर्पञ्च वासुदेवसहोदरा ।
कृष्णायाः प्रेष्यवद्भूत्वा शुश्रूषां कुरुते सदा । इति सर्व्वं समुन्नद्धं न निर्व्वाति कथञ्चन ।
अभिमन्योर्विनाशेन स सन्धेयः कथं मया । कथञ्च नाम भुक्त्वेमां पृथिवीं सागराम्बरां । १९०
पाण्डवानां प्रसादेन भोक्ष्ये राज्यमहं कथं । उपर्य्युपरि वै राज्ञां ज्वलित्वा भास्करो यथा ।
युधिष्ठिरं कथं पश्चादनुयास्यामि दासवत् । कथं भुक्त्वा स्वयं भोगान् दत्त्वा दायांश्च पुष्कलान् ।
कृपणं वर्त्तयिष्यामि कृपणैः सह जीविकां । नाभ्यसूयामि ते वाक्यमुक्तं स्निग्धं हितं त्वया ।
न तु सन्धिमहं मन्ये प्राप्तकालं कथञ्चन । सुनीतमनुपश्यामि सुयुद्धेन परन्तप ।
नायं क्लीवयितुं कालः संयोद्धुं काल एव नः । इष्टं मे बहुभिर्यज्ञैर्दत्ता विप्रेषु दक्षिणाः । १९५
प्राप्ताः कामाः श्रुता वेदाः शत्रूणां मूर्द्ध्नि च स्थितं । भृत्या मे सुभृतास्तात दीनाश्चाभ्युद्धृता जनाः ।
नोत्सहेऽद्य द्विजश्रेष्ठ पाण्डवान् वक्तुमीदृशं । जितानि परराष्ट्राणि स्वराष्ट्रमनुपालितं ।
भुक्ताश्च विविधा भोगास्त्रिवर्गः सेवितो मया । पितॄणां गतमानृण्यं क्षत्रधर्म्मस्य चोभयोः ।
न सुखं ध्रुवमस्तीह कुतो राज्यं कुतो यशः । इह कीर्त्तिर्विधातव्या सा च युद्धेन नान्यथा ।
गृहे यत् क्षत्रियस्यापि निधनं तद्विगर्हितं । अधर्म्मः सुमहानेष यच्छय्यामरणं गृहे । २००
अरण्ये यो विमुञ्चेत संग्रामे वा तनुं नरः । क्रतूनाहृत्य महतो महिमानं स गच्छति ।
कृपणं विलपन्नार्त्तो जरया ऽभिपरिप्लुतः । म्रियते रुदतां मध्ये ज्ञातीनां न स पूरुषः ।
त्यक्त्वा तु विविधान् भोगान् गतानां परमां गतिं । अपीदानीं सुयुद्धेन गच्छेयं शक्रलोकतां ।
शूराणामार्य्यवृत्तानां संग्रामेष्वनिवर्त्तिनां । धीमतां सत्यसन्धानां सर्व्वेषां क्रतुयाजिनां ।
शस्त्रावभृथपूतानां ध्रुवं वासस्त्रिविष्टपे । मुदा नूनं प्रपश्यन्ति युद्धे ह्यप्सरसां गणाः । २०५
पश्यन्ति नूनं पितरः पूजितान् सुरसंसदि । अप्सरोभिः परिवृतान् मोदमानांस्त्रिविष्टपे ।
पन्थानममरैर्यातं शूरैश्चैवानिवर्त्तिभिः । अपि तैः संगतं मार्गं वयमध्यारुहेमहि ।
पितामहेन वृद्धेन तथा चार्य्येण धीमता । जयद्रथेन कर्णेन तथा दुःशासनेन च ।
घटमाना मदर्थे ऽस्मिन् हताः शूरा नराधिपाः । शेरते लोहिताक्ताङ्गाः पृथिव्यां शरविक्षताः ।
उत्तमास्त्रविदः शूरा यथोक्तक्रतुयाजिनः । त्यक्त्वा प्राणान् यथान्यायमिन्द्रसद्मस्वधिष्ठिताः । २१०
तैस्त्वयं रचितः पन्था दुर्गमो हि पुनर्भवेत् । सम्पतद्भिर्महावेगैर्यास्यद्भिरिह सद्गतिं ।
ये मदर्थे हताः शूरास्तेषां कृतमनुस्मरन् । ऋणं प्रतिप्रयुञ्जानो न राज्ये मन आदधे ।
पातयित्वा वयस्यांश्च भ्रातॄनथ पितामहान् । जीवितं यदि रक्षेयं लोको मां गर्हयेद्ध्रुवं ।
कीदृशं तद्भवेद्राज्यं मम हीनस्य बन्धुभिः । सखिभिश्च सुहृद्भिश्च प्रणिपत्य च पाण्डवं ।
सो ऽहमेतादृशं कृत्वा जगतोऽस्य पराभवं । सुयुद्धेन ततः स्वर्गं प्राप्स्यामि न तदन्यथा । २१५

एवं दुर्य्योधनेनोक्ताः सर्व्वे सम्पूज्य तद्वचः। साधु साध्विति राजानं क्षत्रियाः सम्बभाषिरे।
पराजयमशोचन्तः कृतचित्ताश्च विक्रमे। सर्व्वे विनिश्चिता योद्धुमुदग्रमनसोऽभवन्।
ततो वाहान् समाश्वास्य सर्व्वे युद्धाभिनन्दिनः। ऊने द्वियोजने गत्वा प्रत्यतिष्ठन्त कौरवाः।
आकाशे विद्रुमे पुण्ये प्रस्थे हिमवतः शुभे। अरुणां सरस्वतीं प्राप्य पपुः सस्नुश्च तज्जलं।
तव पुत्राः कृतोत्साहाः पर्य्यवर्त्तन्त ते ततः। पर्य्यवस्थाप्य चात्मानमन्योन्येन पुनस्तदा। १९०
सर्व्वे राजन्न्यवर्त्तन्त क्षत्रियाः कालचोदिताः।

इति श्रीमहाभारते शल्यपर्व्वणि दुर्य्योधनवाक्ये पञ्चमोऽध्यायः॥ ५ ॥

॥ सञ्जय उवाच॥ अथ हैमवते प्रस्थे स्थित्वा युद्धाभिनन्दिनः। सर्व्व एव महाराज योधास्तत्र समागताः।
शल्यश्च चित्रसेनश्च शकुनिश्च महारथः। अश्वत्थामा कृपश्चैव कृतवर्म्मा च सात्वतः।
सुषेणोऽरिष्टसेनश्च धृतसेनश्च वीर्य्यवान्। जयत्सेनश्च राजानस्ते रात्रिमुषितास्ततः।
रणे कर्णे हते वीरे त्रासिता जितकाशिभिः। नालभन् शर्म्म ते पुत्रा हिमवन्तमृते गिरिं। १९५
तेऽब्रुवन् सहितास्तत्र राजानं शल्यसन्निधौ। कृतयत्ना रणे राजन् सम्पूज्य विधिवत्तदा।
कृत्वा सेनाप्रणेतारं परांस्त्वं योद्धुमर्हसि। येनाभिगुप्ताः सङ्ग्रामे जयेमासुहृदो वयं।
ततो दुर्य्योधनः स्थित्वा रथे रथवरोत्तमं। सर्व्वयुद्धविभावज्ञमन्तकप्रतिमं युधि।
स्वङ्गं प्रच्छन्नशिरसं कम्बुग्रीवं प्रियम्वदं। व्याकोशपद्मपत्राक्षं व्याघ्रास्यं मेरुगौरवं।
स्थाणोर्वृषस्य सदृशं स्कन्धनेत्रगतिस्वरैः। पुष्टश्लिष्टायतभुजं सुविस्तीर्णघनोरसं। २००
जवे बले च सदृशमरुणानुजवातयोः। आदित्यस्यार्च्चिषा तुल्यं बुद्ध्या चोशनसा समं।
कान्तिरूपमुखैश्वर्य्यैस्त्रिभिश्चन्द्रमसा समं। काञ्चनोत्पलसङ्घातैः सदृशं श्लिष्टसन्धिकं।
सुवृत्तोरुकटीजङ्घं सुपादं स्वङ्गुलीनखं। स्मृत्वा स्मृत्वैव तु गुणान् धात्रा यत्नाद्विनिर्म्मितं।
सर्व्वलक्षणसम्पन्नं निपुणं श्रुतिसागरं। जेतारं तरसाऽरीणामजेयं शत्रुभिर्ब्बलात्।
दशाङ्गं यश्चतुष्पादमिष्वस्त्रं वेद तत्त्वतः। साङ्गांश्च चतुरो वेदान् सम्यगाख्यानपञ्चमान्। २०५
आराध्य त्र्यम्बकं यत्नाद्व्रतैरुग्रैर्महातपाः। अयोनिजायामुत्पन्नो द्रोणेनायोनिजेन यः।
तमप्रतिमकर्म्माणं रूपेणासदृशं भुवि। पारगं सर्व्वविद्यानां गुणार्णवमरिन्दमं।
तमभ्येत्यात्मजस्तूर्णमश्वत्थामानमब्रवीत्। यं पुरस्कृत्य सहिता युधि जेष्याम पाण्डवान्।
गुरुपुत्रोऽद्य सर्व्वेषामस्माकं परमा गतिः। भवांस्तस्मान्नियोगात्ते कोऽस्तु सेनापतिर्म्मम।
॥ द्रौणिरुवाच॥ अयं कुलेन वीर्य्येण तेजसा यशसा श्रिया। सर्व्वैर्गुणैः समुदितः शल्यो नोऽस्तु चमूपतिः। २१०
भागिनेयान्निजांस्त्यक्त्वा कृतज्ञोऽस्मानुपागतः। महासेनो महाबाहुर्म्महासेन इवापरः।
एनं सेनापतिं कृत्वा नृपतिं नृपसत्तमाः। शक्यः प्राप्तुं जयोऽस्माभिर्द्देवैः स्कन्दमिवाजितं।
तथोक्ते द्रोणपुत्रेण सर्व्व एव महारथाः। परिवार्य्य स्थिताः शल्यं जयशब्दांश्च चक्रिरे।
युद्धाय च मतिं चक्रुरावेशञ्च परं ययुः। ततो दुर्य्योधनः शल्यं भूमौ स्थित्वा रथे स्थितं।

उवाच प्राञ्जलिर्भूत्वा द्रोणभीष्मसमं रणे । अयं स कालः सम्प्राप्तो मित्राणां मित्रवत्सल । २१५
यत्र मित्रममित्रं वा परीक्षन्ते बुधा जनाः । स भवानस्तु नः शूरः प्रणेता वाहिनीमुखे ।
रणं याते च भवति पाण्डवा मन्दचेतसः । भविष्यन्ति सहामात्याः पाञ्चालाश्च निरुद्यमाः ।
॥ शल्य उवाच ॥ यत्त्वं मां मन्यसे राजन् कुरुराज करोमि तत् । त्वत्प्रियार्थं हि मे सर्व्वं प्राणा राज्यं धनानि च ।
॥ दुर्य्योधन उवाच ॥ सैनापत्येन वरये त्वामहं मातुलातुलं । सोऽस्मान् पाहि युधां श्रेष्ठ स्कन्दो देवानिवाहवे ।
अभिषिच्यस्व राजेन्द्र देवानामिव पावकिः । जहि शत्रून् रणे वीर महेन्द्रो दानवानिव । २२०
इति श्रीमहाभारते शल्यपर्व्वणि दुर्य्योधनवाक्ये षष्ठोऽध्यायः ॥ ६ ॥
॥ सञ्जय उवाच ॥ एतच्छ्रुत्वा वचो राज्ञो मद्रराजः प्रतापवान् । दुर्य्योधनं तदा राजन् वाक्यमेतदुवाच ह ।
दुर्य्योधन महाबाहो शृणु वाक्यविदाम्वर । यावेतौ मन्यसे कृष्णौ रथस्थौ रथिनाम्वरौ ।
न मे तुल्यावुभावेतौ बाहुवीर्य्ये कथञ्चन । उद्यतां पृथिवीं सर्व्वां ससुरासुरमानवां ।
योधयेयं रणमुखे संक्रुद्धः किमु पाण्डवान् । विजेष्ये च रणे पार्थान् सोमकांश्च समागतान् ।
अहं सेनाप्रणेता ते भविष्यामि न संशयः । तञ्च व्यूहं विधास्यामि न तरिष्यन्ति यं परे । २२५
इति सत्यं ब्रवीम्येष दुर्य्योधन न संशयः । एवमुक्तस्ततो राजा मद्राधिपतिमञ्जसा ।
अभ्यसिञ्चत सेनायां मध्ये भरतसत्तम । विधिना शास्त्रदृष्टेन हृष्टरूपो विशाम्पते ।
अभिषिक्ते ततस्तस्मिन् सिंहनादो महानभूत् । तव सैन्येष्ववाद्यन्त वादित्राणि च भारत ।
हृष्टाश्चासंस्ततो योधा मद्रकाश्च महारथाः । तुष्टुवुश्चापि राजानं शल्यमाहवशोभिनं ।
जय राजंश्चिरं जीव जहि शत्रून् समागतान् । तव बाहुबलं प्राप्य धार्त्तराष्ट्रा महाबलाः । २३०
निखिलां पृथिवीं सर्व्वां प्रशासन्तु हतद्विषः । त्वं हि शक्तो रणे जेतुं ससुरासुरमानवान् ।
मर्त्यधर्म्माण इह तु किमु सोमकसृञ्जयान् । एवं संस्तूयमानस्तु मद्राणामधिपो बली ।
हर्षं प्राप तदा वीरो दुरापमकृतात्मभिः । अद्य चाहं रणे सर्व्वान् पाञ्चालान् सह पाण्डवैः ।
निहनिष्यामि राजेन्द्र स्वर्गं यास्यामि वा हतः । अद्य पश्यन्तु मां लोका विचरन्तमभीतवत् ।
अद्य पाण्डुसुताः सर्व्वे वासुदेवः ससात्यकिः । पाञ्चालाश्चेदयश्चैव द्रौपदेयाश्च सर्व्वशः । २३५
धृष्टद्युम्नः शिखण्डी च सर्व्वे चापि प्रभद्रकाः । विक्रमं मम पश्यन्तु धनुषश्च महद्बलं ।
लाघवञ्चास्त्रवीर्य्यञ्च भुजयोश्च बलं युधि । अद्य पश्यन्तु मे पार्थाः सिद्धाश्च सह चारणैः ।
यादृशं मे बलं बाह्वोः सम्पदस्त्रेषु या च मे । अद्य मे विक्रमं दृष्ट्वा पाण्डवानां महारथाः ।
प्रतीकारपरा भूत्वा चेष्टन्तां विविधाः क्रियाः । अद्य सैन्यानि पाण्डूनां द्रावयिष्ये समन्ततः ।
द्रोणभीष्मावति विभो सूतपुत्रञ्च संयुगे । विचरिष्ये रणे युध्यन् प्रियार्थं तव कौरव । २४०
॥ सञ्जय उवाच ॥ अभिषिक्ते तथा शल्ये तव सैन्येषु मानद । न कर्णव्यसनं केचिन्मेनिरे भरतर्षभ ।
हृष्टाः सुमनसश्चैव बभूवुस्तत्र सैनिकाः । मेनिरे निहतान् पार्थान् मद्रराजवशङ्गतान् ।
प्रहर्षं प्राप्य सेना तु तावकी भरतर्षभ । तां रात्रिं सुखिनी सुप्ता स्वस्थचित्ता च साऽभवत् ।

सैन्यस्य तव तं शब्दं श्रुत्वा राजा युधिष्ठिरः। वार्ष्णेयमब्रवीद्वाक्यं सर्व्वक्षत्रस्य पश्यतः।
मद्रराजः कृतः शल्यो धार्त्तराष्ट्रेण माधव। सेनापतिर्महेष्वासः सर्व्वसैन्येषु पूजितः। २७५
एतज्ज्ञात्वा यथाभूतं कुरु माधव यत्क्षमं। भवान्नेता च गोप्ता च विधत्स्व यदनन्तरं।
तमब्रवीन्महाराज वासुदेवो जनाधिपं। आर्त्तायनिमहं जाने तत्त्वेन भरतर्षभ।
वीर्य्यवांश्च महातेजा महात्मा च विशेषतः। कृती च चित्रयोधी च संयुक्तो लाघवेन च।
यादृग्भीष्मो यथा द्रोणो यादृक्कर्णश्च संयुगे। तादृशस्तद्विशिष्टो वा मद्रराजो मतो मम।
युध्यमानस्य तस्याजौ चिन्तयन्निव भारत। योद्धारं नाधिगच्छामि तुल्यरूपं जनाधिप। २८०
शिखण्ड्यर्ज्जुनभीमानां सात्वतस्य च भारत। धृष्टद्युम्नस्य च तथा बलेनाभ्यधिको रणे।
मद्रराजो महाराज सिंहद्विरदविक्रमः। विचरिष्यत्यभीः काले कालः क्रुद्धः प्रजास्विव।
तस्याद्य न प्रपश्यामि प्रतियोद्धारमाहवे। त्वामृते पुरुषव्याघ्र शार्दूलसमविक्रमं।
सदेवलोके कृत्स्नेऽस्मिन्नान्यस्त्वत्तः पुमानिह। मद्रराजं रणे क्रुद्धं यो हन्यात्कुरुनन्दन।
अहन्यहनि युध्यन्तं क्षोभयन्तं बलं तव। तस्माज्जहि रणे शल्यं मघवानिव शम्बरं। २८५
अजेयश्चाप्यसौ वीरो धार्त्तराष्ट्रेण सत्कृतः। तवैव विजयो नूनं हते मद्रेश्वरे युधि।
तस्मिन् हते हतं सर्व्वं धार्त्तराष्ट्रबलं महत्। एतच्छ्रुत्वा महाराज वचनं मम साम्प्रतं।
प्रत्युद्याहि रणे पार्थ मद्रराजं महारथं। जहि चैनं महाबाहो वासवो नमुचिं यथा।
न चैवात्र दया कार्य्या मातुलोऽयं ममेति वै। क्षत्रधर्म्मं पुरस्कृत्य जहि मद्रजनेश्वरं।
भीष्मद्रोणार्णवं तीर्त्त्वा कर्णपातालसम्भवं। मा निमज्जस्व सगणः शल्यमासाद्य गोष्पदं। २९०
यच्च ते तपसो वीर्य्यं यच्च क्षात्रबलं तव। तद्दर्शय रणे सर्व्वं जहि चैनं महारथं।
एतावदुक्त्वा वचनं केशवः परवीरहा। जगाम शिबिरं सायं पूज्यमानोऽथ पाण्डवैः।
केशवे तु तदा याते धर्म्मराजो युधिष्ठिरः। विसृज्य सर्व्वान् भ्रातॄंश्च पाञ्चालानथ सोमकान्।
सुष्वाप रजनीं तान्तु विशल्य इव कुञ्जरः। ते च सर्व्वे महेष्वासाः पाञ्चालाः पाण्डवास्तथा।
कर्णस्य निधने हृष्टाः सुषुपुस्तां निशां तदा। गतज्वरं महेष्वासं तीर्णपारं महारथं। २९५
बभूव पाण्डवेयानां सैन्यं प्रमुदितं निशि। सूतपुत्रस्य निधने जयं लब्ध्वा च मारिष।
इति श्रीमहाभारते शल्यपर्व्वणि शल्यसैनापत्ये सप्तमोऽध्यायः॥ ७॥
॥ सञ्जय उवाच ॥ व्यतीतायां रजन्यान्तु राजा दुर्य्योधनस्तदा। अब्रवीत्तावकान् सर्व्वान् सन्नह्यन्तां महारथाः।
राज्ञस्तु मतमाज्ञाय समनह्यत सा चमूः। अयोजयन् रथांस्तूर्णं पर्य्यधावंस्तथा परे।
अकल्प्यन्त च मातङ्गाः समनह्यन्त पत्तयः। रथानास्तरणोपेतांश्चक्रुरन्ये सहस्रशः।
वादित्राणाञ्च निनदः प्रादुरासीद्विशाम्पते। योधनार्थं हि सैन्यानां योधानां चाप्युदीर्य्यतां। ३००
ततो बलानि सर्व्वाणि सेनाशिष्टानि भारत। सन्नद्धान्येव ददृशुर्मृत्युं कृत्वा निवर्त्तनं।
शल्यं सेनापतिं कृत्वा मद्रराजं महारथाः। प्रविभज्य बलं सर्व्वमनीकेषु व्यवस्थिताः।

ततः सर्वे समागम्य पुत्रेण तव सैनिकाः। कृपश्च कृतवर्मा च द्रौणिः शल्योऽथ सौबलः।
अन्ये च पार्थिवाः शेषाः समयञ्चक्रिरे तदा। न तु एकेन योद्धव्यं कदाचिदपि पाण्डवैः।
यो ह्येकः पाण्डवैर्युध्येद्यो वा युध्यन्तमुत्सृजेत्। स पञ्चभिर्भवेद्युक्तः पातकैश्चोपपातकैः। २७५
अन्योन्यं परिरक्षद्भिर्योद्धव्यं सहितैश्च नः। एवं ते समयं कृत्वा सर्वे तत्र महारथाः।
मद्रराजं पुरस्कृत्य तूर्णमभ्यद्रवन्परान्। तथैव पाण्डवाः सर्वे व्यूह्य सैन्यं महारणे।
अभ्ययुः कौरवान् राजन् योत्स्यमानाः समन्ततः। तद्बलं भरतश्रेष्ठ क्षुब्धार्णवसमस्वनं।
समुद्धूतार्णवाकारमुद्धूतरथकुञ्जरं।
॥ धृतराष्ट्र उवाच ॥ द्रोणस्य चैव भीष्मस्य राधेयस्य मया श्रुतं। पातनं शंस मे भूयः शल्यस्याथ सुतस्य मे। २८०
कथं रणे हतः शल्यो धर्मराजेन सञ्जय। भीमसेनेन बलिना पुत्रो दुर्य्योधनो मम।
॥ सञ्जय उवाच ॥ क्षयं मनुष्यदेहानां तथा नागाश्वसङ्क्षयं। शृणु राजन् स्थिरो भूत्वा सङ्ग्रामं शंसतो मम।
आशा बलवती राजन् पुत्राणां तेऽभवत्तदा। हते द्रोणे च भीष्मे च सूतपुत्रे च पातिते।
शल्यः पार्थान् रणे सर्व्वान्निहनिष्यति मारिष। तामाशां हृदये कृत्वा समाश्वास्य च भारत।
मद्रराजं च समरे समाश्रित्य महारथं। नाथवन्तं तदात्मानममन्यत सुतस्तव। २८५
यदा कर्णे हते पार्थाः सिंहनादं प्रचक्रिरे। तदा राजन् धार्त्तराष्ट्रानाविवेश महद्भयं।
तान् समाश्वास्य च तदा मद्रराजः प्रतापवान्। व्यूह्य व्यूहं महाराज सर्व्वतोभद्रमृद्धिमत्।
प्रत्युद्ययौ रणे पार्थान् मद्रराजः प्रतापवान्। विधुन्वन् कार्म्मुकं चित्रं भारघ्नं वेगवत्तरं।
रथप्रवरमास्थाय सैन्धवाश्वं महारथः। तस्य सूतो महाराज रथस्थोऽशोभयद्रथं।
स तेन संवृतो वीरो रथेनामित्रकर्षणः। तस्थौ शूरो महाराज पुत्राणां ते भयप्रणुत्। २९०
प्रयाणे मद्रराजोऽभून्मुखं व्यूहस्य दंशितः। मद्रकैः सहितो वीरैः कर्णपुत्रैश्च दुर्ज्जयैः।
दुर्य्योधनोऽभवन्मध्ये रक्षितः कुरुपुङ्गवैः। सव्येऽभूत्कृतवर्म्मा च त्रिगर्त्तैः परिवारितः।
गौतमो दक्षिणे पार्श्वे शकैश्च यवनैः सह। अश्वत्थामा पृष्ठतोऽभूत्काम्बोजैः परिवारितः।
हयानीकेन महता सौबलश्चापि संवृतः। प्रययौ सर्व्वसैन्येन कैतव्यश्च महारथः।
पाण्डवाश्च महेष्वासा व्यूह्य सैन्यमरिन्दमाः। त्रिधा भूत्वा महाराज तव सैन्यमुपाद्रवन्। २९५
धृष्टद्युम्नः शिखण्डी च सात्यकिश्च महारथः। शल्यस्य वाहिनीं तूर्णमभिदुद्रुवुराहवे।
ततो युधिष्ठिरो राजा स्वेनानीकेन संवृतः। शल्यमेवाभिदुद्राव जिघांसुर्भरतर्षभ।
हार्द्दिक्यं तु महेष्वासमर्ज्जुनः शत्रुपूगहा। संशप्तकगणांश्चैव वेगितोऽभिदुद्रुवे।
गौतमं भीमसेनो वै सोमकाश्च महारथाः। अभ्यद्रवन्त राजेन्द्र जिघांसन्तः परान् युधि।
माद्रीपुत्रौ तु शकुनिमुलूकञ्च महारथं। ससैन्यौ सहसैनौ तावुपतस्थतुराहवे। ३००
तथैवायुतशो योधास्तावकाः पाण्डवान् रणे। अभ्यवर्त्तन्त संक्रुद्धा विविधायुधपाणयः।
॥ धृतराष्ट्र उवाच ॥ हते भीष्मे महेष्वासे द्रोणे कर्णे महारथे। कुरुष्वल्पावशिष्टेषु पाण्डवेयेषु संयुगे।

सुसंरब्धेषु पार्थेषु पराक्रान्तेषु सञ्जय। मामकानां परेषाञ्च किं शिष्टमभवद्बलं।
॥ सञ्जय उवाच ॥ यथा वयं परे राजन् युद्धाय समवस्थिताः। यावच्चासीद्बलं शिष्टं सङ्ग्रामे तन्निबोध मे।
एकादशसहस्राणि रथानां भरतर्षभ। दश दन्तिसहस्राणि सप्त चैव शतानि च। ४०५
पूर्णे शतसहस्रे द्वे हयानां भरतर्षभ। नरकोट्यस्तथा तिस्रो बलमेतत्तवाभवत्।
रथानां षट्सहस्राणि षट्सहस्राश्च कुञ्जराः। दश चाश्वसहस्राणि पत्तिकोटी च भारत।
एतद्बलं पाण्डवानामभवच्छेषमाहवे। एत एव समाजग्मुर्युद्धाय भरतर्षभ।
एवं विभज्य राजेन्द्र मद्रराजमते स्थिताः। पाण्डवान् प्रत्युदीयाम जयगृद्धाः प्रमन्यवः।
तथैव पाण्डवाः शूराः सङ्ग्रामे जितकाशिनः। उपायाता नरव्याघ्राः पाञ्चालाश्च यशस्विनः। ४१०
एवमेते महाराज परस्परवधैषिणः। उपयाता नरव्याघ्राः पूर्व्वां सन्ध्यां प्रति प्रभो।
ततः प्रववृते युद्धं घोररूपं भयानकं। तावकानां परेषाञ्च निघ्नतामितरेतरं।
इति श्रीमहाभारते शल्यपर्व्वणि व्यूहनिर्माणे अष्टमोऽध्यायः॥ ८॥
॥ सञ्जय उवाच ॥ ततः प्रववृते युद्धं कुरूणां भयवर्द्धनं। सृञ्जयैः सह राजेन्द्र घोरं देवासुरोपमं।
नरा रथा गजौघाश्च सादिनश्च सहस्रशः। वाजिनश्च पराक्रान्ताः समाजग्मुः परस्परं।
नागानां भीमरूपाणां द्रवतां निःस्वनो महान्। अश्रूयत यथा काले जलदानां नभस्तले। ४१५
नागैरभ्याहताः केचित् सरथा रथिनोऽपतन्। व्यद्रवन्त रणे वीरा द्राव्यमाणा मदोत्कटैः।
हयौघान् पादरक्षांश्च रथिनस्तत्र शिक्षिताः। शरैः सम्प्रेषयामासुः परलोकाय भारत।
सादिनः शिक्षिता राजन् परिवार्य्य महारथान्। विचरन्तो रणेऽभ्यघ्नन् प्रासशक्त्यृष्टिभिस्तथा।
धन्विनः पुरुषाः केचित् परिवार्य्य महारथान्। एकं बहव आसाद्य प्रेषयेयुर्यमक्षयं।
नागं रथवराश्चान्ये परिवार्य्य महारथाः। सान्तरा युधि तज्जघ्नुर्द्रवमाणं महारवं। ४२०
तथा च रथिनं क्रुद्धं विकिरन्तं शरान् बहून्। नागा जघ्नुर्महाराज परिवार्य्य समन्ततः।
नागो नागमतिद्रुत्य रथी च रथिनं रणे। शक्तितोमरनाराचैर्निजघ्ने तत्र भारत।
पादातानवमृद्नन्तो रथवारणवाजिनः। रणमध्ये व्यदृश्यन्त कुर्व्वन्तो महदाकुलं।
हयाश्च पर्य्यधावन्त चामरैरुपशोभिताः। हंसा हिमवतः प्रस्थे पिबन्त इव मेदिनीं।
तेषान्तु वाजिनां भूमिः खुरैश्छिन्ना विशाम्पते। अशोभत यथा नारी करजैः क्षतविक्षता। ४२५
वाजिनां खुरशब्देन रथनेमिस्वनेन च। पत्तीनां चापि शब्देन नागानां बृंहितेन च।
वादित्राणाञ्च घोषेण शङ्खानां निःस्वनेन च। अभवन्नादिता भूमिर्निर्घातैरिव भारत।
धनुषां कूजमानानां निस्त्रिंशानाञ्च दीप्यतां। कवचानां प्रभाभिश्च न प्राज्ञायत किञ्चन।
बहवो बाहवश्छिन्ना नागराजकरोपमाः। उद्वेष्टन्ते विचेष्टन्ते वेगं कुर्व्वन्ति दारुणं।
शिरसाञ्च महाराज पततां वसुधातले। च्युतानामिव तालेभ्यः फलानां श्रूयते स्वनः। ४३०
शिरोभिः पतितैर्भाति रुधिरार्द्रैर्वसुन्धरा। तपनीयनिभैः काले नलिनैरिव भारत।

उद्वृत्तनयनैस्तैस्तु गतसत्त्वैः सुविक्षतैः । व्यभ्राजत मही राजन् पुण्डरीकैरिवावृता ।
बाहुभिश्चन्दनादिग्धैः सकेयूरैर्महाधनैः । पतितैर्भाति वसुधा यथा शक्रध्वजैस्तथा ।
ऊरुभिश्च नरेन्द्राणां विनिकृत्तैर्महाहवे । हस्तिहस्तोपमैरन्यैः संवृतं तद्रणाङ्गनं ।
कबन्धशतसङ्कीर्णं छत्रचामरसङ्कुलं । सेनावनं तच्छुशुभे वनं पुष्पाचितं यथा । ४३५
तत्र योधा महाराज विचरन्तो ह्यभीतवत् । दृश्यन्ते रुधिराक्ताङ्गाः पुष्पिता इव किंशुकाः ।
मातङ्गाश्चाप्यदृश्यन्त शरतोमरपीडिताः । पतन्तस्तत्र तत्रैव छिन्नाभ्रसदृशा रणे ।
गजानीकं महाराज वध्यमानं महात्मभिः । व्यदीर्यन्त दिशः सर्वा वातनुन्ना घना इव ।
ते गजा घनसङ्काशाः पेतुरुर्व्यां समन्ततः । वज्ररुग्णा इव विभो पर्वता युगसंक्षये ।
हयानां सादिभिः सार्द्धं पतितानां महीतले । राशयः स्म प्रदृश्यन्त गिरिमात्रास्ततस्ततः । ४४०
संजज्ञे रणभूमौ तु परलोकवहा नदी । शोणितोदा रथावर्त्ता ध्वजवृक्षास्थिशर्क्करा ।
भुजनक्रा धनुःस्रोता हस्तिशैला हयोपला । मेदोमज्जाकर्द्दमिनी छत्रहंसा गदोडुपा ।
कवचोष्णीषसंछन्ना पताकारुचिरद्रुमा । चक्रचक्रावलीजुष्टा त्रिवेणुदण्डकावृता ।
शूराणां हर्षजननी भीरूणां भयवर्द्धिनी । प्रावर्त्तत नदी रौद्रा कुरुसृञ्जयसङ्कुला ।
तां नदीं पितृलोकाय वहन्तीमतिभैरवां । तेरुर्वाहननौभिस्ते शूराः परिघबाहवः । ४४५
वर्त्तमाने तथा युद्धे निर्म्मर्य्यादे विशाम्पते । चतुरङ्गक्षये घोरे पूर्व्वं देवासुरोपमे ।
व्यक्रोशन् बान्धवांस्त्वन्ये तत्र तत्र परन्तप । क्रोशद्भिर्बान्धवैश्चान्ये भयार्त्तानि ववर्त्तिरे ।
निर्म्मर्य्यादे तथा युद्धे वर्त्तमाने भयानके । अर्ज्जुनो भीमसेनश्च मोहयाञ्चक्रतुः परान् ।
सा वध्यमाना महती सेना तव जनाधिप । अमुह्यत्तत्र तत्रैव योषिन्मदवशादिव ।
मोहयित्वा च तां सेनां भीमसेनधनञ्जयौ । दध्मतुर्व्वारिजौ तत्र सिंहनादांश्च नेदतुः । ४५०
श्रुत्वैव तु महानादं धृष्टद्युम्नशिखण्डिनौ । धर्म्मराजं पुरस्कृत्य मद्रराजमभिद्रुतौ ।
तत्राश्चर्य्यमपश्याम घोररूपं विशाम्पते । शल्येन सङ्गताः शूरा यदयुध्यन्त भागशः ।
माद्रीपुत्रौ तु रभसौ कृतास्त्रौ युद्धदुर्म्मदौ । अभ्ययातां त्वरायुक्तौ जिगीषन्तौ बलं तव ।
ततो न्यवर्त्तत बलं तावकं भरतर्षभ । शरैः प्रणुन्नं बहुधा पाण्डवैर्जितकाशिभिः ।
वध्यमाना चमूः सा तु पुत्त्राणां प्रेक्षतां तव । भेजे दिशो महाराज प्रणुन्ना शरवृष्टिभिः । ४५५
हाहाकारो महान् जज्ञे योधानां तव भारत । तिष्ठतिष्ठेति चाप्यासीत् पाण्डवानां महात्मनां ।
क्षत्त्रियाणां तदाऽन्योन्यं संयुगे जयमिच्छतां । प्राद्रवन्नेव भग्नास्ते पाण्डवैस्तव सैनिकाः ।
त्यक्त्वा युद्धे प्रियान् पुत्त्रान् भ्रातॄनथ पितामहान् । मातुलान् भागिनेयांश्च तथा सम्बन्धिबान्धवान् ।
हयान् द्विपांस्त्वरयन्तो योधा जग्मुः समन्ततः । आत्मत्राणकृतोत्साहास्तावका भरतर्षभ ।
इति श्रीमहाभारते शल्यपर्व्वणि सङ्कुलयुद्धे नवमोऽध्यायः ॥ ९ ॥
॥ सञ्जय उवाच ॥ तत्प्रभग्नं बलं दृष्ट्वा मद्रराजः प्रतापवान् । उवाच सारथिं तूर्णं चोदयाश्वान्मनोजवान् । ४६०

एष तिष्ठति वै राजा पाण्डुपुत्त्रो युधिष्ठिरः। छत्रेण ध्रियमाणेन पाण्डुरेण विराजता।
अत्र प्रापय मां क्षिप्रं पश्य मे सारथे बलं। न समर्था हि मे पार्थाः स्थातुमद्य पुरो युधि।
एवमुक्तस्ततः प्रायान्मद्रराजस्य सारथिः। यत्र राजा सत्यसन्धो धर्म्मराजो युधिष्ठिरः।
आपतन्तञ्च सहसा पाण्डवानां महद्बलं। दधारैको रणे शल्यो वेलोद्धूतमिवार्णवं।
पाण्डवानां बलौघस्तु शल्यमासाद्य मारिष। व्यतिष्ठत तदा युद्धे सिन्धोर्व्वेग इवाचलं। ४६५
मद्रराजन्तु समरे दृष्ट्वा युद्धाय धिष्ठितं। कुरवः संन्यवर्त्तन्त मृत्युं कृत्वा निवर्त्तनं।
तेषु राजन्निवृत्तेषु व्यूढानीकेषु भागशः। प्रावर्त्तत महारौद्रः सङ्ग्रामः शोणितोदकः।
समार्च्छच्चित्रसेनन्तु नकुलो युद्धदुर्म्मदः। तौ परस्परमासाद्य चित्रकार्म्मुकधारिणौ।
मेघाविव यथोद्वृत्तौ दक्षिणोत्तरवर्षिणौ। शरतोयैः सिषिचतुस्तौ परस्परमाहवे।
नान्तरं तत्र पश्यामि पाण्डवस्येतरस्य वा। उभौ कृतास्त्रौ बलिनौ रथचर्य्याविशारदौ। ४७०
परस्परवधे यत्तौ छिद्रान्वेषणतत्परौ। चित्रसेनस्तु भल्लेन पीतेन निशितेन च।
नकुलस्य महाराज मुष्टिदेशेऽच्छिनद्धनुः। अथैनं छिन्नधन्वानं रुक्मपुङ्खैः शिलाशितैः।
त्रिभिः शरैरसंभ्रान्तो ललाटे वै समार्पयत्। हयांश्चास्य शरैस्तीक्ष्णैः प्रेषयामास मृत्यवे।
तथा ध्वजं सारथिञ्च त्रिभिस्त्रिभिरपातयत्। स शत्रुभुजनिर्मुक्तैर्ललाटस्थैस्त्रिभिः शरैः।
नकुलः शुशुभे राजंस्त्रिशृङ्ग इव पर्व्वतः। स छिन्नधन्वा विरथः खड्गमादाय चर्म्म च। ४७५
रथादवातरद्वीरः शैलाग्रादिव केशरी। पद्भ्यामापततस्तस्य शरवृष्टिं समासृजत्।
नकुलोऽप्यग्रसत्तां वै चर्म्मणा लघुविक्रमः। चित्रसेनरथं प्राप्य चित्रयोधी जितश्रमः।
आरुरोह महाबाहुः सर्व्वसैन्यस्य पश्यतः। सकुण्डलं समुकुटं सुनसं स्वायतेक्षणं।
चित्रसेनशिरः कायादपाहरत पाण्डवः। स पपात रथोपस्थे दिवाकरसमप्रभः।
चित्रसेनं विशस्तन्तु दृष्ट्वा तत्र महारथाः। साधुवादस्वनांश्चक्रुः सिंहनादांश्च पुष्कलान्। ४८०
विशस्तं भ्रातरं दृष्ट्वा कर्णपुत्त्रौ महारथौ। सुषेणः सत्यसेनश्च मुञ्चन्तौ विविधान् शरान्।
ततोऽभ्यधावतां तूर्णं पाण्डवं रथिनाम्वरौ। जिघांसन्तौ यथा नागं व्याघ्रौ राजन्महावने।
तावभ्यवर्षतां तीक्ष्णैर्द्रावप्येनं महारथं। शरौघान् सम्यगस्यन्तौ जीमूतौ सलिलं यथा।
स शरैः सर्व्वतो विद्धः प्रहृष्ट इव पाण्डवः। अन्यत् कार्म्मुकमादाय रथमारुह्य वीर्य्यवान्।
अतिष्ठत रणे वीरः क्रुद्धरूप इवान्तकः। तस्य तौ भ्रातरौ राजन् शरैः सन्नतपर्व्वभिः। ४८५
रथं विशकलीकर्त्तुं समारब्धौ विशाम्पते। ततः प्रहस्य नकुलश्चतुर्भिश्चतुरो रणे।
जघान निशितैर्व्वाणैः सत्यसेनस्य वाजिनः। ततः सन्धाय नाराचं रुक्मपुङ्खं शिलाशितं।
धनुश्चिच्छेद राजेन्द्र सत्यसेनस्य पाण्डवः। अथान्यं रथमास्थाय धनुरादाय चापरं।
सत्यसेनः सुषेणश्च पाण्डवं पर्य्यधावतां। अविध्यत्तावसंभ्रान्तो माद्रीपुत्त्रः प्रतापवान्।
द्वाभ्यां द्वाभ्यां महाराज शराभ्यां रणमूर्द्धनि। सुषेणस्तु ततः क्रुद्धः पाण्डवस्य महद्धनुः। ४९०

चिच्छेद प्रहसन् युद्धे क्षुरप्रेण महारथः । अथान्यद्धनुरादाय नकुलः क्रोधमूर्च्छितः ।
सुषेणं पञ्चभिर्विद्ध्वा ध्वजमेकेन चिच्छिदे । सत्यसेनस्य च धनुर्हस्तावापञ्च मारिष ।
चिच्छेद तरसा युद्धे तत उच्चुक्रुशुर्जनाः । अथान्यद्धनुरादाय वेगघ्नं भारसाधनं ।
शरैः सञ्छादयामास समन्तात् पाण्डुनन्दनं । सन्निवार्य्य तु तान् बाणान्नकुलः परवीरहा ।
सत्यसेनं सुषेणञ्च द्वाभ्यां द्वाभ्यामविध्यत । तावेनं प्रत्यविध्येतां पृथक् पृथगजिह्मगैः । ४९५
सारथिञ्चास्य राजेन्द्र शितैर्व्विविधतुः शरैः । सत्यसेनो रथेषान्तु नकुलस्य धनुस्तथा ।
पृथक् शराभ्यां चिच्छेद कृतहस्तः प्रतापवान् । स रथेऽतिरथस्तिष्ठन् रथशक्तिं परामृशत् ।
स्वर्णदण्डामकुण्ठाग्रां तैलधौतां सुनिर्म्मलां । लेलिहानामिव विभो नागकन्यां महाविषां ।
समुद्यम्य च चिक्षेप सत्यसेनस्य संयुगे । सा तस्य हृदयं संख्ये बिभेद शतधा नृप ।
स पपात रथाद्भूमिं गतसत्त्वोऽल्पचेतनः । भ्रातरं निहतं दृष्ट्वा सुषेणः क्रोधमूर्च्छितः । ५००
अभ्यवर्षच्छरैस्तूर्णं पादातं पाण्डुनन्दनं । चतुर्भिश्चतुरो वाहान् ध्वजं छित्त्वा तु पञ्चभिः ।
त्रिभिर्वै सारथिं हत्वा कर्णपुत्त्रो ननाद ह । नकुलं विरथं दृष्ट्वा द्रौपदेयो महारथः ।
सुतसोमोऽभिदुद्राव परीप्सन् पितरं रणे । ततोऽधिरुह्य नकुलः सुतसोमस्य तं रथं ।
शुशुभे भरतश्रेष्ठो गिरिस्थ इव केशरी । सोऽन्यत् कार्म्मुकमादाय सुषेणं समयोधयत् ।
तावुभौ शरवर्षाभ्यां समासाद्य परस्परं । परस्परवधे यत्नञ्चक्रतुः सुमहारथौ । ५०५
सुषेणस्तु ततः क्रुद्धः पाण्डवं विशिखैस्त्रिभिः । सुतसोमञ्च विंशत्या बाह्वोरुरसि चार्पयत् ।
ततः क्रुद्धो महाराज नकुलः परवीरहा । शरैस्तस्य दिशः सर्व्वाश्छादयामास वेगवान् ।
ततो गृहीत्वा तीक्ष्णाग्रमर्द्धचन्द्रं सुतेजनं । स वेगयुक्तं चिक्षेप कर्णपुत्त्राय संयुगे ।
तस्य तेन शिरः कायाज्जहार नृपसत्तम । पश्यतां सर्व्वसैन्यानां तदद्भुतमिवाभवत् ।
स हतः प्रापतद्राजन्नकुलेन महात्मना । नदीवेगादिवारुग्णस्तीरजः पादपो महान् । ५१०
कर्णपुत्त्रवधं दृष्ट्वा नकुलस्य च विक्रमं । प्रदुद्राव भयात्सेना तावकी भरतर्षभ ।
तान्तु सेनां महाराज मद्रराजः प्रतापवान् । अपालयद्रणे शूरः सेनापतिररिन्दमः ।
अभीतस्तस्थौ महाराज व्यवस्थाप्य च वाहिनीं । सिंहनादं भृशं कृत्वा धनुःशब्दं च दारुणं ।
तावकाः समरे राजन् रक्षिता दृढधन्वना । प्रत्युद्ययुररातींस्ते समन्ताद्विगतव्यथाः ।
मद्रराजं महेष्वासं परिवार्य्य समन्ततः । स्थिता राजन्महात्मानो योद्धुकामाः समन्ततः । ५१५
सात्यकिर्भीमसेनश्च माद्रीपुत्त्रौ च पाण्डवौ । युधिष्ठिरं पुरस्कृत्य ह्रीनिषेवमरिन्दमं ।
परिवार्य्य रणे वीराः सिंहनादं प्रचक्रिरे । बाणशब्दरवांश्चोग्रान् क्ष्वेडांश्च विविधान्दधुः ।
तथैव तावकाः सर्व्वे मद्राधिपतिमञ्जसा । परिवार्य्य सुसंरब्धाः पुनर्य्योद्धुमरोचयन् ।
ततः प्रववृते युद्धं भीरूणां भयवर्द्धनं । तावकानां परेषाञ्च मृत्युं कृत्वा निवर्त्तनं ।
यथा देवासुरं युद्धं पूर्व्वमासीद्विशाम्पते । अभीतानां तथा राजन् यमराष्ट्रविवर्द्धनं । ५२०

ततः कपिध्वजो राजन् हत्वा संशप्तकान् रणे। अभ्यद्रवत तां सेनां कौरवीं पाण्डुनन्दनः।
तथैव पाण्डवाः सर्व्वे धृष्टद्युम्नपुरोगमाः। अभ्यधावन्त तां सेनां विसृजन्तः शितान् शरान्।
पाण्डवैरवकीर्णानां संमोहः समजायत। न च जज्ञुरनीकानि दिशो वा विदिशस्तथा।
आपूर्य्यमाणा निशितैः शरैः पाण्डवचोदितैः। हतप्रवीरा विध्वस्ता कीर्य्यमाणा समन्ततः।
कौरव्यवध्यत चमूः पाण्डुपुत्त्रैर्महारथैः। तथैव पाण्डवी सेना शरैराजन् समन्ततः। ५३५
रणेऽहन्यत पुत्त्रैस्ते शतशोऽथ सहस्रशः। ते सेने भृशसन्तप्ते वध्यमाने परस्परं।
व्याकुले समपद्येतां वर्षासु सरिताविव। आविवेश ततस्तीव्रं तावकानां महद्भयं।
पाण्डवानाञ्च राजेन्द्र तथाभूते महाहवे।
इति श्रीमहाभारते शल्यपर्व्वणि सङ्कुलयुद्धे दशमोऽध्यायः॥ १० ॥
॥ सञ्जय उवाच ॥ तस्मिन् विलुलिते सैन्ये वध्यमाने परस्परं। द्रवमाणेषु योधेषु निनदत्सु च दन्तिषु।
कूजतां स्तनतां चैव पदातीनां महाहवे। विद्रुतेषु महाराज हयेषु बहुधा तदा। ५४०
प्रक्षये दारुणे जाते संहारे सर्व्वदेहिनां। नानाशस्त्रसमावाये व्यतिषक्तरथद्विपे।
हर्षणे युद्धशौण्डानां भीरूणां भयवर्द्धने। गाहमानेषु योधेषु परस्परवधैषिषु।
प्राणादाने महाघोरे वर्त्तमाने दुरोदरे। संग्रामे घोररूपे तु यमराष्ट्रविवर्द्धने।
पाण्डवास्तावकं सैन्यं व्यधमन्त शितैः शरैः। तथैव तावका योधा जघ्नुः पाण्डवसैनिकान्।
तस्मिंस्तथा वर्त्तमाने युद्धे भीरुभयावहे। पूर्व्वाह्णे चैव संप्राप्ते भास्करोदयनं प्रति। ५४५
लब्धलक्ष्याः परे राजन् रक्षिताश्च महात्मना। अयोधयंस्तव बलं मृत्युं कृत्वा निवर्त्तनं।
बलिभिः पाण्डवैर्दृप्तैर्लब्धलक्ष्यैः प्रहारिभिः। कौरव्यसीदत् पृतना मृगीवाग्निसमाकुला।
तां दृष्ट्वा सीदतीं सेनां पङ्के गामिव दुर्ब्बलां। उज्जिहीर्षुस्तदा शल्यः प्रायात् पाण्डुचमूं प्रति।
मद्रराजस्तु संक्रुद्धो गृहीत्वा धनुरुत्तमं। अभ्यद्रवत संग्रामे पाण्डवानाततायिनः।
पाण्डवापि महाराज समरे जितकाशिनः। मद्रराजं समासाद्य विव्यधुर्निशितैः शरैः। ५५०
ततः शरशतैस्तीक्ष्णैर्मद्रराजो महारथः। अर्द्दयामास तां सेनां धर्म्मराजस्य पश्यतः।
प्रादुरासंस्ततो राजन्दुर्निमित्तान्यनेकशः। चचाल शब्दं कुर्व्वाणा मही चापि सपर्व्वता।
सदण्डशूला दीप्ताग्रा दीर्य्यमाणाः समन्ततः। उल्का भूमिं दिवः पेतुराहत्य रविमण्डलं।
मृगाश्च महिषाश्चापि पक्षिणश्च विशाम्पते। अपसव्यं तदा चक्रुः सेनां ते बहुशो नृप।
भृगुसूनुधरापुत्त्रौ शशिजेन समन्वितौ। चरमं पाण्डुपुत्त्राणां पुरस्तात्सर्व्वभूभुजां। ५५५
शस्त्राग्रेष्वभवज्ज्वाला नेत्राण्याहत्य वर्षती। शिरःस्वलीयन्त भृशं काकोलूकाश्च केतुषु।
ततस्तद्युद्धमत्युग्रमभवत्सङ्गचारिणां। ततः सर्व्वाण्यनीकानि सन्निपत्य जनाधिप।
अभ्ययुः कौरवा राजन् पाण्डवानामनीकिनीं। शल्यस्तु शरवर्षेण वर्षन्निव सहस्रदृक्।
अभ्यवर्षददीनात्मा कुन्तीपुत्त्रं युधिष्ठिरं। भीमसेनं शरैश्चापि रुक्मपुङ्खैः शिलाशितैः।

द्रौपदेयांस्तथा सर्व्वान्माद्रीपुत्रौ च पाण्डवौ । धृष्टद्युम्नं च शैनेयं शिखण्डिनमथापि च । ५५०
एकैकं दशभिर्ब्बाणैर्व्विव्याध स महाबलः । ततोऽसृजद्बाणवर्षं घर्म्मान्ते मघवानिव ।
ततः प्रभद्रका राजन् सोमकाश्च सहस्रशः । पतिताः पात्यमानाश्च दृश्यन्ते शल्यसायकैः ।
भ्रमराणामिव व्राताः शलभानामिव व्रजाः । ह्रादिन्य इव मेघेभ्यः शल्यस्य न्यपतञ्छराः ।
द्विरदास्तुरगाश्चार्त्ताः पत्तयो रथिनस्तथा । शल्यस्य बाणैर्न्यपतन् बभ्रमन् व्यनदंस्तथा ।
आविष्ट इव मद्रेशो मन्युना पौरुषेण च । प्राच्छादयदरीन् संख्ये कालसृष्ट इवान्तकः । ५५५
विनर्द्दमानो मद्रेशो मेघह्रादो महाबलः । सा वध्यमाना शल्येन पाण्डवानामनीकिनी ।
अजातशत्रुं कौन्तेयमभ्यधावद्युधिष्ठिरं । तां समर्द्द ततः संख्ये लघुहस्तः शितैः शरैः ।
शरवर्षेण महता युधिष्ठिरमपीडयत् । तमापतन्तं पत्त्यश्वैः क्रुद्धो राजा युधिष्ठिरः ।
अवारयच्छरैस्तीक्ष्णैर्म्मत्तं द्विपमिवाङ्कुशैः । तस्य शल्यः शरं घोरं मुमोचाशीविषोपमं ।
स निर्भिद्य महात्मानं वेगेनाभ्यपतच्च गां । ततो वृकोदरः क्रुद्धः शल्यं विव्याध सप्तभिः । ५६०
पञ्चभिः सहदेवस्तु नकुलो दशभिः शरैः । द्रौपदेयाश्च शत्रुघ्नं शूरमार्त्तायनिं शरैः ।
अभ्यवर्षन्महावेगं मेघा इव महीधरं । ततो दृष्ट्वा तुद्यमानं शल्यं पार्थैः समन्ततः ।
कृतवर्म्मा कृपश्चैव संक्रुद्धावभ्यधावतां । उलूकश्च महावीर्य्यः शकुनिश्चापि सौबलः ।
समागम्याथ शनकैरश्वत्थामा महाबलः । तव पुत्राश्च कार्त्स्न्येन जुगुपुः शल्यमाहवे ।
भीमसेनं त्रिभिर्व्विद्ध्वा कृतवर्म्मा शिलीमुखैः । बाणवर्षेण महता क्रुद्धरूपमवारयत् । ५६५
धृष्टद्युम्नं ततः क्रुद्धो बाणवर्षैरपीडयत् । द्रौपदेयांश्च शकुनिर्यमौ च द्रौणिरभ्ययात् ।
दुर्य्योधनो युधां श्रेष्ठ आहवे केशवार्ज्जुनौ । समभ्ययादुग्रतेजाः शरैश्चाप्यहनद्बली ।
एवं द्वन्द्वशतान्यासंस्त्वदीयानां परैः सह । घोररूपाणि चित्राणि तत्र तत्र विशाम्पते ।
ऋक्षवर्णान् जघानाश्वान् भोजो भीमस्य संयुगे । सोऽवतीर्य्य रथोपस्थाद्धताश्वः पाण्डुनन्दनः ।
कालो दण्डमिवोद्यम्य गदापाणिरयुध्यत । प्रमुखे सहदेवस्य जघानाश्वांश्च मद्रराट् । ५७०
ततः शल्यस्य तनयं सहदेवोऽसिनाऽवधीत् । गौतमः पुनराचार्य्यो धृष्टद्युम्नमयोधयत् ।
असम्भ्रान्तमसम्भ्रान्तो यत्नवान् यत्नवत्तरं । द्रौपदेयांस्तथा वीरानेकैकं दशभिः शरैः ।
अविध्यदाचार्य्यसुतो नातिक्रुद्धः स्मयन्निव । पुनश्च भीमसेनस्य जघानाश्वांस्तदाहवे ।
सोऽवतीर्य्य रथात्तूर्णं हताश्वः पाण्डुनन्दनः । कालो दण्डमिवोद्यम्य गदां क्रुद्धो महाबलः ।
पोथयामास तुरगान् रथञ्च कृतवर्म्मणः । कृतवर्म्मा त्ववप्लुत्य रथात्तस्मादपाक्रमत् । ५७५
शल्योऽपि राजन् संक्रुद्धो निघ्नन् सोमकपाण्डवान् । पुनरेव शितैर्ब्बाणैर्युधिष्ठिरमपीडयत् ।
तस्य क्रुद्धो रणे भीमः सन्दष्टदशनच्छदः । विनाशायाभिसन्धाय गदामादत्त वीर्य्यवान् ।
यमदण्डप्रतीकाशां कालरात्रिमिवोद्यतां । गजवाजिमनुष्याणां प्राणान्तकरणीमति ।
हेमपट्टपरिक्षिप्तामुल्कां प्रज्वलितामिव । शैक्यां व्यालीमिवात्युग्रां वज्रकल्पामयोमयीं ।

चन्दनागुरुपङ्काक्तां प्रमदामीप्सितामिव। वसामेदोऽसृग्दिग्धाङ्गीं जिह्वां वैवस्वतीमिव। ५८०
पटुघण्टाशतरवां वासवीमशनीमिव। निर्मुक्ताशीविषाकारां पृक्तां गजमदैरिव।
त्रासनीं रिपुसैन्यानां स्वसैन्यपरिहर्षणीं। मनुष्यलोके विख्यातां गिरिशृङ्गविदारिणीं।
यया कैलासभवने महेश्वरसखं बली। आह्वयामास कौन्तेयः संक्रुद्धमलकाधिपम्।
यया मायामयान् दृप्तान् सुबहून् गन्धमादने। जघान गुह्यकान् क्रुद्धो मन्दारार्थे महाबलः।
वार्य्यमाणोऽपि बहुभिर्द्रौपद्याः प्रियमास्थितः। तां वज्रमणिरत्नाढ्यामष्टाश्रिं वज्रगौरवाम्। ५८५
समुद्यम्य महाबाहुः शल्यमभ्यद्रवद्रणे। गदया युद्धकुशलस्तया दारुणनादया।
पोथयामास शल्यस्य चतुरोऽश्वान्मनोजवान्। ततः शल्यो रणे क्रुद्धः पीने वक्षसि तोमरं।
निचखान नदन्वीरो वर्म्म भित्त्वाऽस्य सोऽभ्यगात्। वृकोदरस्त्वसम्भ्रान्तस्तमेवोद्धृत्य तोमरं।
यन्तारं मद्रराजस्य निर्ब्बिभेद ततो हृदि। स भिन्नवर्म्मा रुधिरं वमन् वित्रस्तमानसः।
पपाताभिमुखो दीनो मद्रराजस्त्वपाक्रमत्। कृतप्रतिकृतं दृष्ट्वा शल्यो विस्मितमानसः। ५९०
गदामाश्रित्य धीरात्मा प्रत्यमित्रमवैक्षत। ततः सुमनसः पार्था भीमसेनमपूजयन्।
तद्दृष्ट्वा कर्म्म सङ्ग्रामे घोरमक्लिष्टकर्म्मणः।
इति श्रीमहाभारते शल्यपर्व्वणि सङ्कुलयुद्धे एकादशोऽध्यायः॥ ११ ॥
॥ सञ्जय उवाच ॥ पतितं प्रेक्ष्य यन्तारं शल्यः सर्व्वायसीं गदां। आदाय तरसा राजंस्तस्थौ गिरिरिवाचलः।
तं दीप्तमिव कालाग्निं पाशहस्तमिवान्तकं। सशृङ्गमिव कैलासं सवज्रमिव वासवं।
सशूलमिव हर्य्यक्षं वने मत्तमिव द्विपं। जवेनाभ्यागमद्भीमः प्रगृह्य महतीं गदां। ५९५
ततः शङ्खप्रणादश्च तूर्य्याणाञ्च सहस्रशः। सिंहनादश्च सञ्जज्ञे शूराणां हर्षवर्द्धनः।
प्रेक्षन्तः सर्व्वतस्तौ हि योधा योधमहाद्विपौ। तावकाश्च परे चैव साधु साध्वित्यपूजयन्।
न हि मद्राधिपादन्यो रामाद्वा यदुनन्दनात्। सोढुमुत्सहते वेगं भीमसेनस्य संयुगे।
तथा मद्राधिपस्यापि गदावेगं महात्मनः। सोढुमुत्सहते नान्यो युधि योधो वृकोदरात्।
तौ वृषाविव नर्द्दन्तौ मण्डलानि विचेरतुः। आवल्गितौ गदाहस्तौ मद्रराजवृकोदरौ। ६००
मण्डलावर्त्तमार्गेषु गदाविहरणेषु च। निर्व्विशेषमभूद्युद्धं तयोः पुरुषसिंहयोः।
तप्तहेममयैः शुभ्रैर्ब्बभूव भयवर्द्धनी। अग्निज्वालैरिवाविद्धा पट्टैः शल्यस्य सा गदा।
तथैव चरतो मार्गान्मण्डलेषु महात्मनः। विद्युदभ्रप्रतीकाशा भीमस्य शुशुभे गदा।
ताडिता मद्रराजेन भीमस्य गदया गदा। दह्यमानेव वै राजन् ससृजे पावकार्च्चिषः।
तथा भीमेन शल्यस्य ताडिता गदया गदा। अङ्गारवर्षं मुञ्चन्ती तदद्भुतमिवाभवत्। ६०५
दन्तैरिव महानागौ शृङ्गैरिव महर्षभौ। तोत्रैरिव तदाऽन्योन्यं गदाग्राभ्यां निजघ्नतुः।
तौ गदानिहतैर्गात्रैः क्षणेन रुधिरोक्षितौ। प्रेक्षणीयतरावास्तां पुष्पिताविव किंशुकौ।
गदया मद्रराजेन सव्यदक्षिणमाहतः। भीमसेनो महाबाहुर्न चचालाचलोपमः।

तथा भीमगदावेगैस्ताड्यमानो मुहुर्मुहुः । शल्यो न विव्यथे राजन् दन्तिनेव महागिरिः ।
शुश्रुवे दिक्षु सर्व्वासु तयोः पुरुषसिंहयोः । गदानिपातसंह्रादो वज्रयोरिव निःस्वनः । १९०
निवृत्य तु महावीर्य्यौ समुच्छ्रितगदावुभौ । पुनरन्तरमार्गस्थौ मण्डलानि विचेरतुः ।
अथाभ्येत्य पदान्यष्टौ सन्निपातोऽभवत्तयोः । उद्यम्य लोहदण्डाभ्यामतिमानुषकर्म्मणोः ।
प्रार्थयानौ तदाऽन्योन्यं मण्डलानि विचेरतुः । क्रियाविशेषं कृतिनौ दर्शयामासतुस्तदा ।
अथोद्यम्य गदे घोरे सशृङ्गाविव पर्व्वतौ । तावाजघ्नतुरन्योन्यं यथा भूमिचलेऽचलौ ।
तौ परस्परसंरम्भाद्गदाभ्यां भृशविक्षतौ । युगपत्पेततुर्व्वीरावुभाविन्द्रध्वजाविव । १९५
उभयोः सेनयोर्व्वीरास्तदा हाहाकृतोऽभवन् । भृशमर्म्मण्यभिहतावुभावास्तां सुविक्लवौ ।
ततः स्वरथमारोप्य मद्राणां वृषभं बली । अपोवाह कृपः शल्यं तूर्णमायोधनादथ ।
क्षीववत् विक्लवत्वात्तु निमेषात् पुनरुत्थितः । भीमसेनो गदापाणिः समाह्वयत मद्रपं ।
ततस्तु तावकाः शूरा नानाशस्त्रसमायुताः । नानावादित्रशब्देन पाण्डुसेनामयोधयन् ।
भुजावुच्छ्रित्य शस्त्रञ्च शब्देन महता ततः । अभ्यद्रवन्महाराज दुर्य्योधनपुरोगमाः । २००
तदनीकमभिप्रेक्ष्य ततस्ते पाण्डुनन्दनाः । प्रययुः सिंहनादेन दुर्य्योधनपुरोगमान् ।
तेषामापततां तूर्णं पुत्त्रस्ते भरतर्षभ । प्रासेन चेकितानं वै विव्याध हृदये भृशं ।
स पपात रथोपस्थे तव पुत्त्रेण ताडितः । रुधिरौघपरिक्लिन्नः प्रविश्य विपुलं तमः ।
चेकितानं हतं दृष्ट्वा पाण्डवानां महारथाः । असक्तमभ्यवर्षन्त शरवर्षाणि भागशः ।
तावकानामनीकेषु पाण्डवा जितकाशिनः । व्यचरन्त महाराज प्रेक्षणीयाः समन्ततः । २०५
कृपश्च कृतवर्म्मा च सौबलश्च महाबलः । अयोधयन् धर्म्मराजं मद्रराजपुरस्कृताः ।
भारद्वाजस्य हन्तारं भूरिवीर्य्यपराक्रमं । दुर्य्योधनो महाराज धृष्टद्युम्नमयोधयत् ।
त्रिसाहस्रा रथा राजंस्तव पुत्त्रेण चोदिताः । अयोधयन्त विजयं द्रौणपुत्त्रपुरस्कृताः ।
विजये धृतसङ्कल्पाः समरे त्यक्तजीविताः । प्राविशंस्तावका राजन् हंसा इव महत्सरः ।
ततो युद्धमभूद्घोरं परस्परवधैषिणां । अन्योन्यवधसंयुक्तमन्योन्यप्रीतिवर्द्धनं । २१०
तस्मिन् प्रवृत्ते संग्रामे राजन्वीरवरक्षये । अनिलेनेरितं घोरमुत्तस्थौ पार्थिवं रजः ।
श्रवणान्नामधेयानां पाण्डवानां च कीर्त्तनात् । परस्परं विजानीमो यदयुध्यन्नभीतवत् ।
तद्रजः पुरुषव्याघ्र शोणितेन प्रशामितं । दिशश्च विमला जग्मुस्तस्मिंस्तमसि शामिते ।
तथा प्रवृत्ते संग्रामे घोरे भीरुभयानके । तावकानां परेषाञ्च नासीत् कश्चित् पराङ्मुखः ।
ब्रह्मलोकपरा भूत्वा प्रार्थयन्तो जयं युधि । सुयुद्धेन पराक्रान्ता नराः स्वर्गमभीप्सव. । २१५
भर्त्तृपिण्डविमोक्षार्थं भर्त्तृकार्य्यं विनिश्चिताः । स्वर्गसंसक्तमनसो योधा युयुधिरे तदा ।
नानारूपाणि शस्त्राणि विसृजन्तो महारथाः । अन्योन्यमभिगर्ज्जन्तः प्रहरन्तः परस्परं ।
हत विध्यत गृह्णीत प्रहरध्वं निकृन्तत । इति स्म वाचः श्रूयन्ते तव तेषाञ्च वै बले ।

ततः शल्यो महाराज धर्म्मराजं युधिष्ठिरं। विव्याध निशितैर्व्वाणैर्हन्तुकामो महारथं।
तस्य पार्थो महाराज नाराचान् वै चतुर्द्दश। मर्म्माण्युद्दिश्य मर्म्मज्ञो निचखान हसन्निव। ५४०
शावार्य्य पाण्डवं वाणैर्हन्तुकामो महायशाः। विव्याध समरे क्रुद्धो बहुभिः कङ्कपत्रिभिः।
अथ भूयो महाराज शरेणानतपर्व्वणा। युधिष्ठिरं समाजघ्ने सर्व्वसैन्यस्य पश्यतः।
धर्म्मराजोऽपि संक्रुद्धो मद्रराजं महायशाः। विव्याध निशितैर्वाणैः कङ्कबर्हिणवाजितैः।
चन्द्रसेनं च सप्तत्या सूतञ्च नवभिः शरैः। द्रुमसेनञ्चतुःषष्ट्या निजघान महारथः।
चक्ररक्षे हते शल्यः पाण्डवेन महात्मना। निजघान ततो राजंश्चेदीन्वै पञ्चविंशतिं। ५४५
सात्यकिं पञ्चविंशत्या भीमसेनं च सप्तभिः। माद्रीपुत्रौ शतेनाजौ विव्याध निशितैः शरैः।
एवं विचरतस्तस्य संग्रामे राजसत्तम। संप्रैषयच्छितान्पार्थः शरानाशीविषोपमान्।
ध्वजाग्रञ्चास्य समरे कुन्तीपुत्रो युधिष्ठिरः। प्रमुखे वर्त्तमानस्य भल्लेनापाहरद्रथात्।
पाण्डुपुत्रेण वै तस्य केतुश्छिन्नो महाहवे। निपतन्तमपश्याम गिरिशृङ्गमिवाहतं।
ध्वजं निपतितं दृष्ट्वा पाण्डवञ्च व्यवस्थितं। संक्रुद्धो मद्रराजोऽभूत् शरवर्षं मुमोच ह। ५५०
शल्यः सायकवर्षेण पर्ज्जन्य इव वृष्टिमान्। अभ्यवर्षदमेयात्मा क्षत्रियान् क्षत्रियर्षभः।
सात्यकिं भीमसेनञ्च माद्रीपुत्रौ च पाण्डवौ। एकैकं पञ्चभिर्व्विद्ध्वा युधिष्ठिरमपीडयत्।
ततो वाणमयं जालं विततं पाण्डवोरसि। अथापश्याम महाराज मेघजालमिवोद्गतं।
तस्य शल्यो रणे क्रुद्धो वाणैः सन्नतपर्व्वभिः। प्रच्छादयामास दिशः प्रदिशश्च महारथः।
ततो युधिष्ठिरो राजा वाणजालेन पीडितः। बभूव हतविक्रान्तो जम्भो वृत्रहणा यथा। ५५५
इति श्रीमहाभारते शल्यपर्व्वणि सङ्कुलयुद्धे द्वादशोऽध्यायः॥ १२ ॥

॥ सञ्जय उवाच ॥ पीडिते धर्म्मराजे तु मद्रराजेन मारिष। सात्यकिर्भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ।
परिवार्य्य रथैः शल्यं पीडयामासुराहवे। तमेकं बहुभिर्दृष्ट्वा पीड्यमानं महारथैः।
साधुवादो महान् जज्ञे सिद्धाश्चासन् प्रहर्षिताः। आश्चर्य्यमित्यभाषन्त मुनयश्चापि सङ्गताः।
भीमसेनो रणे शल्यं शल्यभूतं पराक्रमे। एकेन विद्ध्वा वाणेन पुनर्व्विव्याध सप्तभिः।
सात्यकिश्च शतेनैव धर्म्मपुत्रपरीप्सया। मद्रेश्वरमथाकीर्य्य सिंहनादमथानदत्। ५६०
नकुलः पञ्चभिश्चैनं सहदेवश्च सप्तभिः। विद्ध्वा तन्तु ततस्तूर्णं पुनर्व्विव्याध पञ्चभिः।
स तु शूरो रणे यत्तः पीडितस्तैर्महारथैः। विकृष्य कार्म्मुकं घोरं वेगघ्नं भारसाधनं।
सात्यकिं पञ्चविंशत्या शल्यो विव्याध मारिष। भीमसेनं त्रिसप्तत्या नकुलं सप्तभिस्तथा।
ततः सविशिखं चापं सहदेवस्य धन्विनः। छित्त्वा भल्लेन समरे विद्ध्वा चैनं त्रिसप्तभिः।
सहदेवस्तु समरे मातुलं भूरिवर्चसं। सज्यमन्यद्धनुः कृत्वा पञ्चभिः समताडयत्। ५६५
शरैराशीविषाकारैर्ज्वलज्ज्वलनसन्निभैः। सारथिञ्चास्य समरे शरेणानतपर्व्वणा।
विव्याध भृशसंक्रुद्धस्तञ्च भूयस्त्रिभिः शरैः। भीमसेनस्तु सप्तत्या सात्यकिर्न्नवभिः शरैः।

धर्म्मराजस्तथा षष्ट्या गात्रे शल्यं समार्पयत्। ततः शल्यो महाराज निर्व्विद्धस्तैर्महारथैः।
सुस्राव रुधिरं गात्रैर्गैरिकं पर्व्वतो यथा। तांश्च सर्व्वान् महेष्वासान् पञ्चभिः पञ्चभिः शरैः।
विव्याध तरसा राजंस्तदद्भुतमिवाभवत्। ततोऽपरेण भल्लेन धर्म्मपुत्त्रस्य मारिष। ६७०
धनुश्चिच्छेद समरे सज्यं स तु महारथः। अथान्यद्धनुरादाय धर्म्मपुत्त्रो महारथः।
साश्वसूतध्वजरथं शल्यं प्राच्छादयच्छरैः। स च्छाद्यमानः समरे धर्म्मपुत्त्रस्य सायकैः।
युधिष्ठिरमथाविध्यद्दशभिर्न्निशितैः शरैः। सात्यकिस्तु ततः क्रुद्धो धर्म्मपुत्त्रे शरार्द्दिते।
मद्राणामधिपं शूरं शरौघैः समवारयत्। स सात्यकेः प्रचिच्छेद क्षुरप्रेण महद्धनुः।
भीमसेनमुखांस्तांश्च त्रिभिस्त्रिभिरताडयत्। तस्य क्रुद्धो महाराज सात्यकिः सत्यविक्रमः। ६७५
तोमरं प्रेषयामास स्वर्णदण्डं महाधनं। भीमसेनोऽथ नाराचं ज्वलन्तमिव पन्नगं।
नकुलः समरे शक्तिं सहदेवो गदां शुभां। धर्म्मराजः शतघ्नीञ्च जिघांसुः शल्यमाहवे।
तानापतत एवाशु पञ्चानां वै भुजच्युतान्। वारयामास समरे शल्यसङ्घान् स मद्रराट्।
सात्यकिप्रहितं शल्यो भल्लैश्चिच्छेद तोमरं। भीमेन प्रहितं चापि शरं कनकभूषणं।
द्विधा चिच्छेद समरे कृतहस्तः प्रतापवान्। नकुलप्रेरितां शक्तिं हेमदण्डां भयावहां। ६८०
गदाञ्च सहदेवेन शरौघैः समवारयत्। शराभ्याञ्च शतघ्नीन्तां राज्ञश्चिच्छेद भारत।
पश्यतां पाण्डुपुत्त्राणां सिंहनादं ननाद च। नामृष्यत्तत्र शैनेयः शत्रोर्व्विजयमाहवे।
अथान्यद्धनुरादाय सात्यकिः क्रोधमूर्च्छितः। द्वाभ्यां मद्रेश्वरं विद्धा सारथिञ्च त्रिभिः शरैः।
ततः शल्यो महाराज सर्व्वांस्तान् दशभिः शरैः। विव्याध सुभृशं क्रुद्धस्तोत्त्रैरिव महाद्विपान्।
ते वार्य्यमाणाः समरे मद्रराज्ञा महारथाः। न शेकुः प्रमुखे स्थातुं तस्य शत्रुनिषूदनाः। ६८५
ततो दुर्य्योधनो राजा दृष्ट्वा शल्यस्य विक्रमं। निहतान् पाण्डवान्मेने पाञ्चालानथ सृञ्जयान्।
ततो राजन्महाबाहुर्भीमसेनः प्रतापवान्। सन्त्यज्य मनसा प्राणान्मद्राधिपमयोधयत्।
नकुलः सहदेवश्च सात्यकिश्च महाबलः। परिवार्य्य ततः शल्यं समन्ताद्व्यकिरञ्छरैः।
स चतुर्भिर्महेष्वासैः पाण्डवानां महारथैः। वृतस्तान् योधयामास मद्रराजः प्रतापवान्।
तस्य धर्म्मसुतो राजन् क्षुरप्रेण महाहवे। चक्ररक्षं जघानाशु मद्रराजस्य पार्थिवः। ६९०
तस्मिंस्तु निहते शूरे चक्ररक्षे महारथे। मद्रराजोऽतिबलवान् सैनिकांस्तानकिरच्छरैः।
समाच्छन्नांस्ततस्तांस्तु राजन् वीक्ष्य स सैनिकान्। चिन्तयामास समरे धर्म्मराजो युधिष्ठिरः।
कथं नूनं भवेत्सत्यं तन्माधववचो महत्। न हि क्रुद्धो रणे राजन् क्षपयेत बलं मम।
ततः सरथनागाश्वाः पाण्डवाः पाण्डुपूर्व्वज। मद्रेश्वरं समासेदुः पीडयन्तः समन्ततः।
नानाशस्त्रौघबहुलां शरवृष्टिं समुत्थितां। व्यधमत्समरे राजा महाभ्राणीव मारुतः। ६९५
ततः कनकपुङ्खान्तां शल्यक्षिप्तां वियद्गतां। शरवृष्टिमपश्याम शलभानामिवायतिं।
ते शरा मद्रराजेन प्रेषिता रणमूर्द्धनि। सम्पतन्तः स्म दृश्यन्ते शकुनानां शता इव।

मद्रराजधनुर्मुक्तैः शरैः कनकभूषणैः । निरन्तरमिवाकाशं सम्बभूव जनाधिप ।
न पाण्डवानां नास्माकं तत्र कश्चिददृश्यत । वाणान्धकारे महति कृते तत्र महाहवे ।
मद्रराजेन बलिना लाघवाच्छरवृष्टिभिः । लोड्यमानं तथा दृष्ट्वा पाण्डवानां बलार्णवं । ७००
विस्मयं परमं जग्मुर्देवगन्धर्व्वदानवाः । स तु तान् सर्व्वतो यत्नाच्छरैः सम्पीड्य मारिष ।
धर्म्मराजमवच्छाद्य सिंहवद्व्यनदन्मुहुः । ते च्छन्नाः समरे तेन पाण्डवानां महारथाः ।
न शेकुस्ते तदा युद्धे प्रत्युद्यातुं महारथं । धर्म्मराजपुरोगास्तु भीमसेनमुखा रथाः ।
न जग्मुः समरे शूरं शल्यमाहवशोभिनं ।
इति श्रीमहाभारते शल्यपर्व्वणि शल्ययुद्धे त्रयोदशोऽध्यायः ॥ १३ ॥
॥ सञ्जय उवाच ॥ अर्ज्जुनो द्रौणिना विद्धो युद्धे बहुभिरायसैः । तस्य चानुचरैः शूरैस्त्रिगर्त्तानां महारथैः । ७०५
द्रौणिं विव्याध समरे त्रिभिरेव शिलीमुखैः । तथेतरान्महेष्वासान् द्वाभ्यां द्वाभ्यां धनञ्जयः ।
भूयश्चैव महाराज शरवर्षैरवाकिरत् । शरकण्टकितास्ते तु तावका भरतर्षभ ।
न जग्मुः पार्थमासाद्य ताड्यमानाः शितैः शरैः । अर्ज्जुनं रथवंशेन द्रोणपुत्रपुरोगमाः ।
अयोधयन्त समरे परिवार्य्य महारथाः । तैस्तु क्षिप्ताः शरा राजन् कार्त्तस्वरविभूषिताः ।
अर्ज्जुनस्य रथोपस्थं पूरयामासुरञ्जसा । तथा कृष्णौ महेष्वासौ वृषभौ सर्व्वधन्विनां । ७१०
शरैर्वीक्ष्य वितुन्नाङ्गौ प्रहृष्टा युद्धदुर्म्मदाः । कूवरं रथचक्राणि ईषायोक्त्राणि वै विभो ।
युगञ्चैवानुकर्षञ्च शरभूतमभूत्तदा । नैतादृशं दृष्टपूर्व्वं राजन्नैव च नः श्रुतं ।
यादृशं तत्र पार्थस्य तावकाः सम्प्रचक्रिरे । सरथः सर्व्वतो भाति चित्रपुङ्खैः शितैः शरैः ।
उल्काशतैः सम्प्रदीप्तं विमानमिव भूतले । ततोऽर्ज्जुनो महाराज शरैः सन्नतपर्व्वभिः ।
अवाकिरत्तां पृतनां मेघो वृष्ट्या यथाऽचलं । ते वध्यमानाः समरे पार्थनामाङ्कितैः शरैः । ७१५
पार्थभूतममन्यन्त प्रेक्षमाणास्तथाविधं । कोपोद्भूतशरज्वालो धनुःशब्दानिलो महान् ।
सैन्येन्धनं ददाहाशु तावकं पार्थपावकः । चक्राणां पततां वाऽपि युगानाञ्च धरातले ।
तूणीराणां पताकानां ध्वजानाञ्च रथैः सह । ईषाणामनुकर्षाणां त्रिवेणूनाञ्च भारत ।
अक्षाणामथ योक्त्राणां प्रतोदानाञ्च सर्व्वशः । शिरसां पततां चापि कुण्डलोष्णीषधारिणां ।
भुजानाञ्च महाभाग स्कन्धानाञ्च समन्ततः । छत्राणां व्यजनैः सार्द्धं मुकुटानाञ्च राशयः । ७२०
समदृश्यन्त पार्थस्य रथमार्गेषु भारत । ततः क्रुद्धस्य पार्थस्य रथमार्गे विशाम्पते ।
अगम्यरूपा पृथिवी मांसशोणितकर्द्दमा । बभूव भरतश्रेष्ठ रुद्रस्याक्रीडनं यथा ।
भीरूणां त्रासजननं शूराणां हर्षवर्द्धनं । हत्वा तु समरे पार्थः सहस्रे द्वे परन्तपः ।
रथानां सवरूथानां विधूमोऽग्निरिवाज्वलत् । यथा हि भगवानग्निर्जगद्दग्ध्वा चराचरं ।
विधूमो दृश्यते राजंस्तथा पार्थो धनञ्जयः । द्रौणिस्तु समरे दृष्ट्वा पाण्डवस्य पराक्रमं । ७२५
रथेनातिपताकेन पाण्डवं प्रत्यवारयत् । तावुभौ पुरुषव्याघ्रौ तावुभौ धन्विनाम्वरौ ।

समीयतुस्तदाऽन्योन्यं परस्परवधैषिणौ । तयोरासीन्महाराज बाणवर्षं सुदारुणं ।
जीमूतयोर्यथा वृष्टिस्तपान्ते भरतर्षभ । अन्योन्यस्पर्द्धिनौ तौ तु शरैः सन्नतपर्व्वभिः ।
ततक्षतुस्तदाऽन्योन्यं शृङ्गाभ्यां वृषभाविव । तयोर्युद्धं महाराज चिरं सममिवाभवत् ।
अस्त्राणां सङ्गमश्चैव घोरस्तत्राभवत्पुनः । ततोऽर्ज्जुनं द्वादशभी रुक्मपुङ्खैः सुतेजनैः । ७१०
वासुदेवञ्च दशभिर्व्विव्याध भरतर्षभ । ततः प्रहस्य बीभत्सुर्व्याक्षिपद्गाण्डिवं धनुः ।
मानयित्वा मुहूर्त्तन्तु गुरुपुत्रं महाहवे । व्यश्वसूतरथञ्चक्रे सव्यसाची परन्तपः ।
मृदुपूर्व्वं ततश्चैनं पुनः पुनरताडयत् । हताश्वे तु रथे तिष्ठन् द्रोणपुत्रस्तदाऽऽयसं ।
मुषलं पाण्डुपुत्राय चिक्षेप परिघोपमं । तमापतन्तं सहसा हेमपट्टविभूषितं ।
चिच्छेद सप्तधा वीरः पार्थः शत्रुनिवर्हणः । स छिन्नं मुषलं दृष्ट्वा द्रौणिः परमकोपनः । ७१५
आददे परिघं घोरं नगेन्द्रशिखरोपमं । चिक्षेप चैव पार्थाय द्रौणिर्युद्धविशारदः ।
तमन्तकमिव क्रुद्धं परिघं प्रेक्ष्य पाण्डवः । अर्ज्जुनस्त्वरितो जघ्ने पञ्चभिः सायकोत्तमैः ।
स छिन्नः पतितो भूमौ पार्थवाणैर्महाहवे । दारयन् पृथिवीन्द्राणां मनांसीव च भारत ।
ततोऽपरैस्त्रिभिर्ब्बाणैर्द्रौणिं विव्याध पाण्डवः । सोऽतिविद्धो बलवता पार्थेन सुमहात्मना ।
नाकम्पत ततो द्रौणिः पौरुषे स्वे व्यवस्थितः । सुरथन्तु ततो राजन् भारद्वाजो महारथः । ७२०
अवाकिरच्छरव्रातैः सर्व्वक्षत्रस्य पश्यतः । ततस्तु सुरथो ह्याजौ पाञ्चालानां महारथः ।
रथेन मेघघोषेण द्रौणिमेवाभ्यधावत । विकर्षन् वै धनुः श्रेष्ठं सर्व्वभारसहं दृढं ।
ज्वलनाशीविषनिभैः शरैश्चैनमवाकिरत् । सुरथं वीक्ष्य संक्रुद्धमापतन्तं महारथं ।
चुकोप समरे द्रौणिर्द्दण्डाहत इवोरगः । त्रिशिखां भ्रुकुटीं कृत्वा सृक्किणी परिसंलिहन् ।
उद्वीक्ष्य सुरथं कोपाद्धनुर्ज्यामवमृज्य च । मुमोच तीक्ष्णं नाराचं यमदण्डोपमद्युतिं । ७२५
स तस्य हृदयं भित्त्वा प्रविवेशातिवेगितः । शक्राशनिरिवोत्सृष्टो विदार्य्य धरणीतलं ।
ततः स पतितो भूमौ नाराचेन समाहतः । वज्रेण च यथा शृङ्गं पर्व्वतस्येव दारितः ।
तस्मिन् विनिहते वीरे द्रोणपुत्रः प्रतापवान् । आरुरोह रथं तूर्णं तमेव रथिनाम्बरः ।
ततः सज्जो महाराज द्रौणिराहवदुर्म्मदः । अर्ज्जुनं योधयामास संशप्तकवृतो रणे ।
तत्र युद्धं महच्चासीदर्ज्जुनस्य परैः सह । मध्यन्दिनगते सूर्य्ये यमराष्ट्रविवर्द्धनं । ७३०
तत्राश्चर्य्यमपश्याम दृष्ट्वा तेषां पराक्रमं । यदेको युगपद्वीरान् समयोधयदर्ज्जुनः ।
विमर्द्दः सुमहानासीदेकस्य बहुभिः सह । शतक्रतोर्यथा पूर्व्वं महत्या दैत्यसेनया ।
इति श्रीमहाभारते शल्यपर्व्वणि संकुलयुद्धे चतुर्द्दशोऽध्यायः ॥ १४ ॥
॥ सञ्जय उवाच ॥ दुर्य्योधनो महाराज धृष्टद्युम्नश्च पार्षतः । चक्रतुः सुमहद्युद्धं शरशक्तिसमाकुलं ।
तयोरासीन्महाराज शरधाराः सहस्रशः । अम्बुदानां यथा काले जलधाराः समन्ततः ।
राजा च पार्षतं विद्धा शरैः पञ्चभिराशुगैः । द्रोणहन्तारमुग्रेषुं पुनर्व्विव्याध सप्तभिः । ७३५

धृष्टद्युम्नस्तु समरे बलवान् दृढविक्रमः। सप्तत्या विशिखानां वै दुर्य्योधनमपीडयत्।
पीडितं वीक्ष्य राजानं सोदर्य्या भरतर्षभ। महत्या सेनया सार्द्धं परिवव्रुः स्म पार्षतं।
स तैः परिवृतः शूरः सर्व्वतोऽतिरथैर्भृशं। व्यचरत् समरे राजन् दर्शयन्नस्त्रलाघवं।
शिखण्डी कृतवर्म्माणं गौतमञ्च महारथं। प्रभद्रकैः समायुक्तो योधयामास धन्विनौ।
तत्रापि सुमहद्युद्धं घोररूपं विशाम्पते। प्राणान् सन्त्यजतां युद्धे प्राणद्यूताभिदेवने। ७६०
शल्यः सायकवर्षाणि विमुञ्चन् सर्व्वतो दिशं। पाण्डवान् पीडयामास ससात्यकिवृकोदरान्।
तथा तौ च यमौ युद्धे यमतुल्यपराक्रमौ। योधयामास राजेन्द्र वीर्य्येणास्त्रबलेन च।
शल्यसायकनुन्नानां पाण्डवानां महामृधे। त्रातारं नाध्यगच्छन्त केचित्तत्र महारथाः।
ततस्तु नकुलः शूरो धर्म्मराजे प्रपीडिते। अभिदुद्राव वेगेन मातुलं माद्रिनन्दनः।
सञ्छाद्य समरे वीरं नकुलः परवीरहा। विव्याध चैनं दशभिः स्मयमानः स्तनान्तरे। ७६५
सर्व्वपारशवैर्व्वाणैः कर्म्मारपरिमार्ज्जितैः। स्वर्णपुङ्खैः शिलाधौतैर्धनुर्यन्त्रप्रचोदितैः।
शल्यस्तु पीडितस्तेन स्वस्रीयेण महात्मना। नकुलं पीडयामास पत्रिभिर्नतपर्व्वभिः।
ततो युधिष्ठिरो राजा भीमसेनोऽथ सात्यकिः। सहदेवश्च माद्रेयो मद्रराजमुपाद्रवन्।
तानापतत एवाशु पूरयानान् रथस्वनैः। दिशश्च प्रदिशश्चैव कम्पयानांश्च मेदिनीं।
प्रतिजग्राह समरे सेनापतिरमित्रजित्। युधिष्ठिरं त्रिभिर्व्विद्ध्वा भीमसेनञ्च पञ्चभिः। ७७०
सात्यकिञ्च शतेनाजौ सहदेवं त्रिभिः शरैः। ततस्तु सशरञ्चापं नकुलस्य महात्मनः।
मद्रेश्वरः क्षुरप्रेण तदा चिच्छेद मारिष। तदशीर्य्यत विच्छिन्नं धनुः शल्यस्य सायकैः।
अथान्यद्धनुरादाय माद्रीपुत्त्रो महारथः। मद्रराजरथं तूर्णं पूरयामास पत्रिभिः।
युधिष्ठिरस्तु मद्रेशं सहदेवश्च मारिष। दशभिर्दशभिर्व्वाणैरुरस्येनमविध्यतां।
भीमसेनस्तु तं षष्ट्या सात्यकिर्दशभिः शरैः। मद्रराजमभिद्रुत्य जघ्नतुः कङ्कपत्रिभिः। ७७५
मद्रराजस्ततः क्रुद्धः सात्यकिं नवभिः शरैः। विव्याध भूयः सप्तत्या शराणां नतपर्व्वणां।
अथास्य सशरञ्चापं मुष्टौ चिच्छेद मारिष। हयांश्च चतुरः संख्ये प्रेषयामास मृत्यवे।
विरथं सात्यकिं दृष्ट्वा मद्रराजो महारथः। विशिखानां शतेनैनमाजघान समन्ततः।
माद्रीपुत्त्रौ च संरब्धौ भीमसेनञ्च पाण्डवं। युधिष्ठिरञ्च कौरव्यो विव्याध दशभिः शरैः।
तत्राद्भुतमपश्याम मद्रराजस्य पौरुषं। यदेनं सहिताः पार्था नाभ्यवर्त्तन्त संयुगे। ७८०
अथान्यं रथमास्थाय सात्यकिः सत्यविक्रमः। पीडितान् पाण्डवान् दृष्ट्वा मद्रराजवशङ्गतान्।
अभिदुद्राव वेगेन मद्राणामधिपं बली। आपतन्तं रथन्तस्य शल्यः समितिशोभनः।
प्रत्युद्ययौ रथेनैव मत्तो मत्तमिव द्विपं। स सन्निपातस्तुमुलो बभूवाद्भुतदर्शनः।
सात्यकेश्चैव शूरस्य मद्राणामधिपस्य च। यादृशो वै पुरा वृत्तः शम्बरामरराजयोः।
सात्यकिः प्रेक्ष्य समरे मद्रराजमवस्थितं। विव्याध दशभिर्व्वाणैस्तिष्ठ तिष्ठेति चाब्रवीत्। ७८५

मद्रराजस्तु सुभृशं विद्धस्तेन महात्मना । सात्यकिं प्रतिविव्याध चित्रपुङ्खैः शितैः शरैः ।
ततः पार्था महेष्वासाः सात्वताभिसृतं नृपं । अभ्यद्रवन् रथैस्तूर्णं मातुलं वधकाङ्क्षया ।
तत आसीत् परामर्द्दस्तुमुलः शोणितोदकः । शूराणां युध्यमानानां सिंहानामिव नर्द्दतां ।
तेषामासीन्महाराज व्यतिक्षेपः परस्परं । सिंहानामामिषेप्सूनां कूजतामिव संयुगे ।
तेषां वाणसहस्रौघैराकीर्णा वसुधाऽभवत् । अन्तरीक्षञ्च सहसा वाणभूतमभूत्तदा । ७९०
वाणान्धकारे बहुधा कृते तेन समन्ततः । अभ्रच्छायेव संजज्ञे शरैर्मुक्तैर्महात्मभिः ।
तत्र राजन् शरैर्मुक्तैर्निर्मुक्तैरिव पन्नगैः । स्वर्णपुङ्खैः प्रकाशद्भिर्व्यरोचन्त दिशस्तदा ।
तत्राद्भुतं परञ्चक्रे शल्यः शत्रुनिवर्हणः । यदेकः समरे शूरो योधयामास वै बहून् ।
मद्रराजभुजोत्सृष्टैः कङ्कबर्हिणवाजितैः । संपतद्भिः शरैः घोरैरवाकीर्यत मेदिनी ।
तत्र शल्यरथं राजन् विचरन्तं महाहवे । अपश्याम यथा पूर्वं शक्रस्यासुरसंक्षये । ७९५
इति श्रीमहाभारते शल्यपर्व्वणि संकुलयुद्धे पञ्चदशोऽध्यायः ॥ १५ ॥
॥ सञ्जय उवाच ॥ ततः सैन्यास्तव विभो मद्रराजपुरस्कृताः । पुनरभ्यद्रवन् पार्थान् वेगेन महता रणे ।
पीडितास्तावकाः सर्व्वे प्रधावन्तो रणोत्कटाः । क्षणेनैव च पार्थांस्ते बहुत्वात्समलोडयन् ।
ते वध्यमानाः कुरुभिः पाण्डवा नावतस्थिरे । निवार्य्यमाणा भीमेन पश्यतोः कृष्णपार्थयोः ।
ततो धनञ्जयः क्रुद्धः कृपं सह पदानुगैः । अवाकिरच्छरौघेण कृतवर्म्माणमेव च ।
शकुनिं सहदेवस्तु सहसैन्यमवाकिरत् । नकुलः पार्श्वतः स्थित्वा मद्रराजमवैक्षत । ८००
द्रौपदेया नरेन्द्रांश्च भूयिष्ठान् समवारयन् । द्रोणपुत्रञ्च पाञ्चाल्यः शिखण्डी समवारयत् ।
भीमसेनस्तु राजानं गदापाणिरवारयत् । शल्यञ्च सह सैन्येन कुन्तीपुत्रो युधिष्ठिरः ।
ततः समभवद्युद्धं संसक्तं तत्र तत्र ह । तावकानां परेषाञ्च संग्रामेष्वनिवर्त्तिनां ।
तत्र पश्याम्यहं कर्म्म शल्यस्यातिमहद्रणे । यदेकः सर्व्वसैन्यानि पाण्डवानामयुध्यत ।
व्यदृश्यत तदा शल्यो युधिष्ठिरसमीपतः । रणे चन्द्रमसोऽभ्याशे शनैश्चर इव ग्रहः । ८०५
पीडयित्वा तु राजानं शरैराशीविषोपमैः । अभ्यधावत्पुनर्भीमं शरवर्षैरवाकिरत् ।
तस्य तल्लाघवं दृष्ट्वा तथैव च कृतास्त्रतां । अपूजयन्ननीकानि परेषां तावकानि च ।
पीड्यमानास्तु शल्येन पाण्डवा भृशपीडिताः । प्राद्रवन्त रणं हित्वा क्रोशमाने युधिष्ठिरे ।
वध्यमानेष्वनीकेषु मद्रराजेन पाण्डवः । अमर्षवशमापन्नो धर्म्मराजो युधिष्ठिरः ।
ततः पौरुषमास्थाय मद्रराजमताडयत् । जयो वाऽस्तु वधो वाऽस्तु कृतबुद्धिर्महारथः । ८१०
समाहूयाब्रवीत्सर्व्वान् भ्रातॄन् कृष्णञ्च माधवं । भीष्मो द्रोणश्च कर्णश्च ये चान्ये पृथिवीक्षितः ।
कौरवार्थे पराक्रान्ताः संग्रामे निधनङ्गताः । यथाभागं यथोत्साहं भवन्तः कृतपौरुषाः ।
भागोऽवशिष्ट एकोऽयं मम शल्यो महारथः । सोऽहमद्य युधा जेतुमाशंसे मद्रकाधिपं ।
तत्र यन्मानसं मह्यं तत्सर्व्वं निगदामि वः । चक्ररक्षाविमौ वीरौ मम माद्रवतीसुतौ ।

अजेयौ वासवेनापि समरे शूरसम्मतौ। साध्विमौ मातुलं युद्धे क्षत्त्रधर्म्मपुरस्कृतौ। ८१५
मदर्थे प्रतियुध्येतां मानार्हौ सत्यसङ्गरौ। मां वा शल्यो रणे हन्ता तं वाऽहं भद्रमस्तु वः।
इति सत्यामिमां वाणीं लोकवीरा निबोधत। योत्स्येऽहं मातुलेनाद्य क्षत्त्रधर्म्मेण पार्थिवाः।
स्वयं समभिसन्धाय विजयायेतराय च। तस्य मेऽप्यधिकं शस्त्रं सर्व्वोपकरणानि च।
संयुञ्जन्तु रथे क्षिप्रं शास्त्रवद्रथयोजकाः। शैनेयो दक्षिणञ्चक्रं धृष्टद्युम्नस्तथोत्तरं।
पृष्ठगोपो भवत्वद्य मम पार्थो धनञ्जयः। पुरःसरो ममाद्यास्तु भीमः शस्त्रभृताम्वरः। ८२०
एवमभ्यधिकः शल्यादृविष्यामि महामृधे। एवमुक्तास्तथा चक्रुस्तदा राज्ञः प्रियैषिणः।
ततः प्रहर्षः सैन्यानां पुनरासीत्तदा मृधे। पाञ्चालानां सोमकानां मत्स्यानाञ्च विशेषतः।
प्रतिज्ञां तां तदा राजा कृत्वा मद्रेशमभ्ययात्। ततः शङ्खांश्च भेरीश्च शतशश्चैव पुष्कलान्।
अवादयन्त पाञ्चालाः सिंहनादांश्च नेदिरे। तेऽभ्यधावन्त संरब्धा मद्रराजं तरस्विनं।
महता हर्षजेनाथ नादेन कुरुपुङ्गवाः। ह्रादेन गजघण्टानां शङ्खानां निनदेन च। ८२५
तूर्य्यशब्देन महता नादयन्तश्च मेदिनीं। तान् प्रत्यगृह्णात् पुत्त्रस्ते मद्रराजश्च वीर्य्यवान्।
महामेघानिव बहून् शैलावस्तोदयाविव। शल्यस्तु समरश्लाघी धर्म्मराजमरिन्दमं।
ववर्ष शरवर्षेण वर्षेण मघवानिव। तथैव कुरुराजोऽपि प्रगृह्य रुचिरं धनुः।
द्रोणोपदेशान् विविधान् दर्शयानो महामनाः। ववर्ष शरवर्षाणि चित्रं लघु च सुष्ठु च।
न चास्य विवरं कश्चिद्ददर्श चरतो रणे। तावुभौ विविधैर्ब्बाणैस्ततक्षाते परस्परं। ८३०
शार्दूलावामिषप्रेप्सू पराक्रान्ताविवाहवे। भीमस्तु तव पुत्त्रेण युद्धशौण्डेन सङ्गतः।
पाञ्चाल्यः सात्यकिश्चैव माद्रीपुत्त्रौ च पाण्डवौ। शकुनिप्रमुखान् वीरान् प्रत्यगृह्णन् समन्ततः।
तदासीत्तुमुलं युद्धं पुनरेव जयैषिणां। तावकानां परेषाञ्च राजन् दुर्म्मन्त्रिते तव।
दुर्य्योधनस्तु भीमस्य शरेणानतपर्व्वणा। चिच्छेदादिश्य सङ्ग्रामे ध्वजं हेमपरिष्कृतं।
सकिङ्किणीकजालेन महता चारुदर्शनः। पपात रुचिरः संख्ये भीमसेनस्य पश्यतः। ८३५
पुनश्चास्य धनुश्चित्रं गजराजकरोपमं। क्षुरेण शितधारेण प्रचकर्त्त नराधिपः।
स छिन्नधन्वा तेजस्वी रथशक्त्या सुतन्तव। बिभेदोरसि विक्रम्य स रथोपस्थ आविशत्।
तस्मिन्मोहमनुप्राप्ते पुनरेव वृकोदरः। यन्तुरेव शिरः कायात् क्षुरप्रेणाहरत्तदा।
हतसूता हयास्तस्य रथमादाय भारत। व्यद्रवन्त दिशो राजन् हाहाकारस्तदाऽभवत्
तमभ्यधावत्त्राणार्थं द्रोणपुत्त्रो महारथः। कृपश्च कृतवर्म्मा च पुत्त्रं तव परीप्सवः। ८४०
तस्मिन् विलुलिते सैन्ये त्रस्तास्तस्य पदानुगाः। गाण्डीवधन्वा विस्फार्य्य धनुस्तानहनच्छरैः।
युधिष्ठिरस्तु मद्रेशमभ्यधावदमर्षितः। स्वयं सञ्चोदयन्नश्वान् दन्तवर्णान्मनोजवान्।
तत्राश्चर्य्यमपश्याम कुन्तीपुत्त्रे युधिष्ठिरे। पुरा भूत्वा मृदुर्दान्तो यत्तदा दारुणोऽभवत्।
विवृत्ताक्षश्च कौन्तेयो वेपमानश्च मन्युना। चिच्छेद योधान्निशितैर्भल्लैः शतसहस्रशः।

यां यां प्रत्युद्ययौ सेनां तां तां ज्येष्ठः स पाण्डवः । शरैरपातयद्राजन् गिरीन् वज्रैरिवोत्तमैः । ७७५
साश्वसूतध्वजरथान् रथिनः पातयन् बहून् । आक्रीडदेको बलवान् पवनस्तोयदानिव ।
साश्वारोहांश्च तुरगान् पत्तींश्चैव सहस्रशः । व्यपोथयत सङ्ग्रामे क्रुद्धो रुद्रः पशूनिव ।
शून्यमायोधनं कृत्वा शरवर्षैः समन्ततः । अभ्यद्रवत मद्रेशं तिष्ठ शल्येति चाब्रवीत् ।
तस्य तच्चरितं दृष्ट्वा सङ्ग्रामे भीमकर्म्मणः । वित्रेसुस्तावकाः सर्व्वे शल्यस्त्वेनं समभ्ययात् ।
ततस्तौ भृशसंक्रुद्धौ प्रध्माय सलिलोद्भवौ । समाहूय तदाऽन्योन्यं भर्त्सयन्तौ समीयतुः । ७८०
शल्यस्तु शरवर्षेण पीड्यामास पाण्डवं । मद्रराजन्तु कौन्तेयः शरवर्षैरवाकिरत् ।
अदृश्येतां तदा राजन् कङ्कपत्रिभिराचितौ । उद्भिन्नरुधिरौ शूरौ मद्रराजयुधिष्ठिरौ ।
पुष्पितौ शुशुभाते वै वसन्ते किंशुकौ यथा । दीप्यमानौ महात्मानौ प्राणद्यूतेन दुर्म्मदौ ।
दृष्ट्वा सर्व्वाणि सैन्यानि नाध्यवस्यंस्तयोर्ज्जयं । हत्वा मद्राधिपं पार्थो भोक्ष्यतेऽद्य वसुन्धरां ।
शल्यो वा पाण्डवं हत्वा दद्याद्दुर्य्योधनाय गां । इतीव निश्चयो नाभूद्योधानां तत्र भारत । ७८५
प्रदक्षिणमभूत् सर्व्वं धर्म्मराजस्य युध्यतः । ततः शरशतं शल्यो मुमोचाथ युधिष्ठिरे ।
धनुश्चास्य शिताग्रेण क्षुरेण निरकृन्तत । सोऽन्यत् कार्म्मुकमादाय शल्यं शरशतैस्त्रिभिः ।
अविध्यत् कार्म्मुकञ्चास्य क्षुरेण निरकृन्तत । अथास्य निजघानाश्वांश्चतुरो नतपर्व्वभिः ।
द्वाभ्यामथ शिताग्राभ्यामुभौ तु पार्ष्णिसारथी । ततोऽस्य दीप्यमानेन पीतेन निशितेन च ।
प्रमुखे वर्त्तमानस्य भल्लेनापाहरद्ध्वजं । ततः प्रभग्नं तत्सैन्यं दौर्य्योधनमरिन्दम । ७९०
ततो मद्राधिपं द्रौणिरभ्यधावत्तथाहतं । आरोप्य चैनं स्वरथे त्वरमाणः प्रदुद्रुवे ।
मुहूर्त्तमिव तौ गत्वा नर्द्दमाने युधिष्ठिरे । स्थित्वा ततो मद्रपतिरन्यं स्यन्दनमास्थितः ।
विधिवत्कल्पितं शुभ्रं महाम्बुदनिनादितं । सज्जयन्त्रोपकरणं द्विषतां लोमहर्षणं ।
इति श्रीमहाभारते शल्यपर्व्वणि शल्ययुधिष्ठिरयुद्धे षोडशोऽध्यायः ॥ १६ ॥

॥ सञ्जय उवाच ॥ अथान्यद्धनुरादाय बलवान् वेगवत्तरं । युधिष्ठिरं मद्रपतिर्व्विद्ध्वा सिंह इवानदत् ।
ततः स शरवर्षेण पर्ज्जन्य इव वृष्टिमान् । अभ्यवर्षदमेयात्मा क्षत्रियान् क्षत्रियर्षभः । ७९५
सात्यकिं दशभिर्व्विद्ध्वा भीमसेनं त्रिभिः शरैः । सहदेवं त्रिभिर्व्विद्ध्वा युधिष्ठिरमपीडयत् ।
तांस्तानन्यान्महेष्वासान् साश्वान् सरथकूवरान् । अर्द्दयामास विशिखैरुल्काभिरिव कुञ्जरान् ।
कुञ्जरान् कुञ्जरारोहानश्वानश्वप्रयायिनः । रथांश्च रथिभिः सार्द्धं जघान रथिनाम्वरः ।
बाहूंश्चिच्छेद तरसा सायुधान् केतनानि च । चकार वै महीं योधैः स्तीर्णां वेदीं कुशैरिव ।
तथा तमरिसैन्यानि घ्नन्तं मृत्युमिवान्तकं । परिवव्रुर्भृशं क्रुद्धाः पाण्डुपाञ्चालसोमकाः । ८००
तं भीमसेनश्च शिनेश्च नप्ता माद्र्याश्च पुत्रौ पुरुषप्रवीरौ । समागतं भीमबलेन राज्ञा पर्य्याप्नमन्योन्यमथाह्वयन्त ।
ततस्तु शूराः समरे नरेन्द्र नरेश्वरं प्राप्य युधां वरिष्ठं । आवार्य्य चैनं समरे नृवीरं जघ्नुः शरैः पत्रिभिरुग्रवेगैः ।
संरक्षितो भीमसेनेन राजा माद्रीसुताभ्यामथ माधवेन । मद्राधिपं पत्रिभिरुग्रवेगैः स्तनान्तरे धर्म्मसुतो निजघ्ने ।

ततो रणे तावकानां रथौघाः समीक्ष्य मद्राधिपतिं शरार्त्तं । पर्य्यावव्रुः प्रवरास्ते सुसज्जा दुर्य्योधनस्यानुमते पुरस्तात् ।
ततोऽद्भुतं मद्रजनाधिपो रणे युधिष्ठिरं सप्तभिरभ्यविध्यत् । तञ्चापि पार्थो नवभिः पृषत्कैर्व्विव्याध राजंस्तुमुले महात्मा । ८७५
आकर्णपूर्णायतसम्प्रयुक्तैः शरैस्तदा संयति तैलधौतैः । अन्योन्यमाच्छादयतां महारथौ मद्राधिपश्चापि युधिष्ठिरश्च ।
ततस्तु तूर्णं समरे महारथौ परस्परस्यान्तरमीक्षमाणौ । शरैर्भृशं विव्यधतुर्नृपोत्तमौ महाबलौ शत्रुभिरप्रधृष्यौ ।
तयोर्धनुर्ज्यातलनिःस्वनो महान् महेन्द्रवज्राशनितुल्यनिःस्वनः । परस्परं बाणगणैर्महात्मनोः प्रवर्षतोर्मद्रपपाण्डुवीरयोः ।
तौ चेरतुर्व्याघ्रशिशुप्रकाशौ महावनेष्वामिषगृद्धिनाविव । विषाणिनौ नागवराविवोभौ ततक्षतुः संयुगजातदर्पौ ।
ततस्तु मद्राधिपतिर्महात्मा युधिष्ठिरं भीमबलं प्रसह्य । विव्याध वीरं हृदयेऽतिवेगं शरेण सूर्य्याग्निसमप्रभेण । ८८०
ततोऽतिविद्धोऽथ युधिष्ठिरोऽपि सुसम्प्रयुक्तेन शरेण राजन् । जघान मद्राधिपतिं महात्मा मुदञ्च लेभे ऋषभः कुरूणां ।
ततो मुहूर्त्तादिव पार्थिवेन्द्रो लब्ध्वा संज्ञां क्रोधसंरक्तनेत्रः । शतेन पार्थं त्वरितो जघान सहस्रनेत्रप्रतिमप्रभावः ।
त्वरंस्ततो धर्म्मसुतो महात्मा शल्यस्य कोपान्नवभिः पृषत्कैः । भित्त्वा उरस्तापनीयञ्च वर्म्म जघान षड्भिस्त्वपरैः पृषत्कैः ।
ततस्तु मद्राधिपतिः प्रहृष्टो धनुर्व्विकृष्य व्यसृजत् पृषत्कान् । द्वाभ्यां शराभ्याञ्च तथैव राज्ञश्चिच्छेद चापं कुरुपुङ्गवस्य ।
नवं ततोऽन्यत् समरे प्रगृह्य राजा धनुर्घोरतरं महात्मा । शल्यं हि विव्याध शरैः समन्तात् यथा महेन्द्रो नमुचिं
शिताग्रैः । ८८५
ततस्तु शल्यो नवभिः पृषत्कैर्भीमस्य राज्ञश्च युधिष्ठिरस्य । निकृत्य रौक्मे पटुवर्म्मणी तयोर्व्विदारयामास भुजौ महात्मा ।
ततोऽपरेण ज्वलनार्कतेजसा क्षुरेण राज्ञो धनुरुन्ममाथ । कृपश्च तस्यैव जघान सूतं षड्भिः शरैः सोऽभिमुखं पपात ।
मद्राधिपश्चापि युधिष्ठिरस्य शरैश्चतुर्भिर्न्निजघान वाहान् । वाहांश्च हत्वा व्यकरोन्महात्मा योधक्षयं धर्म्मसुतस्य राज्ञः ।
तथा कृते राजनि भीमसेनो मद्राधिपस्याशु ततो महात्मा । छित्त्वा धनुर्व्वेगवता शरेण द्वाभ्यामविध्यत् सुभृशं नरेन्द्रं ।
तथा परेणास्य जहार यन्तुः कायाच्छिरः सन्नहनीयमध्यात् । जघान चाश्वांश्चतुरः सुशीघ्रं तथा भृशं कुपितो भीम
सेनः । ८९०
तमग्रणीः सर्व्वधनुर्द्धराणामेकं चरन्तं समरेऽतिवेगं । भीमः शतेन व्यकिरच्छराणां माद्रीपुत्रः सहदेवस्तथैव ।
तैः सायकैर्मोहितं वीक्ष्य शल्यं भीमः शरैरस्य चकर्त्त वर्म्म । स भीमसेनेन निकृत्तवर्म्मा मद्राधिपश्चर्म्म सहस्रतारं ।
प्रगृह्य खड्गञ्च रथान्महात्मा प्रस्कन्द्य कुन्तीसुतमभ्यधावत् । छित्त्वा रथेषां नकुलस्य सोऽथ युधिष्ठिरं भीमबलोऽभ्य
धावत् ।
तञ्चापि राजानमथोत्पतन्तं क्रुद्धं यथैवान्तकमापतन्तं । धृष्टद्युम्नो द्रौपदेयाः शिखण्डी शिनेश्च नप्ता सहसा परीयुः ।
अथाऽस्य चर्म्माप्रतिमं न्यकृन्तद्भीमो महात्मा नवभिः पृषत्कैः । खड्गञ्च भल्लैर्न्निचकर्त्त मुष्टौ नदन् प्रहृष्टस्तव सैन्यमध्ये । ८९५
तत् कर्म्म भीमस्य समीक्ष्य हृष्टास्ते पाण्डवानां प्रवरा रथौघाः । नादञ्च चक्रुर्भृशमुत्स्मयन्तः शङ्खांश्च दध्मुः शशिसन्निकाशान् ।
तेनाथ शब्देन विभीषणेन तथाऽभितप्तं बलमप्रधृष्यं । कान्दिग्भूतं रुधिरेणोक्षिताङ्गं विसंज्ञकल्पञ्च तदा विषण्णं ।
स मद्रराजः सहसाऽवकीर्णो भीमाग्रगैः पाण्डवयोधमुख्यैः । युधिष्ठिरस्याभिमुखं जवेन सिंहो यथा मृगहेतोः प्रयातः ।
स धर्म्मराजो निहताश्वसूतः क्रोधेन दीप्तो ज्वलनप्रकाशः । दृष्ट्वा तु मद्राधिपतिञ्च तूर्णं समभ्यधावत्तमरिं बलेन ।
गोविन्दवाक्यं त्वरितं विचिन्त्य दध्रे मतिं शल्यविनाशनाय । स धर्म्मराजो निहताश्वसूतो रथे तिष्ठन् शक्तिमेवाभ्यकाङ्क्षत् । ९००

तथापि शल्यस्य निशम्य कर्म्म महात्मनो भागमथावशिष्टं । स्मृत्वा मनः शल्यवधे महात्मा यथोक्तमिन्द्रावरजस्य चक्रे ।
स धर्म्मराजो मणिहेमदण्डां जग्राह शक्तिं कनकप्रकाशां । नेत्रे च दीप्ते सहसा विवृत्य मद्राधिपं क्रुद्धमना निरैक्षत् ।
निरीक्षितो ऽसौ नरदेवराज्ञा पूतात्मना निर्हृतकल्मषेण । आसीन्न यद्भस्मसान्मद्रराजस्तदद्भुतं मे प्रतिभाति राजन् ।
ततस्तु शक्तिं रुचिरोग्रदण्डां मणिप्रवेकोज्ज्वलितां प्रदीप्तां । चिक्षेप वेगात्सुभृशं महात्मा मद्राधिपाय प्रवरः कुरूणां ।
दीप्तामथैनां महता बलेन सविस्फुलिङ्गां सहसा पतन्तीं । प्रैक्षन्त सर्व्वे कुरवः समेता दिवो युगान्ते महतीमिवोल्कां । ८०५
तां कालरात्रीमिव पाशहस्तां यमस्य धात्रीमिव घोररूपां । स ब्रह्मदण्डप्रतिमाममोघां ससर्ज्ज यत्तो युधि धर्म्मराजः ।
गन्धस्रगग्र्यासनपानभोजनैरभ्यर्च्चितां पाण्डुसुतैः प्रयत्नात् । संवर्त्तकाग्निप्रतिमां ज्वलन्तीं कृत्यामथर्व्वाङ्गिरसीमिवोग्रां ।
ईशानहेतोः प्रतिनिर्म्मितां तां त्वष्ट्रा रिपूणामसुदेहभक्षां । भूम्यन्तरीक्षादिजलाशयानि प्रसह्य भूतानि निहन्तुमीशां ।
घण्टापताकामणिवज्रनालां वैदूर्य्यचित्रां तपनीयदण्डां । त्वष्ट्रा प्रयत्नान्नियमेन क्लृप्तां ब्रह्मद्विषामन्तकरीममोघां ।
बलप्रयत्नादधिरूढवेगां मन्त्रैश्च घोरैरभिमन्त्र्य यत्नात् । ससर्ज्ज मार्गेण च तां वरेण वधाय मद्राधिपतेस्तदानीं । ८१०
हतो ऽसि पापेत्यभिगर्ज्जमानो रुद्रो ऽन्धकायान्तकरं यथेषुं । प्रसार्य्य बाहुं सुदृढं सुपाणिं क्रोधेन नृत्यन्निव धर्म्मराजः ।
तां सर्व्वशक्त्या प्रहितां सुशक्तिं युधिष्ठिरेणाप्रतिवार्य्यवीर्य्यां । प्रतिग्रहायाभिननर्द्द शल्यः सम्यग्घुतामग्निरिवाज्यधारां ।
सा तस्य मर्म्माणि विदार्य्य शुभ्रमुरो विशालञ्च तथैव भित्त्वा । विवेश गां तोयमिवाप्रसक्ता यशो विशालं नृपतेर्द्दहन्ती ।
नासाक्षिकर्णास्यविनिःसृतेन प्रस्यन्दता च व्रणसम्भवेन । संसिक्तगात्रो रुधिरेण सो ऽभूत् क्रौञ्चो यथा स्कन्दहतो महाद्रिः ।
प्रसार्य्य बाहू च रथाद्गतो गां सञ्छिन्नवर्म्मा कुरुनन्दनेन । महेन्द्रवाहप्रतिमो महात्मा वज्राहतं शृङ्गमिवाचलस्य । ८१५
बाहू प्रसार्य्याभिमुखो धर्म्मराजस्य मद्रराट् । ततो निपतितो भूमिमिन्द्रध्वज इवोच्छ्रितः ।
स तथा भिन्नसर्व्वाङ्गो रुधिरेण समुक्षितः । प्रत्युद्गत इव प्रेम्णा भूम्या स नरपुङ्गवः ।
प्रियया कान्तया कान्तः पतमान इवोरसि । चिरं भुक्त्वा वसुमतीं प्रियां कान्तामिव प्रभुः ।
सर्व्वैरङ्गैः समाश्लिष्य प्रसुप्त इव चाभवत् । धर्म्म्ये धर्म्मात्मना युद्धे निहतो धर्म्मसूनुना ।
सम्यग्घुत इव स्विष्टः प्रशान्तोऽग्निरिवाध्वरे । शक्त्या विभिन्नहृदयं विप्रविद्धायुधध्वजं । ८२०
प्रशान्तमपि मद्रेशं लक्ष्मीर्नैव विमुञ्चति । ततो युधिष्ठिरश्चापमादायेन्द्रधनुःप्रभं ।
व्यधमद्द्विषतः संख्ये खगराडिव पन्नगान् । देहान् सुनिशितैर्भल्लैरिपूणां नाशयत् क्षणात् ।
ततः पार्थस्य बाणौघैरावृताः सैनिकास्तव । निमीलिताक्षाः क्षिण्वन्तो भृशमन्योन्यमर्द्दिताः ।
क्षरन्तो रुधिरं देहैर्व्विपन्नायुधजीविताः । ततः शल्ये निपतिते मद्रराजानुजो युवा ।
भ्रातुस्तुल्यगुणैः सर्व्वैरथी पाण्डवमभ्ययात् । विव्याध च नरश्रेष्ठो नाराचैर्ब्बहुभिस्त्वरन् । ८२५
हतस्यापचितिं भ्रातुश्चिकीर्षुर्युद्धदुर्म्मदः । तं विव्याधाशुगैः षड्भिर्द्धर्म्मराजस्त्वरन्निव ।
कार्म्मुकञ्चास्य चिच्छेद क्षुराभ्यां ध्वजमेव च । ततोऽस्य दीप्यमानेन सुदृढेन शितेन च ।
प्रमुखे वर्त्तमानस्य भल्लेनापाहरच्छिरः । सकुण्डलं तद्ददृशे पतमानं शिरो रथात् ।
पुण्यक्षयमनुप्राप्य पतन् स्वर्गादिव च्युतः । तस्यापकृष्टशीर्षन्तु शरीरं पतितं रथात् ।

युधिष्ठिरेण च विक्रान्तं दृष्ट्वा सैन्यमभज्यत । विचित्रकवचे तस्मिन् हते मद्रनृपानुजे ।　९९०
हाहाकारं प्रकुर्व्वाणाः कुरवो विप्रदुद्रुवुः । शल्यानुजं हतं दृष्ट्वा तावकास्त्यक्तजीविताः ।
विवेसुः पाण्डवभयाद्रजोध्वस्तास्तदा भृशं । तांस्तथा भज्यमानांस्तु कौरवान् भरतर्षभ ।
शिनेर्नप्ता किरन् वाणैरभ्यवर्त्तत सात्यकिः । तमायान्तं महेष्वासमप्रधृष्यं दुरासदं ।
हार्द्दिक्यस्त्वरितो राजन् प्रत्यगृह्णादभीतवत् । तौ समेतौ महात्मानौ वार्ष्णेयावपराजितौ ।
हार्द्दिक्यः सात्यकिश्चैव सिंहाविव बलोत्कटौ । इषुभिर्विमलाभासैश्छादयन्तौ परस्परं ।　९९५
अर्च्चिर्भिरिव सूर्य्यस्य दिवाकरसमप्रभौ । चापमार्गबलोद्धूतान् मार्गणान् वृष्णिसिंहयोः ।
आकाशगानपश्याम पतङ्गानिव शीघ्रगान् । सात्यकिं दशभिर्व्विद्ध्वा हयांश्चास्य त्रिभिः शरैः ।
चापमेकेन चिच्छेद हार्द्दिक्यो नतपर्व्वणा । तं निकृत्तं धनुःश्रेष्ठमपास्य शिनिपुङ्गवः ।
अन्यदादत्त वेगेन वेगवत्तरमायुधं । तदादाय धनुःश्रेष्ठं वरिष्ठः सर्व्वधन्विनां ।
हार्द्दिक्यं दशभिर्व्वाणैः प्रत्यविध्यत् स्तनान्तरे । ततो रथं युगेषाञ्च छित्त्वा भल्लैः सुसंयतैः ।　१०००
अश्वांस्तस्यावधीत्तूर्णमुभौ च पार्ष्णिसारथी । ततस्तं विरथं दृष्ट्वा कृपः शारद्वतः प्रभो ।
अपोवाह ततः क्षिप्रं रथमारोप्य वीर्य्यवान् । मद्रराजे हते राजन् विरथे कृतवर्म्मणि ।
दुर्य्योधनबलं सर्व्वं पुनरासीत् पराङ्मुखं । तत्परे नान्वबुध्यन्त सैन्ये च रजसा वृते ।
बलन्तु हतभूयिष्ठं तत्तदासीत् पराङ्मुखं । ततो मुहूर्त्तात्तेऽपश्यन्रजो भौमं समुत्थितं ।
विविधैः शोणितस्रावैः प्रशान्तं पुरुषर्षभ । ततो दुर्य्योधनो दृष्ट्वा भग्नञ्च बलमन्तिकात् ।　१००५
जवेनापततः पार्थानेकः सर्व्वानवारयत् । पाण्डवान् सरथान्दृष्ट्वा धृष्टद्युम्नञ्च पार्षतं ।
आनर्त्तञ्च दुराधर्षं शितैर्व्वाणैरवारयत् । तं परे नाभ्यवर्त्तन्त मर्त्या मृत्युमिवागतं ।
अथान्यं रथमास्थाय हार्द्दिक्योऽपि न्यवर्त्तत । ततो युधिष्ठिरो राजा त्वरमाणो महारथः ।
चतुर्भिर्निजघानाश्वान् पत्रिभिः कृतवर्म्मणः । विव्याध गौतमञ्चापि षड्भिर्भल्लैः सुतेजनैः ।
अश्वत्थामा तथा राज्ञा हताश्वं विरथीकृतं । तमपोवाह हार्द्दिक्यं स्वरथेन युधिष्ठिरात् ।　१०१०
ततः शारद्वतः षड्भिः प्रत्यविध्यद्युधिष्ठिरं । विव्याध चाश्वान्निशितैस्तथाऽष्टाभिः शिलीमुखैः ।
एवमेतन्महाराज युद्धशेषमवर्त्तत । तव दुर्म्मन्त्रिते राजन् सहपुत्रस्य भारत ।
तस्मिन् महेष्वासवरे विशस्ते सङ्ग्राममध्ये कुरुपुङ्गवेन । पार्थाः समेताः परमप्रहृष्टाः शङ्खान् प्रदध्मुर्हतमीक्ष्य शल्यं ।
युधिष्ठिरञ्च प्रशशंसुराजौ पुरा कृते वृत्रवधे यथेन्द्रं । चक्रुश्च नानाविधवाद्यशब्दान् निनादयन्तो वसुधां समन्तात् ।
इति श्रीमहाभारते शल्यपर्व्वणि शल्यवधे सप्तदशोऽध्यायः ॥ १७ ॥

॥ सञ्जय उवाच ॥ शल्येऽथ निहते राजन् मद्रराजपदानुगाः । रथाः सप्तशता वीरा निर्य्ययुर्म्महतो बलात् ।　१०१५
दुर्य्योधनस्तु द्विरदमारुह्याचलसन्निभं । छत्रेण ध्रियमाणेन वीज्यमानश्च चामरैः ।
न गन्तव्यं न गन्तव्यमिति मद्रानवारयत् । दुर्य्योधनेन ते वीरा वार्य्यमाणाः पुनः पुनः ।
युधिष्ठिरं जिघांसन्तः पाण्डूनां प्राविशन्बलं । ते तु शूरा महाराज कृतचित्ताश्च योधने ।

धनुःशब्दं महत् कृत्वा सहायुध्यन्त पाण्डवैः । मुक्त्वा च निहतं शल्यं शकुनस्य प्रपीडितं ।
मद्रराजप्रिये युक्तैर्मद्रकाणां महारथैः । आजगाम ततः पार्थो गाण्डीवं विक्षिपन् धनुः । ९६०
पूरयन् रथघोषेण दिशः सर्व्वा महारथः । ततोऽर्जुनश्च भीमश्च माद्रीपुत्रौ च पाण्डवौ ।
सात्यकिश्च नरव्याघ्रो द्रौपदेयाश्च सर्व्वशः । धृष्टद्युम्नः शिखण्डी च पाञ्चालाः सह सोमकैः ।
युधिष्ठिरं परीप्सन्तः समन्तात् पर्य्यवारयन् । ते समन्तात् परिवृताः पाण्डवाः पुरुषर्षभाः ।
क्षोभयन्ति स्म सेनां तां मकराः सागरं यथा । वृक्षानिव महावाताः कम्पयन्ति स्म तावकान् ।
पुरोवातेन गङ्गेव क्षोभ्यमाणा महानदी । अक्षोभ्यत तदा राजन् पाण्डूनां ध्वजिनी पुनः । ९६५
प्रस्कन्द्य सेनां महतीं महात्मानो महारथाः । बहवश्चुक्रुशुस्तत्र क्व स राजा युधिष्ठिरः ।
भ्रातरो वाऽस्य ते शूरा दृश्यन्ते नेह केनच । धृष्टद्युम्नोऽथ शैनेयो द्रौपदेयाश्च सर्व्वशः ।
पाञ्चालाश्च महावीर्य्याः शिखण्डी च महारथः । एवं तान् वादिनः शूरान् द्रौपदेया महारथाः ।
अभ्यघ्नन् युयुधानश्च मद्रराजपदानुगान् । चक्रैर्विमथिताः केचित् केचिच्छिन्ना महाध्वजैः ।
प्रत्यदृश्यन्त समरे तावका निहताः परैः । आलोक्य पाण्डवान् युद्धे योधान् राजन् समन्ततः । ९७०
वार्य्यमाणा ययुर्व्वेगात् पुत्रेण तव भारत । दुर्य्योधनस्तु तान् वीरान् वारयामास सान्त्वयन् ।
न चास्य शासनं केचित् तत्र चक्रुर्महारथाः । ततो गान्धारराजस्य पुत्रः शकुनिरब्रवीत् ।
दुर्य्योधनं महाराज वचनं वचनक्षमः । किं नः सम्प्रेक्षमाणानां मद्राणां हन्यते बलं ।
न युक्तमेतत् समरे त्वयि तिष्ठति भारत । सहितैश्चापि योद्धव्यमित्येष समयः कृतः ।
अथ कस्मात् परानेव घ्नतो मर्षयसेऽनघ । ९७५
॥ दुर्य्योधन उवाच ॥ वार्य्यमाणा मया पूर्व्वं नैते चक्रुर्व्वचो मम । एते विनिहताः सर्व्वे प्रस्कन्नाः पाण्डुवाहिनीं ।
॥ शकुनिरुवाच ॥ न भर्त्तुः शासनं वीरा रणे कुर्व्वन्त्यमर्षिताः । अलं क्रोद्धुं न चैतेषां नायं काल उपेक्षितुं ।
यामः सर्व्वे च सम्भूय सवाजिरथकुञ्जराः । परित्रातुं महेष्वासान् मद्रराजपदानुगान् ।
अन्योन्यं परिरक्षाम यत्नेन महता नृप । एवं सर्व्वे तु सञ्चिन्त्य प्रययुर्यत्र सैनिकाः ।
एवमुक्तस्ततो राजा बलेन महता वृतः । प्रययौ सिंहनादेन कम्पयन्निव मेदिनीं । ९८०
हत विध्यत गृह्णीत प्रहरध्वं निकृन्तत । इत्यासीत्तुमुलः शब्दस्तव सैन्यस्य भारत ।
पाण्डवास्तु रणे दृष्ट्वा मद्रराजपदानुगान् । सहितानभ्यवर्त्तन्त गुल्ममास्थाय मध्यमं ।
ते मुहूर्त्ताद्रणे वीरा हस्ताहस्ति विशाम्पते । निहताः प्रत्यदृश्यन्त मद्रराजपदानुगाः ।
ततो नः संप्रयातानां हतमद्रास्तरस्विनः । हृष्टाः किलकिलाशब्दमकुर्व्वन् सहिताः परे ।
उत्थितानि कबन्धानि समदृश्यन्त सर्व्वशः । पपात महती चोल्का मध्येनादित्यमण्डलात् । ९८५
रथैर्भग्नैर्युगाक्षैश्च निहतैश्च महारथैः । अश्वैर्निपतितैश्चैव सञ्छन्नाभूद्वसुन्धरा ।
वातायमानैस्तुरगैर्युगासक्तैस्ततस्ततः । अदृश्यन्त महाराज योधास्तत्र रणाजिरे ।
भग्नचक्रान् रथान् केचिदवहंस्तुरगा रणे । रथार्द्धं केचिदादाय दिशो दश विबभ्रमुः ।

तत्र तत्र व्यदृश्यन्त योधैः क्षिप्ताः समाजिषु । रथिनः पतमानाश्च दृश्यन्ते स्म शरीरिणः ।
गगनात्प्रच्युताः सिद्धाः पुण्यानामिव संक्षये । निहतेषु च शूरेषु मद्रराजानुगेषु वै । ९९०
अस्मानापततश्चापि दृष्ट्वा पार्थो महारथाः । अभ्यवर्त्तन्त वेगेन जयगृध्राः प्रहारिणः ।
बाणशब्दरवान् कृत्वा विमिश्रान् शङ्खनिःस्वनैः । अस्मांस्तु पुनरासाद्य लब्धलक्षाः प्रहारिणः ।
शरासनानि धुन्वानाः सिंहनादान् प्रचुक्रुशुः । ततो हतमभिप्रेक्ष्य मद्रराजबलं महत् ।
मद्रराजञ्च समरे दृष्ट्वा शूरं निपातितम् । दुर्य्योधनबलं सर्व्वं पुनरासीत्पराङ्मुखम् ।
वध्यमानं महाराज पाण्डवैर्जितकाशिभिः । दिशो भेजेऽथ सम्भ्रान्तं त्रासितं दृढधन्विभिः । ९९५
इति श्रीमहाभारते शल्यपर्व्वणि सङ्कुलयुद्धे अष्टादशोऽध्यायः ॥ १८ ॥
॥ सञ्जय उवाच ॥ पातिते युधि दुर्द्धर्षे मद्रराजे महारथे । तावकास्तव पुत्राश्च प्रायशो विमुखाऽभवन् ।
वणिजो नावि भिन्नायां यथाऽगाधेऽप्लवेऽर्णवे । अपारे पारमिच्छन्तो हते शूरे महात्मना ।
मद्रराजे महाराज वित्रस्ताः शरविक्षताः । अनाथा नाथमिच्छन्तो मृगाः सिंहार्दिता इव ।
वृषा यथा भग्नशृङ्गाः शीर्णदन्ता यथा गजाः । मध्याह्ने प्रत्यपायाम निर्जिताऽजातशत्रुणा ।
न सन्धातुमनीकानि न च राजन् पराक्रमे । आसीद्बुद्धिर्हते शल्ये भूयो योधस्य कस्यचित् । १०००
भीष्मे द्रोणे च निहते सूतपुत्रे च भारत । यद्दुःखं तव योधानां भयञ्चासीद्विशाम्पते ।
तद्भयं स च नः शोको भूय एवाभ्यवर्त्तत । निराशाश्च जये तस्मिन् हते शल्ये महारथे ।
हतप्रवीरा विध्वस्ता निकृत्ताश्च शितैः शरैः । मद्रराजे हते राजन् योधास्ते प्राद्रवन् भयात् ।
अश्वानन्ये गजानन्ये रथानन्ये महारथाः । आरुह्य जवसम्पन्नाः पादाताः प्राद्रवंस्तथा ।
द्विसाहस्राश्च मातङ्गा गिरिरूपाः प्रहारिणः । सम्प्राद्रवन् हते शल्ये अङ्कुशाङ्गुष्ठनोदिताः । १००५
ते रणाद्भरतश्रेष्ठ तावकाः प्राद्रवन् दिशः । धावन्तश्चाप्यदृश्याम श्वसमानान् शराहतान् ।
तान् प्रभग्नान् द्रुतान्दृष्ट्वा हतोत्साहान् पराजितान् । अभ्यद्रवन्त पाञ्चालाः पाण्डवाश्च जयैषिणः ।
बाणशब्दरवाश्चैव सिंहनादाश्च पुष्कलाः । शङ्खशब्दश्च शूराणां दारुणः समपद्यत ।
दृष्ट्वा तु कौरवं सैन्यं भयत्रस्तं प्रविद्रुतं । अन्योन्यं समभाषन्त पाञ्चालाः पाण्डवैः सह ।
अद्य राजा सत्यधृतिर्हतामित्रो युधिष्ठिरः । अद्य दुर्य्योधनो हीनो दीप्तया नृपतिश्रिया । १०१०
अद्य श्रुत्वा हतं पुत्रं धृतराष्ट्रो जनेश्वरः । विह्वलः पतितो भूमौ किल्बिषं प्रतिपद्यतां ।
अद्य जानातु कौन्तेयं समर्थं सर्व्वधन्विनां । अद्यात्मानञ्च दुर्मेधा गर्हयिष्यति पापकृत् ।
अद्य क्षत्तुर्व्वचः सत्यं विजानातु महीपतिः । अद्यप्रभृति पार्थांश्च प्रेष्यभूत उपाचरन् ।
विजानातु नृपो दुःखं यत्प्राप्तं पाण्डुनन्दनैः । अद्य कृष्णस्य माहात्म्यं जानातु स महीपतिः ।
अद्यार्ज्जुनधनुर्घोषं घोरं जानातु संयुगे । अस्त्राणाञ्च बलं सर्व्वं बाह्वोश्च बलमाहवे । १०१५
अद्य ज्ञास्यन्ति भीमस्य बलं घोरं महात्मनः । हते दुर्य्योधने युद्धे शक्रेणेवासुरे बले ।
यत्कृतं भीमसेनेन दुःशासनवधे तदा । नान्यः कर्त्ताऽस्ति लोकेऽस्मिन् ऋते भीमान्महाबलात् ।

अथ ज्येष्ठस्य जानीतां पाण्डवस्य पराक्रमं। मद्रराजं हतं श्रुत्वा देवैरपि सुदुःसहं।
अथ शास्यति सङ्ग्रामे माद्रीपुत्रौ सुदुःसहौ। निहते सौबले वीरे गान्धारेषु च सर्व्वशः।
कथं जयो न तेषां स्याद्येषां योद्धा धनञ्जयः। सात्यकिर्भीमसेनश्च धृष्टद्युम्नश्च पार्षतः। १०२०
द्रौपद्यास्तनयाः पञ्च माद्रीपुत्रौ च पाण्डवौ। शिखण्डी च महेष्वासो राजा चैव युधिष्ठिरः।
येषाञ्च जगतो नाथो नाथः कृष्णो जनार्द्दनः। कथं तेषां जयो न स्याद्येषां धर्म्मो व्यपाश्रयः।
भीष्मं द्रोणञ्च कर्णञ्च मद्रराजानमेव च। अथान्यान् नृपतीन् वीरान् शतशोऽथ सहस्रशः।
कोऽन्यः शक्तो रणे जेतुमृते पार्थाद्युधिष्ठिरात्। यस्य नाथो हृषीकेशः सदा सत्ययशोनिधिः।
इत्येवं वदमानास्ते हर्षेण महता युताः। प्रभग्नांस्तावकान् योधान् प्रहृष्टाः पृष्ठतोऽन्वयुः। १०२५
धनञ्जयो रथानीकमभ्यवर्त्तत वीर्य्यवान्। माद्रीपुत्रौ च शकुनिं सात्यकिश्च महारथः।
तान् प्रेक्ष्य द्रवतः सर्व्वान् भीमसेनभयार्द्दितान्। दुर्य्योधनस्तदा सूतमब्रवीद्विस्मयन्निव।
मामतिक्रमते पार्थो धनुष्पाणिरवस्थितः। जघने सर्व्वसैन्यानां ममाश्वान् प्रतिपादय।
जघने युध्यमानं हि कौन्तेयो मां धनञ्जयः। नोत्सहेदभ्यतिक्रान्तुं वेलामिव महोदधिः।
पश्य सैन्यं महत् सूत पाण्डवैः समभिद्रुतं। सैन्यरेणुं समुद्भूतं पश्यस्वैनं समन्ततः। १०३०
सिंहनादांश्च बहुशः शृणु घोरान्महाभयान्। तस्माद्याहि शनैः सूत जघनं परिपालयन्।
मयि स्थिते च समरे निरुद्धेषु च पाण्डुषु। पुनरावर्त्तते तूर्णं मामकं बलमोजसा।
तत् श्रुत्वा तव पुत्रस्य शूरार्य्यसदृशं वचः। सारथिर्हेमसञ्छन्नान् शनैरश्वानचोदयत्।
गजाश्वरथिभिर्हीनास्त्यक्तात्मानः पदातयः। एकविंशतिसाहस्राः संयुगायावतस्थिरे।
नानादेशसमुद्भूता नानानगरवासिनः। अवस्थितास्तदा योधाः प्रार्थयन्तो महद्यशः। १०३५
तेषामापततां तत्र संहृष्टानां परस्परं। सम्मर्द्दः सुमहान् जज्ञे घोररूपो भयानकः।
भीमसेनस्तदा राजन् धृष्टद्युम्नश्च पार्षतः। बलेन चतुरङ्गेण नानादेश्यानवारयत्।
भीममेवाभ्यवर्त्तन्त रणेऽन्ये तु पदातयः। प्रक्ष्वेडास्फोटसंहृष्टा वीरलोकं यियासवः।
आसाद्य भीमसेनन्तु संरब्धा युद्धदुर्म्मदाः। धार्त्तराष्ट्रा विनेदुर्हि नान्यामकथयत् कथां।
परिवार्य्य रणे भीमं निजघ्नुस्ते समन्ततः। स बध्यमानः समरे पदातिगणसंवृतः। १०४०
न चचाल ततः स्थानान्मैनाक इव पर्व्वतः। ते तु क्रुद्धा महाराज पाण्डवानां महारथाः।
निग्रहीतुं प्रवृत्ता हि योधांश्चान्यानवारयन्। अक्रुध्यत रणे भीमस्तैस्तदा पर्य्यवस्थितैः।
सोऽवतीर्य्य रथात्तूर्णं पदातिः समवस्थितः। जातरूपपरिच्छन्नां प्रगृह्य महतीं गदां।
अवधीत्तावकान् योधान्दण्डपाणिरिवान्तकः। विप्रहीनरथाश्वांस्तानवधीत् पुरुषर्षभः।
एकविंशतिसाहस्रान् पदातीन् समपोथयत्। हत्वा तत् पुरुषानीकं भीमः सत्यपराक्रमः। १०४५
धृष्टद्युम्नं पुरस्कृत्य न चिरात् प्रत्यदृश्यत। पादाता निहता भूमौ शिश्यिरे रुधिरोक्षिताः।
सम्भग्ना इव वातेन कर्णिकाराः सुपुष्पिताः। नानाशस्त्रसमायुक्ता नानाकुण्डलधारिणः।

नानाजात्या हतास्तत्र नानादेशसमागताः। पताकाध्वजसम्पन्नं पदातीनां महद्बलं।
निवृत्तं विबभौ रौद्रं घोररूपं भयावहं। युधिष्ठिरपुरोगाश्च सहसैन्या महारथाः।
अभ्यधावन्महात्मानं पुत्त्रं दुर्य्योधनं तव। ते सर्व्वे तावकान् दृष्ट्वा महेष्वासान् पराङ्मुखान्। १०५०
नात्यवर्त्तन्त ते पुत्त्रं वेलेव मकरालयं। तदद्भुतमपश्याम तव पुत्त्रस्य पौरुषं।
यदेकं सहिताः पार्था न शेकुरतिवर्त्तितुं। नातिदूरापयातन्तु कृतबुद्धिं पलायने।
दुर्य्योधनः स्वकं सैन्यमब्रवीद्भृशविक्षतं। न तं देशं प्रपश्यामि पृथिव्यां पर्व्वतेषु वा।
यत्र यातान्न वो हन्युः पाण्डवाः किं सृतेन वः। अल्पञ्च बलमेतेषां कृष्णौ च भृशविक्षतौ।
यदि सर्व्वेऽत्र तिष्ठामो ध्रुवं नो विजयो भवेत्। विप्रयातांस्तु वो भिन्नान् पाण्डवाः कृतविप्रियाः। १०५५
अनुसृत्य हनिष्यन्ति श्रेयान्नः समरे वधः। शृण्वन्तु क्षत्रियाः सर्व्वे यावन्तोऽत्र समागताः।
यदा शूरञ्च भीरुञ्च मारयत्यन्तकः सदा। को नु मूढो न युध्येत पुरुषः क्षत्त्रियो ध्रुवं।
श्रेयो नो भीमसेनस्य क्रुद्धस्याभिमुखे स्थितं। सुखः साङ्ग्रामिको मृत्युः क्षत्त्रधर्म्मेण युध्यतां।
मर्त्त्येनावश्यमर्त्तव्यं गृहेष्वपि कदाचन। युध्यतः क्षत्त्रधर्म्मेण मृत्युरेष सनातनः।
जित्वेह सुखमाप्नोति हतः प्रेत्य महत् फलं। न युद्धधर्म्मात् श्रेयान् वै पन्थाः स्वर्गस्य कौरवाः। १०६०
अचिरेणार्जितान् लोकान् हतो युद्धे समश्नुते। श्रुत्वा तद्वचनं तस्य पूजयित्वा च पार्थिवाः।
पुनरेवाभ्यवर्त्तन्त पाण्डवानाततायिनः। तानापतत एवाशु व्यूढानीकाः प्रहारिणः।
प्रत्युद्ययुस्तदा पार्था जयगृध्नाः प्रमन्यवः। धनञ्जयो रथेनाजावभ्यवर्त्तत वीर्य्यवान्।
विश्रुतं त्रिषु लोकेषु व्याक्षिपन् गाण्डिवं धनुः। माद्रीपुत्त्रौ च शकुनिं सात्यकिश्च महाबलः।
जवेनाभ्यपतन् हृष्टा यतो वै तावकं बलं। १०६५

इति श्रीमहाभारते शल्यपर्व्वणि संकुलयुद्धे ऊनविंशोऽध्यायः॥ १९ ॥

॥ सञ्जय उवाच ॥ सन्निवृत्ते जनौघे तु शाल्वो म्लेच्छगणाधिपः। अभ्यवर्त्तत संक्रुद्धः पाण्डवानां महद्बलं।
आस्थाय सुमहानागं प्रभिन्नं पर्व्वतोपमं। दृप्तमैरावतप्रख्यममित्रगणमर्द्दनं।
योऽसौ महान् भद्रकुले प्रसूतः सम्पूजितो धार्त्तराष्ट्रेण नित्यं। सुकल्पितः शास्त्रविनिश्चयज्ञैः सदोपवाह्यः समरेषु राजन्।
तमास्थितो राजवरो बभूव यथोदयस्थः सविता क्षपान्ते। स तेन नागप्रवरेण राजन्नभ्युद्ययौ पाण्डुसुतान् समेतान्।
शितैः पृषत्कैर्व्विददार वेगैर्महेन्द्रवज्रप्रतिमैः सुघोरैः। ततः शरान् वै विसृजन् महारणे योधांश्च राजन्नयतो यमालये। १०७०
नास्यान्तरं ददृशुः स्वे परे वा यथा पुरा वज्रधरस्य दैत्याः। ऐरावणस्थस्य चमूर्व्विमर्द्दे दैत्याः पुरा वासवस्येव राजन्।
ते पाण्डवाः सोमकाः सृञ्जयाश्च तमेकनागं ददृशुः समन्तात्। सहस्रशो वै विचरन्तमेकं यथा महेन्द्रस्य गजं समीपे।
स द्राव्यमाणन्तु बलं परेषां परीतकल्पं विबभौ समन्तात्। न चावतस्थे समरे भृशं भयाद्विमर्द्दमानन्तु परस्परं तदा।
ततः प्रभग्ना सहसा महाचमूः सा पाण्डवी तेन नराधिपेन। दिशश्चतस्रः सहसा प्रधाविता गजेन्द्रवेगं तमपारयन्ती।
दृष्ट्वा च तां वेगवतीं प्रभग्नां सर्व्वे त्वदीया युधि योधमुख्याः। सम्पूजयंस्ते तु नराधिपं तं दध्मुश्च शङ्खान् शशिसन्निकाशान्। १०७५

श्रुत्वा निनादं त्वथ कौरवाणां हर्षाद्विमुक्तं सह शङ्खशब्दैः। सेनापतिः पाण्डवसृञ्जयानां पाञ्चालपुत्रो मन्युवेन भावितं।
ततस्तु तं वै द्विरदं महात्मा प्रत्युद्ययौ त्वरमाणो जयाय। जम्भो यथा शक्रसमागमे वै नागेन्द्रमैरावणमिन्द्रवाह्यं।
तमापतन्तं सहसा तु दृष्ट्वा पाञ्चालपुत्रं युधि राजसिंहः। तं वै द्विपं प्रेषयामास तूर्णं वधाय राजन् द्रुपदात्मजस्य।
स तं द्विपेन्द्रं सहसापतन्तमविध्यदग्निप्रतिमैः पृषत्कैः। कर्म्मारधौतैर्निशितैर्ज्वलद्भिर्नाराचमुख्यैस्त्रिभिरुग्रवेगैः।
ततोऽपरान् पञ्च शितान्महात्मा नाराचमुख्यान् विससर्ज्ज कुम्भे। स तैस्तु विद्धः परमद्विपो रणे तदा पराहृत्य भृशं प्रदुद्रुवे। १०८०
तं नागराजं सहसा प्रणुन्नं विद्राव्यमाणं विनिवर्त्य शाल्वः। तोत्राङ्कुशैः प्रेषयामास तूर्णं पाञ्चालराजस्य रथं प्रदिश्य।
दृष्ट्वापतन्तं सहसा तु नागं धृष्टद्युम्नः स्वरथाच्छीघ्रमेव। गदां प्रगृह्योग्रजवेन वीरो भूमिं प्रपन्नो भयविह्वलाङ्गः।
स तं रथं हेमविभूषिताङ्गं साश्वं ससूतं सहसा विमृद्य। उत्क्षिप्य हस्तेन तदा महाद्विपो विपोथयामास वसुन्धरातले।
पाञ्चालराजस्य सुतञ्च दृष्ट्वा तदार्द्दितं नागवरेण तेन। तमभ्यधावत्सहसा जवेन भीमः शिखण्डी च शिनेश्च नप्ता।
शरैश्च वेगं सहसा निगृह्य तस्याभितो ह्यापततो गजस्य। स संगृहीतो रथिभिर्गजो वै चचाल तैर्वार्य्यमाणश्च संख्ये। १०८५
ततः पृषत्कान् प्रववर्ष राजा सूर्य्यो यथा रश्मिजालान् समन्तात्। तैराशुगैर्वध्यमाना रथौघाः प्रदुद्रुवुः सहितास्तत्र तत्र।
तत्कर्म्म शाल्वस्य समीक्ष्य सर्व्वे पाञ्चालमत्स्या नृप सृञ्जयाश्च। हाहाकारैर्न्नादयन्तश्च सर्व्वे द्विपं समन्तात् रुरुधुर्नराग्र्याः।
पाञ्चालपुत्रस्त्वरितस्तु शूरो गदां प्रगृह्याचलशृङ्गकल्पां। असम्भ्रमं भारत शत्रुघाती जवेन वीरोऽनुससार नागं।
ततस्तु नागं धरणीधराभं मदं स्रवन्तं जलदप्रकाशं। गदां समाविध्य भृशं जघान पाञ्चालराजस्य सुतस्तरस्वी।
स भिन्नकुम्भः सहसा विनद्य मुखात्प्रभूतं क्षतजं विमुञ्चन्। पपात नागो धरणीधराभः क्षितिप्रकम्पाच्चलितो यथाऽद्रिः। १०९०
निपात्यमाने तु तदा गजेन्द्रे हाहाकृते तव पुत्रस्य सैन्ये। स शाल्वराजस्य शिनिप्रवीरो जहार भल्लेन शिरः शितेन।
हृतोत्तमाङ्गो युधि सात्वतेन पपात भूमौ सह नागराज्ञा। यथाऽद्रिशृङ्गं सुमहत् प्रणुन्नं वज्रेण देवाधिपचोदितेन।

इति श्रीमहाभारते शल्यपर्व्वणि शाल्ववधे विंशतितमोऽध्यायः ॥ २० ॥

॥ सञ्जय उवाच ॥ तस्मिंस्तु निहते शूरे शाल्वे समितिशोभने। तवाभज्यद्बलं वेगाद्वातेनेव महाद्रुमः।
तत् प्रभग्नं बलं दृष्ट्वा कृतवर्म्मा महारथः। दधार समरे शूरः शत्रुसैन्यं महाबलः।
सन्निवृत्तास्तु ते शूरा दृष्ट्वा सात्वतमाहवे। शैलोपमं स्थितं राजन् कीर्य्यमाणं शरैर्युधि। १०९५
ततः प्रववृते युद्धं कुरूणां पाण्डवैः सह। निवृत्तानां महाराज मृत्युं कृत्वा निवर्त्तनं।
तत्राश्चर्य्यमभूद्युद्धं सात्वतस्य परैः सह। यदेको वारयामास पाण्डुसेनां दुरासदां।
तेषामन्योन्यसुहृदां कृते कर्म्मणि दुष्करे। सिंहनादः प्रहृष्टानां दिवस्पृक् सुमहानभूत्।
तेन शब्देन वित्रस्ताः पाञ्चाला भरतर्षभ। शिनेर्नप्ता महाबाहुरन्वपद्यत सात्यकिः।
स समासाद्य राजानं क्षेमकीर्त्तिं महाबलं। सप्तभिर्निशितैर्बाणैरनयद्यमसादनं। ११००
तमायान्तं महाबाहुं प्रक्षिपन्तं शितान् शरान्। जवेनाभ्यपतद्धीमान् हार्द्दिक्यः शिनिपुङ्गवं।
सात्वतौ तौ महावीर्य्यौ धन्विनौ रथिनां वरौ। अन्योन्यमभिधावेतां शस्त्रप्रवरधारिणौ।
पाण्डवाः सह पाञ्चालैर्योधाश्चान्ये नृपोत्तमाः। प्रेक्षकाः समपद्यन्त तयोर्घोरे समागमे।

नाराचैर्वत्सदन्तैश्च शुद्धैश्चैव महारथौ । अभिजघ्नतुरन्योन्यं प्रहृष्टाविव कुञ्जरौ ।
चरन्तौ विविधान् मार्गान् हार्दिक्यशिनिपुङ्गवौ । मुहुरन्तर्हितावेतौ बाणवृष्ट्या परस्परं । ११०५
चापवेगबलोद्धूतान् मार्गणान् वृष्णिसिंहयोः । आकाशे समपश्याम पतङ्गानिव शीघ्रगान् ।
तमेकं सत्यकर्म्माणमासाद्य हृदिकात्मजः । अविध्यन्निशितैर्ब्बाणैश्चतुर्भिश्चतुरो हयान् ।
स दीर्घबाहुः संक्रुद्धस्तोत्त्रार्द्दित इव द्विपः । अष्टाभिः कृतवर्म्माणमविध्यत् परमेषुभिः ।
ततः पूर्णायतोत्सृष्टैः कृतवर्म्मा शिलाशितैः । सात्यकिं त्रिभिराहत्य धनुरेकेन चिच्छिदे ।
निकृत्तं तद्धनुःश्रेष्ठमपास्य शिनिपुङ्गवः । अन्यदादत्त वेगेन शैनेयः सशरं धनुः । १११०
तदादाय धनुःश्रेष्ठं वरिष्ठः सर्व्वधन्विनां । आरोप्य च महावीर्य्यो महाबुद्धिर्महाबलः ।
अमृष्यमाणो धनुषश्छेदनं कृतवर्म्मणः । ततो राजन् महेष्वासः कृतवर्म्माणमभ्ययात् ।
ततस्तु निशितैर्ब्बाणैर्दशभिः शिनिपुङ्गवः । जघान सूतमश्वांश्च ध्वजञ्च कृतवर्म्मणः ।
ततो राजन्महेष्वासः कृतवर्म्मा महारथः । हताश्वसूतं संप्रेक्ष्य रथं हेमपरिष्कृतं ।
रोषेण महताविष्टः शूलमुद्यम्य मारिष । चिक्षेप भुजवेगेन जिघांसुः शिनिपुङ्गवं । १११५
तच्छूलं सात्वतो ह्याजौ निर्भिद्य निशितैः शरैः । चूर्णितं पातयामास मोहयन्निव माधवं ।
ततोऽपरेण भल्लेन हृद्येनं समताडयत् । स युद्धे युयुधानेन हताश्वो हतसारथिः ।
कृतवर्म्मा कृतास्त्रेण धरणीमन्वपद्यत । तस्मिन् सात्यकिना वीरे द्वैरथे विरथीकृते ।
समपद्यत सर्व्वेषां सैन्यानां सुमहद्भयं । पुत्रस्य तव चात्यर्थं विषादः समजायत ।
हतसूते हताश्वे तु विरथे कृतवर्म्मणि । हताश्वञ्च समालक्ष्य हतसूतमरिन्दम । ११२०
अभ्यधावत् कृपो राजन् जिघांसुः शिनिपुङ्गवं । तमारोप्य रथोपस्थे मिषतां सर्व्वधन्विनां ।
अपोवाह महाबाहुं तूर्णमायोधनादपि । शैनेयाधिष्ठिते राजन् विरथे कृतवर्म्मणि ।
दुर्य्योधनबलं सर्व्वं पुनरासीत्पराङ्मुखं । तत्परे नावबुध्यन्त सैन्येन रजसा वृताः ।
तावकाः प्रद्रुता राजन् दुर्य्योधनमृते नृपं । दुर्य्योधनस्तु सम्प्रेक्ष्य भग्नं स्वबलमन्तिकात् ।
जवेनाभ्यपतत्तूर्णं सर्व्वांश्चैको न्यवारयत् । पाण्डूंश्च सर्व्वान् संक्रुद्धो धृष्टद्युम्नं च पार्षतं । ११२५
शिखण्डिनं द्रौपदेयान् पाञ्चालानाञ्च ये गणाः । केकयान् सोमकांश्चैव सृञ्जयानाञ्च मारिष ।
असम्भ्रमं दुराधर्षः शितैर्ब्बाणैरवारयत् । अतिष्ठदाहवे यत्तः पुत्रस्तव महाबलः ।
यथा यज्ञे महानग्निर्मन्त्रपूतः प्रतापवान् । तथा दुर्य्योधनो राजा सङ्ग्रामे सर्व्वतोऽभवत् ।
तं परे नाभ्यवर्त्तन्त मर्त्या मृत्युमिवाहवे । अथान्यं रथमास्थाय हार्द्दिक्यः समपद्यत ।
इति श्रीमहाभारते शल्यपर्व्वणि कौरवसैन्यापयाने एकविंशोऽध्यायः ॥ २१ ॥
॥ सञ्जय उवाच ॥ पुत्रस्तु ते महाराज रथस्थो रथिनाम्वरः । दुरुत्सहो बभौ युद्धे यथा रुद्रः प्रतापवान् । ११३०
तस्य बाणसहस्रैस्तु प्रच्छन्ना ह्यभवन्मही । परांश्च सिषिचे बाणैर्धाराभिरिव पर्व्वतान् ।
न च सोऽस्ति पुमान् कश्चित्पाण्डवानां बलार्णवे । हयो गजो रथो वाऽपि योऽस्य बाणैरविक्षतः ।

यं यं हि समरे योधं प्रपश्याम विशाम्पते। स स वाणैश्चितोऽभूद्वै पुत्रेण तव भारत।
यथा सैन्येन रजसा समुद्धूतेन वाहिनी। प्रत्यदृश्यत सञ्छन्ना तथा वाणैर्महात्मनः।
वाणभूतामपश्याम पृथिवीं पृथिवीपते। दुर्य्योधनेन प्रकृतां क्षिप्रहस्तेन धन्विना। ११३५
तेषु योधसहस्रेषु तावकेषु परेषु च। एको दुर्य्योधनो ह्यासीत् स पुमानिति मे मतिः।
तत्राद्भुतमपश्याम तव पुत्रस्य विक्रमं। यदेनं सहिताः पार्था नाभ्यवर्त्तन्त भारत।
युधिष्ठिरं शतेनाजौ विव्याध भरतर्षभ। भीमसेनञ्च सप्तत्या सहदेवञ्च सप्तभिः।
नकुलञ्च चतुःषष्ट्या धृष्टद्युम्नञ्च सप्तभिः। सप्तभिर्द्रौपदेयांश्च त्रिभिर्व्विव्याध सात्यकिं।
धनुश्चिच्छेद भल्लेन सहदेवस्य मारिष। तदपास्य धनुश्छिन्नं माद्रीपुत्रः प्रतापवान्। ११४०
अभ्यद्रवत राजानं प्रगृह्यान्यन्महद्धनुः। ततो दुर्य्योधनं संख्ये विव्याध दशभिः शरैः।
नकुलश्च ततो वीरो राजानं नवभिः शरैः। घोररूपैर्महावाणैर्व्विव्याध च ननाद च।
सात्यकिश्चैव राजानं शरेणानतपर्व्वणा। द्रौपदेयास्त्रिसप्तत्या धर्मराजश्च पञ्चभिः।
अशीत्या भीमसेनश्च शरै राजानमार्द्दयत्। समन्तात् कीर्य्यमाणस्तु वाणसंघैर्महात्मभिः।
न चचाल महाराज सर्व्वसैन्यस्य पश्यतः। लाघवं सौष्ठवञ्चापि वीर्य्यञ्चापि महात्मनः। ११४५
अतिसर्व्वाणि भूतानि ददृशुः सर्व्वमानवाः। धार्त्तराष्ट्रा हि राजेन्द्र योधास्तु स्वल्पमन्तरं।
अपश्यमाना राजानं पर्य्यवर्त्तन्त दंशिताः। तेषामापततां घोरस्तुमुलः समपद्यत।
क्षुब्धस्य हि समुद्रस्य प्रावृट्काले यथा स्वनः। समासाद्य रणे ते तु राजानमपराजितं।
प्रत्युद्ययुर्महेष्वासाः पाण्डवानाततायिनः। भीमसेनं रणे क्रुद्धं द्रोणपुत्रो न्यवारयत्।
नानावाणैर्महाराज प्रमुक्तैः सर्व्वतो दिशं। प्राज्ञायन्त रणे वीरा न दिशः प्रदिशस्तथा। ११५०
तावुभौ क्रूरकर्म्माणावुभौ भारत दुःसहौ। घोररूपमयुध्येतां कृतप्रतिकृतैषिणौ।
त्रासयन्तौ दिशः सर्व्वा ज्याक्षेपकठिनत्वचौ। शकुनिस्तु रणे वीरो युधिष्ठिरमपीडयत्।
तस्याश्वांश्चतुरो हत्वा सुबलस्य सुतो बली। नादञ्चकार बलवत् सर्व्वसैन्यानि कम्पयन्।
एतस्मिन्नन्तरे वीरं राजानमपराजितं। अपोवाह रथेनाजौ सहदेवः प्रतापवान्।
अथान्यं रथमास्थाय धर्म्मपुत्रो युधिष्ठिरः। शकुनिं नवभिर्व्विद्ध्वा पुनर्व्विव्याध पञ्चभिः। ११५५
ननाद च महानादं प्रवरः सर्व्वधन्विनां। तद्युद्धमभवच्चित्रं घोररूपञ्च मारिष।
प्रेक्षतां हर्षजननं सिद्धचारणसेवितं। उलूकस्तु महेष्वासं नकुलं युद्धदुर्म्मदं।
अभ्यद्रवदमेयात्मा शरवर्षैः समन्ततः। तथैव नकुलः शूरः सौवलस्य सुतं रणे।
शरवर्षेण महता समन्तात् पर्य्यवारयत्। तौ तत्र समरे वीरौ कुलपुत्रौ महारथौ।
योधयन्तावपश्येतां कृतप्रतिकृतैषिणौ। तथैव कृतवर्म्माणं शैनेयः शत्रुतापनः। ११६०
योधयन् शुशुभे राजन् वलिं शक्र इवाहवे। दुर्य्योधनो धनुश्छित्वा धृष्टद्युम्नस्य संयुगे।
अथैनं छिन्नधन्वानं विव्याध निशितैः शरैः। धृष्टद्युम्नोऽपि समरे प्रगृह्य परमायुधं।

राजानं योधयामास पश्यतां सर्व्वधन्विनां । तयोर्युद्धं महच्चासीत् संग्रामे भरतर्षभ ।
प्रभिन्नयोर्यथासक्तं मत्तयोर्व्वनहस्तिनोः । गौतमस्तु रणे क्रुद्धो द्रौपदेयान्महाबलान् ।
विव्याध बहुभिः शूरः शरैः सन्नतपर्व्वभिः । तस्य तैरभवद्युद्धमिन्द्रियैरिव देहिनः । ११६५
घोररूपमसंहार्य्यं निर्म्मर्य्यादमवर्त्तत । ते च सम्पीडयामासुरिन्द्रियाणीव बालिशं ।
स च तान् प्रतिसंरब्धः प्रत्ययोधयदाहवे । एवं चित्रमभूद्युद्धं तस्य तैः सह भारत ।
उत्थायोत्थाय हि यथा देहिनामिन्द्रियैर्व्विभो । नराश्चैव नरैः सार्द्धं दन्तिनो दन्तिभिस्तथा ।
हया हयैः समासक्ता रथिनो रथिभिः सह । संकुलञ्चाभवद्भूयो घोररूपं विशाम्पते ।
इदं चित्रमिदं घोरमिदं रौद्रमिति प्रभो । युद्धान्यासन् महाराज घोराणि च बहूनि च । ११७०
ते समासाद्य समरे परस्परमरिन्दमाः । विव्यधुश्चैव जघ्नुश्च समासाद्य महाहवे ।
तेषां शस्त्रसमुद्भूतं रजस्तीव्रमवर्त्तत । वातेन चोद्धतं राजन् धावद्भिश्चाश्वसादिभिः ।
रथनेमिसमुद्भूतं निश्वासैश्चापि दन्तिनां । रजः सन्ध्याभ्रकपिलं दिवाकरपथं ययौ ।
रजसा तेन संपृक्ते भास्करो निष्प्रभः कृतः । सञ्छादिताऽभवद्भूमिस्ते च शूरा महारथाः ।
मुहूर्त्तादिव संवृत्तं नीरजस्कं समन्ततः । वीरशोणितसिक्तायां भूमौ भरतसत्तम । ११७५
उपाशाम्यत्ततस्तीव्रं तद्रजो घोरदर्शनं । ततोऽपश्यमहं भूयो द्वन्द्वयुद्धानि भारत ।
यथाप्राणं यथाश्रेष्ठं मध्याह्ने वै सुदारुणं । वर्म्मणां तत्र राजेन्द्र व्यदृश्यन्तोज्ज्वलाः प्रभाः ।
शब्दश्च तुमुलः संख्ये शराणां पततामभूत् । महावेणुवनस्येव दह्यमानस्य पर्व्वते ।
इति श्रीमहाभारते शल्यपर्व्वणि संकुलयुद्धे द्वाविंशोऽध्यायः ॥ २२ ॥

॥ सञ्जय उवाच ॥ वर्त्तमाने तथा युद्धे घोररूपे भयानके । अभज्यत बलं तत्र तव पुत्रस्य पाण्डवैः ।
तांस्तु यत्नेन महता सन्निवार्य्य महारथान् । पुत्रस्ते योधयामास पाण्डवानामनीकिनीं । ११८०
निवृत्ताः सहसा योधास्तव पुत्रजयैषिणः । सन्निवृत्तेषु तेष्वेव युद्धमासीत् सुदारुणं ।
तावकानां परेषाञ्च देवासुररणोपमं । परेषां तव सैन्ये वा नासीत् कश्चित्पराङ्मुखः ।
अनुमानेन युध्यन्ते संज्ञाभिश्च परस्परं । तेषां क्षयो महानासीद्युध्यतामितरेतरं ।
ततो युधिष्ठिरो राजा क्रोधेन महता युतः । जिगीषमाणः संग्रामे धार्त्तराष्ट्रान् सराजकान् ।
त्रिभिः शारद्वतं विद्ध्वा रुक्मपुङ्खैः शिलाशितैः । चतुर्भिर्निजघानाश्वान्नाराचैः कृतवर्म्मणः । ११८५
अश्वत्थामा तु हार्द्दिक्यमपोवाह यशस्विनं । अथ शारद्वतोऽष्टाभिः प्रत्यविध्यद्युधिष्ठिरं ।
ततो दुर्य्योधनो राजा रथान् सप्तशतान् रणे । प्रेषयद्यत्र राजाऽसौ धर्म्मपुत्रो युधिष्ठिरः ।
ते रथा रथिभिर्युक्ता मनोमारुतरंहसः । अभ्यद्रवन्त सङ्ग्रामे कौन्तेयस्य रथं प्रति ।
ते समन्तान्महाराज परिवार्य्य युधिष्ठिरं । अदृश्यं सायकैश्चक्रुर्मेघा इव दिवाकरं ।
ते दृष्ट्वा धर्म्मराजानं कौरवेयैस्तथा कृतं । नामृष्यन्त सुसंरब्धाः शिखण्डिप्रमुखा रथाः । ११९०
रथैरश्ववरैर्युक्तैः किङ्किणीजालसंवृतैः । आजग्मुरभिरक्षन्तः कुन्तीपुत्रं युधिष्ठिरं ।

ततः प्रववृते रौद्रः सङ्ग्रामः शोणितोदकः। पाण्डवानां कुरूणाञ्च यमराष्ट्रविवर्द्धनः।
रथान् सप्तशतान् हत्वा कुरूणामाततायिनां। पाण्डवाः सह पाञ्चालैः पुनरेवाभ्यवर्त्तयन्
तत्र युद्धं महच्चासीत्तव पुत्त्रस्य पाण्डवैः। न च नस्तादृशं दृष्टं नैव चापि परिश्रुतं।
वर्त्तमाने महायुद्धे निर्म्मर्य्यादे समन्ततः। वध्यमानेषु योधेषु तावकेष्वितरेषु च। ११९५
विनदत्सु च योधेषु शङ्खवर्य्यैश्च पूरितैः। उत्कृष्टैः सिंहनादैश्च गर्ज्जितेन च धन्विनां।
अतिप्रवृद्धे युद्धे च छिद्यमानेषु मर्म्मसु। धावमानेषु योधेषु जयगृद्धिषु मारिष।
संहारे सर्व्वतो याते पृथिव्यां शोकसम्भवे। बह्वीनामुत्तमस्त्रीणां सीमन्तोद्धरणे तदा।
निर्म्मर्य्यादे ततो युद्धे वर्त्तमाने सुदारुणे। प्रादुरासन् विनाशाय तदोत्पाताः सुदारुणाः।
चचाल शब्दं कुर्व्वाणा सपर्व्वतवना मही। सदण्डाः सोल्मुका राजन् शीर्य्यमाणाः समन्ततः। १२००
उल्काः पेतुर्द्दिवो भूमावाहत्य रविमण्डलं। विष्वग्वाताः प्रादुरासन् नीचैः शर्करवर्षिणः।
अश्रूणि मुमुचुर्नागा वेपथुञ्चास्पृशन् भृशं। एतान् घोराननादृत्य समुत्पातान् सुदारुणान्।
पुनर्युद्धाय संमन्त्र्य क्षत्त्रियास्तस्थुरव्यथाः। रमणीये कुरुक्षेत्रे पुण्ये स्वर्गं यियासवः।
ततो गान्धारराजस्य पुत्त्रः शकुनिरब्रवीत्। युध्यध्वमग्रतो योधाः पृष्ठतो हन्मि पाण्डवान्।
ततो नः सम्प्रयातानां मद्रयोधास्तरस्विनः। हृष्टाः किलकिलाशब्दमकुर्व्वन्तापरे तथा। १२०५
अस्मांस्तु पुनरासाद्य लब्धलक्षा दुरासदाः। शरासनानि धुन्वन्तः शरवर्षैरवाकिरन्।
ततो हतं परैराजन् मद्रराजबलं तदा। दुर्य्योधनबलं दृष्ट्वा पुनरासीत् पराङ्मुखं।
गान्धारराजस्तु पुनर्व्वाक्यमाह ततो बली। निवर्त्तध्वमधर्म्मज्ञा युध्यध्वं किं सृतेन वः।
अनीकं दशसाहस्रमश्वानां भरतर्षभ। आसीद्गान्धारराजस्य विशालप्रासयोधिनां।
बलेन तेन विक्रम्य वर्त्तमाने जनक्षये। पृष्ठतः पाण्डवानीकमभ्यघ्नन्निशितैः शरैः। १२१०
तदभ्रमिव वातेन क्षिप्यमाणं समन्ततः। अभज्यत महाराज पाण्डूनां सुमहद्बलं।
ततो युधिष्ठिरः प्रेक्ष्य भग्नं स्वबलमन्तिकात्। अभ्यचोदयदव्यग्रः सहदेवं महाबलं।
असौ सुबलपुत्त्रो नो जघनं पीड्य दंशितः। सैन्यानि सूदयत्येष पश्य पाण्डव दुर्म्मतिं।
गच्छ त्वं द्रौपदेयैश्च शकुनिं सौबलं जहि। रथानीकमहं धक्ष्ये पाञ्चालसहितोऽनघ।
गच्छन्तु कुञ्जराः सर्व्वे वाजिनश्च सह त्वया। पादाताश्च त्रिसाहस्राः शकुनिं तैर्वृतो जहि। १२१५
ततो गजाः सप्तशताश्चापपाणिभिरावृताः। पञ्च चाश्वसहस्राणि सहदेवश्च वीर्य्यवान्।
पादाताश्च त्रिसाहस्रा द्रौपदेयाश्च सर्व्वशः। रणे ह्यभ्यद्रवंस्ते तु शकुनिं युद्धदुर्म्मदं।
ततस्तु सौबलं राजन्नभ्यतिक्रम्य पाण्डवः। जघान पृष्ठतः सेनां जयगृद्धुः प्रतापवान्।
अश्वारोहास्तु संरब्धाः पाण्डवानां तरस्विनां। प्राविशन् सौबलानीकमभ्यतिक्रम्य तान् रथान्।
ते तत्र सादिनः शूराः सौबलस्य महद्बलं। रणमध्ये व्यतिष्ठन्त शरवर्षैरवाकिरन्। १२२०
तदुद्यतगदाप्रासमहापुरुषसेवितं। प्रावर्त्तत महद्युद्धं राजन् दुर्म्मन्त्रिते तव।

उपारमन्त शब्दाः प्रेक्षका रथिनोऽभवन् । न हि स्वेषां परेषां वा विशेषः प्रत्यदृश्यत ।
शूरबाहुविसृष्टानां शक्तीनां भरतर्षभ । ज्योतिषामिव सम्पातमपश्यन् कुरुपाण्डवाः ।
ऋष्टिभिर्विमलाभिश्च तत्र तत्र विशाम्पते । सम्पतन्तीभिराकाशमावृतं बह्वशोभत ।
प्रासानां पततां राजन् रूपमासीत् समन्ततः । शलभानामिवाकाशे तदा भरतसत्तम ।　　१२२५
रुधिरोक्षितसर्व्वाङ्गा विप्रविद्धैश्च पत्तिभिः । हयाः परिपतन्ति स्म शतशोऽथ सहस्रशः ।
अन्योन्यं परिपिष्टाश्च समासाद्य परस्परं । अविक्षताः स्म दृश्यन्ते वमन्तो रुधिरं मुखैः ।
ततोऽभवत्तमो घोरं सैन्येन रजसा वृते । तानपक्रमतोऽद्राक्षं तस्माद्देशादरिन्दम ।
अश्वान् राजन् मनुष्यांश्च रजसा संवृते सति । भूमौ निपतिताश्चान्ये वमन्तो रुधिरं बहु ।
केशाकेशि समालग्ना न शेकुश्चेष्टितुं नराः । अन्योन्यमश्वपृष्ठेभ्यो विकर्षन्तो महाबलाः ।　　१२३०
मल्ला इव समासाद्य निजघ्नुरितरेतरं । अश्वैश्च व्यपकृष्यन्त बहवोऽत्र गतासवः ।
भूमौ निपतिताश्चान्ये बहवो विजयैषिणः । तत्र तत्र व्यदृश्यन्त पुरुषाः शूरमानिनः ।
रक्तोक्षितैश्छिन्नभुजैरपकृष्टशिरोरुहैः । व्यदृश्यत मही कीर्णा शतशोऽथ सहस्रशः ।
दूरं न शक्यं तत्रासीद्गन्तुमश्वेन केनचित् । साश्वारोहैर्हतैरश्वैरावृते वसुधातले ।
रुधिरोक्षितसन्नाहैरात्तशस्त्रैरुदायुधैः । नानाप्रहरणैर्घोरैः परस्परवधैषिभिः ।　　१२३५
सुसन्निकृष्टैः सङ्ग्रामे हतभूयिष्ठसैनिकैः । स मुहूर्त्तं ततो युद्ध्वा सौबलोऽथ विशाम्पते ।
षट्साहस्रैर्हयैः शिष्टैरपायाच्छकुनिस्ततः ।
इति श्रीमहाभारते शल्यपर्व्वणि संकुलयुद्धे त्रयोविंशोऽध्यायः ॥ २३ ॥
॥ सञ्जय उवाच ॥ तथैव पाण्डवानीकं रुधिरेण समुक्षितं । षट्साहस्रैर्हयैः शिष्टैरपायाच्छ्रान्तवाहनं ।
अश्वारोहाश्च पाण्डूनामब्रुवन् रुधिरोक्षिताः । सुसन्निकृष्टे सङ्ग्रामे भूयिष्ठे त्यक्तजीविताः ।
नेह शक्यं रथैर्योद्धुं कुत एव महागजैः । रथानेव रथा यान्तु कुञ्जराः कुञ्जरानपि ।　　१२४०
प्रतियातो हि शकुनिः स्वमनीकमवस्थितः । न पुनः सौबलो राजन् युद्धमभ्यागमिष्यति ।
ततस्तु द्रौपदेयाश्च ते च मत्ता महाद्विपाः । प्रययुर्यत्र पाञ्चाल्यो धृष्टद्युम्नो महारथः ।
सहदेवोऽपि कौरव्य रजोमेघे समुत्थिते । एकाकी प्रययौ तत्र यत्र राजा युधिष्ठिरः ।
ततस्तेषु प्रयातेषु शकुनिः सौबलः पुनः । पार्श्वतोऽभ्यहनत् क्रुद्धो धृष्टद्युम्नस्य वाहिनीं ।
तत् पुनस्तुमुलं युद्धं प्राणांस्त्यक्त्वाऽभ्यवर्त्तत । तावकानां परेषाञ्च परस्परवधैषिणां ।　　१२४५
ते ह्यन्योन्यमवैक्षन्त तस्मिन् वीरसमागमे । योधाः पर्य्यपतन् राजन् शतशोऽथ सहस्रशः ।
असिभिश्छिद्यमानानां शिरसां लोकसङ्क्षये । प्रादुरासीन्महाशब्दस्तालानां पततामिव ।
विमुक्तानां शरीराणां छिन्नानां पततां भुवि । सायुधानाञ्च बाहूनामूरूणाञ्च विशाम्पते ।
आसीत्कटकटाशब्दस्तुमुलो लोमहर्षणः । निघ्नन्तो निशितैः शस्त्रैर्भ्रातॄन् पुत्त्रान् पितॄनपि ।
योधाः परिपतन्ति स्म यथामिषकृते खगाः । अन्योन्यं प्रतिसंरब्धाः समासाद्य परस्परं ।　　१२५०

अहं पूर्व्वमहं पूर्व्वमिति न्यघ्नन् सहस्रशः। सङ्घर्षणासनाकृष्टैरश्वारैर्हतासुभिः।
हयाः परिपतन्ति स्म शतशोऽथ सहस्रशः। स्फुरतां प्रतिपिष्टानामश्वानां शीघ्रगामिनां।
स्वनतांश्च मनुष्याणां सन्नद्धानां विशाम्पते। शक्त्यृष्टिपासशब्दस्तु तुमुलः समपद्यत।
भिन्दतां परमर्म्माणि राजन्दुर्म्मन्त्रिते तव। श्रमाभिभूताः संरब्धाः श्रान्तवाहाः पिपासवः।
विक्षताश्च शितैः शस्त्रैरभ्यवर्त्तन्त तावकाः। मत्ता रुधिरगन्धेन बहवोऽत्र विचेतसः। १२५५
जघ्नुः परान् स्वकांश्चैव प्राप्तान् प्राप्ताननन्तरान्। बहवश्च गतप्राणाः क्षत्रिया जयगृद्धिनः।
भूमावभ्यपतन्राजन् शरवृष्टिभिरावृताः। वृकगृध्रशृगालानां तुमुले मोदनेऽहनि।
आसीद्बलक्षयो घोरस्तव पुत्रस्य पश्यतः। नराश्वकायैः सञ्छन्ना भूमिरासीद्विशाम्पते।
रुधिरोदकचित्रा च भीरूणां भयवर्द्धिनी। असिभिः पट्टिशैः शूलैस्तक्षमाणाः पुनः पुनः।
तावकाः पाण्डवेयाश्च न न्यवर्त्तन्त भारत। प्रहरन्तो यथाशक्ति यावत् प्राणस्य धारणं। १२६०
योधाः परिपतन्ति स्म वमन्तो रुधिरं व्रणैः। शिरो गृहीत्वा केशेषु कबन्धश्च व्यदृश्यत।
उद्यम्य च शितं खड्गं रुधिरेण समुक्षितं। अथोत्थितेषु बहुषु कबन्धेषु नराधिप।
तथा रुधिरगन्धेन योधाः कश्मलमाविशन्। मन्दीभूते ततः शब्दे पाण्डवानां महद्बलं।
अल्पावशिष्टैस्तुरगैरभ्यवर्त्तत सौबलः। ततोऽभ्यधावंस्त्वरिताः पाण्डवा जयगृद्धिनः।
पदातयश्च नागाश्च सादिनश्चोद्यतायुधाः। कोष्ठकीकृत्य चाप्येनं परिक्षिप्य च सर्व्वशः। १२६५
शस्त्रैर्नानाविधैर्जघ्नुर्युद्धपारं तितीर्षवः। त्वदीयांस्तांस्तु सम्प्रेक्ष्य सर्व्वतः समभिद्रुतान्।
रथाश्वपत्तिद्विरदाः पाण्डवानभिदुद्रुवुः। केचित् पदातिनः पद्भिर्मुष्टिभिश्च परस्परं।
निजघ्नुः समरे शूराः क्षीणशस्त्रास्ततोऽपतन्। रथेभ्यो रथिनः पेतुर्द्विपेभ्यो हस्तिसादिनः।
विमानेभ्यो दिवो भ्रष्टाः सिद्धाः पुण्यक्षयादिव। एवमन्योन्यमासाद्य योधा जघ्नुर्महाहवे।
पितॄन् भ्रातॄन् वयस्यांश्च पुत्रानपि तथा परे। एवमासीदमर्य्यादं युद्धं भरतसत्तम। १२७०
प्रासासिवाणकलिले वर्त्तमाने सुदारुणे।

इति श्रीमहाभारते शल्यपर्व्वणि सङ्कुलयुद्धे चतुर्व्विंशतोऽध्यायः ॥ २४ ॥

॥ सञ्जय उवाच ॥ तस्मिन् शब्दे मृदौ जाते पाण्डवैर्निहते बले। अश्वैः सप्तशतैः शिष्टैरुपावर्त्तत सौबलः।
स यात्वा वाहिनीं तूर्णमब्रवीत्त्वरन् युधि। युध्यध्वमिति संहृष्टाः पुनः पुनररिन्दमाः।
अपृच्छत् क्षत्रियांस्तत्र क्व नु राजा महारथः। शकुनेस्तु वचः श्रुत्वा त ऊचुर्भरतर्षभ।
असौ तिष्ठति कौरव्यो रणमध्ये महारथः। यत्रैतत् सुमहच्छत्रं पूर्णचन्द्रसमप्रभं। १२७५
यत्रैते सतनुत्राणा रथास्तिष्ठन्ति दंशिताः। यत्रैष तुमुलः शब्दः पर्ज्जन्यनिनदोपमः।
तत्र गच्छ द्रुतं राजन् ततो द्रक्ष्यसि कौरवं। एवमुक्तस्ततो योधैः शकुनिः सौबलस्तथा।
प्रययौ तत्र यत्रासौ पुत्रस्तव नराधिप। संवृतः सर्व्वतो वीरैः समरे चित्रयोधिभिः।
ततो दुर्य्योधनं दृष्ट्वा रथानीकैर्व्यवस्थितं। सरथांस्तावकान सर्व्वान् हर्षयन् शकुनिस्ततः।

दुर्य्योधनमिदं वाक्यं हृष्टरूपो विशाम्पते। कृतकार्य्यमिवात्मानं मन्यमानोऽब्रवीन्नृपं। १२८०
अद्य राजन्यानीकमशाः सर्व्वे जिता मया। नात्यक्त्वा जीवितं सख्ये शक्यो जेतुं युधिष्ठिरः।
हते तस्मिन्नयानीके पाण्डवेनाभिपालिते। गत्वानेतान् हनिष्याम पदातींश्चेतरांस्तथा।
श्रुत्वा तु वचनं तस्य तावका जयगृद्धिनः। रथेनाभ्यपतन् हृष्टाः पाञ्चालानामनीकिनीं।
सर्व्वे विधूततूणीराः प्रगृहीतशरासनाः। शरासनानि धुन्वानाः सिंहनादान् प्रचक्रिरे।
ततो ज्यातलनिर्घोषः पुनरासीद्विशाम्पते। प्रादुरासीच्छराणाञ्च सुमुक्तानां सुदारुणः। १२८५
तान् समीपगतान् दृष्ट्वा जवेनोद्यतकार्म्मुकान्। उवाच देवकीपुत्रं कुन्तीपुत्रो धनञ्जयः।
चोदयाश्वानसम्भ्रान्तः प्रविशैतं बलार्णवं। अन्तमद्य गमिष्यामि शत्रूणां निशितैः शरैः।
अष्टादश दिनान्यद्य युद्धस्यास्य जनार्द्दन। वर्त्तमानस्य महतः समासाद्य परस्परं।
अनन्तकल्पा ध्वजिनी भूत्वा ह्येषां महात्मनां। क्षयमद्य गता युद्धे पश्य दैवं यथाविधं।
समुद्रकल्पञ्च बलं धार्त्तराष्ट्रस्य माधव। अस्मानासाद्य संजातं गोष्पदोपममच्युत। १२९०
हते भीष्मे तु सन्दध्याच्छिवं स्यादिह माधव। न च तत् कृतवान् मूढो धार्त्तराष्ट्रः सुबालिशः।
उक्तं भीष्मेण यद्वाक्यं हितं पथ्यञ्च माधव। तथाऽपि नाऽसौ कृतवान् वीतबुद्धिः सुयोधनः।
तस्मिंस्तु तुमुले भीष्मे प्रच्युते धरणीतले। न जाने कारणं किन्तु येन युद्धमवर्त्तत।
मूढांस्तु सर्व्वथा मन्ये धार्त्तराष्ट्रान् सुबालिशान्। पतिते शान्तनोः पुत्रे येऽकार्षुः सङ्गरं पुनः।
अनन्तरञ्च निहते द्रोणे ब्रह्मविदाम्वरे। राधेये च विकर्णे च नैवाशाम्यत वैशसं। १२९५
अल्पावशिष्टे सैन्येऽस्मिन् सूतपुत्रे च पातिते। तत्पुत्रे च नरव्याघ्रे नैवाशाम्यत वैशसं।
श्रुतायुषि हते वीरे जलसन्धे च पौरवे। श्रुतायुधे च नृपतौ नैवाशाम्यत वैशसं।
भूरिश्रवसि शल्ये च शाल्वे चैव जनार्द्दन। आवन्त्येषु च वीरेषु नैवाशाम्यत वैशसं।
जयद्रथे च निहते राक्षसे चाप्यलायुधे। वाह्लिके सोमदत्ते च नैवाशाम्यत वैशसं।
भगदत्ते हते शूरे काम्बोजे च सुदक्षिणे। दुःशासने च निहते नैवाशाम्यत वैशसं। १३००
दृष्ट्वा च निहतान् शूरान् पृथङ्माण्डलिकान्नृपान्। बलिनश्च रणे कृष्ण नैवाशाम्यत वैशसं।
अक्षौहिणीपतीन् दृष्ट्वा भीमसेनेन पातितान्। मोहाद्वा यदि वा लोभान्नैवाशाम्यत वैशसं।
को नु राजा कुले जातः कौरवेयो विशेषतः। निरर्थकं महद्वैरं कुर्य्यादन्यः सुयोधनात्।
गुणतोऽभ्यधिकं ज्ञात्वा बलतः शौर्य्यतोऽपि वा। अमूढः को नु युध्येत जानन् प्राज्ञो हिताहितं।
यन्न तस्य मनो ह्यासीत्त्वयोक्तस्य हितं वचः। प्रशमे पाण्डवैः सार्द्धं सोऽन्यस्य शृणुयात् कथं। १३०५
येन शान्तनवो वीरो द्रोणो विदुर एव च। प्रत्याख्याताः शमस्यार्थे किन्नु तस्याद्य भेषजं।
मौर्ख्याद्येन पिता वृद्धः प्रत्याख्यातो जनार्द्दन। तथा माता हितं वाक्यं भाषमाणा हितैषिणी।
प्रत्याख्याता ह्यसत्कृत्य स कस्मै रोचयेद्वचः। कुलान्तकरणो व्यक्तं जात एष जनार्द्दन।
तथाऽस्य दृश्यते चेष्टा नीतिश्चैव विशाम्पते। नैव दास्यति नो राज्यमिति मे मतिरच्युत।

उक्तोऽहं बहुशस्तात विदुरेण महात्मना । न जीवन्दास्यते भागं धार्त्तराष्ट्रस्तु मानद । १२१०
यावत् प्राणा धरिष्यन्ति धार्त्तराष्ट्रस्य दुर्म्मतेः । तावदस्मास्वपापेषु प्रचरिष्यति पातकं ।
न च युक्तोऽन्यथा जेतुमृते युद्धेन माधव । इत्यब्रवीत् सदा मां हि विदुरः सत्यदर्शनः ।
तत् सर्व्वमद्य जानामि व्यवसायं दुरात्मनः । यदुक्तं वचनं तेन विदुरेण महात्मना ।
यो हि श्रुत्वा वचः पथ्यं जामदग्न्याद्यथातथं । अवामन्यत दुर्ब्बुद्धिर्ध्रुवं नाशमुपस्थितं ।
उक्तं हि बहुशः सिद्धैर्जातमात्रे सुयोधने । एनं प्राप्य दुरात्मानं क्षयं क्षत्रं गमिष्यति । १२१५
तदिदं वचनं तेषां निरुक्तं वै जनार्द्दन । क्षयं गता हि राजानो दुर्य्योधनकृते भृशं ।
सोऽद्य सर्व्वान् रणे योधान्निहनिष्यामि माधव । क्षत्रियेषु हतेष्वाशु शून्ये च शिविरे कृते ।
वधाय चात्मनोऽस्माभिः संयुगं रोचयिष्यति । तदन्तं हि भवेद्वैरमनुमानेन माधव ।
एवं पश्यामि वार्ष्णेय चिन्तयन् प्रज्ञया स्वया । विदुरस्य च वाक्येन चेष्टया च दुरात्मनः ।
तस्माद्याहि चमूं वीर यावद्धन्मि शितैः शरैः । दुर्य्योधनं महाबाहो वाहिनीञ्चास्य संयुगे । १२२०
क्षेममद्य करिष्यामि धर्म्मराजस्य माधव । हत्वैतद्दुर्ब्बलं सैन्यं धार्त्तराष्ट्रस्य पश्यतः ।
॥ सञ्जय उवाच ॥ अभीशुहस्तो दाशार्हस्तथोक्तः सव्यसाचिना । तद्बलौघममित्राणामभीतः प्राविशद्बलात् ।
गदाखड्गशरैर्घोरं शक्तिकण्टकसङ्कुलं । गदापरिघपन्थानं रथनागमहाद्रुमं ।
हयपत्तिलताकीर्णं गाहमानो महायशाः । व्यचरत्तत्र गोविन्दो रथेनातिपताकिना ।
ते हयाः पाण्डुरा राजन् वहन्तोऽर्ज्जुनमाहवे । दिक्षु सर्व्वास्वदृश्यन्त दाशार्हेण प्रचोदिताः । १२२५
ततः प्रायाद्रथेनाजौ सव्यसाची परन्तपः । किरन् शरशतांस्तीक्ष्णान् वारिधारा घनो यथा ।
प्रादुरासीन्महाशब्दः शराणां नतपर्व्वणां । इषुभिश्छाद्यमानानां समरे सव्यसाचिना ।
असज्जन्तस्तनुत्रेषु शरौघाः प्रापतन् भुवि । इन्द्राशनिसमस्पर्शा गाण्डीवप्रेषिताः शराः ।
नरान्नागान् समाहत्य हयांश्चापि विशाम्पते । अपतन्त रणे बाणाः पतङ्गा इव घोषिणः ।
आसीत् सर्व्वमवच्छन्नं गाण्डीवप्रेषितैः शरैः । न प्राज्ञायन्त समरे दिशो वा प्रदिशोऽपि वा । १२३०
सर्व्वमासीज्जगत् पूर्णं पार्थनामाङ्कितैः शरैः । रुक्मपुङ्खैस्तैलधौतैः कर्म्मारपरिमार्ज्जितैः ।
ते दह्यमानाः पार्थेन पावकेनेव कुञ्जराः । पार्थं न प्रजहुर्घोरा बध्यमानाः शितैः शरैः ।
शरचापधरः पार्थः प्रज्वलन्निव भास्करः । ददाह समरे योधान् कक्षमग्निरिव ज्वलन् ।
यथा वनान्ते वनगैर्व्विसृष्टः कक्षं दहेत् कृष्णगतिः सुघोषः । भूरिद्रुमं शुष्कलतावितानं भृशं समृद्धो ज्वलनः प्रतापी ।
एवं स नाराचगणप्रतापी शरार्च्चिरुच्चावचतिग्मतेजाः । ददाह सर्व्वान्तव पुत्त्रसेनाममृष्यमाणस्तरसा तरस्वी । १२३५
तस्येषवः प्राणहराः सुमुक्ता नासज्जन् वै वर्म्मसु रुक्मपुङ्खाः । न स द्वितीयं प्रमुमोच बाणं नरे हये वा परमद्विपे वा ।
अनेकरूपाकृतिभिर्हि बाणैर्म्महारथानीकमनुप्रविश्य । स एव एकस्तव पुत्त्रसेनां जघान दैत्यानिव वज्रपाणिः ।
इति श्रीमहाभारते शल्यपर्व्वणि सङ्कुलयुद्धे पञ्चविंशोऽध्यायः ॥ २५ ॥
॥ सञ्जय उवाच ॥ अस्यतां यतमानानां शूराणामनिवर्त्तिनां । सङ्कल्पमकरोन्मोघं गाण्डीवेन धनञ्जयः ।

इन्द्राशनिसमस्पर्शानविषह्यान्महौजसः । विसृजन् दृश्यते वाणान् धारा मुञ्चन्निवाम्बुदः ।
तत् सैन्यं भरतश्रेष्ठ वध्यमानं किरीटिना । सम्प्रदुद्राव संग्रामात्तव पुत्त्रस्य पश्यतः । १२४०
पितॄन् भ्रातॄन् परित्यज्य वयस्यानपि चापरे । हतधुर्य्या रथाः केचिद्धतसूतास्तथाऽपरे ।
भग्नाक्षयुगचक्रेषाः केचिदासन् विशाम्पते । अन्येषां सायकाः क्षीणास्तथाऽन्ये वाणपीडिताः ।
अक्षता युगपत् केचित् प्राद्रवन् भयपीडिताः । केचित् पुत्त्रानुपादाय हतभूयिष्ठबान्धवाः ।
विचुक्रुशुः पितॄनन्ये सहायानपरे पुनः । बान्धवांश्च नरव्याघ्र भ्रातॄन् सम्बन्धिनस्तथा ।
दुद्रुवुः केचिदुत्सृज्य तत्र तत्र विशाम्पते । बहवोऽत्र भृशं विद्धा मुह्यमाना महारथाः । १२४५
निश्वसन्तः स्म दृश्यन्ते पार्थवाणहता नराः । तानन्ये रथमारोप्य आश्वास्याथ मुहूर्त्तकं ।
विश्रान्ताश्च वितृष्णाश्च पुनर्युद्धाय जग्मिरे । तानपास्य गताः केचित् पुनरेव युयुत्सवः ।
कुर्व्वन्तस्तव पुत्त्रस्य शासनं युद्धदुर्म्मदाः । पानीयमपरे पीत्वा पर्य्याश्वास्य च वाहनं ।
वर्म्माणि च समारोप्य केचिद्भरतसत्तम । समाश्वास्यापरे भ्रातॄन् निक्षिप्य शिविरे स्वके ।
पुत्त्रानन्ये पितॄनन्ये पुनर्युद्धमरोचयन् । सज्जयित्वा रथान् केचित् यथामुख्यं विशाम्पते । १२५०
आप्लुत्य पाण्डवानीकं पुनर्युद्धमरोचयन् । ते शूराः किङ्किणीजालैः समाच्छन्ना बभासिरे ।
त्रैलोक्यविजये युक्ता यथा दैतेयदानवाः । आगम्य सहसा केचित् रथैः स्वर्णविभूषितैः ।
पाण्डवानामनीकेषु धृष्टद्युम्नमयोधयन् । धृष्टद्युम्नोऽपि पाञ्चाल्यः शिखण्डी च महारथः ।
नाकुलिश्च शतानीको रथानीकमयोधयन् । पाञ्चाल्यस्तु ततः क्रुद्धः सैन्येन महता वृतः ।
अभ्यद्रवत्सुसंक्रुद्धस्तावकान् हन्तुमुद्यतः । ततस्त्वापततस्तस्य तव पुत्त्रो जनाधिपः । १२५५
वाणसङ्घाननेकान् वै प्रेषयामास भारत । धृष्टद्युम्नस्ततो राजंस्तव पुत्त्रेण धन्विना ।
नाराचैरर्द्धनाराचैर्व्वहुभिः क्षिप्रकारिभिः । वत्सदन्तैश्च वाणैश्च कर्म्मारपरिमार्ज्जितैः ।
अश्वांश्च चतुरो हत्वा बाह्वोरुरसि चार्पयत् । सोऽतिविद्धो महेष्वासस्तोत्त्रार्द्दित इव द्विपः ।
तस्याश्वांश्चतुरो वाणैः प्रेषयामास मृत्यवे । सारथेश्चापि वाणेन शिरः कायादपाहरत् ।
ततो दुर्य्योधनो राजा पृष्ठमारुह्य वाजिनः । अपाक्रमद्धतरथो नातिदूरमरिन्दमः । १२६०
दृष्ट्वा तु हतविक्रान्तं स्वमनीकं महाबलः । तव पुत्त्रो महाराज प्रययौ यत्र सौबलः ।
ततो रथेषु भग्नेषु त्रिसाहस्रा महाद्विपाः । पाण्डवान् रथिनः पञ्च समन्तात् पर्य्यवारयन् ।
ते वृताः समरे पञ्च गजानीकेन भारत । अशोभन्त महाराज ग्रहा व्याप्ता घनैरिव ।
ततोऽर्ज्जुनो महाराज लब्धलक्षो महाभुजः । विनिर्य्ययौ रथेनैव श्वेताश्वः कृष्णसारथिः ।
स समन्तात् परिवृतः कुञ्जरैः पर्व्वतोपमैः । नाराचैर्व्विमलैस्तीक्ष्णैर्गजानीकमपोथयत् । १२६५
तत्रैकवाणनिहतानपश्याम महागजान् । पतिताम् पात्यमानांश्च निर्भिन्नान् सव्यसाचिना ।
भीमसेनस्तु तान्दृष्ट्वा नागान्मत्तगजोपमः । करेणादाय महतीं गदामभ्यपतद्बली ।
अथाप्लुत्य रथात्तूर्णं दण्डपाणिरिवान्तकः । समुद्यतगदं दृष्ट्वा पाण्डवानां महारथं ।

विचेरुस्तावकाः सैन्याः प्रजन्यूने प्रसुस्रुवुः। आविग्नञ्च बलं सर्व्वं गदाहस्ते वृकोदरे।
गदया भीमसेनेन भिन्नकुम्भान्रजस्वलान्। धावमानानपश्याम कुञ्जरान् पर्व्वतोपमान्। ११७०
प्राद्रवन् कुञ्जरास्ते तु भीमसेनगदाहताः। पेतुरार्त्तस्वरं कृत्वा छिन्नपक्षा इवाद्रयः।
प्रभिन्नकुम्भान् सुबहून् द्रवमाणानितस्ततः। पतमानांश्च संप्रेक्ष्य वित्रेसुस्तव सैनिकाः।
युधिष्ठिरोऽपि संक्रुद्धो माद्रीपुत्रौ च पाण्डवौ। गार्ध्रपत्रैः शितैर्व्वाणैर्जघ्नुर्वै यमसादनं।
धृष्टद्युम्नस्तु समरे पराजित्य नराधिपं। अपक्रान्ते तव सुते हयपृष्ठं समाश्रिते।
दृष्ट्वा च पाण्डवान् सर्व्वान् कुञ्जरैः परिवारितान्। धृष्टद्युम्नो महाराज सहसा समुपाद्रवत्। ११७५
पुत्त्रः पाञ्चालराजस्य जिघांसुः कुञ्जरान् ययौ। अदृष्ट्वा तु रथानीके दुर्य्योधनमरिन्दमं।
अश्वत्थामा कृपश्चैव कृतवर्म्मा च सात्त्वतः। अपृच्छन् क्षत्रियास्तत्र क्व नु दुर्य्योधनो गतः।
तेऽपश्यमाना राजानं वर्त्तमाने जनक्षये। मन्वाना निहतं तत्र तव पुत्त्रं महारथाः।
विवर्णवदना भूत्वा पर्य्यपृच्छन्त ते सुतं। आहुः केचिद्धते सूते प्रयातो यत्र सौबलः।
अपरे त्वब्रुवंस्तत्र क्षत्रिया भृशविक्षताः। दुर्य्योधनेन किं कार्य्यं द्रक्ष्यध्वं यदि जीवति। ११८०
युध्यध्वं सहिताः सर्व्वे किं वो राजा करिष्यति। ते क्षत्रियाः क्षतैर्गात्रैर्हतभूयिष्ठवाहनाः।
शरैः सम्पीड्यमानास्तु नातिव्यक्तमथाब्रुवन्। इदं सर्व्वं बलं हन्मो येन स्म परिवारिताः।
एते सर्व्वे गजान् हत्वा उपायान्ति स्म पाण्डवाः। श्रुत्वा तु वचनं तेषामश्वत्थामा महाबलः।
हित्वा पाञ्चालराजस्य तदनीकं दुरुत्सहं। कृपश्च कृतवर्म्मा च प्रययुर्य्यत्र सौबलः।
रथानीकं परित्यज्य शूराः सुदृढधन्विनः। ततस्तेषु प्रयातेषु धृष्टद्युम्नपुरस्कृताः। ११८५
आययुः पाण्डवा राजन् विनिघ्नन्तः स्म तावकान्। दृष्ट्वा तु तानापततः सम्प्रहृष्टान्महारथान्।
पराक्रान्तांस्तथा वीरान्निराशं जीविते तदा। विवर्णमुखभूयिष्ठमभवत्तावकं बलं।
परिक्षीणायुधान्दृष्ट्वा तानहं परिवारितान्। राजन् बलेन द्व्यङ्गेन त्यक्त्वा जीवितमात्मनः।
आत्मना पञ्चमोऽयुध्यं पाञ्चालस्य बलेन ह। तस्मिन्देशे व्यवस्थाप्य यत्र शारद्वतः स्थितः।
संप्रद्रुता वयं पञ्च किरीटिशरपीडिताः। धृष्टद्युम्नं महारौद्रं तत्र नोऽभूद्रणो महान्। ११९०
जितास्तेन वयं सर्व्वे व्यपयाम रणात्ततः। अथापश्यं सात्यकिं तमुपायातं महारथं।
रथैश्चतुःशतैर्व्वीरो मामभ्यद्रवदाहवे। धृष्टद्युम्नादहं मुक्तः कथञ्चित्क्रान्तवाहनात्।
पतितो माधवानीकं दुष्कृती नरकं यथा। तत्र युद्धमभूद्घोरं मुहूर्त्तमतिदारुणं।
सात्यकिस्तु महाबाहुर्म्मम हत्वा परिच्छदं। जीवग्राहमगृह्णान्मां मूर्च्छितं पतितं भुवि।
ततो मुहूर्त्तादिव तद्गजानीकमवध्यत। गदया भीमसेनेन नाराचैरर्ज्जुनेन च। ११९५
ते प्रदुद्रुवुर्महानागाः समन्तात् पर्व्वतोपमाः। नातिप्रसिद्धेव गतिः पाण्डवानामजायत।
रथमार्गांस्तथा चक्रे भीमसेनो महाबलः। पाण्डवानां महाराज व्यपाकर्षन्महागजान्।
अश्वत्थामा कृपश्चैव कृतवर्म्मा च सात्त्वतः। अपश्यन्तो रथानीके दुर्य्योधनमरिन्दमं।

राजानं मृगयामासुस्तव पुत्रं महारथं । परित्यज्य च पाञ्चालं प्रयाता यत्र सौबलः ।
राज्ञो दर्शनसंविग्ना वर्त्तमाने जनक्षये । १४००

इति श्रीमहाभारते शल्यपर्व्वणि दुर्य्योधनापयाने षड्विंशोऽध्यायः ॥ २६ ॥

॥ सञ्जय उवाच ॥ गजानीके हते तस्मिन् पाण्डुपुत्रेण भारत । बध्यमाने बले चैव भीमसेनेन संयुगे ।
चरन्तञ्च तथा दृष्ट्वा भीमसेनमरिन्दमं । दण्डहस्तं यथा क्रुद्धमन्तकं प्राणहारिणं ।
समेत्य समरे राजन् हतशेषाः सुतास्तव । अदृश्यमाने कौरव्ये पुत्रे दुर्य्योधने तव ।
सोदर्य्याः सहिता भूत्वा भीमसेनमुपाद्रवन् । दुर्म्मर्षणः श्रुतान्तश्च जैत्रो भूरिबलो रविः ।
जयत्सेनः सुजातश्च तथा दुर्व्विषहोऽरिहा । दुर्व्विमोचननामा च दुष्प्रधर्षस्तथैव च । १४०५
श्रुतर्व्वा च महाबाहुः सर्व्वे युद्धविशारदाः । इत्येते सहिता भूत्वा तव पुत्राः समन्ततः ।
भीमसेनमभिद्रुत्य रुरुधुः सर्व्वतो दिशं । ततो भीमो महाराज स्वरथं पुनरास्थितः ।
मुमोच निशितान् बाणान् पुत्राणान्तव मर्म्मसु । ते कीर्य्यमाणा भीमेन पुत्रास्तव महारणे ।
भीमसेनमुपाकर्षन् प्रवणादिव कुञ्जरं । ततः क्रुद्धो रणे भीमः शिरो दुर्म्मर्षणस्य ह ।
क्षुरप्रेण प्रमथ्याशु पातयामास भूतले । ततोऽपरेण भल्लेन सर्व्वावरणभेदिना । १४१०
श्रुतान्तमवधीद्भीमस्तव पुत्रं महारथं । जयत्सेनं तथा विद्ध्वा नाराचेन हसन्निव ।
पातयामास कौरव्यं रथोपस्थादरिन्दमः । स पपात रथाद्भूमौ राजंस्तूर्णं ममार च ।
श्रुतर्व्वा तु ततो भीमं क्रुद्धो विव्याध मारिष । शतेन गृध्रवाजानां शराणां नतपर्व्वणां ।
ततः क्रुद्धो रणे भीमो जैत्रं भूरिबलं रविं । त्रीनेतांस्त्रिभिरानर्च्छद्विषाग्निप्रतिमैः शरैः ।
ते हता न्यपतन्भूमौ स्यन्दनेभ्यो महारथाः । वसन्ते पुष्पशबला निकृत्ता इव किंशुकाः । १४१५
ततोऽपरेण भल्लेन तीक्ष्णेन च परन्तपः । दुर्व्विमोचनमाहत्य प्रेषयामास मृत्यवे ।
स हतः प्रापतद्भूमौ स्वरथाद्रथिनाम्बरः । गिरेस्तु कूटजो भग्नो मारुतेनेव पादपः ।
दुष्प्रधर्षं ततश्चैव सुजातञ्च सुतन्तव । एकैकं न्यवधीत् संख्ये द्वाभ्यां द्वाभ्यां चमूमुखे ।
तौ शिलीमुखविद्धाङ्गौ पेततू रथसत्तमौ । ततः पतन्तं समरे अभिवीक्ष्य सुतन्तव ।
भल्लेन पातयामास भीमो दुर्व्विषहं रणे । स पपात ततो वाहात् पश्यतां सर्व्वधन्विनां । १४२०
दृष्ट्वा तु निहतान् भ्रातॄन् बहूनेकेन संयुगे । अमर्षवशमापन्नः श्रुतर्व्वा भीममभ्ययात् ।
विक्षिपन् सुमहच्चापं कार्त्तस्वरविभूषितं । विसृजन् सायकांश्चैव विषाग्निप्रतिमान् बहून् ।
स तु राजन् धनुश्छित्त्वा पाण्डवस्य महामृधे । अथैनं छिन्नधन्वानं विंशत्या समवाकिरत् ।
ततोऽन्यद्धनुरादाय भीमसेनो महाबलः । अवाकिरत्तव सुतं तिष्ठ तिष्ठेति चाब्रवीत् ।
महदासीत्तयोर्युद्धं चित्ररूपं भयानकं । यादृशं समरे पूर्व्वं जम्भवासवयोर्व्विभो । १४२५
तयोस्तत्र शितैर्मुक्तैर्यमदण्डनिभैः शरैः । समाच्छन्ना धरा सर्व्वा खं दिशो विदिशस्तथा ।
ततः श्रुतर्व्वा संक्रुद्धो धनुरादाय सायकैः । भीमसेनं रणे राजन् बाह्वोरुरसि चार्पयत् ।

सोऽतिविद्धो महाराज तव पुत्रेण धन्विना । भीमः सञ्चुक्षुभे क्रुद्धः पर्व्वणीव महोदधिः ।
ततो भीमो रुषाविष्टः पुत्रस्य तव मारिष । सारथिञ्चतुरश्वांश्च शरैर्निन्ये यमक्षयं ।
विरथं तं समालक्ष्य विशिखैर्लोमवाहिभिः । अवाकिरदमेयात्मा दर्शयन् पाणिलाघवं । १४३०
श्रुतर्व्वा विरथो राजन्नाददे खड्गचर्म्मणी । अथास्याददतः खड्गं शतचन्द्रञ्च भानुमत् ।
क्षुरप्रेण शिरः कायात् पातयामास पाण्डवः । छिन्नोत्तमाङ्गस्य ततः क्षुरप्रेण महात्मना ।
पपात कायः स रथाद्वसुधामनुनादयन् । तस्मिन्निपतिते वीरे तावका भयमोहिताः ।
अभ्यद्रवन्त संग्रामे भीमसेनं युयुत्सवः । तानापतत एवाशु हतशेषाद्बलार्णवात् ।
दंशितान् प्रतिजग्राह भीमसेनः प्रतापवान् । ते तु तं वै समासाद्य परिवव्रुः समन्ततः । १४३५
ततस्तु संवृतो भीमस्तावकैर्निशितैः शरैः । पीडयामास तान् सर्व्वान् सहस्राक्ष इवासुरान् ।
ततः पञ्चशतान् हत्वा सवरूथान्महारथान् । जघान कुञ्जरानीकं पुनः सप्तशतं युधि ।
हत्वा शतसहस्राणि पत्तीनां परमेषुभिः । वाजिनाञ्च शतान्यष्टौ पाण्डवः स विराजते ।
भीमसेनस्तु कौन्तेयो हत्वा युद्धे सुतांस्तव । मेने कृतार्थमात्मानं सफलं जन्म च प्रभो ।
तन्तथा युध्यमानं वै विनिघ्नन्तञ्च तावकान् । ईक्षितुं नोत्सहन्ते स्म तव सैन्या नराधिप । १४४०
विद्राव्य च कुरून् सर्व्वांस्तांश्च हत्वा पदानुगान् । दोर्भ्यां शब्दं ततश्चक्रे त्रासयानो महाद्विपान् ।
हतभूयिष्ठयोधा तु तव सेना विशाम्पते । किञ्चिच्छेषा महाराज कृपणा समपद्यत ।
इति श्रीमहाभारते शल्यपर्व्वणि संकुलयुद्धे सप्तविंशोऽध्यायः ॥ २७ ॥

॥ सञ्जय उवाच ॥ दुर्य्योधनो महाराज सुदर्शश्चापि ते सुतः । हतशेषौ तदा संख्ये वाजिमध्ये व्यवस्थितौ ।
ततो दुर्य्योधनं दृष्ट्वा वाजिमध्ये व्यवस्थितं । उवाच देवकीपुत्रः कुन्तीपुत्रं धनञ्जयं ।
शत्रवो हतभूयिष्ठा ज्ञातयः परिरक्षिताः । गृहीत्वा सञ्जयञ्चासौ निवृत्तः शिनिपुङ्गवः । १४४५
परिश्रान्तश्च नकुलः सहदेवश्च भारत । योधयित्वा रणे पापान् धार्त्तराष्ट्रान् सहानुगान् ।
दुर्य्योधनमभित्यज्य त्रय एव व्यवस्थिताः । कृपश्च कृतवर्म्मा च द्रौणिश्चैव महारथः ।
असौ तिष्ठति पाञ्चाल्यः श्रिया परमया युतः । दुर्य्योधनबलं हत्वा सह सर्व्वैः प्रभद्रकैः ।
असौ दुर्य्योधनः पार्थ वाजिमध्ये व्यवस्थितः । छत्रेण ध्रियमाणेन प्रेक्षमाणो मुहुर्मुहुः ।
प्रतिव्यूह्य बलं सर्व्वं रणमध्ये व्यवस्थितः । एनं हत्वा शितैर्बाणैः कृतकृत्यो भविष्यसि । १४५०
गजानीकं हतं दृष्ट्वा त्वाञ्च प्राप्तमरिन्दमं । यावन्न विद्रवन्त्येते तावज्जहि सुयोधनं ।
यातु कश्चित्तु पाञ्चाल्यं क्षिप्रमागम्यतामिति । परिश्रान्तबलस्तावत् नैव मुच्येत किल्बिषी ।
हत्वा तव बलं सर्व्वं सङ्ग्रामे धृतराष्ट्रजः । जितान् पाण्डुसुतान् मत्वा रूपं धारयते महत् ।
निहतं स्वबलं दृष्ट्वा पीडितञ्चापि पाण्डवैः । ध्रुवमेष्यति संग्रामे वधायैवात्मनो नृपः ।
एवमुक्तः फाल्गुनस्तु कृष्णं वचनमब्रवीत् । धार्त्तराष्ट्रसुताः सर्व्वे हता भीमेन माधव । १४५५
यावेतावाश्रितौ कृष्ण तावद्य न भविष्यतः । हतो भीष्मो हतो द्रोणः कर्णो वैकर्त्तनो हतः ।

मद्रराजो हतः शल्यो हतः कृष्ण जयद्रथः। हयाः पञ्चशताः शिष्टाः शकुनेः सौबलस्य च।
रथानान्तु शते शिष्टे द्वे एव तु जनार्द्दन। दन्तिनाञ्च शतं साग्रं त्रिसाहस्राः पदातयः।
अश्वत्थामा कृपश्चैव त्रिगर्त्ताधिपतिस्तथा। उलूकः शकुनिश्चैव कृतवर्म्मा च सात्वतः।
एतद्बलमभूच्छेषं धार्त्तराष्ट्रस्य माधव। मोक्षो न नूनं कालात्तु विद्यते भुवि कस्यचित्। १४६०
तथा विनिहते सैन्ये पश्य दुर्य्योधनं स्थितं। अद्याहनि महाराजो हतामित्रो भविष्यति।
न हि मे मोक्ष्यते कश्चित् परेषामिह चिन्तये। ये त्वद्य समरं कृष्ण न हास्यन्ति मदोत्कटाः।
तान् वै सर्व्वान् हनिष्यामि यद्यपि स्युर्न मानुषाः। अद्य युद्धेषु संक्रुद्धो दीर्घं राज्ञः प्रजागरं।
अपनेष्यामि गान्धारं पातयित्वा शितैः शरैः। निकृत्या वै दुराचारो यानि रत्नानि सौबलः।
सभायामहरद्द्यूते पुनस्तान्याहराम्यहं। अद्य ता अपि वेत्स्यन्ति सर्व्वा नागपुरे स्त्रियः। १४६५
श्रुत्वा पतींश्च पुत्रांश्च पाण्डवैर्निहतान् युधि। समाप्तमद्य वै कर्म्म सर्व्वं कृष्ण भविष्यति।
अद्य दुर्य्योधनो दीप्तां श्रियं प्राणांश्च मोक्ष्यति। नापयाति भयात् कृष्ण संग्रामाद्यदि चेन्मम।
निहतं विद्धि वार्ष्णेय धार्त्तराष्ट्रं सुबालिशं। मम ह्येतदशक्तं वै वाजिवृन्दमरिन्दम।
सोढुं ज्यातलनिर्घोषं याहि यावन्निहन्म्यहं। एवमुक्तस्तु दाशार्हः पाण्डवेन यशस्विना।
अचोदयद्धयान् राजन् दुर्य्योधनबलं प्रति। तदनीकमभिप्रेक्ष्य त्रयः सज्जा महारथाः। १४७०
भीमसेनोऽर्ज्जुनश्चैव सहदेवश्च मारिष। प्रययुः सिंहनादेन दुर्य्योधनजिघांसया।
तान् प्रेक्ष्य सहितान् सर्व्वान् जवेनोद्यतकार्म्मुकान्। सौबलोऽभ्यद्रवद्युद्धे पाण्डवानाततायिनः।
सुदर्शनस्तव सुतो भीमसेनं समभ्ययात्। सुशर्म्मा शकुनिश्चैव युयुधाते किरीटिना।
सहदेवं तव सुतो हयपृष्ठगतोऽभ्ययात्। ततो हि यत्नतः क्षिप्रं तव पुत्रो जनाधिप।
प्रासेन सहदेवस्य शिरसि प्राहरद्भृशं। सोऽपाविशद्रथोपस्थे तव पुत्रेण ताडितः। १४७५
रुधिराप्लुतसर्व्वाङ्ग आशीविष इव श्वसन्। प्रतिलभ्य ततः संज्ञां सहदेवो विशाम्पते।
दुर्य्योधनं शरैस्तीक्ष्णैः संक्रुद्धः समवाकिरत्। पार्थोऽपि युधि विक्रम्य कुन्तीपुत्रो धनञ्जयः।
शूराणामश्वपृष्ठेभ्यः शिरांसि निचकर्त्त ह। तदनीकं तदा पार्थो व्यधमद्बहुभिः शरैः।
पातयित्वा हयान् सर्व्वांस्त्रिगर्त्तानां रथान् ययौ। ततस्ते सहिता भूत्वा त्रिगर्त्तानां महारथाः।
अर्ज्जुनं वासुदेवञ्च शरवर्षैरवाकिरन्। सत्यकर्म्माणमाक्षिप्य क्षुरप्रेण महायशाः। १४८०
ततोऽस्य स्यन्दनस्येषां चिच्छेद पाण्डुनन्दनः। शिलाशितेन च विभो क्षुरप्रेण महायशाः।
शिरश्चिच्छेद सहसा तप्तकुण्डलभूषणं। स वै सतम्मृधे राजन् योधानां मिषतान्तव।
यथा सिंहो वने राजन् मृगं परिबुभुक्षितः। तं निहत्य ततः पार्थः सुशर्म्माणं त्रिभिः शरैः।
विद्ध्वा तानहनत् सर्व्वान् रथान् रुक्मविभूषितान्। ततः प्रायात्त्वरन् पार्थो दीर्घकालं सुसंहृतं।
मुञ्चन् क्रोधविषं तीक्ष्णं प्रस्थलाधिपतिं प्रति। तमर्ज्जुनः पृषत्कानां शतेन भरतर्षभ। १४८५
पूरयित्वा ततो वाहान् प्राहरत्तस्य धन्विनः। ततः शरं समाधाय यमदण्डोपमं तदा।

सुशर्म्माणं समुद्दिश्य चिक्षेपाशु हसन्निव । स शरः प्रेषितस्तेन क्रोधदीप्तेन धन्विना ।
सुशर्म्माणं समासाद्य बिभेद हृदयं रणे । स गतासुर्म्महाराज पपात धरणीतले ।
नन्दयन् पाण्डवान् सर्व्वान् व्यथयंश्चापि तावकान् । सुशर्म्माणं रणे हत्वा पुत्रानस्य महारथान् ।
सप्त चाष्टौ च त्रिंशच्च सायकैरनयत् क्षयं । ततोऽस्य निशितैर्व्वाणैः सर्व्वान् हत्वा पदानुगान् । १४९०
अभ्यगाद्भारतीं सेनां हतशेषां महारथः । भीमस्तु समरे क्रुद्धः पुत्रं तव जनाधिप ।
सुदर्शनमदृश्यन्तं शरैश्चक्रे हसन्निव । ततोऽस्य प्रहसन् क्रुद्धः शिरः कायादपाहरत् ।
क्षुरप्रेण सुतीक्ष्णेन स हतः प्रापतद्भुवि । तस्मिंस्तु निहते वीरे ततस्तस्य पदानुगाः ।
परिवव्रू रणे भीमं किरन्तो विविधान् शरान् । ततस्तु निशितैर्व्वाणैस्तवानीकं वृकोदरः ।
इन्द्राशनिसमस्पर्शैः समन्तात् पर्य्यवाकिरत् । ततः क्षणेन तद्भीमो न्यहनद्भरतर्षभ । १४९५
तेषु तु च्छिद्यमानेषु सेनाध्यक्षा महारथाः । भीमसेनं समासाद्य ततोऽयुध्यन्त भारत ।
स तान् सर्व्वान् शरैर्घोरैरवाकिरत पाण्डवः । तथैव तावकान् राजन् पाण्डवेयान् महारथान् ।
शरवर्षेण महता समन्तात् पर्य्यवारयन् । व्याकुलं तदभूत् सर्व्वं पाण्डवानां परैः सह ।
तावकानाञ्च समरे पाण्डवेयैर्युयुत्सतां । तत्र योधास्तदा पेतुः परस्परसमाहताः ।
उभयोः सेनयोराजन् संशोचन्तः स्म बान्धवान् । १५००
इति श्रीमहाभारते शल्यपर्व्वणि सुशर्म्मवधे अष्टाविंशोऽध्यायः ॥ २८ ॥
॥ सञ्जय उवाच ॥ तस्मिन् प्रवृत्ते संग्रामे गजवाजिनरक्षये । शकुनिः सौबलो राजन् सहदेवं समभ्ययात् ।
ततोऽस्यापततस्तूर्णं सहदेवः प्रतापवान् । शरौघान् प्रेषयामास पतङ्गानिव शीघ्रगान् ।
उलूकश्च रणे भीमं विव्याध दशभिः शरैः । सायकानां नवत्या वै सहदेवमवाकिरत् ।
ते शूराः समरे राजन् समासाद्य परस्परं । विविधुर्निशितैर्व्वाणैः कङ्कबर्हिणवाजितैः ।
स्वर्णपुङ्खैः शिलाधौतैराकर्णात् प्रहितैः शरैः । तेषां चापभुजोत्सृष्टा शरवृष्टिर्व्विशाम्पते । १५०५
आच्छादयद्दिशः सर्व्वा धारा इव पयोमुचः । ततः क्रुद्धो रणे भीमः सहदेवश्च भारत ।
चेरतुः कदनं सङ्ख्ये कुर्व्वन्तौ सुमहाबलौ । ताभ्यां शरशतैश्छन्नं तद्बलं तव भारत ।
अन्धकारमिवाकाशमभवत्तत्र तत्र ह । अश्वैर्व्विपरिधावद्भिः शरच्छन्नैर्व्विशाम्पते ।
तत्र तत्र कृतो मार्गो विकर्षद्भिर्हतान् बहून् । निहतानां हयानाञ्च सहैव हयसादिभिः ।
चर्म्मभिर्व्विनिकृत्तैश्च प्रासैश्छिन्नैश्च मारिष । ऋष्टिभिः शक्तिभिश्चैव सासिप्रासपरश्वधैः । १५१०
सञ्छन्ना पृथिवी जज्ञे कुसुमैः शबला इव । योधास्तत्र महाराज समासाद्य परस्परं ।
उद्वृत्तनयनै रोषात् सन्दष्टौष्ठपुटैर्मुखैः । सकुण्डलैर्म्मही छन्ना पद्मकिञ्जल्कसन्निभैः ।
भुजैश्छिन्नैर्म्महाराज नागराजकरोपमैः । साङ्गदैः सतनुत्रैश्च सासिप्रासपरश्वधैः ।
कबन्धैरुत्थितैश्छिन्नैर्नृत्यद्भिश्चापरैर्युधि । क्रव्यादगणसङ्कीर्णा घोराऽभूत् पृथिवीपते ।
अल्पावशिष्टे सैन्ये तु कौरवेयान्महाहवे । प्रहृष्टाः पाण्डवा भूत्वा निन्यिरे यमसादनं । १५१५

एतस्मिन्नन्तरे शूरः सौबलेयः प्रतापवान्। प्रासेन सहदेवस्य शिरसि प्राहरद्भृशं।
सविह्वलो महाराज रथोपस्थ उपाविशत्। सहदेवं तथा दृष्ट्वा भीमसेनः प्रतापवान्।
सर्व्वसैन्यानि संक्रुद्धो वारयामास भारत। निर्बिभेद च नाराचैः शतशोऽथ सहस्रशः।
विनिर्भिद्याकरोच्चैव सिंहनादमरिन्दमः। तेन शब्देन वित्रस्ताः सर्व्वे सहयवारणाः।
प्राद्रवन् सहसा भीताः शकुनेश्च पदानुगाः। प्रभग्नानथ तान् दृष्ट्वा राजा दुर्य्योधनोऽब्रवीत्। १५१०
निवर्त्तध्वमधर्म्मज्ञा युध्यध्वं किं सृतेन वः। इह कीर्त्तिं समाधाय प्रेत्य लोकान् समश्नुत।
प्राणान् जहाति यो वीरो युद्धे पृष्ठमदर्शयन्। एवमुक्तास्तु ते राज्ञा सौबलस्य पदानुगाः।
पाण्डवानभ्यवर्त्तन्त मृत्युं कृत्वा निवर्त्तनं। द्रवद्भिस्तत्र राजेन्द्र कृतः शब्दोऽतिदारुणः।
क्षुब्धसागरसङ्काशः क्षुभितः सर्व्वतोऽभवत्। तांस्ततः पुरतो दृष्ट्वा सौबलस्य पदानुगान्।
प्रत्युद्ययुर्म्महाराज पाण्डवा विजयोद्यताः। प्रत्याश्वस्य च दुर्द्धर्षः सहदेवो विशाम्पते। १५१५
शकुनिं दशभिर्व्विद्ध्वा हयांश्चास्य त्रिभिः शरैः। धनुश्चिच्छेद च शरैः सौबलस्य हसन्निव।
अथान्यद्धनुरादाय शकुनिर्युद्धदुर्म्मदः। विव्याध नकुलं षष्ट्या भीमसेनञ्च सप्तभिः।
उलूकोऽपि महाराज भीमं विव्याध सप्तभिः। सहदेवन्तु सप्तत्या परीप्सन् पितरं रणे।
तं भीमसेनः समरे विव्याध नवभिः शरैः। शकुनिञ्च चतुःषष्ट्या पार्श्वस्थांश्च त्रिभिस्त्रिभिः।
ते हन्यमाना भीमेन नाराचैस्तैलपायितैः। सहदेवं रणे क्रुद्धाश्छादयन् शरवृष्टिभि.। १५२०
पर्व्वतं वारिधाराभिः सविद्युत इवाम्बुदाः। ततोऽस्यापततः शूरः सहदेवः प्रतापवान्।
उलूकस्य महाराज भल्लेनापाहरच्छिरः। स जगाम रथाद्भूमिं सहदेवेन पातितः।
रुधिराप्लुतसर्व्वाङ्गो नन्दयन् पाण्डवान् युधि। पुत्रन्तु निहतं दृष्ट्वा शकुनिस्तत्र भारत।
साश्रुकण्ठो विनिश्वस्य क्षत्तुर्व्वाक्यमनुस्मरन्। चिन्तयित्वा मुहूर्त्तं स वाष्पपूर्णेक्षणः श्वसन्।
सहदेवं समासाद्य त्रिभिर्व्विव्याध सायकैः। तानपास्य शरान्मुक्तान् शरसङ्घैः प्रतापवान्। १५२५
सहदेवो महाराज धनुश्चिच्छेद संयुगे। छिन्ने धनुषि राजेन्द्र शकुनिः सौबलस्तदा।
प्रगृह्य विपुलं खड्गं सहदेवाय प्राहिणोत्। तमापतन्तं सहसा घोररूपं विशाम्पते।
द्विधा चिच्छेद समरे सौबलस्य हसन्निव। असिं दृष्ट्वा तथा छिन्नं प्रगृह्य महतीं गदां।
प्राहिणोत् सहदेवाय सा मोघा न्यपतद्भुवि। ततः शक्तिं महाघोरां कालरात्रिमिवोद्यतां।
प्रेषयामास संक्रुद्धः पाण्डवं प्रति सौबलः। तामापतन्तीं सहसा शरैः कनकभूषणैः। १५३०
त्रिधा चिच्छेद समरे सहदेवो हसन्निव। सा पपात त्रिधा छिन्ना भूमौ कनकभूषणा।
शीर्य्यमाणा यथा दीप्ता गगनाद्वै शतह्रदा। शक्तिं विनिहतां दृष्ट्वा सौबलञ्च भयार्द्दितं।
दुद्रुवुस्तावकाः सर्व्वे भये जाते ससौबलाः। अथोत्क्रुष्टं महच्चासीत् पाण्डवैर्ज्जितकाशिभिः।
धार्त्तराष्ट्रास्ततः सर्व्वे प्रायशो विमुखाऽभवन्। तान् वै विमनसो दृष्ट्वा माद्रीपुत्त्रः प्रतापवान्।
शरैरनेकसाहस्रैर्व्वारयामास संयुगे। ततो गान्धारकैर्गुप्तं पुष्टैरश्वैर्ज्जये धृतं। १५३५

आससाद रणे यान्तं सहदेवोऽथ सौबलं । स्वमंशमवतिष्ठन्तं संस्मृत्य शकुनिं नृप ।
रथेन काञ्चनाङ्गेन सहदेवः समभ्ययात् । अधिज्यं बलवत् कृत्वा व्याक्षिपत् सुमहद्धनुः ।
स सौबलमभिद्रुत्य गार्द्धपत्रैः शिलाशितैः । भृशमभ्यहनत् क्रुद्धस्तोत्त्रैरिव महाद्विपं ।
उवाच चैनं मेधावी निगृह्य स्मारयन्निव । क्षत्रधर्मे स्थिरो भूत्वा युध्यस्व पुरुषो भव ।
यत्तदा हृष्यसे मूढ ग्लहन्नक्षैः सभातले । फलमद्य प्रपद्यस्व कर्म्मणस्तस्य दुर्म्मते । १५५०
निहतास्ते दुरात्मानो येऽस्मानवहसन् पुरा । दुर्य्योधनः कुलाङ्गारः शिष्टस्त्वञ्चास्य मातुलः ।
अद्य ते निहनिष्यामि क्षुरेणोन्मथितं शिरः । वृक्षात् फलमिवाविद्धं लगुडेन प्रमाथिना ।
एवमुक्त्वा महाराज सहदेवो महाबलः । संक्रुद्धो रणशार्दूलो वेगेनाभिजघान तं ।
अभिगम्य सुदुर्द्धर्षः सहदेवो युधां पतिः । विकृष्य बलवच्चापं क्रोधेन प्रज्वलन्निव ।
शकुनिं दशभिर्व्विद्ध्वा चतुर्भिश्चास्य वाजिनः । छत्रं ध्वजं धनुश्चास्य छित्त्वा सिंह इवानदत् । १५५५
छिन्नध्वजधनुश्छत्रः सहदेवेन सौबलः । ततोऽतिविद्धो बहुभिः सर्व्वमर्म्मसु सायकैः ।
ततो भूयो महाराज सहदेवः प्रतापवान् । शकुनेः प्रेषयामास शरवृष्टिं दुरासदां ।
ततस्तु क्रुद्धः सुबलस्य पुत्त्रो माद्रीसुतं सहदेवं विमर्द्दे । प्रासेन जाम्बूनदभूषणेन जिघांसुरेकोऽभिपपात शीघ्रं ।
माद्रीसुतस्तस्य समुद्यतं तं प्रासं सुवृत्तौ च भुजौ रणाग्रे । भल्लैस्त्रिभिर्युगपत् सञ्चकर्त्त ननाद चोच्चैस्तरसाजिमध्ये ।
तस्याशुकारी सुसमाहितेन सुवर्णपुङ्खेन दृढायसेन । भल्लेन सर्व्वावरणातिगेन शिरः शरीरात् प्रममाथ भूयः । १५६०
शरेण कार्त्तस्वरभूषणेन दिवाकराभेन सुसंहितेन । हृतोत्तमाङ्गो युधि पाण्डवेन पपात भूमौ सुबलस्य पुत्त्रः ।
स तच्छिरो वेगवता शरेण सुवर्णपुङ्खेन शिलाशितेन । प्रावेरयत् कुपितः पाण्डुपुत्त्रो यत्तत् कुरूणामनयस्य मूलं ।
हृतोत्तमाङ्गं शकुनिं समीक्ष्य भूमौ शयानं रुधिरार्द्रगात्रं । योधास्त्वदीया भयनष्टसत्त्वा दिशः प्रजग्मुः प्रगृहीतशस्त्राः ।
विप्रद्रुताः शुष्कमुखा विसंज्ञा गाण्डीवघोषेण समाहताश्च । भयार्द्दिता भग्नरथाश्च नागाः पदातयश्चैव सधार्त्तराष्ट्राः ।
ततो रथाच्छकुनिं पातयित्वा मुदान्विता भारत पाण्डवेयाः । शङ्खान् प्रदध्मुः समरेऽतिहृष्टाः सकेशवान् सैनिकान् हर्षयन्तः ।
तञ्चापि सर्व्वे प्रतिपूजयन्तो हृष्टा ब्रुवाणाः सहदेवमाजौ । दिष्ट्या हतो नैकृतिको दुरात्मा सहात्मजो वीर रणे त्वयेति । १५६५

इति श्रीमहाभारते शल्यपर्व्वणि शकुन्युलूकवधे ऊनत्रिंशोऽध्यायः ॥ २९ ॥

## ॥ अथ ह्रदप्रवेशपर्व्व ॥

॥ सञ्जय उवाच ॥ ततः क्रुद्धा महाराज सौबलस्य पदानुगाः । त्यक्त्वा जीवितमाक्रन्दे पाण्डवान् पर्य्यवारयन् ।
तानर्ज्जुनः प्रत्यगृह्णात् सहदेवजये धृतः । भीमसेनश्च तेजस्वी क्रुद्धाशीविषदर्शनः ।
शक्त्यृष्टिप्रासहस्तानां सहदेवं जिघांसतां । सङ्कल्पमकरोन्मोघं गाण्डीवेन धनञ्जयः ।
संगृहीतायुधान् बाहून् योधानामभिधावतां । भल्लैश्चिच्छेद बीभत्सुः शिरांस्यपि हयानपि । १५७०
ते हताः प्रत्यपद्यन्त वसुधां विगतासवः । चरता लोकवीरेण प्रहताः सव्यसाचिना ।
ततो दुर्य्योधनो राजा दृष्ट्वा स्वबलसङ्क्षयं । हतशेषान् समानीय क्रुद्धो रथगणान् बहून् ।

कुञ्जरांश्च हयांश्चैव पादातांश्च समन्ततः। उवाच सहितान् सर्व्वान् धार्त्तराष्ट्र इदं वचः।
समासाद्य रणे सर्व्वान् पाण्डवान् ससुहृद्गणान्। पाञ्चालञ्चापि सबलं हत्वा शीघ्रं निवर्त्तत।
तस्य ते शिरसा गृह्य वचनं युद्धदुर्म्मदाः। अभ्युद्ययू रणे पार्थान् तव पुत्रस्य शासनात्। १५७५
तानभ्यापततः शीघ्रं हतशेषान् महारणे। शरैराशीविषाकारैः पाण्डवाः समवाकिरन्।
तत् सैन्यं भरतश्रेष्ठ मुहूर्त्तेन महात्मभिः। अवध्यत रणं प्राप्य त्रातारं नाभ्यविन्दत।
प्रतिष्ठमानन्तु भयान्नावतिष्ठति दंशितं। अश्वैर्व्विपरिधावद्भिः सैन्येन रजसा वृते।
न प्राज्ञायन्त समरे दिशश्च प्रदिशस्तथा। ततस्तु पाण्डवानीकान्निःसृत्य बहवो जनाः।
अभ्यघ्नंस्तावकान् युद्धे मुहूर्त्तादिव भारत। ततो निःशेषमभवत्तत् सैन्यं तव भारत। १५८०
अक्षौहिण्यः समेतास्तु तव पुत्रस्य भारत। एकादश हता युद्धे ताः प्रभो पाण्डुसृञ्जयैः।
तेषु राजसहस्रेषु तावकेषु महात्मसु। एको दुर्य्योधनो राजन्नदृश्यत भृशं क्षतः।
ततो वीक्ष्य दिशः सर्व्वा दृष्ट्वा शून्याञ्च मेदिनीं। विहीनः सर्व्वयोधैश्च पाण्डवान् वीक्ष्य संयुगे।
मुदितान् सर्व्वतः सिद्धान् नर्द्दमानान् समन्ततः। वाणशब्दरवांश्चैव श्रुत्वा तेषां महात्मनां।
दुर्य्योधनो महाराज कश्मलेनाभिसंवृतः। अपयाने मनश्चक्रे विहीनबलवाहनः। १५८५
॥ धृतराष्ट्र उवाच ॥ निहते मामके सैन्ये निःशेषे शिविरे कृते। पाण्डवानां बले सूत किन्नु शेषमभूत्तदा।
एतन्मे पृच्छतो ब्रूहि कुशलो ह्यसि सञ्जय। यच्च दुर्य्योधनो मन्दः कृतवांस्तनयो मम।
बलक्षयं तदा दृष्ट्वा स एकः पृथिवीपतिः।
॥ सञ्जय उवाच ॥ रथानां द्वे सहस्रे तु सप्त नागशतानि च। पञ्च चाश्वसहस्राणि पत्तीनाञ्च शतं शताः।
एतच्छेषमभूद्राजन् पाण्डवानां महद्बलं। परिगृह्य हि यद्युद्धे धृष्टद्युम्नो व्यवस्थितः। १५९०
एकाकी भरतश्रेष्ठ ततो दुर्य्योधनो नृपः। नापश्यत् समरे कञ्चित् सहायं रथिनाम्बरः।
नर्द्दमानान् परान्दृष्ट्वा स्वबलस्य च सङ्क्षयं। तथा दृष्ट्वा महाराज स एकः पृथिवीपतिः।
हतं स्वहयमुत्सृज्य प्राङ्मुखः प्राद्रवद्भयात्। एकादशचमूभर्त्ता पुत्रो दुर्य्योधनस्तव।
गदामादाय तेजस्वी पदातिः प्रस्थितो ह्रदं। नातिदूरं ततो गत्वा पद्भ्यामेव नराधिप।
सस्मार वचनं क्षत्तुर्धर्म्मशीलस्य धीमतः। इदं नूनं महाप्राज्ञो विदुरो दृष्टवान् पुरा। १५९५
महद्वैशसमस्माकं क्षत्रियाणाञ्च संयुगे। एवं विचिन्तयानस्तु प्रविविक्षुर्ह्रदं नृपः।
दुःखसन्तप्तहृदयो दृष्ट्वा राजन् बलक्षयं। पाण्डवास्तु महाराज धृष्टद्युम्नपुरोगमाः।
अभ्यद्रवन्त संक्रुद्धास्तव राजन् बलं प्रति। शक्त्यृष्टिप्रासहस्तानां बलानामभिगर्ज्जतां।
सङ्कल्पमकरोन्मोघं गाण्डीवेन धनञ्जयः। तान् हत्वा निशितैर्ब्बाणैः सामात्यान् सह बन्धुभिः।
रथे श्वेतहये तिष्ठन्नर्ज्जुनो बह्वशोभत। सुबलस्य हते पुत्रे सवाजिरथकुञ्जरे। १६००
महावनमिव च्छिन्नमभवत्तावकं बलं। अनेकशतसाहस्रे बले दुर्य्योधनस्य ह।
नान्यो महारथो राजन् जीवमानो व्यदृश्यत। द्रोणपुत्रादृते वीरात्तथैव कृतवर्म्मणः।

कृपाच्च गौतमाद्राजन् पार्थिवाच्च तवात्मजात्। धृष्टद्युम्नस्तु मां दृष्ट्वा सह सात्यकिनाऽब्रवीत्।
किमनेन गृहीतेन नानेनार्थोऽस्ति जीवता। धृष्टद्युम्नवचः श्रुत्वा शिनेर्नप्ता महारथः।
उद्यम्य निशितं खड्गं हन्तुं मामुद्यतस्तदा। तमागम्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत्। १९०५
मुच्यतां सञ्जयो जीवन् न हन्तव्यः कथञ्चन। द्वैपायनवचः श्रुत्वा शिनेर्नप्ता कृताञ्जलिः।
ततो मामब्रवीन्मुक्त्वा स्वस्ति सञ्जय साधय। अनुज्ञातस्त्वहं तेन न्यस्तवर्म्मा निरायुधः।
प्रातिष्ठं येन नगरं सायाह्ने रुधिरोक्षितः। क्रोशमात्रमपक्रान्तं गदापाणिमवस्थितं।
एकं दुर्य्योधनं राजन्नपश्यं भृशविक्षतं। स तु मामश्रुपूर्णाक्षो नाशक्नोदभिवीक्षितुं।
उपप्रैक्षत मां दृष्ट्वा तथा दीनमवस्थितं। तञ्चाहमपि शोचन्तं दृष्ट्वैकाकिनमाहवे। १९१०
मुहूर्त्तं नाशकं वक्तुमतिदुःखपरिप्लुतं। ततोऽस्मै तदहं सर्व्वमुक्तवान् ग्रहणं तदा।
द्वैपायनप्रसादाच्च जीवतो मोक्षमात्मनः। स मुहूर्त्तमिव ध्यात्वा प्रतिलभ्य च चेतनां।
भ्रातॄंश्च सर्व्वसैन्यानि पर्य्यपृच्छत मां ततः। तस्मै तदहमाचक्षे सर्व्वं प्रत्यक्षदर्शिवान्।
भ्रातॄंश्च निहतान् सर्व्वान् सैन्यञ्च विनिपातितं। त्रयः किल रथाः शिष्टास्तावकानां नराधिप।
इति प्रस्थानकाले मां कृष्णद्वैपायनोऽब्रवीत्। स दीर्घमिव निःश्वस्य प्रत्यवेक्ष्य पुनः पुनः। १९१५
अंसे मां पाणिना स्पृष्ट्वा पुत्रस्ते पर्य्यभाषत। त्वदन्यो नेह सङ्ग्रामे कश्चिज्जीवति सञ्जय।
द्वितीयं नेह पश्यामि ससहायाश्च पाण्डवाः। ब्रूयाः सञ्जय राजानं प्रज्ञाचक्षुषमीश्वरं।
दुर्य्योधनस्तव सुतः प्रविष्टो ह्रद इत्युत। सुहृद्भिस्तादृशैर्हीनः पुत्रैर्भ्रातृभिरेव च।
पाण्डवैश्च हृते राज्ये को नु जीवेत मादृशः। आचक्षीथाः सर्व्वमिदं माञ्च मुक्तं महाहवात्।
तस्मिंस्तोयह्रदे गुप्तं जीवन्तं भृशविक्षतं। एवमुक्त्वा महाराज प्राविशत्तं महाह्रदं। १९२०
अस्तम्भयत तोयञ्च मायया मनुजाधिपः। तस्मिन् ह्रदे प्रविष्टे तु त्रीन्रथान् श्रान्तवाहनान्।
अपश्यं सहितानेकस्तं देशं समुपेयुषः। कृपं शारद्वतं वीरं द्रौणिञ्च रथिनाम्वरं।
भोजञ्च कृतवर्म्माणं सहितान् शरविक्षतान्। ते सर्व्वे मामभिप्रेक्ष्य तूर्णमश्वानचोदयन्।
उपयाय च मामूचुर्दिष्ट्या जीवसि सञ्जय। अपृच्छंश्चैव मां सर्व्वे पुत्रं तव जनाधिपं।
कच्चिद्दुर्य्योधनो राजा स नो जीवति सञ्जय। आख्यातवानहं तेभ्यस्तदा कुशलिनं नृपं। १९२५
तच्चैव सर्व्वमाचक्षं यन्मां दुर्य्योधनोऽब्रवीत्। ह्रदञ्चैवाहमाचक्षे यं प्रविष्टो नराधिपः।
अश्वत्थामा तु तद्राजन् निशम्य वचनं मम। तं ह्रदं विपुलं प्रेक्ष्य करुणं पर्य्यदेवयत्।
अहो धिङ्न स जानाति जीवतोऽस्मान्नराधिपः। पर्य्याप्ता हि वयं तेन सह योधयितुं परान्।
ते तु तत्र चिरं कालं विलप्य तु महारथाः। प्राद्रवन् रथिनां श्रेष्ठा दृष्ट्वा पाण्डुसुतान् रणे।
ते तु मां रथमारोप्य कृपस्य सुपरिष्कृतं। सेनानिवेशमाजग्मुर्हतशेषास्त्रयो रथाः। १९३०
तत्र गुल्माः परित्रस्ताः सूर्य्ये चास्तमिते सति। सर्व्वे विचुक्रुशुः श्रुत्वा पुत्राणां तव सङ्क्षयं।
ततो वृद्धा महाराज योषितां रक्षिणो नराः। राजदारानुपादाय प्रययुर्नगरं प्रति।

तत्र विक्रोशमानानां रुदतीनाञ्च सर्व्वशः । प्रादुरासीन्महाशब्दः श्रुत्वा तद्बलसंक्षयं ।
ततस्ता योषितो राजन् क्रन्दन्त्यो वै मुहुर्मुहुः । कुरर्य्य इव शब्देन नादयन्त्यो महीतलं ।
आजघ्नुः करजैश्चापि पाणिभिश्च शिरांस्युत । लुलुवुश्च तदा केशान् क्रोशन्त्यस्तत्र तत्र ह । १६३५
हाहाकारविनादिन्यो विनिघ्नन्त्य उरांसि च । क्रोशन्त्यस्तत्र रुरुदुः क्रन्दमाना विशाम्पते ।
ततो दुर्य्योधनामात्याः साश्रुकण्ठा भयातुराः । राजदारानुपादाय प्रययुर्नगरं प्रति ।
वेत्रव्यासक्तहस्ताश्च दाराध्यक्षा विशाम्पते । शयनीयानि शुभ्राणि स्पर्द्ध्यास्तरणवन्ति च ।
समादाय पुनस्तूर्णं नगरं जनरक्षणं । आस्थायाश्वतरीयुक्तान् स्यन्दनानपरे पुनः ।
स्वान् स्वान् दारानुपादाय प्रययुर्नगरं प्रति । अदृष्टपूर्व्वा या नार्य्यो भास्करेणापि वेश्मसु । १६४०
ददृशुस्ता महाराज जना याता पुरं प्रति । ताः स्त्रियो भरतश्रेष्ठ सौकुमार्य्यसमन्विताः ।
प्रययुर्नगरं तूर्णं हतस्वजनबान्धवाः । आगोपालाविपालेभ्यो द्रवन्तो नगरं प्रति ।
ययुर्मनुष्याः सम्भ्रान्ता भीमसेनभयार्द्दिताः । अपि चैषां भयं तीव्रं पार्थेभ्योऽभूत् सुदारुणं ।
प्रेक्षमाणास्तदाऽन्योन्यमधावन्नगरं प्रति । तस्मिंस्तथा वर्त्तमाने विद्रवे भृशदारुणे ।
युयुत्सुः शोकसंमूढः प्राप्तकालमचिन्तयत् । जितो दुर्य्योधनः संख्ये पाण्डवैर्भीमविक्रमैः । १६४५
एकादशचमूभर्त्ता भ्रातरश्चास्य सूदिताः । हताश्च कुरवः संख्ये भीष्मद्रोणपुरःसराः ।
अहमेको विमुक्तस्तु भाग्ययोगाद्यदृच्छया । विद्रुतानि च सर्व्वाणि शिबिराणि समन्ततः ।
इतस्ततः पलायन्ते हतनाथा हतौजसः । अदृष्टपूर्व्वा दुःखार्त्ता भयव्याकुललोचनाः ।
हरिणा इव वित्रस्ता वीक्षमाणा दिशो दश । दुर्य्योधनस्य सचिवा ये केचिदवशेषिताः ।
राजदारानुपादाय प्रययुर्नगरं प्रति । प्राप्तकालमहं मन्ये प्रवेशन्तैः सह प्रभो । १६५०
युधिष्ठिरमनुज्ञाप्य भीमसेनं तथैव च । एतदर्थं महाबाहुरुभयोः संन्यवेदयत् ।
तस्य प्रीतोऽभवद्राजा नित्यं करुणवेदिता । परिष्वज्य महाबाहुर्वैश्यापुत्रं व्यसर्ज्जयत् ।
ततः स रथमास्थाय द्रुतमश्वानचोदयत् । संवाहयितवांश्चापि राजदारान् पुरं प्रति ।
तैश्चैव सहितः क्षिप्रमस्तं गच्छति भास्करे । प्रविष्टो हास्तिनपुरं बाष्पकण्ठोऽश्रुलोचनः ।
अपश्यत महाप्राज्ञं विदुरं साश्रुलोचनं । राज्ञः समीपान्निष्क्रान्तं शोकोपहतचेतसं । १६५५
तमब्रवीत् सत्यधृतिः प्रणतं त्वग्रतः स्थितं । दिष्ट्या कुरुक्षये वृत्ते अस्मिंस्त्वं पुत्र जीवसि ।
विना राज्ञः प्रवेशाद्वै किमसि त्वमिहागतः । एतद्वै कारणं सर्व्वं विस्तरेण निवेदय ।
॥ युयुत्सुरुवाच ॥ निहते शकुनौ तत्र सज्ञातिसुतबान्धवे । हतशेषपरीवारो राजा दुर्य्योधनस्ततः ।
स्वकं स हयमुत्सृज्य प्राङ्मुखः प्राद्रवद्भयात् । अपक्रान्ते तु नृपतौ स्कन्धावारनिवेशनात् ।
भयव्याकुलितं सर्व्वं प्राद्रवन्नगरं प्रति । ततो राज्ञः कलत्राणि भ्रातृणां चास्य सर्व्वशः । १६६०
वाहनेषु समारोप्य अध्यक्षाः प्राद्रवन् भयात् । ततोऽहं समनुज्ञाप्य राजानं सहकेशवं ।
प्रविष्टो हास्तिनपुरं रक्षन् लोकान् प्रधावितान् । एतच्छ्रुत्वा तु वचनं वैश्यापुत्रेण भाषितं ।

प्राप्तकालमिदं सर्व्वं विदुरः सर्व्वधर्म्मवित् । अपूजयदमेयात्मा युयुत्सुं वाक्यमब्रवीत् ।
प्राप्तकालमिदं सर्व्वं भवतो भरतक्षये । रक्षितः कुलधर्म्मश्च सानुक्रोशतया त्वया ।
दिष्ट्या त्वामिह संग्रामादस्माद्वीरक्षयात् पुरं । समागतमपश्याम अंशुमन्तमिव प्रजाः । १७६५
अन्धस्य नृपतेर्यष्टिर्लुब्धस्यादीर्घदर्शिनः । बहुशो याच्यमानस्य दैवोपहतचेतसः ।
त्वमेको व्यसनार्त्तस्य जीवसे पुत्र सर्व्वशः । अद्य त्वमिह विश्रान्तः श्वोऽभिगन्ता युधिष्ठिरं ।
एतावदुक्त्वा वचनं विदुरः साश्रुलोचनः । युयुत्सुं समनुप्राप्य प्रविवेश नृपक्षयं ।
पौरजानपदैर्दुःखाद्धाहेति भृशनादितं । निरानन्दं गतश्रीकं हतारामभिव क्षयं ।
शून्यरूपमपध्वस्तं दुःखाद्दुःखतरोऽभवत् । विदुरः सर्व्वधर्म्मज्ञो विक्लवेनान्तरात्मना । १७७०
विवेश नगरं राजन् निश्वसंश्च शनैः शनैः । युयुत्सुरपि तां रात्रिं स्वगृहे न्यवसत्तदा ।
वन्द्यमानः स्वकैश्चापि नाभ्यनन्दत् सुदुःखितः । चिन्तयानः क्षयं तीव्रं भारतानां परस्परं ।
इति श्रीमहाभारते शल्यपर्व्वणि ह्रदप्रवेशपर्व्वणि युयुत्सुगमने त्रिंशोऽध्यायः ॥३०॥

॥ धृतराष्ट्र उवाच ॥ हतेषु सर्व्वसैन्येषु पाण्डुपुत्रैरणाजिरे । मम सैन्यावशिष्टास्ते किमकुर्व्वत सञ्जय ।
कृतवर्म्मा कृपश्चैव द्रोणपुत्रश्च वीर्य्यवान् । दुर्य्योधनश्च मन्दात्मा राजा किमकरोत्तदा ।
॥ सञ्जय उवाच ॥ सम्प्राद्रवत्सु दारेषु क्षत्रियाणां महात्मनां । विद्रुते शिविरे शून्ये भृशोद्विग्नास्त्रयो रथाः । १७७५
निशम्य पाण्डुपुत्राणां तदा वै जयिनां स्वनं । विद्रुतं शिविरं दृष्ट्वा सायाह्ने राजगृद्धिनः ।
स्थानं नारोचयंस्तत्र ततस्ते ह्रदमभ्ययुः । युधिष्ठिरोऽपि धर्म्मात्मा भ्रातृभिः सहितो रणे ।
हृष्टः पर्य्यचरद्राजन् दुर्य्योधनवधेप्सया । मार्गमाणास्तु तं क्रुद्धास्तव पुत्रं जयैषिणः ।
यत्नतोऽन्वेषमाणास्ते नैवापश्यन् जनाधिपं । स हि तीव्रेण वेगेन गदापाणिरपाक्रमत् ।
तं ह्रदं प्राविशच्चापि विष्टभ्यापः स्वमायया । यदा तु पाण्डवाः सर्व्वे सुपरिश्रान्तवाहनाः । १७८०
ततः स्वशिविरं प्राप्य व्यतिष्ठन्त ससैनिकाः । ततः कृपश्च द्रौणिश्च कृतवर्म्मा च सात्वतः ।
सन्निविष्टेषु पार्थेषु प्रयातास्तं ह्रदं शनैः । ते तं ह्रदं समासाद्य यत्र शेते जनाधिपः ।
अभ्यभाषन्त दुर्द्धर्षं राजानं सुप्तमम्भसि । राजन्नुत्तिष्ठ युध्यस्व सहास्माभिर्युधिष्ठिरं ।
जित्वा वा पृथिवीं भुङ्क्ष्व हतो वा स्वर्गमाप्नुहि । तेषामपि बलं सर्व्वं हतं दुर्य्योधन त्वया ।
प्रतिविद्धाश्च भूयिष्ठं ये शिष्टास्तत्र सैनिकाः । न ते वेगं विषहितुं शक्तास्तव विशाम्पते । १७८५
अस्माभिरभिगुप्तस्य तस्मादुत्तिष्ठ भारत ।
॥ दुर्य्योधन उवाच ॥ दिष्ट्या पश्यामि वो मुक्तानीदृशात् पुरुषक्षयात् । पाण्डुकौरवसंमर्द्दाज्जीवमानान्नरर्षभान् ।
विजेष्यामो वयं सर्व्वे विश्रान्ता विगतक्लमाः । भवन्तश्च परिश्रान्ता वयञ्च भृशविक्षताः ।
उदीर्णं च बलं तेषां तेन युद्धं न रोचये । न त्वेतदद्भुतं वीरा यद्वो महदिदं मनः ।
अस्मासु च परा भक्तिर्न तु कालः पराक्रमे । विश्रम्यैकां निशामद्य भवद्भिः सहितो रणे । १७९०
प्रतियोत्स्याम्यहं शत्रून् श्वो न मेऽस्त्यत्र संशयः ।

॥ सञ्जय उवाच ॥ एवमुक्तोऽब्रवीद्द्रौणी राजानं युद्धदुर्म्मदं। उत्तिष्ठ राजन् भद्रन्ते विजेष्यामो वयं परान्।
इष्टापूर्त्तेन दानेन सत्येन च जपेन च। शपे राजन् यथा ह्यद्य निहनिष्यामि सोमकान्।
मा स्म यज्ञकृतां प्रीतिमाप्नुयां सज्जनोचितां। यदीमां रजनीं व्युष्टां न हि हन्मि परान् रणे।
नाहत्वा सर्व्वपाञ्चालान् विमोक्ष्ये कवचं विभो। इति सत्यं ब्रवीम्येतत्तन्मे शृणु जनाधिप। १७९९
तेषु सम्भाषमाणेषु व्याधास्तं देशमाययुः। मांसभारपरिश्रान्ताः पानीयार्थं यदृच्छया।
ते हि नित्यं महाराज भीमसेनस्य लुब्धकाः। मांसभारानुपाजह्रुर्भक्त्या परमया विभो।
ते तत्राधिष्ठितास्तेषां सर्व्वं तद्वचनं रहः। दुर्य्योधनवचश्चैव शुश्रुवुः सङ्गता मिथः।
तेऽपि सर्व्वे महेष्वासा अयुद्धार्थिनि कौरवे। निर्ब्बन्धं परमञ्चक्रुस्तदा वै युद्धकाङ्क्षिणः।
तांस्तथा समुदीक्ष्याथ कौरवाणां महारथान्। अयुद्धमनसञ्चैव राजानं स्थितमम्भसि। १८००
तेषां श्रुत्वा च संवादं राज्ञश्च सलिले सतः। व्याधाऽभ्यजानन् राजेन्द्र सलिलस्थं सुयोधनं।
ते पूर्व्वं पाण्डुपुत्रेण पृष्टा ह्यासन् सुतन्तव। यदृच्छोपगतास्तत्र राजानं परिमार्गता।
ततस्ते पाण्डुपुत्रस्य स्मृत्वा तद्भाषितं तदा। अन्योन्यमब्रुवन् राजन्मृगव्याधाः शनैरिदं।
दुर्य्योधनं ख्यापयामो धनं दास्यति पाण्डवः। सुव्यक्तमिह नः ख्यातो ह्रदे दुर्य्योधनो नृपः।
तस्माद्गच्छामहे सर्व्वे यत्र राजा युधिष्ठिरः। आख्यातुं सलिले सुप्तं दुर्य्योधनममर्षणं। १८०५
धृतराष्ट्रात्मजं तस्मै भीमसेनाय धीमते। शयानं सलिले सर्व्वे कथयामो धनुर्भृते।
स नो दास्यति सुप्रीतो धनानि बहुलान्युत। किं नो मांसेन शुष्केण परिक्लिष्टेन शोषिणा।
एवमुक्त्वा तु ते व्याधाः सम्प्रहृष्टा धनार्थिनः। मांसभारानुपादाय प्रययुः शिबिरं प्रति।
पाण्डवापि महाराज लब्धलक्षाः प्रहारिणः। अपश्यमानाः समरे दुर्य्योधनमवस्थितं।
निकृतेस्तस्य पापस्य ते पारं गमनेप्सवः। चारान् सम्प्रेषयामासुः समन्तात्तद्रणाजिरे। १८१०
आगम्य तु ततः सर्व्वे नष्टं दुर्य्योधनं नृपं। न्यवेदयन्त सहिता धर्म्मराजस्य सैनिकाः।
तेषां तद्वचनं श्रुत्वा चाराणां भरतर्षभ। चिन्तामभ्यगमत्तीव्रां निशश्वास च पार्थिवः।
अथ स्थितानां पाण्डूनां दीनानां भरतर्षभ। तस्माद्देशादपक्रम्य त्वरिता लुब्धका विभो।
आजग्मुः शिबिरं हृष्टा दृष्ट्वा दुर्य्योधनं नृपं। वार्य्यमाणाः प्रविष्टाश्च भीमसेनस्य पश्यतः।
ते तु पाण्डवमासाद्य भीमसेनं महाबलं। तस्मै तत् सर्व्वमाचख्युर्यद्वृत्तं यच्च वै श्रुतं। १८१५
ततो वृकोदरो राजन् दत्त्वा तेषां धनं बहु। धर्म्मराजाय तत् सर्व्वमाचचक्षे परन्तपः।
असौ दुर्य्योधनो राजन् विज्ञातो मम लुब्धकैः। संस्तभ्य सलिलं शेते यस्यार्थे परितप्यसे।
तद्वचो भीमसेनस्य प्रियं श्रुत्वा विशाम्पते। अजातशत्रुः कौन्तेयो हृष्टोऽभूत् सह सोदरैः।
तञ्च श्रुत्वा महेष्वासं प्रविष्टं सलिले ह्रदं। क्षिप्रमेव ततोऽगच्छत् पुरस्कृत्य जनार्द्दनं।
ततः किलकिलाशब्दः प्रादुरासीद्विशाम्पते। पाण्डवानां प्रहृष्टानां पाञ्चालानाञ्च सर्व्वशः। १८२०
सिंहनादांस्ततश्चक्रुः क्ष्वेडांश्च भरतर्षभ। त्वरिताः क्षत्रिया राजन् जग्मुर्द्वैपायनं ह्रदं।

ज्ञातः पापो धार्त्तराष्ट्रो दृष्टश्चैव जलाशये । प्राक्रोशन् भीमसेनस्य दूतरूपाः समन्ततः ।
तेषामाशु प्रयातानां रथानां तत्र वेगिनां । बभूव तुमुलः शब्दो दिवस्पृक् पृथिवीपते ।
दुर्य्योधनं परीप्सन्तस्तत्र तत्र युधिष्ठिरं । अन्वयुस्त्वरितास्ते वै राजानं श्रान्तवाहनाः ।
अर्ज्जुनो भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ । धृष्टद्युम्नश्च पाञ्चाल्यः शिखण्डी चापराजितः । १०२५
उत्तमौजा युधामन्युः सात्यकिश्च महारथः । पञ्चालानाञ्च ये शिष्टा द्रौपदेयाश्च भारत ।
हयाश्च सर्व्वे नागाश्च शतशश्च पदातयः । ततः प्राप्तो महाराज धर्म्मराजः प्रतापवान् ।
द्वैपायनह्रदं घोरं यत्र दुर्य्योधनोऽभवत् । शीतामलजलं रम्यं द्वितीयमिव सागरं ।
मायया सलिलं स्तभ्य यत्राभूत्ते स्थितः सुतः । अत्यद्भुतेन विधिना दैवयोगेन भारत ।
सलिलान्तर्गतः शेते दुर्द्दर्शः कस्यचित् प्रभो । मानुषस्य मनुष्येन्द्र गदाहस्तो जनाधिपः । १०३०
ततो दुर्य्योधनो राजा सलिलान्तर्गतो वसन् । शुश्रुवे तुमुलं शब्दं जलदोपमनिःस्वनं ।
युधिष्ठिरस्तु राजेन्द्र तं ह्रदं सह सोदरैः । आजगाम महाराज तव पुत्त्रवधाय वै ।
महता शङ्खनादेन रथनेमिस्वनेन च । ऊर्द्धं धुन्वन् महारेणुं कम्पयंश्चापि मेदिनीं ।
यौधिष्ठिरस्य सैन्यस्य श्रुत्वा शब्दं महारथाः । कृतवर्म्मा कृपो द्रौणी राजानमिदमब्रुवन् ।
इमे ह्यायान्ति संहृष्टाः पाण्डवा जितकाशिनः । अपयास्यामहे तावदनुजानातु नो भवान् । १०३५
दुर्य्योधनस्तु तच्छ्रुत्वा तेषां तत्र तरस्विनां । तथेत्युक्त्वा ह्रदं तं वै मायया ऽस्तम्भयत् प्रभो ।
ते त्वनुज्ञाप्य राजानं भृशं शोकपरायणाः । जग्मुर्दूरे महाराज कृपप्रभृतयो रथाः ।
ते गत्वा दूरमध्वानं न्यग्रोधं प्रेक्ष्य मारिष । न्यविशन्त भृशं श्रान्ताश्चिन्तयन्तो नृपं प्रति ।
विष्टभ्य सलिलं सुप्तो धार्त्तराष्ट्रो महाबलः । पाण्डवाश्चापि संप्राप्तास्तं देशं युद्धमीप्सवः ।
कथं नु युद्धं भविता कथं राजा भविष्यति । कथं नु पाण्डवा राजन् प्रतिपत्स्यन्ति कौरवं । १०४०
इत्येवं चिन्तयानास्तु रथेभ्योऽश्वान् विमुच्य ते । तत्रासाञ्चक्रिरे राजन् कृपप्रभृतयो रथाः ।
इति श्रीमहाभारते शल्यपर्व्वणि ह्रदप्रवेशपर्व्वणि दुर्य्योधनान्वेषणे एकत्रिंशोऽध्यायः ॥ ३१ ॥
॥ सञ्जय उवाच ॥ ततस्तेष्वपयातेषु रथेषु त्रिषु पाण्डवाः । तं ह्रदं प्रत्यपद्यन्त यत्र दुर्य्योधनोऽभवत् ।
आसाद्य च कुरुश्रेष्ठ तदा द्वैपायनं ह्रदं । स्तम्भितं धार्त्तराष्ट्रेण दृष्ट्वा तं सलिलाशयं ।
वासुदेवमिदं वाक्यमब्रवीत् कुरुनन्दनः । पश्येमां धार्त्तराष्ट्रेण मायामप्सु प्रयोजितां ।
विष्टभ्य सलिलं शेते नास्य मानुषतो भयं । दैवीं मायामिमां कृत्वा सलिलान्तर्गतो ह्ययं । १०४५
निकृत्या निकृतिप्रज्ञो न मे जीवन् विमोक्ष्यते । यद्यस्य समरे साह्यं कुरुते वज्रभृत् स्वयं ।
तथाऽप्येनं हतं युद्धे लोका द्रक्ष्यन्ति माधव ।
॥ वासुदेव उवाच ॥ मायाविन इमां मायां मायया जहि भारत । मायावी मायया वध्यः सत्यमेतद् युधिष्ठिर ।
क्रियाभ्युपायैर्ब्बहुभिर्मायामप्सु प्रयोज्य च । जहि त्वं भरतश्रेष्ठ मायात्मानं सुयोधनं ।
क्रियाभ्युपायैरिन्द्रेण निहता दैत्यदानवाः । क्रियाभ्युपायैर्ब्बहुभिर्ब्बलिर्ब्बद्धो महात्मना । १०५०

क्रियाभ्युपायैर्बहुभिर्हिरण्याक्षो महासुरः। हिरण्यकशिपुश्चैव क्रिययैव निषूदितौ।
वृत्रश्च निहतो राजन् क्रिययैव न संशयः। तथा पौलस्त्यतनयो रावणो नाम राक्षसः।
रामेण निहतो राजन् सानुबन्धः सहानुगः। क्रियया योगमास्थाय तथा त्वमपि विक्रम।
क्रियाभ्युपायैर्निहतौ मया राजन् पुरातनौ। तारकश्च महादैत्यो विप्रचित्तिश्च वीर्य्यवान्।
वातापिरिल्वलश्चैव त्रिशिराश्च तथा विभो। सुन्दोपसुन्दावसुरौ क्रिययैव निषूदितौ। १०५५
क्रियाभ्युपायैरिन्द्रेण त्रिदिवं भुज्यते विभो। क्रिया बलवती राजन्नान्यत् किञ्चिद्युधिष्ठिर।
दैत्याश्च दानवाश्चैव राक्षसाः पार्थिवास्तथा। क्रियाभ्युपायैर्निहताः क्रियास्तस्मात् समाचर।
॥ सञ्जय उवाच ॥ इत्युक्तो वासुदेवेन पाण्डवः संशितव्रतः। जलस्थं तं महाराज तव पुत्रं महाबलं।
अभ्यभाषत कौन्तेयः प्रहसन्निव भारत। सुयोधन किमर्थोऽयमारम्भोऽप्सु कृतस्त्वया।
सर्व्वं क्षत्रं घातयित्वा स्वकुलञ्च विशाम्पते। जलाशयं प्रविष्टोऽद्य वाञ्छन् जीवितमात्मनः। १०६०
उत्तिष्ठ राजन् युध्यस्व सहास्माभिः सुयोधन। स ते दर्पो नरश्रेष्ठ स च मानः क्व ते गतः।
यस्त्वं संस्तभ्य सलिलं भीतो राजन् व्यवस्थितः। सर्व्वे त्वां शूर इत्येवं जना जल्पन्ति संसदि।
व्यर्थं तद्भवतो मन्ये शौर्य्यं सलिलशायिनः। उत्तिष्ठ राजन् युध्यस्व क्षत्रियोऽसि कुलोद्भवः।
कौरवेयो विशेषेण कुलं जन्म च संस्मर। स कथं कौरवे वंशे प्रशंसन् जन्म चात्मनः।
युद्धाद्भीतस्ततस्तोयं प्रविश्य प्रतितिष्ठसि। अयुद्धमव्यवस्थानं नैष धर्म्मः सनातनः। १०६५
अनार्य्यजुष्टमस्वर्ग्यं रणे राजन् पलायनं। कथं पारमगत्वा हि युद्धे त्वं वै जिजीविषुः।
इमान्निपतितान्दृष्ट्वा पुत्त्रान् भ्रातॄन् पितॄंस्तथा। सम्बन्धिनो वयस्यांश्च मातुलान् बान्धवांस्तथा।
घातयित्वा कथं तात ह्रदे तिष्ठसि साम्प्रतं। शूरमानी न शूरस्त्वं मृषा वदसि भारत।
शूरोऽहमिति दुर्ब्बुद्धे सर्व्वलोकस्य शृण्वतः। न हि शूराः पलायन्ते शत्रून्दृष्ट्वा कथञ्चन।
ब्रूहि वा त्वं यया धृत्या दूरं त्यजसि सङ्गरं। स त्वमुत्तिष्ठ युध्यस्व विनीय भयमात्मनः। १०७०
घातयित्वा सर्व्वसैन्यं भ्रातॄंश्चैव सुयोधन। नेदानीं जीविते बुद्धिः कार्य्या धर्म्मचिकीर्षया।
क्षत्रधर्म्ममपाश्रित्य त्वद्विधेन सुयोधन। यत्तु कर्णमपाश्रित्य शकुनिञ्चापि सौबलं।
अमर्त्य इव संमोहात् त्वमात्मानं न बुद्धवान्। तत्पापं सुमहत् कृत्वा प्रतियुध्यस्व भारत।
कथं हि त्वद्विधो मोहाद्रोचयेत पलायनं। क्व ते तत् पौरुषं यातं क्व च मानः सुयोधन।
क्व च विक्रान्तता याता क्व च विस्फूर्जितं महत्। क्व ते कृतास्त्रता याता किञ्च शेषे जलाशये। १०७५
स त्वमुत्तिष्ठ युध्यस्व क्षत्रधर्म्मेण भारत। अस्मांस्तु वा पराजित्य प्रशाधि पृथिवीमिमां।
अथ वा निहतोऽस्माभिर्भूमौ स्वप्स्यसि भारत। एष ते परमो धर्म्मः सृष्टो धात्रा महात्मना।
तं कुरुष्व यथातथ्यं राजा भव महारथ।
॥ सञ्जय उवाच ॥ एवमुक्तो महाराज धर्म्मपुत्त्रेण धीमता। सलिलस्थस्तव सुत इदं वचनमब्रवीत्।
॥ दुर्य्योधन उवाच ॥ नैतच्चित्रं महाराज यद्भीः प्राणिनमाविशेत्। न च प्राणभयाद्भीतो व्यपयातोऽस्मि भारत। १०८०

अरथश्चानिषङ्गी च निहतः पार्ष्णिसारथिः । एकश्चाप्यगणः संख्ये प्रत्याश्वासमरोचयं ।
न प्राणहेतोर्न भयान्न विषादाद्विशाम्पते । इदमम्भः प्रविष्टोऽस्मि श्रमात्त्विदमनुष्ठितं ।
त्वञ्चाश्वसिहि कौन्तेय ये चाप्यनुगतास्तव । अहमुत्थाय वः सर्व्वान् प्रतियोत्स्यामि संयुगे ।
॥ युधिष्ठिर उवाच ॥ आश्वस्ता एव सर्व्वे स्म चिरं त्वां मृगयामहे । तदिदानीं समुत्तिष्ठ युध्यस्वेह सुयोधन ।
हत्वा वा समरे पार्थान् स्फीतं राज्यमवाप्नुहि । निहतो वा रणेऽस्माभिर्व्वीरलोकमवाप्स्यसि । १७८५
॥ दुर्य्योधन उवाच ॥ यदर्थं राज्यमिच्छामि कुरूणां कुरुनन्दन । त इमे निहताः सर्व्वे भ्रातरो मे जनेश्वर ।
क्षीणरत्नाञ्च पृथिवीं हतक्षत्रियपुङ्गवां । न ह्युत्सहाम्यहं भोक्तुं विधवामिव योषितं ।
अद्यापि त्वहमाशंसे त्वां विजेतुं युधिष्ठिर । भङ्क्त्वा पाञ्चालपाण्डूनामुत्साहं भरतर्षभ ।
न त्विदानीमहं मन्ये कार्य्यं युद्धेन कर्हिचित् । द्रोणे कर्णे च संशान्ते निहते च पितामहे ।
अस्त्विदानीमियं राजन् केवला पृथिवी तव । असहायो हि को राजा राज्यमिच्छेत् प्रशासितुं । १७९०
सुहृदस्तादृशान् हत्वा पुत्त्रान् भ्रातॄन् पितॄनपि । भवद्भिश्च हृते राज्ये को नु जीवेत मादृशः ।
अहं वनं गमिष्यामि ह्यजिनैः प्रतिवासितः । रतिर्हि नास्ति मे राज्ये हतपक्षस्य भारत ।
हतबान्धवभूयिष्ठा हताश्वा हतकुञ्जरा । एषा ते पृथिवी राजन् भुङ्क्ष्वैनां विगतज्वरः ।
वनमेव गमिष्यामि वसानो मृगचर्म्मणी । नहि मे निर्ज्जनस्यास्ति जीवितेऽद्य स्पृहा विभो ।
गच्छ त्वं भुङ्क्ष्व राजेन्द्र पृथिवीं निहतेश्वरां । हतयोधां नष्टरत्नां क्षीणवप्रां यथासुखं । १७९५
॥ सञ्जय उवाच ॥ दुर्य्योधनं तव सुतं सलिलस्थं महायशाः । श्रुत्वा तु करुणं वाक्यमभाषत युधिष्ठिरः ।
॥ युधिष्ठिर उवाच ॥ आर्त्तप्रलापान्मा तात सलिलस्थः प्रभाषिथाः । नैतन्मनसि मे राजन् वाशितं शकुनेरिव ।
यदि वाऽपि समर्थः स्यास्त्वं दानाय सुयोधन । नाहमिच्छेयमवनिं त्वया दत्तां प्रशासितुं ।
अधर्म्मेण न गृह्णीयां त्वया दत्तां महीमिमां । न हि धर्म्मः स्मृतो राजन् क्षत्रियस्य प्रतिग्रहः ।
त्वया दत्तां न चेच्छेयं पृथिवीमखिलामहं । त्वान्तु युद्धे विनिर्ज्जित्य भोक्ताऽस्मि वसुधामिमां । १८००
अनीश्वरश्च पृथिवीं कथं त्वं दातुमिच्छसि । त्वयेयं पृथिवी राजन् किं न दत्ता तदैव हि ।
धर्म्मतो याचमानानां शमार्थञ्च कुलस्य च । वार्ष्णेयं प्रथमं राजन् प्रत्याख्याय महाबलं ।
किमिदानीं ददासि त्वं को हि ते चित्तविभ्रमः । अभियुक्तस्तु को राजा दातुमिच्छेद्धि मेदिनीं ।
न त्वमद्य महीं दातुमीशः कौरवनन्दन । आच्छेत्तुं वा बलाद्राजन् स कथं दातुमिच्छसि ।
मान्तु निर्ज्जित्य संग्रामे पालयेमां वसुन्धरां । सूच्यग्रेणापि यद्भूमेरपि ध्रीयेत भारत । १८०५
तन्मात्रमपि नो मह्यं न ददाति पुरा भवान् । स कथं पृथिवीमेतां प्रददासि विशाम्पते ।
सूच्यग्रं नात्यजः पूर्व्वं स कथं त्यजसि क्षितिं । एवमैश्वर्य्यमासाद्य प्रशास्य पृथिवीमिमां ।
को हि मूढो व्यवस्येत शत्रोर्द्दातुं वसुन्धरां । त्वन्तु केवलमौर्ख्येण विमूढो नावबुध्यसे ।
पृथिवीं दातुकामोऽपि जीवितेन विमोक्ष्यसे । अस्मान् वा त्वं पराजित्य प्रशाधि पृथिवीमिमां ।
अथ वा निहतोऽस्माभिर्व्रज लोकाननुत्तमान् । आवयोर्जीवतो राजन् मयि च त्वयि च ध्रुवं । १८१०

संशयः सर्व्वभूतानां विजये नो भविष्यति। जीवितं तव दुष्प्रज्ञ मयि सम्प्रति वर्त्तते।
जीवयेयमहं कामं न तु त्वं जीवितुं क्षमः। दहने हि कृतो यत्नस्त्वयाऽस्मासु विशेषतः।
आशीविषैर्व्विषैश्चापि जले चापि प्रवेशनैः। त्वया विनिकृता राजन् राज्यस्य हरणेन च।
अप्रियाणाञ्च वचनैर्द्रौपद्याः कर्षणेन च। एतस्मात् कारणात् पाप जीवितं ते न विद्यते।
उत्तिष्ठोत्तिष्ठ युध्यस्व युद्धे श्रेयो भविष्यति। एवन्तु विविधा वाचो जययुक्ताः पुनः पुनः। १८१५
कीर्त्तयन्ति स्म ते वीरास्तत्र तत्र जनाधिप।
इति श्रीमहाभारते शल्यपर्व्वणि ह्रदप्रवेशपर्व्वणि दुर्य्योधनभर्त्सने द्वात्रिंशोऽध्यायः समाप्तञ्च ह्रदप्रवेशपर्व्व ॥ ३२ ॥

॥ अथ गदायुद्धपर्व्व ॥

॥ धृतराष्ट्र उवाच ॥ एवं सन्तर्ज्यमानस्तु मम पुत्त्रो महीपतिः। प्रकृत्या मन्युमान् वीरः कथमासीत् परन्तपः।
नहि सन्तर्ज्जना तेन श्रुतपूर्व्वा कथञ्चन। राजभावेन मान्यश्च सर्व्वलोकस्य सोऽभवत्।
यस्यातपत्रच्छायाऽपि स्वका भानोस्तथा प्रभा। खेदायैवाभिमानित्वात् सहेत्सैवं कथं गिरः।
इयञ्च पृथिवी सर्व्वा सम्लेच्छाटविका भृशं। प्रसादाद्ध्रियते यस्य प्रत्यक्षं तव सञ्जय। १८२०
स तथा तर्ज्यमानस्तु पाण्डुपुत्त्रैर्व्विशेषतः। विहीनश्च स्वकैर्भृत्यैर्निर्ज्जने चावृतो भृशं।
स श्रुत्वा कटुका वाचो जययुक्ताः पुनः पुनः। किमब्रवीत् पाण्डवेयांस्तन्ममाचक्ष्व सञ्जय।
॥ सञ्जय उवाच ॥ तर्ज्यमानस्तदा राजन्नुदकस्थस्तवात्मजः। युधिष्ठिरेण राजेन्द्र भ्रातृभिः सहितेन ह।
श्रुत्वा स कटुका वाचो विषमस्थो जनाधिपः। दीर्घमुष्णञ्च निःश्वस्य सलिलस्थः पुनः पुनः।
सलिलान्निर्गतो राजा धुन्वन् हस्तौ पुनः पुनः। मनश्चकार युद्धाय राजानञ्चाभ्यभाषत। १८२५
यूयं ससुहृदः पार्थाः सर्व्वे सरथवाहनाः। अहमेकः परिद्यूनो विरथो हतवाहनः।
आत्तशस्त्रै रथोपेतैर्ब्बहुभिः परिवारितः। कथमेकः पदातिः सन्नशस्त्रो योद्धुमुत्सहे।
एकैकेन तु मां यूयं योधयध्वं युधिष्ठिर। न ह्येको बहुभिर्व्वीरैर्न्याय्यो योधयितुं युधि।
विशेषतो विकवचः श्रान्तश्चापत्समाश्रितः। भृशं विक्षतगात्रश्च श्रान्तवाहनसैनिकः।
न मे त्वत्तो भयं राजन्न च पार्थाद्वृकोदरात्। फाल्गुनाद्वासुदेवाद्वा पाञ्चालेभ्योऽथ वा पुनः। १८३०
यमाभ्यां युयुधानाद्वा येऽन्ये तव च सैनिकाः। एकः सर्व्वानहं क्रुद्धो वारयिष्ये युधि स्थितः।
धर्म्ममूला सतां कीर्त्तिर्मनुष्याणां नराधिप। धर्म्मञ्चैवेह कीर्त्तिञ्च पालयन् प्रब्रवीम्यहं।
अहमुत्थाय सर्व्वान् वै प्रतियोत्स्यामि संयुगे। अनुगम्यागतान् सर्व्वानृतून् संवत्सरो यथा।
अद्य वः सरथान् साश्वानशस्त्रो विरथोऽपि सन्। नक्षत्राणीव सर्व्वाणि सविता रात्रिसंक्षये।
तेजसा नाशयिष्यामि स्थिरीभवत पाण्डवाः। अद्यानृण्यं गमिष्यामि क्षत्त्रियाणां यशस्विनां। १८३५
वाह्लीकद्रोणभीष्माणां कर्णस्य च महात्मनः। जयद्रथस्य शूरस्य भगदत्तस्य चोभयोः।
मद्रराजस्य शल्यस्य भूरिश्रवस एव च। पुत्त्राणां भरतश्रेष्ठ शकुनेः सौबलस्य च।

मित्राणां सुहृदाञ्चैव बान्धवानां तथैव च । आनृण्यमद्य गच्छामि हत्वा त्वां भ्रातृभिः सह ।
एतावदुक्त्वा वचनं विरराम नराधिपः ।
॥ युधिष्ठिर उवाच ॥ दिष्ट्या त्वमपि जानीषे क्षत्रधर्मं सुयोधन । दिष्ट्या ते वर्त्तते बुद्धिर्युद्धायैव महाभुज । १८३०
दिष्ट्या शूरोऽसि कौरव्य दिष्ट्या जानासि सङ्गरं । यस्त्वमेको हि नः सर्व्वान् संयुगे योद्धुमिच्छसि ।
एक एकेन सङ्गम्य यत्ते सम्मतमायुधं । तं त्वमादाय युध्यस्व प्रेक्षकास्ते वयं स्थिताः ।
अयमिष्टञ्च ते कामं वीर भूयो ददाम्यहं । हत्वैकं भवतो राज्यं हतो वा स्वर्गमाप्नुहि ।
॥ दुर्य्योधन उवाच ॥ एकश्चेद्योद्धुमाक्रन्दे शूरोऽद्य मम दीयतां । आयुधानामियञ्चापि वृता त्वत्सम्मते गदा ।
हत्वैकं भवतामेकः शक्यं मां योऽभिमन्यते । पदातिर्गदया संख्ये स युध्यतु मया सह । १८३५
वृत्तानि रथयुद्धानि विचित्राणि पदे पदे । इदमेकं गदायुद्धं भवत्वद्याद्भुतं महत् ।
अस्त्राणामपि पर्य्यायं कर्त्तुमिच्छन्ति मानवाः । युद्धानामपि पर्य्यायो भवत्वनुमते तव ।
गदया त्वां महाबाहो विजेष्यामि सहानुजं । पाञ्चालान् सृञ्जयांश्चैव ये चान्ये तव सैनिकाः ।
न हि मे सम्भ्रमो जातु शक्रादपि युधिष्ठिर ।
॥ युधिष्ठिर उवाच ॥ उत्तिष्ठोत्तिष्ठ गान्धारे मां योधय सुयोधन । एक एकेन सङ्गम्य संयुगे गदया बली । १८४०
पुरुषो भव गान्धारे युध्यस्व सुसमाहितः । अद्य ते जीवितं नास्ति यद्यिन्द्रोऽपि तवाश्रयः ।
॥ सञ्जय उवाच ॥ एतत् स नरशार्दूलो नामृष्यत तवात्मजः । सलिलान्तर्गतः श्वभ्रे महानाग इव श्वसन् ।
तथाऽसौ वाक्प्रतोदेन तुद्यमानः पुनः पुनः । वचो न ममृषे राजन्नुत्तमाश्वः कशामिव ।
सङ्क्षोभ्य सलिलं वेगाद्गदामादाय वीर्य्यवान् । अद्रिसारमयीं गुर्व्वीं काञ्चनाङ्गदभूषणां ।
अन्तर्ज्जलात् समुत्तस्थौ नागेन्द्र इव निश्वसन् । स भित्त्वा स्तम्भितं तोयं स्कन्धे कृत्वायसीं गदां । १८४५
उदतिष्ठत पुत्रस्ते प्रतपन् रश्मिवानिव । ततः शैक्यायसीं गुर्व्वीं जातरूपपरिष्कृतां ।
गदां परामृशद्धीमान् धार्त्तराष्ट्रो महाबलः । गदाहस्तन्तु तं दृष्ट्वा सशृङ्गमिव पर्व्वतं ।
प्रजानामिव संक्रुद्धं शूलपाणिमवस्थितं । सगदो भारतो भाति प्रतपन् भास्करो यथा ।
इदृशुः सर्व्वपाञ्चालाः पुत्रं तव जनाधिप । तमुत्तीर्णन्तु सम्प्रेक्ष्य समहृष्यन्त सर्व्वशः ।
पाञ्चालाः पाण्डवेयाश्च तेऽन्योन्यस्य तलान् ददुः । अवहासन्तु तं मत्वा पुत्रो दुर्य्योधनस्तव । १८५०
उद्धृत्य नयने क्रुद्धो दिधक्षुरिव पाण्डवान् । त्रिशिखां भ्रुकुटीं कृत्वा सन्दष्टदशनच्छदः ।
प्रत्युवाच ततस्तान् वै पाण्डवान् सहकेशवान् ।
॥ दुर्य्योधन उवाच ॥ अस्यावहासस्य फलं प्रतिभोक्ष्यथ पाण्डवाः । गमिष्यथ हताः सद्यः सपाञ्चाला यमक्षयं ।
॥ सञ्जय उवाच ॥ उत्थितस्तु जलात्तस्मात्पुत्रो दुर्य्योधनस्तव । अतिष्ठत गदापाणी रुधिरेण समुक्षितः ।
तस्य शोणितदिग्धस्य सलिलेन समुक्षितं । शरीरं स्म तदा भाति स्रवन्निव महीधरः । १८५५
तमुद्यतगदं वीरं मेनिरे तत्र पाण्डवाः । वैवस्वतमिव क्रुद्धं किङ्करोद्यतपाणिनं ।
स मेघनिनदो हर्षान्नर्दन्निव च गोवृषः । आजुहाव ततः पार्थान् गदया युधि वीर्य्यवान् ।

॥ दुर्य्योधन उवाच ॥ एकैकेन च मां यूयमासीदत युधिष्ठिर । न ह्येको बहुभिर्न्याय्यो वीरो योधयितुं युधि ।
न्यस्तवर्म्मा विशेषेण श्रान्तश्चाप्सु परिप्लुतः । भृशं विक्षतगात्रश्च हतवाहनसैनिकः ।
अवश्यमेव योद्धव्यं सर्व्वैरेव मया सह । युक्तन्त्वयुक्तमित्येतद्वेत्सि त्वञ्चैव सर्व्वदा । १८७०
॥ युधिष्ठिर उवाच ॥ माभूदियं तव प्रज्ञा कथमेवं सुयोधन । यदाऽभिमन्युं बहवो जघ्नुर्युधि महारथाः ।
क्षत्रधर्म्मं भृशं क्रूरं निरपेक्षं सुनिर्घृणं । अन्यथा तु कथं हन्युरभिमन्युं तथागतं ।
सर्व्वे भवन्तो धर्म्मज्ञाः सर्व्वे शूरास्तनुत्यजः । न्यायेन युध्यतां प्रोक्ता शक्रलोकगतिः पुरा ।
यद्येकस्तु न हन्तव्यो बहुभिर्द्धर्म्म एव तु । तदाऽभिमन्युं बहवो निजघ्नुस्त्वन्मते कथं ।
सर्व्वो विमृशते जन्तुः कृच्छ्रस्थो धर्म्मदर्शनं । पदस्थः पिहितं द्वारं परलोकस्य पश्यति । १८७५
आमुञ्च कवचं वीर मूर्द्धजान् यमयस्व च । यच्चान्यदपि ते नास्ति तदप्यादत्स्व भारत ।
इममेकञ्च ते कामं वीर भूयो ददाम्यहं । पञ्चानां पाण्डवेयानां येन त्वं योद्धुमिच्छसि ।
तं हत्वा वै भवान् राजा हतो वा स्वर्गमाप्नुहि । ऋते च जीविताद्वीर युद्धे किं कुर्म्म ते प्रियं ।
॥ सञ्जय उवाच ॥ ततस्तव सुतो राजन् वर्म्म जग्राह काञ्चनं । विचित्रञ्च शिरस्त्राणं जाम्बूनदपरिष्कृतं ।
सोऽवबद्धशिरस्त्राणः शुभकाञ्चनवर्म्मभृत् । रराज राजन् पुत्रस्ते काञ्चनः शैलराडिव । १८८०
सन्नद्धः सगदो राजन् सज्जः संग्राममूर्द्धनि । अब्रवीत् पाण्डवान् सर्व्वान् पुत्रो दुर्य्योधनस्तव ।
भ्रातॄणां भवतामेको युध्यतां गदया मया । सहदेवेन वा योत्स्ये भीमेन नकुलेन वा ।
अथ वा फाल्गुनेनाद्य त्वया वा भरतर्षभ । योत्स्येऽहं सङ्गरं प्राप्य विजेष्ये च रणाजिरे ।
अहमद्य गमिष्यामि वैरस्यान्तं सुदुर्गमं । गदया पुरुषव्याघ्र हेमपट्टनिबद्धया ।
गदायुद्धे न मे कश्चित् सदृशोऽस्तीति चिन्तये । गदया वो हनिष्यामि सर्व्वानेव समागतान् । १८८५
न मे समर्थाः सर्व्वे वै योद्धुं न्यायेन केन च । न युक्तमात्मना वक्तुमेवं गर्व्वोद्धतं वचः ।
अथ वा सफलं ह्येतत् करिष्ये भवतां पुरः । अस्मिन्मुहूर्त्ते सत्यं वा मिथ्या वैतद्भविष्यति ।
गृह्णातु च गदां यो वै योत्स्यतेऽद्य मया सह ।
इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि युधिष्ठिरदुर्य्योधनसंवादे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
॥ सञ्जय उवाच ॥ एवं दुर्य्योधने राजन् गर्ज्जमाने मुहुर्मुहुः । युधिष्ठिरस्य संक्रुद्धो वासुदेवोऽब्रवीदिदं ।
यदि नाम ह्ययं युद्धे वरयेत् त्वां युधिष्ठिर । अर्ज्जुनं नकुलञ्चैव सहदेवमथापि वा । १८९०
किमिदं साहसं राजंस्त्वया व्याहृतमीदृशं । एकमेव निहत्याजौ भव राजा कुरुष्विति ।
न समर्थानहं मन्ये गदाहस्तस्य संयुगे । एतेन हि कृता योग्या वर्षाणीह त्रयोदश ।
आयसे पुरुषे राजन् भीमसेनजिघांसया । कथं नाम भवेत् कार्य्यमस्माभिर्भरतर्षभ ।
साहसं कृतवांस्त्वन्तु ह्यनुक्रोशान्नृपोत्तम । ऋते वृकोदरात् पार्थात् स च नातिकृतश्रमः ।
तदिदं द्यूतमारब्धं पुनरेव यथा पुरा । विषमं शकुनेश्चैव तव चैव विशाम्पते । १८९५
बली भीमः समर्थश्च कृती राजा सुयोधनः । बलवान् वा कृती वेति कृती राजन् विशिष्यते ।

सोऽयं राजंस्त्वया शत्रुः स मे पथि निवेशितः । न्यस्तश्चात्मा सुविषमे कृच्छ्रमापादिता वयं ।
कोऽनु सर्व्वान् विनिर्जित्य शत्रूनेकेन वैरिणा । कृच्छ्रप्राप्तेन च तथा हारयेद्राज्यमागतं ।
न हि पश्यामि तं लोके योऽद्य दुर्य्योधनं रणे । गदाहस्तं विजेतुं वै शक्तः स्यादमरोऽपि हि ।
न त्वं भीमो न नकुलः सहदेवोऽथ फाल्गुनः । जेतुं न्यायेन शक्तो वै कृती राजा सुयोधनः । १९००
स कथं वदसे शत्रुन् युध्यस्व गदयेति हि । एकञ्च नो निहत्याजौ भव राजेति भारत ।
वृकोदरं समासाद्य संशयो वै जये हि नः । न्यायतो युध्यमानानां कृती ह्येष महाबलः ।
एकं वाऽस्मान्निहत्य त्वं भव राजेति वै पुनः । नूनं न राज्यभागेषा पाण्डोः कुन्त्याश्च सन्ततिः ।
अत्यन्तवनवासाय सृष्टा भैक्ष्याय वा पुनः ।
॥ भीमसेन उवाच ॥ मधुसूदन माकार्षीर्व्विषादं यदुनन्दन । अद्य पारं गमिष्यामि वैरस्य भृशदुर्गमं । १९०५
अहं सुयोधनं संख्ये हनिष्यामि न संशयः । विजयो वै ध्रुवः कृष्ण धर्म्मराजस्य दृश्यते ।
अध्यर्द्धेन गुणेनेयं गदा गुरुतरी मम । न तथा धार्त्तराष्ट्रस्य माकार्षीर्माधव व्यथां ।
अहमेतं हि गदया संयुगे योद्धुमुत्सहे । भवन्तः प्रेक्षकाः सर्व्वे मम सन्तु जनार्द्दन ।
सामरानपि लोकांस्त्रीन् नानाशस्त्रधरान् युधि । योधयेयं रणे कृष्ण किमुताद्य सुयोधनं ।
॥ सञ्जय उवाच ॥ तथा सम्भाषमाणन्तु वासुदेवो वृकोदरं । हृष्टः सम्पूजयामास वचनञ्चेदमब्रवीत् । १९१०
त्वामाश्रित्य महाबाहो धर्म्मराजो युधिष्ठिरः । निहतारिः स्वकां दीप्तां श्रियं प्राप्तो न संशयः ।
त्वया विनिहताः सर्व्वे धार्त्तराष्ट्रा महारणे । राजानो राजपुत्राश्च नागाश्च विनिपातिताः ।
कलिङ्गा मागधाः प्राच्या गान्धाराः कुरवस्तथा । त्वामासाद्य महायुद्धे निहताः पाण्डुनन्दन ।
हत्वा दुर्य्योधनञ्चापि प्रयच्छोर्व्वीं ससागरां । धर्म्मराजाय कौन्तेय यथा विष्णुः शचीपतेः ।
त्वाञ्च प्राप्य रणे पापो धार्त्तराष्ट्रो विनङ्क्ष्यति । त्वमस्य सक्थिनी भङ्क्त्वा प्रतिज्ञां पालयिष्यसि । १९१५
यत्नेन तु सदा पार्थ योद्धव्यो धृतराष्ट्रजः । कृती च बलवांश्चैव युद्धशौण्डश्च नित्यदा ।
ततस्तु सात्यकी राजन् पूजयामास पाण्डवं । पाञ्चालाः पाण्डवेयाश्च धर्म्मराजपुरोगमाः ।
तद्वचो भीमसेनस्य सर्व्व एवाभ्यपूजयन् । ततो भीमबलो भीमो युधिष्ठिरमथाब्रवीत् ।
सृञ्जयैः सह तिष्ठन्तं तपन्तमिव भास्करं । अहमेतेन सङ्गम्य संयुगे योद्धुमुत्सहे ।
न हि शक्तो रणे जेतुं मामेष पुरुषाधमः । अद्य क्रोधं विमोक्ष्यामि निहितं हृदये भृशं । १९२०
सुयोधने धार्त्तराष्ट्रे खाण्डवेऽग्निमिवार्ज्जुनः । शल्यमद्योद्धरिष्यामि तव पाण्डव हृच्छयं ।
निहत्य गदया पापमद्य राजन् सुखी भव । अद्य कीर्त्तिमयीं मालां प्रतिमोक्ष्ये तवानघ ।
प्राणान् श्रियञ्च राज्यञ्च मोक्ष्यते तेऽद्य सुयोधनं । राजा च धृतराष्ट्रोऽद्य श्रुत्वा पुत्रं मया हतं ।
स्मरिष्यत्यशुभं कर्म्म यत्तच्छकुनिबुद्धिजं । इत्युक्त्वा भरतश्रेष्ठो गदामुद्यम्य वीर्य्यवान् ।
उदतिष्ठत युद्धाय शक्रो वृत्रमिवाह्वयन् । तदाह्वानममृष्यन् वै तव पुत्रोऽतिवीर्य्यवान् । १९२५
प्रत्युपस्थित एवाशु मत्तो मत्तमिव द्विपं । गदाहस्तं तव सुतं युद्धाय समुपस्थितं ।

ददृशुः पाण्डवाः सर्व्वे कैलासमिव शृङ्गिणं । तमेकाकिनमासाद्य धार्त्तराष्ट्रं महाबलं ।
वियूथमिव मातङ्गं समहृष्यन्त पाण्डवाः । न सम्भ्रमो न च भयं न च ग्लानिर्न च व्यथा ।
आसीद्दुर्य्योधनस्यापि स्थितः सिंह इवाहवे । समुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणं ।
भीमसेनस्तदा राजन् दुर्य्योधनमथाब्रवीत् । राज्ञाऽपि धृतराष्ट्रेण त्वया चास्मासु यत् कृतं । १९३०
स्मर तद्दुष्कृतं कर्म्म यद्वृत्तं वारणावते । द्रौपदी च परिक्लिष्टा सभामध्ये रजस्वला ।
द्यूते यद्विजितो राजा शकुनेर्बुद्धिनिश्चयात् । यानि चान्यानि दुष्टात्मन् पापानि कृतवानसि ।
अनागःसु च पार्थेषु तस्य पश्य महत् फलं । त्वत्कृते निहतः शेते शरतल्पे महायशाः ।
गाङ्गेयो भरतश्रेष्ठः सर्व्वेषां नः पितामहः । हतो द्रोणश्च कर्णश्च हतः शल्यः प्रतापवान् ।
वैरस्य चादिकर्त्ताऽसौ शकुनिर्निहतो रणे । भ्रातरस्ते हताः शूराः पुत्राश्च सहसैनिकाः । १९३५
राजानश्च हताः शूराः समरेष्वनिवर्त्तिनः । एते चान्ये च निहता बहवः क्षत्रियर्षभाः ।
प्रातिकामी तथा पापो द्रौपद्याः क्लेशकृद्धतः । अवशिष्टस्त्वमेवैकः कुलघ्नोऽधमपूरुषः ।
त्वामप्यद्य हनिष्यामि गदया नात्र संशयः । अद्य तेऽहं रणे दर्पं सर्व्वं नाशयिता नृप ।
राज्याशां विपुलां राजन् पाण्डवेषु च दुष्कृतं ।
॥ दुर्य्योधन उवाच ॥ किं कत्थितेन बहुना युध्यस्वाद्य मया सह । अद्य तेऽहं विनेष्यामि युद्धश्रद्धां वृकोदर । १९४०
किं न पश्यसि मां पाप गदायुद्धे व्यवस्थितं । हिमवच्छिखराकारां प्रगृह्य महतीं गदां ।
गदिनं कोऽद्य मां पाप हन्तुमुत्सहते पुनः । न्यायतो युध्यमानस्य देवेष्वपि पुरन्दरः ।
मा वृथा गर्ज्ज कौन्तेय शारदाभ्रमिवाजलं । दर्शयस्व बलं युद्धे यावत्तत्तेऽद्य विद्यते ।
तस्य तद्वचनं श्रुत्वा पाण्डवाः सहसृञ्जयाः । सर्व्वे सम्पूजयामासुस्तद्वचो विजिगीषवः ।
उन्मत्तमिव मातङ्गं तलशब्देन मानवाः । भूयः संहर्षयामासू राजन् दुर्य्योधनं नृपं । १९४५
बृंहन्ति कुञ्जरास्तत्र हया हेषन्ति चासकृत । शस्त्राणि सम्प्रदीप्यन्ते पाण्डवानां जयैषिणां ।
इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि भीमसेनदुर्य्योधनसंवादे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
॥ सञ्जय उवाच ॥ तस्मिन् युद्धे महाराज सुसंवृत्ते सुदारुणे । उपविष्टेषु सर्व्वेषु पाण्डवेषु महात्मसु ।
ततस्तालध्वजो रामस्तयोर्युद्धे उपस्थिते । श्रुत्वा तच्छिष्ययो राजन्नाजगाम हलायुधः ।
तं दृष्ट्वा परमप्रीताः पाण्डवाः सहकेशवाः । उपगम्योपसंगृह्य विधिवत् प्रत्यपूजयन् ।
पूजयित्वा ततः पश्चादिदं वचनमब्रुवन् । शिष्ययोः कौशलं युद्धे पश्य रामेति पार्थिव । १९५५
अब्रवीच्च तदा रामो दृष्ट्वा कृष्णं सपाण्डवं । दुर्य्योधनञ्च कौरव्यं गदापाणिमवस्थितं ।
चत्वारिंशदहान्यद्य द्वे च मे निःसृतस्य वै । पुष्येण संप्रयातोऽस्मि श्रवणे पुनरागतः ।
शिष्ययोर्वै गदायुद्धं द्रष्टुकामोऽस्मि माधव । ततस्तदा गदाहस्तौ दुर्य्योधनवृकोदरौ ।
युद्धभूमिं गतौ वीरावुभावेव विरेजतुः । ततो युधिष्ठिरो राजा परिष्वज्य हलायुधं ।
स्वागतं कुशलञ्चास्मै पर्य्यपृच्छद्यथातथं । कृष्णौ चापि महेष्वासावभिवाद्य हलायुधं । १९५०

सञ्जाते परिप्रीतौ प्रीयमाणौ यशस्विनौ । माद्रीपुत्रौ तथा शूरौ द्रौपद्याः पञ्च चात्मजाः ।
अभिवाद्य स्थिता राजन् रौहिणेयं महाबलं । भीमसेनोऽथ बलवान् पुत्रस्तव जनाधिप ।
तथैव चोद्यतगदौ पूजयामासतुर्बलं । स्वागतेन च ते तत्र प्रतिपूज्य समन्ततः ।
पश्य युद्धं महाबाहो इति ते राममब्रुवन् । एवमूचुर्महात्मानं रौहिणेयं नराधिपाः ।
परिष्वज्य तदा रामः पाण्डवान् सृञ्जयानपि । अपृच्छत् कुशलं सर्व्वान् पार्थिवांश्चामितौजसः । १९६०
तथैव ते समासाद्य पप्रच्छुस्तमनामयं । प्रत्यभ्यर्च्य हली सर्व्वान् क्षत्रियांश्च महात्मनः ।
कृत्वा कुशलसंयुक्तां संविदञ्च यथावयः । जनार्द्दनं सात्यकिञ्च प्रेम्णा स परिषस्वजे ।
मूर्द्ध्नि चैतावुपाघ्राय कुशलं पर्य्यपृच्छत । तौ च तं विधिवद्राजन् पूजयामासतुर्गुरुं ।
ब्रह्माणमिव देवेशमिन्द्रोपेन्द्रौ मुदान्वितौ । ततोऽब्रवीद्धर्म्मसुतो रौहिणेयमरिन्दमं ।
इदं भ्रात्रोर्महायुद्धं पश्य रामेति भारत । तेषां मध्ये महाबाहुः श्रीमान् केशवपूर्व्वजः । १९६५
न्यविशत् परमप्रीतः पूज्यमानो महारथैः । स बभौ राजमध्यस्थो नीलवासाः सितप्रभः ।
दिवीव नक्षत्रगणैः परिकीर्णो निशाकरः । ततस्तयोः सन्निपातस्तुमुलो लोमहर्षणः ।
आसीदन्तकरो राजन् वैरस्य तव पुत्रयोः ।

इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवागमने पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

॥ जनमेजय उवाच ॥ पूर्व्वमेव यदा रामस्तस्मिन् युद्ध उपस्थिते । आमन्त्र्य केशवं यातो वृष्णिभिः सहितः प्रभुः ।
साहाय्यं धार्त्तराष्ट्रस्य न च कर्त्ताऽस्मि केशव । न चैव पाण्डुपुत्राणां गमिष्यामि यथागतं । १९७०
एवमुक्त्वा तदा रामो यातः शत्रुनिवर्हणः । तस्य चागमनं भूयो ब्रह्मन् शंसितुमर्हसि ।
आख्याहि मे विस्तरतः कथं राम उपस्थितः । कथञ्च दृष्टवान् युद्धं कुशलो ह्यसि सत्तम ।
॥ वैशम्पायन उवाच ॥ उपप्लवे निविष्टेषु पाण्डवेषु महात्मसु । प्रेषितो धृतराष्ट्रस्य समीपं मधुसूदनः ।
शमं प्रति महाबाहो हितार्थं सर्व्वदेहिनां । स गत्वा हास्तिनपुरं धृतराष्ट्रं समेत्य च ।
उक्तवान् वचनं तथ्यं हितञ्चैव विशेषतः । न च तत् कृतवान् राजा यथाख्यातं हि तत् पुरा । १९७५
अनवाप्य शमं तत्र कृष्णः पुरुषसत्तमः । आगच्छत महाबाहुरुपप्लव्यं जनाधिप ।
ततः प्रत्यागतः कृष्णो धार्त्तराष्ट्रविसर्ज्जितः । अक्रियायां नरव्याघ्र पाण्डवानिदमब्रवीत् ।
न कुर्व्वन्ति वचो मह्यं कुरवः कालचोदिताः । निर्गच्छध्वं पाण्डवेयाः पुष्येण सहिता मया ।
ततो विभज्यमानेषु बलेषु बलिनाम्वरः । प्रोवाच भ्रातरं कृष्णं रौहिणेयो महामनाः ।
तेषामपि महाबाहो साहाय्यं मधुसूदन । क्रियतामिति तत् कृष्णो नास्य चक्रे वचस्तदा । १९८०
ततो मन्युपरीतात्मा जगाम यदुनन्दनः । तीर्थयात्रां हलधरः सरस्वत्यां महायशाः ।
मैत्रनक्षत्रयोगेन सहितः सर्व्वयादवैः । आश्रयामास भोजस्तु दुर्य्योधनमरिन्दमः ।
युयुधानेन सहितो वासुदेवस्तु पाण्डवान् । रौहिणेये गते शूरे पुष्येण मधुसूदन ।
पाण्डवेयान् पुरस्कृत्य ययावभिमुखः कुरून् । गच्छन्नेव पथिस्थस्तु रामः प्रेष्यानुवाच ह ।

सम्भारांस्तीर्थयात्रायां सर्व्वोपकरणानि च । आनयध्वं द्वारकायामग्नीन् वै याजकांस्तथा । १९८५
सुवर्णं रजतञ्चैव धेनूर्व्वासांसि वाजिनः । कुञ्जरांश्च रथांश्चैव खरोष्ट्रवाहनानि च ।
क्षिप्रमानीयतां सर्व्वं तीर्थहेतोः परिच्छदं । इति स्रोतः सरस्वत्या गच्छध्वं शीघ्रगामिनः ।
ऋत्विजश्चानयध्वं वै शतशश्च द्विजर्षभान् । एवं सन्दिश्य तु प्रेष्यान् बलदेवो महाबलः ।
तीर्थयात्रां ययौ राजन् कुरूणां वैशसे तदा । सरस्वतीं प्रतिस्रोतः समन्तादभिजग्मिवान् ।
ऋत्विग्भिश्च सुहृद्भिश्च तथाऽन्यैर्द्विजसत्तमैः । रथैर्गजैस्तथाऽश्वैश्च प्रेष्यैश्च भरतर्षभ । १९९०
गोखरोष्ट्रप्रयुक्तैश्च यानैश्च बहुभिर्वृतः । श्रान्तानां क्लान्तवपुषां शिशूनां विपुलायुषां ।
देशे देशे तु देयानि दानानि विविधानि च । अर्च्चायै चार्थिनां राजन् कृतानि बहुशस्तथा ।
यो यो यत्र द्विजो भोज्यं भोक्तुं कामयते तदा । तस्य तस्य तु तत्रैवमुपजह्रुस्तदा नृप ।
तत्र तत्र स्थिता राजन् रौहिणेयस्य शासनात् । भक्ष्यपेयस्य कुर्व्वन्ति राशींस्तत्र समन्ततः ।
वासांसि च महार्हाणि पर्य्यङ्कास्तरणानि च । पूजार्थं तत्र कृतानि विप्राणां सुखमिच्छतां । १९९५
यत्र यः स्वपते विप्रः क्षत्रियो वाऽपि भारत । तत्र तत्र तु तस्यैव सर्व्वं कृतमदृश्यत ।
यथासुखं जनः सर्व्वो याति तिष्ठति वै तदा । यातुकामस्य यानानि पेयानि तृषितस्य च ।
बुभुक्षितस्य चान्नानि स्वादूनि भरतर्षभ । उपाजह्रुर्नरास्तत्र वस्त्राण्याभरणानि च ।
स पन्थाः प्रबभौ राजन् सर्व्वस्यैव सुखावहः । स्वर्गोपमस्तदा वीर नराणां तत्र गच्छतां ।
नित्यप्रमुदितोपेतः स्वादुभक्ष्यः शुभान्वितः । विपण्यापणपण्यानां नानाजनशतैर्वृतः । २०००
नानाद्रुमलतोपेतो नानारत्नविभूषितः ।

ततो महात्मा नियमे स्थितात्मा पुण्येषु तीर्थेषु वसूनि राजन् । ददौ द्विजेभ्यः क्रतुदक्षिणाश्च यदुप्रवीरो हलभृत् प्रतीतः ।
दोग्ध्रीश्च धेनूश्च सहस्रशो वै सुवाससः काञ्चनबद्धशृङ्गाः । हयांश्च नानाविधदेशजातान् यानानि दासांश्च शुभान् द्विजेभ्यः ।
रत्नानि मुक्तामणिविद्रुमञ्चाप्यग्र्यं सुवर्णं रजतं सुशुद्धं । अयस्मयं ताम्रमयञ्च भाण्डं ददौ द्विजातिप्रवरेषु रामः ।
एवं स वित्तं प्रददौ महात्मा सरस्वतीतीर्थवरेषु भूरि । ययौ क्रमेणाप्रतिमप्रभावस्ततः कुरुक्षेत्रमुदारवृत्तिः । २००५
॥ जनमेजय उवाच ॥ सारस्वतानां तीर्थानां गुणोत्पत्तिं वदस्व मे । फलञ्च द्विपदां श्रेष्ठ कर्म्मनिर्वृत्तिमेव च ।
यथाक्रमेण भगवंस्तीर्थानामनुपूर्व्वशः । ब्रह्मन् ब्रह्मविदां श्रेष्ठ परं कौतूहलं हि मे ।
॥ वैशम्पायन उवाच ॥ तीर्थानां विस्तरं राजन् गुणोत्पत्तिञ्च सर्व्वशः । मयोच्यमानं वै पुण्यं शृणु राजेन्द्र कृत्स्नशः ।
पूर्व्वं महाराज यदुप्रवीर ऋत्विक्सुहृद्विप्रगणैश्च सार्द्धं । पुण्यं प्रभासं समुपाजगाम यत्रोडुराट् यक्ष्मणा क्लिश्यमानः ।
विमुक्तशापः पुनराप्य तेजः सर्व्वं जगद्भासयते नरेन्द्र । एवन्तु तीर्थप्रवरं पृथिव्यां प्रभासनात्तस्य ततः प्रभासः । २०१०
॥ जनमेजय उवाच ॥ कथञ्च भगवान् सोमो यक्ष्मणा समगृह्यत । कथञ्च तीर्थप्रवरे तस्मिंश्चन्द्रो न्यमज्जत ।
कथमाप्लुत्य तस्मिंस्तु पुनराप्यायितः शशी । एतन्मे सर्व्वमाचक्ष्व विस्तरेण महामुने ।
॥ वैशम्पायन उवाच ॥ दक्षस्य तनया यास्ताः प्रादुरासन् विशाम्पते । स सप्तविंशतिं कन्या दक्षः सोमाय वै ददौ ।
नक्षत्रयोगनिरताः संख्यानार्थञ्च ताऽभवन् । पत्न्यो वै तस्य राजेन्द्र सोमस्य शुभकर्म्मणः ।

तास्तु सर्व्वा विशालाक्ष्यो रूपेणाप्रतिमा भुवि। अत्यरिच्यत तासान्तु रोहिणी रूपसम्पदा। २०१६
ततस्तस्यां स भगवान् प्रीतिमान् स निशाकरः। साऽस्य हृद्या बभूवाथ तस्मात्तां बुभुजे सदा।
पुरा हि सोमो राजेन्द्र रोहिण्यामवसच्चिरं। ततस्ताः कुपिताः सर्व्वा नक्षत्राख्या महात्मनः।
ता गत्वा पितरं प्राहुः प्रजापतिमतन्द्रिताः। सोमो वसति नास्मासु रोहिणीं भजते सदा।
ता वयं सहिताः सर्व्वास्त्वत्सकाशे प्रजेश्वर। वत्स्यामो नियताहारास्तपश्चरणतत्पराः।
श्रुत्वा तासान्तु वचनं दक्षः सोममथाब्रवीत्। समं वर्त्तस्व भार्य्यासु मा त्वाऽधर्म्मो महान् स्पृशेत्। २०२१
तास्तु सर्व्वाब्रवीद्दक्षो गच्छध्वं शशिनोऽन्तिकं। समं वत्स्यति सर्व्वासु चन्द्रमा मम शासनात्।
विसृष्टास्तास्तथा जग्मुः शीतांशुभवनं तदा। तथाऽपि सोमो भगवान् पुनरेव महीपते।
रोहिणीं निवसत्येव प्रीयमाणो मुहुर्मुहुः। ततस्ताः सहिताः सर्व्वा भूयः पितरमब्रुवन्।
तव शुश्रूषणे युक्ता वत्स्यामो हि तवान्तिके। सोमो वसति नास्मासु नाकरोद्वचनं तव।
तासां तद्वचनं श्रुत्वा दक्षः सोममथाब्रवीत्। समं वर्त्तस्व भार्य्यासु मा त्वां शप्स्ये विरोचन। २०२६
अनादृत्य तु तद्वाक्यं दक्षस्य भगवान् शशी। रोहिण्या सार्द्धमवसत् ततस्ताः कुपिताः पुनः।
गत्वा च पितरं प्राहुः प्रणम्य शिरसा तदा। सोमो वसति नास्मासु तस्मान्नः शरणं भव।
रोहिण्यामेव भगवान् सदा वसति चन्द्रमाः। न त्वद्वचो गणयति नास्मासु स्नेहमिच्छति।
तस्मान्नस्त्राहि सर्व्वा वै यथा नः सोम आविशेत्। तच्छ्रुत्वा भगवान् क्रुद्धो यक्ष्माणं पृथिवीपते।
ससर्ज्ज रोषात् सोमाय स चोडुपतिमाविशत्। स यक्ष्मणाऽभिभूतात्माऽक्षीयताहरहः शशी। २०३१
यत्नञ्चाप्यकरोद्राजन् मोक्षार्थं तस्य यक्ष्मणः। इष्टेष्टिभिर्महाराज विविधाभिर्निशाकरः।
न चामुच्यत शापाद्वै क्षयञ्चैवाभ्यगच्छत। क्षीयमाणे ततः सोमे ओषध्यो न प्रजज्ञिरे।
निरास्वादरसाः सर्व्वा हतवीर्य्याश्च सर्व्वशः। ओषधीनां क्षये जाते प्राणिनामपि संक्षयः।
कृशाश्चासन् प्रजाः सर्व्वा क्षीयमाणे निशाकरे। ततो देवाः समागम्य सोममूचुर्महीपते।
किमिदं भवतो रूपमीदृशं न प्रकाशते। कारणं ब्रूहि नः सर्व्वं येनेदन्ते महद्भयं। २०३६
श्रुत्वा तु वचनं त्वत्तो विधास्यामस्ततो वयं। एवमुक्तः प्रत्युवाच सर्व्वांस्ताञ्छशलक्षणः।
शापस्य कारणं चैव यक्ष्माणञ्च तथात्मनः। देवास्तथा वचः श्रुत्वा गत्वा दक्षमथाब्रुवन्।
प्रसीद भगवन् सोमे शापोऽयं विनिवर्त्त्यतां। असौ हि चन्द्रमाः क्षीणः किञ्चिच्छेषो हि लक्ष्यते।
क्षयाच्चैवास्य देवेश प्रजाश्चैव गताः क्षयं। वीरुधौषधयश्चैव बीजानि विविधानि च।
तेषां क्षये क्षयोऽस्माकं विनाऽस्माभिर्जगच्च किं। इति ज्ञात्वा लोकगुरो प्रसादं कर्त्तुमर्हसि। २०४१
एवमुक्तस्ततो देवान् प्राह वाक्यं प्रजापतिः। नैतच्छक्यं मम वचो व्यावर्त्तयितुमन्यथा।
हेतुना तु महाभागा निवर्त्तिष्यति केनचित्। समं वर्त्ततु सर्व्वासु शशी भार्य्यासु नित्यशः।
सरस्वत्या वरे तीर्थे उन्मज्जञ्छशलक्षणः। पुनर्व्वर्द्धिष्यते देवास्तद्वै सत्यं वचो मम।
मासार्द्धञ्च क्षयं सोमो नित्यमेव गमिष्यति। मासार्द्धन्तु सदा वृद्धिं सत्यमेतद्वचो मम।

समुद्रं पश्चिमं गत्वा सरस्वत्यब्धिसङ्गमं । आराधयतु देवेशं ततः कान्तिमवाप्स्यति । २०५०
सरस्वतीन्ततः सोमः स जगामर्षिशासनात् । प्रभासं प्रथमं तीर्थं सरस्वत्या जगाम ह ।
अमावास्यां महातेजास्तत्रोन्मज्ज्य महाद्युतिः । लोकान् प्रभासयामास शीतांशुत्वमवाप च ।
देवास्तु सर्व्वे राजेन्द्र प्रभासं प्राप्य पुष्कलं । सोमेन सहिता भूत्वा दक्षस्य प्रमुखेऽभवन् ।
ततः प्रजापतिः सर्व्वा विससर्ज्जाथ देवताः । सोमञ्च भगवान् प्रीतो भूयो वचनमब्रवीत् ।
माऽवमंस्थाः स्त्रियः पुत्र मा च विप्रान् कदाचन । गच्छ युक्तः सदा भूत्वा कुरु वै शासनं मम । २०५५
स विसृष्टो महाराज जगामाथ स्वमालयं । प्रजाश्च मुदिता भूत्वा पुनस्तस्थुर्यथा पुरा ।
एवन्ते सर्व्वमाख्यातं यथा शप्तो निशाकरः । प्रभासञ्च यथा तीर्थं तीर्थानां प्रवरं ह्यभूत् ।
अमावास्यां महाराज नित्यशः शशलक्षणः । स्नात्वा ह्याप्यायते श्रीमान् प्रभासे तीर्थसत्तमे ।
अतश्चैनं प्रजानन्ति प्रभासमिति भूमिप । प्रभां हि परमां लेभे तस्मिन्नुन्मज्ज्य चन्द्रमाः ।
ततस्तु चमसोद्भेदमच्युतस्त्वगमद्बली । चमसोद्भेद इत्येवं यं जनाः कथयन्त्युत । २०६०
तत्र दत्त्वा च दानानि विशिष्टानि हलायुधः । उषित्वा रजनीमेकां स्नात्वा च विधिवत्तदा ।
उदपानमथागच्छत्त्वरावान् केशवाग्रजः । आद्यं स्वस्त्ययनञ्चैव यत्रावाप्य महत् फलं ।
स्निग्धत्वादोषधीनाञ्च भूमेश्च जनमेजय । जानन्ति सिद्धा राजेन्द्र नष्टामपि सरस्वतीं ।
इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां चन्द्रशापोपाख्याने षट्त्रिंशोऽध्यायः ॥ ३६ ॥
॥ वैशम्पायन उवाच ॥ तस्मान्नदीगतञ्चापि ह्युदपानं यशस्विनः । त्रितस्य च महाराज जगामाथ हलायुधः ।
तत्र दत्त्वा बहुद्रव्यं पूजयित्वा तथा द्विजान् । उपस्पृश्य च तत्रैव प्रहृष्टो मुषलायुधः । २०६५
तत्र धर्म्मपरो ह्यासीत् त्रितः स सुमहातपाः । कूपे च वसता तेन सोमः पीतो महात्मना ।
तत्र चैनं समुत्सृज्य भ्रातरौ जग्मतुर्गृहान् । ततस्तौ वै शशापाथ त्रितो ब्राह्मणसत्तमः ।
॥ जनमेजय उवाच ॥ उदपानं कथं ब्रह्मन् कथञ्च सुमहातपाः । पतितः किञ्च सन्त्यक्तो भ्रातृभ्यां द्विजसत्तम ।
कूपे कथञ्च हित्वैनं भ्रातरौ जग्मतुर्गृहान् । कथञ्च याजयामास पपौ सोमञ्च वै कथं ।
एतदाचक्ष्व मे ब्रह्मन् श्रोतव्यं यदि मन्यसे । २०७०
॥ वैशम्पायन उवाच ॥ आसन् पूर्व्वयुगे राजन् मुनयो भ्रातरस्त्रयः । एकतश्च द्वितश्चैव त्रितश्चादित्यसन्निभाः ।
सर्व्वे प्रजापतिसमाः प्रजावन्तस्तथैव च । ब्रह्मलोकजितः सर्व्वे तपसा ब्रह्मवादिनः ।
तेषाञ्च तपसा प्रीतो नियमेन दमेन च । अभवद्गौतमो नित्यं पिता धर्म्मरतः सदा ।
स तु दीर्घेण कालेन तेषां प्रीतिमवाप्य च । जगाम भगवान् स्थानमनुरूपमिवात्मनः ।
राजानस्तस्य ये ह्यासन् याज्या राजन् महात्मनः । ते सर्व्वे स्वर्गते तस्मिंस्तस्य पुत्त्रानपूजयन् । २०७५
तेषान्तु कर्म्मणा राजंस्तथा चाध्ययनेन च । त्रितः स श्रेष्ठतां प्राप यथैवास्य पिता तथा ।
तथा सर्व्वे महाभागा मुनयः पुण्यलक्षणाः । अपूजयन्महाभागं यथाऽस्य पितरं पुरा ।
कदाचिद्धि ततो राजन् भ्रातरावेकतद्वितौ । यज्ञार्थे चक्रतुश्चिन्तां तथा वित्तार्थमेव च ।

तयोर्बुद्धिः समभवत् त्रितं त्यक्त्वा परन्तप । याज्यान् सर्व्वानुपादाय प्रतिगृह्य पशूंस्ततः ।
सोमं दास्यामहे हृष्टाः प्राप्य यज्ञं महाफलं । चक्रुश्चैवं तथा राजन् भ्रातरस्त्रय एव च । २०८०
तथा तु ते पराक्रम्य याज्यान् सर्व्वान् पशून् प्रति । याजयित्वा ततो याज्यान् लब्ध्वा तु सुबहून् पशून् ।
याज्येन कर्म्मणा तेन प्रतिगृह्य विधानतः । प्राचीं दिशं महात्मान आजग्मुस्ते महर्षयः ।
त्रितस्तेषां महाराज पुरस्ताद्याति हृष्टवत् । एकतश्च द्वितश्चैव पृष्ठतः कालयन् पशून् ।
तयोश्चिन्ता समभवत् दृष्ट्वा पशुगणं महत् । कथन्नु स्युरिमा गाव आवाभ्यां हि विना त्रितं ।
तावन्योन्यं समाभाष्य एकतश्च द्वितश्च ह । यदूचतुर्म्मिथः पापौ तन्निबोध जनेश्वर । २०८५
त्रितो यज्ञेषु कुशलस्त्रितो वेदेषु निष्ठितः । अन्यास्तु बहुला गावस्त्रितः समुपलप्स्यते ।
तदा वां सहितौ भूत्वा गाः प्रकाल्य व्रजावहे । त्रितोऽपि गच्छतां काममावाभ्यां वै विनाकृतः ।
तेषामागच्छतां रात्रौ पथिस्थानां वृकोऽभवत् । तत्र कूपो विदूरेऽभूत् सरस्वत्यास्तटे महान् ।
अथ त्रितो वृकं दृष्ट्वा पथि तिष्ठन्तमग्रतः । तद्भयादपसर्पन् वै तस्मिन् कूपे पपात ह ।
अगाधे सुमहाघोरे सर्व्वभूतभयङ्करे । त्रितस्ततो महाराज कूपस्थो मुनिसत्तमः । २०९०
आर्त्तनादं ततश्चक्रे तौ तु शुश्रुवतुर्मुनी । तं ज्ञात्वा पतितं कूपे भ्रातरावेकतद्वितौ ।
वृकत्रासाच्च लोभाच्च समुत्सृज्य प्रजग्मतुः । भ्रातृभ्यां पशुलुब्धाभ्यामुत्सृष्टः स महातपाः ।
उदपाने तदा राजन् निर्जले पांशुसंवृते । त्रित आत्मानमालक्ष्य कूपे वीरुत्तृणावृते ।
निमग्नं भरतश्रेष्ठ नरके दुष्कृती यथा । स बुद्ध्याऽगणयत्प्राज्ञो मृत्योर्भीतो ह्यसोमपः ।
सोमः कथन्तु पातव्य इहस्थेन मया भवेत् । स एवमभिनिश्चित्य तस्मिन् कूपे महातपाः । २०९५
ददर्श वीरुधं तत्र लम्बमानां यदृच्छया । पांशुग्रस्ते ततः कूपे विचिन्त्य सलिल मुनिः ।
अग्नीन् संकल्पयामास होत्रे चात्मानमेव च । ततस्तां वीरुधं सोमं संकल्प्य सुमहातपाः ।
ऋचो यजूंषि सामानि मनसाऽचिन्तयन्मुनिः । ग्रावाणः शर्कराः कृत्वा प्रचक्रेऽभिषवं नृप ।
आज्यञ्च सलिलञ्चक्रे भागांश्च त्रिदिवौकसां । सोमस्याभिषवं कृत्वा चकार तुमुलं ध्वनिं ।
स चाविशद्दिवं राजन् पुनः शब्दस्त्रितस्य वै । समवाप्य च तद्यज्ञं यथोक्तं ब्रह्मवादिभिः । २१००
वर्त्तमाने तथा यज्ञे त्रितस्य सुमहात्मनः । आविग्नं त्रिदिवं सर्व्वं कारणञ्च न बुध्यते ।
ततः सुतुमुलं शब्दं शुश्रावाथ बृहस्पतिः । श्रुत्वा चैवाब्रवीत् सर्व्वान् देवान् देवपुरोहितः ।
त्रितस्य वर्त्तते यज्ञस्तत्र गच्छामहे सुराः । स हि क्रुद्धः सृजेदन्यान् देवानपि महातपाः ।
तच्छ्रुत्वा वचनन्तस्य सहिताः सर्व्वदेवताः । प्रययुस्तत्र यत्रासौ त्रितयज्ञः प्रवर्त्तते ।
ते तत्र गत्वा विबुधास्तं कूपं यत्र स द्विजः । ददृशुस्तं महात्मानं दीक्षितं यज्ञकर्म्मसु । २१०५
दृष्ट्वा चैनं महात्मानं श्रिया परमया युतं । ऊचुश्चाथ महाभागं प्राप्ता भागार्थिनो वयं ।
अथाब्रवीदृषिर्देवान् पश्यध्वं मां दिवौकसः । अस्मिन् प्रतिभये कूपे निमग्नं नष्टचेतसं ।
ततस्त्रितो महाराज भागांस्तेषां यथाविधि । मन्त्रयुक्तान् समददत्ते च प्रीतास्तदाऽभवन् ।

ततो यथाविधि प्राप्तान् भागान् प्राप्य दिवौकसः । प्रीतात्मानो ददुस्तस्मै वरान् यान् मनसेच्छति ।
स तु वव्रे वरान् देवांस्त्रातुमर्हथ मामितः । यश्चोपस्पृशेत् कूपे स सोमपगतिं लभेत् । १११०
तत्र चोर्म्मिमती राजन्नुत्पपात सरस्वती । तयोत्क्षिप्तः समुत्तस्थौ पूजयंस्त्रिदिवौकसः ।
तथेति चोक्ता विबुधा जग्मू राजन् यथागतम् । त्रितश्चाप्यागमत् प्रीतः स्वमेव निलयं तदा ।
क्रुद्धस्तु स समासाद्य तावृषी भ्रातरौ तदा । उवाच परुषं वाक्यं शशाप च महातपाः ।
पशुलुब्धौ युवां यस्मान्मामुत्सृज्य प्रधावितौ । तस्माद्वृकाकृती रौद्रौ दंष्ट्रिणावभितश्चरौ ।
भवितारौ मया शप्तौ पापेनानेन कर्म्मणा । प्रसवश्चैव युवयोर्गोलाङ्गूलर्क्षवानराः । १११५
इत्युक्ते तु तदा तेन क्षणादेव विशाम्पते । तथाभूतावदृश्येतां वचनात् सत्यवादिनः ।
तत्राप्यमितविक्रान्तः स्पृष्ट्वा तोयं हलायुधः । दत्त्वा च विविधान्दायान् पूजयित्वा च वै द्विजान् ।
उदपानञ्च तं वीक्ष्य प्रशस्य च पुनः पुनः । नदीगतमदीनात्मा प्राप्तो विनशनं तदा ।
इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां तीर्थकथने सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
॥ वैशम्पायन उवाच ॥ ततो विनशनं राजन् जगामाथ हलायुधः । शूद्राभीरान् प्रति द्वेषाद्यत्र नष्टा सरस्वती ।
तस्मात्तु ऋषयो नित्यं प्राहुर्विनशनेति च । तच्चाप्युपस्पृश्य बलः सरस्वत्यां महाबलः । ११२०
सुभूमिकं ततोऽगच्छत् सरस्वत्यास्तटे वरे । तत्र चाप्सरसः शुभ्रा नित्यकालमतन्द्रिताः ।
क्रीडाभिर्विमलाभिश्च क्रीडन्ति विमलाननाः । तत्र देवाः सगन्धर्व्वा मासि मासि जनेश्वर ।
अभिगच्छन्ति तत्तीर्थं पुण्यं ब्राह्मणसेवितं । तत्रादृश्यन्त गन्धर्व्वास्तथैवाप्सरसां गणाः ।
समेत्य सहिता राजन् यथाप्राप्तं यथासुखं । तत्र मोदन्ति देवाश्च पितरश्च सवीरुधः ।
पुण्यैः पुष्पैः सदा दिव्यैः कीर्य्यमाणाः पुनः पुनः । आक्रीडभूमिः सा राजंस्तासामप्सरसां शुभा । ११२५
सुभूमिकेति विख्याता सरस्वत्यास्तटे वरे । तत्र स्नात्वा च दत्त्वा च वसु विप्राय माधवः ।
श्रुत्वा गीतञ्च तद्दिव्यं वादित्राणाञ्च निःस्वनं । छायाश्च विपुला दृष्ट्वा देवगन्धर्व्वरक्षसां ।
गन्धर्व्वाणां ततस्तीर्थमागच्छद्रोहिणीसुतः । विश्वावसुमुखास्तत्र गन्धर्व्वास्तपसाऽन्विताः ।
नृत्यवादित्रगीतञ्च कुर्व्वन्ति सुमनोरमं । तत्र दत्त्वा हलधरो विप्रेभ्यो विविधं वसु ।
अजाविकं गोखरोष्ट्रं सुवर्णं रजतं तथा । भोजयित्वा द्विजान् कामैः सन्तर्प्य च महाधनैः । ११३०
प्रययौ सहितो विप्रैः स्तूयमानश्च माधवः । तस्माद्गन्धर्व्वतीर्थाच्च महाबाहुररिन्दमः ।
गर्गस्रोतो महातीर्थमाजगामैककुण्डली । तत्र गर्गेण वृद्धेन तपसा भावितात्मना ।
कालज्ञानगतिश्चैव ज्योतिषाञ्च व्यतिक्रमः । उत्पाता दारुणाश्चैव शुभाश्च जनमेजय ।
सरस्वत्याः शुभे तीर्थे विहिता वै महात्मना । तस्य नाम्ना च तत्तीर्थं गर्गस्रोत इति स्मृतं ।
तत्र गर्गं महाभागमृषयः सुव्रता नृप । उपासाञ्चक्रिरे नित्यं कालज्ञानं प्रति प्रभो । ११३५
तत्र गत्वा महाराज बलः श्वेतानुलेपनः । विधिवद्धि धनं दत्त्वा मुनीनां भावितात्मनां ।
उच्चावचांस्तथा भक्ष्यान् विप्रेभ्यो विप्रदाय सः । नीलवासास्तदाऽगच्छच्छङ्खतीर्थं महायशाः ।

तत्रापश्यन्महाशाखं महामेरुमिवोच्छ्रितं । श्वेतपर्व्वतसङ्काशमृषिसङ्घैर्निषेवितं ।
सरस्वत्यास्तटे जातं नगं तालध्वजो बली । यत्र विद्याधराश्चैव राक्षसाश्चामितौजसः ।
पिशाचाश्चामितबला यत्र सिद्धाः सहस्रशः । ते सर्व्वे ह्यशनं त्यक्त्वा फलं तस्य वनस्पतेः । २१४०
व्रतैश्च नियमैश्चैव काले काले स्म भुञ्जते । प्राप्तैश्च नियमैस्तैस्तैर्विचरन्तः पृथक् पृथक् ।
अदृश्यमाना मनुजैर्व्यचरन् पुरुषर्षभ । एवं ख्यातो नरव्याघ्र लोकेऽस्मिन् स वनस्पतिः ।
ततस्तीर्थं सरस्वत्याः पावनं लोकविश्रुतं । तस्मिंश्च यदुशार्दूलो दत्त्वा तीर्थे पयस्विनीः ।
ताम्रायसानि भाण्डानि वस्त्राणि विविधानि च । पूजयित्वा द्विजांश्चैव पूजितश्च तपोधनैः ।
पुण्यं द्वैतवनं राजन्नाजगाम हलायुधः । तत्र गत्वा मुनीन् दृष्ट्वा नानावेशधरान् बलः । २१४५
आप्लुत्य सलिले चापि पूजयामास वै द्विजान् । तथैव दत्त्वा विप्रेभ्यः परिभोगान् सुपुष्कलान् ।
ततः प्रायाद्बलो राजन् दक्षिणेन सरस्वतीं । गत्वा चैवं महाबाहुर्नातिदूरे महायशाः ।
धर्म्मात्मा नागधन्वानं तीर्थमागमदच्युतः । यत्र पन्नगराजस्य वासुकेः सन्निवेशनं ।
महाद्युतेर्महाराज बहुभिः पन्नगैर्वृतं । ऋषीणां हि सहस्राणि तत्र नित्यं चतुर्द्दश ।
यत्र देवाः समागम्य वासुकिं पन्नगोत्तमं । सर्व्वे पन्नगराजानमभ्यषिञ्चन् यथाविधि । २१५०
पन्नगेभ्यो भयं तत्र विद्यते न स्म पौरव । तत्रापि विधिवद्दत्त्वा विप्रेभ्यो रत्नसञ्चयान् ।
प्रायात् प्राचीं दिशं तत्र तथा तीर्थान्यनेकशः । सहस्रशतसंख्यानि प्रथितानि पदे पदे ।
आप्लुत्य तेषु तीर्थेषु यथोक्तं तत्र चर्षिभिः । कृत्वोपवासनियमं दत्त्वा दानानि सर्व्वशः ।
अभिवाद्य मुनींस्तान् वै तत्र तीर्थनिवासिनः । उद्दिष्टमार्गः प्रययौ यत्र भूयः सरस्वती ।
प्राङ्मुखं वै निवर्त्तते वृष्टिर्व्वातहता यथा । ऋषीणां नैमिषेयाणामवेक्षार्थं महात्मनां । २१५५
निवृत्तान्तां सरिच्छ्रेष्ठां तत्र दृष्ट्वा तु लाङ्गली । बभूव विस्मितो राजन् बलः श्वेतानुलेपनः ।
॥ जनमेजय उवाच ॥ कस्मात् सरस्वती ब्रह्मन् निवृत्ता प्राङ्मुखी ततः । व्याख्यातुमेतदिच्छामि सर्व्वमध्वर्य्युसत्तम ।
कस्मिंश्चित् कारणे तत्र विस्मितो यदुनन्दनः । निवृत्ता हेतुना केन कथमेव सरिद्वरा ।
॥ वैशम्पायन उवाच ॥ पूर्व्वं कृतयुगे राजन् नैमिषेयास्तपस्विनः । वर्त्तमाने सुविपुले सत्रे द्वादशवार्षिके ।
ऋषयो बहवो राजन् तत् सत्रमभिपेदिरे । उषित्वा च महाभागास्तस्मिन् सत्रे यथाविधि । २१६०
निवृत्ते नैमिषीये वै सत्रे द्वादशवार्षिके । आजग्मुर्ऋषयस्तत्र बहवस्तीर्थकारणात् ।
ऋषीणां बहुलत्वात्तु सरस्वत्या विशाम्पते । तीर्थानि नगरायन्ते कूले वै दक्षिणे तदा ।
समन्तपञ्चकं यावत्तावत्ते द्विजसत्तमाः । तीर्थलोभान्नरव्याघ्र नद्यास्तीरं समाश्रिताः ।
जुह्वतां तत्र तेषां तु मुनीनां भावितात्मनां । स्वाध्यायेनातिमहता बभूवुः पूरिता दिशः ।
अग्निहोत्रैस्ततस्तेषां क्रियमाणैर्महात्मनां । अशोभत सरिच्छ्रेष्ठा दीप्यमानैः समन्ततः । २१६५
वालिखिल्या महाराज अश्मकुट्टाश्च तापसाः । दन्तोलूखलिनश्चान्ये प्रसंख्यानास्तथा परे ।
वायुभक्षा जलाहाराः पर्णभक्षाश्च तापसाः । नानानियमयुक्ताश्च तथा स्थण्डिलशायिनः ।

आसन् वै मुनयस्तत्र सरस्वत्याः समीपतः । शोभयन्तः सरिच्छ्रेष्ठां गङ्गामिव दिवौकसः ।
शतशश्च समापेतुरृषयः सत्रयाजिनः । तेऽवकाशं न ददृशुः सरस्वत्या महाव्रताः ।
ततो यज्ञोपवीतैस्ते तत्तीर्थं निर्म्ममाय वै । जुहुवुश्चाग्निहोत्रांश्च चक्रुश्च विविधाः क्रियाः । २१७०
ततस्तमृषिसङ्घातं निराशं चिन्तयाऽन्वितं । दर्शयामास राजेन्द्र तेषामर्थे सरस्वती ।
ततः कुञ्जान् बहून् कृत्वा सन्निवृत्ता सरिद्वरा । ऋषीणां पुण्यतपसां कारुण्याज्जनमेजय ।
ततो निवृत्य राजेन्द्र तेषामर्थे सरस्वती । भूयः प्रतीच्यभिमुखी सुस्राव सरिद्वरा ।
अमोघागमनं कृत्वा तेषां भूयो व्रजाम्यहं । इत्यद्भुतं महच्चक्रे तदा राजन्महानदी ।
एवं स कुञ्जो राजन् वै नैमिषीय इति स्मृतः । कुरुश्रेष्ठ कुरुक्षेत्रे कुरुष्व महतीं क्रियां । २१७५
तत्र कुञ्जान् बहून्दृष्ट्वा निवृत्ताञ्च सरस्वतीं । बभूव विस्मयस्तत्र रामस्याथ महात्मनः ।
उपस्पृश्य तु तत्रापि विधिवद्यदुनन्दनः । दत्त्वा दायान् द्विजातिभ्यो भाण्डानि विविधानि च ।
भक्ष्यं भोज्यञ्च विविधं ब्राह्मणेभ्यः प्रदाय च । ततः प्रायाद्बलो राजन् पूज्यमानो द्विजातिभिः ।
सरस्वतीतीर्थवरं नानाद्विजगणायुतं । वदरेङ्गुदकाश्मर्य्यप्लक्षाश्वत्थविभीतकैः ।
कङ्कोलैश्च पलाशैश्च करीरैः पीलुभिस्तथा । सरस्वतीतीररुहैस्तरुभिर्व्विविधैस्तथा । २१८०
करूषकवरैश्चैव बिल्वैराम्रातकैस्तथा । अतिमुक्तकषण्डैश्च पारिजातैश्च शोभितं ।
कदलीवनभूयिष्ठं दृष्टिकान्तं मनोहरं । वाय्वम्बुफलपर्णादैर्दन्तोलूखलिकैरपि ।
तथाऽश्मकुट्टैर्व्वानेयैर्मुनिभिर्ब्बहुभिर्व्वृतं । स्वाध्यायघोषसंघुष्टं मृगयूथशताकुलं ।
अहिंस्रैर्धर्म्मपरमैर्नृभिरत्यर्थसेवितं । सप्तसारस्वतं तीर्थमाजगाम हलायुधः ।
यत्र मङ्कणकः सिद्धस्तपस्तेपे महामुनिः । २१८५

इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

॥ जनमेजय उवाच ॥ सप्तसारस्वतं कस्मात् कश्च मङ्कणको मुनिः । कथं सिद्धः स भगवान् कश्चास्य नियमोऽभवत् ।
कस्य वंशे समुत्पन्नः किञ्चाधीतं द्विजोत्तम । एतदिच्छाम्यहं श्रोतुं विधिवद्द्विजसत्तम ।
॥ वैशम्पायन उवाच ॥ राजन् सप्त सरस्वत्यो याभिर्व्याप्तमिदं जगत् । आहूता बलवद्भिर्हि तत्र तत्र सरस्वती ।
सुप्रभा काञ्चनाक्षी च विशाला च मनोरमा । सरस्वती चौघवती सुरेणुर्व्विमलोदका ।
पितामहस्य महतो वर्त्तमाने महामखे । वितते यज्ञवाटे च संसिद्धेषु द्विजातिषु । २१९०
पुण्याहघोषैर्व्विमलैर्व्वेदानां निनदैस्तथा । देवेषु चैव व्यग्रेषु तस्मिन् यज्ञविधौ तदा ।
तत्र चैव महाराज दीक्षिते प्रपितामहे । यजतस्तस्य सत्रेण सर्व्वकामसमृद्धिना ।
मनसा चिन्तिता ह्यर्था धर्म्मार्थकुशलैस्तदा । उपतिष्ठन्ति राजेन्द्र द्विजातींस्तत्र तत्र ह ।
जगुश्च तत्र गन्धर्व्वा ननृतुश्चाप्सरोगणाः । वादित्राणि च दिव्यानि वादयामासुरञ्जसा ।
तस्य यज्ञस्य सम्पत्त्या तुतुषुर्देवता अपि । विस्मयं परमं जग्मुः किमु मानुषयोनयः । २१९५
वर्त्तमाने तथा यज्ञे पुष्करस्थे पितामहे । अब्रुवन्नृषयो राजन्नायं यज्ञो महागुणः ।

विघ्नतो वै महादेव ऋषेरर्थे नराधिप। नायं नृत्येद्यथा देव तथा त्वं कर्त्तुमर्हसि।
ततो देवो मुनिं दृष्ट्वा हर्षाविष्टमतीव ह। सुराणां हितकामार्थं महादेवोऽभ्यभाषत।
भो भो ब्राह्मण धर्म्मज्ञ किमर्थं नृत्यते भवान्। हर्षस्थानं किमर्थञ्च तवेदमधिकं मुने।
तपस्विनो धर्म्मपथे स्थितस्य द्विजसत्तम। २२३०
॥ ऋषिरुवाच ॥ किन्न पश्यसि मे ब्रह्मन् कराच्छाकरसं स्रुतं। यं दृष्ट्वाहं प्रनृत्तो वै हर्षेण महता विभो।
तं प्रहस्याब्रवीद्देवो मुनिं रागेण मोहितं। अहं न विस्मयं विप्र गच्छामीति प्रपश्य मां।
एवमुक्त्वा मुनिश्रेष्ठं महादेवेन धीमता। अङ्गुल्यग्रेण राजेन्द्र स्वाङ्गुष्ठस्ताडितोऽभवत्।
ततो भस्म क्षताद्राजन् निर्गतं हिमसन्निभं। तद्दृष्ट्वा व्रीडितो राजन् स मुनिः पादयोर्गतः।
मेने देवं महादेवमिदञ्चोवाच विस्मितः। नान्यं देवादहं मन्ये रुद्रात् परतरं महत्। २२३५
सुरासुरस्य जगतो गतिस्त्वमसि शूलधृक्। त्वया सृष्टमिदं विश्वं वदन्तीह मनीषिणः।
त्वामेव सर्व्वं विशति पुनरेव युगक्षये। देवैरपि न शक्यस्त्वं परिज्ञातुं कुतो मया।
त्वयि सर्व्वे स्म दृश्यन्ते भावा ये जगति स्थिताः। त्वामुपासन्त वरदं देवा ब्रह्मादयोऽनघ।
सर्व्वस्त्वमसि देवानां कर्त्ता कारयिता च ह। त्वत्प्रसादात् सुराः सर्व्वे मोदन्तीहाकुतोभयाः।
एवं स्तुत्वा महादेवं स ऋषिः प्रणतोऽभवत्। यदिदं चापलं देव कृतमेतत् स्मयादिकं। २२४०
ततः प्रसादयामि त्वां तपो मे न क्षरेदिति। ततो देवः प्रीतमनास्तमृषिं पुनरब्रवीत्।
तपस्ते वर्द्धतां विप्र मत्प्रसादात् सहस्रधा। आश्रमे चेह वत्स्यामि त्वया सार्द्धमहं सदा।
सप्त सारस्वते चास्मिन् यो मामर्च्चिष्यते नरः। न तस्य दुर्लभं किञ्चिद्भवितेह परत्र वा।
सारस्वतञ्च ते लोकं गमिष्यन्ति न संशयः। एतन्मङ्कणकस्यापि चरितं भूरितेजसः।
स हि पुत्रः सुकन्यायामुत्पन्नो मातरिश्वना। २२४५

इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने ऊनचत्वारिंशोऽध्यायः॥ ३९॥

॥ वैशम्पायन उवाच ॥ उषित्वा तत्र रामस्तु सम्पूज्याश्रमवासिनः। तथा मङ्कणके प्रीतिं शुभाञ्चक्रे हलायुधः।
दत्त्वा दानं द्विजातिभ्यो रजनीं तामुपोष्य च। पूजितो मुनिसङ्घैश्च प्रातरुत्थाय लाङ्गली।
अनुज्ञाप्य मुनीन् सर्व्वान् स्पृष्ट्वा तोयञ्च भारत। प्रययौ त्वरितो रामस्तीर्थहेतोर्महाबलः।
ततस्त्वौशनसं तीर्थमाजगाम हलायुधः। कपालमोचनं नाम यत्र मुक्तो महामुनिः।
महता शिरसा राजन् ग्रस्तजङ्घो महोदरः। राक्षसस्य महाराज रामक्षिप्तस्य वै पुरा। २२५०
तत्र पूर्व्वं तपस्तप्तं काव्येन सुमहात्मना। यत्रास्य नीतिरखिला प्रादुर्भूता महात्मनः।
यत्रस्थश्चिन्तयामास दैत्यदानवविग्रहं। तत् प्राप्य च बली राजन् तीर्थप्रवरमुत्तमं।
विधिवद्वै ददौ वित्तं ब्राह्मणानां महात्मनां।
॥ जनमेजय उवाच ॥ कपालमोचनं ब्रह्मन् कथं यत्र महामुनिः। मुक्तः कथञ्चास्य शिरो लग्नं केन च हेतुना।
॥ वैशम्पायन उवाच ॥ पुरा वै दण्डकारण्ये राघवेण महात्मना। वसता राजशार्दूल राक्षसान् शमयिष्यता। २२५५

जनस्थाने शिरश्छिन्नं राक्षसस्य दुरात्मनः । क्षुरेण शितधारेण तत्पपात महावने ।
महोदरस्य तल्लग्नं जङ्घायां वै यदृच्छया । वने विचरतो राजन्नस्थि भित्त्वाऽस्फुरत्तदा ।
स तेन लग्नेन तदा द्विजातिर्न शशाक ह । अभिगन्तुं महाप्राज्ञस्तीर्थान्यायतनानि च ।
स पूतिना विस्रवता वेदनार्त्तो महामुनिः । जगाम सर्व्वतीर्थानि पृथिव्यामिति नः श्रुतं ।
स गत्वा सरितः सर्व्वाः समुद्रांश्च महातपाः । कथयामास तत् सर्व्वमृषीणां भावितात्मनां । २२६०
आप्लुतः सर्व्वतीर्थेषु न च मोक्षमवाप्तवान् । स तु शुश्राव विप्रेन्द्रो मुनीनां वचनं महत् ।
सरस्वत्यास्तीर्थवरं ख्यातमौशनसं तदा । सर्व्वपापप्रशमनं सिद्धिक्षेत्रमनुत्तमं ।
स तु गत्वा ततस्तत्र तीर्थमौशनसं द्विजः । तत औशनसे तीर्थे तस्योपस्पृशतस्तदा ।
तच्छिरश्चरणं मुक्त्वा पपातान्तर्ज्जले तदा । विमुक्तस्तेन शिरसा परं सुखमवाप ह ।
स चाप्यन्तर्ज्जले मूर्द्धा जगामादर्शनं विभो । ततः स विशिरा राजन् पूतात्मा वीतकल्मषः । २२६५
आजगामाश्रमं प्रीतः कृतकृत्यो महोदरः । सोऽथ गत्वाश्रमं पुण्यं विप्रमुक्तो महातपाः ।
कथयामास तत् सर्व्वमृषीणां भावितात्मनां । ते श्रुत्वा वचनं तस्य ततस्तीर्थस्य मानद ।
कपालमोचनमिति नाम चक्रुः समागताः । स चापि तीर्थप्रवरं पुनर्गत्वा महानृषिः ।
पीत्वा पयः सुविपुलं सिद्धिमायात्तदा मुनिः । तत्र दत्त्वा बहून् दायान् विप्रान् सम्पूज्य माधवः ।
जगाम वृष्णिप्रवरो रुषङ्गोराश्रमं तदा । यत्र तप्तं तपो घोरमार्ष्टिषेणेन भारत । २२७०
ब्राह्मण्यं लब्धवांस्तत्र विश्वामित्रो महामुनिः । सर्व्वकामसमृद्धञ्च तदाश्रमपदं महत् ।
मुनिभिर्ब्राह्मणैश्चैव सेवितं सर्व्वदा विभो । ततो हलधरः श्रीमान् ब्राह्मणैः परिवारितः ।
जगाम तत्र राजेन्द्र रुषङ्गुस्तनुमत्यजत् । रुषङ्गुर्ब्राह्मणो वृद्धस्तपोनित्यश्च भारत ।
देहन्यासे कृतमना विचिन्त्य बहुधा तदा । ततः सर्व्वानुपादाय तनयान् वै महातपाः ।
रुषङ्गुरब्रवीत्तत्र नयध्वं मां पृथूदकं । विज्ञायातीतवयसं रुषङ्गुं ते तपोधनाः । २२७५
तञ्च तीर्थमुपानिन्युः सरस्वत्यास्तपोधनं । स तैः पुत्त्रैस्तदा धीमानानीतो वै सरस्वतीं ।
पुण्यां तीर्थशतोपेतां विप्रसङ्घैर्निषेवितां । स तत्र विधिना राजन्नाप्लुत्य सुमहातपाः ।
ज्ञात्वा तीर्थगुणांश्चैव प्राहेदमृषिसत्तमः । सुप्रीतः पुरुषव्याघ्र सर्व्वान् पुत्त्रानुपासतः ।
सरस्वत्युत्तरे तीरे यस्त्यजेदात्मनस्तनुं । पृथूदके जप्यपरो नैनं श्वो मरणं तपेत् ।
तत्राप्लुत्य स धर्म्मात्मा उपस्पृश्य हलायुधः । दत्त्वा चैव बहून् दायान् विप्राणां विप्रवत्सलः । २२८०
ससर्ज्ज यत्र भगवाल्लोकाल्लोकपितामहः । यत्रार्ष्टिषेणः कौरव्य ब्राह्मण्यं संशितव्रतः ।
तपसा महता राजन् प्राप्तवानृषिसत्तमः । सिन्धुद्वीपश्च राजर्षिर्द्देवापिश्च महातपाः ।
ब्राह्मण्यं लब्धवान् यत्र विश्वामित्रस्तथा मुनिः । महातपस्वी भगवानुग्रतेजा महातपाः ।
तत्राजगाम बलवान् बलभद्रः प्रतापवान् ।

इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने चत्वारिंशोऽध्यायः ॥ ४० ॥

॥ जनमेजय उवाच ॥ कथमार्ष्टिषेणो भगवान् विपुलं तप्तवांस्तपः। सिन्धुद्वीपः कथञ्चापि ब्राह्मण्यं लब्धवांस्तदा। २२८५
देवापिश्च कथं ब्रह्मन् विश्वामित्रश्च सत्तम। तन्ममाचक्ष्व भगवन् परं कौतूहलं हि मे।
॥ वैशम्पायन उवाच ॥ पुरा कृतयुगे राजन्नार्ष्टिषेणो द्विजोत्तमः। वसन् गुरुकुले नित्यं नित्यमध्ययने रतः।
तस्य राजन् गुरुकुले वसतो नित्यमेव च। समाप्तिं नागमद्विद्या नापि वेदा विशाम्पते।
स निर्व्विण्णस्ततो राजंस्तपस्तेपे महातपाः। ततो वै तपसा तेन प्राप्य वेदाननुत्तमान्।
स विद्वान् वेदयुक्तश्च सिद्धश्चाप्यृषिसत्तमः। तत्र तीर्थे वरान् प्रादात् त्रीनेव सुमहातपाः। २२९०
अस्मिंस्तीर्थे महानद्या अद्यप्रभृति मानवः। आप्लुतो वाजिमेधस्य फलं प्राप्स्यति पुष्कलं।
अद्यप्रभृति नैवात्र भयं व्यालाद्भविष्यति। अपि चाल्पेन कालेन फलं प्राप्स्यति पुष्कलं।
एवमुक्त्वा महातेजा जगाम त्रिदिवं मुनिः। एवं सिद्धः स भगवानार्ष्टिषेणः प्रतापवान्।
तस्मिन्नेव तदा तीर्थे सिन्धुद्वीपः प्रतापवान्। देवापिश्च महाराज ब्राह्मण्यं प्रापतुर्महत्।
तथा च कौशिकस्तात तपोनित्यो जितेन्द्रियः। तपसा वै सुतप्तेन ब्राह्मणत्वमवाप्तवान्। २२९५
गाधिर्नाम महानासीत् क्षत्रियः प्रथितो भुवि। तस्य पुत्त्रोऽभवद्राजन् विश्वामित्रः प्रतापवान्।
स राजा कौशिकस्तात महायोग्यभवत् किल। स पुत्त्रमभिषिच्याथ विश्वामित्रं महातपाः।
देहन्यासे मनश्चक्रे तमूचुः प्रणताः प्रजाः। न गन्तव्यं महाप्राज्ञ त्राहि चास्मान्महाभयात्।
एवमुक्तः प्रत्युवाच ततो गाधिः प्रजास्ततः। विश्वस्य जगतो गोप्ता भविष्यति सुतो मम।
इत्युक्त्वा तु ततो गाधिर्व्विश्वामित्रं निवेश्य च। जगाम त्रिदिवं राजन् विश्वामित्रोऽभवन्नृपः। २३००
न स शक्नोति पृथिवीं यत्नवानपि रक्षितुं। ततः शुश्राव राजा स राक्षसेभ्यो महाभयं।
निर्य्ययौ नगराच्चापि चतुरङ्गबलान्वितः। स यात्वा दूरमध्वानं वशिष्ठाश्रममभ्ययात्।
तस्य ते सैनिका राजंश्चक्रुस्तत्रानयान् बहून्। ततस्तु भगवान् विप्रो वशिष्ठो ब्रह्मणः सुतः।
ददृशेऽथ ततः सर्व्वं भज्यमानं महावनं। तस्य क्रुद्धो महाराज वशिष्ठो मुनिसत्तमः।
सृजस्व शवरान् घोरान् इति स्वां गामुवाच ह। तथोक्ता साऽसृजद्धेनुः पुरुषान् घोरदर्शनान्। २३०५
ते च तद्बलमासाद्य बभञ्जुः सर्व्वतो दिशं। तच्छ्रुत्वा विद्रुतं सैन्यं विश्वामित्रस्तु गाधिजः।
तपः परं मन्यमानस्तपस्येव मनो दधे। सोऽस्मिंस्तीर्थवरे राजन् सरस्वत्याः समाहितः।
नियमैश्चोपवासैश्च कर्षयन्देहमात्मनः। जलाहारो वायुभक्षः पर्णाहारश्च सोऽभवत्।
तथा स्थण्डिलशायी च ये चान्ये नियमाः पृथक्। असकृत्तस्य देवास्तु व्रतविघ्नं प्रचक्रिरे।
न चास्य नियमाद्बुद्धिरपयाति महात्मनः। ततः परेण यत्नेन तप्त्वा बहुविधं तपः। २३१०
तेजसा भास्कराकारो गाधिजः समपद्यत। तपसा तु तथा युक्तं विश्वामित्रं पितामहः।
अमन्यत महातेजा वरदो वरमस्य तत्। स तु वव्रे वरं राजन् स्यामहं ब्राह्मणस्त्विति।
तथेति चाब्रवीद्ब्रह्मा सर्व्वलोकपितामहः। स लब्ध्वा तपसोग्रेण ब्राह्मणत्वं महायशाः।
विचचार महीं कृत्स्नां कृतकामः सुरोपमः। तस्मिंस्तीर्थवरे रामः प्रदाय विविधं वसु।

पयस्विनीस्तथा धेनूर्यानानि शयनानि च । अथ वस्त्राण्यलङ्कारं भक्ष्यं पेयञ्च शोभनं । २२१५
अददन्मुदितो राजन् पूजयित्वा द्विजोत्तमान् । ययौ राजंस्ततो रामो बकस्याश्रममन्तिकात् ।
यत्र तेपे तपस्तीव्रं दाल्भ्यो बक इति श्रुतिः ।

इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

॥ वैशम्पायन उवाच ॥ ब्रह्मयोनेरवाकीर्णं जगाम यदुनन्दनः । यत्र दाल्भ्यो बको राजन्नाश्रमस्थो महातपाः ।
जुहाव धृतराष्ट्रस्य राष्ट्रं वैचित्रवीर्य्यिणः । तपसा घोररूपेण कर्षयन्देहमात्मनः ।
क्रोधेन महताविष्टो धर्म्मात्मा वै प्रतापवान् । पुरा हि नैमिषीयाणां सत्रे द्वादशवार्षिके । २२२०
वृत्ते विश्वजितोऽन्ते वै पाञ्चालानृषयोऽगमन् । तत्रेश्वरमयाचन्त दक्षिणार्थं मनीषिणः ।
बलान्वितान् वत्सतरान् निर्व्याधीनेकविंशतिं । तानब्रवीद्बको दाल्भ्यो विभजध्वं पशूनिति ।
पशूनेतानहं त्यक्त्वा भिक्षिष्ये राजसत्तमं । एवमुक्त्वा ततो राजन् ऋषीन् सर्व्वान् प्रतापवान् ।
जगाम धृतराष्ट्रस्य भवनं ब्राह्मणोत्तमः । स समीपगतो भूत्वा धृतराष्ट्रं जनेश्वरं ।
अयाचत पशून् दाल्भ्यः स चैनं रुषितोऽब्रवीत् । यदृच्छया मृता दृष्ट्वा गास्तदा नृपसत्तमः । २२२५
एतान् पशून्नय क्षिप्रं ब्रह्मबन्धो यदीच्छसि । ऋषिस्तथा वचः श्रुत्वा चिन्तयामास धर्म्मवित् ।
अहो बत नृशंसं वै वाक्यमुक्तोऽस्मि संसदि । चिन्तयित्वा मुहूर्त्तेन रोषाविष्टो द्विजोत्तमः ।
मतिञ्चक्रे विनाशाय धृतराष्ट्रस्य भूपतेः । स उत्कृत्य मृतानां वै मांसानि मुनिसत्तमः ।
जुहाव धृतराष्ट्रस्य राष्ट्रं नरपतेः पुरा । अवकीर्णे सरस्वत्यास्तीर्थे प्रज्वाल्य पावकं ।
बको दाल्भ्यो महाराज नियमं परमं स्थितः । स तैरेव जुहावास्य राष्ट्रं मांसैर्महातपाः । २२३०
तस्मिंस्तु विधिवत् सत्रे सम्प्रवृत्ते सुदारुणे । अक्षीयत ततो राष्ट्रं धृतराष्ट्रस्य पार्थिव ।
ततः प्रक्षीयमाणन्तद्राष्ट्रं तस्य महीपते । छिद्यमानं यथाऽनन्तं वनं परशुना विभो ।
बभूवापद्गतं तच्च व्यवकीर्णमचेतनं । दृष्ट्वा तथाऽवकीर्णन्तु राष्ट्रं स मनुजाधिपः ।
बभूव दुर्म्मना राजंश्चिन्तयामास च प्रभुः । मोक्षार्थमकरोद्यत्नं ब्राह्मणैः सहितः पुरा ।
न च श्रेयोऽध्यगच्छत्तु क्षीयते राष्ट्रमेव च । यदा स पार्थिवः खिन्नस्ते च विप्रास्तदाऽनघ । २२३५
यदा चापि न शक्नोति राष्ट्रं मोचयितुं नृप । अथ वै प्राश्निकांस्तत्र पप्रच्छ जनमेजय ।
ततो वै प्राश्निकाः प्राहुः पशुविप्रकृतस्त्वया । मांसैरभिजुहोतीति तव राष्ट्रं मुनिर्बकः ।
तेन ते हूयमानस्य राष्ट्रस्यास्य क्षयो महान् । तस्यैतत्तपसः कर्म्म येन तेऽद्य क्षयो महान् ।
अपां कुञ्जे सरस्वत्यास्तं प्रसादय पार्थिव । सरस्वतीं ततो गत्वा स राजा बकमब्रवीत् ।
निपत्य शिरसा भूमौ प्राञ्जलिर्भरतर्षभ । प्रसादये त्वां भगवन्नपराधं क्षमस्व मे । २२४०
मम दीनस्य लुब्धस्य मौर्ख्येण हतचेतसः । त्वं गतिस्त्वञ्च मे नाथः प्रसादं कर्त्तुमर्हसि ।
तं तथा विलपन्तन्तु शोकोपहतचेतसं । दृष्ट्वा तस्य कृपा जज्ञे राष्ट्रं तच्च व्यमोचयत् ।
ऋषिः प्रसन्नस्तस्याभूत् संरम्भञ्च विहाय सः । मोक्षार्थं तस्य राष्ट्रस्य जुहाव पुनराहुतिं ।

मोचयित्वा ततो राज्ञं प्रतिग्टह्य पशून् बहून्। हृष्टात्मा नैमिषारण्यं जगाम पुनरेव च।
धृतराष्ट्रोऽपि धर्म्मात्मा स्वस्थचेता महामनाः। स्वमेव नगरं राजा प्रतिपेदे महर्द्धिमत्। २२४५
तत्र तीर्थे महाराज वृहस्पतिरुदारधीः। असुराणामभावाय भवाय च दिवौकसां।
मांसैरभिजुहावेष्टिमक्षीयन्त ततोऽसुराः। दैवतैरपि सम्भग्ना जितकाशिभिराहवे।
तत्रापि विधिवद्दत्त्वा ब्राह्मणेभ्यो महायशाः। वाजिनः कुञ्जरांश्चैव रथांश्चाश्वतरीयुतान्।
रत्नानि च महार्हाणि धनं धान्यञ्च पुष्कलं। ययौ तीर्थं महाबाहुर्यायातं पृथिवीपते।
तत्र यज्ञे ययातेश्च महाराज सरस्वती। सर्पिः पयश्च सुस्राव नाहुषस्य महात्मनः। २२५०
तत्रेष्ट्वा पुरुषव्याघ्रो ययातिः पृथिवीपतिः। आक्रामदूर्द्ध्वं मुदितो लेभे लोकांश्च पुष्कलान्।
पुनस्तत्र च राज्ञस्तु ययातेर्यजतः प्रभोः। औदार्य्यं परमं कृत्वा भक्तिञ्चात्मनि शाश्वतीं
ददौ कामान् ब्राह्मणेभ्यो यान् यान् यो मनसेच्छति। यो यत्र स्थित एवेह आहूतो यज्ञसंस्तरे।
तस्य तस्य सरिच्छ्रेष्ठा गृहादि शयनादिकं। षड्रसं भोजनञ्चैव दानं नानाविधन्तथा।
ते मन्यमाना राज्ञस्तु सम्प्रदानमनुत्तमं। राजानं तुष्टुवुः प्रीता ददुश्चैवाशिषः शुभाः। २२५५
तत्र देवाः सगन्धर्व्वाः प्रीता यज्ञस्य सम्पदा। विस्मिता मानुषाश्चासन् दृष्ट्वा तां यज्ञसम्पदं।
ततस्तालकेतुर्म्महाधर्म्मकेतुर्म्महात्मा कृतात्मा महादाननित्यः। वशिष्ठापवाहं महाभीमवेगं धृतात्मा जितात्मा समभ्याजगाम।

इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने द्विचत्वारिंशोऽध्यायः॥ ४२ ॥

॥ जनमेजय उवाच ॥ वशिष्ठस्यापवाहोऽसौ भीमवेगः कथं नु सः। किमर्थञ्च सरिच्छ्रेष्ठा तमृषिं प्रत्यवाहयत्।
कथमस्याभवद्वैरं कारणं किञ्च तत् प्रभो। शंस पृष्टो महाप्राज्ञ न हि तृप्यामि कथ्यतां।
॥ वैशम्पायन उवाच ॥ विश्वामित्रस्य विप्रर्षेर्व्वशिष्ठस्य च भारत। भृशं वैरमभूद्राजंस्तपःस्पर्द्धाकृतं महत्। २२६०
आश्रमो वै वशिष्ठस्य स्थाणुतीर्थेऽभवन्महान्। पूर्व्वतः पार्श्वतश्चासीद्विश्वामित्रस्य धीमतः।
यत्र स्थाणुर्म्महाराज तप्तवान् परमं तपः। यत्रास्य कर्म्म तद्घोरं प्रवदन्ति मनीषिणः।
यत्रेष्ट्वा भगवान् स्थाणुः पूजयित्वा सरस्वतीं। स्थापयामास तत्तीर्थं स्थाणुतीर्थमिति प्रभो।
तत्र तीर्थे सुराः स्कन्दमभ्यषिञ्चन्नराधिप। सैनापत्येन महता सुरारिविनिवर्हणं।
तस्मिन् सारस्वते तीर्थे विश्वामित्रो महामुनिः। वशिष्ठञ्चालयामास तपसोग्रेण तच्छृणु। २२६५
विश्वामित्रवशिष्ठौ तावहन्यहनि भारत। स्पर्द्धां तपःकृतां तीव्रां चक्रतुस्तौ तपोधनौ।
तत्राप्यधिकसन्तप्तो विश्वामित्रो महामुनिः। दृष्ट्वा तेजो वशिष्ठस्य चिन्तामभिजगाम ह।
तस्य बुद्धिरियं ह्यासीद्धर्म्मनित्यस्य भारत। इयं सरस्वती तूर्णं मत्समीपं तपोधनं।
आनयिष्यति वेगेन वशिष्ठं जपतांवरं। इहागतं द्विजश्रेष्ठं हनिष्यामि न संशयः।
एवं निश्चित्य भगवान् विश्वामित्रो महामुनिः। सस्मार सरितां श्रेष्ठां क्रोधसंरक्तलोचनः। २२७०
सा ध्याता मुनिना तेन व्याकुलत्वं जगाम ह। जज्ञे चैनं महावीर्य्यं महाकोपञ्च भामिनी।

तत एवं वेपमाना विवर्णा प्राञ्जलिस्तदा । उपतस्थे मुनिवरं विश्वामित्रं सरस्वती ।
हतवीरा यथा नारी साऽभवद्दुःखिता भृशं । ब्रूहि किं करवाणीति प्रोवाच मुनिसत्तमं ।
तामुवाच मुनिः क्रुद्धो वशिष्ठं शीघ्रमानय । यावदेनं निहन्म्यद्य तच्छ्रुत्वा व्यथिता नदी ।
प्राञ्जलिस्तु ततः कृत्वा पुण्डरीकनिभेक्षणा । प्राकम्पत भृशं भीता वायुनेवाहता लता । २२७५
तथारूपान्तु तां दृष्ट्वा मुनिराह महानदीं । अविचारं वशिष्ठं त्वमानयस्वान्तिकं मम ।
सा तस्य वचनं श्रुत्वा ज्ञात्वा पापचिकीर्षितं । वशिष्ठस्य प्रभावञ्च जानन्त्यप्रतिमं भुवि ।
साऽभिगम्य वशिष्ठस्य इममर्थमचोदयत् । यदुक्ता सरितां श्रेष्ठा विश्वामित्रेण धीमता ।
उभयोः शापयोर्भीता वेपमाना पुनः पुनः । चिन्तयित्वा महाशापं ऋषिवित्रासिता भृशं ।
तां कृशाञ्च विवर्णाञ्च दृष्ट्वा चिन्तासमन्वितां । उवाच राजन् धर्म्मात्मा वशिष्ठो द्विपदाम्बरः । २२८०
॥ वशिष्ठ उवाच ॥ पाह्यात्मानं सरिच्छ्रेष्ठे वह मां शीघ्रगामिनि । विश्वामित्रः शपेद्धि त्वां मा कृथास्त्वं विचारणां ।
तस्य तद्वचनं श्रुत्वा कृपाशीलस्य सा सरित् । चिन्तयामास कौरव्य किं कृत्वा सुकृतं भवेत् ।
तस्याश्चिन्ता समुत्पन्ना वशिष्ठो मय्यतीव हि । कृतवान् हि दयां नित्यं तस्य कार्य्यं हितं मया ।
अथ कूले स्वके राजन् जपन्तमृषिसत्तमं । जुह्वानं कौशिकं प्रेक्ष्य सरस्वत्यभ्यचिन्तयत् ।
इदमन्तरमित्येव ततः सा सरिताम्बरा । कूलापहारमकरोत् स्वेन वेगेन सा सरित् । २२८५
तेन कूलापहारेण मैत्रावरुणिरौह्यत । उह्यमानः स तुष्टाव तदा राजन् सरस्वतीं ।
पितामहस्य सरसः प्रवृत्ताऽसि सरस्वति । व्याप्तञ्चेदं जगत् सर्व्वं तवैवाम्भोभिरुत्तमैः ।
त्वमेवाकाशगा देवि मेघेषूत्सृजसे पयः । सर्व्वाश्चापस्त्वमेवेति त्वत्तो वयमधीमहि ।
पुष्टिर्द्युतिस्तथा कीर्त्तिः सिद्धिर्बुद्धिरुमा तथा । त्वमेव वाणी स्वाहा त्वं तवायत्तमिदं जगत् ।
त्वमेव सर्व्वभूतेषु वससीह चतुर्व्विधा । एवं सरस्वती राजंस्तूयमाना महर्षिणा । २२९०
वेगेनोवाह तं विप्रं विश्वामित्राश्रमं प्रति । न्यवेदयत चाभीक्ष्णं विश्वामित्राय तं मुनिं ।
तमानीतं सरस्वत्या दृष्ट्वा कोपसमन्वितः । अथान्वेषत् प्रहरणं वशिष्ठान्तकरं तदा ।
तन्तु क्रुद्धमभिप्रेक्ष्य ब्रह्मवध्याभयान्नदी । अपोवाह वशिष्ठन्तु प्राचीं दिशमतन्द्रिता ।
उभयोः कुर्व्वती वाक्यं वञ्चयित्वा च गाधिजं । ततोऽपवाहितं दृष्ट्वा वशिष्ठमृषिसत्तमं ।
अब्रवीद्दुःखसंक्रुद्धो विश्वामित्रो ह्यमर्षणः । यस्मान्मां त्वं सरिच्छ्रेष्ठे वञ्चयित्वा पुनर्गता । २२९५
शोणितं वह कल्याणि रक्षोग्रामणिसंयुतं । ततः सरस्वती शप्ता विश्वामित्रेण धीमता ।
अवहच्छोणितोन्मिश्रं तोयं संवत्सरं तदा । अथर्षयश्च देवाश्च गन्धर्व्वाप्सरसस्तथा ।
सरस्वतीं तथा दृष्ट्वा बभूवुर्भृशदुःखिताः । एवं वशिष्ठापवाहो लोके ख्यातो जनाधिप ।
आगच्छच्च पुनर्म्मार्गं स्वमेव सरिताम्बरा ।

इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

॥ वैशम्पायन उवाच ॥ सा शप्ता तेन क्रुद्धेन विश्वामित्रेण धीमता । तस्मिंस्तीर्थवरे शुभ्रे शोणितं समुपावहत् । २३००

अथाजग्मुस्ततो राजन् राक्षसास्तत्र भारत। तत्र ते शोणितं सर्व्वे पिबन्तः सुखमासते।
हृष्टाश्च सुभृशं तेन सुखिता विगतज्वराः। नृत्यन्तश्च हसन्तश्च यथा स्वर्गजितस्तथा।
कस्यचित्त्वथ कालस्य ऋषयः सुतपोधनाः। तीर्थयात्रां समाजग्मुः सरस्वत्या महीपते।
ते तु सर्व्वेषु तीर्थेषु त्वाप्लुत्य मुनिपुङ्गवाः। प्राप्य प्रीतिं परां चापि तपोलुब्धा विशारदाः।
प्रययुर्हि ततो राजन् येन तीर्थमसृग्वहं। अथागम्य महाभागास्तत्तीर्थं दारुणं तदा। २४०५
दृष्ट्वा तोयं सरस्वत्याः शोणितेन परिप्लुतं। पीयमानञ्च रक्षोभिर्ब्बहुभिर्नृपसत्तम।
तान् दृष्ट्वा राक्षसान् राजन् मुनयः संशितव्रताः। परित्राणे सरस्वत्याः परं यत्नं प्रचक्रिरे।
ते तु सर्व्वे महाभागाः समागम्य महाव्रताः। आहूय सरितां श्रेष्ठामिदं वचनमब्रुवन्।
कारणं ब्रूहि कल्याणि किमर्थं ते ह्रदोह्ययं। एवमाकुलतां यातः श्रुत्वा ध्यास्यामहे वयं।
ततः सा सर्व्वमाचष्ट यथा वृत्तं प्रवेपती। दुःखितामथ तां दृष्ट्वा ऊचुस्ते वै तपोधनाः। २४१०
कारणं श्रुतमस्माभिः शापश्चैव श्रुतोऽनघे। करिष्यामो वयं यत्नं सर्व्व एव तपोधनाः।
एवमुक्त्वा सरिच्छ्रेष्ठामूचुस्तेऽथ परस्परं। विमोचयामहे सर्व्वे शापादेतां सरस्वतीं।
ते सर्व्वे ब्राह्मणा राजंस्तपोभिर्नियमैस्तथा। उपवासैश्च विविधैर्यमैः कष्टव्रतैस्तथा।
आराध्य पशुभर्त्तारं महादेवं जगत्पतिं। मोक्षयामासुस्तां देवीं सरिच्छ्रेष्ठां सरस्वतीं।
तेषान्तु सा प्रभावेण प्रकृतिस्था सरस्वती। प्रसन्नसलिला जज्ञे यथा पूर्व्वं तथैव हि। २४१५
विमुक्ता च सरिच्छ्रेष्ठा विबभौ सा यथा पुरा। दृष्ट्वा तोयं सरस्वत्या मुनिभिस्तैस्तथा कृतं।
तानेव शरणं जग्मू राक्षसाः क्षुधितास्तथा। बद्ध्वाऽञ्जलिन्ततो राजन् राक्षसाः क्षुधयाऽर्द्दिताः।
ऊचुस्तान् वै मुनीन् सर्व्वान् कृपायुक्तान् पुनः पुनः। वयं हि क्षुधिताश्चैव धर्म्माद्धीनाश्च शाश्वतात्।
न च नः कामकारोऽयं यद्वयं पापकारिणः। युष्माकञ्च प्रसादेन दुष्कृतेन च कर्म्मणा।
यत् पापं वर्द्धतेऽस्माकं यतः स्मो ब्रह्मराक्षसाः। योषिताञ्चैव पापेन योनिदोषकृतेन च। २४२०
एवं हि वैश्यशूद्राणां क्षत्रियाणां तथैव च। ये ब्राह्मणान् प्रद्विषन्ति ते भवन्तीह राक्षसाः।
आचार्य्यमृत्विजञ्चैव गुरुं वृद्धजनं तथा। प्राणिनो येऽवमन्यन्ते ते भवन्तीह राक्षसाः।
तत् कुरुध्वमिहास्माकं तारणं द्विजसत्तमाः। शक्ता भवन्तः सर्व्वेषां लोकानामपि तारणे।
तेषान्तु मुनयः श्रुत्वा तुष्टुवुस्तां महानदीं। मोक्षार्थं रक्षसां तेषामूचुः प्रयतमानसाः।
क्षुतं कीटावपन्नञ्च यच्चोच्छिष्टान्वितं भवेत्। सकेशमवधूतञ्च रुदितोपहतञ्च यत्। २४२५
एभिः संसृष्टमन्नञ्च भागोऽसौ रक्षसामिह। तस्माज्ज्ञात्वा सदा विद्वानेतान् यत्नाद्विवर्ज्जयेत्।
राक्षसानामसौ भुङ्क्ते यो भुङ्क्ते ह्यन्नमीदृशं। शोधयित्वा ततस्तीर्थं ऋषयस्ते तपोधनाः।
मोक्षार्थं राक्षसानाञ्च नदीं तां प्रत्यचोदयत्। महर्षीणां मतं ज्ञात्वा ततः सा सरिताम्वरा।
अरुणामानयामास स्वां तनुं पुरुषर्षभ। तस्यां ते राक्षसाः स्नात्वा तनुं त्यक्त्वा दिवं गताः।

अरुणायां महाराज ब्रह्मवध्यापहा हि सा । एतमर्थमभिज्ञाय देवराजः शतक्रतुः । २४३०
तस्मिंस्तीर्थवरे स्नात्वा विमुक्तः पाप्मना किल ।
॥ जनमेजय उवाच ॥ किमर्थं भगवान् शक्रो ब्रह्मवध्यामवाप्तवान । कथमस्मिंश्च तीर्थे वै आप्लुत्याकल्मषोऽभवत् ।
॥ वैशम्पायन उवाच ॥ शृणुष्वैतदुपाख्यानं यथा वृत्तं जनेश्वर । यथा बिभेद समयं नमुचेर्व्वासवः पुरा ।
नमुचिर्व्वासवाद्भीतः सूर्य्यरश्मिं समाविशत् । तेनेन्द्रः सख्यमकरोत् समयञ्चेदमब्रवीत् ।
न चार्द्रेण च शुष्केण न रात्रौ नापि चाहनि । वधिष्याम्यसुरश्रेष्ठ सखे सत्येन ते शपे । २४३५
एवं स कृत्वा समयं दृष्ट्वा नीहारमीश्वरः । चिच्छेदास्य शिरो राजन्नपां फेनेन वासवः ।
तच्छिरो नमुचेश्छिन्नं पृष्ठतः शक्रमन्वियात् । भो मित्रहन पापेति ब्रुवाणं शक्रमन्तिकात् ।
एवं स शिरसा तेन चोद्यमानः पुनः पुनः । पितामहाय सन्तप्त एतमर्थं न्यवेदयत् ।
तमब्रवील्लोकगुरुररुणायां यथाविधि । इष्ट्वोपस्पृश देवेन्द्र तीर्थे पापभयापहे ।
एषा पुण्यजला शक्र कृता मुनिभिरेव तु । निगूढमस्यागमनमिहासीत् पूर्व्वमेव तु । २४४०
ततोऽभ्येत्यारुणां देवीं प्लावयामास वारिणा । सरस्वत्यारुणायाश्च पुण्योऽयं सङ्गमो महान् ।
इह त्वं यज देवेन्द्र दद दानान्यनेकशः । अत्राप्लुत्य सुघोरात् त्वं पातकाद्विप्रमोक्ष्यसे ।
इत्युक्तः स सरस्वत्याः कुञ्जे वै जनमेजय । इष्ट्वा यथावद्वलभिदरुणायामुपास्पृशत् ।
स मुक्तः पाप्मना तेन ब्रह्मवध्याकृतेन च । जगाम संहृष्टमनास्त्रिदिवं त्रिदशेश्वरः ।
शिरस्तच्चापि नमुचेस्तथैवाप्लुत्य भारत । लोकान् कामदुघान् प्राप्तमक्षयान्राजसत्तम । २४४५
॥ वैशम्पायन उवाच ॥ तत्राप्युपस्पृश्य बलो महात्मा दत्त्वा च दानानि पृथग्विधानि । अवाप्य धर्म्मं परमार्थकर्म्मा जगाम सोमस्य महत् सुतीर्थं ।
यत्रायजद्राजसूयेन सोमः साक्षात् पुरा विधिवत् पार्थिवेन्द्र । अत्रिर्धीमान् विप्रमुख्यो बभूव होता यस्मिन् क्रतुमुख्ये महात्मा ।
यस्यान्तेऽभूत् सुमहद्दानवानां दैतेयानां राक्षसानाञ्च देवैः । यस्मिन् युद्धं तारकाख्यं सुतीव्रं यत्र स्कन्दस्तारकाख्यं जघान ।
सैनापत्यं लब्धवान् देवतानां महासेनो यत्र दैत्यान्तकर्त्ता । साक्षाच्चैव न्यवसत् कार्त्तिकेयः सदा कुमारो यत्र स प्लक्षराजः ।
इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
॥ जनमेजय उवाच ॥ सरस्वत्याः प्रभावोऽयमुक्तस्ते द्विजसत्तम । कुमारस्याभिषेकन्तु ब्रह्मन् व्याख्यातुमर्हसि । २४५०
यस्मिन् देशे च काले च यथा च वदताम्वर । यैश्चाभिषिक्तो भगवान् विधिना येन च प्रभुः ।
स्कन्दो यथा च दैत्यानामकरोत् कदनं महत् । तथा मे सर्व्वमाचक्ष्व परं कौतूहलं हि मे ।
॥ वैशम्पायन उवाच ॥ कुरुवंशस्य सदृशं कौतूहलमिदन्तव । हर्षमुत्पादयत्येव वचो मे जनमेजय ।
हन्त ते कथयिष्यामि शृण्वानस्य नराधिप । अभिषेकं कुमारस्य प्रभावञ्च महात्मनः ।

तेजो माहेश्वरं स्कन्नमग्नौ प्रपतितं पुरा । तत्सर्व्वभक्षो भगवान्नाशकद्दग्धुमक्षयं । २४५५
तेनासीदतितेजस्वी दीप्तिमान् हव्यवाहनः । न चैव धारयामास गर्भं तेजोमयं तदा ।
स गङ्गामभिसङ्गम्य नियोगाद्ब्रह्मणः पुरा । गर्भमाहितवान् दिव्यं भास्करोपमतेजसं ।
अथ गङ्गाऽपि तं गर्भमसहन्ती विधारणे । उत्ससर्ज्ज गिरौ रम्ये हिमवत्यमरार्च्चिते ।
स तत्र ववृधे लोकानावृत्य ज्वलनात्मजः । ददृशुर्ज्ज्वलनाकारं तं गर्भमथ कृत्तिकाः ।
शरस्तम्बे महात्मानमनलात्मजमीश्वरं । ममायमिति ताः सर्व्वाः पुत्त्रार्थिन्योऽभिचुकुशुः । २४६०
तासां विदित्वा भावन्तं मातॄणां भगवान् प्रभुः । प्रस्नुतानां पयः षड्भिर्व्वदनैरपिबत्तदा ।
तं प्रभावं समालोक्य तस्य बालस्य कृत्तिकाः । परं विस्मयमापन्ना देव्यो दिव्यवपुर्द्धराः ।
यत्रोत्सृष्टः स भगवान् गङ्गया गिरिमूर्द्धनि । स शैलः काञ्चनः सर्व्वः स बभौ कुरुसत्तम ।
वर्द्धता चैव गर्भेण पृथिवी तेन रञ्जिता । अतश्च सर्व्वे संवृत्ता गिरयः काञ्चनाकराः ।
कुमारः सुमहावीर्य्यः कार्त्तिकेय इति स्मृतः । गाङ्गेयः पूर्व्वमभवन्महायोगबलान्वितः । २४६५
शमेन तपसा चैव वीर्य्येण च समन्वितः । ववृधेऽतीव राजेन्द्र चन्द्रवत्प्रियदर्शनः ।
स तस्मिन् काञ्चने दिव्ये शरस्तम्बे श्रियावृतः । स्तूयमानः सदा शेते गन्धर्व्वैर्मुनिभिस्तथा ।
तथैनमन्वनृत्यन्त देवकन्याः सहस्रशः । दिव्यवादित्रनृत्यज्ञाः स्तुवन्त्यश्चारुदर्शनाः ।
अन्वास्ते च नदी देवं गङ्गा वै सरितांवरा । दधार पृथिवी चैनं बिभ्रती रूपमुत्तमं ।
जातकर्म्मादिकास्तत्र क्रियाश्चक्रे बृहस्पतिः । वेदश्चैनं चतुर्मूर्त्तिरुपतस्थे कृताञ्जलिः । २४७०
धनुर्व्वेदश्चतुष्पादः शस्त्रग्रामः ससंग्रहः । तत्रैनं समुपातिष्ठत् साक्षात् वाणी च केवला ।
स ददर्श महावीर्य्यो देवदेवमुमापतिं । शैलपुत्त्र्या समासीनं भूतसङ्घशतैर्व्वृतं ।
निकाया भूतसङ्घानां परमाद्भुतदर्शनाः । विकृता विकृताकारा विकृताभरणध्वजाः ।
व्याघ्रसिंहर्क्षवदना विडालमकराननाः । वृषदंशमुखाश्चान्ये गजोष्ट्रवदनास्तथा ।
उलूकवदनाः केचित् गृध्रगोमायुदर्शनाः । क्रौञ्चपारावतनिभैर्व्वदनै राङ्कवैरपि । २४७५
श्वाविच्छल्यकगोधानामजैडकगवां तथा । सदृशानि वपूंष्यन्ये तत्र तत्र व्यधारयन् ।
केचिच्छैलाम्बुदप्रख्याश्चक्रोद्यतगदायुधाः । केचिदञ्जनपुञ्जाभाः केचिच्छ्वेताचलप्रभाः ।
सप्त मातृगणाश्चैव समाजग्मुर्व्विशाम्पते । साध्या विश्वेऽथ मरुतो वसवः पितरस्तथा ।
रुद्रादित्यास्तथा सिद्धा भुजङ्गा दानवाः खगाः । ब्रह्मा स्वयम्भुर्भगवान् सपुत्त्रः सह विष्णुना ।
शक्रस्तथाऽभ्ययाद्द्रष्टुं कुमारवरमच्युतं । नारदप्रमुखाश्चापि देवगन्धर्व्वसत्तमाः । २४८०
देवर्षयश्च सिद्धाश्च बृहस्पतिपुरोगमाः । पितरो जगतः श्रेष्ठा देवानामपि देवताः ।
तेऽपि तत्र समाजग्मुर्यामा धामाश्च सर्व्वशः । स तु बालोऽपि बलवान् महायोगबलान्वितः ।
अभ्याजगाम देवेशं शूलहस्तं पिनाकिनं । तमाव्रजन्तमालक्ष्य शिवस्यासीन्मनोगतं ।
युगपच्छैलपुत्त्र्याश्च गङ्गायाः पावकस्य च । कन्नु पूर्व्वमयं बालो गौरवादभ्युपैष्यति ।

अपि मामिति सर्व्वेषां तेषामासीन्मनोगतं । तेषामेतमभिप्रायं चतुर्णामुपलक्ष्य सः । २४८८
युगपद्योगमास्थाय ससर्ज्ज विविधास्तनूः । ततोऽभवच्चतुर्मूर्त्तिः क्षणेन भगवान् प्रभुः ।
तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठतः । एवं स कृत्वा ह्यात्मानं चतुर्द्धा भगवान् प्रभुः ।
यतो रुद्रस्ततः स्कन्दो जगामाद्भुतदर्शनः । विशाखस्तु ययौ येन देवी गिरिवरात्मजा ।
शाखो ययौ च भगवान् वायुमूर्त्तिर्व्विभावसुं । नैगमेयोऽगमद्गङ्गां कुमारः पावकप्रभः ।
सर्व्वे भासुरदेहास्ते चत्वारः समरूपिणः । तान् समभ्ययुरव्यग्रास्तदद्भुतमिवाभवत् । २४९०
हाहाकारो महानासीद्देवदानवरक्षसां । तद्दृष्ट्वा महदाश्चर्य्यमद्भुतं लोमहर्षणं ।
ततो रुद्रश्च देवी च पावकश्च पितामहं । गङ्गया सहिताः सर्व्वे प्रणिपेतुर्ज्जगत्पतिं ।
प्रणिपत्य ततस्ते तु विधिवद्राजपुङ्गव । इदमूचुर्व्वचो राजन् कार्त्तिकेयप्रियेप्सया ।
अस्य बालस्य भगवन्नाधिपत्यं यथेप्सितं । अस्मत्प्रियार्थं देवेश सदृशं दातुमर्हसि ।
ततः स भगवान् धीमान् सर्व्वलोकपितामहः । मनसा चिन्तयामास किमयं लभतामिति । २४९५
ऐश्वर्य्याणि च सर्व्वाणि देवगन्धर्व्वरक्षसां । भूतयक्षविहङ्गानां पन्नगानाञ्च सर्व्वशः ।
पूर्व्वमेवादिदेशासौ निकायेषु महात्मनां । समर्थञ्च तमैश्वर्य्ये महामतिरमन्यत ।
ततो मुहूर्त्तं स ध्यात्वा देवानां श्रेयसि स्थितः । सैनापत्यं ददौ तस्मै सर्व्वभूतेषु भारत ।
सर्व्वदेवनिकायानां ये राजानः परिश्रुताः । तान् सर्व्वान् व्यादिदेशास्मै सर्व्वभूतपितामहः ।
ततः कुमारमादाय देवा ब्रह्मपुरोगमाः । अभिषेकार्थमाजग्मुः शैलेन्द्रं सहितास्ततः । २५००
पुण्यां हैमवतीं देवीं सरिच्छ्रेष्ठां सरस्वतीं । समन्तपञ्चके या वै त्रिषु लोकेषु विश्रुता ।
तत्र तीरे सरस्वत्याः पुण्ये सर्व्वगुणान्विते । निषेदुर्द्देवगन्धर्व्वाः सर्व्वे सम्पूर्णमानसाः ।

इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

॥ वैशम्पायन उवाच ॥ ततोऽभिषेकसम्भारान् सर्व्वान् सम्भृत्य शास्त्रतः । बृहस्पतिः समिद्धेऽग्नौ जुहावाग्निं यथाविधि ।
ततो हिमवता दत्ते मणिप्रवरशोभिते । दिव्यरत्नाचिते पुण्ये निषण्णं परमासने ।
सर्व्वमङ्गलसम्भारैर्व्विधिमन्त्रपुरस्कृतं । आभिषेचनिकं द्रव्यं गृहीत्वा देवतागणाः । २५०५
इन्द्रविष्णू महावीर्य्यौ सूर्य्याचन्द्रमसौ तथा । धाता चैव विधाता च तथा चैवानिलानलौ ।
पूष्णा भगेनार्य्यम्णा च अंशेन च विवस्वता । रुद्रश्च सहितो धीमान्मित्रेण वरुणेन च ।
रुद्रैर्व्वसुभिरादित्यैरश्विभ्याञ्च वृतः प्रभुः । विश्वेदेवैर्म्मरुद्भिश्च साध्यैश्च पितृभिः सह ।
गन्धर्व्वैरप्सरोभिश्च यक्षराक्षसपन्नगैः । देवर्षिभिरसंख्यातैस्तथा ब्रह्मर्षिभिस्तथा ।
वैखानसैर्व्वालखिल्यैर्व्वाय्वाहारैर्म्मरीचिपैः । भृगुभिश्चाङ्गिरोभिश्च यतिभिश्च महात्मभिः । २५१०
सर्प्पैर्व्विद्याधरैः पुण्यैर्योगसिद्धैस्तथा वृतः । पितामहः पुलस्त्यश्च पुलहश्च महातपाः ।
अङ्गिराः कश्यपोऽत्रिश्च मरीचिर्भृगुरेव च । क्रतुर्हरः प्रचेताश्च मनुर्द्दक्षस्तथैव च ।
ऋतवश्च ग्रहाश्चैव ज्योतींषि च विशाम्पते । मूर्त्तिमत्यश्च सरितो वेदाश्चैव सनातनाः ।

समुद्राश्च ह्रदाश्चैव तीर्थानि विविधानि च । पृथिवी द्यौर्दिशश्चैव पादपाश्च जनाधिप ।
अदितिर्देवमाता च ह्रीः श्रीः स्वाहा सरस्वती । उमा शची सिनीवाली तथा चानुमतिः कुहूः । २५१५
राका च धिषणा चैव पत्न्यश्चान्या दिवौकसां । हिमवांश्चैव विन्ध्यश्च मेरुश्चानेकशृङ्गवान् ।
ऐरावतः सानुचरः कलाः काष्ठास्तथैव च । मासार्द्धमासा ऋतवस्तथा रात्र्यहनी नृप ।
उच्चैःश्रवा हयश्रेष्ठो नागराजश्च वासुकिः । अरुणो गरुडश्चैव वृक्षाश्चौषधिभिः सह ।
धर्म्मश्च भगवान्देवः समाजग्मुर्हि सङ्गताः । कालो यमश्च मृत्युश्च यमस्यानुचराश्च ये ।
बहुलत्वाच्च नोक्ता ये विविधा देवतागणाः । ते कुमाराभिषेकार्थं समाजग्मुस्ततस्ततः । २५२०
जगृहुस्ते तदा राजन् सर्व्व एव दिवौकसः । आभिषेचनिकं भाण्डं मङ्गलानि च सर्व्वशः ।
दिव्यसम्भारसंयुक्तैः कलसैः काञ्चनैर्नृप । सरस्वतीभिः पुण्याभिर्दिव्यतोयाभिरेव तु ।
अभ्यषिञ्चन् कुमारान् वै सम्प्रहृष्टा दिवौकसः । सेनापतिं महात्मानमसुराणां भयङ्करं ।
पुरा यथा महाराज वरुणं वै जलेश्वरं । तथाऽभ्यषिञ्चद्भगवान् ब्रह्मा लोकपितामहः ।
कश्यपश्च महातेजा ये चान्ये लोकविश्रुताः । तस्मै ब्रह्मा ददौ प्रीतो बलिनो वातरंहसः । २५२५
कामवीर्य्यधरान् सिद्धान् महापारिषदान् प्रभुः । नन्दिषेणं लोहिताक्षं घण्टाकर्णञ्च सम्मतं ।
चतुर्थमस्यानुचरं ख्यातं कुमुदमालिनं । ततः स्थाणुर्महातेजा महापारिषदं प्रभुः ।
मायाशतधरं कामं कामवीर्य्यबलान्वितं । ददौ स्कन्दाय राजेन्द्र सुरारिविनिवर्हणं ।
स हि देवासुरे युद्धे दैत्यानां भीमकर्म्मणां । जघान दोर्भ्यां संक्रुद्धः प्रयुतानि चतुर्द्दश ।
तथा देवा ददुस्तस्मै सेनां नैर्ऋतसङ्कुलां । देवशत्रुक्षयकरीमजय्यां विष्णुरूपिणीं । २५३०
जयशब्दं तथा चक्रुर्देवाः सर्व्वे सवासवाः । गन्धर्व्वा यक्षरक्षांसि मुनयः पितरस्तथा ।
ततः प्रादादनुचरौ यमः कालोपमावुभौ । उन्माथञ्च प्रमाथञ्च महावीर्य्यौ महाद्युती ।
सुभ्राजो भास्करश्चैव यौ तौ सूर्य्यानुयायिनौ । तौ सूर्य्यः कार्त्तिकेयाय ददौ प्रीतः प्रतापवान् ।
कैलासशृङ्गसङ्काशौ श्वेतमाल्यानुलेपनौ । सोमोऽप्यनुचरौ प्रादान्मणिं सुमणिमेव च ।
ज्वालाजिह्वं तथा ज्योतिरात्मजाय हुताशनः । ददावनुचरौ शूरौ परसैन्यप्रतापिनौ । २५३५
परिघञ्च वटञ्चैव भीमञ्च सुमहाबलं । दहतिं दहनञ्चैव प्रचण्डौ वीर्य्यसम्मतौ ।
अंशोऽप्यनुचरान् पञ्च ददौ स्कन्दाय धीमते । उत्क्रोशं पञ्चकञ्चैव वज्रदण्डधरावुभौ ।
ददावनलपुत्राय वासवः परवीरहा । तौ हि शत्रून् महेन्द्रस्य जघ्नतुः समरे बहून् ।
चक्रं विक्रमकञ्चैव संक्रमञ्च महाबलं । स्कन्दाय त्रीननुचरान् ददौ विष्णुर्महायशाः ।
वर्द्धनं नन्दनञ्चैव सर्व्वविद्याविशारदौ । स्कन्दाय ददतुः प्रीतावश्विनौ भिषजाम्वरौ । २५४०
कुन्दञ्च कुसुमञ्चैव कुमुदञ्च महायशाः । डम्बराडम्बरौ चैव ददौ धाता महात्मने ।
वक्रानुवक्रौ बलिनौ मेघचक्रौ बलोत्कटौ । ददौ त्वष्टा महामायौ स्कन्दायानुचरावुभौ ।
सुव्रतं सत्यसन्धञ्च ददौ मित्रो महात्मने । कुमाराय महात्मानौ तपोविद्याधरौ प्रभुः ।

सुदर्शनीयौ वरदौ त्रिषु लोकेषु विश्रुतौ । सुव्रतञ्च महात्मानं शुभकर्माणमेव च ।
कार्त्तिकेयाय संप्रादाद्विधाता लोकविश्रुतौ । पाणीतकं पालिकञ्च महामायाविनावुभौ । २५४५
पूषा च पार्षदौ प्रादात् कार्त्तिकेयाय भारत । बलञ्चातिबलञ्चैव महावक्त्रौ महाबलौ ।
प्रददौ कार्त्तिकेयाय वायुर्भरतसत्तम । यमञ्चातियमञ्चैव तिमिवक्त्रौ महाबलौ ।
प्रददौ कार्त्तिकेयाय वरुणः सत्यसङ्गरः । सुवर्चसं महात्मानं तथैवाप्यतिवर्चसं ।
हिमवान् प्रददौ राजन् हुताशनसुताय वै । काञ्चनञ्च महात्मानं मेघमालिनमेव च ।
ददावनुचरौ मेरुरग्निपुत्राय भारत । स्थिरञ्चातिस्थिरञ्चैव मेरुरेवापरौ ददौ । २५५०
महात्मा त्वग्निपुत्राय महाबलपराक्रमौ । उच्छृङ्गञ्चातिशृङ्गञ्च महापाषाणयोधिनौ ।
प्रददावग्निपुत्राय विन्ध्यः पारिषदावुभौ । संग्रहं विग्रहञ्चैव समुद्रोऽपि गदाधरौ ।
प्रददावग्निपुत्राय महापारिषदावुभौ । उन्मादं पुष्पदन्तञ्च शङ्कुकर्णं तथैव च ।
प्रददावग्निपुत्राय पार्व्वती शुभदर्शना । जयं महाजयञ्चैव नागौ ज्वलनसूनवे ।
प्रददौ पुरुषव्याघ्र वासुकिः पन्नगेश्वरः । एवं साध्याश्च रुद्राश्च वसवः पितरस्तथा । २५५५
सागराः सरितश्चैव गिरयश्च महाबलाः । ददुः सेनागणाध्यक्षान् शूलपट्टिशधारिणः ।
दिव्यप्रहरणोपेतान् नानावेशविभूषितान् । शृणु नामानि चाप्येषां येऽन्ये स्कन्दस्य सैनिकाः ।
विविधायुधसम्पन्नाश्चित्राभरणवर्म्मिणः । शङ्कुकर्णो निकुम्भश्च पद्मः कुमुद एव च ।
अनन्तो द्वादशभुजस्तथा कृष्णोपकृष्णकौ । घ्राणश्रवाः प्रतिस्कन्धः काञ्चनाक्षो जलन्धमः ।
अक्षः सन्तर्ज्जनो राजन् कुनदीकस्तमोऽन्तकृत् । एकाक्षो द्वादशाक्षश्च तथैवैकजटः प्रभुः । २५६०
सहस्रबाहुर्व्विकटो व्याघ्राक्षः क्षितिकम्पनः । पुण्यनामा सुनामा च सुचक्रः प्रियदर्शनः ।
परिश्रुतः कोकनदः प्रियमाल्यानुलेपनः । अजोदरो गजशिराः स्कन्धाक्षः शतलोचनः ।
ज्वालाजिह्वः करालाक्षः शितिकेशो जटी हरिः । परिश्रुतः कोकनदः कृष्णकेशो जटाधरः
चतुर्द्दंष्ट्रोऽष्टजिह्वश्च मेघनादः पृथुश्रवः । विद्युताक्षो धनुर्व्वक्त्रो जाठरो मारुताशनः ।
उदराक्षो रथाक्षश्च वज्रनाभो वसुप्रदः । समुद्रवेगो राजेन्द्र शैलकम्पी तथैव च । २५६५
वृषो मेषप्रवाहश्च तथा नन्दोपनन्दकौ । धूम्रः श्वेतः कलिङ्गश्च सिद्धार्थो वरदस्तथा ।
प्रियकश्चैव नन्दश्च गोनन्दश्च प्रतापवान् । आनन्दश्च प्रमोदश्च स्वस्तिको ध्रुवकस्तथा ।
क्षेमवाहः सुवाहश्च सिद्धपात्रश्च भारत । गोव्रजः कनकापीडो महापारिषदेश्वरः ।
गायनो हसनश्चैव वाणः खड्गश्च वीर्य्यवान् । वैताली गतिताली च तथा कथकवातिकौ ।
हंसजः पङ्कदिग्धाङ्गः समुद्रोन्मादनश्च ह । रणोत्कटः प्रहासश्च श्वेतसिद्धश्च नन्दकः । २५७०
कालकण्ठः प्रभासश्च तथा कुम्भाण्डकोऽपरः । कालकाक्षः सितश्चैव भूतानां मथनस्तथा ।
यज्ञवाहः प्रवाहश्च देवयाजी च सोमपः । मज्जानश्च महातेजाः क्रथक्राथौ च भारत ।
तुहरश्च तुहारश्च चित्रदेवश्च वीर्य्यवान् । मधुरः सुप्रसादश्च किरीटी च महाबलः ।

वत्सलो मधुवर्णश्च कलशोदर एव च । धर्म्मदो मन्मथकरः सूचीवक्त्रश्च वीर्य्यवान् ।
श्वेतवक्त्रः सुवक्त्रश्च चारुवक्त्रश्च पाण्डुरः । दण्डबाहुः सुबाहुश्च रजः कोकिलकस्तथा । २५७५
अचलः कनकाक्षश्च बालानामपि यः प्रभुः । सञ्चारकः कोकनदो गृध्रपत्रश्च जम्बुकः ।
लोहाजवक्त्रो जवनः कुम्भवक्त्रश्च कुम्भकः । स्वर्णग्रीवश्च कृष्णौजा हंसवक्त्रश्च चन्द्रभः ।
पाणिकूर्च्चा च शम्बूकः पञ्चवक्त्रश्च शिक्षकः । चाषवक्त्रश्च जम्बूकः शाकवक्त्रश्च कुण्डलः ।
योगयुक्ता महात्मानः सततं ब्राह्मणप्रियाः । पैतामहा महात्मानो महापारिषदाश्च ये ।
यौवनस्थाश्च बालाश्च वृद्धाश्च जनमेजय । सहस्रशः पारिषदाः कुमारमवतस्थिरे । २५८०
वक्त्रैर्नानाविधैर्ये तु शृणु तान् जनमेजय । कूर्म्मकुक्कुटवक्त्राश्च शशोलूकमुखास्तथा ।
खरोष्ट्रवदनाश्चान्ये वराहवदनास्तथा । मार्जारदंशवक्त्राश्च दीर्घवक्त्राश्च भारत ।
नकुलोलूकवक्त्राश्च काकवक्त्रास्तथाऽपरे । आखुबभ्रुकवक्त्राश्च मयूरवदनास्तथा ।
मत्स्यमेषाननाश्चान्ये अजाविमहिषाननाः । ऋक्षशार्द्दूलवक्त्राश्च दीपिसिंहाननास्तथा ।
भीमा गजाननाश्चैव तथा नक्रमुखाश्च ये । गरुडाननाः कङ्कमुखा वृककाकमुखास्तथा । २५८५
गोखरोष्ट्रमुखाश्चान्ये वृषदंशमुखास्तथा । महाजठरपादाङ्गास्तारकाक्षाश्च भारत ।
पारावतमुखाश्चान्ये तथा वृषमुखाः परे । कोकिलाभमुखाश्चान्ये श्येनतित्तिरिकाननाः ।
कृकलासमुखाश्चान्ये विरजोऽम्बरधारिणः । व्यालवक्त्राः शूलमुखाश्चण्डवक्त्राः शुभाननाः ।
आशीविषाश्चीरधरा गोनासावदनास्तथा । स्थूलोदराः कृशाङ्गाश्च स्थूलाङ्गाश्च कृशोदराः ।
ह्रस्वग्रीवा महाकर्णा नानाव्यालविभूषणाः । गजेन्द्रचर्म्मवसनास्तथा कृष्णाजिनाम्बराः । २५९०
स्कन्धे मुखा महाराज तथाऽप्युदरतो मुखाः । पृष्ठे मुखा हनुमुखास्तथा जङ्घामुखा अपि ।
पार्श्वाननाश्च बहवो नानादेशमुखास्तथा । तथा कीटपतङ्गानां सदृशास्या गणेश्वराः ।
नानाव्यालमुखाश्चान्ये बहुबाहुशिरोदराः । नानावृक्षभुजाः केचित् कटिशीर्षास्तथाऽपरे ।
भुजङ्गभोगवदना नानागुल्मनिवासिनः । चीरसंवृतगात्राश्च नानाकनकवाससः ।
नानावेशधराश्चैव नानामाल्यानुलेपनाः । नानावस्त्रधराश्चैव चर्म्मवासस एव च । २५९५
उष्णीषिणो मुकुटिनः सुग्रीवाश्च सुवर्च्चसः । किरीटिनः पञ्चशिखास्तथा काञ्चनमूर्द्धजाः ।
त्रिशिखा द्विशिखाश्चैव तथा सप्तशिखाः परे । शिखण्डिनो मुकुटिनो मुण्डाश्च जटिलास्तथा ।
चित्रमालाधराः केचित् केचिद्रोमाननास्तथा । विग्रहैकरसा नित्यमजेयाः सुरसत्तमैः ।
कृष्णा निर्म्मांसवक्त्राश्च स्थूलपृष्ठास्तनूदराः । स्थूलपृष्ठा ह्रस्वपृष्ठाः प्रलम्बोदरमेहनाः ।
महाभुजा ह्रस्वभुजा ह्रस्वगात्राश्च वामनाः । कुब्जाश्च ह्रस्वजङ्घाश्च हस्तिकर्णशिरोधराः । २६००
हस्तिनासाः कूर्म्मनासा वृकनासास्तथा परे । दीर्घोच्छ्वासा दीर्घजङ्घा विकराला ह्यधोमुखाः ।
महादंष्ट्रा ह्रस्वदंष्ट्राश्चतुर्दंष्ट्रास्तथाऽपरे । वारणेन्द्रनिभाश्चान्ये भीमा राजन् सहस्रशः ।
सुविभक्तशरीराश्च दीप्तिमन्तः स्वलङ्कृताः । पिङ्गाक्षाः शङ्कुकर्णाश्च रक्तनासाश्च भारत ।

पृथुदंष्ट्रा महादंष्ट्रा स्थूलोष्ठाः हरिमूर्द्धजाः । नानापादोष्ठदंष्ट्राश्च नानाहस्तशिरोधराः ।
नानाचर्म्मभिराच्छन्ना नानाभाषाश्च भारत । कुशला देशभाषासु जल्पन्तोऽन्योन्यमीश्वराः । २९०५
हृष्टाः परिपतन्ति स्म महापारिषदास्तथा । दीर्घग्रीवा दीर्घनखा दीर्घपादशिरोभुजाः ।
पिङ्गाक्षा नीलकण्ठाश्च लम्बकर्णाश्च भारत । वृकोदरनिभाश्चैव केचिदञ्जनसन्निभाः ।
श्वेताक्षा लोहितग्रीवाः पिङ्गाक्षाश्च तथाऽपरे । कल्माषा बहवो राजंश्चित्रवर्णाश्च भारत ।
चामरापीडकनिभाः श्वेतलोहितराजयः । नानावर्णाः सवर्णाश्च मयूरसदृशप्रभाः ।
पुनः प्रहरणान्येषां कीर्त्त्यमानानि मे शृणु । शेषैः कृतः पारिषदैरायुधानां परिग्रहः । २९१०
पाशोद्यतकराः केचित् व्यादितास्याः खराननाः । पृष्ठाक्षा नीलकण्ठाश्च तथा परिघबाहवः ।
शतघ्नीचक्रहस्ताश्च तथा मुषलपाणयः । असिमुद्गरहस्ताश्च दण्डहस्ताश्च भारत ।
गदाभुशुण्डिहस्ताश्च तथा तोमरपाणयः । आयुधैर्व्विविधैर्व्वीरैर्म्महात्मानो महाजवाः ।
महाबला महावेगा महापारिषदास्तथा । अभिषेकं कुमारस्य दृष्ट्वा हृष्टा रणप्रियाः ।
घण्टाजालपिनद्धाङ्गा ननृतुस्ते महौजसः । एते चान्ये च बहवो महापारिषदा नृप । २९१५
उपतस्थुर्म्महात्मानं कार्त्तिकेयं यशस्विनं । दिव्याश्चाप्यन्तरीक्षाश्च पार्थिवाश्चानिलोपमाः ।
आदिष्टा दैवतैः शूराः स्कन्दस्यानुचराऽभवन् । तादृशानां सहस्राणि प्रयुतान्यर्व्वुदानि च ।
अभिषिक्तं महात्मानं परिवार्य्योपतस्थिरे ।

इति श्रीमहाभाते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

॥ वैशम्पायन उवाच ॥ शृणु मातृगणान्राजन् कुमारानुचरानिमान् । कीर्त्त्यमानान् मया वीर सपत्नगणसूदनान् ।
यशस्विनीनां मातॄणां शृणु नामानि भारत । याभिर्व्याप्तास्त्रयो लोकाः कल्याणीभिश्च भागशः । २९२०
प्रभावती विशालाक्षी पालिता गोस्तनी तथा । श्रीमती बहुला चैव तथैव बहुपुत्त्रिका ।
अप्सुजाता च गोपाली बृहदम्बालिका तथा । जयावती मालतिका ध्रुवरत्ना भयङ्करी ।
वसुदामा सुदामा च विशोका नन्दिनी तथा । एकचूडा महाचूडा चक्रनेमिश्च भारत ।
उत्तेजनी जयत्सेना कमलाक्ष्यथ शोभना । शतञ्जया तथा चैव क्रोधना शलभी खरी ।
माधवी शुभवक्त्रा च तीर्थसेनिश्च भारत । गीतप्रिया च कल्याणी रुद्ररोमाऽमिताशना । २९२५
मेघस्वना भोगवती सुभ्रूश्च कनकावती । अलाताक्षी वीर्य्यवती विद्युज्जिह्वा च भारत ।
पद्मावती सुनक्षत्रा कन्दरा बहुयोजना । सन्तानिका च कौरव्य कमला च महाबला ।
सुदामा बहुदामा च सुप्रभा च यशस्विनी । नृत्यप्रिया च राजेन्द्र शतोलूखलमेखला ।
शतघण्टा शतानन्दा भगनन्दा च भाविनी । वपुष्मती चन्द्रशिला भद्रकाली च भारत ।
ऋक्षाऽम्बिका निष्कुटिका वामा चत्वरवासिनी । सुमङ्गला स्वस्तिमती बुद्धिकामा जयप्रिया । २९३०
धनदा सुप्रसादा च भवदा च जनेश्वर । एडी भेडी समेडी च वेतालजननी तथा ।
कण्डूतिः कालिका चैव देवमित्रा च भारत । वसुश्रीः कोटिरा चैव चित्रसेना तथाऽचला ।

कुक्कुटिका शङ्खलिका तथा शकुनिका नृप । कुण्डारिका कौकुलिका कुम्भिकाऽथ शतोदरी ।
उत्क्राथिनी जलेला च महावेगाऽथ कङ्कणा । महाजवा कण्टकिनी प्रघसा पूतना तथा ।
केशयन्त्री त्रुटिर्नामा क्रोशनाऽथ तडित्प्रभा । मन्दोदरी च मुण्डी च कोटरा मेघवाहिनी । २६३५
सुभगा लम्बिनी लम्बा ताम्रचूडा विकाशिनी । ऊर्द्ध्ववेणीधरा चैव पिङ्गाक्षी लोहमेखला ।
पृथुवक्त्रा मधुलिका मधुकुम्भा तथैव च । पक्षालिका मत्कुणिका जरायुर्ज्जर्ज्जरानना ।
ख्याता दहदहा चैव तथा धमधमा नृप । खण्डखण्डा च राजेन्द्र पूषणा मणिकुट्टिका ।
अमोघा चैव कौरव्य तथा लम्बपयोधरा । वेणुवीणाधरा चैव पिङ्गाक्षी लोहमेखला ।
शशोलूकमुखी कृष्णा खरजङ्घा महाजवा । शिशुमारमुखी श्वेता लोहिताक्षी विभीषणा । २६४०
जटालिका कामचरी दीर्घजिह्वा बलोत्कटा । कालेहिका वामनिका मुकुटा चैव भारत ।
लोहिताक्षी महाकाया हरिपिण्डा च भूमिप । एकत्वचा सुकुसुमा कृष्णवर्णा च भारत ।
क्षुरकर्णी चतुष्कर्णी कर्णप्रावरणा तथा । चतुष्पथनिकेता च गोकर्णा महिषानना ।
खरकर्णी महाकर्णी भेरीस्वनमहास्वना । शङ्खकुम्भश्रवाश्चैव भगदा च महाबला ।
गणा च सुगणा चैव तथा भीत्यथ कामदा । चतुष्पथरता चैव भूतितीर्थाऽन्यगोचरा । २६४५
पशुदा वित्तदा चैव सुखदा च महायशाः । पयोदा गोमहिषदा सुविशाला च भारत ।
प्रतिष्ठा सुप्रतिष्ठा च रोचमाना सुरोचना । नौकर्णी शिवकर्णीच वसुदा मन्थिनी तथा ।
एकवक्त्रा मेघरवा मेघमाला विरोचना । एताश्चान्याश्च बहवो मातरो भरतर्षभ ।
कार्त्तिकेयानुयायिन्यो नानारूपाः सहस्रशः । दीर्घनख्यो दीर्घदन्त्यो दीर्घतुण्डाश्च भारत ।
सबला मधुराश्चैव यौवनस्थाः स्वलङ्कृताः । माहात्म्येन च संयुक्ताः कामरूपधरास्तथा । २६५०
निर्म्मांसगात्राः श्वेताश्च तथा काञ्चनसन्निभाः । कृष्णमेघनिभाश्चान्या धूम्राश्च भरतर्षभ ।
अरुणाभा महाभाग दीर्घकेश्यः सिताम्बराः । ऊर्द्ध्ववेणीधराश्चैव पिङ्गाक्ष्यो लम्बमेखलाः ।
लम्बोदर्य्यो लम्बकर्णास्तथा लम्बपयोधराः । ताम्राक्ष्यस्ताम्रवर्णाश्च हर्य्यक्ष्यश्च तथाऽपराः ।
वरदाः कामचारिण्यो नित्यं प्रमुदितास्तथा । याम्या रौद्रास्तथा सौम्याः कौवेर्य्योऽथ महाबलाः ।
वारुण्योऽथ च माहेन्द्र्यस्तथाग्नेय्यः परन्तप । वायव्याश्चाऽथ कौमार्य्यो ब्राह्म्यश्च भरतर्षभ । २६५५
वैष्णव्यश्च तथा सौर्य्यो वाराह्यश्च महाबलाः । रूपेणाप्सरसान्तुल्या मनोहार्य्यो मनोरमाः ।
परपुष्टोपमा वाक्ये तथर्द्ध्या धनदोपमाः । शक्रवीर्य्योपमा युद्धे दीप्त्या वह्निसमास्तथा ।
शत्रूणां विग्रहे नित्यं भयदास्ता भवन्त्युत । कामरूपधराश्चैव जवे वायुसमास्तथा ।
अचिन्त्यबलवीर्य्याश्च तथाऽचिन्त्यपराक्रमाः । वृक्षचत्वरवासिन्यश्चतुष्पथनिकेतनाः ।
गुहाश्मशानवासिन्यः शैलप्रस्रवणालयाः । नानाभरणधारिण्यो नानामाल्याम्बरास्तथा । २६६०
नानाविचित्रवेशाश्च नानाभाषास्तथैव च । एते चान्ये च बहवो गणाः शत्रुभयङ्कराः ।
अनुजग्मुर्महात्मानं त्रिदशेन्द्रस्य सम्मते । ततः शक्त्यस्त्रमददद्भगवान् पाकशासनः ।

गुहाय राजशार्दूल विनाशाय सुरद्विषां । महास्वनां महाघण्टां द्योतमानां सितप्रभां ।
अरुणादित्यवर्णाञ्च पताकां भरतर्षभ । ददौ पशुपतिस्तस्मै सर्व्वभूतमहाचमूं ।
उग्रां नानाप्रहरणां तपोवीर्य्यबलान्वितां । अजेयां स्वगुणैर्युक्तां नाम्ना सेनां धनञ्जयां । २६६५
रुद्रतुल्यबलैर्युक्तां योधानामयुतैस्त्रिभिः । न सा विजानाति रणात् कदाचिद्विनिवर्त्तितुं ।
विष्णुर्ददौ वैजयन्तीं मालां बलविवर्द्धिनीं । उमा ददौ विरजसी वाससी रविसप्रभे ।
गङ्गा कमण्डलुं दिव्यममृतोद्भवमुत्तमं । ददौ प्रीत्या कुमाराय दण्डञ्चैव बृहस्पतिः ।
गरुडो दयितं पुत्रं मयूरञ्चित्रवर्हिणं । अरुणस्ताम्रचूडञ्च प्रददौ चरणायुधं ।
नागन्तु वरुणो राजा बलवीर्य्यसमन्वितं । कृष्णाजिनं ततो ब्रह्मा ब्रह्मण्याय ददौ प्रभुः । २६७०
समरेषु जयञ्चैव प्रददौ लोकभावनः । सैनापत्यमनुप्राप्य स्कन्दो देवगणस्य ह ।
शुशुभे ज्वलितोऽर्च्चिष्मान् द्वितीय इव पावकः । ततः पारिषदैश्चैव मातृभिश्च समन्वितः ।
ययौ दैत्यविनाशाय ह्लादयन् सुरपुङ्गवान् । सा सेना नैर्ऋती भीमा सघण्टोच्छ्रितकेतना ।
सभेरीशङ्खमुरजा सायुधा सपताकिनी । शारदी द्यौरिवाभाति ज्योतिर्भिरिव शोभिता ।
ततो देवनिकायास्ते नानाभूतगणास्तथा । वादयामासुरव्यग्रा भेरीः शङ्खांश्च पुष्कलान् । २६७५
पटहान् झर्झरांश्चैव क्रकचान् गोविषाणिकान् । आडम्बरान् गोमुखांश्च डिण्डिमांश्च महास्वनान् ।
तुष्टुवुस्ते कुमारन्तु सर्व्वे देवाः सवासवाः । जगुश्च देवगन्धर्व्वा ननृतुश्चाप्सरोगणाः ।
ततः प्रीतो महासेनस्त्रिदशेभ्यो वरं ददौ । रिपून् हन्ताऽस्मि समरे ये वो वधचिकीर्षवः ।
प्रतिगृह्य वरं देवास्तस्माद्विबुधसत्तमात् । प्रीतात्मानो महात्मानो मेनिरे निहतान् रिपून् ।
सर्व्वेषां भूतसङ्घानां हर्षान्नादः समुत्थितः । अपूरयत लोकांस्त्रीन् वरे दत्ते महात्मना । २६८०
स निर्य्ययौ महासेनो महत्या सेनया वृतः । वधाय युधि दैत्यानां रक्षार्थञ्च दिवौकसां ।
व्यवसायो जयो धर्म्मः सिद्धिर्लक्ष्मीर्धृतिः स्मृतिः । महासेनस्य सैन्यानामग्रे जग्मुर्नराधिप ।
स तया भीमया देवः शूलमुद्गरहस्तया । ज्वलितालातधारिण्या चित्राभरणवर्म्मया ।
गदामुषलनाराचशक्तितोमरहस्तया । दृप्तसिंहनिनादिन्या विनद्य प्रययौ गुहः ।
तं दृष्ट्वा सर्व्वदैतेया राक्षसा दानवास्तथा । व्यद्रवन्त दिशः सर्व्वा भयोद्विग्नाः समन्ततः । २६८५
अभ्यद्रवन्त देवास्तान् विविधायुधपाणयः । दृष्ट्वा च स ततः क्रुद्धः स्कन्दस्तेजोबलान्वितः ।
शक्त्यस्त्रं भगवान् भीमं पुनः पुनरवाकिरत् । आदधच्चात्मनस्तेजो हविषेद्ध इवानलः ।
अभ्यस्यमाने शक्त्यस्त्रे स्कन्देनामिततेजसा । उल्काज्वाला महाराज पपात वसुधातले ।
संह्रादयन्तश्च तथा निर्घाताश्चापतन् क्षितौ । यथाऽन्तकालसमये सुघोराः स्युस्तथा नृप ।
क्षिप्ता ह्येका यदा शक्तिः सुघोराऽनलसूनुना । ततः कोट्यो विनिष्पेतुः शक्तीनां भरतर्षभ । २६९०
ततः प्रीतो महासेनो जघान भगवान् प्रभुः । दैत्येन्द्रं तारकं नाम महाबलपराक्रमं ।
वृतं दैत्यायुतैर्व्वीरैर्ब्बलिभिर्दशभिर्नृप । महिषञ्चाष्टभिः पद्मैर्वृतं संख्ये निजघ्निवान् ।

त्रिपादस्त्रायुतशतैर्जघान दशभिर्वृतं । ह्रदोदरं निखर्व्वैश्च वृतं दशभिरीश्वरः ।
जघानानुचरैः सार्द्धं विविधायुधपाणिभिः । तथा कुर्व्वन्ति विपुलं नादं वध्यत्सु शत्रुषु ।
कुमारानुचरा राजन् पूरयन्तो दिशो दश । ननृतुश्च ववल्गुश्च जहसुश्च मुदाऽन्विताः । २२९५
शक्तस्य तु राजेन्द्र ततोऽर्च्चिभिः समन्ततः । त्रैलोक्यं त्रासितं सर्व्वं जृम्भमाणाभिरेव च ।
दग्धाः सहस्रशो दैत्या नादैः स्कन्दस्य चापरे । पताकयाऽवधूताश्च हताः केचित्सुरद्विषः ।
केचिद्घण्टारवत्रस्ता निपेतुर्व्वसुधातले । केचित् प्रहरणैश्छिन्ना विनिपेतुर्गतायुषः ।
एवं सुरद्विषोऽनेकान् बलवानाततायिनः । जघान समरे वीरः कार्त्तिकेयो महाबलः ।
बाणो नामाऽथ दैतेयो बलेः पुत्रो महाबलः । क्रौञ्चपर्व्वतमाश्रित्य देवसङ्घानबाधत । २३००
तमभ्ययान्महासेनः सुरशत्रुमुदारधीः । स कार्त्तिकेयस्य भयात् क्रौञ्चं शरणमीयिवान् ।
ततः क्रौञ्चं महामन्युः क्रौञ्चनादनिनादितं । शक्त्या बिभेद भगवान् कार्त्तिकेयोऽग्निदत्तया ।
स शालस्कन्धशबलं त्रस्तवानरवारणं । प्रोड्डीनोद्भ्रान्तविहगं विनिष्पतितपन्नगं ।
गोलाङ्गूलर्क्षसङ्घैश्च द्रवद्भिरनुनादितं । कुरङ्गगतिनिर्घोषविनादितवनान्तरं ।
विनिष्पतद्भिः शरभैः सिंहैश्च सहसा द्रुतैः । शोच्यामपि दशां प्राप्तो रराजैव स पर्व्वतः । २३०५
विद्याधराः समुत्पेतुस्तस्य शृङ्गनिवासिनः । किन्नराश्च समुद्विग्नाः शक्तिपातरवोद्धुताः ।
ततो दैत्या विनिष्पेतुः शतशोऽथ सहस्रशः । प्रदीप्तात् पर्व्वतश्रेष्ठाद्विचित्राभरणस्रजः ।
तान्निजघ्नुरतिक्रम्य कुमारानुचरा मृधे । स चैव भगवान् क्रुद्धो दैत्येन्द्रस्य सुतं तदा ।
सहानुजं जघानाशु वृत्रं देवपतिर्यथा । बिभेद शक्त्या क्रौञ्चञ्च पावकिः परवीरहा ।
बहुधा चैकधा चैव कृत्वात्मानं महाबलः । शक्तिः क्षिप्ता रणे तस्य पाणिमेति पुनः पुनः । २३१०
एवं प्रभावो भगवांस्ततो भूयश्च पावकिः । शौर्य्याद्द्विगुणयोगेन तेजसा यशसा श्रिया ।
क्रौञ्चस्तेन विनिर्भिन्नो दैत्याश्च शतशो हताः । ततः स भगवान्देवो निहत्य विबुधद्विषः ।
सभाज्यमानो विबुधैः परं हर्षमवाप ह । ततो दुन्दुभयो राजन्नेदुः शङ्खाश्च भारत ।
मुमुचुर्द्देवयोषाश्च पुष्पवर्षमनुत्तमं । योगिनामीश्वरं देवं शतशोऽथ सहस्रशः ।
दिव्यगन्धमुपादाय ववौ पुण्यश्च मारुतः । गन्धर्व्वास्तुष्टुवुश्चैनं यज्वानश्च महर्षयः । २३१५
केचिदेनं व्यवस्यन्ति पितामहसुतं प्रभुं । सनत्कुमारं सर्व्वेषां ब्रह्मयोनिं तमग्रजं ।
केचिन्महेश्वरसुतं केचित् पुत्रं विभावसोः । उमायाः कृत्तिकानाञ्च गङ्गायाश्च वदन्त्युत ।
एकधा च द्विधा चैव चतुर्द्धा च महाबलं । योगिनामीश्वरं देवं शतशोऽथ सहस्रशः ।
एतत्ते कथितं राजन् कार्त्तिकेयाभिषेचनं । शृणु चैव सरस्वत्यास्तीर्थवर्य्यस्य पुण्यतां ।
बभूव तीर्थप्रवरं हतेषु सुरशत्रुषु । कुमारेण महाराज त्रिविष्टपमिवापरं । २३२०
ऐश्वर्य्याणि च तत्रस्थो ददावीशः पृथक् पृथक् । ददौ नैर्ऋतमुख्येभ्यस्त्रैलोक्यं पावकात्मजः ।
एवं स भगवांस्तस्मिंस्तीर्थे दैत्यकुलान्तकः । अभिषिक्तो महाराज देवसेनापतिः सुरैः ।

तैजसं नाम तत्तीर्थं यत्र तीर्थे अपाम्पतिः । अभिषिक्तः सुरगणैर्वरुणो भरतर्षभ ।
तस्मिंस्तीर्थवरे स्नात्वा स्कन्दञ्चाभ्यर्च्य लाङ्गली । ब्राह्मणेभ्यो ददौ रुक्मं वासांस्याभरणानि च ।
उषित्वा रजनीं तत्र माधवः परवीरहा । पूज्य तीर्थवरं तच्च स्पृष्ट्वा तोयञ्च लाङ्गली । २७२५
हृष्टः प्रीतमनाश्चैव ह्यभवन्माधवोत्तमः । एतत्ते सर्व्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
यथाऽभिषिक्तो भगवान् स्कन्दो देवैः समागतैः ।

इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

॥ जनमेजय उवाच ॥ अत्यद्भुतमिदं ब्रह्मन् श्रुतवानस्मि तत्त्वतः । अभिषेकं कुमारस्य विस्तरेण यथाविधि ।
यच्छ्रुत्वा पूतमात्मानं विजानामि तपोधन । प्रहृष्टानि च रोमाणि प्रसन्नञ्च मनो मम ।
अभिषेकं कुमारस्य दैत्यानाञ्च वधं तथा । श्रुत्वा मे परमा प्रीतिर्भूयः कौतूहलं हि मे । २७३०
अपाम्पतिः कथं ह्यस्मिन्नभिषिक्तः पुरा सुरैः । तन्मे ब्रूहि महाप्राज्ञ कुशलो ह्यसि सत्तम ।
॥ वैशम्पायन उवाच ॥ शृणु राजन्निदं चित्रं पूर्व्वकल्पे यथातथं । आदौ कृतयुगे राजन् वर्त्तमाने यथाविधि ।
वरुणं देवताः सर्व्वाः समेत्येदमथाब्रुवन् । यथाऽस्मान् सुरराट् शक्रो भयेभ्यः पाति सर्व्वदा ।
तथा त्वमपि सर्व्वासां सरितां वै पतिर्भव । वासश्च ते सदा देव सागरे मकरालये ।
समुद्रोऽयं तव वशे भविष्यति नदीपतिः । सोमेन सार्द्धञ्च तव हानिवृद्धी भविष्यतः । २७३५
एवमस्त्विति तान् देवान् वरुणो वाक्यमब्रवीत् । समागम्य ततः सर्व्वे वरुणं सागरालयं ।
अपाम्पतिं प्रचक्रुर्हि विधिदृष्टेन कर्म्मणा । अभिषिच्य ततो देवा वरुणं यादसाम्पतिं ।
जग्मुः स्वान्येव स्थानानि पूजयित्वा जलेश्वरं । अभिषिक्तस्ततो देवैर्व्वरुणोऽपि महायशाः ।
सरितः सागरांश्चैव नदांश्चापि सरांसि च । पालयामास विधिना यथा देवान् शतक्रतुः ।
ततस्तत्राप्युपस्पृश्य दत्त्वा च विविधं वसु । अग्नितीर्थं महाप्राज्ञो जगामाथ प्रलम्बहा । २७४०
नष्टो न दृश्यते यत्र शमीगर्भे हुताशनः । लोकालोकविनाशे च प्रादुर्भूते तदाऽनघे ।
उपतस्थुः सुरा यत्र सर्व्वलोकपितामहं । अग्निः प्रनष्टो भगवान् कारणञ्च न विद्महे ।
सर्व्वभूतक्षयो माभूत् सम्पादय विभोऽनलं ।
॥ जनमेजय उवाच ॥ किमर्थं भगवानग्निः प्रनष्टो लोकभावनः । विज्ञातश्च कथं देवैस्तन्ममाचक्ष्व तत्त्वतः ।
॥ वैशम्पायन उवाच ॥ भृगोः शापाद्भृशं भीतो जातवेदाः प्रतापवान् । शमीगर्भमथासाद्य ननाश भगवांस्ततः । २७४५
प्रनष्टे तु तदा वह्नौ देवाः सर्व्वे सवासवाः । अन्वैषन्त तदा नष्टं ज्वलनं भृशदुःखिताः ।
ततोऽग्नितीर्थमासाद्य शमीगर्भस्थमेव हि । ददृशुर्ज्वलनं तत्र वसमानं यथाविधि ।
देवाः सर्व्वे नरव्याघ्र बृहस्पतिपुरोगमाः । ज्वलनं तं समासाद्य प्रीताभूवन् सवासवाः ।
पुनर्यथागतं जग्मुः सर्व्वभक्ष्यश्च सोऽभवत् । भृगोः शापान्महीपाल यदुक्तं ब्रह्मवादिना ।
तत्राप्याप्लुत्य मतिमान् ब्रह्मयोनिं जगाम ह । ससर्ज्ज भगवान् यत्र सर्व्वलोकपितामहः । २७५०
तत्राप्लुत्य ततो ब्रह्मा सह देवैः प्रभुः पुरा । ससर्ज्ज तीर्थानि तथा देवतानां यथाविधि ।

तत्र स्नात्वा च दत्त्वा च वसूनि विविधानि च । कौवेरं प्रययौ तीर्थं तत्र तप्त्वा महत्तपः ।
धनाधिपत्यं सम्प्राप्तो राजन्नैलविलः प्रभुः । तत्रस्थमेव तं राजन् धनानि निधयस्तथा ।
उपतस्थुर्नरश्रेष्ठ तत्तीर्थं लाङ्गली ततः । गत्वा स्नात्वा च विधिवद्ब्राह्मणेभ्यो धनं ददौ ।
ददृशे तत्र तत् स्थानं कौवेरे काननोत्तमे । पुरा यत्र तपस्तप्तं विपुलं सुमहात्मना । २७५५
यक्षराज्ञा कुवेरेण वरा लब्धाश्च पुष्कलाः । धनाधिपत्यं सख्यञ्च रुद्रेणामिततेजसा ।
सुरत्वं लोकपालत्वं पुत्रञ्च नलकूवरं । यत्र लेभे महाबाहो धनाधिपतिरञ्जसा ।
अभिषिक्तश्च तत्रैव समागम्य मरुद्गणैः । वाहनञ्चास्य तद्दत्तं हंसयुक्तं मनोजवं ।
विमानं पुष्पकं दिव्यं नैरृतैश्वर्य्यमेव च । तत्राप्लुत्य बलो राजन् दत्त्वा दायांश्च पुष्कलान् ।
जगाम त्वरितो रामस्तीर्थं श्वेतानुलेपनं । निषेवितं सर्व्वसत्त्वैर्नाम्ना बदरपाचनं । २७६०
नानर्त्तुकफलोपेतं सदा पुष्पफलं शुभम् ।

इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

॥ वैशम्पायन उवाच ॥ ततस्तीर्थवरं रामो ययौ बदरपाचनं । तपस्विसिद्धचरितं यत्र कन्या धृतव्रता ।
भरद्वाजस्य दुहिता रूपेणाप्रतिमा भुवि । श्रुतावती नाम विभो कुमारी ब्रह्मचारिणी ।
तपश्चचार साऽत्युग्रं नियमैर्ब्बहुभिर्वृता । भर्त्ता मे देवराजः स्यादिति निश्चित्य भामिनी ।
समास्तस्या व्यतिक्रान्ताः बह्व्यः कुरुकुलोद्वह । चरन्त्या नियमांस्तांस्तान् स्त्रीभिस्तीव्रान् सुदुस्तरान् । २७६५
तस्यास्तु तेन वृत्तेन तपसा च विशाम्पते । भक्त्या च भगवान् प्रीतः परया पाकशासनः ।
आजगामाश्रमं तस्यास्त्रिदशाधिपतिः प्रभुः । आस्थाय रूपं विप्रर्षेर्व्वशिष्ठस्य महात्मनः ।
सा तं दृष्ट्वोग्रतपसं वशिष्ठं तपतां वरं । आचारैर्मुनिभिर्दिष्टैः पूजयामास भारत ।
उवाच नियमज्ञा च कल्याणी सा प्रियंवदा । भगवन्मुनिशार्दूल किमाज्ञापयसि प्रभो ।
सर्व्वमद्य यथाशक्ति तव दास्यामि सुव्रत । शक्रभक्त्या च ते पाणिं न दास्यामि कथञ्चन । २७७०
व्रतैश्च नियमैश्चैव तपसा च तपोधन । शक्रस्तोषयितव्यो वै मया त्रिभुवनेश्वरः ।
इत्युक्तो भगवान् देवः स्मयन्निव निरीक्ष्य तां । उवाच नियमं ज्ञात्वा सान्त्वयन्निव भारत ।
उग्रं तपश्चरसि वै विदिता मेऽसि सुव्रते । यदर्थमयमारम्भस्तव कल्याणि हृद्गतः ।
तच्च सर्व्वं यथाभूतं भविष्यति वरानने । तपसा लभ्यते सर्व्वं यथाभूतं भविष्यति ।
यथास्थानानि दिव्यानि विबुधानां शुभानने । तपसा तानि प्राप्याणि तपोमूलं महत्सुखं । २७७५
इति कृत्वा तपो घोरं देहं सन्न्यस्य मानवाः । देवत्वं यान्ति कल्याणि शृणुष्वैकं वचो मम ।
पञ्च चैतानि शुभगे बदराणि शुभव्रते । पचेत्युक्त्वा च भगवान् जगाम बलसूदनः ।
आमन्त्र्य तान्तु कल्याणीं तत्र जप्यं जजाप सः । अविदूरे ततस्तस्मादाश्रमात्तीर्थमुत्तमं ।
इन्द्रतीर्थेति विख्यातं त्रिषु लोकेषु मानद । तस्य जिज्ञासनार्थं स भगवान् पाकशासनः ।
बदराणामपचनं चकार विबुधाधिपः । ततः प्रतप्ता सा राजन् वाग्यता विगतक्लमा । २७८०

तत्परा शुचिसंवीता पावके समधिश्रयत् । अथ तत्राजशार्दूल वदराणि महाव्रता ।
तस्याः पचन्त्याः सुमहान् कालोऽगात् पुरुषर्षभ । न च स्म तान्यपच्यन्त दिनञ्च क्षयमभ्यगात् ।
हुताशनेन दग्धश्च यस्तस्याः काष्ठसञ्चयः । अकाष्ठमग्निं सा दृष्ट्वा स्वशरीरमथादहत् ।
पादौ प्रक्षिप्य सा पूर्वं पावके चारुदर्शना । दग्धौ दग्धौ पुनः पादावुपावर्त्तयतानघा ।
चरणौ दह्यमानौ च नाचिन्तयदनिन्दिता । कुर्वाणा दुष्करं कर्म महर्षिप्रियकाम्यया । २७८५
न वैमनस्यं तस्यास्तु मुखभेदोऽथ वाऽभवत् । शरीरमग्निनादीप्य जलमध्येऽवहर्षिता ।
तच्चास्या वचनं नित्यमवर्त्तद्धृदि भारत । सर्व्वथा वदराण्येव पक्तव्यानीति कन्यका ।
सा तन्मनसि कृत्वैव महर्षेर्व्वचनं शुभा । अपचद्वदराण्येव न चापच्यन्त भारत ।
तस्यास्तु चरणौ वह्निर्ददाह भगवान् स्वयं । न च तस्या मनोदुःखं स्वल्पमप्यभवत्तदा ।
अथ तत्कर्म दृष्ट्वाऽस्याः प्रीतस्त्रिभुवनेश्वरः । ततः सन्दर्शयामास कन्यायै रूपमात्मनः । २७९०
उवाच च सुरश्रेष्ठस्तां कन्यां सुदृढव्रतां । प्रीतोऽस्मि ते शुभे भक्त्या तपसा नियमेन च ।
तस्माद्योऽभिमतः कामः स ते सम्पत्स्यते शुभे । देहं त्यक्त्वा महाभागे त्रिदिवे मयि वत्स्यसि ।
इदञ्च ते तीर्थवरं स्थिरं लोके भविष्यति । सर्व्वपापापहं सुभ्रु नाम्ना वदरपाचनं ।
विख्यातं त्रिषु लोकेषु ब्रह्मर्षिभिरभिष्टुतं । अस्मिन् खलु महाभागे शुभे तीर्थवरेऽनघे ।
त्यक्त्वा सप्तर्षयो जग्मुर्हिमवन्तमरुन्धतीं । ततस्ते वै महाभागा गत्वा तत्र सुसंशिताः । २७९५
वृत्त्यर्थं फलमूलानि समाहर्त्तुं ययुः किल । तेषां वृत्त्यर्थिनां तत्र वसतां हिमवद्वने ।
अनावृष्टिरनुप्राप्ता तदा द्वादशवार्षिकी । ते कृत्वा चाश्रमं तत्र न्यवसन्त तपस्विनः ।
अरुन्धत्यपि कल्याणी तपोनित्याऽभवत्तदा । अरुन्धतीं ततो दृष्ट्वा तीव्रं नियममास्थितां ।
अथागमत्त्रिनयनः सुप्रीतो वरदस्तदा । ब्राह्मं रूपं ततः कृत्वा महादेवो महायशाः ।
तामभ्येत्याब्रवीद्देवो भिक्षामिच्छाम्यहं शुभे । प्रत्युवाच ततः सा तं ब्राह्मणं चारुदर्शना । २८००
क्षीणोऽन्नसञ्चयो विप्र वदराणीह भक्षय । ततोऽब्रवीन्महादेवः पचस्वैतानि सुव्रते ।
इत्युक्ता साऽपचत्तानि ब्राह्मणप्रियकाम्यया । अधिश्रित्य समिद्धेऽग्नौ वदराणि यशस्विनी ।
दिव्यामनोरमाः पुण्याः कथाः शुश्राव सा तदा । अतीता सा त्वनावृष्टिर्घोरा द्वादशवार्षिकी ।
अनश्नन्त्याः पचन्त्याश्च शृण्वन्त्याश्च कथाः शुभाः । दिनोपमः स तस्याश्च कालो भूतः सुदारुणः ।
ततस्ते मुनयः प्राप्ताः फलान्यादाय पर्व्वतात् । ततः स भगवान् प्रीतः प्रोवाचारुन्धतीं ततः । २८०५
उपसर्पस्व धर्म्मज्ञे यथापूर्व्वमिमानृषीन् । प्रीतोऽस्मि तव धर्म्मज्ञे तपसा नियमेन च ।
ततः सन्दर्शयामास स्वरूपं भगवान् हरः । प्रीतोऽब्रवीत्तदा तेभ्यस्तस्याश्च चरितं महत् ।
भवद्भिर्हिमवत्पृष्ठे यत्तपः समुपार्ज्जितं । अस्याश्च यत्तपो विप्रा न समं तन्मतं मम ।
अनया हि तपस्विन्या तपस्तप्तं सुदुश्चरं । अनश्नन्त्या पचन्त्या च समा द्वादश पारिताः ।
ततः प्रोवाच भगवांस्तामेवारुन्धतीं पुनः । वरं वृणीष्व कल्याणि यत्तेऽभिलषितं हृदि । २८१०

साऽब्रवीत् पृथुताम्राक्षी देवं सप्तर्षिसंसदि। भगवान् यदि मे प्रीतस्तीर्थं स्यादिदमद्भुतं।
सिद्धदेवर्षिदयितं नाम्ना वदरपाचनं। तथाऽस्मिन्देवदेवेश त्रिरात्रमुषितः शुचिः।
प्राप्नुयादुपवासेन फलं द्वादशवार्षिकं। एवमस्त्विति तां देवः प्रत्युवाच तपस्विनीं।
सप्तर्षिभिस्तुतो देवस्ततो नाकं ययौ तदा। ऋषयो विस्मयं जग्मुस्तां दृष्ट्वा चाप्यरुन्धतीं।
अश्रान्ताञ्चाविवर्णाञ्च क्षुत्पिपासासमायुतां। एवं सिद्धिः परा प्राप्ता अरुन्धत्या विशुद्धया।  २८१५
यथा त्वया महाभागे मदर्थं संशितव्रते। विशेषो हि त्वया भद्रे व्रते ह्यस्मिन् समर्पितः।
तथा चेदं ददाम्यद्य नियमेन सुतोषितः। विशेषं तव कल्याणि प्रयच्छामि वरं वरे।
अरुन्धत्या वरस्तस्या यो दत्तो वै महात्मना। तस्य चाहं प्रभावेण तव कल्याणि तेजसा।
प्रवक्ष्यामि परं भूयो वरमत्र यथाविधि। यस्त्वेकां रजनीं तीर्थे वत्स्यते सुसमाहितः।
स स्नात्वा प्राप्स्यते लोकान् देहन्यासात्सुदुर्लभान्। इत्युक्त्वा भगवान् देवः सहस्राक्षः प्रतापवान्।  २८२०
श्रुतावतीं ततः पुण्यां जगाम त्रिदिवं पुनः। गते वज्रधरे राजन् तत्र वर्षं पपात ह।
पुष्पाणां भरतश्रेष्ठ दिव्यानां पुण्यगन्धिनां। देवदुन्दुभयश्चापि नेदुस्तत्र महास्वनाः।
मारुतश्च ववौ पुण्यः पुण्यगन्धो विशाम्पते। उत्सृज्य तु शुभा देहं जगामास्य च भार्य्यतां।
तपसोग्रेण तं लब्ध्वा तेन रेमे सहाच्युत।
॥ जनमेजय उवाच ॥ का तस्य भगवन्माता क्व संवृद्धा च शोभना। श्रोतुमिच्छाम्यहं विप्र परं कौतूहलं हि मे।  २८२५
॥ वैशम्पायन उवाच ॥ भरद्वाजस्य विप्रर्षेः स्कन्नं रेतो महात्मनः। दृष्ट्वाऽप्सरसमायान्तीं घृताचीं पृथुलोचनां।
स तु जग्राह तद्रेतः करेण जपतांवरः। तदाऽपतत्पर्णपुटे तत्र सा सम्भवत्सुता।
तस्यास्तु जातकर्म्मादि कृत्वा सर्व्वं तपोधनः। नाम चास्याः स कृतवान् भरद्वाजो महामुनिः।
श्रुतावतीति धर्म्मात्मा देवर्षिगणसंसदि। स्वे च तामाश्रमे न्यस्य जगाम हिमवद्वनं।
तत्राप्युपस्पृश्य महानुभावो वसूनि दत्त्वा च महाद्विजेभ्यः। जगाम तीर्थं सुसमाहितात्मा शक्रस्य वृष्णिप्रवरस्तदानीं।  २८३०
इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने ऊनपञ्चाशोऽध्यायः॥ ४९ ॥
॥ वैशम्पायन उवाच ॥ इन्द्रतीर्थं ततो गत्वा यदूनां प्रवरो बलः। विप्रेभ्यो धनरत्नानि ददौ स्नात्वा यथाविधि।
तत्र ह्यमरराजोऽसावीजे क्रतुशतेन च। बृहस्पतेश्च देवेशः प्रददौ विपुलं धनं।
पूरयामास विधिवत् ततः ख्यातः शतक्रतुः। तस्य नाम्ना च तत्तीर्थं शिवं पुण्यं सनातनं।
इन्द्रतीर्थमिति ख्यातं सर्व्वपापप्रमोचनं। उपस्पृश्य च तत्रापि विधिवन्मुषलायुधः।
ब्राह्मणान् पूजयित्वा च सदाच्छादनभोजनैः। शुभं तीर्थवरं तस्माद्रामतीर्थं जगाम ह।  २८३५
यत्र रामो महाभागो भार्गवः सुमहातपाः। असकृत् पृथिवीं जित्वा हतक्षत्रियपुङ्गवां।
उपाध्यायं पुरस्कृत्य कश्यपं मुनिसत्तमं। अयजद्वाजिमेधेन सोऽश्वमेधशतेन च।
प्रददौ दक्षिणाञ्चैव पृथिवीं वै ससागरां। दत्त्वा च दानं विविधं नानारत्नसमन्वितं।
सगोहस्तिकदासीकं साजाविं गतवान् वनं। पुण्ये तीर्थवरे तत्र देवब्रह्मर्षिसेविते।

मुनींश्चैवाभिवाद्याथ यमुनातीर्थमागमत्। यत्रानयामास तदा राजसूयं महीपते। २८५०
पुत्रोऽदितेर्महाभागो वरुणो वै सितप्रभः। तत्र निर्ज्जित्य संग्रामे मानुषान् दैवतांस्तथा।
वरं क्रतुं समाजह्रे वरुणः परवीरहा। तस्मिन् क्रतुवरे वृत्ते संग्रामः समजायत।
देवानां दानवानाञ्च त्रैलोक्यस्य भयावहः। राजसूये क्रतुश्रेष्ठे निवृत्ते जनमेजय।
जायते सुमहाघोरः सङ्ग्रामः क्षत्रियान् प्रति। तत्रापि लाङ्गली देव ऋषीनभ्यर्च्च्य पूजया।
इतरेभ्योऽप्यदाद्दानमर्थिभ्यः कामदो विभुः। वनमाली ततो हृष्टः स्तूयमानो महर्षिभिः। २८५५
तस्मादादित्यतीर्थञ्च जगाम कमलेक्षणः। यत्रेष्ट्वा भगवान् ज्योतिर्भास्करो राजसत्तमः।
ज्योतिषामाधिपत्यञ्च प्रभावञ्चाभ्यपद्यत। तस्या नद्यास्तु तीरे वै सर्व्वे देवाः सवासवाः।
विश्वेदेवाः समरुतो गन्धर्व्वाऽप्सरसश्च ह। द्वैपायनः शुकश्चैव कृष्णश्च मधुसूदनः।
यक्षाश्च राक्षसाश्चैव पिशाचाश्च विशाम्पते। एते चान्ये च बहवो योगसिद्धाः सहस्रशः।
तस्मिंस्तीर्थे सरस्वत्याः शिवे पुण्ये परन्तप। तत्र हत्वा पुरा विष्णुरसुरौ मधुकैटभौ। २८६०
आप्लुत्य भरतश्रेष्ठ तीर्थप्रवर उत्तमे। द्वैपायनश्च धर्म्मात्मा तत्रैवाप्लुत्य भारत।
सम्प्राप्य परमं योगं सिद्धिञ्च परमाङ्गतः। असितो देवलश्चैव तस्मिन्नेव महातपाः।
परमं योगमास्थाय ऋषिर्योगमवाप्तवान्।

इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि सारस्वतोपाख्याने पञ्चाशत्तमोऽध्यायः॥ ५०॥

॥ वैशम्पायन उवाच॥ तस्मिन्नेव तु धर्म्मात्मा वसति स्म तपोधनः। गार्हस्थ्यं धर्म्ममास्थाय असितो देवलः पुरा।
धर्म्मनित्यः शुचिर्दान्तो न्यस्तदण्डो महातपाः। कर्म्मणा मनसा वाचा समः सर्व्वेषु जन्तुषु। २८६५
अक्रोधनो महाराज तुल्यनिन्दात्मसंस्तुतिः। प्रियाप्रिये तुल्यवृत्तिर्यमवत् समदर्शनः।
काञ्चने लोष्टभावे च समदर्शी महातपाः। देवानपूजयन्नित्यमतिथींश्च द्विजैःसह।
ब्रह्मचर्य्यरतो नित्यं सदा धर्म्मपरायणः। ततोऽभ्येत्य महाभाग योगमास्थाय भिक्षुकः।
जैगीषव्यो मुनिर्धीमांस्तस्मिंस्तीर्थे समाहितः। देवलस्याश्रमे राजन् प्रवसन् स महाद्युतिः।
योगनित्यो महाराज सिद्धिं प्राप्तो महातपाः। तं तत्र वसमानन्तु जैगीषव्यं महामुनिं। २८७०
देवलो दर्शयन्नेव नैवायुञ्जत धर्म्मतः। एवं तयोर्महाराज दीर्घकालो व्यतिक्रमत्।
जैगीषव्यं मुनिवरं न ददर्शाथ देवलः। आहारकाले मतिमान् परिव्राड्जनमेजय।
उपातिष्ठत धर्म्मज्ञो भैक्षकाले च देवल। स दृष्ट्वा भिक्षुरूपेण प्राप्तं तत्र महामुनिं।
गौरवं परमञ्चक्रे प्रीतिञ्च विपुलान्तथा। देवलस्तु यथाशक्ति पूजयामास भारत।
ऋषिदृष्टेन विधिना समा बह्वीः समाहितः। कदाचित्तस्य नृपते देवलस्य महात्मनः। २८७५
चिन्ता सुमहती जाता मुनिं दृष्ट्वा महाद्युतिं। समास्तु समतिक्रान्ता बह्व्यः पूजयतो मम।
न चायमलसो भिक्षुरभ्यभाषत किञ्चन। एवं विगणयन्नेव स जगाम महोदधिं।
अन्तरीक्षचरः श्रीमान् कलसं गृह्य देवलः। गच्छन्नेव स धर्म्मात्मा समुद्रं सरितांपतिं।

जैगीषव्यं ततोऽपश्यद्गतं प्रागेव भारत । ततः सविस्मयश्चिन्तां जगामाथासितप्रभः ।
कथं भिक्षुरयं प्राप्तः समुद्रे स्नात एव च । इत्येवञ्चिन्तयामास महर्षिरसितस्तदा । २८७०
स्नात्वा समुद्रे विधिवच्छुचिर्ज्जप्यं जजाप ह । कृतजप्याह्निकः श्रीमानाश्रमञ्च जगाम ह ।
कलसं जलपूर्णं वै गृहीत्वा जनमेजय । ततः स प्रविशन्नेव स्वमाश्रमपदं मुनिः ।
आसीनमाश्रमे तत्र जैगीषव्यमपश्यत । न व्याहरति चैवैनं जैगीषव्यः कथञ्चन ।
काष्ठभूताश्रमपदे वसति स्म महातपाः । तं दृष्ट्वा चाप्लुतं तोये सागरे सागरोपमं ।
प्रविष्टमाश्रमञ्चापि पूर्व्वमेव ददर्श सः । असितो देवलो राजंश्चिन्तयामास बुद्धिमान् । २८७५
दृष्ट्वा प्रभावं तपसो जैगीषव्यस्य योगजं । चिन्तयामास राजेन्द्र तदा स मुनिसत्तमः ।
मया दृष्टः समुद्रे च आश्रमे च कथन्त्वयं । एवं विगणयन्नेव स मुनिर्म्मन्त्रपारगः ।
उत्पपाताश्रमात्तस्मादन्तरीक्षं विशाम्पते । जिज्ञासार्थं तदा भिक्षोर्जैगीषव्यस्य देवलः ।
सोऽन्तरीक्षचरान् सर्व्वान् समपश्यत्समाहितान् । जैगीषव्यञ्च तैः सिद्धैः पूज्यमानमपश्यत ।
ततोऽसितः सुसंरब्धो व्यवसायी दृढव्रतः । अपश्यद्वै ततो यान्तं जैगीषव्यं स देवलः । २८८०
तस्मात्तु पितृलोकं तं व्रजन्तं सोऽन्वपश्यत । पितृलोकाच्च तं यान्तं याम्यं लोकमपश्यत ।
तस्मादपि समुत्पत्य सोमलोकमभिप्लुतं । व्रजन्तमन्वपश्यत् स जैगीषव्यं महामुनिं ।
लोकान् समुत्पतन्तन्तु शुभानेकान्तयाजिनां । ततोऽग्निहोत्रिणां लोकांस्तांश्चाप्युत्पपात ह ।
दर्शञ्च पौर्णमासञ्च ये यजन्ति तपोधनाः । तेभ्यः स ददृशे धीमान् लोकेभ्यः पशुयाजिनां ।
व्रजन्तं लोकममलमपश्यद्देवपूजितं । चातुर्म्मास्यैर्ब्बहुविधैर्यजन्ते ये तपोधनाः । २८८५
तेषां स्थानं ततो यान्तं तथाऽग्निष्टोमयाजिनां । अग्निष्टुभेन च तथा ये यजन्ति तपोधनाः ।
तत्स्थानमनुसंप्राप्तमन्वपश्यत देवलः । वाजपेयं क्रतुवरं तथा बहुसुवर्णकं ।
आहरन्ति महाप्राज्ञास्तेषां लोकेष्वपश्यत । यजन्ते राजसूयेन पुण्डरीकेण चैव ये ।
तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः । अश्वमेधं क्रतुवरं नरमेधन्तथैव च ।
आहरन्ति नरश्रेष्ठास्तेषां लोकेष्वपश्यत । सर्व्वमेधञ्च दुष्प्रापं तथा सौत्रामणिञ्च ये । २८९०
तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः । द्वादशाहैश्च सत्रैर्यैर्यजन्ति विविधैर्नृप ।
तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः । मित्रावरुणयोर्लोकानादित्यानां तथैव च ।
सलोकतामनुप्राप्तमपश्यत ततोऽसितः । रुद्राणाञ्च वसूनाञ्च स्थानं यच्च बृहस्पतेः ।
तानि सर्व्वाण्यतीतानि समपश्यत्ततोऽसितः । आरुह्य च गवां लोकं प्रयातो ब्रह्मसत्रिणां ।
लोकानपश्यद्गच्छन्तं जैगीषव्यं ततोऽसितः । त्रीँल्लोकानपरान् विप्रमुत्पतन्तं स्वतेजसा । २८९५
पतिव्रतानां लोकांश्च व्रजन्तं सोऽन्वपश्यत । ततो मुनिवरं भूयो जैगीषव्यमथासितः ।
नान्वपश्यत लोकस्थमन्तर्हितमरिन्दम । सोऽचिन्तयन्महाभागो जैगीषव्यस्य देवलः ।
प्रभावं सुव्रतत्वञ्च सिद्धिं योगस्य चातुलां । असितोऽपृच्छत तदा सिद्धान् लोकेषु सत्तमान् ।

प्रयतः प्राञ्जलिर्भूत्वा धीरस्तान् ब्रह्मसत्रिणः । जैगीषव्यं न पश्यामि तं शंसध्वं महौजसं ।
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे । शृणु देवल भूतार्थं शंसतां नो दृढव्रत । २९००
जैगीषव्यः स वै लोकं शाश्वतं ब्रह्मणो गतः ।
॥ वैशम्पायन उवाच ॥ स श्रुत्वा वचनं तेषां सिद्धानां ब्रह्मसत्रिणां । असितो देवलस्तूर्णमुत्पपात पपात च ।
ततः सिद्धास्तमूचुर्हि देवलं पुनरेव ह । न देवल गतिस्तत्र तव गन्तुं तपोधन ।
ब्रह्मणः सदने विप्र जैगीषव्यो यदाप्तवान् ।
॥ वैशम्पायन उवाच ॥ तेषां तद्वचनं श्रुत्वा सिद्धानां देवलः पुनः । आनुपूर्व्व्येण लोकांस्तान् सर्व्वानवततार ह । २९०५
स्वमाश्रमपदं पुण्यमाजगाम पतत्रिवत् । प्रविशन्नेव चापश्यज्जैगीषव्यं स देवलः ।
ततो बुद्ध्या व्यगणयद्देवलो धर्म्मयुक्तया । दृष्ट्वा प्रभावं तपसो जैगीषव्यस्य योगजं ।
ततोऽब्रवीन्महात्मानं जैगीषव्यं स देवलः । विनयावनतो राजन्नुपसर्प्य महामुनिं ।
मोक्षधर्म्मं समास्थातुमिच्छेयं भगवन्नहं । तस्य तद्वचनं श्रुत्वा उपदेशं चकार सः ।
विधिञ्च योगस्य परं कार्य्याकार्य्यस्य शास्त्रतः । संन्यासकृतबुद्धिन्तं ततो दृष्ट्वा महातपाः । २९१०
सर्व्वाश्चास्य क्रियाश्चक्रे विधिदृष्टेन कर्म्मणा । संन्यासकृतबुद्धिन्तं भूतानि पितृभिः सह ।
ततो दृष्ट्वा प्ररुरुदुः कोऽस्मान् संविभजिष्यति । देवलस्तु वचः श्रुत्वा भूतानां करुणं तथा ।
दिशो दश व्याहरतां मोक्षं त्यक्तुं मनो दधे । ततस्तु फलमूलानि पवित्राणि च भारत ।
पुष्पाण्योषधयश्चैव रोरूयन्ति सहस्रशः । पुनर्नो देवलः क्षुद्रो नूनं छेत्स्यति दुर्म्मतिः ।
अभयं सर्व्वभूतेभ्यो यो दत्त्वा नावबुध्यते । ततो भूयो व्यगणयत् स्वबुद्ध्या मुनिसत्तमः । २९१५
मोक्षे गार्हस्थ्यधर्म्मे वा किन्नु श्रेयस्करं भवेत् । इति निश्चित्य मनसा देवलो राजसत्तम ।
त्यक्त्वा गार्हस्थ्यधर्म्मं स मोक्षधर्म्ममरोचयत् । एवमादीनि सञ्चिन्त्य देवलो निश्चयात्ततः ।
प्राप्तवान् परमां सिद्धिं परं योगञ्च भारत । ततो देवाः समागम्य वृहस्पतिपुरोगमाः ।
जैगीषव्यं तपश्चास्य प्रशंसन्ति तपस्विनः । अथाब्रवीदृषिवरो देवान् वै नारदस्तथा ।
जैगीषव्ये तपो नास्ति विस्मापयति यो ऽसितं । तमेवं वादिनं धीरं प्रत्यूचुस्ते दिवौकसः । २९२०
नैवमित्येव शंसन्तो जैगीषव्यं महामुनिं । नातः परतरं किञ्चित्तुल्यमस्ति प्रभावतः ।
तेजसस्तपसश्चास्य योगस्य च महात्मनः । एवंप्रभावो धर्म्मात्मा जैगीषव्यस्तथाऽसितः ।
तयोरिदं स्थानवरं तीर्थञ्चैव महात्मनोः ।
तत्राप्युपस्पृश्य ततो महात्मा दत्त्वा च वित्तं हलभृद्द्विजेभ्यः । अवाप्य धर्म्मं परमार्य्यकर्म्मा जगाम सोमस्य महत्सुतीर्थं ।
इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने एकपञ्चाशोऽध्यायः ॥ ५१॥
॥ वैशम्पायन उवाच ॥ यत्रेजिवानुडुपती राजसूयेन भारत । तस्मिंस्तीर्थे महानासीत् संग्रामस्तारकामयः । २९२५
तत्राप्युपस्पृश्य बलो दत्त्वा दानानि चात्मवान् । सारस्वतस्य धर्म्मात्मा मुनेस्तीर्थं जगाम ह ।
तत्र द्वादशवार्षिक्यामनावृष्ट्यां द्विजोत्तमान् । वेदानध्यापयामास पुरा सारस्वतो मुनिः ।

॥ जनमेजय उवाच ॥ कथं द्वादशवार्षिक्यामनावृष्ट्यां तपोधन। ऋषीनध्यापयामास पुरा सारस्वतो मुनिः।
॥ वैशम्पायन उवाच ॥ आसीत् पूर्व्वं महाराज मुनिर्धीमान्महातपाः। दधीच इति विख्यातो ब्रह्मचारी जितेन्द्रियः।

तस्यातितपसः शक्रो बिभेति सततं प्रभो। न स लोभयितुं शक्यः फलैर्व्वहुविधैरपि। २९३०

प्रलोभनार्थं तस्याथ प्राहिणोत्पाकशासनः। दिव्यामप्सरसं पुण्यां दर्शनीयामलम्बुषां।

तस्य तर्पयतो देवान् सरस्वत्यां महात्मनः। समीपतो महाराज सोपातिष्ठत भाविनी।

तां दिव्यवपुषं दृष्ट्वा तस्यर्षेर्भावितात्मनः। रेतः स्कन्नं सरस्वत्यां तत्सा जग्राह निम्नगा।

कुक्षौ चाप्यदधद्दृष्ट्वा तद्रेतः पुरुषर्षभ। सा दधार च तं गर्भं पुत्त्रहेतोर्म्महानदी।

सुषुवे चापि समये पुत्त्रं सा सरितांवरा। जगाम पुत्त्रमादाय तमृषिं प्रति च प्रभो। २९३५

ऋषिं संसदि तं दृष्ट्वा सा नदी मुनिसत्तमं। ततः प्रोवाच राजेन्द्र ददती पुत्त्रमस्य तं।

ब्रह्मर्षे तव पुत्त्रोऽयं त्वद्भक्त्या धारितो मया। दृष्ट्वा तेऽप्सरसं रेतो यत् स्कन्नं प्रागलम्बुषां।

तत्कुक्षिणा वै ब्रह्मर्षे त्वद्भक्त्या धृतवत्यहं। न विनाशमिदं गच्छेत्त्वत्तेज इति निश्चयात्।

प्रतिगृह्णीष्व पुत्त्रं स्वं मया दत्तमनिन्दितं। इत्युक्तः प्रतिजग्राह प्रीतिञ्चावाप पुष्कलां।

स्वसुतञ्चाप्यजिघ्रत्तं मूर्द्ध्नि प्रेम्णा द्विजोत्तमः। परिष्वज्य चिरं कालं तदा भरतसत्तम। २९४०

सरस्वत्यै वरं प्रादात् प्रीयमाणो महामुनिः। विश्वेदेवाः सपितरो गन्धर्व्वाप्सरसाङ्गणाः।

तृप्तिं यास्यन्ति सुभगे तर्प्यमाणास्तवाम्भसा। इत्युक्त्वा स तु तुष्टाव वचोभिर्व्वै महानदीं।

प्रीतः परमहृष्टात्मा यथावच्छृणु पार्थिव। प्रसूतासि महाभागे सरसो ब्रह्मणः पुरा।

जानन्ति त्वां सरिच्छ्रेष्ठे मुनयः संशितव्रताः। मम प्रियकरी चापि सततं प्रियदर्शने।

तस्मात् सारस्वतः पुत्त्रो महांस्ते वरवर्णिनि। तवैव नाम्ना प्रथितः पुत्त्रस्ते लोकभावनः। २९४५

सारस्वत इति ख्यातो भविष्यति महातपाः। एष द्वादशवार्षिक्यामनावृष्ट्यां द्विजर्षभान्।

सारस्वतो महाभागो वेदानध्यापयिष्यति। पुण्याभ्यश्च सरिद्भ्यस्त्वं सदा पुण्यतमा शुभे।

भविष्यसि महाभागे मत्प्रसादात्सरस्वति। एवं सा संस्तुता तेन वरं लब्ध्वा महानदी।

पुत्त्रमादाय मुदिता जगाम भरतर्षभ। एतस्मिन्नेव काले तु विरोधे देवदानवैः।

शक्रः प्रहरणान्वेषी लोकांस्त्रीन् विचचार ह। न चोपलेभे भगवान् शक्रः प्रहरणं तदा। २९५०

यद्वै तेषां भवेद्योग्यं बधाय विबुधद्विषां। ततोऽब्रवीत् सुराञ्छक्रो न मे शक्या महासुराः।

ऋतेऽस्थिभिर्द्दधीचस्य निहन्तुं त्रिदशद्विषः। तस्माद्गत्वा ऋषिश्रेष्ठो याच्यतां सुरसत्तमाः।

दधीचास्थीनि देहीति तैर्व्वधिष्यामहे रिपून्। स च तैर्याचितोऽस्थीनि यत्नादृषिवरस्तदा।

प्राणत्यागं कुरुश्रेष्ठ चकारैवाविचारयन्। स लोकानक्षयान् प्राप्तो देवप्रियकरस्तदा।

तस्यास्थिभिरथो शक्रः संप्रहृष्टमनास्तदा। कारयामास दिव्यानि नानाप्रहरणानि च। २९५५

वज्राणि चक्राणि गदा गुरून् दण्डांश्च पुष्कलान्। स हि तीव्रेण तपसा संभूतः परमर्षिणा।

प्रजापतिसुतेनाथ भृगुणा लोकभावनः। अतिकायः स तेजस्वी लोकसारो विनिर्म्मितः।

यस्ते शैलगुरुः प्रांशुर्महिम्ना प्रथितः प्रभुः। नित्यमुद्विजते चास्य तेजसः पाकशासनः।
तेन वज्रेण भगवान् मन्त्रयुक्तेन भारत। विपुलोग्र विसृष्टेन ब्रह्मतेजोद्भवेन च।
दैत्यदानववीराणां जघान नवतीर्नव। अथ काले व्यतिक्रान्ते महत्यतिभयङ्करे। २९६०
अनावृष्टिरनुप्राप्ता राजन् द्वादशवार्षिकी। तस्यां द्वादशवार्षिक्यामनावृष्ट्यां महर्षयः।
वृत्त्यर्थं प्राद्रवन्राजन् क्षुधार्त्ताः सर्व्वतो दिशं। दिग्भ्यस्तान् प्रद्रुतान्दृष्ट्वा मुनिः सारस्वतस्तदा।
गमनाय मतिञ्चक्रे तम्प्रोवाच सरस्वती। न गन्तव्यमितः पुत्र तवाहारमहं सदा।
दास्यामि मत्स्यप्रवरानुष्यतामिह भारत। इत्युक्तस्तर्पयामास स पितॄन् देवतास्तथा।
आहारमकरोन्नित्यं प्राणान् वेदांश्च धारयन्। अथ तस्यामनावृष्ट्यामतीतायां महर्षयः। २९६५
अन्योन्यं परिपप्रच्छुः पुनः स्वाध्यायकारणात्। तेषां क्षुधापरीतानां नष्टा वेदाऽभिधावतां।
सर्व्वेषामेव राजेन्द्र न कश्चित्प्रतिभानवान्। अथ कश्चिदृषिस्तेषां सारस्वतमुपेयिवान्।
कुर्व्वाणं संशितात्मानं स्वाध्यायमृषिसत्तमं। स गत्वाचष्ट तेभ्यश्च सारस्वतमतिप्रभं।
स्वाध्यायममरप्रख्यं कुर्व्वाणं विजने वने। ततः सर्व्वे समाजग्मुस्तत्र राजन् महर्षयः।
सारस्वतं मुनिश्रेष्ठमिदमूचुः समागताः। अस्मानध्यापयस्वेति तानुवाच ततो मुनिः। २९७०
शिष्यत्वमुपगच्छध्वं विधिवद्धि ममेत्युत। तत्राब्रुवन्मुनिगणा बालस्त्वमसि पुत्रक।
स तानाह न मे धर्म्मो नश्येदिति पुनर्मुनीन्। यो ह्यधर्म्मेण वै ब्रूयाद्गृह्णीयाद्योऽप्यधर्म्मतः।
हीयेतां तावुभौ क्षिप्रं स्यातां वा वैरिणावुभौ। न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः।
ऋषयश्चक्रिरे धर्म्मं योऽनूचानः स नो महान्। एतच्छ्रुत्वा वचस्तस्य मुनयस्ते विधानतः।
तस्माद्वेदाननुप्राप्य पुनर्द्धर्म्मं प्रचक्रिरे। षष्टिर्मुनिसहस्राणि शिष्यत्वं प्रतिपेदिरे। २९७५
सारस्वतस्य विप्रर्षेर्व्वेदस्वाध्यायकारणात्। मुष्टिं मुष्टिं ततः सर्व्वे दर्भाणान्ते ह्युपाहरन्।
तस्यासनार्थं विप्रर्षेर्बालस्यापि वशे स्थिताः।

तत्रापि दत्त्वा वसु रौहिणेयो महाबलः केशवपूर्व्वजोऽथ। जगाम तीर्थं मुदितः क्रमेण ख्यातं महद्वृद्धकन्या स्म यत्र।

इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने द्विपञ्चाशोऽध्यायः॥ ५२॥

॥ जनमेजय उवाच ॥ कथं कुमारी भगवन् तपोयुक्ता ह्यभूत्पुरा। किमर्थञ्च तपस्तेपे को वास्या नियमोऽभवत्।
सुदुष्करमिदं ब्रह्मंस्त्वत्तः श्रुतमनुत्तमं। आख्याहि तत्त्वमखिलं यथा तपसि सा स्थिता। २९८०
॥ वैशम्पायन उवाच ॥ ऋषिरासीन्महावीर्य्यः कुणिर्गर्गो महायशाः। स तप्त्वा विपुलं राजंस्तपो वै तपतांवरः।
मनसाऽथ सुतां सुभ्रूं समुत्पादितवान् प्रभुः। ताञ्च दृष्ट्वा मुनिः प्रीतः कुणिर्गर्गो महायशाः।
जगाम त्रिदिवं राजन् सन्त्यज्येह कलेवरं। सुभ्रूः सा ह्यथ कल्याणी पुण्डरीकनिभेक्षणा।
महता तपसोग्रेण कृत्वाश्रममनिन्दिता। उपवासैः पूजयन्ती पितॄन् देवांश्च सा पुरा।
तस्यास्तु तपसोग्रेण महान् कालोऽत्यगान्नृप। सा पित्रा दीयमानाऽपि तत्र नैच्छदनिन्दिता। २९८५
आत्मनः सदृशं सा तु भर्त्तारं नान्वपश्यत। ततः सा तपसोग्रेण पीडयित्वात्मनस्तनुं।

पितृदेवार्च्चनरता बभूव विजने वने । आत्मानं मन्यमानाऽपि कृतकृत्यं श्रमान्विता ।
वार्द्धकेन च राजेन्द्र तपसा चैव कर्षिता । सा नाशकद्यदा गन्तुं पदात् पदमपि स्वयं ।
चकार गमने बुद्धिं परलोकाय वै तदा । मोक्तुकामान्तु तां दृष्ट्वा शरीरं नारदोऽब्रवीत् ।
असंस्कृतायाः कन्यायाः कुतो लोकास्तवानघे । एवन्तु श्रुतमस्माभिर्देवलोके महाव्रते । २९९०
तपः परमकं प्राप्तं न तु लोकास्त्वया जिताः । तन्नारदवचः श्रुत्वा साऽब्रवीदृषिसंसदि ।
तपसोऽर्द्धं प्रयच्छामि पाणिग्राहस्य सत्तम । इत्युक्ते चास्या जग्राह पाणिं गालवसम्भवः ।
ऋषिः प्राक्शृङ्गवान्नाम समयञ्चेदमब्रवीत् । समयेन तवाद्याहं पाणिं स्प्रक्ष्यामि शोभने ।
यद्येकरात्रं वस्तव्यं त्वया सह मयेति ह । तथेति सा प्रतिश्रुत्य तस्मै पाणिं ददौ तदा ।
यथादृष्टेन विधिना हुत्वा चाग्निं विधानतः । चक्रे च पाणिग्रहणं तस्योद्वाहञ्च गालविः । २९९५
सा रात्रावभवद्राजन् तरुणी वरवर्णिनी । दिव्याभरणवस्त्रा च दिव्यगन्धानुलेपना ।
तां दृष्ट्वा गालविः प्रीतो दीपयन्तीमिव श्रिया । उवास च क्षपामेकां प्रभाते साऽब्रवीच्च तं ।
यस्त्वया समयो विप्र कृतो मे तपतांवर । तेनोषिताऽस्मि भद्रन्ते स्वस्ति तेऽस्तु व्रजाम्यहं ।
सा निर्गताऽब्रवीद्भूयो योऽस्मिंस्तीर्थे समाहितः । वसते रजनीमेकां तर्पयित्वा दिवौकसः ।
चत्वारिंशतमष्टौ च द्वे चाष्टौ सम्यगाचरेत् । यो ब्रह्मचर्य्यं वर्षाणि फलं तस्य लभेत सः । ३०००
एवमुक्त्वा ततः साध्वी देहं त्यक्त्वा दिवं गता । ऋषिरप्यभवद्दीनस्तस्या रूपं विचिन्तयन् ।
समयेन तपोऽर्द्धञ्च कृच्छ्रात्प्रतिगृहीतवान् । साधयित्वा तदात्मानं तस्याः स गतिमन्वियात् ।
दुःखितो भरतश्रेष्ठ तस्या रूपबलात्कृतः । एतत्ते वृद्धकन्याया व्याख्यातञ्चरितं महत् ।
तथैव ब्रह्मचर्य्यञ्च स्वर्गस्य च गतिः शुभा । तत्रस्थश्चापि शुश्राव हतं शल्यं हलायुधः ।
तत्रापि दत्त्वा दानानि द्विजातिभ्यः परन्तपः । शुशोच शल्यं संग्रामे निहतं पाण्डवैस्तदा । ३००५
समन्तपञ्चकद्वारात्ततो निष्क्रम्य माधवः । पप्रच्छर्षिगणान्रामः कुरुक्षेत्रस्य यत् फलं ।
ते पृष्टा यदुसिंहेन कुरुक्षेत्रफलं विभो । समाचख्युर्महात्मानस्तस्मै सर्व्वं यथातथं ।

इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

॥ ऋषय ऊचुः ॥ प्रजापतेरुत्तरवेदिरुच्यते सनातनी राम समन्तपञ्चकं । समीजिरे तत्र पुरा दिवौकसो वरेण सत्रेण महावरप्रदाः ।
पुरा च राजर्षिवरेण धीमता बहूनि वर्षाण्यमितेन तेजसा । प्रकृष्टमेतत् कुरुणा महात्मना ततः कुरुक्षेत्रमितीह पप्रथे ।
॥ राम उवाच ॥ किमर्थं कुरुणा कृष्टं क्षेत्रमेतन्महात्मना । एतदिच्छाम्यहं श्रोतुं कथ्यमानं तपोधनाः । ३०१०
॥ ऋषय ऊचुः ॥ पुरा किल कुरुं राम कर्षन्तं सततोत्थितं । अभ्येत्य शक्रस्त्रिदिवात् पर्य्यपृच्छत कारणं ।
॥ इन्द्र उवाच ॥ किमिदं वर्त्तते राजन् प्रयत्नेन परेण च । राजर्षे किमभिप्रेतं येनेयं कृष्यते क्षितिः ।
॥ कुरुरुवाच ॥ इह ये पुरुषाः क्षेत्रे मरिष्यन्ति शतक्रतो । ते गमिष्यन्ति सुकृतान् लोकान् पापविवर्ज्जितान् ।
अवहस्य ततः शक्रो जगाम त्रिदिवं पुनः । राजर्षिरप्यनिर्व्विण्णः कर्षत्येव वसुन्धरां ।

आगम्यागम्य चैवैनं भूयो भूयोऽवहस्य च । शतक्रतुरनिर्व्विण्णः पृष्ट्वा पृष्ट्वा जगाम ह । ३०१५
यदा तु तपसोग्रेण चकर्ष वसुधां नृपः । ततः शक्रोऽब्रवीद्देवान् राजर्षेर्यच्चिकीर्षितं ।
एतच्छ्रुत्वाऽब्रुवन्देवाः सहस्राक्षमिदं वचः । वरेण च्छन्द्यतां शक्र राजर्षिर्यदि शक्यते ।
यदि ह्यत्र प्रमीता वै स्वर्गं गच्छन्ति मानवाः । अस्माननिष्ट्वा क्रतुभिर्भागो नो न भविष्यति ।
आगम्य च ततः शक्रस्तदा राजर्षिमब्रवीत् । अलं खेदेन भवतः क्रियतां वचनं मम ।
मानवा ये निराहारा देहं त्यक्ष्यन्त्यतन्द्रिताः । युधि वा निहताः सम्यगपि तिर्य्यग्गता नृप । ३०२०
ते स्वर्गभाजो राजेन्द्र भविष्यन्ति महामते । तथाऽस्त्विति ततो राजा कुरुः शक्रमुवाच ह ।
ततस्तमभ्यनुज्ञाप्य प्रहृष्टेनान्तरात्मना । जगाम त्रिदिवं भूयः क्षिप्रं बलनिषूदनः ।
एवमेतद्यदुश्रेष्ठ कृष्टं राजर्षिणा पुरा । शक्रेण चाभ्यनुज्ञातं ब्रह्माद्यैश्च सुरैस्तथा ।
नातः परतरं पुण्यं भूमेः स्थानं भविष्यति । इह तप्स्यन्ति ये केचित् तपः परमकं नराः ।
देहत्यागेन ते सर्व्वे यास्यन्ति ब्रह्मणः क्षयं । ये पुनः पुण्यभाजो वै दानं दास्यन्ति मानवाः । ३०२५
तेषां सहस्रगुणितं भविष्यत्यचिरेण वै । ये चेह नित्यं मनुजा निवत्स्यन्ति शुभैषिणः ।
यमस्य विषयं ते तु न द्रक्ष्यन्ति कदाचन । यक्ष्यन्ति ये च क्रतुभिर्महद्भिर्मनुजेश्वराः ।
तेषां त्रिविष्टपे वासो यावद्भूमिर्धरिष्यति । अपि चात्र स्वयं शक्रो जगौ गाथां सुराधिपः ।
कुरुक्षेत्रनिबद्धां वै तां शृणुष्व हलायुध । पांशवोऽपि कुरुक्षेत्राद्वायुना समुदीरिताः ।
अपि दुष्कृतकर्म्माणं नयन्ति परमां गतिं । ३०३०

सुरर्षभा ब्राह्मणसत्तमाश्च तथा नृगाद्या नरदेवमुख्याः । इष्ट्वा महार्हैः क्रतुभिर्नृसिंह संत्यज्य देहान् सुगतिं प्रपन्नाः ।
तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानाञ्च मचक्रुकस्य । एतत् कुरुक्षेत्रसमन्तपञ्चकं प्रजापतेरुत्तरवेदिरुच्यते ।
शिवं महापुण्यमिदं दिवौकसां सुसम्मतं सर्व्वगुणैः समन्वितं । अतश्च सर्व्वे निहता नृपा रणे यास्यन्ति पुण्यां गतिमक्षयां सदा ।

इत्युवाच स्वयं शक्रः सह ब्रह्मादिभिस्तथा । तच्चानुमोदितं सर्व्वं ब्रह्मविष्णुमहेश्वरैः ।

इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

॥ वैशम्पायन उवाच ॥ कुरुक्षेत्रं ततो दृष्ट्वा दत्त्वा दायांश्च सात्वतः । आश्रमं सुमहद्दिव्यमगमज्जनमेजय । ३०३५
मधूकाम्रवनोपेतं प्लक्षन्यग्रोधसङ्कुलं । चिरविल्वयुतं पुण्यं पनसार्ज्जुनसङ्कुलं ।
तं दृष्ट्वा यादवश्रेष्ठः प्रवरं पुण्यलक्षणं । पप्रच्छ तानृषीन् सर्व्वान् कस्याश्रमवरस्त्वयं ।
ते तु सर्व्वे महात्मान ऊचू राजन् हलायुधं । शृणु विस्तरतो राम यस्यायं पूर्व्वमाश्रमः ।
अत्र विष्णुः पुरा देवस्तप्तवांस्तप उत्तमं । अत्रास्य विधिवद्यज्ञाः सर्व्वे वृत्ताः सनातनाः ।
अत्रैव ब्राह्मणी सिद्धा कौमारब्रह्मचारिणी । योगयुक्ता दिवं याता तपःसिद्धा तपस्विनी । ३०४०
बभूव श्रीमती राजन् शाण्डिल्यस्य महात्मनः । सुता धृतव्रता साध्वी नियता ब्रह्मचारिणी ।
सा तु तप्त्वा तपो घोरं दुश्चरं स्त्रीजनेन ह । गता स्वर्गं महाभागा देवब्राह्मणपूजिता ।
श्रुत्वा ऋषीणां वचनमाश्रमं तं जगाम ह । ऋषींस्तानभिवाद्याथ पार्श्वे हिमवतोऽच्युत ।

सन्ध्याकार्य्याणि सर्व्वाणि निर्व्वर्त्याहरहे ऽचलं । नातिदूरं ततो गत्वा नगं तालध्वजो बली ।
पुण्यं तीर्थवरं दृष्ट्वा विस्मयम्परमङ्गतः । प्रभावञ्च सरस्वत्याः प्लक्षप्रस्रवणं बलः । ३०४५
सम्प्राप्तः कारपवनं प्रवरं तीर्थमुत्तमं । हलायुधस्तत्र चापि दत्वा दानं महाबलः ।
आप्लुतः सलिले पुण्ये सुशीते विमले शुचौ । सन्तर्पयामास पितॄन्देवांश्च रणदुर्म्मदः ।
तत्रोष्यैकान्तु रजनीं यतिभिर्ब्राह्मणैः सह । मित्रावरुणयोः पुण्यं जगामाश्रममच्युतः ।
इन्द्रोऽग्निरर्य्यमा चैव यत्र प्राक् प्रीतिमाप्नुवन् । तं देशं कारपवनाद्यमुनायां जगाम ह ।
स्नात्वा च तत्र धर्म्मात्मा परां प्रीतिमवाप च । ऋषिभिश्चैव सिद्धैश्च सहितो वै महाबलः । ३०५०
उपविष्टः कथाः शुभ्राः शुश्राव यदुपुङ्गवः । तथा तु तिष्ठतां तेषां नारदो भगवानृषिः ।
आजगामाथ तं देशं यत्र रामो व्यवस्थितः । जटामण्डलसंवीतः स्वर्णचीरो महातपाः ।
हेमदण्डधरो राजन् कमण्डलुधरस्तथा । कच्छपीं सुखशब्दान्तां गृह्य वीणां मनोरमां ।
नृत्यगीते च कुशलो देवब्राह्मणपूजितः । प्रकर्त्ता कलहानाञ्च नित्यञ्च कलहप्रियः ।
तं देशमगमद्यत्र श्रीमान् रामो व्यवस्थितः । प्रत्युत्थाय तु तं सम्यक् पूजयित्वा यतव्रतं । ३०५५
देवर्षिं पर्य्यपृच्छत् स यथावृत्तं कुरून् प्रति । ततोऽस्याकथयद्राजन्नारदः सर्व्वधर्म्मवित् ।
सर्व्वमेतद्यथावृत्तमतीव कुरुसङ्क्षयं । ततोऽब्रवीद्रौहिणेयो नारदं दीनया गिरा ।
किमवस्थन्तु तत् क्षत्रं ये तु तत्राभवन्नृपाः । श्रुतमेतन्मया पूर्व्वं सर्व्वमेव तपोधन ।
विस्तरश्रवणे जातं कौतूहलमतीव मे ।
॥ नारद उवाच ॥ पूर्व्वमेव हतो भीष्मो द्रोणः सिन्धुपतिस्तथा । हतो वैकर्त्तनः कर्णः पुत्रास्तस्य महारथाः । ३०६०
भूरिश्रवा रौहिणेय मद्रराजश्च वीर्य्यवान् । एते चान्ये च बहवस्तत्र तत्र महाबलाः ।
प्रियान् प्राणान् परित्यज्य जयार्थं कौरवस्य वै । राजानो राजपुत्राश्च समरेष्वनिवर्त्तिनः ।
अहतांस्तु महाबाहो शृणु मे तत्र माधव । धार्त्तराष्ट्रबले शेषास्त्रयः समितिमर्द्दनाः ।
कृपश्च कृतवर्म्मा च द्रोणपुत्रश्च वीर्य्यवान् । तेऽपि वै विद्रुता राम दिशो दश भयात्तदा ।
दुर्य्योधनो हते शल्ये विद्रुतेषु कृपादिषु । ह्रदं द्वैपायनं नाम विवेश भृशदुःखितः । ३०६५
शयानं धार्त्तराष्ट्रन्तु स्तम्भिते सलिले तदा । पाण्डवाः सह कृष्णेन वाग्भिरुग्राभिरार्द्दयन् ।
स तुद्यमानो बलवान् वाग्भीराम समन्ततः । उत्थितः स ह्रदाद्वीरः प्रगृह्य महतीं गदां ।
स चाप्युपगतो योद्धुं भीमेन सह साम्प्रतं । भविष्यति तयोरद्य युद्धं राम सुदारुणं ।
यदि कौतूहलं तेऽस्ति व्रज माधव मा चिरं । पश्य युद्धं महाघोरं शिष्ययोर्यदि मन्यसे ।
॥ वैशम्पायन उवाच ॥ नारदस्य वचः श्रुत्वा तानभ्यर्च्य द्विजर्षभान् । सर्व्वान् विसर्ज्जयामास ये तेनाभ्यागताः सह । ३०७०
गम्यतां द्वारका चेति सोऽन्वशादनुयायिनः । सोऽवतीर्य्याचलश्रेष्ठात् प्लक्षप्रस्रवणात् शुभात् ।
ततः प्रीतमना रामः श्रुत्वा तीर्थफलं महत् । विप्राणां सन्निधौ श्लोकमगायदिममच्युतः ।
सरस्वतीवाससमा कुतो रतिः सरस्वतीवाससमाः कुतो गुणाः । सरस्वतीं प्राप्य दिवं गता जनाः सदा स्मरिष्यन्ति नदीं सरस्वतीं ।

सरस्वती सर्व्वनदीषु पुण्या सरस्वती लोकशुभावहा सदा । सरस्वतीं प्राप्य जनाः सुदुष्कृतं सदा न शोचन्ति परत्र चेह च ।

ततो मुहुर्मुहुः प्रीत्या प्रेक्षमाणः सरस्वतीं । हयैर्युक्तं रथं शुभ्रमातिष्ठत परन्तपः । ३०७५

स शीघ्रगामिना तेन रथेन यदुपुङ्गवः । दिदृक्षुरभिसम्प्राप्तः शिष्ययुद्धमुपस्थितं ।

इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

॥ वैशम्पायन उवाच ॥ एवं तदभवद्युद्धं तुमुलं जनमेजय । यत्र दुःखान्वितो राजा धृतराष्ट्रोऽब्रवीदिदं ।

॥ धृतराष्ट्र उवाच ॥ रामं सन्निहितं दृष्ट्वा गदायुद्ध उपस्थिते । मम पुत्रः कथं भीमं प्रत्ययुध्यत सञ्जय ।

॥ सञ्जय उवाच ॥ रामसान्निध्यमासाद्य पुत्रो दुर्य्योधनस्तव । युद्धकामो महाबाहुः समहृष्यत वीर्य्यवान् ।

दृष्ट्वा लाङ्गलिनं राजा प्रत्युत्थाय च भारत । प्रीत्या परमया युक्तः समभ्यर्च्य यथाविधि । ३०८०

आसनञ्च ददौ तस्मै पर्य्यपृच्छदनामयं । ततो युधिष्ठिरं रामो वाक्यमेतदुवाच ह ।

मधुरं धर्म्मसंयुक्तं शूराणां हितमेव च । मया श्रुतं कथयतां ऋषीणां राजसत्तम ।

कुरुक्षेत्रं परं पुण्यं पावनं स्वर्ग्यमेव च । दैवतैर्ऋषिभिर्जुष्टं ब्राह्मणैश्च महात्मभिः ।

तत्र वै योत्स्यमाना ये देहं त्यक्ष्यन्ति मानवाः । तेषां स्वर्गे ध्रुवो वासः शक्रेण सह मारिष ।

तस्मात् समन्तपञ्चकमितो याम द्रुतं नृप । प्रथितोत्तरवेदी सा देवलोके प्रजापतेः । ३०८५

तस्मिन्महापुण्यतमे त्रैलोक्यस्य सनातने । संग्रामे निधनं प्राप्य ध्रुवं स्वर्गो भविष्यति ।

तथेत्युक्त्वा महाराज कुन्तीपुत्रो युधिष्ठिरः । समन्तपञ्चकं वीरः प्रायादभिमुखः प्रभुः ।

ततो दुर्य्योधनो राजा प्रगृह्य महतीं गदां । पद्भ्याममर्षाद्द्युतिमानगच्छत् पाण्डवैः सह ।

तमायान्तं गदाहस्तं वर्म्मणा चापि दंशितं । अन्तरीक्षचरा देवाः साधु साध्वित्यपूजयन् ।

वातिकाश्चारणा ये तु दृष्ट्वा ते हर्षमागताः । स पाण्डवैः परिवृतः कुरुराजस्तवात्मजः । ३०९०

मत्तस्येव गजेन्द्रस्य गतिमास्थाय सोऽव्रजत् । ततः शङ्खनिनादेन भेरीणाञ्च महास्वनैः ।

सिंहनादैश्च शूराणां दिशः सर्व्वाः अपूरिताः । ततस्ते तु कुरुक्षेत्रं प्राप्ता नरवरोत्तमाः ।

प्रतीच्यभिमुखं देशं यथोद्दिष्टं सुतेन ते । गत्वा ततः परिक्षिप्तः समन्तात्सर्व्वतो दिशं ।

दक्षिणेन सरस्वत्यास्वापरं तीर्थमुत्तमं । तस्मिन् देशे त्वरिणे ते तु युद्धमरोचयन् ।

ततो भीमो महाकोटिं गदां गृह्याथ वर्म्मभृत् । बिभ्रद्रूपं महाराज सदृशं हि गरुत्मतः । ३०९५

अवबद्धशिरस्त्राणः संख्ये काञ्चनवर्म्मभृत् । रराज राजन् पुत्रस्ते काञ्चनः शैलराडिव ।

वर्म्मभ्यां संवृतौ वीरौ भीमदुर्य्योधनावुभौ । संयुगे च प्रकाशेते संरब्धाविव कुञ्जरौ ।

रणमण्डलमध्यस्थौ भ्रातरौ तौ नरर्षभौ । अशोभेतां महाराज चन्द्रसूर्य्याविवोदितौ ।

तावन्योन्यं निरीक्षेतां क्रुद्धाविव महाद्विपौ । दहन्तौ लोचनैराजन् परस्परवधैषिणौ ।

संप्रहृष्टमना राजन् गदामादाय कौरवः । सृक्किणी संलिहन् राजन् क्रोधरक्तेक्षणः श्वसन् । ३१००

ततो दुर्य्योधनो राजा गदामादाय वीर्य्यवान् । भीमसेनमभिप्रेक्ष्य गजो गजमिवाह्वयत् ।

अद्रिसारमयीं भीमस्तथैवादाय वीर्य्यवान् । आह्वयामास नृपतिं सिंहः सिंहं यथा वने ।

तावुद्यतगदापाणी दुर्य्योधनवृकोदरौ । संयुगे च प्रकाशेतां गिरी सशिखराविव ।
तावुभौ समतिक्रुद्धावुभौ भीमपराक्रमौ । उभौ शिष्यौ गदायुद्धे रौहिणेयस्य धीमतः ।
उभौ सदृशकर्म्माणौ यमवासवयोरिव । तथा सदृशकर्म्माणौ वरुणस्य महाबलौ । ३१०५
वासुदेवस्य रामस्य तथा वैश्रवणस्य च । सदृशौ तौ महाराज मधुकैटभयोर्युधि ।
उभौ सदृशकर्म्माणौ तथा सुन्दोपसुन्दयोः । रामरावणयोश्चैव वालिसुग्रीवयोस्तथा ।
तथैव कालस्य समौ मृत्योश्चैव परन्तपौ । अन्योन्यमभिधावन्तौ मत्ताविव महाद्विपौ ।
वासितासङ्गमे दृप्तौ शरदीव मदोत्कटौ । मत्ताविव जिगीषन्तौ चरणे भरतर्षभौ ।
उभौ क्रोधविषं दीप्तं वमन्ताबुरगाविव । अन्योन्यमभिसंरब्धौ प्रेक्षमाणावरिन्दमौ । ३११०
उभौ भरतशार्दूलौ विक्रमेण समन्वितौ । सिंहाविव दुराधर्षौ गदायुद्धविशारदौ ।
नखदंष्ट्रायुधौ वीरौ व्याघ्राविव दुरुत्सहौ । प्रजासंहरणे क्षुब्धौ समुद्राविव दुस्तरौ ।
लोहिताङ्गाविव क्रुद्धौ प्रतपन्तौ महारथौ । पूर्व्वपश्चिमजौ मेघौ वायुना क्षुभितौ यथा ।
गर्ज्जमानौ सुविषमं चरन्तौ प्रावृषीव हि । रश्मियुक्तौ महात्मानौ दीप्तिमन्तौ महाबलौ ।
ददृशाते कुरुश्रेष्ठौ कालसूर्य्याविवोदितौ । व्याघ्राविव सुसंरब्धौ गर्ज्जन्ताविव तोयदौ । ३११५
जहृषाते महाबाहू सिंहौ केशरिणाविव । गजाविव सुसंरब्धौ ज्वलिताविव पावकौ ।
ददृशाते महात्मानौ सशृङ्गाविव पर्व्वतौ । रोषात् प्रस्फुरमाणोष्ठौ निरीक्षन्तौ परस्परं ।
तौ समेतौ महात्मानौ गदाहस्तौ नरोत्तमौ । उभौ परमसंहृष्टौ उभौ परमसम्मतौ ।
सदश्वाविव हेषन्तौ बृंहन्ताविव कुञ्जरौ । वृषभाविव गर्ज्जन्तौ दुर्य्योधनवृकोदरौ ।
दैत्याविव बलोन्मत्तौ रेजतुस्तौ नरोत्तमौ । ततो दुर्य्योधनो राजन्निदमाह युधिष्ठिरं । ३१२०
भ्रातृभिः सहितञ्चैव कृष्णेन च महात्मना । रामेणामितवीर्य्येण वाक्यं शौटीर्य्यसम्मतं ।
केकयैः सृञ्जयैर्दृप्तं पाञ्चालैश्च महात्मभिः । इदं व्यवसितं युद्धं मम भीमस्य चोभयोः ।
उपोपविष्टाः पश्यध्वं सहितैर्नृपपुङ्गवैः । श्रुत्वा दुर्य्योधनवचः प्रत्यपद्यन्त तत्तथा ।
ततः समुपविष्टन्तत् सुमहद्राजमण्डलं । विराजमानं ददृशे दिवीवादित्यमण्डलं ।
तेषां मध्ये महाबाहुः श्रीमान् केशवपूर्व्वजः । उपविष्टो महाराज पूज्यमानः समन्ततः । ३१२५
शुशुभे राजमध्यस्थो नीलवासाः सितप्रभः । नक्षत्रैरिव सम्पूर्णो वृतो निशि निशाकरः ।
तौ तथा तु महाराज गदाहस्तौ सुदुःसहौ । अन्योन्यं वाग्भिरुग्राभिस्तक्षमाणौ व्यवस्थितौ ।
अप्रियाणि ततोऽन्योन्यमुक्त्वा तौ कुरुसत्तमौ । उदीक्षन्तौ स्थितौ तत्र वृत्रशक्रौ यथाहवे ।
इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि गदायुद्धे षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
॥ वैशम्पायन उवाच ॥ ततो वाग्युद्धमभवत्तुमुलं जनमेजय । यत्र दुःखान्वितो राजा धृतराष्ट्रोऽब्रवीदिदं ।
धिगस्तु खलु मानुष्यं यस्य निष्ठेयमीदृशी । एकादशचमूभर्त्ता यत्र पुत्रो ममानघ । ३१३०
आज्ञाप्य सर्व्वान्नृपतीन् भुक्त्वा चेमां वसुन्धरां । गदामादाय वेगेन पदातिः प्रस्थितो रणे ।

भूत्वा हि जगतो नाथो ह्यनाथ इव मे सुतः । गदामुद्यम्य यो याति किमन्यद्भागधेयतः ।
अहो दुःखं महत् प्राप्तं पुत्रेण मम सञ्जय । एवमुक्त्वा सुदुःखार्त्तो विरराम जनाधिपः ।
॥ सञ्जय उवाच ॥ स मेघनिनदो हर्षाद्विनदन्निव गोवृषः । आजुहाव तदा पार्थं युद्धाय युधि वीर्य्यवान् ।
भीमम्माह्वयमाने तु कुरुराजे महात्मनि । प्रादुरासन् सुघोराणि रूपाणि विविधान्युत । ३१३५
ववुर्व्वाताः सनिर्घाताः पांशुवर्षं पपात च । बभूवुश्च दिशः सर्व्वास्तिमिरेण समावृताः ।
महास्वनाः सुनिर्घातास्तुमुला लोमहर्षणाः । पेतुस्तथोल्काः शतशः स्फोटयन्त्यो नभस्तलात् ।
राहुश्चाग्रसदादित्यमपर्व्वणि विशाम्पते । चकम्पे च महाकम्पं पृथिवी सवनद्रुमा ।
रूक्षाश्च वाताः प्रववुर्नीचैः शर्करकर्षिणः । गिरीणां शिखराण्येव न्यपतन्त महीतले ।
मृगा बहुविधाकाराः सम्पतन्ति दिशो दश । दीप्ताः शिवाश्चाप्यनदन् घोररूपाः सुदारुणाः । ३१४०
निर्घाताश्च महाघोरा बभूवुर्लोमहर्षणाः । दीप्तायां दिशि राजेन्द्र मृगाश्चाशुभवेदिनः ।
उदपानगताश्चापो व्यवर्द्धन्त समन्ततः । अशरीरा महानादाः श्रूयन्ते स्म तदा नृप ।
एवमादीनि दृष्ट्वाऽथ निमित्तानि वृकोदरः । उवाच भ्रातरं ज्येष्ठं धर्म्मराजं युधिष्ठिरं ।
नैष शक्तो रणे जेतुं मन्दात्मा मां सुयोधनः । अद्य क्रोधं विमोक्ष्यामि निगूढं हृदये चिरं ।
सुयोधने कौरवेन्द्रे खाण्डवे पावको यथा । शल्यमद्योद्धरिष्यामि तव पाण्डव हृच्छयं । ३१४५
निहत्य गदया पापमिमं कुरुकुलाधमं । अद्य कीर्त्तिमयीं मालां प्रतिमोक्ष्याम्यहं त्वयि ।
हत्वेमं पापकर्म्माणं गदया रणमूर्द्धनि । अद्यास्य शतधा देहं भिनद्मि गदयाऽनया ।
नायं प्रवेष्टा नगरं पुनर्व्वारणसाह्वयं । सर्पोत्सर्गस्य शयने विषदानस्य भोजने ।
प्रमाणकोट्यां पातस्य दाहस्य जतुवेश्मनि । सभायामवहासस्य सर्व्वस्वहरणस्य च ।
वर्षमज्ञातवासस्य वनवासस्य चानघ । अद्यान्तमेषां दुःखानां गन्ताऽहं भरतर्षभ । ३१५०
एकाह्ना विनिहत्येमं भविष्याम्यात्मनोऽनृणः । अद्यायुर्धार्त्तराष्ट्रस्य दुर्म्मतेरकृतात्मनः ।
समाप्तं भरतश्रेष्ठ मातापित्रोश्च दर्शनं । अद्य सौख्यन्तु राजेन्द्र कुरुराजस्य दुर्म्मतेः ।
समाप्तञ्च महाराज नारीणां दर्शनं पुनः । अद्यायं कुरुराजस्य शान्तनोः कुलपांशनः ।
प्राणान् श्रियञ्च राज्यञ्च त्यक्त्वा शेष्यति भूतले । राजा च धृतराष्ट्रोऽद्य श्रुत्वा पुत्रं निपातितं ।
स्मरिष्यत्यशुभं कर्म्म यत्तच्छकुनिबुद्धिजं । इत्युक्त्वा राजशार्दूल गदामादाय वीर्य्यवान् । ३१५५
अभितिष्ठत युद्धाय शक्रो वृत्रमिवाह्वयन् । तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणं ।
भीमसेनः पुनः क्रुद्धो दुर्य्योधनमुवाच ह । राज्ञश्च धृतराष्ट्रस्य तथा त्वमपि चात्मनः ।
स्मर तद्दुष्कृतं कर्म्म यद्वृत्तं वारणावते । द्रौपदी च परिक्लिष्टा सभामध्ये रजस्वला ।
द्यूते च वञ्चितो राजा यत्त्वया सौबलेन च । वने दुःखञ्च यत्प्राप्तमस्माभिस्त्वत्कृतं महत् ।
विराटनगरे चैव योन्यन्तरगतैरिव । तत्सर्व्वं पातयाम्यद्य दिष्ट्या दृष्टोऽसि दुर्म्मते । ३१६०
त्वत्कृतेऽसौ हतः शेते शरतल्पे प्रतापवान् । गाङ्गेयो रथिनां श्रेष्ठो निहतो याज्ञसेनिना ।

तयोः समभवद्युद्धं घोररूपमसंवृतं । गदानिपातैराजेन्द्र तक्षतोर्व्वै परस्परं ।
समरे प्रद्रुतौ तौ तु वृषभाक्षौ तरस्विनौ । अन्योन्यं जघ्नतुर्व्वीरौ पङ्कस्थौ महिषाविव ।
जर्ज्जरीकृतसर्व्वाङ्गौ रुधिरेणाभिसंप्लुतौ । ददृशाते हिमवति पुष्पिताविव किंशुकौ ।
दुर्य्योधनस्तु पार्थेन विवरे संप्रदर्शिते । ईषदुत्स्मयमानस्तु सहसा प्रससार ह । ३२८०
तमभ्यासगतं प्राज्ञो रणे प्रेक्ष्य वृकोदरः । अवाक्षिपद्गदां तस्मिन् वेगेन महता बली ।
अवाक्षिपन्तन्तु तं दृष्ट्वा पुत्त्रस्तव विशाम्पते । अवासर्पत्ततः स्थानात् सा मोघा न्यपतद्भुवि ।
मोक्षयित्वा प्रहारं तं सुतस्तव सुसम्भ्रमात् । भीमसेनञ्च गदया प्राहरत् कुरुसत्तम ।
तस्य निस्यन्दमानेन रुधिरेणामितौजसः । प्रहारगुरुपाताच्च मूर्च्छेव समजायत ।
दुर्य्योधनो न तं वेद पीडितं पाण्डवं रणे । धारयामास भीमोऽपि शरीरमपि पीडितं । ३२८५
अमन्यत स्थितं चैनं प्रहरिष्यन्तमाहवे । अतो न प्राहरत्तस्मै पुनरेव तवात्मजः ।
ततो मुहूर्त्तमाश्वस्य दुर्य्योधनमुपस्थितं । वेगेनाभ्यपतद्राजन् भीमसेनः प्रतापवान् ।
तमापतन्तं संप्रेक्ष्य संरब्धममितौजसं । मोघमस्य प्रहारं तं चिकीर्षुर्भरतर्षभ ।
अवस्थाने मतिं कृत्वा पुत्त्रस्तव महामनाः । इयेषोत्पतितुं राजंश्छलयिष्यन् वृकोदरं ।
अबुध्यद्भीमसेनस्तद्राज्ञस्तस्य चिकीर्षितं । अथास्य समभिद्रुत्य समुत्क्रुश्य च सिंहवत् । ३२९०
मृत्युं वञ्चयतो राजन् पुनरेवोत्पतिष्यतः । ऊरुभ्यां प्राहिणोद्राजन् गदां वेगेन पाण्डवः ।
सा वज्रनिष्पेषसमा प्रहिता भीमकर्म्मणा । ऊरू दुर्य्योधनस्याथ बभञ्ज प्रियदर्शनौ ।
स पपात नरव्याघ्रो वसुधामनुनादयन् । भग्नोरुर्भीमसेनेन पुत्त्रस्तव महीपते ।
ववुर्व्वाताः सनिर्घाताः पांशुवर्षं पपात च । चचाल पृथिवी चापि सवृक्षवनपर्व्वता ।
तस्मिन्निपतिते वीरे पत्यौ सर्व्वमहीक्षितां । महास्वना पुनर्दीप्ता सनिर्घाता भयङ्करी । ३२९५
पपात चोल्का महती पतिते पृथिवीपतौ । तथा शोणितवर्षञ्च पांशुवर्षञ्च भारत ।
ववर्ष मघवांस्तत्र तव पुत्त्रे निपातिते । यक्षाणां राक्षसानाञ्च पिशाचानां तथैव च ।
अन्तरीक्षे महानादः श्रूयते भरतर्षभ । तेन शब्देन घोरेण मृगाणामथ पक्षिणां ।
जज्ञे घोरतरः शब्दो बहूनां सर्व्वतो दिशं । ये तत्र वाजिनः शेषा गजाश्च मनुजैः सह ।
मुमुचुस्ते महानादं तव पुत्त्रे निपातिते । भेरीशङ्खमृदङ्गानामभवच्च स्वनो महान् । ३३००
अन्तर्भूमिगतैश्चैव तव पुत्त्रे निपातिते । बहुपादैर्बहुभुजैः कबन्धैर्घोरदर्शनैः ।
नृत्यद्भिर्भयदैर्व्याप्ता दिशस्तत्राभवन्नृप । ध्वजवन्तोऽस्त्रवन्तश्च शस्त्रवन्तस्तथैव च ।
प्राकम्पन्त ततो राजंस्तव पुत्त्रे निपातिते । ह्रदाः कूपाश्च रुधिरमुद्वेमुर्नृपसत्तम ।
नद्यश्च सुमहावेगाः प्रतिस्रोतोवहाऽभवन् । पुंलिङ्गा इव नार्य्यस्तु स्त्रीलिङ्गाः पुरुषाऽभवन् ।
दुर्य्योधने तदा राजन् पतिते तनये तव । दृष्ट्वा तानद्भुतोत्पातान् पाञ्चालाः पाण्डवैः सह । ३३०५
आविग्नमनसः सर्व्वे बभूवुर्भरतर्षभ । ययुर्द्देवा यथाकामं गन्धर्व्वाऽप्सरसस्तथा ।

कथयन्तोऽद्भुतं युद्धं सुतयोस्तव भारत । तथैव सिद्धा राजेन्द्र तथा वातिकचारणाः ।
नरसिंहौ प्रशंसन्तो विप्रजग्मुर्यथागतं ।
इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धे दुर्य्योधनवधे ऊनषष्टोऽध्यायः ॥ ५९ ॥

॥ सञ्जय उवाच ॥ तं पातितं ततो दृष्ट्वा महाशालमिवोद्गतं । प्रहृष्टमनसः सर्व्वे ददृशुस्तत्र पाण्डवाः ।
उन्मत्तमिव मातङ्गं सिंहेन विनिपातितं । ददृशुर्हृष्टरोमाणः सर्व्वे ते चापि सोमकाः । ३३१०
ततो दुर्य्योधनं हत्वा भीमसेनः प्रतापवान् । पातितं कौरवेन्द्रं तमुपागम्येदमब्रवीत् ।
गौर्गौरिति पुरा मन्द द्रौपदीमेकवाससं । यत्सभायां हसन्नस्मांस्तदा वदसि दुर्म्मते ।
तस्यावहासस्य फलमद्य त्वं समवाप्नुहि । एवमुक्त्वा स वामेन पदा मौलिमुपास्पृशत् ।
शिरश्च राजसिंहस्य पादेन समलोडयत् । तथैव क्रोधसंरक्तो भीमः परबलार्द्दनः ।
पुनरेवाब्रवीद्वाक्यं यत्तच्छृणु नराधिप । येऽस्मान् पुरोपनृत्यन्त मूढा गौरिति गौरिति । ३३१५
तान् वयं प्रतिनृत्यामः पुनर्गौरिति गौरिति । नास्माकं निकृतिर्वह्निर्नाक्षद्यूतं न वञ्चना ।
स्वबाहुबलमाश्रित्य प्रबाधामो वयं रिपून् ।
सोऽवाप्य वैरस्य परस्य पारं वृकोदरः प्राह शनैः प्रहस्य । युधिष्ठिरं केशवसृञ्जयांश्च धनञ्जयं माद्रवतीसुतौ च ।
रजस्वलां द्रौपदीमानयन् ये ये चाप्यकुर्व्वन्त सदस्यवस्त्रां । तान् पश्यध्वं पाण्डवैर्धार्त्तराष्ट्रान् रणे हतांस्तपसा याज्ञसेन्याः ।
ये नः पुरा षण्ढतिलानवोचन् क्रूरा राज्ञो धृतराष्ट्रस्य पुत्राः । ते नो हताः सगणाः सानुबन्धाः कामं स्वर्गं नरकं वा पतामः ।
पुनश्च राज्ञः पतितस्य भूमौ स तां गदां स्कन्धगतां प्रमृह्य । वामेन पादेन शिरः प्रमृद्य दुर्य्योधनं नैकृतिकं न्यवोचत् । ३३२०
हृष्टेन राजन् कुरुसत्तमस्य क्षुद्रात्मना भीमसेनेन पादं । दृष्ट्वा कृतं मूर्द्धनि नाभ्यनन्दन् धर्म्मात्मानः सोमकानां प्रबर्हाः ।
तव पुत्रं तथा हत्वा कत्थमानं वृकोदरं । नृत्यमानञ्च बहुशो धर्म्मराजोऽब्रवीदिदं ।
गतोऽसि वैरस्यानृण्यं प्रतिज्ञा पूरिता त्वया । शुभेनैवाशुभेनाथ कर्म्मणा विरमाधुना ।
मा शिरोऽस्य पदा मर्द्दीर्मा धर्म्मस्तेऽतिगो भवेत् । राजा ज्ञातिर्हतश्चायं नैतन्न्याय्यं तवानघ । ३३२५
एकादशचमूनाथं कुरूणामधिपं तथा । मा स्प्राक्षीर्भीम पादेन राजानं ज्ञातिमेव च ।
हतबन्धुर्हतामात्यो भ्रष्टसैन्यो हतो मृधे । सर्व्वाकारेण शोच्योऽयं नावहास्योऽयमीश्वरः ।
विध्वस्तोऽयं हतामात्यो हतभ्राता हतप्रजः । उत्सन्नपिण्डो भ्राता च नैतन्न्याय्यं कृतं त्वया ।
धार्म्मिको भीमसेनोऽसावित्याहुस्त्वां पुरा जनाः । स कस्माद्भीमसेन त्वं राजानमधितिष्ठसि ।
इत्युक्त्वा भीमसेनन्तु साश्रुकण्ठो युधिष्ठिरः । उपसृत्याब्रवीद्दीनो दुर्य्योधनमरिन्दमं । ३३३०
तात मन्युर्न ते कार्य्यो नात्मा शोच्यस्त्वया तथा । नूनं पूर्व्वकृतं कर्म्म सुघोरमनुभूयते ।
धात्रोपदिष्टं विषमं नूनं फलमसंस्कृतं । यद्वयं त्वां जिघांसामस्त्वञ्चास्मान् कुरुसत्तम ।
आत्मनो ह्यपराधेन महद्व्यसनमीदृशं । प्राप्तवानसि यल्लोभान्मदाद्बाल्याच्च भारत ।
घातयित्वा वयस्यांश्च भ्रातॄनथ पितॄंस्तथा । पुत्रान् पौत्रांस्तथा चान्यांस्ततोऽसि निधनं गतः ।
तवापराधादस्माभिर्भ्रातरस्ते निपातिताः । निहता ज्ञातयश्चापि दिष्टं मन्ये दुरत्ययं । ३३३५

नात्मा ऽनुशोचनीयस्ते श्लाघ्यो मृत्युस्तवानघ । वयमेवाधुना शोच्याः सर्व्वावस्थासु कौरव ।
कृपणं वर्त्तयिष्यामस्तैर्हीना बन्धुभिः प्रियैः । भ्रातृणाञ्चैव विप्राणां तथा वै शोकविह्वलाः ।
कथं द्रक्ष्यामि विधवा वधूः शोकपरिप्लुताः । त्वमेकः सुस्थितो राजन् स्वर्गे ते निलयो ध्रुवः ।
वयं नरकसंज्ञां वै दुःखं भोक्ष्याम दारुणं । स्नुषाश्च प्रस्नुषाश्चैव धृतराष्ट्रस्य विह्वलाः ।
गर्हयिष्यन्ति नो नूनं विधवाः शोककर्षिताः ।　　　　३३५०

॥ सञ्जय उवाच ॥ एवमुक्त्वा स दुःखार्त्तो निःश्वसन् स पार्थिवः । विललाप चिरञ्चापि धर्म्मपुत्त्रो युधिष्ठिरः ।
इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि युधिष्ठिरविलापे षष्टितमोऽध्यायः ॥ ६० ॥

॥ धृतराष्ट्र उवाच ॥ अधर्म्मेण हतं दृष्ट्वा राजानं माधवोत्तमः । किमब्रवीत्तदा सूत बलदेवो महाबलः ।
गदायुद्धविशेषज्ञो गदायुद्धविशारदः । कृतवांस्तौहिणेयो यत्तन्ममाचक्ष्व सञ्जय ।
॥ सञ्जय उवाच ॥ शिरस्यभिहतं दृष्ट्वा भीमसेनेन ते सुतं । रामः प्रहरतां श्रेष्ठश्चुक्रोध बलवद्बली ।
ततो मध्ये नरेन्द्राणामूर्द्ध्वबाहुर्हलायुधः । कुर्व्वन्नार्त्तस्वरं घोरं धिग्धिग्भीमेत्युवाच ह ।　　　　३३५५
अहो धिग्यदधो नाभेः प्रहृतं धर्म्मविग्रहे । नैतद्दृष्टं गदायुद्धे कृतवान् यद्वृकोदरः ।
अधोनाभ्या न हन्तव्यमिति शास्त्रस्य निश्चयः । अयन्त्वशास्त्रविन्मूढः स्वच्छन्दात् सम्प्रवर्त्तते ।
तस्य तत्तद्ब्रुवाणस्य रोषः समभवन्महान् । ततो लाङ्गलमुद्यम्य भीममभ्यद्रवद्बली ।
तस्योर्द्ध्वबाहोः सदृशं रूपमासीन्महात्मनः । बहुधातुविचित्रस्य श्वेतस्येव महागिरेः ।
तमुत्पतन्तं जग्राह केशवो विनयान्वितः । बाहुभ्यां पीनवृत्ताभ्यां प्रयत्नाद्बलवद्बली ।　　　　३३६०
सितासितौ यदुवरौ शुशुभातेऽधिकं तदा । नभोगतौ यथा राजंश्चन्द्रसूर्य्यौ दिनक्षये ।
उवाच चैनं संरब्धं शमयन्निव केशवः । आत्मवृद्धिर्मित्रवृद्धिर्मित्रमित्रोदयस्तथा ।
विपरीतं द्विषत्स्वेतत् षड्विधा वृद्धिरात्मनः । आत्मन्यपि च मित्रेषु विपरीतं यदा भवेत् ।
तदा विद्यान्मनोग्लानिमाशु शान्तिकरो भवेत् । अस्माकं सहजं मित्रं पाण्डवा शुद्धपौरुषाः ।
स्वकाः पितृष्वसुः पुत्त्रास्ते परैर्निकृता भृशं । प्रतिज्ञापालनं धर्म्मः क्षत्त्रियस्येह विद्यते ।　　　　३३६५
सुयोधनस्य गदया भङ्क्ताऽस्म्यूरू महाहवे । इति पूर्व्वं प्रतिज्ञातं भीमेन हि सभातले ।
मैत्रेयेणाभिशप्तश्च पूर्व्वमेव महर्षिणा । ऊरू भेत्स्यति ते भीमो गदयेति परन्तप ।
अतो दोषं न पश्यामि मा क्रुधस्त्वं प्रलम्बहन् । यौनैः सौहृदैश्च सम्बन्धः सह पाण्डवैः ।
तेषां वृद्ध्या हि वृद्धिर्नो मा क्रुधः पुरुषर्षभ । वासुदेववचः श्रुत्वा सीरभृत् प्राह धर्म्मवित् ।
धर्म्मः सुचरितः सद्भिः स च द्वाभ्यां नियच्छति । अर्थश्चात्यर्थलुब्धस्य कामश्चातिप्रसङ्गिनः ।　　　　३३७०
धर्म्मार्थौ धर्म्मकामौ च कामार्थौ चाप्यपीडयन् । धर्म्मार्थकामान् योऽभ्येति सोऽत्यन्तं सुखमश्नुते ।
तदिदं व्याकुलं सर्व्वं कृतं धर्म्मस्य पीडनात् । भीमसेनेन गोविन्द कामं त्वन्तु यथात्थ मां ।
॥ श्रीकृष्ण उवाच ॥ अरोषणो हि धर्म्मात्मा सततं धर्म्मवत्सलः । भवान् प्रख्यायते लोके तस्मात् संशाम्य मा क्रुधः ।
प्राप्तं कलियुगं विद्धि प्रतिज्ञां पाण्डवस्य च । आनृण्यं यातु वैरस्य प्रतिज्ञायाश्च पाण्डवः ।

॥ सञ्जय उवाच ॥ धर्म्मच्छलमपि श्रुत्वा केशवात् स विशाम्पते । नैव प्रीतमना रामो वचनं प्राह संसदि । ३३६५

हत्वाऽधर्म्मेण राजानं धर्म्मात्मानं सुयोधनं । जिह्मयोधीति लोकेऽस्मिन् ख्यातिं यास्यति पाण्डवः ।

दुर्य्योधनोऽपि धर्म्मात्मा गतिं यास्यति शाश्वतीं । ऋजुयोधी हतो राजा धार्त्तराष्ट्रो नराधिपः ।

युद्धदीक्षां प्रविश्याजौ रणयज्ञं वितत्य च । हुत्वात्मानममित्राग्नौ प्राप चावभृथं यशः ।

इत्युक्त्वा रथमास्थाय रौहिणेयः प्रतापवान् । श्वेताभ्रशिखराकारः प्रययौ द्वारकां प्रति ।

पाञ्चालास्तु सवार्ष्णेयाः पाण्डवास्तु विशाम्पते । रामे द्वारवतीं याते नातिप्रमनसोऽभवन् । ३३७०

ततो युधिष्ठिरं दीनं चिन्तापरमधोमुखं । शोकोपहतसंकल्पं वासुदेवोऽब्रवीदिदं ।

॥ वासुदेव उवाच ॥ धर्म्मराज किमर्थं त्वमधर्म्ममनुमन्यसे । हतबन्धोर्यदेतस्य पतितस्य विचेतसः ।

दुर्य्योधनस्य भीमेन मृद्यमानं शिरः पदा । उपप्रेक्षसि कस्मात्त्वं धर्म्मज्ञः सन्नराधिप ।

॥ युधिष्ठिर उवाच ॥ न ममैतत् प्रियं कृष्ण यद्राजानं वृकोदरः । पदा मूर्द्ध्न्यस्पृशत् क्रोधात् न च हृष्ये कुलक्षये ।

निकृत्या निकृता नित्यं धृतराष्ट्रसुतैर्व्वयं । बहूनि परुषाण्युक्त्वा वनं प्रस्थापिताः स्म ह । ३३७५

भीमसेनस्य तद्दुःखमतीव हृदि वर्त्तते । इति सञ्चिन्त्य वार्ष्णेय मयैतत् समुपेक्षितं ।

तस्माद्धत्वा कृतप्रज्ञं लुब्धं कामवशानुगं । लभतां पाण्डवः कामं धर्म्मोऽधर्म्मो च वा कृते ।

॥ सञ्जय उवाच ॥ इत्युक्ते धर्म्मराजेन वासुदेवोऽब्रवीदिदं । काममस्त्वेतदिति वै कृच्छ्राद्यदुकुलोद्वहः ।

इत्युक्तो वासुदेवेन भीमप्रियहितैषिणा । अन्वमोदत तत् सर्व्वं यद्भीमेन कृतं युधि ।

भीमसेनोऽपि हत्वाजौ तव पुत्त्रममर्षणः । अभिवाद्याग्रतः स्थित्वा संप्रहृष्टः कृताञ्जलिः । ३३८०

प्रोवाच सुमहातेजा धर्म्मराजं युधिष्ठिरं । हर्षादुत्फुल्लनयनो जितकाशी विशाम्पते ।

तवाद्य पृथिवी राजन् क्षेमा निहतकण्टका । तां प्रशाधि महाराज स्वधर्म्ममनुपालय ।

यस्तु कर्त्ताऽस्य वैरस्य निकृत्या निकृतिप्रियः । सोऽयं विनिहतः शेते पृथिव्यां पृथिवीपते ।

दुःशासनप्रभृतयः सर्व्वे ते चोग्रवादिनः । राधेयः शकुनिश्चापि निहतास्तव शत्रवः ।

सेयं रत्नसमाकीर्णा मही सवनपर्व्वता । उपावृत्ता महाराज त्वामद्य निहतद्विषं । ३३८५

॥ युधिष्ठिर उवाच ॥ गतो वैरस्य निधनं हतो राजा सुयोधनः । कृष्णस्य मतमास्थाय विजितेयं वसुन्धरा ।

दिष्ट्या गतस्त्वमानृण्यं मातुः कोपस्य चोभयोः । दिष्ट्या जयसि दुर्द्धर्ष दिष्ट्या शत्रुर्निपातितः ।

इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवसान्त्वनायामेकषष्टोऽध्यायः ॥ ६१ ॥

॥ धृतराष्ट्र उवाच ॥ हतं दुर्य्योधनं दृष्ट्वा भीमसेनेन संयुगे । पाण्डवाः सृञ्जयाश्चैव किमकुर्व्वत सञ्जय ।

॥ सञ्जय उवाच ॥ हतं दुर्य्योधनं दृष्ट्वा भीमसेनेन संयुगे । सिंहेनेव महाराज मत्तं वनगजं यथा ।

प्रहृष्टमनसस्तत्र कृष्णेन सह पाण्डवाः । पाञ्चालाः सृञ्जयाश्चैव निहते कुरुनन्दने । ३३९०

आविध्यन्नुत्तरीयाणि सिंहनादांश्च नेदिरे । नैतान् हर्षसमाविष्टानियं सेहे वसुन्धरा ।

धनूंष्यन्ये व्याक्षिपन्त ज्याश्चाप्यन्ये तथाक्षिपन् । दध्मुरन्ये महाशङ्खानन्ये जघ्नुश्च दुन्दुभीः ।

चिक्रीडुश्च तथैवान्ये जहसुश्च तवाहिताः । अब्रुवंश्चासकृद्वीरा भीमसेनमिदं वचः ।

दुष्करं भवता कर्म्म रणेऽद्य सुमहत् कृतं। कौरवेन्द्रं रणे हत्वा गदयाऽतिपराक्रमं।
इन्द्रेणेव हि वृत्रस्य वधः परमसंयुगे। त्वया कृतममन्यन्त शत्रोर्व्वधमिमं जनाः। ३३९५
चरन्तं विविधान्मार्गान् मण्डलानि च सर्व्वशः। दुर्य्योधनमिमं शूरं कोऽन्यो हन्यात् वृकोदरात्।
वैरस्य च गतः पारं त्वमिहान्यैः सुदुर्गमं। अशक्यमेतदन्येन सम्पादयितुमीदृशं।
कुञ्जरेणेव मत्तेन वीर संग्राममूर्द्धनि। दुर्य्योधनशिरो दिष्ट्या पादेन मृदितं त्वया।
सिंहेन महिषस्येव कृत्वा सङ्गरमद्भुतं। दुःशासनस्य रुधिरं दिष्ट्या पीतं त्वयाऽनघ।
ये विप्रचक्रू राजानं धर्म्मात्मानं युधिष्ठिरं। मूर्द्ध्नि तेषां कृतः पादो दिष्ट्या ते स्वेन कर्म्मणा। ३४००
अमित्राणामधिष्ठानाद्वधाद्दुर्य्योधनस्य च। भीम दिष्ट्या पृथिव्यान्ते प्रथितं सुमहद्यशः।
एवं नूनं हते वृत्रे शक्रं नन्दन्ति वन्दिनः। तथा त्वां निहतामित्रं वयं नन्दाम भारत।
दुर्य्योधनवधे यानि रोमाणि हृषितानि नः। अद्यापि न विहृष्यन्ते तानि तद्विद्धि भारत।
इत्यब्रुवन् भीमसेनं वातिकास्तत्र सङ्गताः। तान् दृष्ट्वा पुरुषव्याघ्रान् पाञ्चालान् पाण्डवैः सह।
ब्रुवतोऽसदृशञ्चैव प्रोवाच मधुसूदनः। न न्यायं निहतं शत्रुं भूयो हन्तुं नराधिपाः। ३४०५
असकृद्वाग्भिरुग्राभिर्निहतो ह्येष मन्दधीः। तदैवैष हतः पापो यदैव निरपत्रपः।
लुब्धः पापसहायश्च सुहृदां शासनातिगः। बहुशो विदुरद्रोणकृपगाङ्गेयसृञ्जयैः।
पाण्डुभ्यः प्रार्थ्यमानोऽपि पित्र्यमंशं न दत्तवान्। नैष योग्योऽद्य मित्रं वा शत्रुर्व्वा पुरुषाधमः।
किमनेनातिभुग्नेन वाग्भिः काष्ठसधर्म्मणा। रथेष्वारोहत क्षिप्रं गच्छामो वसुधाधिपाः।
दिष्ट्या हतोऽयं पापात्मा सामात्यज्ञातिबान्धवः। इति श्रुत्वा त्वधिक्षेपं कृष्णाद्दुर्य्योधनो नृपः। ३४१०
अमर्षवशमापन्न उदतिष्ठद्विशाम्पते। स्फिग्देशेनोपविष्टः स दोर्भ्यां विष्टभ्य मेदिनीं।
दृष्टिं भ्रूसङ्कटां कृत्वा वासुदेवे न्यपातयत्। अर्द्धोन्नतशरीरस्य रूपमासीन्नृपस्य तु।
क्रुद्धस्याशीविषस्येव छिन्नपुच्छस्य भारत। प्राणान्तकरणीं घोरां वेदनामप्यचिन्तयन्।
दुर्य्योधनो वासुदेवं वाग्भिरुग्राभिरार्द्दयत्। कंसदासस्य दायाद न ते लज्जेत्यनेन वै।
अधर्म्मेण गदायुद्धे यदहं विनिपातितः। ऊरू भिन्धीति भीमस्य स्मृतिं मिथ्या प्रयच्छता। ३४१५
किं न विज्ञातमेतन्मे यदर्ज्जुनमवोचथाः। घातयित्वा महीपालानृजुयुद्धान् सहस्रशः।
जिह्मैरुपायैर्व्विविधैर्न ते लज्जा न ते घृणा। अहन्यहनि शूराणां कुर्व्वाणः कदनं महत्।
शिखण्डिनं पुरस्कृत्य पातितस्ते पितामहः। अश्वत्थाम्नः सनामानं हत्वा नागं सुदुर्म्मते।
आचार्य्यो न्यासितः शस्त्रं किन्तन्न विदितं मया। स चानेन नृशंसेन धृष्टद्युम्नेन वीर्य्यवान्।
पात्यमानस्त्वया दृष्टो न चैनं त्वमवारयः। वधार्थं पाण्डुपुत्रस्य याचितां शक्तिमेव च। ३४२०
घटोत्कचे व्यंसयतः कस्त्वत्तः पापकृत्तमः। छिन्नबाहुः प्रायगतस्तथा भूरिश्रवा बली।
त्वया निसृष्टेन हतः शैनेयेन महात्मना। कुर्व्वाणश्चोत्तमं कर्म्म कर्णः पार्थजिगीषया।
व्यंसनेनाश्वसेनस्य पन्नगेन्द्रसुतस्य वै। पुनश्च पतिते चक्रे व्यसनार्त्तः पराजितः।

पातितः समरे कर्णश्चक्रव्यग्रोऽग्रणीर्नृणां । यदि मां चापि कर्णञ्च भीष्मद्रोणौ च संयतौ ।
ऋजुना प्रतियुध्येथा न ते स्याद्विजयो ध्रुवं । त्वया पुनरनार्य्येण जिह्ममार्गेण पार्थिवाः । ३५२५
स्वधर्म्ममनुतिष्ठन्तो वयञ्चान्ये च घातिताः ।
॥ वासुदेव उवाच ॥ हतस्त्वमसि गान्धारे सभ्रातृसुतबान्धवः । सगणः ससुहृच्चैव पापमार्गमनुष्ठितः ।
तवैव दुष्कृतैर्व्वीरौ भीष्मद्रोणौ निपातितौ । कर्णश्च निहतः संख्ये तव शीलानुवर्त्तकः ।
याच्यमानं मया मूढ पित्र्यमंशं न दित्ससि । पाण्डवेभ्यः स्वराज्यञ्च लोभात् शकुनिनिश्चयात् ।
विषन्ते भीमसेनाय दत्तं सर्व्वे च पाण्डवाः । प्रदीपिता जतुगृहे मात्रा सह सुदुर्म्मते । ३५३०
सभार्य्या याज्ञसेनी च क्लिष्टा द्यूते रजस्वला । तदैव तावद्दुष्टात्मन् वध्यस्त्वं निरपत्रपः ।
अनक्षज्ञञ्च धर्म्मज्ञं सौबलेनाक्षवेदिना । निकृत्या यत्पराजैषीस्तस्मादसि हतो रणे ।
जयद्रथेन पापेन यत्कृष्णा क्लेशिता वने । यातेषु मृगयां चैव तृणविन्दोरथाश्रमं ।
अभिमन्युश्च यद्बाल एको बहुभिराहवे । त्वद्दोषैर्निहतः पाप तस्मादसि हतो रणे ।
यान्यकार्य्याणि चास्माकं कृतानीति प्रभाषसे । वैगुण्येन तवात्यर्थं सर्व्वं हि तदनुष्ठितं । ३५३५
बृहस्पतेरुशनसो नोपदेशः श्रुतस्त्वया । वृद्धा नोपासिताश्चैव हितं वाक्यं न ते श्रुतं ।
लोभेनातिबलेन त्वं तृष्णाया च वशीकृतः । कृतवानस्यकार्य्याणि विपाकस्तस्य भुज्यतां ।
॥ दुर्य्योधन उवाच ॥ अधीतं विधिवद्दत्तं भूः प्रशास्ता ससागरा । मूर्द्ध्नि स्थितममित्राणां को नु स्वन्ततरो मया ।
यदिष्टं क्षत्रबन्धूनां स्वधर्म्ममनुपश्यतां । यदिदं निधनं प्राप्तः को नु स्वन्ततरो मया ।
देवार्हा मानुषा भोगाः प्राप्ता असुलभा नृपैः । ऐश्वर्य्यञ्चोत्तमं प्राप्तं को नु स्वन्ततरो मया । ३५४०
ससुहृत्सानुजश्चैव स्वर्गं गन्ताऽहमच्युत । यूयं निहतसङ्कल्पाः शोचन्तो वर्त्तयिष्यथ ।
॥ सञ्जय उवाच ॥ अस्य वाक्यस्य निधने कुरुराजस्य धीमतः । अपतत् सुमहद्वर्षं पुष्पाणां पुण्यगन्धिनां ।
अवादयन्त गन्धर्व्वा वादित्रं सुमनोहरं । जगुश्चाप्सरसो राज्ञो यशः सम्बद्धमेव च ।
सिद्धाश्च मुमुचुर्व्वाचः साधु साध्विति भारत । ववौ च सुरभिर्व्वायुः पुण्यगन्धो मृदुः सुखः ।
व्यराजंश्च दिशः सर्व्वा नभो वैदूर्य्यसन्निभं । अत्यद्भुतानि ते दृष्ट्वा वासुदेवपुरोगमाः । ३५४५
दुर्य्योधनस्य पूजान्तु दृष्ट्वा व्रीडामुपागमन् । हतांश्चाधर्म्मतः श्रुत्वा शोकार्त्ताः शुशुचुर्हि ते ।
भीष्मं द्रोणं तथा कर्णं भूरिश्रवसमेव च । तांस्तु चिन्तापरान् दृष्ट्वा पाण्डवान् दीनचेतसः ।
प्रोवाचेदं वचः कृष्णो मेघदुन्दुभिनिस्वनः । नैष शक्योऽतिशीघ्रास्त्रस्ते च सर्व्वे महारथाः ।
ऋजुयुद्धेन विक्रान्ता हन्तुं युष्माभिराहवे । नैष शक्यः कदाचिन्नु हन्तुं धर्म्मेण पार्थिवः ।
ते वा भीष्ममुखाः सर्व्वे महेष्वासा महारथाः । मयाऽनेकैरुपायैस्तु मायायोगेन चासकृत् । ३५५०
हतास्ते सर्व्व एवाजौ भवतां हितमिच्छता । यदि नैवंविधं जातु कुर्य्यां जिह्ममहं रणे ।
कुतो वो विजयो भूयः कुतो राज्यं कुतो धनं । ते हि सर्व्वे महात्मानश्चत्वारोऽतिरथा भुवि ।
न शक्या धर्म्मतो हन्तुं लोकपालैरपि स्वयं । तथैवायं गदापाणिर्धार्त्तराष्ट्रो गतक्लमः ।

न शक्यो धर्म्मतो हन्तुं कालेनापीह दण्डिना । न च वो हृदि कर्त्तव्यं यदयं घातितो रिपुः ।
मिथ्या वध्यास्तथोपायैर्बहवः शत्रवोऽधिकाः । पूर्व्वैरनुगतो मार्गो देवैरसुरघातिभिः । ३५५५
सद्भिश्चानुगतः पन्थाः सर्व्वैरेवानुगम्यते । कृतकृत्याः स्म सायाह्ने निवासं रोचयामहे ।
साश्वनागरथाः सर्व्वे विश्रमामो नराधिपाः । वासुदेववचः श्रुत्वा तदानीं पाण्डवैः सह ।
पाञ्चाला भृशसंहृष्टा विनेदुः सिंहसङ्घवत् । ततः प्राध्मापयन् शङ्खान् पाञ्चजन्यञ्च माधवः ।
हृष्टा दुर्य्योधनं दृष्ट्वा निहतं पुरुषर्षभ ।
इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि कृष्णपाण्डवसंवादे द्विषष्टोऽध्यायः ॥ ६२ ॥
॥ सञ्जय उवाच ॥ ततस्ते प्रययुः सर्व्वे निवासाय महीक्षितः । शङ्खान् प्रध्मापयन्तो वै हृष्टाः परिघबाहवः । ३५६०
पाण्डवान् गच्छतश्चापि शिविरं नो विशाम्पते । महेष्वासोऽन्वगात् पश्चाद्युयुत्सुः सात्यकिस्तथा ।
धृष्टद्युम्नः शिखण्डी च द्रौपदेयाश्च सर्व्वशः । सर्व्वे चान्ये महेष्वासा ययुः स्वशिविराण्युत ।
ततस्ते प्राविशन् पार्था हतत्विट्कं हतेश्वरं । दुर्य्योधनस्य शिविरं रङ्गवद्विसृते जने ।
हतोत्सवं पुरमिव हृतनागमिव ह्रदं । स्त्रीवर्षवरभूयिष्ठं वृद्धामात्यैरधिष्ठितं ।
तत्रैतान् पर्य्युपातिष्ठन् दुर्य्योधनपुरःसराः । कृताञ्जलिपुटा राजन् काषायमलिनाम्बराः । ३५६५
शिविरं समनुप्राप्य कुरुराजस्य पाण्डवाः । अवतेरुर्महाराज रथेभ्यो रथसत्तमाः ।
ततो गाण्डीवधन्वानमभ्यभाषत केशवः । स्थितः प्रियहिते नित्यमतीव भरतर्षभ ।
अवरोपय गाण्डीवमक्षय्यौ च महेषुधी । अथाहमवरोक्ष्यामि पश्चाद्भरतसत्तम ।
स्वयञ्चैवावरोह त्वमेतत् श्रेयस्तवानघ । तच्चाकरोत्तथा वीरः पाण्डुपुत्रो धनञ्जयः ।
अथ पश्चात्ततः कृष्णो रश्मीनुत्सृज्य वाजिनां । अवारोहत मेधावी रथाद्गाण्डीवधन्वनः । ३५७०
अथावतीर्णे भूतानामीश्वरे सुमहात्मनि । कपिरन्तर्दधे दिव्यो ध्वजो गाण्डीवधन्वनः ।
स दग्धो द्रोणकर्णाभ्यां दिव्यैरस्त्रैर्महारथः । अनादीप्ताग्निना ह्याशु प्रजज्वाल महीपते ।
सोपासङ्गः सरश्मिश्च साश्वः सयुगबन्धुरः । भस्मीभूतोऽपतद्भूमौ रथो गाण्डीवधन्वनः ।
तं तथा भस्मभूतन्तु दृष्ट्वा पाण्डुसुताः प्रभो । अभवन् विस्मिता राजन्नर्ज्जुनश्चेदमब्रवीत् ।
कृताञ्जलिः सप्रणयं प्रणिपत्याभिवाद्य ह । गोविन्द कस्माद्भगवन् रथो दग्धोऽयमग्निना । ३५७५
किमेतन्महदाश्चर्य्यमभवद्यदुनन्दन । तन्मे ब्रूहि महाबाहो श्रोतव्यं यदि मन्यसे ।
॥ वासुदेव उवाच ॥ अस्त्रैर्बहुविधैर्दग्धः पूर्व्वमेवायमर्ज्जुन । मदधिष्ठितत्वात् समरे न विशीर्णः परन्तप ।
इदानीन्तु विशीर्णोऽयं दग्धो ब्रह्मास्त्रतेजसा । मया विमुक्तः कौन्तेय त्वय्यद्य कृतकर्म्मणि ।
ईषदुत्स्मयमानस्तु भगवान् केशवोऽरिहा । परिष्वज्य च राजानं युधिष्ठिरमभाषत ।
दिष्ट्या जयसि कौन्तेय दिष्ट्या ते शत्रवो हताः । दिष्ट्या गाण्डीवधन्वा च भीमसेनश्च पाण्डवः । ३५८०
त्वञ्चापि कुशली राजन् माद्रीपुत्रौ च पाण्डवौ । मुक्ता वीरक्षयादस्मात् संग्रामान्निहतद्विषः ।
क्षिप्रमुत्तरकालानि कुरु कार्य्याणि भारत । उपयातमुपप्लव्यं सह गाण्डीवधन्वना ।

आनीय मधुपर्कं मां यत्पुरा त्वमवोचिथाः । एष भ्राता सखा चैव तव कृष्ण धनञ्जयः ।
रक्षितव्यो महाबाहो सर्व्वास्वापत्स्विति प्रभो । तव चैवं ब्रुवाणस्य तथेत्येवाहमब्रुवं ।
स सव्यसाची गुप्तस्ते विजयी च जनेश्वर । भ्रातृभिः सह राजेन्द्र शूरः सत्यपराक्रमः । ३५८५
मुक्तो वीरक्षयादस्मात् संग्रामाल्लोमहर्षणात् । एवमुक्तस्तु कृष्णेन धर्म्मराजो युधिष्ठिरः ।
हृष्टरोमा महाराज प्रत्युवाच जनार्द्दनं ।
॥ युधिष्ठिर उवाच ॥ प्रमुक्तं द्रोणकर्णाभ्यां ब्रह्मास्त्रमरिमर्द्दन । कस्त्वदन्यः सहेत् साक्षादपि वज्री पुरन्दरः ।
भवतस्तु प्रसादेन संशप्तकगणा जिताः । महारणगतः पार्थो यच्च नासीत् पराङ्मुखः ।
तथैव च महाबाहो पर्य्यायैर्बहुभिर्म्मया । कर्म्मणामनुसन्तानं तेजसश्च गतिं प्रभो । ३५९०
उपप्लव्ये महर्षिर्म्मे कृष्णद्वैपायनोऽब्रवीत् । यतो धर्म्मस्ततः कृष्णो यतः कृष्णस्ततो जयः ।
इत्येवमुक्ते ते वीराः शिबिरं तव भारत । प्रविश्य प्रत्यपद्यन्त कोषरत्नर्द्धिसञ्चयान् ।
रजतं जातरूपञ्च मणीनथ च मौक्तिकान् । भूषणान्यथ मुख्यानि कम्बलान्यजिनानि च ।
दासीदासमसंख्येयं राज्योपकरणानि च । ते प्राप्य धनमक्षय्यं त्वदीयं भरतर्षभ ।
उदक्रोशन्महाभागा नरेन्द्रा विजितारयः । ते तु वीराः समाश्वस्य वाहनान्यवमुच्य च । ३५९५
अतिष्ठन्त मुहुः सर्व्वे पाण्डवाः सात्यकिस्तथा । अथाब्रवीन्महाराज वासुदेवो महायशाः ।
अस्माभिर्म्मङ्गलार्थाय वस्तव्यं शिबिराद्बहिः । तथेत्युक्त्वा हि ते सर्व्वे पाण्डवाः सात्यकिस्तथा ।
वासुदेवेन सहिता मङ्गलार्थं बहिर्ययुः । ते समासाद्य सरितं पुण्यामोघवतीं नृप ।
न्यवसन्नथ तां रात्रिं पाण्डवा हतशत्रवः । ततः सम्प्रेषयामासुर्य्यादवं नागसाह्वयं ।
ततः प्रायाज्जवेनाशु वासुदेवः प्रतापवान् । दारुकं रथमारोप्य येन राजाऽम्बिकासुतः । ३६००
तमूचुः सम्प्रयास्यन्तं शैब्यसुग्रीववाहनं । प्रत्याश्वासय गान्धारीं हतपुत्रां यशस्विनीं ।
स प्रायात् पाण्डवैरुक्तस्तत्पुरं सात्त्वताम्वरः । आससाद ततः क्षिप्रं गान्धारीं निहतात्मजां ।
इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि वासुदेववाक्ये द्विषष्टोऽध्यायः ॥ ६२ ॥
॥ जनमेजय उवाच ॥ किमर्थं द्विजशार्दूल धर्म्मराजो युधिष्ठिरः । गान्धार्य्याः प्रेषयामास वासुदेवं परन्तपं ।
यदा पूर्व्वं गतः कृष्णः शमार्थं कौरवान् प्रति । न च तं लब्धवान् कामं ततो युद्धमभूदिदं ।
निहतेषु तु योधेषु हते दुर्य्योधने तदा । पृथिव्यां पाण्डवेयस्य निःसपत्ने कृते युधि । ३६०५
विद्रुते शिबिरे शून्ये प्राप्ते यशसि चोत्तमे । किन्नु तत् कारणं ब्रह्मन् येन कृष्णो गतः पुनः ।
न चैतत् कारणं ब्रह्मन्नल्पं विप्रतिभाति मे । यत्रागमदमेयात्मा स्वयमेव जनार्द्दनः ।
तत्त्वतो वै समाचक्ष्व सर्व्वमध्वर्य्युसत्तम । यच्चात्र कारणं ब्रह्मन् कार्य्यस्यास्य विनिश्चये ।
॥ वैशम्पायन उवाच ॥ त्वद्युक्तोऽयमनुप्रश्नो यन्मां पृच्छसि पार्थिव । तत्तेऽहं सम्प्रवक्ष्यामि यथावद्भरतर्षभ ।
हतं दुर्य्योधनं दृष्ट्वा भीमसेनेन संयुगे । व्युत्क्रम्य समयं राजन् धार्त्तराष्ट्रं महाबलं । ३६१०
अन्यायेन हतं दृष्ट्वा गदायुद्धेन भारत । युधिष्ठिरं महाराज महद्भयमथाविशत् ।

चिन्तयानो महाभागां गान्धारीं तपसाऽन्वितां । घोरेण तपसा युक्ता त्रैलोक्यमपि सा दहेत् ।
तस्य चिन्तयमानस्य बुद्धिः समभवत्तदा । गान्धार्य्याः क्रोधदीप्तायाः पूर्व्वं प्रशमनं भवेत् ।
सा हि पुत्त्रवधं श्रुत्वा कृतमस्माभिरीदृशं । मानसेनाग्निना क्रुद्धा भस्मसान्नः करिष्यति ।
कथं दुःखमिदं तीव्रं गान्धारी सम्प्रसह्यति । श्रुत्वा विनिहतं पुत्त्रं छलेनाजिह्मयोधिनं । ३५१५
एवं विचिन्त्य बहुधा भयशोकसमन्वितः । वासुदेवमिदं वाक्यं धर्म्मराजोऽभ्यभाषत ।
तव प्रसादाद्गोविन्द राज्यं निहतकण्टकं । अप्राप्यं मनसाऽपीदं प्राप्तमस्माभिरच्युत ।
प्रत्यक्षं मे महाबाहो सङ्ग्रामे लोमहर्षणे । विमर्द्दः सुमहान् प्राप्तस्त्वया यादवनन्दन ।
त्वया देवासुरे युद्धे वधार्थममरद्विषां । यथा साह्यं पुरा दत्तं हताश्च विबुधद्विषः ।
साह्यं तथा महाबाहो दत्तमस्माकमच्युत । सारथ्येन च वार्ष्णेय भवता हि धृता वयं । ३५२०
यदि न त्वं भवेन्नाथः फाल्गुनस्य महारणे । कथं शक्यो रणे जेतुं भवेदेष बलार्णवः ।
गदाप्रहारा विपुलाः परिघैश्चापि ताडनं । शक्तिभिर्भिन्दिपालैश्च तोमरैः सपरश्वधैः ।
अस्मत्कृते त्वया कृष्ण वाचः सपरुषाः श्रुताः । शस्त्राणाञ्च निपाता वै वज्रस्पर्शोपमा रणे ।
ते च ते सफला जाता हते दुर्य्योधनेऽच्युत । तत् सर्व्वं न यथा नश्येत् पुनः कृष्ण तथा कुरु ।
सन्देहदोलां प्राप्तं नश्चेतः कृष्ण जये सति । गान्धार्य्या हि महाबाहो क्रोधं बुध्यस्व माधव । ३५२५
सा हि नित्यं महाभागा तपसोग्रेण कर्षिता । पुत्त्रपौत्त्रवधं श्रुत्वा ध्रुवं नः सम्प्रधक्ष्यति ।
तस्याः प्रसादनं वीर प्राप्तकालं मतं मम । कश्च तां क्रोधताम्राक्षीं पुत्त्रव्यसनकर्षितां ।
वीक्षितुं पुरुषः शक्तस्त्वामृते पुरुषोत्तम । तत्र मे गमनं प्राप्तं रोचते तव माधव ।
गान्धार्य्याः क्रोधदीप्तायाः प्रशमार्थमरिन्दम । त्वं हि कर्त्ता विकर्त्ता च लोकानां प्रभवाव्ययः ।
हेतुकारणसंयुक्तैर्व्वाक्यैः कालसमीरितैः । क्षिप्रमेव महाबाहो गान्धारीं शमयिष्यसि । ३५३०
पितामहश्च भगवान् कृष्णस्तत्र भविष्यति । सर्व्वथा ते महाबाहो गान्धार्य्याः क्रोधनाशनं ।
कर्त्तव्यं सात्वतो श्रेष्ठ पाण्डवानां हितार्थिना । धर्म्मराजस्य वचनं श्रुत्वा यदुकुलोद्वहः ।
आमन्त्र्य दारुकं प्राह रथः सज्जो विधीयतां । केशवस्य वचः श्रुत्वा त्वरमाणोऽथ दारुकः ।
न्यवेदयद्रथं सज्जं केशवाय महात्मने । तं रथं यादवश्रेष्ठः समारुह्य परन्तपः ।
जगाम हास्तिनपुरं त्वरितः केशवो विभुः । ततः प्रायान्महाराज माधवो भगवान्रथी । ३५३५
नागसाह्वयमासाद्य प्रविवेश च वीर्य्यवान् । प्रविश्य नगरं वीरो रथघोषेण नादयन् ।
विदितो धृतराष्ट्रस्य सोऽवतीर्य्य रथोत्तमात् । अभ्यगच्छददीनात्मा धृतराष्ट्रनिवेशनं ।
पूर्व्वञ्चाभिगतन्तत्र सोऽपश्यदृषिसत्तमं । पादौ प्रपीड्य कृष्णस्य राज्ञश्चापि जनार्द्दनः ।
अभ्यवादयदव्यग्रो गान्धारीञ्चापि केशवः । ततस्तु यादवश्रेष्ठो धृतराष्ट्रमधोक्षजः ।
पाणिमालम्ब्य राजेन्द्र सुस्वरं प्ररुरोद ह । स मुहूर्त्तादिवोत्सृज्य वाष्पं शोकसमुद्भवं । ३५४०
प्रक्षाल्य वारिणा नेत्रे आचम्य च यथाविधि । उवाच प्रस्तुतं वाक्यं धृतराष्ट्रमरिन्दमः ।

न तेऽस्त्यविदितं किञ्चिद्भूतभव्यस्य भारत । कालस्य च यथा वृत्तं तत्ते सुविदितं प्रभो ।
यदिदं पाण्डवैः सर्व्वैस्तव चित्तानुरोधिभिः । कथं कुलक्षयो न स्यात्तथा क्षत्रस्य भारत ।
भ्रातृभिः समयं कृत्वा क्षान्तवान् धर्म्मवत्सलः । द्यूतच्छलजितैः शुद्धैर्व्वनवासोऽभ्युपागतः ।
अज्ञातवासचर्य्या च नानावेशसमावृतैः । अन्ये च बहवः क्लेशास्त्वशक्तैरिव सर्व्वदा । २५४५
मया च स्वयमागम्य युद्धकाल उपस्थिते । सर्व्वलोकस्य सान्निध्ये ग्रामांस्त्वं पञ्च याचितः ।
त्वया कालोपसृष्टेन लोभतो नापि वर्ज्जिताः । तवापराधान्नृपते सर्व्वं क्षत्रं क्षयं गतं ।
भीष्मेण सोमदत्तेन वाह्लीकेन कृपेण च । द्रोणेन च सपुत्रेण विदुरेण च धीमता ।
याचितस्त्वं शमं नित्यं न च तत्कृतवानसि । कालोपहतचित्ता हि सर्व्वे मुह्यन्ति भारत ।
यथा मूढो भवान् पूर्व्वमस्मिन्नर्थे समुद्यते । किमन्यत् कालयोगाद्धि दिष्टमेव परायणं । २५५०
मा च दोषान्महाप्राज्ञ पाण्डवेषु निवेशय । अल्पोऽप्यतिक्रमो नास्ति पाण्डवानां महात्मनां ।
धर्म्मतो न्यायतश्चैव स्नेहतश्च परन्तप । एतत् सर्व्वन्तु विज्ञाय स्वात्मदोषकृतं मतं ।
असूयां पाण्डुपुत्रेषु न भवान् कर्त्तुमर्हति । कुलं वंशश्च पिण्डश्च यच्च पुत्रकृतं फलं ।
गान्धार्य्यास्तव चैवाद्य पाण्डवेषु प्रतिष्ठितं । त्वञ्चैव कुरुशार्दूल गान्धारी च यशस्विनी ।
मा शुचो नरशार्दूल पाण्डवान् प्रति किल्बिषं । एतत् सर्व्वमनुध्यात्वा आत्मनश्च व्यतिक्रमं । २५५५
शिवेन पाण्डवान् पाहि नमस्ते भरतर्षभ । जानासि च महाबाहो धर्म्मराजस्य या त्वयि ।
भक्तिर्भरतशार्दूल स्नेहश्चापि स्वभावतः । एतच्च कदनं कृत्वा शत्रूणामपकारिणां ।
दह्यते स दिवारात्रौ न च शर्म्माधिगच्छति । त्वाञ्चैव नरशार्दूल गान्धारीञ्च यशस्विनीं ।
स शोचन्नरशार्दूल शान्तिं नैवाधिगच्छति । ह्रिया च परयाविष्टो भवन्तं नाधिगच्छति ।
पुत्रशोकाभिसन्तप्तं बुद्धिव्याकुलितेन्द्रियं । एवमुक्त्वा महाराज धृतराष्ट्रं यदूत्तमः । २५६०
उवाच परमं वाक्यं गान्धारीं शोककर्षितां । सौबलेयि निबोध त्वं यत्त्वां वक्ष्यामि तच्छृणु ।
त्वत्समा नास्ति लोकेऽस्मिन्नद्य सीमन्तिनी शुभे । जानासि च यथा राज्ञि सभायां मम सन्निधौ ।
धर्म्मार्थसहितं वाक्यमुभयोः पक्षयोर्हितं । उक्तवत्यसि कल्याणि न च ते तनयैः कृतं ।
दुर्य्योधनस्त्वया चोक्तो जयार्थी परुषं वचः । शृणु मूढ वचो मह्यं यतो धर्म्मस्ततो जयः ।
तदिदं समनुप्राप्तं तव वाक्यं नृपात्मजे । एवं विदित्वा कल्याणि मा स्म शोके मनः कृथाः । २५६५
पाण्डवानां विनाशाय मा ते बुद्धिः कदाचन । शक्ता चासि महाभागे पृथिवीं सचराचरां ।
चक्षुषा क्रोधदीप्तेन निर्द्दग्धुं तपसो बलात् । वासुदेववचः श्रुत्वा गान्धारी वाक्यमब्रवीत् ।
एवमेतन्महाबाहो यथा वदसि केशव । आधिभिर्द्दह्यमानाया मतिः सञ्चलिता मम ।
सा मे व्यवस्थिता श्रुत्वा तव वाक्यं जनार्द्दन । राज्ञस्त्वन्धस्य वृद्धस्य हतपुत्रस्य केशव ।
त्वङ्गतिः सहितैर्व्वीरैः पाण्डवैर्द्विपदाम्वर । एतावदुक्त्वा वचनं मुखं प्रच्छाद्य वाससा । २५७०
पुत्रशोकाभिसन्तप्ता गान्धारी प्ररुरोद ह । तत एनां महाबाहुः केशवः शोककर्षितां ।

हेतुकारणसंयुक्तैर्व्वाक्यैराश्वासयत् प्रभुः। समाश्वास्य च गान्धारीं धृतराष्ट्रञ्च माधवः।
द्रौणिसङ्कल्पितं भावमवबुध्यत केशवः। ततस्त्वरित उत्थाय पादौ मूर्द्ध्ना प्रणम्य च।
द्वैपायनस्य राजेन्द्र ततः कौरवमब्रवीत्। आपृच्छे त्वां कुरुश्रेष्ठ मा च शोके मनः कृथाः।
द्रौणेः पापोऽस्त्यभिप्रायस्तेनास्मि सहसोत्थितः। पाण्डवानां वधे रात्रौ बुद्धिस्तेन प्रदर्शिता। २५७५
एतच्छ्रुत्वा तु वचनं गान्धार्य्या सहितोऽब्रवीत्। धृतराष्ट्रो महाबाहुः केशवं केशिसूदनं।
शीघ्रं गच्छ महाबाहो पाण्डवान् परिपालय। भूयस्त्वया समेष्यामि क्षिप्रमेव जनार्द्दन।
प्रायात्ततस्तु त्वरितो दारुकेण सहाच्युतः। वासुदेवे गते राजन् धृतराष्ट्रं जनेश्वरं।
आश्वासयदमेयात्मा व्यासो लोकनमस्कृतः। वासुदेवोऽपि धर्म्मात्मा कृतकृत्यो जगाम ह।
शिविरं हास्तिनपुरात् दिदृक्षुः पाण्डवान्नृप। आगम्य शिविरं रात्रौ सोऽभ्यगच्छत पाण्डवान्। २५८०
तच्च तेभ्यः समाख्याय सहितस्तैः समाहितः।

इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि धृतराष्ट्रगान्धारीप्रबोधने चतुःषष्टोऽध्यायः॥ ६४ ॥

॥ धृतराष्ट्र उवाच ॥ अधिष्ठितः पदा मूर्द्ध्नि भग्नसक्थो महीकृतः। शौटीर्य्यमानी पुत्रो मे किमभाषत सञ्जय।
अत्यर्थकोपनो राजा जातवैरश्च पाण्डुषु। व्यसनं परमं प्राप्तः किमाह परमाहवे।
॥ सञ्जय उवाच ॥ शृणु राजन् प्रवक्ष्यामि यथा वृत्तं नराधिप। राज्ञा यदुक्तं भग्नेन तस्मिन् व्यसन आगते।
भग्नसक्थो नृपो राजन् पांशुना सोऽवगुण्ठितः। यमयन्मूर्द्धजांस्तत्र वीक्ष्य चैव दिशो दश। २५८५
केशान्नियम्य यत्नेन निश्वसन्नुरगो यथा। संरम्भाश्रुपरीताभ्यां नेत्राभ्यामभिवीक्ष्य मां।
बाहू धरण्यां निष्पिष्य मुहुर्म्मत्त इव द्विपः। प्रकीर्णान् मूर्द्धजान् धुन्वन् दन्तैर्द्दन्तानुपस्पृशन्।
गर्हयन् पाण्डवं ज्येष्ठं निश्वस्येदमथाब्रवीत्। भीष्मे शान्तनवे नाथे कर्णे शस्त्रभृताम्वरे।
गौतमे शकुनौ चापि द्रोणे चास्त्रभृताम्वरे। अश्वत्थाम्नि तथा शल्ये शूरे च कृतवर्म्मणि।
इमामवस्थां प्राप्तोऽस्मि कालो वै दुरतिक्रमः। एकादशचमूभर्त्ता सोऽहमेतां दशां गतः। २५९०
कालं प्राप्य महाबाहो न कश्चिदतिवर्त्तते। आख्यातव्यं मदीयानां येऽस्मिन् जीवन्ति संयुगे।
यथाऽहं भीमसेनेन व्युत्क्रम्य समयं हतः। बहूनि सुनृशंसानि कृतानि खलु पाण्डवैः।
भूरिश्रवसि कर्णे च भीष्मे द्रोणे च श्रीमति। इदञ्चाकीर्त्तिजं कर्म्म नृशंसैः पाण्डवैः कृतं।
येन ते सत्सु निर्व्वेदं गमिष्यन्ति हि मे मतिः। का प्रीतिः सत्त्वयुक्तस्य कृत्वोपाधिकृतञ्जयं।
को वा समयभेत्तारं बुधः संमन्तुमर्हति। अधर्म्मेण जयं लब्ध्वा को नु हृष्येत पण्डितः। २५९५
यथा संहृष्यते पापः पाण्डुपुत्रो वृकोदरः। किन्नु चित्रमतस्त्वद्य भग्नसक्थस्य यन्मम।
क्रुद्धेन भीमसेनेन पादेन मृदितं शिरः। प्रतपन्तं श्रिया जुष्टं वर्त्तमानञ्च बन्धुषु।
एवं कुर्य्यान्नरो यो हि स वै सञ्जय पूजितः। अभिज्ञौ युद्धधर्म्मस्य मम माता पिता च मे।
तौ हि सञ्जय दुःखार्त्तौ विज्ञाप्यौ वचनाद्धि मे। इष्टं भृत्या भृताः सम्यग्भूः प्रशास्ता ससागरा।
मूर्द्ध्नि स्थितममित्राणां जीवतामेव सञ्जय। दत्ता दाया यथाशक्ति मित्राणाञ्च प्रियं कृतं। २६००

अमित्रा बाधिताः सर्व्वे को नु स्वन्ततरो मया । मानिता बान्धवाः सर्व्वे वश्यः संपूजितो जनः ।
त्रितयं सेवितं सर्व्वं को नु स्वन्ततरो मया । आज्ञप्तं नृपमुख्येषु मानः प्राप्तः सुदुर्लभः ।
आजानेयैस्तथा यातं को नु स्वन्ततरो मया । यातानि परराष्ट्राणि नृपा भुक्ताश्च दासवत् ।
प्रियेभ्यः प्रकृतं साधु को नु स्वन्ततरो मया । अधीतं विधिवद्दत्तं प्राप्तमायुर्निरामयं ।
स्वधर्म्मविजिता लोका को नु स्वन्ततरो मया । दिष्ट्या नाहं जितः संख्ये परान् प्रेष्यवदाश्रितः ।   ३३०५
दिष्ट्या मे विपुला लक्ष्मीर्म्मृते त्वन्यगता विभो । यदिष्टं क्षत्रबन्धूनां स्वधर्म्ममनुतिष्ठतां ।
निधनं तन्मया प्राप्तं को नु स्वन्ततरो मया । दिष्ट्या नाहं परावृत्तो वैरात् प्राकृतवज्जितः ।
दिष्ट्या नावमितिं काञ्चिद्भजिलाऽनुपराजितः । सुप्तं वाऽथ प्रमत्तं वा यथा हन्याद्विषेण वा ।
एवं व्युत्क्रान्तधर्म्मेण व्युत्क्रम्य समयं हतः । अश्वत्थामा महाभागः कृतवर्म्मा च सात्वतः ।
कृपः शारद्वतश्चैव वक्तव्या वचनान्मम । अधर्म्मेण प्रवृत्तानां पाण्डवानामनेकशः ।   ३३१०
विश्वासं समयघ्नानां न यूयं गन्तुमर्हथ । वार्त्तिकांश्चाब्रवीद्राजा पुत्त्रस्ते सत्यविक्रमः ।
अधर्म्माद्भीमसेनेन निहतोऽहं यथा रणे । सोऽहं द्रोणं स्वर्गगतं कर्णशल्यावुभौ तथा ।
वृषसेनं महावीर्य्यं शकुनिञ्चापि सौबलं । जलसन्धं महावीर्य्यं भगदत्तञ्च पार्थिवं ।
सौमदत्तिं महेष्वासं सैन्धवञ्च जयद्रथं । दुःशासनपुरोगांश्च भ्रातॄनात्मसमांस्तथा ।
दौःशासनिञ्च विक्रान्तं लक्ष्मणञ्चात्मजावुभौ । एतांश्चान्यांश्च सुबहून्मदीयांश्च सहस्रशः ।   ३३१५
पृष्ठतोऽनुगमिष्यामि सार्थहीनो यथाऽध्वगः । कथं भ्रातॄन् हतान् श्रुत्वा भर्त्तारञ्च स्वसा मम ।
रोरूयमाणा दुःखार्त्ता दुःशला सा भविष्यति । स्नुषाभिः प्रस्नुषाभिश्च वृद्धो राजा पिता मम ।
गान्धारीसहितश्चैव कां गतिं प्रतिपत्स्यति । नूनं लक्ष्मणमाताऽपि हतपुत्त्रा हतेश्वरा ।
विनाशं यास्यति क्षिप्रं कल्याणी पृथुलोचना । यदि जानाति चार्व्वाकः परिव्राड्वाग्विशारदः ।
करिष्यति महाबाहो ध्रुवञ्चापचितिं मम । समन्तपञ्चके पुण्ये त्रिषु लोकेषु विश्रुते ।   ३३२०
अहं निधनमासाद्य लोकान् प्राप्स्यामि शाश्वतान् । ततो जनसहस्राणि बाष्पपूर्णानि मारिष ।
प्रलापं नृपतेः श्रुत्वा व्यद्रवन्त दिशो दश । ससागरवना घोरा पृथिवी सचराचरा ।
चचालाथ सनिर्ह्रादा दिशश्चैवाविलाऽभवन् । ते द्रोणपुत्त्रमासाद्य यथा वृत्तं न्यवेदयन् ।
व्यवहारं गदायुद्धे पार्थिवस्य च पातनं । तदाख्याय ततः सर्व्वे द्रोणपुत्त्रस्य भारत ।
ध्यात्वा च सुचिरं कालं जग्मुरार्त्ता यथागतं ।   ३३२५

इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि दुर्य्योधनविलापे पञ्चषष्टोऽध्यायः ॥ ६५ ॥

॥ सञ्जय उवाच ॥ वार्त्तिकानां सकाशात्तु श्रुत्वा दुर्य्योधनं हतं । हतशिष्टास्त्रयो राजन् कौरवाणां महारथाः ।
विनिर्भिन्नाः शितैर्व्वाणैर्गदातोमरशक्तिभिः । अश्वत्थामा कृपश्चैव कृतवर्म्मा च सात्वतः ।
त्वरिता जवनैरश्वैरायोधनमुपागमन् । तत्रापश्यन्महात्मानं धार्त्तराष्ट्रं निपातितं ।
प्रभग्नं वायुवेगेन महाशालं यथा वने । भूमौ विचेष्टमानन्तं रुधिरेण समुक्षितं ।

महागजमिवारण्ये व्याधेन विनिपातितं । विवर्त्तमानं बहुशो रुधिरौघपरिप्लुतं । ३३३०
यदृच्छया निपतितं चक्रमादित्यगोचरं । महावातसमुत्थेन संशुष्कमिव सागरं ।
पूर्णचन्द्रमिव व्योम्नि तुषारावृतमण्डलं । रेणुध्वस्तं दीर्घभुजं मातङ्गसमविक्रमं ।
वृतं भूतगणैर्घोरैः क्रव्यादैश्च समन्ततः । यथा धनं लिप्समानैर्भृत्यैर्नृपतिसत्तमं ।
भ्रुकुटीकृतवक्त्रान्तं क्रोधादुद्वृत्तचक्षुषं । सामर्षन्तं नरव्याघ्रं व्याघ्रं निपतितं यथा ।
ते तं दृष्ट्वा महेष्वासा भूतले पतितं नृपं । मोहमभ्यागमन् सर्व्वे कृपप्रभृतयो रथाः । ३३३५
अवतीर्य्य रथेभ्यश्च प्राद्रवन्राजसन्निधौ । दुर्य्योधनञ्च सम्प्रेक्ष्य सर्व्वे भूमावुपाविशन् ।
ततो द्रौणिर्म्महाराज वाष्पपूर्णेक्षणः श्वसन् । उवाच भरतश्रेष्ठं सर्व्वलोकेश्वरेश्वरं ।
न नूनं विद्यते सत्यं मानुषे किञ्चिदेव हि । यत्र त्वं पुरुषव्याघ्र शेषे पांशुषु रूषितः ।
भूत्वा हि नृपतिः पूर्व्वं समाज्ञाप्य च मेदिनीं । कथमेकोऽद्य राजेन्द्र तिष्ठसे निर्जने वने ।
दुःशासनं न पश्यामि नापि कर्णं महारथं । नापि तान् सुहृदः सर्व्वान् किमिदं भरतर्षभ । ३३४०
दुःखं नूनं कृतान्तस्य गतिं ज्ञातुं कथञ्चन । लोकानाञ्च भवान् यत्र शेषे पांशुषु रूषितः ।
एष मूर्द्धाभिषिक्तानामग्रे गत्वा परन्तपः । स भूयः ग्रसते पांशुं पश्य कालस्य पर्य्ययं ।
क्व ते तदमलं छत्रं व्यजनं क्व च पार्थिव । सा च ते महती सेना क्व गता पार्थिवोत्तम ।
दुर्व्विज्ञेया गतिर्नूनं कार्य्याणां कारणान्तरे । यद्वै लोकगुरुर्भूत्वा भवानेतां दशां गतः ।
अध्रुवा सर्व्वमर्त्येषु ध्रुवं श्रीरुपलक्ष्यते । भवतो व्यसनं दृष्ट्वा शक्रविस्पर्द्धिनो भृशं । ३३४५
तस्य तद्वचनं श्रुत्वा दुःखितस्य विशेषतः । उवाच राजन् पुत्रस्ते प्राप्तकालमिदं वचः ।
विमृज्य नेत्रे पाणिभ्यां शोकजं वाष्पमुत्सृजन् । कृपादीन् स तदा वीरान् सर्व्वानेव नराधिपः ।
ईदृशो मर्त्यधर्म्मोऽयं धात्रा निर्द्दिष्ट उच्यते । विनाशः सर्व्वभूतानां कालपर्य्यायमागतः ।
सोऽयं मां समनुप्राप्तः प्रत्यक्षं भवतां हि यः । पृथिवीं पालयित्वाऽहमेतां निष्ठामुपागतः ।
दिष्ट्या नाहं परावृत्तो युद्धे कस्यचिदापदि । दिष्ट्याऽहं निहतः पापैश्छलेनैव विशेषतः । ३३५०
उत्साहश्च कृतो नित्यं मया दिष्ट्या युयुत्सता । दिष्ट्या चास्मिन् हतो युद्धे निहतज्ञातिबान्धवः ।
दिष्ट्या च वोऽहं पश्यामि मुक्तानस्माज्जनक्षयात् । स्वस्तियुक्तांश्च कल्यांश्च तन्मे प्रियमनुत्तमं ।
मा भवन्तोऽत्र तप्यन्तां सौहृदान्निधनेन मे । यदि वेदाः प्रमाणं वो जिता लोका मयाऽक्षयाः ।
मन्यमानः प्रभावञ्च कृष्णस्यामिततेजसः । तेन न च्यावितश्चाहं क्षत्त्रधर्म्मात् स्वनुष्ठितात् ।
स मया समनुप्राप्तो नास्मि शोच्यः कथञ्चन । कृतं भवद्भिः सदृशमनुरूपमिवात्मनः । ३३५५
पतितं विजये नित्यं दैवन्तु दुरतिक्रमं । एतावदुक्त्वा वचनं वाष्पव्याकुललोचनः ।
तूष्णीं बभूव राजेन्द्र रुजाऽसौ विक्लवो भृशं । तथा तु दृष्ट्वा राजानं वाष्पशोकसमन्वितं ।
द्रौणिः क्रोधेन जज्वाल यथा वह्निर्जगत्क्षये । स तु क्रोधसमाविष्टः पाणौ पाणिं निपीड्य च ।
वाष्पविक्लवया वाचा राजानमिदमब्रवीत् । पिता मे निहतः क्षुद्रैः सुनृशंसेन कर्म्मणा ।

न तथा तेन तप्यामि यथा राजंस्त्वयाऽद्य वै। शृणु चेदं वचो मह्यं सत्येन वदतः प्रभो। ३३६०
इष्टापूर्त्तेन दानेन धर्म्मेण सुकृतेन च। अद्याहं सर्व्वपाञ्चालान् वासुदेवस्य पश्यतः।
सर्व्वोपायैर्हि नेष्यामि प्रेतराजनिवेशनं। अनुज्ञान्तु महाराज भवान्मे दातुमर्हति।
इति श्रुत्वा तु वचनं द्रोणपुत्रस्य कौरवः। मनसः प्रीतिजननं कृपं वचनमब्रवीत्।
आचार्य्य शीघ्रं कलसं जलपूर्णं समानय। स तद्वचनमाज्ञाय राज्ञो ब्राह्मणसत्तमः।
कलसं पूर्णमादाय राज्ञोऽन्तिकमुपागमत्। तमब्रवीन्महाराज पुत्रस्तव विशाम्पते। ३३६५
ममाज्ञया द्विजश्रेष्ठ द्रोणपुत्रोऽभिषिच्यतां। सैनापत्येन भद्रन्ते मम चेदिच्छसि प्रियं।
राज्ञो नियोगाद्योद्धव्यं ब्राह्मणेन विशेषतः। वर्त्तता क्षत्रधर्म्मेण ह्येवं धर्म्मविदो विदुः।
राज्ञस्तु वचनं श्रुत्वा कृपः शारद्वतस्ततः। द्रौणिं राज्ञो नियोगेन सैनापत्येऽभ्यषेचयत्।
सोऽभिषिक्तो महाराज परिष्वज्य नृपोत्तमं। प्रययौ सिंहनादेन दिशः सर्व्वा विनादयन्।
दुर्य्योधनोऽपि राजेन्द्र शोणितेन परिप्लुतः। तां निशां प्रतिपेदेऽथ सर्व्वभूतभयावहां। ३३७०
अपक्रम्य तु ते तूर्णं तस्मादायोधनान्नृप। शोकसंविग्नमनसश्चिन्ताध्यानपराऽभवन्।
इति श्रीमहाभारते शल्यपर्व्वणि गदायुद्धपर्व्वणि अश्वत्थामसैनापत्याभिषेके षट्षष्टोऽध्यायः॥ ६६ ॥

॥ समाप्तञ्चेदं शल्यपर्व्व॥

# श्रीमहाभारतं

## ॥ सौप्तिकपर्व्व ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं। देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्।

॥ सञ्जय उवाच ॥ ततस्ते सहिता वीराः प्रयाता दक्षिणामुखाः। उपास्तमनवेलायां शिविराभ्याशमागताः।
विमुच्य वाहांस्त्वरिता भीताः समभवंस्तदा। गहनं देशमासाद्य प्रच्छन्ना न्यविशन्त ते।
सेनानिवेशमभितो नातिदूरमवस्थिताः। निकृत्ता निशितैः शस्त्रैः समन्तात् क्षतविक्षताः।
दीर्घमुष्णञ्च निश्वस्य पाण्डवानन्वचिन्तयन्। श्रुत्वा च निनदं घोरं पाण्डवानां जयैषिणां।
अनुसारभयाद्भीताः प्राङ्मुखाः प्राद्रवन् पुनः। ते मूहूर्त्तात्ततो गत्वा श्रान्तवाहाः पिपासिताः। ५
नामृष्यन्त महेष्वासाः क्रोधामर्षवशङ्गताः। राज्ञो वधेन सन्तप्ता मुहूर्त्तं समवस्थिताः।
॥ धृतराष्ट्र उवाच ॥ अश्रद्धेयमिदं कर्म्म कृतं भीमेन सञ्जय। यत्स नागायुतप्राणः पुत्त्रो मम निपातितः।
अवध्यः सर्व्वभूतानां वज्रसंहननो युवा। पाण्डवैः समरे पुत्त्रो निहतो मम सञ्जय।
नादिष्टमभ्यतिक्रान्तुं शक्यं गावल्गणे नरैः। यत्समेत्य रणे पार्थैः पुत्त्रो मम निपातितः।
अद्रिसारमयं नूनं हृदयं मम सञ्जय। हतं पुत्त्रशतं श्रुत्वा यन्न दीर्णं सहस्रधा। १०
कथं हि वृद्धमिथुनं हतपुत्त्रं भविष्यति। न ह्यहं पाण्डवेयस्य विषये वस्तुमुत्सहे।
कथं राज्ञः पिता भूत्वा स्वयं राजा च सञ्जय। प्रेष्यभूतः प्रवर्त्तेयं पाण्डवेयस्य शासनात्।
आज्ञाप्य पृथिवीं सर्व्वां स्थित्वा मूर्द्धनि सञ्जय। येन पुत्त्रशतं पूर्णमेकेन निहतं मम।
कृतं सत्यं वचस्तस्य विदुरस्य महात्मनः। अकुर्व्वता वचस्तेन मम पुत्त्रेण सञ्जय।
कथमस्य भविष्यामि प्रेष्यभूतो दुरन्तकृत्। कथं भीमस्य वाक्यानि श्रोतुं शक्यामि सञ्जय। १५
अधर्म्मेण हते तात पुत्त्रे दुर्य्योधने मम। कृतवर्म्मा कृपो द्रौणिः किमकुर्व्वत सञ्जय।
॥ सञ्जय उवाच ॥ गत्वा तु तावका राजन्नातिदूरमवस्थिताः। अपश्यन्त वनं घोरं नानाद्रुमलताकुलं।
ते मुहूर्त्तन्तु विश्रम्य लब्धतोयैर्हयोत्तमैः। सूर्य्यास्तमनवेलायां समासेदुर्म्महद्वनं।
नानामृगगणैर्जुष्टं नानापक्षिगणावृतं। नानाद्रुमलताच्छन्नं नानाव्यालनिषेवितं।

नानातोयैः समाकीर्णं नानापुष्पोपशोभितं । पद्मिनीशतसञ्छन्नं नीलोत्पलसमावृतं । २०
प्रविश्य तद्वनं घोरं वीक्षमाणाः समन्ततः । शाखासहस्रसञ्छन्नं न्यग्रोधं ददृशुस्ततः ।
उपेत्य तु तदा राजन् न्यग्रोधं ते महारथाः । ददृशुर्द्विपदां श्रेष्ठाः श्रेष्ठं तं वै वनस्पतिं ।
तेऽवतीर्य्य रथेभ्यश्च विप्रमुच्य च वाजिनः । उपस्पृश्य यथान्यायं सन्ध्यामन्वासत प्रभो ।
ततोऽस्तं पर्व्वतश्रेष्ठमनुप्राप्ते दिवाकरे । सर्व्वस्य जगतो धात्री शर्व्वरी समपद्यत ।
ग्रहनक्षत्रताराभिः सम्पूर्णाभिरलङ्कृतं । नभोंऽशुकमिवाभाति प्रेक्षणीयं समन्ततः । २५
इच्छया ते प्रवल्गन्ति ये सत्वा रात्रिचारिणः । दिवाचराश्च ये सत्वास्ते निद्रावशमागताः ।
रात्रिञ्चराणां सत्वानां निर्घोषोऽभूत्सुदारुणः । क्रव्यादाश्च प्रमुदिता घोरा प्राप्ता च शर्व्वरी ।
तस्मिन्रात्रिमुखे घोरे दुःखशोकसमन्विताः । कृतवर्म्मा कृपो द्रौणिरुपोपविविशुः समं ।
तत्रोपविष्टाः शोचन्तो न्यग्रोधस्य समीपतः । तमेवार्थमतिक्रान्तं कुरुपाण्डवयोः क्षयं ।
निद्रया च परीताङ्गा निषेदुर्धरणीतले । श्रमेण सुदृढं युक्ता विक्षता विविधैः शरैः । ३०
ततो निद्रावशं प्राप्तौ कृपभोजौ महारथौ । सुखोचितावदुःखार्हौ निषण्णौ धरणीतले ।
तौ तु सुप्तौ महाराज श्रमशोकसमन्वितौ । महार्हशयनोपेतौ भूमावेव ह्यनाथवत् ।
क्रोधामर्षवशं प्राप्तो द्रोणपुत्रस्तु भारत । न वै स्म स जगामाथ निद्रां सर्प इव श्वसन् ।
न लेभे स तु निद्रां वै दह्यमानो हि मन्युना । वीक्षाञ्चक्रे महाबाहुस्तद्वनं घोरदर्शनं ।
वीक्षमाणो वनोद्देशं नानासत्वैर्निषेवितं । अपश्यत महाबाहुर्न्यग्रोधं वायसैर्वृतं । ३५
तत्र काकसहस्राणि तां निशां पर्य्यणामयन् । सुखं स्वपन्ति कौरव्य पृथक्पृथगुपाश्रयाः ।
सुप्तेषु तेषु काकेषु विस्रब्धेषु समन्ततः । सोऽपश्यत् सहसायान्तमुलूकं घोरदर्शनं ।
महास्वनं महाकायं हर्य्यक्षं बभ्रुपिङ्गलं । सुदीर्घघोणानखरं सुपर्णमिव वेगितं ।
सोऽथ शब्दं मृदुं कृत्वा लीयमान इवाण्डजः । न्यग्रोधस्य ततः शाखां प्रार्थयामास भारत ।
सन्निपत्य तु शाखायां न्यग्रोधस्य विहङ्गमः । सुप्तान् जघान सुबहून् वायसान् वायसान्तकः । ४०
केषाञ्चिदच्छिनत्पक्षांश्छिरांसि च चकर्त्त ह । चरणांश्चैव केषाञ्चिद्बभञ्ज चरणायुधः ।
क्षणेनाहत्य बलवान् येऽस्य दृष्टिपथे स्थिताः । तेषां शरीरावयवैः शरीरैश्च विशाम्पते ।
न्यग्रोधमण्डलं सर्व्वं सञ्छन्नं सर्व्वतोऽभवत् । तांस्तु हत्वा ततः काकान् कौशिको मुदितोऽभवत् ।
प्रतिकृत्य यथाकामं शत्रूणां शत्रुसूदनः । तद्दृष्ट्वा सोपधं कर्म्म कौशिकेन कृतं निशि ।
तद्भावे कृतसङ्कल्पो द्रौणिरेकोऽनुचिन्तयत् । उपदेशः कृतोऽनेन पक्षिणा मम संयुगे । ४५
शत्रूणां क्षयणे युक्तः प्राप्तः कालश्च मे मतः । नाद्य शक्या मया हन्तुं पाण्डवा जितकाशिनः ।
बलवन्तः कृतोत्साहाः प्राप्तलक्षाः प्रहारिणः । राज्ञः सकाशात्तेषान्तु प्रतिज्ञातो बधो मया ।
पतङ्गाग्निसमां वृत्तिमास्थयात्मविनाशिनीं । न्यायतो युध्यमानस्य प्राणत्यागो न संशयः ।
छद्मना च भवेत् सिद्धिः शत्रूणाञ्च क्षयो महान् । ततः संशयितादर्थाद्योऽर्थो निःसंशयो भवेत् ।

ते जना बहु मन्यन्ते ये च शास्त्रविशारदाः। यच्चाप्यत्र भवेद्वाच्यं गर्हितं लोकनिन्दितं। ५०
कर्त्तव्यं तन्मनुष्येण क्षत्रधर्म्मेण वर्त्तता। निन्दितानि च सर्व्वाणि कुत्सितानि पदे पदे।
सोपधानि कृतान्येव पाण्डवैरकृतात्मभिः। अस्मिन्नर्थे पुरा गीताः श्रूयन्ते धर्म्मचिन्तकैः।
श्लोका न्यायमवेक्षद्भिस्तत्त्वार्थास्तत्त्वदर्शिभिः। परिश्रान्ते विदीर्णे वा भुञ्जाने वाऽपि शत्रुभिः।
प्रस्थाने वा प्रवेशे वा प्रहर्त्तव्यं रिपोर्ब्बलं। निद्रार्त्तमर्द्धरात्रे च तथा नष्टप्रणायकं।
भिन्नयोधं बलं यच्च द्विधा युक्तञ्च यद्भवेत्। इत्येवं निश्चयं चक्रे सुप्तानां निशि मारणे। ५५
पाण्डूनां सह पाञ्चालैर्द्रोणपुत्त्रः प्रतापवान्। स क्रूरां मतिमास्थाय विनिश्चित्य मुहुर्मुहुः।
सुप्तौ प्राबोधयत्तौ तु मातुलं भोजमेव च। तौ प्रबुद्धौ महात्मानौ कृपभोजौ महाबलौ।
नोत्तरं प्रतिपद्येतां तत्र युक्तं ह्रिया वृतौ। स मुहूर्त्तमिव ध्यात्वा वाष्पविह्वलमब्रवीत्।
हतो दुर्य्योधनो राजा एकवीरो महाबलः। यस्यार्थे वैरमस्माभिरासक्तं पाण्डवैः सह।
एकाकी बहुभिः क्षुद्रैराहवे शुद्धविक्रमः। पातितो भीमसेनेन एकादशचमूपतिः। ६०
वृकोदरेण क्षुद्रेण सुनृशंसमिदं कृतं। मूर्द्धाभिषिक्तस्य शिरः पादेन परिमृद्नता।
विनर्द्दन्ति च पाञ्चालाः क्ष्वेलन्ति च हसन्ति च। धमन्ति शङ्खान् शतशो हृष्टा घ्नन्ति च दुन्दुभीन्।
वादित्रघोषस्तुमुलो विमिश्रः शङ्खनिःस्वनैः। अनिलेनेरितो घोरो दिशः पूरयतीव ह।
अश्वानां हेषमाणानां गजानाञ्चैव वृंहतां। सिंहनादश्च शूराणां श्रूयते सुमहानयं।
दिशं प्राचीं समाश्रित्य हृष्टानां गच्छतां भृशं। रथनेमिस्वनाश्चैव श्रूयन्ते लोमहर्षणाः। ६५
पाण्डवैर्धार्त्तराष्ट्राणां यदिदं कदनं कृतं। वयमेव त्रयः शिष्टा अस्मिन्महति वैशसे।
केचिन्नागशतप्राणाः केचित् सर्व्वास्त्रकोविदाः। निहताः पाण्डवेयैस्ते मन्ये कालस्य पर्य्ययं।
एवमेतेन भाव्यं हि नूनं कार्य्येण तत्त्वतः। यथा ह्यस्येदृशी निष्ठा कृते कार्य्येऽपि दुष्करे।
भवतोस्तु यदि प्रज्ञा न मोहादपनीयते। व्यापन्नेऽस्मिन्महत्यर्थे यन्नः श्रेयस्तदुच्यतां।
इति श्रीमहाभारते सौप्तिकपर्व्वणि द्रौणिमन्त्रणायां प्रथमोऽध्यायः॥ १ ॥
॥ कृप उवाच ॥ श्रुतन्ते वचनं सर्व्वं यद्यदुक्तं त्वया विभो। ममापि तु वचः किञ्चिच्छृणुष्वाद्य महाभुज। ७०
आबद्धा मानुषाः सर्व्वे निबद्धाः कर्म्मणोर्द्वयोः। दैवे पुरुषकारे च परं ताभ्यां न विद्यते।
नहि दैवेन सिध्यन्ति कार्य्याण्येकेन सत्तम। न चापि कर्म्मणैकेन द्वाभ्यां सिद्धिस्तु योगतः।
ताभ्यामुभाभ्यां सर्व्वार्था निबद्धा अधमोत्तमाः। प्रवृत्ताश्चैव दृश्यन्ते निवृत्ताश्चैव सर्व्वशः।
पर्ज्जन्यः पर्व्वते वर्षन् किन्नु साधयते फलं। कृष्टे क्षेत्रे तथा वर्षन् किं न साधयते फलं।
उत्थानञ्चापि दैवस्य ह्यनुत्थानञ्च दैवतं। व्यर्थं भवति सर्व्वत्र पूर्व्वस्तत्र विनिश्चयः। ७५
सुवृष्टे च यथा देवे सम्यक् क्षेत्रे च कर्षिते। वीजं महागुणं भूयात्तथा सिद्धिर्हि मानुषी।
तयोर्दैवं विनिश्चित्य स्ववशश्चैव प्रवर्त्तते। प्राज्ञाः पुरुषकारे तु वर्त्तन्ते दाक्ष्यमाश्रिताः।
ताभ्यां सर्व्वे हि कार्य्यार्था मनुष्याणां नरर्षभ। विचेष्टन्तः स्म दृश्यन्ते निवृत्तास्तु तथैव च।

कृतः पुरुषकारस्तु सोऽपि दैवेन सिध्यति । तथाऽस्य कर्म्मणः कर्त्तुरभिनिर्वर्त्तते फलं ।
उत्थानञ्च मनुष्याणां दक्षाणां दैववर्ज्जितं । अफलं दृश्यते लोके सम्यगप्युपपादितं । ८०
तत्रालसा मनुष्याणां ये भवन्त्यमनस्विनः । उत्थानन्ते विगर्हन्ति प्राज्ञानान्तन्न रोचते ।
प्रायशो हि कृतं कर्म्म नाफलं दृश्यते भुवि । अकृत्वा च पुनर्दुःखं कर्म्म पश्येन्महाफलं ।
चेष्टामकुर्व्वंल्लभते यदि किञ्चिद्यदृच्छया । यो वा न लभते कृत्वा दुर्दर्शौ तावुभावपि ।
शक्नोति जीवितुं दक्षो नालसः सुखमेधते । दृश्यन्ते जीवलोकेऽस्मिन्दक्षाः प्रायो हितैषिणः ।
यदि दक्षः समारम्भात् कर्म्मणो नाश्नुते फलं । नास्य वाच्यं भवेत् किञ्चित् लब्धव्यं वाऽधिगच्छति । ८५
अकृत्वा कर्म्म यो लोके फलं विन्दति धिष्ठितः । स तु वक्तव्यतां याति द्वेष्यो भवति भूयशः ।
एवमेतदनादृत्य वर्त्तते यस्त्वतोऽन्यथा । स करोत्यात्मनोऽनर्थानेष बुद्धिमतां नयः ।
हीनं पुरुषकारेण यदा दैवेन वा पुनः । कारणाभ्यामथैताभ्यामुत्थानमफलं भवेत् ।
हीनं पुरुषकारेण कर्म्मत्विह न सिध्यति । दैवतेभ्यो नमस्कृत्य यस्त्वर्थान् सम्यगीहते ।
दक्षो दाक्षिण्यसम्पन्नो न स मोघैर्व्विहन्यते । सम्यगीहा पुनरियं यो वृद्धानुपसेवते । ९०
आपृच्छति च यच्छ्रेयः करोति च हितं वचः । उत्थायोत्थाय हि सदा प्रष्टव्या वृद्धसम्मताः ।
ते स्म योगे परं मूलं तन्मूला सिद्धिरुच्यते । वृद्धानां वचनं श्रुत्वा योऽभ्युत्थानं प्रयोजयेत् ।
उत्थानस्य फलं सम्यक् तदा स लभते चिरात् । रागात् क्रोधाद्भयाल्लोभाद्योऽर्थानीहति मानवः ।
अनीशश्चावमानी च स शीघ्रं भ्रश्यते श्रियः । सोऽयं दुर्य्योधनेनार्थो लुब्धेनादीर्घदर्शिना ।
असमर्थः समारब्धो मूढत्वादपि चिन्तितः । हितबुद्धीननादृत्य संमन्त्र्यासाधुभिः सह । ९५
वार्य्यमाणोऽकरोद्वैरं पाण्डवैर्गुणवत्तरैः । पूर्व्वमप्यतिदुःशीलो न धैर्य्यं कर्त्तुमर्हति ।
तपत्यर्थे विपन्ने हि मित्राणां न कृतं वचः । अनुवर्त्तामहे यत्तु तं वयं पापपूरुषं ।
अस्मानप्यनयस्तस्मात् प्राप्तोऽयं दारुणो महान् । अनेन तु ममाद्यापि व्यसनेनोपतापिता ।
बुद्धिश्चिन्तयतः किञ्चित् स्वं श्रेयो नावबुध्यते । मुह्यता तु मनुष्येण प्रष्टव्याः सुहृदो जनाः ।
तत्रास्य बुद्धिर्व्विनयस्तत्र श्रेयश्च पश्यति । ततोऽस्य मूलं कार्य्याणां बुद्ध्या निश्चित्य वै बुधाः । १००
तेऽत्र पृष्टा यथा ब्रूयुस्तत्कर्त्तव्यं तथा भवेत् । ते वयं धृतराष्ट्रञ्च गान्धारीञ्च समेत्य ह ।
उपपृच्छामहे गत्वा विदुरञ्च महामतिं । ते पृष्टास्तु वदेयुर्यच्छ्रेयो नः समनन्तरं ।
तदस्माभिः पुनः कार्य्यं इति मे नैष्ठिकी मतिः । अनारम्भात्तु कार्य्याणां नार्थः सम्पद्यते क्वचित् ।
कृते पुरुषकारे तु येषां कार्य्यं न सिध्यति । दैवेनोपहतास्ते तु नात्र कार्य्या विचारणा ।
इति श्रीमहाभारते सौप्तिकपर्व्वणि द्रौणिकृपसंवादे द्वितीयोऽध्यायः ॥ २ ॥
॥ सञ्जय उवाच ॥ कृपस्य वचनं श्रुत्वा धर्म्मार्थसहितं शुभं । अश्वत्थामा महाराज दुःखशोकसमन्वितः । १०५
दह्यमानस्तु शोकेन प्रदीप्तेनाग्निना यथा । क्रूरं मनस्ततः कृत्वा तावुभौ प्रत्यभाषत ।
पुरुषे पुरुषे बुद्धिर्या या भवति शोभना । तुष्यन्ति च पृथक् सर्व्वे प्रज्ञया ते स्वया स्वया ।

सर्व्वो हि मन्यते लोक आत्मानं बुद्धिमत्तरं । सर्व्वस्यात्मा बहुमतः सर्व्वात्मानं प्रशंसति ।
सर्व्वस्य हि स्वका प्रज्ञा साधुवादे प्रतिष्ठिता । परबुद्धिञ्च निन्दन्ति स्वां प्रशंसन्ति चासकृत् ।
कारणान्तरयोगेन योगे येषां समागतिः । अन्योन्येन च तुष्यन्ति बहुमन्यन्ति चासकृत् । ११०
तस्यैव तु मनुष्यस्य सा सा बुद्धिस्तदा तदा । कालयोगे विपर्य्यासं प्राप्यान्योन्यं विपद्यते ।
विचित्रत्वात्तु चित्तानां मनुष्याणां विशेषतः । चित्तवैकल्यमासाद्य सा सा बुद्धिः प्रजायते ।
यथा हि वैद्यः कुशलो ज्ञात्वा व्याधिं यथाविधि । भेषजं कुरुते योगात् प्रशमार्थमिति प्रभो ।
एवं कार्य्यस्य योगार्थं बुद्धिं कुर्व्वन्ति मानवाः । प्रज्ञया हि स्वया युक्तास्ताञ्च निन्दन्ति मानवाः ।
अन्यया यौवने मर्त्यो बुद्ध्या भवति मोहितः । मध्येऽन्यया जरायान्तु सोऽन्यां रोचयते मतिं । ११५
व्यसनं वा महाघोरं समृद्धिञ्चापि तादृशीं । अवाप्य पुरुषो भोज कुरुते बुद्धिवैकृतिं ।
एकस्मिन्नेव पुरुषे सा सा बुद्धिस्तदा तदा । भवत्यकृतकर्त्वात् सा तस्यैव न रोचते ।
निश्चित्य तु यथाप्रज्ञं यां मतिं साधु पश्यति । तया प्रकुरुते भावं सा तस्योद्योगकारिका ।
सर्व्वो हि पुरुषो भोज साध्वेतदिति निश्चितः । कर्त्तुमारभते प्रीतो मारणादिषु कर्म्मसु ।
सर्व्वे हि बुद्धिमाज्ञाय प्रज्ञाञ्चापि स्वकां नराः । चेष्टन्ते विविधाश्चेष्टा हितमित्येव जानते । १२०
उपजाता व्यसनजा येयमद्य मतिर्मम । युवयोस्तां प्रवक्ष्यामि मम शोकविनाशिनीं ।
प्रजापतिः प्रजाः सृष्ट्वा कर्म्म तासु विधाय च । वर्णे वर्णे समाधत्ते ह्येकैकं गुणभाग्गुणं ।
ब्राह्मणे वेदमग्र्यन्तु क्षत्रिये तेज उत्तमं । दाक्ष्यं वैश्ये च शूद्रे च सर्व्ववर्णानुकूलता ।
अदान्तो ब्राह्मणोऽसाधुर्न्निस्तेजाः क्षत्रियोऽधमः । अदक्षो निन्द्यते वैश्यः शूद्रश्च प्रतिकूलवान् ।
सोऽस्मि जातः कुलश्रेष्ठे ब्राह्मणानां सुपूजिते । मन्दभाग्यतयास्म्येनं क्षत्रधर्म्ममनुष्ठितः । १२५
क्षत्रधर्म्मं विदित्वाऽहं यदि ब्राह्मण्यमाश्रितः । प्रकुर्य्यां सुमहत् कर्म्म न मे तत् साधुसम्मतं ।
धारयंश्च धनुर्दिव्यं दिव्यान्यस्त्राणि चाहवे । पितरं निहतं दृष्ट्वा किं नु वक्ष्यामि संसदि ।
सोऽहमद्य यथाकामं क्षत्रधर्म्ममुपास्य तं । गन्ताऽस्मि पदवीं राज्ञः पितुश्चापि महात्मनः ।
अद्य स्वप्स्यन्ति पाञ्चाला विश्वस्ता जितकाशिनः । विमुक्तयुग्यकवचा हर्षेण च समन्विताः ।
जयं मत्वात्मनश्चैव श्रान्ता व्यायामकर्षिताः । तेषां निशि प्रसुप्तानां सुस्थानां शिबिरे स्वके । १३०
अवस्कन्दं करिष्यामि शिबिरस्याद्य दुष्करं । तानवस्कन्द्य शिबिरे प्रेतभूतान् विचेतसः ।
सूदयिष्यामि विक्रम्य मघवानिव दानवान् । अद्य तान् सहितान् सर्व्वान् धृष्टद्युम्नपुरोगमान् ।
सूदयिष्यामि विक्रम्य कक्षं दीप्त इवानलः । निहत्य चैव पाञ्चालान् शान्तिं लब्धाऽस्मि सत्तम ।
पाञ्चालेषु भविष्यामि सूदयन्नद्य संयुगे । पिनाकपाणिः संक्रुद्धः स्वयं रुद्रः पशुष्विव ।
अद्याहं सर्व्वपाञ्चालान्निहत्य च निकृत्य च । अर्द्दयिष्यामि संहृष्टो रणे पाण्डुसुतांस्तथा । १३५
अद्याहं सर्व्वपाञ्चालैः कृत्वा भूमिं शरीरिणीं । प्रहृत्यैकैकशस्तेषु भविष्याम्यनृणः पितुः ।
दुर्य्योधनस्य कर्णस्य भीष्मसैन्धवयोरपि । गमयिष्यामि पाञ्चालान् पदवीमद्य दुर्गमां ।

अद्य पाञ्चालराजस्य धृष्टद्युम्नस्य वै निशि। न चिरात् प्रमथिष्यामि पशोरिव शिरो बलात्।
अद्य पाञ्चालपाण्डूनां शयितानात्मजान्निशि। खड्गेन निशितेनाजौ प्रमथिष्यामि गौतम।
अद्य पाञ्चालसेनान्तां निहत्य निशि सौप्तिके। कृतकृत्यः सुखी चैव भविष्यामि महामते। १४०
इति श्रीमहाभारते सौप्तिकपर्व्वणि द्रौणिमन्त्रणायां तृतीयोऽध्यायः॥ ३ ॥
॥ कृप उवाच ॥ दिष्ट्या ते प्रतिकर्त्तव्ये मतिर्यातेयमच्युत। न त्वां वारयितुं शक्तो वज्रपाणिरपि स्वयं।
अनुयास्यावहे त्वान्तु प्रभाते सहितावुभौ। अद्य रात्रौ विश्रमस्व विमुक्तकवचध्वजः।
अहं त्वामनुयास्यामि कृतवर्म्मा च सात्वतः। परानभिमुखं यान्तं रथावास्थाय दंशितौ।
आवाभ्यां सहितः शत्रून् श्वो निहन्ता समागमे। विक्रम्य रथिनां श्रेष्ठ पाञ्चालान् सपदानुगान्।
शक्तस्त्वमसि विक्रम्य विश्रमस्व निशामिमां। चिरन्ते जाग्रतस्तात स्वप तावन्निशामिमां। १४५
विश्रान्तश्च विनिद्रश्च स्वस्थचित्तश्च मानद। समेत्य समरे शत्रून् वधिष्यसि न संशयः।
नहि त्वां रथिनां श्रेष्ठं प्रगृहीतवरायुधं। जेतुमुत्सहते कश्चिदपि देवेषु वासवः।
कृपेण सहितं यान्तं गुप्तञ्च कृतवर्म्मणा। को द्रौणिं युधि संरब्धं योधयेदपि देवराट्।
ते वयं निशि विश्रान्ता विनिद्रा विगतज्वराः। प्रभातायां रजन्यां वै निहनिष्याम शात्रवान्।
तव शस्त्राणि दिव्यानि मम चैव न संशयः। सात्वतोऽपि महेष्वासो नित्यं युद्धेषु कोविदः। १५०
ते वयं सहितास्तात सर्व्वान् शत्रून् समागतान्। प्रसह्य समरे हत्वा प्रीतिं प्राप्स्याम पुष्कलां।
विश्रमस्व त्वमव्यग्रः स्वप चेमां निशां सुखं। अहञ्च कृतवर्म्मा च त्वां प्रयान्तं नरोत्तमं।
अनुयास्याव सहितौ धन्विनौ परतापनौ। रथिनं त्वरया यान्तं रथमास्थाय दंशितौ।
स गत्वा शिविरं तेषां नाम विश्राव्य चाहवे। ततः कर्त्तासि शत्रूणां युध्यतां कदनं महत्।
कृत्वा च कदनं तेषां प्रभाते विमलेऽहनि। विहरस्व यथा शक्रः सूदयित्वा महासुरान्। १५५
त्वं हि शक्तो रणे जेतुं पाञ्चालानां वरूथिनीं। दैत्यसेनामिव क्रुद्धः सर्व्वदानवसूदनः।
मया त्वां सहितं संख्ये गुप्तञ्च कृतवर्म्मणा। न सहेत विभुः साक्षाद्वज्रपाणिरपि स्वयं।
न चाहं समरे तात कृतवर्म्मा न चैव हि। अनिर्ज्जित्य रणे पाण्डूनपयास्यामि कर्हिचित्।
हत्वा च समरे क्रुद्धान् पाञ्चालान् पाण्डुभिः सह। निवर्त्तिष्यामहे सर्व्वे हता वा स्वर्गगा वयं।
सर्व्वोपायैः सहायास्ते प्रभाते वयमाहवे। सत्यमेतन्महाबाहो प्रब्रवीमि तवानघ। १६०
एवमुक्तस्ततो द्रौणिर्म्मातुलेन हितं वचः। अब्रवीन्मातुलं राजन् क्रोधसंरक्तलोचनः।
आतुरस्य कुतो निद्रा नरस्यामर्षितस्य च। अर्थांश्चिन्तयतश्चापि कामयानस्य वा पुनः।
तदिदं समनुप्राप्तं पश्य मेऽद्य चतुष्टयं। यस्य भागश्चतुर्थो मे स्वप्नमह्नाय नाशयेत्।
किं नाम दुःखं लोकेऽस्मिन् पितुर्व्वधमनुस्मरन्। हृदयं निर्द्दहन् मेऽद्य रात्र्यहानि न शाम्यति।
यथा च निहतः पापैः पिता मम विशेषतः। प्रत्यक्षमपि ते सर्व्वं तन्मे मर्म्माणि कृन्तति। १६५
कथं हि मादृशो लोके मुहूर्त्तमपि जीवति। द्रोणो हतेति यद्वाचः पाञ्चालानां शृणोम्यहं।

धृष्टद्युम्नमहत्वा तु नाहं जीवितुमुत्सहे। स मे पितुर्व्वधाद्वध्यः पाञ्चाला ये च सङ्गताः।
विलापो भग्नसक्थस्य यस्तु राज्ञो मया श्रुतः। स पुनर्हृदयं कस्य क्रूरस्यापि न निर्दहेत्।
कस्य ह्यकरुणस्यापि नेत्राभ्यामश्रु नाव्रजेत्। नृपतेर्भग्नसक्थस्य श्रुत्वा तादृग्वचः पुनः।
यश्चायं मित्रपक्षो मे मयि जीवति निर्ज्जितः। शोकं मे वर्द्धयत्येव वारिवेग इवार्णवं। १००
एकाग्रमनसो मे च कुतो निद्रा कुतः सुखं। वासुदेवार्ज्जुनाभ्यां च तानहं परिरक्षितान्।
अविषह्यतमान्मन्ये महेन्द्रेणापि सत्तम। न चापि शक्तः संयन्तुं कोपमेतं समुत्थितं।
तं न पश्यामि लोकेऽस्मिन् यो मां कोपान्निवर्त्तयेत्। तथैवं निश्चिता बुद्धिरेषा साधुमता मम।
वार्त्तिकैः कथ्यमानस्तु मित्राणां मे पराभवः। पाण्डवानाञ्च विजयो हृदयं दहतीव मे।
अहन्तु कदनं कृत्वा शत्रूणामद्य सौप्तिके। ततो विश्रमिता चैव स्वप्ता च विगतज्वरः। १०५
इति श्रीमहाभारते सौप्तिकपर्व्वणि द्रौणिमन्त्रणायां चतुर्थोऽध्यायः॥ ४॥
॥ कृप उवाच॥ शुश्रूषुरपि दुर्म्मेधाः पुरुषो नियतेन्द्रियः। नालं वेदयितुं कृत्स्नौ धर्म्मार्थाविति मे मतिः।
तथैव तावन्मेधावी विनयं यो न शिक्षते। न च किञ्चन जानाति सोऽपि धर्म्मार्थनिश्चयं।
चिरं ह्यपि जडः शूरः पण्डितं पर्य्युपास्य ह। न स धर्म्मान् विजानाति दर्वी सूपरसानिव।
मुहूर्त्तमपि तं प्राज्ञः पण्डितं पर्य्युपास्य हि। क्षिप्रं धर्म्मान् विजानाति जिह्वा सूपरसानिव।
शुश्रूषुस्त्वेव मेधावी पुरुषो नियतेन्द्रियः। जानीयादागमान् सर्व्वान् ग्राह्यं न च विरोधयेत्। ११०
अनेयस्त्ववमानी यो दुरात्मा पापपूरुषः। दिष्टमुत्सृज्य कल्याणं करोति बहु पापकं।
नाथवन्तन्तु सुहृदः प्रतिषेधन्ति पातकात्। निवर्त्तते तु लक्ष्मीवानलक्ष्मीवान्निवर्त्तते।
यथा ह्युच्चावचैर्व्वाक्यैः क्षिप्तचित्तो नियम्यते। तथैव सुहृदा शक्यो न शक्यस्त्ववसीदति।
तथैव सुहृदं प्राज्ञं कुर्व्वाणं कर्म्म पापकं। प्राज्ञाः सम्प्रतिषेधन्ति यथाशक्ति पुनः पुनः।
स कल्याणे मनः कृत्वा नियम्यात्मानमात्मना। कुरु मे वचनं तात येन पश्चान्न तप्यसे। ११५
न वधः पूज्यते लोके सुप्तानामिह धर्म्मतः। तथैवापास्तशस्त्राणां विमुक्तरथवाजिनां।
ये च ब्रूयुस्तवास्मीति ये च स्युः शरणागताः। विमुक्तमूर्द्धजा ये च ये चापि हतवाहनाः।
अद्य स्वप्स्यन्ति पाञ्चाला विमुक्तकवचा विभो। विश्वस्ता रजनीं सर्व्वे प्रेता इव विचेतसः।
यस्तेषां तदवस्थानां द्रुह्येत पुरुषोऽनृजुः। व्यक्तं स नरके मज्जेदगाधे विपुलेऽप्लवे।
सर्व्वास्त्रविदुषां लोके श्रेष्ठस्त्वमसि विश्रुतः। न च ते जातु लोकेऽस्मिन् सुसूक्ष्ममपि किल्बिषं। १२०
त्वं पुनः सूर्य्यसङ्काशः श्वोभूत उदिते रवौ। प्रकाशे सर्व्वभूतानां विजेता युधि शात्रवान्।
असम्भावितरूपं हि त्वयि कर्म्म विगर्हितं। शुक्ले रक्तमिव न्यस्तं भवेदिति मतिर्म्मम।
॥ अश्वत्थामोवाच॥ एवमेव यथात्थ त्वं मातुलेह न संशयः। तैस्तु पूर्व्वमयं सेतुः शतधा विदलीकृतः।
प्रत्यक्षं भूमिपालानां भवताञ्चापि सन्निधौ। न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः।
कर्णश्च पतिते चक्रे रथस्य रथिनाम्वरः। उत्तमे व्यसने मग्नो हतो गाण्डीवधन्वना। १२५

तथा शान्तनवो भीष्मो न्यस्तशस्त्रो निरायुधः । शिखण्डिनं पुरस्कृत्य हतो गाण्डीवधन्वना ।
भूरिश्रवा महेष्वासस्तथा प्रायगतो रणे । क्रोशतां भूमिपालानां युयुधानेन पातितः ।
दुर्य्योधनश्च भीमेन समेत्य गदया रणे । पश्यतां भूमिपालानामधर्म्मेण निपातितः ।
एकाकी बहुभिस्तत्र परिवार्य्य महारथैः । अधर्म्मेण नरव्याघ्रो भीमसेनेन पातितः ।
विलापो भग्नसक्थस्य यो मे राज्ञः परिश्रुतः । वार्त्तिकानां कथयतां स मे मर्म्माणि कृन्तति । २००
एवञ्चाधार्म्मिकाः पापाः पाञ्चाला भिन्नसेतवः । तानेवं भिन्नमर्य्यादान् किं भवान्न विगर्हति ।
पितृहन्तॄनहं हत्वा पाञ्चालान्निशि सौप्तिके । कामं कीटः पतङ्गो वा जन्म प्राप्य भवामि वै ।
त्वरे चाहमनेनाद्य यदिदं मे चिकीर्षितं । तस्य मे त्वरमाणस्य कुतो निद्रा कुतः सुखं ।
न स जातः पुमाँल्लोके कश्चिन्न च भविष्यति । यो मे व्यावर्त्तयेदेतां वधे तेषां कृतां मतिं ।
॥ सञ्जय उवाच ॥ एवमुक्त्वा महाराज द्रोणपुत्रः प्रतापवान् । एकान्ते योजयित्वाऽश्वान् प्रायादभिमुखः परान् । २०५
तमब्रूतां महात्मानौ भोजशारद्वतावुभौ । किमयं स्यन्दनो युक्तः किञ्च कार्य्यं चिकीर्षितं ।
एकसार्थप्रयातौ स्वस्त्वया सह नरर्षभ । समदुःखसुखौ चापि नावां शङ्कितुमर्हसि ।
अश्वत्थामा तु संक्रुद्धः पितुर्व्वधमनुस्मरन् । ताभ्यां तथ्यं तथाचख्यौ यदस्यात्मचिकीर्षितं ।
हत्वा शतसहस्राणि योधानां निशितैः शरैः । न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ।
तं तथैव हनिष्यामि न्यस्तवर्म्माणमद्य वै । पुत्रं पाञ्चालराजस्य पापं पापेन कर्म्मणा । २१०
कथञ्च निहतः पापः पाञ्चाल्यः पशुवन्मया । शस्त्रेण विजितांल्लोकान्नाप्नुयादिति मे मतिः ।
क्षिप्रं सन्नद्धकवचौ सखड्गावात्तकार्म्मुकौ । मामास्थाय प्रतीक्षेतां रथवर्य्यौ परन्तपौ ।
इत्युक्त्वा रथमास्थाय प्रायादभिमुखः परान् । तमन्वयात् कृपो राजन् कृतवर्म्मा च सात्वतः ।
ते प्रयाता व्यरोचन्त परानभिमुखास्त्रयः । हूयमाना यथा यज्ञे समिद्धा हव्यवाहनाः ।
ययुश्च शिबिरं तेषां सम्प्रसुप्तजनं विभो । द्वारदेशन्तु सम्प्राप्य द्रौणिस्तस्थौ महारथः । २१५
इतिश्रीमहाभारते सौप्तिकपर्व्वणि द्रौणिगमने पञ्चमोऽध्यायः ॥ ५ ॥

॥ धृतराष्ट्र उवाच ॥ द्वारदेशे ततो द्रौणिमवस्थितमवेक्ष्य तौ । अकुर्व्वतां भोजकृपौ किं सञ्जय वदस्व मे ।
॥ सञ्जय उवाच ॥ कृतवर्म्माणमामन्त्र्य कृपञ्च स महारथः । द्रौणिर्मन्युपरीतात्मा शिबिरद्वारमागमत् ।
तत्र भूतं महाकायं चन्द्रार्कसदृशद्युतिं । सोऽपश्यद्द्वारमाश्रित्य तिष्ठन्तं लोमहर्षणं ।
वसानं चर्म्म वैयाघ्रं महारुधिरविस्रवं । कृष्णाजिनोत्तरासङ्गं नागयज्ञोपवीतिनं ।
बाहुभिः स्वायतैः पीनैर्नानाप्रहरणोद्यतैः । बद्धाङ्गदमहासर्पं ज्वालामालाकुलाननं । २२०
दंष्ट्राकरालवदनं व्यादितास्यं भयानकं । नयनानां सहस्रैस्तु विचित्रैरभिभूषितं ।
नैव तस्य वपुः शक्यं प्रवक्तुं वेश एव च । सर्व्वथा तु तदालक्ष्य स्फुटेयुरपि पर्व्वताः ।
तस्यास्यान्नासिकाभ्याञ्च श्रवणाभ्याञ्च सर्व्वशः । तेभ्यश्चाक्षिसहस्रेभ्यः प्रादुरासन् महार्च्चिषः ।
तथा तेजोमरीचिभ्यः शङ्खचक्रगदाधराः । प्रादुरासन् हृषीकेशाः शतशोऽथ सहस्रशः ।

तदत्यद्भुतमालोक्य भूतं लोकभयङ्करं। द्रौणिरव्यथितो दिव्यैरस्त्रवर्षैरवाकिरत्। २२५
द्रौणिमुक्ताञ्छरांस्तांस्तु तद्भूतं महदग्रसत्। उदधेरिव वार्य्योघान् पावको वडवामुखः।
अग्रसत्तांस्तथा भूतं द्रौणिना प्रहिताञ्छरान्। अश्वत्थामा तु सम्प्रेक्ष्य शरौघांस्तान्निरर्थकान्।
रथशक्तिं मुमोचास्मै दीप्तामग्निशिखामिव। सा तमाहत्य दीप्ताग्रा रथशक्तिरदीर्य्यत।
युगान्ते सूर्य्यमाहत्य महोल्केव दिवश्च्युता। अथ हेमत्सरुं दिव्यं खड्गमाकाशवर्च्चसं।
कोशात् समुद्वबर्हाशु बिलाद्दीप्तमिवोरगं। ततः खड्गवरं धीमान् भूताय प्राहिणोत्तदा। २३०
स तदासाद्य भूतं वै विलयं नकुलवद्ययौ। ततः स कुपितो द्रौणिरिन्द्रकेतुनिभां गदां।
ज्वलन्तीं प्राहिणोत्तस्मै भूतं तामपि चाग्रसत्। ततः सर्व्वायुधाभावे वीक्षमाणस्ततस्ततः।
अपश्यत् कृतमाकाशमनाकाशं जनार्द्दनैः। तदद्भुततमं दृष्ट्वा द्रोणपुत्रो निरायुधः।
अब्रवीदतिसन्तप्तः कृपवाक्यमनुस्मरन्। ब्रुवतामप्रियं पथ्यं सुहृदां न शृणोति यः।
स शोचत्यापदं प्राप्य यथाऽहमतिवर्त्य तौ। शास्त्रदृष्टानविद्वान् यः समतीत्य जिघांसति। २३५
स पथः प्रच्युतो धर्म्यात् कुपथे प्रतिहन्यते। गोब्राह्मणनृपस्त्रीषु सख्युर्मातुर्गुरोस्तथा।
हीनप्राणजडान्धेषु सुप्तभीतोत्थितेषु च। मत्तोन्मत्तप्रमत्तेषु न शस्त्राणि च पातयेत्।
इत्येवं गुरुभिः पूर्व्वमुपदिष्टं नृणां सदा। सोऽहमुत्क्रम्य पन्थानं शास्त्रदृष्टं सनातनं।
अमार्गेणैवमारभ्य घोरामापदमागतः। तां चापदं घोरतरां प्रवदन्ति मनीषिणः।
यदुद्यम्य महत् कृत्यं भयादपि निवर्त्तते। अशक्यं चैव तत् कर्त्तुं कर्म शक्तिबलादिह। २४०
न हि दैवाद्गरीयो वै मानुषं कर्म कथ्यते। मानुष्यं कुर्व्वतः कर्म यदि दैवान्न सिध्यति।
स पथः प्रच्युतो धर्म्याद्विपदं प्रतिपद्यते। प्रतिघातं ह्यविज्ञातं प्रवदन्ति मनीषिणः।
यदारभ्य क्रियां काञ्चिद्भयादिह निवर्त्तते। तदिदं दुष्प्रणीतेन भयं मां समुपस्थितं।
न हि द्रोणसुतः संख्ये निवर्त्तेत कथञ्चन। इदञ्च सुमहद्भूतं दैवदण्डमिवोद्यतं।
न चैतदभिजानामि चिन्तयन्नपि सर्व्वथा। ध्रुवं येयमधर्म्मे मे प्रवृत्ता कलुषा मतिः। २४५
तस्याः फलमिदं घोरं प्रतिघाताय कल्प्यते। तदिदं दैवविहितं मम संख्ये निवर्त्तनं।
नान्यत्र दैवादुद्यन्तुमिह शक्यं कथञ्चन। सोऽहमद्य महादेवं प्रपद्ये शरणं विभुं।
दैवदण्डमिमं घोरं स हि मे नाशयिष्यति। कपर्द्दिनं देवदेवमुमापतिमनामयं।
कपालमालिनं रुद्रं भगनेत्रहरं हरं। स हि देवोऽत्यगाद्देवांस्तपसा विक्रमेण च।
तस्माच्छरणमभ्येमि गिरिशं शूलपाणिनं। २५०

इति श्रीमहाभारते सौप्तिकपर्व्वणि द्रौणिचिन्तायां षष्ठोऽध्यायः॥ ६ ॥

॥ सञ्जय उवाच ॥ एवं सञ्चिन्तयित्वा तु द्रोणपुत्रो विशाम्पते। अवतीर्य्य रथोपस्थाद्देवेशं प्रणतः स्थितः।
॥ द्रौणिरुवाच ॥ उग्रं स्थाणुं शिवं रुद्रं शर्व्वमीशानमीश्वरं। गिरिशं वरदं देवं भवभावनमीश्वरं।
शितिकण्ठमजं शुक्रं दक्षक्रतुहरं हरं। विश्वरूपं विरूपाक्षं बहुरूपमुमापतिं।

श्मशानवासिनं दृप्तं महागणपतिं विभुं। खट्वाङ्गधारिणं रुद्रं जटिलं ब्रह्मचारिणं।
मनसा सुविशुद्धेन दुष्करेणाल्पचेतसा। सोऽहमात्मोपहारेण यक्ष्ये त्रिपुरघातिनं। २८५
स्तुतं स्तुत्यं स्तूयमानममोघं कृत्तिवाससं। विलोहितं नीलकण्ठमसह्यं दुर्निवारणं।
शक्रं ब्रह्मसृजं ब्रह्म ब्रह्मचारिणमेव च। व्रतवन्तं तपोनिष्ठमनन्तं तपतां गतिं।
बहुरूपं गणाध्यक्षं त्र्यक्षं पारिषदप्रियं। धनाध्यक्षं क्षितिमुखं गौरीहृदयवल्लभं।
कुमारपितरं पिङ्गं गोवृषोत्तमवाहनं। तनुवाससमत्युग्रमुमाभूषणतत्परं।
परं परेभ्यः परमं परं यस्मान्न विद्यते। इष्वस्त्रोत्तमभर्त्तारं दिगन्तं देशरक्षिणं। २९०
हिरण्यकवचं देवं चन्द्रमौलिविभूषणं। प्रपद्ये शरणं देवं परमेण समाधिना।
इमां चेदापदं घोरां तराम्यद्य सुदुस्तरां। सर्व्वभूतोपहारेण यक्ष्येऽहं शुचिना शुचिं।
इति तस्य व्यवसितं ज्ञात्वा योगात्सुकर्म्मणः। पुरस्तात्काञ्चनी वेदी प्रादुरासीन्महात्मनः।
तस्यां वेद्यां तदा राजंश्चित्रभानुरजायत। स दिशो विदिशः खञ्च ज्वालाभिरिव पूरयन्।
दीप्तास्यनयनाश्चात्र नैकपादशिरोभुजाः। रत्नचित्राङ्गदधराः समुद्यतकरास्तथा। २९५
द्विपशैलप्रतीकाशाः प्रादुरासन् महागणाः। श्ववराहोष्ट्ररूपाश्च हयगोमायुगोमुखाः।
ऋक्षमार्ज्जारवदना व्याघ्रद्वीपिमुखास्तथा। काकवक्त्राः प्लवमुखाः शुकवक्त्रास्तथैव च।
महाजगरवक्त्राश्च हंसवक्त्राः सितप्रभाः। दार्व्वाघाटमुखाश्चापि चाषवक्त्राश्च भारत।
कूर्म्मनक्रमुखाश्चैव शिशुमारमुखास्तथा। पारावतमुखाश्चैव मद्गुवक्त्रास्तथैव च।
हरिवक्त्राः क्रौञ्चमुखाः कपोतेभमुखास्तथा। महामकरवक्त्राश्च तिमिवक्त्रास्तथैव च। ३००
पाणिकर्णाः सहस्राक्षास्तथैव च महोदराः। निर्म्मांसाः काकवक्त्राश्च श्येनवक्त्राश्च भारत।
तथैवाशिरसो राजन्नृक्षवक्त्राश्च भारत। प्रदीप्तनेत्रजिह्वाश्च ज्वालाकर्णास्तथैव च।
ज्वालाकेशाश्च राजेन्द्र ज्वलद्रोमचतुर्भुजाः। मेषवक्त्रास्तथैवान्ये तथा छागमुखा नृप।
शङ्खाभाः शङ्खवक्त्राश्च शङ्खकर्णास्तथैव च। शङ्खमालापरिकराः शङ्खध्वनिसमस्वनाः।
जटाधराः पञ्चशिखास्तथा मुण्डाः कृशोदराः। चतुर्द्दंष्ट्राश्चतुर्जिह्वाः शङ्कुकर्णाः किरीटिनः। ३०५
मौञ्जीधराश्च राजेन्द्र तथा कुञ्चितमूर्द्धजाः। उष्णीषिणो मुकुटिनश्चारुवक्त्राः स्वलङ्कृताः।
पद्मोत्पलापीडधरास्तथा मुकुटधारिणः। माहात्म्येन च संयुक्ताः शतशोऽथ सहस्रशः।
शतघ्नीवज्रहस्ताश्च तथा मुषलपाणयः। भुशुण्डीपाशहस्ताश्च दण्डहस्ताश्च भारत।
पृष्ठेषु बद्धेषुधयश्चित्रवाणोत्कटास्तथा। सध्वजाः सपताकाश्च सघण्टाः सपरश्वधाः।
महापाशोद्यतकरास्तथा लगुडपाणयः। स्थूणाहस्ताः खड्गहस्ताः सर्पोच्छ्रितकिरीटिनः। ३१०
महासर्पाङ्गदधराश्चित्राभरणधारिणः। रजोध्वस्ताः पङ्कदिग्धाः सर्व्वे शुक्लाम्बरस्रजः।
नीलाङ्गाः पिङ्गलाङ्गाश्च मुण्डवक्त्रास्तथैव च। भेरीशङ्खमृदङ्गांश्च झर्झरानकगोमुखान्।
अवादयन् पारिषदाः प्रहृष्टाः कनकप्रभाः। गायमानास्तथैवान्ये नृत्यमानास्तथाऽपरे।

वल्गन्तः प्लवन्तश्च वल्गन्तश्च महारथाः । धावन्तो जवना मुण्डाः पवनोद्धूतमूर्द्धजाः ।
मत्ता इव महानागा विनदन्तो मुहुर्मुहुः । सुभीमा घोररूपाश्च शूलपट्टिशपाणयः । १८५
नानाविरागवसनाश्चित्रमाल्यानुलेपनाः । रत्नचित्राङ्गदधराः समुद्यतकरास्तथा ।
हन्तारो द्विषतां शूराः प्रसह्यासह्यविक्रमाः । पातारोऽसृग्वसाद्यानां मांसान्त्रकृतभोजनाः ।
चूडालाः कर्णिकाराश्च प्रहृष्टाः पिठरोदराः । अतिह्रस्वातिदीर्घाश्च प्रलम्बाश्चातिभैरवाः ।
विकटाः काललम्बोष्ठा बृहच्छेफास्थिपिण्डिकाः । महार्हनानामुकुटा मुण्डाश्च जटिलाः परे ।
सार्केन्दुग्रहनक्षत्रां द्यां कुर्युर्ये महीतले । उत्सहेरंश्च ये हन्तुं भूतग्रामं चतुर्विधं । १९०
ये च वीतभया नित्यं हरस्य भ्रुकुटीसहाः । कामकारकरा नित्यं त्रैलोक्यस्येश्वरेश्वराः ।
नित्यानन्दप्रमुदिता वागीशा वीतमत्सराः । प्राप्याष्टगुणमैश्वर्य्यं ये न यच्छन्ति वै स्मयं ।
येषां विस्मयते नित्यं भगवान् कर्म्मभिर्हरः । मनोवाक्कर्म्मभिर्युक्तैर्नित्यमाराधितश्च यैः ।
मनोवाक्कर्म्मभिर्भक्तान् पाति पुत्रानिवौरसान् । पिबन्तोऽसृग्वसास्त्वन्ये क्रुद्धा ब्रह्मद्विषां सदा ।
चतुर्व्विधात्मकं सोमं ये पिबन्ति च सर्व्वदा । श्रुतेन ब्रह्मचर्य्येण तपसा च दमेन च । १९५
ये समाराध्य शूलाङ्कं भवसायुज्यमागताः । यैरात्मभूतैर्भगवान् पार्व्वत्या च महेश्वरः ।
महाभूतगणैर्भुङ्क्ते भूतभव्यभवत्प्रभुः । नानावादित्रहसितक्ष्वेडितोत्क्रुष्टगर्ज्जितैः ।
संत्रासयन्तस्ते विश्वमश्वत्थामानमभ्ययुः । संस्तुवन्तो महादेवं भाः कुर्व्वाणाः सुवर्च्चसः ।
विवर्द्धयिषवो द्रौणेर्महिमानं महात्मनः । जिज्ञासमानास्तत्तेजः सौप्तिकञ्च दिदृक्षवः ।
भीमोग्रपरिघालातशूलपट्टिशपाणयः । घोररूपाः समाजग्मुर्भूतसङ्घाः समन्ततः । २००
जनयेयुर्भयं ये स्म त्रैलोक्यस्यापि दर्शनात् । तान् प्रेक्षमाणोऽपि व्यथां न चकार महाबलः ।
अथ द्रौणिर्धनुष्पाणिर्बद्धगोधाङ्गुलित्रवान् । स्वयमेवात्मनात्मानमुपहारमुपाहरत् ।
धनूंषि समिधस्तत्र पवित्राणि शिताः शराः । हविरात्मवतश्चात्मा तस्मिन् भारत कर्म्मणि ।
ततः सौम्येन मन्त्रेण द्रोणपुत्रः प्रतापवान् । उपहारं महामन्युरथात्मानमुपाहरत् ।
तं रुद्रं रौद्रकर्म्माणं रौद्रैः कर्म्मभिरच्युतं । अभिष्टुत्य महात्मानमित्युवाच कृताञ्जलिः । २०५
॥ द्रौणिरुवाच ॥ इममात्मानमद्याहं जातमाङ्गिरसे कुले । स्वग्नौ जुहोमि भगवन् प्रतिगृह्णीष्व मां बलिं ।
भवद्भक्त्या महादेव परमेण समाधिना । अस्यामापदि विश्वात्मन्नुपाकुर्म्मि तवाग्रतः ।
त्वयि सर्व्वाणि भूतानि सर्व्वभूतेषु चासि वै । गुणानां हि प्रधानानामेकत्वं त्वयि तिष्ठति ।
सर्व्वभूताश्रय विभो हविर्भूतमवस्थितं । प्रतिगृहाण मां देव यद्यशक्याः परे मया ।
इत्युक्त्वा द्रौणिरास्थाय तां वेदीं दीप्तपावकां । सन्त्यक्तात्मा समारुह्य कृष्णवर्त्मन्युपाविशत् । २१०
तमूर्द्ध्वबाहुं निश्चेष्टं दृष्ट्वा हविरुपस्थितं । अब्रवीद्भगवान् साक्षान्महादेवो हसन्निव ।
सत्यशौचार्ज्जवत्यागैस्तपसा नियमेन च । क्षान्त्या भक्त्या च धृत्या च बुद्ध्या च वचसा तथा ।
यथावदहमाराद्धः कृष्णेनाक्लिष्टकर्म्मणा । तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते ।

कुर्व्वता तात सम्मानं त्वाञ्च जिज्ञासता मया। पाञ्चालाः सहसा गुप्ता मायाश्च बहुशः कृताः।
कृतस्तस्यैव सम्मानः पाञ्चालान् रक्षता मया। अभिभूतास्तु कालेन नैषामद्यास्ति जीवितं। ३१५
एवमुक्त्वा महात्मानं भगवानात्मनस्तनुं। आविवेश ददौ चास्मै विमलं खड्गमुत्तमं।
अथाविष्टो भगवता भूयो जज्वाल तेजसा। वेगवांश्चाभवद्युद्धे देवसृष्टेन तेजसा।
तमदृश्यानि भूतानि रक्षांसि च समाद्रवन्। अभितः शत्रुशिविरं यान्तं साक्षादिवेश्वरं।
इति श्रीमहाभारते सौप्तिकपर्व्वणि द्रौणिशिवार्च्चने सप्तमोऽध्यायः॥ ७॥

॥ धृतराष्ट्र उवाच॥ ततः प्रयाते शिविरं द्रोणपुत्रे महारथे। कच्चित् कृपश्च भोजश्च भयार्त्तौ न न्यवर्त्ततां।
कच्चिन्न वारितौ क्षुद्रै रक्षिभिर्नोपलक्षितौ। असह्यमिति मन्वानौ न निवृत्तौ महारथौ। ३२०
कच्चित् प्रमथ्य शिविरं हत्वा सोमकपाण्डवान्। दुर्य्योधनस्य पदवीं गतौ परमिकां रणे।
पाञ्चालैर्निहतौ वीरौ कच्चिन्नु स्वपतां क्षितौ। कच्चित्ताभ्यां कृतं कर्म्म तन्ममाचक्ष्व सञ्जय।
॥ सञ्जय उवाच॥ तस्मिन् प्रयाते शिविरं द्रोणपुत्रे महात्मनि। कृपश्च कृतवर्म्मा च शिविरद्वार्य्यतिष्ठतां।
अश्वत्थामा तु तौ दृष्ट्वा यत्नवन्तौ महारथौ। प्रहृष्टः शनकै राजन्निदं वचनमब्रवीत्।
यत्तौ भवन्तौ पर्य्याप्तौ सर्व्वक्षत्रस्य नाशने। किं पुनर्य्योधशेषस्य प्रसुप्तस्य विशेषतः। ३२५
अहं प्रवेक्ष्ये शिविरं चरिष्यामि च कालवत्। यथा न कश्चिदपि वां जीवन्मुच्येत मानवः।
तथा भवद्भ्यां कार्य्यं स्यात् इति मे निश्चिता मतिः। इत्युक्त्वा प्राविशद्द्रौणिः पार्थानां शिविरं महत्।
अद्वारेणाभ्यवस्कन्द्य विहाय भयमात्मनः। स प्रविश्य महाबाहुरुद्देशज्ञश्च तस्य ह।
धृष्टद्युम्नस्य निलयं शनकैरभ्युपागमत्। ते तु कृत्वा महत् कर्म्म श्रान्ताश्च बलवद्रणे।
प्रसुप्ताश्चैव विश्वस्ताः समेत्य परिधाविताः। अथ प्रविश्य तद्वेश्म धृष्टद्युम्नस्य भारत। ३३०
पाञ्चाल्यं शयने द्रौणिरपश्यत् सुप्तमन्तिकात्। क्षौमावदाते महति स्पर्द्ध्यास्तरणसंवृते।
माल्यप्रवरसंयुक्ते धूपैश्चूर्णैश्च वासिते। तं शयानं महात्मानं विश्रब्धमकुतोभयं।
प्राबोधयत पादेन शयनस्थं महीपते। सम्बुध्य चरणस्पर्शादुत्थाय रणदुर्म्मदः।
अभ्यजानदमेयात्मा द्रोणपुत्रं महारथं। तमुत्पतन्तं शयनादश्वत्थामा महाबलः।
केशेष्वालम्ब्य पाणिभ्यां निष्पिपेष महीतले। सबलं तेन निष्पिष्टः साध्वसेन च भारत। ३३५
निद्रया चैव पाञ्चाल्यो नाशकच्चेष्टितुं तदा। तमाक्रम्य पदा राजन् कण्ठे चोरसि चोभयोः।
नदन्तं विस्फुरन्तञ्च पशुमारममारयत्। तुदन्नखैस्तु स द्रौणिं नातिव्यक्तमुदाहरत्।
आचार्य्यपुत्र शस्त्रेण जहि मां मा चिरं कृथाः। त्वत्कृते सुकृताल्लोकान् गच्छेयं द्विपदां वर।
एवमुक्त्वा तु वचनं विरराम परन्तपः। सुतः पाञ्चालराजस्य आक्रान्तो बलिना भृशं।
तस्याव्यक्तान्तु तां वाचं संश्रुत्य द्रौणिरब्रवीत्। आचार्य्यघातिनां लोका न सन्ति कुलपांसन। ३४०
तस्माच्छस्त्रेण निधनं न त्वमर्हसि दुर्म्मते। एवं ब्रुवाणस्तं वीरं सिंहो मत्तमिव द्विपं।
मर्म्मस्वभ्यवधीत् क्रुद्धः पादाष्ठीलैः सुदारुणैः। तस्य वीरस्य शब्देन मार्य्यमाणस्य वेश्मनि।

अबुध्यन्त महाराज शिबिरे ये चास्य रक्षिणः। ते दृष्ट्वा धर्षयन्तन्तमतिमानुषविक्रमं।
भूतमेवाध्यवस्यन्तो न स्म प्रव्याहरन् भयात्। तन्तु तेनाभ्युपायेन गमयित्वा यमक्षयं।
अध्यतिष्ठत तेजस्वी रथं प्राप्य सुदर्शनं। स तस्य भवनाद्राजन्निष्क्रम्य नादयन् दिशः। २७५
रथेन शिबिरं प्रायाज्जिघांसुर्द्विषतो बली। अपक्रान्ते ततस्तस्मिन् द्रोणपुत्त्रे महारथे।
सहितै रक्षिभिः सर्व्वैः प्रणेदुर्योषितस्तदा। राजानं निहतं दृष्ट्वा भृशं शोकपरायणाः।
व्याक्रोशन् क्षत्रियाः सर्व्वे धृष्टद्युम्नस्य भारत। तासान्तु तेन शब्देन समीपे क्षत्रियर्षभाः।
क्षिप्रञ्च समनह्यन्त किमेतदिति चाब्रुवन्। स्त्रियस्तु राजन् वित्रस्ता भारद्वाजं निरीक्ष्य ताः।
अब्रुवन् दीनकण्ठेन क्षिप्रमाद्रवतेति वै। राक्षसो वा मनुष्यो वा नैनं जानीमहे वयं। २८०
हत्वा पाञ्चालराजानं रथमारुह्य तिष्ठति। ततस्ते योधमुख्यास्तं सहसा पर्य्यवारयन्।
स तानापततः सर्व्वान् रुद्रास्त्रेण व्यपोथयत्। धृष्टद्युम्नञ्च हत्वा स तांश्चैवास्य पदानुगान्।
अपश्यच्छयने सुप्तमुत्तमौजसमन्तिके। तमप्याक्रम्य पादेन कण्ठे चोरसि तेजसा।
तथैव मारयामास विनर्दन्तमरिन्दमं। युधामन्युश्च सम्प्राप्तो मत्वा तं रक्षसा हतं।
गदामुद्यम्य वेगेन हृदि द्रौणिमताडयत्। तमभिद्रुत्य जग्राह क्षितौ चैनमपातयत्। २८५
विस्फुरन्तञ्च पशुवत्तथैवैनममारयत्। तथा स वीरो हत्वा तं ततोऽन्यान् समुपाद्रवत्।
संसुप्तानेव राजेन्द्र तत्र तत्र महारथान्। स्फुरतो वेपमानांश्च शमितेव पशून्मखे।
ततो निस्त्रिंशमादाय जघानान्यान् पृथक् पृथक्। भागशो विचरन् मार्गानसियुद्धविशारदः।
तथैव गुल्मे संप्रेक्ष्य शयानान्मध्यगौल्मिकान्। श्रान्तान् न्यस्तायुधान् सर्व्वान् क्षणेनैव व्यपोथयत्।
योधानश्वान् द्विपांश्चैव प्राच्छिनत्स वरासिना। रुधिरोक्षितसर्व्वाङ्गः कालसृष्ट इवान्तकः। २९०
विस्फुरद्भिश्च तैर्द्रौणिर्निस्त्रिंशस्योत्तमेन च। आक्षेपणेन चैवासेस्त्रिधा रक्तोक्षितोऽभवत्।
तस्य लोहितरक्तस्य दीप्तखड्गस्य युध्यतः। अमानुष इवाकारो बभौ परमभीषणः।
ये त्वजाग्रत कौरव्य तेऽपि शब्देन मोहिताः। निरीक्षमाणा अन्योन्यं दृष्ट्वा दृष्ट्वा प्रविव्यथुः।
तद्रूपं तस्य ते दृष्ट्वा क्षत्रियाः शत्रुकर्षिणः। राक्षसं मन्यमानास्तं नयनानि न्यमीलयन्।
स घोररूपो व्यचरत् कालवच्छिबिरे ततः। अपश्यद्द्रौपदीपुत्त्रान् अवशिष्टांश्च सोमकान्। २९५
तेन शब्देन वित्रस्ता धनुर्हस्ता महारथाः। धृष्टद्युम्नं हतं श्रुत्वा द्रौपदेया विशाम्पते।
अवाकिरन् शरव्रातैर्भारद्वाजमभीतवत्। ततस्तेन निनादेन सम्प्रबुद्धाः प्रभद्रकाः।
शिलीमुखैः शिखण्डी च द्रोणपुत्त्रं समार्द्दयन्। भारद्वाजः स तान् दृष्ट्वा शरवर्षाणि वर्षतः।
ननाद बलवान्नादं जिघांसुस्तान्महारथः। ततः परमसंक्रुद्धः पितुर्व्वधमनुस्मरन्।
अवरुह्य रथोपस्थात्त्वरमाणोऽभिदुद्रुवे। सहस्रचन्द्रविमलं गृहीत्वा चर्म्म संयुगे। ३००
खड्गञ्च विमलं दिव्यं जातरूपपरिष्कृतं। द्रौपदेयानभिद्रुत्य खड्गेन व्यधमद्बली।
ततः स नरशार्दूलः प्रतिविन्ध्यं महाहवे। कुक्षिदेशेऽवधीद्राजन् स हतो न्यपतद्भुवि।

प्रासेन विद्ध्वा द्रौणिन्तु सुतसोमः प्रतापवान्। पुनश्चासिं समुद्यम्य द्रोणपुत्रमुपाद्रवत्।
सुतसोमस्य सासिं तं बाहुं छित्त्वा नरर्षभः। पुनरप्याहनत् पार्श्वे स भिन्नहृदयोऽपतत्।
नाकुलिस्तु शतानीको रथचक्रेण वीर्य्यवान्। दोर्भ्यामुत्क्षिप्य वेगेन वक्षस्येनमताडयत्। ३७५
अताडयच्छतानीकं मुक्तचक्रं द्विजस्तु सः। स विह्वलो ययौ भूमिं ततोऽस्यापाहरच्छिरः।
श्रुतकर्म्मा तु परिघं गृहीत्वा समताडयत्। अभिद्रुत्य यथा द्रौणिं सव्ये स फलके भृशं।
स तु तं श्रुतकर्म्माणमास्ये जघ्ने वरासिना। स हतो न्यपतद्भूमौ विमूढो विकृताननः।
तेन शब्देन वीरस्तु श्रुतकीर्त्तिर्महारथः। अश्वत्थामानमासाद्य शरवर्षैरवाकिरत्।
तस्यापि शरवर्षाणि चर्म्मणा प्रतिवार्य्य सः। सकुण्डलं शिरः कायाद्भ्राजमानमपाहरत्। ३८०
ततो भीष्मनिहन्तारं सह सर्व्वैः प्रभद्रकैः। अहनत् सर्व्वतो वीरं नानाप्रहरणैर्बली।
शिलीमुखेन चान्येन भ्रुवोर्मध्ये समार्पयत्। स तु क्रोधसमाविष्टो द्रोणपुत्रो महाबलः।
शिखण्डिनं समासाद्य द्विधा चिच्छेद सोऽसिना। शिखण्डिनं ततो हत्वा क्रोधाविष्टः परन्तपः।
प्रभद्रकगणान् सर्व्वानभिदुद्राव वेगवान्। यच्च शिष्टं विराटस्य बलन्तु भृशमाद्रवत्।
द्रुपदस्य च पुत्राणां पौत्राणां सुहृदामपि। चकार कदनं घोरं दृष्ट्वा दृष्ट्वा महाबलः। ३८५
अन्यानन्यांश्च पुरुषानभिसृत्याभिसृत्य च। न्यकृन्तदसिना द्रौणिरसिमार्गविशारदः।
कालीं रक्तास्यनयनां रक्तमाल्यानुलेपनां। रक्ताम्बरधरामेकां पाशहस्तां कुटुम्बिनीं।
ददृशुः कालरात्रिं ते गायमानामवस्थितां। नराश्वकुञ्जरान् पाशैर्बद्ध्वा घोरैः प्रतस्थुषीं।
वहन्तीं विविधान् प्रेतान् पाशबद्धान् विमूर्द्धजान्। तथैव च सदा राजन्न्यस्तशस्त्रान् महारथान्।
स्वप्ने सुप्तान्नयन्तीं तां रात्रिष्वन्यासु मारिष। ददृशुर्योधमुख्यास्ते घ्नन्तं द्रौणिञ्च सर्व्वदा। ३९०
यतः प्रभृति संग्रामः कुरुपाण्डवसेनयोः। ततः प्रभृति तां कन्यामपश्यन् द्रौणिमेव च।
तांस्तु दैवहतान् पूर्व्वं पश्चाद्द्रौणिर्व्यपातयत्। त्रासयन् सर्व्वभूतानि विनदन् भैरवान् रवान्।
तदनुस्मृत्य ते वीरा दर्शनं पूर्व्वकालिकं। इदं तदिति मन्यन्त दैवेनोपनिपीडिताः।
ततस्तेन निनादेन प्रत्यबुध्यन्त धन्विनः। शिबिरे पाण्डवेयानां शतशोऽथ सहस्रशः।
सोऽच्छिनत् कस्यचित् पादौ जघनञ्चैव कस्यचित्। कांश्चिद्बिभेद पार्श्वेषु कालसृष्ट इवान्तकः। ३९५
अत्युग्रप्रतिपिष्टैश्च नदद्भिश्च भृशोत्कटैः। गजाश्वमथितैश्चान्यैर्मही कीर्णाऽभवत् प्रभो।
क्रोशतां किमिदं कोऽयं कः शब्दः किं नु किं कृतं। एवं तेषां तथा द्रौणिरन्तकः समपद्यत।
अपेतशस्त्रसन्नाहान् सन्नद्धान् पाण्डुसृञ्जयान्। प्राहिणोन्मृत्युलोकाय द्रौणिः प्रहरतां वरः।
ततस्तच्छस्त्रवित्रस्ता उत्पतन्तो भयातुराः। निद्रान्धा नष्टसंज्ञाश्च तत्र तत्र निलिल्यिरे।
ऊरुस्तम्भगृहीताश्च कश्मलाभिहतौजसः। विनदन्तो भृशं त्रस्ताः समासीदन् परस्परं। ४००
ततो रथं पुनर्द्रौणिरास्थितो भीमनिःस्वनं। धनुष्पाणिः शरैरन्यान् प्रेषयद्वै यमक्षयं।
पुनरुत्पततश्चापि दूरादपि नरोत्तमान्। शूरान् सम्पततश्चान्यान् कालरात्र्यै न्यवेदयत्।

तथैव स्यन्दनांश्च प्रमथन् स विधावति । शरकैश्च विविधैरवर्षच्छापवांस्ततः ।
पुनश्च सुविचित्रेण शतचन्द्रेण चर्म्मणा । तेन चाकाशवर्णेन तथाऽचरत सोऽसिना ।
तथा स शिविरं तेषां द्रौणिराहवदुर्म्मदः । व्यक्षोभयत राजेन्द्र महाह्रदमिव द्विपः । ४०५
उत्पेतुस्तेन शब्देन योधा राजन् विचेतसः । निद्रार्त्ताश्च भयार्त्ताश्च व्यधावन्त ततस्ततः ।
विस्वरं चुक्रुशुश्चान्ये बह्वबद्धं तथाऽवदन् । न च स्म प्रत्यपद्यन्त शस्त्राणि वसनानि च ।
विमुक्तकेशाश्चाप्यन्ये नाभ्यजानन् परस्परं । उत्पतन्तोऽपतन् श्रान्ताः केचित्तत्राभ्रमंस्तदा ।
पुरीषमसृजन् केचित् केचिन्मूत्रं विसुस्रुवुः । बन्धनानि च राजेन्द्र संछिद्य तुरगा द्विपाः ।
समं पर्य्यपतंश्चान्ये कुर्व्वन्तो महदाकुलं । तत्र केचिन्नरा भीता व्यलीयन्त महीतले । ४१०
तथैव तान्निपतितानपिषन् गजवाजिनः । तस्मिंस्तथा वर्त्तमाने रक्षांसि पुरुषर्षभ ।
हृष्टानि व्यनदन्नुच्चैर्मुदा भरतसत्तम । स शब्दः पूरितो राजन् भूतसंघैर्मुदायुतैः ।
अपूरयद्दिशः सर्व्वा दिवञ्चातिमहान् स्वनः । तेषामार्त्तस्वरं श्रुत्वा वित्रस्ता गजवाजिनः ।
मुक्ताः पर्य्यपतन्राजन् मृद्नन्तः शिविरे जनं । तैस्तत्र परिधावद्भिश्चरणोदीरितं रजः ।
अकरोच्छिविरे तेषां रजन्यां द्विगुणं तमः । तस्मिंस्तमसि संजाते प्रमूढाः सर्व्वतो जनाः । ४१५
नाजानन् पितरः पुत्त्रान् भ्रातॄन् भ्रातर एव च । गजा गजानतिक्रम्य निर्म्मनुष्या हया हयान् ।
अताडयंस्तथाभञ्जंस्तथामृद्नंश्च भारत । ते भग्नाः प्रपतन्ति स्म निघ्नन्तश्च परस्परं ।
न्यपातयंस्तथा चान्यान् पातयित्वा तदाऽपिषन् । विचेतसः सनिद्राश्च तमसा चावृता नराः ।
जघ्नुः स्वानेव तत्राथ कालेनैव प्रचोदिताः । त्यक्त्वा द्वाराणि च द्वाःस्थास्तथा गुल्मानि गौल्मिकाः ।
प्राद्रवन्त यथाशक्ति कान्दिशीका विचेतसः । विप्रनष्टाश्च तेऽन्योन्यं नाजानन्त तथा विभो । ४२०
क्रोशन्तस्तातपुत्त्रेति दैवोपहतचेतसः । पलायतां दिशस्तेषां स्वानप्युत्सृज्य बान्धवान् ।
गोत्रनामभिरन्योन्यमाक्रन्दन्त ततो जनाः । हाहाकारञ्च कुर्व्वाणाः पृथिव्यां शेरते परे ।
तान् बुद्ध्वा रणमध्येऽसौ द्रोणपुत्त्रो न्यवारयत् । तत्रापरे वध्यमाना मुहुर्मुहुरचेतसः ।
शिविरान्निष्पतन्ति स्म क्षत्रिया भयपीडिताः । तांस्तु निष्पाततांस्त्रस्तान् शिविरात् जीवितैषिणः ।
कृतवर्म्मा कृपश्चैव द्वारदेशे निजघ्नतुः । विस्रस्तयन्त्रकवचान्मुक्तकेशान् कृताञ्जलीन् । ४२५
वेपमानान् क्षितौ भीतान्नैव कांश्चिदमुञ्चतां । नामुच्यत तयोः कश्चिन्निष्क्रान्तः शिविराद्बहिः ।
कृपश्चैव महाराज हार्द्दिक्यश्चैव दुर्म्मतिः । भूयश्चैव चिकीर्षन्तौ द्रोणपुत्त्रस्य तौ प्रियं ।
त्रिषु देशेषु ददतुः शिविरस्य हुताशनं । ततः प्रकाशे शिविरे खड्गेन पितृनन्दनः ।
अश्वत्थामा महाराज व्यचरत् कृतहस्तवत् । कांश्चिदापततो वीरानपरांश्चैव धावतः ।
व्ययोजयत खड्गेन प्राणैर्द्विजवरोत्तमः । कांश्चिद्योधान् स खड्गेन मध्ये सञ्छिद्य वीर्य्यवान् । ४३०
अपातयद्द्रोणपुत्त्रः संरब्धस्तिलकाण्डवत् । निनदद्भिर्भृशायस्तैर्नराश्वद्विपदोत्तमैः ।
पतितैरभवत् कीर्णा मेदिनी भरतर्षभ । मानुषाणां सहस्रेषु हतेषु पतितेषु च ।

उदतिष्ठन् कबन्धानि बहून्युत्थाय चापतन्। सायुधान् साङ्गदान् बाहून् विचकर्त्त शिरांसि च।
हस्तिहस्तोपमानूरून् हस्तान् पादांश्च भारत। पृष्ठच्छिन्नान् पार्श्वच्छिन्नान् शिरश्छिन्नांस्तथा परान्।
स महात्माऽकरोद्‌द्रौणिः कांश्चिच्चापि पराङ्मुखान्। मध्यदेशे नरानन्यांश्चिच्छेदान्यांश्च कर्णतः। ४३५
अंसदेशे निहत्यान्यान् काये प्रावेशयच्छिरः। एवं विचरतस्तस्य निघ्नतः सुबहून् नरान्।
तमसा रजनी घोरा बभौ दारुणदर्शना। किञ्चित्प्राणैश्च पुरुषैर्हतैश्चान्यैः सहस्रशः।
बहुना च गजाश्वेन भूरभूद्भीमदर्शना। यक्षरक्षःसमाकीर्णे रथाश्वद्विपदारुणे।
क्रुद्धेन द्रोणपुत्रेण संछिन्नाः प्रापतन् भुवि। मातॄनन्ये पितॄनन्ये पुत्रानन्ये विचुक्रुशुः।
केचिदूचुर्न तत् क्रुद्धैर्धार्त्तराष्ट्रैः कृतं रणे। यत् कृतं नः प्रसुप्तानां रक्षोभिः क्रूरकर्म्मभिः। ४४०
असान्निध्याद्धि पार्थानामिदं नः कदनं कृतं। न चासुरैर्न गन्धर्व्वैर्न यक्षैर्न च राक्षसैः।
शक्यो विजेतुं कौन्तेयो गोप्ता यस्य जनार्द्दनः। ब्रह्मण्यः सत्यवाग्दान्तः सर्व्वभूतानुकम्पकः।
न च सुप्तं प्रमत्तं वा न्यस्तशस्त्रं कृताञ्जलिं। धावन्तं मुक्तकेशं वा हन्ति पार्थो धनञ्जयः।
तदिदं नः कृतं घोरं रक्षोभिः क्रूरकर्म्मभिः। इति लालप्यमानाः स्म शेरते बहवो जनाः।
स्तनतां च मनुष्याणां अपरेषां च कूजतां। ततो मुहूर्त्तात् प्राशाम्यत् स शब्दस्तुमुलो महान्। ४४५
शोणितव्यतिषिक्तायां वसुधायां च भूमिप। तद्रजस्तुमुलं घोरं क्षणेनान्तरधीयत।
स चेष्टमानानुद्विग्नान्निरुत्साहान् सहस्रशः। न्यपातयन्नरान् क्रुद्धः पशून् पशुपतिर्यथा।
अन्योन्यं सम्परिष्वज्य शयानान् द्रवतोऽपरान्। संलीनान् युध्यमानांश्च सर्व्वान् द्रौणिरपोथयत्।
दह्यमानाहुताशेन वध्यमानांश्च तेन ते। परस्परं तदा योधाननयद्यमसादनं।
तस्या रजन्यास्त्वर्द्धेन पाण्डवानां महद्बलं। गमयामास राजेन्द्र द्रौणिर्यमनिवेशनं। ४५०
निशाचराणां सत्त्वानां रात्रिः सा हर्षवर्द्धिनी। आसीन्नरगजाश्वानां रौद्री क्षयकरी भृशं।
तत्रादृश्यन्त रक्षांसि पिशाचाश्च पृथग्विधाः। खादन्तो नरमांसानि पिबन्तः शोणितानि च।
करालाः पिङ्गलाश्चैव शैलदन्ता रजस्वलाः। जटिला दीर्घशङ्खाश्च पञ्चपादा महोदराः।
पश्चादङ्गुलयो रूक्षा विरूपा भैरवस्वनाः। घण्टाजालावसक्ताश्च नीलकण्ठा विभीषणाः।
सपुत्रदाराः सुक्रूराः सुदुर्द्दर्शाः सुदुर्घृणाः। विविधानि च रूपाणि तत्रादृश्यन्त रक्षसां। ४५५
पीत्वा च शोणितं हृष्टाः प्रानृत्यन् गणशोऽपरे। इदं परमिदं मेध्यमिदं स्वाद्विति चाब्रुवन्।
मेदोमज्जास्थिरक्तानां वसानाञ्च भृशाशिताः। परमांसानि खादन्तः क्रव्यादा मांसजीविनः।
वसाश्चैवापरे पीत्वा पर्य्यधावन् विकुक्षिकाः। नानावक्त्रास्तथा रौद्राः क्रव्यादाः पिशिताशनाः।
आयुधानि च तत्रासन् प्रयुतान्यर्ब्बुदानि च। रक्षसां घोररूपाणां महतां क्रूरकर्म्मणां।
मुदितानां वितृप्तानां तस्मिन्महति वैशसे। समेतानि बहून्यासन् भूतानि च जनाधिप। ४६०
प्रत्यूषकाले शिबिरात् प्रतिगन्तुमियेष सः। नृशोणितावसिक्तस्य द्रौणेरासीदसित्सरुः।
पाणिना सह संश्लिष्ट एकीभूत इव प्रभो। दुर्गमां पदवीं गत्वा विरराज जनक्षये।

युगान्ते सर्व्वभूतानि भस्म कृत्वेव पावकः। यथाप्रतिज्ञं तत्कर्म्म कृत्वा द्रौणायनिः प्रभो।
दुर्गमां पदवीं गच्छन् पितुरासीद्गतज्वरः। यथैव संसुप्तजने शिबिरे प्राविशन्निशि।
तथैव हत्वा निःशब्दे निश्चक्राम नरर्षभः। निष्क्रम्य शिबिरात्तस्मात्ताभ्यां संगम्य वीर्य्यवान्। ४६५
आचख्यौ कर्म्म तत् सर्व्वं हृष्टः संहर्षयन् विभो। तावप्याचख्यतुस्तस्मै प्रियं प्रियकरौ तदा।
पाञ्चालान् सृञ्जयांश्चैव विनिकृत्तान् सहस्रशः। प्रीत्या चोच्चैरुदक्रोशंस्तथैवास्फोटयंस्तलान्।
एवंविधा हि सा रात्रिः सोमकानां जनक्षये। प्रसुप्तानां प्रमत्तानामासीत् सुभृशदारुणा।
असंशयं हि कालस्य पर्य्यायो दुरतिक्रमः। तादृशा निहता यत्र कृत्वाऽस्माकं जनक्षयं।
॥ धृतराष्ट्र उवाच॥ प्रागेव सुमहत् कर्म्म द्रौणिरेतन्महारथः। नाकरोदीदृशं कस्मान्मत्पुत्रविजये धृतः। ४७०
अथ कस्माद्धते क्षुद्रे कर्म्मेदं कृतवानसौ। द्रोणपुत्त्रो महात्मा स तन्मे शंसितुमर्हसि।
॥ सञ्जय उवाच ॥ तेषां नूनं भयान्नासौ कृतवान् कुरुनन्दन। असान्निध्याद्धि पार्थानां केशवस्य च धीमतः।
सात्यकेश्चापि कर्म्मेदं द्रोणपुत्त्रेण साधितं। को हि तेषां समक्षं तान् हन्यादपि मरुत्पतिः।
एतदीदृशकं वृत्तं राजन् सुप्तजने विभो। ततो जनक्षयं कृत्वा पाण्डवानां महात्ययं।
दिष्ट्या दिष्ट्येति चान्योन्यं समेत्योचुर्म्महारथाः। पर्य्यष्वजत्ततो द्रौणिस्ताभ्यां सम्प्रतिनन्दितः। ४७५
इदं हर्षात्तु सुमहदाददे वाक्यमुत्तमं। पाञ्चाला निहताः सर्व्वे द्रौपदेयाश्च सर्व्वशः।
सोमका मत्स्यशेषाश्च सर्व्वे विनिहता मया। इदानीं कृतकृत्याः स्म याम तत्रैव मा चिरं।
यदि जीवति नो राजा तस्मै शंसामहे वयं।
इति श्रीमहाभारते सौप्तिकपर्व्वणि रात्रियुद्धे पाञ्चालादिवधे अष्टमोऽध्यायः॥ ८ ॥
॥ सञ्जय उवाच ॥ ते हत्वा सर्व्वपाञ्चालान् द्रौपदेयांश्च सर्व्वशः। आगच्छन् सहितास्तत्र यत्र दुर्य्योधनो हतः।
गत्वा चैनमपश्यन्त किञ्चित्प्राणं जनाधिपं। ततो रथेभ्यः प्रस्कन्द्य परिवव्रुस्तवात्मजं। ४८०
तं भग्नसक्थं राजेन्द्र कृच्छ्रप्राणमचेतसं। वमन्तं रुधिरं वक्त्रादपश्यन् वसुधातले।
वृतं समन्ताद्बहुभिः श्वापदैर्घोरदर्शनैः। शालावृकगणैश्चैव भक्षयिष्यद्भिरन्तिकात्।
निवारयन्तं कृच्छ्रात्तान् श्वापदांश्च चिखादिषून्। विचेष्टमानं मह्यां च सुभृशं गाढवेदनं।
तं शयानं तथा दृष्ट्वा भूमौ सुरुधिरोक्षितं। हतशिष्टास्त्रयो वीराः शोकार्त्ताः पर्य्यवारयन्।
अश्वत्थामा कृपश्चैव कृतवर्म्मा च सात्वतः। तैस्त्रिभिः शोणितादिग्धैर्निःश्वसद्भिर्महारथैः। ४८५
शुशुभे स वृतो राजा वेदी त्रिभिरिवाग्निभिः। ते तं शयानं संप्रेक्ष्य राजानमतथोचितं।
अविषह्येन दुःखेन ततस्ते रुरुदुस्त्रयः। ततस्तु रुधिरं हस्तैर्मुखान्निर्मृज्य तस्य हि।
रणे राज्ञः शयानस्य कृपणं पर्य्यदेवयन्।
॥ कृप उवाच ॥ न दैवस्यातिभारोऽस्ति यदयं रुधिरोक्षितः। एकादशचमूभर्त्ता शेते दुर्य्योधनो हतः।
पश्य चामीकराभस्य चामीकरविभूषितां। गदां गदाप्रियस्येमां समीपे पतितां भुवि। ४९०
इयमेनं गदा शूरं न जहाति रणे रणे। स्वर्गायापि व्रजन्तं हि न जहाति यशस्विनं।

पश्येमां सह वीरेण जाम्बूनदविभूषितां। शयानं शयने हर्म्ये भार्य्यां प्रीतिमतीमिव।
योऽयं मूर्द्धाभिषिक्तानां अग्रे जातः परन्तपः। स हतो ग्रसते पांशून् पश्य कालस्य पर्य्ययं।
येनाजौ निहता भूमावशेरत हतद्विषः। स भूमौ निहतः शेते कुरुराजः परैरयं।
भयान्नमन्ति राजानो यस्य स्म शतसङ्घशः। स वीरशयने शेते क्रव्याद्भिः परिवारितः। ४९५
उपासत द्विजाः पूर्व्वमर्थहेतोर्यमीश्वरं। उपासते च तं ह्यद्य क्रव्यादा मांसहेतवः।
॥ सञ्जय उवाच ॥ तं शयानं कुरुश्रेष्ठं ततो भरतसत्तम। अश्वत्थामा समालोक्य करुणं पर्य्यदेवयत्।
आहुस्त्वां राजशार्दूल मुख्यं सर्व्वधनुष्मतां। धनाध्यक्षोपमं युद्धे शिष्यं सङ्कर्षणस्य च।
कथं विवरमद्राक्षीद्भीमसेनस्तवानघ। बलिनं कृतिनं नित्यं स च पापात्मवान्नृप।
कालो नूनं महाराज लोकेऽस्मिन् बलवत्तरः। पश्यामो निहतं त्वाञ्च भीमसेनेन संयुगे। ५००
कथं त्वां सर्व्वधर्म्मज्ञं क्षुद्रः पापो वृकोदरः। निकृत्या हतवान्मन्दो नूनं कालो दुरत्ययः।
धर्म्मयुद्धे ह्यधर्म्मेण समाहूयौजसा मृधे। गदया भीमसेनेन निर्भिन्ने सक्थिनी तव।
अधर्म्मेण हतस्याजौ मृद्यमानं पदा शिरः। य उपेक्षितवान् क्षुद्रं धिक्कृष्णं धिग्युधिष्ठिरं।
युद्धेष्वपवदिष्यन्ति योधा नूनं वृकोदरं। यावत् स्थास्यन्ति भूतानि निकृत्या ह्यसि पातितः।
ननु रामोऽब्रवीद्राजन् त्वां सदा यदुनन्दनः। दुर्य्योधनसमो नास्ति गदया इति वीर्य्यवान्। ५०५
श्लाघते त्वां हि वार्ष्णेयो राजन् संसत्सु भारत। स शिष्यो मम कौरव्यो गदायुद्ध इति प्रभो।
यां गतिं क्षत्रियस्याहुः प्रशस्तां परमर्षयः। हतस्याभिमुखस्याजौ प्राप्तस्त्वमसि तां गतिं।
दुर्य्योधन न शोचामि त्वामहं पुरुषर्षभ। हतपुत्रौ तु शोचामि गान्धारीं पितरञ्च ते।
भिक्षुकौ विचरिष्येते शोचन्तौ पृथिवीमिमां। धिगस्तु कृष्णं वार्ष्णेयमर्ज्जुनञ्चापि दुर्म्मतिं।
धर्म्मज्ञमानिनौ यौ त्वां वध्यमानमुपेक्षतां। पाण्डवाश्चापि ते सर्व्वे किं वक्ष्यन्ति नराधिप। ५१०
कथं दुर्य्योधनोऽस्माभिर्हत इत्यनपत्रपाः। धन्यस्त्वमसि गान्धारे यस्त्वमायोधने हतः।
प्रायशोऽभिमुखः शत्रून् धर्म्मेण पुरुषर्षभ। हतपुत्रा हि गान्धारी निहतज्ञातिबान्धवा।
प्रज्ञाचक्षुश्च दुर्द्धर्षः कां गतिं प्रतिपत्स्यते। धिगस्तु कृतवर्म्माणं मां कृपञ्च महारथं।
ये वयं न गताः स्वर्गं त्वां पुरस्कृत्य पार्थिवं। दातारं सर्व्वकामानां रक्षितारं प्रजाहितं।
यद्वयं नानुगच्छामस्त्वां धिगस्माननराधमान्। कृपस्य तव वीर्य्येण मम चैव पितुश्च मे। ५१५
सभृत्यानां नरव्याघ्र रत्नवन्ति गृहाणि च। तव प्रसादादस्माभिः समित्रैः सह बान्धवैः।
अवाप्ताः क्रतवो मुख्या बहवो भूरिदक्षिणाः। कुतश्चापीदृशं पापाः प्रवर्त्तिष्यामहे वयं।
यादृशेन पुरस्कृत्य त्वं गतः सर्व्वपार्थिवान्। वयमेव त्रयो राजन् गच्छन्तं परमां गतिं।
यद्वै त्वां नानुगच्छामस्तेन धक्ष्यामहे वयं। तान् स्वर्गहीना हीनार्थाः स्मरन्तः सुकृतस्य ते।
किं नाम तद्भवेत् कर्म्म येन त्वां न व्रजाम वै। दुःखं नूनं कुरुश्रेष्ठ चरिष्याम महीमिमां। ५२०
हीनानां नस्त्वया राजन् कुतः शान्तिः कुतः सुखं। गत्वैव तु महाराज समेत्य च महारथान्।

यथाज्येष्ठं यथाश्रेष्ठं पूजयेर्व्वचनान्मम । आचार्य्यं पूजयित्वा च वक्तुं सर्व्वधनुष्मतां ।
हतं मयाऽद्य शंसेथा धृष्टद्युम्नं नराधिप । परिष्वजेथा राजानं वाह्लीकं सुमहारथं ।
सैन्धवं सोमदत्तञ्च भूरिश्रवसमेव च । तथा पूर्व्वगतानन्यान् स्वर्गे पार्थिवसत्तमान् ।
अस्मद्वाक्यात् परिष्वज्य संपृच्छेस्त्वमनामयं । ५२५

॥ सञ्जय उवाच ॥ इत्येवमुक्त्वा राजानं भग्नसक्थमचेतनं । अश्वत्थामा समुद्वीक्ष्य पुनर्व्वचनमब्रवीत् ।
दुर्य्योधन जीवसि त्वं वाक्यं श्रोत्रसुखं शृणु । सप्तपाण्डवतः शेषा धार्त्तराष्ट्रास्त्रयो वयं ।
ते चैव भ्रातरः पञ्च वासुदेवोऽथ सात्यकिः । अहञ्च कृतवर्म्मा च कृपः शारद्वतस्तथा ।
द्रौपदेया हताः सर्व्वे धृष्टद्युम्नस्य चात्मजाः । पाञ्चाला निहताः सर्व्वे मत्स्यशेषाश्च भारत ।
कृते प्रतिकृतं पश्य हतपुत्त्रा हि पाण्डवाः । सौप्तिके शिबिरं तेषां हतं सनरवाहनं । ५३०
मया च पापकर्म्माऽसौ धृष्टद्युम्नो महीपते । प्रविश्य शिबिरं रात्रौ पशुमारेण मारितः ।
दुर्य्योधनस्तु तां वाचं निशम्य मनसः प्रियां । प्रतिलभ्य पुनश्चेत इदं वचनमब्रवीत् ।
न मेऽकरोत्तद्गाङ्गेयो न कर्णो न च ते पिता । यत्त्वया कृपभोजाभ्यां सहितेनाद्य मे कृतं ।
स च सेनापतिः क्षुद्रो हतः सार्द्धं शिखण्डिना । तेन मन्ये मघवता सममात्मानमद्य वै ।
स्वस्ति प्राप्नुत भद्रं वः स्वर्गे नः सङ्गमः पुनः । इत्येवमुक्त्वा तूष्णीं स कुरुराजो महामनाः । ५३५
प्राणानुपासृजद्वीरः सुहृदां दुःखमुत्सृजन् । अपाक्रामद्दिवं पुण्यां शरीरं क्षितिमाविशत् ।
एवं ते निधनं यातः पुत्त्रो दुर्य्योधनो नृप । अग्रे यात्वा रणे शूरः पश्चाद्विनिहतः परैः ।
तथैव ते परिष्वक्ताः परिष्वज्य च ते नृपं । पुनः पुनः प्रेक्षमाणाः स्वकानारुरुहूरथान् ।
इत्येवं द्रोणपुत्त्रस्य निशम्य करुणां गिरं । प्रत्यूषकाले शोकार्त्ताः प्राद्रवन्नगरं प्रति ।
एवमेष क्षयो वृत्तः कुरुपाण्डवसेनयोः । घोरो विशसनो रौद्रो राजन् दुर्म्मन्त्रिते तव । ५४०
तव पुत्त्रे गते स्वर्गे शोकार्त्तस्य ममानघ । ऋषिदत्तं प्रणष्टं तद्दिव्यदर्शित्वमद्य वै ।
॥ वैशम्पायन उवाच ॥ इति श्रुत्वा स नृपतिः पुत्त्रस्य निधनन्तदा । निश्वस्य दीर्घमुष्णञ्च ततश्चिन्तापरोऽभवत् ।
इति श्रीमहाभारते सौप्तिकपर्व्वणि दुर्य्योधनप्राणत्यागे नवमोऽध्यायः ॥ ९ ॥

## ॥ अथ ऐषीकपर्व्व ॥

॥ वैशम्पायन उवाच ॥ तस्यां रात्र्यां व्यतीतायां धृष्टद्युम्नस्य सारथिः । शशंस धर्म्मराजाय सौप्तिके कदनं कृतं ।
॥ सूत उवाच ॥ द्रौपदेया हता राजन् द्रुपदस्यात्मजैः सह । प्रमत्ता निशि विश्वस्ताः स्वपन्तः शिबिरे स्वके ।
कृतवर्म्मणा नृशंसेन गौतमेन कृपेण च । अश्वत्थाम्ना च पापेन हतं वः शिबिरं निशि । ५४५
एतैर्नरगजाश्वानां प्रासशक्तिपरश्वधैः । सहस्राणि निकृन्तद्भिर्निःशेषन्ते बलं कृतं ।
छिद्यमानस्य महतो वनस्येव परश्वधैः । शुश्रुवे सुमहान् शब्दो बलस्य तव भारत ।

अहमेकोऽवशिष्टस्तु तस्मात् सैन्यान्महामते। मुक्तः कथञ्चिद्धर्म्मात्मन् व्यग्रस्य कृतवर्म्मणः।

तच्छ्रुत्वा वाक्यमशिवं कुन्तीपुत्रो युधिष्ठिरः। पपात मह्यां दुर्द्धर्षः पुत्रशोकसमन्वितः।

पतन्तं तमतिक्रम्य परिजग्राह सात्यकिः। भीमसेनोऽर्ज्जुनश्चैव माद्रीपुत्रौ च पाण्डवौ। ५८०

लब्धचेतास्तु कौन्तेयः शोकविह्वलया गिरा। जित्वा शत्रून् जितः पश्चात् पर्य्यदेवयदार्त्तवत्।

दुर्व्विदा गतिरर्थानामपि ये दिव्यचक्षुषः। जीयमाना जयन्त्यन्ये जयमाना वयं जिताः।

हत्वा भ्रातॄन् वयस्यांश्च पितॄन् पौत्रान् सुहृद्गणान्। बन्धूनमात्यान् पौत्रांश्च जित्वा सर्व्वान् जिता वयं।

अनर्थो ह्यर्थसङ्काशस्तथाऽनर्थोऽर्थदर्शनः। जयोऽयमजयाकारो जयस्तस्मात् पराजयः।

यज्जित्वा तप्यते पश्चादापन्न इव दुर्म्मतिः। कथं मन्येत विजयं ततो जिततरः परैः। ५८५

येषामर्थाय पापं स्याद्विजयस्य सुहृद्वधैः। निर्जितैरप्रमत्तैर्हि विजिता जितकाशिनः।

कर्णिनालीकदंष्ट्रस्य खड्गजिह्वस्य संयुगे। चापव्यात्ताग्ररौद्रस्य ज्यातलस्वननादिनः।

क्रुद्धस्य नरसिंहस्य संग्रामेष्वपलायिनः। ये व्यमुच्यन्त कर्णस्य प्रमादात्त इमे हताः।

रथह्रदं शरवर्षोर्म्मिमन्तं रत्नाचितं वाहनवाजियुक्तं। शक्तिमीनध्वजनागनक्रं शरासनावर्त्तमहेषुफेनं।

संग्रामचन्द्रोदयवेगवेलं द्रोणार्णवं ज्यातलनेमिघोषं। ये तेरुरुच्चावचशस्त्रनौभिस्ते राजपुत्रा निहताः प्रमादात्। ५९०

नहि प्रमादात् परमस्ति कश्चिद्वधो नराणामिह जीवलोके। प्रमत्तमर्था हि नरं समन्तात् त्यजन्त्यनर्थाश्च समाविशन्ति।

ध्वजोत्तमाग्रोच्छ्रितधूमकेतुं शरार्च्चिषं कोपमहासमीरं। महाधनुर्ज्यातलनेमिघोषं तनुत्रनानाविधशस्त्रहोमं।

महाचमूकक्षवराभिपन्नं महाहवे भीष्ममहाग्निदाहं। ये सेहुरात्तायुधतीक्ष्णवेगं ते राजपुत्रा निहताः प्रमादात्।

नहि प्रमत्तेन नरेण लभ्यं विद्या तपः श्रीर्विपुलं यशो वा। पश्याप्रमादेन निहत्य शत्रून् सर्व्वान् महेन्द्रं सुखमेधमानं।

इन्द्रोपमान् पार्थिवपुत्रपौत्रान् पश्याविशेषेण हतान् प्रमादात्। तीर्त्वा समुद्रं वणिजः समृद्धा मग्नाः कुनद्यामिव हेलमानाः। ५९५

अमर्षितैर्ये निहताः शयाना निःसंशयन्ते त्रिदिवं प्रपन्नाः। भ्रातॄंश्च पुत्रांश्च हतान्निशम्य पाञ्चालराजं पितरञ्च वृद्धं।

ध्रुवं विसंज्ञा पतिता पृथिव्यां सा शोष्यते शोककृशाङ्गयष्टिः। तच्छोकजं दुःखमपारयन्ती कथं भविष्यत्युचिता सुखानां।

पुत्रक्षयभ्रातृवधप्रणुन्ना प्रदह्यमानेव हुताशनेन। इत्येवमार्त्तः परिदेवयन् स राजा कुरूणां नकुलं बभाषे।

गच्छानयैनामिह मन्दभाग्यां समातृपक्षामिति राजपुत्रीं। माद्रीसुतस्तत् परिगृह्य वाक्यं धर्म्मेण धर्म्मप्रतिमस्य राज्ञः।

ययौ रथेनालयमाशु देव्याः पाञ्चालराजस्य च यत्र दाराः। प्रस्थाप्य माद्रीसुतमाजमीढः शोकार्दितस्तैः सहितः सुहृद्भिः। ६००

रोरूयमाणः प्रययौ सुतानामायोधनं भूतगणानुकीर्णं। स तत् प्रविश्याशिवमुग्ररूपं ददर्श पुत्रान् सुहृदः सखींश्च।

भूमौ शयानान् रुधिरार्द्रगात्रान् विभिन्नदेहान् प्रहृतोत्तमाङ्गान्। स तांस्तु दृष्ट्वा भृशमार्त्तरूपो युधिष्ठिरो धर्म्मभृतां वरिष्ठः।

उच्चैः प्रचुक्रोश च कौरवाग्र्यः पपात चोर्व्व्यां सगणो विसंज्ञः।

इति श्रीमहाभारते सौप्तिकपर्व्वणि ऐषीकपर्व्वणि युधिष्ठिरस्य शिविरदर्शने दशमोऽध्यायः॥ १० ॥

॥ वैशम्पायन उवाच ॥ स दृष्ट्वा निहतान् संख्ये पुत्त्रान् पौत्त्रान् सखींस्तथा । महादुःखपरीतात्मा बभूव जनमेजय ।
ततस्तस्य महान् शोकः प्रादुरासीन्महात्मनः । स्मरतः पुत्त्रपौत्त्राणां भ्रातॄणां स्वजनस्य च । ५७५
तमश्रुपरिपूर्णाक्षं वेपमानमचेतसं । सुहृदो भृशसंविग्नाः सान्त्वयाञ्चक्रिरे तदा ।
ततस्तस्मिन् क्षणे कल्यो रथेनादित्यवर्च्चसा । नकुलः कृष्णया सार्द्धमुपायात् परमार्त्तया ।
उपप्लव्यं गता सा तु श्रुत्वा सुमहदप्रियं । तदा विनाशं सर्व्वेषां पुत्त्राणां व्यथिताऽभवत् ।
कम्पमानेव कदली वातेनाभिसमीरिता । कृष्णा राजानमासाद्य शोकार्त्ता न्यपतद्भुवि ।
बभूव वदनं तस्याः सहसा शोककर्षितं । फुल्लपद्मपलाशाक्ष्यास्तमोग्रस्त इवांशुमान् । ५८०
ततस्तां पतितां दृष्ट्वा संरम्भी सत्यविक्रमः । बाहुभ्यां परिजग्राह समुत्पत्य वृकोदरः ।
सा समाश्वासिता तेन भीमसेनेन भामिनी । रुदती पाण्डवं कृष्णा सह भ्रातरमब्रवीत् ।
दिष्ट्या राजन्नवाप्येमामखिलां भोक्ष्यसे महीं । आत्मजान् क्षत्त्रधर्म्मेण सम्प्रदाय यमाय वै ।
दिष्ट्या त्वं कुशली पार्थ मत्तमातङ्गगामिनं । अवाप्य पृथिवीं कृत्स्नां सौभद्रं न स्मरिष्यसि ।
आत्मजान् क्षत्त्रधर्म्मेण श्रुत्वा शूरान्निपातितान् । उपप्लव्ये मया सार्द्धं दिष्ट्या त्वं न स्मरिष्यसि । ५८५
प्रसुप्तानां बधं श्रुत्वा द्रौणिना पापकर्म्मणा । शोकस्तपति मां पार्थ हुताशन इवाश्रयं ।
तस्य पापकृतो द्रौणेर्न चेदद्य त्वया रणे । ह्रियते सानुबन्धस्य युधि विक्रम्य जीवितं ।
इहैव प्रायमासिष्ये तन्निबोधत पाण्डवाः । न चेत् फलमवाप्नोति द्रौणिः पापस्य कर्म्मणः ।
एवमुक्त्वा ततः कृष्णा पाण्डवं प्रत्युपाविशत् । युधिष्ठिरं याज्ञसेनी धर्म्मराजं यशस्विनी ।
दृष्ट्वोपविष्टां राजर्षिः पाण्डवो महिषीं प्रियां । प्रत्युवाच स धर्म्मात्मा द्रौपदीं चारुदर्शनां । ५९०
धर्म्म्यं धर्म्मेण धर्म्मज्ञे प्राप्तास्ते निधनं शुभे । पुत्त्रास्ते भ्रातरश्चैव तान्न शोचितुमर्हसि ।
स कल्याणि वनं दुर्गं दूरं द्रौणिरितो गतः । तस्य त्वं पातनं संख्ये कथं ज्ञास्यसि शोभने ।
॥ द्रौपद्युवाच ॥ द्रोणपुत्त्रस्य सहजो मणिः शिरसि मे श्रुतः । निहत्य सङ्ख्ये तं पापं पश्येयं मणिमाहृतं ।
राजन् शिरसि ते कृत्वा जीवेयमिति मे मतिः । इत्युक्त्वा पाण्डवं कृष्णा राजानञ्चारुदर्शना ।
भीमसेनमथागत्य परमं वाक्यमब्रवीत् । त्रातुमर्हसि मां भीम क्षत्त्रधर्म्ममनुस्मरन् । ५९५
जहि तं पापकर्म्माणं शम्बरं मघवानिव । न हि ते विक्रमे तुल्यः पुमानस्तीह कश्चन ।
श्रुतं तत् सर्व्वलोकेषु परमव्यसने यथा । द्वीपोऽभूस्त्वं हि पार्थानां नगरे वारणावते ।
हिडिम्बदर्शने चैव तथा त्वमभवो गतिः । तथा विराटनगरे कीचकेन भृशार्द्दितां ।
मामप्युद्धृतवान् कृच्छ्रात् पौलोमीं मघवानिव । यथैतान्यकृथाः पार्थ महाकर्म्माणि वै पुरा ।
तथा द्रौणिममित्रघ्नं विनिहत्य सुखी भव । तस्या बहुविधं दुःखं निशम्य परिदेवितं । ६००
न चामर्षत कौन्तेयो भीमसेनो महाबलः । स काञ्चनविचित्राङ्गमारुरोह महारथं ।
आदाय रुचिरञ्चित्रं समार्गणगुणं धनुः । नकुलं सारथिं कृत्वा द्रोणपुत्त्रबधे धृतः ।
विस्फार्य्य सशरञ्चापं तूर्णमश्वानचोदयत् । ते हयाः पुरुषव्याघ्र चोदिता वातरंहसः ।

वेगेन त्वरिता जग्मुर्हरयः शीघ्रगामिनः । शिबिरात् स्वाद्गृहीत्वा स रथस्य पदमच्युतः ।
द्रोणपुत्त्रं ययस्ताश्च यथौ वेगेन वीर्य्यवान् । ५०५

इति श्रीमहाभारते सौप्तिकपर्व्वणि ऐषीकपर्व्वणि द्रौणिवधार्थंभीमगमने एकादशोऽध्यायः ॥ ११ ॥

॥ वैशम्पायन उवाच ॥ तस्मिन् प्रयाते दुर्द्धर्षे यदूनामृषभस्ततः । अब्रवीत् पुण्डरीकाक्षः कुन्तीपुत्त्रं युधिष्ठिरं ।
एष पाण्डव ते भ्राता पुत्त्रशोकपरायणः । जिघांसुर्द्रौणिमाक्रन्दे एक एवाभिधावति ।
भीमः प्रियस्ते सर्व्वेभ्यो भ्रातृभ्यो भरतर्षभ । तं कृच्छ्रगतमद्य त्वं कस्मान्नाभ्युपपद्यसे ।
यत्तदाचष्ट पुत्त्राय द्रोणः परपुरञ्जयः । अस्त्रं ब्रह्मशिरो नाम दहेत पृथिवीमपि ।
तन्महात्मा महाभागः केतुः सर्व्वधनुष्मतां । प्रत्यपादयदाचार्य्यः प्रीयमाणो धनञ्जयं । ५१०
तं पुत्त्रोऽप्येक एवैनमन्वयाचदमर्षणः । ततः प्रोवाच पुत्त्राय नातिहृष्टमना इव ।
विदितञ्चापलं ह्यासीदात्मजस्य दुरात्मनः । सर्व्वधर्म्मविदाचार्य्यः सोऽन्वशात् स्वसुतं ततः ।
परमापद्गतेनापि न स्म तात त्वया रणे । इदमस्त्रं प्रयोक्तव्यं मानुषेषु विशेषतः ।
इत्युक्तवान् गुरुः पुत्त्रं द्रोणः पश्चादथोक्तवान् । न त्वं जातु सतां मार्गे स्थातेति पुरुषर्षभ ।
स तदाज्ञाय दुष्टात्मा पितुर्व्वचनमप्रियं । निराशः सर्व्वकल्याणैः शोकात् पर्य्यचरन्महीं । ५१५
ततस्तदा कुरुश्रेष्ठ वनस्थे त्वयि भारत । अवसद्द्वारकामेत्य वृष्णिभिः परमार्च्चितः ।
स कदाचित् समुद्रान्ते वसन् द्वारवतीमनु । एक एकं समागत्य मामुवाच हसन्निव ।
यत्तदुग्रं तपः कृष्ण चरन् सत्यपराक्रमः । अगस्त्याद्भारताचार्य्यः प्रत्यपद्यत मे पिता ।
अस्त्रं ब्रह्मशिरो नाम देवगन्धर्व्वपूजितं । तदद्य मयि दाशार्ह यथा पितरि मे तथा ।
अस्मात्तस्तदुपादाय दिव्यमस्त्रं यदूत्तम । ममाप्यस्त्रं प्रयच्छ त्वं चक्रं रिपुहणं रणे । ५२०
स राजन् प्रीयमाणेन मयाऽप्युक्तः कृताञ्जलिः । याचमानः प्रयत्नेन मत्तोऽस्त्रं भरतर्षभ ।
देवदानवगन्धर्व्वमनुष्यपतगोरगाः । न समा मम वीर्य्यस्य शतांशेनापि पिण्डिताः ।
इदं धनुरियं शक्तिरिदञ्चक्रमियं गदा । यद्यदिच्छसि चेदस्त्रं मत्तस्तत्तद्ददामि ते ।
यच्छक्नोषि समुद्यन्तुं प्रयोक्तुमपि वा रणे । तद्गृहाण विनाऽस्त्रेण यन्मे दातुमभीप्ससि ।
स सुनाभं सहस्रारं वज्रनाभमयस्मयं । वव्रे चक्रं महाभागो मत्तः स्पर्द्धन्मया सह । ५२५
गृहाण चक्रमित्युक्तो मया तु तदनन्तरं । जग्राहोत्पत्य सहसा चक्रं सव्येन पाणिना ।
न चैनमशकत् स्थानात् सञ्चालयितुमच्युत । अथैनं दक्षिणेनापि ग्रहीतुमुपचक्रमे ।
सर्व्वयत्नबलेनापि गृह्णन्नेवमिदं ततः । ततः सर्व्वबलेनापि यदैनं न शशाक ह ।
उद्यन्तुं वा चालयितुं द्रौणिः परमदुर्म्मनाः । कृत्वा यत्नं परिश्रान्तः संन्यवर्त्तत भारत ।
निवृत्तमनसं तस्मादभिप्रायाद्विचेतसं । अहमामन्त्र्य संविग्नमश्वत्थामानमब्रुवं । ५३०
यः सदेवमनुष्येषु प्रमाणं परमं गतः । गाण्डीवधन्वा श्वेताश्वः कपिप्रवरकेतनः ।
यः साक्षाद्देवदेवेशं शितिकण्ठमुमापतिं । द्वन्द्वयुद्धे पराजिष्णुस्तोषयामास शङ्करं ।

यस्मात् प्रियतरो नास्ति ममान्यः पुरुषो भुवि। नादेयं यस्य मे किञ्चिदपि दाराः सुतास्तथा।
तेनापि सुहृदा ब्रह्मन् पार्थेनाक्लिष्टकर्म्मणा। नोक्तपूर्व्वमिदं वाक्यं यत्त्वं मामभिभाषसे।
ब्रह्मचर्य्यं महद्घोरं तीर्त्वा द्वादशवार्षिकं। हिमवत्पार्श्वमास्थाय यो मया तपसार्ज्जितः। ६१५
समानव्रतचारिण्यां रुक्मिण्यां योऽन्वजायत। सनत्कुमारस्तेजस्वी प्रद्युम्नो नाम मे सुतः।
तेनाप्येतन्महद्दिव्यं चक्रमप्रतिमं रणे। न प्रार्थितमभून्मूढ यदिदं प्रार्थितं त्वया।
रामेणातिबलेनैतन्नोक्तपूर्व्वं कदाचन। न गदेन न शाम्बेन यदिदं प्रार्थितं त्वया।
द्वारकावासिभिश्चान्यैर्वृष्ण्यन्धकमहारथैः। नोक्तपूर्व्वमिदं जातु यदिदं प्रार्थितं त्वया।
भारताचार्य्यपुत्त्रस्त्वं मानितः सर्व्वयादवैः। चक्रेण रथिनां श्रेष्ठ कं नु तात युयुत्ससे। ६४०
एवमुक्तो मया द्रौणिर्म्मामिदं प्रत्युवाच ह। प्रयुज्य भवते पूजां योत्स्ये कृष्ण त्वया सह।
प्रार्थितन्ते मया चक्रं देवदानवपूजितं। अजेयः स्यामिति विभो सत्यमेतद्ब्रवीमि ते।
त्वत्तोऽहं दुर्लभं काममनवाप्यैव केशव। प्रतियास्यामि गोविन्द शिवेनाभिवदस्व मां।
एतत् सुभीमं भीमानामृषभेण त्वया धृतं। चक्रमप्रतिचक्रेण भुवि नान्योऽभिपद्यते।
एतावदुक्त्वा द्रौणिर्म्मां युग्यानश्वान् धनानि च। आदायोपययौ काले रत्नानि विविधानि च। ६४५
स संरम्भी दुरात्मा च चपलः क्रूर एव च। वेद चास्त्रं ब्रह्मशिरस्तस्माद्रक्ष्यो वृकोदरः।
इति श्रीमहाभारते सौप्तिकपर्व्वणि ऐषीकपर्व्वणि युधिष्ठिरकृष्णसंवादे द्वादशोऽध्यायः॥ १२ ॥
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा युधां श्रेष्ठः सर्व्वयादवनन्दनः। सर्व्वायुधवरोपेतमारुरोह रथोत्तमं।
युक्तं परमकाम्बोजैस्तुरगैर्हेममालिभिः। आदित्योदयवर्णस्य धुरं रथवरस्य तु।
दक्षिणामवहच्छैब्यः सुग्रीवः सव्यतोऽभवत्। पार्ष्णिवाहौ तु तस्यास्तां मेघपुष्पबलाहकौ।
विश्वकर्म्मकृता दिव्या रत्नधातुविभूषिता। उच्छ्रितेव रथे माया ध्वजयष्टिरदृश्यत। ६५०
वैनतेयः स्थितस्तस्यां प्रभामण्डलरश्मिवान्। तस्य सत्त्ववतः केतुर्भुजगारिरदृश्यत।
अथारोहद्धृषीकेशः केतुः सर्व्वधनुष्मतां। अर्ज्जुनः सत्यकर्म्मा च कुरुराजो युधिष्ठिरः।
अशोभेतां महात्मानौ दाशार्हमभितः स्थितौ। रथस्थं शार्ङ्गधन्वानमश्विनाविव वासवं।
तावुपारोप्य दाशार्हः स्यन्दनं लोकपूजितं। प्रतोदेन जवोपेतान् परमाश्वानचोदयत्।
ते हयाः सहसोत्पेतुर्गृहीत्वा स्यन्दनोत्तमं। आस्थितं पाण्डवेयाभ्यां यदूनामृषभेण च। ६५५
वहतां शार्ङ्गधन्वानमश्वानां शीघ्रगामिनां। प्रादुरासीन्महाञ्छब्दः पक्षिणां पततामिव।
ते समार्च्छन्नरव्याघ्राः क्षणेन भरतर्षभ। भीमसेनं महेष्वासं समनुद्रुत्य वेगिताः।
क्रोधदीप्तन्तु कौन्तेयं द्विषदर्थे समुद्यतं। नाशक्नुवन् वारयितुं समेत्यापि महारथाः।
स तेषां प्रेक्षतामेव श्रीमतां दृढधन्विनां। ययौ भागीरथीतीरं हरिभिर्भृशवेगितैः।
यत्र स्म श्रूयते द्रौणिः पुत्त्रहन्ता महात्मनां। स ददर्श महात्मानमुदकान्ते यशस्विनं। ६६०
कृष्णद्वैपायनं व्यासमासीनमृषिभिः सह। तत्रैव क्रूरकर्म्माणं घृताक्तं कुशचीरिणं।

रजसा ध्वस्तमासीनं ददर्श द्रौणिमन्तिके। तमभ्यधावत् कौन्तेयः प्रगृह्य सशरं धनुः।
भीमसेनो महाबाहुस्तिष्ठ तिष्ठेति चाब्रवीत्। स दृष्ट्वा भीमधन्वानं प्रगृहीतशरासनं।
भ्रातरौ पृष्ठतश्चास्य जनार्द्दनरथे स्थितौ। व्यथितात्माऽभवद्द्रौणिः प्राप्तञ्चेदममन्यत।
स तद्दिव्यमदीनात्मा परमास्त्रमचिन्तयत्। जग्राह च स चैषीकां द्रौणिः सव्येन पाणिना। ६९५
स तामापदमासाद्य दिव्यमस्त्रमुदैरयत्। अमृष्यमाणस्तान् शूरान् दिव्यायुधधरान् स्थितान्।
अपाण्डवायेति रुषा व्यसृजद्दारुणं वचः। इत्युक्त्वा राजशार्दूल द्रोणपुत्रः प्रतापवान्।
सर्व्वलोकप्रमोहार्थं तदस्त्रं प्रमुमोच ह। ततस्तस्यामिषीकायां पावकः समजायत।
प्रधक्ष्यन्निव लोकांस्त्रीन् कालान्तकयमोपमः।

इति श्रीमहाभारते सौप्तिकपर्व्वणि ऐषीकपर्व्वणि ब्रह्मशिरोऽस्त्रत्यागे त्रयोदशोऽध्यायः॥ १३॥

॥ वैशम्पायन उवाच॥ इङ्गितेनैव दाशार्हस्तमभिप्रायमादितः। द्रौणेर्बुद्ध्वा महाबाहुरर्ज्जुनं प्रत्यभाषत। ७००
अर्ज्जुनार्ज्जुन यद्दिव्यमस्त्रन्ते यदि वर्त्तते। द्रोणोपदिष्टं तस्यायं कालः सम्प्रति पाण्डव।
भ्रातॄणामात्मनश्चैव परित्राणाय भारत। विसृजैतत्त्वमप्याजावस्त्रमस्त्रनिवारणं।
केशवेनैवमुक्तोऽथ पाण्डवः परवीरहा। अवातरद्रथात्तूर्णं प्रगृह्य सशरं धनुः।
पूर्व्वमाचार्य्यपुत्राय ततोऽनन्तरमात्मने। भ्रातृभ्यश्चैव सर्व्वेभ्यः स्वस्तीत्युक्त्वा परन्तपः।
देवताभ्यो नमस्कृत्य गुरुभ्यश्चैव सर्व्वशः। उत्ससर्ज्ज शिवं ध्यायन्नस्त्रमस्त्रेण शाम्यतां। ७०५
ततस्तदस्त्रं सहसा सृष्टं गाण्डीवधन्वना। प्रजज्वाल महार्चिष्मद्युगान्तानलसन्निभं।
तथैव द्रोणपुत्रस्य तदस्त्रं तिग्मतेजसः। प्रजज्वाल महाज्वालं तेजोमण्डलसंवृतं।
निर्घाता बहवश्चासन् पेतुरुल्काः सहस्रशः। महद्भयञ्च भूतानां सर्व्वेषां समजायत।
सशब्दमभवद्व्योम ज्वालामालाकुलं भृशं। चचाल च मही कृत्स्ना सपर्व्वतवनद्रुमा।
ते त्वस्त्रतेजसी लोकांस्तापयन्ती व्यवस्थिते। महर्षी सहितौ तत्र दर्शयामासतुस्तदा। ७१०
नारदः सर्व्वभूतात्मा भरतानां पितामहः। उभौ शमयितुं वीरौ भारद्वाजधनञ्जयौ।
तौ मुनी सर्व्वधर्म्मज्ञौ सर्व्वभूतहितैषिणौ। दीप्तयोरस्त्रयोर्म्मध्ये स्थितौ परमतेजसौ।
तदन्तरमथाधृष्यावुपगम्य यशस्विनौ। आस्तामृषिवरौ तत्र ज्वलिताविव पावकौ।
प्राणभृद्भिरनाधृष्यौ देवदानवसम्मतौ। अस्त्रतेजः शमयितुं लोकानां हितकाम्यया।
॥ ऋषी ऊचतुः॥ नानाशस्त्रविदः पूर्व्वे येऽप्यतीता महारथाः। नैतदस्त्रं मनुष्येषु तैः प्रयुक्तं कथञ्चन। ७१५
किमिदं साहसं वीरौ कृतवन्तौ महात्ययं॥

इति श्रीमहाभारते सौप्तिकपर्व्वणि ऐषीकपर्व्वणि अर्ज्जुनास्त्रत्यागे चतुर्द्दशोऽध्यायः॥ १४॥

॥ वैशम्पायन उवाच॥ दृष्ट्वैव नरशार्दूल तावग्निसमतेजसौ। संजहार शरं दिव्यं त्वरमाणो धनञ्जयः।
उवाच भरतश्रेष्ठ तावृषी प्राञ्जलिस्तदा। प्रयुक्तमस्त्रमस्त्रेण शाम्यतामिति वै मया।
संहृते परमास्त्रेऽस्मिन् सर्व्वानस्मानशेषतः। पापकर्म्मा ध्रुवं द्रौणिः प्रधक्ष्यत्यस्त्रतेजसा।

यदत्र हितमस्माकं लोकानाञ्चैव सर्व्वथा । भवन्तौ देवसङ्काशौ तथा संमन्तुमर्हथः । ६९०
इत्युक्त्वा संजहारास्त्रं पुनरेव धनञ्जयः । संहारो दुष्करस्तस्य देवैरपि हि संयुगे ।
विसृष्टस्य रणे तस्य परमास्त्रस्य संग्रहे । अशक्तः पाण्डवादन्यः साक्षादपि शतक्रतुः ।
ब्रह्मतेजोद्भवं विद्धि विसृष्टमकृतात्मना । न शक्यमावर्त्तयितुं ब्रह्मचारिव्रतादृते ।
अचीर्णब्रह्मचर्य्यो यः सृष्ट्वावर्त्तयते पुनः । तदस्त्रं सानुबन्धस्य मूर्द्धानं तस्य कृन्तति ।
ब्रह्मचारी व्रती चापि दुरावारमवाप्य तत् । परमव्यसनार्त्तोऽपि नार्ज्जुनोऽस्त्रं व्यमुञ्चत । ६९५
सत्यव्रतधरः शूरो ब्रह्मचारी च पाण्डवः । गुरुवर्त्ती च तेनास्त्रं संजहारार्ज्जुनः पुनः ।
द्रौणिरप्यथ सम्प्रेक्ष्य तावृषी पुरतः स्थितौ । न शशाक पुनर्घोरमस्त्रं संहर्त्तुमोजसा ।
अशक्तः प्रतिसंहारे परमास्त्रस्य संयुगे । द्रौणिर्दीनमना राजन् द्वैपायनमभाषत ।
उत्तमव्यसनार्त्तेन प्राणत्राणमभीप्सुना । मयैतदस्त्रमुत्सृष्टं भीमसेनभयान्मुने ।
अधर्म्मश्च कृतोऽनेन धार्त्तराष्ट्रं जिघांसता । मिथ्याचारेण भगवन् भीमसेनेन संयुगे । ७००
अतः सृष्टमिदं ब्रह्मन् मयाऽस्त्रमकृतात्मना । तस्य भूयोऽद्य संहारं कर्त्तुं नाहमिहोत्सहे ।
निसृष्टं हि मया दिव्यमेतदस्त्रं दुरासदं । अपाण्डवायेति मुने ब्रह्मतेजोऽनुमन्त्र्य वै ।
तदिदं पाण्डवेयानामन्तकायाभिसंहितं । अद्य पाण्डुसुतान् सर्व्वान् जीविताद्भ्रंशयिष्यति ।
कृतं पापमिदं ब्रह्मन् रोषाविष्टेन चेतसा । वधमाशास्य पार्थानां मयाऽस्त्रं सृजता रणे ।
॥ व्यास उवाच ॥ अस्त्रं ब्रह्मशिरस्तात विद्वान् पार्थो धनञ्जयः । उत्सृष्टवान्न रोषेण न नाशाय तवाहवे । ७०५
अस्त्रमस्त्रेण तु रणे तव संशमयिष्यता । विसृष्टमर्ज्जुनेनेदं पुनश्च प्रतिसंहृतं ।
ब्रह्मास्त्रमप्यवाप्यैतदुपदेशात् पितुस्तव । क्षत्रधर्म्मान्महाबाहुर्नाकम्पत धनञ्जयः ।
एवं धृतिमतः साधोः सर्व्वास्त्रविदुषः सतः । सभ्रातृबन्धोः कस्मात्त्वं वधमस्य चिकीर्षसि ।
अस्त्रं ब्रह्मशिरो यत्र परमास्त्रेण वध्यते । समा द्वादश पर्ज्जन्यस्तद्राष्ट्रं नाभिवर्षति ।
एतदर्थं महाबाहुः शक्तिमानपि पाण्डवः । न विहन्त्यात्तदस्त्रन्तु प्रजाहितचिकीर्षया । ७१०
पाण्डवास्त्वञ्च राष्ट्रञ्च सदा संरक्ष्यमेव हि । तस्मात् संहर दिव्यं त्वमस्त्रमेतन्महाभुज ।
अरोषस्तव चैवास्तु पार्थाः सन्तु निरामयाः । न ह्यधर्म्मेण राजर्षिः पाण्डवो जेतुमिच्छति ।
मणिञ्चैव प्रयच्छाद्य यस्ते शिरसि तिष्ठति । एतदादाय ते प्राणान् प्रतिदास्यन्ति पाण्डवाः ।
॥ द्रौणिरुवाच ॥ पाण्डवैर्यानि रत्नानि यच्चान्यत् कौरवैर्द्धनं । अवाप्तमिह तेभ्योऽयं मणिर्मम विशिष्यते ।
यमाबध्य भयं नास्ति शस्त्रव्याधिक्षुधाश्रयं । देवेभ्यो दानवेभ्यो वा नागेभ्यो वा कथञ्चन । ७१५
न च रक्षोगणभयं न तस्करभयन्तथा । एवं वीर्य्यो मणिरयं न मे त्याज्यः कथञ्चन ।
यत्तु मे भगवानाह तन्मे कार्य्यमनन्तरं । अयं मणिरयं चाहमिषीका तु पतिष्यति ।
गर्भेषु पाण्डवेयानाममोघञ्चैतदुत्तमं । न च शक्तोऽस्मि भगवन् संहर्त्तुं पुनरुद्यतं ।
एतदस्त्रमतश्चैव गर्भेषु विसृजाम्यहं । न च वाक्यं भगवतो न करिष्ये महामुने ।

॥ व्यास उवाच ॥ एवं कुरु न चान्या तु बुद्धिः कार्य्या कथञ्चन । गर्भेषु पाण्डवेयानां विसृज्यैतदुपारम । ७२०

॥ वैशम्पायन उवाच ॥ ततः परममस्त्रन्तु द्रौणिरुद्यतमाहवे । द्वैपायनवचः श्रुत्वा गर्भेषु प्रमुमोच ह ।

इति श्रीमहाभारते सौप्तिकपर्व्वणि ऐषीकपर्व्वणि ब्रह्मशिरोऽस्त्रपाण्डवेयगर्भप्रवेशे पञ्चदशोऽध्यायः ॥ १५ ॥

॥ वैशम्पायन उवाच ॥ तदाज्ञाय हृषीकेशो विसृष्टं पापकर्म्मणा । हृष्यमाण इदं वाक्यं द्रौणिं प्रत्यब्रवीत्तदा ।

विराटस्य सुतां पूर्व्वं स्नुषां गाण्डीवधन्वनः । उपप्लव्यगतां दृष्ट्वा व्रतवान् ब्राह्मणोऽब्रवीत् ।

परिक्षीणेषु कुरुषु पुत्त्रस्तव भविष्यति । एतदस्य परिक्षित्त्वं गर्भस्थस्य भविष्यति ।

तस्य तद्वचनं साधोः सत्यमेतद्भविष्यति । परिक्षिद्भविता ह्येषां पुनर्वंशकरः सुतः । ७२५

एवं ब्रुवाणं गोविन्दं सात्वतां प्रवरं तदा । द्रौणिः परमसंरब्धः प्रत्युवाचेदमुत्तरं ।

नैतदेव यथात्थ त्वं पक्षपातेन केशव । वचनं पुण्डरीकाक्ष न च मद्वाक्यमन्यथा ।

पतिष्यति तदस्त्रं हि गर्भे तस्या मयोद्यतं । विराटदुहितुः कृष्ण यां त्वं रक्षितुमिच्छसि ।

॥ श्रीभगवानुवाच ॥ अमोघः परमास्त्रस्य पातस्तस्य भविष्यति । स तु गर्भो मृतो जातो दीर्घमायुरवाप्स्यति ।

त्वान्तु कापुरुषं पापं विदुः सर्व्वे मनीषिणः । असकृत्पापकर्म्माणं बालजीवितघातकं । ७३०

तस्मात्त्वमस्य पापस्य कर्म्मणः फलमाप्नुहि । त्रीणि वर्षसहस्राणि चरिष्यसि महीमिमां ।

अप्राप्नुवन् क्वचित् काञ्चित् संविदं जातु केनचित् । निर्जनानसहायस्त्वं देशान् प्रविचरिष्यसि ।

भवित्री नहि ते क्षुद्र जनमध्येषु संस्थितिः । पूयशोणितगन्धी च दुर्गकान्तारसंश्रयः ।

विचरिष्यसि पापात्मा सर्व्वव्याधिसमन्वितः । वयः प्राप्य परिक्षित्तु वेदव्रतमवाप्य च ।

कृपाच्छारद्वताद्वीरः सर्व्वास्त्राण्युपलप्स्यते । विदित्वा परमास्त्राणि क्षत्रधर्म्मव्रते स्थितः । ७३५

षष्टिं वर्षाणि धर्म्मात्मा वसुधां पालयिष्यति । इतश्चोर्द्ध्वं महाबाहुः कुरुराजो भविष्यति ।

परिक्षिन्नाम नृपतिर्म्मिषतस्ते सुदुर्म्मते । अहं तं जीवयिष्यामि दग्धं शस्त्राग्नितेजसा ।

पश्य मे तपसो वीर्य्यं सत्यस्य च नराधम ।

॥ व्यास उवाच ॥ यस्मादनादृत्य कृतं त्वयाऽस्मान् कर्म्म दारुणं । ब्राह्मणस्य सतश्चैव यस्मात्ते वृत्तमीदृशं ।

तस्माद्यद्देवकीपुत्त्र उक्तवानुत्तमं वचः । असंशयन्ते तद्भावि क्षत्रधर्म्मस्त्वयाश्रितः । ७४०

॥ अश्वत्थामोवाच ॥ सहैव भवता ब्रह्मन् स्थास्यामि पुरुषेष्विह । सत्यवागस्तु भगवानयञ्च पुरुषोत्तमः ।

॥ वैशम्पायन उवाच ॥ प्रदायाथ मणिं द्रौणिः पाण्डवानां महात्मनां । जगाम विमनास्तेषां सर्व्वेषां पश्यतां वनं ।

पाण्डवाश्चापि गोविन्दं पुरस्कृत्य हतद्विषः । कृष्णद्वैपायनञ्चैव नारदञ्च महामुनिं ।

द्रोणपुत्त्रस्य सहजं मणिमादाय सत्वराः । द्रौपदीमभ्यधावन्त प्रायोपेतां मनस्विनीं ।

॥ वैशम्पायन उवाच ॥ ततस्ते पुरुषव्याघ्राः सदश्वैरनिलोपमैः । अभ्ययुः सहदाशार्हाः शिविरं पुनरेव हि । ७४५

अवतीर्य्य रथाभ्यान्तु त्वरमाणा महारथाः । ददृशुर्द्रौपदीं कृष्णामार्त्तामार्त्ततराः स्वयं ।

तामुपेत्य निरानन्दां दुःखशोकसमन्वितां । परिवार्य्य व्यतिष्ठन्त पाण्डवाः सहकेशवाः ।

ततो राज्ञाभ्यनुज्ञातो भीमसेनो महाबलः । प्रददौ तं मणिं दिव्यं वचनञ्चेदमब्रवीत् ।

अयं भद्रे तव मणिः पुत्रहन्ता जितः स ते। उत्तिष्ठ शोकमुत्सृज्य क्षत्रधर्म्ममनुस्मर।
प्रयाणे वासुदेवस्य शमार्थमसितेक्षणे। यान्युक्तानि त्वया भीरु वाक्यानि मधुघातिनि। ७५०
नैव मे पतयः सन्ति न पुत्रा भ्रातरो न च। न वै त्वमिति गोविन्द शममिच्छति राजनि।
उक्तवत्यसि तीव्राणि वाक्यानि पुरुषोत्तमं। क्षत्रधर्म्मानुरूपाणि तानि संस्मर्त्तुमर्हसि।
हतो दुर्य्योधनः पापी राज्यस्य परिपन्थिकः। दुःशासनस्य रुधिरं पीतं विस्फुरतो मया।
वैरस्य गतमानृण्यं न स्म वाच्या विवक्षतां। जित्वा मुक्तो द्रोणपुत्रो ब्राह्मण्याद्गौरवेण च।
यशोऽस्य पातितं देवि शरीरन्त्ववशेषितं। वियोजितश्च मणिना भ्रंशितश्चायुधं भुवि। ७५५
॥ द्रौपद्युवाच ॥ केवलानृण्यमाप्ताऽस्मि गुरुपुत्रो गुरुर्मम। शिरस्येतं मणिं राजा प्रतिबध्नातु भारत।
तं गृहीत्वा ततो राजा शिरस्येवाकरोत्तदा। गुरोरुच्छिष्टमित्येव द्रौपद्या वचनादपि।
ततो दिव्यं मणिवरं शिरसा धारयन् प्रभुः। शुशुभे स तदा राजा सचन्द्र इव पर्व्वतः।
उत्तस्थौ पुत्रशोकार्त्ता ततः कृष्णा मनस्विनी। कृष्णञ्चापि महाबाहुः परिपप्रच्छ धर्म्मराट्।
इति श्रीमहाभारते सौप्तिकपर्व्वण्यैषीकपर्व्वणि द्रौपदीसान्त्वनायां षोडशोऽध्यायः ॥ १६ ॥
॥ वैशम्पायन उवाच ॥ हतेषु सर्व्वसैन्येषु सौप्तिके तै रथैस्त्रिभिः। शोचन् युधिष्ठिरो राजा दाशार्हमिदमब्रवीत्। ७६०
कथं नु कृष्ण पापेन क्षुद्रेणाक्लिष्टकर्म्मणा। द्रौणिना निहताः सर्व्वे मम पुत्रा महारथाः।
तथा कृतास्त्रा विक्रान्ताः सहस्रशतयोधिनः। द्रुपदस्यात्मजाश्चैव द्रोणपुत्रेण पातिताः।
यस्य द्रोणो महेष्वासो न प्रादादाहवे मुखं। निजघ्ने रथिनां श्रेष्ठं धृष्टद्युम्नं कथं नु सः।
किन्नु तेन कृतं कर्म्म तथायुक्तं नरर्षभ। यदेकः समरे सर्व्वानवधीन्नो गुरोः सुतः।
॥ श्रीभगवानुवाच ॥ नूनं स देवदेवानामीश्वरेश्वरमव्ययं। जगाम शरणं द्रौणिरेकस्तेनावधीद्बहून्। ७६५
प्रसन्नो हि महादेवो दद्यादमरतामपि। वीर्य्यञ्च गिरिशो दद्याद्येनेन्द्रमपि शातयेत्।
वेदाहं हि महादेवं तत्त्वेन भरतर्षभ। यानि चास्य पुराणानि कर्म्माणि विविधानि च।
आदिरेष हि भूतानां मध्यमन्तश्च भारत। विचेष्टते जगच्चेदं सर्व्वमस्यैव कर्म्मणा।
एवं सिसृक्षुर्भूतानि ददर्श प्रथमं विभुः। पितामहोऽब्रवीच्चैनं भूतानि सृज माचिरं।
हरिकेशस्तथेत्युक्त्वा भूतानां दोषदर्शिवान्। दीर्घकालं तपस्तेपे मग्नोऽम्भसि महातपाः। ७७०
सुमहान्तं ततः कालं प्रतीक्ष्यैनं पितामहः। स्रष्टारं सर्व्वभूतानां ससर्ज्ज मनसाऽपरं।
सोऽब्रवीत् पितरं दृष्ट्वा गिरिशं सुप्तमम्भसि। यदि मे नाग्रजोऽस्त्यन्यस्ततः स्रक्ष्याम्यहं प्रजाः।
तमब्रवीत् पिता नास्ति त्वदन्यः पुरुषोऽग्रजः। स्थाणुरेष जले मग्नो विस्रब्धः कुरु वै कृतं।
भूतान्यन्वसृजत् सप्त दक्षादींस्तु प्रजापतीन्। यैरिमं व्यकरोत् सर्व्वं भूतग्रामं चतुर्व्विधं।
ताः सृष्टमात्राः क्षुधिताः प्रजाः सर्व्वाः प्रजापतिं। बिभक्षयिषवो राजन् सहसा प्राद्रवंस्तदा। ७७५
स भक्ष्यमाणस्त्राणार्थी पितामहमुपाद्रवत्। आभ्यो मां भगवांस्त्रातु वृत्तिरासां विधीयतां।
ततस्ताभ्यो ददावन्नमोषधीः स्थावराणि च। जङ्गमानि च भूतानि दुर्ब्बलानि बलीयसां।

विवृद्धितास्ताः प्रजास्तास्तु जग्मुः सृष्टा यथागतं । ततो ववृधिरे राजन् प्रीतिमत्यः स्वयोनिषु ।
भूतग्रामे विवृद्धे तु तुष्टे लोकगुरावपि । उदतिष्ठज्जलाज्ज्येष्ठः प्रजाश्चेमा ददर्श सः ।
बहुरूपाः प्रजाः सृष्टा विवृद्धाश्च स्वतेजसा । चुक्रोध भगवानुग्रो लिङ्गं स्वस्याप्यविध्यत । ७८०
तत्प्रविद्धं तथा भूमौ तथैव प्रत्यतिष्ठत । तमुवाचाव्ययो ब्रह्मा वचोभिः शमयन्निव ।
किं कृतं सलिले शर्व्व चिरकालस्थितेन ते । किमर्थञ्चेदमुत्पाद्य लिङ्गं भूमौ प्रवेशितं ।
सोऽब्रवीज्जातसंरम्भस्तथा लोकगुरुर्गुरुं । प्रजाः सृष्टाः परेणेमाः किं करिष्याम्यनेन वै ।
तपसाऽधिगतञ्चान्नं प्रजार्थं मे पितामह । ओषध्यः परिवर्त्तेरन् यथैवं सततं प्रजाः ।
एवमुक्त्वा स सक्रोधो जगाम विमना भवः । गिरेर्मुञ्जवतः पादं तपस्तप्तुं महातपाः । ७८५
इति श्रीमहाभारते सौप्तिकपर्व्वण्यैषीकपर्व्वणि युधिष्ठिरकृष्णसंवादे सप्तदशोऽध्यायः ॥ १७ ॥
॥ श्रीभगवानुवाच ॥ ततो देवयुगेऽतीते देवा वै समकल्पयन् । यज्ञं वेदप्रमाणेन विधिवद्यष्टुमीप्सवः ।
कल्पयामासुरव्यग्रास्ते साधनानि हवींषि च । भागार्हा देवताश्चैव यज्ञियं द्रव्यमेव च ।
ता वै रुद्रमजानन्त्यो याथातथ्येन देवताः । नाकल्पयन्त देवस्य स्थाणोर्भागं नराधिप ।
सोऽकल्प्यमाने भागे तु कृत्तिवासा मखेऽमरैः । ततः साधनमन्विच्छन् धनुरादौ ससर्ज ह ।
लोकयज्ञः क्रियायज्ञो गृहयज्ञः सनातनः । पञ्चभूतनृयज्ञश्च यज्ञे सर्व्वमिदं जगत् । ७९०
लोकयज्ञैर्नृयज्ञैश्च कपर्द्दी विदधे धनुः । धनुः सृष्टमभूत्तस्य पञ्चकिष्कुः प्रमाणतः ।
वषट्कारोऽभवज्ज्या तु धनुषस्तस्य भारत । यज्ञाङ्गानि च चत्वारि तस्य सन्नहनेऽभवन् ।
ततः क्रुद्धो महादेवस्तदुपादाय कार्मुकं । आजगामाथ तत्रैव यत्र देवाः समीजिरे ।
तमात्तकार्मुकं दृष्ट्वा ब्रह्मचारिणमव्ययं । विव्यथे पृथिवी देवी पर्व्वताश्च चकम्पिरे ।
न ववौ पवनश्चैव नाग्निर्जज्वाल चैधितः । व्यभ्रमच्चापि संविग्नं दिवि नक्षत्रमण्डलं । ७९५
न बभौ भास्करश्चापि सोमः श्रीमुक्तमण्डलः । तिमिरेणाकुलं सर्व्वमाकाशञ्चाभवद्वृतं ।
अभिभूतास्ततो देवा विषयान्न प्रजज्ञिरे । न प्रत्यभाच्च यज्ञः स देवतास्त्रेसिरे तथा ।
ततः स यज्ञं विव्याध रौद्रेण हृदि पत्रिणा । अपक्रान्तस्ततो यज्ञो मृगो भूत्वा सपावकः ।
स तु तेनैव रूपेण दिवं प्राप्य व्यराजत । अन्वीयमानो रुद्रेण युधिष्ठिर नभस्तले ।
अपक्रान्ते ततो यज्ञे संज्ञा न प्रत्यभात् सुरान् । नष्टसंज्ञेषु देवेषु न प्राज्ञायत किञ्चन । ८००
त्र्यम्बकः सवितुर्बाहू भगस्य नयने तथा । पूष्णश्च दशनान् क्रुद्धो धनुष्कोट्या व्यशातयत् ।
प्राद्रवन्त ततो देवा यज्ञाङ्गानि च सर्व्वशः । केचित्तत्रैव घूर्णन्तो गतासव इवाभवन् ।
स तु विद्राव्य तत् सर्व्वं शितिकण्ठोऽवहस्य च । अवष्टभ्य धनुष्कोटिं रुरोध विबुधांस्ततः ।
ततो वागमरैरुक्ता ज्यां तस्य धनुषोऽच्छिनत् । अथ तत् सहसा राजन् छिन्नज्यं विस्फुरद्धनुः ।
ततो विधनुषं देवा देवश्रेष्ठमुपागमन् । शरणं सह यज्ञेन प्रसादञ्चाकरोत् प्रभुः । ८०५
ततः प्रसन्नो भगवान् स्थाप्य कोपं जलाशये । सजलं पावको भूत्वा शोषयत्यनिशं प्रभो ।

भगस्य नयने चैव बाहू च सवितुस्तथा। प्रादात् पूष्णश्च दशनान् पुनर्यज्ञांश्च पाण्डव।
ततः सुस्थमिदं सर्व्वं बभूव पुनरेव हि। सर्व्वाणि च हवींष्यस्य देवा भागमकल्पयन्।
तस्मिन् क्रुद्धेऽभवत् सर्व्वमसुस्थं भुवनं प्रभो। प्रसन्ने च पुनः सुस्थं प्रसन्नोऽस्य च वीर्य्यवान्।
ततस्ते निहताः सर्व्वे तव पुत्त्रा महारथाः। अन्ये च बहवः शूराः पाञ्चालस्य पदानुगाः। ८१०
न तन्मनसि कर्त्तव्यं न च तद्द्रौणिना कृतं। महादेवप्रसादेन कुरु कार्य्यमनन्तरं।
इति श्रीमहाभारते सौप्तिकपर्व्वण्यैषीकपर्व्वणि युधिष्ठिरार्ज्जुनसंवादे अष्टादशोऽध्यायः॥ १८ ॥

॥ समाप्तञ्चेदं सौप्तिकपर्व्व ॥

# श्रीमहाभारतं

## ॥ अथ स्त्रीपर्व्व ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं। देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्।

॥ जनमेजय उवाच ॥ हते दुर्य्योधने चैव हते सैन्ये च सर्व्वशः। धृतराष्ट्रो महाराजः श्रुत्वा किमकरोन्मुने।
तथैव कौरवो राजा धर्म्मपुत्रो महामनाः। कृपप्रभृतयश्चैव किमकुर्व्वत ते त्रयः।
अश्वत्थाम्नः श्रुतं कर्म्म शापादन्योन्यकारितात्। वृत्तान्तमुत्तरं ब्रूहि यदभाषत सञ्जयः।
॥ वैशम्पायन उवाच ॥ हते पुत्रशते दीनं छिन्नशाखमिव द्रुमं। पुत्रशोकाभिसन्तप्तं धृतराष्ट्रं महीपतिं।
ध्यानमूकत्वमापन्नं चिन्तया समभिप्लुतं। अभिगम्य महाराजं सञ्जयो वाक्यमब्रवीत्। ५
किं शोचसि महाराज नास्ति शोके सहायता। अक्षौहिण्यो हताश्चाष्टौ दश चैव विशाम्पते।
निर्ज्जनेयं वसुमती शून्या सम्प्रति केवला। नानादिग्भ्यः समागम्य नानादेश्या नराधिपाः।
सहैव तव पुत्रेण सर्व्वे वै निधनं गताः। पितॄणां पुत्रपौत्राणां ज्ञातीनां सुहृदान्तथा।
गुरूणाञ्चानुपूर्व्व्येण प्रेतकार्य्याणि कारय।
॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा करुणं वाक्यं पुत्रपौत्रवधार्द्दितः। पपात भुवि दुर्द्धर्षो वाताहत इव द्रुमः। १०
॥ धृतराष्ट्र उवाच ॥ हतपुत्रो हतामात्यो हतसर्व्वसुहृज्जनः। दुःखी नूनं भविष्यामि विचरन् पृथिवीमिमां।
किं नु बन्धुविहीनस्य जीवितेन ममाद्य वै। लूनपक्षस्य इव मे जराजीर्णस्य पक्षिणः।
हतराज्यो हतबन्धुर्हतचक्षुश्च वै तथा। न भ्राजिष्ये महाप्राज्ञ क्षीणरश्मिरिवांशुमान।
न कृतं सुहृदां वाक्यं जामदग्न्यस्य जल्पतः। नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च।
सभामध्ये तु कृष्णेन यच्छ्रेयोऽभिहितं मम। अलं वैरेण ते राजन् पुत्रः संगृह्यतामिति। १५
तच्च वाक्यमकृत्वाऽहं भृशं तप्यामि दुर्म्मतिः। न हि श्रोताऽस्मि भीष्मस्य धर्म्मयुक्तं प्रभाषितं।
दुर्य्योधनस्य च तथा वृषभस्येव नर्द्दतः। दुःशासनवधं श्रुत्वा कर्णस्य च विपर्य्ययं।
द्रोणसूर्य्योपरागञ्च हृदयं मे विदीर्य्यते। न स्मराम्यात्मनः किञ्चित् पुरा सञ्जय दुष्कृतं।
यस्येदं फलमद्येह मया मूढेन भुज्यते। नूनं व्यपकृतं किञ्चिन्मया पूर्व्वेषु जन्मसु।
येन मां दुःखभागेषु धाता कर्म्मसु युक्तवान्। परिणामश्च वयसः सर्व्वबन्धुक्षयश्च मे। २०

सुहृन्मित्रविनाशश्च दैवयोगादुपागतः। कोऽन्योऽस्ति दुःखिततरो मत्तोऽन्यो हि पुमान् भुवि।
तस्मान्मयैव पश्यन्तु पाण्डवाः संशितव्रताः। विवृतं ब्रह्मलोकस्य दीर्घमध्वानमास्थितं।
॥ वैशम्पायन उवाच ॥ तस्य लालप्यमानस्य बहुशोकं वितन्वतः। शोकापहं नरेन्द्रस्य सञ्जयो वाक्यमब्रवीत्।
शोकं राजन् व्यपनुद श्रुतास्ते वेदनिश्चयाः। शास्त्रागमाश्च विविधा वृद्धेभ्यो नृपसत्तम।
सृञ्जये पुत्रशोकार्त्ते यदूचुर्मुनयः पुरा। यथा यौवनजं दर्पमास्थिते ते सुते नृप। २५
न त्वया सुहृदां वाक्यं ब्रुवतामवधारितं। स्वार्थश्च न कृतः कश्चिल्लुब्धेन फलकाङ्क्षिणा।
असिनैवैकधारेण स्वबुद्ध्या तु विचेष्टितं। प्रायशोऽवृत्तसम्पन्नाः सततं पर्य्युपासिताः।
यस्य दुःशासनो मन्त्री राधेयश्च दुरात्मवान्। शकुनिश्चैव दुष्टात्मा चित्रसेनश्च दुर्म्मतिः।
शल्यश्च येन वै सर्व्वं शल्यभूतं कृतं जगत्। कुरुवृद्धस्य भीष्मस्य गान्धार्य्या विदुरस्य च।
द्रोणस्य च महाराज कृपस्य च शरद्वतः। कृष्णस्य च महाराज नारदस्य च धीमतः। ३०
ऋषीणाञ्च तथाऽन्येषां व्यासस्यामिततेजसः। न कृतं तेन वचनं तव पुत्रेण भारत।
अल्पबुद्धिरहङ्कारी नित्यं युद्धमिति ब्रुवन्। क्रूरो दुर्म्मर्षणो नित्यमसन्तुष्टश्च वीर्य्यवान्।
श्रुतवानसि मेधावी सत्यवांश्चैव नित्यदा। न मुह्यन्तीदृशाः सन्तो बुद्धिमन्तो भवादृशाः।
न धर्म्मः सत्कृतः कश्चिन्नित्यं युद्धमिति ब्रुवन्। क्षपिताः क्षत्रियाः सर्व्वे शत्रूणां वर्द्धितं यशः।
मध्यस्थोऽसि त्वमप्यासीर्न क्षमं किञ्चिदुक्तवान्। दुर्द्धरेण त्वया भारस्तुलया न समं धृतः। ३५
आदावेव मनुष्येण वर्त्तितव्यं यथाक्षमं। यथा नातीतमर्थं वै पश्चात्तापेन युज्यते।
पुत्रगृद्ध्या त्वया राजन् प्रियन्तस्य चिकीर्षितं। पश्चात्तापमिमं प्राप्तो न त्वं शोचितुमर्हसि।
मधु यः केवलं दृष्ट्वा प्रपातं नानुपश्यति। स भ्रष्टो मधुलोभेन शोचत्येवं यथा भवान्।
अर्थान्न शोचन् प्राप्नोति न शोचन् विन्दते फलं। न शोचन् श्रियमाप्नोति न शोचन् विन्दते परं।
स्वयमुत्पादयित्वाऽग्निं वस्त्रेण परिवेष्टयन्। दह्यमानो मनस्तापं भजते न स पण्डितः। ४०
त्वयैव ससुतेनायं वाक्यवायुसमीरितः। लोभाज्येन च संसिक्तो ज्वलितः पार्थपावकः।
तस्मिन् समिद्धे पतिताः शलभा इव ते सुताः। तान् वै शराग्निनिर्द्दग्धान्न त्वं शोचितुमर्हसि।
यच्चाश्रुपातात् कलिलं वदनं वहसे नृप। अशास्त्रदृष्टमेतद्धि न प्रशंसन्ति पण्डिताः।
विस्फुलिङ्गा इव ह्येतान् दहन्ति किल मानवान्। जहीहि मन्युं बुद्ध्या वै धारयात्मानमात्मना।
॥ वैशम्पायन उवाच ॥ एवमाश्वासितस्तेन सञ्जयेन महात्मना। विदुरो भूय एवाह बुद्धिपूर्व्वं परन्तपः। ४५
इति श्रीमहाभारते स्त्रीपर्व्वणि जलप्रदानिकपर्व्वणि धृतराष्ट्रविशोके प्रथमोऽध्यायः॥ १ ॥
॥ वैशम्पायन उवाच ॥ ततोऽमृतसमैर्व्वाक्यैर्ह्लादयन् पुरुषर्षभं। वैचित्रवीर्य्यं विदुरो यदुवाच निबोध तत्।
॥ विदुर उवाच ॥ उत्तिष्ठ राजन् किं शेषे धारयात्मानमात्मना। एषा वै सर्व्वसत्त्वानां लोकेश्वरपरा गतिः।
सर्व्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः। संयोगा विप्रयोगान्ता मरणान्तञ्च जीवितं।
यदा शूरञ्च भीरुञ्च यमः कर्षति भारत। तत् किं न योत्स्यन्ति हि ते क्षत्रियाः क्षत्रियर्षभ।

अयुध्यमानो म्रियते युध्यमानश्च जीवति। कालं प्राप्य महाराज न कश्चिदतिवर्त्तते।
१०
अभावादीनि भूतानि भावमध्यानि भारत। अभावनिधनान्येव तत्र का परिदेवना।
न शोचन्मृतमन्वेति न शोचन् म्रियते नरः। एवं सांसिद्धिके लोके किमर्थमनुशोचसि।
कालः कर्षति भूतानि सर्व्वाणि विविधान्युत। न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम।
यथा वायुस्तृणाग्राणि संवर्त्तयति सर्व्वशः। तथा कालवशं यान्ति भूतानि भरतर्षभ।
एकसार्थप्रयातानां सर्व्वेषां तत्र गामिनां। यस्य कालः प्रयात्यग्रे तत्र का परिदेवना।
१५
न चाप्येतान् हतान् युद्धे राजन् शोचितुमर्हसि। प्रमाणं यदि शास्त्राणि गतास्ते परमां गतिं।
सर्व्वे स्वाध्यायवन्तो हि सर्व्वे च चरितव्रताः। सर्व्वे चाभिमुखाः क्षीणास्तत्र का परिदेवना।
अदर्शनादापतिताः पुनश्चादर्शनं गताः। नैते तव न तेषां त्वं तत्र का परिदेवना।
हतोऽपि लभते स्वर्गं हत्वा च लभते यशः। उभयं नो बहुगुणं नास्ति निष्फलता रणे।
तेषां कामदुघाँल्लोकानिन्द्रः सङ्कल्पयिष्यति। इन्द्रस्यातिथयो ह्येते भवन्ति पुरुषर्षभ।
२०
न यज्ञैर्दक्षिणावद्भिर्न तपोभिर्न विद्यया। स्वर्गं यान्ति तथा मर्त्त्या यथा शूरा रणे हताः।
शरीराग्निषु शूराणां जुहुवुस्ते शराहुतीः। हूयमानाञ्छरांश्चैव सेहुस्तेजस्विनो मिथः।
एवं राजंस्तवाचक्षे स्वर्ग्यपन्थानमुत्तमं। न युद्धादधिकं किञ्चित् क्षत्रियस्येह विद्यते।
क्षत्रियास्ते महात्मानः शूराः समितिशोभनाः। आशिषं परमां प्राप्ता न शोच्याः सर्व्व एव हि।
आत्मानमात्मनाश्वास्य मा शुचः पुरुषर्षभ। नाद्य शोकाभिभूतस्त्वं कार्य्यमुत्स्रष्टुमर्हसि।
२५
मातापितृसहस्राणि पुत्रदारशतानि च। संसारेष्वनुभूतानि कस्य ते कस्य वा वयं।
शोकस्थानसहस्राणि भयस्थानशतानि च। दिवसे दिवसे मूढमाविशन्ति न पण्डितं।
न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम। न मध्यस्थः क्वचित् कालः सर्व्वं कालः प्रकर्षति।
कालः पचति भूतानि कालः संहरते प्रजाः। कालः सुप्तेषु जागर्त्ति कालो हि दुरतिक्रमः।
अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः। आरोग्यं प्रियसंवासो गृध्येदेषु न पण्डितः।
३०
न जानपदिकं दुःखमेकः शोचितुमर्हसि। अप्यभावेन युज्येत तच्चास्य न निवर्त्तते।
न शोचन् प्रतिकुर्व्वीत यदि पश्येत्पराक्रमात्। भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत्।
चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्द्धते। अनिष्टसम्प्रयोगाच्च विप्रयोगात् प्रियस्य च।
मानुषा मानसैर्दुःखैर्दह्यन्ते चाल्पबुद्धयः। नार्थो न धर्म्मो न सुखं यदेतदनुशोचसि।
न च नापैति कार्य्यार्थं त्रिवर्गाच्चैव हीयते। अन्यामन्यां धनावस्थां प्राप्य वैशेषिकीं नराः।
३५
असन्तुष्टाः प्रमुह्यन्ति सन्तोषं यान्ति पण्डिताः। प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः।
एतज्ज्ञानस्य सामर्थ्यं नैवान्यैः समतामियात्। शयानश्चानुशेते हि तिष्ठन्तञ्चानुतिष्ठति।
अनुधावन्ति धावन्तं कर्म्म पूर्व्वकृतं नरं। यस्यां यस्यामवस्थायां यत्करोति शुभाशुभं।
तस्यां तस्यामवस्थायां तत्फलं समुपाश्नुते। येन येन शरीरेण यद्यत्कर्म्म करोति यः।

तेन तेन शरीरेण तत्फलं समुपाश्नुते। आत्मैव ह्यात्मनो मित्रं आत्मैव रिपुरात्मनः। ८०
आत्मैव ह्यात्मनः साक्षी कृतस्याप्यकृतस्य च। शुभेन कर्म्मणा सौख्यं दुःखं पापेन कर्म्मणा।
कृतं लभति सर्व्वत्र नाकृतं भुज्यते क्वचित्। न हि ज्ञानविरुद्धेषु बह्वपायेषु कर्म्मसु।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः।

इति श्रीमहाभारते स्त्रीपर्व्वणि जलप्रदानिकपर्व्वणि धृतराष्ट्रविशोके द्वितीयोऽध्यायः॥ २॥

॥ धृतराष्ट्र उवाच ॥ सुभाषितैर्महाप्राज्ञ शोकोऽयं विगतो मम। भूय एव तु वाक्यानि श्रोतुमिच्छामि तत्त्वतः।
अनिष्टानाञ्च संसर्गादिष्टानाञ्च विसर्ज्जनात्। कथं हि मानसैर्दुःखैः प्रमुच्यन्ते तु पण्डिताः। ८५
॥ विदुर उवाच ॥ यतो यतो मनो दुःखात् सुखाद्वा विप्रमुच्यते। ततस्ततो नियम्यैतच्छान्तिं विन्देत वै बुधः।
अशाश्वतमिदं सर्व्वं चिन्त्यमानं नरर्षभ। कदलीसन्निभो लोकः सारो ह्यस्य न विद्यते।
यदा प्राज्ञाश्च मूढाश्च धनवन्तोऽथ निर्द्धनाः। सर्व्वे पितृवनं प्राप्य स्वपन्ति विगतज्वराः।
निर्म्मांसैरस्थिभूयिष्ठैर्गात्रैः स्नायुनिबन्धिभिः। किं विशेषं प्रपश्यन्ति तत्र तेषां परे जनाः।
येन प्रत्यवगच्छेयुः कुलरूपविशेषणं। कस्मादन्योन्यमिच्छन्ति विप्रलब्धधियो नराः। ९०
गृहाणीव हि मर्त्यानामाहुर्देहानि पण्डिताः। कालेन विनियुज्यन्ते सत्त्वमेकन्तु शाश्वतं।
यथा जीर्णमजीर्णं वा वस्त्रं त्यक्त्वा तु पूरुषः। अन्यद्रोचयते वस्त्रमेवं देहाः शरीरिणां।
वैचित्रवीर्य्य साध्यं हि दुःखं वा यदि वा सुखं। प्राप्नुवन्तीह भूतानि स्वकृतेनैव कर्म्मणा।
कर्म्मणा प्राप्यते स्वर्गः सुखं दुःखञ्च भारत। ततो वहति तं भारमवशः स्ववशोऽपि वा।
यथा च मृण्मयं भाण्डं चक्रारूढं विपद्यते। किञ्चित्प्रक्रियमाणं वा कृतमात्रमथापि वा। ९५
छिन्नं वाप्यवरोप्यन्तमवतीर्णमथापि वा। आर्द्रं वाऽप्यथ वा शुष्कं पच्यमानमथापि वा।
अवताय्यमाणमापाकादुद्धृतञ्चापि भारत। अथ वा परिभुज्यन्तमेवं देहाः शरीरिणां।
गर्भस्थो वा प्रसूतो वाऽप्यथ वा दिवसान्तरः। अर्द्धमासगतो वाऽपि मासमात्रगतोऽपि वा।
संवत्सरगतो वाऽपि द्विसंवत्सर एव वा। यौवनस्थोऽथ मध्यस्थो वृद्धो वाऽपि विपद्यते।
प्राक्कर्म्मभिस्तु भूतानि भवन्ति न भवन्ति च। एवं सांसिद्धिके लोके किमर्थमनुतप्यसे। १००
यथा तु सलिलं राजन् क्रीडार्थमनुसञ्चरन्। उन्मज्जेच्च निमज्जेच्च किञ्चित्सत्त्व नराधिप।
एवं संसारगहने उन्मज्जननिमज्जने। कर्म्मभोगेन बध्यन्ते क्लिश्यन्ते चाल्पबुद्धयः।
ये तु प्राज्ञाः स्थिताः सत्त्वे संसारेऽस्मिन् हितैषिणः। समागमज्ञा भूतानां ते यान्ति परमाङ्गतिं।

इति श्रीमहाभारते स्त्रीपर्व्वणि जलप्रदानिकपर्व्वणि धृतराष्ट्रविशोके तृतीयोऽध्यायः॥ ३॥

॥ धृतराष्ट्र उवाच ॥ कथं संसारगहनं विज्ञेयं वदताम्वर। एतदिच्छाम्यहं श्रोतुं तत्त्वमाख्याहि पृच्छतः।
॥ विदुर उवाच ॥ जन्मप्रभृति भूतानां क्रिया सर्व्वोपलक्ष्यते। पूर्व्वमेवेह कलिले वसते किञ्चिदन्तरं। १०५
ततः स पञ्चमेऽतीते मासे वासमकल्पयत्। ततः सर्व्वाङ्गसम्पूर्णो गर्भो वै स तु जायते।
अमेध्यमध्ये वसति मांसशोणितलेपने। ततस्तु वायुवेगेन ऊर्द्ध्वपादो ह्यधःशिराः।

योनिद्वारमुपागम्य बहुक्लेशान् समृच्छति । योनिसम्पीडनाच्चैव पूर्व्वकर्म्मभिरन्वितः ।
तस्मान्मुक्तः स संसारादन्यान् पश्यत्युपद्रवान् । ग्रहास्तमुपगच्छन्ति सारमेया इवामिषं ।
ततः प्राप्तोत्तरे काले व्याधयश्चापि तं तथा । उपसर्पन्ति जीवन्तं बाध्यमानं स्वकर्म्मभिः । ११०
तं बद्धमिन्द्रियैः पाशैः सङ्गस्वादुभिरावृतं । व्यसनान्यपि वर्त्तन्ते विविधानि नराधिप ।
बाध्यमानश्च तैर्भूयो नैव तृप्तिमुपैति सः । तदा नावैति चैवायं प्रकुर्व्वन् साध्वसाधु वा ।
तथैव परिरक्षन्ति ये ध्यानपरिनिष्ठिताः । अयं न बुध्यते तावद्यमलोकमथागतं ।
यमदूतैर्व्विकृष्यंश्च मृत्युं कालेन गच्छति । वाग्घीनस्य च यत्पापं इष्टानिष्टं कृतं मुखे ।
भूय एवात्मनात्मानं बध्यमानमुपेक्षते । अहो विनिकृतो लोको लोभेन च वशीकृतः । ११५
लोभक्रोधभयोन्मत्तो नात्मानमवबुध्यते । कुलीनत्वे च रमते दुष्कुलीनान् विकुत्सयन् ।
धनदर्पेण दृप्तश्च दरिद्रान् परिकुत्सयन् । मूर्खानिति परानाह नात्मानं समवेक्षते ।
दोषान् क्षिपति चान्येषां नात्मानं शास्तुमिच्छति । यदा प्राज्ञाश्च मूर्खाश्च धनवन्तश्च निर्द्धनाः ।
कुलीनाश्चाकुलीनाश्च मानिनोऽथाप्यमानिनः । सर्व्वे पितृवनं प्राप्ताः स्वपन्ति विगतज्वराः ।
निर्म्मांसैरस्थिभूयिष्ठैर्गात्रैः स्नायुनिबन्धनैः । विशेषं न प्रपश्यन्ति तत्र तेषां परे जनाः । १२०
येन प्रत्यवगच्छेयुः कुलरूपविशेषणं । यदा सर्व्वे समं न्यस्ताः स्वपन्ति धरणीतले ।
कस्मादन्योन्यमिच्छन्ति प्रलब्धुमिह दुर्ब्बुधाः । प्रत्यक्षञ्च परोक्षञ्च यो निशम्य श्रुतिन्त्विमां ।
जन्मप्रभृति वर्त्तेत प्राप्नुयात् परमां गतिं । एवं सर्व्वं विदित्वा वै यस्तत्त्वमनुवर्त्तते ।
संप्रमोक्षयते सर्व्वान् पन्थानो मनुजेश्वर ।
इति श्रीमहाभारते स्त्रीपर्व्वणि जलप्रदानिकपर्व्वणि धृतराष्ट्रविशोके चतुर्थोऽध्यायः ॥ ४ ॥
॥ धृतराष्ट्र उवाच ॥ यदिदं धर्म्मगहनं बुद्ध्या समनुगम्यते । तद्धि विस्तरतः सर्व्वं बुद्धिमार्गं प्रशंस मे । १२५
॥ विदुर उवाच ॥ तत्र ते वर्त्तयिष्यामि नमस्कृत्वा स्वयम्भुवे । यथा संसारगहनं वदन्ति परमर्षयः ।
कश्चिन्महति संसारे वर्त्तमानो द्विजः किल । महद्दुर्गमनुप्राप्तो वनं क्रव्यादसङ्कुलं ।
सिंहव्याघ्रगजाकीर्णमतिघोरं महास्वनैः । समन्तात्सम्परिक्षिप्तं यत् स्म दृष्ट्वा त्रसेद्यमः ।
तदस्य दृष्ट्वा हृदयमुद्वेगमगमत् परं । अभ्युच्छ्रयश्च रोम्णां वै विक्रियाश्च परन्तप ।
स तद्वनं व्यनुसरन् सम्प्रधावन्नितस्ततः । वीक्षमाणो दिशः सर्व्वाः शरणं क्व भवेदिति । १३०
स तेषां छिद्रमन्विच्छन् प्रद्रुतो भयपीडितः । न च निर्याति वै दूरं न वा तैर्व्विप्रमुच्यते ।
अथापश्यद्वनं घोरं समन्ताद्वागुरावृतं । बाहुभ्यां सम्परिक्षिप्तं स्त्रिया परमघोरया ।
पञ्चशीर्षधरैर्नागैः शैलैरिव समुन्नतैः । नभःस्पृशैर्महाघोरैः परिक्षिप्तं महावनं ।
वनमध्ये च तत्राभूदुदपानः समावृतः । वल्लीभिस्तृणच्छन्नाभिर्दृढाभिरिव संवृतः ।
पपात स द्विजस्तत्र निगूढे सलिलाशये । विलग्नश्चाभवत्तस्मिन् लतासन्तानसङ्कुले । १३५
पनसस्य यथा जातं वृन्तबद्धं महाफलं । स तथा लम्बते तत्र ऊर्द्धपादो ह्यधःशिराः ।

अथ तत्रापि चान्योऽस्य भूयो जात उपद्रवः । कूपमध्ये महानागमपश्यत महाबलं ।
कूपवीनाहवेलायामपश्यत महागजं । षड्वक्त्रं कृष्णशबलं द्विषट्कपदचारिणं ।
क्रमेण परिसर्प्पन्तं वल्लीवृक्षसमावृतं । तस्य चापि प्रशाखासु वृक्षशाखावलम्बिनः ।
नानारूपा मधुकरा घोररूपा भयावहाः । आसते मधु संवृत्य पूर्व्वमेव निकेतजाः । १४०
भूयो भूयः समीहन्ते मधूनि भरतर्षभ । स्वादनीयानि भूतानां यैर्व्वालो विप्रकृष्यते ।
तेषां मधूनां बहुधा धारा प्रस्रवते सदा । आलम्बमानः स पुमान् धारां पिबति सर्व्वदा ।
न चास्य तृष्णा विरता पिबमानस्य सङ्कटे । अभीप्सति तदा नित्यमतृप्तः स पुनः पुनः ।
न चास्य जीविते राजन् निर्व्वेदः समजायत । तत्रैव च मनुष्यस्य जीविताशा प्रतिष्ठिता ।
कृष्णाः श्वेताश्च तं वृक्षं कुट्टयन्ति च मूषिकाः । व्यालैश्च वनदुर्गान्ते स्त्रिया च परमोग्रया । १४५
कूपाधस्ताच्च नागेन वीनाहे कुञ्जरेण च । वृक्षप्रपाताच्च भयं मूषिकेभ्यश्च पञ्चमं ।
मधुलोभान्मधुकरैः षष्ठमाहुर्महद्भयं । एवं स वसते तत्र क्षिप्तः संसारसागरे ।
न चैव जीविताशायां निर्व्वेदमुपगच्छति ।

इति श्रीमहाभारते स्त्रीपर्व्वणि जलप्रदानिकपर्व्वणि धृतराष्ट्रविशोके पञ्चमोऽध्यायः ॥ ५ ॥

॥ धृतराष्ट्र उवाच ॥ अहो खलु महद्दुःखं कृच्छ्रवासश्च तस्य ह । कथं तस्य रतिस्तत्र तुष्टिर्व्वा वदताम्वर ।
स देशः क्व नु यत्रासौ वसते धर्म्मसङ्कटे । कथं वा स विमुच्येत नरस्तस्मान्महाभयात् । १५०
एतन्मे सर्व्वमाचक्ष्व साधु चेष्टामहे तदा । कृपा मे महती जाता तस्याभ्युद्धरणेन हि ।
॥ विदुर उवाच ॥ उपमानमिदं राजन् मोक्षविद्भिरुदाहृतं । सुगतिं विन्दते येन परलोकेषु मानवः ।
उच्यते यत्तु कान्तारं महासंसार एव सः । वनं दुर्गं हि तच्चैतत् संसारगहनं हि तत् ।
ये च ते कथिता व्याला व्याधयस्ते प्रकीर्त्तिताः । या सा नारी बृहत्काया अध्यतिष्ठत तत्र वै ।
तामाहुस्तु जरां प्राज्ञा वर्णरूपविनाशिनीं । यस्तत्र कूपो नृपते स तु देहः शरीरिणां । १५५
यस्तत्र वसतेऽधस्तान्महाहिः काल एव सः । अन्तकः सर्व्वभूतानां देहिनां सर्व्वहार्य्यसौ ।
कूपमध्ये च या जाता वल्ली यत्र स मानवः । प्रताने लम्बते लग्नो जीविताशा शरीरिणां ।
स यस्तु कूपवीनाहे तं वृक्षं परिसर्पति । षड्वक्त्रः कुञ्जरो राजन् स तु संवत्सरः स्मृतः ।
षण्मुखा ऋतवो मासाः पादा द्वादश कीर्त्तिताः । ये तु वृक्षं निकृन्तन्ति मूषिकाः पन्नगास्तथा ।
रात्र्यहानि तु तान्याहुर्भूतानां परिचिन्तकाः । ये ते मधुकरास्तत्र कामास्ते परिकीर्त्तिताः । १६०
यास्तु ता बहुशो धाराः स्रवन्ति मधुनिस्रवं । तांस्तु कामरसान् विद्याद्यत्र मज्जन्ति मानवाः ।
एवं संसारचक्रस्य परिवृत्तिं विदुर्बुधाः । येन संसारचक्रस्य पाशांश्छिन्दन्ति वै बुधाः ।

इति श्रीमहाभारते स्त्रीपर्व्वणि जलप्रदानिकपर्व्वणि धृतराष्ट्रविशोके षष्ठोऽध्यायः ॥ ६ ॥

॥ धृतराष्ट्र उवाच ॥ अहोऽभिहितमाख्यानं भवता तत्त्वदर्शिना । भूय एव तु मे हर्षः श्रुत्वा वागमृतं तव ।
॥ विदुर उवाच ॥ शृणु भूयः प्रवक्ष्यामि मार्गस्यैतस्य विस्तरं । यच्छ्रुत्वा विप्रमुच्यन्ते संसारेभ्यो विचक्षणाः ।

यथा तु पुरुषो राजन् दीर्घमध्वानमास्थितः । क्वचित् क्वचित् श्रमाक्रान्तः कुरुते वासमेव च । १६५
एवं संसारपर्य्याये गर्भवासेषु भारत । कुर्व्वन्ति दुर्व्बुधा वासं मुच्यन्ते तत्र पण्डिताः ।
तस्मादध्वानमेवैतमाहुः शास्त्रविदो जनाः । यत्तु संसारगहनं वनमाहुर्मनीषिणः ।
सोऽयं लोकसमावर्त्तो मर्त्यानां भरतर्षभ । चराणां स्थावराणाञ्च न गृध्येत्तत्र पण्डितः ।
शारीरा मानसाश्चैव मर्त्यानां ये तु व्याधयः । प्रत्यक्षाश्च परोक्षाश्च ते व्यालाः कथिता भुवि ।
क्लिश्यमानाश्च तैर्नित्यं वार्य्यमाणाश्च भारत । स्वकर्म्मभिर्महाव्यालैर्नोद्विजन्त्यल्पबुद्धयः । १७०
अथापि तैर्व्विमुच्येत व्याधिभिः पुरुषो नृप । आवृणोत्येव तं पश्चाज्जरा रूपविनाशिनी ।
शब्दरूपरसस्पर्शैर्गन्धैश्च विविधैरपि । मज्जमानं महापङ्के निरालम्बे समन्ततः ।
संवत्सराश्च मासाश्च पक्षाहोरात्रसन्धयः । क्रमेणास्योपयुञ्जन्ति रूपमायुस्तथैव च ।
एते कालस्य निधयो नैतान् जानन्ति दुर्व्बुधाः । धात्राऽभिलिखितान्याहुः सर्व्वभूतानि कर्म्मणा ।
रथः शरीरं भूतानां सत्त्वमाहुस्तु सारथिं । इन्द्रियाणि हयानाहुः कर्म्मबुद्धिस्तु रश्मयः । १७५
तेषां हयानां यो वेगं धावतामनुधावति । स तु संसारचक्रेऽस्मिंश्चक्रवत्परिवर्त्तते ।
यस्तान् संयमते बुद्ध्या संयतो न निवर्त्तते । स तु संसारचक्रेऽस्मिंश्चक्रवत्परिवर्त्तते ।
भ्रममाणा न मुह्यन्ति संसारेण भ्रमन्ति ते । संसारे भ्रमतां राजन् दुःखमेतद्धि जायते ।
तस्मादस्य निवृत्त्यर्थं यत्नमेवाचरेत् बुधः । उपेक्षा नात्र कर्त्तव्या शतशाखः प्रवर्त्तते ।
यतेन्द्रियो नरो राजन् क्रोधलोभनिराकृतः । सन्तुष्टः सत्यवादी यः स शान्तिमधिगच्छति । १८०
याम्यमाहूरथं ह्येनं मुह्यन्ते येन दुर्व्बुधाः । स चैतत् प्राप्नुयाद्राजन् यत्त्वं प्राप्तो नराधिप ।
राज्यनाशं सुहृन्नाशं सुतनाशञ्च भारत । अनुतप्योक्तमेवैत दुःखं भवति भारत ।
साधुः परमदुःखानां बुद्धिभैषज्यमाचरेत् । ज्ञानौषधमवाप्येह दूरपारं महौषधं ।
छिन्द्याद्दुःखमहाव्याधिं नरः संयतमानसः । न विक्रमो न चाप्यर्थो न मित्रं न सुहृज्जनः ।
तथोन्मोचयते दुःखाद्यथात्मा स्थिरसंयमः । तस्मान्मैत्रं समास्थाय शीलमापद्य भारत । १८५
दमस्त्यागोऽप्रमादश्च ते त्रयो ब्रह्मणो हयाः । शीलरश्मिसमायुक्तः स्थितो यो मानसे रथे ।
त्यक्त्वा मृत्युभयं राजन् ब्रह्मलोकं स गच्छति । अभयं सर्व्वभूतेभ्यो यो ददाति महीपते ।
स गच्छति परं स्थानं विष्णोः परमनामयं । न तत्क्रतुसहस्रेण नोपवासैश्च नित्यशः ।
अभयस्य च दानेन यत्फलं प्राप्नुयान्नरः । न ह्यात्मनः प्रियतरं किञ्चिद्भूतेषु निश्चितं ।
अनिष्टं सर्व्वभूतानां मरणं नाम भारत । तस्मात् सर्व्वेषु भूतेषु दया कार्य्या विपश्चिता । १९०
नानामोहसमायुक्ता बुद्धिजालेन संवृताः । असूक्ष्मदृष्टयो मन्दा भ्राम्यन्ते तत्र तत्र ह ।
सुसूक्ष्मदृष्टयो राजन् व्रजन्ति ब्रह्म शाश्वतं ।

इति श्रीमहाभारते स्त्रीपर्व्वणि जलप्रदानिकपर्व्वणि धृतराष्ट्रविशोके सप्तमोऽध्यायः ॥ ७ ॥

॥ वैशम्पायन उवाच ॥ विदुरस्य तु तद्वाक्यं निशम्य कुरुसत्तमः । पुत्रशोकाभिसन्तप्तः पपात भुवि मूर्च्छितः

तं तथा पतितं भूमौ निःसंज्ञं प्रेक्ष्य बान्धवाः। कृष्णद्वैपायनश्चैव क्षत्ता च विदुरस्तथा।
सञ्जयः सुहृदश्चान्ये द्वाःस्था ये चास्य सम्मताः। जलेन सुखशीतेन तालवृन्तैश्च भारत। १९५
पस्पृशुश्च करैर्गात्रं वीज्यमानाश्च यत्नतः। आश्वास्य तु चिरं कालं धृतराष्ट्रं तथागतं।
अथ दीर्घस्य कालस्य लब्धसंज्ञो महीपतिः। विललाप चिरं कालं पुत्राधिभिरभिप्लुतः।
धिगस्तु खलु मानुष्यं मानुषेषु परिग्रहं। यतो मूलानि दुःखानि सम्भवन्ति मुहुर्मुहुः।
पुत्रनाशेऽर्थनाशे च ज्ञातिसम्बन्धिनामथ। प्राप्यते सुमहद्दुःखं विषाग्निप्रतिमं विभो।
येन दह्यन्ति गात्राणि येन प्रज्ञा विनश्यति। येनाभिभूतः पुरुषो मरणं बहु मन्यते। २००
तदिदं व्यसनं प्राप्तं मया भाग्यविपर्य्ययात्। तस्यान्तं नाभिगच्छामि ऋते प्राणविमोक्षणात्।
तथैवाहं करिष्यामि अद्यैव द्विजसत्तम। इत्युक्त्वा तु महात्मानं पितरं ब्रह्मवित्तमं।
धृतराष्ट्रोऽभवन्मूढः स शोकं परमं गतः। अभूच्च तूष्णीं राजाऽसौ ध्यायमानो महीपते।
तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनः प्रभुः। पुत्रशोकाभिसन्तप्तं पुत्रं वचनमब्रवीत्।
॥ व्यास उवाच॥ धृतराष्ट्र महाबाहो यत्त्वां वक्ष्यामि तच्छृणु। श्रुतवानसि मेधावी धर्म्मार्थकुशलः प्रभो। २०५
न तेऽस्त्यविदितं किञ्चिद्वेदितव्यं परन्तप। अनित्यतां हि मर्त्यानां विजानासि न संशयः।
अध्रुवे जीवलोके च स्थाने वा शाश्वते सति। जीविते मरणान्ते च कस्माच्छोचसि भारत।
प्रत्यक्षं तव राजेन्द्र वैरस्यास्य समुद्भवः। पुत्रन्ते कारणं कृत्वा कालयोगेन कारितः।
अवश्यं भवितव्ये च कुरूणां वैशसे नृप। कस्माच्छोचसि ताञ्छूरान् गतान् परमिकां गतिं।
जानता च महाबाहो विदुरेण महात्मना। यतितं सर्व्वयत्नेन शमं प्रति जनेश्वर। २१०
न च दैवकृतो मार्गः शक्यो भूतेन केनचित्। घटताऽपि चिरं कालं नियन्तुमिति मे मतिः।
देवतानां हि यत्कार्य्यं मया प्रत्यक्षतः श्रुतं। तत्तेऽहं सम्प्रवक्ष्यामि यथा स्थैर्य्यं भवेत्ततः।
पुराऽहं त्वरितो यातः सभामैन्द्रीं जितक्लमः। अपश्यं तत्र च तदा समवेतान् दिवौकसः।
नारदप्रमुखाश्चापि सर्व्वदेवर्षयोऽनघ। तत्र चापि मया दृष्टा पृथिवी पृथिवीपते।
कार्य्यार्थमिव सम्प्राप्ता देवतानां समीपतः। उपगम्य तदा धात्री देवानाह समागतान्। २१५
यत्कार्य्यं मम युष्माभिर्ब्रह्मणः सदने तदा। प्रतिज्ञातं महाभागास्तच्छीघ्रं संविधीयतां।
तस्यास्तद्वचनं श्रुत्वा विष्णुर्लोकनमस्कृतः। उवाच वाक्यं प्रहसन् पृथिवीं देवसंसदि।
धृतराष्ट्रस्य पुत्राणां यस्तु ज्येष्ठः शतस्य वै। दुर्य्योधन इति ख्यातः स ते कार्य्यं करिष्यति।
तञ्च प्राप्य महीपालं कृतकृत्या भविष्यसि। तस्यार्थे पृथिवीपालाः कुरुक्षेत्रं समागताः।
अन्योन्यं घातयिष्यन्ति दृढैः शस्त्रैः प्रहारिणः। ततस्ते विदितं देवि भारस्य युधि नाशनं। २२०
गच्छ शीघ्रं स्वकं स्थानं लोकान् धारय शोभने। य एष ते सुतो राजन् लोकसंहारकारणात्।
कलेरंशः समुत्पन्नो गान्धार्य्या जठरे नृप। अमर्षी चपलश्चापि क्रोधनो दुष्प्रसाधनः।
दैवयोगात्समुत्पन्ना भ्रातरश्चास्य तादृशाः। शकुनिर्म्मातुलश्चैव कर्णश्च परमः सखा।

समुत्पन्ना विनाशार्थं पृथिव्यां सहिता नृपाः । यादृशो जायते राजा तादृशोऽस्य जनो भवेत् ।
अधर्म्मो धर्म्मतां याति स्वामी चेद्धार्म्मिको भवेत् । स्वामिनो गुणदोषाभ्यां भृत्याः स्युर्नात्र संशयः । २२५
दुष्टं राजानमासाद्य गतास्ते तनया नृप । एतमर्थं महाबाहो नारदो वेद तत्त्ववित् ।
आत्मापराधात् पुत्रास्ते विनष्टाः पृथिवीपते । मा तान् शोचस्व राजेन्द्र नहि शोकेऽस्ति कारणं ।
नहि ते पाण्डवाः स्वल्पमपराध्यन्ति भारत । पुत्रास्तव दुरात्मानो यैरियं घातिता मही ।
नारदेन च भद्रन्ते पूर्व्वमेव न संशयः । युधिष्ठिरस्य समितौ राजसूये निवेदितं ।
पाण्डवाः कौरवाः सर्व्वे समासाद्य परस्परं । न भविष्यन्ति कौन्तेय यत्ते कृत्यं तदाचर । २३०
नारदस्य वचः श्रुत्वा तदाऽशोचन्त पाण्डवाः । एवन्ते सर्व्वमाख्यातं देवगुह्यं सनातनं ।
कथन्ते शोकनाशः स्यात्प्राणेषु च दया प्रभो । स्नेहश्च पाण्डुपुत्रेषु ज्ञात्वा दैवकृतं विधिं ।
एष चार्थो महाबाहो पूर्व्वमेव मया श्रुतः । कथितो धर्म्मराजस्य राजसूये क्रतूत्तमे ।
यतितं धर्म्मपुत्रेण मया गुह्ये निवेदिते । अविग्रहे कौरवाणां दैवन्तु बलवत्तरं ।
अनतिक्रमणीयो हि विधीराजन् कथञ्चन । कृतान्तस्य तु भूतेन स्थावरेण चलेन च । २३५
भवान् धर्म्मपरो यत्र बुद्धिश्रेष्ठश्च भारत । मुह्यते प्राणिनां ज्ञात्वा गतिञ्चागतिमेव च ।
त्वान्तु शोकेन सन्तप्तं मुह्यमानं मुहुर्म्मुहुः । ज्ञात्वा युधिष्ठिरो राजा प्राणानपि परित्यजेत् ।
कृपालुर्नित्यशो धीरस्तिर्य्यग्योनिगतेष्वपि । स कथं त्वयि राजेन्द्र कृपां वै न करिष्यति ।
मम चैव नियोगेन विधेश्चाप्यनिवर्त्तनात् । पाण्डवानाञ्च कारुण्यात् प्राणान् धारय भारत ।
एवन्ते वर्त्तमानस्य लोके कीर्त्तिर्भविष्यति । धर्म्मार्थः सुमहांस्तात तप्तं स्याच्च तपश्चिरात् । २४०
पुत्त्रशोकसमुत्पन्नं हुताशं ज्वलितं यथा । प्रज्ञाम्भसा महाभाग निर्व्वापय सदा मम ।
॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा तस्य वचनं व्यासस्यामिततेजसः । मुहूर्त्तं समनुध्याय धृतराष्ट्रोऽभ्यभाषत ।
महता शोकजालेन प्रणुन्नोऽस्मि द्विजोत्तम । नात्मानमवबुध्यामि मुह्यमानो मुहुर्म्मुहुः ।
इदन्तु वचनं श्रुत्वा तव दैवनियोगजं । धारयिष्याम्यहं प्राणान् घटिष्ये नतु शोचितुं ।
एतच्छ्रुत्वा तु वचनं व्यासः सत्यवतीसुतः । धृतराष्ट्रस्य राजेन्द्र तत्रैवान्तरधीयत । २४५
इति श्रीमहाभारते स्त्रीपर्व्वणि जलप्रदानिकपर्व्वणि धृतराष्ट्रविशोके अष्टमोऽध्यायः ॥ ८ ॥
॥ जनमेजय उवाच ॥ गते भगवति व्यासे धृतराष्ट्रो महीपतिः । किमचेष्टत विप्रर्षे तन्मे व्याख्यातुमर्हसि ।
तथैव कौरवो राजा धर्म्मपुत्रो महामनाः । कृपप्रभृतयश्चैव किमकुर्व्वत ते त्रयः ।
अश्वत्थाम्नः श्रुतं कर्म्म पापस्यान्योन्यकारितः । वृत्तान्तमुत्तरं ब्रूहि यदभाषत सञ्जयः ।
॥ वैशम्पायन उवाच ॥ हते दुर्य्योधने चैव हते सैन्ये च सर्व्वशः । सञ्जयो विगतप्रज्ञो धृतराष्ट्रमुपस्थितः ।
॥ सञ्जय उवाच ॥ आगम्य नानादेशेभ्यो नानाजनपदेश्वराः । पितृलोकं गता राजन् सर्व्वे तव सुतैः सह । २५०
याच्यमानेन सततं तव पुत्त्रेण भारत । घातिता पृथिवी सर्व्वा वैरस्यान्तं विधित्सता ।
पुत्त्राणामथ पौत्त्राणां पितृणाञ्च महीपते । आनुपूर्व्व्येण सर्व्वेषां प्रेतकार्य्याणि कारय ।

॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा वचनं घोरं सञ्जयस्य महीपतिः। गतासुरिव निश्चेष्टो न्यपतत् पृथिवीतले।
तं शयानमुपागम्य पृथिव्यां पृथिवीपतिं। विदुरः सर्व्वधर्म्मज्ञ इदं वचनमब्रवीत्।
उत्तिष्ठ राजन् किं शेषे मा शुचो भरतर्षभ। एषा वै सर्व्वसत्त्वानां नरेश्वर परा गतिः। १८५
अभावादीनि भूतानि भावमध्यानि भारत। अभावनिधनान्येव तत्र का परिदेवना।
न शोचन् मृतमन्वेति न शोचन् म्रियते नरः। एवं सांसिद्धिके लोके किमर्थमनुशोचसि।
अयुध्यमानो म्रियते युध्यमानश्च जीवति। कालं प्राप्य महाराज न कश्चिदतिवर्त्तते।
कालः कर्षति भूतानि सर्व्वाणि विविधान्युत। न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम।
यथा वायुस्तृणाग्राणि संवर्त्तयति सर्व्वतः। तथा कालवशं यान्ति भूतानि भरतर्षभ। १९०
एकसार्थप्रयातानां सर्व्वेषान्तत्र गामिनां। यस्य कालः प्रयात्यग्रे तत्र का परिदेवना।
यांश्चापि निहतान् युद्धे राजंस्त्वमनुशोचसि। अशोच्या हि महात्मानः सर्व्वे ते त्रिदिवङ्गताः।
न यज्ञैर्दक्षिणावद्भिर्न तपोभिर्न विद्यया। तथा स्वर्गमुपायान्ति यथा शूरास्तनुत्यजः।
सर्व्वे वेदविदः शूराः सर्व्वे च चरितव्रताः। सर्व्वे चाभिमुखाः क्षीणास्तत्र का परिदेवना।
शरीराग्निषु शूराणां जुहुवुस्ते शराहुतीः। हूयमानान् शरांश्चैव सेहुरुत्तमपूरुषाः। १९५
एवं राजंस्तवाचक्षे स्वर्ग्यं पन्थानमुत्तमं। न युद्धादधिकं किञ्चित् क्षत्रियस्येह विद्यते।
क्षत्रियास्ते महात्मानः शूराः समितिशोभनाः। आशिषं परमां प्राप्ता न शोच्याः सर्व्व एव हि।
आत्मनात्मानमाश्वास्य मा शुचो भरतर्षभ। नाद्य शोकाभिभूतस्त्वं कार्य्यमुत्स्रष्टुमर्हसि।
इति श्रीमहाभारते स्त्रीपर्व्वणि जलप्रदानिकपर्व्वणि नवमोऽध्यायः ॥ ९ ॥
॥ वैशम्पायन उवाच ॥ विदुरस्य तु तद्वाक्यं श्रुत्वा तु पुरुषर्षभः। युज्यतां यानमित्युक्त्वा पुनर्व्वचनमब्रवीत्।
क्षिप्रमानय गान्धारीं सर्व्वाश्च भरतस्त्रियः। वधूं कुन्तीमुपादाय याश्चान्यास्तत्र योषितः। २००
एवमुक्त्वा स धर्म्मात्मा विदुरं धर्म्मवित्तमं। शोकविप्रहतज्ञानो यानमेवान्वपद्यत।
गान्धारी पुत्रशोकार्त्ता भर्त्तुर्व्वचनचोदिता। सह कुन्त्या यतो राजा सह स्त्रीभिरुपाद्रवत्।
ताः समासाद्य राजानं भृशं शोकसमन्विताः। आमन्त्र्यान्योन्यमीयुः स्म भृशमुच्चुक्रुशुस्ततः।
ताः समाश्वासयत् क्षत्ता ताभ्यश्चार्त्ततरः स्वयं। अश्रुकण्ठीः समारोप्य ततोऽसौ निर्ययौ पुरात्।
ततः प्रणादः सञ्जज्ञे सर्व्वेषु कुरुवेश्मसु। आकुमारञ्च तत् सर्व्वमभवच्छोककर्षितं। २०५
अदृष्टपूर्व्वा या नार्य्यः पुरा देवगणैरपि। पृथग्जनेन दृश्यन्ते तास्तदा निहतेश्वराः।
प्रकीर्य्य केशान् सुशुभान् भूषणान्यवमुच्य च। एकवस्त्रधरा नार्य्यः परिपेतुरनाथवत्।
श्वेतपर्व्वतरूपेभ्यो गृहेभ्यस्तास्त्वपाक्रमन्। गुहाभ्य इव शैलानां पृषत्यो हतयूथपाः।
तान्युदीर्णानि नारीणां तदा वृन्दान्यनेकशः। शोकार्त्तान्यद्रवन् राजन् किशोरीणामिवाङ्गने।
प्रगृह्य बाहून् क्रोशन्त्यः पुत्रान् भ्रातॄन् पितॄनपि। दर्शयन्तीव ता ह स्म युगान्ते लोकसंक्षयं। २१०
विलपन्त्यो रुदन्त्यः स्म धावमानास्ततस्ततः। शोकेनाभ्याहतज्ञानाः कर्त्तव्यं न प्रजज्ञिरे।

व्रीडां जग्मुः पुरा याः स्म सखीनामपि योषितः । एकवस्त्रास्तु निर्लज्जाः श्वश्रूणां पुरतोऽभवन् ।
परस्परं सुसूक्ष्मेषु शोकेष्वाश्वासयंस्तदा । ताः शोकविकला राजन्नवैक्षन्त परस्परं ।
ताभिः परिवृतो राजा रुदतीभिः सहस्रशः । निर्ययौ नगराद्दीनस्तूर्णमायोधनं प्रति ।
शिल्पिनो वणिजो वैश्याः सर्व्वे कर्म्मोपजीविनः । ते पार्थिवं पुरस्कृत्य निर्ययुर्नगराद्बहिः । २८५
तासां विक्रोशमानानामार्त्तानां कुरुसङ्क्षये । प्रादुरासीन्महाञ्छब्दो व्यथयन् भुवनान्युत ।
युगान्तकाले सम्प्राप्ते भूतानां दह्यतामिव । अभावः स्यादयं प्राप्त इति भूतानि मेनिरे ।
भृशमुद्विग्नमनसस्ते पौराः कुरुसङ्क्षये । प्राक्रोशन्त महाराज स्वनुरक्तास्तदा भृशं ।
इति श्रीमहाभारते स्त्रीपर्व्वणि जलप्रदानिकपर्व्वणि धृतराष्ट्रगमने दशमोऽध्यायः ॥ १० ॥
॥ वैशम्पायन उवाच ॥ क्रोशमात्रं ततो गत्वा ददृशुस्तान् महारथान् । शारद्वतं कृपं द्रौणिं कृतवर्म्माणमेव च ।
ते तु दृष्ट्वैव राजानं प्रज्ञाचक्षुषमीश्वरं । अश्रुकण्ठा विनिःश्वस्य रुदन्तमिदमब्रुवन् । २९०
पुत्त्रस्तव महाराज कृत्वा कर्म्म सुदुष्करं । गतः सानुचरो राजन् शक्रलोकं महीपते ।
दुर्य्योधनबलान्मुक्ता वयमेव त्रयो रथाः । सर्व्वमन्यत् परिक्षीणं सैन्यन्ते भरतर्षभ ।
इत्येवमुक्त्वा राजानं कृपः शारद्वतस्ततः । गान्धारीं पुत्त्रशोकार्त्तामिदं वचनमब्रवीत् ।
अभीता युध्यमानास्ते घ्नन्तः शत्रुगणान् बहून् । वीरकर्म्माणि कुर्व्वाणाः पुत्त्रास्ते निधनङ्गताः ।
ध्रुवं सम्प्राप्य लोकांस्ते निर्म्मलान् शस्त्रनिर्ज्जितान् । भास्वरं देहमास्थाय विचरन्त्यमरा इव । २९५
न हि कश्चिद्धि शूराणां युध्यमानः पराङ्मुखः । शस्त्रेण निधनं प्राप्तो न च कश्चित् कृताञ्जलिः ।
एवं तां क्षत्त्रियस्याहुः पुराणाः परमां गतिं । शस्त्रेण निधनं सङ्ख्ये तान्न शोचितुमर्हसि ।
न चापि शत्रवस्तेषामृध्यन्ते राज्ञि पाण्डवाः । शृणु यत्कृतमस्माभिरश्वत्थामपुरोगमैः ।
अधर्म्मेण हतं श्रुत्वा भीमसेनेन ते सुतं । सुप्तं शिविरमाविश्य पाण्डूनां कदनं कृतं ।
पाञ्चाला निहताः सर्व्वे धृष्टद्युम्नपुरोगमाः । द्रुपदस्यात्मजाश्चैव द्रौपदेयाश्च पातिताः । ३००
तथा विशसनं कृत्वा पुत्त्रशत्रुगणस्य ते । प्रद्रवाम रणे स्थातुं न हि शक्ष्यामहे वयं ।
ते हि शूरा महेष्वासाः क्षिप्रमेष्यन्ति पाण्डवाः । अमर्षवशमापन्ना वैरं प्रतिजिहीर्षवः ।
ते हतानात्मजान् श्रुत्वा प्रमत्ताः पुरुषर्षभाः । निनीषन्तः पदं शूराः क्षिप्रमेव यशस्विनि ।
तेषान्तु कदनं कृत्वा संस्थातुं नोत्सहामहे । अनुजानीहि नो राज्ञि मा च शोके मनः कृथाः ।
राजंस्त्वमनुजानीहि धैर्य्यमातिष्ठ चोत्तमं । निष्ठान्तं पश्य चापि त्वं क्षात्त्रं धर्म्मञ्च केवलं । ३०५
इत्येवमुक्त्वा राजानं कृत्वा चाभिप्रदक्षिणं । कृपश्च कृतवर्म्मा च द्रोणपुत्त्रश्च भारत ।
अवेक्षमाणा राजानं धृतराष्ट्रं मनीषिणं । गङ्गामनु महात्मानस्तूर्णमश्वानचोदयन् ।
अपक्रम्य तु ते राजन् सर्व्वे एव महारथाः । आमन्त्र्यान्योन्यमुद्विग्नास्त्रिधा ते प्रययुस्तदा ।
जगाम हास्तिनपुरं कृपः शारद्वतस्तदा । स्वमेव राष्ट्रं हार्द्दिक्यो द्रौणिर्व्यासाश्रमं ययौ ।
एवं ते प्रययुर्व्वीरा वीक्षमाणाः परस्परं । भयार्त्ताः पाण्डुपुत्त्राणामागस्कृत्वा महात्मनां । ३१०

समेत्य वीरा राजानं तदा त्वनुदिते रवौ । विप्रजग्मुर्महाराज यथेच्छकमरिन्दमाः ।
समासाद्याथ वै द्रौणिं पाण्डुपुत्त्रा महारथाः । व्यजयंस्ते रणे राजन् विक्रम्य तदनन्तरं ।
इति श्रीमहाभारते स्त्रीपर्व्वणि जलप्रदानिकपर्व्वणि कृपद्रौणिभोजदर्शने एकादशोऽध्यायः ॥ ११ ॥
॥ वैशम्पायन उवाच ॥ हतेषु तेषु सैन्येषु धर्म्मराजो युधिष्ठिरः । शुश्रुवे पितरं वृद्धं निर्य्यातं नागसाह्वयात् ।
सोऽभ्ययात् पुत्त्रशोकार्त्तः पुत्त्रशोकपरिप्लुतं । शोचमानं महाराज भ्रातृभिः सहितस्तदा ।
अन्वीयमानो वीरेण दाशार्हेण महात्मना । युयुधानेन च तथा तथा चैव युयुत्सुना ।　　३१५
तमन्वयात् सुदुःखार्त्ता द्रौपदी शोककर्षिता । सह पाञ्चालयोषिद्भिर्यास्तत्रासन् समागताः ।
स गङ्गामनुवृन्दानि स्त्रीणां भरतसत्तम । कुररीणामिवार्त्तानां क्रोशन्तीनां ददर्श ह ।
ताभिः परिवृतो राजा क्रोशन्तीभिः सहस्रशः । ऊर्द्ध्वबाहुभिरार्त्ताभीरुदन्तीभिः प्रियाप्रियैः ।
क्व नु धर्म्मज्ञता राज्ञः क्व नु साऽद्यानृशंसता । यच्चावधीत् पितॄन् भ्रातॄन् गुरुपुत्त्रान् सखीनपि ।
घातयित्वा कथं द्रोणं भीष्मञ्चापि पितामहं । मनस्तेऽभून्महाराज हत्वा चापि जयद्रथं ।　　३२०
किन्नु राज्येन ते कार्य्यं पितॄन् भ्रातॄनपश्यतः । अभिमन्युञ्च दुर्द्धर्षं द्रौपदेयांश्च भारत ।
अतीत्य ता महाबाहुः क्रोशन्तीः कुररीरिव । ववन्दे पितरं ज्येष्ठं धर्म्मराजो युधिष्ठिरः ।
ततोऽभिवाद्य पितरं धर्म्मेणामित्रकर्षणः । न्यवेदयन्त नामानि पाण्डवास्तेऽपि सर्व्वशः ।
तमात्मजान्तकरणं पिता पुत्त्रवधार्द्दितः । अप्रीयमाणः शोकार्त्तः पाण्डवं परिषस्वजे ।
धर्म्मराजं परिष्वज्य सान्त्वयित्वा च भारत । दुष्टात्मा भीममन्विच्छन् दिधक्षुरिव पावकः ।　　३२५
स कोपपावकस्तस्य शोकवायुसमीरितः । भीमसेनमयं दावं दिधक्षुरिव दृश्यते ।
तस्य सङ्कल्पमाज्ञाय भीमं प्रत्यशुभं हरिः । भीममाक्षिप्य पाणिभ्यां प्रददौ भीममायसं ।
प्रागेव तु महाबुद्धिर्बुद्ध्वा तस्येङ्गितं हरिः । संविधानं महाप्राज्ञस्तत्र चक्रे जनार्द्दनः ।
तं गृहीत्वैव पाणिभ्यां भीमसेनमयस्मयं । बभञ्ज बलवान् राजा मन्यमानो वृकोदरं ।
नागायुतबलप्राणः स राजा भीममायसं । भङ्क्त्वा विमथितोरस्कः सुस्राव रुधिरं मुखात् ।　　३३०
ततः पपात मेदिन्यां तथैव रुधिरोक्षितः । प्रपुष्पिताग्रशिखरः पारिजात इव द्रुमः ।
प्रत्यगृह्लाच्च तं विद्वान् सूतो गावल्गणिस्तदा । मैवमित्यब्रवीत् चैनं शमयन् सान्त्वयन्निव ।
स तु कोपं समुत्सृज्य गतमन्युर्महामनाः । हाहा भीमेति चुक्रोश नृपः शोकसमन्वितः ।
तं विदित्वा गतक्रोधं भीमसेनवधार्द्दितं । वासुदेवो वरः पुंसामिदं वचनमब्रवीत् ।
मा शुचो धृतराष्ट्र त्वं नैष भीमस्त्वया हतः । आयसी प्रतिमा ह्येषा त्वया राजन्निपातिता ।　　३३५
त्वां क्रोधवशमापन्नं विदित्वा भरतर्षभ । मयाऽपकृष्टः कौन्तेयो मृत्योर्दंष्ट्रान्तरं गतः ।
न हि ते राजशार्दूल बले तुल्योऽस्ति कश्चन । कः सहेत महाबाहो बाह्वोर्निग्रहणं नरः ।
यथान्तकमनुप्राप्य जीवन् कश्चिन्न मुच्यते । एवं बाह्वन्तरं प्राप्य तव जीवेन्न कश्चन ।
तस्मात् पुत्त्रेण या तेऽसौ प्रतिमा कारितायसी । भीमस्य सेयं कौरव्य तवैवोपहृता मया ।

पुत्रशोकाभिसन्तप्तं धर्म्मादपहृतं मनः । तदा राजेन्द्र तेन त्वं भीमसेनं जिघांससि । २४०
न त्वेतत्ते क्षमं राजन् हन्यास्त्वं यद्वृकोदरं । न हि पुत्रा महाराज जीवेयुस्ते कथञ्चन ।
तस्माद्यत् कृतमस्माभिर्मन्यमानैः शमं प्रति । अनुमन्यस्व तत् सर्व्वं मा च शोके मनः कृथाः ।
इति श्रीमहाभारते स्त्रीपर्व्वणि जलप्रदानिकपर्व्वणि आयसभीमभङ्गे द्वादशोऽध्यायः ॥ १२ ॥
॥ वैशम्पायन उवाच ॥ तत एनमुपातिष्ठन् शौचार्थं परिचारकाः । कृतशौचं पुनश्चैनं प्रोवाच मधुसूदनः ।
राजन्नधीता वेदास्ते शास्त्राणि विविधानि च । श्रुतानि च पुराणानि राजधर्म्माश्च केवलाः ।
एवं विद्वान् महाप्राज्ञः समर्थः सन् बलाबले । आत्मापराधात् कस्मात्त्वं कुरुषे कोपमीदृशं । २४५
उक्तवांस्त्वां तदैवाहं भीष्मद्रोणौ च भारत । विदुरः सञ्जयश्चैव त्वन्तु राजन्न तत्कृथाः ।
स वार्य्यमाणो नास्माकमकार्षीर्व्वचनं तदा । पाण्डवानधिकाञ्जानन् बले शौर्य्ये च कौरव ।
राजा हि यः स्थिरप्रज्ञः स्वयं दोषानवेक्षते । देशकालविभागञ्च परं श्रेयः स विन्दति ।
उच्यमानस्तु यः श्रेयो गृह्णीते नो हिताहिते । आपदः समनुप्राप्य स शोचत्यनये स्थितः ।
ततोऽन्यवृत्तमात्मानं समवेक्षस्व भारत । राजंस्त्वं ह्यभिधेयात्मा दुर्य्योधनवशे स्थितः । २५०
आत्मापराधादापन्नस्तत् किं भीमं जिघांससि । तस्मात् संयच्छ कोपं त्वं स्वमनुस्मृत्य दुष्कृतं ।
यस्तु तां स्पर्द्धया क्षुद्रः पाञ्चालीमानयत् सभां । स हतो भीमसेनेन वैरं प्रतिजिहीर्षता ।
आत्मनोऽतिक्रमं पश्य पुत्रस्य च दुरात्मनः । यदनागसि पाण्डूनां परित्यागः परन्तप ।
॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु कृष्णेन सर्व्वं सत्यं जनाधिप । उवाच देवकीपुत्रं धृतराष्ट्रो महीपतिः ।
एवमेतन्महाबाहो यथा वदसि माधव । पुत्रस्नेहस्तु धर्म्मात्मन् धैर्य्यान्मां समचालयत् । २५५
दिष्ट्या तु पुरुषव्याघ्रो बलवान् सत्यविक्रमः । त्वद्गुप्तो नागमत् कृष्ण भीमो बाह्वन्तरं मम ।
इदानीं त्वहमेकाग्रो गतमन्युर्गतज्वरः । मध्यमं पाण्डवं वीरं प्रष्टुमिच्छामि केशव ।
हतेषु पार्थिवेन्द्रेषु पुत्रेषु निहतेषु वै । पाण्डुपुत्रेषु वै शर्म्म प्रीतिश्चाप्यवतिष्ठति ।
ततः स भीमश्च धनञ्जयश्च माद्र्याश्च पुत्रौ पुरुषप्रवीरौ । पस्पर्श गात्रैः प्ररुदन् सुगात्रानाश्वास्य कल्याणमुवाच चैतान् ।
इति श्रीमहाभारते स्त्रीपर्व्वणि जलप्रदानिकपर्व्वणि धृतराष्ट्रकोपविमोचने त्रयोदशोऽध्यायः ॥ १३ ॥
॥ वैशम्पायन उवाच ॥ धृतराष्ट्राभ्यनुज्ञातास्ततस्ते कुरुपाण्डवाः । अभ्ययुर्भ्रातरः सर्व्वे गान्धारीं सहकेशवाः । २६०
ततो ज्ञात्वा हतामित्रं धर्म्मराजं युधिष्ठिरं । गान्धारी पुत्रशोकार्त्ता शप्तुमैच्छदनिन्दिता ।
तस्याः पापमभिप्रायं विदित्वा पाण्डवान् प्रति । ऋषिः सत्यवतीपुत्रः प्रागेव समबुध्यत ।
स गङ्गायामुपस्पृश्य पुण्यगन्धि पयः शुचि । तं देशमुपसम्पेदे परमर्षिर्मनोजवः ।
दिव्येन चक्षुषा पश्यन् मनसा गद्गदेन च । सर्व्वप्राणभृतां भावं स तत्र समबुध्यत ।
स स्नुषामब्रवीत् काले कल्यवादी महातपाः । शापकालमवाक्षिप्य शमाकालमुदैरयत् । २६५
न कोपः पाण्डवे कार्य्यो गान्धारि शममाप्नुहि । वचो निगृह्यतामेतत् शृणु चेदं वचो मम ।
उक्ताऽस्यष्टादशाहानि पुत्रेण जयमिच्छता । शिवमाशंसमे मातर्युध्यमानस्य शत्रुभिः ।

सा तथा वाच्यमाना त्वं काले काले जयैषिणा । उक्तवत्यसि गान्धारि यतो धर्म्मस्ततो जयः ।
न चाप्यतीतां गान्धारि वाचं ते वितथामहं । स्मरामि तोष्यमानायास्तथा प्रार्थिहिता त्वयि ।
विग्रहे तुमुले राज्ञां गत्वा पारमसंशयं । जितं पाण्डुसुतैर्युद्धे नूनं धर्म्मस्ततोऽधिकः ।　　१७०
क्षमाशीला पुरा भूत्वा साऽद्य न क्षमसे कथं । अधर्म्मं जहि धर्म्मज्ञे यतो धर्म्मस्ततो जयः ।
स्वञ्च धर्म्मं परिस्मृत्य वाचञ्चोक्तां मनस्विनि । कोपं संयच्छ गान्धारि मैवं भूः सत्यवादिनि ।
॥ गान्धार्य्युवाच ॥ भगवन्नाभ्यसूयामि नैतानिच्छामि नश्यतः । पुत्त्रशोकेन तु बलान्मनो विह्वलतीव मे ।
यथैव कुन्त्या कौन्तेया रक्षितव्यास्तथा मया । तथैव धृतराष्ट्रेण रक्षितव्या मया यथा ।
दुर्य्योधनापराधेन शकुनेः सौबलस्य च । कर्णदुःशासनाभ्याञ्च कृतोऽयं कुरुसङ्क्षयः ।　　१७५
नापराध्यति बीभत्सुर्न च पार्थो वृकोदरः । नकुलः सहदेवो वा नैव जातु युधिष्ठिरः ।
युध्यमाना हि कौरव्याः कृतमानाः परस्परं । निहताः सहितास्चान्यैस्तत्र नास्त्यप्रियं मम ।
किन्तु कर्म्माकरोद्भीमो वासुदेवस्य पश्यतः । दुर्य्योधनं समाहूय गदायुद्धे महामनाः ।
शिक्षयाऽभ्यधिकं ज्ञात्वा चरन्तं बहुधा रणे । अधो नाभ्यां प्रहृतवान् तन्मे कोपमवर्द्धयत् ।
कथं नु धर्म्मं धर्म्मज्ञैः समुद्दिष्टं महात्मभिः । त्यजेयुराहवे शूराः प्राणहेतोः कथञ्चन ।　　१८०
इति श्रीमहाभारते स्त्रीपर्व्वणि जलप्रदानिकपर्व्वणि गान्धारीसान्त्वनायां चतुर्द्दशोऽध्यायः ॥ १४ ॥
॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा वचनं तस्या भीमसेनोऽथ भीतवत् । गान्धारीं प्रत्युवाचेदं वचः सानुनयं तदा ।
अधर्म्मो यदि वा धर्म्मस्त्रासात्तत्र मया कृतः । आत्मानं त्रातुकामेन तन्मे त्वं क्षन्तुमर्हसि ।
न हि धर्म्मेण पुत्त्रस्ते पातितोऽसौ महाबलः । न शक्यः केनचिद्धन्तुमतो विषममाचरं ।
सैन्यस्यैकोऽवशिष्टोऽयं गदायुद्धेन वीर्य्यवान् । मां हत्वा न हरेद्राज्यमिति वै तत् कृतं मया ।
अधर्म्मेण जितः पूर्व्वं तेन चापि युधिष्ठिरः । निकृताश्च सदैव स्म ततो विषममाचरं ।　　१८५
राजपुत्त्रीञ्च पाञ्चालीमेकवस्त्रां रजस्वलां । भवत्या विदितं सर्व्वमुक्तवान् यत् सुतस्तव ।
दुर्य्योधनमसंगृह्य न शक्या भूः ससागरा । केवला भोक्तुमस्माभिरतश्चैतत् कृतं मया ।
तथाऽप्यप्रियमस्माकं पुत्त्रस्ते समुदाचरत् । द्रौपद्या यत् सभामध्ये सव्यमूरुमदर्शयत् ।
तदैव बध्यः सोऽस्माकं दुराचारश्च ते सुतः । धर्म्मराजाज्ञया चैव स्थिताः स्मः समये तदा ।
वैरमुद्दीपितं राज्ञि पुत्त्रेण तव तन्महत् । क्लेशितास्च वने नित्यं तत एतत् कृतं मया ।　　१९०
वैरस्यास्य गतः पारं हत्वा दुर्य्योधनं रणे । राज्यं युधिष्ठिरः प्राप्तो वयञ्च गतमन्यवः ।
॥ गान्धार्य्युवाच ॥ न तस्यैष बधस्तात यत् प्रशंससि मे सुतं । कृतवांस्चापि तत् सर्व्वं यदिदं भाषसे मयि ।
हताश्वे नकुले यत्तु वृषसेनेन भारत । अपिवः शोणितं संख्ये दुःशासनशरीरजं ।
सद्भिर्विगर्हितं घोरमनार्य्यजनसेवितं । क्रूरं कर्म्माकरोस्तस्मात्तदयुक्तं वृकोदर ।
॥ भीमसेन उवाच ॥ अन्यस्यापि न पातव्यं रुधिरं किं पुनः स्वकं । यथैवात्मा तथा भ्राता विशेषो नास्ति कश्चन ।　　१९५

रुधिरं न व्यतिक्रामद्दन्तोष्ठादम्ब मा शुचः । वैवस्वतस्तु तद्वेद हस्तौ मे रुधिरोक्षितौ ।
हताश्वं नकुलं दृष्ट्वा वृषसेनेन संयुगे । भ्रातॄणां संप्रहृष्टानां त्रासः संजनितो मया ।
केशपक्षपरामर्शे द्रौपद्या द्यूतकारिते । क्रोधाद्यदब्रुवञ्चाहं तच्च मे हृदि वर्त्तते ।
क्षत्रधर्म्माच्च्युतो राज्ञि भवेयं शाश्वतीः समाः । प्रतिज्ञां तामनिस्तीर्य्य ततस्तत् कृतवानहं ।
न मामर्हसि गान्धारि दोषेण परिशङ्कितुं । अनिगृह्य पुरा पुत्रानस्मास्वनपराधिषु । ४००
अधुना किं नु दोषेण परिशङ्कितुमर्हसि ।
॥ गान्धार्य्युवाच ॥ वृद्धस्यास्य शतं पुत्रान्निघ्नंस्त्वमपराजितः । कस्मान्न शेषयेः कञ्चिद्येनाल्पमपराधितं ।
सन्तानमावयोस्तात वृद्धयोर्हृतराज्ययोः । कथमन्धद्वयस्यास्य यष्टिरेका न वर्ज्जिता ।
शेषे ह्यवस्थिते तात पुत्राणामन्तके त्वयि । न मे दुःखं भवेदेतद्यदि त्वं धर्म्ममाचरेः ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु गान्धारी युधिष्ठिरमपृच्छत । क्व स राजेति सक्रोधा पुत्रपौत्रवधार्द्दिता । ४०५
तामभ्यगच्छद्राजेन्द्रो वेपमानः कृताञ्जलिः । युधिष्ठिर इदञ्चैनां मधुरं वाक्यमब्रवीत् ।
पुत्रहन्ता नृशंसोऽहं तव देवि युधिष्ठिरः । शापार्हः पृथिवीनाशे हेतुभूतः शपस्व मां ।
न हि मे जीवितेनार्थो न राज्येन धनेन वा । तादृशान् सुहृदो हत्वा मूढस्यास्य सुहृद्द्रुहः ।
तमेवंवादिनं भीतं सन्निकर्षगतं तदा । नोवाच किञ्चिद्गान्धारी निश्वासपरमा भृशं ।
तस्यावनतदेहस्य पादयोर्निपतिष्यतः । युधिष्ठिरस्य नृपतेर्धर्म्मज्ञा दीर्घदर्शिनी । ४१०
अङ्गुल्यग्राणि ददृशे देवी पट्टान्तरेण सा । ततः स कुनखीभूतो दर्शनीयनखो नृपः ।
तं दृष्ट्वा चार्ज्जुनोऽगच्छद्वासुदेवस्य पृष्ठतः । एवं सञ्चेष्टमानांस्तानितश्चेतश्च भारत ।
गान्धारी विगतक्रोधा सान्त्वयामास मातृवत् । तया ते समनुज्ञाता मातरं वीरमातरं ।
अभ्यगच्छन्त सहिताः पृथां पृथुलवक्षसः । चिरस्य दृष्ट्वा सा पुत्रान् पुत्राधिभिरभिप्लुता ।
वाष्पमाहारयद्देवी वस्त्रेणावृत्य वै मुखं । ततो वाष्पं समुत्सृज्य सह पुत्रैस्तु वै पृथा । ४१५
अपश्यदेतान् शस्त्रौघैर्बहुधा परिविक्षतान् । सा तानेकैकशः पुत्रान् संस्पृशन्ती पुनः पुनः ।
अन्वशोचत दुःखार्त्ता द्रौपदीञ्च हतात्मजां । रुदन्तीमथ पाञ्चालीं ददर्श पतितां भुवि ।
॥ द्रौपद्युवाच ॥ आर्य्यपुत्राः क्व ते सर्व्वे सौभद्रसहिता गताः । न त्वान्तेऽद्याभिगच्छन्ति चिरं दृष्ट्वा तपस्विनीं ।
किन्नु राज्येन वै कार्य्यं विहीनायाः सुतैर्मम । तां समाश्वासयामास पृथा पृथुललोचना ।
उत्थाप्य याज्ञसेनीन्तु रुदतीं शोककर्शितां । तयैव सहिता चापि पुत्रैरनुगता नृप । ४२०
अभ्यगच्छत गान्धारीमार्त्तामार्त्ततरा स्वयं । तामुवाचाथ गान्धारी सह वध्वा यशस्विनीं ।
मैवं पुत्रीति दुःखार्त्ता पश्य मामपि दुःखितां । मन्ये लोकविनाशोऽयं कालपर्य्यायचोदितः ।
अवश्यभावी सम्प्राप्तः स्वभावाल्लोमहर्षणः । इदन्तत् समनुप्राप्तं विदुरस्य वचो महत् ।
असिद्धानुनये कृष्णे यदुवाच महामतिः । तस्मिन्नपरिहार्य्येऽर्थे व्यतीते च विशेषतः ।

मा शुचो न हि शोच्यास्ते संग्रामे निधनं गताः । यथैव त्वं तथैवाहं को वामाश्वासयिष्यति । ४२५

ममैव ह्यपराधेन कुलमग्र्यं विनाशितं ॥

इति श्रीमहाभारते स्त्रीपर्व्वणि जलप्रदानिकपर्व्वणि पृथापुत्त्रदर्शने पञ्चदशोऽध्यायः १५ ॥ समाप्तञ्च जलप्रदानिकपर्व्व ॥

## ॥ अथ स्त्रीविलापपर्व्व ॥

॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु गान्धारी कुरूणामवकर्त्तनं । अपश्यत्तत्र तिष्ठन्ती दूराद्दिव्येन चक्षुषा ।

पतिव्रता महाभागा समानव्रतचारिणी । उग्रेण तपसा युक्ता सततं ब्रह्मचारिणी ।

वरदानेन कृष्णस्य महर्षेः पुण्यकर्म्मणः । दिव्यज्ञानबलोपेता विविधं पर्य्यदेवयत् ।

ददर्श सा बुद्धिमती दूरादेव यथाऽन्तिके । रणाजिरं नृवीराणामद्भुतं लोमहर्षणं । ४३०

अस्थिकेशपरिस्तीर्णं शोणितौघपरिस्रुतं । शरीरैर्ब्बहुसाहस्रैर्व्विनिकीर्णं समन्ततः ।

गजाश्वरथयोधानामावृतं रुधिराविलैः । शरीरैरशिरस्कैश्च विदेहैश्च शिरोगणैः ।

गजाश्वनरनारीणां निःस्वनैरभिसंवृतं । सृगालबककाकोलकङ्ककाकनिषेवितं ।

रक्षसां पुरुषादानां मोदनं कुररकुलं । अशिवाभिः शिवाभिश्च नादितं गृध्रसेवितं ।

ततो व्यासाभ्यनुज्ञातो धृतराष्ट्रो महीपतिः । पाण्डुपुत्त्राश्च ते सर्व्वे युधिष्ठिरपुरोगमाः । ४३५

वासुदेवं पुरस्कृत्य हतबन्धुञ्च पार्थिवं । कुरुस्त्रियः समासाद्य जग्मुरायोधनं प्रति ।

समासाद्य कुरुक्षेत्रं तास्त्रियो निहतेश्वराः । अपश्यन्त हतांस्तत्र भ्रातॄन् पुत्त्रान् पितॄन् पतीन् ।

क्रव्याद्भिर्भक्ष्यमाणान् वै गोमायुबलवायसैः । भूतैः पिशाचै रक्षोभिर्व्विविधैश्च निशाचरैः ।

रुद्राक्रीडनिभं दृष्ट्वा तदा विशसनं स्त्रियः । महार्हेभ्योऽथ यानेभ्यो विक्रोशन्त्यो निपेतिरे ।

अदृष्टपूर्व्वं पश्यन्त्यो दुःखार्त्ता भरतस्त्रियः । शरीरेष्वस्खलन्नन्या न्यपतंश्चापरा भुवि । ४४०

श्रान्तानाञ्चाप्यनाथानां नासीत् काचन चेतना । पाञ्चालकुरुयोषाणां कृपणं तदभून्महत् ।

दुःखोपहतचित्ताभिः समन्तादनुनादितं । दृष्ट्वायोधनमत्युग्रं धर्म्मज्ञा सुबलात्मजा ।

ततः सा पुण्डरीकाक्षमामन्त्र्य पुरुषोत्तमं । कुरूणां वैशसं दृष्ट्वा दुःखाद्वचनमब्रवीत् ।

पश्यैताः पुण्डरीकाक्ष स्नुषा मे निहतेश्वराः । प्रकीर्णकेशाः क्रोशन्त्यः कुररर्य्य इव माधव ।

अमूस्त्वाऽभिसमागम्य स्मरन्त्यो भरतर्षभान् । पृथगेवाभ्यधावन्त्यः पुत्त्रान् भ्रातॄन् पितॄन् पतीन् । ४४५

वीरसूभिर्म्महाबाहो हतपुत्त्राभिरावृतं । क्वचिच्च वीरपत्नीभिर्हतवीराभिरावृतं ।

शोभितं पुरुषव्याघ्रैर्भीष्मकर्णाभिमन्युभिः । द्रोणद्रुपदशल्यैश्च ज्वलद्भिरिव पावकैः ।

काञ्चनैः कवचैर्द्दिव्यैर्म्मणिभिश्च महात्मनां । अङ्गदैर्हस्तकेयूरैः स्रग्भिश्च समलङ्कृतं ।

वीरबाहुनिसृष्टाभिः शक्तिभिः परिघैरपि । खड्गैश्च विविधैस्तीक्ष्णैः सशरैश्च शरासनैः ।

क्रव्यादसङ्घैः सहितैस्तिष्ठद्भिर्व्विविधैः क्वचित् । क्वचिदाक्रीडमानैश्च शयानैरपरैः क्वचित् । ४५०

एतदेवंविधं वीर सम्पश्यायोधनं विभो । पश्यमाना हि दह्यामि शोकेनाहं जनार्द्दन ।

पाञ्चालानां कुरूणाञ्च विनाशे मधुसूदन । पञ्चानामपि भूतानामहं बधमचिन्तयं ।
तान् सुपर्णाश्च गृध्राश्च विकर्षन्त्यसृगुक्षिताः । निगृह्य चरणौ गृध्रा भक्षयन्ति सहस्रशः ।
जयद्रथस्य कर्णस्य तथैव द्रोणभीष्मयोः । अभिमन्योर्विनाशञ्च कश्चिन्तयितुमर्हति ।
अवध्यकल्पान्निहतान् दृष्ट्वाऽहं मधुसूदन । गृध्रकङ्कवकश्येनश्वशृगालादनीकृतान् । ४५५
अमर्षवशमापन्नान् दुर्य्योधनवशे स्थितान् । पश्यैतान् पुरुषव्याघ्रान् संशान्तान् पावकानिव ।
शयनान्युचिताः सर्व्वे मृदूनि विमलानि च । विपन्नास्तेऽद्य वसुधां विवृतामधिशेरते ।
बन्दिभिः सततं काले स्तुवद्भिरभिनन्दिताः । शिवानामशिवा घोराः शृण्वन्ति विविधा गिरः ।
ये पुरा शेरते वीराः शयनेषु यशस्विनः । चन्दनागुरुदिग्धाङ्गास्तेऽद्य पांशुषु शेरते ।
तेषामाभरणान्येते गृध्रा गोमायुवायसाः । आक्षिपन्त्यशिवा घोरा विनदन्तः पुनः पुनः । ४६०
बाणान् विनिशितान् पीतान् निस्त्रिंशान् विमला गदा । युद्धाभिमानिनः प्रीता जीवन्त इव बिभ्रति ।
सुरूपवर्णा बहवः क्रव्यादैरवघट्टिताः । ऋषभप्रतिरूपाश्च शेरते हरितस्रजः ।
अपरे पुनरालिङ्ग्य गदाः परिघबाहवः । शेरतेऽभिमुखाः शूरा दयिता इव योषितः ।
बिभ्रतः कवचान्यन्ये निर्म्मलान्यायुधानि च । न धर्षयन्ति क्रव्यादा जीवन्तीति जनार्द्दन ।
क्रव्यादैः कृष्यमाणानामपरेषां महात्मनां । शातकौम्भ्यः स्रजश्चित्रा विनिकीर्णाः समन्ततः । ४६५
एते गोमायवो भीता निहतानां महात्मनां । कण्ठान्तरगतान् हारानाक्षिपन्ति सहस्रशः ।
सर्व्वेष्वपररात्रेषु याननन्दत बन्दिनः । स्तुतिभिश्च परार्द्ध्याभिरुपचारैश्च शिक्षिताः ।
तानिमाः परिदेवन्ति दुःखार्त्ताः परमाङ्गनाः । कृपणं वृष्णिशार्दूल दुःखशोकार्द्दिता भृशं ।
रक्तोत्पलवनानीव विभान्ति रुचिराणि च । मुखानि परमस्त्रीणां परिशुष्काणि केशव ।
रुदितोपरता ह्येता ध्यायन्त्यः सम्परिप्लुताः । कुरुस्त्रियोऽभिगच्छन्ति तेन तेनैव दुःखिताः । ४७०
एतान्यादित्यवर्णानि तपनीयनिभानि च । रोषरोदनताम्राणि वक्त्राणि कुरुयोषितां ।
आसामपरिपूर्णार्थं निशम्य परिदेवितं । इतरेतरसंक्रन्दान्न विजानन्ति योषितः ।
एता दीर्घं विनिश्वस्य विलप्य च पुनः पुनः । विस्पन्दमाना दुःखेन वीरा जहति जीवितं ।
बह्व्यो दृष्ट्वा शरीराणि क्रोशन्ति विलपन्ति च । पाणिभिश्चापरा घ्नन्ति शिरांसि मृदुपाणयः ।
शिरोभिः पतितैर्हस्तैः सर्व्वाङ्गैर्यूथशः कृतैः । इतरेतरसम्पृक्तैराकीर्णा भाति मेदिनी । ४७५
विशिरस्कानथो कायान् दृष्ट्वा घोराभिनन्दिनः । मुह्यन्त्यनुचिता नार्य्यो विदेहानि शिरांसि च ।
शिरः कायेन सन्धाय प्रेक्षमाणा विचेतसः । अपश्यन्त्योऽपरं तत्र नेदमस्येति दुःखिताः ।
बाहूरुचरणानन्यान् विशिखोन्मथितान् पृथक् । सन्दधत्योऽसुखाविष्टा मूर्च्छन्त्येताः पुनः पुनः ।
उत्कृत्य शिरसश्चान्यान् विजग्धान् मृगपक्षिभिः । दृष्ट्वा काश्चिन्न जानन्ति भर्त्तॄन् भरतयोषितः ।
पाणिभिश्चापरा घ्नन्ति शिरांसि मधुसूदन । प्रेक्ष्य भ्रातॄन् पितॄन् पुत्त्रान् पतींश्च निहतान् परैः । ४८०
बाहुभिश्च सखड्गैश्च शिरोभिश्च सकुण्डलैः । अगम्यकल्पा पृथिवी मांसशोणितकर्द्दमा ।

न दुःखेषूचिताः पूर्व्वं दुःखं गाहन्त्यनिन्दिताः । भ्रातृभिः पितृभिः पुत्त्रैरुपकीर्णा वसुन्धरां ।
यूथानीव किशोरीणां सुकेशीनां जनार्द्दन । स्नुषाणां धृतराष्ट्रस्य पश्य वृन्दान्यनेकशः ।
इतो दुःखतरं किन्नु केशव प्रतिभाति मे । यदिमाः कुर्व्वते सर्व्वा रूपमुच्चावचं स्त्रियः ।
नूनमाचरितं पापं मया पूर्व्वेषु जन्मसु । या पश्यामि हतान् पुत्त्रान् पौत्त्रान् भ्रातॄंश्च केशव । ४८५
एवमार्त्ता विलपती ददर्श निहतं सुतं ।
इति श्रीमहाभारते स्त्रीपर्व्वणि स्त्रीविलापपर्व्वणि स्त्रीणां युद्धभूमिदर्शने षोडशोऽध्यायः ॥ १६ ॥
॥ वैशम्पायन उवाच ॥ ततो दुर्य्योधनं दृष्ट्वा गान्धारी शोकमूर्च्छिता । सहसा न्यपतद्भूमौ छिन्नेव कदली वने ।
सा तु लब्ध्वा पुनः संज्ञां विक्रुश्य च पुनः पुनः । दुर्य्योधनमभिप्रेक्ष्य शयानं रुधिरोक्षितं ।
परिष्वज्य च गान्धारी कृपणं पर्य्यदेवयत् । हा हा पुत्त्रेति शोकार्त्ता विललापाकुलेन्द्रिया ।
सुगूढजत्रु विपुलं हारनिष्कनिषेवितं । वारिणा नेत्रजेनोरः सिञ्चन्ती शोकतापिता । ४९०
समीपस्थं हृषीकेशमिदं वचनमब्रवीत् । उपस्थितेऽस्मिन् संग्रामे ज्ञातीनां संक्षये विभो ।
मामयं प्राह वार्ष्णेय प्राञ्जलिर्नृपसत्तमः । अस्मिन् ज्ञातिसमुद्धर्षे जयमम्बा ब्रवीतु मे ।
इत्युक्ते जानती सर्व्वमहं स्वव्यसनागमं । अब्रुवं पुरुषव्याघ्र यतो धर्म्मस्ततो जयः ।
यथा च युध्यमानस्त्वं न वै मुह्यसि पुत्त्रक । ध्रुवं शस्त्रजितान् लोकान् प्राप्तस्यमरवत् प्रभो ।
इत्येवमब्रुवं पूर्व्वं नैनं शोचाम्यहं सुतं । धृतराष्ट्रञ्च शोचामि कृपणं हतबान्धवं । ४९५
अमर्षणं युधां श्रेष्ठं कृतास्त्रं युद्धदुर्म्मदं । शयानं वीरशयने पश्य माधव मे सुतं ।
योऽयं मूर्द्धाभिषिक्तानामग्रे याति परन्तपः । सोऽयं पांशुषु शेतेऽद्य पश्य कालस्य पर्य्ययं ।
ध्रुवं दुर्य्योधनो वीरो गतिं न सुलभां गतः । तथा ह्यभिमुखः शेते शयने वीरसेविते ।
यं पुरा पर्य्युपासीना रमयन्ति वरस्त्रियः । तं वीरशयने सुप्तं रमयन्त्यशिवाः शिवाः ।
यं पुरा पर्य्युपासीना रमयन्ति मनीषिणः । महीतलस्थं निहतं गृध्रास्तं पर्य्युपासते । ५००
यं पुरा व्यजनैरग्र्यैरुपवीजन्ति योषितः । तमद्य पक्षव्यजनैरुपवीजन्ति पक्षिणः ।
एष शेते महाबाहुर्ब्बलवान् सत्यविक्रमः । सिंहेनेव द्विपः संख्ये भीमसेनेन पातितः ।
पश्य दुर्य्योधनं कृष्ण शयानं रुधिरोक्षितं । निहतं भीमसेनेन गदां संयुज्य भारत ।
अक्षौहिणीर्महाबाहुर्द्दश चैकाञ्च केशव । आनयद्यः पुरा संख्ये सोऽनयान्निधनं गतः ।
एष दुर्य्योधनः शेते महेष्वासो महारथः । शार्द्दूल इव सिंहेन भीमसेनेन पातितः । ५०५
विदुरं ह्यवमन्यैष पितरञ्चैव मन्दभाक् । बालो वृद्धावमानेन मन्दो मृत्युवशं गतः ।
निःसपत्ना मही यस्य त्रयोदशसमाः स्थिता । स शेते निहतो भूमौ सुतो मे पृथिवीपतिः ।
अपश्यं कृष्ण पृथिवीं धार्त्तराष्ट्रानुशासितां । पूर्णां हस्तिगवाश्वैश्च वार्ष्णेय न तु तच्चिरं ।
तामेवाद्य महाबाहो पश्याम्यन्यानुशासनां । हीनां हस्तिगवाश्वेन किन्नु जीवामि माधव ।
इदं कष्टतरं पश्य पुत्त्रस्यापि वधान्मम । यदिमाः पर्य्युपासन्ते हताञ्छूरान् रणे स्त्रियः । ५१०

प्रकीर्णकेशां सुश्रोणीं दुर्य्योधनशुभाङ्कगां। रुक्मवेदीनिभां पश्य कृष्ण लक्ष्मणमातरं।
नूनमेषा पुरा बाला जीवमाने महाभुजे। भुजावाश्रित्य रमते सुभुजस्य मनस्विनी।
कथन्नु शतधा नेदं हृदयं मे विदीर्य्यते। पश्यन्त्या निहतं पुत्रं पुत्रेण सहितं रणे।
पुत्रं रुधिरसंसिक्तमुपजिघ्रत्यनिन्दिता। दुर्य्योधनन्तु वामोरुः पाणिना परिमार्जति।
किन्नु शोचति भर्त्तारं पुत्रञ्चैषा मनस्विनी। तथा ह्यवस्थिता भाति पुत्रञ्चाप्यभिवीक्ष्य सा। ५११
स्वशिरः पञ्चशाखाभ्यामभिहत्यायतेक्षणा। पतत्युरसि वीरस्य कुरुराजस्य माधव।
पुण्डरीकमिवाभाति पुण्डरीकान्तरप्रभा। मुखं प्रमृज्य पुत्रस्य भर्त्तुश्चैव तपस्विनी।
यदि चाप्यागमाः सन्ति यदि वा श्रुतयस्तथा। ध्रुवं लोकानवाप्तोऽयं नृपो बाहुबलार्ज्जितान्।
इति श्रीमहाभारते स्त्रीपर्व्वणि स्त्रीविलापपर्व्वणि दुर्य्योधनदर्शने सप्तदशोऽध्यायः॥ १७॥
॥ गान्धार्य्युवाच ॥ पश्य माधव पुत्रान्मे शतसंख्यान् जितक्लमान्। गदया भीमसेनेन भूयिष्ठं निहतान्रणे।
इदं दुःखतरं मेऽद्य यदिमा मुक्तमूर्द्धजाः। हतपुत्रा रणे बालाः परिधावन्ति मे स्नुषाः। ५२०
प्रासादतलचारिण्यश्चरणैर्भूषणान्वितैः। आपन्ना यत् स्पृशन्तीमा रुधिरार्द्रां वसुन्धरां।
गृध्रानुत्सारयन्त्यश्च तथा गोमायुवायसान्। शोकेनार्त्ता विघूर्णन्त्यो मत्ता इव चरन्त्युत।
एषा वै ह्यनवद्याङ्गी करसम्मितमध्यमा। घोरं तदैशसं दृष्ट्वा निपतत्यतिदुःखिता।
दृष्ट्वा मे पार्थिवसुतामेतां लक्ष्मणमातरं। राजपुत्रीं महाबाहो मनो न ह्युपशाम्यति।
भ्रातॄंश्चान्याः पतींश्चान्याः पुत्रांश्च निहतान्रणे। दृष्ट्वा परिपतन्त्येताः प्रगृह्य सुभुजा भुजान्। ५२५
मध्यमानान्तु नारीणां वृद्धानां चापराजित। आक्रन्दं हतबन्धूनां दारुणे वैशसे शृणु।
रथनीडानि देहांश्च हतानां गजवाजिनां। आश्रिताः श्रममोहार्त्ताः स्थिताः पश्य महाबल।
अन्याश्चापहृतं कायात् चारुकुण्डलमुन्नसं। स्वस्य बन्धोः शिरः कृष्ण गृहीत्वा पश्य तिष्ठतीं।
पूर्ब्बजातिकृतं पापं मन्ये नाल्पमिवानघ। एताभिरनवद्याभिर्मया चैवाल्पमेधया।
यदिदं धर्म्मराजेन पातितं नो जनार्द्दन। न हि नाशोऽस्ति वार्ष्णेय कर्म्मणोः शुभपापयोः। ५३०
प्रत्यग्रवयसश्चैव दर्शनीयकुचोदराः। कुलेषु जाता ह्रीमत्यः कृष्णपक्षाक्षिमूर्द्धजाः।
हंसगद्गदभाषिण्यो दुःखशोकप्रमोहिताः। सारस्य इव राशन्त्यः पतिताः पश्य माधव।
फुल्लपद्मप्रकाशानि पुण्डरीकाक्ष योषितां। अनवद्यानि वक्त्राणि तापयत्येव रश्मिवान्।
ईर्षूणां मम पुत्राणां वासुदेवावरोधनं। मत्तमातङ्गदर्पाणां पश्यन्त्यद्य पृथग्जनाः।
शतचन्द्राणि चर्म्माणि ध्वजांश्चादित्यसन्निभान्। रौक्माणि चैव वर्म्माणि निष्कानपि च काञ्चनान्। ५३५
शीर्षत्राणानि चैतानि पुत्राणां मे महीतले। पश्य दीप्तानि गोविन्द पावकान् सुहुतानिव।
एष दुःशासनः शेते शूरेणामित्रघातिना। पीतशोणितसर्व्वाङ्गो युधि भीमेन पातितः।
गदया भीमसेनेन पश्य माधव मे सुतं। द्यूतक्लेशाननुस्मृत्य द्रौपद्या चोदितेन च।
उक्ता ह्यनेन पाञ्चाली सभायां द्यूतनिर्ज्जिता। प्रियञ्चिकीर्षता भ्रातुः कर्णस्य च जनार्द्दन।

सहैव सहदेवेन नकुलेनार्ज्जुनेन च । दासभार्य्याऽपि पाञ्चालि क्षिप्रं प्रविश नो गृहं । ५४०
ततोऽहमब्रुवं कृष्ण तदा दुर्य्योधनं नृपं । मृत्युपाशपरिक्षिप्तं शकुनिं पुत्र वर्ज्जय ।
निबोधैनं सुदुर्ब्बुद्धिं मातुलं कलहप्रियं । क्षिप्रमेनं परित्यज्य पुत्र शाम्यस्व पाण्डवैः ।
न बुध्यसे त्वं दुर्ब्बुद्धे भीमसेनममर्षणं । वाङ्नाराचैस्तुदंस्तीक्ष्णैरुल्काभिरिव कुञ्जरं ।
तानेवं रहसि क्रुद्धो वाक्शल्यानवधारयन् । उत्ससर्ज्ज विषं तेषु सर्पो गोवृषभेष्विव ।
एष दुःशासनः शेते विक्षिप्य विपुलौ भुजौ । निहतो भीमसेनेन सिंहेनेव महागजः । ५४५
अत्यर्थमकरोद्रौद्रं भीमसेनोऽत्यमर्षणः । दुःशासनस्य यत् क्रुद्धोऽपिवच्छोणितमाहवे ।
इति श्रीमहाभारते स्त्रीपर्व्वणि स्त्रीविलापपर्व्वणि गान्धारीवाक्ये अष्टादशोऽध्यायः ॥ १८ ॥

॥ गान्धार्य्युवाच ॥ एष माधव पुत्रो मे विकर्णः प्राज्ञसम्मतः । भूमौ विनिहतः शेते भीमेन शतधा कृतः ।
गजमध्ये हतः शेते विकर्णो मधुसूदन । नीलमेघपरिक्षिप्तः शरदीव निशाकरः ।
अस्य चापग्रहेणैव पाणिः कृतकिणो महान् । कथञ्चिच्छिद्यते गृध्रैरत्तुकामैस्तलत्रवान् ।
अस्य भार्य्यामिषप्रेप्सून् गृध्रानेतान् तपस्विनी । वारयत्यनिशं बाला न च शक्नोति माधव । ५५०
युवा वृन्दारकः शूरो विकर्णः पुरुषर्षभ । सुखोषितः सुखार्हश्च शेते पांशुषु माधव ।
कर्णिनालीकनाराचैर्भिन्नमर्म्माणमाहवे । अद्यापि न जहात्येनं लक्ष्मीर्भरतसत्तमं ।
एष सङ्ग्रामशूरेण प्रतिज्ञां पालयिष्यता । दुर्मुखो विमुखः शेते हतोऽरिगणहा रणे ।
अस्यैतद्वदनं कृष्ण श्वापदैरर्द्धभक्षितं । विभात्यभ्यधिकं तात सप्तम्यामिव चन्द्रमाः ।
शूरस्य हि रणे कृष्ण पश्याननमथेदृशं । स कथं निहतोऽमित्रैः पांशून् ग्रसति मे सुतः । ५५५
यस्याहवमुखे सौम्य स्थाता नैवोपपद्यते । स कथं दुर्मुखोऽमित्रैर्हतो विबुधलोकजित् ।
चित्रसेनं हतं भूमौ शयानं मधुसूदन । धार्त्तराष्ट्रमिमं पश्य प्रतिमानं धनुष्मतां ।
तं चित्रमाल्याभरणं युवत्यः शोककर्षिताः । क्रव्यादसङ्घैः सहिता रुदन्त्यः पर्य्युपासते ।
स्त्रीणां रुदितनिर्घोषः श्वापदानाञ्च गर्जितं । चित्ररूपमिदं कृष्ण विचित्रं प्रतिभाति मे ।
युवा वृन्दारको नित्यं प्रवरस्त्रीनिषेवितः । विविंशतिरसौ शेते ध्वस्तः पांशुषु माधव । ५६०
शरसंकृत्तवर्म्माणं वीरं विशसने हतं । परिवार्य्यासते गृध्राः परिविंशद्विविंशतिं ।
प्रविश्य समरे वीरः पाण्डवानामनीकिनीं । स वीरशयने शेते पुनः सत्पुरुषोचिते ।
स्मितोपपन्नं सुनसं सुभ्रु ताराधिपोपमं । अतीव शुभ्रं वदनं पश्य कृष्ण विविंशतेः ।
यं स्म तं पर्य्युपासन्ते वसुं वासवयोषितः । क्रीडन्तमिव गन्धर्व्वं देवकन्याः सहस्रशः ।
हन्तारं वीरसेनानां शूरं समितिशोभनं । निवर्हणममित्राणां दुःसहं विषहेत कः । ५६५
दुःसहस्यैतदाभाति शरीरं संवृतं शरैः । गिरिरात्मरुहैः फुल्लैः कर्णिकारैरिवावृतः ।
शातकौम्भ्या स्रजा भाति कवचेन च भास्वता । अग्निनेव गिरिः श्वेतो गतासुरपि दुःसहः ।
इति श्रीमहाभारते स्त्रीपर्व्वणि स्त्रीविलापपर्व्वणि गान्धारीवाक्ये ऊनविंशोऽध्यायः ॥ १९ ॥

॥ गान्धार्युवाच ॥ अध्यर्द्धगुणमाहुर्यं बले शौर्य्ये च केशव। पित्रा त्वया च दाशार्ह दृप्तं सिंहमिवोत्कटं।
यो बिभेद चमूमेको मम पुत्त्रस्य दुर्भिदां। स भूत्वा मृत्युरन्येषामयं मृत्युवशं गतः।
तस्योपलक्षये कृष्ण कार्ष्णेरमिततेजसः। अभिमन्योर्हतस्यापि प्रभा नैवोपशाम्यति। ५००
एषा विराटदुहिता स्नुषा गाण्डीवधन्वनः। आर्त्ता बालं पतिं वीरं दृष्ट्वा शोचत्यनिन्दिता।
तमेषा हि समासाद्य भार्य्या भर्त्तारमन्तिके। विराटदुहिता कृष्ण पाणिना परिमार्जति।
तस्य वक्त्रमुपाघ्राय सौभद्रस्य मनस्विनी। विबुद्धकमलाकारं कम्बुवृत्तशिरोधरं।
काम्यरूपवती चैषा परिष्वजति भामिनी। लज्जमाना पुरा चैनं माध्वीकमदमूर्च्छिता।
तस्य क्षतजसन्दिग्धं जातरूपपरिष्कृतं। विमुच्य कवचं वीर शरीरमभिवीक्ष्यते। ५०५
अवेक्षमाणा सा बाला कृष्ण त्वामभिभाषते। अयन्ते पुण्डरीकाक्ष सदृशाक्षो निपातितः।
बले वीर्य्ये च सदृशस्तेजसा चैव तेऽनघ। रूपेण च तथाऽत्यर्थं शेते भुवि निपातितः।
अत्यन्तसुकुमारस्य राङ्कवाजिनशायिनः। कच्चिदस्य शरीरन्ते भूमौ न परितप्यते।
मातङ्गभुजवर्ष्माणौ ज्याक्षेपकठिनत्वचौ। काञ्चनाङ्गदिनौ शेते निक्षिप्य विपुलौ भुजौ।
व्यायम्य बहुधा नूनं सुखसुप्तः श्रमादिव। एवं विलपतीमार्त्तां न हि मामभिभाषसे। ५१०
न स्मराम्यपराधन्ते किं मां न प्रतिभाषसे। न तु मां त्वं पुरा दूरादभिवीक्ष्याभिभाषसे।
न स्मराम्यपराधं मे किं मां न प्रतिभाषसे। आर्य्यामार्य्य सुभद्रां त्वमिमांश्च त्रिदशोपमान्।
पितॄन् माञ्चैव दुःखार्त्तां विहाय क्व गमिष्यसि। तस्य शोणितदिग्धान् वै केशानुद्यम्य पाणिना।
उत्सङ्गे वक्त्रमाधाय जीवन्तमिव पृच्छति। स्वस्रीयं वासुदेवस्य सुतं गाण्डीवधन्वनः।
कथं त्वां रणमध्यस्थं जघ्नुरेते महारथाः। धिगस्तु क्रूरकर्त्तॄंस्तान् कृपकर्णजयद्रथान्। ५१५
द्रोणद्रौणायनी चोभौ यैरसि व्यसनीकृतः। नरर्षभाणां सर्व्वेषां कथमासीत्तदा मनः।
बालं त्वां परिवार्य्यैकं मम दुःखाय जघ्नुषां। कथं नु पाण्डवानाञ्च पाञ्चालानाञ्च पश्यतां।
त्वं वीर निधनं प्राप्तो नाथवान् सन्ननाथवत्। दृष्ट्वा च बहुभिः संख्ये हतं वीर पिता तव।
वीरः पुरुषशार्दूल कथं जीवति पाण्डवः। न राज्यलाभो विपुलः शत्रूणां वा पराभवः।
प्रीतिं धास्यति पार्थानां त्वामृते पुष्करेक्षण। तव शस्त्रजिताल्लोकान् धर्म्मेण च दमेन च। ५२०
क्षिप्रमन्वागमिष्यामि तत्र मां परिपालय। दुर्म्मरं पुनरप्राप्ते काले भवति केनचित्।
यदहं त्वां रणे दृष्ट्वा हतं जीवामि दुर्भगा। कामिदानीं नरव्याघ्र श्लक्ष्णया स्मितया गिरा।
पितृलोके समेत्यान्यां मामिवामन्त्रयिष्यसि। नूनमप्सरसां स्वर्गे मनांसि प्रमथिष्यसि।
परमेण च रूपेण गिरा च स्मितपूर्व्वया। प्राप्य पुण्यकृताल्लोकानप्सरोभिः समेयिवान्।
सौभद्र विहरन् काले स्मरेथाः सुकृतानि मे। एतावानिह संवासो विहितस्ते मया सह। ५२५
षण्मासान् सप्तमे मासि त्वं वीर निधनं गतः। इत्युक्तवचनामेतामपकर्षन्ति दुःखितां।
उत्तरां मोघसंकल्पां मत्स्यराजकुलस्त्रियः। उत्तरामपकृष्यैनामार्त्तामार्त्ततराः स्वयं।

विराटं निहतं दृष्ट्वा क्रोशन्ति विलपन्ति च। द्रोणास्त्रशरसंकृत्तं शयानं रुधिरोक्षितं।
विराटं वितुदन्त्येते गृध्रगोमायुवायसाः। वितुद्यमानं विहगैर्व्विराटमसितेक्षणा।
न शक्नुवन्ति वित्रस्ता विवर्त्तयितुमातुराः। आसामातपतप्तानामायासेन च योषितां।
श्रमेण च विवर्णानां वक्त्राणां विप्लुतं वपुः। उत्तरञ्चाभिमन्युञ्च काम्बोजञ्च सुदक्षिणं।
शिशूनेतान् हतान् पश्य लक्ष्मणञ्च सुदर्शनं। आयोधनशिरोमध्ये शयानं पश्य माधव। १००
इति श्रीमहाभारते स्त्रीपर्व्वणि स्त्रीविलापपर्व्वणि गान्धारीवाक्ये विंशतितमोऽध्यायः॥ २० ॥
॥ गान्धार्य्युवाच ॥ एष वैकर्त्तनः शेते महेष्वासो महाबलः। ज्वलितानलवत् संख्ये संशान्तः पार्थतेजसा।
पश्य वैकर्त्तनं कर्णं निहत्यातिरथान् बहून्। शोणितौघपरीताङ्गं शयानं पतितं भुवि।
अमर्षी दीर्घरोषश्च महेष्वासो महारथः। रणे विनिहतः शेते शूरो गाण्डीवधन्वना। १०५
यं स्म पाण्डवसंत्रासान्मम पुत्त्रा महारथाः। प्रायुध्यन्त पुरस्कृत्य मातङ्गा इव यूथपं।
शार्दूलमिव सिंहेन समरे सव्यसाचिना। मातङ्गमिव मत्तेन मातङ्गेन निपातितं।
समेताः पुरुषव्याघ्र निहतं शूरमाहवे। प्रकीर्णमूर्द्धजाः पत्न्यो रुदन्त्यः पर्य्युपासते।
उद्विग्नः सततं यस्माद्धर्म्मराजो युधिष्ठिरः। त्रयोदश समा निद्रां चिन्तयन्नाध्यगच्छत।
अनाधृष्यः परैर्युद्धे शत्रुभिर्म्मघवानिव। युगान्ताग्निरिवार्च्चिष्मान् हिमवानिव च स्थिरः। ११०
स भूत्वा शरणं वीरो धार्त्तराष्ट्रस्य माधव। भूमौ विनिहतः शेते वातरुग्ण इव द्रुमः।
पश्य कर्णस्य पत्नीं त्वं वृषसेनस्य मातरं। लालप्यमानां करुणं रुदतीं पतितां भुवि।
आचार्य्यशापोऽनुगतो ध्रुवं त्वां यदग्रसच्चक्रमियं धरा ते। ततः शरेणापहृतं शिरस्ते धनञ्जयेनाहवशत्रुमध्ये।
हाहा धिगेषा पतिता विसंज्ञा समीक्ष्य जाम्बूनदबद्धकक्षं। कर्णं महाबाहुमदीनसत्त्वं सुषेणमाता रुदती भृशार्त्ता।
अल्पावशेषोऽपि कृतो महात्मा शरीरभक्षैः परिभक्षयद्भिः। द्रष्टुं न नः प्रीतिकरः शशीव कृष्णस्य पक्षस्य चतुर्द्दशाहे। ११५
सा वर्त्तमाना पतिता पृथिव्यामुत्थाय दीना पुनरेव चैषा। कर्णस्य वक्त्रं परिजिघ्रमाणा रोरूयते पुत्त्रवधाभितप्ता।
इति श्रीमहाभारते स्त्रीपर्व्वणि स्त्रीविलापपर्व्वणि गान्धारीवाक्ये एकविंशोऽध्यायः॥ २१ ॥
॥ गान्धार्य्युवाच ॥ आवन्त्यं भीमसेनेन भक्षयन्ति निपातितं। गृध्रगोमायवः शूरं बहुबन्धुमबन्धुवत्।
तं पश्य कदनं कृत्वा शत्रूणां मधुसूदन। शयानं वीरशयने रुधिरेण समुक्षितं।
तं सृगालाश्च कङ्काश्च क्रव्यादाश्च पृथग्विधाः। तेन तेन विकर्षन्ति पश्य कालस्य पर्य्ययं।
शयानं वीरशयने वीरमाक्रन्दकारिणं। आवन्त्यं सहिता नार्य्यो रुदन्त्यः पर्य्युपासते। १२०
प्रातिपेयं महेष्वासं हतं भल्लेन बाह्लिकं। प्रसुप्तमिव शार्दूलं पश्य कृष्ण मनस्विनं।
अतीव मुखवर्णोऽस्य निहतस्यापि शोभते। सोमस्येवाभिपूर्णस्य पौर्णमास्यां समुद्यतः।
पुत्त्रशोकाभितप्तेन प्रतिज्ञां परिरक्षता। पाकशासनिना संख्ये वार्द्धक्षत्रिर्निपातितः।
एकादशचमूर्भित्त्वा रक्ष्यमाणं महात्मना। सत्यञ्चिकीर्षता पश्य हतमेनं जयद्रथं।
सिन्धुसौवीरभर्त्तारं दर्पपूर्णं मनस्विनं। भक्षयन्ति शिवा गृध्रा जनार्द्दन जयद्रथं। १२५

संरक्ष्यमाणं भार्य्याभिरनुरक्ताभिरच्युत । क्रव्यादा व्यपकर्षन्ति गहनं निम्नमन्तिकात् ।
तमेताः पर्य्युपासन्ते रक्ष्यमाणं महाभुजं । सिन्धुसौवीरभर्त्तारं काम्बोजयवनस्त्रियः ।
यदा कृष्णामुपादाय प्राद्रवत् केकयैः सह । तदैव वध्यः पाण्डूनां जनार्द्दन जयद्रथः ।
कथमद्य न तां कृष्णामानयन्ति स्म ते पुनः । दुःशलामानयद्भिस्तु यदा त्यक्तो जयद्रथः ।
सैषा मम सुता बाला विलपन्ती सुदुःखिता । प्रमापयति चात्मानमाक्रोशन्ती च पाण्डवान् । ६१०
किं नु दुःखतरं कृष्ण परं मम भविष्यति । मत्सुता विधवा बाला स्नुषाश्च निहतेश्वराः ।
हा हा धिग्दुःशलां पश्य वीतशोकभयामिव । शिरो भर्त्तुरनासाद्य धावमानामितस्ततः ।
वारयामास यः सर्व्वान् पाण्डवान् पुत्रगृद्धिनः । स हत्वा विपुलाः सेनाः स्वयं मृत्युवशं गतः ।
तं मत्तमिव मातङ्गं वीरं परमदुर्ज्जयं । परिवार्य्य रुदन्त्येताः स्त्रियश्चन्द्रोपमाननाः ।
इति श्रीमहाभारते स्त्रीपर्व्वणि स्त्रीविलापपर्व्वणि गान्धारीवाक्ये द्वाविंशोऽध्यायः ॥ २२ ॥

॥ गान्धार्य्युवाच ॥ एष शल्यो हतः शेते साक्षान्नकुलमातुलः । धर्म्मज्ञेन हतस्तात धर्म्मराजेन संयुगे । ६११
यस्त्वया स्पर्द्धते नित्यं सर्व्वत्र पुरुषर्षभ । स एष निहतः शेते मद्रराजो महारथः ।
येन संगृह्णता तात रथमाधिरथेर्युधि । जयार्थं पाण्डुपुत्राणां तदा तेजोवधः कृतः ।
हा हा धिक् पश्य शल्यस्य पूर्णचन्द्रसुदर्शनं । मुखं पद्मपलाशाक्षं काकैरादष्टमव्रणं ।
अस्य चामीकराभस्य तप्तकाञ्चनसप्रभा । आस्याद्विनिःसृता जिह्वा भक्ष्यते कृष्ण पक्षिभिः ।
युधिष्ठिरेण निहतं शल्यं समितिशोभनं । रुदन्त्यः पर्य्युपासन्ते मद्रराजं कुलस्त्रियः । ६२०
एताः सुसूक्ष्मवसना मद्रराजं नरर्षभं । क्रोशन्त्योऽथ समासाद्य क्षत्रियाः क्षत्रियर्षभं ।
शल्यं निपतितं शूरं परिवार्य्याभितः स्थिताः । वाशिता गृष्टयः पङ्के परिमग्नमिव द्विपं ।
शल्यं शरणदं शूरं पश्यैनं रथसत्तमं । शयानं वीरशयने शरैर्व्विशकलीकृतं ।
एष शैलालयो राजा भगदत्तः प्रतापवान् । गजाङ्कुशधरः श्रेष्ठः शेते भुवि निपातितः ।
यस्य रुक्ममयी माला शिरस्येषा विराजते । श्वापदैर्भक्ष्यमाणस्य शोभयन्तीव मूर्द्धजान् । ६२५
एतेन किल पार्थस्य युद्धमासीत् सुदारुणं । लोमहर्षणमत्युग्रं शक्रस्य बलिना यथा ।
योधयित्वा महाबाहुरेष पार्थं धनञ्जयं । संशयं गमयित्वा च कुन्तीपुत्रेण पातितः ।
यस्य नास्ति समो लोके शौर्य्ये वीर्य्ये च कश्चन । स एष निहतः शेते भीष्मो भीष्मकृदाहवे ।
पश्य शान्तनवं कृष्ण शयानं सूर्य्यवर्च्चसं । युगान्त इव कालेन पतितं सूर्य्यमम्बरात् ।
एष तप्त्वा रणे शत्रून् शस्त्रतापेन वीर्य्यवान् । नरसूर्य्योऽस्तमभ्येति सूर्य्योऽस्तमिव केशव । ६३०
शरतल्पगतं वीरं धर्म्मे देवापिना समं । शयानं वीरशयने पश्य शूरनिषेविते ।
कर्णिनालीकनाराचैरास्तीर्य्य शयनोत्तमं । आविश्य शेते भगवान् स्कन्दः शरवणं यथा ।
अतूलपूर्णं गाङ्गेयस्त्रिभिर्ब्बाणैः समन्वितं । उपधायोपधानाग्र्यं दत्तं गाण्डीवधन्वना ।
पालयानः पितुः शास्त्रमूर्द्ध्वरेता महायशाः । एष शान्तनवः शेते माधवाप्रतिमो युधि ।

धर्म्मात्मा तव धर्म्मज्ञः पारावर्य्येण निर्णये । अमर्त्य इव मर्त्त्यः सन्नेव प्राणानधारयत् । ६५५
नास्ति युद्धे कृती कश्चिन्न विद्वान् न पराक्रमी । यत्र शान्तनवो भीष्मः शेतेऽद्य निहतः परैः ।
स्वयमेतेन शूरेण पृच्छ्यमानेन पाण्डवैः । धर्म्मज्ञेनाहवे मृत्युराख्यातः सत्यवादिना ।
प्रनष्टकुरुवंशश्च पुनर्येन समुद्धृतः । स गतः कुरुभिः सार्द्धं महाबुद्धिः पराभवं ।
धर्म्मेषु कुरवः कन्नु परिप्रक्ष्यन्ति माधव । गते देवव्रते स्वर्गं देवकल्पे नरर्षभे ।
अर्ज्जुनस्य विनेतारमाचार्य्यं सात्यकेस्तथा । तं पश्य पतितं द्रोणं कुरूणां द्विजसत्तमं । ६६०
अस्त्रं चतुर्व्विधं वेद यथैव त्रिदशेश्वरः । भार्गवो वा महावीर्य्यस्तथा द्रोणोऽपि माधव ।
यस्य प्रसादाद्बीभत्सुः पाण्डवः कर्म्म दुष्करं । चकार स हतः शेते नैनमस्त्राण्यपालयन् ।
यं पुरोधाय कुरव आह्वयन्ते स्म पाण्डवान् । सोऽयं शस्त्रभृतां श्रेष्ठो द्रोणः शस्त्रैः परिष्कृतः ।
यस्य निर्द्दहतः सेनां गतिरग्नेरिवाभवत् । स भूमौ निहतः शेते शान्तार्च्चिरिव पावकः ।
धनुर्म्मुष्टिरशीर्णश्च हस्तावापश्च माधव । द्रोणस्य निहतस्यापि दृश्यते जीवतो यथा । ६६५
वेदा यस्माच्च चत्वारः सर्व्वास्त्राणि च केशव । अनपेतानि वै शूराद्यथैवादौ प्रजापतेः ।
वन्दनार्हाविमौ तस्य वन्दिभिर्व्वन्दितौ शुभौ । गोमायवो विकर्षन्ति पादौ शिष्यगणार्च्चितौ ।
द्रोणं द्रुपदपुत्त्रेण निहतं मधुसूदन । कृपी कृपणमन्वास्ते दुःखोपहतचेतना ।
तां पश्य पतितामार्त्तां मुक्तकेशीमधोमुखीं । हतं पतिमुपासन्तीं द्रोणं शस्त्रभृताम्वरं ।
वाणैर्भिन्नतनुत्राणं धृष्टद्युम्नेन केशव । उपास्ते वै मृधे द्रोणं जटिला ब्रह्मचारिणी । ६७०
प्रेतकृत्ये च यतते कृपी कृपणमातुरा । हतस्य समरे भर्त्तुः सुकुमारी यशस्विनी ।
अग्नीनाहृत्य विधिवच्चितां प्रज्वाल्य सर्व्वशः । द्रोणमाधाय गायन्ति त्रीणि सामानि सामगाः ।
कुर्व्वन्ति च चितामेते जटिला ब्रह्मचारिणः । धनुर्भिः शक्तिभिश्चैव रथनीडैश्च माधव ।
शस्त्रैश्च विविधैरन्यैर्धक्ष्यन्ते भूरितेजसं । इति द्रोणं समाधाय शंसन्ति च रुदन्ति च ।
सामभिस्त्रिभिरन्तःस्थैरनुशंसन्ति चापरे । अग्नावग्निं समाधाय द्रोणं हुत्वा हुताशने । ६७५
गच्छन्त्यभिमुखा गङ्गां द्रोणशिष्या द्विजातयः । अपसव्यां चितिं कृत्वा पुरस्कृत्य कृपीं तदा ।
इति श्रीमहाभारते स्त्रीपर्व्वणि स्त्रीविलापपर्व्वणि गान्धारीवाक्ये त्रयोविंशोऽध्यायः ॥ २३ ॥

॥ गान्धार्य्युवाच ॥ सोमदत्तसुतं पश्य युयुधानेन पातितं । वितुद्यमानं विहगैर्ब्बहुभिर्म्माधवान्तिके ।
पुत्त्रशोकाभिसन्तप्तः सोमदत्तो जनार्द्दन । युयुधानं महेष्वासं गर्हयन्निव दृश्यते ।
असौ हि भूरिश्रवसो माता परमदुःखिता । आश्वासयति भर्त्तारं सोमदत्तमनिन्दिता ।
दिष्ट्या नैनं महाराज दारुणं भरतक्षयं । कुरुसंक्रन्दनं घोरं युगान्तमनुपश्यसि । ६८०
दिष्ट्या यूपध्वजं वीरं पुत्त्रं भूरिसहस्रदं । अनेकक्रतुयज्वानं निहतं नाद्य पश्यसि ।
दिष्ट्या स्नुषाणामाक्रन्दे घोरं विलपितं बहु । न शृणोषि महाराज सारसीनामिवार्णवे ।
एकवस्त्रानुसंवीताः प्रकीर्णाः सितमूर्द्धजाः । स्नुषास्ते परिधावन्ति हतापत्या हतेश्वराः ।

श्वापदैर्भक्ष्यमाणं त्वमहो दिष्ट्या न पश्यसि । छिन्नबाहुं नरव्याघ्रमर्ज्जुनेन निपातितं ।
शलं विनिहतं संख्ये भूरिश्रवसमेव च । स्नुषाश्च विविधाः सर्व्वा दृष्ट्वा नाद्येह पश्यसि । ६८५
दिष्ट्या तत् काञ्चनं छत्रं यूपकेतोर्महात्मनः । विनिकीर्णं रथोपस्थे सौमदत्तेर्न पश्यसि ।
अमूस्तु भूरिश्रवसो भार्य्याः सात्यकिना हतं । परिवार्य्यानुशोचन्ति भर्त्तारमसितेक्षणाः ।
एता विलप्य बहुलं भर्त्तुः शोकेन कर्षिताः । पतन्त्यभिमुखं भूमौ कृपणं तव केशव ।
वीभत्सुरतिवीभत्सं कर्म्मेदमकरोत् कथं । प्रमत्तस्य यदच्छैत्सीत् बाहुं शूरस्य यज्वनः ।
ततः पापतरं कर्म्म कृतवानपि सात्यकिः । तस्मात् प्रायोपविष्टस्य प्राहार्षीत् शंसितात्मनः । ६९०
एको द्वाभ्यां हतः शेषे त्वमधर्म्मेण धार्म्मिक । इति यूपध्वजस्यैताः स्त्रियः क्रोशन्ति माधव ।
भार्य्या यूपध्वजस्यैषा करसम्मितमध्यमा । कृत्वोत्सङ्गे भुजं भर्त्तुः कृपणं पर्य्यदेवयत् ।
अयं स रसनोत्कर्षी पीनस्तनविमर्द्दनः । नाभ्यूरुजघनस्पर्शी नीविविस्रंसनः करः ।
अयं स हन्ता शत्रूणां मित्राणामभयप्रदः । प्रदाता गोसहस्राणां क्षत्रियान्तकरः करः ।
वासुदेवस्य सान्निध्ये पार्थेनाक्लिष्टकर्म्मणा । युध्यतः समरेऽन्येन प्रमत्तस्य निपातितः । ६९५
किं नु वक्ष्यसि संसत्सु कथासु च जनार्द्दन । अर्ज्जुनस्य महत् कर्म्म स्वयं वा स किरीटवान् ।
इत्येवं गर्हयित्वैषा तूष्णीमास्ते वराङ्गना । तामेतामनुशोचन्ति सपत्न्यः स्वामिव स्नुषां ।
गान्धारराजः शकुनिर्ब्बलवान् सत्यविक्रमः । निहतः सहदेवेन भागिनेयेन मातुलः ।
यः पुरा हेमदण्डाभ्यां व्यजनाभ्यां स्म वीज्यते । स एव पक्षिभिः पक्षैः शयान उपवीज्यते ।
यः स्वरूपाणि कुरुते शतशोऽथ सहस्रशः । तस्य मायाविनो माया दग्धाः पाण्डवतेजसा । ७००
मायया निकृतिप्रज्ञो जितवान् यो युधिष्ठिरं । सभायां विपुलं राज्यं स पुनर्जीवितं जितः ।
शकुन्ताः शकुनिं कृष्ण समन्तात् पर्य्युपासते । कैतवं मम पुत्त्राणां विनाशायोपशिक्षितं ।
एतेनैतन्महद्वैरं प्रसक्तं पाण्डवैः सह । वधाय मम पुत्त्राणामात्मनः सगणस्य च ।
यथैव मम पुत्त्राणां लोकाः शस्त्रजिता विभो । एवमस्यापि दुर्ब्बुद्धेर्लोकाः शस्त्रेण वै जिताः ।
कथञ्च नायं तत्रापि पुत्त्रान्मे भ्रातृभिः सह । विरोधयेदृजुप्रज्ञाननृजुर्म्मधुसूदन । ७०५
इति श्रीमहाभारते स्त्रीपर्व्वणि स्त्रीविलापपर्व्वणि गान्धारीवाक्ये चतुर्विंशोऽध्यायः ॥ २४ ॥
॥ गान्धार्य्युवाच ॥ काम्बोजं पश्य दुर्द्धर्षं काम्बोजास्तरणोचितं । शयानमृषभस्कन्धं हतं पांशुषु माधव ।
यस्य क्षतजसन्दिग्धौ बाहू चन्दनभूषितौ । अवेक्ष्य कृपणं भार्य्या विलपत्यतिदुःखिता ।
इमौ तौ परिघप्रख्यौ बाहू शुभतलाङ्गुली । ययोर्व्विवरमापन्नां न रतिर्मां पुराजहात् ।
कां गतिं नु गमिष्यामि त्वया हीना जनेश्वर । हतबन्धुरनाथेव वेपन्ती मधुरस्वरा ।
आतपे क्लाम्यमानानां विविधानामिव स्रजां । क्लान्तानामपि नारीणां न श्रीस्त्यजति वै तनुं । ७१०
शयानमभितः शूरं कालिङ्गं मधुसूदन । पश्य दीप्ताङ्गदयुगप्रतिबद्धमहाभुजं ।
मागधानामधिपतिं जयत्सेनं जनार्द्दन । परिवार्य्य प्ररुदिता मागध्यः पश्य योषितः ।

आसामायतनेत्राणां सुस्वराणां जनार्द्दन। मनःश्रुतिहरो नादो मनो मोहयतीव मे।
प्रकीर्णसर्व्वाभरणा रुदन्त्यः शोककर्षिताः। आस्तीर्णशयनोपेता मागध्यः शेरते भुवि।
कोशलानामधिपतिं राजपुत्रं बृहद्बलं। भर्त्तारं परिवार्य्यैताः पृथक् प्ररुदिताः स्त्रियः। ७१५
अस्य गात्रगतान् वाणान् कार्ष्णिबाहुबलार्पितान्। उद्धरन्त्यसुखाविष्टा मूर्च्छमानाः पुनः पुनः।
आसां सर्व्वानवद्यानामातपेन परिश्रमात्। प्रम्लाननलिनाभानि भान्ति वक्त्राणि माधव।
द्रोणेन निहताः शूराः शेरते रुचिराङ्गदाः। धृष्टद्युम्नसुताः सर्व्वे शिशवो हेममालिनः।
रथाग्न्यगारं चापार्च्चिः शरशक्तिगदेन्धनं। द्रोणमासाद्य निर्द्दग्धाः शलभा इव पावकं
तथैव निहताः शूराः शेरते रुचिराङ्गदाः। द्रोणेनाभिमुखाः सर्व्वे भ्रातरः पञ्च केकयाः। ७२०
तप्तकाञ्चनवर्म्माणस्तालध्वजरथव्रजः। भासयन्ती महीं भासा ज्वलिता इव पावकाः।
द्रोणेन द्रुपदं संख्ये पश्य माधव पातितं। महा द्विपमिवारण्ये सिंहेन महता हतं।
पाञ्चालराज्ञो विमलं पुण्डरीकाक्ष पाण्डुरं। आतपत्रं समाभाति शरदीव निशाकरः।
एतास्तु द्रुपदं वृद्धं स्नुषा भार्य्याः सुदुःखिताः। दग्ध्वा गच्छन्ति पाञ्चाल्यं राजानमपसव्यतः।
धृष्टकेतुं महेष्वासं चेदिपुङ्गवमङ्गनाः। द्रोणेन निहतं शूरं हरन्ति हृतचेतसः। ७२५
द्रोणास्त्रमभिहत्यैष विमर्द्दे मधुसूदन। महेष्वासो हतः शेते नद्याहृत इव द्रुमः।
एष चेदिपतिः शूरो धृष्टकेतुर्महारथः। शेते विनिहतः संख्ये हत्वा शत्रून् सहस्रशः।
विच्छिद्यमानं विहगैस्तं भार्य्याः प्रत्युपस्थिताः। चेदिराजं हृषीकेश सुवेशं चारुकुण्डलं।
दाशार्हपुत्रजं वीरं शयानं सत्यविक्रमं। आरोप्याङ्के रुदन्त्येताश्चेदिराजं वराङ्गनाः।
अस्य पुत्रं हृषीकेश सुकेशं चारुकुण्डलं। द्रोणेन समरे पश्य निकृत्तं बहुधा शरैः। ७३०
पितरं नूनमाजिस्थं युध्यमानं परैः सह। नाजहात् पितरं वीरमद्यापि मधुसूदन।
एवं ममापि पुत्रस्य पुत्रः पितरमन्वगात्। दुर्य्योधनं महाबाहो लक्ष्मणः परवीरहा।
विन्दानुविन्दावावन्त्यौ पतितौ पश्य केशव। हिमान्ते पुष्पितौ शालौ मरुता गलिताविव।
काञ्चनाङ्गदवर्म्माणौ रणे खड्गधनुर्द्धरौ। ऋषभप्रतिरूपाक्षौ शयानौ विमलस्रजौ।
अवध्याः पाण्डवाः कृष्ण सर्व्व एव त्वया सह। ये मुक्ता द्रोणभीष्माभ्यां कर्णात् वैकर्त्तनात् कृपात्। ७३५
दुर्य्योधनाद्द्रोणसुतात् सैन्धवाच्च महारथात्। सोमदत्ताद्विकर्णाच्च शूराच्च कृतवर्म्मणः।
ये हन्युः शस्त्रवेगेन देवानपि नरर्षभाः। त इमे निहताः सर्व्वे पश्य कालस्य पर्य्ययं।
नातिभारोऽस्ति दैवस्य ध्रुवं माधव कश्चन। यदिमे निहताः शूराः क्षत्रियाः क्षत्रियर्षभाः।
तदैव निहताः कृष्ण मम पुत्रास्तरस्विनः। यदैवाकृतकामस्त्वमुपप्लव्यं गतः पुनः।
शान्तनोश्चैव पुत्रेण प्राज्ञेन विदुरेण च। तदैवोक्ताऽस्मि मा स्नेहं कुरुष्वात्मसुतेष्विति। ७४०
तयोर्न्न दर्शनं तात मिथ्या भवितुमर्हति। अचिरेणैव पुत्रा मे भस्मीभूता जनार्द्दन।
॥ वैशम्पायन उवाच॥ इत्युक्त्वा न्यपतद्भूमौ गान्धारी शोककर्षिता। दुःखोपहतविज्ञाना धैर्य्यमुत्सृज्य भारत।

ततः कोपपरीताङ्गी पुत्रशोकपरिप्लुता । जगाम शौरिं दोषेण गान्धारी व्यथितेन्द्रिया ।

॥ गान्धार्य्युवाच ॥ पाण्डवा धार्त्तराष्ट्राश्च दग्धाः कृष्ण परस्परं । उपेक्षिता विनश्यन्तस्त्वया कस्माज्जनार्द्दन ।

शक्तेन बहुभृत्येन विपुले तिष्ठता बले । उभयत्र समर्थेन श्रुतवाक्येन चैव ह । ७४५

इच्छतोपेक्षितो नाशः कुरूणां मधुसूदन । यस्मात्त्वया महाबाहो फलं तस्मादवाप्नुहि ।

पतिशुश्रूषया यन्मे तपः किञ्चिदुपार्ज्जितं । तेन त्वां दुरवापेन शप्स्ये चक्रगदाधर ।

यस्मात् परस्परं घ्नन्तो ज्ञातयः कुरुपाण्डवाः । उपेक्षितास्ते गोविन्द तस्माज्ज्ञातीन् वधिष्यसि ।

त्वमप्युपस्थिते वर्षे षट्त्रिंशे मधुसूदन । हतज्ञातिर्हतामात्यो हतपुत्रो वनेचरः ।

कुत्सितेनाभ्युपायेन निधनं समवाप्स्यसि । तवाप्येवं हतसुता निहतज्ञातिबान्धवाः । ७५०

स्त्रियः परितपिष्यन्ति यथैव भरतस्त्रियः ।

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा तु वचनं वासुदेवो महामनाः । उवाच देवीं गान्धारीमीषदभ्युत्स्मयन्निव ।

संहर्त्ता वृष्णिचक्रस्य मदन्यो नेह विद्यते । जानेऽहमेतदप्येवं चीर्णं चरसि क्षत्रिये ।

अवध्यास्ते नरैरन्यैरपि वा देवदानवैः । परस्परकृतं नाशं यतः प्राप्स्यन्ति यादवाः ।

इत्युक्तवति दाशार्हे पाण्डवास्त्रस्तचेतसः । बभूवुर्भृशसंविग्ना निराशाश्चापि जीविते । ७५५

इति श्रीमहाभारते स्त्रीपर्व्वणि स्त्रीविलापपर्व्वणि गान्धारीशापदाने पञ्चविंशोऽध्यायः ॥ २५ ॥

समाप्तञ्चेदं स्त्रीविलापपर्व्व ॥

## ॥ अथ श्राद्धपर्व्व ॥

॥ श्रीभगवानुवाच ॥ उत्तिष्ठोत्तिष्ठ गान्धारि मा च शोके मनः कृथाः । तवैव ह्यपराधेन बहवो निधनं गताः ।

यत्त्वं पुत्रं दुरात्मानमीर्षुमत्यन्तमानिनं । दुर्य्योधनं पुरस्कृत्य दुष्कृतं साधु मन्यसे ।

निष्ठुरं वैरपुरुषं वृद्धानां शासनातिगं । कथमात्मकृतं दोषं मय्याधातुमिहेच्छसि ।

मृतं वा यदि वा नष्टं योऽतीतमनुशोचति । दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ।

तपोऽर्थीयं ब्राह्मणी धत्त गर्भं गौर्व्वोढारं धावितारं तुरङ्गी । शूद्रा दासं पशुपालञ्च वैश्या वधार्थीयं त्वद्विधा राजपुत्री । ७६०

॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा वासुदेवस्य पुनरुक्तं वचोऽप्रियं । तूष्णीं बभूव गान्धारी शोकव्याकुललोचना ।

धृतराष्ट्रस्तु राजर्षिर्निगृह्याबुद्धिजं तमः । पर्य्यपृच्छत धर्म्मात्मा धर्म्मराजं युधिष्ठिरं ।

जीवतां परिमाणज्ञ सैन्यानामपि पाण्डव । हतानां यदि जानीषे परिमाणं वदस्व मे ।

॥ युधिष्ठिर उवाच ॥ दशायुतानामयुतं सहस्राणि च विंशतिः । कोट्यः षष्टिश्च षट् चैव येऽस्मिन् राजमृधे हताः ।

अलक्षितानां वीराणां सहस्राणि चतुर्द्दश । दश चान्यानि राजेन्द्र शतं षष्टिश्च पञ्च च । ७६५

॥ धृतराष्ट्र उवाच ॥ युधिष्ठिर गतिं कां ते गताः पुरुषसत्तम । आचक्ष्व मे महाबाहो सर्व्वज्ञो ह्यसि मे मतः ।

॥ युधिष्ठिर उवाच ॥ यैर्हुतानि शरीराणि हृष्टैः परमसंयुगे । देवराजसमान् लोकान् गतास्ते सत्यविक्रमाः ।

ये त्वहृष्टेन मनसा मर्त्तव्यमिति भारत। युध्यमाना हताः संख्ये ते गन्धर्व्वैः समागताः।
ये च संग्रामभूमिष्ठा याचमानाः पराङ्मुखाः। शस्त्रेण निधनं प्राप्ता गतास्ते गुह्यकान् प्रति।
पात्यमानाः परैर्ये तु ह्रीयमाणा निरायुधाः। ह्रीनिषेवा महात्मानः परानभिमुखा रणे। ७७०
छिद्यमानाः शितैः शस्त्रैः क्षत्रधर्म्मपरायणाः। गतास्ते ब्रह्मसदनं हता वीराः सुवर्च्चसः।
ये तत्र निहता राजन्नन्तरायोधनं प्रति। यथाकथञ्चित्ते राजन् संप्राप्तास्तूत्तरान् कुरून्।
॥ धृतराष्ट्र उवाच ॥ केन ज्ञानबलेनैवं पुत्र पश्यसि सिद्धवत्। तन्मे वद महाबाहो श्रोतव्यं यदि मन्यसे।
॥ युधिष्ठिर उवाच ॥ निदेशाद्भवतः पूर्व्वं वने विचरता मया। तीर्थयात्राप्रसङ्गेन सम्प्राप्तोऽयमनुग्रहः।
देवर्षिर्लोमशो दृष्टस्ततः प्राप्तोऽस्म्यनुस्मृतिं। दिव्यं चक्षुरनुप्राप्तं ज्ञानयोगेन वै पुरा। ७७५
॥ धृतराष्ट्र उवाच ॥ येऽत्रानाथा जनस्यास्य सनाथा ये च भारत। कच्चित्तेषां शरीराणि धक्ष्यन्ति विधिपूर्व्वकं।
न येषां सन्ति कर्त्तारो न च येऽत्राहिताग्नयः। वयञ्च कस्य कुर्य्यामो बहुत्वात्तात कर्म्मणः।
यान् सुपर्णाश्च गृध्राश्च विकर्षन्ति यतस्ततः। तेषां तु कर्म्मणा लोका भविष्यन्ति युधिष्ठिर।
॥ वैशम्पायन उवाच ॥ एवमुक्तो महाप्राज्ञः कुन्तीपुत्रो युधिष्ठिरः। आदिदेश सुधर्म्माणं धौम्यं सूतञ्च सञ्जय।
विदुरञ्च महाबुद्धिं युयुत्सुञ्चैव कौरवं। इन्द्रसेनमुखांश्चैव भृत्यान् सूतांश्च सर्व्वशः। ७८०
भवन्तः कारयन्त्वेषां प्रेतकार्य्याण्यनेकशः। यथा चानाथवत् किञ्चिच्छरीरं न विनश्यति।
शासनाद्धर्म्मराजस्य क्षत्ता सूतश्च सञ्जयः। सुधर्म्मा धौम्यसहित इन्द्रसेनादयस्तथा।
चन्दनागुरुकाष्ठानि तथा कालीयकान्युत। घृतं तैलञ्च गन्धांश्च क्षौमाणि वसनानि च।
समाहृत्य महार्हाणि दारूणाञ्चैव सञ्चयान्। रथांश्च मृदितांस्तत्र नानाप्रहरणानि च।
चिताः कृत्वा प्रयत्नेन यथामुख्यान्नराधिपान्। दाहयामासुरव्यग्रा विधिदृष्टेन कर्म्मणा। ७८५
दुर्य्योधनञ्च राजानं भ्रातॄंश्चास्य शताधिकान्। शल्यं शलञ्च राजानं भूरिश्रवसमेव च।
जयद्रथञ्च राजानमभिमन्युञ्च भारत। दौःशासनिं लक्ष्मणञ्च धृष्टकेतुञ्च पार्थिवं।
बृहन्तं सोमदत्तञ्च सृञ्जयांश्च शताधिकान्। राजानं क्षेमधन्वानं विराटद्रुपदौ तथा।
शिखण्डिनञ्च पाञ्चाल्यं धृष्टद्युम्नञ्च पार्षतं। युधामन्युञ्च विक्रान्तमुत्तमौजसमेव च।
कौशल्यं द्रौपदेयांश्च शकुनिञ्चैव सौबलं। अचलं वृषकञ्चैव भगदत्तञ्च पार्थिवं। ७९०
कर्णं वैकर्त्तनञ्चैव सहपुत्रममर्षणं। केकयांश्च महेष्वासान् त्रिगर्त्तांश्च महारथान्।
घटोत्कचं राक्षसेन्द्रं बकभ्रातरमेव च। अलम्बुषं राक्षसेन्द्रं जलसन्धञ्च पार्थिवं।
अन्यांश्च पार्थिवान्राजन् शतशोऽथ सहस्रशः। घृतधाराहुतैर्दीप्तैः पावकैः समदाहयन्।
पितृमेधाश्च केषाञ्चिदवर्त्तन्त महात्मनां। सामभिश्चाप्यगायन्त तेऽन्वशोचन्त चापरैः।
साम्नामृचाञ्च नादेन स्त्रीणाञ्च रुदितस्वनैः। कश्मलं सर्व्वभूतानां निशायां समजायत। ७९५
ते विधूमाः प्रदीप्ताश्च दीप्यमानाश्च पावकाः। नभसीवान्वदृश्यन्त ग्रहास्तन्वभ्रसंवृताः।
ये चाप्यनाथास्तत्रासन् नानादेशसमागताः। तांश्च सर्व्वान् समानाय्य राशीन् कृत्वा सहस्रशः।

चित्वा दारुभिरव्यग्रैः शुभ्रैः स्नेहपाचितैः । दाहयामास विदुरो धर्म्मराजस्य शासनात् ।
कारयित्वा क्रियास्तेषां कुरुराजो युधिष्ठिरः । धृतराष्ट्रं पुरस्कृत्य गङ्गामभिमुखोऽगमत् ।
इति श्रीमहाभारते स्त्रीपर्व्वणि श्राद्धपर्व्वणि कुरूणामौर्द्ध्वदेहिके षड्विंशोऽध्यायः ॥ २६ ॥

॥ वैशम्पायन उवाच ॥ ते समासाद्य गङ्गान्तु शिवां पुण्यजलोचितां । ह्रदिनीञ्च प्रसन्नाञ्च महारूपां महावनां । ८००
भूषणान्युत्तरीयाणि वेष्टनान्यवमुच्य च । ततः पितॄणां भ्रातॄणां पौत्राणां स्वजनस्य च ।
पुत्राणामार्य्यकाणाञ्च पतीनाञ्च कुरुस्त्रियः । उदकञ्चक्रिरे सर्व्वा रुदन्त्यो भृशदुःखिताः ।
सुहृदाञ्चापि धर्म्मज्ञाः प्रचक्रुः सलिलक्रियाः । उदके क्रियमाणे तु वीराणां वीरपत्निभिः ।
सूपतीर्थाऽभवद्गङ्गा भूयो विप्रससार च । तन्महोदधिसङ्काशं निरानन्दमनुत्सवं ।
वीरपत्नीभिराकीर्णं गङ्गातीरमशोभत । ततः कुन्ती महाराज सहसा शोककर्षिता । ८०५
रुदन्ती मन्दया वाचा पुत्रान् वचनमब्रवीत् । यः स शूरो महेष्वासो रथयूथपयूथपः ।
अर्ज्जुनेन हतः संख्ये वीरलक्षणलक्षितः । यं सूतपुत्रं मन्यध्वं राधेयमिति पाण्डवाः ।
यो व्यराजच्चमूमध्ये दिवाकर इव प्रभुः । प्रत्ययुध्यत यः सर्व्वान् पुरा वः सपदानुगान् ।
दुर्य्योधनबलं सर्व्वं यः प्रकर्षन् व्यरोचत । यस्य नास्ति समो वीर्य्ये पृथिव्यामपि कश्चन ।
यो वृणीत यशः शूरः प्राणैरपि सदा भुवि । सत्यसन्धस्य शूरस्य संग्रामेष्वपलायिनः । ८१०
कुरुध्वमुदकं तस्य भ्रातुरक्लिष्टकर्म्मणः । स हि वः पूर्व्वजो भ्राता भास्करान्मय्यजायत ।
कुण्डली कवची शूरो दिवाकरसमप्रभः । श्रुत्वा तु पाण्डवाः सर्व्वे मातुर्व्वचनमप्रियं ।
कर्णमेवान्वशोचन्त भूयश्चार्त्ततराऽभवन् । ततः स पुरुषव्याघ्रः कुन्तीपुत्रो युधिष्ठिरः ।
उवाच मातरं वीरो निश्वसन्निव पन्नगः । यः शरोर्म्मिर्ध्वजावर्त्तो महाभुजमहाग्रहः ।
तलशब्दानुनदितो महारथमहाह्रदः । यस्येषुपातमासाद्य नान्यस्तिष्ठेद्धनञ्जयात् । ८१५
भवत्याः स कथं पुत्रो देवगर्भः पुराऽभवत् । यस्य बाहुप्रतापेन तापिताः सर्व्वतो वयं ।
तमग्निमिव वस्त्रेण कथं छादितवत्यसि । यस्य बाहुबलं नित्यं धार्त्तराष्ट्रैरुपासितं ।
उपासितं यथाऽस्माभिर्ब्बलं गाण्डीवधन्वनः । भूमिपानाञ्च सर्व्वेषां बलं बलवताम्वरः ।
नान्यः कुन्तीसुतात् कर्णादगृह्णाद्रथिनां रथी । स नः प्रथमजो भ्राता सर्व्वशस्त्रभृताम्वरः ।
असूत तं भवत्यग्रे कथमद्भुतविक्रमं । अहो भवत्या मन्त्रस्य गूहनेन वयं हताः । ८२०
निधनेन हि कर्णस्य पीडिताः स्म सबान्धवाः । अभिमन्योर्व्विनाशेन द्रौपदेयबधेन च ।
पाञ्चालानाञ्च नाशेन कुरूणां पतनेन च । ततः शतगुणं दुःखमिदं मामस्पृशद्भृशं ।
कर्णमेवानुशोचन् हि सन्दह्येऽग्नाविवाहितः । नेह स्म किञ्चिदप्राप्यं भवेदपि दिवि स्थितं ।
न च स्म वैशसं घोरं कौरवान्तकरं भवेत् । एवं विलप्य बहुलं धर्म्मराजो युधिष्ठिरः ।
विरुदन् दुःखितो राजंश्चकारास्योदकं प्रभुः । ततो विनेदुः सहसा स्त्रियस्ताः खलु सर्व्वशः । ८२५
अभितो याः स्थितास्तत्र तस्मिन्नुदककर्म्मणि । तत आनाययामास कर्णस्य सपरिच्छदाः ।

स्त्रियः कुरुपतिर्धीमान् भ्रातुः प्रेष्या युधिष्ठिरः । स ताभिः सह धर्म्मात्मा प्रेतकृत्यमनन्तरं ।
कृत्वोत्ततार गङ्गायाः सलिलादाकुलेन्द्रियः ।
इति श्रीमहाभारते स्त्रीपर्व्वणि श्राद्धपर्व्वणि कर्णस्य गूढजत्वकथने सप्तविंशोऽध्यायः ॥ २७ ॥

॥ समाप्तञ्चेदं स्त्रीपर्व्व ॥

# श्रीमहाभारतं

## ॥ अथ शान्तिपर्व्व ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं। देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्।

॥ वैशम्पायन उवाच ॥ कृतोदकास्ते सुहृदां सर्व्वेषां पाण्डुनन्दनाः। विदुरो धृतराष्ट्रश्च सर्व्वाश्च भरतस्त्रियः।
तत्र ते सुमहात्मानो न्यवसन् पाण्डुनन्दनाः। शौचं निर्व्वर्त्तयिष्यन्तो मासमात्रं बहिः पुरात्।
कृतोदकन्तु राजानं धर्म्मराजं युधिष्ठिरं। अभिजग्मुर्महात्मानः सिद्धा ब्रह्मर्षिसत्तमाः।
द्वैपायनो नारदश्च देवलश्च महानृषिः। देवस्थानश्च कण्वश्च तेषां शिष्याश्च सत्तमाः।
अन्ये च वेदविद्वांसः कृतप्रज्ञा द्विजातयः। गृहस्थाः स्नातकाः सन्तो ददृशुः कुरुसत्तमं। ५
तेऽभिगम्य महात्मानः पूजिताश्च यथाविधि। आसनेषु महार्हेषु विविशुस्ते महर्षयः।
प्रतिगृह्य ततः पूजान्तत्कालसदृशीं तदा। पर्य्युपासन्यथान्यायं परिवार्य्य युधिष्ठिरं।
पुण्ये भागीरथीतीरे शोकव्याकुलचेतसं। आश्वासयन्तो राजेन्द्रं विप्राः शतसहस्रशः।
नारदस्त्वब्रवीत्काले धर्म्मपुत्रं युधिष्ठिरं। सम्भाष्य मुनिभिः सार्द्धं कृष्णद्वैपायनादिभिः।
भवतो बाहुवीर्य्येण प्रसादान्माधवस्य च। जितेयमवनिः कृत्स्ना धर्म्मेणैव युधिष्ठिर। १०
दिष्ट्या मुक्तस्तु संग्रामादस्माल्लोकभयङ्करात्। क्षत्रधर्म्मरतश्चापि कच्चिन्मोदसि पाण्डव।
कच्चिच्च निहतामित्रः प्रीणासि सुहृदो नृप। कच्चिच्छ्रियमिमां प्राप्य न त्वां शोकः प्रबाधते।
॥ युधिष्ठिर उवाच ॥ विजितेयं मही कृत्स्ना कृष्णबाहुबलाश्रयात्। ब्राह्मणानां प्रसादेन भीमार्जुनबलेन च।
इदन्तु मे महत् दुःखं वर्त्तते हृदि नित्यदा। कृत्वा ज्ञातिक्षयमिमं महान्तं लोभकारितं।
सौभद्रं द्रौपदेयांश्च घातयित्वा सुतान् प्रियान्। जयोऽयमजयाकारो भगवन् प्रतिभाति मे। १५
किन्नु वक्ष्यति वार्ष्णेयी वधूर्म्मे मधुसूदनं। द्वारकावासिनी कृष्णमितः प्रतिगतं हरिं।
द्रौपदी हतपुत्त्रेयं कृपणा हतबान्धवा। अस्मत्प्रियहिते युक्ता भूयः पीडयतीव मां।
इदमन्यच्च भगवन् यत्त्वां वक्ष्यामि नारद। मन्त्रसंवरणेनास्मि कुन्त्या दुःखेन योजितः।
यः स नागायुतबलो लोकेऽप्रतिरथो रणे। सिंहदर्पगतिर्धीमान् घृणी दाता यतव्रतः।

आश्रयो धार्त्तराष्ट्राणां मानी तीक्ष्णपराक्रमः। अमर्षी नित्यसंरम्भी क्षेप्ताऽस्माकं रणे रणे। २०
शीघ्रास्त्रश्चित्रयोधी च कृती चाद्भुतविक्रमः। गूढोत्पन्नः सुतः कुन्त्या भ्राताऽस्माकमसौ किल।
तोयकर्म्मणि तं कुन्ती कथयामास सूर्य्यजं। पुत्रं सर्व्वगुणोपेतमवकीर्णं जले पुरा।
मञ्जूषायां समाधाय गङ्गास्रोतस्यमज्जयत्। यं सूतपुत्रं लोकोऽयं राधेयञ्चाप्यमन्यत।
स ज्येष्ठपुत्रः कुन्त्या वै भ्राताऽस्माकञ्च मातृजः। अजानता मया भ्राता राज्यलुब्धेन घातितः।
तन्मे दहति गात्राणि तूलराशिमिवानलः। न हि तं वेद पार्थोऽपि भ्रातरं श्वेतवाहनः। २५
नाहं न भीमो न यमौ स त्वस्मान्वेद सुव्रतः। गता किल पृथा तस्य सकाशमिति नः श्रुतं।
अस्माकं शमकामा वै त्वञ्च पुत्रो ममेत्यथ। पृथाया न कृतः कामस्तेन चापि महात्मना।
अथ पश्चादिदं मातर्य्यवोचदिति नः श्रुतं। न हि शक्ष्याम्यहं त्यक्तुं नृपं दुर्य्योधनं रणे।
अनार्य्यत्वं नृशंसञ्च कृतघ्नत्वं हि मे भवेत्। युधिष्ठिरेण सन्धिं हि यदि कुर्य्यां मते तव।
भीतो रणे श्वेतवाहादिति मां मंस्यते जनः। सोऽहं विजित्य समरे विजयं सहकेशवं। ३०
सन्धास्ये धर्म्मपुत्रेण पश्चादिति च सोऽब्रवीत्। तमुवाच किल पृथा पुनः पृथुलवक्षसं।
चतुर्णां मेऽभयन्देहि कामं युध्यस्व फाल्गुनं। सोऽब्रवीन्मातरं धीमान्वेपमानां कृताञ्जलिः।
प्राप्तान्विषह्यांश्चतुरो न हनिष्यामि ते सुतान्। पञ्चैव हि सुता देवि भविष्यन्ति तव ध्रुवाः।
सार्जुना वा हते कर्णे सकर्णा वा हतेऽर्ज्जुने। तं पुत्रगृद्धिनी भूयो माता पुत्रमथाब्रवीत्।
भ्रातॄणां स्वस्ति कुर्व्वीथा येषां स्वस्ति चिकीर्षसि। एवमुक्त्वा किल पृथा विसृज्योपययौ गृहान्। ३५
सोऽर्ज्जुनेन हतो वीरो भ्राता भ्रात्रा सहोदरः। न चैव विवृतो मन्त्रः पृथायास्तस्य वा विभो।
अथ शूरो महेष्वासः पार्थेनाजौ निपातितः। अहन्त्वज्ञासिषं पश्चात्स्वसोदर्य्यं द्विजोत्तम।
पूर्व्वजं भ्रातरं कर्णं पृथाया वचनात्प्रभो। तेन मे दूयते तीव्रं हृदयं भ्रातृघातिनः।
कर्णार्ज्जुनसहायोऽहं जयेयमपि वासवं। सभायां क्लिश्यमानस्य धार्त्तराष्ट्रैर्दुरात्मभिः।
सहसोत्पतितः क्रोधः कर्णं दृष्ट्वा स शाम्यति। यदा ह्यस्य गिरो रूक्षाः शृणोमि कटुकोदयाः। ४०
सभायां गदतो द्यूते दुर्य्योधनहितैषिणः। तदा नश्यति मे क्रोधः पादौ तस्य निरीक्ष्य ह।
कुन्त्या हि सदृशौ पादौ कर्णस्येति मतिर्मम। सादृश्यहेतुमन्विच्छन् पृथायास्तस्य चैव ह।
कारणं नाधिगच्छामि कथञ्चिदपि चिन्तयन्। कथन्तु तस्य संग्रामे पृथिवी चक्रमग्रसत्।
कथन्तु शप्तो भ्राता मे तन्मे त्वं वक्तुमर्हसि। श्रोतुमिच्छामि भगवंस्त्वत्तः सर्व्वं यथातथं।
भवान् हि सर्व्वविद्विद्वान् लोके वेद कृताकृतं। ४५

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि कर्णाभिज्ञाने प्रथमोऽध्यायः ॥ १ ॥

॥ वैशम्पायन उवाच ॥ स एवमुक्तस्तु मुनिर्न्नारदो वदतांवरः। कथयामास तत्सर्व्वं यथा शप्तः स सूतजः।
॥ नारद उवाच ॥ एवमेतन्महाबाहो यथा वदसि भारत। न कर्णार्ज्जुनयोः किञ्चिदविषह्यं भवेद्रणे।
गुह्यमेतत्तु देवानां कथयिष्यामि तेऽनघ। तन्निबोध महाबाहो यथा वृत्तमिदं पुरा।

क्षत्रं स्वर्गं कथङ्गच्छेच्छस्त्रपूतमिति प्रभो । सङ्घर्षजननस्तस्मात्कन्यागर्भो विनिर्म्मितः ।
स बालस्तेजसा युक्तः सूतपुत्त्रत्वमागतः । चकाराङ्गिरसां श्रेष्ठाद्धनुर्व्वेदं गुरोस्तदा । १०
स बलं भीमसेनस्य फाल्गुनस्य च लाघवं । बुद्धिञ्च तव राजेन्द्र यमयोर्व्विनयं तथा ।
सख्यञ्च वासुदेवेन बाल्ये गाण्डीवधन्वनः । प्रजानामनुरागञ्च चिन्तयानो व्यदह्यत ।
स सख्यमकरोद्बाल्ये राज्ञा दुर्य्योधनेन च । युष्माभिर्न्नित्यसंद्विष्टो दैवाच्चापि स्वभावतः ।
सर्व्वाधिकमथालक्ष्य धनुर्व्वेदे धनञ्जयं । द्रोणं रहस्युपागम्य कर्णो वचनमब्रवीत ।
ब्रह्मास्त्रं वेत्तुमिच्छामि सरहस्यनिवर्त्तनं । अर्ज्जुनेन समश्चाहं युध्येयमिति मे मतिः । १५
समः शिष्येषु च स्नेहः पुत्त्रे चैव तव ध्रुवं । त्वत्प्रसादान्न मां ब्रूयुरकृतास्त्रं विचक्षणाः ।
द्रोणस्तथोक्तः कर्णेन सापेक्षः फाल्गुनं प्रति । दौरात्म्यञ्चैव कर्णस्य विदित्वा तमुवाच ह ।
ब्रह्मास्त्रं ब्राह्मणो विद्यात् यथावच्चरितव्रतः । क्षत्त्रियो वा तपस्वी यो नान्यो विद्यात्कथञ्चन ।
इत्युक्तोऽङ्गिरसां श्रेष्ठमामन्त्र्य प्रतिपूज्य च । जगाम सहसा रामं महेन्द्रं पर्व्वतम्प्रति ।
स तु राममुपागम्य शिरसाऽभिप्रणम्य च । ब्राह्मणो भार्गवोऽस्मीति गौरवेणाभ्यगच्छत । २०
रामस्तं प्रतिजग्राह पृष्ट्वा गोत्रादि सर्व्वशः । स उक्तः स्वागतञ्चेति प्रीतिमांश्चाभवद्भृशं ।
तत्र कर्णस्य वसतो महेन्द्रे स्वर्गसन्निभे । गन्धर्व्वैराक्षसैर्य्यक्षैर्द्देवैश्चासीत्समागमः ।
स तत्रेष्वस्त्रमकरोद्भृगुश्रेष्ठात् यथाविधि । प्रियश्चाभवदत्यर्थं देवदानवरक्षसां ।
स कदाचित्समुद्रान्ते विचचाराश्रमान्तिके । एकः खड्गधनुष्पाणिः परिचक्राम सूर्य्यजः ।
सोऽग्निहोत्रप्रसक्तस्य कस्यचिद्ब्रह्मवादिनः । जघानाज्ञानतः पार्थ होमधेनुं यदृच्छया । २५
तदज्ञानकृतं मत्वा ब्राह्मणाय न्यवेदयत् । कर्णः प्रसादयंश्चैवमिदमित्यब्रवीद्वचः ।
अबुद्धिपूर्व्वं भगवन् धेनुरेषा हता तव । मया तत्र प्रसादञ्च कुरुष्वेति पुनः पुनः ।
तं स विप्रोऽब्रवीत्क्रुद्धो वाचा निर्भर्त्सयन्निव । दुराचार वधार्हस्त्वं फलं प्राप्नुहि दुर्म्मते ।
येन विस्पर्द्धसे नित्यं यदर्थं घटसे भृशं । युध्यतस्तेन ते पाप चक्रं भूमिर्ग्रसिष्यति ।
ततश्चक्रे महीग्रस्ते मूर्द्धानं ते विचेतसः । पातयिष्यति विक्रम्य शत्रुर्गच्छ नराधम । ३०
यथेयं गौर्हता मूढ प्रमत्तेन त्वया मम । प्रमत्तस्य तथाऽरातिः शिरस्ते पातयिष्यति ।
शप्तः प्रसादयामास ततस्तं द्विजसत्तमं । गोभिर्द्धनैश्च रत्नैश्च स चैनं पुनरब्रवीत् ।
न हि मे व्याहृतं कुर्य्यात्सर्व्वलोकोऽपि वै मृषा । गच्छ वा तिष्ठ वा यद्वा कार्य्यन्तत्ते समाचर ।
इत्युक्तो ब्राह्मणेनाथ कर्णो दैन्यादधोमुखः । राममभ्यगमद्भीतस्तदेव मनसा स्मरन् ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि कर्णशापकथने द्वितीयोऽध्यायः ॥ २ ॥
॥ नारद उवाच ॥ कर्णस्य बाहुवीर्य्येण प्रणयेन दमेन च । तुतोष भृगुशार्द्दूलो गुरुशुश्रूषया तथा । ३५
तस्मै स विधिवत्कृत्स्नं ब्रह्मास्त्रं सनिवर्त्तनं । प्रोवाचाखिलमव्यग्रं तपस्वी तत्तपस्विने ।
विदितास्त्रस्ततः कर्णो रममाणोऽश्रमे भृगोः । चकारैवन्धनुर्व्वेदे यत्नमद्भुतविक्रमः ।

ततः कदाचिद्रामस्तु चरन्नाश्रममन्तिकात् । कर्णेन सहितो धीमानुपवासेन कर्षितः ।
सुष्वाप जामदग्न्यो वै विस्रम्भोत्पन्नसौहृदः । कर्णस्योत्सङ्ग आधाय शिरः क्लान्तमना गुरुः ।
अथ कृमिः श्लेष्ममेदोमांसासृग्भोजनः । दारुणो दारुणस्पर्शः कर्णस्याभ्यासमागतः । ८०
स तस्योरुमथासाद्य बिभेद रुधिराशनः । न चैनमशकत् क्षेप्तुं हन्तुं वापि गुरोर्भयात् ।
स दश्यमानस्तु तथा कृमिणा तेन भारत । गुरोः प्रबोधनाशङ्की तमुपैक्षत सूर्य्यजः ।
कर्णस्तु वेदनां धैर्य्यादसह्यां विनिगृह्य तां । अकम्पयन्नव्यथयन् धारयामास भार्गवं ।
यदा तु रुधिरेणाङ्गे परिस्पृष्टं भृगूद्वहः । तदाऽबुध्यत तेजस्वी सन्तप्तश्चेदमब्रवीत् ।
अहोऽस्म्यशुचितां प्राप्तः किमिदं क्रियते त्वया । कथयस्व भयं त्यक्त्वा याथातथ्यमिदं मम । ८५
तस्य कर्णस्तदाचष्ट कृमिणा परिभक्षणं । ददर्श रामस्तं चापि कृमिं शूकरसन्निभं ।
अष्टपादं तीक्ष्णदंष्ट्रं सूचीभिरिव संवृतं । रोमभिः सन्निरुद्धाङ्गमलर्कं नाम नामतः ।
स दृष्टमात्रो रामेण कृमिः प्राणानवासृजत् । तस्मिन्नेवासृक्संक्लिन्नस्तदद्भुतमिवाभवत् ।
ततोऽन्तरीक्षे ददृशे विश्वरूपः करालवान् । राक्षसो लोहितग्रीवः कृष्णाङ्गो मेघवाहनः ।
स रामं प्राञ्जलिर्भूत्वा बभाषे पूर्णमानसः । स्वस्ति ते भृगुशार्दूल गमिष्यामि यथागतं । ९०
मोक्षितो नरकादस्माद्भवता मुनिसत्तम । भद्रञ्च तेऽस्तु नन्दिश्च प्रियं मे भवता कृतं ।
तमुवाच महाबाहुर्जामदग्न्यः प्रतापवान् । कस्त्वं कस्माच्च नरकं प्रतिपन्नो ब्रवीहि तत् ।
सोऽब्रवीदहमासं प्राग्दंशो नाम महासुरः । पुरा देवयुगे तात भृगोस्तुल्यवया इव ।
सोऽहं भृगोः सुदयितां भार्य्यामपहरं बलात् । महर्षेरभिशापेन कृमिभूतोऽपतं भुवि ।
अब्रवीत्तु स मां क्रोधात्तव पूर्व्वपितामहः । मूत्रश्लेष्माशनः पाप निरयं प्रतिपत्स्यसे । ९५
शापस्यान्तो भवेद्ब्रह्मन्नित्येवं तमथाब्रुवं । भविता भार्गवाद्रामादिति मामब्रवीद्भृगुः ।
सोऽहमेतां गतिं प्राप्तो यथा न कुशलं तथा । त्वया साधो समागम्य विमुक्तः पापयोनितः ।
एवमुक्त्वा नमस्कृत्य ययौ रामं महासुरः । रामः कर्णन्तु सक्रोधमिदं वचनमब्रवीत् ।
अतिदुःखमिदं मूढ न जातु ब्राह्मणः सहेत् । क्षत्रियस्यैव ते धैर्य्यं कामया सत्यमुच्यतां ।
तमुवाच ततः कर्णः शापभीतः प्रसादयन् । ब्रह्मक्षत्रान्तरे जातं सूतं मां विद्धि भार्गव । १००
राधेयः कर्ण इति मां प्रवदन्ति जना भुवि । प्रसादं कुरु मे ब्रह्मन्नस्त्रलुब्धस्य भार्गव ।
पिता गुरुर्न सन्देहो वेदविद्याप्रदः प्रभुः । अतो भार्गव इत्युक्तं मया गोत्रं तवान्तिके ।
तमुवाच भृगुश्रेष्ठः सरोषः प्रहसन्निव । भूमौ निपतितं दीनं वेपमानं कृताञ्जलिं ।
यस्मान्मिथ्योपचरितो अस्त्रलोभादिह त्वया । तस्मादेतद्धि ते मूढ ब्रह्मास्त्रं प्रतिभास्यति ।
अन्यत्र वधकालात्ते सदृशेन समेयुषः । अब्राह्मणे न हि ब्रह्म ध्रुवं तिष्ठेत्कदाचन । १०५
गच्छेदानीं न ते स्थानमनृतस्येह विद्यते । न त्वया सदृशो युद्धे क्षत्रियो भविता भुवि ।

एवमुक्तः स रामेण न्यायेनोपजगाम ह । दुर्य्योधनमुपागम्य कृतास्त्रोऽस्मीति चाब्रवीत् ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि कर्णस्यास्त्रप्राप्तौ तृतीयोऽध्यायः ॥ ३ ॥

॥ नारद उवाच ॥ कर्णस्तु समवाप्यैवं शस्त्रं भार्गवनन्दनात् । दुर्य्योधनेन सहितो मुमुदे भरतर्षभ ।

ततः कदाचिद्राजानः समाजग्मुः स्वयम्वरे । कलिङ्गविषये राजन् राज्ञश्चित्राङ्गदस्य च ।

श्रीमद्राजपुरं नाम नगरं तत्र भारत । राजानः शतशस्तत्र कन्यार्थं समुपागमन् । ११०

श्रुत्वा दुर्य्योधनस्तत्र समेतान् सर्व्वपार्थिवान् । रथेन काञ्चनाङ्गेन कर्णेन सहितो ययौ ।

ततः स्वयम्वरे तस्मिन् सम्प्रवृत्ते महोत्सवे । समापेतुर्नृपतयः कन्यार्थे नृपसत्तम ।

शिशुपालो जरासन्धो भीष्मको वक्र एव च । कपोतरोमा नीलश्च रुक्मी च दृढविक्रमः ।

शृगालश्च महाराजः स्त्रीराज्याधिपतिश्च यः । अशोकः शतधन्वा च भोजो वीरश्च नामतः ।

एते चान्ये च बहवो दक्षिणां दिशमाश्रिताः । म्लेच्छाचार्य्याश्च राजानः प्राच्योदीच्याश्च भारत । ११५

काञ्चनाङ्गदिनः सर्व्वे शुद्धजाम्बूनदप्रभाः । सर्व्वे भासुरदेहाश्च व्याघ्रा इव बलोत्कटाः ।

ततः समुपविष्टेषु तेषु राजसु भारत । विवेश रङ्गं सा कन्या धात्रीवर्षवरान्विता ।

ततः संश्राव्यमाणेषु राज्ञां नामसु भारत । अत्यक्रामद्धार्त्तराष्ट्रं सा कन्या वरवर्णिनी ।

दुर्य्योधनस्तु कौरव्यो नामर्षयत लङ्घनं । प्रत्यषेधच्च तां कन्यामसत्कृत्य नराधिपान् ।

स वीर्य्यमदमत्तत्वाद्भीष्मद्रोणावुपाश्रितः । रथमारोप्य तां कन्यामाजहार नराधिपः । १२०

तमन्वयाद्रथी खड्गी बद्धगोधाङ्गुलित्रवान् । कर्णः शस्त्रभृतां श्रेष्ठः पृष्ठतः पुरुषर्षभ ।

ततो विमर्दः सुमहान् राज्ञामासीद्युयुत्सतां । सन्नह्यतां तनुत्राणि रथान् योजयतामपि ।

तेऽभ्यधावन्त सक्रोधाः कर्णदुर्य्योधनावुभौ । शरवर्षाणि मुञ्चन्तो मेघाः पर्व्वतयोरिव ।

कर्णस्तेषामापततामेकैकेन शरेण ह । धनूंषि च शरांस्तान्यान्पातयामास भूतले ।

ततो विधनुषः कांश्चित्कांश्चिदुद्यतकार्मुकान् । कांश्चिदुद्वहतो बाणान् रथशक्तिगदास्तथा । १२५

लाघवादाकुलीकृत्य कर्णः प्रहरतां वरः । हतसूतांश्च भूयिष्ठान् स विजिग्ये नराधिपान् ।

ते स्वयं वाहयन्तोऽश्वान् याहि याहीति वादिनः । व्यपेयुस्ते रणं हित्वा राजानो भग्नमानसाः ।

दुर्य्योधनस्तु कर्णेन पाल्यमानोऽभ्ययात्तदा । हृष्टः कन्यामुपादाय नगरं नागसाह्वयं ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि दुर्य्योधनस्य स्वयम्वर कन्याहरणे चतुर्थोऽध्यायः ॥ ४ ॥

॥ नारद उवाच ॥ आविष्कृतबलं कर्णं श्रुत्वा राजा स मागधः । आह्वयद्द्वैरथेनाजौ जरासन्धो महीपतिः ।

तयोः समभवद्युद्धं दिव्यास्त्रविदुषोर्द्वयोः । युधि नानाप्रहरणैरन्योन्यमभिवर्षतोः । १३०

क्षीणबाणौ विधनुषौ भग्नखड्गौ महीं गतौ । बाहुभिः समसज्जेतामुभावपि बलान्वितौ ।

बाहुकण्टकयुद्धेन तस्य कर्णोऽथ युध्यतः । बिभेद सन्धिं देहस्य जरया श्लेषितस्य हि ।

स विकारं शरीरस्य दृष्ट्वा नृपतिरात्मनः । प्रीतोऽस्मीत्यब्रवीत्कर्णं वैरमुत्सृज्य भारत ।

प्रीत्या ददौ स कर्णाय मालिनीं नगरीमथ । अङ्गेषु नरशार्दूल स राजासीत् सपत्नजित् ।
पालयामास चम्पाञ्च कर्णः परबलार्द्दनः । दुर्य्योधनस्यानुमते तवापि विदितं तथा ।     १३५
एवं शस्त्रप्रतापेन प्रथितः सोऽभवत् क्षितौ । त्वद्धितार्थं सुरेन्द्रेण भिक्षितो वर्म्मकुण्डले ।
स दिव्ये सहजे प्रादात् कुण्डले परमार्च्चिते । सहजं कवचं चापि मोहितो देवमायया ।
विमुक्तः कुण्डलाभ्याञ्च सहजेन च वर्म्मणा । निहतो विजयेनाजौ वासुदेवस्य पश्यतः ।
ब्राह्मणस्यापि शापेन रामस्य च महात्मनः । कुन्त्याश्च वरदानेन मायया च शतक्रतोः ।
भीष्मावमानात् संख्यायां रथस्यार्द्धानुकीर्त्तनात् । शल्यात्तेजोवधाच्चापि वासुदेवनयेन च ।     १४०
रुद्रस्य देवराजस्य यमस्य वरुणस्य च । कुवेरद्रोणयोश्चैव कृपस्य च महात्मनः ।
अस्त्राणि दिव्यान्यादाय युद्धे गाण्डीवधन्वना । हतो वैकर्त्तनः कर्णो दिवाकरसमद्युतिः ।
एवं शप्तस्तव भ्राता बहुभिश्चापि वञ्चितः । न शोच्यः स नरव्याघ्रो युद्धे हि निधनं गतः ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि कर्णवीर्य्यकथने पञ्चमोऽध्यायः ॥ ५ ॥
॥ वैशम्पायन उवाच ॥ एतावदुक्त्वा देवर्षिर्व्विरराम स नारदः । युधिष्ठिरस्तु राजर्षिर्द्दध्यौ शोकपरिप्लुतः ।
तन्दीनमनसं शूरं शोकोपहतमातुरं । निःश्वसन्तं यथा नागं पर्य्यश्रुनयनं तथा ।     १४५
कुन्ती शोकपरीताङ्गी दुःखोपहतचेतना । अब्रवीन्मधुराभाषा काले वचनमर्थवत् ।
युधिष्ठिर महाबाहो नैनं शोचितुमर्हसि । जहि शोकं महाप्राज्ञ शृणुष्वेदं वचो मम ।
यतितः स मया पूर्व्वं भ्रात्र्यं ज्ञापयितुं तव । भास्करेण च देवेन पित्रा धर्म्मभृतां वर ।
यद्वाच्यं हितकामेन सुहृदा हितमिच्छता । तथा दिवाकरेणोक्तः स्वप्नान्ते मम चाग्रतः ।
न चैनमशकद्भानुरहं वा स्नेहकारणैः । पुरा प्रत्यनुनेतुं वा गन्तुं वाऽप्येकतां त्वया ।     १५०
ततः कालपरीतः स वैरस्योद्धरणे रतः । प्रतीपकारी युष्माकमिति चोपेक्षितो मया ।
इत्युक्तो धर्म्मराजस्तु मात्रा वाष्पाकुलेक्षणः । उवाच वाक्यं धर्म्मात्मा शोकव्याकुलचेतनः ।
भवत्या गूढमन्त्रत्वात् पीडितोऽस्मीत्युवाच तां । शशाप च महातेजाः सर्व्वलोकेषु योषितः ।
न गुह्यं धारयिष्यन्तीत्येवं दुःखसमन्वितः । स राजा पुत्त्रपौत्त्राणां सम्बन्धिसुहृदां तथा ।
स्मरन्नुद्विग्नहृदयो बभूवोद्विग्नचेतनः । ततः शोकपरीतात्मा सधूम इव पावकः ।     १५५
निर्व्वेदमगमद्धीमान् राजा सन्तापपीडितः ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि स्त्रीशापे षष्ठोऽध्यायः ॥ ६ ॥
॥ वैशम्पायन उवाच ॥ युधिष्ठिरस्तु धर्म्मात्मा शोकव्याकुलचेतनः । शुशोच दुःखसन्तप्तः स्मृत्वा कर्णं महारथं ।
आविष्टो दुःखशोकाभ्यां निःश्वसंश्च पुनः पुनः । दृष्ट्वाऽर्ज्जुनमुवाचेदं वचनं शोककर्षितः ।
॥ युधिष्ठिर उवाच ॥ यद्भैक्ष्यमाचरिष्यामो वृष्ण्यन्धकपुरे वयं । ज्ञातीन् निष्पुरुषान् कृत्वा नेमां प्राप्स्याम दुर्गतिं ।
अमित्रा नः समृद्धार्था वृत्तार्थाः कुरवः कृताः । आत्मानमात्मना हत्वा किं धर्म्मफलमाप्नुमः ।     १६०
धिगस्तु क्षात्त्रमाचारं धिगस्तु बलपौरुषं । धिगस्त्वमर्षं येनेमामापदं गमिता वयं ।

साधु क्षमा दमः शौचं सर्व्ववैराग्यममत्सरः । अहिंसा सत्यवचनं नित्यानि वनचारिणां ।
वयं तु लोभान्मोहाच्च दम्भं मानञ्च संश्रिताः । इमामवस्थामापन्ना राज्यलाभबुभुत्सया ।
त्रैलोक्यस्यापि राज्येन नास्मान् कश्चित्प्रहर्षयेत् । बान्धवान्निहतान्दृष्ट्वा पृथिव्यां विजयैषिणः ।
ते वयं पृथिवीहेतोरवध्यान् पृथिवीश्वरान् । सम्परित्यज्य जीवामो हीनार्था हतबान्धवाः । १६५
आमिषे गृध्यमानानामशुभं नः शुनामिव । आमिषञ्चैव नो हीष्टमामिषस्य विवर्ज्जनं ।
न पृथिव्या सकलया न हिरण्यस्य राशिभिः । न गवाश्वेन सर्व्वेण ते त्याज्या य इमे हताः ।
काममन्युपरीतास्ते क्रोधहर्षसमन्विताः । मृत्युयानं समारुह्य गता वैवस्वतक्षयं ।
बहुकल्याणसंयुक्तानिच्छन्ति पितरः सुतान् । तपसा ब्रह्मचर्य्येण सत्येन च तितिक्षया ।
उपवासैस्तथेज्याभिर्व्रतकौतुकमङ्गलैः । लभन्ते मातरो गर्भांस्तान्मासान्दश बिभ्रति । १७०
यदि स्वस्ति प्रजायन्ते जाता जीवन्ति वा यदि । सम्भाविता जातबलास्ते दद्युर्यदि नः सुखं ।
इह वाऽमुत्र वा चेति कृपणाः फलहेतुकाः । तासामयं समारम्भो निर्वृत्तः केवलोऽफलः ।
यदासां निहताः पुत्रा युवानो मृष्टकुण्डलाः । अभुक्त्वा पार्थिवान् भोगान् ऋणान्यनवदाय च ।
पितृभ्यो देवताभ्यश्च गता वैवस्वतक्षयं । यदैषामम्ब पितरौ जातकामावुभावपि ।
सञ्जातबलरूपेषु तदैव निहता नृपाः । संयुक्ताः काममन्युभ्यां क्रोधहर्षासमञ्जसः । १७५
न ते जन्मफलं किञ्चिद्भोक्तारो जातु कर्हिचित् । पाञ्चालानां कुरूणाञ्च हता एव हि ते हताः ।
न चेत्सर्व्वानयं लोकान् प्रपद्येत स्वकर्म्मणा । वयमेवास्य लोकस्य विनाशे कारणं स्मृताः ।
धृतराष्ट्रस्य पुत्रेषु तत् सर्व्वं प्रतिपत्स्यति । सदैव निकृतिप्रज्ञो द्वेष्टा मायोपजीवनः ।
मिथ्यावृत्तस्य सततमस्मास्वनपकारिषु । न सकामा वयं ते च न चास्माभिर्न तैर्जितं ।
न तैर्भुक्तेयमवनिर्न्न नार्य्यो गीतवादितं । नामात्यसुहृदां वाक्यं न च श्रुतवतां श्रुतं । १८०
न दत्तानि परार्द्ध्यानि न भूर्न्न द्रविणागमः । अस्मद्द्वेषेण सन्तप्तः सुखं नस्तेषु विन्दति ।
वृद्धिमस्मासु तां दृष्ट्वा विवर्णो हरिणः कृशः । धृतराष्ट्रस्य नृपतिः सौबलेन निवेदितः ।
तं पिता पुत्रगृद्धित्वादनुमेनेऽनये स्थितं । अनवेक्ष्यैव विदुरं गाङ्गेयञ्च महामतिं ।
असंशयं क्षयं राजा यथैवाहं तथा गतः । अनियम्याशुचिं लुब्धं पुत्रं कामवशानुगं ।
पतितो यशसो दीप्तात् घातयित्वा सहोदरान् । इमौ हि वृद्धौ शोकाग्नौ प्रक्षिप्य स सुयोधनः । १८५
अस्मत्प्रद्वेषसन्तप्तः पापबुद्धिः सदैव हि । को हि बन्धुः कुलीनः संस्तथा ब्रूयात्सुहृज्जने ।
यथाऽवाचक्रवान्वाक्यं युयुत्सुः कृष्णसन्निधौ । आत्मनो हि वयं दोषाद्विनष्टाः शाश्वतीः समाः ।
प्रदहन्तो दिशः सर्व्वा भास्करा इव तेजसा । सोऽस्माकं वैरपुरुषो दुर्म्मतिः प्रग्रहं गतः ।
दुर्य्योधनकृते ह्येतत्कुलं नो विनिपातितं । अवध्यानां वधं कृत्वा लोके प्राप्ताः स्म वाच्यतां ।
कुलस्यास्यान्तकरणं दुर्म्मतिं पापकारिणं । राजा राष्ट्रेश्वरं कृत्वा धृतराष्ट्रोऽद्य शोचति । १९०
हताः शूराः कृतं पापं विषयः स्वो विनाशितः । हत्वा नो विगतो मन्युः शोको मां रुन्धयत्ययं ।

धनञ्जय कृतं पापं कल्याणेनोपहन्यते। ख्यापनेनानुतापेन दानेन तपसाऽपि वा।
निवृत्त्या तीर्थगमनात् श्रुतिस्मृतिजपेन वा। त्यागवांश्च पुनः पापं नालं कर्त्तुमिति श्रुतिः।
त्यागवान् जन्ममरणे नाप्नोतीति श्रुतिर्यदा। प्राप्तवर्त्मा कृतमतिर्ब्रह्म सम्पद्यते तदा।
स धनञ्जय निर्द्वन्द्वो मुनिर्ज्ञानसमन्वितः। वनमामन्त्र्य वः सर्व्वान् गमिष्यामि परन्तप। १९९
न हि कृत्स्नतमो धर्म्मः शक्यः प्राप्तुमिति श्रुतिः। परिग्रहवता तन्मे प्रत्यक्षमरिसूदन।
मया सृष्टं तु पापं हि परिग्रहमभीप्सता। जन्मक्षयनिमित्तञ्च शक्यं प्राप्तुमिति श्रुतिः।
स परिग्रहमुत्सृज्य कृत्स्नं राज्यं तथैव च। गमिष्यामि विनिर्मुक्तो विशोको विज्वरस्तथा।
प्रशाधि त्वमिमामुर्व्वीं क्षेमां निहतकण्टकां। न ममार्थोऽस्ति राज्येन भोगैर्व्वा कुरुसत्तम।
इत्येवमुक्त्वा वचनं धर्म्मराजो युधिष्ठिरः। व्युपारमत्त तं पार्थः कनीयान् प्रत्यभाषत। २००
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि युधिष्ठिरपरिदेवनायां सप्तमोऽध्यायः॥ ७॥
॥ वैशम्पायन उवाच॥ अथार्ज्जुन उवाचेदमधिक्षिप्त इवाक्षमी। अभिनीततरं वाक्यं दृढवादपराक्रमः।
दर्शयन् स तदात्मानमुग्रमुग्रपराक्रमः। स्मयमानो महातेजाः सृक्कणी परिसंलिहन्।
॥ अर्ज्जुन उवाच॥ अहो दुःखमहो कृच्छ्रमहो वैक्लव्यमुत्तमं। यत्कृत्वामानुषं कर्म्म त्यजेथाः श्रियमुत्तमां।
शत्रून् हत्वा महीं लब्ध्वा स्वधर्म्मेणोपपादितां। एवंविधं कथं सर्व्वं त्यजेथा बुद्धिलाघवात्।
क्लीवस्येह कुतो राज्यं दीर्घसूत्रस्य वा पुनः। किमर्थं च महीपालानवधीः क्रोधमूर्च्छितः। २०५
यो ह्याजिजीविषुर्भैक्ष्यं कर्म्मणा येन केनचित्। समारम्भान् बुभूषेत हतस्वस्तिरकिञ्चनः।
सर्व्वलोकेषु विख्यातो न पुत्रपशुसंहितः। कापालीं नृप पापिष्ठां वृत्तिमासाद्य जीवतः।
सन्त्यज्य राज्यमृद्धं ते लोकोऽयं किं वदिष्यति। सर्व्वारम्भान् परित्यज्य हतस्वस्तिरकिञ्चनः।
कस्मादाशंससे भैक्ष्यं कर्त्तुं प्राकृतवत्प्रभो। अस्मिन् राजकुले जातो जित्वा कृत्स्नां वसुन्धरां।
धर्म्मार्थावखिलौ हित्वा वनं मौर्ख्यात्प्रतिष्ठसे। यदिमानि हवींषीह विमथिष्यन्त्यसाधवः। २१०
भवता विप्रहीणानि प्राप्तं त्वामेव किल्विषं। आकिञ्चन्यमनाशस्यमिति वै नहुषोऽब्रवीत्।
कृत्वा नृशंसं ह्यधने धिगस्त्वधनतामिह। अश्वस्तनमृषीणां हि विद्यते वेद तद्भवान्।
यन्त्विमं धर्म्ममित्याहुर्धनादेष प्रवर्त्तते। धर्म्मं संहरते तस्य धनं हरति यस्य सः।
ह्रियमाणे धने राजन् वयं कस्य क्षमेमहि। अभिशस्तं प्रपश्यन्ति दरिद्रं पार्श्वतः स्थितं।
दारिद्र्यं पातकं लोके न तच्छंसितुमर्हति। पतितः शोच्यते राजन्निर्द्धनश्चापि शोच्यते। २१५
विशेषं नाधिगच्छामि निर्द्धनस्यावरस्य च। अर्थेभ्यो हि विवृद्धेभ्यः सम्भृतेभ्यस्ततस्ततः।
क्रियाः सर्व्वाः प्रवर्त्तन्ते पर्व्वतेभ्य इवापगाः। अर्थाद्धर्म्मश्च कामश्च स्वर्गश्चैव नराधिप।
प्राणयात्राऽपि लोकस्य विनाऽर्थं न प्रसिध्यति। अर्थेनेह विहीनस्य पुरुषस्याल्पमेधसः।
विच्छिद्यन्ते क्रियाः सर्व्वा ग्रीष्मे कुसरितो यथा। यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः।
यस्यार्थाः स पुमान् लोके यस्यार्थाः स च पण्डितः। अधनेनार्थकामेन नार्थः शक्यो विधित्सता। २२०

अर्थैरर्था निबध्यन्ते गजैरिव महागजाः । धर्म्मः कामश्च हर्षश्च धृतिः क्रोधः श्रुतं मदः । २३५
अर्थादेतानि सर्व्वाणि प्रवर्त्तन्ते नराधिप । धनात्कुलं प्रभवति धनाद्धर्म्मः प्रवर्द्धते ।
नाधनस्यास्त्ययं लोको न परः पुरुषोत्तम । नाधनो धर्म्मकृत्यानि यथावदनुतिष्ठति ।
धनाद्धर्म्मः प्रभवति शैलादभि नदी यथा । यः कृशाश्वः कृशगवः कृशभृत्यः कृशातिथिः ।
स वै राजन् कृशो नाम न शरीरकृशः कृशः । अवेक्षस्व यथान्यायं पश्य देवासुरं यथा ।
राजन् किमन्यज्ज्ञातीनां वधादृध्यन्ति देवताः । न चेद्धर्त्तव्यमन्यस्य कथं तद्धर्म्ममारभेत् । २४०
एतावानेव वेदेषु निश्चयः कविभिः कृतः । अध्येतव्या त्रयी नित्यं भवितव्यं विपश्चिता ।
सर्व्वथा धनमाहार्य्यं यष्टव्यं चापि यत्नतः । द्रोहाद्देवैरवाप्तानि दिवि स्थानानि सर्व्वशः ।
द्रोहात्किमन्यज्ज्ञातीनां गृध्यन्ते येन देवताः । इति देवा व्यवसिता वेदवादाश्च शाश्वताः ।
अधीयन्तेऽध्यापयन्ति यजन्ते याजयन्ति च । कृत्स्नं तदेव तच्छ्रेयो यदप्याददतेऽन्यतः ।
न पश्यामोऽनपकृतं धनं किञ्चित्क्वचिद्वयं । एवमेव हि राजानो जयन्ति पृथिवीमिमां । २४५
जित्वा ममेयं ब्रुवते पुत्त्रा इव पितुर्द्धनं । राजर्षयोऽपि ते स्वर्ग्या धर्म्मो ह्येषां निरुच्यते ।
यथैव पूर्णादुदधेः स्यन्दन्त्यापो दिशो दश । एवं राजकुलाद्वित्तं पृथिवीं प्रति तिष्ठति ।
आसीदियं दिलीपस्य नृगस्य नहुषस्य च । अम्बरीषस्य मान्धातुः पृथिवी सा त्वयि स्थिता ।
स त्वां द्रव्यमयो यज्ञः सम्प्राप्तः सर्व्वदक्षिणः । तञ्चेन्न यजसे राजन् प्राप्तस्त्वं राज्यकिल्बिषं ।
येषां राजाऽश्वमेधेन यजते दक्षिणावता । उपेत्य तस्यावभृथं पूताः सर्व्वे भवन्ति ते । २५०
विश्वरूपो महादेवः सर्व्वमेधे महामखे । जुहाव सर्व्वभूतानि तथैवात्मानमात्मना ।
शाश्वतोऽयं भूतिपथो नास्यान्तमनुशुश्रुम । महान् दाशरथः पन्था मा राजन् कुपथं गमः ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि अर्ज्जुनवाक्ये अष्टमोऽध्यायः ॥ ८ ॥
॥ युधिष्ठिर उवाच ॥ मुहूर्त्तं तावदेकाग्रो मनः श्रोत्रेऽन्तरात्मनि । धारयस्त्वेति तच्छ्रुत्वा रोचेत वचनं मम ।
साधुगम्यमहं मार्गं न जातु त्वत्कृते पुनः । गच्छेयं तं गमिष्यामि हित्वा ग्राम्यसुखान्युत ।
क्षेम्यश्चैकाकिना गम्यः पन्थाः कोऽस्तीति पृच्छ मां । अथवा नेच्छसि प्रष्टुमपृच्छन्नपि मे शृणु । २५५
हित्वा ग्राम्यसुखाचारं तप्यमानो महत्तपः । अरण्ये फलमूलाशी चरिष्यामि मृगैः सह ।
जुह्वानोऽग्निं यथाकालमुभौ कालावुपस्पृशन् । कृशः परिमिताहारश्चर्म्मचीरजटाधरः ।
शीतवातातपसहः क्षुत्पिपासाश्रमक्षमः । तपसा विधिदृष्टेन शरीरमुपशोषयन् ।
मनःकर्णसुखा नित्यं शृण्वन्नुच्चावचा गिरः । मुदितानामरण्येषु वसतां मृगपक्षिणां ।
आजिघ्रन्पेशलान् गन्धान् फुल्लानां वृक्षवीरुधां । नानारूपान्वने पश्यन् रमणीयान्वनौकसः । २६०
वानप्रस्थजनस्यापि दर्शनं कुलवासिनां । नाप्रियाण्याचरिष्यामि किं पुनर्ग्रामवासिनां ।
एकान्तशीली विमृशन् पक्वापक्वेन वर्त्तयन् । पितॄन्देवांश्च वन्येन वाग्भिरद्भिश्च तर्पयन् ।
एवमारण्यशास्त्राणामुग्रमुग्रतरं विधिं । सेवमानः प्रतीक्षिष्ये देहस्यास्य समापनं ।

अथ वैकोऽहमेकाहमेकैकस्मिन्वनस्पतौ। चरन् भैक्षं मुनिर्मुण्डः क्षपयिष्ये कलेवरं।
पांशुभिः समभिच्छन्नः शून्यागारप्रतिश्रयः। वृक्षमूलनिकेतो वा त्यक्तसर्व्वप्रियाप्रियः। २६५
न शोचन्न प्रहृष्यंश्च तुल्यनिन्दात्मसंस्तुतिः। निराशीर्निर्म्ममो भूत्वा निर्द्वन्द्वो निष्परिग्रहः।
आत्मारामः प्रसन्नात्मा जडान्धबधिराकृतिः। अकुर्व्वाणः परैः काञ्चित्सम्बिदं जातु कैरपि।
जङ्गमाजङ्गमान् सर्व्वानविहिंसंश्चतुर्व्विधान्। प्रजाः सर्व्वाः स्वधर्म्मस्थाः समः प्राणभृतः प्रति।
न चाप्यवहसन् कञ्चिन्न कुर्व्वन् भृकुटीः क्वचित्। प्रसन्नवदनो नित्यं सर्व्वेन्द्रियसुसंयतः।
अपृच्छन् कस्यचिन्मार्गं प्रव्रजन्नेव केनचित्। नादेशं न दिशं काञ्चिद्गन्तुमिच्छन्विशेषतः। २७०
गमने निरपेक्षश्च पश्चादनवलोकयन्। ऋजुः प्रणिहितो गच्छंस्त्रसस्थावरवर्ज्जकः।
स्वभावस्तु प्रयात्यग्रे प्रभवन्त्यशनान्यपि। द्वन्द्वानि च विरुद्धानि तानि सर्व्वाण्यचिन्तयन्।
अल्पं वा स्वादुभोज्यं वा पूर्व्वालाभेन जातुचित्। अन्येष्वपि चरन् लाभमलाभे सप्त पूरयन्।
विधूमे न्यस्तमुषले व्यङ्गारे भुक्तवज्जने। अतीतपात्रसञ्चारे काले विगतभिक्षुके।
एककालं चरन् भैक्षं त्रीनथ द्वे च पञ्च वा। स्पृहापाशं विमुच्याहं चरिष्यामि महीमिमां। २७५
अलाभे सति वा लाभे समदर्शी महातपाः। न जिजीविषुवत्किञ्चिन्न मुमूर्षुवदाचरन्।
जीवितं मरणञ्चैव नाभिनन्दन्न च द्विषन्। वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः।
नाकल्याणं न कल्याणं चिन्तयन्नुभयोस्तयोः। याः काश्चिज्जीवता शक्याः कर्त्तुमभ्युदयक्रियाः।
सर्व्वास्ताः समभित्यज्य निमेषादिव्यवस्थितः। तेषु नित्यमशक्तश्च त्यक्तसर्व्वेन्द्रियक्रियः।
अपरित्यक्तसङ्कल्पः सुनिर्णिक्तात्मकल्मषः। विमुक्तः सर्व्वसङ्गेभ्यो व्यतीतः सर्व्ववागुराः। २८०
न वशे कस्यचित्तिष्ठन् सधर्म्मा मातरिश्वनः। वीतरागश्चरन्नेवं तुष्टिं प्राप्स्यामि शाश्वतीं।
तृष्णया हि महत्पापमज्ञानादस्मि कारितः। कुशलाकुशलान्येके कृत्वा कर्म्माणि मानवाः।
कार्य्यकारणसंश्लिष्टं स्वजनं नाम बिभ्रति। आयुषोऽन्ते प्रहायेदं क्षीणप्राणं कलेवरं।
प्रतिगृह्णाति तत्पापं कर्त्तुः कर्म्मफलं हि तत्। एवं संसारचक्रेऽस्मिन् व्याविद्धे रथचक्रवत्।
समेति भूतग्रामोऽयं भूतग्रामेण कार्य्यवान्। जन्ममृत्युजराव्याधिवेदनाभिरभिद्रुतं।
अपारमिव चास्वस्थं संसारं त्यजतः सुखं। दिवः पतत्सु देवेषु स्थानेभ्यश्च महर्षिषु।
को हि नाम भवेनार्थी भवेत्कारणतत्त्ववित्। कृत्वा हि विविधं कर्म्म तत्तद्विविधलक्षणं।
पार्थिवैर्नृपतिः स्वल्पैः कारणैरेव बध्यते। तस्मात्प्रज्ञामृतमिदं चिरान्मां प्रत्युपस्थितं।
तत्प्राप्य प्रार्थये स्थानमव्ययं शाश्वतं ध्रुवं। एतया सततं वृत्त्या चरन्नेवंप्रकारया। २८५
जन्ममृत्युजराव्याधिवेदनाभिरभिद्रुतं। देहं संस्थापयिष्यामि निर्भयं मार्गमास्थितः।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि युधिष्ठिरवाक्ये नवमोऽध्यायः॥ ९ ॥
॥ भीमसेन उवाच ॥ श्रोत्रियस्येव ते राजन् मन्दकस्याविपश्चितः। अनुवाकहता बुद्धिर्नैषा तत्त्वार्थदर्शिनी।
आलस्ये कृतचित्तस्य राजधर्म्मानसूयतः। विनाशे धार्त्तराष्ट्राणां किं फलं भरतर्षभ।

क्षमाऽनुकम्पा कारुण्यमानृशंस्यं न विद्यते । क्षात्त्रमाचरतो मार्गमपि बन्धोस्त्वदन्तरे ।
यदीमां भवतो बुद्धिं विद्याम वयमीदृशीं । शस्त्रं न वै ग्रहीष्यामो न वधिष्याम कञ्चन । ३८०
भैक्ष्यमेवाचरिष्याम शरीरस्याविमोक्षणात् । न चेदं दारुणं युद्धमभविष्यन्महीक्षितां ।
प्राणस्यान्नमिदं सर्व्वमिति वै कवयो विदुः । स्थावरं जङ्गमञ्चैव सर्व्वं प्राणस्य भोजनं ।
आददानस्य चेद्राज्यं ये केचित्परिपन्थिनः । हन्तव्यास्त इति प्राज्ञाः क्षत्त्रधर्म्मविदो विदुः ।
ते सदोषा हतास्माभी राज्यस्य परिपन्थिनः । तान् हत्वा भुङ्क्ष्व धर्म्मेण युधिष्ठिर महीमिमां ।
यथा हि पुरुषः खात्वा कूपमप्राप्य चोदकं । पङ्कदिग्धो निवर्त्तेत कर्म्मेदं नस्तथोपमं । ३८५
यथारुह्य महावृक्षमपहृत्य ततो मधु । अप्राप्य निधनं गच्छेत्कर्म्मेदं नस्तथोपमं ।
यथा महान्तमध्वानमाशया पुरुषो व्रजन् । स निराशो निवर्त्तेत कर्म्मैतन्नस्तथोपमं ।
यथा शत्रून् घातयित्वा पुरुषः कुरुनन्दन । आत्मानं घातयेत्पश्चात्कर्म्मेदं नस्तथाविधं ।
यथाऽन्नं क्षुधितो लब्ध्वा न भुञ्जीयाद्यदृच्छया । कामी च कामिनीं लब्ध्वा कर्म्मेदं नस्तथोपमं ।
वयमेवात्र गर्ह्या हि यद्वयं मन्दचेतसं । त्वां राजन्ननुगच्छामो ज्येष्ठोऽयमिति भारत । ३९०
वयं हि बाहुबलिनः कृतविद्या मनस्विनः । क्लीवस्य वाक्ये तिष्ठामो यथैवाशक्तयस्तथा ।
अगतीकगतीनस्मान्नष्टार्थानर्थसिद्धये । कथं वै नानुपश्येयुर्जनाः पश्यत यादृशं ।
आपत्काले हि संन्यासः कर्त्तव्य इति शिष्यते । जरयाऽभिपरीतेन शत्रुभिर्व्यंसितेन वा ।
तस्मादिह कृतप्रज्ञास्त्यागं न परिचक्षते । धर्म्मव्यतिक्रमञ्चैव मन्यन्ते सूक्ष्मदर्शिनः ।
कथं तस्मात्समुत्पन्नास्तन्निष्ठास्तदुपाश्रयाः । तदेव निन्दां भाषेयुर्धातास्तत्र न गर्हते । ३९५
श्रिया विहीनैरधनैर्नास्तिकैः सम्प्रवर्त्तितं । वेदवादस्य विज्ञानं सत्याभासमिवानृतं ।
शक्यन्तु मौण्ड्यमास्थाय बिभ्रतात्मानमात्मना । धर्म्मच्छद्म समास्थाय च्यवितुं न तु जीवितुं ।
शक्यं पुनररण्येषु सुखमेकेन जीवितुं । अबिभ्रता पुत्त्रपौत्त्रान्देवर्षीनतिथीन्पितॄन् ।
नेमे मृगाः स्वर्गजितो न वराहा न पक्षिणः । तथाऽन्येन प्रकारेण पुण्यमाहुर्न ते जनाः ।
यदि संन्यासतः सिद्धिं राजन् कश्चिदवाप्नुयात् । पर्व्वताश्च द्रुमाश्चैव क्षिप्रं सिद्धिमवाप्नुयुः । ४००
एते हि नित्यसंन्यासा दृश्यन्ते निरुपद्रवाः । अपरिग्रहवन्तश्च सततं ब्रह्मचारिणः ।
अथ चेदात्मभाग्येषु नान्येषां सिद्धिमश्नुते । तस्मात्कर्म्मैव कर्त्तव्यं नास्ति सिद्धिरकर्म्मणः ।
औदकाः सृष्टयश्चैव जन्तवः सिद्धिमाप्नुयुः । येषामात्मैव भर्त्तव्यो नान्यः कश्चन विद्यते ।
अवेक्षस्व यथा स्वैः स्वैः कर्म्मभिर्व्यापृतं जगत् । तस्मात्कर्म्मैव कर्त्तव्यं नास्ति सिद्धिरकर्म्मणः ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि भीमसेनवाक्ये दशमोऽध्यायः ॥ १० ॥
॥ अर्ज्जुन उवाच ॥ अत्रैवोदाहरन्तीममितिहासं पुरातनं । तापसैः सह संवादं शक्रस्य भरतर्षभ । ४०५
केचिद्गृहान् परित्यज्य वनमभ्यागमन्द्विजाः । अजातश्मश्रवो मन्दाः कुले जाताः प्रवव्रजुः ।
धर्म्मोऽयमिति मन्वानाः समृद्धा ब्रह्मचारिणः । त्यक्त्वा भ्रातॄन् पितॄंश्चैव तानिन्द्रोऽन्वकम्पायत ।

तानावभाषे भगवान् पक्षी भूत्वा हिरण्मयः । सुदुष्करं मनुष्यैश्च यत्कृतं विघसाशिभिः ।

पुण्यं भवति कर्म्मेदं प्रशस्तञ्चैव जीवितं । सिद्धार्थास्ते गतिं मुख्यां प्राप्ता धर्म्मपरायणाः ।

॥ ऋषय ऊचुः ॥ अहो बतायं शकुनिर्विघसाशान् प्रशंसति । अस्मान्नूनमयं शास्ति वयं च विघसाशिनः । २१०

॥ शकुनिरुवाच ॥ नाहं युष्मान् प्रशंसामि पङ्कदिग्धान् रजस्वलान् । उच्छिष्टभोजिनो मन्दा अन्ये वै विघसाशिनः ।

॥ ऋषय ऊचुः ॥ इदं श्रेयः परमिति वयमेवाभ्युपास्महे । शकुने ब्रूहि यच्छ्रेयो भृशं वै श्रद्दधामहे ।

॥ शकुनिरुवाच ॥ यदि मां नाभिशङ्कध्वं विभज्यात्मानमात्मना । ततोऽहं वः प्रवक्ष्यामि याथातथ्यं हितं वचः ।

॥ ऋषय ऊचुः ॥ शृणुमस्ते वचस्तात पन्थानो विदितास्तव । नियोगे चैव धर्म्मात्मन् स्थातुमिच्छाम शाधि नः ।

॥ शकुनिरुवाच ॥ चतुष्पदां गौः प्रवरा लोहानां काञ्चनं वरं । शब्दानां प्रवरो मन्त्रो ब्राह्मणो द्विपदां वरः । २१५

मन्त्रोऽयं जातकर्म्मादिर्ब्राह्मणस्य विधीयते । जीवतोऽपि यथाकालं श्मशाननिधनादिभिः ।

कर्म्माणि वैदिकान्यस्य स्वर्ग्यः पन्थास्त्वनुत्तमः । अथ सर्व्वाणि कर्म्माणि मन्त्रसिद्धानि चक्षिरे ।

आम्नाये दृढवादीति तथा सिद्धिरिहेष्यते । मासार्द्धमासा ऋतव आदित्यशशितारकं ।

ईहन्ते सर्व्वभूतानि तदृतं कर्म्मसङ्गिनां । सिद्धिक्षेत्रमिदं पुण्यमयमेवाश्रमो महान् ।

अथ ये कर्म्म निन्दन्तो मनुष्याः कापथं गताः । मूढानामर्थहीनानां तेषामेनस्तु विद्यते । २२०

देववंशान् पितृवंशान् ब्रह्मवंशांश्च शाश्वतान् । सन्त्यज्य मूढा वर्त्तन्ते ततो यान्त्यश्रुतीपथं ।

एतद्वोऽस्तु तपो युक्तं ददामीत्यृषिचोदितं । तस्मात्तदध्यवस्थानं तपस्वितप उच्यते ।

देववंशान् ब्रह्मवंशान् पितृवंशांश्च शाश्वतान् । संविभज्य गुरोश्चर्य्यां तद्वै दुष्करमुच्यते ।

देवा वै दुष्करं कृत्वा विभूतिं परमां गताः । तस्माद्गार्हस्थ्यमुद्वोढुं दुष्करं प्रब्रवीमि वः ।

तपः श्रेष्ठं प्रजानां वै मूलमेतन्न संशयः । कुटुम्बविधिनाऽनेन यस्मिन् सर्व्वं प्रतिष्ठितं । २२५

एतद्विदुस्तपो विप्रा द्वन्द्वातीता विमत्सराः । तस्माद्व्रतं मध्यमन्तु लोकेषु तप उच्यते ।

दुराधर्षपदञ्चैव गच्छन्ति विघसाशिनः । सायम्प्रातर्व्विभज्यान्नं स्वकुटुम्बे यथाविधि ।

दत्त्वाऽतिथिभ्यो देवेभ्यः पितृभ्यः स्वजनस्य च । अवशिष्टानि येऽश्नन्ति तानाहुर्व्विघसाशिनः ।

तस्मात्स्वधर्म्ममास्थाय सुव्रताः सत्यवादिनः । लोकस्य गुरवो भूत्वा ते भवन्त्यनुपस्कृताः ।

त्रिदिवं प्राप्य शक्रस्य स्वर्गलोके विमत्सराः । वसन्ति शाश्वतान् वर्षान् जना दुष्करकारिणः । २३०

॥ अर्ज्जुन उवाच ॥ ततस्ते तद्वचः श्रुत्वा धर्म्मार्थसहितं हितं । उत्सृज्य नास्तीति गता गार्हस्थ्यं समुपाश्रिताः ।

तस्मात्त्वमपि धर्म्मज्ञ स्थैर्य्यमालम्ब्य शाश्वतं । प्रशाधि पृथिवीं कृत्स्नां हतामित्रां नराधिप ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि ऋषिशकुनिसंवादकथने एकादशोऽध्यायः ॥ ११ ॥

॥ वैशम्पायन उवाच ॥ अर्ज्जुनस्य वचः श्रुत्वा नकुलो वाक्यमब्रवीत् । राजानमभिसम्प्रेक्ष्य सर्व्वधर्म्मभृतां वरः ।

अनुरुध्य महाप्राज्ञो भ्रातुश्चित्तमरिन्दमः । व्यूढोरस्को महाबाहुस्ताम्रास्यो मितभाषिता ।

॥ नकुल उवाच ॥ विशाखयूपे देवानां सर्व्वेषामग्नयश्चिताः । तस्माद्विद्धि महाराज देवाः कर्म्मफले स्थिताः । २३५

अनास्तिकानां भूतानां प्राणदाः पितरश्च ये । तेऽपि कर्म्मैव कुर्व्वन्ति विधिं सम्प्रेक्ष्य पार्थिव ।

वेदवादापविद्धांश्च तान्विद्धि भृशनास्तिकान् । न हि वेदोक्तमुत्सृज्य विप्रः सर्व्वेषु कर्म्मसु ।
वेदयानेन नाकस्य पृष्ठमाप्नोति भारत । अत्याश्रमानयं सर्व्वानित्याहुर्व्वेदनिश्चयाः ।
ब्राह्मणाः श्रुतिसम्पन्नास्तान्निबोध जनाधिप । वित्तानि धर्म्मलब्धानि क्रतुमुख्येष्ववासृजन् ।
कृतात्मा स महाराज स वै त्यागी स्मृतो नरः । अनवेक्ष्य सुखादानं तथैवोर्द्ध्वं प्रतिष्ठितः । ३३०
आत्मत्यागी महाराज स त्यागी तामसः प्रभो । अनिकेतः परिपतन् वृक्षमूलाश्रयो मुनिः ।
अयाचकः सदा योगी स त्यागी पार्थ भिक्षुकः । क्रोधहर्षावनादृत्य पैशुन्यं च विशेषतः ।
विप्रो वेदानधीते यः स त्यागी पार्थ भिक्षुकः । आश्रमांस्तुलया सर्व्वान् धृतानाहुर्म्मनीषिणः ।
एकतश्च त्रयो राजन् गृहस्थाश्रम एकतः । समीक्ष्य तुलया पार्थ कामं स्वर्गञ्च भारत ।
अयं पन्था महर्षीणामियं लोकविदां गतिः । इति यः कुरुते भावं स त्यागी भरतर्षभ । ३३५
न यः परित्यज्य गृहान् वनमेति विमूढवत् । यदा कामान् समीक्षेत धर्म्मवैतंसिको नरः ।
अथैनं मृत्युपाशेन कण्ठे बध्नाति मृत्युराट् । अभिमानकृतं कर्म्म नैतत् फलवदुच्यते ।
त्यागयुक्तं महाराज सर्व्वमेव महाफलं । शमो दमस्तथा धैर्य्यं सत्यं शौचमथार्ज्जवं ।
यज्ञो धृतिश्च धर्म्मश्च नित्यमार्षो विधिः स्मृतः । पितृदेवातिथिकृते समारम्भोऽत्र शस्यते ।
अत्रैव हि महाराज त्रिवर्गः केवलं फलं । एतस्मिन्वर्त्तमानस्य विधावप्रतिषेधिते । ३४०
त्यागिनः प्रसृतस्येह नोच्छित्तिर्व्विद्यते क्वचित् । असृजद्वै प्रजा राजन् प्रजापतिरकल्मषः ।
मां यक्ष्यन्तीति धर्म्मात्मा यज्ञैर्व्विविधदक्षिणैः । वीरुधश्चैव वृक्षांश्च यज्ञार्थं वै तथौषधीः ।
पशूंश्चैव तथामेध्यान्यज्ञार्थानि हवींषि च । गृहस्थाश्रमिणस्तच्च यज्ञकर्म्म विरोधकं ।
तस्माद्गार्हस्थ्यमेवेह दुष्करं दुर्लभं तथा । तत्सम्प्राप्य गृहस्था ये पशुधान्यधनान्विताः ।
न यजन्ते महाराज शाश्वतं तेषु किल्बिषं । स्वाध्याययज्ञा ऋषयो ज्ञानयज्ञास्तथाऽपरे । ३४५
अथाऽपरे महायज्ञान् मनसैव वितन्वते । एवं मनःसमाधानं मार्गमातिष्ठतो नृप ।
द्विजातेर्ब्रह्मभूतस्य स्पृहयन्ति दिवौकसः । स रत्नानि विचित्राणि संहृतानि ततस्ततः ।
मखेष्वनभिसन्त्यज्य नास्तिक्यमभिजल्पसि । कुटुम्बमास्थिते त्यागं न पश्यामि नराधिप ।
राजसूयाश्वमेधेषु सर्व्वमेधेषु वा पुनः । ये चान्ये क्रतवस्तात ब्राह्मणैरभिपूजिताः ।
तैर्यजस्व महीपाल शक्रो देवपतिर्यथा । राज्ञः प्रमाददोषेण दस्युभिः परिमुष्यतां । ३५०
अशरण्यः प्रजानां यः स राजा कलिरुच्यते । अश्वान् गाश्चैव दासीश्च करेणूश्च स्वलङ्कृताः ।
ग्रामान् जनपदांश्चैव क्षेत्राणि च गृहाणि च । अप्रदाय द्विजातिभ्यो मात्सर्य्याविष्टचेतसः ।
वयं ते राजकलयो भविष्याम विशाम्पते । अदातारोऽशरण्याश्च राजकिल्बिषभागिनः ।
दोषाणामेव भोक्तारो न सुखानां कदाचन । अनिष्ट्वा च महायज्ञैरकृत्वा च पितृस्वधां ।
तीर्थेष्वनभिसंप्लुत्य प्रव्रजिष्यसि चेत्प्रभो । छिन्नाभ्रमिव गन्ताऽसि विलयं मारुतेरितं । ३५५
लोकयोरुभयोर्भ्रष्टो ह्यन्तराले व्यवस्थितः । अन्तर्ब्बहिश्च यत्किञ्चिन्मनोव्यासङ्गकारकं ।

परित्यज्य भवेत्त्यागी न हित्वा प्रतितिष्ठति। एतस्मिन्वर्त्तमानस्य विधावप्रतिषेधिते।

शाश्वतस्य महाराज नोच्छित्तिर्व्विद्यते क्वचित्।

निहत्य शत्रूंस्तरसा समृद्धान् शक्रो यथा दैत्यबलानि संख्ये। कः पार्थ शोचेन्निरतः स्वधर्म्मे पूर्व्वैः स्मृते पार्थिवशिष्टजुष्टे।

क्षात्रेण धर्म्मेण पराक्रमेण जित्वा महीं मन्त्रविद्भ्यः प्रदाय। नाकस्य पृष्ठेऽसि नरेन्द्र गन्ता न शोचितव्यं भवताऽद्य पार्थ। १७०

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि नकुलवाक्ये द्वादशोऽध्यायः॥ १२॥

॥ सहदेव उवाच॥ न वाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत। शारीरं द्रव्यमुत्सृज्य सिद्धिर्भवति वा न वा।

वाह्यद्रव्यविमुक्तस्य शारीरेष्वनुगृध्यतः। यो धर्म्मो यत्सुखं वा स्याद्द्विषतां तत्तथाऽस्तु नः।

शारीरं द्रव्यमुत्सृज्य पृथिवीमनुशासतः। यो धर्म्मो यत्सुखं वा स्यात्सुहृदां तत्तथाऽस्तु नः।

द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतं। ममेति च भवेन्मृत्युर्न ममेति च शाश्वतं।

ब्रह्ममृत्यू ततो राजन्नात्मन्येव समाश्रितौ। अदृश्यमानौ भूतानि योधयेतामसंशयं। १७५

अविनाशोऽस्य सत्त्वस्य नियतो यदि भारत। हत्वा शरीरं भूतानां न हिंसा प्रतिपत्स्यते।

अथाऽपि च सहोत्पत्तिः सत्त्वस्य प्रलयस्तथा। नष्टे शरीरे नष्टं स्याद्वृथा च स्यात् क्रियापथः।

तस्मादेकान्तमुत्सृज्य पूर्व्वैः पूर्व्वतरैश्च यः। पन्था निषेवितः सद्भिः स निषेव्यो विजानता।

लब्ध्वाऽपि पृथिवीं कृत्स्नां सहस्थावरजङ्गमां। न भुङ्क्ते यो नृपः सम्यङ्निष्फलं तस्य जीवितं।

अथ वा वसतो राजन्वने वन्येन जीवतः। द्रव्येषु यस्य ममता मृत्योरास्ये स वर्त्तते। १८०

वाह्यान्तरश्च भूतानां स्वभावं पश्य भारत। ये तु पश्यन्ति तद्भूतं मुच्यन्ते ते महाभयात्।

भवान् पिता भवान्माता भवान्भ्राता भवान् गुरुः। दुःखप्रलापानार्त्तस्य तस्मे त्वं क्षन्तुमर्हसि।

तथ्यं वा यदि वाऽतथ्यं यन्मयैतत्प्रभाषितं। तद्विद्धि पृथिवीपाल भक्त्या भरतसत्तम।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि सहदेववाक्ये त्रयोदशोऽध्यायः॥ १३॥

॥ वैशम्पायन उवाच॥ अव्याहरति कौन्तेये धर्म्मराजे युधिष्ठिरे। भ्रातॄणां ब्रुवतां तांस्तान्विविधान्वेदनिश्चयान्।

महाभिजनसम्पन्ना श्रीमत्यायतलोचना। अभ्यभाषत राजेन्द्र द्रौपदी योषितांवरा। १८५

आसीनमृषभं राज्ञां भ्रातृभिः परिवारितं। सिंहशार्दूलसदृशैर्व्वारणैरिव यूथपं।

अभिमानवती नित्यं विशेषेण युधिष्ठिरे। लालिता सततं राज्ञा धर्म्मज्ञा धर्म्मदर्शिनी।

आमन्त्र्य विपुलश्रोणी साम्ना परमवल्गुना। भर्त्तारमभिसम्प्रेक्ष्य ततो वचनमब्रवीत्।

॥ द्रौपद्युवाच॥ इमे ते भ्रातरः पार्थ शुष्यन्ते स्तोकका इव। राराश्यमानास्तिष्ठन्ति न चैतानभिनन्दसे।

नन्दयैतान्महाराज मत्तानिव महाद्विपान्। उपपन्नेन वाक्येन सततं दुःखभागिनः। १९०

कथं द्वैतवने राजन्पूर्व्वमुक्त्वा तथा वचः। भ्रातॄनेतान् स्म सहितान् शीतवातातपार्द्दितान्।

वयं दुर्य्योधनं हत्वा मृधे भोक्ष्याम मेदिनीं। सम्पूर्णां सर्व्वकामानामाहवे विजयैषिणः।

विरथांश्च रथान् कृत्वा निहत्य च महागजान्। संस्तीर्य्य च रथैर्भूमिंससादिभिररिन्दमाः।

यजतां विविधैर्य्यज्ञैः समृद्धैराप्तदक्षिणैः। वनवासकृतं दुःखं भविष्यति सुखाय वः।

इत्येतानेवमुक्त्वा त्वं स्वयं धर्मभृतां वर। अद्यास्मान् पुनर्वीर निर्भिनत्सि मनांसि नः॥ ३९५

न क्लीबो वसुधां भुङ्क्ते न क्लीबो धनमश्नुते। न क्लीबस्य गृहे पुत्रा मत्स्याः पङ्क इवासते॥

नादण्डः क्षत्रियो भाति नादण्डो भूमिमश्नुते। नादण्डस्य प्रजा राज्ञः सुखं विन्दन्ति भारत॥

मित्रता सर्व्वभूतेषु दानमध्ययनं तपः। ब्राह्मणस्यैष धर्म्मः स्यान्न राज्ञो राजसत्तम॥

असतां प्रतिषेधश्च सतां च परिपालनम्। एष राज्ञां परो धर्म्मः समरे चापलायनम्॥

यस्मिन् क्षमा च क्रोधश्च दानादाने भयाभये। निग्रहानुग्रहौ चोभौ स वै धर्म्मविदुच्यते॥ ४००

न श्रुतेन न दानेन न सान्त्वेन न चेज्यया। त्वयेयं पृथिवी लब्धा न सङ्कोचेन चाप्युत॥

यत्तद्बलममित्राणां तथा वीर समुद्यतम्। हस्त्यश्वरथसम्पन्नं त्रिभिरङ्गैरनुत्तमम्॥

रक्षितं द्रोणकर्णाभ्यामश्वत्थाम्ना कृपेण च। तत्त्वया निहतं वीर तस्माद्भुङ्क्ष्व वसुन्धराम्॥

जम्बूद्वीपो महाराज नानाजनपदायुतः। त्वया पुरुषशार्दूल दण्डेन मृदितः प्रभो॥

जम्बूद्वीपेन सदृशः क्रौञ्चद्वीपो नराधिप। अपरेण महामेरोर्दण्डेन मृदितस्त्वया॥ ४०५

क्रौञ्चद्वीपेन सदृशः शाकद्वीपो नराधिप। पूर्व्वेण च महामेरोर्दण्डेन मृदितस्त्वया॥

उत्तरेण महामेरोः शाकद्वीपेन सम्मितः। भद्राश्वः पुरुषव्याघ्र दण्डेन मृदितस्त्वया॥

द्वीपाश्च सान्तरद्वीपा नानाजनपदालयाः। विगाह्य सागरं वीर दण्डेन मृदितास्त्वया॥

एतान्यप्रतिमेयानि कृत्वा कर्म्माणि भारत। न प्रीयसे महाराज पूज्यमानो द्विजातिभिः॥

स त्वं भ्रातॄनिमान्दृष्ट्वा प्रतिनन्दस्व भारत। ऋषभानिव सम्मत्तान् गजेन्द्रानूर्जितानिव॥ ४१०

अमरप्रतिमाः सर्व्वे शत्रुसाहाः परन्तपाः। एकोऽपि हि सुखायैषां मम स्यादिति मे मतिः॥

किं पुनः पुरुषव्याघ्र पतयो मे नरर्षभाः। समस्तानीन्द्रियाणीव शरीरस्य विचेष्टने॥

अनृतं माब्रवीच्छ्वश्रूः सर्व्वज्ञा सर्व्वदर्शिनी। युधिष्ठिरस्त्वां पाञ्चालि सुखे धास्यत्यनुत्तमे॥

हत्वा राजसहस्राणि बहून्याशुपराक्रमः। तद्व्यर्थं सम्प्रपश्यामि मोहात्तव जनाधिप॥

येषामुन्मत्तको ज्येष्ठः सर्व्वे तेऽप्यनुसारिणः। तवोन्मादान्महाराज सोन्मादाः सर्व्वपाण्डवाः॥ ४१५

यदि हि स्युरनुन्मत्ता भ्रातरस्ते नराधिप। बद्ध्वा त्वां नास्तिकैः सार्द्धं प्रशासेयुर्वसुन्धराम्॥

कुरुते मूढ एवं हि यः श्रेयो नाधिगच्छति। धूपैरञ्जनयोगैश्च नस्यकर्म्मभिरेव च॥

भेषजैः स चिकित्स्यः स्याद्य उन्मार्गेण गच्छति। साहं सर्व्वाधमा लोके स्त्रीणां भरतसत्तम॥

तथा विनिकृता पुत्रैर्याहमिच्छामि जीवितुम्। एतेषां यतमानानां न मेऽद्य वचनं मृषा॥

त्वं तु सर्व्वां महीं त्यक्त्वा कुरुषे स्वयमापदम्। यथास्तां सम्मतौ राज्ञां पृथिव्यां राजसत्तमौ॥ ४२०

मान्धाता चाम्बरीषश्च तथा राजन्विराजसे। प्रशाधि पृथिवीं देवीं प्रजा धर्म्मेण पालयन्॥

सपर्व्वतवनद्वीपां मा राजन्विमना भव। यजस्व विविधैर्यज्ञैर्युध्यस्वारीन् प्रयच्छ च।

धनानि भोगान्वासांसि द्विजातिभ्यो नृपोत्तम॥

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि द्रौपदीवाक्ये चतुर्द्दशोऽध्यायः॥ १४ ॥

|| वैशम्पायन उवाच || याज्ञसेन्या वचः श्रुत्वा पुनरेवार्जुनोऽब्रवीत् । अनुमान्य महाबाहुं ज्येष्ठं भ्रातरमच्युतं ।
|| अर्जुन उवाच || दण्डः शास्ति प्रजाः सर्व्वा दण्ड एवाभिरक्षति । दण्डः सुप्तेषु जागर्त्ति दण्डं धर्म्मं विदुर्बुधाः । ४२५
धर्म्मं संरक्षते दण्डस्तथैवार्थं जनाधिप । कामं संरक्षते दण्डस्त्रिवर्गो दण्ड उच्यते ।
दण्डेन रक्ष्यते धान्यं धनं दण्डेन रक्ष्यते । एवं विद्वन्नुपादत्स्व भावं पश्यस्व लौकिकं ।
राजदण्डभयादेके पापाः पापं न कुर्व्वते । यमदण्डभयादेके परलोकभयादपि ।
परस्परभयादेके पापाः पापं न कुर्व्वते । एवं सांसिद्धिके लोके सर्व्वं दण्डे प्रतिष्ठितं ।
दण्डस्यैव भयादेके न खादन्ति परस्परं । अन्धे तमसि मज्जेयुर्यदि दण्डो न पालयेत् । ४३०
यस्माददान्तान्दमयत्यशिष्टान्दण्डयत्यपि । दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ।
वाचा दण्डो ब्राह्मणानां क्षत्रियाणां भुजार्पणं । दानदण्डाः स्मृता वैश्या निर्द्दण्डः शूद्र उच्यते ।
असंमोहाय मर्त्यानामर्थसंरक्षणाय च । मर्य्यादा स्थापिता लोके दण्डसंज्ञा विशाम्पते ।
यत्र श्यामो लोहिताक्षो दण्डश्चरति सूद्यतः । प्रजास्तत्र न मुह्यन्ति नेता चेत् साधु पश्यति ।
ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः । दण्डस्यैव भयादेते मनुष्या वर्त्मनि स्थिताः । ४३५
नाभीतो यजते राजन् नाभीतो दातुमिच्छति । नाभीतः पुरुषः कश्चित् समये स्थातुमिच्छति ।
नाच्छित्त्वा परमर्म्माणि नाकृत्वा कर्म्म दुष्करं । नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियं ।
नाघ्नतः कीर्त्तिरस्तीह न वित्तं न पुनः प्रजाः । इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत ।
य एव देवा हन्तारस्तान् लोकोऽर्च्चयते भृशं । हन्ता रुद्रस्तथा स्कन्दः शक्रोऽग्निर्वरुणो यमः ।
हन्ता कालस्तथा वायुर्मृत्युर्वैश्रवणो रविः । वसवो मरुतः साध्या विश्वेदेवाश्च भारत । ४४०
एतान्देवान्नमस्यन्ति प्रतापप्रणता जनाः । न ब्रह्माणं न धातारं न पूषाणं कथञ्चन ।
मध्यस्थान्सर्व्वभूतेषु दान्तान् शमपरायणान् । यजन्ते मानवाः केचित्प्रशान्ताः सर्व्वकर्म्मसु ।
न हि पश्यामि जीवन्तं लोके कञ्चिदहिंसया । सत्त्वैः सत्त्वा हि जीवन्ति दुर्ब्बलैर्ब्बलवत्तराः ।
नकुलो मूषिकानत्ति बिडालो नकुलं तथा । बिडालमत्ति श्वा राजन् श्वानं व्यालमृगस्तथा ।
तानत्ति पुरुषः सर्व्वान्पश्य धर्म्मो यथागतः । प्राणस्यान्नमिदं सर्व्वं जङ्गमं स्थावरञ्च यत् । ४४५
विधानं देवविहितं तत्र विद्वान्न मुह्यति । यथा सृष्टोऽसि राजेन्द्र तथा भवितुमर्हसि ।
विनीतक्रोधहर्षा हि मन्दा वनमुपाश्रिताः । विना वधं न कुर्व्वन्ति तापसाः प्राणयापनं ।
उदके बहवः प्राणाः पृथिव्यां च फलेषु च । न च कश्चिन्न तान्हन्ति किमन्यत्प्राणयापनात् ।
सूक्ष्मयोनीनि भूतानि तर्कगम्यानि कानिचित् । पक्ष्मणोऽपि निपातेन येषां स्यात् स्कन्धपर्य्ययः ।
ग्रामान्निष्क्रम्य मुनयो विगतक्रोधमत्सराः । वने कुटुम्बधर्म्माणो दृश्यन्ते परिमोहिताः । ४५०
भूमिं भित्त्वौषधीश्छित्त्वा वृक्षादीनण्डजान्पशून् । मनुष्यास्तन्वते यज्ञांस्ते स्वर्गं प्राप्नुवन्ति च ।
दण्डनीत्यां प्रणीतायां सर्व्वे सिध्यन्त्युपक्रमाः । कौन्तेय सर्व्वभूतानां तत्र मे नास्ति संशयः ।
दण्डश्चेन्न भवेल्लोके विनश्येयुरिमाः प्रजाः । जले मत्स्यानिवाभक्ष्यन्दुर्ब्बलान् बलवत्तराः ।

सत्यं चेदं ब्रह्मणा पूर्व्वमुक्तं दण्डः प्रजा रक्षति साधुनीतः । पश्यांश्चाग्नश्च प्रतिशाम्य भीताः सन्तर्जिता दण्डभयाज्ज्वलन्ति ।

अन्धन्तम इवेदं स्यान्न प्राज्ञायेत किञ्चन । दण्डश्चेन्न भवेल्लोके विभजन् साध्वसाधुनी । ४५५

येऽपि सम्भिन्नमर्य्यादा नास्तिका वेदनिन्दकाः । तेऽपि भोगाय कल्पन्ते दण्डेनाशु निपीडिताः ।

सर्व्वो दण्डजितो लोके दुर्लभो हि शुचिर्न्नरः । दण्डस्य हि भयाद्भीतो भोगायैव प्रवर्त्तते ।

चातुर्व्वर्ण्यप्रमोदाय सुनीतनयनाय च । दण्डो विधात्रा विहितो धर्म्मार्थावभिरक्षितुं ।

यदि दण्डान्न बिभ्येयुर्व्वयांसि श्वापदानि च । अद्युः पशून्मनुष्यांश्च यज्ञार्थानि हवींषि च ।

न ब्रह्म चाप्यधीयीत कल्याणी न दुहेत गां । न कन्योद्वहनं गच्छेद्यदि दण्डो न पालयेत् । ४६०

विश्वलोपः प्रवर्त्तेत भिद्येरन् सर्व्वसेतवः । ममत्वं न प्रजानीयुर्यदि दण्डो न पालयेत् ।

न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः । विधिवद्दक्षिणावन्ति यदि दण्डो न पालयेत् ।

चरेयुर्नाश्रमे धर्म्मं यथोक्तं विधिमाश्रिताः । न विद्यां प्राप्नुयात् कश्चित् यदि दण्डो न पालयेत् ।

न चोष्ट्रा न बलीवर्द्दा नाश्वाश्वतरगर्द्दभाः । युक्ता वहेयुर्यानानि यदि दण्डो न पालयेत् ।

न प्रेष्या वचनं कुर्य्युर्न्न बाला जातु कर्हिचित् । तिष्ठेत्पितृमती धर्म्मे यदि दण्डो न पालयेत् । ४६५

दण्डे स्थिताः प्रजाः सर्व्वा दण्डे सर्व्वं विदुर्ब्बुधाः । दण्डे स्वर्गो मनुष्याणां लोकोऽयञ्च प्रतिष्ठितः ।

न तत्र कूटं पापं वा वञ्चना वाऽपि दृश्यते । यत्र दण्डः सुविहितश्चरत्यरिविनाशनः ।

हविः श्वाऽपि लिहेद्दृष्ट्वा दण्डश्चेन्नोद्यतो भवेत् । हरेत्काकः पुरोडाशं यदि दण्डो न पालयेत् ।

यदिदं धर्म्मतो राज्यं विहितं यद्यधर्म्मतः । कार्य्यस्तत्र न शोको वै भुंक्ष्व भोगान् यजस्व च ।

सुखेन धर्म्मं श्रीमन्तश्चरन्ति शुचिवाससः । संवसन्तः प्रियैर्द्दारैर्भुञ्जानाश्चान्नमुत्तमं । ४७०

अर्थे सर्व्वे समारम्भाः समायत्ता न संशयः । स च दण्डे समायत्तः पश्य दण्डस्य गौरवं ।

लोकयात्रार्थमेवेह धर्म्मप्रवचनं कृतं । अहिंसा साधुहिंसेति श्रेयान् धर्म्मपरिग्रहः ।

नात्यन्तं गुणवत्किञ्चिन्न चाप्यत्यन्तनिर्गुणं । उभयं सर्व्वकार्य्येषु दृश्यते साध्वसाधु च ।

पशूनां वृषणं छित्त्वा ततो भिन्दन्ति मस्तकं । वहन्ति बहवो भारान् बध्नन्ति दमयन्ति च ।

एवं पर्य्याकुले लोके वितथे जर्ज्जरीकृते । तैस्तैर्न्यायैर्म्महाराज पुराणं धर्म्ममाचर । ४७५

यज देहि प्रजा रक्ष धर्म्मं समनुपालय । अमित्राञ्जहि कौन्तेय मित्राणि परिपालय ।

मा च ते निघ्नतः शत्रून् मन्युर्भवतु पार्थिव । न तत्र किल्बिषं किञ्चित्कर्त्तुर्भवति भारत ।

आततायी हि यो हन्यादाततायिनमागतं । न तेन भ्रूणहा स स्यान्मन्युस्तन्मन्युमृच्छति ।

अवध्यः सर्व्वभूतानामन्तरात्मा न संशयः । अवध्ये चात्मनि कथं वध्यो भवति कस्यचित् ।

यथा हि पुरुषः शालां पुनः सम्प्रविशेन्नवां । एवं जीवः शरीराणि तानि तानि प्रपद्यते । ४८०

देहान्पुराणानुत्सृज्य नवान्सम्प्रतिपद्यते । एवं मृत्युमुखान्याहुर्जना ये तत्त्वदर्शिनः ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि अर्ज्जुनवाक्ये पञ्चदशोऽध्यायः ॥ १५ ॥

॥ वैशम्पायन उवाच ॥ अर्ज्जुनस्य वचः श्रुत्वा भीमसेनोऽत्यमर्षणः । धैर्य्यमास्थाय तेजस्वी ज्येष्ठं भ्रातरमब्रवीत् ।
राजन्विदितधर्म्मोऽसि न तेऽस्त्यविदितं क्वचित् । उपशिक्षाम ते वृत्तं सदैव न च शक्नुमः ।
न वक्ष्यामि न वक्ष्यामीत्येवं मनसि मे स्थितं । अतिदुःखात्तु वक्ष्यामि तन्निबोध जनाधिप ।
भवतः सम्प्रमोहेन सर्व्वं संशयितं कृतं । विक्लवत्वं च नः प्राप्तमबलत्वं तथैव च । ४८५
कथं हि राजा लोकस्य सर्व्वशास्त्रविशारदः । मोहमापद्यसे दैन्याद्यथा कापुरुषस्तथा ।
आगतिश्च गतिश्चैव लोकस्य विदिता तव । आयत्यां च तदात्वे च न तेऽस्त्यविदितं प्रभो ।
एवं गते महाराज राज्यं प्रति जनाधिप । हेतुमत्र प्रवक्ष्यामि तमिहैकमनाः शृणु ।
द्विविधो जायते व्याधिः शारीरो मानसस्तथा । परस्परं तयोर्जन्म निर्द्वन्द्वं नोपलभ्यते ।
शारीराज्जायते व्याधिर्म्मानसो नात्र संशयः । मानसाज्जायते चापि शारीर इति निश्चयः । ४९०
शारीरं मानसं दुःखं योऽतीतमनुशोचति । दुःखेन लभते दुःखं द्वावनर्थौ च विन्दति ।
शीतोष्णे चैव वायुश्च त्रयः शारीरजा गुणाः । तेषां गुणानां साम्यं यत्तदाहुः स्वस्थलक्षणं ।
तेषामन्यतमोद्रेके विधानमुपदिश्यते । उष्णेन बाध्यते शीतं शीतेनोष्णं प्रबाध्यते ।
सत्वं रजस्तम इति मानसाः स्युस्त्रयो गुणाः । तेषां गुणानां साम्यं यत्तदाहुः स्वस्थलक्षणं ।
तेषामन्यतमोत्सेके विधानमुपदिश्यते । हर्षेण बाध्यते शोको हर्षः शोकेन बाध्यते । ४९५
कश्चित्सुखे वर्त्तमानो दुःखस्य स्मर्त्तुमिच्छति । कश्चिद्दुःखे वर्त्तमानः सुखस्य स्मर्त्तुमिच्छति ।
स त्वं न दुःखी दुःखस्य न सुखी च सुखस्य वा । न दुःखी सुखजातस्य न सुखी दुःखजस्य वा ।
स्मर्त्तुमर्हसि कौरव्य दिष्टं हि बलवत्तरं । अथवा ते स्वभावोऽयं येन पार्थिव क्लिश्यसे ।
दृष्ट्वा सभागतां कृष्णामेकवस्त्रां रजस्वलां । मिषतां पाण्डुपुत्त्राणां न तस्य स्मर्त्तुमर्हसि ।
प्रव्राजनं च नगरादजिनैश्च विवासनं । महारण्यनिवासश्च न तस्य स्मर्त्तुमर्हसि । ५००
जटासुरात्परिक्लेशं चित्रसेनेन चाहवं । सैन्धवाच्च परिक्लेशं कथं विस्मृतवानसि ।
पुनरज्ञातचर्य्यायां कीचकेन पदा वधं । द्रौपद्या राजपुत्त्र्याश्च कथं विस्मृतवानसि ।
यच्च ते द्रोणभीष्माभ्यां युद्धमासीदरिन्दम । मनसैकेन योद्धव्यं तत्ते युद्धमुपस्थितं ।
यत्र नास्ति शरैः कार्य्यं न मित्रैर्न च बन्धुभिः । आत्मनैकेन योद्धव्यं तत्ते युद्धमुपस्थितं ।
तस्मिन्ननिर्ज्जिते युद्धे प्राणान्यदि विमोक्ष्यसे । अन्यं देहं समास्थाय ततस्तैरपि योत्स्यसे । ५०५
तस्मादद्यैव गन्तव्यं युध्यस्व भरतर्षभ । परमव्यक्तरूपस्य व्यक्तं त्यक्त्वा स्वकर्म्मभिः ।
तस्मिन्ननिर्ज्जिते युद्धे कामवस्थां गमिष्यसि । एतज्जित्वा महाराज कृतकृत्यो भविष्यसि ।
एतां बुद्धिं विनिश्चित्य भूतानामागतिं गतिं । पितृपैतामहे वृत्ते शाधि राज्यं यथोचितं ।
दिष्ट्या दुर्य्योधनः पापो निहतः सानुगो युधि । द्रौपद्याः केशपाशस्य दिष्ट्या त्वं पदवीं गतः ।
यजस्व वाजिमेधेन विधिवद्दक्षिणावता । वयं ते किङ्कराः पार्थ वासुदेवश्च वीर्य्यवान् । ५१०
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि भीमसेनवाक्ये षोडशोऽध्यायः ॥ १६ ॥

॥ युधिष्ठिर उवाच ॥ असन्तोषः प्रमादश्च मदो रागोऽप्रशान्तता । बलं मोहोऽभिमानश्चाप्युद्वेगश्चैव सर्व्वशः ।
एभिः पाप्मभिराविष्टो राज्यं त्वमभिकाङ्क्षसे । निरामिषो विनिर्म्मुक्तः प्रशान्तः सुसुखी भव ।
य इमामखिलां भूमिं शिष्यादेको महीपतिः । तस्याप्युदरमेकं वै किमिदं त्वं प्रशंससि ।
नाह्ना पूरयितुं शक्यां न मासैर्भरतर्षभ । अपूर्य्यां पूरयन्निच्छामायुषाऽपि न शक्नुयात् ।
यथेद्धः प्रज्वलत्यग्निरसमिद्धः प्रशाम्यति । अल्पाहारतया त्वग्निं शमयौदर्य्यमुत्थितं । ५१५
आत्मोदरकृते प्राज्ञः करोति विघसं बहु । जयोदरं पृथिव्या ते श्रेयो निर्जितया जितं ।
मानुषान् कामभोगांस्त्वमैश्वर्य्यञ्च प्रशंससि । अभोगिनोऽबलाश्चैव यान्ति स्थानमनुत्तमं ।
योगक्षेमश्च राष्ट्रस्य धर्म्माधर्म्मौ त्वयि स्थितौ । मुच्यस्व महतो भारात्त्यागमेवाभिसंश्रय ।
एकोदरकृते व्याघ्रः करोति विघसं बहु । तमन्येऽप्युपजीवन्ति मन्दा लोभवशा मृगाः ।
विषयान् प्रतिसंहृत्य संन्यासं कुर्व्वते यदि । न च तुष्यन्ति राजानः पश्य बुद्ध्यन्तरं यथा । ५२०
पत्राहारैरश्मकुट्टैर्दन्तोलूखलिकैस्तथा । अब्भक्षैर्वायुभक्षैश्च तैरयं नरको जितः ।
यश्चेमां वसुधां कृत्स्नां प्रशासेदखिलां नृपः । तुल्याश्मकाञ्चनो यश्च स कृतार्थो न पार्थिवः ।
सङ्कल्पेषु निरारम्भो निराशो निर्म्ममो भव । अशोकं स्थानमातिष्ठ इह चामुत्र चाव्ययं ।
निरामिषा न शोचन्ति शोचसि त्वं किमामिषं । परित्यज्यामिषं सर्व्वं मृषावादात् प्रमोक्ष्यसे ।
पन्थानौ पितृयानश्च देवयानश्च विश्रुतौ । ईजानाः पितृयानेन देवयानेन मोक्षिणः । ५२५
तपसा ब्रह्मचर्य्येण स्वाध्यायेन महर्षयः । विमुच्य देहांस्ते यान्ति मृत्योरविषयं गताः ।
आमिषं बन्धनं लोके कर्म्मेहोक्तं तथामिषं । ताभ्यां विमुक्तः पापाभ्यां पदमाप्नोति तत्परं ।
अपि गाथां पुरा गीतां जनकेन वदन्त्युत । निर्द्वन्द्वेन विमुक्तेन मोक्षं समनुपश्यता ।
अनन्तं बत मे वित्तं यस्य मे नास्ति किञ्चन । मिथिलायां प्रदीप्तायां न मे दह्यति किञ्चन ।
प्रज्ञाप्रासादमारुह्य न शोच्यान् शोचतो जनान् । जगतीस्थानिवाद्रिस्थो मन्दबुद्धीनवेक्षते । ५३०
दृश्यं पश्यति यः पश्यन् स चक्षुष्मान् स बुद्धिमान् । अज्ञातानाञ्च विज्ञानात् सम्बोधाद्बुद्धिरुच्यते ।
यस्तु वाचं विजानाति बहुमानमियात् स वै । ब्रह्मभावप्रपन्नानां वैद्यानां भावितात्मनां ।
यदा भूतपृथग्भावमेकस्थमनुपश्यति । तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ।
ते जनास्तां गतिं यान्ति नाविद्वांसोऽल्पचेतसः । नाबुद्धयो नातपसः सर्व्वं बुद्धौ प्रतिष्ठितं ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि युधिष्ठिरवाक्ये सप्तदशोऽध्यायः ॥ १७ ॥
॥ वैशम्पायन उवाच ॥ तूष्णींभूतं तु राजानं पुनरेवार्जुनोऽब्रवीत् । सन्तप्तः शोकदुःखाभ्यां राज्ञो वाक्शल्यपीडितः । ५३५
॥ अर्ज्जुन उवाच ॥ कथयन्ति पुरावृत्तमितिहासमिमं जनाः । विदेहराजः संवादं भार्य्यया सह भारत ।
उत्सृज्य राज्यं भैक्ष्यार्थं कृतबुद्धिं नरेश्वरं । विदेहराजमहिषी दुःखिता यदभाषत ।
धनान्यपत्यं दारांश्च रत्नानि विविधानि च । पन्थानं पावकं हित्वा जनको मौण्ड्यमास्थितः ।
तं ददर्श प्रिया भार्य्या भैक्ष्यवृत्तिमकिञ्चनं । धानामुष्टिमुपासीनं निरीहं गतमत्सरं ।

तमुवाच समागम्य भर्त्तारमकुतोभयं। क्रुद्धा मनस्विनी भार्य्या विविक्ते हेतुमद्वचः। ५४०
कथमुत्सृज्य राज्यं स्वं धनधान्यसमन्वितं। कापालीं वृत्तिमास्थाय धानामुष्टिर्न ते वरः।
प्रतिज्ञा तेऽन्यथा राजन्विचेष्टा चान्यथा तव। यद्राज्यं महदुत्सृज्य स्वल्पे लुभ्यसि पार्थिव।
नैते नातिथयो राजन् देवर्षिपितरस्तथा। अद्य शक्यास्त्वया भर्त्तुं मोघस्तेऽयं परिश्रमः।
देवतातिथिभिश्चैव पितृभिश्चैव पार्थिव। सर्व्वैरेतैः परित्यक्तः परिव्रजसि निष्क्रियः।
यस्त्वं त्रैविद्यवृद्धानां ब्राह्मणानां सहस्रशः। भर्त्ता भूत्वा च लोकस्य सोऽद्य तैर्भृतिमिच्छसि। ५४५
श्रियं हित्वा प्रदीप्तां त्वं श्ववत्सम्प्रतिवीक्ष्यसे। अपुत्रा जननी तेऽद्य कौशल्या चापतिस्त्वया।
अमी च धर्म्मकामास्त्वां क्षत्रियाः पर्य्युपासते। त्वदाशामभिकाङ्क्षन्तः कृपणाः फलहेतुकाः।
तांश्च त्वं विफलान् कुर्व्वन् कं नु लोकं गमिष्यसि। राजन् संशयिते मोक्षे परतन्त्रेषु देहिषु।
नैव तेऽस्ति परो लोको नापरः पापकर्म्मणः। धर्म्म्यान् दारान्परित्यज्य यस्त्वमिच्छसि जीवितुं।
स्रजो गन्धानलङ्कारान्वासांसि विविधानि च। किमर्थमभिसन्त्यज्य परिव्रजसि निष्क्रियः। ५५०
निपानं सर्व्वभूतानां भूत्वा त्वं पावनं महत्। आढ्यो वनस्पतिर्भूत्वा सोऽन्यांस्त्वं पर्य्युपाससे।
खादन्ति हस्तिनं न्यायैः क्रव्यादा बहवोऽप्युत। बहवः क्रिमयश्चैव किं पुनस्त्वामनर्थकं।
य इमां कुण्डिकां भिन्द्यात्त्रिविष्टब्धञ्च यो हरेत्। वासश्चापहरेत्तस्मिन् कथं ते मानसं भवेत्।
यस्त्वयं सर्व्वमुत्सृज्य धानामुष्टेरनुग्रहः। यदाऽनेन समं सर्व्वं किमिदं त्ववसीयते।
धानामुष्टिरिहार्थश्चेत्प्रतिज्ञा ते विनश्यति। का चाहं तव को मे त्वं कश्च ते मय्यनुग्रहः। ५५५
प्रशाधि पृथिवीं राजन्यदि तेऽनुग्रहो भवेत्। प्रासादं शयनं यानं वासांस्याभरणानि च।
श्रिया विहीनैरधनैस्त्यक्तमित्रैरकिञ्चनैः। सौखिकैः सम्भृतानर्थान् यः सन्त्यजति किन्नु तत्।
योऽत्यन्तं प्रतिगृह्णीयाद्यश्च दद्यात्सदैव हि। तयोस्त्वमन्तरं विद्धि श्रेयांस्ताभ्यां क उच्यते।
सदैव याचमानेषु तथा दम्भान्वितेषु च। एतेषु दक्षिणा दत्ता दावाग्नाविव दुर्हुतं।
जातवेदा यथा राजन्नादग्ध्वैवोपशाम्यति। सदैव याचमानो हि तथा शाम्यति वै द्विजः। ५६०
सतां वै ददतोऽन्नञ्च लोकेऽस्मिन् प्रकृतिर्ध्रुवा। न चेद्राजा भवेद्दाता कुतः स्युर्मोक्षकाङ्क्षिणः।
अन्नाद्गृहस्था लोकेऽस्मिन् भिक्षवस्तत एव च। अन्नात्प्राणः प्रभवति अन्नदः प्राणदो भवेत्।
गृहस्थेभ्यो विनिर्मुक्ता गृहस्थानेव संश्रिताः। प्रभवञ्च प्रतिष्ठाञ्च दान्ता विन्दन्त आसते।
त्यागान्न भिक्षुकं विद्यान्न मौण्ड्यान्न च याचनात्। ऋजुस्तु योऽर्थं त्यजति न सुखं विद्धि भिक्षुकं।
असक्तः सक्तवद्गच्छन्निःसङ्गो मुक्तबन्धनः। समः शत्रौ च मित्रे च स वै मुक्तो महीपते। ५६५
परिव्रजन्ति दानार्थं मुण्डाः काषायवाससः। सिता बहुविधैः पाशैः सञ्चिन्वन्तो वृथामिषं।
त्रयीञ्च नाम वार्त्ताञ्च त्यक्त्वा पुत्रान् व्रजन्ति ये। त्रिविष्टब्धञ्च वासश्च प्रतिगृह्णन्त्यबुद्धयः।
अनिष्कषाये काषायमीहार्थमिति विद्धि तं। धर्म्मध्वजानां मुण्डानां वृत्त्यर्थमिति मे मतिः।
काषायैरजिनैश्चीरैर्नग्नान्मुण्डान् जटाधरान्। बिभ्रत् साधून् महाराज जय लोकान् जितेन्द्रियः।

हित्वा छित्त्वा च भित्त्वा च केचिदेकान्तशीलिनः। एतत्सर्व्वं समालोक्य बुधानामेष निश्चयः।
अद्रोहेणैव भूतानां यो धर्म्मः स सतां मतः। अद्रोहः सत्यवचनं संविभागो दया दमः। ६२५
प्रजनं स्वेषु दारेषु मार्द्दवं ह्रीरचापलं। एवं धर्म्मं प्रधानेष्टं मनुः स्वायम्भुवोऽब्रवीत्।
तस्मादेतत्प्रयत्नेन कौन्तेय परिपालय। यो हि राज्ये स्थितः शश्वद्वशी तुल्यप्रियाप्रियः।
क्षत्रियो यज्ञशिष्टाशी राजशास्त्रार्थतत्त्ववित्। असाधुनिग्रहरतः साधूनां प्रग्रहे रतः।
धर्म्मवर्त्मनि संस्थाप्य प्रजा वर्त्तेत धर्म्मतः। पुत्रसंक्रामितश्रीश्च वने वन्येन वर्त्तयन्।
विधिना श्रावणेनैव कुर्य्यात्कर्म्माण्यतन्द्रितः। य एवं वर्त्तते राजा राजधर्म्मविनिश्चितः। ६३०
तस्यायञ्च परश्चैव लोकः स्यात्सफलोदयः। निर्व्वाणं हि सुदुष्प्रापं बहुविघ्नञ्च मे मतं।
एवं धर्म्ममनुक्रान्ताः सत्यदानतपःपराः। आनृशंस्यगुणैर्युक्ताः कामक्रोधविवर्ज्जिताः।
प्रजानां पालने युक्ता धर्म्ममुत्तममास्थिताः। गोब्राह्मणार्थे युध्यन्तः प्राप्ता गतिमनुत्तमां।
एवं रुद्राः सवसवस्तथादित्याः परन्तप। साध्या राजर्षिसङ्घाश्च धर्म्ममेतं समाश्रिताः।
अप्रमत्तास्ततः स्वर्गं प्राप्ताः पुण्यैः स्वकर्म्मभिः। ६३५
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि देवस्थानवाक्ये एकविंशोऽध्यायः॥ २१ ॥
॥ वैशम्पायन उवाच ॥ अस्मिन्नेवान्तरे वाक्यं पुनरेवार्ज्जुनोऽब्रवीत्। निर्व्विण्णमनसं ज्येष्ठमिदं भ्रातरमच्युतं।
क्षत्रधर्म्मेण धर्म्मज्ञ प्राप्य राज्यं सुदुर्लभं। जित्वा चारीन्नरश्रेष्ठ तप्यते किं भृशं भवान्।
क्षत्रियाणां महाराज संग्रामे निधनं मतं। विशिष्टं बहुभिर्यज्ञैः क्षत्रधर्म्मविधिः स्मृतः।
ब्राह्मणानां तपस्त्यागः प्रेत्य धर्म्मविधिः स्मृतः। क्षत्रियाणाञ्च निधनं संग्रामे विहितं प्रभो।
क्षात्रधर्म्मो महारौद्रः शस्त्रनित्य इति स्मृतः। वधश्च भरतश्रेष्ठ काले शस्त्रेण संयुगे। ६४०
ब्राह्मणस्यापि चेद्राजन् क्षत्रधर्म्मेण वर्त्ततः। प्रशस्तं जीवितं लोके क्षत्रं हि ब्रह्मसम्भवं।
न त्यागो न पुनर्यज्ञो न तपो मनुजेश्वर। क्षत्रियस्य विधीयन्ते न परस्वोपजीवनं।
स भवान् सर्व्वधर्म्मज्ञो धर्म्मात्मा भरतर्षभ। राजा मनीषी निपुणो लोके दृष्टपरापरः।
त्यक्त्वा सन्तापजं शोकं दंशितो भव कर्म्मणि। क्षत्रियस्य विशेषेण हृदयं वज्रसन्निभ।
जित्वाऽरीन् क्षत्रधर्म्मेण प्राप्य राज्यमकण्टकं। विजितात्मा मनुष्येन्द्र यज्ञदानपरो भव। ६४५
इन्द्रो वै ब्रह्मणः पुत्त्रः क्षत्रियः कर्म्मणाऽभवत्। ज्ञातीनां पापवृत्तानां जघान नवतीर्नव।
तच्चास्य कर्म्म पूज्यञ्च प्रशस्यञ्च विशाम्पते। तेनेन्द्रत्वं समापेदे देवानामिति नः श्रुतं।
स त्वं यज्ञैर्महाराज यजस्व बहुदक्षिणैः। यथैवेन्द्रो मनुष्येन्द्र चिराय विगतज्वरः।
मा त्वमेवं गते किञ्चिच्छोचेथाः क्षत्रियर्षभ। गतास्ते क्षत्रधर्म्मेण शस्त्रपूताः परां गतिं।
भवितव्यं तथा तच्च यद्वृत्तं भरतर्षभ। दिष्टं हि राजशार्दूल न शक्यमतिवर्त्तितुं। ६५०
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि अर्ज्जुनवाक्ये द्वाविंशोऽध्यायः॥ २२ ॥
॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु कौन्तेयो गुडाकेशेन पाण्डवः। नोवाच किञ्चित्कौरव्यस्ततो द्वैपायनोऽब्रवीत्।

॥ व्यास उवाच ॥ बीभत्सोर्वचनं सौम्य सत्यमेतद्युधिष्ठिर। शास्त्रदृष्टः परो धर्म्मः स्थितो गार्हस्थ्यमाश्रितः।
स्वधर्म्मं चर धर्म्मज्ञ यथाशास्त्रं यथाविधि। न हि गार्हस्थ्यमुत्सृज्य तवारण्यं विधीयते।
गृहस्थं हि सदा देवाः पितरोऽतिथयस्तथा। भृत्याश्चैवोपजीवन्ति तान् भरस्व महीपते।
वयांसि पशवश्चैव भूतानि च जनाधिप। गृहस्थैरेव धार्य्यन्ते तस्माच्छ्रेष्ठो गृहाश्रमी। ६५५
सोऽयं चतुर्णामेतेषामाश्रमाणां दुराचरः। तं चराद्य विधिं पार्थ दुश्चरं दुर्ब्बलेन्द्रियैः।
वेदज्ञानञ्च ते कृत्स्नं तपश्चाचरितं महत्। पितृपैतामहं राज्यं धुर्य्यवद्वोढुमर्हसि।
तपो यज्ञः क्षमा विद्या भैक्षमिन्द्रियसंयमः। ध्यानमेकान्तशीलत्वं तुष्टिर्ज्ञानञ्च शक्तितः।
ब्राह्मणानां महाराज चेष्टा संसिद्धिकारिका। क्षत्त्रियाणान्तु वक्ष्यामि तवापि विदितं पुनः।
यज्ञो विद्या समुत्थानमसन्तोषः श्रियं प्रति। दण्डधारणमुग्रत्वं प्रजानां परिपालनं। ६६०
वेदज्ञानं तथा कृत्स्नं तपः सुचरितं तथा। द्रविणोपार्ज्जनं भूरि पात्रे च प्रतिपादनं।
एतानि राज्ञां कर्म्माणि सुकृतानि विशाम्पते। इमं लोकममुञ्चैव साधयन्तीति नः श्रुतं।
एषां ज्यायस्तु कौन्तेय दण्डधारणमुच्यते। बलं हि क्षत्त्रिये नित्यं बले दण्डः समाहितः।
एताश्चेष्टाः क्षत्त्रियाणां राजन् संसिद्धिकारिकाः। अपि गाथामिमाञ्चैव बृहस्पतिरगायत।
भूमिरेतौ निगिरति सर्प्पो विलशयानि च। राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनं। ६६५
सुद्युम्नश्चापि राजर्षिः श्रूयते दण्डधारणात्। प्राप्तवान्परमां सिद्धिं दक्षः प्राचेतसो यथा।
॥ युधिष्ठिर उवाच ॥ भगवन् कर्म्मणा केन सुद्युम्नो वसुधाधिपः। संसिद्धिं परमां प्राप्तः श्रोतुमिच्छामि तं नृपं।
॥ व्यास उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। शङ्खश्च लिखितश्चास्तां भ्रातरौ संशितव्रतौ।
तयोरावसथावास्तां रमणीयौ पृथक् पृथक्। नित्यं पुष्पफलैर्वृक्षैरुपेतौ बाहुदामनु।
ततः कदाचिल्लिखितः शङ्खस्याश्रममागतः। यदृच्छयाऽथ शङ्खोऽपि निष्क्रान्तोऽभवदाश्रमात्। ६७०
सोऽभिगम्याश्रमं भ्रातुः शङ्खस्य लिखितस्तदा। फलानि पातयामास सम्यक् परिणतान्युत।
अभ्युपादाय विस्रब्धो भक्षयामास स द्विजः। तस्मिंश्च भक्षयत्येव शङ्खोऽप्याश्रममागतः।
भक्षयन्तन्तु तं दृष्ट्वा शङ्खो भ्रातरमब्रवीत्। कुतः फलान्यवाप्तानि हेतुना केन खादसि।
सोऽब्रवीद्भ्रातरं ज्येष्ठमुपस्पृत्याभिवाद्य च। इत एव गृहीतानि मयेति प्रहसन्निव।
तमब्रवीत्तथा शङ्खस्तीव्ररोषसमन्वितः। स्तेयं त्वया कृतमिदं फलान्याददता स्वयं। ६७५
गच्छ राजानमासाद्य स्वकर्म्म कथयस्व वै। अदत्तादानमेवं हि कृतं पार्थिवसत्तम।
स्तेनं मां त्वं विदित्वा च स्वधर्म्ममनुपालयन्। शीघ्रं धारय चौरस्य मम दण्डं नराधिप।
इत्युक्तस्तस्य वचनात्सुद्युम्नं स नराधिपं। अभ्यगच्छन्महाभागो लिखितः संशितव्रतः।
सुद्युम्नस्त्वन्तपालेभ्यः श्रुत्वा लिखितमागतं। अभ्यगच्छत्सहामात्यः पद्भ्यामेव जनेश्वरः।
तमब्रवीत्समागम्य स राजा धर्म्मवित्तमं। किमागमनमाचक्ष्व भगवन् कृतमेव तत्। ६८०
एवमुक्तः स विप्रर्षिः सुद्युम्नमिदमब्रवीत्। प्रतिश्रुत्य करिष्येति श्रुत्वा तत्कर्त्तुमर्हसि।

अनिसृष्टानि गुरुणा फलानि मनुजर्षभ । भक्षितानि महाराज तत्र मां शाधि मा चिरं ।
॥ सुद्युम्न उवाच ॥ प्रमाणं चेन्मतो राजा भवतो दण्डधारणे । अनुज्ञायामपि तथा हेतुः स्याद्ब्राह्मणर्षभ ।
स भवानभ्यनुज्ञातः शुचिकर्म्मा महाव्रतः । ब्रूहि कामानतोऽन्यांस्त्वं करिष्यामि हि ते वचः ।
॥ व्यास उवाच ॥ सच्छन्द्यमानो ब्रह्मर्षिः पार्थिवेन महात्मना । नान्यं स वरयामास तस्माद्दण्डादृते वरं । १८५
ततः स पृथिवीपालो लिखितस्य महात्मनः । करौ प्रच्छेदयामास धृतदण्डो जगाम सः ।
स गत्वा भ्रातरं शङ्खमार्त्तरूपोऽब्रवीदिदं । धृतदण्डस्य दुर्बुद्धेर्भवांस्तत्क्षन्तुमर्हसि ।
॥ शङ्ख उवाच ॥ न कुप्ये तव धर्म्मज्ञ न त्वं दूषयसे मम । धर्म्मस्तु ते व्यतिक्रान्तस्ततस्ते निष्कृतिः कृता ।
स गत्वा बाहुदां शीघ्रं तर्प्पयस्व यथाविधि । देवानृषीन् पितॄंश्चैव मा चाधर्म्मे मनः कृथाः ।
तस्य तद्वचनं श्रुत्वा शङ्खस्य लिखितस्तदा । अवगाह्यापगां पुण्यामुदकार्थं प्रचक्रमे । १९०
प्रादुरास्तां ततस्तस्य करौ जलजसन्निभौ । ततः स विस्मितो भ्रातुर्दर्शयामास तौ करौ ।
ततस्तमब्रवीच्छङ्खस्तपसेदं कृतं मया । मा च तत्र विशङ्काऽभूद्दैवमत्र विधीयते ।
॥ लिखित उवाच ॥ किं नु नाहं त्वया पूतः पूर्व्वमेव महाद्युते । यस्य ते तपसो वीर्य्यमीदृशं द्विजसत्तम ।
॥ शङ्ख उवाच ॥ एवमेतन्मया कार्य्यं नाहं दण्डधरस्तव । स च पूतो नरपतिस्त्वञ्चापि पितृभिस्सह ।
॥ व्यास उवाच ॥ स राजा पाण्डवश्रेष्ठ श्रेयानेतेन कर्म्मणा । प्राप्तवान्परमां सिद्धिं दक्षः प्राचेतसो यथा । १९५
एष धर्म्मः क्षत्रियाणां प्रजानां परिपालनं । उत्पथोऽन्यो महाराज मा स्म शोके मनः कृथाः ।
भ्रातुरस्य हितं वाक्यं शृणु धर्म्मज्ञ सत्तमं । दण्ड एव हि राजेन्द्र क्षत्रधर्म्मो न मुण्डनं ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि व्यासवाक्ये त्रयोविंशोऽध्यायः ॥ २३ ॥
॥ वैशम्पायन उवाच ॥ पुनरेव महर्षिस्तं कृष्णद्वैपायनो मुनिः । अजातशत्रुं कौन्तेयमिदं वचनमब्रवीत् ।
अरण्ये वसतां तात भ्रातॄणां ते मनस्विनां । मनोरथा महाराज ये तत्रासन् युधिष्ठिर ।
तानिमे भरतश्रेष्ठ प्राप्नुवन्तु महारथाः । प्रशाधि पृथिवीं पार्थ ययातिरिव नाहुषः । ७००
अरण्ये दुःखवसतिरनुभूता तपस्विभिः । दुःखस्यान्ते नरव्याघ्र सुखान्यनुभवन्तु वै ।
धर्म्ममर्थञ्च कामञ्च भ्रातृभिः सह भारत । अनुभूय ततः पश्चात्प्रस्थाताऽसि विशाम्पते ।
अर्थिनाञ्च पितॄणाञ्च देवतानाञ्च भारत । आनृण्यं गच्छ कौन्तेय तत्सर्व्वञ्च करिष्यसि ।
सर्व्वमेधाश्वमेधाभ्यां यजस्व कुरुनन्दन । ततः पश्चान्महाराज गमिष्यसि परां गतिं ।
भ्रातॄंश्च सर्व्वान् क्रतुभिः संयोज्य बहुदक्षिणैः । सम्प्राप्तः कीर्त्तिमतुलां पाण्डवेय भविष्यसि । ७०५
विद्मते पुरुषव्याघ्र वचनं कुरुसत्तम । शृणुष्वैवं यथा कुर्व्वन्न धर्म्माच्च्यवसे नृप ।
आददानस्य विजयं विग्रहञ्च युधिष्ठिर । समानधर्म्मकुशलाः स्थापयन्ति नरेश्वरं ।
देशकालप्रतीक्षी यो दस्यून्मर्षयते नृप । शास्त्रजां बुद्धिमास्थाय युज्यते नैनसा हि सः ।
आदाय बलिषड्भागं यो राष्ट्रं नाभिरक्षति । प्रतिगृह्णाति तत्पापं चतुर्थांशेन भूमिपः ।
निबोध च यथा तिष्ठन् धर्म्मान्न च्यवते नृपः । निग्रहात् धर्म्मशास्त्राणामनुरुध्यन्नपेतभीः । ७१०

कामक्रोधावनादृत्य पितेव समदर्शनः । शास्त्रजां बुद्धिमास्थाय युज्यते नैनसा हि सः ।
दैवेनाभ्याहतो राजा कर्म्मकाले महाद्युते । न साधयति यत्कर्म्म न तत्राऽऽस्त्यतिक्रमं ।
तरसा बुद्धिपूर्व्वं वा निग्राह्या एव शत्रवः । पापैः सह न सन्दध्याद्राष्ट्रं पण्यञ्च कारयेत् ।
शूराश्चार्य्याश्च सत्कार्य्या विद्वांसश्च युधिष्ठिर । गोमिनो धनिनश्चैव परिपाल्या विशेषतः ।
व्यवहारेषु धर्म्मेषु योक्तव्याश्च बहुश्रुताः । गुणयुक्तेऽपि नैकस्मिन्विश्वसेत विचक्षणः । ०१५
अरक्षिता दुर्व्विनीतो मानी स्तब्धोऽभ्यसूयकः । एनसा युज्यते राजा दुर्दान्त इति चोच्यते ।
येऽरक्ष्यमाणा हीयन्ते दैवेनाभ्याहता नृप । तस्करैश्चापि हन्यन्ते सर्व्वं तद्राजकिल्बिषं ।
सुमन्त्रितं सुनीतञ्च सर्व्वतश्चोपपादिते । पौरुषे कर्म्मणि कृते नास्त्यधर्म्मो युधिष्ठिर ।
विच्छिद्यन्ते समारम्भाः सिध्यन्ते चापि दैवतः । कृते पुरुषकारे तु नैनः स्पृशति पार्थिवं ।
अत्र ते राजशार्दूल वर्त्तयिष्ये कथामिमां । यद्वृत्तं पूर्व्वराजर्षेर्हयग्रीवस्य पाण्डव । ०१०
शत्रून् हत्वा हतस्याजौ शूरस्याक्लिष्टकर्म्मणः । असहायस्य सङ्ग्रामे निर्जितस्य युधिष्ठिर ।
यत्कर्म्म वै निग्रहे शात्रवाणां योगश्चाग्र्यः पालने मानवानां । कृत्वा कर्म्म प्राप्य कीर्त्तिं स युद्धाद्वाजिग्रीवो मोदते स्वर्गलोके ।
सन्यस्तात्मा समरेष्वाततायी शस्त्रैश्छिन्नो दस्युभिर्व्वध्यमानः । अश्वग्रीवः कर्म्मशीलो महात्मा संसिद्धार्थो मोदते स्वर्गलोके ।
धनुर्य्यूपो रशना ज्या शरः स्रुक् स्रुवः खड्गो रुधिरं यत्र चाज्यं । रथो वेदी कामगो युद्धमग्निश्चातुर्होत्रं चतुरो वाजिमुख्याः ।
हुत्वा तस्मिन्यज्ञवह्नावथारीन्पापान्मुक्तो राजसिंहस्तरस्वी । प्राणान् हुत्वा चावभृथे रणे स वाजिग्रीवो मोदते देवलोके । ०१५
राष्ट्रं रक्षन्बुद्धिपूर्व्वं नयेन सन्यस्तात्मा यज्ञशीलो महात्मा । सर्व्वांल्लोकान्व्याप्य कीर्त्त्या मनस्वी वाजिग्रीवो मोदते देवलोके ।
दैवीं सिद्धिं मानुषीं दण्डनीतिं योगन्यासैः पालयित्वा महीञ्च । तस्माद्राजा धर्म्मशीलो महात्मा वाजिग्रीवो मोदते देवलोके ।
विद्वांस्त्यागी श्रद्दधानः कृतज्ञस्त्यक्त्वा लोकं मानुषं कर्म्म कृत्वा । मेधाविनां विदुषां सम्मतानां तनुत्यजां लोकमाक्रम्य राजा ।
सम्यग्वेदान् प्राप्य शास्त्राण्यधीत्य सम्यग्राज्यं पालयित्वा महात्मा । चातुर्व्वर्ण्यं स्थापयित्वा स्वधर्म्मे वाजिग्रीवो मोदते देवलोके ।
जित्वा सङ्ग्रामान्पालयित्वा प्रजाश्च सोमं पीत्वा तर्पयित्वा द्विजाग्र्यान् । युक्त्या दण्डं धारयित्वा प्रजानां युद्धे क्षीणो मोदते देवलोके । ०१०
वृत्तं यस्य श्लाघनीयं मनुष्याः सन्तो विद्वांसश्चार्हयन्त्यर्हणीयं । स्वर्गं जित्वा वीरलोकानवाप्य सिद्धिं प्राप्तः पुण्यकीर्त्तिर्महात्मा ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि व्यासवाक्ये चतुर्व्विंशोऽध्यायः ॥ २४ ॥

॥ वैशम्पायन उवाच ॥ द्वैपायनवचः श्रुत्वा कुपिते च धनञ्जये । व्यासमामन्त्र्य कौन्तेयः प्रत्युवाच युधिष्ठिरः ।

॥ युधिष्ठिर उवाच ॥ न पार्थिवमिदं राज्यं न भोगाश्च पृथग्विधाः । प्रीणयन्ति मनो मेऽद्य शोको मां रुन्धयत्ययं ।

श्रुत्वा वीरविहीनानामपुत्राणाञ्च योषितां । परिदेवयमानानां शान्तिं नोपलभे मुने ।

इत्युक्तः प्रत्युवाचेदं व्यासो योगविदाम्वरः । युधिष्ठिरं महाप्राज्ञो धर्म्मज्ञो वेदपारगः । ७३५

॥ व्यास उवाच ॥ न कर्म्मणा लभ्यते चेज्यया वा नाप्यस्ति दाता पुरुषस्य कश्चित् । पर्य्याययोगाद्विहितं विधात्रा कालेन सर्व्वं लभते मनुष्यः ।

न बुद्धिशास्त्राध्ययनेन शक्यं प्राप्तुं विशेषं मनुजैरकाले । मूर्खोऽपि चाप्नोति कदाचिदर्थान् कालो हि कार्य्यं प्रति निर्व्विशेषः ।

नाभूतिकालेषु फलं ददन्ति शिल्पानि मन्त्राश्च तथौषधानि । तान्येव कालेन समाहितानि सिद्ध्यन्ति वर्द्धन्ति च भूतिकाले ।

कालेन शीघ्राः प्रवहन्ति वाताः कालेन वृष्टिर्जलदानुपैति । कालेन पद्मोत्पलवज्जलञ्च कालेन पुष्यन्ति नगा वनेषु ।

कालेन कृष्णाश्च सिताश्च रात्र्यः कालेन चन्द्रः प्रतिपूर्णविम्बः । नाकालतः पुष्पफलं द्रुमाणां नाकालवेगाः सरितो वहन्ति । ७४०

नाकालमत्ताः खगपन्नगाश्च मृगद्विपाः शैलमृगाश्च लोके । नाकालतः स्त्रीषु भवन्ति गर्भा नायान्त्यकाले शिशिरोष्णवर्षाः ।

नाकालतो म्रियते जायते वा नाकालतो व्याहरते च बालः । ना कालतो यौवनमभ्युपैति नाकालतो रोहति वीजमुप्तं ।

नाकालतो भानुरुपैति योगं नाकालतोऽस्तं गिरिमभ्युपैति । नाकालतो हीयते वर्द्धते च चन्द्रः समुद्रोऽपि महोर्म्मिमाली ।

अत्राप्युदाहरन्तीममितिहासं पुरातनं । गीतं राज्ञा सेनजिता दुःखार्त्तेन युधिष्ठिर ।

सर्व्वानेवैष पर्य्यायो मर्त्त्यान् स्पृशति दुःसहः । कालेन परिपक्वा हि म्रियन्ते सर्व्वपार्थिवाः । ७४५

घ्नन्ति चान्यान्नरान् राजंस्तानप्यन्ये तथा नराः । संज्ञैषा लौकिकी राजन्न हिनस्ति न हन्यते ।

हन्तीति मन्यते कश्चिन्न हन्तीत्यपि चापरः । स्वभावतस्तु नियतौ भूतानां प्रभवाप्ययौ ।

नष्टे धने वा दारे वा पुत्रे पितरि वा मृते । अहो दुःखमिति ध्यायन् दुःखस्यापचितिं चरेत् ।

स किं शोचसि मूढस्सन् शोच्यान् किमनुशोचति । पश्य दुःखेषु दुःखानि भयेषु च भयान्यपि ।

आत्माऽपि चायं न मम सर्व्वा वा पृथिवी मम । यथा मम तथाऽन्येषामिति पश्यन्न मुह्यति । ७५०

शोकस्थानसहस्राणि हर्षस्थानशतानि च । दिवसे दिवसे मूढमाविशन्ति न पण्डितं ।

एवमेतानि कालेन प्रियद्वेष्याणि भागशः । जीवेषु परिवर्त्तन्ते दुःखानि च सुखानि च ।

दुःखमेवास्ति न सुखं तस्मात्तदुपलभ्यते । तृष्णार्त्तिप्रभवं दुःखं दुःखार्त्तिप्रभवं सुखं ।

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखं । न नित्यं लभ्यते दुःखं न नित्यं लभते सुखं ।

सुखमेवं हि दुःखान्तं कदाचिद्दुःखतः सुखं । तस्मादेतद्द्वयं जह्याच्च इच्छेच्छाश्वतं सुखं । ७५५

यन्निमित्तं भवेच्छोकस्तापो वा दुःखमूर्च्छितः । आयासो वाऽपि यन्मूलस्तदेकाङ्गमपि त्यजेत् ।
सुखं वा यदि वा दुःखं प्रियं वा यदि वाऽप्रियं । प्राप्तं प्राप्तमुपासीत हृदयेनापराजितः ।
ईषदप्यङ्ग दाराणां पुत्त्राणामचरन् प्रियं । ततो ज्ञास्यसि कः कस्य केन वा कथमेव च ।
ये च मूढतमा लोके ये च बुद्धेः परङ्गताः । त एव सुखमेधन्ते मध्यमः क्लिश्यते जनः ।
इत्यब्रवीन्महाप्राज्ञो युधिष्ठिर स सेनजित् । परापरज्ञो लोकस्य धर्म्मवित्सुखदुःखवित् ।  ७९०
परदुःखेन यो दुःखी न स जातु सुखी भवेत् । दुःखानां हि क्षयो नास्ति जायते ह्यपरात्परं ।
सुखञ्च दुःखञ्च भवाभवौ च लाभालाभौ मरणं जीवितञ्च । पर्य्यायतः सर्व्वमवाप्नुवन्ति तस्माद्धीरो नैव हृष्येन्न शोचेत् ।
दीक्षां राज्ञः संयुगे युद्धमाहुर्योगं राज्ये दण्डनीत्याञ्च सम्यक् । वित्तत्यागो दक्षिणानाञ्च यज्ञे सम्यक् ज्ञानं पावनानीति विद्यात् ।
रक्षन् राज्यं बुद्धिपूर्व्वं नयेन सन्त्यक्तात्मा यज्ञशीलो महात्मा । सर्व्वाल्लोकान् धर्म्मदृष्ट्या चरंश्चाप्यूर्द्ध्वं देहान्मोदते देवलोके ।
जित्वा संग्रामान्पालयित्वा च राष्ट्रं सोमं पीत्वा वर्द्धयित्वा प्रजाश्च । युक्त्या दण्डं धारयित्वा प्रजानां युद्धे क्षीणो मोदते देवलोके ।  ७९५
सम्यग्वेदान् प्राप्य शास्त्राण्यधीत्य सम्यग्राज्यं पालयित्वा च राजा । चातुर्व्वर्ण्यं स्थापयित्वा स्वधर्म्मे पूतात्मा वै मोदते देवलोके ।
यस्य वृत्तं नमस्यन्ति स्वर्गस्थस्यापि मानवाः । पौरजानपदामात्याः स राजा राजसत्तमः ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि सेनजिदुपाख्याने पञ्चविंशोऽध्यायः ॥ २५ ॥

॥ वैशम्पायन उवाच ॥ अस्मिन्नेव प्रकरणे धनञ्जयमुदारधीः । अभिनीततरं वाक्यमित्युवाच युधिष्ठिरः ।
यदेतन्मन्यसे पार्थ न ज्यायोऽस्ति धनादिति । न स्वर्गो न सुखं नार्थो निर्द्धनस्येति तन्मृषा ।
स्वाध्याययज्ञसंसिद्धा दृश्यन्ते बहवो जनाः । तपोरताश्च मुनयो येषां लोकाः सनातनाः ।  ८००
ऋषीणां समयं शश्वद्ये रक्षन्ति धनञ्जय । आश्रिताः सर्व्वधर्म्मज्ञा देवास्तान् ब्राह्मणान्विदुः ।
स्वाध्यायनिष्ठान्हि ऋषीन् ज्ञाननिष्ठांस्तथाऽपरान् । बुध्येथाः सततं चापि धर्म्मनिष्ठान्धनञ्जय ।
ज्ञाननिष्ठेषु कार्य्याणि प्रतिष्ठाप्यानि पाण्डव । वैखानसानां वचनं यथा नो विदितं प्रभो ।
अजाश्च पृश्नयश्चैव सिकताश्चैव भारत । अरुणाः केतवश्चैव स्वाध्यायेन दिवङ्गताः ।
अवाप्यैतानि कर्म्माणि वेदोक्तानि धनञ्जय । दानमध्ययनं यज्ञो निग्रहश्चैव दुर्ग्रहः ।  ८०५
दक्षिणेन च पन्थानमर्य्यम्णो ये दिवं गताः । एतान् क्रियावतां लोकानुक्तवान् पूर्व्वमप्यहं ।
उत्तरेण तु पन्थानं नियमाद्यं प्रपश्यसि । एते योगवतांल्लोका भान्ति पार्थ सनातनाः ।
तत्रोत्तरां गतिं पार्थ प्रशंसन्ति पुराविदः । सन्तोषात्स्वर्गमाप्नोति सन्तोषात्परमं सुखं ।
तुष्टेर्न किञ्चित्परमं सा सम्यक् प्रतितिष्ठति । क्रोधहर्षविनीतस्य सततं सिद्धिरुत्तमा ।

अत्राप्युदाहरन्तीमा गाथा गीता ययातिना । याभिः प्रत्याहरेत्कामान् कूर्म्मोऽङ्गानीव सर्व्वशः । ७८०
यदा चायं न बिभेति यदा चास्मान्न बिभ्यति । यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा ।
यदा न भावं कुरुते सर्व्वभूतेषु पापकं । कर्म्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ।
विनीतमानमोहस्य बहुसङ्गविवर्जितः । तदात्मज्योतिषः साधोर्निर्व्वाणमुपपद्यते ।
इदन्तु शृणु मे पार्थ ब्रुवतः संयतेन्द्रियः । धर्म्ममन्ये वृत्तमन्ये धनमीहन्ति चापरे ।
धनहेतोर्य्य ईहेत तस्यानीहा गरीयसी । भूयान्दोषो हि वित्तस्य यश्च धर्म्मस्तदाश्रयः । ७८५
प्रत्यक्षमनुपश्यामि त्वमपि द्रष्टुमर्हसि । वर्ज्जनं वर्ज्जनीयानामीहमानेन दुष्करं ।
ये वित्तमभिपद्यन्ते सम्यक्त्वं तेषु दुर्लभं । द्रुह्यतः प्रैति तत्प्राहुः प्रतिकूलं यथातथं ।
यस्तु सम्भिन्नवृत्तः स्यादीतशोकभयो नरः । अल्पेन तर्षितो द्रुह्यन् भ्रूणहत्यां न बुध्यते ।
दुष्यन्त्याददतो भृत्या नित्यं दस्युभयादिव । दुर्लभं च धनं प्राप्य भृशं दत्त्वाऽनुतप्यते ।
अधनः कस्य किं वाच्यो विमुक्तः सर्व्वशः सुखी । देवस्वमुपगृह्यैव धनेन न सुखी भवेत् । ७९०
तत्र गाथां यज्ञगीतां कीर्त्तयन्ति पुराविदः । त्रयीमपाश्रितां लोके यज्ञसंस्तरकारिकां ।
यज्ञाय सृष्टानि धनानि धात्रा यज्ञाय सृष्टः पुरुषो रक्षिता च । तस्मात्सर्व्वं यज्ञ एवोपयोज्यं धनं न कामाय हितं प्रशस्तं ।
एतत्स्वार्थे च कौन्तेय धनं धनवताम्बर । धाता ददाति मर्त्त्येभ्यो यज्ञार्थमिति विद्धि तत् ।
तस्माद्बुध्यन्ति पुरुषा न हि तत्कस्यचिद् ध्रुवं । श्रद्दधानस्ततो लोके दद्याच्चैव यजेत च ।
लब्धस्य त्यागमेवाहुर्न भोगं न च सञ्चयं । तस्य किं सञ्चयेनार्थः कार्य्ये ज्यायसि तिष्ठति । ७९५
ये स्वधर्म्मादपेतेभ्यः प्रयच्छन्त्यल्पबुद्धयः । शतं वर्षाणि ते प्रेत्य पुरीषं भुञ्जते जनाः ।
अनर्हते यद्ददाति न ददाति यदर्हते । अर्हानर्हापरिज्ञानाद्दानधर्म्मोऽपि दुष्करः ।
लब्धानामपि वित्तानां बोद्धव्यौ द्वावतिक्रमौ । अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनं ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि युधिष्ठिरवाक्ये षड्विंशोऽध्यायः ॥ २६ ॥
॥ युधिष्ठिर उवाच ॥ अभिमन्यौ हते बाले द्रौपद्यास्तनयेषु च । धृष्टद्युम्ने विराटे च द्रुपदे च महीपतौ ।
वसुषेणे च धर्म्मज्ञे धृष्टकेतौ च पार्थिवे । तथाऽन्येषु नरेन्द्रेषु नानादेश्येषु संयुगे । ८००
न च मुञ्चति मां शोको ज्ञातिघातिनमातुरं । राज्यकामुकमत्युग्रं स्ववंशोच्छेदकारिणं ।
यस्याङ्के क्रीडमानेन मया वै परिवर्त्तितं । स मया राज्यलुब्धेन गाङ्गेयो युधि पातितः ।
यदा ह्येनं विघूर्णन्तमपश्यं पार्थसायकैः । कम्पमानं यथा वज्रैः प्रेक्षमाणं शिखण्डिना ।
जीर्णं सिंहमिव प्रांशुं नरसिंहं पितामहं । कीर्य्यमाणं शरैस्तैर्दृष्ट्वा मे व्यथितं मनः ।
प्राङ्मुखं सीदमानञ्च रथे पररथारुजं । घूर्णमानं यथा शैलं तदा मे कश्मलोऽभवत् । ८०५
यः सबाणधनुष्पाणिर्योधयामास भार्गवं । बहून्यहानि कौरव्यः कुरुक्षेत्रे महामृधे ।
समेतं पार्थिवं क्षत्रं वाराणस्यां नदीसुतः । कन्यार्थमाह्वयद्वीरो रथेनैकेन संयुगे ।

येन चोग्रायुधो राजा चक्रवर्त्ती दुरासदः । दग्धश्चास्त्रप्रतापेन स मया युधि घातितः ।
स्वयं मृत्युं रक्षमाणः पाञ्चाल्यं यः शिखण्डिनं । न बाणैः पातयामास सोऽर्ज्जुनेन निपातितः ।
यदैनं पतितं भूमावपश्यं रुधिरोक्षितं । तदैवाविशदत्युग्रो ज्वरो मां मुनिसत्तम । ८१०
येन संवर्द्धिता बाला येन स्म परिरक्षिताः । स मया राज्यलुब्धेन पापेन गुरुघातिना ।
अल्पकालस्य राज्यस्य कृते मूढेन घातितः । आचार्य्यश्च महेष्वासः सर्व्वपार्थिवपूजितः ।
अभिगम्य रणे मिथ्या पापेनोक्तः सुतं प्रति । तन्मे दहति गात्राणि यन्मां गुरुरभाषत ।
सत्यमाख्याहि राजंस्त्वं यदि जीवति मे सुतः । सत्यमामर्षयन्विप्रो मयि तत्परिपृष्टवान् ।
कुञ्जरञ्चान्तरं कृत्वा मिथ्योपचरितं मया । सुभृशं राज्यलुब्धेन पापेन गुरुघातिना । ८१५
सत्यकञ्चुकमुन्मुच्य मया स गुरुराहवे । अश्वत्थामा हत इति मयोक्तः कुञ्जरे हते ।
कांल्लोकांस्तु गमिष्यामि कृत्वा कर्म्म सुदुष्करं । अघातयञ्च यत्कर्णं समरेष्वपलायिनं ।
ज्येष्ठं भ्रातरमत्युग्रं को मत्तः पापकृत्तमः । अभिमन्युञ्च यद्बालं जातं सिंहमिवाद्रिषु ।
प्रावेशयमहं लुब्धो वाहिनीं द्रोणपालितां । तदा प्रभृति बीभत्सुं न शक्नोमि निरीक्षितुं ।
कृष्णञ्च पुण्डरीकाक्षं किल्बिषी भ्रूणहा यथा । द्रौपदीं चापि दुःखार्त्तां पञ्चपुत्रैर्विनाकृतां । ८२०
शोचामि पृथिवीं हीनां पञ्चभिः पर्व्वतैरिव । सोऽहमागस्करः पापः पृथिवीनाशकारकः ।
आसीन एवमेवेदं शोषयिष्ये कलेवरं । प्रायोपविष्टं जानीध्वमथ मां गुरुघातिनं ।
जातिष्वन्यास्वपि यथा न भवेयं कुलान्तकृत् । न भोक्ष्ये न च पानीयमुपभोक्ष्ये कथञ्चन ।
शोषयिष्ये प्रियान् प्राणानिहस्थोऽहं तपोधन । यथेष्टं गम्यतां काममनुजाने प्रसाद्य वः ।
सर्व्वे मामनुजानीत त्यक्ष्यामीदं कलेवरं । ८२५
॥ वैशम्पायन उवाच ॥ तमेवं वादिनं पार्थं बन्धुशोकेन विह्वलं । मैवमित्यब्रवीद्व्यासो निगृह्य मुनिसत्तमः ।
॥ व्यास उवाच ॥ अतिवेलं महाराज न शोकं कर्त्तुमर्हसि । पुनरुक्तन्तु वक्ष्यामि दिष्टमेतदिति प्रभो ।
संयोगा विप्रयोगान्ता जातानां प्राणिनां ध्रुवाः । बुद्बुदा इव तोयेषु भवन्ति न भवन्ति च ।
सर्व्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं हि जीवितं ।
सुखं दुःखान्तमालस्यं दाक्ष्यं दुःखं सुखोदयं । भूतिः श्रीर्ह्रीर्धृतिः कीर्त्तिर्दक्षे वसति नालसे । ८३०
नालं सुखाय सुहृदो नालं दुःखाय शत्रवः । न च प्रज्ञाऽलमर्थेभ्यो न सुखेभ्यो ह्यलन्धनं ।
यथा सृष्टोऽसि कौन्तेय धात्रा कर्म्मसु तत्कुरु । अत एव हि सिद्धिस्ते नेशस्त्वं कर्म्मणां नृप ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि व्यासवाक्ये सप्तविंशोऽध्यायः ॥ २७ ॥
॥ वैशम्पायन उवाच ॥ ज्ञातिशोकाभितप्तस्य प्राणानभ्युत्सिसृक्षतः । ज्येष्ठस्य पाण्डुपुत्रस्य व्यासः शोकमपानुदत् ।
॥ व्यास उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । अश्मगीतं नरव्याघ्र तन्निबोध युधिष्ठिर ।
अश्मानं ब्राह्मणं प्राज्ञं वैदेहो जनको नृप । संशयं परिपप्रच्छ दुःखशोकसमन्वितः । ८३५
॥ जनक उवाच ॥ आगमे यदि वाऽपाये ज्ञातीनां द्रविणस्य च । नरेण प्रतिपत्तव्यं कल्याणं कथमिच्छता ।

॥ अश्मोवाच ॥ उत्पन्नमिममात्मानं नरस्यानन्तरं ततः । तानि तान्यनुवर्त्तन्ते दुःखानि च सुखानि च ।
तेषामन्यतरापत्तौ यद्यदेवोपपद्यते । तदस्य चेतनामाशु हरत्यभ्रमिवानिलः ।
अभिजातोऽस्मि सिद्धोऽस्मि नास्मि केवलमानुषः । इत्येभिर्हेतुभिस्तस्य त्रिभिश्चित्तं प्रसिच्यते ।
सम्प्रसक्तमनाभोगान्विसृज्य पितृसञ्चितान् । परिक्षीणः परस्वानामादानं साधु मन्यते । ८४०
तमतिक्रान्तमर्य्यादमाददानमसाम्प्रतं । प्रतिषेधन्ति राजानो लुब्धा मृगमिवेषुभिः ।
ये च विंशतिवर्षा वा त्रिंशद्वर्षाश्च मानवाः । परेण ते वर्षशताद्भविष्यन्ति पार्थिव ।
तेषां परमदुःखानां बुद्ध्या भैषज्यमाचरेत् । सर्व्वप्राणभृतां वृत्तं प्रेक्षमाणस्ततस्ततः ।
मानसानां पुनर्योनिर्दुःखानां चित्तविभ्रमः । अनिष्टोपनिपातो वा तृतीयं नोपपद्यते ।
एवमेतानि दुःखानि तानि तानीह मानवं । विविधान्युपवर्त्तन्ते तथा संस्पर्शजान्यपि । ८४५
जरामृत्यू हि भूतानां खादितारौ वृकाविव । बलिनां दुर्ब्बलानाञ्च ह्रस्वानां महतामपि ।
न कश्चिज्जात्वतिक्रामेत् जरामृत्यू हि मानवः । अपि सागरपर्य्यन्तां विजित्येमां वसुन्धरां ।
सुखं वा यदि वा दुःखं भूतानां पर्य्युपस्थितं । प्राप्तव्यमवशैः सर्व्वं परिहारो न विद्यते ।
पूर्व्वे वयसि मध्ये वाऽप्युत्तरे वा नराधिप । अवर्ज्जनीयास्तेऽर्था वै काङ्क्षितापि ततोऽन्यथा ।
सुप्रियैर्व्विप्रयोगश्च सम्प्रयोगश्च विप्रियैः । अर्थानर्थौ सुखं दुःखं विधानमनुवर्त्तते । ८५०
प्रादुर्भावश्च भूतानां देहत्यागस्तथैव च । प्राप्तिर्व्यायामयोगश्च सर्व्वमेतत्प्रतिष्ठितं ।
गन्धवर्णरसस्पर्शा निवर्त्तन्ते स्वभावतः । तथैव सुखदुःखानि विधानमनुवर्त्तते ।
आसनं शयनं यानमुत्थानं पानभोजनं । नियतं सर्व्वभूतानां कालेनैव भवत्युत ।
वैद्याश्चाप्यातुराः सन्ति बलवन्तश्च दुर्ब्बलाः । श्रीमन्तश्चापरे षण्ढाः विचित्रः कालपर्य्ययः ।
कुले जन्म तथा वीर्य्यमारोग्यं रूपमेव च । सौभाग्यमुपभोगश्च भवितव्येन लभ्यते । ८५५
सन्ति पुत्राः सुबहवो दरिद्राणामनिच्छतां । नास्ति पुत्रः समृद्धानां विचित्रं विधिचेष्टितं ।
व्याधिरग्निर्ज्जलं शस्त्रं बुभुक्षाश्चापदो विषं । ज्वरश्च मरणं जन्तोरुच्चाच्च पतनं तथा ।
निर्म्माणे यस्य यद्दृष्टं तेन गच्छन्ति सेतुना । दृश्यते नाप्रतिक्रामन्न निष्क्रान्तोऽथ वा पुनः ।
दृश्यते चाप्यतिक्रामन् न निर्याणोऽथ वा पुनः । दृश्यते हि युवैवेह विनश्यन् वसुमान्नरः ।
दरिद्रश्च परिक्लिष्टः शतवर्षो जरान्वितः । अकिञ्चनाश्च दृश्यन्ते पुरुषाश्चिरजीविनः । ८६०
समृद्धे च कुले जाता विनश्यन्ति पतङ्गवत् । प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न्न विद्यते ।
काष्ठान्यपि हि जीर्य्यन्ते दरिद्राणाञ्च सर्व्वशः । अहमेतत्करोमीति मन्यते कालचोदितः ।
यद्यदिष्टमसन्तोषाद्दुरात्मा पापमाचरेत् । मृगयाक्षाः स्त्रियः पानं प्रसङ्गा निन्दिता बुधैः ।
दृश्यन्ते पुरुषाश्चात्र सम्प्रसक्ता बहुश्रुताः । इति कालेन सर्व्वार्थानीप्सितानीप्सितानिह ।
स्पृशन्ति सर्व्वभूतानि निमित्तं नोपलभ्यते । वायुमाकाशमग्निञ्च चन्द्रादित्यावहःक्षपे । ८६५
ज्योतींषि सरितः शैलान् कः करोति बिभर्त्ति च । शीतमुष्णं तथा वर्षं कालेन परिवर्त्तते ।

एवमेव मनुष्याणां सुखदुःखे नरर्षभ। नौषधानि न मन्त्राश्च न होमा न पुनर्ज्जपाः।
त्रायन्ते मृत्युनोपेतं जरया चापि मानवं। यथा काष्ठञ्च काष्ठञ्च समेयातां महोदधौ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः। ये चैव पुरुषाःस्त्रीभिर्गीतवाद्यैरुपस्थिताः।
ये चानाथाः परान्नादाः कालस्तेषु समक्रियः। मातापितृसहस्राणि पुत्त्रदारशतानि च। ८००
संसारेष्वनुभूतानि कस्य ते कस्य वा वयं। नैवास्य कश्चिद्भविता नायं भवति कस्यचित्।
पथि सङ्गतमेवेदं दारबन्धुसुहृज्जनैः। क्वासे क्व च गमिष्यामि को न्वहं किमिह स्थितः।
कस्मात्किमनुशोचेयमित्येवं स्थापयेन्मनः। अनित्ये प्रियसंवासे संसारे चक्रवद्गतौ।
पथि सङ्गतमेवैतद्भ्राता माता पिता सखा। न दृष्टपूर्व्वं प्रत्यक्षं परलोकं विदुर्ब्बुधाः।
आगमांस्त्वनतिक्रम्य श्रद्धातव्यं बुभूषता। कुर्व्वीत पितृदैवत्यं धर्म्म्याणि च समाचरेत्। ८०५
यजेच्च विद्वान्विधिवत्त्रिवर्गं चाप्युपाचरेत्। सन्निमज्जज्जगदिदं गम्भीरे कालसागरे।
जरामृत्युमहाग्राहे न कश्चिदवबुध्यते। आयुर्व्वेदमधीयानाः केवलं सपरिग्रहाः।
दृश्यन्ते बहवो वैद्या व्याधिभिः समभिप्लुताः। ते पिबन्तः कषायांश्च सर्प्पींषि विविधानि च।
न मृत्युमतिवर्त्तन्ते वेलामिव महोदधिः। रसायनविदश्चैव सुप्रयुक्तरसायनाः।
दृश्यन्ते जरया भग्ना नगा नागैरिवोत्तमैः। तथैव तपसोपेताः स्वाध्यायाभ्यसने रताः। ८१०
दातारो यज्ञशीलाश्च न तरन्ति जरान्तकौ। न ह्यहानि निवर्त्तन्ते न मासा न पुनः समाः।
जातानां सर्व्वभूतानां न पक्षा न पुनः क्षपाः। सोऽयं विपुलमध्वानं कालेन ध्रुवमध्रुवः।
नरोऽवशः समभ्येति सर्व्वभूतनिषेवितं। देहो वा जीवतोऽभ्येति जीवो वाऽभ्येति देहतः।
पथि सङ्गतमेवेदं दारैरन्यैश्च बन्धुभिः। नायमत्यन्तसंवासो लभ्यते जातु केनचित्।
अपि स्वेन शरीरेण किमुतान्येन केनचित्। क्व नु तेऽद्य पिता राजन् क्व नु तेऽद्य पितामहाः। ८१५
न त्वं पश्यसि तानद्य न त्वां पश्यन्ति तेऽनघ। न चैव पुरुषो द्रष्टा स्वर्गस्य नरकस्य च।
आगमस्तु सतां चक्षुर्नृपते तमिहाचर। चरितब्रह्मचर्य्यो हि प्रजायेत यजेत च।
पितृदेवमनुष्याणामानृण्यादनसूयकः।
स यज्ञशीलः प्रजने निविष्टः प्राग्ब्रह्मचारी प्रविविक्तचक्षुः। आराधयेत् स्वर्गमिमञ्च लोकं परञ्च मुक्त्वा हृदयव्यलीकं।
समं हि धर्म्मं चरतो नृपस्य द्रव्याणि चाप्याहरतो यथावत्। प्रवृत्तधर्म्मस्य यशोऽभिवर्द्धते सर्व्वेषु लोकेषु चराचरेषु। ८२०
इत्येवमाज्ञाय विदेहराजो वाक्यं समग्रं परिपूर्णहेतु। अश्मानमामन्त्र्य विशुद्धबुद्धिर्ययौ गृहं स्वं प्रतिशान्तशोकः।
तथा त्वमप्यच्युत मुञ्च शोकमुत्तिष्ठ शक्रोपम हर्षमेहि। क्षात्त्रेण धर्म्मेण मही जिता ते तां भुङ्क्ष्व कुन्तीसुत मा ऽवमंस्थाः।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि व्यासवाक्ये अष्टाविंशोऽध्यायः ॥ २८ ॥

॥ वैशम्पायन उवाच ॥ अव्याहरति राजेन्द्रे धर्म्मपुत्त्रे युधिष्ठिरे। गुडाकेशो हृषीकेशमभ्यभाषत पाण्डवः।
॥ अर्ज्जुन उवाच ॥ ज्ञातिशोकाभिसन्तप्तो धर्म्मपुत्त्रः परन्तपः। एष शोकार्णवे मग्नस्तमाश्वासय माधव।
सर्व्वे स्म ते संश्रयिताः पुनरेव जनार्द्दन। अस्य शोकं महाबाहो प्रणाशयितुमर्हसि। ८२५

॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु गोविन्दो विजयेन महात्मना । पर्य्यवर्त्तत राजानं पुण्डरीकेक्षणोऽच्युतः ।
अनतिक्रमणीयो हि धर्म्मराजस्य केशवः । बाल्यात्प्रभृति गोविन्दः प्रीत्या चाभ्यधिकोऽर्जुनात् ।
सम्प्रगृह्य महाबाहुर्भुजं चन्दनभूषितं । शैलस्तम्भोपमं शौरिरुवाचाभिविनोदयन् ।
शुशुभे वदनं तस्य सुदंष्ट्रं चारुलोचनं । व्याकोशमिव विस्पष्टं पद्मं सूर्य्य इवोदिते ।
॥ वासुदेव उवाच ॥ मा कृथाः पुरुषव्याघ्र शोकं त्वं गात्रशोषणं । न हि ते सुलभा भूयो ये हताऽस्मिन् रणाजिरे । ९००
स्वप्नलब्धा यथा लाभा वितथाः प्रतिबोधने । एवं ते क्षत्रिया राजन् ये व्यतीता महारणे ।
सर्व्वेऽप्यभिमुखाः शूरा विजिता रणशोभिनः । नैषां कश्चित्पृष्ठतो वा पलायन् वाऽपि पातितः ।
सर्व्वे त्यक्त्वात्मनः प्राणान्युद्ध्वा वीरा महाहवे । शस्त्रपूता दिवं प्राप्ता न ताञ्छोचितुमर्हसि ।
क्षत्रधर्म्मरताः शूराः वेदवेदाङ्गपारगाः । प्राप्ता वीरगतिं पुण्यां तान्न शोचितुमर्हसि ।
मृतान्महानुभावांस्त्वं श्रुत्वैव पृथिवीपतीन् । अत्रैवोदाहरन्तीममितिहासं पुरातनं । ९०५
सृञ्जयं पुत्रशोकार्त्तं यथाऽयं नारदोऽब्रवीत् । सुखदुःखैरहं त्वञ्च प्रजाः सर्व्वाश्च सृञ्जय ।
अविमुक्ता मरिष्यामस्तत्र का परिदेवना । महाभाग्यं पुरा राज्ञां कीर्त्त्यमानं मया शृणु ।
यथाऽवधानं नृपते ततो दुःखं प्रहास्यसि । एतान्महानुभावांस्त्वं श्रुत्वैव पृथिवीपतीन् ।
शममानय सन्तापं शृणु विस्तरशश्च मे । क्रूरग्रहाभिशमनमायुर्व्वर्द्धनमुत्तमं ।
अग्रिमाणां क्षितिभुजामुपादानं मनोहरं । आविक्षितं मरुत्तं वै मृतं सृञ्जय शुश्रुम । ९१०
यस्य सेन्द्राः सवरुणा बृहस्पतिपुरोगमाः । देवा विश्वसृजो राज्ञो यज्ञमीयुर्महात्मनः ।
यः स्पर्द्धयाऽजयच्छक्रं देवराजं पुरन्दरं । शक्रप्रियैषी यं विद्वान् प्रत्याचष्ट बृहस्पतिः ।
संवर्त्तो याजयामास यवीयान् स बृहस्पतेः । यस्मिन्प्रशासति मही नृपतौ राजसत्तम ।
अकृष्टपच्या पृथिवी विबभौ चैत्यमालिनी । आविक्षितस्य वै सत्रे विश्वेदेवाः सभासदः ।
मरुतः परिवेष्टारः साध्याश्चासन्महात्मनः । मरुद्गणा मरुत्तस्य यत्सोममपिवंस्तत । ९१५
देवान्मनुष्यान्गन्धर्व्वानत्यरिच्यन्त दक्षिणाः । स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः । सुहोत्रञ्चैवातिथिनं मृतं शुश्रुम सृञ्जय ।
यस्मिन् हिरण्यं ववृषे मघवा परिवत्सरं । सत्यनामा वसुमती यं प्राप्यासीज्जनाधिपं ।
हिरण्यमवहन्नद्यस्तस्मिन् जनपदेश्वरे । कूर्म्मान्कर्क्कटकान्नक्रान्मकराञ्छिशुकानपि ।
नदीष्वपातयद्राजन्मघवा लोकपूजितः । हिरण्यान्पातितान् दृष्ट्वा मत्स्यान्मकरकच्छपान् । ९२०
सहस्रशोऽथ शतशस्ततोऽस्मयदथोऽतिथिः । तद्धिरण्यमपर्य्यन्तमावृत्तं कुरुजाङ्गले ।
ईजानो वितते यज्ञे ब्राह्मणेभ्यः समार्प्पयत् । स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः । अदक्षिणमयज्वानं श्वैत्यं संशाम्य मा शुचः ।
अङ्गं बृहद्रथं चैव मृतं सृञ्जय शुश्रुम । यः सहस्रं सहस्राणां श्वेतानश्वानवासृजत् ।
सहस्रञ्च सहस्राणां कन्या हेमपरिष्कृताः । ईजानो वितते यज्ञे दक्षिणामत्यकालयत् । ९२५

यः सहस्रं सहस्राणां गजानामतिपक्षिणां । ईजानो वितते यज्ञे दक्षिणामत्यकालयत् ।
शतं शतसहस्राणां वृषाणां हेममालिनां । गवां सहस्रानुचरं दक्षिणामत्यकालयत् ।
अङ्गस्य यजमानस्य तदा विष्णुपदे गिरौ । अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ।
यस्य यज्ञेषु राजेन्द्र शतसंख्येषु वै पुरा । देवान्मनुष्यान्गन्धर्व्वानत्यरिच्यन्त दक्षिणाः ।
न जातो जनिता चान्यः पुमान्यस्तत्प्रदास्यति । यदङ्गः प्रददौ वित्तं सोमसंस्थासु सप्तसु । ९३०
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया । पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ।
शिबिमौशीनरञ्चैव मृतं सृञ्जय शुश्रुम । य इमां पृथिवीं सर्व्वां चर्म्मवत्समवेष्टयत् ।
महता रथघोषेण पृथिवीमनुनादयन् । एकच्छत्रां महीं चक्रे जैत्रेणैकरथेन यः ।
यावदद्य गवाश्वं स्यादारण्यैः पशुभिः सह । तावतीः प्रददौ गाः स शिबिरौशीनरोऽध्वरे ।
न वोढारं धुरं तस्य कञ्चिन्मेने प्रजापतिः । न भूतं न भविष्यञ्च सर्व्वराजसु सृञ्जय । ९३५
अन्यत्रौशीनराच्छैब्याद्राजर्षेरिन्द्रविक्रमात् । अदक्षिणमयज्वानं मा पुत्रमनुतप्यथाः ।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया । पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ।
भरतञ्चैव दौष्मन्तिं मृतं शुश्रुम सृञ्जय । शाकुन्तलं महात्मानं भूरिद्रविणसञ्चयं ।
यो बद्धा त्रिशतं चाश्वान्देवेभ्यो यमुनामनु । सरस्वतीं विंशतिञ्च गङ्गामनु चतुर्द्दश ।
अश्वमेधसहस्रेण राजसूयशतेन च । इष्टवान् स महातेजा दौष्मन्तिर्भरतः पुरा । ९४०
भरतस्य महत्कर्म्म सर्व्वराजसु पार्थिवाः । खमर्त्त्या इव बाहुभ्यां नानुगन्तुमशक्नुवन् ।
परं सहस्राद्यो बद्धान् हयान्वेदीर्व्विचित्य च । सहस्रं यत्र पद्मानां कण्वाय भरतो ददौ ।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया । पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ।
रामं दाशरथिञ्चैव मृतं शुश्रुम सृञ्जय । योऽन्वकम्पत वै नित्यं प्रजाः पुत्रानिवौरसान् ।
विधवा यस्य विषये नानाथाः काश्चनाभवन् । सदैवासीत्पितृसमो रामो राज्यं यदाऽन्वशात् । ९४५
कालवर्षी च पर्ज्जन्यः शस्यानि समुपादयत् । नित्यं सुभिक्षमेवासीद्रामे राज्यं प्रशासति ।
प्राणिनो नाप्सु मज्जन्ति नान्यथा पावकोऽदहत् । रुजा भयं न तत्रासीद्रामे राज्यं प्रशासति ।
आसन्वर्षसहस्रिण्यस्तथा पुत्रसहस्रिकाः । अरोगाः सर्व्वसिद्धार्था रामे राज्यं प्रशासति ।
नान्योन्येन विवादोऽभूत् स्त्रीणामपि कुतो नृणां । धर्म्मनित्याः प्रजास्त्वासन् रामे राज्यं प्रशासति ।
सन्तुष्टाः सर्व्वसिद्धार्था निर्भयाः स्वैरचारिणः । नराः सत्यव्रतास्त्वासन् रामे राज्यं प्रशासति । ९५०
नित्यपुष्पफलाश्चैव पादपा निरुपद्रवाः । सर्व्वा द्रोणदुघा गावो रामे राज्यं प्रशासति ।
स चतुर्द्दश वर्षाणि वने प्रोष्य महातपाः । दशाश्वमेधाञ्जारूथ्यानाजहार निरर्गलान् ।
युवा श्यामो लोहिताक्षो मातङ्ग इव यूथपः । आजानुबाहुः सुमुखः सिंहस्कन्धो महाभुजः ।
दशवर्षसहस्राणि दशवर्षशतानि च । अयोध्याधिपतिर्भूत्वा रामो राज्यमकारयत ।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया । पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः । ९५५

भगीरथञ्च राजानं मृतं शुश्रुम सृञ्जय । यस्येन्द्रो वितते यज्ञे सोमं पीत्वा मदोत्कटः ।
असुराणां सहस्राणि बहूनि सुरसत्तमः । अजयद्बाहुवीर्य्येण भगवान्पाकशासनः ।
यः सहस्रं सहस्राणां कन्या हेमविभूषिताः । ईजानो वितते यज्ञे दक्षिणामत्यकालयत् ।
सर्व्वा रथगताः कन्या रथाः सर्व्वे चतुर्युजः । शतं शतं रथे नागाः पद्मिनो हेममालिनः ।
सहस्रमश्वा एकैकं हस्तिनं पृष्ठतोऽन्वयुः । गवां सहस्रमश्वेऽश्वे सहस्रं गव्यजाविकं । ९१०
उपह्वरे निवसतो यस्याङ्के निषसाद ह । गङ्गा भागीरथी तस्मादुर्व्वशी ह्यभवत्पुरा ।
भूरिदक्षिणमैक्ष्वाकुं यजमानं भगीरथं । त्रिलोकपथगा गङ्गा दुहितृत्वमुपेयुषी ।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया । पुत्त्रात्पुण्यतरश्चैव मा पुत्त्रमनुतप्यथाः ।
दिलीपञ्च महात्मानं मृतं शुश्रुम सृञ्जय । यस्य कर्म्माणि भूरीणि कथयन्ति द्विजातयः ।
य इमां वसुसम्पूर्णां वसुधां वसुधाधिपः । ददौ तस्मिन्महायज्ञे ब्राह्मणेभ्यः समाहितः । ९१५
यस्येह यजमानस्य यज्ञे यज्ञे पुरोहितः । सहस्रं वारणान् हैमान् दक्षिणामत्यकालयत् ।
यस्य यज्ञे महानासीद्यूपः श्रीमान् हिरण्मयः । तं देवाः कर्म्म कुर्व्वाणाः शक्रज्येष्ठा उपाश्रयन् ।
चषाले यस्य सौवर्णे तस्मिन् यूपे हिरण्मये । ननृतुर्देवगन्धर्व्वाः षट् सहस्राणि सप्तधा ।
अवादयत्तत्र वीणां मध्ये विश्वावसुः स्वयं । सर्व्वभूतान्यमन्यन्त मम वादयतीत्ययं ।
एतद्राज्ञो दिलीपस्य राजानो नानुचक्रिरे । यस्येभा हेमसञ्छन्नाः पथि मत्ताः स्म शेरते । ९२०
राजानं शतधन्वानं दिलीपं सत्यवादिनं । येऽपश्यन् सुमहात्मानं तेऽपि स्वर्गजितो नराः ।
त्रयः शब्दा न जीर्य्यन्ते दिलीपस्य निवेशने । स्वाध्यायघोषो ज्याघोषो दीयतामिति वै त्रयः ।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया । पुत्त्रात्पुण्यतरश्चैव मा पुत्त्रमनुतप्यथाः ।
मान्धातारं यौवनाश्वं मृतं शुश्रुम सृञ्जय । यं देवा मरुतो गर्भं पितुः पार्श्वादपाहरन् ।
समृद्धो युवनाश्वस्य जठरे यो महात्मनः । पृषदाज्योद्भवः श्रीमांस्त्रिलोकविजयी नृपः । ९२५
यं दृष्ट्वा पितुरुत्सङ्गे शयानं देवरूपिणं । अन्योन्यमब्रुवन् देवाः कमयं धास्यतीति वै ।
मामेव धास्यतीत्येवमिन्द्रोऽथाभ्युपपद्यत । मान्धातेति ततस्तस्य नाम चक्रे शतक्रतुः ।
ततस्तु पयसो धारां पुष्टिहेतोर्महात्मनः । तस्यास्ये यौवनाश्वस्य पाणिरिन्द्रस्य चास्रवत् ।
तं पिबन्पाणिमिन्द्रस्य शतमह्ना व्यवर्द्धत । स आसीद्द्वादशसमो द्वादशाहेन पार्थिवः ।
तमिमं पृथिवी सर्व्वा एकाह्ना समपद्यत । धर्म्मात्मानं महात्मानं शूरमिन्द्रसमं युधि । ९३०
यस्याङ्गारन्तु नृपतिं मरुत्तमसितञ्जयं । अङ्गं बृहद्रथञ्चैव मान्धाता समरेऽजयत् ।
यौवनाश्वो यदाऽङ्गारं समरे प्रत्ययुध्यत । विस्फारैर्धनुषो देवा द्यौरभेदीति मेनिरे ।
यत्र सूर्य्य उदेति स्म यत्र च प्रतितिष्ठति । सर्व्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ।
अश्वमेधशतेनेष्ट्वा राजसूयशतेन च । अददद्रोहितान्मत्स्यान् ब्राह्मणेभ्यो विशाम्पते ।
हैरण्यान्योजनोत्सेधानायतान् दशयोजनं । अतिरिक्तान्द्विजातिभ्यो व्यभजंस्त्वितरे जनाः । ९३५

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः।
ययातिं नाहुषं चैव मृतं शुश्रुम सृञ्जय। य इमां पृथिवीं कृत्स्नां विजित्य सहसागरां।
शम्यापातेनाभ्यतीयाद्वेदीभिश्चित्रयन्महीं। ईजानः क्रतुभिर्मुख्यैः पर्य्यगच्छद्वसुन्धरां।
इष्ट्वा क्रतुसहस्रेण वाजपेयशतेन च। तर्पयामास विप्रेन्द्रांस्त्रिभिः काञ्चनपर्व्वतैः।
व्यूढेनासुरयुद्धेन हत्वा दैतेयदानवान्। व्यभजत्पृथिवीं कृत्स्नां ययातिर्नहुषात्मजः। ९९०
अन्त्येषु पुत्रान्निक्षिप्य यदुद्रुह्युपुरोगमान्। पूरुं राज्येऽभिषिच्य स्वे सदारः प्राविशद्वनं।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः।
अम्बरीषञ्च नाभागिं मृतं शुश्रुम सृञ्जय। यं प्रजा वव्रिरे पुण्यं गोप्तारं नृपसत्तमं।
यः सहस्रं सहस्राणां राज्ञामयुतयाजिनां। ईजानो वितते यज्ञे ब्राह्मणेभ्यः सुसंहितः।
नैतत्पूर्व्वे जनाश्चक्रुर्न करिष्यन्ति चापरे। इत्यम्बरीषं नाभागिमन्वमोदन्त दक्षिणाः। ९९५
शतं राजसहस्राणि शतं राजशतानि च। सर्व्वेऽश्वमेधैरीजानास्तेऽन्वयुर्द्दक्षिणायनं।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः।
शशविन्दुं चैत्ररथं मृतं शुश्रुम सृञ्जय। यस्य भार्य्यासहस्राणां शतमासीन्महात्मनः।
सहस्रन्तु सहस्राणां यस्यासन् शशविन्दवः। हिरण्यकवचाः सर्व्वे सर्व्वे चोत्तमधन्विनः।
शतं कन्या राजपुत्त्रमेकैकं पृथगन्वयुः। कन्यां कन्यां शतं नागा नागं नागं शतं रथाः। १०००
रथे रथे शतं चाश्वा देशजा हेममालिनः। अश्वे अश्वे शतं गावो गवां तद्वदजाविकं।
एतद्धनमपर्य्यन्तमश्वमेधे महामखे। शशविन्दुर्म्महाराज ब्राह्मणेभ्यः समार्प्पयत्।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः।
गयं चामूर्त्तरयसं मृतं शुश्रुम सृञ्जय। यः स वर्षशतं राजा हुतशिष्टाशनोऽभवत्।
यस्मै वह्निर्व्वरं प्रादात्ततो वव्रे वरान्गयः। ददतो मेऽक्षयं वित्तं धर्म्मे श्रद्धा च वर्त्ततां। १००५
मनो मे रमतां सत्ये त्वत्प्रसादाद्धुताशन। लेभे च कामांस्तान्सर्व्वान्पावकादिति नः श्रुतं।
दर्शे च पूर्णमासे च चातुर्मास्ये पुनः पुनः। अयजद्धयमेधेन सहस्रं परिवत्सरान्।
शतं गवां सहस्राणि शतमश्वतराणि च। उत्थायोत्थाय वै प्रादात्सहस्रं परिवत्सरान्।
तर्प्पयामास सोमेन देवान्वित्तैर्द्विजानपि। पितॄन्स्वधाभिः कामैश्च स्त्रियः स पुरुषर्षभः।
सौवर्णीं पृथिवीं कृत्वा दशव्यामां द्विरायतां। दक्षिणामददद्राजा वाजिमेधे महाक्रतौ। १०१०
यावत्यः सिकता राजन्गङ्गायाः पुरुषर्षभ। तावतीरेव गाः प्रादादामूर्त्तरयसो गयः।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः।
रन्तिदेवञ्च साङ्कृत्यं मृतं शुश्रुम सृञ्जय। सम्यगाराध्य यः शक्राद्वरं लेभे महातपाः।
अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि। श्रद्धा च नो मा व्यगमन्मा च याचिष्म कञ्चन।
उपातिष्ठंश्च पशवः स्वयं तं संशितव्रतं। ग्राम्यारण्या महात्मानं रन्तिदेवं यशस्विनं। १०१५

महानदी चर्म्मराशेरुत्क्लेदात् सुस्रुवे यतः। ततश्चर्म्मण्वतीत्येवं विख्याता सा महानदी।
ब्राह्मणेभ्यो ददौ निष्कान् सदसि प्रतते नृप। तुभ्यं निष्कं तुभ्यं निष्कमिति क्रोशन्ति वै द्विजाः।
सहस्रं तुभ्यमित्युक्त्वा ब्राह्मणान् संप्रपद्यते। अन्वाहार्य्योपकरणं द्रव्योपकरणञ्च यत्।
घटाः पात्र्यः कटाहानि स्थाल्यश्च पिठराणि च। नासीत्किञ्चिदसौवर्णं रन्तिदेवस्य धीमतः।
सांकृतेरन्तिदेवस्य यां रात्रिमवसन् गृहे। आलभ्यन्त शतं गावः सहस्राणि च विंशतिः। १०२०
तत्र स्म सूदाः क्रोशन्ति सुमृष्टमणिकुण्डलाः। सूपभूयिष्ठमश्नीध्वं नाद्य मांसं यथा पुरा।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः।
सगरञ्च महात्मानं मृतं शुश्रुम सृञ्जय। ऐक्ष्वाकुं पुरुषव्याघ्रमतिमानुषविक्रमं।
षष्टिः पुत्रसहस्राणि यं यान्तमनुजग्मिरे। नक्षत्रराजं वर्षान्ते व्यभ्रे ज्योतिर्गणा इव।
एकच्छत्रा मही यस्य प्रतापादभवत्पुरा। योऽश्वमेधसहस्रेण तर्पयामास देवताः। १०२५
यः प्रादात् कनकस्तम्भं प्रासादं सर्व्वकाञ्चनं। पूर्णं पद्मदलाक्षीणां स्त्रीणां शयनसङ्कुलं।
द्विजातिभ्योऽनुरूपेभ्यः कामांश्च विविधान् बहून्। यस्यादेशेन तद्वित्तं व्यभजन्त द्विजातयः।
खनयामास यः कोपात् पृथिवीं सागराङ्कितां। यस्य नाम्ना समुद्रश्च सागरत्वमुपागतः।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः।
राजानञ्च पृथुं वैन्यं मृतं शुश्रुम सृञ्जय। यमभ्यषिञ्चन् सम्भूय महारण्ये महर्षयः। १०३०
प्रथयिष्यति वै लोकान् पृथुरित्येव शब्दितः। क्षताद्यो वै त्रायतीति स तस्मात् क्षत्रियः स्मृतः।
पृथुं वैन्यं प्रजा दृष्ट्वा रक्ताः स्मेति यदब्रुवन्। ततो राजेति नामास्य अनुरागादजायत।
अकृष्टपच्या पृथिवी पुटके पुटके मधु। सर्व्वा द्रोणदुघा गावो वैन्यस्यासन् प्रशासतः।
अरोगाः सर्व्वसिद्धार्था मनुष्या अकुतोभयाः। यथाऽभिकाममवसन् क्षेत्रेषु च गृहेषु च।
आपस्तस्तम्भिरे चास्य समुद्रमभियास्यतः। सरितश्चानुदीर्य्यन्त ध्वजभङ्गश्च नाभवत्। १०३५
हैरण्यांस्त्रिनलोत्सेधान् पर्व्वतानेकविंशतिं। ब्राह्मणेभ्यो ददौ राजा योऽश्वमेधे महामखे।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः।

किं वा तूष्णीं ध्यायसे सृञ्जय त्वं न मे राजन् वाचमिमां शृणोषि। न चेन्मोघं विप्रलप्तं मयेदं पथ्यं मुमूर्षोरिव सम्प्रयुक्तं।
॥ सृञ्जय उवाच ॥ शृणोमि ते नारद वाचमेनां विचित्रार्थां स्रजमिव पुण्यगन्धां। राजर्षीणां पुण्यकृतां महात्मनां कीर्त्या युक्तानां शोकनिर्णाशनार्थं।
न ते मोघं विप्रलप्तं महर्षे दृष्ट्वैवाहं नारद त्वां विशोकः। शुश्रूषे ते वचनं ब्रह्मवादिन् न ते तृप्याम्यमृतस्येव पानात्। १०४०
अमोघदर्शिन् मम चेत्प्रसादं सुतापदग्धस्य विभो प्रकुर्य्याः। मृतस्य संजीवनमद्य मे स्यात्तव प्रसादात् सुतसङ्गमश्च।
॥ नारद उवाच ॥ यस्ते पुत्रो गमितोऽयं विजातः स्वर्णष्ठीवी यमदात्पर्व्वतस्ते। पुनस्तु ते पुत्रमहं ददामि हिरण्यनाभं वर्षसहस्रिणञ्च।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि षोडशराजिकोपाख्याने एकोनत्रिंशोऽध्यायः॥ २९ ॥

॥ युधिष्ठिर उवाच ॥ स कथं काञ्चनष्ठीवी सृञ्जयस्य सुतोऽभवत् । पर्व्वतेन किमर्थं वा दत्तस्तेन ममार च ।
यदा वर्षसहस्रायुस्तदा भवति मानवः । कथमप्राप्तकौमारः सृञ्जयस्य सुतो मृतः ।
उताहो नाममात्रं वै सुवर्णष्ठीविनोऽभवत् । कथं वा काञ्चनष्ठीवीत्येतदिच्छामि वेदितुं । १०४५
॥ श्रीकृष्ण उवाच ॥ अत्र ते वर्णयिष्यामि यथावृत्तं जनेश्वर । नारदः पर्व्वतश्चैव द्वावृषी लोकसत्तमौ ।
मातुलो भागिनेयश्च देवलोकादिहागतौ । विहर्त्तुकामौ सम्प्रीत्या मानुषेषु पुरा विभो ।
हविःपवित्रभोज्येन देवभोज्येन चैव हि । नारदो मातुलश्चैव भागिनेयश्च पर्व्वतः ।
तावुभौ तपसोपेताववनीतलचारिणौ । भुञ्जानौ मानुषान् भोगान्यथावत्पर्य्यधावतां ।
प्रीतिमन्तौ मुदा युक्तौ समयञ्चैव चक्रतुः । यो भवेद्धृदि सङ्कल्पः शुभो वा यदि वाऽशुभः । १०५०
अन्योन्यस्य स आख्येयो मृषा शापोऽन्यथा भवेत् । तौ तथेति प्रतिज्ञाय महर्षी लोकपूजितौ ।
सृञ्जयं श्वैत्यमभ्येत्य राजानमिदमूचतुः । आवां भवति वत्स्यावः कञ्चित्कालं हिताय ते ।
यथावत्पृथिवीपाल आवयोः प्रगुणी भव । तथेति कृत्वा राजा तौ सत्कृत्योपचचार ह ।
ततः कदाचित्तौ राजा महात्मानौ तपोधनौ । अब्रवीत्परमप्रीतः सुतेयं वरवर्णिनी ।
एकैव मम कन्यैषा युवां परिचरिष्यति । दर्शनीयाऽनवद्याङ्गी शीलवृत्तसमाहिता । १०५५
सुकुमारी कुमारी च पद्मकिञ्जल्कसुप्रभा । परमं सौम्यमित्युक्तं ताभ्यां राजा शशास तां ।
कन्ये विप्रावुपचर देववत्पितृवच्च ह । सा तु कन्या तथेत्युक्त्वा पितरं धर्म्मचारिणी ।
यथानिदेशं राज्ञस्तौ सत्कृत्योपचचार ह । तस्यास्तेनोपचारेण रूपेणाप्रतिमेन च ।
नारदं हृच्छयस्तूर्णं सहसैवाभ्यपद्यत । ववृधे हि ततस्तस्य हृदि कामो महात्मनः ।
यथा शुक्लस्य पक्षस्य प्रवृत्तौ चन्द्रमाः शनैः । न च तं भागिनेयाय पर्व्वताय महात्मने । १०६०
शशंस हृच्छयं तीव्रं व्रीडमानः स धर्म्मवित् । तपसा चेङ्गितेनैव पर्व्वतोऽथ बुबोध तं ।
कामार्त्तं नारदं क्रुद्धः शशापैनं ततो भृशं । कृत्वा समयमव्यग्रो भवान्वै सहितो मया ।
यो भवेद्धृदि सङ्कल्पः शुभो वा यदि वाऽशुभः । अन्योन्यस्य स आख्येय इति तद्वै मृषा कृतं ।
भवता वचनं ब्रह्मंस्तस्मादेव शपाम्यहम् । न हि कामं प्रवर्त्तन्तं भवानाचष्ट मे पुरा ।
सुकुमार्य्यां कुमार्य्यां ते तस्मादेव शपाम्यहं । ब्रह्मचारी गुरुर्य्यस्मात्तपस्वी ब्राह्मणश्च सन् । १०६५
अकार्षीः समयभ्रंशमावाभ्यां यः कृतो मिथः । शप्स्ये तस्मात्सुसंक्रुद्धो भवन्तं तं निबोध मे ।
सुकुमारी च ते भार्य्या भविष्यति न संशयः । वानरञ्चैव ते रूपं विवाहात्प्रभृति प्रभो ।
संद्रक्ष्यन्ति नराश्चान्ये स्वरूपेण विनाकृतं । स तद्वाक्यन्तु विज्ञाय नारदः पर्व्वतं तथा ।
अशपत्तमपि क्रोधाद्भागिनेयं स मातुलः । तपसा ब्रह्मचर्य्येण सत्येन च दमेन च ।
युक्तोऽपि नित्यधर्म्मश्च न वै स्वर्गमवाप्स्यसि । तौ तु शप्त्वा भृशं क्रुद्धौ परस्परममर्षणौ । १०७०
प्रतिजग्मतुरन्योन्यं क्रुद्धाविव गजोत्तमौ । पर्व्वतः पृथिवीं कृत्स्नां विचचार महामतिः ।
पूज्यमानो यथान्यायं तेजसा स्वेन भारत । अथ तामलभत्कन्यां नारदः सृञ्जयात्मजां ।

धर्म्मेण विप्रप्रवरः सुकुमारीमनिन्दितां । सा तु कन्या यथाशापं नारदं तं ददर्श ह ।
पाणिग्रहणमन्त्राणां नियोगादेव नारदं । सुकुमारी च देवर्षिं वानरप्रतिमाननं ।
नैवावमन्यत तदा प्रीतिमत्येव चाभवत् । उपतस्थे च भर्त्तारं न चान्यं मनसाऽप्यगात् । १०७५
देवं मुनिं वा यक्षं वा पतित्वे पतिवत्सला । ततः कदाचिद्भगवान्पर्व्वतोऽनुचचार ह ।
वनं विरहितं किञ्चित्तत्रापश्यत्स नारदं । ततोऽभिवाद्य प्रोवाच नारदं पर्व्वतस्तदा ।
भवान् प्रसादं कुरुतात्स्वर्गादेशाय मे प्रभो । तमुवाच ततो दृष्ट्वा पर्व्वतं नारदस्तथा ।
कृताञ्जलिमुपासीनं दीनं दीनतरः स्वयं । त्वयाऽहं प्रथमं शप्तो वानरस्त्वं भविष्यसि ।
इत्युक्तेन मया पश्चाच्छप्तस्त्वमपि मत्सरात् । अद्यप्रभृति वै वासं स्वर्गे नावाप्स्यसीति ह । १०८०
तव नैतद्धि सदृशं पुत्रस्थाने हि मे भवान् । निवर्त्तयेतां तौ शापावन्योन्येन तदा मुनी ।
श्रीसमृद्धं तदा दृष्ट्वा नारदं देवरूपिणं । सुकुमारी प्रदुद्राव परपत्यभिशङ्कया ।
तां पर्व्वतस्ततो दृष्ट्वा प्रद्रवन्तीमनिन्दितां । अब्रवीत्तव भर्त्तैव नात्र कार्य्या विचारणा ।
ऋषिः परमधर्म्मात्मा नारदो भगवान्प्रभुः । तवैवाभेद्यहृदयो मा तेऽभूदत्र संशयः ।
साऽनुनीता बहुविधं पर्व्वतेन महात्मना । शापदोषञ्च तं भर्त्तुः श्रुत्वा प्रकृतिमागता । १०८५
पर्व्वतोऽथ ययौ स्वर्गं नारदोऽभ्यगमद्गृहान् ।
॥ वासुदेव उवाच ॥ प्रत्यक्षकर्त्ता सर्व्वस्य नारदो भगवानृषिः । एष वक्ष्यति ते पृष्टो यथावृत्तं नरोत्तम ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि नारदपर्व्वतोपाख्याने त्रिंशत्तमोऽध्यायः ॥ ३० ॥
॥ वैशम्पायन उवाच ॥ ततो राजा पाण्डुसुतो नारदं प्रत्यभाषत । भगवन् श्रोतुमिच्छामि सुवर्णष्ठीविसम्भवं ।
एवमुक्तस्तु स मुनिर्द्धर्म्मराजेन नारदः । आचचक्षे यथावृत्तं सुवर्णष्ठीविनं प्रति ।
॥ नारद उवाच ॥ एवमेतन्महाबाहो यथाऽयं केशवोऽब्रवीत् । कार्य्यस्यास्य तु यच्छेषं तत्ते वक्ष्यामि पृच्छतः । १०९०
अहञ्च पर्व्वतश्चैव स्वस्रीयो मे महामुनिः । वस्तुकामावभिगतौ सृञ्जयं जयतां वरं ।
तत्रावां पूजितौ तेन विधिदृष्टेन कर्म्मणा । सर्व्वकामैः सुविहितौ निवसावोऽस्य वेश्मनि ।
व्यतिक्रान्तासु वर्षासु समये गमनस्य च । पर्व्वतो मामुवाचेदं काले वचनमर्थवत् ।
आवामस्य नरेन्द्रस्य गृहे परमपूजितौ । उषितौ समये ब्रह्मंस्तदिदं चिन्तय साम्प्रतं ।
ततोऽहमब्रुवं राजन्पर्व्वतं शुभदर्शनं । सर्व्वमेतत्त्वयि विभो भागिनेयोपपद्यते । १०९५
वरेणच्छन्द्यतां राजा लभतां यद्यदिच्छति । आवयोस्तपसा सिद्धिं प्राप्नोतु यदि मन्यसे ।
तत आहूय राजानं सृञ्जयं जयताम्वरं । पर्व्वतोऽनुमतं वाक्यमुवाच कुरुपुङ्गव ।
प्रीतौ स्वो नृप सत्कारैर्भवदार्ज्जवसंभृतैः । आवाभ्यामभ्यनुज्ञातो वरं नृवर चिन्तय ।
देवानामविहिंसायां न भवेन्मानुषक्षयं । तद्गृहाण महाराज पूजार्हो नौ मतो भवान् ।
॥ सृञ्जय उवाच ॥ प्रीतौ भवन्तौ यदि मे कृतमेतावता मम । एष एव परो लाभो निर्वृत्तो मे महाफलः । ११००
तमेवंवादिनं भूयः पर्व्वतः प्रत्यभाषत । वृणीष्व राजन् संकल्पं यत्ते हृदि चिरं स्थितं ।

॥ सृञ्जय उवाच ॥ अभीप्सामि सुतं वीरं वीर्य्यवन्तं दृढव्रतं । आयुष्मन्तं महाभागं देवराजसमद्युतिं ।
॥ पर्व्वत उवाच ॥ भविष्यत्येष ते कामो नत्वायुष्मान् भविष्यति । देवराजाभिभूत्यर्थं संकल्पो ह्येष ते हृदि ।
ख्यातः सुवर्णष्ठीवीति पुत्त्रस्तव भविष्यति । रक्ष्यश्च देवराजात्स देवराजसमद्युतिः ।
तच्छ्रुत्वा सृञ्जयो वाक्यं पर्व्वतस्य महात्मनः । प्रसादयामास तदा नैतदेवं भवेदिति ।　　११०५
आयुष्मान्मे भवेत्पुत्त्रो भवतस्तपसा मुने । न च तं पर्व्वतः किञ्चिदुवाचेन्द्रव्यपेक्षया ।
तमहं नृपतिं दीनमब्रुवं पुनरेव च । स्मर्त्तव्योऽस्मि महाराज दर्शयिष्यामि ते सुतं ।
अहन्ते दयितं पुत्त्रं प्रेतराजवशङ्गतं । पुनर्दास्यामि तद्रूपं मा शुचः पृथिवीपते ।
एवमुक्त्वा तु नृपतिं प्रयातौ स्वो यथेप्सितं । सृञ्जयश्च यथाकामं प्रविवेश स्वमन्दिरं ।
सृञ्जयस्याथ राजर्षेः कस्मिंश्चित्कालपर्य्यये । जज्ञे पुत्त्रो महावीर्य्यस्तेजसा प्रज्वलन्निव ।　　१११०
ववृधे स यथाकालं सरसीव महोत्पलं । बभूव काञ्चनष्ठीवी यथार्थं नाम तस्य तत् ।
तदद्भुततमं लोके पप्रथे कुरुसत्तम । बुबुधे तच्च देवेन्द्रो वरदानं महर्षितः ।
ततः स्वाभिभवाद्भीतो बृहस्पतिमते स्थितः । कुमारस्यान्तरप्रेक्षी बभूव बलवृत्रहा ।
चोदयमास तद्वज्रं दिव्यास्त्रं मूर्त्तिमत्स्थितं । व्याघ्रो भूत्वा जहीमं त्वं राजपुत्त्रमिति प्रभो ।
प्रवृद्धः किल कार्य्येण मामेषोऽभिभविष्यति । सृञ्जयस्य सुतो वज्र यथैनं पर्व्वतोऽब्रवीत् ।　　१११५
एवमुक्तस्तु शक्रेण वज्रः परपुरञ्जयः । कुमारमन्तरप्रेक्षी नित्यमेवान्वपद्यत ।
सृञ्जयोऽपि सुतं प्राप्य देवराजसमद्युतिं । हृष्टः सान्तःपुरो राजा वननित्यो बभूव ह ।
ततो भागीरथीतीरे कदाचिन्निर्जने वने । धात्रीद्वितीयो बालस्तु क्रीडार्थं पर्य्यधावत ।
पञ्चवर्षकदेशीयो बालो नागेन्द्रविक्रमः । सहसोत्पतितं व्याघ्रमाससाद महाबलं ।
स बालस्तेन निष्पिष्टो वेपमानो नृपात्मजः । व्यसुः पपात मेदिन्यां ततो धात्री विचुक्रुशे ।　　११२०
हत्वा तु राजपुत्त्रं स तत्रैवान्तरधीयत । शार्दूलो देवराजस्य माययाऽन्तर्हितस्तदा ।
धात्र्यास्तु निनदं श्रुत्वा रुदन्त्याः परमार्त्तवत् । अभ्यधावत तं देशं स्वयमेव महीपतिः ।
स ददर्श शयानं तं गतासुं पीतशोणितं । कुमारं विगतानन्दं निशाकरमिव च्युतं ।
स तमुत्सङ्गमारोप्य परिपीडितमानसः । पुत्त्रं रुधिरसंसिक्तं पर्य्यदेवयदातुरः ।
ततस्ता मातरस्तस्य रुदन्त्यः शोककर्षिताः । अभ्यधावन्त तं देशं यत्र राजा स सृञ्जयः ।　　११२५
ततः स राजा सस्मार मामेव गतमानसः । तदाऽहं चिन्तनं ज्ञात्वा गतवांस्तस्य दर्शनं ।
मयैतानि च वाक्यानि श्रावितः शोकलालसः । यानि ते यदुवीरेण कथितानि महीपते ।
सञ्जीवितश्चापि पुनर्व्वासवानुमते तदा । भवितव्यं तथा तच्च न तच्छक्यमतोऽन्यथा ।
तत ऊर्द्धं कुमारस्तु स्वर्णष्ठीवी महायशाः । चित्तं प्रसादयामास पितुर्म्मातुश्च वीर्य्यवान् ।
कारयामास राज्यं च पितरि स्वर्गते नृप । वर्षाणां शतमेकञ्च सहस्रं भीमविक्रमः ।　　११३०
तत ईजे महायज्ञैर्बहुभिर्भूरिदक्षिणैः । तर्पयामास देवांश्च पितॄंश्चैव महाद्युतिः ।

उत्पाद्य च बहून्पुत्रान् कुलसन्तानकारिणः। कालेन महता राजन् कालधर्म्ममुपेयिवान्।
स त्वं राजेन्द्र सञ्जातं शोकमेनं निवर्त्तय। यथा त्वां केशवः प्राह व्यासश्च सुमहातपाः।
पितृपैतामहं राज्यमास्थाय धुरमुद्वह। इष्ट्वा पुण्यैर्महायज्ञैरिष्टं लोकमवाप्स्यसि।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि सुवर्णष्ठीविसम्भवोपाख्याने एकविंशोऽध्यायः ॥ २१ ॥

॥ वैशम्पायन उवाच ॥ तूष्णीम्भूतं तु राजानं शोचमानं युधिष्ठिरं। तपस्वी धर्म्मतत्त्वज्ञः कृष्णद्वैपायनोऽब्रवीत्। ११३५
॥ व्यास उवाच ॥ प्रजानां पालनं धर्म्मो राज्ञां राजीवलोचन। धर्म्मः प्रमाणं लोकस्य नित्यं धर्म्मानुवर्त्तिनः।
अनुतिष्ठस्व तद्राजन्पितृपैतामहं पदं। ब्राह्मणेषु तपो धर्म्मः स नित्यो वेदनिश्चितः।
तत्प्रमाणं ब्राह्मणानां शाश्वतं भरतर्षभ। तस्य धर्म्मस्य कृत्स्नस्य क्षत्रियः परिरक्षिता।
यः स्वयं प्रतिहन्ति स्म शासनं विषये रतः। स बाहुभ्यां विनिग्राह्यो लोकयात्राविघातकः।
प्रमाणमप्रमाणं यः कुर्य्यान्मोहवशङ्गतः। भृत्यो वा यदि वा पुत्रस्तपस्वी वाऽपि कश्चन। ११४०
पापान् सर्व्वैरुपायैस्तान्नियच्छेच्छातयीत वा। अतोऽन्यथा वर्त्तमानो राजा प्राप्नोति किल्बिषं।
धर्म्मं विनश्यमानं हि यो न रक्षेत् स धर्म्महा। ते त्वया धर्म्महन्तारो निहताः सपदानुगाः।
स्वधर्म्मे वर्त्तमानस्त्वं किन्नु शोचसि पाण्डव। राजा हि हन्याद्दद्याच्च प्रजा रक्षेच्च धर्म्मतः।
॥ युधिष्ठिर उवाच ॥ न तेऽभिशङ्के वचनं यद्ब्रवीषि तपोधन। अपरोक्षो हि ते धर्म्मः सर्व्वधर्म्मविदाम्वर।
मया त्ववध्या बहवो घातिता राज्यकारणात्। तानि कर्म्माणि मे ब्रह्मन्दहन्ति च पचन्ति च। ११४५
॥ व्यास उवाच ॥ ईश्वरो वा भवेत्कर्त्ता पुरुषो वाऽपि भारत। हठो वा वर्त्तते लोके कर्म्मजं वा फलं स्मृतं।
ईश्वरेण नियुक्तो हि साध्वसाधु च भारत। कुरुते पुरुषः कर्म्म फलमीश्वरगामि तत्।
यथा हि पुरुषश्छिन्द्याद्वृक्षं परशुना वने। छेत्तुरेव भवेत्पापं परशोर्न कथञ्चन।
अथवा तदुपादानात्प्राप्नुयात्कर्म्मणः फलं। दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते।
न चैतदिष्टं कौन्तेय यदन्येन कृतं फलं। प्राप्नुयादिति यस्माच्च ईश्वरे तन्निवेशय। ११५०
अथापि पुरुषः कर्त्ता कर्म्मणोः शुभपापयोः। न परो विद्यते तस्मादेवमेतच्छुभं कृतं।
न हि कश्चित्क्वचिद्राजन्दिष्टात्प्रतिनिवर्त्तते। दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते।
यदि वा मन्यसे राजन् हतमेकम्प्रतिष्ठितं। एवमप्यशुभं कर्म्म न भूतं न भविष्यति।
अथाभिपत्तिर्लोकस्य कर्त्तव्या शुभपापयोः। अभिपन्नमिदं लोके राज्ञामुद्यतदण्डनं।
तथाऽपि लोके कर्म्माणि समावर्त्तन्ति भारत। शुभाशुभं फलं चैते प्राप्नुवन्तीति मे मतिः। ११५५
एवमप्यशुभं कर्म्म कर्म्मणस्तत्फलात्मकं। त्यज त्वं राजशार्दूल मैवं शोके मनः कृथाः।
स्वधर्म्मे वर्त्तमानस्य सापवादेऽपि भारत। एवमात्मपरित्यागस्तव राजन्न शोभनः।
विहितानि हि कौन्तेय प्रायश्चित्तानि कर्म्मणां। शरीरवांस्तानि कुर्य्यादशरीरः पराभवेत्।
तद्राजन् जीवमानस्त्वं प्रायश्चित्तं करिष्यसि। प्रायश्चित्तमकृत्वा तु प्रेत्य तप्तासि भारत।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि प्रायश्चित्तोपाख्याने द्वाविंशोऽध्यायः ॥ २२ ॥

॥ युधिष्ठिर उवाच ॥ हता पुत्राश्च पौत्राश्च भ्रातरः पितरस्तथा । श्वशुरा गुरवश्चैव मातुलाश्च पितामहाः । ११६०
क्षत्रियाश्च महात्मानः सम्बन्धिसुहृदस्तथा । वयस्या भागिनेयाश्च ज्ञातयश्च पितामह ।
बहवश्च मनुष्येन्द्रा नानादेशसमागताः । घातिता राज्यलुब्धेन मयैकेन पितामह ।
तांस्तादृशानहं हत्वा धर्म्मनित्यान्महीक्षितः । असकृत्सोमपान् वीरान् किं प्राप्स्यामि तपोधन ।
दह्याम्यनिशमद्यापि चिन्तयानः पुनः पुनः । हीनां पार्थिवसिंहैस्तैः श्रीमद्भिः पृथिवीमिमां ।
दृष्ट्वा ज्ञातिवधं घोरं हतांश्च शतशः परान् । कोटिशश्च नरानन्यान्परितप्ये पितामह । ११६५
का नु तासां वरस्त्रीणामवस्थाऽद्य भविष्यति । विहीनानां तु तनयैः पतिभिर्भ्रातृभिस्तथा ।
अस्मानन्तकरान् घोरान् पाण्डवान्वृष्णिसंहतान् । आक्रोशन्त्यः कृशा दीना प्रपतिष्यन्ति भूतले ।
अपश्यन्त्यः पितॄन् भ्रातॄन्पतीन् पुत्रांश्च योषितः । त्यक्त्वा प्राणान् स्त्रियः सर्व्वा गमिष्यन्ति यमक्षयं ।
वत्सलत्वाद्द्विजश्रेष्ठ तत्र मे नास्ति संशयः । व्यक्तं सौक्ष्म्याच्च धर्म्मस्य प्राप्स्यामः स्त्रीवधं वयं ।
यद्वयं सुहृदो हत्वा कृत्वा पापमनन्तकं । नरके निपतिष्यामो ह्यधःशिरस एव ह । ११७०
शरीराणि विमोक्ष्यामस्तपसोग्रेण सत्तम । आश्रमाणां विशेषांस्त्वमथाचक्ष्व पितामह ।
॥ वैशम्पायन उवाच ॥ युधिष्ठिरस्य तद्वाक्यं श्रुत्वा द्वैपायनस्तदा । निरीक्ष्य निपुणं बुद्ध्या ऋषिः प्रोवाच पाण्डवं ।
॥ व्यास उवाच ॥ मा विषादं कृथा राजन् क्षत्रधर्म्ममनुस्मरन् । स्वधर्म्मेण हता ह्येते क्षत्रियाः क्षत्रियर्षभ ।
काङ्क्षमाणाः श्रियं कृत्स्नां पृथिव्यां च महद्यशः । कृतान्तविधिसंयुक्ताः कालेन निधनं गताः ।
न त्वं हन्ता न भीमोऽयं नार्ज्जुनो न यमावपि । कालः पर्य्यायधर्म्मेण प्राणानादत्त देहिनां । ११७५
न तस्य मातापितरौ नानुग्राह्यो हि कश्चन । कर्म्मसाक्षी प्रजानां यस्तेन कालेन संहृताः ।
हेतुमात्रमिदं तस्य विहितं भरतर्षभ । यद्धन्ति भूतैर्भूतानि तदस्मै रूपमैश्वरं ।
कर्म्मसूत्रात्मकं विद्धि साक्षिणं शुभपापयोः । सुखदुःखगुणोदर्कं कालं कालफलप्रदं ।
तेषामपि महाबाहो कर्म्माणि परिचिन्तय । विनाशहेतुकानि त्वं यैस्ते कालवशङ्गताः ।
आत्मनश्च विजानीहि नियतव्रतशासनं । यदा त्वमीदृशं कर्म्म विधिनाक्रम्य कारितः । ११८०
त्वष्ट्रेव विहितं यन्त्रं तथा चेष्टयितुर्व्वशे । कर्म्मणा कालयुक्तेन तथेदं चेष्टते जगत् ।
पुरुषस्य हि दृष्ट्वेमामुत्पत्तिमनिमित्ततः । यदृच्छया विनाशश्च शोकहर्षावनर्थकौ ।
व्यलीकमपि यत्त्वत्र चित्तवैतंसिकं तव । तदर्थमिष्यते राजन् प्रायश्चित्तं तदाचर ।
इदन्तु श्रूयते पार्थ युद्धे देवासुरे पुरा । असुरा भ्रातरो ज्येष्ठा देवाश्चापि यवीयसः ।
तेषामपि श्रीनिमित्तं महानासीत्समुच्छ्रयः । युद्धं वर्षसहस्राणि द्वात्रिंशदभवत्किल । ११८५
एकार्णवां महीं कृत्वा रुधिरेण परिप्लुतां । जघ्नुर्दैत्यांस्तथा देवास्त्रिदिवं चाभिलेभिरे ।
तथैव पृथिवीं लब्ध्वा ब्राह्मणा वेदपारगाः । संश्रिता दानवानां वै साह्यार्थं दर्पमोहिताः ।
शालावृका इति ख्यातास्त्रिषु लोकेषु भारत । अष्टाशीतिसहस्राणि ते चापि विबुधैर्हताः ।
धर्म्मव्युच्छित्तिमिच्छन्तो येऽधर्म्मस्य प्रवर्त्तकाः । हन्तव्यास्ते दुरात्मानो देवैर्दैत्या इवोल्बणाः ।

एकं हत्वा यदि कुले शिष्टानां स्यादनामयं । कुलं हत्वा च राष्ट्रं च न तद्वृत्तोपघातकं । ११९०
अधर्म्मरूपो धर्म्मो हि कश्चिदस्ति नराधिप । धर्म्मश्चाधर्म्मरूपोऽस्ति तच्च ज्ञेयं विपश्चिता ।
तस्मात्संस्तम्भयात्मानं श्रुतवानसि पाण्डव । देवैः पूर्व्वगतं मार्गमनुयातोऽसि भारत ।
न हीदृशा गमिष्यन्ति नरकं पाण्डवर्षभ । भ्रातॄनाश्वासयैतांस्त्वं सुहृदश्च परन्तप ।
यो हि पापसमारम्भे कार्य्ये तद्भावभावितः । कुर्व्वन्नपि तथैव स्यात् कृत्वा च निरपत्रपः ।
तस्मिंस्तत्कलुषं सर्व्वं समाप्तमिति शब्दितं । प्रायश्चित्तं न तस्यास्ति ह्रासो वा पापकर्म्मणः । ११९५
त्वन्तु शुक्लाभिजातीयः परदोषेण कारितः । अनिच्छमानः कर्म्मेदं कृत्वा च परितप्यसे ।
अश्वमेधो महायज्ञः प्रायश्चित्तमुदाहृतं । तमाहर महाराज विपाप्मैवं भविष्यसि ।
मरुद्भिः सह जित्वाऽरीन् भगवान्पाकशासनः । एकैकं क्रतुमाहृत्य शतकृत्वः शतक्रतुः ।
धूतपाप्मा जितस्वर्गो लोकानप्राप्य सुखोदयान् । मरुद्गणैर्वृतः शक्रः शुशुभे भासयन्दिशः ।
स्वर्गलोके महीयन्तमप्सरोभिः शचीपतिं । ऋषयः पर्य्युपासन्ते देवाश्च विबुधेश्वरं । १२००
सेयं त्वामनुसम्प्राप्ता विक्रमेण वसुन्धरा । निर्जिताश्च महीपाला विक्रमेण त्वयाऽनघ ।
तेषां पुराणि राष्ट्राणि गत्वा राजन् सुहृद्वृतः । भ्रातॄन्पुत्रांश्च पौत्रांश्च स्वे स्वे राज्येऽभिषेचय ।
बालानपि च गर्भस्थान् सान्त्वेन समुदाचरन् । रञ्जयन्प्रकृतीः सर्व्वाः परिपाहि वसुन्धरां ।
कुमारो नास्ति येषाञ्च कन्यास्तत्राभिषेचय । कामाशयो हि स्त्रीवर्गः शोकमेवं प्रहास्यसि ।
एवमाश्वासनं कृत्वा सर्व्वराष्ट्रेषु भारत । यजस्व वाजिमेधेन यथेन्द्रो विजयी पुरा । १२०५
अशोच्यास्ते महात्मानः क्षत्रियाः क्षत्रियर्षभ । स्वकर्म्मभिर्गता नाशं कृतान्तबलमोहिताः ।
अवाप्तः क्षत्रधर्म्मस्ते राज्यं प्राप्तमकण्टकं । रक्षस्व धर्म्मं कौन्तेय श्रेयान्यः प्रेत्य भारत ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि प्रायश्चित्तीयोपाख्याने त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
॥ युधिष्ठिर उवाच ॥ कानि कृत्वेह कर्म्माणि प्रायश्चित्तीयते नरः । किं कृत्वा मुच्यते तत्र तन्मे ब्रूहि पितामह ।
॥ व्यास उवाच ॥ अकुर्व्वन्विहितं कर्म्म प्रतिषिद्धानि चाचरन् । प्रायश्चित्तीयते ह्येवं नरो मिथ्यानुवर्त्तयन् ।
सूर्य्येणाभ्युदितो यश्च ब्रह्मचारी भवत्युत । तथा सूर्य्याभिनिर्म्मुक्तः कुनखी श्यावदन्न्यपि । १२१०
परिवित्तिः परिवेत्ता ब्रह्मघ्नो यश्च कुत्सकः । दिधिषूपपतिर्यः स्यादग्रेदिधिषुरेव च ।
अवकीर्णी भवेद्यश्च द्विजातिवधकस्तथा । अतीर्थे ब्राह्मणत्यागी तीर्थे चाप्रतिपादकः ।
ग्रामघाती च कौन्तेय मांसस्य परिविक्रयी । यश्चाग्नीन्परिमुच्येत तथैव ब्रह्मविक्रयी ।
गुरुस्त्रीवधको यश्च पूर्व्वः पूर्व्वस्तु गर्हितः । वृथापशुसमालम्भी गृहदाहस्य कारकः ।
अनृतेनोपवर्त्ती च प्रतिरोद्धा गुरोस्तथा । एतान्येनांसि सर्व्वाणि व्युत्क्रान्तसमयश्च यः । १२१५
अकार्य्याणि तु वक्ष्यामि यानि तानि निबोध मे । लोकवेदविरुद्धानि तान्येकाग्रमनाः शृणु ।
स्वधर्म्मस्य परित्यागः परधर्म्मस्य च क्रिया । अयाज्ययाजनञ्चैव तथाऽभक्ष्यस्य भक्षणं ।
शरणागतसन्त्यागो भृत्यस्याभरणं तथा । रसानां विक्रयश्चापि तिर्य्यग्योनिवधस्तथा ।

आधानादीनि कर्म्माणि शक्तिमान्न करोति यः । अप्रयच्छंश्च कर्म्माणि नित्यदेयानि भारत ।
दक्षिणानामदानञ्च ब्राह्मणस्वाभिमर्षणं । सर्व्वाण्येतान्यकार्य्याणि प्राहुर्धर्म्मविदो जनाः । १२२०
पिता विवदते पुत्रो यस्य स्याद्गुरुतल्पगः । अप्रजायन्नरव्याघ्र भवत्यधार्म्मिको नरः ।
उक्तान्येतानि कर्म्माणि विस्तरेणेतरेण च । यानि कुर्व्वन्नकुर्व्वंश्च प्रायश्चित्तीयते नरः ।
एतान्येव तु कर्म्माणि क्रियमाणानि मानवाः । येषु येषु निमित्तेषु न लिप्यन्तेऽथ तान् शृणु ।
प्रगृह्य शस्त्रमायान्तमपि वेदान्तगं रणे । जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ।
इति चाप्यत्र कौन्तेय मन्त्रो वेदेषु पठ्यते । वेदप्रमाणविहितं धर्म्मं च प्रब्रवीमि ते । १२२५
अपेतं ब्राह्मणं वृत्ताद्यो हन्यादाततायिनं । न तेन ब्रह्महा स स्यान्मन्युस्तन्मन्युमृच्छति ।
प्राणात्यये तथाऽज्ञानादाचरन्मदिरामपि । आदेशितो धर्म्मपरैः पुनः संस्कारमर्हति ।
एतत्ते सर्व्वमाख्यातं कौन्तेयाभक्ष्यभक्षणं । प्रायश्चित्तविधानेन सर्व्वमेतेन शुध्यति ।
गुरुतल्पं हि गुर्व्वर्थे न दूषयति मानवं । उद्दालकः श्वेतकेतुं जनयामास शिष्यतः ।
स्तेयं कुर्व्वंस्तु गुर्व्वर्थमापत्सु न निबध्यते । बहुशः कामकारेण न चेद्यः सम्प्रवर्त्तते । १२३०
अन्यत्र ब्राह्मणस्वेभ्य आददानो न दुष्यति । स्वयमप्राशिता यश्च न स पापेन लिप्यते ।
प्राणत्राणेऽनृतं वाच्यमात्मनो वा परस्य च । गुर्व्वर्थे स्त्रीषु चैव स्याद्विवाहकरणेषु च ।
नावर्त्तते व्रतं स्वप्ने शुक्रमोक्षे कथञ्चन । आज्यहोमः समिद्धेऽग्नौ प्रायश्चित्तं विधीयते ।
पारिवित्त्यन्तु पतिते नास्ति प्रव्रजिते तथा । भिक्षिते पारदार्य्ये च तद्धर्म्मस्य न दूषकं ।
वृथापशुसमालम्भं नैव कुर्य्यान्न कारयेत् । अनुग्रहः पशूनां हि संस्कारो विधिनोदितः । १२३५
अनर्हे ब्राह्मणे दत्तमज्ञानात्तन्न दूषकं । सत्काराणां तथा तीर्थे नित्यं वाऽप्रतिपादनं ।
स्त्रियास्तथाऽपचारिण्या निष्कृतिः स्याददूषिका । अपि सा पूयते तेन न तु भर्त्ता प्रदुष्यति ।
तत्त्वं ज्ञात्वा तु सोमस्य विक्रयः स्याददोषवान् । असमर्थस्य भृत्यस्य विसर्गः स्याददोषवान् ।
वनदाहो गवामर्थे क्रियमाणो न दूषकः । उक्तान्येतानि कर्म्माणि यानि कुर्व्वन्न दुष्यति ।
प्रायश्चित्तानि वक्ष्यामि विस्तरेणैव भारत । १२४०

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि प्रायश्चित्तीयोपाख्याने चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

॥ व्यास उवाच ॥ तपसा कर्म्मभिश्चैव प्रदानेन च भारत । पुनाति पापं पुरुषः पुनश्चेन्न प्रवर्त्तते ।
एककालं तु भुञ्जीत चरन् भैक्ष्यं स्वकर्म्मकृत् । कपालपाणिः खट्वाङ्गी ब्रह्मचारी सदोत्थितः ।
अनसूयुरधःशायी कर्म्म लोके प्रकाशयन् । पूर्णैर्द्वादशभिर्व्वर्षैर्ब्रह्महा विप्रमुच्यते ।
लक्ष्यः शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः । प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः ।
जपन्वाऽन्यतमं वेदं योजनानां शतं व्रजेत् । सर्व्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् । १२४५
धनं वा जीवनायालं गृहं वा सपरिच्छदं । मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च ।
षड्भिर्व्वर्षैः कृच्छ्रभोजी ब्रह्महा पूयते नरः । मासे मासे समश्नंस्तु त्रिभिर्व्वर्षैः प्रमुच्यते ।

संवत्सरेण मासाशी पूयते नात्र संशयः । [illegible] सर्व्वेणापि प्रपूयते ।
क्रतुना वाऽश्वमेधेन पूयते नात्र संशयः । ये चान्येऽवभृथस्नाताः केचिदेवंविधा नराः ।
ते सर्व्वे धूतपाप्मानो भवन्तीति परा श्रुतिः । ब्राह्मणार्थे हतो युद्धे मुच्यते ब्रह्महत्यया ।    १२५०
गवां शतसहस्रन्तु पात्रेभ्यः प्रतिपादयेत् । ब्रह्महा विप्रमुच्येत सर्व्वपापेभ्य एव च ।
कपिलानां सहस्राणि यो दद्यात्पञ्चविंशतिं । दोग्ध्रीणां स च पापेभ्यः सर्व्वेभ्यो विप्रमुच्यते ।
गोसहस्रं सवत्सानां दोग्ध्रीणां प्राणसंशये । साधुभ्यो वै दरिद्रेभ्यो दत्त्वा मुच्येत किल्बिषात् ।
शतं वै यस्तु काम्बोजान् ब्राह्मणेभ्यः प्रयच्छति । नियतेभ्यो महीपाल स च पापात्प्रमुच्यते ।
मनोरथन्तु यो दद्यादेकस्मा अपि भारत । न कीर्त्तयेत दत्त्वा यः स च पापात्प्रमुच्यते ।    १२५५
सुरापानं सकृत्पीत्वा योऽग्निवर्णां सुरां पिबेत् । स पावयत्यथात्मानमिह लोके परत्र च ।
मेरुप्रपातं प्रपतन् ज्वलनं वा समाविशन् । महाप्रस्थानमातिष्ठन् मुच्यते सर्व्वकिल्बिषैः ।
बृहस्पतिसवेनेष्ट्वा सुरापो ब्राह्मणः पुनः । समितिं ब्राह्मणो गच्छेदिति वै ब्राह्मणः श्रुतिः ।
भूमिप्रदानं कुर्य्याद्यः सुरां पीत्वा विमत्सरः । पुनर्न च पिबेद्राजन् संस्कृतः स च शुध्यति ।
गुरुतल्पी शिलां तप्तामायसीमभिसंविशेत् । अवकृत्यात्मनः शेफं प्रव्रजेदूर्द्ध्वदर्शनः ।    १२६०
शरीरस्य विमोक्षेण मुच्यते कर्म्मणोऽशुभात् । कर्म्मभ्यो विप्रमुच्यन्ते यताः संवत्सरं स्त्रियः ।
महाव्रतं चरेद्यस्तु दद्यात्सर्व्वस्वमेव तु । गुर्व्वर्थे वा हतो युद्धे स मुच्येत्कर्म्मणोऽशुभात् ।
अनृतेनोपचर्य्या चेत् प्रतिरोद्धा गुरोस्तथा । उपाहृत्य प्रियं तस्मै तस्मात्पापात्प्रमुच्यते ।
अवकीर्णिनिमित्तन्तु ब्रह्महत्याव्रतं चरेत् । खरचर्म्मवासाः षण्मासांस्तथा मुच्येत किल्बिषात् ।
परदारापहारी तु परस्यापहरन्वसु । संवत्सरं व्रती भूत्वा तथा मुच्येत किल्बिषात् ।    १२६५
धनन्तु यस्यापहरेत्तस्मै दद्यात्समं वसु । विविधेनाभ्युपायेन तदा मुच्येत किल्बिषात् ।
कृच्छ्राद्द्वादशरात्रेण संयतात्मा व्रते स्थितः । परिवेत्ता भवेत्पूतः परिवित्तिस्तथैव च ।
निवेश्यन्तु पुनस्तेन सदा तारयता पितॄन् । न तु स्त्रिया भवेद्दोषो न तु सा तेन लिप्यते ।
भोजनं ह्यन्तराशुद्धं चातुर्मास्ये विधीयते । स्त्रियस्तेन प्रशुध्यन्ति इति धर्म्मविदो विदुः ।
स्त्रियस्त्वाशङ्किताः पापा नोपगम्या विजानता । रजसा ता विशुध्यन्ते भस्मना भाजनं यथा ।    १२७०
पादोच्छिष्टं कांस्यं यत् गवाघ्रातमथाऽपि वा । गण्डूषोच्छिष्टमपि वा विशुध्येद्दशभिस्तु तत् ।
चतुष्पात्सकलो धर्म्मो ब्राह्मणस्य विधीयते । पादावकृष्टो राजन्ये तथा धर्म्मो विधीयते ।
तथा वैश्ये च शूद्रे च पादः पादो विधीयते । विद्यादेवंविधेनैषां गुरुलाघवनिश्चयं ।
तिर्य्यग्योनिवधं कृत्वा द्रुमांश्छित्त्वेतरान् बहून् । त्रिरात्रं वायुभक्षः स्यात् कर्म्म च प्रथयन्नरः ।
अगम्यागमने राजन् प्रायश्चित्तं विधीयते । आर्द्रवस्त्रेण षण्मासान् विहार्य्यं भस्मशायिना ।    १२७५
एष एव तु सर्व्वेषामकार्य्याणां विधिर्भवेत् । ब्राह्मणोक्तेन विधिना दृष्टान्तागमहेतुभिः ।
सावित्रीमप्यधीयीत शुचौ देशे मिताशनः । अहिंस्रो मन्दकोऽजल्पो मुच्यते सर्व्वकिल्बिषैः ।

अहःसु सततं तिष्ठेदभ्याकाशं निशां स्वपेत्। त्रिरह्नि त्रिर्निशायाञ्च सवासा जलमाविशेत्।
स्त्रीशूद्रं पतितं चापि नाभिभाषेद्व्रतान्वितः। पापान्यज्ञानतः कृत्वा मुच्येदेवंव्रतो द्विजः।
शुभाशुभफलं प्रेत्य लभते भूतसाक्षिकं। अतिरिच्येत यो यत्र तत्कर्त्ता लभते फलं। ११८०
तस्माज्ज्ञानेन तपसा कर्म्मणा च फलं शुभं। वर्द्धयेदशुभं कृत्वा यथा ह्यतिशयं कृतम्।
कुर्य्याच्छुभानि कर्म्माणि निवर्त्तेत्पापकर्म्मणः। दद्याच्चित्तञ्च वित्तानि तथा मुच्येत किल्बिषात्।
अनुरूपं हि पापस्य प्रायश्चित्तमुदाहृतं। महापातकवर्ज्जन्तु प्रायश्चित्तं विधीयते।
भक्ष्याभक्ष्येषु चान्येषु वाच्यावाच्ये तथैव च। अज्ञानज्ञानयो राजन् विहितान्यनुजानतः।
जानता तु कृतं पापं गुरु सर्व्वं भवत्युत। अज्ञानात् स्खलितो दोषः प्रायश्चित्तं विधीयते। ११८५
शक्यते विधिना पापं यथोक्तेन व्यपोहितुं। आस्तिके श्रद्दधाने च विधिरेष विधीयते।
नास्तिकाश्रद्दधानेषु पुरुषेषु कदाचन। दम्भदोषप्रधानेषु विधिरेष न दृश्यते।
शिष्टाचारश्च शिष्टश्च धर्म्मो धर्म्मभृतां वर। सेवितव्यो नरव्याघ्र प्रेत्येह च सुखेप्सुना।
स राजन्मोक्ष्यसे पापात्तेन पूर्व्वेण हेतुना। त्राणार्थं वा धनेनैषामथवा नृप कर्म्मणा।
अथवा ते घृणा काचित् प्रायश्चित्तं चरिष्यसि। मा त्वेवानार्य्यजुष्टेन मन्युना निधनं गमः। ११९०
॥ वैशम्पायन उवाच॥ एवमुक्तो भगवता धर्म्मराजो युधिष्ठिरः। चिन्तयित्वा मुहूर्त्तं तु प्रत्युवाच तपोधनं।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि प्रायश्चित्तीयोपाख्याने पञ्चत्रिंशोऽध्यायः॥ ३५॥

॥ युधिष्ठिर उवाच॥ किं भक्ष्यं ह्यभक्ष्यञ्च किञ्च देयं प्रशस्यते। किञ्च पात्रमपात्रं वा तन्मे ब्रूहि पितामह।
॥ व्यास उवाच॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। सिद्धानाञ्चैव संवादं मनोश्चैव प्रजापतेः।
ऋषयस्तु व्रतपराः समागम्य पुरा विभुं। धर्म्मं पप्रच्छुरासीनमादिकाले प्रजापतिं।
कथमन्नं कथं पात्रं दानमध्ययनं तपः। कार्य्याकार्य्यञ्च यत्सर्व्वं शंस वै त्वं प्रजापते। ११९५
तैरेवमुक्तो भगवान् मनुः स्वायम्भुवोऽब्रवीत्। शुश्रूषध्वं यथावृत्तं धर्म्मं व्याससमासतः।
अनादेशे जपो होम उपवासस्तथैव च। आत्मज्ञानं पुण्यनद्यो यत्र प्रायश्च तत्पराः।
हिष्टान्येतानि पुण्यानि पुण्याश्च धरणीभृतः। सुवर्णप्राशनमपि रत्नादिस्नानमेव च।
देवस्थानाभिगमनमाज्यप्राशनमेव च। एतानि मेध्यं पुरुषं कुर्व्वन्त्याशु न संशयः।
न गर्व्वेण भवेत्प्राज्ञः कदाचिदपि मानवः। दीर्घमायुरथेच्छन्ति त्रिरात्रं चोष्णपो भवेत्। १२००
अदत्तस्यानुपादानं दानमध्ययनं तपः। अहिंसा सत्यमक्रोध इज्या धर्म्मस्य लक्षणं।
स एव धर्म्मः सोऽधर्म्मो देशकाले प्रतिष्ठितः। आदानमनृतं हिंसा धर्म्मो ह्यावस्थिकः स्मृतः।
द्विविधौ चाप्युभावेतौ धर्म्माधर्म्मौ विजानतां। अप्रवृत्तिः प्रवृत्तिश्च द्वैविध्यं लोकवेदयोः।
अप्रवृत्तेरमर्त्त्यत्वं मर्त्त्यत्वं कर्म्मणः फलं। अशुभस्याशुभं विद्यात् शुभस्य शुभमेव च।
एतयोश्चोभयोः स्यातां शुभाशुभतया तथा। दैवञ्च दैवयुक्तं प्राणश्च प्रलयश्च ह। १२०५
अपेक्षापूर्व्वकरणादशुभानां शुभं फलं। ऊर्द्धं भवति सन्देहादिह दृष्टार्थमेव च।

अपेक्षापूर्व्वकरणात् प्रायश्चित्तं विधीयते । क्रोधमोहकृते चैव दृष्टान्तागमहेतुभिः ।
शरीराणामुपक्लेशो मनसश्च प्रियाप्रिये । तदौषधैश्च मन्त्रैश्च प्रायश्चित्तैश्च शाम्यति ।
उपवासमेकरात्रं दण्डोत्सर्गे नराधिपः । विशुध्येदात्मशुद्ध्यर्थं त्रिरात्रं तु पुरोहितः ।
क्षयं शोकं प्रकुर्व्वाणो न म्रियेत यदा नरः । शस्त्रादिभिरुपाविष्टस्त्रिरात्रं तत्र निर्द्दिशेत् । १२१०
जातिश्रेण्यधिवासानां कुलधर्म्मांश्च सर्व्वतः । वर्ज्जयन्ति च ये धर्म्मं तेषां धर्म्मो न विद्यते ।
दश वा वेदशास्त्रज्ञास्त्रयो वा धर्म्मपाठकाः । यद्ब्रूयुः कार्य्य उत्पन्ने स धर्म्मो धर्म्मसंशये ।
अनड्वान्मृत्तिका चैव तथा क्षुद्रपिपीलिकाः । श्लेष्मातकस्तथा विप्रैरभक्ष्यं विषमेव च ।
अभक्ष्या ब्राह्मणैर्मत्स्याः शल्कैर्ये वै विवर्ज्जिताः । चतुष्पात्कच्छपादन्यो मण्डूका जलजाश्च ये ।
भासा हंसाः सुपर्णाश्च चक्रवाकाः प्लवा बकाः । काको मद्गुश्च गृध्रश्च श्येनोलूकस्तथैव च । १२१५
क्रव्यादा दंष्ट्रिणः सर्व्वे चतुष्पात्पक्षिणश्च ये । येषां चोभयतो दन्ताश्चतुर्द्दंष्ट्राश्च सर्व्वशः ।
एडकाश्वखरोष्ट्रीणां सूतिकानां गवामपि । मानुषीणां मृगीणां च न पिबेद्ब्राह्मणः पयः ।
प्रेतान्नं सूतिकान्नं च यच्च किञ्चिदनिर्द्दशं । अभोज्यञ्चाप्यपेयञ्च धेन्वादुग्धमनिर्द्दशं ।
राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्च्चसं । आयुः सुवर्णकारान्नमवीरायाश्च योषितः ।
विष्ठा वार्द्धुषिकस्यान्नं गणिकान्नमथेन्द्रियं । मृष्यन्ति ये चोपपतिं स्त्रीजितान्नञ्च सर्व्वशः । १२२०
दीक्षितस्य कदर्य्यस्य क्रतुविक्रयिकस्य च । तक्ष्णश्चर्म्मावकर्त्तुश्च पुंश्चल्या रजकस्य च ।
चिकित्सकस्य यच्चान्नमभोज्यं रक्षिणस्तथा । गणग्रामाभिशस्तानां रङ्गस्त्रीजीविनां तथा ।
परिवित्तीनां पुंसाञ्च वन्दिद्यूतविदान्तथा । वामहस्ताहृतञ्चान्नं भक्तं पर्य्युषितञ्च यत् ।
सुरानुगतमुच्छिष्टमभोज्यं शेषितञ्च यत । पिष्टेक्षुशाकानां विकाराः पयसस्तथा ।
सक्तुधानाकरम्भाणां नोपभोग्याश्चिरस्थिताः । पायसं कृसरं मांसमपूपाश्च वृथाकृताः । १२२५
अपेयाश्चाप्यभक्ष्याश्च ब्राह्मणैर्गृहमेधिभिः । देवानृषीन्मनुष्यांश्च पितॄन् गृह्याश्च देवताः ।
पूजयित्वा ततः पश्चात् गृहस्थो भोक्तुमर्हति । यथा प्रव्रजितो भिक्षुस्तथैव स्वे गृहे वसेत् ।
एवं वृत्तः प्रियैर्द्दारैः संवसन् धर्म्ममाप्नुयात् । न दद्याद्यशसे दानं न भयान्नोपकारिणे ।
न नृत्यगीतशीलेषु हासकेषु च धार्म्मिकः । न मत्ते चैव नोन्मत्ते न स्तेने च न कुत्सके ।
न वाग्घीने विवर्णे वा नाङ्गहीने न वामने । न दुर्ज्जने दौष्कुले वा व्रतैर्व्वा न संस्कृते । १२३०
न श्रोत्रियमृते दानं ब्राह्मणे ब्रह्मवर्ज्जिते । असम्यक् चैव यद्दत्तमसम्यक् च प्रतिग्रहः ।
उभयं स्यादनर्थाय दातुरादातुरेव च । यथा खादिरमालम्ब्य शिलां वाऽप्यर्णवन्तरन् ।
मज्जेत मज्जतस्तद्वद्दाता यश्च प्रतीच्छति । काष्ठैरार्द्रैर्यथा वह्निरुपस्तीर्णो न दीप्यते ।
तपःस्वाध्यायचारित्रैरेवं हीनः प्रतिग्रही । कपाले यद्वदापः स्युः श्वदृतौ च यथा पयः ।
आश्रयस्थानदोषेण वृत्तहीने तथा श्रुतं । निर्म्मन्त्रो निर्व्रतो यः स्यादब्राह्मणोऽनसूयकः । १२३५
अनुक्रोशात्प्रदातव्यं दीनेष्वव्रतिकेषु च । न वै देयमनुक्रोशाद्दीनायान्तातुरेष्वपि ।

आम्नाचरितइत्येव धर्म्मइत्येव वा पुनः । निष्कारणं स्मृतं दृष्टं ब्राह्मणे ब्रह्मवर्च्चिनि ।
भवेदपावदोषेण न चात्रास्ति विचारणा । यथा दारुमयो हस्ती यथा चर्म्ममयो मृगः ।
ब्राह्मणश्चानधीयानस्त्रयस्ते नाम बिभ्रति । यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला ।
शकुनिर्व्वाऽप्यपक्षः स्यान्निर्मन्त्रो ब्राह्मणस्तथा । ग्रामधान्यं यथा शून्यं यथा कूपश्च निर्जलः । ११५०
यथा हुतमनग्नौ च तथैव स्यान्निराकृती । देवतानां पितॄणाञ्च हव्यकव्यविनाशकः ।
शत्रुरर्थहरो मूर्खो न लोकान्प्राप्तुमर्हति । एतत्ते कथितं सर्व्वं यथावृत्तं युधिष्ठिर ।
समासेन महद्ध्येतच्छ्रोतव्यं भरतर्षभ ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि व्यासवाक्ये षट्त्रिंशोऽध्यायः ॥ ३६ ॥

॥ युधिष्ठिर उवाच ॥ श्रोतुमिच्छामि भगवन् विस्तरेण महामुने । राजधर्म्मान् द्विजश्रेष्ठ चातुर्व्वर्ण्यस्य चाखिलान् ।
आपत्सु च यथानीतिः प्रणेतव्या द्विजोत्तम । धर्म्ममालम्ब्य पन्थानं विजयेयं कथं महीं । ११५५
प्रायश्चित्तकथा ह्येषा भक्ष्याभक्ष्यविवर्ज्जिता । कौतूहलानुप्रवणा हर्षं जनयतीव मे ।
धर्म्मचर्य्या च राज्यञ्च नित्यमेव विरुध्यते । एवं मुह्यति मे चेतश्चिन्तयानस्य नित्यशः ।
॥ वैशम्पायन उवाच ॥ तमुवाच महाराज व्यासो वेदविदाम्वरः । नारदं समभिप्रेक्ष्य सर्व्वज्ञानां पुरातनं ।
श्रोतुमिच्छसि चेद्धर्म्मान् निखिलेन नराधिप । प्रैहि भीष्मं महाबाहो वृद्धं कुरुपितामहं ।
स ते धर्म्मरहस्येषु संशयान्मनसि स्थितान् । छेत्ता भागीरथीपुत्त्रः सर्व्वज्ञः सर्व्वधर्म्मवित् । ११६०
जनयामास यं देवी दिव्या त्रिपथगा नदी । साक्षाद्ददर्श यो देवान् सर्व्वानिन्द्रपुरोगमान् ।
वृहस्पतिपुरोगांश्च देवर्षीनसकृत्प्रभुः । तोषयित्वोपचारेण राजनीतिमधीतवान्
उशना वेद यच्छास्त्रं यच्च देवगुरुर्द्विजः । तच्च धर्म्मं सवैयाख्यं प्राप्तवान् कुरुसत्तमः ।
भार्गवाच्च्यवनाच्चापि वेदानङ्गोपवृंहितान् । प्रतिपेदे महाबाहुर्व्वशिष्ठाच्चरितव्रतः ।
पितामहसुतं ज्येष्ठं कुमारं दीप्ततेजसं । अध्यात्मगतितत्त्वज्ञमुपाशिक्षत यः पुरा । ११६५
मार्कण्डेयमुखात्कृत्स्नं यतिधर्म्ममवाप्तवान् । रामादस्त्राणि शक्राच्च प्राप्तवान् पुरुषर्षभः ।
मृत्युरात्मेच्छया यस्य जातस्य मनुजेष्वपि । तथाऽनपत्यस्य सतः पुण्या लोका दिवि श्रुताः ।
यस्य ब्रह्मर्षयः पुण्या नित्यमासन् सभासदः । यस्य नाविदितं किञ्चित् ज्ञानज्ञेयेषु विद्यते ।
स ते वक्ष्यति धर्म्मज्ञः सूक्ष्मधर्म्मार्थतत्त्ववित् । तमभ्येहि पुरा प्राणान् स विमुञ्चति धर्म्मवित् ।
एवमुक्तस्तु कौन्तेयो दीर्घप्रज्ञो महामतिः । उवाच वदतां श्रेष्ठं व्यासं सत्यवतीसुतं । ११७०
॥ युधिष्ठिर उवाच ॥ वैशसं सुमहत्कृत्वा ज्ञातीनां रोमहर्षणं । आगस्कृत्सर्व्वलोकस्य पृथिवीनाशकारकः ।
घातयित्वा तमेवाजौ छलेनाजिह्मयोधिनं । उपसम्प्रष्टुमर्हामि तमहं केन हेतुना ।
॥ वैशम्पायन उवाच ॥ ततस्तं नृपतिश्रेष्ठं चातुर्व्वर्ण्यहितेच्छया । पुनराह महाबाहुर्यदुश्रेष्ठो महामतिः ।
॥ वासुदेव उवाच ॥ नेदानीमतिनिर्ब्बन्धं शोके त्वं कर्त्तुमर्हसि । यदाह भगवान् व्यासस्तत् कुरुष्व नृपोत्तम ।
ब्राह्मणास्त्वां महाबाहो भ्रातरश्च महौजसः । पर्ज्जन्यमिव घर्म्मान्ते नाथमाना उपासते । ११७५

हतशिष्टाश्च राजानः कृत्स्नं चैव समागतं। चातुर्व्वर्ण्यं महाराज राष्ट्रं ते कुरुजाङ्गलं।
प्रियार्थमपि चैतेषां ब्राह्मणानां महात्मनां। नियोगादस्य च गुरोर्व्यासस्यामिततेजसः।
सुहृदामस्मदादीनां द्रौपद्याश्च परन्तप। कुरु प्रियममित्रघ्न लोकस्य च हितं कुरु।
॥ वैशम्पायन उवाच ॥ एवमुक्तः स कृष्णेन राजा राजीवलोचनः। हितार्थं सर्व्वलोकस्य समुत्तस्थौ महामनाः।
सोऽनुनीतो नरव्याघ्रो विष्टरश्रवसा स्वयं। द्वैपायनेन च तथा देवस्थानेन जिष्णुना। १२७०
एतैरन्यैश्च बहुभिरनुनीतो युधिष्ठिरः। व्यजहान्मानसं दुःखं सन्तापञ्च महायशाः।
श्रुतवाक्यः श्रुतनिधिः श्रुतश्रव्यविशारदः। ततः स मनसः शान्तिमगच्छत्पाण्डुनन्दनः।
स तैः परिवृतो राजा नक्षत्रैरिव चन्द्रमाः। धृतराष्ट्रं पुरस्कृत्य स्वपुरं प्रविवेश ह।
प्रविविक्षुः स धर्म्मज्ञः कुन्तीपुत्त्रो युधिष्ठिरः। अर्च्चयामास देवांश्च ब्राह्मणांश्च सहस्रशः।
ततो नवं रथं शुभ्रं कम्बलाजिनसंवृतं। युक्तं षोडशभिर्गोभिः पाण्डरैः शुभलक्षणैः। १२७५
मन्त्रैरभ्यर्च्चितं पुण्यैः स्तूयमानश्च वन्दिभिः। आरुरोह रथञ्चैव सोमोऽमृतमयं यथा।
जग्राह रश्मीन् कौन्तेयो भीमो भीमपराक्रमः। अर्ज्जुनः पाण्डुरं छत्रं धारयामास भानुमत्।
ध्रियमाणञ्च तच्छत्रं पाण्डुरं रथमूर्द्धनि। शुशुभे तारकाकीर्णं सितमभ्रमिवाम्बरे।
चामरव्यजने त्वस्य वीरौ जगृहतुस्तदा। चन्द्ररश्मिप्रभे शुभ्रे माद्रीपुत्त्रावलङ्कृते।
ते पञ्च रथमास्थाय भ्रातरः समलङ्कृताः। भूतानीव समस्तानि राजन् ददृशिरे तदा। १२८०
आस्थाय तु रथं शुभ्रं युक्तमश्वैर्मनोजवैः। अन्वयात्पृष्ठतो राजन् युयुत्सुः पाण्डवाग्रजं।
रथं हेममयं शुभ्रं शैव्यसुग्रीवयोजितं। सह सात्यकिना कृष्णः समास्थायान्वयात्कुरून्।
नरयानेन तु ज्येष्ठः पिता पार्थस्य भारत। अग्रतो धर्म्मराजस्य गान्धारीसहितो ययौ।
कुरुस्त्रियश्च ताः सर्व्वाः कुन्ती कृष्णा तथैव च। यानैरुच्चावचैर्जग्मुर्व्विदुरेण पुरस्कृताः।
ततो रथाश्च बहुला नागाश्च समलङ्कृताः। पादाताश्च हयाश्चैव पृष्ठतः समनुव्रजन्। १२८५
ततो वैतालिकैः सूतैर्मागधैश्च सुभाषितैः। स्तूयमानो ययौ राजा नगरं नागसाह्वयं।
तत्प्रयाणं महाबाहोर्ब्बभूवाप्रतिमं भुवि। आकुलाकुलमुत्कृष्टं हृष्टपुष्टजनाकुलं।
अभियाने तु पार्थस्य नरैर्नगरवासिभिः। नगरं राजमार्गश्च यथावत्समलङ्कृतं।
पाण्डुरेण च माल्येन पताकाभिश्च मेदिनी। संस्कृता राजमार्गोऽभूद्धूपनैश्च प्रधूपितः।
अथ चूर्णैश्च गन्धानां नानापुष्पप्रियङ्गुभिः। माल्यदामभिरासक्तै राजवेश्माभिसंवृतं। १२९०
कुम्भाश्च नगरद्वारि वारिपूर्णा नवा दृढाः। कन्याः सुमनसो गौराः स्थापितास्तत्र तत्र ह।
तथा स्वलङ्कृतद्वारं नगरं पाण्डुनन्दनः। स्तूयमानः शुभैर्व्वाक्यैः प्रविवेश सुहृद्वृतः।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि युधिष्ठिरस्य पुरप्रवेशे सप्तविंशोऽध्यायः ॥ २७ ॥
॥ वैशम्पायन उवाच ॥ प्रवेशने तु पार्थानां जनानां पुरवासिनां। दिदृक्षूणां सहस्राणि समाजग्मुः सहस्रशः।
स राजमार्गः शुशुभे समलङ्कृतचत्वरः। यथा चन्द्रोदये राजन् वर्द्धमानो महोदधिः।

अट्टानि राजमार्गेषु रत्नवन्ति महान्ति च। प्राकम्पन्तीव भारेण स्त्रीणां पूर्णानि भारत। १३९९
ताः शनैरिव सव्रीडं प्रशशंसुर्युधिष्ठिरं। भीमसेनार्जुनौ चैव माद्रीपुत्रौ च पाण्डवौ।
धन्या त्वमसि पाञ्चालि या त्वं पुरुषसत्तमान्। उपतिष्ठसि कल्याणि महर्षीनिव गौतमी।
तव कर्म्माण्यमोघानि व्रतचर्य्या च भाविनि। इति कृष्णां महाराज प्रशशंसुस्तदा स्त्रियः।
प्रशंसावचनैस्तासां मिथः शब्दैश्च भारत। प्रीतिजैश्च तदा शब्दैः पुरमासीत्समाकुलं।
तमतीत्य यथायुक्तं राजमार्गं युधिष्ठिरः। अलङ्कृतं शोभमानमुपायाद्राजवेश्म ह। १४००
ततः प्रकृतयः सर्व्वाः पौरजानपदास्तदा। ऊचुः कर्णसुखा वाचः समुपेत्य ततस्ततः।
दिष्ट्या जयसि राजेन्द्र शत्रूञ्छत्रुनिषूदन। दिष्ट्या राज्यं पुनः प्राप्तं धर्म्मेण च बलेन च।
भव नस्त्वं महाराज राजेह शरदां शतं। प्रजाः पालय धर्म्मेण यथेन्द्रस्त्रिदिवं तथा।
एवं राजकुलद्वारि मङ्गलैरभिपूजितः। आशीर्व्वादान् द्विजैरुक्तान् प्रतिगृह्य समन्ततः।
प्रविश्य भवनं राजा देवराजगृहोपमं। श्रुत्वा विजयसंयुक्तं रथात्पश्चादवातरत्। १४०५
प्रविश्याभ्यन्तरं श्रीमान् दैवतान्यभिगम्य च। पूजयामास रत्नैश्च गन्धमाल्यैश्च सर्व्वशः।
निश्चक्राम ततः श्रीमान् पुनरेव महायशाः। ददर्श ब्राह्मणांश्चैव सोऽभिरूपानवस्थितान्।
स संवृतस्तदा विप्रैराशीर्व्वादविवक्षुभिः। शुशुभे विमलश्चन्द्रस्तारागणवृतो यथा।
तांस्तु वै पूजयामास कौन्तेयो विधिवद्द्विजान्। धौम्यं गुरुं पुरस्कृत्य ज्येष्ठं पितरमेव च।
सुमनोमोदकै रत्नैर्हिरण्येन च भूरिणा। गोभिर्व्वस्त्रैश्च राजेन्द्र विविधैश्च किमिच्छकैः। १४१०
ततः पुण्याहघोषोऽभूद्दिवं स्तब्ध्वेव भारत। सुहृदां प्रीतिजननः पुण्यः श्रुतिसुखावहः।
हंसवन्नेदुषां राजा द्विजानां तत्र भारतीं। शुश्रुवे वेदविदुषां पुष्कलार्थपदाक्षरां।
ततो दुन्दुभिनिर्घोषः शङ्खानाञ्च मनोरमः। जयं प्रवदतां तत्र स्वनः प्रादुरभून्नृप।
निःशब्दे च स्थिते तत्र ततो विप्रजने पुनः। राजानं ब्राह्मणच्छद्मा चार्व्वाको राक्षसोऽब्रवीत्।
तत्र दुर्य्योधनसखा भिक्षुरूपेण संवृतः। साक्षः शिखी त्रिदण्डी च धृष्टो विगतसाध्वसः। १४१५
वृतः सर्व्वैस्तथा विप्रैराशीर्व्वादविवक्षुभिः। परं सहस्रै राजेन्द्र तपोनियमसंश्रितैः।
स दुष्टः पापमाशंसुः पाण्डवानां महात्मनां। अनामन्त्र्यैव तान् विप्रांस्तमुवाच महीपतिं।
॥ चार्व्वाक उवाच ॥ इमे प्राहुर्द्विजाः सर्व्वे समारोप्य वचो मयि। धिग्भवन्तं कुनृपतिं ज्ञातिघातिनमस्तु वै।
किं तेन स्याद्धि कौन्तेय कृत्वेमं ज्ञातिसङ्क्षयं। घातयित्वा गुरूंश्चैव मृतं श्रेयो न जीवितं।
इति ते वै द्विजाः श्रुत्वा तस्य दुष्टस्य रक्षसः। विव्यथुश्चुक्रुशुश्चैव तस्य वाक्यप्रधर्षिताः। १४२०
ततस्ते ब्राह्मणाः सर्व्वे स च राजा युधिष्ठिरः। व्रीडिताः परमोद्विग्नास्तूष्णीमासन् विशाम्पते।
॥ युधिष्ठिर उवाच ॥ प्रसीदन्तु भवन्तो मे प्रणतस्याभियाचतः। प्रत्यासन्नव्यसनिनं न मां धिक्कर्त्तुमर्हथ।
॥ वैशम्पायन उवाच ॥ ततो राजन् ब्राह्मणास्ते सर्व्व एव विशाम्पते। ऊचुर्नैतद्वचोऽस्माकं श्रीरस्तु तव पार्थिव।
जज्ञुश्चैव महात्मानस्ततस्तं ज्ञानचक्षुषा। ब्राह्मणा वेदविद्वांसस्तपोभिर्व्विमलीकृताः।

॥ ब्राह्मणा ऊचुः ॥ एष दुर्य्योधनसखा चार्व्वाको नाम राक्षसः । परिव्राजकरूपेण हितं तस्य चिकीर्षति ॥ १४२५

न वयं ब्रूम धर्म्मात्मन् व्येतु ते भयमीदृशं । उपतिष्ठतु कल्याणं भवन्तं भ्रातृभिः सह ।

॥ वैशम्पायन उवाच ॥ ततस्ते ब्राह्मणाः सर्व्वे हुङ्कारैः क्रोधमूर्च्छिताः । निर्भर्त्सयन्तः शुचयो निजघ्नुः पापराक्षसं ।

स पपात विनिर्द्दग्धस्तेजसा ब्रह्मवादिनां । महेन्द्राशनिनिर्द्दग्धः पादपोऽङ्कुरवानिव ।

पूजिताश्च ययुर्व्विप्रा राजानमभिनन्द्य तं । राजा च हर्षमापेदे पाण्डवः ससुहृज्जनः ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि चार्व्वाकवधे अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

॥ वैशम्पायन उवाच ॥ ततस्तत्र तु राजानं तिष्ठन्तं भ्रातृभिः सह । उवाच देवकीपुत्त्रः सर्व्वदर्शी जनार्द्दनः । १४३०

॥ वासुदेव उवाच ॥ ब्राह्मणास्तात लोकेऽस्मिन्नर्च्चनीयाः सदा मम । एते भूमिचरा देवा वाग्विषाः सुप्रसादकाः ।

पुरा कृतयुगे राजंश्चार्व्वाको नाम राक्षसः । तपस्तेपे महाबाहो बदर्य्यां बहुवार्षिकं ।

वरेण च्छन्द्यमानश्च ब्रह्मणा च पुनः पुनः । अभयं सर्व्वभूतेभ्यो वरयामास भारत ।

द्विजावमानादन्यत्र प्रादाद्वरमनुत्तमं । अभयं सर्व्वभूतेभ्यो ददौ तस्मै जगत्पतिः ।

स तु लब्धवरः पापो देवानमितविक्रमः । राक्षसस्तापयामास तीव्रकर्म्मा महाबलः । १४३५

ततो देवाः समेताश्च ब्रह्माणमिदमब्रुवन् । वधाय रक्षसस्तस्य बलविप्रकृतास्तदा ।

तानुवाचाव्ययो देवो विहितस्तत्र वै मया । यथाऽस्य भविता मृत्युरचिरेणेति भारत ।

राजा दुर्य्योधनो नाम सखाऽस्य भविता नृषु । तस्य स्नेहावबद्धोऽसौ ब्राह्मणानवमंस्यते ।

तत्रैनं रुषिता विप्रा विप्रकारप्रधर्षिताः । धक्ष्यन्ति वाग्बलाः पापं ततो नाशं गमिष्यति ।

स एष निहतः शेते ब्रह्मदण्डेन राक्षसः । चार्व्वाको नृपतिश्रेष्ठ मा शुचो भरतर्षभ । १४४०

हतास्ते क्षत्त्रधर्म्मेण ज्ञातयस्तव पार्थिव । स्वर्गताश्च महात्मानो वीराः क्षत्त्रियपुङ्गवाः ।

स त्वमातिष्ठ कार्य्याणि मा तेऽभूद्ग्लानिरच्युत । शत्रून् जहि प्रजा रक्ष द्विजांश्च परिपूजय ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि चार्व्वाकवधोपाख्याने ऊनचत्वारिंशोऽध्यायः ॥ ३९ ॥

॥ वैशम्पायन उवाच ॥ ततः कुन्तीसुतो राजा गतमन्युर्गतज्वरः । काञ्चने प्राङ्मुखो हृष्टो न्यषीदत्परमासने ।

तमेवाभिमुखौ पीठे प्रदीप्ते काञ्चने शुभे । सात्यकिर्व्वासुदेवश्च निषीदतुररिन्दमौ ।

मध्ये कृत्वा तु राजानं भीमसेनार्जुनावुभौ । निषीदतुर्महात्मानौ श्लक्ष्णयोर्मणिपीठयोः । १४४५

दान्ते सिंहासने शुभ्रे जाम्बूनदविभूषिते । पृथाऽपि सहदेवेन सहास्ते नकुलेन च ।

सुधर्म्मा विदुरो धौम्यो धृतराष्ट्रश्च कौरवः । निषेदुर्ज्वलनाकारेष्वासनेषु पृथक् पृथक् ।

युयुत्सुः सञ्जयश्चैव गान्धारी च यशस्विनी । धृतराष्ट्रो यतो राजा ततः सर्व्वे समाविशन् ।

तत्रोपविष्टो धर्म्मात्मा श्वेताः सुमनसोऽस्पृशत् । स्वस्तिकानक्षतान् भूमिं सुवर्णं रजतं मणिं ।

ततः प्रकृतयः सर्व्वाः पुरस्कृत्य पुरोहितं । ददृशुर्धर्म्मराजानमादाय बहुमङ्गलं । १४५०

पृथिवीञ्च सुवर्णञ्च रत्नानि विविधानि च । आभिषेचनिकं भाण्डं सर्व्वसम्भारसम्भृतं ।

काञ्चनौदुम्बरास्तत्र राजताः पृथिवीमयाः । पूर्णाः कुम्भाः सुमनसो लाजा बर्हींषि गोरसं ।

शमीपिप्पलपालाशसमिधो मधुसर्पिषी । स्रुव औदुम्बरः शङ्खस्तथा हेमविभूषितः ।
दाशार्हेणाभ्यनुज्ञातस्तत्र धौम्यः पुरोहितः । प्रागुदक्प्रवणे वेदीं लक्षणेनोपलिख्य च ।
व्याघ्रचर्म्मोत्तरे शुक्ले सर्व्वतोभद्र आसने । दृढपादप्रतिष्ठाने हुताशनसमत्विषि । १४५५
उपवेश्य महात्मानं कृष्णाञ्च द्रुपदात्मजां । जुहाव पावकं धीमान् विधिमन्त्रपुरस्कृतं ।
तत उत्थाय दाशार्हः शङ्खमादाय पूजितं । अभ्यषिञ्चत्पतिं पृथ्व्याः कुन्तीपुत्रं युधिष्ठिरं ।
धृतराष्ट्रश्च राजर्षिः सर्व्वाः प्रकृतयस्तथा । अनुज्ञातोऽथ कृष्णेन भ्रातृभिः सह पाण्डवः ।
पाञ्चजन्याभिषिक्तश्च राजाऽमृतमुखोऽभवत् । ततोऽनु वादयामासुः पणवानकदुन्दुभीन् ।
धर्म्मराजोऽपि तत्सर्व्वं प्रतिजग्राह धर्म्मतः । पूजयामास तांश्चापि विधिवद्भूरिदक्षिणः । १४६०
ततो निष्कसहस्रेण ब्राह्मणान् स्वस्ति वाचयन् । वेदाध्ययनसम्पन्नान् धृतिशीलसमन्वितान् ।
ते प्रीता ब्राह्मणा राजन् स्वस्त्यूचुर्जयमेव च । हंसा इव च नर्द्दन्तः प्रशशंसुर्युधिष्ठिरं ।
युधिष्ठिर महाबाहो दिष्ट्या जयसि पाण्डव । दिष्ट्या स्वधर्म्मं प्राप्तोऽसि विक्रमेण महाद्युते ।
दिष्ट्या गाण्डीवधन्वा च भीमसेनश्च पाण्डवः । त्वञ्चापि कुशली राजन् माद्रीपुत्रौ च पाण्डवौ ।
मुक्ता वीरक्षयात्तस्मात्सङ्ग्रामाद्विजितद्विषः । क्षिप्रमुत्तरकार्य्याणि कुरु सर्व्वाणि भारत । १४६५
ततः प्रत्यर्चितः सद्भिर्धर्म्मराजो युधिष्ठिरः । प्रतिपेदे महद्राज्यं सुहृद्भिः सह भारत ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि युधिष्ठिराभिषेके चत्वारिंशोऽध्यायः ॥ ४० ॥

॥ वैशम्पायन उवाच ॥ प्रकृतीनाञ्च तद्वाक्यं देशकालोपबृंहितं । श्रुत्वा युधिष्ठिरो राजा सोऽन्तरं प्रत्यभाषत ।
धन्याः पाण्डुसुता नूनं तेषां ब्राह्मणपुङ्गवाः । तथ्यान्वाप्यथ वातथ्यान् गुणानाहुः समागताः ।
अनुग्राह्या वयं नूनं भवतामिति मे मतिः । यदेवं गुणसम्पन्नानस्मान् ब्रूथ विमत्सराः ।
धृतराष्ट्रो महाराजः पिता मे दैवतं परं । शासनेऽस्य प्रिये चैव स्थेयं मत्प्रियकाङ्क्षिभिः । १४७०
एतदर्थं हि जीवामि कृत्वा ज्ञातिवधं महत् । अस्य शुश्रूषणं कार्य्यं मया नित्यमतन्द्रिणा ।
यदि चाहमनुग्राह्यो भवतां सुहृदां तथा । धृतराष्ट्रे यथा पूर्व्वं वृत्तिं वर्त्तितुमर्हथ ।
एष नाथो हि जगतो भवताञ्च मया सह । अस्यैव पृथिवी कृत्स्ना पाण्डवाः सर्व्व एव च ।
एतन्मनसि कर्त्तव्यं भवद्भिर्व्वचनं मम । अनुज्ञाप्याथ तान् राजा यथेष्टं गम्यतामिति ।
पौरजानपदान् सर्व्वान् विसृज्य कुरुनन्दनः । यौवराज्येन कौन्तेयं भीमसेनमयोजयत् । १४७५
मन्त्रे च निश्चये चैव षाड्गुण्यस्य च चिन्तने । विदुरं बुद्धिसम्पन्नं प्रीतिमान् सुसमादिशत् ।
कृताकृतपरिज्ञाने तथायव्ययचिन्तने । सञ्जयं योजयामास वृद्धं सर्व्वगुणैर्युतं ।
बलस्य परिमाणे च भक्तवेतनयोस्तथा । नकुलं व्यादिशद्राजा कर्म्मणाञ्चान्ववेक्षणे ।
परचक्रोपरोधे च दृप्तानाञ्चावमर्द्दने । युधिष्ठिरो महाराजः फाल्गुनं व्यादिदेश ह ।
द्विजानां देवकार्य्येषु कार्य्येष्वन्येषु चैव ह । धौम्यं पुरोधसां श्रेष्ठं नित्यमेव समादिशत् । १४८०
सहदेवं समीपस्थं नित्यमेव समादिशत् । तेन गोप्यो हि नृपतिः सर्व्वावस्थो विशाम्पते ।

यान्यानमन्यद्योग्यांश्च येषु येष्विह कर्म्मसु । तांस्तांस्तेष्वेव युयुजे प्रीयमाणो महीपतिः ।
विदुरं सञ्जयञ्चैव युयुत्सुञ्च महामतिं । अब्रवीत् परवीरघ्नो धर्म्मात्मा धर्म्मवत्सलः ।
उत्थायोत्थाय तत्कार्य्यमस्य राज्ञः पितुर्म्मम । सर्व्वं भवद्भिः कर्त्तव्यमप्रमत्तैर्यथायथं ।
पौरजानपदानाञ्च यानि कार्य्याणि सर्व्वशः । राजानं समनुज्ञाप्य तानि कार्य्याणि भागशः । १४८८

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि भीमादिकर्म्मनियोगे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

॥ वैशम्पायन उवाच ॥ ततो युधिष्ठिरो राजा ज्ञातीनां ये हता युधि । श्राद्धानि कारयामास तेषां पृथगुदारधीः ।
धृतराष्ट्रो ददौ राजा पुत्त्राणामौर्द्ध्वदेहिकं । सर्व्वकामगुणोपेतमन्नं गाश्च धनानि च ।
रत्नानि च विचित्राणि महार्हाणि महायशाः । युधिष्ठिरस्तु द्रोणस्य कर्णस्य च महात्मनः ।
धृष्टद्युम्नाभिमन्युभ्यां हैडिम्बस्य च रक्षसः । विराटप्रभृतीनाञ्च सुहृदामुपकारिणां ।
द्रुपदद्रौपदेयानां द्रौपद्या सहितो ददौ । ब्राह्मणानां सहस्राणि पृथगेकैकमुद्दिशन् । १४९०
धनैश्च रत्नैश्च गोभिश्च वस्त्रैश्च समतर्पयत् । ये चान्ये पृथिवीपाला येषां नास्ति सुहृज्जनः ।
उद्दिश्योद्दिश्य तेषाञ्च चक्रे राजौर्द्ध्वदेहिकं । सभाः प्रपाश्च विविधास्तडागानि च पाण्डवः ।
सुहृदां कारयामास सर्व्वेषामौर्द्ध्वदेहिकं । स तेषामनृणो भूत्वा गत्वा लोकेष्ववाच्यतां ।
कृतकृत्योऽभवद्राजा प्रजा धर्म्मेण पालयन् । धृतराष्ट्रं यथापूर्व्वं गान्धारीं विदुरं तथा ।
सर्व्वांश्च कौरवामात्यान् भृत्यांश्च समपूजयत् । याश्च तत्र स्त्रियः काश्चिद्धतवीरा हतात्मजाः । १४९५
सर्व्वास्ताः कौरवो राजा सम्पूज्यापालयद्घृणी । दीनान्धकृपणानाञ्च गृहाच्छादनभोजनैः ।
आनृशंस्यपरो राजा चकारानुग्रहं प्रभुः । स विजित्य महीं कृत्स्नामानृण्यं प्राप्य वैरिषु ।
निःसपत्नः सुखी राजा विजहार युधिष्ठिरः ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि श्राद्धक्रियोपाख्याने द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

॥ वैशम्पायन उवाच ॥ अभिषिक्तो महाप्राज्ञो राज्यं प्राप्य युधिष्ठिरः । दाशार्हं पुण्डरीकाक्षमुवाच प्राञ्जलिः शुचिः ।
तव कृष्ण प्रसादेन नयेन च बलेन च । बुद्ध्या च यदुशार्द्दूल तथा विक्रमणेन च । १५००
पुनः प्राप्तमिदं राज्यं पितृपैतामहं मया । नमस्ते पुण्डरीकाक्ष पुनः पुनररिन्दम ।
त्वामेकमाहुः पुरुषं त्वामाहुः सात्वतां गतिं । नामभिस्त्वां बहुविधैः स्तुवन्ति प्रयता द्विजाः ।
विश्वकर्म्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसम्भव । विष्णो जिष्णो हरे कृष्ण वैकुण्ठ पुरुषोत्तम ।
अदित्याः सप्तधा त्वन्तु पुराणे गर्भतां गतः । पृश्निगर्भस्त्वमेवैकस्त्रियुगं त्वां वदन्त्यपि ।
शुचिश्रवा हृषीकेशो घृतार्च्चिर्हंस उच्यसे । त्रिचक्षुः शम्भुरेकस्त्वं विभुर्दामोदरोऽपि च । १५०५
वराहोऽग्निर्बृहद्भानुर्वृषभस्तार्क्ष्यलक्षणः । अनीकसाहः पुरुषः शिपिविष्ट उरुक्रमः ।
वरिष्ठ उग्रसेनानीः सत्यो वाजसनिर्गुहः । अच्युतश्च्यावनोऽरीणां संस्कृतिर्विकृतिर्वृषः ।
ऊर्द्ध्ववर्त्मा त्वमेवाद्रिर्वृषदर्भो वृषाकपिः । सिन्धुर्व्विधर्म्मस्त्रिककुत् त्रिधामा त्रिदिवाच्युतः ।
सम्राट विराट् स्वराट् चैव सुरराजो भवोद्भवः । विभुर्भूरभिभूः कृष्णः कृष्णवर्त्मा त्वमेव च ।

त्रिपृष्ठस्त्रिधामावर्त्तः कपिलस्त्वञ्च वामनः। यज्ञो ध्रुवः पतङ्गश्च यज्ञसेनस्त्वमुच्यसे। १४१०
शिखण्डी नहुषो बभ्रुर्दिवस्पृक् त्वं पुनर्व्वसुः। सुबभ्रुरुक्मयज्ञस्त्वं सुषेणो दुन्दुभिस्तथा।
गभस्तिनेमिः श्रीपद्मः पुष्करः पुष्पधारणः। ऋतुर्व्विभुः सर्व्वसूक्ष्मश्चारित्रञ्चैव पठ्यसे।
अम्भोनिधिस्त्वं ब्रह्मा त्वं पवित्रं धाम धामवित्। हिरण्यगर्भं त्वामाहुः स्वधा स्वाहा च केशवः।
योनिस्त्वमस्य प्रलयश्च कृष्ण त्वमेवेदं सृजसि विश्वमग्रे। विश्वञ्चेदं त्वद्वशे विश्वयोने नमोऽस्तु ते शार्ङ्गचक्रासिपाणे।
एवं स्तुतो धर्म्मराजेन कृष्णः सभामध्ये प्रीतिमान्पुष्कराक्षः। तमभ्यनन्दद्भारतं पुष्कलाभिर्व्वाग्भिर्ज्येष्ठं पाण्डवं यादवाग्र्यः। १४११
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि वासुदेवस्तुतौ त्रिचत्वारिंशोऽध्यायः॥ ४३ ॥
॥ वैशम्पायन उवाच ॥ ततो विसर्ज्जयामास सर्व्वाः प्रकृतयो नृपः। विविशुश्चाभ्यनुज्ञाता यथा स्वानि गृहाणि ते।
ततो युधिष्ठिरो राजा भीमं भीमपराक्रमं। सान्त्वयन्नब्रवीच्छ्रीमानर्ज्जुनं यमजौ तथा।
शत्रुभिर्व्विविधैः शस्त्रैः क्षतदेहा महारणे। श्रान्ता भवन्तः सुभृशं तापिताः शोकमन्युभिः।
अरण्ये दुःखवसतीर्मत्कृते भरतर्षभाः। भवद्भिरनुभूता हि यथा कुपुरुषैस्तथा।
यथासुखं यथाजोषं जयोऽयमनुभूयतां। विश्रान्ताँल्लब्धविज्ञानान् श्वः समेतास्मि वः पुनः। १४२०
ततो दुर्य्योधनगृहं प्रासादैरुपशोभितं। बहुरत्नसमाकीर्णं दासीदाससमाकुलं।
धृतराष्ट्राभ्यनुज्ञातं भ्रात्रा दत्तं वृकोदरः। प्रतिपेदे महाबाहुर्म्मन्दिरं मघवानिव।
यथा दुर्य्योधनगृहं तथा दुःशासनस्य तु। प्रासादमालासंयुक्तं हेमतोरणभूषितं।
दासीदाससुसम्पूर्णं प्रभूतधनधान्यवत्। प्रतिपेदे महाबाहुरर्ज्जुनो राजशासनात्।
दुर्म्मर्षणस्य भवनं दुःशासनगृहाद्वरं। कुवेरभवनप्रख्यं मणिहेमविभूषितं। १४२५
नकुलाय वरार्हाय कर्षिताय महावने। ददौ प्रीतो महाराज धर्म्मपुत्रो युधिष्ठिरः।
दुर्मुखस्य च वेश्माग्र्यं श्रीमत्कनकभूषणं। पूर्णं पद्मदलाक्षीणां स्त्रीणां शयनसङ्कुलं।
प्रददौ सहदेवाय सततं प्रियकारिणे। मुमुदे तच्च लब्ध्वा स कैलासं धनदो यथा।
युयुत्सुर्व्विदुरश्चैव सञ्जयश्च विशाम्पते। सुधर्म्मा चैव धौम्यश्च यथास्वं जग्मुरालयान्।
सह सात्यकिना शौरिरर्ज्जुनस्य निवेशनं। विवेश पुरुषव्याघ्रो व्याघ्रो गिरिगुहामिव। १४३०
तत्र भक्षान्नपानैस्ते मुदिताः सुसुखोषिताः। सुखप्रबुद्धा राजानमुपतस्थुर्युधिष्ठिरं।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि गृहविभागे चतुश्चत्वारिंशोऽध्यायः॥ ४४ ॥
॥ जनमेजय उवाच ॥ प्राप्य राज्यं महाबाहुर्धर्म्मपुत्रो युधिष्ठिरः। यदन्यदकरोद्विप्र तन्मे वक्तुमिहार्हसि।
भगवान्वा हृषीकेशस्त्रैलोक्यस्य परो गुरुः। ऋषे यदकरोद्वीरस्तच्च व्याख्यातुमर्हसि।
॥ वैशम्पायन उवाच ॥ शृणु तत्त्वेन राजेन्द्र कीर्त्त्यमानं मयानघ। वासुदेवं पुरस्कृत्य यदकुर्व्वत पाण्डवाः।
प्राप्य राज्यं महाराज कुन्तीपुत्रो युधिष्ठिरः। चातुर्व्वर्ण्यं यथायोग्यं स्वे स्वे स्थाने न्यवेशयत्। १४३५
ब्राह्मणानां सहस्रञ्च स्नातकानां महात्मनां। सहस्रं निष्कमेकैकं दापयामास पाण्डवः।
तथानुजीविनो भृत्यान् संश्रितानतिथीनपि। कामैः सन्तर्पयामास कृपणांस्तर्क्ककानपि

पुरोहिताय धौम्याय प्रादादयुतशः स गाः । धनं सुवर्णं रजतं वासांसि विविधान्यपि ।
कृपाय च महाराज गुरुवृत्तिमवर्त्तत । विदुराय च राजासौ पूजाञ्चक्रे यतव्रतः ।
भक्ष्यान्नपानैर्व्विविधैर्व्वासोभिः शयनासनैः । सर्व्वान् सन्तोषयामास संश्रितान् ददताम्वरः । १५४०
लब्धप्रशमनं कृत्वा स राजा राजसत्तम । युयुत्सोर्धार्त्तराष्ट्रस्य पूजाञ्चक्रे महायशाः ।
धृतराष्ट्राय तद्राज्यं गान्धार्य्यै विदुराय च । निवेद्य सुस्थवद्राजा सुखमास्ते युधिष्ठिरः ।
तथा सर्व्वं सनगरं प्रसाद्य भरतर्षभ । वासुदेवं महात्मानमभ्यगच्छत् कृताञ्जलिः ।
ततो महति पर्य्यङ्के मणिकाञ्चनभूषिते । ददर्श कृष्णमासीनं नीलमेघसमद्युतिं ।
जाज्वल्यमानं वपुषा दिव्याभरणभूषितं । पीतकौशेयवसनं हेम्नैवोपगतं मणिं । १५४५
कौस्तुभेनोरसिस्थेन मणिनाभिविराजितं । उद्यतेवोदयं शैलं सूर्य्येणाभिविराजितं ।
नौपम्यं विद्यते तस्य त्रिषु लोकेषु किञ्चन । सोऽभिगम्य महात्मानं विष्णुं पुरुषविग्रहं ।
उवाच मधुरं राजा स्मितपूर्व्वमिदं तदा । सुखेन ते निशा कच्चिद्व्युष्टा बुद्धिमताम्वर ।
कच्चित् ज्ञानानि सर्व्वाणि प्रसन्नानि तवाच्युत । तवैवोपश्रिता देवी बुद्धिर्बुद्धिमताम्वर ।
वयं राज्यमनुप्राप्ताः पृथिवी च वशे स्थिता । तव प्रसादाद्भगवंस्त्रिलोकगतिविक्रम । १५५०
जयं प्राप्ता यशश्चाग्र्यं न च धर्म्मच्युता वयं । तं तथा भाषमाणन्तु धर्म्मराजमरिन्दमं ।
नोवाच भगवान् किञ्चिद्ध्यानमेवान्वपद्यत ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि युधिष्ठिरप्रश्ने पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

॥ युधिष्ठिर उवाच ॥ किमिदं परमाश्चर्य्यं ध्यायस्यमितविक्रम । कच्चिल्लोकत्रयस्यास्य स्वस्ति लोकपरायण ।
चतुर्थं ध्यानमार्गं त्वमालम्ब्य पुरुषर्षभ । अपक्रान्तो यतो देवस्तेन मे विस्मितं मनः ।
निगृहीतो हि वायुस्ते पञ्चकर्म्मा शरीरगः । इन्द्रियाणि प्रसन्नानि मनसि स्थापितानि ते । १५५५
वाक् च सत्वञ्च गोविन्द बुद्धौ संवेशितानि ते । सर्व्वे चैव गुणादेव क्षेत्रे क्षेत्रे निवेशिताः ।
नेङ्गन्ति तव रोमाणि स्थिरा बुद्धिस्तथा मनः । काष्ठकुड्यशिलाभूतो निरीहश्चासि माधव ।
यथा दीपो निवातस्थो निरिङ्गो ज्वलते पुनः । तथासि भगवन्देव पाषाणइव निश्चलः ।
यदि श्रोतुमिहार्हामि न रहस्यञ्च ते यदि । छिन्धि मे संशयं देव प्रपन्नायाभियाचते ।
त्वं हि कर्त्ता विकर्त्ता च क्षरश्चैवाक्षरश्च हि । अनादिनिधनश्चाद्यस्त्वमेव पुरुषोत्तम । १५६०
त्वत्प्रपन्नाय भक्ताय शिरसा प्रणताय च । ध्यानस्यास्य यथातत्त्वं ब्रूहि धर्म्मभृताम्वर ।
ततः स्वगोचरे न्यस्य मनोबुद्धीन्द्रियाणि सः । स्मितपूर्व्वमुवाचेदं भगवान्वासवानुजः ।
॥ वासुदेव उवाच ॥ शरतल्पगतो भीष्मः शाम्यन्निव हुताशनः । मां ध्याति पुरुषव्याघ्रस्ततो मे तद्गतं मनः ।
यस्य ज्यातलनिर्घोषं विस्फूर्ज्जितमिवाशनेः । न सेहे देवराजोऽपि तमस्मि मनसा गतः ।
येनाभिजित्य तरसा समस्तं राजमण्डलं । ऊढास्तिस्रस्तु ताः कन्यास्तमस्मि मनसा गतः । १५६५
त्रयोविंशतिरात्रं यो योधयामास भार्गवं । न च रामेण निस्तीर्णस्तमस्मि मनसा गतः ।

एकीकृत्येन्द्रियग्रामं मनः संयम्य मेधया । शरणं मामुपागच्छत्ततो मे तद्गतं मनः ।
यं गङ्गा गर्भविधिना धारयामास पार्थिव । वशिष्ठशिष्यं तं तात तमस्मि मनसा गतः ।
दिव्यास्त्राणि महातेजा यो धारयति बुद्धिमान् । साङ्गांश्च चतुरो वेदांस्तमस्मि मनसा गतः ।
रामस्य दयितं शिष्यं जामदग्न्यस्य पाण्डव । आधारं सर्व्वविद्यानां तमस्मि मनसा गतः । १५७०
स हि भूतं भविष्यच्च भवच्च भरतर्षभ । वेत्ति धर्म्मविदां श्रेष्ठं तमस्मि मनसा गतः ।
तस्मिन्हि पुरुषव्याघ्रे कर्म्मभिः स्वैर्दिवं गते । भविष्यति मही पार्थ नष्टचन्द्रेव शर्व्वरी ।
तद्युधिष्ठिर गाङ्गेयं भीष्मं भीमपराक्रमं । अभिगम्योपसंगृह्य पृच्छ यत्ते मनोगतं ।
चातुर्व्विद्यं चातुर्होत्रं चातुराश्रम्यमेव च । राजधर्म्मांश्च निखिलान् पृच्छैनं पृथिवीपते ।
तस्मिन्नस्तमिते भीष्मे कौरवाणां धुरन्धरे । ज्ञानान्यस्तं गमिष्यन्ति तस्मात्त्वा चोदयाम्यहं । १५७५
तच्छ्रुत्वा वासुदेवस्य तथ्यं वचनमुत्तमं । साश्रुकण्ठः स धर्म्मज्ञो जनार्द्दनमुवाच ह ।
यद्भवानाह भीष्मस्य प्रभावं प्रति माधव । तथा तन्नात्र सन्देहो विद्यते मम माधव ।
महाभाग्यञ्च भीष्मस्य प्रभावञ्च महाद्युते । श्रुतं मया कथयतां ब्राह्मणानां महात्मनां ।
भवांश्च कर्त्ता लोकानां यद्ब्रवीत्यरिसूदन । तथा तदनभिध्येयं वाक्यं यादवनन्दन ।
यदि त्वनुग्रहवती बुद्धिस्ते मयि माधव । त्वामग्रतः पुरस्कृत्य भीष्मं यास्यामहे वयं । १५८०
आवृत्ते भगवत्यर्के स हि लोकान् गमिष्यति । त्वद्दर्शनं महाबाहो तस्मादर्हति कौरवः ।
तव ह्याद्यस्य देवस्य क्षरस्यैवाक्षरस्य च । दर्शनं तस्य लाभः स्यात्त्वं हि ब्रह्ममयो निधिः ।
॥ वैशम्पायन उवाच ॥ श्रुत्वैवं धर्म्मराजस्य वचनं मधुसूदनः । पार्श्वस्थं सात्यकिं प्राह रथो मे युज्यतामिति ।
सात्यकिस्त्वाशु निष्क्रम्य केशवस्य समीपतः । दारुकं प्राह कृष्णस्य युज्यतां रथ इत्युत ।
स सात्यकेराशु वचो निशम्य रथोत्तमं काञ्चनभूषिताङ्गं । मसारगल्वर्क्कमयैर्व्विभङ्गैर्व्विभूषितं हेमनिबद्धचक्रं । १५८५
दिवाकरांशुप्रभमाशुगामिनं विचित्रनानामणिभूषितान्तरं । नवोदितं सूर्य्यमिव प्रतापिनं विचित्रतार्क्ष्यध्वजिनं पताकिनं ।
सुग्रीवशैब्यप्रमुखैर्व्वराश्वैर्म्मनोजवैः काञ्चनभूषिताङ्गैः । संयुक्तमावेदयदच्युताय कृताञ्जलिर्दारुको राजसिंह ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि महापुरुषस्तवोपाख्याने षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
॥ जनमेजय उवाच ॥ शरतल्पे शयानस्तु भरतानां पितामहः । कथमुत्सृष्टवान् देहं कञ्च योगमधारयत् ।
॥ वैशम्पायन उवाच ॥ शृणुष्वावहितो राजन् शुचिर्भूत्वा समाहितः । भीष्मस्य कुरुशार्दूल देहोत्सर्गं महात्मनः ।
निवृत्तमात्रे त्वयने उत्तरे वै दिवाकरे । समावेशयदात्मानमात्मन्येव समाहितः । १५९०
विकीर्णांशुरिवादित्यो भीष्मः शरशतैश्चितः । शुशुभे परया लक्ष्म्या वृतो ब्राह्मणसत्तमैः ।
व्यासेन वेदविदुषा नारदेन सुरर्षिणा । देवस्थानेन वात्स्येन तथाश्मकसुमन्तुना ।
तथा जैमिनिना चैव पैलेन च महात्मना । शाण्डिल्यदेवरातभ्यां मैत्रेयेण च धीमता ।
असितेन वशिष्ठेन कौशिकेन महात्मना । हारीतलोमशाभ्याञ्च तथात्रेयेण धीमता ।

बृहस्पतिश्च शुक्रश्च च्यवनश्च महामुनिः । सनत्कुमारः कपिलो वाल्मीकिस्तुम्बुरुः कुरुः । १५९५
मौद्गल्यो भार्गवो रामस्तृणबिन्दुर्महामुनिः । पिप्पलादोऽथ वायुश्च सम्वर्त्तः पुलहः कचः ।
काश्यपश्च पुलस्त्यश्च क्रतुर्दक्षः पराशरः । मरीचिरङ्गिराः काश्यो गौतमो गालवो मुनिः ।
धौम्यो विभाण्डो माण्डव्यो धौम्रः कृष्णानुभौतिकः । उलूकः परमो विप्रो मार्कण्डेयो महामुनिः ।
भास्करिः पूरणः कृष्णः सूतः परमधार्म्मिकः । एतैश्चान्यैर्मुनिगणैर्महाभागैर्महात्मभिः ।
श्रद्धादमशमोपेतैर्वृतश्चन्द्र इव ग्रहैः । भीष्मः स पुरुषव्याघ्रः कर्म्मणा मनसा गिरा । १६००
शरतल्पगतः कृष्णं प्रदध्यौ प्राञ्जलिः शुचिः । स्वरेण हृष्टपुष्टेन तुष्टाव मधुसूदनं ।
योगेश्वरं पद्मनाभं विष्णुं जिष्णुं जगत्पतिं । कृताञ्जलिपुटो भूत्वा वाग्विदां प्रवरः प्रभुः ।
भीष्मः परमधर्म्मात्मा वासुदेवमथास्तुवत् ।
॥ भीष्म उवाच ॥ आरिराधयिषुः कृष्णं वाचं जिगदिषामि यां । तया व्याससमासिन्या प्रीयतां पुरुषोत्तम ।
शुचिं शुचिपदं हंसं तत्परं परमेष्ठिनं । युक्त्वा सर्व्वात्मनात्मानं तं प्रपद्ये प्रजापतिं । १६०५
अनाद्यन्तं परं ब्रह्म न देवा नर्षयो विदुः । एकोऽयं वेद भगवान् धाता नारायणो हरिः ।
नारायणादृषिगणास्तथा सिद्धमहोरगाः । देवा देवर्षयश्चैव यं विदुः परमव्ययं ।
देवदानवगन्धर्व्वा यक्षराक्षसपन्नगाः । यं न जानन्ति को ह्येष कुतो वा भगवानिति ।
यस्मिन्विश्वानि भूतानि तिष्ठन्ति च विशन्ति च । गुणभूतानि भूतेशे सूत्रे मणिगणा इव ।
यस्मिन्नित्ये तते तन्तौ दृढे स्रगिव तिष्ठति । सदसद्ग्रथितं विश्वं विश्वाङ्गे विश्वकर्म्मणि । १६१०
हरिं सहस्रशिरसं सहस्रचरणेक्षणं । सहस्रबाहुमुकुटं सहस्रवदनोज्ज्वलं ।
प्राहुर्नारायणं देवं यं विश्वस्य परायणं । अणीयसामणीयांसं स्थविष्ठञ्च स्थवीयसां ।
गरीयसाङ्गरिष्ठञ्च श्रेष्ठञ्च श्रेयसामपि । यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।
गृणन्ति सत्यकर्म्माणं सत्यं सत्येषु सामसु । चतुर्भिश्चतुरात्मानं सत्त्वस्थं सात्वतां पतिं ।
यं दिव्यैर्देवमर्चन्ति गुह्यैः परमनामभिः । यस्मिन्नित्यं तपस्तप्तं यदङ्गेष्वनुतिष्ठति । १६१५
सर्व्वात्मा सर्व्ववित् सर्व्वः सर्व्वज्ञः सर्व्वभावनः । यं देवं देवकी देवी वसुदेवादजीजनत् ।
भौमस्य ब्रह्मणो गुप्त्यै दीप्तमग्निमिवारणिः । यमनन्यो व्यपेताशीरात्मानं वीतकल्मषं ।
दृष्ट्वानन्त्याय गोविन्दं पश्यत्यात्मानमात्मनि । अतिवाय्विन्द्रकर्म्माणमतिसूर्य्यातितेजसं ।
अतिबुद्धीन्द्रियात्मानं तं प्रपद्ये प्रजापतिं । पुराणे पुरुषं प्रोक्तं ब्रह्म प्रोक्तं युगादिषु ।
क्षये सङ्कर्षणं प्रोक्तं तमुपास्यमुपास्महे । यमेकं बहुधात्मानं प्रादुर्भूतमधोक्षजं । १६२०
नान्यभक्ताः क्रियावन्तो यजन्ते सर्व्वकामदं । यमाहुर्जगतः कोषं यस्मिन्सन्निहिताः प्रजाः ।
यस्मिन् लोकाः स्फुरन्तीमे जले शकुनयो यथा । ऋतमेकाक्षरं ब्रह्म यत्तत्सदसतोः परं ।
अनादिमध्यपर्य्यन्तं न देवा नर्षयो विदुः । यं सुरासुरगन्धर्व्वाः सिद्धा ऋषिमहोरगाः ।
प्रयता नित्यमर्चन्ति परमं दुःखभेषजं । अनादिनिधनं देवमात्मयोनिं सनातनं ।

अप्रमेयमनभिज्ञेयं हरिं नारायणं प्रभुं । यं वै विश्वस्य कर्त्तारं जगतस्तस्थुषां पतिं । १६२५
वदन्ति जगतोऽध्यक्षमक्षरं परमम्पदं । हिरण्यवर्णं यं गर्भमदितेर्दैत्यनाशनं ।
एकं द्वादशधा जज्ञे तस्मै सूर्य्यात्मने नमः । शुक्ले देवान्पितॄन्कृष्णे तर्पयत्यमृतेन यः ।
यश्च राजा द्विजातीनां तस्मै सोमात्मने नमः । महतस्तमसः पारे पुरुषं ह्यतितेजसं ।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः । यं बृहन्तं बृहत्युक्थे यमग्नौ यं महाध्वरे ।
यं विप्रसङ्घा गायन्ति तस्मै वेदात्मने नमः । ऋग्यजुःसामधामानं दशार्द्धहविरात्मकं । १६३०
यं सप्ततन्तुं तन्वन्ति तस्मै यज्ञात्मने नमः । चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां तस्मै होमात्मने नमः । यः सुपर्णो यजुर्नाम छन्दोगात्रस्त्रिवृच्छिराः ।
रथन्तरं बृहत्साम तस्मै स्तोत्रात्मने नमः । यः सहस्रसमे सत्रे जज्ञे विश्वसृजामृषिः ।
हिरण्यपक्षः शकुनिस्तस्मै हंसात्मने नमः । पदाङ्गं सन्धिपर्व्वाणं स्वरव्यञ्जनभूषणं ।
यमाहुरक्षरं दिव्यं तस्मै वागात्मने नमः । यज्ञाङ्गो यो वराहो वै भूत्वा गामुज्जहार ह । १६३५
लोकत्रयहितार्थाय तस्मै वीर्य्यात्मने नमः । यः शेते योगमास्थाय पर्य्यङ्के नागभूषिते ।
फणासहस्ररचिते तस्मै निद्रात्मने नमः । यस्तनोति सतां सेतुमृतेनामृतयोनिना ।
धर्म्मार्थव्यवहाराङ्गैस्तस्मै सत्यात्मने नमः । यं पृथग्धर्म्मचरणाः पृथग्धर्म्मफलैषिणः ।
पृथग्धर्म्मैः समर्च्चन्ति तस्मै धर्म्मात्मने नमः । यतः सर्व्वे प्रसूयन्ते ह्यनङ्गात्माङ्गदेहिनः ।
उन्मादः सर्व्वभूतानां तस्मै कामात्मने नमः । यञ्च व्यक्तस्थमव्यक्तं विचिन्वन्ति महर्षयः । १६४०
क्षेत्रे क्षेत्रज्ञमासीनं तस्मै क्षेत्रात्मने नमः । यन्त्रिधात्मानमात्मस्थं वृतं षोडशभिर्गुणैः ।
प्राहुः सप्तदशं साङ्ख्यास्तस्मै साङ्ख्यात्मने नमः । यं विनिद्रा जितश्वासाः सत्त्वस्थाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः । अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः ।
शान्ताः सन्न्यासिनो यान्ति तस्मै मोक्षात्मने नमः । योऽसौ युगसहस्रान्ते प्रदीप्तार्च्चिर्व्विभावसुः ।
सम्भक्षयति भूतानि तस्मै घोरात्मने नमः । सम्भक्ष्य सर्व्वभूतानि कृत्वा चैकार्णवं जगत् । १६४५
बालः स्वपिति यश्चैकस्तस्मै मायात्मने नमः । अजस्य नाभौ सम्भूतं यस्मिन्विश्वं प्रतिष्ठितं ।
पुष्करे पुष्कराक्षस्य तस्मै पद्मात्मने नमः । सहस्रशिरसे चैव पुरुषायामितात्मने ।
चतुःसमुद्रपर्य्याय योगनिद्रात्मने नमः । यस्य केशेषु जीमूता नद्यः सर्व्वाङ्गसन्धिषु ।
कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः । यस्मात्सर्व्वाः प्रसूयन्ते सर्गप्रलयविक्रियाः ।
यस्मिंश्चैव प्रलीयन्ते तस्मै हेत्वात्मने नमः । यो निषण्णो भवेद्रात्रौ दिवा भवति विष्ठितः । १६५०
इष्टानिष्टस्य च द्रष्टा तस्मै द्रष्ट्रात्मने नमः । अकुण्ठं सर्व्वकार्य्येषु धर्म्मकार्य्यार्थमुद्यतं ।
वैकुण्ठस्य च यद्रूपं तस्मै कार्य्यात्मने नमः । त्रिः सप्तकृत्वो यः क्षत्रं धर्म्मव्युत्क्रान्तगौरवं ।
क्रुद्धो निजघ्ने समरे तस्मै क्रौर्य्यात्मने नमः । विभज्य पञ्चधात्मानं वायुर्भूत्वा शरीरगः ।
यश्चेष्टयति भूतानि तस्मै वाय्वात्मने नमः । युगेष्वावर्त्तते योगैर्मासर्त्त्वयनहायनैः ।

सर्गप्रलययोः कर्त्ता तस्मै कालात्मने नमः। ब्रह्म वक्त्रं भुजौ क्षत्रं कृत्स्नमूरूदरं विशः। १६५५
पादौ यस्याश्रिताः शूद्रास्तस्मै वर्णात्मने नमः। यस्याग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ क्षितिः।
सूर्य्यश्चक्षुर्द्दिशः श्रोत्रं तस्मै लोकात्मने नमः। परः कालात्परो यज्ञात्परात्परतरश्च यः।
अनादिरादिर्व्विश्वस्य तस्मै विश्वात्मने नमः। विषये वर्त्तमानानां यं ते वैशेषिकैर्गुणैः।
प्राहुर्व्विषयगोप्तारं तस्मै गोप्त्रात्मने नमः। अन्नपानेन्धनमयो रसप्राणविवर्द्धनः।
यो धारयति भूतानि तस्मै प्राणात्मने नमः। प्राणानां धारणार्थाय योऽन्नं भुङ्क्ते चतुर्विधं। १६६०
अन्तर्भूतः पचत्यग्निस्तस्मै पाकात्मने नमः। पिङ्गेक्षणसटं यस्य रूपं दंष्ट्रानखायुधं।
दानवेन्द्रान्तकरणं तस्मै दृप्तात्मने नमः। यं न देवा न गन्धर्व्वा न दैत्या न च दानवाः।
तत्त्वतो हि विजानन्ति तस्मै सूक्ष्मात्मने नमः। रसातलगतः श्रीमाननन्तो भगवान्विभुः।
जगद्धारयते कृत्स्नं तस्मै वीर्य्यात्मने नमः। यो मोहयति भूतानि स्नेहपाशानुबन्धनैः।
सर्गस्य रक्षणार्थाय तस्मै मोहात्मने नमः। आत्मज्ञानमिदं ज्ञानं ज्ञात्वा पञ्चस्ववस्थितं। १६६५
यं ज्ञानेनाभिगच्छन्ति तस्मै ज्ञानात्मने नमः। अप्रमेयशरीराय सर्व्वतो बुद्धिचक्षुषे।
अनन्तपरिमेयाय तस्मै दिव्यात्मने नमः। जटिने दण्डिने नित्यं लम्बोदरशरीरिणे।
कमण्डलुनिषङ्गाय तस्मै ब्रह्मात्मने नमः। शूलिने त्रिदशेशाय त्र्यम्बकाय महात्मने।
भस्मदिग्धाङ्गलिङ्गाय तस्मै रुद्रात्मने नमः। चन्द्रार्द्धकृतशीर्षाय व्यालयज्ञोपवीतिने।
पिनाकशूलहस्ताय तस्मै उग्रात्मने नमः। सर्व्वभूतात्मभूताय भूतादिनिधनाय च। १६७०
अक्रोधद्रोहमोहाय तस्मै शान्तात्मने नमः। यस्मिन्सर्व्वं यतः सर्व्वं यः सर्व्वं सर्व्वतश्च यः।
यश्च सर्व्वमयो नित्यं तस्मै सर्व्वात्मने नमः। विश्वकर्म्मन्नमस्तेऽस्तु विश्वात्मन् विश्वसम्भव।
अपवर्गस्थ भूतानां पञ्चानां परतः स्थितः। नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु।
नमस्ते दिक्षु सर्व्वासु त्वं हि सर्व्वमयो निधिः। नमस्ते भगवन्विष्णो लोकानां प्रभवाव्यय।
त्वं हि कर्त्ता हृषीकेश संहर्त्ता चापराजितः। न हि पश्यामि ते भावं दिव्यं हि त्रिषु वर्त्मसु। १६७५
त्वान्तु पश्यामि तत्त्वेन यत्ते रूपं सनातनं। दिवन्ते शिरसा व्याप्तं पद्भ्यां देवी वसुन्धरा।
विक्रमेण त्रयो लोकाः पुरुषोऽसि सनातनः। दिशो भुजा रविश्चक्षुर्व्वीर्य्यं शुक्रः प्रजापतिः।
सप्तमार्गा निरुद्धास्ते वायोरमिततेजसः। अतसीपुष्पसङ्काशं पीतवाससमच्युतं।
ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयं।

एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः। दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय। १६८०
कृष्णव्रताः कृष्णमनुस्मरन्तो रात्रौ च कृष्णं पुनरुत्थिता ये। ते कृष्णदेहाः प्रविशन्ति कृष्णमाज्यं यथा मन्त्रहुतं हुताशे।

नमो नरकसन्त्रासरक्षामण्डलकारिणे। संसारनिम्नगावर्त्ततरिकाष्ठाय विष्णवे।
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च। जगद्धिताय कृष्णाय गोविन्दाय नमो नमः।

प्राणकान्तारपाथेयं संसारोच्छेदभेषजं। दुःखशोकपरित्राणं हरिरित्यक्षरद्वयं।

यथा विष्णुमयं सत्यं यथा विष्णुमयं जगत्। यथा विष्णुमयं सर्व्वं पाप्मा मे नश्यतां तथा। १६८५

त्वां प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे। यच्छ्रेयः पुण्डरीकाक्ष तद्ध्यायस्व सुरोत्तम।

इति विद्यातपोयोनिरयोनिर्व्विष्णुरीडितः। वाग्यज्ञेनार्च्चितो देवः प्रीयतां मे जनार्द्दनः।

नारायणपरं ब्रह्म नारायणपरं तपः। नारायणपरो देवः सर्व्वं नारायणः सदा।

॥ वैशम्पायन उवाच ॥ एतावदुक्त्वा वचनं भीष्मस्तद्गतमानसः। नम इत्येव कृष्णाय प्रणाममकरोत्तदा।

अभिगम्य तु योगेन भक्तिं भीष्मस्य माधवः। त्रैकाल्यदर्शनं ज्ञानं दिव्यं दत्त्वा ययौ हरिः। १६९०

तस्मिन्नुपरते शब्दे ततस्ते ब्रह्मवादिनः। भीष्मं वाग्भिर्व्वाष्पकण्ठास्तमानर्च्चुर्महामतिं।

ते स्तुवन्तश्च विप्राग्र्याः केशवं पुरुषोत्तमं। भीष्मञ्च शनकैः सर्व्वे प्रशशंसुः पुनः पुनः।

विदित्वा भक्तियोगन्तु भीष्मस्य पुरुषोत्तमः। सहसोत्थाय संहृष्टो यानमेवान्वपद्यत।

केशवः सात्यकिश्चापि रथेनैकेन जग्मतुः। अपरेण महात्मानौ युधिष्ठिरधनञ्जयौ।

भीमसेनो यमौ चोभौ रथमेकं समाश्रिताः। कृपो युयुत्सुः सूतश्च सञ्जयश्च परन्तपः। १६९५

ते रथैर्नगराकारैः प्रयाताः पुरुषर्षभाः। नेमिघोषेण महता कम्पयन्तो वसुन्धरां।

ततो गिरः पुरुषवरस्तवान्विता द्विजेरिताः पथि सुमनाः स शुश्रुवे। कृताञ्जलिं प्रणतमथापरं जनं स केशिहा मुदितमनाभ्यनन्दत।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि स्तवराजोपाख्याने सप्तचत्वारिंशोऽध्यायः॥ ४७॥

॥ वैशम्पायन उवाच ॥ ततः स च हृषीकेशः स च राजा युधिष्ठिरः। कृपादयश्च ते सर्व्वे चत्वारः पाण्डवाश्च ते।

रथैस्तैर्नगरप्रख्यैः पताकाध्वजशोभितैः। ययुराशु कुरुक्षेत्रं वाजिभिः शीघ्रगामिभिः।

तेऽवतीर्य्य कुरुक्षेत्रं केशमज्जास्थिसङ्कुलं। देहन्यासः कृतो यत्र क्षत्रियैस्तैर्महात्मभिः। १७००

गजाश्वदेहास्थिचयैः पर्व्वतैरिव सञ्चितं। नरशीर्षकपालैश्च शङ्खैरिव च सर्व्वशः।

चितासहस्रप्रचितं वर्म्मशस्त्रसमाकुलं। आपानभूमिं कालस्य तदा भुक्तोज्झितामिव।

भूतसङ्घानुचरितं रक्षोगणनिषेवितं। पश्यन्तस्ते कुरुक्षेत्रं ययुराशु महारथाः।

गच्छन्नेव महाबाहुः सर्व्वयादवनन्दनः। युधिष्ठिराय प्रोवाच जामदग्न्यस्य विक्रमं।

अमी रामह्रदाः पञ्च दृश्यन्ते पार्थ दूरतः। येषु सन्तर्पयामास पितॄन् क्षत्रियशोणितैः। १७०५

त्रिःसप्तकृत्वो वसुधां कृत्वा निःक्षत्रियां प्रभुः। इहेदानीं ततो रामः कर्म्मणो विरराम ह।

॥ युधिष्ठिर उवाच ॥ त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा। रामेणेति यदात्थ त्वमत्र मे संशयो महान्।

क्षत्रबीजं यदा दग्धं रामेण यदुपुङ्गव। कथं भूयः समुत्पत्तिः क्षत्रस्यामितविक्रम।

महात्मना भगवता रामेण यदुपुङ्गव। कथमुत्सादितं क्षत्रं कथं वृद्धिमुपागतं।

महता रथयुद्धेन कोटिशः क्षत्रिया हताः। तथाभूच्च मही कीर्णा क्षत्रियैर्व्वदताम्वर। १७१०

किमर्थं भार्गवेणेदं क्षत्रमुत्सादितं पुरा । रामेण यदुशार्दूल कुपितेन महात्मना ।
एतन्मे छिन्धि वार्ष्णेय संशयं शार्ङ्गकेतन । आगमो हि परः कृष्ण त्वत्तो नो वासवानुज ।
॥ वैशम्पायन उवाच ॥ ततो यथावत् स गदाग्रजः प्रभुः । शशंस तस्मै निखिलेन तत्त्वतः ।
युधिष्ठिरायाप्रतिमौजसे तदा यथाऽभवत् क्षत्रियसङ्कुला मही ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि रामोपाख्यानेऽष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

॥ वासुदेव उवाच ॥ शृणु कौन्तेय रामस्य प्रभावो यो मया श्रुतः । महर्षीणां कथयतां विक्रमं तस्य जन्म च । १०१६
यथा च जामदग्न्येन कोटिशः क्षत्रिया हताः । उद्भूता राजवंशेषु ये भूयो भारते हताः ।
जह्नोरजस्तु तनयो बलाकाश्वस्तु तत्सुतः । कुशिको नाम धर्म्मज्ञस्तस्य पुत्रो महीपते ।
उग्रं तपः समातिष्ठत्सहस्राक्षसमो भुवि । पुत्रं लभेयमजितं त्रिलोकेश्वरमित्युत ।
तमुग्रतपसं दृष्ट्वा सहस्राक्षः पुरन्दरः । समर्थं पुत्रजनने स्वयमेवाभ्यपद्यत ।
पुत्रत्वमगमद्राजंस्तस्य लोकेश्वरेश्वरः । गाधिर्नामाभवत्पुत्रः कौशिकः पाकशासनः । १०२०
तस्य कन्याभवद्राजन्नाम्ना सत्यवती प्रभो । तां गाधिर्भृगुपुत्राय ऋचीकाय ददौ प्रभुः ।
तस्याः प्रीतः स शौचेन भार्गवः कुरुनन्दन । पुत्रार्थं श्रपयामास चरुं गाधेस्तथैव च ।
आहूयोवाच तां भार्य्यामृचीको भार्गवस्तदा । उपयोज्यश्चरुरयं त्वया मात्राऽप्ययं तव ।
तस्या जनिष्यते पुत्रो दीप्तिमान् क्षत्रियर्षभः । अजय्यः क्षत्रियैर्लोके क्षत्रियर्षभसूदनः ।
तवापि पुत्रं कल्याणि धृतिमन्तं शमात्मकं । तपोन्वितं द्विजश्रेष्ठं चरुरेष विधास्यति । १०२५
इत्येवमुक्त्वा तां भार्य्यामृचीको भृगुनन्दनः । तपस्यभिरतः श्रीमान् जगामारण्यमेव हि ।
एतस्मिन्नेव काले तु तीर्थयात्रापरो नृपः । गाधिः सदारः सम्प्राप्तः ऋचीकस्याश्रमं प्रति ।
चरुद्वयं गृहीत्वा च राजन् सत्यवती तदा । भर्त्तुर्व्वाक्यं तथा व्यग्रा मात्रे हृष्टा न्यवेदयत् ।
माता तु तस्याः कौन्तेय दुहित्रे स्वं चरुं ददौ । तस्याश्चरुमथाज्ञानादात्मसंस्थं चकार ह ।
अथ सत्यवती गर्भं क्षत्रियान्तकरं तदा । धारयामास दीप्तेन वपुषा घोरदर्शनं । १०३०
तामृचीकस्तदा दृष्ट्वा तस्या गर्भगतं द्विजं । अब्रवीद्भृगुशार्दूलः स्वां भार्य्यां देवरूपिणीं ।
मात्राऽसि व्यंसिता भद्रे चरुव्यत्यासहेतुना । भविष्यति हि ते पुत्रः क्रूरकर्म्माऽत्यमर्षणः ।
उत्पत्स्यति च ते भ्राता ब्रह्मभूतस्तपोरतः । विश्वं हि ब्रह्म सुमहच्चरौ तव समाहितं ।
क्षत्रवीर्य्यञ्च सकलं तव मात्रे समर्पितं । विपर्य्ययेण ते भद्रे नैतदेवं भविष्यति ।
मातुस्ते ब्राह्मणो भूयात्तव च क्षत्रियः सुतः । सैवमुक्ता महाभागा भर्त्रा सत्यवती तदा । १०३५
पपात शिरसा तस्मै वेपन्ती चाब्रवीदिदं । नार्होऽसि भगवन्नद्य वक्तुमेवंविधं वचः ।
ब्राह्मणापसदं पुत्रं प्राप्स्यसीति हि मां प्रभो ।
॥ ऋचीक उवाच ॥ नैष सङ्कल्पितः कामो मया भद्रे तथा त्वयि । उग्रकर्म्मा समुत्पन्नश्चरुव्यत्यासहेतुना ।
॥ सत्यवत्युवाच ॥ इच्छँल्लोकानपि मुने सृजेथाः किं पुनः सुतं । शमात्मकमृजुं पुत्रं दातुमर्हसि मे प्रभो ।

॥ ऋचीक उवाच ॥ नोक्तपूर्व्वानृतं भद्रे स्वैरेष्वपि कदाचन । किमुताग्निं समाधाय मन्त्रवच्चरुसाधने । १७४०
दृष्टमेतत्पुरा भद्रे ज्ञातञ्च तपसा मया । ब्रह्मभूतं हि सकलं पितुस्तव कुलं भवेत् ।
॥ सत्यवत्युवाच ॥ काममेवं भवेत्पौत्रो ममेह तव च प्रभो । शमात्मकमहं पुत्रं लभेयं जपताम्वर ।
॥ ऋचीक उवाच ॥ पुत्रे नास्ति विशेषो मे पौत्रे च वरवर्णिनि । यथा त्वयोक्तं वचनं तथा भद्रे भविष्यति ।
॥ वासुदेव उवाच ॥ ततः सत्यवती पुत्रं जनयामास भार्गवं । तपस्यभिरतं शान्तं जमदग्निं यतव्रतं ।
विश्वामित्रञ्च दायादं गाधिः कुशिकनन्दनः । यं प्राप ब्रह्मसमितं विश्वैर्ब्रह्मगुणैर्युतं । १७४५
ऋचीको जनयामास जमदग्निं तपोनिधिं । सोऽपि पुत्रं ह्यजनयज्जमदग्निः सुदारुणं ।
सर्व्वविद्यान्तगं श्रेष्ठं धनुर्व्वेदस्य पारगं । रामं क्षत्रियहन्तारं प्रदीप्तमिव पावकं ।
तोषयित्वा महादेवं पर्व्वते गन्धमादने । अस्त्राणि वरयामास परशुञ्चातितेजसं ।
स तेनाकुण्ठधारेण ज्वलितानलवर्चसा । कुठारेणाप्रमेयेण लोकेष्वप्रतिमोऽभवत् ।
एतस्मिन्नेव काले तु कृतवीर्य्यात्मजो बली । अर्ज्जुनो नाम तेजस्वी क्षत्रियो हैहयाधिपः । १७५०
दत्तात्रेयप्रसादेन राजा बाहुसहस्रवान् । चक्रवर्त्ती महातेजा विप्राणामाश्वमेधिके ।
ददौ स पृथिवीं सर्व्वां सप्तद्वीपां सपर्व्वतां । स्वबाह्वस्त्रबलेनाजौ जित्वा परमधर्म्मवित् ।
तृषितेन च कौन्तेय भिक्षितश्चित्रभानुना । सहस्रबाहुर्व्विक्रान्तः प्रादाद्भिक्षामथाग्नये ।
ग्रामान् पुराणि राष्ट्राणि घोषांश्चैवानुवीर्य्यवान् । जज्वाल तस्य बाणाग्राच्चित्रभानुर्दिधक्षया ।
स तस्य पुरुषेन्द्रस्य प्रभावेण महौजसः । ददाह कार्त्तवीर्य्यस्य शैलानथ वनस्पतीन् । १७५५
स शून्यमाश्रमं रम्यमापवस्य महात्मनः । ददाह पवनेनेद्धश्चित्रभानुः स हैहयः ।
आपवस्तु ततो रोषाच्छशापार्ज्जुनमच्युत । दग्धे श्रमे महाबाहो कार्त्तवीर्य्येण वीर्य्यवान् ।
त्वया न वर्ज्जितं यस्मान्ममेदं हि महद्वनं । दग्धं तस्माद्रणे रामो बाहूंस्ते छेत्स्यतेऽर्ज्जुन ।
अर्ज्जुनस्तु महातेजा बली नित्यं शमात्मकः । ब्रह्मण्यश्च शरण्यश्च दाता शूरश्च भारत ।
नाचिन्तयत्तदा शापं तेन दत्तं महात्मना । तस्य पुत्रास्तु बलिनः शापेनासन् पितुर्व्वधे । १७६०
निमित्ताद्दर्पलिप्ता वै नृशंसाश्चैव सर्व्वदा । जमदग्निधेन्वास्ते वत्समानिन्युर्भरतर्षभ ।
अज्ञातं कार्त्तवीर्य्येण हैहयेन्द्रेण धीमता । तन्निमित्तमभूद्युद्धं जामदग्नेर्महात्मनः ।
ततोऽर्ज्जुनस्य बाहूंस्तान् छित्त्वा रामो रुषान्वितः । तं भ्रमन्तं ततो वत्सं जामदग्न्यः स्वमाश्रमं ।
प्रत्यानयत राजेन्द्र तेषामन्तःपुरात्प्रभुः । अर्ज्जुनस्य सुतास्ते तु सम्भूयाबुद्धयस्तदा ।
गत्वाश्रममसम्बुद्धा जमदग्नेर्महात्मनः । अपातयन्त भल्लाग्रैः शिरः कायान्नराधिप । १७६५
समित्कुशार्थं रामस्य निर्य्यातस्य यशस्विनः । ततः पितृवधामर्षाद्रामः परममन्युमान् ।
निःक्षत्रियां प्रतिश्रुत्य महीं शस्त्रमगृह्णत । ततः स भृगुशार्दूलः कार्त्तवीर्य्यस्य वीर्य्यवान् ।
विक्रम्य निजघानाशु पुत्रान् पौत्रांश्च सर्व्वशः । स हैहयसहस्राणि हत्वा परममन्युमान् ।
चकार भार्गवो राजन् महीं शोणितकर्द्दमां । स तथाशु महातेजा कृत्वा निःक्षत्रियां महीं ।

कृपया पर्य्याविष्टो वनमेव जगाम ह। ततो वर्षसहस्रेषु समतीतेषु केषुचित्। १७७०
क्षेपं सम्प्राप्तवांस्तत्र प्रकृत्या कोपनः प्रभुः। विश्वामित्रस्य पौत्रस्तु रैभ्यपुत्रो महातपाः।
परावसुर्महाराज क्षिप्त्वाह जनसंसदि। ये ते ययातिपतने यज्ञे सन्तः समागताः।
प्रतर्द्दनप्रभृतयो राम किं क्षत्रिया न ते। मिथ्याप्रतिज्ञो राम त्वं कत्थसे जनसंसदि।
भयात् क्षत्रियवीराणां पर्व्वतं समुपाश्रितः। सा पुनः क्षत्रियशतैः पृथिवी सर्व्वतस्तृता।
परावसोर्व्वचः श्रुत्वा शस्त्रं जग्राह भार्गवः। ततो ये क्षत्रिया राजन् शतशस्तेन वर्ज्जिताः। १७७५
ते विवृद्धा महावीर्य्याः पृथिवीपतयोऽभवन्। स पुनस्तान् जघानाशु बालानपि नराधिप।
गर्भस्थैस्तु मही व्याप्ता पुनरेवाभवत्तदा। जातं जातं स गर्भन्तु पुनरेव जघान ह।
अरक्षंश्च सुतान् कांश्चित्तदा क्षत्रिययोषितः। त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः।
दक्षिणामश्वमेधान्ते कश्यपायाददत्ततः। स क्षत्रियाणां शेषार्थं करेणोद्दिश्य कश्यपः।
स्रुक्प्रग्रहवता राजंस्ततो वाक्यमथाब्रवीत्। गच्छ तीरं समुद्रस्य दक्षिणस्य महामुने। १७८०
न ते मद्विषये राम वस्तव्यमिह कर्हिचित्। ततः शूर्पारकं देशं सागरस्तस्य निर्म्ममे।
सहसा जामदग्न्यस्य सोऽपरान्तमहीतलं। कश्यपस्तां महाराज प्रतिगृह्य वसुन्धरां।
कृत्वा ब्राह्मणसंस्थां वै प्रविष्टः सुमहावनं। ततः शूद्राश्च वैश्याश्च यथा स्वैरप्रचारिणः।
अवर्त्तन्त द्विजाग्र्याणां दारेषु भरतर्षभ। अराजके जीवलोके दुर्ब्बला बलवत्तरैः।
पीड्यन्ते न हि वित्तेषु प्रभुत्वं कस्यचित्तदा। ततः कालेन पृथिवी पीड्यमाना दुरात्मभिः। १७८५
विपर्य्ययेण तेनाशु प्रविवेश रसातलं। अरक्ष्यमाणा विधिवत् क्षत्रियैर्धर्म्मरक्षिभिः।
तां दृष्ट्वा द्रवतीं तत्र सन्त्रासात्स महामनाः। ऊरुणा धारयामास कश्यपः पृथिवीं ततः।
धृता तेनोरुणा येन तेनोर्व्वीति मही स्मृता। रक्षणार्थं समुद्दिश्य ययाचे पृथिवी तदा।
प्रसाद्य कश्यपन्देवी वरयामास भूमिपं।

॥ पृथिव्युवाच ॥ सन्ति ब्रह्मन्मया गुप्ताः स्त्रीषु क्षत्रियपुङ्गवाः। हैहयानां कुले जातास्ते संरक्षन्तु मां मुने। १७९०
अस्ति पौरवदायादो विदूरथसुतः प्रभो। ऋक्षैः संवर्द्धितो विप्र ऋक्षवत्यथ पर्व्वते।
तथानुकम्पमानेन यज्वनाप्यमितौजसा। पराशरेण दायादः सौदासस्याभिरक्षितः।
सर्व्वकर्म्माणि कुरुते शूद्रवत्तस्य स द्विजः। सर्व्वकर्म्मेत्यभिख्यातः स मां रक्षतु पार्थिवः।
शिविपुत्रो महातेजा गोपतिर्नाम नामतः। वने संवर्द्धितो गोभिः सोऽभिरक्षतु मां मुने।
प्रतर्द्दनस्य पुत्रस्तु वत्सो नाम महाबलः। वत्सैः संवर्द्धितो गोष्ठे स मां रक्षतु पार्थिवः। १७९५
दधिवाहनपौत्रस्तु पुत्रो दिविरथस्य च। गुप्तः स गौतमेनासीद्गङ्गाकूलेऽभिरक्षितः।
बृहद्रथो महातेजा भूरिभूतिपरिष्कृतः। गोलाङ्गूलैर्महाभागो गृध्रकूटेऽभिरक्षितः।
मरुत्तस्यान्ववाये च रक्षिताः क्षत्रियात्मजाः। मरुत्पतिसमा वीर्य्ये समुद्रेणाभिरक्षिताः।
एते क्षत्रियदायादास्तत्र तत्र परिश्रिताः। व्योकारहेमकारादिजातिं नित्यं समाश्रिताः।

यदि मामभिरक्षन्ति ततः स्थास्यामि निश्चला। एतेषां पितरश्चैव तथैव च पितामहाः। १८००

मदर्थं निहता युद्धे रामेणाक्लिष्टकर्म्मणा। तेषामपचितिश्चैव मया कार्य्या महामुने।

नह्यहं कामये नित्यमतिक्रान्तेन रक्षणं। वर्त्तमानेन वर्त्तेयं तत् क्षिप्रं संविधीयतां।

॥ वासुदेव उवाच ॥ ततः पृथिव्या निर्द्दिष्टांस्तान् समानीय कश्यपः। अभ्यषिञ्चन्महीपालान् क्षत्रियान्वीर्य्यसम्मतान्।

तेषां पुत्राश्च पौत्राश्च येषां वंशाः प्रतिष्ठिताः। एवमेतत्पुरावृत्तं यन्मां पृच्छसि पाण्डव।

॥ वैशम्पायन उवाच ॥ एवं ब्रुवंस्तञ्च यदुप्रवीरो युधिष्ठिरं धर्म्मभृतां वरिष्ठं। रथेन तेनाशु ययौ महात्मा दिशः प्रकाशन् भगवानिवार्कः। १८०५

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि रामोपाख्याने ऊनपञ्चाशोऽध्यायः ॥ ४९ ॥

॥ वैशम्पायन उवाच ॥ ततो रामस्य तत्कर्म्म श्रुत्वा राजा युधिष्ठिरः। विस्मयं परमं गत्वा प्रत्युवाच जनार्द्दनं।

अहो रामस्य वार्ष्णेय शक्रस्येव महात्मनः। विक्रमो वसुधा येन क्रोधान्निःक्षत्रिया कृता।

गोभिः समुद्रेण तथा गोलाङ्गूलर्क्षवानरैः। गुप्ता रामभयोद्विग्नाः क्षत्रियाणां कुलोद्वहाः।

अहो धन्यो नृलोकोऽयं सभाग्याश्च नरा भुवि। यत्र कर्म्मेदृशं धर्म्यं द्विजेन कृतमित्युत।

तथाव्रक्तौ तदा तात तावच्युतयुधिष्ठिरौ। जग्मतुर्यत्र गाङ्गेयः शरतल्पगतः प्रभुः। १८१०

ततस्ते ददृशुर्भीष्मं शरसंस्तरशायिनं। स्वरश्मिजालसंवीतं सायंसूर्य्यसमप्रभं।

उपास्यमानं मुनिभिर्देवैरिव शतक्रतुं। देशे परमधर्म्मिष्ठे नदीमोघवतीमनु।

दूरादेव तमालोक्य कृष्णो राजा च धर्म्मजः। चत्वारः पाण्डवाश्चैव ते च शारद्वतादयः।

अवस्कन्द्याथ वाहेभ्यः संयम्य प्रचलं मनः। एकीकृत्येन्द्रियग्राममुपतस्थुर्महामुनीन्।

अभिवाद्य तु गोविन्दः सात्यकिस्ते च पार्थिवाः। व्यासादीनृषिमुख्यांश्च गाङ्गेयमुपतस्थिरे। १८१५

तपोवृद्धं तथा दृष्ट्वा गाङ्गेयं यदुकौरवाः। परिवार्य्य ततः सर्व्वे निषेदुः पुरुषर्षभाः।

ततो निशाम्य गाङ्गेयं शाम्यमानमिवानलं। किञ्चिद्दीनमना भीष्ममिति होवाच केशवः।

कच्चिज्ज्ञानानि सर्व्वाणि प्रसन्नानि यथा पुरा। कच्चिन्न व्याकुला चैव बुद्धिस्ते वदताम्वर।

शराभिघातदुःखार्त्ते कच्चिद्गात्रं न दूयते। मानसादपि दुःखाद्धि शारीरं बलवत्तरं।

वरदानात्पितुः कामं छन्दमृत्युरसि प्रभो। शान्तनोर्धर्म्मनित्यस्य नत्वेतन्मम कारणं। १८२०

सुसूक्ष्मोऽपि तु देहे वै शल्यो जनयते रुजं। किं पुनः शरसङ्घातैश्चितस्य तव पार्थिव।

कामं नैतत्तवाख्येयं प्राणिनां प्रभवाप्ययौ। उपदेष्टुं भवान् शक्तो देवानामपि भारत।

यच्च भूतं भविष्यच्च भवच्च पुरुषर्षभ। सर्व्वं तज्ज्ञानवृद्धस्य तव भीष्म प्रतिष्ठितं।

संहारश्चैव भूतानां धर्म्मस्य च फलोदयः। विदितस्ते महाप्राज्ञ त्वं हि धर्म्ममयो निधिः।

त्वां हि राज्ये स्थितं स्फीते समग्राङ्गमरोगिणं। स्त्रीसहस्रैः परिवृतं पश्यामीवोर्द्ध्वरेतसं। १८२५

ऋते शान्तनवाद्भीष्मात्त्रिषु लोकेषु पार्थिव। सत्यधर्म्मात् महावीर्य्याच्छूराद्धर्म्मैकतत्परात्।

मृत्युमावार्य्य तपसा शरसंस्तरशायिनः। निसर्गप्रभवं किञ्चिन्न च तातानुशुश्रुम।

सत्ये तपसि दाने च यज्ञाधिकरणे तथा । धनुर्व्वेदे च वेदे च नीत्याञ्चैवानुरक्षणे ।
अनृशंसं शुचिं दान्तं सर्व्वभूतहिते रतं । महारथं त्वत्सदृशं न कञ्चिदनुशुश्रुम ।
त्वं हि देवान् सगन्धर्व्वान् सासुरान् यक्षराक्षसान् । शक्तस्त्वेकरथेनैव विजेतुं नात्र संशयः । १८३०
स त्वं भीष्म महाबाहो वसूनां वासवोपमः । नित्यं विप्रैः समाख्यातो नवमोऽनवमो गुणैः ।
अहञ्च त्वाभिजानामि यस्त्वं पुरुषसत्तम । त्रिदशेष्वपि विख्यातस्त्वं शक्त्या पुरुषोत्तमः ।
मनुष्येषु मनुष्येन्द्र न दृष्टो न च मे श्रुतः । भवतो वा गुणैर्युक्तः पृथिव्यां पुरुषः क्वचित् ।
त्वं हि सर्व्वगुणैराजन् देवानप्यतिरिच्यसे । तपसा हि भवान् शक्तः स्रष्टुं लोकांश्चराचरान् ।
किं पुनश्चात्मनो लोकानुत्तमानुत्तमैर्गुणैः । तदस्य तप्यमानस्य ज्ञातीनां सङ्क्षयेन वै । १८३५
ज्येष्ठस्य पाण्डुपुत्रस्य शोकं भीष्म व्यपानुद । ये हि धर्म्माः समाख्याता चातुर्व्वर्ण्यस्य भारत ।
चातुराश्रम्यसंयुक्ताः सर्व्वे ते विदितास्तव । चातुर्व्विद्ये च ये प्रोक्ताश्चातुर्होत्रे च भारत ।
योगे साङ्ख्ये च नियता ये च धर्म्माः सनातनाः । चातुर्व्वर्ण्यस्य यश्चोक्तो धर्म्मो न स्म विरुध्यते ।
सेव्यमानः स वैयाख्यो गाङ्गेय विदितस्तव । प्रतिलोमप्रसूतानां वर्णानाञ्चैव यः स्मृतः ।
देशजातिकुलानाञ्च जानीषे धर्म्मलक्षणं । वेदोक्तो यश्च शिष्टोक्तः सदैव विदितस्तव । १८४०
इतिहासपुराणार्थाः कार्त्स्न्येन विदितास्तव । धर्म्मशास्त्रञ्च सकलं नित्यं मनसि ते स्थितं ।
ये च केचन लोकेऽस्मिन्नर्थाः संशयकारकाः । तेषां छेत्ता नास्ति लोके त्वदन्यः पुरुषर्षभ ।
स पाण्डवेयस्य मनःसमुत्थितं नरेन्द्र शोकं व्यपकर्ष मेधया । भवद्विधा ह्युत्तमबुद्धिविस्तरा विमुह्यमानस्य नरस्य शान्तये ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि कृष्णवाक्ये पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

॥ वैशम्पायन उवाच ॥ श्रुत्वा तु वचनं भीष्मो वासुदेवस्य धीमतः । किञ्चिदुन्नाम्य वदनं प्राञ्जलिर्व्वाक्यमब्रवीत् ।
॥ भीष्म उवाच ॥ नमस्ते भगवन् कृष्ण लोकानां प्रभवाप्यय । त्वं हि कर्त्ता हृषीकेश संहर्त्ता चापराजितः । ८४५
विश्वकर्म्मन्नमस्तेऽस्तु विश्वात्मन् विश्वसम्भव । अपवर्गस्थभूतानां पञ्चानां परतः स्थितः ।
नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु । योगेश्वर नमस्ते तु त्वं हि सर्व्वपरायणः ।
मत्संश्रितं यदात्थ त्वं वचः पुरुषसत्तम । तेन पश्यामि ते भावान् दिव्यान् हि त्रिषु वर्त्मसु ।
तच्च पश्यामि गोविन्द यत्ते रूपं सनातनं । सप्तमार्गा निरुद्धास्ते वायोरमिततेजसः ।
दिवन्ते शिरसा व्याप्तं पद्भ्यां देवी वसुन्धरा । दिशो भुजौ रविश्चक्षुर्व्वीर्य्ये शक्रः प्रतिष्ठितः । १८५०
अतसीपुष्पसङ्काशं पीतवाससमच्युतं । वपुर्ह्यनुमिमीमस्ते मेघस्येव सविद्युतः ।
त्वत्प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे । यच्छ्रेयः पुण्डरीकाक्ष तद्ध्यायस्व सुरोत्तम ।
॥ वासुदेव उवाच ॥ यतः खलु परा भक्तिर्मयि ते पुरुषर्षभ । ततो मया वपुर्द्दिव्यं त्वयि राजन् प्रदर्शितं ।
न ह्यभक्ताय राजेन्द्र भक्तायानृजवे न च । दर्शयाम्यहमात्मानं न चाशान्ताय भारत ।
भवांस्तु मम भक्तश्च नित्यञ्चार्ज्जवमास्थितः । दमे तपसि नित्ये च दाने च निरतः शुचिः । १८५५

अर्हस्त्वं भीष्म मां द्रष्टुं तपसा स्वेन पार्थिव। तव ह्युपस्थिता लोका येभ्यो नावर्त्तते पुनः।
पञ्चाशतं षट् च कुरुप्रवीर शेषं दिनानां तव जीवितस्य । ततः शुभे कर्म्मफलोदये त्वं समेष्यसे भीष्म विमुच्य देहं।
एते हि देवा वसवो विमानान्यास्थाय सर्व्वे ज्वलिताग्निकल्पाः । अन्तर्हितास्त्वां प्रतिपालयन्ति काष्ठां प्रपद्यन्तमुदक् पतङ्गं।
व्यावर्त्तमाने भगवत्युदीचीं सूर्य्ये जगत्कालवशं प्रपन्ने । गन्तासि लोकान् पुरुषप्रवीर नावर्त्तते यानुपलभ्य विद्वान्।
अमुं च लोकं त्वयि भीष्म याते ज्ञानानि नङ्क्ष्यन्त्यखिलेन वीर । अतस्तु सर्व्वे त्वयि सन्निकर्षं समागता धर्म्मविवेचनाय । १८६०
तज्ज्ञातिशोकोपहतश्रुताय सत्याभिसन्धाय युधिष्ठिराय । प्रब्रूहि धर्म्मार्थसमाधियुक्तं सत्यं वचोऽस्यापनुदाशु शोकं।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि कृष्णवाक्ये एकपञ्चाशोऽध्यायः ॥ ५१ ॥

॥ वैशम्पायन उवाच ॥ ततः कृष्णस्य तद्वाक्यं धर्म्मार्थसहितं हितं । श्रुत्वा शान्तनवो भीष्मः प्रत्युवाच कृताञ्जलिः।
लोकनाथ महाबाहो शिव नारायणाच्युत । तव वाक्यमुपश्रुत्य हर्षेणास्मि परिप्लुतः।
किञ्चाहमभिधास्यामि वाक्पते तव सन्निधौ । यदा वाचो गतं सर्व्वं तव वाचि समाहितं।
यच्च किञ्चित् क्वचिल्लोके कर्त्तव्यं क्रियते च यत्। त्वत्तस्तन्निःसृतं देव लोके बुद्धिमतो हि ते। १८६५
कथयेद्देवलोकं यो देवराजसमीपतः। धर्म्मकामार्थमोक्षाणां सोऽर्थं ब्रूयात्तवाग्रतः।
शराभितापाद्व्यथितं मनो मे मधुसूदन। गात्राणि चावसीदन्ति न च बुद्धिः प्रसीदति।
न च मे प्रतिभा काचिदस्ति किञ्चित् प्रभाषितुं। पीड्यमानस्य गोविन्द विषानलसमैः शरैः।
बलं मे प्रजहातीव प्राणाः सन्त्वरयन्ति च। मर्म्माणि परितप्यन्ति भ्रान्तचित्तस्तथा ह्यहं।
दौर्ब्बल्यात् सज्जते वाङ्मे स कथं वक्तुमुत्सहे। साधु मे त्वं प्रसीदस्व दाशार्हकुलवर्द्धन । १८७०
तत् क्षमस्व महाबाहो न ब्रूयां किञ्चिदच्युत। त्वत्सन्निधौ च सीदेद्धि वाचस्पतिरपि ब्रुवन्।
न दिशः सम्प्रजानामि नाकाशं न च मेदिनीं। केवलं तव वीर्य्येण तिष्ठामि मधुसूदन।
स्वयमेव भवांस्तस्माद्धर्म्मराजस्य यद्धितं। तद्ब्रवीत्वाशु सर्व्वेषामागमानां त्वमागमः।
कथं त्वयि स्थिते कृष्ण शाश्वते लोककर्त्तरि। प्रब्रूयान्मद्विधः कश्चिद्गुरौ शिष्य इव स्थिते।
॥ वासुदेव उवाच ॥ उपपन्नमिदं वाक्यं कौरवाणां धुरन्धरे। महावीर्य्ये महासत्त्वे स्थिरे सर्व्वार्थदर्शिनि। १८७५
यच्च मामात्थ गाङ्गेय बाणाघातरुजं प्रति। गृहाणात्र वरं भीष्म मत्प्रसादकृतं प्रभो।
न ते ग्लानिर्न ते मूर्च्छा न दाहो न च ते रुजा। प्रभविष्यन्ति गाङ्गेय क्षुत्पिपासे न चाप्युत।
ज्ञानानि च समग्राणि प्रतिभास्यन्ति तेऽनघ। न च ते क्वचिदासक्तिर्बुद्धेः प्रादुर्भविष्यति।
सत्त्वस्थञ्च मनो नित्यं तव भीष्म भविष्यति। रजस्तमोभ्यां रहितं घनैर्मुक्त इवोडुराट्।
यद्यच्च धर्म्मसंयुक्तमर्थयुक्तमथापि च। चिन्तयिष्यसि तत्राग्र्या बुद्धिस्तव भविष्यति। १८८०

इमञ्च राजशार्दूल भूतग्रामञ्चतुर्व्विधं । चतुर्व्विधं समाश्रित्य द्रक्ष्यस्यमितविक्रम ।

संसरन्तं प्रजाजालं संयुक्तो ज्ञानचक्षुषा । भीष्म द्रक्ष्यसि तत्त्वेन जले मीन इवामले ।

॥ वैशम्पायन उवाच ॥ ततस्ते व्याससहिताः सर्व्व एव महर्षयः । ऋग्यजुःसामसहितैर्व्वचोभिः कृष्णमार्च्चयन् ।

ततः सर्व्वार्त्तवं दिव्यं पुष्पवर्षं नभस्तलात् । पपात यत्र वार्ष्णेयः सगाङ्गेयः सपाण्डवः ।

वादित्राणि च सर्व्वाणि जगुश्चाप्सरसाङ्गणाः । न चाहितमनिष्टञ्च किञ्चित्तत्र प्रदृश्यते । १८८५

ववौ शिवः सुखो वायुः सर्व्वगन्धवहः शुचिः । शान्तायां दिशि शान्ताश्च प्रावदन्मृगपक्षिणः ।

ततो मुहूर्त्ताद्भगवान् सहस्रांशुर्द्दिवाकरः । दहन् वनमिवैकान्ते प्रतीच्यां प्रत्यदृश्यत ।

ततो महर्षयः सर्व्वे समुत्थाय जनार्द्दनं । भीष्ममामन्त्रयाञ्चक्रू राजानञ्च युधिष्ठिरं ।

ततः प्रणाममकरोत् केशवः सहपाण्डवः । सात्यकिः सञ्जयश्चैव स च शारद्वतः कृपः ।

ततस्ते धर्म्मनिरताः सम्यक् तैरपि पूजिताः । श्वः समेष्याम इत्युक्त्वा यथेष्टं त्वरिता ययुः । १८९०

तथैवामन्त्र्य गाङ्गेयं केशवः पाण्डवास्तथा । प्रदक्षिणमुपावृत्य रथानारुरुहुः शुभान् ।

ततो रथैः काञ्चनचित्रकूवरैर्महीधराभैः समदैश्च दन्तिभिः । हयैः सुपर्णैरिव चाशुगामिभिः पदातिभिश्चात्तशरासनादिभिः ।

ययौ रथानां पुरतो हि सा चमूस्तथैव पश्चादतिमात्रसारिणी । पुरश्च पश्चाच्च यथा महानदी तमृक्षवन्तं गिरिमेत्य नर्म्मदा ।

ततः पुरस्ताद्भगवान्निशाकरः समुत्थितस्तामभिहर्षयंश्चमूं । दिवाकरापीतरसा महौषधीः पुनः स्वकेनैव गुणेन योजयन् ।

ततः पुरं सुरपुरसम्मितद्युतिं प्रविश्य ते यदुवृषपाण्डवास्तदा । यथोचितान् भवनवरान् समाविशन् श्रमान्विता मृगपतयो गुहा इव । १८९५

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि युधिष्ठिराद्यागमने द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

॥ वैशम्पायन उवाच ॥ ततः शयनमाविश्य प्रसुप्तो मधुसूदनः । याममात्रार्द्धशेषायां यामिन्यां प्रत्यबुध्यत ।

स ध्यानपथमाविश्य सर्व्वज्ञानानि माधवः । अवलोक्य ततः पश्चाद्दध्यौ ब्रह्म सनातनं ।

ततः स्तुतिपुराणज्ञा रक्तकण्ठाः सुशिक्षिताः । अस्तुवन् विश्वकर्म्माणं वासुदेवं प्रजापतिं ।

पठन्ति पाणिस्वनिकास्तथा गायन्ति गायकाः । शङ्खानथ मृदङ्गांश्च प्रवाद्यन्ति सहस्रशः ।

वीणापणववेणूनां स्वनश्चातिमनोरमः । प्रहास इव विस्तीर्णः शुश्रुवे तस्य वेश्मनः । १९००

ततो युधिष्ठिरस्यापि राज्ञो मङ्गलसंहिताः । उच्चेरुर्म्मधुरा वाचो गीतवादित्रनिःस्वनाः ।

तत उत्थाय दाशार्हः स्नातः प्राञ्जलिरच्युतः । जप्त्वा गुह्यं महाबाहुरग्नीनाश्रित्य तस्थिवान् ।

ततः सहस्रं विप्राणां चतुर्व्वेदविदान्तथा । गवां सहस्रेणैकैकं वाचयामास माधवः ।

मङ्गलालम्भनं कृत्वा आत्मानमवलोक्य च । आदर्शे विमले कृष्णस्ततः सात्यकिमब्रवीत् ।

गच्छ शैनेय जानीहि गत्वा राजनिवेशनं । अपि सज्जो महातेजा भीष्मं द्रष्टुं युधिष्ठिरः । १९०५

ततः कृष्णस्य वचनात् सात्यकिस्त्वरितो ययौ । उपगम्य च राजानं युधिष्ठिरमभाषत ।
युक्तो रथवरो राजन् वासुदेवस्य धीमतः । समीपमापगेयस्य प्रयास्यति जनार्द्दनः ।
भवत्प्रतीक्षः कृष्णोऽसौ धर्म्मराज महाद्युते । यदत्रानन्तरं कृत्यं तद्भवान् कर्त्तुमर्हति ।
एवमुक्तः प्रत्युवाच धर्म्मपुत्त्रो युधिष्ठिरः ।
॥ युधिष्ठिर उवाच ॥ युज्यतां मे रथवरः फाल्गुनाप्रतिमद्युते । न सैनिकैश्च यातव्यं यास्यामो वयमेव हि ।   १९१०
न च पीडयितव्यो मे भीष्मो धर्म्मभृताम्वरः । अतः पुरःसराश्चापि निवर्त्तन्तु धनञ्जय ।
अद्यप्रभृति गाङ्गेयः परं गुह्यं प्रवक्ष्यति । अतो नेच्छामि कौन्तेय पृथग्जनसमागमं ।
॥ वैशम्पायन उवाच ॥ स तद्वाक्यमथाज्ञाय कुन्तीपुत्त्रो धनञ्जयः । युक्तं रथवरं तस्मा आचचक्षे नरर्षभः ।
ततो युधिष्ठिरो राजा यमौ भीमार्ज्जुनावपि । भूतानीव समस्तानि ययुः कृष्णनिवेशनं ।
आगच्छत्स्वथ कृष्णोऽपि पाण्डवेषु महात्मसु । शैनेयसहितो धीमान्रथमेवान्वपद्यत ।   १९१५
रथस्थाः संविदं कृत्वा सुखां पृष्ट्वा च शर्व्वरीं । मेघघोषै रथवरैः प्रययुस्ते नरर्षभाः ।
बलाहकं मेघपुष्पं शैव्यं सुग्रीवमेव च । दारुकश्चोदयामास वासुदेवस्य वाजिनः ।
ते हया वासुदेवस्य दारुकेण प्रचोदिताः । गां खुराग्रैस्तथा राजन् लिखन्तः प्रययुस्तदा ।
ते ग्रसन्त इवाकाशं वेगवन्तो महाबलाः । क्षेत्रं धर्म्मस्य कृत्स्नस्य कुरुक्षेत्रमवातरन् ।
ततो ययुर्यत्र भीष्मः शरतल्पगतः प्रभुः । आस्ते महर्षिभिः सार्द्धं ब्रह्मा देवगणैर्यथा ।   १९०
ततोऽवतीर्य्य गोविन्दो रथात्स च युधिष्ठिरः । भीमो गाण्डीवधन्वा च यमौ सात्यकिरेव च ।
ऋषीनभ्यर्च्चयामासुः करानुद्यम्य दक्षिणान् । स तैः परिवृतो राजा नक्षत्रैरिव चन्द्रमाः ।
अभ्याजगाम गाङ्गेयं ब्रह्माणमिव वासवः । शरतल्पे शयानन्तमादित्यं पतितं यथा ।
स ददर्श महाबाहुर्भयाच्चागतसाध्वसः ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि कृष्णादिभीष्मसमीपयाने त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
॥ जनमेजय उवाच ॥ धर्म्मात्मनि महावीर्य्ये सत्यसन्धे जितात्मनि । देवव्रते महाभागे शरतल्पगतेऽच्युते ।   १९२५
शयाने वीरशयने भीष्मे शान्तनुनन्दने । गाङ्गेये पुरुषव्याघ्रे पाण्डवैः पर्य्युपासिते ।
काः कथास्समवर्त्तन्त तस्मिन् वीरसमागमे । हतेषु सर्व्वसैन्येषु तन्मे शंस महामुने ।
॥ वैशम्पायन उवाच ॥ शरतल्पगते भीष्मे कौरवाणां धुरन्धरे । आजग्मुरृषयः सिद्धा नारदप्रमुखा नृप ।
हतशिष्टाश्च राजानो युधिष्ठिरपुरोगमाः । धृतराष्ट्रश्च कृष्णश्च भीमार्जुनयमास्तथा ।
तेऽभिगम्य महात्मानो भरतानां पितामहं । अन्वशोचन्त गाङ्गेयमादित्यं पतितं यथा ।   १९३०
मुहूर्त्तमिव च ध्यात्वा नारदो देवदर्शनः । उवाच पाण्डवान् सर्व्वान् हतशिष्टांश्च पार्थिवान् ।
प्राप्तकालं समाचक्षे भीष्मोऽयमनुयुज्यतां । अस्तमेति हि गाङ्गेयो भानुमानिव भारत ।
अयं प्राणानुत्सिसृक्षुस्तं सर्व्वेऽभ्यनुपृच्छत । कृत्स्नान् हि विविधान् धर्म्मांश्चातुर्व्वर्ण्यस्य वेत्त्ययं ।
एष वृद्धः परान् लोकान् सम्प्राप्नोति तनुं त्यजन् । तं शीघ्रमनुयुञ्जीध्वं संशयान्मनसि स्थितान् ।

॥ वैशम्पायन उवाच ॥ एवमुक्ता नारदेन भीष्ममीचुर्नराधिपाः । अनुक्त्वा तु वचस्ते वीक्षाञ्चक्रुः परस्परं । १९३५
अथोवाच हृषीकेशं पाण्डुपुत्त्रो युधिष्ठिरः । नान्यस्त्वं देवकीपुत्त्रास्त्वत्तः प्रष्टुं पितामहं ।
प्रव्याहर यदुश्रेष्ठ त्वमग्रे मधुसूदन । त्वं हि नस्तात सर्व्वेषां सर्व्वधर्म्मविदुत्तमः ।
एवमुक्तः पाण्डवेन भगवान् केशवस्तदा । अभिगम्य दुराधर्षं प्रव्याहारयदच्युतः ।
॥ वासुदेव उवाच ॥ कच्चित् सुखेन रजनी व्युष्टा ते राजसत्तम । विस्पष्टलक्षणा बुद्धिः कच्चिच्चोपस्थिता तव ।
कच्चिज्ज्ञानानि सर्व्वाणि प्रतिभान्ति च तेऽनघ । न ग्लायेत च हृदयं न च ते व्याकुलं मनः । १९४०
॥ भीष्म उवाच ॥ दाहो मोहः श्रमश्चैव क्लमो ग्लानिस्तथा रुजा । तव प्रसादाद्गोविन्द सद्यः प्रतिगतानि मे ।
यच्च भूतं भविष्यच्च भवच्च परमद्युते । तत् सर्व्वमनुपश्यामि पाणौ फलमिवार्पितं ।
वेदोक्ताश्चैव ये धर्म्मा वेदान्ताधिगताश्च ये । तान् सर्व्वान् सम्प्रपश्यामि वरदानात्तवाच्युत ।
शिष्टैश्च धर्म्मो यः प्रोक्तः स च मे हृदि वर्त्तते । देशजातिकुलानाञ्च धर्म्मज्ञोऽस्मि जनार्द्दन ।
चतुर्ष्वाश्रमधर्म्मेषु योऽर्थः स च हृदि स्थितः । राजधर्म्मांश्च सकलानवगच्छामि केशव । १९४५
यत्र यत्र च वक्तव्यं तद्वक्ष्यामि जनार्द्दन । तव प्रसादाद्धि शुभा मनो मे बुद्धिराविशत् ।
पुनरेवास्मि संवृत्तस्त्वदनुध्यानबृंहितः । वक्तुं श्रेयः समर्थोऽस्मि त्वत्प्रसादाज्जनार्द्दन ।
स्वयं किमर्थन्तु भवान् श्रेयो नः प्राह पाण्डवं । किन्ते विवक्षितञ्चात्र तदाशु वद माधव ।
॥ वासुदेव उवाच ॥ यशसः श्रेयसश्चैव मूलं मां विद्धि कौरव । मत्तः सर्व्वेऽभिनिर्वृत्ता भावाः सदसदात्मकाः ।
शीतांशुश्चन्द्र इत्युक्ते लोके को विस्मयिष्यति । तथैव यशसा पूर्णे मयि को विस्मयिष्यति । १९५०
आधेयन्तु मया भूयो यशस्तव महाद्युते । ततो मे विपुला बुद्धिस्त्वयि भीष्म समर्पिता ।
यावद्धि पृथिवीपाल पृथ्वीयं स्थास्यति ध्रुवा । तावत्तवाक्षया कीर्त्तिर्लोकाननुचरिष्यति ।
यच्च त्वं वक्ष्यसे भीष्म पाण्डवायानुपृच्छते । वेदप्रवाद इव ते स्थास्यन्ते वसुधातले ।
यश्चैतेन प्रमाणेन योक्ष्यत्यात्मानमात्मना । स फलं सर्व्वपुण्यानां प्रेत्य चानुभविष्यति ।
एतस्मात् कारणाद्भीष्म मतिर्द्दिव्या मया हि ते । दत्ता यशो विप्रथयेत् कथं भूयस्तवेति ह । १९५५
यावद्धि प्रथते लोके पुरुषस्य यशो भुवि । तावत्तस्याक्षया कीर्त्तिर्भवतीति विनिश्चितं ।
राजानो हतशिष्टास्त्वां राजन्नभित आसते । धर्म्माननुयुयुक्षन्तस्तेभ्यः प्रब्रूहि भारत ।
भवान् हि वयसा वृद्धः श्रुताचारसमन्वितः । कुशलो राजधर्म्माणां सर्व्वेषामपरांश्च ये ।
जन्मप्रभृति ते कश्चिद्वृजिनं न ददर्श ह । ज्ञातारं सर्व्वधर्म्माणां त्वां विदुः सर्व्वपार्थिवाः ।
तेभ्यः पितेव पुत्त्रेभ्यो राजन् ब्रूहि परं नयं । ऋषयश्चैव देवाश्च त्वया नित्यमुपासिताः । १९६०
तस्माद्वक्तव्यमेवेदं त्वयाऽवश्यमशेषतः । धर्म्मं शुश्रूषमाणेभ्यः पृष्टेन च सतां पुनः ।
वक्तव्यं विदुषा चेति धर्म्ममाहुर्म्मनीषिणः । अप्रतिब्रुवतः कष्टो दोषो हि भविता प्रभो ।
तस्मात् पुत्त्रैश्च पौत्त्रैश्च धर्म्मान् पृष्टान् सनातनान् । विद्वन् जिज्ञासमानैस्त्वं प्रब्रूहि भरतर्षभ ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि कृष्णवाक्ये चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

॥ वैशम्पायन उवाच ॥ अथाब्रवीन्महातेजा वाक्यं कौरवनन्दनः । हन्त धर्म्मान् प्रवक्ष्यामि दृढे वाङ्मनसी मम ।
तव प्रसादाद्गोविन्द भूतात्मा ह्यसि शाश्वतः । युधिष्ठिरस्तु धर्म्मात्मा मां धर्म्माननुपृच्छतु । १९९५
एवं प्रीतो भविष्यामि धर्म्मान् वक्ष्यामि चाखिलान् । यस्मिन् राजर्षभे जाते धर्म्मात्मनि महात्मनि ।
अहृष्यन् वृष्णयः सर्व्वे स मां पृच्छतु पाण्डवः । सर्व्वेषां दीप्तयशसां कुरूणां धर्म्मचारिणां ।
यस्य नास्ति समः कश्चित् स मां पृच्छतु पाण्डवः । धृतिर्दमो ब्रह्मचर्य्यं क्षमा धर्म्मश्च नित्यदा ।
यस्मिन्नोजश्च तेजश्च स मां पृच्छतु पाण्डवः । सम्बन्धिनोऽतिथीन् भृत्यान् संश्रितांश्चैव यो भृशं ।
सम्मानयति सत्कृत्य स मां पृच्छतु पाण्डवः । सत्यं दानं तपः शौर्य्यं शान्तिर्दाक्ष्यमसम्भ्रमः । १९००
यस्मिन्नेतानि सर्व्वाणि स मां पृच्छतु पाण्डवः । यो न कामान्न संरम्भान्न भयान्नार्थकारणात् ।
कुर्य्यादधर्म्मं धर्म्मात्मा स मां पृच्छतु पाण्डवः । सत्यनित्यः क्षमानित्यो ज्ञाननित्योऽतिथिप्रियः ।
यो ददाति सतां नित्यं स मां पृच्छतु पाण्डवः । इज्याध्ययननित्यश्च धर्म्मे च निरतः सदा ।
शान्तः श्रुतरहस्यश्च स मां पृच्छतु पाण्डवः ।
॥ वासुदेव उवाच ॥ लज्जया परयोपेतो धर्म्मराजो युधिष्ठिरः । अभिशापभयाद्भीतो भवन्तं नोपसर्पति । १९०५
लोकस्य कदनं कृत्वा लोकनाथो विशाम्पते । अभिशापभयाद्भीतो भवन्तं नोपसर्पति ।
पूज्यान्मान्यांश्च भक्तांश्च गुरून् सम्बन्धिबान्धवान् । अर्घार्हानिषुभिर्भित्त्वा भवन्तं नोपसर्पति ।
॥ भीष्म उवाच ॥ ब्राह्मणानां यथा धर्म्मो दानमध्ययनं तपः । क्षत्त्रियाणां तथा कृष्ण समरे देहपातनं ।
पितॄन् पितामहान् भ्रातॄन् गुरून् सम्बन्धिबान्धवान् । मिथ्याप्रवृत्तान् यः संख्ये निहन्याद्धर्म्म एव सः ।
समयत्यागिनो लुब्धान् गुरूनपि च केशव । निहन्ति समरे पापान् क्षत्त्रियः स हि धर्म्मवित् । १९८०
यो लोभान्न समीक्षेत धर्म्मसेतुं सनातनं । निहन्ति यस्तं समरे क्षत्त्रियो वै स धर्म्मवित् ।
लोहितोदां केशतृणां गजशैलां ध्वजद्रुमां । महीं करोति युद्धेषु क्षत्त्रियो यः स धर्म्मवित् ।
आहूतेन रणे नित्यं योद्धव्यं क्षत्त्रबन्धुना । धर्म्म्यं स्वर्ग्यञ्च लोक्यञ्च युद्धं हि मनुरब्रवीत् ।
॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु भीष्मेण धर्म्मपुत्रो युधिष्ठिरः । विनीतवदुपागम्य तस्थौ सन्दर्शनेऽग्रतः ।
अथास्य पादौ जग्राह भीष्मश्चापि ननन्द तं । मूर्द्ध्नि चैनमुपाघ्राय निषीदेत्यब्रवीत्तदा । १९८५
तमुवाचाथ गाङ्गेयो वृषभः सर्व्वधन्विनां । मां पृच्छ तात विस्रब्धं मा भैस्त्वं कुरुसत्तम ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि युधिष्ठिराश्वासने पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
॥ वैशम्पायन उवाच ॥ प्रणिपत्य हृषीकेशमभिवाद्य पितामहं । अनुमान्य गुरून् सर्व्वान् पर्य्यपृच्छद्युधिष्ठिरः ।
॥ युधिष्ठिर उवाच ॥ राज्यं वै परमो धर्म्म इति धर्म्मविदो विदुः । महान्तमेतं भारञ्च मन्ये तद्ब्रूहि पार्थिव ।
राजधर्म्मान् विशेषेण कथयस्व पितामह । सर्व्वस्य जीवलोकस्य राजधर्म्मः परायणं ।
त्रिवर्गो हि समासक्तो राजधर्म्मेषु कौरव । मोक्षधर्म्मश्च विस्पष्टः सकलोऽत्र समाहितः । १९९०
यथा हि रश्मयोऽश्वस्य द्विरदस्याङ्कुशो यथा । नरेन्द्रधर्म्मो लोकस्य तथा प्रग्रहणं स्मृतं ।
तत्र चेत् सम्प्रमुह्येत धर्म्मे राजर्षिसेविते । लोकस्य संस्था न भवेत् सर्व्वञ्च व्याकुलीभवेत् ।

उद्यन् हि यथा सूर्य्यो नाशयत्यशुभं तमः । राजधर्म्मास्तथाऽलोक्यामां विपन्त्यशुभां गतिं ।
तदग्रे राजधर्म्मान् हि मदर्थं त्वं पितामह । प्रब्रूहि भरतश्रेष्ठ त्वं हि धर्म्मभृताम्वरः ।
आगमश्च परस्त्वत्तः सर्व्वेषां नः परन्तप । भवन्तं हि परं बुद्धौ वासुदेवोऽभिमन्यते । १९९५
॥ भीष्म उवाच ॥ नमो धर्म्माय महते नमः कृष्णाय वेधसे । ब्राह्मणेभ्यो नमस्कृत्य धर्म्मान् वक्ष्यामि शाश्वतान् ।
शृणु कार्त्स्न्येन मत्तस्त्वं राजधर्म्मान् युधिष्ठिर । निरुच्यमानान्नियतो यच्चान्यदपि वाञ्छसि ।
आदावेव कुरुश्रेष्ठ राज्ञा रञ्जनकाम्यया । देवतानां द्विजानाञ्च वर्त्तितव्यं यथाविधि ।
दैवतान्यर्च्चयित्वा हि ब्राह्मणांश्च कुरूद्वह । आनृण्यं याति धर्म्मस्य लोकेन च समर्च्च्यते ।
उत्थानेन सदा पुत्त्र प्रयतेथा युधिष्ठिर । न ह्युत्थानमृते दैवं राज्ञामर्थं प्रसाधयेत् । २०००
साधारणं द्वयं ह्येतद्दैवमुत्थानमेव च । पौरुषं हि परं मन्ये दैवं निश्चित्य मुच्यते ।
विपन्ने च समारम्भे सन्तापं मास्म वै कृथाः । घटस्वैवं सदात्मानं राज्ञामेष परो नयः ।
न हि सत्यादृते किञ्चिद्राज्ञां वै सिद्धिकारकं । सत्ये हि राजा निरतः प्रेत्य चेह च नन्दति ।
ऋषीणामपि राजेन्द्र सत्यमेव परं धनं । तथा राज्ञः परं सत्यान्नान्यद्विश्वासकारणं ।
गुणवान् शीलवान् दान्तो मृदुर्धर्म्म्यो जितेन्द्रियः । सुदर्शः स्थूललक्ष्यश्च न भ्रश्येत सदा श्रियः । २००५
आर्जवं सर्व्वकार्य्येषु श्रयेथाः कुरुनन्दन । पुनर्नयविचारेण त्रयीसम्वरणेन च ।
मृदुर्हि राजा सततं लङ्घ्यो भवति सर्व्वशः । तीक्ष्णाच्चोद्विजते लोकस्तस्मादुभयमाचर ।
अदण्ड्याश्चैव ते पुत्त्र विप्राश्च वदताम्वर । भूतमेतत् परं लोके ब्राह्मणो नाम पाण्डव ।
मनुना चैव राजेन्द्र गीतौ श्लोकौ महात्मना । धर्म्मेषु स्वेषु कौरव्य हृदि तौ कर्त्तुमर्हसि ।
अद्भ्योऽग्निर्ब्रह्मतः क्षत्त्रमश्मनो लोहमुत्थितं । तेषां सर्व्वत्रगं तेजः स्वासु योनिषु शाम्यति । २०१०
अयो हन्ति यदाश्मानमग्निना वारि हन्यते । ब्रह्म च क्षत्त्रियो द्वेष्टि तदा सीदन्ति ते त्रयः ।
एवं कृत्वा महाराज नमस्या एव ते द्विजाः । भौमं ब्रह्म द्विजश्रेष्ठा धारयन्ति समर्च्चिताः ।
एवञ्चैव नरव्याघ्र लोकत्रय विघातकाः । निग्राह्या एव सततं बाहुभ्यां ये स्युरीदृशाः ।
श्लोकौ चोशनसा गीतौ पुरा तात महर्षिणा । तौ निबोध महाराज त्वमेकाग्रमना नृप ।
उद्यम्य शस्त्रमायान्तमपि वेदान्तगं रणे । निगृह्णीयात् स्वधर्म्मेण धर्म्मापेक्षी नराधिपः । २०१५
विनश्यमानं धर्म्मं हि योऽभिरक्षेत् स धर्म्मवित् । न तेन धर्म्महा स स्यान्मन्युस्तन्मन्युमृच्छति ।
एवञ्चैव नरश्रेष्ठ रक्ष्या एव द्विजातयः । सापराधानपि हि तान् विषयान्ते समुत्सृजेत् ।
अभिशस्तमपि ह्येषां कृपायीत विशाम्पते । ब्रह्मघ्ने गुरुतल्पे च भ्रूणहत्ये तथैव च ।
राजद्विष्टे च विप्रस्य विषयान्ते विसर्ज्जनं । विधीयते न शारीरं दण्डमेषां कदाचन ।
दयिताश्च नरास्ते स्युर्भक्तिमन्तो द्विजेषु ये । न कोषः परमोऽन्योऽस्ति राज्ञां पुरुषसञ्चयात् । २०२०
दुर्गेषु च महाराज षट्सु ये शास्त्रनिश्चिताः । सर्व्वदुर्गेषु मन्यन्ते नरदुर्गं सुदुस्तरं ।
तस्मान्नित्यं दया कार्य्या चातुर्व्वर्ण्ये विपश्चिता । धर्म्मात्मा सत्यवाक् चैव राजा रञ्जयति प्रजाः ।

न च शान्तेन ते नित्यं भाव्यं पुत्र समन्ततः। अधर्मो हि मृदू राजा क्षमावानिव कुञ्जरः।
क्षममाणं नृपं नित्यं नीचः परिभवेज्जनः। हस्तियन्ता गजस्येव शिर एवारुरुक्षति।
तस्मान्नैव मृदुर्नित्यं तीक्ष्णो नैव भवेन्नृपः। वासन्तार्क इव श्रीमान् न शीतो न च घर्म्मदः। २०२५
प्रत्यक्षेणानुमानेन तथौपम्यागमैरपि। परीक्ष्यास्ते महाराज स्वे परे चैव नित्यशः।
व्यसनानि च सर्व्वाणि त्यजेथा भूरिदक्षिण। न चैव न प्रयुञ्जीत सङ्गन्तु परिवर्ज्जयेत्।
लोकस्य व्यसनी नित्यं परिभूतो भवत्युत। उद्वेजयति लोकञ्च योऽतिद्वेषी महीपतिः।
भवितव्यं सदा राज्ञा गर्भिणीसहधर्म्मिणा। कारणञ्च महाराज शृणु येनेदमिष्यते।
यथा हि गर्भिणी हित्वा स्वं प्रियं मनसोऽनुगं। गर्भस्य हितमाधत्ते तथा राज्ञाऽप्यसंशयं। २०३०
वर्त्तितव्यं कुरुश्रेष्ठ सदा धर्म्मानुवर्त्तिना। स्वं प्रियन्तु परित्यज्य यद्यल्लोकहितं भवेत्।
न सन्त्याज्यञ्च ते धैर्य्यं कदाचिदपि पाण्डव। धीरस्य स्पष्टदण्डस्य न भयं विद्यते क्वचित्।
परिहासश्च भृत्यैस्ते नात्यर्थं वदताम्बर। कर्त्तव्यो राजशार्दूल दोषमत्र हि मे शृणु।
अवमन्यन्ति भर्त्तारं संहर्षादुपजीविनः। स्वे स्थाने न च तिष्ठन्ति लङ्घयन्ति च तत्त्वतः।
प्रेष्यमाणा विकल्पन्ते गुह्यञ्चाप्यनुयुञ्जते। अयाच्यञ्चैव याचन्ते भोज्यान्याहारयन्ति च। २०३५
क्रुध्यन्ति परिदीप्यन्ति भूमिपायाधितिष्ठते। उत्कोचैर्व्वञ्चनाभिश्च कार्य्याण्यनुविहन्ति च।
जर्ज्जरञ्चास्य विषयं कुर्व्वन्ति प्रतिरूपकैः। स्त्रीरक्षिभिश्च सज्जन्ते तुल्यवेशा भवन्ति च।
वातं निष्ठीवनञ्चैव कुर्व्वते चास्य सन्निधौ। निर्लज्जा राजशार्दूल व्याहरन्ति च तद्वचः।
हयं वा दन्तिनं वापि रथं वा नृपसम्मतं। अभिरोहन्त्यनादृत्य हर्षुले पार्थिवे मृदौ।
इदन्ते दुष्करं राजन्निदन्ते दुष्टचेष्टितं। इत्येवं सुहृदो वाचं वदन्ते परिषद्गताः। २०४०
क्रुद्धे चास्मिन् हसन्त्येव न च हृष्यन्ति पूजिताः। संहर्षशीलाश्च तदा भवन्त्यन्योन्यकारणात्।
विस्रंसयन्ति मन्त्रञ्च विवृण्वन्ति च दुष्कृतं। लीलया चैव कुर्व्वन्ति सावज्ञास्तस्य शासनं।
अलङ्कारे च भोज्ये च तथा स्नानानुलेपने। ह्रियमाणे नरव्याघ्र स्वस्थास्तस्योपशृण्वतः।
निन्दन्ते स्वानधीकारान् सन्त्यजन्ते च भारत। न वृत्त्या परितुष्यन्ति राजदेयं हरन्ति च।
क्रीडितुं तेन चेच्छन्ति ससूत्रेणेव पक्षिणा। अस्मत्प्रणेयो राजेति लोकांश्चैव वदन्त्युत। २०४५
एते चैवापरे चैव दोषाः प्रादुर्भवन्त्युत। नृपतौ मार्द्दवोपेते हर्षुले च युधिष्ठिर।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि षट्पञ्चाशोऽध्यायः॥ ५६ ॥
॥ भीष्म उवाच ॥ नित्योद्युक्तेन वै राज्ञा भवितव्यं युधिष्ठिर। प्रशस्यते न राजा हि नारीवोद्यमवर्जितः।
भगवानुशना श्चाह श्लोकमत्र विशाम्पते। तदिहैकमना राजन् गदतस्तं निबोध मे।
द्वाविमौ ग्रसते भूमिः सर्पो विलशयानिव। राजानञ्चाविरोद्धारं ब्राह्मणञ्चाप्रवासिनं।
तदेतन्नरशार्दूल हृदि त्वं कर्त्तुमर्हसि। सन्धेयानपि सन्धत्स्व विरोध्यांश्च विरोधय २०५०
सप्ताङ्गस्य च राज्यस्य विपरीतं य आचरेत्। गुरुर्व्वा यदि वा मित्रं प्रतिहन्तव्य एव सः।

मरुत्तेन हि राज्ञा वै गीतः श्लोकः पुरातनः। राज्याधिकारे राजेन्द्र बृहस्पतिमते पुरा।
गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः। उत्पथप्रतिपन्नस्य दण्डो भवति शाश्वतः।
बाहोः पुत्त्रेण राज्ञा च सगरेण च धीमता। असमञ्जाः सुतो ज्येष्ठस्त्यक्तः पौरहितैषिणा।
असमञ्जाः सरय्वां स पौराणां बालकान्नृप। न्यमज्जयदतः पित्रा निर्भर्त्स्य स विवासितः। २०५५
ऋषिणोद्दालकेनापि श्वेतकेतुर्महातपाः। मिथ्या विप्रानुपचरन् सन्त्यक्तो दयितः सुतः।
लोकरञ्जनमेवात्र राज्ञां धर्म्मः सनातनः। सत्यस्य रक्षणञ्चैव व्यवहारस्य चार्ज्जवं।
न हिंस्यात् परवित्तानि देयं काले च दापयेत्। विक्रान्तः सत्यवाक् क्षान्तो नृपो न चलते पथः।
आत्मवांश्च जितक्रोधः शास्त्रानुगतनिश्चयः। धर्म्मे चार्थे च कामे च मोक्षे च सततं रतः।
त्रय्यां संवृतमन्त्रश्च राजा भवितुमर्हति। वृजिनस्य नरेन्द्राणां नान्यच्चारक्षणात् परं। २०६०
चातुर्व्वर्ण्यस्य धर्म्माश्च रक्षितव्या महीक्षिता। धर्म्मसङ्कररक्षा च राज्ञां धर्म्मः सनातनः।
न विश्वसेच्च नृपतिर्न चात्यर्थञ्च विश्वसेत्। षाड्गुण्यगुणदोषांश्च नित्यं बुद्ध्याऽवलोकयेत्।
द्विट्छिद्रदर्शी नृपतिर्नित्यमेव प्रशस्यते। त्रिवर्गे विदितार्थश्च युक्तचारोपधिश्च यः।
कोषस्योपार्ज्जनरतिर्यमवैश्रवणोपमः। वेत्ता च गुणदोषस्य स्थानवृद्धिक्षयात्मनः।
अभृतानां भवेद्भर्त्ता भृतानामन्ववेक्षकः। नृपतिः सुमुखश्च स्यात् स्मितपूर्व्वाभिभाषिता। २०६५
उपासिता च वृद्धानां जिततन्द्रिरलोलुपः। सतां वृत्ते स्थितमतिः सन्तोषाचारदर्शनः।
न चाददीत वित्तानि सतां हस्तात् कदाचन। असद्भ्यश्च समादद्यात् सद्भ्यश्च प्रतिपादयेत्।
स्वयं प्रहर्त्ता दाता च वश्यात्मा रम्यसाधनः। काले दाता च भोक्ता च शुद्धाचारस्तथैव च।
शूरान् भक्तानसंहार्य्यान् कुले जातानरोगिणः। शिष्टान् शिष्टाभिसम्बन्धान् मानिनोऽनवमानिनः।
विद्याविदो लोकविदः परलोकान्ववेक्षकान्। धर्म्मे च निरतान् साधूनचलानचलानिव। २०७०
सहायान् सततं कुर्य्याद्राजा भूतिपरिष्कृतः। तैश्च तुल्यो भवेद्भोगैश्छत्रमात्राज्ञयाधिकः।
प्रत्यक्षा च परोक्षा च वृत्तिश्चास्य भवेत् सदा। एवं कुर्व्वन्नरेन्द्रोऽपि न खेदमिह विन्दति।
सर्व्वाभिशङ्की नृपतिर्यश्च सर्व्वहरो भवेत्। स क्षिप्रमनृजुर्लुब्धः स्वजनेनैव बध्यते।
शुचिस्तु पृथिवीपालो लोकचित्तग्रहे रतः। न पतत्यरिभिर्ग्रस्तः पतितश्चावतिष्ठते।
अक्रोधनो ह्यव्यसनी मृदुदण्डो जितेन्द्रियः। राजा भवति भूतानां विश्वास्यो हिमवानिव। २०७५
प्राज्ञस्त्यागगुणोपेतः पररन्ध्रेषु तत्परः। सुदर्शः सर्व्ववर्णानां नयापनयवित्तथा।
क्षिप्रकारी जितक्रोधः सुप्रसादो महामनाः। अरोषप्रकृतिर्युक्तः क्रियावानविकत्थनः।
आरब्धान्येव कार्य्याणि सुपर्य्यवसितानि च। यस्य राज्ञः प्रदृश्यन्ते स राजा राजसत्तमः।
पुत्त्रा इव पितुर्गेहे विषये यस्य मानवाः। निर्भया विचरिष्यन्ति स राजा राजसत्तमः।
अगूढविभवा यस्य पौरा राष्ट्रनिवासिनः। नयापनयवेत्तारः स राजा राजसत्तमः। २०८०
स्वकर्म्मनिरता यस्य जना विषयवासिनः। असङ्घातरता दान्ताः पाल्यमाना यथाविधि।

वश्या नेया विधेयाश्च न च सङ्घर्षशीलिनः। विषये दानरुचयो नरा यस्य स पार्थिवः।
न यस्य कूटं कपटं न माया न च मत्सरः। विषये भूमिपालस्य तस्य धर्म्मः सनातनः।
यः सत्करोति ज्ञानानि ज्ञेये पौरहिते रतः। सतां वर्त्मानुगस्त्यागी स राजा राज्यमर्हति।
यस्य चाराश्च मन्त्राश्च नित्यञ्चैव कृताकृताः। न ज्ञायन्ते हि रिपुभिः स राजा राज्यमर्हति। २०८५
श्लोकश्चायं पुरा गीतो भार्गवेण महात्मना। आख्याने रामचरिते नृपतिं प्रति भारत।
राजानम्प्रथमं विन्देत्ततो भार्य्यां ततो धनं। राजन्यसति लोकस्य कुतो भार्य्या कुतो धनं।
तद्राज्ये राज्यकामानां नान्यो धर्म्मः सनातनः। ऋते रक्षान्तु विस्पष्टां रक्षा लोकस्य धारिणी।
प्राचेतसेन मनुना श्लोकौ चेमावुदाहृतौ। राजधर्म्मेषु राजेन्द्र ताविहैकमनाः शृणु।
षडेतान् पुरुषो जह्याद्भिन्नां नावमिवार्णवे। अप्रवक्तारमाचार्य्यमनधीयानमृत्विजं। २०९०
अरक्षितारं राजानं भार्य्याञ्चाप्रियवादिनीं। ग्रामकामञ्च गोपालं वनकामञ्च नापितं।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि सप्तपञ्चाशोऽध्यायः॥ ५७ ॥
॥ भीष्म उवाच॥ एतत्ते राजधर्म्माणां नवनीतं युधिष्ठिर। बृहस्पतिर्हि भगवान् नान्यं धर्म्मं प्रशंसति।
विशालाक्षश्च भगवान् काव्यश्चैव महातपाः। सहस्राक्षो महेन्द्रश्च तथा प्राचेतसो मनुः।
भारद्वाजश्च भगवांस्तथा गौरशिरा मुनिः। राजशास्त्रप्रणेतारो ब्रह्मण्या ब्रह्मवादिनः।
रक्षामेव प्रशंसन्ति धर्म्मं धर्म्मभृताम्वर। राज्ञां राजीवताम्राक्ष साधनञ्चात्र मे शृणु। २०९५
चारश्च प्रणिधिश्चैव काले दानममत्सरात्। युक्त्यादानं न चादानमयोगेन युधिष्ठिर।
सतां संग्रहणं शौर्य्यं दाक्ष्यं सत्यं प्रजाहितं। अनार्ज्जवैरार्ज्जवैश्च शत्रुपक्षस्य भेदनं।
केतनानाञ्च जीर्णानामवेक्षा चैव सीदतां। द्विविधस्य च दण्डस्य प्रयोगः कालचोदितः।
साधूनामपरित्यागः कुलीनानाञ्च धारणं। निचयश्च निचेयानां सेवा बुद्धिमतामपि।
बलानां हर्षणं नित्यं प्रजानामन्ववेक्षणं। कार्य्येष्वखेदः कोषस्य तथैव च विवर्द्धनं। २१००
पुरगुप्तिरविश्वासः पौरसंघातभेदनं। अरिमध्यस्थमित्राणां यथावच्चान्ववेक्षणं।
उपजापश्च भृत्यानामात्मनः पुरदर्शनं। अविश्वासः स्वयञ्चैव परस्याश्वासनं तथा।
नीतिधर्म्मानुसरणं नित्यमुत्थानमेव च। रिपूणामनवज्ञानं नित्यञ्चानार्य्यवर्ज्जनं।
उत्थानं हि नरेन्द्राणां बृहस्पतिरभाषत। राजधर्म्मस्य तन्मूलं श्लोकांश्चात्र निबोध मे।
उत्थानेनामृतं लब्धमुत्थानेनासुरा हताः। उत्थानेन महेन्द्रेण श्रैष्ठ्यं प्राप्तं दिवीह च। २१०५
उत्थानवीरः पुरुषो वाग्वीरानधितिष्ठति। उत्थानवीरान् वाग्वीरा रमयन्त उपासते।
उत्थानहीनो राजा हि बुद्धिमानपि नित्यशः। प्रधर्षणीयः शत्रूणां भुजङ्ग इव निर्व्विषः।
न च शत्रुरवज्ञेयो दुर्ब्बलोऽपि बलीयसा। अल्पोऽपि हि दहत्यग्निर्व्विषमल्पं हिनस्ति च।
एकाङ्गेनापि सम्भूतः शत्रुर्दुर्गमुपाश्रितः। सर्व्वं तापयते देशमपि राज्ञः समृद्धिनः।
राज्ञो रहस्यं तद्वाक्यं यथार्थं लोकसंग्रहः। हृदि यच्चास्य जिह्मं स्यात् कारणेन च यद्भवेत्। २११०

यथास्य कार्य्यं वृजिनमार्ज्जवेनेह निर्व्वहेत् । रक्षणार्थञ्च लोकस्य धर्म्मिष्ठामाचरेत् क्रियां ।
राज्यं हि सुमहत्तन्त्रं धार्य्यते नाकृतात्मभिः । न शक्यं मृदुना वोढुं भार्य्यास्थानमुत्तमं ।
राज्यं सर्व्वामिषं नित्यमार्ज्जवे नेह धार्य्यते । तस्मान्मिश्रेण सततं वर्त्तितव्यं युधिष्ठिर ।
यद्यप्यस्य विपत्तिः स्याद्रक्षमाणस्य वै प्रजाः । सोऽप्यस्य विपुलो धर्म्म एवं वृत्ता हि भूमिपाः ।
एष ते राजधर्म्माणां लेशः समनुवर्णितः । भूयस्ते यत्र सन्देहस्तद्ब्रूहि कुरुसत्तम । २११५
॥ वैशम्पायन उवाच ॥ ततो व्यासश्च भगवान् देवस्थानोऽश्म एव च । वासुदेवः कृपश्चैव सात्यकिः सञ्जयस्तथा ।
साधुसाध्विति संहृष्टाः पुष्यमाणैरिवाननैः । अस्तुवंस्तु नरव्याघ्रं भीष्मं धर्म्मभृताम्वरं ।
ततो दीनमना भीष्ममुवाच कुरुसत्तमः । नेत्राभ्यामश्रुपूर्णाभ्यां पादौ तस्य शनैः स्पृशन् ।
श्व इदानीं स्वसन्देहं प्रक्ष्यामि त्वां पितामह । उपैति सविता ह्यस्तं रसमापीय पार्थिवं ।
ततो द्विजातीनभिवाद्य केशवः कृपश्च ते चैव युधिष्ठिरादयः । प्रदक्षिणीकृत्य महानदीसुतं ततो रथानारुरुहुर्मुदा
न्विताः । २१२०
दृषद्वतीञ्चाप्यवगाह्य सुव्रता. कृतोदकार्य्याः कृतजप्यमङ्गलाः । उपास्य सन्ध्यां विधिवत् परन्तपास्ततः पुरं ते विविशुर्गजाह्वयं ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि युधिष्ठिरादिस्वायज्ञमे अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
॥ वैशम्पायन उवाच ॥ ततः काल्यं समुत्थाय कृतपूर्व्वाह्णिकक्रियाः । ययुस्ते नगराकारै रथैः पाण्डवयादवाः ।
प्रतिपद्य कुरुक्षेत्रं भीष्ममासाद्य चानघं । सुखाञ्च रजनीं पृष्ट्वा गाङ्गेयं रथिनाम्वरं ।
व्यासादीनभिवाद्यर्षीन् सर्व्वैस्तैश्चाभिनन्दिताः । निषेदुरभितो भीष्मं परिवार्य्य समन्ततः ।
ततो राजा महातेजा धर्म्मराजो युधिष्ठिरः । अब्रवीत् प्राञ्जलिर्भीष्मं प्रतिपूज्य यथाविधि । २१२५
॥ युधिष्ठिर उवाच ॥ य एष राजन् राजेति शब्दश्चरति भारत । कथमेष समुत्पन्नस्तन्मे ब्रूहि परन्तप ।
तुल्यपाणिभुजग्रीवस्तुल्यबुद्धीन्द्रियात्मकः । तुल्यदुःखसुखात्मा च तुल्यपृष्ठमुखोदरः ।
तुल्यशुक्रास्थिमज्जाश्च तुल्यमांसासृगेव च । निश्वासोच्छ्वासतुल्यश्च तुल्यप्राणशरीरवान् ।
समानजन्ममरणः समः सर्व्वैर्गुणैर्नृणां । विशिष्टबुद्धीन् शूरांश्च कथमेकोऽधितिष्ठति ।
कथमेको महीं कृत्स्नां शूरवीरार्य्यसङ्कुलां । रक्षत्यपि च लोकस्य प्रसादमभिवाञ्छति । २१३०
एकस्य तु प्रसादेन कृत्स्नो लोकः प्रसीदति । व्याकुले चाकुलः सर्व्वो भवतीति विनिश्चयः ।
एतदिच्छाम्यहं श्रोतुं तत्त्वेन भरतर्षभ । कृत्स्नं तन्मे यथातत्त्वं प्रब्रूहि वदताम्वर ।
नैतत्कारणमल्पं हि भविष्यति विशाम्पते । यदेकस्मिन् जगत् सर्व्वं देववद्याति सन्नतिं ।
॥ भीष्म उवाच ॥ नियतस्त्वं नरव्याघ्र शृणु सर्व्वमशेषतः । यथा राज्यं समुत्पन्नमादौ कृतयुगेऽभवत् ।
नैव राज्यं न राजासीन्न च दण्डो न दाण्डिकः । धर्म्मेणैव प्रजाः सर्व्वा रक्षन्ति स्म परस्परं । २१३५
पाल्यमानास्तथान्योन्यं नरा धर्म्मेण भारत । खेदं परमुपाजग्मुस्ततस्तान्मोह आविशत् ।
ते मोहवशमापन्ना मनुजा मनुजर्षभ । प्रतिपत्तिविमोहाच्च धर्म्मस्तेषामनीनशत् ।
नष्टायां प्रतिपत्तौ च मोहवश्या नरास्तथा । लोभस्य वशमापन्नाः सर्व्वे भरतसत्तम ।

अप्राप्तस्याभिमर्षन्तु कुर्व्वन्तो मनुजास्ततः। कामो नामापरस्तत्र प्रत्यपद्यत वै प्रभो।
तांस्तु कामवशं प्राप्तान् रागो नामाभिसंस्पृशत्। रक्तास्तु नाभ्यजानन्त कार्य्याकार्य्यं युधिष्ठिर। २१४०
अगम्यागमनञ्चैव वाच्यावाच्यन्तथैव च। भक्ष्याभक्ष्यञ्च राजेन्द्र दोषादोषञ्च नात्यजन्।
विप्लुते नरलोके वै ब्रह्म चैव ननाश ह। नाशाच्च ब्रह्मणो राजन् धर्म्मो नाशमथागमत्।
नष्टे ब्रह्मणि धर्म्मे च देवांस्त्रासः समाविशत्। ते त्रस्ता नरशार्दूल ब्रह्माणं शरणं ययुः।
प्रसाद्य भगवन्तं ते देवं लोकपितामहं। ऊचुः प्राञ्जलयः सर्व्वे दुःखवेगसमाहताः।
भगवन्नरलोकस्थं ग्रस्तं ब्रह्म सनातनं। लोभमोहादिभिर्भावैस्ततो नो भयमाविशत्। २१४५
ब्रह्मणश्च प्रणाशेन धर्म्मो व्यनशदीश्वर। ततः स्म समतां याता मर्त्यैस्त्रिभुवनेश्वर।
अधो वर्षाम हि वयं नरास्तूर्द्धप्रवर्षिणः। क्रियाव्युपरमात्तेषां ततो गच्छाम संशयं।
अत्र निःश्रेयसं यन्नस्तद्ध्यायस्व पितामह। त्वत्प्रभावसमुत्थोऽसौ स्वभावो नो विनश्यति।
तानुवाच सुरान् सर्व्वान् स्वयम्भूर्भगवांस्ततः। श्रेयोऽहं चिन्तयिष्यामि व्येतु वो भीः सुरर्षभाः।
ततोऽध्यायसहस्राणां शतञ्चक्रे स्वबुद्धिजं। यत्र धर्म्मस्तथैवार्थः कामश्चैवाभिवर्णितः। २१५०
त्रिवर्ग इति विख्यातो गण एष स्वयम्भुवा। चतुर्थो मोक्ष इत्येव पृथगर्थः पृथग्गुणः।
मोक्षस्यापि त्रिवर्गोऽन्यः प्रोक्तः सत्त्वरजस्तमः। स्थानं वृद्धिः क्षयश्चैव त्रिवर्गश्चैव दण्डजः।
आत्मा देशश्च कालश्चाप्युपायाः कृत्यमेव च। सहायाः कारणञ्चैव षड्वर्गो नीतिजः स्मृतः।
त्रयी चान्वीक्षिकी चैव वार्त्ता च भरतर्षभ। दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः।
अमात्यरक्षा प्रणिधी राजपुत्रस्य लक्षणं। चारश्च विविधोपायः प्रणिधेयः पृथग्विधः। २१५५
सामभेदः प्रदानञ्च ततो दण्डश्च पार्थिव। उपेक्षा पञ्चमी चात्र कार्त्स्न्येन समुदाहृता।
मन्त्रश्च वर्णितः कृत्स्नस्तथा भेदार्थ एव च। विभ्रमश्चैव मन्त्रस्य सिद्ध्यसिद्ध्योश्च यत् फलं।
सन्धिश्च त्रिविधाभिख्यो हीनो मध्यस्तथोत्तमः। भयसत्कारवित्ताख्यं कार्त्स्न्येन परिवर्णितं।
यात्राकालाश्च चत्वारस्त्रिवर्गस्य च विस्तरः। विजयो धर्म्मयुक्तश्च तथार्थविजयश्च ह।
आसुरश्चैव विजयस्तथा कार्त्स्न्येन वर्णितः। लक्षणं पञ्चवर्गस्य त्रिविधञ्चात्र वर्णितं। २१६०
प्रकाशश्चाप्रकाशश्च दण्डोऽथ परिशब्दितः। प्रकाशोऽष्टविधस्तत्र गुह्यस्य च सुविस्तरः।
रथा नागा हयाश्चैव पादाताश्चैव पाण्डव। विष्टिर्नावश्चराश्चैव दैशिका इति चाष्टमं।
अङ्गान्येतानि कौरव्य प्रकाशानि बलस्य तु। जङ्गमाजङ्गमाश्चोक्ताश्चूर्णयोगा विषादयः।
स्पर्शे चाभ्यवहार्य्ये चाप्युपांशुस्त्रिविधः स्मृतः। अरिर्मित्रमुदासीन इत्येतेऽप्यनुवर्णिताः।
कृत्स्ना मार्गगुणाश्चैव तथा भूमिगुणाश्च ह। आत्मरक्षणमाश्वासः सर्गाणाञ्चान्ववेक्षणं। २१६५
कल्पना विविधाश्चापि नृनागरथवाजिनां। व्यूहाश्च विविधाभिख्या विचित्रं युद्धकौशलं।
उत्पाताश्च निपाताश्च सुयुद्धं सुपलायितं। शस्त्राणां पालनं ज्ञानं तथैव भरतर्षभ।
बलव्यसनमुक्तञ्च तथैव बलहर्षणं। पीडा चापदकालश्च पत्तिज्ञानञ्च पाण्डव।

तथा खातविधानञ्च योगसञ्चार एव च । चौरैराटविकैर्घोरैः परराष्ट्रस्य पीडनं ।
अग्निदैर्गरदैश्चैव प्रतिरूपककारकैः । श्रेणीमुख्योपजापेन वीरुधश्छेदनेन च । २१७०
दूषणेन च नागानामातङ्कजननेन च । आराधनेन भक्तस्य प्रत्ययोपार्ज्जनेन च ।
सप्ताङ्गस्य च राज्यस्य ह्रासवृद्धी समञ्जसं । दूतसामर्थ्ययोगाश्च राष्ट्रस्य च विवर्द्धनं ।
अरिमध्यस्थमित्राणां सम्यक् चोक्तं प्रपञ्चनं । अवमर्द्दः प्रतीघातस्तथैव च बलीयसां ।
व्यवहारः सुसूक्ष्मश्च तथा कण्टकशोधनं । शमो व्यायामयोगश्च त्यागो द्रव्यस्य संग्रहः ।
अभृतानाञ्च भरणं भृतानाञ्चान्ववेक्षणं । अर्थस्य काले दानञ्च व्यसने चाप्रसङ्गिता । २१७५
तथा राजगुणाश्चैव सेनापतिगुणाश्च ह । कारणस्य त्रिवर्गस्य गुणा दोषास्तथैव च ।
दुष्टेङ्गितञ्च विविधं वृत्तिश्चैवानुवर्त्तिनां । शङ्कितत्वञ्च सर्व्वस्य प्रमादस्य च वर्ज्जनं ।
अलब्धलाभो लब्धस्य तथैव च विवर्द्धनं । प्रदानञ्च विवृद्धस्य पात्रेभ्यो विधिवत्ततः ।
विसर्गोऽर्थस्य धर्म्मार्थं कामहेतुकमुच्यते । चतुर्थं व्यसनाघाते तथैवात्रानुवर्णितं ।
क्रोधजानि तथोग्राणि कामजानि तथैव च । दशोक्तानि कुरुश्रेष्ठ व्यसनान्यत्र चैव ह । २१८०
मृगयाक्षास्तथा पानं स्त्रियश्च भरतर्षभ । कामजान्याहुराचार्य्याः प्रोक्तानीह स्वयम्भुवा ।
वाक्पारुष्यं तथोग्रत्वं दण्डपारुष्यमेव च । निग्रहोऽप्यात्मनस्त्यागमर्थदूषणमेव च ।
यन्त्राणि विविधान्येव क्रियास्तेषाञ्च वर्णिताः । अवमर्द्दः प्रतीघातः केतनानाञ्च भञ्जनं ।
चैत्यद्रुमावमर्द्दश्च रोधः कर्म्मानुशासनं । अपस्करोऽथ गमनं तथोपायाश्च वर्णिताः ।
पणवानकशङ्खानां भेरीणाञ्च युधिष्ठिर । उपार्ज्जनञ्च द्रव्याणां परिमर्द्दश्च तानि षट् । २१८५
लब्धस्य च प्रशमनं सतां चैवाभिपूजनं । विद्वद्भिरेकीभावश्च दानहोमविधिज्ञता ।
मङ्गलालम्भनञ्चैव शरीरस्य प्रतिक्रिया । आहारयोजनञ्चैव नित्यमास्तिक्यमेव च ।
एकेन च यथोत्थेयं सत्यत्वं मधुरा गिरः । उत्सवानां समाजानां क्रिया केतनजास्तथा ।
प्रत्यक्षाश्च परोक्षाश्च सर्व्वाधिकरणेष्वथ । वृत्ते भरतशार्दूल नित्यञ्चैवान्ववेक्षणं ।
अदण्ड्यत्वञ्च विप्राणां युक्त्या दण्डनिपातनं । अनुजीविस्वजातिभ्यो गुणेभ्यश्च समुद्भवः । २१९०
रक्षणञ्चैव पौराणां राष्ट्रस्य च विवर्द्धनं । मण्डलस्था च या चिन्ता राजन् द्वादशराजिका ।
द्वासप्ततिविधा चैव शरीरस्य प्रतिक्रिया । देशजातिकुलानाञ्च धर्म्माः समनुवर्णिताः ।
धर्म्मश्चार्थश्च कामश्च मोक्षश्चात्रानुवर्णितः । उपायश्चार्थलिप्सा च विविधा भूरिदक्षिण ।
मूलकर्म्मक्रिया चात्र मायायोगश्च वर्णितः । दूषणं स्रोतसाञ्चैव वर्णितञ्च स्थिराम्भसां ।
यैर्यैरुपायैर्लोकस्तु न चलेदार्य्यवर्त्मनः । तत्सर्व्वं राजशार्दूल नीतिशास्त्रेऽभिवर्णितं । २१९५
एतत् कृत्वा शुभं शास्त्रं ततः स भगवान् प्रभुः । देवानुवाच संहृष्टः सर्व्वाञ्छक्रपुरोगमान् ।
उपकाराय लोकस्य त्रिवर्गस्थापनाय च । नवनीतं सरस्वत्या बुद्धिरेषा प्रभाविता ।
दण्डेन सहिता ह्येषा लोकरक्षणकारिका । निग्रहानुग्रहरता लोकाननुचरिष्यति ।

दण्डेन नीयते चेदं दण्डं नयति वा पुनः । दण्डनीतिरिति ख्याता त्रींल्लोकानभिवर्त्तते ।
षाड्गुण्यगुणसारैषा स्थास्यत्यग्रे महात्मसु । धर्म्मार्थकाममोक्षाश्च सकला ह्यत्र शब्दिताः । २२१०
ततस्तां भगवान्नीतिं पूर्व्वं जग्राह शङ्करः । बहुरूपो विशालाक्षः शिवः स्थाणुरुमापतिः ।
प्रजानामायुषो ह्रासं विज्ञाय भगवान् शिवः । संचिक्षेप ततः शास्त्रं महार्थं ब्रह्मणा कृतं ।
विशालाक्षमिति प्रोक्तं तदिदं प्रत्यपद्यत । दशाध्यायसहस्राणि सुब्रह्मण्यो महातपाः ।
भगवानपि तच्छास्त्रं संचिक्षेप पुरन्दरः । सहस्रैः पञ्चभिस्तात यदुक्तं बाहुदन्तकं ।
अध्यायानां सहस्रैस्तु त्रिभिरेव बृहस्पतिः । संचिक्षेपेश्वरो बुद्ध्या बार्हस्पत्यं यदुच्यते । २२१५
अध्यायानां सहस्रेण काव्यः संक्षेपमब्रवीत् । तच्छास्त्रममितप्रज्ञो योगाचार्य्यो महायशाः ।
एवं लोकानुरोधेन शास्त्रमेतन्महर्षिभिः । संक्षिप्तमायुर्विज्ञाय मर्त्त्यानां ह्रासमेव च ।
अथ देवाः समागम्य विष्णुमूचुः प्रजापतिं । एको योऽर्हति मर्त्त्येभ्यः श्रैष्ठ्यं तं वै समादिश ।
ततः सञ्चिन्त्य भगवान् देवो नारायणः प्रभुः । तैजसं वै विरजसं सोऽसृजन्मानसं सुतं ।
विरजास्तु महाभागः प्रभुत्वं भुवि नैच्छत । न्यासायैवाभवद्बुद्धिः प्रणीता तस्य पाण्डव । २२२०
कीर्त्तिमांस्तस्य पुत्रोऽभूत् सोऽपि पञ्चातिगोऽभवत् । कर्द्दमस्तस्य तु सुतः सोऽप्यतप्यन्महत्तपः ।
प्रजापतेः कर्द्दमस्य त्वनङ्गो नाम वै सुतः । प्रजा रक्षयिता साधुर्दण्डनीतिविशारदः ।
अनङ्गपुत्रोऽतिबलो नीतिमानभिगम्य वै । प्रतिपेदे महाराज्यमथेन्द्रियवशोऽभवत् ।
मृत्योस्तु दुहिता राजन् सुनीथा नाम मानसी । प्रख्याता त्रिषु लोकेषु या सा वेनमजीजनत् ।
तं प्रजासु विधर्म्माणं रागद्वेषवशानुगं । मन्त्रपूतैः कुशैर्जघ्नुरृषयो ब्रह्मवादिनः । २२२५
ममन्थुर्दक्षिणं चोरुमृषयस्तस्य मन्त्रतः । ततोऽस्य विकृतो जज्ञे ह्रस्वाङ्गः पुरुषो भुवि ।
दग्धेन्धनप्रतीकाशो रक्ताक्षः कृष्णमूर्द्धजः । निषीदेत्येवमूचुस्तमृषयो ब्रह्मवादिनः ।
तस्मान्निषादाः सम्भूताः क्रूराः शैलवनाश्रयाः । ये चान्ये विन्ध्यनिलया म्लेच्छाः शतसहस्रशः ।
भूयोऽस्य दक्षिणं पाणिं ममन्थुस्ते महर्षयः । ततः पुरुष उत्पन्नो रूपेणेन्द्र इवापरः ।
कवची बद्धनिस्त्रिंशः सशरः सशरासनः । वेदवेदाङ्गविच्चैव धनुर्वेदे च पारगः । २२३०
तं दण्डनीतिः सकलाश्रिता राजन्नरोत्तमं । ततस्तु प्राञ्जलिर्वैन्यो महर्षींस्तानुवाच ह ।
सुसूक्ष्मा मे समुत्पन्ना बुद्धिर्धर्म्मार्थदर्शिनी । अनया किं मया कार्य्यं तन्मे तत्त्वेन शंसत ।
यन्मां भवन्तो वक्ष्यन्ति कार्य्यमर्थसमन्वितं । तदहं वै करिष्यामि नात्र कार्य्या विचारणा ।
तमूचुस्तत्र देवास्ते तेचैव परमर्षयः । नियतो यत्र धर्म्मो वै तमशङ्कः समाचर ।
प्रियाप्रिये परित्यज्य समः सर्व्वेषु जन्तुषु । कामक्रोधौ च लोभञ्च मानञ्चोत्सृज्य दूरतः । २२३५
यश्च धर्म्मात् प्रविचलेल्लोके कश्चन मानवः । निग्राह्यस्ते स्वबाहुभ्यां शश्वद्धर्म्ममवेक्षता ।
प्रतिज्ञाञ्चाधिरोहस्व मनसा कर्म्मणा गिरा । पालयिष्याम्यहं भौमं ब्रह्म इत्येव चासकृत् ।
यश्चात्र धर्म्मो नीत्युक्तो दण्डनीतिव्यपाश्रयः । तमशङ्कः करिष्यामि स्ववशो न कदाचन ।

अदण्ड्या मे द्विजाश्चेति प्रतिजानीहि हे विभो। लोकञ्च सङ्करात् कृत्स्नं त्रातास्मीति परन्तप।
वैन्यस्ततस्तानुवाच देवानृषिपुरोगमान्। ब्राह्मणा मे महाभागा नमस्याः पुरुषर्षभाः। २२३०
एवमस्त्विति वैन्यस्तु तैरुक्तो ब्रह्मवादिभिः। पुरोधाश्चाभवत्तस्य शुक्रो ब्रह्ममयो निधिः।
मन्त्रिणो वालखिल्याश्च सारस्वत्योगणस्तथा। महर्षिर्भगवान् गर्गस्तस्य सांवत्सरोऽभवत्।
आत्मनाष्टम इत्येव श्रुतिरेषा परा नृषु। उत्पन्नौ वन्दिनौ चास्य तत्पूर्व्वौ सूतमागधौ।
तयोः प्रीतो ददौ राजा पृथुर्व्वैन्यः प्रतापवान्। अनूपदेशं सूताय मगधं मागधाय च।
समतां वसुधायाश्च स सम्यगुदपादयत्। वैषम्यं हि परं भूमेरासीदिति च नः श्रुतं। २२३५
मन्वन्तरेषु सर्व्वेषु विषमा जायते मही। उज्जहार ततो वैन्यः शिलाजालान् समन्ततः।
धनुष्कोट्या महाराज तेन शैला विवर्द्धिताः। स विष्णुना च देवेन शक्रेण विबुधैः सह।
ऋषिभिश्च प्रजापालैर्ब्राह्मणैश्चाभिषेचितः। तं साक्षात् पृथिवी भेजे रत्नान्यादाय पाण्डव।
सागरः सरितां भर्त्ता हिमवांश्चाचलोत्तमः। शक्रश्च धनमक्षय्यं प्रादात्तस्मै युधिष्ठिर।
रुक्मञ्चापि महामेरुः स्वयं कनकपर्व्वतः। यक्षराक्षसभर्त्ता च भगवान्नरवाहनः। २२४०
धर्म्मे चार्थे च कामे च समर्थं प्रददौ धनं। हया रथाश्च नागाश्च कोटिशः पुरुषास्तथा।
प्रादुर्ब्बभूवुर्व्वैन्यस्य चिन्तनादेव पाण्डव। न जरा न च दुर्भिक्षं नाधयो व्याधयस्तथा।
सरीसृपेभ्यः स्तेनेभ्यो न चान्योऽन्यात् कदाचन। भयमुत्पद्यते तत्र तस्य राज्ञोऽभिरक्षणात्।
आपस्तस्तम्भिरे चास्य समुद्रमभियास्यतः। पर्व्वताश्च ददुर्मार्गं ध्वजभङ्गश्च नाभवत्।
तेनेयं पृथिवी दुग्धा सस्यानि दश सप्त च। यक्षराक्षसनागैश्चापीप्सितं यस्य यस्य यत्। २२४५
तेन धर्म्मोत्तरश्चायं कृतो लोको महात्मना। रञ्जिताश्च प्रजाः सर्व्वास्तेन राजेति शब्द्यते।
ब्राह्मणानां क्षतत्राणात्ततः क्षत्त्रिय उच्यते। प्रथिता धर्म्मतश्चेयं पृथिवी बहुभिः स्मृता।
स्थापनञ्चाकरोद्विष्णुः स्वयमेव सनातनः। नातिवर्त्तिष्यते कश्चिद्राजंस्त्वामिति भारत।
तपसा भगवान् विष्णुराविवेश च भूमिपं। देववन्नरदेवानां नमते यं जगन्नृप।
दण्डनीत्या च सततं रक्षितव्यं नरेश्वर। नाधर्षयेत्तथा कश्चिच्चारनिष्ठानुदर्शनात्। २२५०
शुभं हि कर्म्म राजेन्द्र शुभत्वायोपकल्पते। आत्मना कारणैश्चैव समस्येह महीक्षितः।
को हेतुर्यद्वशे तिष्ठेल्लोको दैवादृते गुणात्। विष्णोर्ललाटात् कमलं सौवर्णमभवत्तदा।
श्रीः सम्भूता यतो देवी पत्नी धर्म्मस्य धीमतः। श्रियः सकाशादर्थश्च जातो धर्म्मेण पाण्डव।
अथ धर्म्मस्तथैवार्थः श्रीश्च राज्ये प्रतिष्ठिता। सुकृतस्य क्षयाच्चैव स्वर्लोकादेत्य मेदिनीं।
पार्थिवो जायते तात दण्डनीतिविशारदः। महत्त्वेन च संयुक्तो वैष्णवेन नरो भुवि। २२५५
बुद्ध्या भवति संयुक्तो माहात्म्यञ्चाधिगच्छति। स्थापितश्च ततो देवैर्न कश्चिदतिवर्त्तते।
तिष्ठत्येकस्य च वशे तच्चेदं न विधीयते। शुभं हि कर्म्म राजेन्द्र शुभत्वायोपकल्पते।
तुल्यस्यैकस्य यस्यायं लोको वचसि तिष्ठति। योऽस्य वै मुखमद्राक्षीत् सौम्यं सोऽस्य वशानुगः।

सुभगश्चार्थवांश्च रूपवांश्च पश्यति । महत्त्वात्तस्य दण्डस्य नीतिर्विस्पष्टलक्षणा ।
नयचारश्च विपुलो येन धर्म्ममिदं ततं । आगमश्च पुराणानां महर्षीणाञ्च सम्भवः । २२१०
तीर्थवंशश्च वंशश्च नक्षत्राणां युधिष्ठिर । सकलञ्चातुराश्रम्यं चातुर्होत्रं तथैव च ।
चातुर्वर्ण्यं तथैवात्र चातुर्विद्यञ्च कीर्त्तितं । इतिहासाश्च वेदाश्च न्यायः कृत्स्नश्च वर्णितः ।
तपो ज्ञानमहिंसा च सत्यासत्ये नयः परः । वृद्धोपसेवा दानञ्च शौचमुत्थानमेव च ।
सर्व्वभूतानुकम्पा च सर्व्वमत्रोपवर्णितं । भुवि वाचोगतं यच्च तच्च सर्व्वं समर्पितं ।
तस्मिन् पैतामहे शास्त्रे पाण्डवैतन्न संशयः । ततो जगति राजेन्द्र सततं शब्दितं बुधैः । २२१५
देवाश्च नरदेवाश्च तुल्या इति विशाम्पते । एतत्ते सर्व्वमाख्यातं महत्त्वं प्रति राजसु ।
कार्त्स्न्येन भरतश्रेष्ठ किमन्यदिह वर्त्तते ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि सूत्राध्यायो ऊनषष्टोऽध्यायः ॥ ५९ ॥

॥ वैशम्पायन उवाच ॥ ततः पुनः स गाङ्गेयमभिवाद्य पितामहं । प्राञ्जलिर्नियतो भूत्वा पर्य्यपृच्छद्युधिष्ठिरः ।
के धर्म्माः सर्व्ववर्णानां चातुर्वर्ण्यस्य के पृथक् । चातुर्वर्ण्याश्रमाणाञ्च राजधर्म्माश्च के मताः ।
केन वै वर्द्धते राष्ट्रं राजा केन विवर्द्धते । केन पौराश्च भृत्याश्च वर्द्धन्ते भरतर्षभ । २२२०
कोशं दण्डञ्च दुर्गञ्च सहायान्मन्त्रिणस्तथा । ऋत्विक्पुरोहिताचार्य्यान् कीदृशान् वर्ज्जयेन्नृपः ।
केषु विश्वसितव्यं स्याद्राज्ञा कस्याञ्चिदापदि । कुतो वात्मा दृढं रक्ष्यस्तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ नमो धर्म्माय महते नमः कृष्णाय वेधसे । ब्राह्मणेभ्यो नमस्कृत्य धर्म्मान् वक्ष्यामि शाश्वतान् ।
अक्रोधः सत्यवचनं संविभागः क्षमा तथा । प्रजनः स्वेषु दारेषु शौचमद्रोह एव च ।
आर्ज्जवं भृत्यभरणं नवैते सार्व्ववर्णिकाः । ब्राह्मणस्य तु यो धर्म्मस्तन्ते वक्ष्यामि केवलं । २२२५
दममेव महाराज धर्म्ममाहुः पुरातनं । स्वाध्यायाभ्यसनञ्चैव तत्र कर्म्म समाप्यते ।
तञ्चेद्वित्तमुपागच्छेद्वर्त्तमानं स्वकर्म्मणि । अकुर्व्वाणं विकर्म्माणि शान्तं प्रज्ञानतर्पितं ।
कुर्व्वीतापत्यसन्तानमथो दद्याद्यजेत च । संविभज्य हि भोक्तव्यं धनं सद्भिरितीर्य्यते ।
परिनिष्ठितकार्य्यस्तु स्वाध्यायेनैव ब्राह्मणः । कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते ।
क्षत्रियस्यापि यो धर्म्मस्तन्ते वक्ष्यामि भारत । दद्याद्राजन्न याचेत यजेत न च याजयेत । २२३०
नाध्यापयेदधीयीत प्रजाश्च परिपालयेत् । नित्योद्युक्तो दस्युवधे रणे कुर्य्यात् पराक्रमं ।
ये तु क्रतुभिरीजानाः श्रुतवन्तश्च भूमिपाः । य एवाहवजेतारस्त एषां लोकजित्तमाः ।
अविक्षतेन देहेन समराद्यो निवर्त्तते । क्षत्रियो नास्य तत् कर्म्म प्रशंसन्ति पुराविदः ।
एवं हि क्षत्रबन्धूनां मार्गमाहुः प्रधानतः । नास्य कृत्यतमं किञ्चिदन्यद्दस्युनिवर्हणात् ।
दानमध्ययनं यज्ञो राज्ञां क्षेमो विधीयते । तस्माद्राज्ञा विशेषेण योद्धव्यं धर्म्ममीप्सता । २२३५
स्वेषु धर्म्मेष्ववस्थाप्य प्रजाः सर्व्वा महीपतिः । धर्म्मेण सर्व्वकृत्यानि शमनिष्ठानि कारयेत् ।
परिनिष्ठितकार्य्यस्तु नृपतिः परिपालनात् । कुर्य्यादन्यन्न वा कुर्य्यादैन्द्रो राजन्य उच्यते ।

वैश्यस्यापि हि यो धर्म्मस्तन्ते वक्ष्यामि शाश्वतं । दानमध्ययनं यज्ञः शौचेन धनसञ्चयः ।
पितृवत् पालयेद्वैश्यो युक्तः सर्व्वान् पशूनिह । विकर्म्म तद्भवेदन्यत् कर्म्म यत् स समाचरेत् ।
रक्षया स हि तेषां वै महत् सुखमवाप्नुयात् । प्रजापतिर्हि वैश्याय सृष्ट्वा परिददौ पशून् । २१९०
ब्राह्मणाय च राज्ञे च सर्व्वाः परिददे प्रजाः । तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनं ।
षण्णामेकां पिबेद्धेनुं शताच्च मिथुनं हरेत् । लब्धाच्च सप्तमं भागं तथाऽशृङ्गे कलाऽखुरे ।
सस्यानि सर्व्ववीजानामेषा सांवत्सरी भृतिः । न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति ।
वैश्ये चेच्छति नान्येन रक्षितव्याः कथञ्चन । शूद्रस्यापि हि यो धर्म्मस्तन्ते वक्ष्यामि भारत ।
प्रजापतिर्हि वर्णानां दासं शूद्रमकल्पयत् । तस्माच्छूद्रस्य वर्णानां परिचर्य्या विधीयते । २१९५
तेषां शुश्रूषणाच्चैव महत् सुखमवाप्नुयात् । शूद्र एतान् परिचरेत्त्रीन् वर्णाननुपूर्व्वशः ।
सञ्चयांश्च न कुर्व्वीत जातु शूद्रः कथञ्चन । पापीयान् हि धनं लब्ध्वा वशे कुर्य्याद्गरीयसः ।
राज्ञा वा समनुज्ञातः कामं कुर्व्वीत धार्म्मिकः । तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनं ।
अवश्यभरणीयो हि वर्णानां शूद्र उच्यते । छत्रं वेष्टनमौशीरमुपानद्व्यजनानि च ।
यातयामानि देयानि शूद्राय परिचारिणे । अधार्य्याणि विशीर्णानि वसनानि द्विजातिभिः । २२००
शूद्रायैव प्रदेयानि तस्य धर्म्मधनं हि तत् । यश्च कश्चिद्द्विजातीनां शूद्रः शुश्रूषुराव्रजेत् ।
कल्प्यां तस्य तु तेनाहुर्वृत्तिं धर्म्मविदो जनाः । देयः पिण्डोऽनपत्याय भर्त्तव्यौ वृद्धदुर्व्वलौ ।
शूद्रेण तु न हातव्यो भर्त्ता कस्याञ्चिदापदि । अतिरेकेण भर्त्तव्यो भर्त्ता द्रव्यपरिक्षये ।
न हि स्वमस्ति शूद्रस्य भर्त्तृहार्य्यधनो हि सः । उक्तस्त्रयाणां वर्णानां यज्ञस्तस्य च भारत ।
स्वाहाकारवषट्कारौ मन्त्रः शूद्रे न विद्यते । तस्माच्छूद्रः पाकयज्ञैर्यजेताव्रतवान् स्वयं । २२०५
पूर्णपात्रमयीमाहुः पाकयज्ञस्य दक्षिणां । शूद्रः पैजवनो नाम सहस्राणां शतं ददौ ।
ऐन्द्राग्न्येन विधानेन दक्षिणामिति नः श्रुतं । यतो हि सर्व्ववर्णानां यज्ञस्तस्यैव भारत ।
अग्रे सर्व्वेषु यज्ञेषु श्रद्धायज्ञो विधीयते । दैवतं हि महच्छ्रद्धा पवित्रं यजतां च यत् ।
दैवतं हि परं विप्राः स्वेन स्वेन परस्परं । अयजन्निह सत्रैस्ते तैस्तैः कामैः समाहितैः ।
संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु सृष्टयः । देवानामपि ये देवा यद्ब्रूयुस्ते परं हितं । २२१०
तस्माद्वर्णैः सर्व्वयज्ञाः संसृज्यन्ते न काम्यया । ऋग्यजुःसामवित्पूज्यो नित्यं स्याद्देववद्द्विजः ।
अनृग्यजुरसामा च प्राजापत्य उपद्रवः । यज्ञो मनीषया तात सर्व्ववर्णेषु भारत ।
नास्य यज्ञहृतो देवा ईहन्ते नेतरे जनाः । ततः सर्व्वेषु वर्णेषु श्रद्धायज्ञो विधीयते ।

स्वं दैवतं ब्राह्मणस्तेन नित्यं परान् वर्णानयजन्नैवमाशीत् । अधरो वितानः संसृष्टो वैश्यो ब्राह्मणस्त्रिषु वर्णेषु यज्ञसृष्टः ।

तस्माद्वर्णा ऋजवो ज्ञातिवर्णाः संसृज्यन्ते तस्य विकार एव । एकं साम यजुरेकमृगेका विप्रश्चैको निश्चये तेषु सृष्टः । २२१५

अत्र गाथा यज्ञगीताः कीर्त्तयन्ति पुराविदः। वैखानसानां राजेन्द्र मुनीनां यष्टुमिच्छतां।
उदितेऽनुदिते वापि श्रद्दधानो जितेन्द्रियः। वह्निं जुहोति धर्म्मेण श्रद्धा वै कारणं महत्।
यत् स्कन्नमस्य तत् पूर्व्वं तदस्कन्नं यदुत्तरं। बहूनि यज्ञरूपाणि नानाकर्म्मफलानि च।
तानि यः सम्प्रजानाति ज्ञाननिश्चयनिश्चितः। द्विजातिः श्रद्धयोपेतः स यष्टुं पुरुषोऽर्हति।
स्तेनो वा यदि वा पापो यदि वा पापकृत्तमः। यष्टुमिच्छति यज्ञं यः साधुमेव वदन्ति तं। २२१०
ऋषयस्तं प्रशंसन्ति साधु चैतदसंशयं। सर्व्वथा सर्व्वदा वर्णैर्यष्टव्यमिति निर्णयः।
न हि यज्ञसमं किञ्चित्त्रिषु लोकेषु विद्यते। तस्माद्यष्टव्यमित्याहुः पुरुषेणानसूयता।
श्रद्धापवित्रमाश्रित्य यथाशक्ति यथेच्छया।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि वर्णाश्रमधर्म्मकथने षष्टितमोऽध्यायः॥ ६०॥
॥ भीष्म उवाच॥ आश्रमाणां महाबाहो शृणु सत्यपराक्रम। चतुर्णामपि नामानि कर्म्माणि च युधिष्ठिर।
वानप्रस्थं भैक्षचर्य्यं गार्हस्थ्यञ्च महाश्रमं। ब्रह्मचर्य्याश्रमं प्राहुश्चतुर्थं ब्राह्मणैर्वृतं। २२१५
जटाधरणसंस्कारं द्विजातित्वमवाप्य च। आधानादीनि कर्म्माणि प्राप्य वेदमधीत्य च।
सदारो वाऽप्यदारो वा आत्मवान् संयतेन्द्रियः। वानप्रस्थाश्रमं गच्छेत् कृतकृत्यो गृहाश्रमात्।
तत्रारण्यकशास्त्राणि समधीत्य स धर्म्मवित्। ऊर्द्ध्वरेताः प्रव्रजित्वा गच्छत्यक्षरसात्मतां।
एतान्येव निमित्तानि मुनीनामूर्द्ध्वरेतसां। कर्त्तव्यानीह विप्रेण राजन्नादौ विपश्चिता।
चरितब्रह्मचर्य्यस्य ब्राह्मणस्य विशाम्पते। भैक्षचर्य्यास्वधीकारः प्रशस्त इह मोक्षिणः। २२२०
यत्रास्तमितशायी स्यान्निराशीरनिकेतनः। यथोपलब्धजीवी स्यान्मुनिर्दान्तो जितेन्द्रियः।
निराशीः स्यात् सर्व्वसमो निर्भोगो निर्व्विकारवान्। विप्रः क्षेमाश्रमं प्राप्तो गच्छत्यक्षरसात्मतां।
अधीत्य वेदान् कृतसर्व्वकृत्यः सन्तानमुत्पाद्य सुखानि भुक्त्वा। समाहितः प्रचरेद्दुश्चरं यो गार्हस्थ्यधर्म्मं मुनिधर्म्मजुष्टं।
स्वदारतुष्टस्त्वृतुकालगामी नियोगसेवी न शठो न जिह्मः। मिताशनो देवरतः कृतज्ञः सत्यो मृदुश्चानृशंसः क्षमावान्।
दान्तो विधेयो हव्यकव्येऽप्रमत्तो अन्नस्य दाता सततं द्विजेभ्यः। अमत्सरी सर्व्वलिङ्गिप्रदाता वैताननित्यश्च गृहाश्रमी स्यात्। २२२५
अथात्र नारायणगीतमाहुर्महर्षयस्तात महानुभावाः। महार्थमत्यन्ततपःप्रयुक्तं तदुच्यमानं हि मया निबोध।
सत्यार्ज्जवञ्चातिथिपूजनञ्च धर्म्मस्तथाऽर्थश्च रतिः स्वदारैः। निषेवितव्यानि सुखानि लोके अस्मिन् परे चैव मतं ममैतत्।
भरणं पुत्त्रदाराणां वेदानां धारणं तथा। वसतामाश्रमश्रेष्ठं वदन्ति परमर्षयः।
एवं हि यो ब्राह्मणो यज्ञशीलो गार्हस्थ्यमध्यावसते यथावत्। गृहस्थवृत्तिं प्रविशोध्य सम्यक् स्वर्गे विशुद्धं फलमाप्नुते सः।
तस्य देहपरित्यागादिष्टाः कामाक्षया मताः। आनन्त्यायोपतिष्ठन्ति सर्व्वतोऽक्षिशिरोमुखाः। २२३०

चत्वार एको अथवैकः सर्व्वाश्रमी युधिष्ठिर । एकस्मिन्नेव चाचार्य्ये शुश्रूषुर्मलपङ्कवान् ।
ब्रह्मचारी व्रती नित्यं नित्यं दीक्षापरो वशी । परिचर्य्य तथा वेदं कृत्यं कुर्व्वन् वसेत् सदा ।
शुश्रूषां सततं कुर्व्वन् गुरोः सम्प्रणमेत च । षट्कर्म्मसु निवृत्तश्च न प्रवृत्तश्च सर्व्वशः ।
न चरत्यधिकारेण सेवेत द्विषतो न च । एषोऽश्रमपदस्तात ब्रह्मचारिण इष्यते ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि वर्णाश्रमधर्म्मकथने एकषष्टोऽध्यायः ॥ ६१ ॥

॥ युधिष्ठिर उवाच ॥ शिवान् सुखान् महोदर्कानहिंस्रान् लोकसम्मतान् । ब्रूहि धर्म्मान् सुखोपायान् मद्विधानां सुखावहान् । २२४५

॥ भीष्म उवाच ॥ ब्राह्मणस्य तु चत्वारस्त्वाश्रमा विहिताः प्रभो । वर्णास्तानानुवर्त्तन्ते चयो भरतसत्तम ।
उक्तानि कर्म्माणि बहूनि राजन् स्वर्ग्याणि राजन्यपरायणानि । नेमानि दृष्टान्तविधौ स्मृतानि क्षात्रे हि सर्व्वं विहितं यथावत् ।
क्षात्राणि वैश्यानि च सेवमानः शौद्राणि कर्म्माणि च ब्राह्मणः सन् । अस्मिन् लोके निन्दितो मन्दचेताः परे च लोके निरयं प्रयाति ।
या संज्ञा विहिता लोके दासे शुनि वृके पशौ । विकर्म्मणि स्थिते विप्रे सैव संज्ञा च पाण्डव ।
षट्कर्म्मसम्प्रवृत्तस्य आश्रमेषु चतुर्ष्वपि । सर्व्वधर्म्मोपपन्नस्य संवृतस्य कृतात्मनः । २२५०
ब्राह्मणस्य विशुद्धस्य तपस्यभिरतस्य च । निराशिषो वदान्यस्य लोका ह्यक्षरसंज्ञिताः ।
यो यस्मिन् कुरुते कर्म्म यादृशं येन यत्र च । तादृशं तादृशेनैव सगुणं प्रतिपद्यते ।
वृद्ध्या कृषिवणिक्त्वेन जीवसञ्जननेन च । वेत्तुमर्हसि राजेन्द्र स्वाध्यायगणितं महत् ।
कालसञ्चोदितः कालः कालपर्य्यायनिश्चितः । उत्तमाधममध्यानि कर्म्माणि कुरुतेऽवशः ।
अन्तवन्ति प्रधानानि पुरा श्रेयस्कराणि च । स्वकर्म्मनिरतो लोको ह्यक्षरः सर्व्वतोमुखः । २२५५
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि वर्णाश्रमधर्म्मकथने द्विषष्टोऽध्यायः ॥ ६२ ॥

॥ भीष्म उवाच ॥ ज्याकर्षणं शत्रुनिवर्हणञ्च कृषिर्व्वणिज्या पशुपालनञ्च । शुश्रूषणञ्चापि तथाऽर्थहेतोरकार्य्यमेतत् परमं द्विजस्य ।
सेव्यन्तु ब्रह्म षट्कर्म्म गृहस्थेन मनीषिणा । कृतकृत्यस्य चारण्ये वासो विप्रस्य शस्यते ।
राजप्रैष्यं कृषिधनं जीवनञ्च वणिग्यथा । कौटिल्यं कौलटेयञ्च कुसीदञ्च विवर्ज्जयेत् ।
शूद्रो राजन् भवति ब्रह्मबन्धुर्दुश्चरित्रो यश्च धर्म्मादपेतः । वृषलीपतिः पिशुनो नर्त्तनश्च ग्रामप्रैष्यो यश्च भवेद्विकर्म्मा ।
जपन् वेदानजपंश्चापि राजन् समः शूद्रैर्दासवच्चापि भोज्यः । एते सर्व्वे शूद्रसमा भवन्ति राजन्नेतान् वर्ज्जयेद्दैवकृत्ये । २२६०
निर्म्मर्य्यादे चाशुचौ क्रूरवृत्तौ हिंसात्मके त्यक्तधर्म्मस्ववृत्ते । हव्यं कव्यं यानि चान्यानि राजन् देयान्यदेयानि भवन्ति चास्मै ।

तस्माज्ज्येष्ठो विहितो ब्राह्मणस्य दमः शौचमार्ज्जवञ्चापि राजन् । तथा विप्रस्याश्रमाः सर्व्व एव पुरा राजन् ब्रह्मणा वै विसृष्टाः ।

यः स्याद्दान्तः सोमपश्चार्य्यशीलः सानुक्रोशः सर्व्वसहो निराशीः । ऋजुर्म्मृदुरनृशंसः क्षमावान् स वै विप्रो नेतरः पापकर्म्मा ।

शूद्रं वैश्यं राजपुत्त्रञ्च राजन् लोकाः सर्व्वे संश्रिता धर्म्मकामाः । तस्माद्वर्णान् शान्तिधर्म्मेष्वशक्तान् मत्वा विष्णुर्नेच्छति पाण्डुपुत्त्र ।

लोके चेदं सर्व्वलोकस्य न स्याच्चातुर्व्वर्ण्यं वेदवादाश्च न स्युः । सर्व्वाश्चेज्याः सर्व्वलोकक्रियाश्च सद्यः सर्व्वे चाश्रमस्था न वै स्युः । २२९५

यश्च त्रयाणां वर्णानामिच्छेदाश्रमसेवनं । चातुराश्रम्यदृष्टांश्च धर्म्मांस्तान् शृणु पाण्डव ।

शुश्रूषोः कृतकार्य्यस्य कृतसन्तानकर्म्मणः । अभ्यनुज्ञातराजस्य शूद्रस्य जगतीपते ।

अल्पान्तरगतस्यापि दशधर्म्मगतस्य वा । आश्रमा विहिताः सर्व्वे वर्ज्जयित्वा निराशिषं ।

भैक्षचर्य्यां ततः प्राहुस्तस्य तद्धर्म्मचारिणः । तथा वैश्यस्य राजेन्द्र राजपुत्त्रस्य चैव हि ।

कृतकृत्यो वयोऽतीतो राज्ञः कृतपरिश्रमः । वैश्यो गच्छेदनुज्ञातो नृपेणाश्रमसंश्रयं । २३००

वेदानधीत्य धर्म्मेण राजशास्त्राणि चानघ । सन्तानादीनि कर्म्माणि कृत्वा सोमं निषेव्य च ।

पालयित्वा प्रजाः सर्व्वा धर्म्मेण वदताम्बर । राजसूयाश्वमेधादीन् मखानन्यांस्तथैव च ।

आनयित्वा यथापाठं विप्रेभ्यो दत्तदक्षिणः । संग्रामे विजयं प्राप्य तथाऽल्पं यदि वा बहु ।

स्थापयित्वा प्रजापालं पुत्त्रं राज्ये च पाण्डव । अन्यगोत्रं प्रशस्तं वा क्षत्त्रियं क्षत्त्रियर्षभ ।

अर्च्चयित्वा पितॄन् सम्यक् पितृयज्ञैर्यथाविधि । देवान् यज्ञैरृषीन् वेदैरर्च्चयित्वा तु यत्नतः । २३०५

अन्तकाले तु सम्प्राप्ते य इच्छेदाश्रमान्तरं । सोऽनुपूर्व्व्याश्रमान् राजन् गत्वा सिद्धिमवाप्नुयात् ।

राजर्षित्वेन राजेन्द्र भैक्ष्यचर्य्यास्त्रसेवया । अपेतगृहधर्म्मोऽपि चरेज्जीवितकाम्यया ।

न चैतन्नैष्ठिकं धर्म्मं त्रयाणां भूरिदक्षिण । चतुर्णां राजशार्दूल प्राहुराश्रमवासिनां ।

बाह्वायत्तं क्षत्त्रियैर्म्मानवानां लोकश्रेष्ठं धर्म्ममासेवमानैः । सर्व्वे धर्म्माः सोपधर्म्मास्त्रयाणां राज्ञो धर्म्मादिति वेदात् शृणोमि ।

यथा राजन् हस्तिपदे पदानि संलीयन्ते सर्व्वसत्त्वोद्भवानि । एवं धर्म्मान् राजधर्म्मेषु सर्व्वान् सर्व्वावस्थं सम्प्रलीनान्निबोध । २३१०

अल्पाश्रयानल्पफलान् वदन्ति धर्म्मानन्यान् धर्म्मविदो मनुष्याः । महाश्रयं बहुकल्याणरूपं क्षात्त्रं धर्म्मं नेतरं प्राहुरार्य्याः ।

सर्व्वे धर्म्मा राजधर्म्मप्रधानाः सर्व्वे वर्णाः पाल्यमाना भवन्ति । सर्व्वस्त्यागो राजधर्म्मेषु राजंस्त्यागं धर्म्मञ्चाहुरग्र्यं पुराणं ।

मज्जेत्त्रयी दण्डनीतौ हतायां सर्व्वे धर्म्माः प्रक्षयेयुर्व्विवृद्धाः । सर्व्वे धर्म्माश्चाश्रमाणां हताः स्युः क्षात्त्रे त्यक्ते राजधर्म्मे पुराणे ।

सर्व्वे त्यागा राजधर्म्मेषु दृष्टाः सर्व्वा दीक्षा राजधर्म्मेषु युक्ताः । सर्व्वे लोका राजधर्म्मे प्रविष्टाः ।

यथा जीवाः प्राकृतैर्बध्यमाना धर्मश्रुतानामुपपीडनाय । एवं धर्मा राजधर्मैर्वियुक्ताः सञ्चिन्वन्तो नाद्रियन्ते स्वधर्मान् ॥ २३८८

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्मानुशासनपर्व्वणि वर्णाश्रमधर्मकथने त्रिषष्टोऽध्यायः ॥ ६३ ॥

॥ भीष्म उवाच ॥ चातुराश्रमधर्माश्च यतिधर्माश्च पाण्डव । लोकवेदोत्तराश्चैव क्षात्रधर्मे समाहिताः ।

सर्व्वाण्येतानि कर्म्माणि क्षात्रे भरतसत्तम । निराशिषो जीवलोकाः क्षत्रधर्मे व्यवस्थिते ।

अप्रत्यक्षं बहुद्वारं धर्ममाश्रमवासिनां । प्ररूपयन्ति तद्भावमागमैरेव शाश्वतं ।

अपरे वचनैः पुण्यैर्वादिनो लोकनिश्चयं । अनिश्चयज्ञा धर्माणामदृष्टान्ते परे रताः ।

प्रत्यक्षं सुखभूयिष्ठमात्मसाक्षिकमच्छलं । सर्व्वलोकहितं धर्मं क्षत्रियेषु प्रतिष्ठितं । २३९०

धर्माश्रमेऽध्यवसिनां ब्राह्मणानां युधिष्ठिर । यथा त्रयाणां वर्णानां संख्यातोपश्रुतिः पुरा ।

राजधर्मेष्वनुमता लोकाः सुचरितैः सह । उदाहृतन्ते राजेन्द्र यथा विष्णुं महौजसं ।

सर्व्वभूतेश्वरं देवं प्रभुं नारायणं पुरा । जग्मुः सुबहवः शूरा राजानो दण्डनीतये ।

एकैकमात्मनः कर्म्म तुलयित्वाश्रमं पुरा । राजानः पर्य्युपासन्त दृष्टान्तवचने स्थिताः ।

साध्या देवा वसवश्चाश्विनौ च रुद्राश्च विश्वे मरुतां गणाश्च । सृष्टाः पुराद्यादिदेवेन देवाः क्षात्रे धर्मे वर्त्तयन्ते च सिद्धाः । २३९५

अत्र ते वर्त्तयिष्यामि धर्ममर्थविनिश्चयं । निर्मर्यादे वर्त्तमाने दानवैकार्णवे पुरा ।

बभूव राजा राजेन्द्र मान्धाता नाम वीर्य्यवान् । पुरा वसुमतीपालो यज्ञञ्चक्रे दिदृक्षया ।

अनादिमध्यनिधनं देवं नारायणं प्रभुं । स राजा राजशार्द्दूल मान्धाता परमेश्वरं ।

जगाम शिरसा पादौ यज्ञे विष्णोर्महात्मनः । दर्शयामास तं विष्णू रूपमास्थाय वासवं ।

स पार्थिवैर्वृतः सद्भिरर्च्चयामास तं प्रभुं । तस्य पार्थिवसिंहस्य तस्य चैव महात्मनः । २४००

संवादोऽयं महानासीद्विष्णुं प्रति महाद्युतिं ।

॥ इन्द्र उवाच ॥ किमिष्यते धर्मभृतां वरिष्ठ यद्द्रष्टुकामोऽसि तमप्रमेयं । अनन्तमायामितमन्त्रवीर्य्यं नारायणं ह्यादिदेवं पुराणं ।

नासौ देवो विश्वरूपो मयाऽपि शक्यो द्रष्टुं ब्रह्मणा वापि साक्षात् । येऽन्ये कामास्तव राजन् हृदिस्था दास्ये चैतांस्त्वं हि मर्त्येषु राजा ।

सत्ये स्थितो धर्मपरो जितेन्द्रियः शूरो दृढप्रीतिरतः सुराणां । बुद्ध्या भक्त्या चोत्तमः श्रद्धया च ततस्तेऽहं दद्मि वरान् यथेष्टं ।

॥ मान्धाता उवाच ॥ असंशयं भगवन्नादिदेवं द्रक्ष्यामि त्वाऽहं शिरसा संप्रसाद्य । त्यक्त्वा कामान् धर्मकामो ह्यरण्यमिच्छे गन्तुं सत्पथं लोकजुष्टं । २४०५

क्षात्राद्धर्माद्विपुलादप्रमेयात् लोकाः प्राप्ताः स्थापितं स्वं यशश्च । धर्मो योऽसावादिदेवात् प्रवृत्तो लोकज्येष्ठं तं न जानामि कर्त्तुं ।

॥ इन्द्र उवाच ॥ असैनिका धर्मपराश्च धर्मं परां गतिं न नयन्ते ह्ययुक्ताः । क्षात्रो धर्मो ह्यादिदेवात् प्रवृत्तो लोकज्येष्ठं तं न जानामि कर्त्तुं ।

शेषाः सृष्टा ह्यन्तवन्तो ह्यनन्ताः सुप्रस्थानाः क्षत्रधर्म्मा विशिष्टाः । अस्मिन् धर्म्मे सर्व्वधर्म्माः प्रविष्टास्तस्माद्धर्म्मं श्रेष्ठमिमं वदन्ति ।

कर्म्मणा वै पुरा देवा ऋषयश्चामितौजसः । त्राताः सर्व्वे प्रसह्यारीन् क्षत्रधर्म्मेण विष्णुना ।

यदि ह्यसौ भगवान्नाहनिष्यद्रिपून् सर्व्वानसुरानप्रमेयः । न ब्राह्मणा न च लोकादिकर्त्ता नायं धर्म्मो नादिधर्म्मोऽभविष्यत् । २४३०

इमामुर्व्वीं नाजयद्विक्रमेण देवश्रेष्ठः सासुरामादिदेवः । चातुर्व्वर्ण्यं चातुराश्रम्यधर्म्माः सर्व्वे न स्युर्ब्रह्मणानां विनाशात् ।

नष्टा धर्म्माः शतधा शाश्वतास्ते क्षात्रेण धर्म्मेण पुनः प्रवृद्धाः । युगे युगे ह्यादिधर्म्माः प्रवृत्ता लोकज्येष्ठं क्षात्रधर्म्मं वदन्ति ।

आत्मत्यागः सर्व्वभूतानुकम्पा लोकज्ञानं पालनं मोक्षणञ्च । विषण्णानां मोक्षणं पीडितानां क्षात्रे धर्म्मे विद्यते पार्थिवानां ।

निर्म्मर्य्यादाः काममन्युप्रवृत्ता भीता राज्ञो नाधिगच्छन्ति पापं । शिष्टाश्चान्ये सर्व्वधर्म्मोपपन्नाः साध्वाचाराः साधुधर्म्मं वदन्ति ।

पुत्रवत् पाल्यमानानि राजधर्म्मेण पार्थिवैः । लोके भूतानि सर्व्वाणि चरन्ते नात्र संशयः । २४३५

सर्व्वधर्म्मपरं क्षात्रं लोकश्रेष्ठं सनातनं । शश्वदक्षरपर्य्यन्तमक्षरं सर्व्वतोमुखं ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि वर्णाश्रमधर्म्मकथने चतुःषष्टोऽध्यायः ॥ ६४ ॥

॥ इन्द्र उवाच ॥ एवं वीर्य्यः सर्व्वधर्म्मोपपन्नः क्षात्रः श्रेष्ठः सर्व्वधर्म्मेषु धर्म्मः । पाल्यो युष्माभिर्लोकहितैरुदारैर्विपर्य्यये स्यादभावः प्रजानां ।

भूसंस्कारं राजसंस्कारयोगमभैक्षचर्य्यां पालनञ्च प्रजानां । विद्याद्राजा सर्व्वभूतानुकम्पी देहत्यागञ्चाहवे धर्म्ममग्र्यं ।

त्यागश्रेष्ठं मुनयो वै वदन्ति सर्व्वश्रेष्ठं यच्छरीरं त्यजेत । नित्यं युक्ता राजधर्म्मेषु सर्व्वे प्रत्यक्षन्ते भूमिपाला यथैव ।

बहुश्रुत्या गुरुशुश्रूषया च परस्परा संहननाद्वदन्ति । नित्यं धर्म्मं क्षत्रियो ब्रह्मचारी चरेदेको ह्याश्रमं धर्म्मकामः । २४४०

सामान्यार्थे व्यवहारे प्रवृत्ते प्रियाप्रिये वर्ज्जयन्नेव यत्नात् । चातुर्व्वर्ण्यस्थापनात् पालनाच्च तैस्तैर्योगैर्नियमैरौरसैश्च ।

सर्व्वोद्योगैराश्रमं धर्म्ममाहुः क्षात्रं श्रेष्ठं सर्व्वधर्म्मोपपन्नं । स्वं स्वं धर्म्मं ये न चरन्ति वर्णास्तांस्तान् धर्म्मानन्यथार्थान् वदन्ति ।

निर्म्मर्य्यादान्नित्यमर्थे निविष्टानाहुस्तान् वै पशुभूतान् मनुष्यान् । यथा नीतिं गमयत्यर्थयोगाच्छ्रेयस्तस्मादाश्रमात् क्षत्रधर्म्मः ।

त्रैविद्यानां या गतिर्ब्राह्मणानां ये चैवोक्ताश्चाश्रमा ब्राह्मणानां । एतत् कर्म्म ब्राह्मणस्याहुरग्र्यमन्यत् कुर्व्वञ्छूद्रवच्छस्त्रवध्यः ।

चतुराश्रम्यधर्म्माश्च वेदधर्म्माश्च पार्थिव । ब्राह्मणेनानुगन्तव्या नान्यो विद्यात् कदाचन । २४४५

अन्यथा वर्त्तमानस्य नासौ वृत्तिः प्रकल्प्यते । कर्म्मणा वर्द्धते धर्म्मो यथा धर्म्मस्तथैव सः ।

यो विकर्म्मस्थितो विप्रो न स सम्मानमर्हति । कर्म्म स्वं नोपयुञ्जानमविश्वास्यं हि तं विदुः ।

एते धर्म्माः सर्व्ववर्णेषु लीना उत्क्रष्टव्याः क्षत्रियैरेव धर्म्माः । तस्माज्ज्येष्ठा राजधर्म्मा न चान्ये वीरज्येष्ठा वीरधर्म्मा मता मे ।

॥ मान्धातोवाच ॥ यवनाः किराता गान्धाराश्चीनाः शवरवर्व्वराः । शकास्तुषाराः कङ्काश्च पह्लवाश्चान्ध्रमद्रकाः ।

पौण्ड्राः पुलिन्दा रमठाः काम्बोजाश्चैव सर्व्वशः । ब्रह्मक्षत्रप्रसूताश्च वैश्याः शूद्राश्च मानवाः । २४५०

कथं धर्म्मांश्चरिष्यन्ति सर्व्वे विषयवासिनः । मद्विधैश्च कथं स्थाप्याः सर्व्वे वै दस्युजीविनः ।

एतदिच्छाम्यहं श्रोतुं भगवंस्तद्ब्रवीहि मे । त्वं बन्धुभूतो ह्यस्माकं क्षत्रियाणां सुरेश्वर ।

॥ इन्द्र उवाच ॥ मातापित्रोर्हि शुश्रूषा कर्त्तव्या सर्व्वदस्युभिः । आचार्य्यगुरुशुश्रूषा तथैवाश्रमवासिनां ।
भूमिपानाञ्च शुश्रूषा कर्त्तव्या सर्व्वदस्युभिः । वेदधर्म्मक्रियाश्चैव तेषां धर्म्मो विधीयते ।
पितृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च । दानानि च यथाकालं द्विजेभ्यो विसृजेत् सदा । २४६५
अहिंसा सत्यमक्रोधो वृत्तिदायानुपालनं । भरणं पुत्त्रदाराणां शौचमद्रोह एव च ।
दक्षिणा सर्व्वयज्ञानां दातव्या भूतिमिच्छता । पाकयज्ञा महार्हाश्च दातव्याः सर्व्वदस्युभिः ।
एतान्येवंप्रकाराणि विहितानि पुराऽनघ । सर्व्वलोकस्य कर्म्माणि कर्त्तव्यानीह पार्थिव ।
॥ मान्धातोवाच ॥ दृश्यन्ते मानुषे लोके सर्व्ववर्णेषु दस्यवः । लिङ्गान्तरे वर्त्तमाना आश्रमेषु चतुर्ष्वपि ।
॥ इन्द्र उवाच ॥ विनष्टायां दण्डनीत्यां राजधर्म्मे निराकृते । संप्रमुह्यन्ति भूतानि राजदौरात्म्यतोऽनघ । २४७०
असंख्याता भविष्यन्ति भिक्षवो लिङ्गिनस्तथा । आश्रमाणां विकल्पाश्च निवृत्तेऽस्मिन् कृते युगे ।
अशृण्वानाः पुराणानां धर्म्माणां परमा गतीः । उत्पथं प्रतिपत्स्यन्ते काममन्युसमीरिताः ।
यदा निवर्त्त्यते पापो दण्डनीत्या महात्मभिः । तदा धर्म्मो न चलते सद्भूतः शाश्वतः परः ।
सर्व्वलोकगुरुञ्चैव राजानं योऽवमन्यते । न तस्य दत्तं न हुतं न श्राद्धं फलते क्वचित् ।
मानुषाणामधिपतिं देवभूतं सनातनं । देवाऽपि नावमन्यन्ते धर्म्मकामं नरेश्वरं । २४७५
प्रजापतिर्हि भगवान् सर्व्वञ्चैवासृजज्जगत् । स प्रवृत्तिनिवृत्त्यर्थं धर्म्माणां क्षत्त्रमिच्छति ।
प्रवृत्तस्य हि धर्म्मस्य बुद्ध्या यः स्मरते गतिं । स मे मान्यश्च पूज्यश्च तत्र क्षत्त्रं प्रतिष्ठितं ।
॥ भीष्म उवाच ॥ एवमुक्त्वा स भगवान् मरुद्गणवृतः प्रभुः । जगाम भवनं विष्णोरक्षरं शाश्वतं परं ।
एवं प्रवर्त्तिते धर्म्मे पुरा सुचरितेऽनघ । कः क्षत्त्रमवमन्येत चेतनावान् बहुश्रुतः ।
अन्यायेन प्रवृत्तानि निवृत्तानि तथैव च । अन्तरा विलयं यान्ति यथा पथि विचक्षुषः । २४८०
आदौ प्रवर्त्तिते चक्रे तथैवादिपरायणे । वर्त्तस्व पुरुषव्याघ्र संविजानामि तेऽनघ ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि पञ्चषष्टोऽध्यायः ॥ ६५ ॥

॥ युधिष्ठिर उवाच ॥ श्रुता मे कथिताः पूर्व्वं चत्वारो मानवाश्रमाः । आख्यानयित्वा व्याख्यानमेतदाचक्ष्व पृच्छतः ।
॥ भीष्म उवाच ॥ विदिताः सर्व्व एवेह धर्म्मास्तव युधिष्ठिर । यथा मम महाबाहो विदिताः साधुसम्मताः ।
यत्तु लिङ्गान्तरगतं पृच्छसे मां युधिष्ठिर । धर्म्मं धर्म्मभृतां श्रेष्ठ तन्निबोध युधिष्ठिर ।
सर्व्वाण्येतानि कौन्तेय विद्यन्ते मनुजर्षभ । साध्वाचारप्रवृत्तानां चातुराश्रम्यकारिणां । २४८५
अकामद्वेषयुक्तस्य दण्डनीत्या युधिष्ठिर । समदर्शिनश्च भूतेषु भैक्षाश्रमपदं भवेत् ।
वेत्ति ज्ञानं विसर्गञ्च निग्रहानुग्रहं तथा । यथोक्तवृत्तेर्धीरस्य क्षेमाश्रमपदं भवेत् ।
अर्हान् पूजयतो नित्यं संविभागेन पाण्डव । सर्व्वतस्तस्य कौन्तेय भैक्षाश्रमपदं भवेत् ।
ज्ञातिसंबन्धिमित्राणि व्यापन्नानि युधिष्ठिर । समभ्युद्धरमाणस्य दीक्षाश्रमपदं भवेत् ।
लोकमुख्येषु सत्कारं लिङ्गिमुख्येषु चाचरत् । कुर्व्वतस्तस्य कौन्तेय वन्याश्रमपदं भवेत् । २४९०
आह्निकं पितृयज्ञांश्च भूतयज्ञान् समानुषान् । कुर्व्वतः पार्थ विपुलान् वन्याश्रमपदं भवेत् ।

संविभागेन भूतानामतिथीनां तथाऽर्च्चनात् । देवयज्ञैश्च राजेन्द्र वन्याश्रमपदं भवेत् ।
मर्द्दनं परराष्ट्राणां शिष्टार्थं सत्यविक्रम । कुर्व्वतः पुरुषव्याघ्र वन्याश्रमपदं भवेत् ।
पालनात् सर्व्वभूतानां स्वराष्ट्रपरिपालनात् । दीक्षा बहुविधा राजन् सत्याश्रमपदं भवेत् ।
वेदाध्ययननित्यत्वं क्षमाऽथाचार्य्यपूजनं । अथोपाध्यायशुश्रूषा ब्रह्माश्रमपदं भवेत् । २४६५
आह्निकं जपमानस्य देवान् पूजयतः सदा । धर्म्मेण पुरुषव्याघ्र धर्म्माश्रमपदं भवेत् ।
मृत्युर्व्वा रक्षणं वेति यस्य राज्ञो विनिश्चयः । प्राणद्यूते ततस्तस्य ब्रह्माश्रमपदं भवेत् ।
अजिह्ममशठं मार्गं वर्त्तमानस्य भारत । सर्व्वदा सर्व्वभूतेषु ब्रह्माश्रमपदं भवेत् ।
वानप्रस्थेषु विप्रेषु त्रैविद्येषु च भारत । प्रयच्छतोऽर्थान् विपुलान् वन्याश्रमपदं भवेत् ।
सर्व्वभूतेष्वनुक्रोशं कुर्व्वतस्तस्य भारत । आनृशंस्यप्रवृत्तस्य सर्व्वावस्थं पदं भवेत् । २४७०
बालवृद्धेषु कौन्तेय सर्व्वावस्थं युधिष्ठिर । अनुक्रोशक्रिया पार्थ सर्व्वावस्थं पदं भवेत् ।
बलात्कृतेषु भूतेषु परित्राणं कुरूद्वह । शरणागतेषु कौरव्य कुर्व्वन् गार्हस्थ्यमावसेत् ।
चराचराणां भूतानां रक्षणञ्चापि सर्व्वशः । यथार्हपूजाञ्च तथा कुर्व्वन् गार्हस्थ्यमावसेत् ।
ज्येष्ठानुज्येष्ठपत्नीनां भ्रातॄणां पुत्त्रनप्तृणां । निग्रहानुग्रहौ पार्थ गार्हस्थ्यमिति तत्तपः ।
साधूनामर्च्चनीयानां पूजासु विदितात्मनां । पालनं पुरुषव्याघ्र गृहाश्रमपदं भवेत् । २४७५
आश्रमस्थानि भूतानि यस्तु वेश्मनि भारत । आददीतेह भोज्येन तद्गार्हस्थ्यं युधिष्ठिर ।
यः स्थितः पुरुषो धर्म्मे धात्रा सृष्टे यथार्थवत् । आश्रमाणां हि सर्व्वेषां फलं प्राप्नोत्यनामयं ।
यस्मिन्न नश्यन्ति गुणाः कौन्तेय पुरुषे सदा । आश्रमस्थं तमप्याहुर्नरश्रेष्ठं युधिष्ठिर ।
स्थानमानं कुले मानं वयोमानं तथैव च । कुर्व्वन् वसति सर्व्वेषु आश्रमेषु युधिष्ठिर ।
देशधर्म्मांश्च कौन्तेय कुलधर्म्मांस्तथैव च । पालयन् पुरुषव्याघ्र राजा सर्व्वाश्रमी भवेत् । २४८०
काले विभूतिं भूतानामुपहारांस्तथैव च । अर्हयन् पुरुषव्याघ्र साधूनामाश्रमे वसेत् ।
दशधर्म्मगतश्चापि यो धर्म्मं प्रत्यवेक्षते । सर्व्वलोकस्य कौन्तेय राजा भवति साश्रमी ।
ये धर्म्मकुशला लोके धर्म्मं कुर्व्वन्ति भारत । पालिता यस्य विषये धर्म्मांशस्तस्य भूपतेः ।
धर्म्मारामान् धर्म्मपरान् ये न रक्षन्ति मानवान् । पार्थिवाः पुरुषव्याघ्र तेषां पापं हरन्ति ते ।
ये चाप्यत्र सहायाः स्युः पार्थिवानां युधिष्ठिर । ते चैवांशहराः सर्व्वे धर्म्मे परकृतेऽनघ । २४८५
सर्व्वाश्रमपदेऽप्याहुर्गार्हस्थ्यं दीप्तनिर्णयं । पावनं पुरुषव्याघ्र यं धर्म्मं पर्य्युपास्महे ।
आत्मोपमस्तु भूतेषु यो वै भवति मानवः । न्यस्तदण्डो जितक्रोधः प्रेत्येह लभते सुखं ।
धर्म्मस्थिता सत्त्ववीर्य्या धर्म्मसेतुवराटका । त्यागवाताध्वगा शीघ्रा नौस्त्वां सन्तारयिष्यति ।
यदा निवृत्तः सर्व्वस्मात् कामो योऽस्य हृदि स्थितः । तदा भवति सत्त्वस्थस्ततो ब्रह्म समश्नुते ।
सुप्रसन्नस्तु भावेन योगेन च नराधिप । धर्म्मं पुरुषशार्दूल प्राप्स्यसे पालने रतः । २४९०
वेदाध्ययनशीलानां विप्राणां साधुकर्म्मणां । पालने यत्नमातिष्ठ सर्व्वलोकस्य चैव ह ।

वने चरन्ति यं धर्म्ममाश्रमेषु च भारत । रक्षणात् शतगुणं धर्म्मं प्राप्नोति पार्थिवः ।
एष ते विविधो धर्म्मः पाण्डवश्रेष्ठ कीर्त्तितः । अनुतिष्ठ त्वमेवं वै पूर्व्वदृष्टं सनातनं ।
चातुराश्रम्यमेकाग्र्यं चातुर्व्वर्ण्यञ्च पाण्डव । धर्म्मं पुरुषशार्दूल प्राप्स्यसे पालने रतः ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि चातुराश्रम्यविधौ षट्षष्टोऽध्यायः ॥ ६६ ॥

॥ युधिष्ठिर उवाच ॥ चातुराश्रम्यमुक्तन्ते चातुर्व्वर्ण्यन्तथैव च । राष्ट्रस्य यत् कृत्यतमं ततो ब्रूहि पितामह । २४९५
॥ भीष्म उवाच ॥ राष्ट्रस्यैतत् कृत्यतमं राज्ञ एवाभिषेचनं । अनिन्द्रमबलं राष्ट्रं दस्यवोऽभिभवन्त्युत ।
अराजकेषु राष्ट्रेषु धर्म्मो न व्यवतिष्ठते । परस्परञ्च खादन्ति सर्व्वथा धिगराजकं ।
इन्द्रमेव प्रवृणुते यद्राजानमिति श्रुतिः । यथैवेन्द्रस्तथा राजा सम्पूज्यो भूतिमिच्छता ।
नाराजकेषु राष्ट्रेषु वस्तव्यमिति रोचये । नाराजकेषु राष्ट्रेषु हव्यमग्निर्व्वहत्युत ।
अथ चेदभिवर्त्तेत राज्यार्थी बलवत्तरः । अराजकानि राष्ट्राणि हतवीर्य्याणि वा पुनः । २५००
प्रत्युद्गम्याभिपूज्यः स्यादेतदत्र सुमन्त्रितं । न हि पापात् पापतरमस्ति किञ्चिदराजकात् ।
स चेत् समनुपश्येत समग्रं कुशलं भवेत् । बलवान् हि प्रकुपितः कुर्य्यान्निःशेषतामपि ।
भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा । अथ या सुदुहा राजन् नैव तां वितुदन्त्यपि ।
यदतप्तं प्रणमते नैतत् सन्तापमर्हति । यत् स्वयं नमते दारु न तत् सन्तापयन्त्यपि ।
एतयोपमया वीर संनमेत बलीयसे । इन्द्राय स प्रणमते नमते यो बलीयसे । २५०५
तस्माद्राजैव कर्त्तव्यः सततं भूतिमिच्छता । न धनार्थो न दारार्थस्तेषां येषामराजकं ।
प्रीयते हि हरन् पापः परवित्तमराजके । यदाऽस्य उद्धरन्त्यन्ये तदा राजानमिच्छति ।
पापा अपि तदा क्षेमं न लभन्ते कदाचन । एकस्य हि द्वौ हरतो द्वयोश्च बहवोऽपरे ।
अदासः क्रियते दासो ह्रियन्ते च बलात् स्त्रियः । एतस्मात् कारणात देवाः प्रजापालं प्रचक्रिरे ।
राजा चेन्न भवेल्लोके पृथिव्यां दण्डधारकः । जले मत्स्यानिवाभक्षन् दुर्ब्बलं बलवत्तराः । २५१०
अराजकाः प्रजाः पूर्व्वं विनेशुरिति नः श्रुतं । परस्परं भक्षयन्तो मत्स्या इव जले कृशान् ।
समेत्य तास्ततश्चक्रुः समयानिति नः श्रुतं । वाक्शूरो दण्डपरुषो यश्च स्यात् पारजायिकः ।
यः परस्वमथादद्यात् त्याज्या नस्तादृशा इति । विश्वासार्थञ्च सर्व्वेषां वर्णानामविशेषतः ।
तास्तथा समयं कृत्वा समयेनावतस्थिरे । सहितास्तास्तदा जग्मुरसुखार्त्ताः पितामहं ।
अनीश्वरा विनश्यामो भगवन्नीश्वरं दिश । यं पूजयेम सम्भूय यश्च नः प्रतिपालयेत् । २५१५
ततो मनुं व्यादिदेश मनुर्नाभिननन्द ताः ।
॥ मनुरुवाच ॥ बिभेमि कर्म्मणः पापाद्राज्यं हि भृशदुस्तरं । विशेषतो मनुष्येषु मिथ्यावृत्तेषु नित्यदा ।
॥ भीष्म उवाच ॥ तमब्रुवन् प्रजा मा भैः कर्त्तॄनेनो गमिष्यति । पशूनामधिपञ्चाशद्धिरण्यस्य तथैव च ।
धान्यस्य दशमं भागं दास्यामः कोषवर्द्धनं । कन्यां शुल्के चारुरूपां विवादे द्यूतताञ्च च ।
मुख्येन शस्त्रपत्रेण ये मनुष्याः प्रधानतः । भवन्तं तेऽनुयास्यन्ति महेन्द्रमिव देवताः । २५२०

स त्वं जातबलो राजा दुष्प्रधर्षः प्रतापवान्। सुखे धास्यसि नः सर्व्वान् कुबेर इव नैरृतान्॥
यन्तु धर्म्मं चरिष्यन्ति प्रजा राज्ञा सुरक्षिताः। चतुर्थं तस्य धर्म्मस्य त्वत्संस्थं वै भविष्यति॥
तेन धर्म्मेण महता सुखं लब्धेन भावितः। पाह्यस्मान् सर्व्वतो राजन् देवानिव शतक्रतुः॥
विजयाय हि निर्य्याहि प्रतपन् रश्मिवानिव। मानं विधम शत्रूणां धर्म्मो जयतु नः सदा॥
स निर्ययौ महातेजा बलेन महता वृतः। महाभिजनसम्पन्नस्तेजसा प्रज्वलन्निव॥ २५१५
तस्य दृष्ट्वा महत्त्वं ते महेन्द्रस्येव देवताः। अपतत्रसिरे सर्व्वे स्वधर्म्मे च दधुर्मनः॥
ततो महीं परिययौ पर्ज्जन्य इव वृष्टिमान्। शमयन् सर्व्वतः पापान् स्वकर्म्मसु च योजयन्॥
एवं ये भूतिमिच्छेयुः पृथिव्यां मानवाः क्वचित्। कुर्य्यू राजानमेवाग्रे प्रजानुग्रहकारणात्॥
नमस्येरंश्च तं भक्त्या शिष्या इव गुरुं सदा। देवा इव च देवेन्द्रं तत्र राजानमन्तिके॥
सत्कृतं स्वजनेनेह परोऽपि बहुमन्यते। स्वजनेन त्ववज्ञातं परे परिभवन्त्युत॥ २५२०
राज्ञः परैः परिभवः सर्व्वेषामसुखावहः। तस्माच्छत्रञ्च पत्रञ्च वासांस्याभरणानि च॥
भोजनान्यथ पानानि राज्ञे दद्युर्गृहाणि च। आसनानि च शय्याश्च सर्व्वोपकरणानि च॥
गोप्ता तस्माद्दुराधर्षः स्मितपूर्व्वाभिभाषिता। आभाषितश्च मधुरं प्रत्याभाषेत मानवान्॥
कृतज्ञो दृढभक्तिः स्यात् संविभागी जितेन्द्रियः। ईक्षितः प्रतिवीक्षेत मृदु वल्गु च सुष्ठु च॥
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि सप्तषष्टोऽध्यायः॥ ६७॥
॥ युधिष्ठिर उवाच॥ किमाहुर्द्दैवतं विप्रा राजानं भरतर्षभ। मनुष्याणामधिपतिं तन्मे ब्रूहि पितामह॥ २५२५
॥ भीष्म उवाच॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। बृहस्पतिं वसुमना यथा पप्रच्छ भारत॥
राजा वसुमना नाम कौशल्यो धीमतां वरः। महर्षिं किल पप्रच्छ कृतप्रज्ञं बृहस्पतिं॥
सर्व्वं वैनयिकं कृत्वा विनयज्ञो बृहस्पतिं। दक्षिणानन्तरो भूत्वा प्रणम्य विधिपूर्व्वकं॥
विधिं पप्रच्छ राज्यस्य सर्व्वलोकहिते रतः। प्रजानां सुखमन्विच्छन् धर्म्मशीलं बृहस्पतिं॥
॥ वसुमना उवाच॥ केन भूतानि वर्द्धन्ते क्षयं गच्छन्ति केन वा। कमर्च्चन्तो महाप्राज्ञ सुखमत्यन्तमाप्नुयुः॥ २५३०
एवं पृष्टो महाप्राज्ञः कौशल्येनामितौजसा। राजसत्कारमव्यग्रं शशंसास्मै बृहस्पतिः॥
॥ बृहस्पतिरुवाच॥ राजमूलो महाप्राज्ञ धर्म्मो लोकस्य लक्ष्यते। प्रजा राजभयादेव न खादन्ति परस्परं॥
राजा ह्येवाखिलं लोकं समुदीर्णं समुत्सुकं। प्रसादयति धर्म्मेण प्रसाद्य च विराजते॥
यथा ह्यनुदये राजन् भूतानि शशिसूर्य्ययोः। अन्धे तमसि मज्जेयुरपश्यन्तः परस्परं॥
यथा ह्यनुदके मत्स्या निराक्रन्दे विहङ्गमाः। विहरेयुर्य्यथाकामं विहिंसन्तः पुनः पुनः॥ २५३५
विमथ्यातिक्रमेरंश्च विषह्यापि परस्परं। अभावमचिरेणैव गच्छेयुर्नात्र संशयः॥
एवमेव विना राज्ञा विनश्येयुरिमाः प्रजाः। अन्धे तमसि मज्जेयुरगोपाः पशवो यथा॥
हरेयुर्ब्बलवन्तोऽपि दुर्ब्बलानां परिग्रहान्। हन्युर्व्यायच्छमानांश्च यदि राजा न पालयेत्॥
ममेदमिति लोकेऽस्मिन् भवेत् सम्परिग्रहः। न दारा न च पुत्रः स्यान्न धनं न परिग्रहः॥

विश्वलोपः प्रवर्त्तेत यदि राजा न पालयेत् । यानं वस्त्रमलङ्कारान् रत्नानि विविधानि च । २५५०
हरेयुः सहसा पापा यदि राजा न पालयेत् । पतेद्बहुविधं शस्त्रं बहुधा धर्म्मचारिषु ।
अधर्म्मः प्रगृहीतः स्याद्यदि राजा न पालयेत् । मातरं पितरं वृद्धमाचार्य्यमतिथीन् गुरुं ।
क्लिश्नीयुरपि हिंस्युर्व्वा यदि राजा न पालयेत् । वधबन्धपरिक्लेशो नित्यमर्थवतां भवेत् ।
ममत्वञ्च न विन्देयुर्य्यदि राजा न पालयेत् । अन्तश्चाकाल एव स्युर्लोकोऽयं दस्युसाद्भवेत् ।
पतेयुर्नरकं घोरं यदि राजा न पालयेत् । न योनिदोषो वर्त्तेत न कृषिर्न वणिक्पथः । २५५५
मज्जेद्धर्म्मस्त्रयी न स्याद्यदि राजा न पालयेत् । न यज्ञाः सम्प्रवर्त्तेयुर्व्विधिवत् स्वाप्तदक्षिणाः ।
न विवाहाः समाजो वा यदि राजा न पालयेत् । न वृषाः सम्प्रवर्त्तेरन्न मथ्येरंश्च गर्गराः ।
घोषाः प्रणाशं गच्छेयुर्यदि राजा न पालयेत् । त्रस्तमुद्विग्नहृदयं हाहाभूतमचेतनं ।
क्षणेन विनश्येत् सर्व्वं यदि राजा न पालयेत् । न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः ।
विधिवद्दक्षिणावन्ति यदि राजा न पालयेत् । ब्राह्मणाश्चतुरो वेदान्नाधीयीरंस्तपस्विनः । २५६०
विद्यास्नाता व्रतस्नाता यदि राजा न पालयेत् । न लभेद्धर्म्मसंश्लेषं हतविप्रहतो जनः ।
हर्त्ता स्वमेनश्रियो गच्छेद्यदि राजा न पालयेत् । हस्ताद्धस्तं परिमुषेद्भिद्येरन् सर्व्वसेतवः ।
भयार्त्तं विद्रवेत् सर्व्वं यदि राजा न पालयेत् । अनयाः सम्प्रवर्त्तेरन् भवेद्वै वर्णसङ्करः ।
दुर्भिक्षमाविशेद्राष्ट्रं यदि राजा न पालयेत् । विवृत्य हि यथाकामं गृहद्वाराणि शेरते ।
मनुष्या रक्षिता राज्ञा समन्तादकुतोभयाः । नाक्रुष्टं सहते कश्चित् कुतो वा हस्तलाघवं । २५६५
यदि राजा न सम्यग्गां रक्षयत्यपि धार्म्मिकः । स्त्रियश्चापुरुषा मार्गं सर्व्वालङ्कारभूषिताः ।
निर्भयाः प्रतिपद्यन्ते यदि रक्षति भूमिपः । धर्म्ममेव प्रपद्यन्ते न हिंसन्ति परस्परं ।
अनुगृह्णन्ति चान्योन्यं यदा रक्षति भूमिपः । यजन्ते च महायज्ञैस्त्रयो वर्णाः पृथग्विधैः ।
युक्ताश्चाधीयते विद्यां यदा रक्षति भूमिपः । वार्त्तामूलो ह्ययं लोकस्त्रयो वै धार्य्यते सदा ।
तत्सर्व्वं वर्त्तते सम्यग्यदि रक्षति भूमिपः । यदा राजा धुरं श्रेष्ठामादाय वहति प्रजाः । २५७०
महता बलयोगेन तदा लोकः प्रसीदति । यस्याभावेन भूतानामभावः स्यात् समन्ततः ।
भावे च भावो नित्यं स्यात् कस्तं न प्रतिपूजयेत् । तस्य यो वहते भारं सर्व्वलोकभयावहं ।
तिष्ठन् प्रियहिते राज्ञ उभौ लोकाविमौ जयेत् । यस्तस्य पुरुषः पापं मनसाऽप्यनुचिन्तयेत् ।
असंशयमिह क्लिष्टः प्रेत्यापि नरकं व्रजेत् । न हि जात्ववमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति । कुरुते पञ्चरूपाणि कालयुक्तानि यः सदा । २५७५
भवत्यग्निस्तथादित्यो मृत्युर्वैश्रवणो यमः । यदा ह्यासीदतः पापान् दहत्युग्रेण तेजसा ।
मिथ्योपचरितो राजा तदा भवति पावकः । यदा पश्यति चारेण सर्व्वभूतानि भूमिपः ।
सपुत्त्रपौत्त्रान् सामात्यांस्तदा भवति सोऽन्तकः । यदा त्वधार्म्मिकान् सर्व्वांस्तीक्ष्णैर्द्दण्डैर्नियच्छति ।
धार्म्मिकांश्चानुगृह्णाति भवत्यथ यमस्तदा । यदा तु धनधाराभिस्तर्पयत्युपकारिणः ।

आच्छिनत्ति च रत्नानि विविधान्यपकारिणां। श्रियं ददाति कस्मैचित् कस्माच्चिदपकर्षति। २५८०
तदा वैश्रवणो राजँल्लोके भवति भूमिपः। नास्यापवादे स्थातव्यं दक्षेणाक्लिष्टकर्म्मणा।
धर्म्ममेवाकाङ्क्षता लोकमीश्वरस्यानसूयता। न हि राज्ञः प्रतीपानि कुर्व्वन् सुखमवाप्नुयात्।
पुत्रो भ्राता वयस्यो वा यद्यप्यात्मसमो भवेत्। कुर्य्यात् कृष्णगतिः शेषं ज्वलितोऽनिलसारथिः।
न तु राजाभिपन्नस्य शेषं क्वचन विद्यते। तस्य सर्व्वाणि रक्ष्याणि दूरतः परिवर्ज्जयेत्।
मृत्योरिव जुगुप्सेत राजस्वहरणान्नरः। नश्येदभिमृषन् सद्यो मृगः कूटमिव स्पृशन्। २५८५
आत्मस्वमिव रक्षेत राजस्वमिह बुद्धिमान्। महान्तं नरकं घोरमप्रतिष्ठमचेतनं।
पतन्ति चिररात्राय राजवित्तापहारिणः। राजा भोजो विराट् सम्राट् क्षत्रियो भूपतिर्नृपः।
य एभिस्स्तूयते शब्दैः कस्तं नार्च्चितुमर्हति। तस्माद्बुभूषुर्नियतो जितात्मा नियतेन्द्रियः।
मेधावी धृतिमान्दक्षः संश्रयेत महीपतिं। कृतज्ञं प्राज्ञमक्षुद्रं दृढभक्तिं जितेन्द्रियं।
धर्म्मनित्यं स्थितं नीत्यां मन्त्रिणं पूजयेन्नृपः। दृढभक्तिं कृतप्रज्ञं धर्म्मज्ञं संयतेन्द्रियं। २५९०
शूरमक्षुद्रकर्म्माणं निषिद्धजनमाश्रयेत्।
प्रज्ञा प्रगल्भं कुरुते मनुष्यं राजा कृशान् वै कुरुते मनुष्यान्। राजाभिपन्नस्य कुतः सुखानि राजाऽभ्युपेतं सुखिनं करोति।
राजा प्रजानां हृदयं गरीयो गतिः प्रतिष्ठा सुखमुत्तमञ्च। समाश्रिता लोकमिमं परञ्च जयन्ति सम्यक् पुरुषा नरेन्द्र।
नराधिपश्चाप्यनुशिष्य मेदिनीं दमेन सत्येन च सौहृदेन। महद्भिरिष्ट्वा क्रतुभिर्महायशास्त्रिविष्टपे स्थानमुपैति शाश्वतं।
स एवमुक्तोऽङ्गिरसा कौशल्यो राजसत्तमः। प्रयत्नात् कृतवान् वीरः प्रजानां परिपालनं। २५९५
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि अङ्गिरोवाक्ये अष्टषष्टोऽध्यायः॥ ६८॥
॥ युधिष्ठिर उवाच॥ पार्थिवेन विशेषेण किं कार्य्यमवशिष्यते। कथं रक्ष्यो जनपदः कथं जेयाश्च शत्रवः।
कथं चारं प्रयुञ्जीत वर्णान् विश्वासयेत् कथं। कथं भृत्यान् कथं दारान् कथं पुत्रांश्च भारत।
॥ भीष्म उवाच॥ राजवृत्तं महाराज शृणुष्वावहितोऽखिलं। यत् कार्य्यं पार्थिवेनादौ पार्थिवप्रकृतेन वा।
आत्मा जेयः सदा राज्ञा ततो जेयाश्च शत्रवः। अजितात्मा नरपतिर्विजयेत कथं रिपून्।
एतावानात्मविजयः पञ्चवर्गविनिग्रहः। जितेन्द्रियो नरपतिर्बाधितुं शक्नुयादरीन्। २६००
न्यसेत गुल्मान् दुर्गेषु सन्धौ च कुरुनन्दन। नगरोपवने चैव पुरोद्यानेषु चैव ह।
संस्थानेषु च सर्व्वेषु पुरेषु नगरेषु च। मध्ये च नरशार्दूल तथा राजनिवेशने।
प्रणिधींश्च ततः कुर्य्याज्जडान्धबधिराकृतीन्। पुंसः परीक्षितान् प्राज्ञान् क्षुत्पिपासाश्रमक्षमान्।
अमात्येषु च सर्व्वेषु मित्रेषु विविधेषु च। पुत्रेषु च महाराज प्रणिदध्यात् समाहितः।
पुरे जनपदे चैव तथा सामन्तराजसु। यथा न विद्युरन्योन्यं प्रणिधेयास्तथा हि ते। २६०५
चारांश्च विद्यात् प्रहितान् परेण भरतर्षभ। आपणेषु विहारेषु समाजेषु च भिक्षुषु।
आरामेषु तथोद्याने पण्डितानां समागमे। देशेषु चत्वरे चैव सभास्वावसथेषु च।

एवं विचिनुयाद्राजा परचारं विचक्षणः। चारे हि विहिते पूर्व्वं हितं भवति पाण्डव।
यदा तु हीनं नृपतिर्व्विद्यादात्मानमात्मना। अमात्यैः सह संमन्त्र्य कुर्य्यात् सन्धिं बलीयसा।
अज्ञायमाने हीनत्वे सन्धिं कुर्य्यात् परेण वै। लिप्सुर्व्वा कञ्चिदेवार्थं त्वरमाणो विचक्षणः। २५१०
गुणवन्तो महोत्साहा धर्म्मज्ञाः साधवश्च ये। सन्दधीत नृपस्तैश्च राष्ट्रं धर्म्मेण पालयन्।
उच्छिद्यमानमात्मानं ज्ञात्वा राजा महामतिः। पूर्व्वापकारिणो हन्याल्लोकद्विष्टांश्च सर्व्वशः।
यो नोपकर्त्तुं शक्नोति नापकर्त्तुं महीपतिः। न शक्यरूपश्चोद्धर्त्तुमुपेक्ष्यस्तादृशो भवेत्।
यात्रां यायादविज्ञातमनाक्रन्दमनन्तरं। व्यापन्नेषु प्रमत्तेषु दुर्व्वलेषु विशेषतः।
यात्रामाज्ञापयेद्वीरः कल्यः पुष्टबलः सुखी। पूर्व्वं कृत्वा विधानञ्च यात्रायां नगरे तथा। २५१५
न च वश्यो भवेदस्य नृपो यद्यतिवीर्य्यवान्। हीनश्च बलवीर्य्याभ्यां कर्षयंस्तत्परो वसेत्।
राष्ट्रञ्च पीडयेत्तस्य शस्त्राग्निविषमूर्च्छनैः। अमात्यवल्लभानाञ्च विवादांस्तस्य कारयेत्।
वर्ज्जनीयं सदा युद्धं राज्यकामेन धीमता। उपायैस्त्रिभिरादानमर्थस्याह बृहस्पतिः।
सान्त्वेन तु प्रदानेन भेदेन च नराधिप। यमर्थं शक्नुयात् प्राप्तुं तेन तुष्येत पण्डितः।
आददीत बलिञ्चापि प्रजाभ्यः कुरुनन्दन। स षड्भागमपि प्राज्ञस्तासामेवाभिगुप्तये। २५२०
दशधर्म्मगतेभ्यो यद्वसु बह्वल्पमेव च। तदाददीत सहसा पौराणां रक्षणाय वै।
यथा पुत्त्रास्तथा पौरा द्रष्टव्यास्ते न संशयः। भक्तिश्चैषां न कर्त्तव्या व्यवहारे प्रदर्शिते।
श्रोतुञ्चैव न्यसेद्राजा प्राज्ञान् सर्व्वार्थदर्शिनः। व्यवहारेषु सततं तत्र राष्ट्रं प्रतिष्ठितं।
आकरे लवणे शुल्के तरे नागबले तथा। न्यसेदमात्यान्नृपतिः स्वाप्तान् वा पुरुषान् हितान्।
सम्यग्दण्डधरो नित्यं राजा धर्म्ममवाप्नुयात्। राज्ञा हि सततं दण्डः सम्यग्धर्म्मः प्रशस्यते। २५२५
वेदवेदाङ्गवित् प्राज्ञः सुतपस्वी नृपो भवेत्। दानशीलश्च सततं यज्ञशीलश्च भारत।
एते गुणाः समस्ताः स्युर्नृपस्य सततं स्थिराः। व्यवहारस्य लोपे नृपतेः कुतः स्वर्गः कुतो यशः।
यदा तु पीडितो राजा भवेद्राज्ञा बलीयसा। तदाऽभिसंश्रयेद्दुर्गं बुद्धिमान् पृथिवीपतिः।
विधायाक्रम्य मित्राणि विधानमुपकल्पयेत्। सामभेदान् विरोधार्थं विधानमुपकल्पयेत्।
घोषान्न्यसेत मार्गेषु ग्रामानुत्थापयेदपि। प्रवेशयेच्च तान् सर्व्वान् शाखानगरकेष्वपि। २५३०
ये गुप्ताश्चैव दुर्गाश्च देशास्तेषु प्रवेशयेत्। धनिनो बलमुख्यांश्च सान्त्वयित्वा पुनः पुनः।
सस्याभिहारं कुर्य्याच्च स्वयमेव नराधिपः। असम्भवे प्रवेशस्य दाहयेदग्निना भृशं।
क्षेत्रस्थेषु च सस्येषु शत्रोरुपजपेन्नरान्। विनाशयेद्वा तत् सर्व्वं बलेनाथ स्वकेन वा।
नदीमार्गेषु च तथा संक्रमानवसादयेत्। जलं विस्रावयेत् सर्व्वमविस्राव्यञ्च दूषयेत्।
तदात्वेनायतीभिश्च निवसेद्भूम्यनन्तरं। प्रतीघाते परस्याजौ मित्रकार्य्येऽप्युपस्थिते। २५३५
दुर्गाणाञ्चाभितो राजा मूलच्छेदं प्रकारयेत्। सर्व्वेषां क्षुद्रवृक्षाणां चैत्यवृक्षान् विवर्ज्जयेत्।
प्रवृद्धानाञ्च वृक्षाणां शाखां प्रच्छेदयेत्तथा। चैत्यानां सर्व्वथा त्याज्यमपि पत्रस्य पातनं।

प्रगण्डीः कारयेत् सम्यगाकाशजननीस्तथा । आपूरयेच्च परिखां स्थाणुनक्रझषाकुलां ।
सङ्कटद्वारकाणि स्युरुच्छ्वासार्थे पुरस्य च । तेषाञ्च द्वारवद्गुप्तिः कार्य्या सर्व्वात्मना भवेत् ।
द्वारेषु च गुरूण्येव यन्त्राणि स्थापयेत् सदा । आरोपयेच्छतघ्नीश्च स्वाधीनानि च कारयेत् । २५८०
काष्ठानि चाभिहार्य्याणि तथा कूपांश्च खानयेत् । संशोधयेत्तथा कूपान् कृतपूर्व्वान् पयोऽर्थिभिः ।
तृणच्छन्नानि वेश्मानि पङ्केनाथ प्रलेपयेत् । निर्हरेच्च तृणं मासि चैत्रे वह्निभयात्तथा ।
नक्तमेव च भक्तानि पाचयेत नराधिपः । न दिवा ज्वालयेदग्निं वर्ज्जयित्वाऽग्निहोत्रिकं ।
कर्म्मारारिष्टशालासु ज्वलेदग्निः सुरक्षितः । गृहाणि च प्रवेश्यान्तर्व्विधेयः स्याद्धुताशनः ।
महादण्डश्च तस्य स्याद्यस्याग्निर्व्वै दिवा भवेत् । प्रघोषयेदथैवञ्च रक्षणार्थं पुरस्य च । २५८५
भिक्षुकांश्चाक्रिकांश्चैव क्षीवोन्मत्तान् कुशीलवान् । बाह्यान् कुर्य्यान्नरश्रेष्ठ दोषाय स्युर्हि तेऽन्यथा ।
चत्वरेष्वथ तीर्थेषु सभास्वावसथेषु च । यथार्थवर्णं प्रणिधिं कुर्य्यात् सर्व्वस्य पार्थिवः ।
विशालान् राजमार्गांश्च कारयेत नराधिपः । प्रपाश्च विपणांश्चैव यथोद्देशं समादिशेत् ।
भाण्डागारायुधागारान् योधागारांश्च सर्व्वशः । अश्वागारान् गजागारान् बलाधिकरणानि च ।
परिखाश्चैव कौरव्य प्रतोलीर्निष्कुटानि च । न जात्वन्यः प्रपश्येत गुह्यमेतद्युधिष्ठिर । २५९०
अर्थसंनिचयं कुर्य्याद्राजा परबलार्द्दितः । तैलं वसा मधुघृतमौषधानि च सर्व्वशः ।
अङ्गारकुशमुञ्जानां पलाशशरपर्णिनां । यवसेन्धनदग्धानां कारयेत च सञ्चयान् ।
आयुधानि च सर्व्वेषां शक्त्यृष्टिप्रासचर्म्मणां । सञ्चयानेवमादीनां कारयेत नराधिपः ।
औषधानि च सर्व्वाणि मूलानि च फलानि च । चतुर्व्विधांश्च वैद्यान् वै संगृह्णीयाद्विशेषतः ।
नटाश्च नर्त्तकाश्चैव मल्ला मायाविनस्तथा । शोभयेयुः पुरवरं मोदयेयुश्च सर्व्वशः । २५९५
यतः शङ्का भवेच्चापि भृत्यतोऽप्यपि मन्त्रितः । पौरेभ्यो नृपतेर्व्वाऽपि स्वाधीनान् कारयेत तान् ।
कृते कर्म्मणि राजेन्द्र पूजयेद्धनसञ्चयैः । दानेन च यथार्हेण सान्त्वेन विविधेन च ।
निर्व्वेदयित्वा तु परं हत्वा वा कुरुनन्दन । ततोऽनृणो भवेद्राजा यथा शास्त्रे निदर्शितं ।
राज्ञा सप्तैव रक्ष्याणि तानि चैव निबोध मे । आत्माऽमात्याश्च कोषश्च दण्डो मित्राणि चैव हि ।
तथा जनपदाश्चैव पुरञ्च कुरुनन्दन । एतत् सप्तात्मकं राज्यं परिपाल्यं प्रयत्नतः । २६००
षाड्गुण्यञ्च त्रिवर्गञ्च त्रिवर्गपरमं तथा । यो वेत्ति पुरुषव्याघ्र स भुङ्क्ते पृथिवीमिमां ।
षाड्गुण्यमिति यत् प्रोक्तं तन्निबोध युधिष्ठिर । सन्धायासनमित्येव यात्रासन्धानमेव च ।
विगृह्यासनमित्येव यात्रां सम्परिगृह्य च । द्वैधीभावस्तथाऽन्येषां संश्रयोऽथ परस्य च ।
त्रिवर्गश्चापि यः प्रोक्तस्तमिहैकमनाः शृणु । क्षयः स्थानञ्च वृद्धिश्च त्रिवर्गः परमस्तथा ।
धर्म्मश्चार्थश्च कामश्च सेवितव्योऽथ कालतः । धर्म्मेण च महीपालश्चिरं पालयते महीं । २६०५
अस्मिन्नर्थे च श्लोकौ द्वौ गीतावङ्गिरसा स्वयं । यादवीपुत्र भद्रन्ते तावपि श्रोतुमर्हसि ।
कृत्वा सर्व्वाणि कार्य्याणि सम्यक् सम्पाल्य मेदिनीं । पालयित्वा तथा पौरान् परत्र सुखमेधते ।

किं तस्य तपसा राज्ञः किञ्च तस्याध्वरैरपि । सुपालितप्रजो यः स्यात् सर्व्वधर्म्मविदेव सः ।
॥ युधिष्ठिर उवाच ॥ दण्डनीतिश्च राजा च समस्तौ तावुभावपि । तस्य किं कुर्व्वतः सिध्येत्तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ महाभाग्यं दण्डनीत्याः सिद्धैः शब्दैः सहेतुकैः । शृणु मे शंसतो राजन् यथावदिह भारत । २६७०
दण्डनीतिः स्वधर्म्मेभ्यश्चातुर्वर्ण्यं नियच्छति । प्रयुक्ता स्वामिना सम्यगधर्म्मेभ्यो नियच्छति ।
चातुर्वर्ण्ये स्वकर्म्मस्थे मर्य्यादानामसङ्करे । दण्डनीतिकृते क्षेमे प्रजानामकुतोभये ।
साम्ये प्रयत्नं कुर्व्वन्ति त्रयो वर्णा यथाविधि । तस्मादेव मनुष्याणां सुखं विद्धि समाहितं ।
कालो वा कारणं राज्ञो राजा वा कालकारणं । इति ते संशयो माभूद्राजा कालस्य कारणं ।
दण्डनीत्यां यदा राजा सम्यक् कार्त्स्न्येन वर्त्तते । तदा कृतयुगं नाम कालसृष्टं प्रवर्त्तते । २६७५
ततः कृतयुगे धर्म्मो नाधर्म्मो विद्यते क्वचित् । सर्व्वेषामेव वर्णानां नाधर्म्मे रमते मनः ।
योगक्षेमाः प्रवर्त्तन्ते प्रजानां नात्र संशयः । वैदिकानि च सर्व्वाणि भवन्त्यपि गुणान्युत ।
ऋतवश्च सुखाः सर्व्वे भवन्त्युत निरामयाः । प्रसीदन्ति नराणाञ्च स्वरवर्णमनांसि च ।
व्याधयो न भवन्त्यत्र नाल्पायुर्दृश्यते नरः । विधवा न भवन्त्यत्र कृपणो न तु जायते ।
अकृष्टपच्या पृथिवी भवन्त्योषधयस्तथा । त्वक्पत्रफलमूलानि वीर्य्यवन्ति भवन्ति च । २६८०
नाधर्म्मो विद्यते तत्र धर्म्म एव तु केवलं । इति कार्त्तयुगानेतान् धर्म्मान् विद्धि युधिष्ठिर ।
दण्डनीत्यां यदा राजा त्रीनंशाननुवर्त्तते । चतुर्थमंशमुत्सृज्य तदा त्रेता प्रवर्त्तते ।
अशुभस्य चतुर्थांशस्त्रीनंशाननुवर्त्तते । कृष्टपच्यैव पृथिवी भवन्त्योषधयस्तथा ।
अर्द्धं त्यक्त्वा यदा राजा नीत्यर्थमनुवर्त्तते । ततस्तु द्वापरं नाम स कालः सम्प्रवर्त्तते ।
अशुभस्य यदा त्वर्द्धं द्वावंशावनुवर्त्तते । कृष्टपच्यैव पृथिवी भवत्यर्द्धफला तदा । २६८५
दण्डनीतिं परित्यज्य यदा कार्त्स्न्येन भूमिपः । प्रजाः क्लिश्नात्ययोगेन प्रवर्त्तेत तदा कलिः ।
कलावधर्म्मो भूयिष्ठं धर्म्मो भवति न क्वचित् । सर्व्वेषामेव वर्णानां स्वधर्म्माच्च्यवते मनः ।
शूद्रा भैक्षेण जीवन्ति ब्राह्मणाः परिचर्य्यया । योगक्षेमस्य नाशश्च वर्त्तते वर्णसङ्करः ।
वैदिकानि च कर्म्माणि भवन्ति विगुणान्युत । ऋतवो न सुखाः सर्व्वे भवन्त्यामयिनस्तथा ।
ह्रसन्ति च मनुष्याणां स्वरवर्णमनांस्युत । व्याधयश्च भवन्त्यत्र म्रियन्ते च गतायुषः । २६९०
विधवाश्च भवन्त्यत्र नृशंसा जायते प्रजा । क्वचिद्वर्षति पर्ज्जन्यः क्वचित् शस्यं प्ररोहति ।
रसाः सर्व्वे क्षयं यान्ति यदा नेच्छति भूमिपः । प्रजाः संरक्षितुं सम्यग्दण्डनीतिसमाहितः ।
राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च । युगस्य च चतुर्थस्य राजा भवति कारणं ।
कृतस्य कारणाद्राजा स्वर्गमत्यन्तमश्नुते । त्रेतायाः कारणाद्राजा स्वर्गं नात्यन्तमश्नुते ।
प्रवर्त्तनाद्द्वापरस्य यथाभागमुपाश्नुते । कलेः प्रवर्त्तनाद्राजा पापमत्यन्तमश्नुते । २६९५
ततो वसति दुष्कर्म्मा नरके शाश्वतीः समाः । प्रजानां कल्मषे मग्नोऽकीर्त्तिं पापञ्च विन्दति ।
दण्डनीतिं पुरस्कृत्य विजानन् क्षत्रियः सदा । अनवाप्तञ्च लिप्सेत लब्धञ्च परिपालयेत् ।

लोकस्य सीमन्तकरी मर्य्यादा लोकभाविनी। सम्यङ्नीता दण्डनीतिर्यथा माता यथा पिता।
यस्यां भवन्ति भूतानि तद्विद्धि मनुजर्षभ। एष एव परो धर्म्मो यद्राजा दण्डनीतिमान्।
तस्मात् कौरव्य धर्म्मेण प्रजाः पालय नीतिमान्। एवं वृत्तः प्रजा रक्षन् स्वर्गं जेतासि दुर्ज्जयं। २०००

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि ऊनसप्ततोऽध्यायः॥ ६९॥

॥ युधिष्ठिर उवाच ॥ केन वृत्तेन वृत्तज्ञ वर्त्तमानो महीपतिः। सुखेनार्थान् सुखोदर्कानिह च प्रेत्य चाप्नुयात्।
॥ भीष्म उवाच ॥ अयं गुणानां षट्त्रिंशत्षट्त्रिंशद्गुणसंयुतः। यान् गुणांस्तु गुणोपेतः कुर्व्वन् गुणमवाप्नुयात्।
चरेद्धर्म्मानकटुको मुञ्चेत् स्नेहं न नास्तिकः। अनृशंसश्चरेदर्थं चरेत् काममनुद्धतः।
प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः। दाता नापात्रवर्षी स्यात् प्रगल्भः स्यादनिष्ठुरः।
सन्दधीत न चानार्य्यैर्विगृह्णीयान्न बन्धुभिः। नाभक्तं चारयेच्चारं कुर्य्यात्कार्य्यमपीडया। २००५
अर्थं ब्रूयान्न चासत्सु गुणान् ब्रूयान्न चात्मनः। आदद्यान्न च साधुभ्यो नासत्पुरुषमाश्रयेत्।
नापरीक्ष्य नयेद्दण्डं न च मन्त्रं प्रकाशयेत्। विसृजेन्न च लुब्धेभ्यो विश्वसेन्नापकारिषु।
अनीर्षुर्गुप्तदारः स्याच्चोक्षः स्यादघृणी नृपः। स्त्रियः सेवेत नात्यर्थं मृष्टं भुञ्जीत नाहितं।
अस्तब्धः पूजयेन्मान्यान् गुरून् सेवेदमायया। अर्च्चेद्देवानदम्भेन श्रियमिच्छेदकुत्सितां।
सेवेत प्रणयं हित्वा दक्षः स्यान्न त्वकालवित्। सान्त्वयेन्न च मोक्षाय अनुगृह्णन्न चाक्षिपेत्। २०१०
प्रहरेन्न त्वविज्ञाय हत्वा शत्रून्न शोचयेत्। क्रोधं कुर्य्यान्न चाकस्मान्मृदुः स्यान्नापकारिषु।
एवञ्चर स्वराज्यस्थो यदि श्रेय इहेच्छसि। अतोऽन्यथा नरपतिर्भयमार्च्छत्यनुत्तमं।
इति सर्व्वान् गुणानेतान् यथोक्तान् योऽनुवर्त्तते। अनुभूयेह भद्राणि प्रेत्य स्वर्गे महीयते।
॥ वैशम्पायन उवाच ॥ इदं वचः शान्तनवस्य शुश्रुवान् युधिष्ठिरः पाण्डवमुख्यसंवृतः। तदा ववन्दे च पितामहं नृपो यथोक्तमेतच्च चकार बुद्धिमान्।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि सप्ततितमोऽध्यायः॥ ७०॥

॥ युधिष्ठिर उवाच ॥ कथं राजा प्रजा रक्षन्नाधिबन्धेन युज्यते। धर्म्मे च नापराध्नोति तन्मे ब्रूहि पितामह। २०१५
॥ भीष्म उवाच ॥ समासेनैव ते राजन् धर्म्मान् वक्ष्यामि शाश्वतान्। विस्तरेणैव धर्म्माणां न जात्वन्तमवाप्नुयात्।
धर्म्मनिष्ठान् श्रुतवतो देवव्रतसमाहितान्। अर्च्चयित्वा यजेथास्त्वं गृहे गुणवतो द्विजान्।
प्रत्युत्थायोपसंगृह्य चरणावभिवाद्य च। अथ सर्व्वाणि कुर्व्वीथाः कार्य्याणि सपुरोहितः।
धर्म्मकार्य्याणि निर्व्वर्त्य मङ्गलानि प्रयुज्य च। ब्राह्मणान् वाचयेथास्त्वमर्थसिद्धिजयाशिषः।
आर्ज्जवेन च सम्पन्नो धृत्या बुद्ध्या च भारत। यथार्थं प्रतिगृह्णीयात् कामक्रोधौ च वर्ज्जयेत्। २०२०
कामक्रोधौ पुरस्कृत्य योऽर्थं राजाऽनुतिष्ठति। न स धर्म्मं न चाप्यर्थं प्रतिगृह्णाति बालिशः।
मास्म लुब्धांश्च मूर्खांश्च कामार्थेषु प्रयूयुजः। अलुब्धान् बुद्धिसम्पन्नान् सर्व्वकर्म्मसु योजयेत्।
मूर्खो ह्यधिकृतोऽर्थेषु कार्य्याणामविशारदः। प्रजाः क्लिश्नात्ययोगेन कामक्रोधसमन्वितः।
बलिषष्ठेन शुल्केन दण्डेनाथापराधिनां। शास्त्राणि तेन लिप्सेथा वेतनेन धनागमं।

दापयित्वा करं धर्म्म्यं राष्ट्रं नीत्या यथाविधि । तथैतं कल्पयेद्राजा योगक्षेममतन्द्रितः । २६२५
गोपायितारं दातारं धर्म्मनित्यमतन्द्रितं । अकामद्वेषसंयुक्तमनुरज्यन्ति मानवाः ।
मास्माधर्म्मेण लोभेन लिप्सेथास्त्वं धनागमं । धर्म्मार्थावध्रुवौ तस्य यो न शास्त्रपरो भवेत् ।
अर्थशास्त्रपरो राजा धर्म्मार्थौ नाधिगच्छति । अस्थाने चास्य तद्वित्तं सर्व्वमेव विनश्यति ।
अर्थमूलोऽपि हिंसाञ्च कुरुते स्वयमात्मनः । करैरशास्त्रदृष्टैर्हि मोहात् सम्पीडयेत् प्रजाः ।
ऊधश्छिन्द्यात्तु यो धेन्वाः क्षीरार्थी न लभेत् पयः । एवं राष्ट्रमयोगेन पीडितं न विवर्द्धते । २६३०
यो हि दोग्ध्रीमुपास्ते च स नित्यं विन्दते पयः । एवं राष्ट्रमुपायेन भुञ्जानो लभते फलं ।
अथ राष्ट्रमुपायेन भुज्यमानं सुरक्षितं । जनयत्यतुलां नित्यं कोषवृद्धिं युधिष्ठिर ।
दोग्ध्री धान्यं हिरण्यञ्च मही राज्ञा सुरक्षिता । नित्यं स्वेभ्यः परेभ्यश्च तृप्ता माता यथा पयः ।
मालाकारोपमो राजन् भव माङ्गारिकोपमः । तथा युक्तश्चिरं राज्यं भोक्तुं शक्ष्यसि पालयन् ।
परचक्राभियानेन यदि ते स्याद्धनक्षयः । अथ साम्नैव लिप्सेथा धनमब्राह्मणेषु यत् । २६३५
मास्म ते ब्राह्मणं दृष्ट्वा धनस्थं प्रचलेन्मनः । अन्त्यायामप्यवस्थायां किमु स्फीतस्य भारत ।
धनानि तेभ्यो दद्यास्त्वं यथाशक्ति यथार्हतः । सान्त्वयन् परिरक्षंश्च स्वर्गमाप्स्यसि दुर्ज्जयं ।
एवं धर्म्मेण वृत्तेन प्रजास्त्वं परिपालय । स्वन्तं पुण्यं यशो नित्यं प्राप्स्यसे कुरुनन्दन ।
धर्म्मेण व्यवहारेण प्रजाः पालय पाण्डव । युधिष्ठिर यथा युक्तो नाधिबन्धेन योक्ष्यसे ।
एष एव परो धर्म्मो यद्राजा रक्षति प्रजाः । भूतानां हि यथा धर्म्मे रक्षणञ्च परा दया । २६४०
तस्मादेवं परं धर्म्मं मन्यन्ते धर्म्मकोविदाः । यो राजा रक्षणे युक्तो भूतेषु कुरुते दयां ।
यदह्ना कुरुते पापमरक्षन् भयतः प्रजाः । राजा वर्षसहस्रेण तस्यान्तमधिगच्छति ।
यदह्ना कुरुते धर्म्मं प्रजा धर्म्मेण पालयन् । दशवर्षसहस्राणि तस्य भुङ्क्ते फलं दिवि ।
स्विष्टिः स्वधीतिः सुतपा लोकान् जयति यावतः । क्षणेन तानवाप्नोति प्रजा धर्म्मेण पालयन् ।
एवं धर्म्मं प्रयत्नेन कौन्तेय परिपालय । ततः पुण्यफलं लब्ध्वा नाधिबन्धेन योक्ष्यसे । २६४५
स्वर्गलोकेषु महतीं श्रियं प्राप्स्यसि पाण्डव । असम्भवश्च धर्म्माणामीदृशानामराजसु ।
तस्माद्राजैव नान्योऽस्ति यो धर्म्मफलमाप्नुयात् । स राज्यं धृतिमान् प्राप्य धर्म्मेण परिपालय ।
इन्द्रं तर्पय सोमेन कामैश्च सुहृदो जनान् ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि एकसप्ततोऽध्यायः ॥ ७१ ॥

॥ भीष्म उवाच ॥ य एव तु सतो रक्षेदसतश्च निवर्त्तयेत् । स एव राज्ञा कर्त्तव्यो राजन् राजपुरोहितः ।
अत्राप्युदाहरन्तीममितिहासं पुरातनं । पुरूरवस ऐलस्य संवादं मातरिश्वनः । २६५०
॥ पुरूरवा उवाच ॥ कुतः स्विद्ब्राह्मणो जातो वर्णाश्चापि कुतस्त्रयः । कस्माच्च भवति श्रेष्ठस्तन्मे व्याख्यातुमर्हसि ।
॥ मातरिश्वोवाच ॥ ब्रह्मणो मुखतः सृष्टो ब्राह्मणो राजसत्तम । बाहुभ्यां क्षत्रियः सृष्ट ऊरुभ्यां वैश्य एव च ।
वर्णानां परिचर्य्यार्थं त्रयाणां भरतर्षभ । वर्णश्चतुर्थः सम्भूतः पद्भ्यां शूद्रो विनिर्म्मितः ।

ब्राह्मणो जायमानो हि पृथिव्यामनुजायते। ईश्वरः सर्व्वभूतानां धर्म्मकोषस्य गुप्तये।
अतः पृथिव्या यन्तारं क्षत्रियं दण्डधारणे। द्वितीयं दण्डमकरोत् प्रजानामनुवृत्तये। २७५५
वैश्यस्तु धनधान्येन त्रीन् वर्णान् बिभृयादिमान्। शूद्रो ह्येतान् परिचरेदिति ब्रह्मानुशासनं।
॥ ऐल उवाच ॥ द्विजस्य क्षत्रबन्धोर्व्वा कस्येयं पृथिवी भवेत्। धर्म्मतः सह वित्तेन सम्यग्वायो प्रचक्ष्व मे।
॥ वायुरुवाच ॥ विप्रस्य सर्व्वमेवैतत् यत् किञ्चिज्जगतीगतं। ज्येष्ठेनाभिजनेनेह तद्धर्म्मकुशला विदुः।
स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च। गुरुर्हि सर्व्ववर्णानां ज्येष्ठः श्रेष्ठश्च वै द्विजः।
पत्यभावे यथैव स्त्री देवरं कुरुते पतिं। एष ते प्रथमः कल्प आपद्यन्यो भवेदतः। २७६०
यदि स्वर्गं परं स्थानं स्वधर्म्मं परिमार्गसि। यत्किञ्चिद्विजयेर्भूमिं ब्राह्मणाय निवेदय।
श्रुतवृत्तोपपन्नाय धर्म्मज्ञाय तपस्विने। स्वधर्म्मपरितृप्ताय यो न वित्तपरो भवेत्।
यो राजानं नयेद्बुद्ध्या सर्व्वतः परिपूर्णया। ब्राह्मणो हि कुले जातः कृतप्रज्ञो विनीतवान्।
श्रेयो नयति राजानं ब्रुवंश्चित्रां सरस्वतीं। राजा चरति यं धर्म्मं ब्राह्मणेन निदर्शितं।
शुश्रूषुरनहंवादी क्षत्रधर्म्मव्रते स्थितः। तावता सत्कृतः प्राज्ञश्चिरं यशसि तिष्ठति। २७६५
तस्य धर्म्मस्य सर्व्वस्य भागी राजपुरोहितः। एवमेव प्रजाः सर्व्वा राजानमभिसंश्रिताः।
सम्यग्वृत्ताः स्वधर्म्मस्था न कुतश्चिद्भयान्विताः। राष्ट्रे चरन्ति यं धर्म्मं राज्ञा साध्वभिरक्षिताः।
चतुर्थं तस्य धर्म्मस्य राजा भागन्तु विन्दति। देवा मनुष्याः पितरो गन्धर्व्वोरगराक्षसाः।
यज्ञमेवोपजीवन्ति नास्ति चेष्टमराजके। इतो दत्तेन जीवन्ति देवताः पितरस्तथा।
राजन्येवास्य धर्म्मस्य योगः क्षेमः प्रतिष्ठितः। छायायामप्सु वायौ च सुखमुष्णेऽधिगच्छति। २७७०
अग्नौ वाससि सूर्य्ये च सुखं शीतेऽधिगच्छति। शब्दे स्पर्शे रसे रूपे गन्धे च रमते मनः।
तेषु भोगेषु सर्व्वेषु न भीतो लभते सुखं। अभयस्य हि यो दाता तस्यैव सुमहत् फलं।
न हि प्राणसमं दानं त्रिषु लोकेषु विद्यते। इन्द्रो राजा यमो राजा धर्म्मो राजा तथैव च।
राजा बिभर्त्ति रूपाणि राज्ञा सर्व्वमिदं धृतं।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि द्वासप्ततोऽध्यायः ॥ ७२ ॥
॥ भीष्म उवाच ॥ राज्ञा पुरोहितः कार्य्यो भवेद्विद्वान् बहुश्रुतः। उभौ समीक्ष्य धर्म्मार्थावप्रमेयावनन्तरं। २७७५
धर्म्मात्मा मन्त्रविद्येषां राज्ञां राजन् पुरोहितः। राजा चैवंगुणो येषां कुशलं तेषु सर्व्वतः।
उभौ प्रजा वर्द्धयतो देवान् सर्व्वान् सुतान् पितॄन्। भवेयातां स्थितौ धर्म्मे श्रद्धेयौ सुतपस्विनौ।
परस्परस्य सुहृदौ विहितौ समचेतसौ। ब्रह्मक्षत्रस्य सम्मानात् प्रजा सुखमवाप्नुयात्।
विमाननात्तयोरेव प्रजा नश्येयुरेव हि। ब्रह्म क्षत्रञ्च सर्व्वेषां वर्णानां मूलमुच्यते।
अत्राप्युदाहरन्तीममितिहासं पुरातनं। ऐलकश्यपसंवादं तन्निबोध युधिष्ठिर। २७८०
॥ ऐल उवाच ॥ यदा हि ब्रह्म प्रजहाति क्षत्रं क्षत्रं यदा वा प्रजहाति ब्रह्म। अन्वग्बलं कतमेऽस्मिन् भजन्ते तथा वर्णाः कतमेऽस्मिन् ध्रियन्ते।

॥ कश्यप उवाच ॥ विद्रुतं राष्ट्रं क्षत्रियस्य भवति ब्रह्म क्षत्रं यत्र विरुध्यतीह । अन्वग्बलं दस्यवस्तद्भजन्ते तथा वर्णं तत्र भ्रियन्ति सन्तः ।

नैषां ब्रह्म च वर्द्धते नोत पुत्रा न गर्गरो मथ्यते नो यजन्ते । नैषां पुत्रा वेदमधीते च यदा ब्रह्म क्षत्रियाः सन्त्यजन्ति ।

नैषामर्थो वर्द्धते जातु गेहे नाधीयते सुप्रजा नो यजन्ते । अपध्वस्ता दस्युभूता भवन्ति ये ब्राह्मणान् क्षत्रियाः सन्त्यजन्ति ।

एतौ हि नित्यं संयुक्तावितरेतरधारणे । क्षत्रं वै ब्रह्मणो योनिर्योनिः क्षत्रस्य वै द्विजाः । २७८५

उभावेतौ नित्यमभिप्रपन्नौ सम्प्रापतुर्महतीं सम्प्रतिष्ठां । तयोः सन्धिर्भिद्यते चेत् पुराणस्ततः सर्व्वं भवति सम्प्रमूढं ।

नात्र पारं लभते पारगामी महागाधे नौरिव सम्प्रणुन्ना । चातुर्व्वर्ण्यं भवति हि सम्प्रमूढं प्रजास्ततः क्षयसंस्था भवन्ति ।

ब्रह्मवृक्षो रक्ष्यमाणो मधु हेम च वर्षति । अरक्ष्यमाणः सततमश्रु पापञ्च वर्षति ।

न ब्रह्मचारी चरणादपेतो यदा ब्रह्म ब्रह्मणि त्राणमिच्छेत् । आश्चर्य्यतो वर्षति तत्र देवस्तत्राभीक्ष्णं दुःसहाश्चाविशन्ति ।

स्त्रियं हत्वा ब्राह्मणञ्चापि पापः सभायां यत्र लभतेऽनुवादं । राज्ञः सकाशेन बिभेति चापि ततो भयं विद्यते क्षत्रियस्य । २७९०

पापैः पापे क्रियमाणे हि चैल ततो रुद्रो जायते देव एषः । पापैः पापाः सञ्जनयन्ति रुद्रं ततः सर्व्वान् साध्वसाधून् हिनस्ति ।

॥ ऐल उवाच ॥ कुतो रुद्रः कीदृशो वाऽपि रुद्रः सत्त्वैः सत्त्वं दृश्यते वध्यमानं । एतत् सर्व्वं कश्यप मे प्रचक्ष्व कुतो रुद्रो जायते देव एषः ।

॥ कश्यप उवाच ॥ आत्मा रुद्रो हृदये मानवानां स्वं स्वं देहं परदेहञ्च हन्ति । वातोत्पातैः सदृशं रुद्रमाहुर्दैवैर्जीमूतैः सदृशं रूपमस्य ।

॥ ऐल उवाच ॥ न वै वातः परिवृणोति कश्चिन्न जीमूतो वर्षति नापि देवः । तथा युक्तो दृश्यते मानुषेषु कामद्वेषात् बध्यते मुच्यते च ।

॥ कश्यप उवाच ॥ यथैकगेहे जातवेदाः प्रदीप्तः कृत्स्नं ग्रामं दहते चत्वरं वा । विमोहनं कुरुते देव एष ततः सर्व्वं स्पृश्यते पुण्यपापैः । २७९५

॥ ऐल उवाच ॥ यदि दण्डः स्पृशते पुण्यपापं पापैः पापे क्रियमाणे विशेषात् । कस्य हेतोः सुकृतं नाम कुर्य्याद्दुष्कृतं वा कस्य हेतोर्न कुर्य्यात् ।

॥ कश्यप उवाच ॥ असंयोगात् पापकृतामपापांस्तुल्यो दण्डः स्पृशते मिश्रभावात् । शुष्केणार्द्रं दह्यते मिश्रभावात् न मिश्रः स्यात् पापकृद्भिः कथञ्चित् ।

॥ ऐल उवाच ॥ साध्वसाधून् धारयतीह भूमिः साध्वसाधूंस्तापयतीव सूर्य्यः । साध्वसाधूंश्चापि वातीह वायुरापस्तथा साध्वसाधून् पुनन्ति ।

॥ कश्यप उवाच ॥ एवमस्मिन् वर्त्तते लोक एष नामुत्रैवं वर्त्तते राजपुत्र । प्रेत्यैतयोरन्तरवान् विशेषो यो वै पुण्यं चरते यश्च पापं ।

पुण्यस्य लोको मधुमान् घृतार्चिर्हिरण्यज्योतिरमृतस्य नाभिः । तत्र प्रेत्य मोदते ब्रह्मचारी न तत्र मृत्युर्न जरा नोत दुःखं । २८००

पापस्य लोको निरयो दुष्प्रकाशो नित्यं दुःखं शोकभूयिष्ठमेव । तत्रात्मानं शोचति पापकर्म्मा बह्वीः समाः प्रतपन्नप्रतिष्ठः ।

मिथो भेदाद्ब्राह्मणक्षत्रियाणां प्रजा दुःखं दुःसहञ्चाविशन्ति । एवं ज्ञात्वा कार्य्य एवेह नित्यं पुरोहितो नैकविद्यो नृपेण ।

तञ्चैवान्वभिषिञ्चेत तथा धर्म्मो विधीयते । अग्र्यं हि ब्राह्मणः प्रोक्तः सर्व्वस्यैवेह धर्म्मतः ।
पूर्व्वं हि ब्राह्मणः सृष्टिरिति ब्रह्मविदो विदुः । ज्येष्ठेनाभिजनेनास्य प्राप्तं पूर्व्वं यदुत्तरं ।
तस्मान्मान्यश्च पूज्यश्च ब्राह्मणः प्रसृताग्रभुक् । सर्व्वं श्रेष्ठं विशिष्टञ्च निवेद्यं तस्य धर्म्मतः ।     २८०५
अवश्यमेव कर्त्तव्यं राज्ञा बलवताऽपि हि । ब्रह्म वर्द्धयति क्षत्रं क्षत्रतो ब्रह्म वर्द्धते ।
एवं राज्ञो विशेषेण पूज्या वै ब्राह्मणाः सदा ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि त्रिसप्ततोऽध्यायः ॥ ७३ ॥

॥ भीष्म उवाच ॥ योगक्षेमो हि राष्ट्रस्य राजन्यायत्त उच्यते । योगक्षेमो हि राज्ञो हि समायत्तः पुरोहिते ।
यत्रादृष्टं भयं ब्रह्म प्रजानां शमयत्युत । दृष्टञ्च राजा बाहुभ्यां तद्राष्ट्रं सुखमेधते ।
अत्राप्युदाहरन्तीममितिहासं पुरातनं । मुचुकुन्दस्य संवादं राज्ञो वैश्रवणस्य च ।     २८१०
मुचुकुन्दो विजित्येमां पृथिवीं पृथिवीपतिः । जिज्ञासमानः स्वबलमुपेयादलकाधिपं ।
ततो वैश्रवणो राजा राक्षसानसृजत्तदा । ते बलान्यवमृद्नन्त मुचुकुन्दस्य नैर्ऋताः ।
स हन्यमाने सैन्ये स्वे मुचुकुन्दो नराधिपः । गर्हयामास विद्वांसं पुरोहितमरिन्दम ।
तत उग्रं तपस्तप्त्वा वशिष्ठो धर्म्मवित्तमः । रक्षांस्युपावधीत्तत्र पन्थानञ्चाप्यविन्दत ।
ततो वैश्रवणो राजा मुचुकुन्दमदर्शयत् । वध्यमानेषु सैन्येषु वचनञ्चेदमब्रवीत् ।     २८१५
॥ धनद उवाच ॥ बलवन्तस्त्वया पूर्व्वं राजानः सपुरोहिताः । न चैवं समवर्त्तन्त यथा त्वमिह वर्त्तसे ।
ते खल्वपि कृतास्त्राश्च बलवन्तश्च भूमिपाः । आगम्य पर्य्युपासन्ते मामीशं सुखदुःखयोः ।
यद्यस्ति बाहुवीर्य्यं ते तद्दर्शयितुमर्हसि । किं ब्राह्मणबलेन त्वमतिमात्रं प्रवर्त्तसे ।
मुचुकुन्दस्ततः क्रुद्धः प्रत्युवाच धनेश्वरं । न्यायपूर्व्वमसंरब्धमसंभ्रान्तमिदं वचः ।
ब्रह्म क्षत्रमिदं सृष्टमेकयोनि स्वयम्भुवा । पृथग्बलविधानन्तन्न लोकं परिपालयेत् ।     २८२०
तपोमन्त्रबलं नित्यं ब्राह्मणेषु प्रतिष्ठितं । अस्त्रबाहुबलं नित्यं क्षत्रियेषु प्रतिष्ठितं ।
ताभ्यां सम्भूय कर्त्तव्यं प्रजानां परिपालनं । तथा च मां प्रवर्त्तन्तं किं गर्हस्यलकाधिप ।
ततोऽब्रवीद्वैश्रवणो राजानं सपुरोहितं । नाहं राज्यमनिर्द्दिष्टं कस्मैचिद्विदधाम्युत ।
नाच्छिन्दे चाप्यनिर्द्दिष्टमिति जानीहि पार्थिव । प्रशाधि पृथिवीं कृत्स्नां समन्तादखिलामिमां ।
एवमुक्तः प्रत्युवाच मुचुकुन्दो महीपतिः ।     २८२५

॥ मुचुकुन्द उवाच ॥ नाहं राज्यं भवद्दत्तं भोक्तुमिच्छामि पार्थिव । बाहुवीर्य्यार्ज्जितं राज्यमश्नीयामिति कामये ।

॥ भीष्म उवाच ॥ ततो वैश्रवणो राजा विस्मयं परमं ययौ । क्षत्रधर्म्मे स्थितं दृष्ट्वा मुचुकुन्दमसम्भ्रमं ।

ततो राजा मुचुकुन्दः सोऽन्वशासद्धनेश्वरं । बाहुवीर्य्यार्जितं सम्यक् क्षत्रधर्म्ममनुव्रतः ।

एवं यो धर्म्मविद्राजा ब्रह्मपूर्व्वं प्रवर्त्तते । जयत्यविजितामुर्व्वीं यशश्च महदश्नुते ।

नित्योदकी ब्राह्मणः स्यान्नित्यशस्त्रश्च क्षत्रियः । तयोर्हि सर्व्वमायत्तं यत् किञ्चिज्जगतीगतं । २८३०

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि मुचुकुन्दोपाख्याने चतुःसप्ततोऽध्यायः ॥ ७४ ॥

॥ युधिष्ठिर उवाच ॥ यया वृत्त्या महीपालो विवर्द्धयति मानवान् । पुण्यांश्च लोकान् जयति तन्मे ब्रूहि पितामह ।

॥ भीष्म उवाच ॥ दानशीलो भवेद्राजा यज्ञशीलश्च भारत । उपवासतपःशीलः प्रजानां पालने रतः ।

सर्व्वाश्चैव प्रजा नित्यं राजा धर्म्मेण पालयन् । उत्थानेन प्रदानेन पूजयेच्चापि धार्म्मिकान् ।

राज्ञा हि पूजितो धर्म्मस्ततः सर्व्वत्र पूज्यते । यद्यदाचरते राजा तत्प्रजानां स्म रोचते ।

नित्यमुद्यतदण्डश्च भवेन्मृत्युरिवारिषु । निहन्यात् सर्व्वतो दस्यून्न कामात् कस्यचित् क्षमेत् । २८३५

यं हि धर्म्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः । चतुर्थं तस्य धर्म्मस्य राजा भारत विन्दति ।

यदधीते यद्ददाति यज्जुहोति यदर्च्चति । राजा चतुर्थभाक् तस्य प्रजा धर्म्मेण पालयन् ।

यद्राष्ट्रेऽकुशलं किञ्चिद्राज्ञोऽरक्षयतः प्रजाः । चतुर्थं तस्य पापस्य राजा भारत विन्दति ।

अप्याहुः सर्व्वमेवेति भूयोऽर्द्धमिति निश्चयाः । कर्म्मणः पृथिवीपाल नृशंसोऽनृतवागपि ।

तादृशात् किल्विषाद्राजा शृणु येन प्रमुच्यते । प्रत्याहर्त्तुमशक्यं स्याद्धनं चौरैर्हृतं यदि । २८४०

तत् स्वकोषात् प्रदेयं स्यादशक्तेनोपजीवता । सर्व्ववर्णैः सदा रक्ष्यं ब्रह्मस्वं ब्राह्मणा यथा ।

न स्थेयं विषये तेन योऽपकुर्य्याद्द्विजातिषु । ब्रह्मस्वे रक्ष्यमाणे तु सर्व्वं भवति रक्षितं ।

तस्मात्तेषां प्रसादेन कृतकृत्यो भवेन्नृपः । पर्ज्जन्यमिव भूतानि महाद्रुममिव द्विजाः ।

नरास्तमुपजीवन्ति नृपं सर्व्वार्थसाधकं । न हि कामात्मना राज्ञा सततं कामबुद्धिना ।

नृशंसेनातिलुब्धेन शक्यं पालयितुं प्रजाः । २८४५

॥ युधिष्ठिर उवाच ॥ नाहं राज्यसुखान्वेषी राज्यमिच्छाम्यपि क्षणं । धर्म्मार्थं रोचये राज्यं धर्म्मश्चात्र न विद्यते ।

वनमेव गमिष्यामि तस्माद्धर्म्मचिकीर्षया । तत्र मेध्येष्वरण्येषु न्यस्तदण्डो जितेन्द्रियः ।

धर्म्ममाराधयिष्यामि मुनिर्मूलफलाशनः ।

॥ भीष्म उवाच ॥ वेदाहं तव या बुद्धिरानृशंस्यागुणैव सा । न च शुद्धानृशंस्येन शक्यं राज्यमुपासितुं ।

अपि तु त्वां मृदुप्रज्ञमत्यार्य्यमतिधार्म्मिकं । क्लीवं धर्म्मघृणायुक्तं न लोको बहु मन्यते । २८५०

वृत्तिन्तु त्वमपेक्षस्व पितृपैतामहोचितां । नैव राज्ञां तथा वृत्तं यथा त्वं स्थातुमिच्छसि ।

न हि वैक्लव्यसंसृष्टमानृशंस्यमिहास्थितः । प्रजापालनसंभूतमाप्ता धर्म्मफलं ह्यसि ।

न ह्येतामाशिषं पाण्डुर्न च कुन्ती त्वयाचत । तथैतत् प्रज्ञया तात यथा चरसि मेधया ।

शौर्य्यं बलञ्च सत्यञ्च पिता तव सदाऽब्रवीत् । माहात्म्यञ्च महौदार्य्यं भवतः कुन्त्ययाचत ।

नित्यं स्वाहा स्वधा नित्यं चोभे मानुषदैवते । पुत्रेष्वाशासते नित्यं पितरो दैवतानि च । २८५५

दानमध्ययनं यज्ञं प्रजानां परिपालनं । धर्म्ममेतदधर्म्मं वा जन्मनैवाभ्यजायथाः ।

काले धुरि च युक्तानां वहतां भारमाहितं । सीदतामपि कौन्तेय नाकीर्त्तिरवसीदति ।
समन्ततो विनियतो वहत्यस्खलितो हयः । निर्द्दोषः कर्म्मवचनात् सिद्धिः कर्म्मण एव सा ।
नैकान्तविनिपातेन विचचारेह कश्चन । धर्म्मी गृही वा राजा वा ब्रह्मचारी यथा पुनः ।
अल्पं हि सारभूयिष्ठं यत् कर्म्मोदारमेव तत् । कृतमेवाकृताच्छ्रेयो न पापीयोऽस्त्यकर्म्मणः । २८६०
यदा कुलीनो धर्म्मज्ञः प्राप्नोत्यैश्वर्य्यमुत्तमं । योगक्षेमस्तदा राज्ञः कुशलायैव कल्पते ।
दानेनान्यं बलेनान्यमन्यं सूनृतया गिरा । सर्व्वतः प्रतिगृह्णीयाद्राज्यं प्राप्येह धार्म्मिकः ।
यं हि वैद्याः कुले जाता ह्यवृत्तिभयपीडिताः । प्राप्य तृप्ताः प्रतिष्ठन्ति धर्म्मः कोऽभ्यधिकस्ततः ।
॥ युधिष्ठिर उवाच ॥ किं तात परमं स्वर्ग्यं का ततः प्रीतिरुत्तमा । किं ततः परमैश्वर्य्यं ब्रूहि मे यदि पश्यसि ।
॥ भीष्म उवाच ॥ यस्मिन् भयार्द्दिताः सम्यक् क्षेमं विन्दन्त्यपि क्षणं । स स्वर्गजित्तमोऽस्माकं सत्यमेतद्ब्रवीमि ते । २८६५
त्वमेव प्रीतिमांस्तस्मात् कुरूणां कुरुसत्तम । भव राजा जय स्वर्गं सतो रक्षाऽसतो जहि ।
अनु त्वां तात जीवन्तु सुहृदः साधुभिः सह । पर्ज्जन्यमिव भूतानि स्वादुद्रुममिव द्विजाः ।
धृष्टं शूरं प्रहर्त्तारमनृशंसं जितेन्द्रियं । वत्सलं संविभक्तारमुपजीवन्ति तं नराः ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि पञ्चसप्ततोऽध्यायः ॥ ७५ ॥
॥ युधिष्ठिर उवाच ॥ स्वकर्म्मण्यपरे युक्तास्तथैवान्ये विकर्म्मणि । तेषां विशेषमाचक्ष्व ब्राह्मणानां पितामह ।
॥ भीष्म उवाच ॥ विद्यालक्षणसम्पन्नाः सर्व्वत्र समदर्शिनः । एते ब्रह्मसमा राजन् ब्राह्मणाः परिकीर्त्तिताः । २८७०
ऋग्यजुःसामसम्पन्नाः स्वेषु कर्म्मस्ववस्थिताः । एते देवसमा राजन् ब्राह्मणानां भवन्त्युत ।
जन्मकर्म्मविहीना ये कदर्य्या ब्रह्मबन्धवः । एते शूद्रसमा राजन् ब्राह्मणानां भवन्त्युत ।
अश्रोत्रियाः सर्व्व एव सर्व्वे चानाहिताग्नयः । तान् सर्व्वान् धार्म्मिको राजा बलिं विष्टिञ्च कारयेत् ।
आह्वायका देवलका नक्षत्रग्रामयाजकाः । एते ब्राह्मणचाण्डाला महापथिकपञ्चमाः ।
ऋत्विक् पुरोहितो मन्त्री दूतो वार्त्तानुकर्षकः । एते क्षत्रसमा राजन् ब्राह्मणानां भवन्त्युत । २८७५
अश्वारोहा गजारोहा रथिनोऽथ पदातयः । एते वैश्यसमा राजन् ब्राह्मणानां भवन्त्युत ।
एतेभ्यो बलिमादद्याद्धीनकोषो महीपतिः । ऋते ब्रह्मसमेभ्यश्च देवकल्पेभ्य एव च ।
अब्राह्मणानां वित्तस्य स्वामी राजेति वैदिकं । ब्राह्मणानाञ्च ये केचिद्विकर्म्मस्था भवन्त्युत ।
विकर्म्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथञ्चन । नियम्याः संविभाज्याश्च धर्म्मानुग्रहकारणात् ।
यस्य स्म विषये राजन् स्तेनो भवति वै द्विजः । राज्ञः स्वापराधन्तं मन्यन्ते तद्विदो जनाः । २८८०
अवृत्त्या यो भवेत् स्तेनो वेदवित् स्नातकस्तथा । राजन् स राज्ञा भर्त्तव्य इति वेदविदो विदुः ।
स चेन्नोपनिवर्त्तेत कृतवृत्तिः परन्तप । ततो निर्व्वासनीयः स्यात् तस्माद्देशात् सबान्धवः ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि षट्सप्ततोऽध्यायः ॥ ७६ ॥
॥ युधिष्ठिर उवाच ॥ केषां प्रभवते राजा वित्तस्य भरतर्षभ । कया च वृत्त्या वर्त्तेत तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ अब्राह्मणानां वित्तस्य स्वामी राजेति वैदिकं । ब्राह्मणानाञ्च ये केचिद्विकर्म्मस्था भवन्त्युत ।

विकर्म्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथञ्चन । इति राज्ञां पुरावृत्तमपि जल्पन्ति साधवः । २८८५

यस्य स्म विषये राज्ञः स्तेनो भवति वै द्विजः । राज्ञ एवापराधन्तं मन्यन्ते किल्विषं नृप ।

अभिशस्तमिवात्मानं मन्यन्ते तेन कर्म्मणा । तस्माद्राजर्षयः सर्व्वे ब्राह्मणानन्वपालयन् ।

अत्राप्युदाहरन्तीममितिहासं पुरातनं । गीतं कैकेयराजेन ह्रियमाणेन रक्षसा ।

केकयानामधिपतिं रक्षो जग्राह दारुणं । स्वाध्यायेनान्वितं राजन्नरण्ये संशितव्रतं ।

॥ राजोवाच ॥ न मे स्तेनो जनपदे न कदर्य्यो न मद्यपः । नानाहिताग्निर्नायज्वा मामकान्तरमाविशः । २८९०

न च मे ब्राह्मणोऽविद्वान् नाव्रती नाप्यसोमपः । नानाहिताग्निर्नायज्वा मामकान्तरमाविशः ।

नानाप्तदक्षिणैर्यज्ञैर्यजन्ते विषये मम । नाधीते नाव्रती कश्चिन्मामकान्तरमाविशः ।

अध्यापयन्त्यधीयन्ते यजन्ते याजयन्ति च । ददति प्रतिगृह्णन्ति षट्सु कर्म्मस्ववस्थिताः ।

पूजिताः संविभक्ताश्च मृदवः सत्यवादिनः । ब्राह्मणा मे स्वकर्म्मस्था मामकान्तरमाविशः ।

न याचन्ति प्रयच्छन्ति सत्यधर्म्मविशारदाः । नाध्यापयन्त्यधीयन्ते यजन्ते याजयन्ति न । २८९५

ब्राह्मणान् परिरक्षन्ति संग्रामेष्वपलायिनः । क्षत्रिया मे स्वकर्म्मस्था मामकान्तरमाविशः ।

कृषिगोरक्ष्यवाणिज्यमुपजीवन्त्यमायया । अप्रमत्ताः क्रियावन्तः सुव्रताः सत्यवादिनः ।

संविभागं दमं शौचं सौहृदञ्च व्यपाश्रिताः । मम वैश्याः स्वकर्म्मस्था मामकान्तरमाविशः ।

त्रीन् वर्णानुपजीवन्ति यथावदनसूयकाः । मम शूद्राः स्वकर्म्मस्था मामकान्तरमाविशः ।

कृपणानाथवृद्धानां दुर्ब्बलातुरयोषितां । संविभक्ताऽस्मि सर्व्वेषां मामकान्तरमाविशः । २९००

कुलदेशादिधर्म्माणां प्रथितानां यथाविधि । अव्युच्छेत्ताऽस्मि सर्व्वेषां मामकान्तरमाविशः ।

तपस्विनो मे विषये पूजिताः परिपालिताः । संविभक्ताश्च सत्कृत्य मामकान्तरमाविशः ।

नासंविभज्य भोक्ताऽस्मि नाविशामि परस्त्रियं । स्वतन्त्रो जातु न क्रीडे मामकान्तरमाविशः ।

नाब्रह्मचारी भिक्षावान् भिक्षुर्वाऽब्रह्मचर्य्यवान् । अनृत्विजा हुतं नास्ति मामकान्तरमाविशः ।

नावजानाम्यहं वैद्यान् न वृद्धान्न तपस्विनः । राष्ट्रे स्वपति जागर्म्मि मामकान्तरमाविशः । २९०५

आत्मविज्ञानसम्पन्नस्तपस्वी सर्व्वधर्म्मवित् । स्वामी सर्व्वस्य राज्यस्य धीमान्मम पुरोहितः ।

दानेन विद्यामभिवाञ्छयामि लोकान् सत्येनाथो ब्राह्मणानाञ्च गुप्त्या । शुश्रूषया चापि गुरूनुपैमि न मे भयं विद्यते राक्षसेभ्यः ।

न मे राष्ट्रे विधवा ब्रह्मबन्धुर्न ब्राह्मणः कितवो नोत चौरः । अयाज्ययाजी न च पापकर्म्मा न मे भयं विद्यते राक्षसेभ्यः ।

न मे शस्त्रैरनिर्भिन्नं गात्रे द्व्यङ्गुलमन्तरं । धर्म्मार्थं युध्यमानस्य मामकान्तरमाविशः ।

गोब्राह्मणेभ्यो यज्ञेभ्यो नित्यं स्वस्त्ययनं मम । आशासते जना राष्ट्रे मामकान्तरमाविशः । २९१०

॥ राक्षस उवाच ॥ यस्मात् सर्व्वास्ववस्थासु धर्म्ममेवान्ववेक्षसे । तस्मात् प्राप्नुहि कैकेय गृहं स्वस्ति व्रजाम्यहं ।

येषां गोब्राह्मणं रक्ष्यं प्रजा रक्ष्याश्च कैकय । न रक्षोभ्यो भयं तेषां कुत एव तु पापकात् ।

येषां पुरोगमा विप्रा येषां ब्रह्म परं बलं । अतिथिप्रियास्तथा पौरास्ते वै स्वर्गजितो नृपाः ।

॥ भीष्म उवाच ॥ तस्माद्द्विजातीन् रक्षेत ते हि रक्षन्ति रक्षिताः। आशीरेषां भवेद्राजन् राज्ञां सम्यक्प्रवर्त्ततां।
तस्माद्राज्ञा विशेषेण विकर्म्मस्था द्विजातयः। नियम्याः संविभज्याश्च तदनुग्रहकारणात्। २९१५
एवं यो वर्त्तते राजा पौरजानपदेष्विह। अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकतां।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि कैकेयोपाख्याने सप्तसप्ततोऽध्यायः ॥ ७७ ॥
॥ युधिष्ठिर उवाच ॥ व्याख्याता राजधर्म्मेण वृत्तिरापत्सु भारत। कथञ्चिद्वैश्यधर्म्मेण सञ्जीवेद्ब्राह्मणो न वा।
॥ भीष्म उवाच ॥ अशक्तः क्षत्रधर्म्मेण वैश्यधर्म्मेण वर्त्तयेत्। कृषिगोरक्ष्यमास्थाय व्यसने वृत्तिसङ्क्षये।
॥ युधिष्ठिर उवाच ॥ कानि पण्यानि विक्रीय स्वर्गलोकान्न हीयते। ब्राह्मणो वैश्यधर्म्मेण वर्त्तयन् भरतर्षभ।
॥ भीष्म उवाच ॥ सुरालवणमित्येव तिलान् केशरिणः पशून्। ऋषभान् मधु मांसञ्च कृतान्नञ्च युधिष्ठिर। २९२०
सर्व्वास्ववस्थास्वेतानि ब्राह्मणः परिवर्ज्जयेत्। एतेषां विक्रयात्तात ब्राह्मणो नरकं व्रजेत्।
अजोऽग्निर्व्वरुणो मेषः सूर्य्योऽश्वः पृथिवी विराट्। धेनुर्यज्ञश्च सोमश्च न विक्रेयाः कथञ्चन।
पक्केनामस्य निमयं न प्रशंसन्ति साधवः। निमयेत् पक्वमामेन भोजनार्थाय भारत।
वयं सिद्धमशिष्यामो भवान् साधयतामिमं। एवं संवीक्ष्य निमयन्नाधर्म्मोऽस्ति कथञ्चन।
अत्र ते वर्त्तयिष्यामि पुरा धर्म्मः सनातनः। व्यवहारप्रवृत्तानां तन्निबोध युधिष्ठिर। २९२५
भवतेऽहं ददानीदं भवानेतत् प्रयच्छतु। रुचितो वर्त्तते धर्म्मो न बलात् सम्प्रवर्त्तते।
इत्येवं सम्प्रवर्त्तन्ते व्यवहाराः पुरातनाः। ऋषीणामितरेषाञ्च साधु चैतदसंशयं।
॥ युधिष्ठिर उवाच ॥ अथ तात यदा सर्व्वाः शस्त्रमाददते प्रजाः। व्युत्क्रामन्ति स्वधर्म्मेभ्यः क्षत्रस्य क्षीयते बलं।
राजा त्राता तु लोकस्य कथञ्च स्यात् परायणं। एतन्मे संशयं ब्रूहि विस्तरेण नराधिप।
॥ भीष्म उवाच ॥ दानेन तपसा यज्ञैरद्रोहेण दमेन च। ब्राह्मणप्रमुखा वर्णाः क्षेममिच्छेयुरात्मनः। २९३०
तेषां ये वेदबलिनस्तेऽभ्युत्थाय समन्ततः। राज्ञो बलं वर्द्धयेयुर्म्महेन्द्रस्येव देवताः।
राज्ञोऽपि क्षीयमाणस्य ब्रह्मैवाहुः परायणं। तस्माद्ब्रह्मबलेनैव समुत्थेयं विजानता।
यदा भुवि जयी राजा क्षेमं राष्ट्रेऽभिसन्दधेत्। तदा वर्णा यथाधर्म्मं निविशेयुः कथञ्चन।
उन्मर्य्यादे प्रवृत्ते तु दस्युभिः सङ्करे कृते। सर्व्वे वर्णा न दुष्येयुः शस्त्रवन्तो युधिष्ठिर।
॥ युधिष्ठिर उवाच ॥ अथ चेत् सर्व्वतः क्षत्रं प्रदुष्येद्ब्राह्मणं प्रति। कस्तस्य ब्राह्मणस्त्राता को धर्म्मः किं परायणं। २९३५
॥ भीष्म उवाच ॥ तपसा ब्रह्मचर्य्येण शस्त्रेण च बलेन च। अमायया मायया च नियन्तव्यं तदा भवेत्।
क्षत्रियस्यातिवृत्तस्य ब्राह्मणेषु विशेषतः। ब्रह्मैव संनियन्तृ स्यात् क्षत्रं हि ब्रह्मसम्भवं।
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितं। तेषां सर्व्वत्रगं तेजः स्वासु योनिषु शाम्यति।
यदाच्छिनत्त्ययोऽश्मानमग्निश्चापोऽभिमर्च्छति। क्षत्रञ्च ब्राह्मणं द्वेष्टि तदा नश्यन्ति ते त्रयः।
तस्माद्ब्रह्मणि शाम्यन्ति क्षत्रियाणां युधिष्ठिर। समुदीर्णान्यजेयानि तेजांसि च बलानि च। २९४०
ब्रह्मवीर्य्ये मृदूभूते क्षत्रवीर्य्ये च दुर्ब्बले। दुष्टेषु सर्व्ववर्णेषु ब्राह्मणान् प्रति सर्व्वशः।
ये तत्र युद्धं कुर्व्वन्ति त्यक्त्वा जीवितमात्मनः। ब्राह्मणान् परिरक्षन्तो धर्म्ममात्मानमेव च।

मनस्विनो मन्युमन्तः पुण्यलोका भवन्ति ते। ब्राह्मणार्थं हि सर्व्वेषां शस्त्रग्रहणमिष्यते।
अतिस्विष्टमधीतानां लोकानतितपस्विनां। अनाशकाग्न्योर्विशतां शूरा यान्ति परां गतिं।
ब्राह्मणास्त्रिषु वर्णेषु शस्त्रं गृह्णन्न दुष्यति। एवमेवात्मनस्त्यागान्नान्यं धर्म्मं विदुर्जनाः। २९४५
तेभ्यो नमश्च भद्रञ्च ये शरीराणि जुह्वते। ब्रह्मद्विषो नियच्छन्तस्तेषां नोऽस्तु सलोकता।
ब्रह्मलोकजितः स्वर्ग्यान् वीरांस्तान् मनुरब्रवीत्। यथाऽश्वमेधावभृथे स्नाताः पूता भवन्त्युत।
दुष्कृतस्य प्रणाशेन तथा शस्त्रहता रणे। भवत्यधर्म्मो धर्म्मो हि धर्म्माधर्म्मावुभावपि।
कारणाद्देशकालस्य देशकालः स तादृशः। मैत्राः क्रूराणि कुर्व्वन्तो जयन्ति स्वर्गमुत्तमं।
धर्म्म्याः पापानि कुर्व्वाणा गच्छन्ति परमां गतिं। ब्राह्मणस्त्रिषु कालेषु शस्त्रं गृह्णन्न दुष्यति। २९५०
आत्मत्राणे वर्णदोषे दुर्द्दम्यनियमेषु च।
॥ युधिष्ठिर उवाच ॥ अभ्युत्थिते दस्युबले क्षत्रार्थे वर्णसङ्करे। सम्प्रमूढेषु वर्णेषु यद्यन्योऽभिभवेद्बली।
ब्राह्मणो यदि वा वैश्यः शूद्रो वा राजसत्तम। दस्युभ्योऽथ प्रजा रक्षेद्दण्डं धर्म्मेण धारयन्।
कार्य्यं कुर्य्यान्न वा कुर्य्यात् स वार्य्यो वा भवेन्न वा। तस्मात्क्षत्रं गृहीतव्यमन्यत्र क्षत्रबन्धुतः।
॥ भीष्म उवाच ॥ अपारे यो भवेत् पारमप्लवे यः प्लवो भवेत्। शूद्रो वा यदि वाऽप्यन्यः सर्व्वथा मानमर्हति। २९५५
यमाश्रित्य नरा राजन् वर्त्तयेयुर्यथासुखं। अनाथाः परिकृष्यन्ते दस्युभिः परिपीडिताः।
तमेव पूजयेयुस्ते प्रीत्या स्वमिव बान्धवं। अभीरभीक्ष्णं कौरव्य कर्त्ता सम्मानमर्हति।
किन्तैर्येऽनडुहो नोक्षाः किं धेन्वा वाऽप्यदुग्धया। वन्ध्यया भार्य्यया कोऽर्थः कोऽर्थो राज्ञाऽप्यरक्षता।
यथा दारुमयो हस्ती यथा चर्म्ममयो मृगः। यथा ह्यनर्थः षण्डो वा पार्थ क्षेत्रं यथोषरं।
एवं विप्रोऽनधीयानो राजा यश्च न रक्षिता। मेघो न वर्षते यश्च सर्व्वथा ते निरर्थकाः। २९६०
नित्यं यस्तु सतो रक्षेदसतश्च निवर्त्तयेत्। स एव राजा कर्त्तव्यस्तेन सर्व्वमिदं धृतं।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि अष्टसप्ततोऽध्यायः ॥ ७८ ॥
॥ युधिष्ठिर उवाच ॥ किं समुत्थाः कथंशीला ऋत्विजः स्युः पितामह। कथंविधाश्च राजेन्द्र तद्ब्रूहि वदताम्वर।
॥ भीष्म उवाच ॥ प्रतिकर्म्म पराचार ऋत्विजां स्म विधीयते। छन्दः सामादि विज्ञाय द्विजानां श्रुतमेव च।
ये लेकरतयो नित्यं वीराणां प्रियवादिनः। परस्परस्य सुहृदः समन्तात् समदर्शिनः।
अनृशंसाः सत्यवाक्या अकुसीदा अथार्ज्जवः। अद्रोहोऽनभिमानश्च ह्रीस्तितिक्षा दमः शमः। २९६५
धीमान् सत्यव्रती दान्तो भूतानामविहिंसकः। अकामद्वेषसंयुक्तस्त्रिभिः शुक्लैः समन्वितः।
अहिंसको ज्ञानतृप्तः स ब्रह्मासनमर्हति। एते महर्त्विजस्तात सर्व्वे मान्या यथार्हतः।
॥ युधिष्ठिर उवाच ॥ यदिदं वेदवचनं दक्षिणासु विधीयते। इदं देयमिदं देयं न कचिद्व्यवतिष्ठते।
नेदं प्रतिधनं शास्त्रमापद्धर्म्मानुशास्त्रतः। आज्ञा शास्त्रस्य घोरेयं न शक्तिं समवेक्षते।
श्रद्धावता च यष्टव्यमित्येषा वैदिकी श्रुतिः। मिथ्योपेतस्य यज्ञस्य किमु श्रद्धा करिष्यति। २९७०
॥ भीष्म उवाच ॥ न वेदानां परिभवात् न शाठ्येन न मायया। कश्चिन्महदवाप्नोति मा तेऽभूद्बुद्धिरीदृशी।

यज्ञाङ्गं दक्षिणा तात वेदानां परिबृंहणं। न यज्ञा दक्षिणाहीनास्तारयन्ति कथञ्चन।
शक्तिस्तु पूर्णपात्रेण सम्मिता न समा भवेत्। अवश्यं तात यष्टव्यं त्रिभिर्व्वर्णैर्यथाविधि।
सोमो राजा ब्राह्मणानामित्येषा वैदिकी स्थितिः। तञ्च विक्रेतुमिच्छन्ति न यथावृत्तिरिष्यते।
तेन क्रीतेन यज्ञेन ततो यज्ञः प्रतायते। इत्येवं धर्म्मतो ख्यातमृषिभिर्द्धर्म्मचारिभिः। २९७५
पुमान् यज्ञश्च सोमश्च न्यायवृत्तो यदा भवेत्। अन्यायवृत्तः पुरुषो न परस्य न चात्मनः।
शरीरवृत्तमास्थाय इत्येषा श्रूयते श्रुतिः। तानि सम्यक् प्रणीतानि ब्राह्मणानां महात्मनां।
तपो यज्ञादपि श्रेष्ठमित्येषा परमा श्रुतिः। तत्ते तपः प्रवक्ष्यामि विद्वंस्तदपि मे शृणु।
अहिंसा सत्यवचनमानृशंस्यन्तपो घृणा। एतत्तपो विदुर्द्धीरा न शरीरस्य शोषणं।
अप्रामाण्यञ्च वेदानां शास्त्राणाञ्चाभिलङ्घनं। अव्यवस्था च सर्व्वत्र तद्वै नाशनमात्मनः। २९८०
निबोध दशहोतॄणां विधानं पार्थ यादृशं। चित्तिः स्रुक् चित्तमाज्यञ्च पवित्रं ज्ञानमुत्तमं।
सर्व्वं जिह्मं मृत्युपदमार्ज्जवं ब्रह्मणः पदं। एतावान् ज्ञानविषयः किं प्रलापः करिष्यति।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि ऊनाशीतोऽध्यायः॥ ७८॥
॥ युधिष्ठिर उवाच॥ यदप्यल्पतरं कर्म्म तदप्येकेन दुष्करं। पुरुषेणासहायेन किमु राज्ञा पितामह।
किंशीलः किंसमाचारो राज्ञोऽथ सचिवो भवेत्। कीदृशे विश्वसेद्राजा कीदृशे न च विश्वसेत्।
॥ भीष्म उवाच॥ चतुर्व्विधानि मित्राणि राज्ञां राजन् भवन्त्युत। सहार्थो भजमानश्च सहजः कृत्रिमस्तथा। २९८५
धर्म्मात्मा पञ्चमश्चापि मित्रं नैकस्य न द्वयोः। यतो धर्म्मस्ततो वा स्यान्मध्यस्थो वा ततो भवेत्।
यस्तस्यार्थो न रोचेत न तं तस्य प्रकाशयेत्। धर्म्माधर्म्मेण राजानश्चरन्ति विजिगीषवः।
चतुर्णां मध्यमौ श्रेष्ठौ नित्यं शङ्क्यौ तथाऽपरौ। सर्व्वे नित्यं शङ्कितव्याः प्रत्यक्षं कार्य्यमात्मनः।
न हि राज्ञा प्रमादो वै कर्त्तव्यो मित्ररक्षणे। प्रमादिनं हि राजानं लोकाः परिभवन्त्युत।
असाधुः साधुतामेति साधुर्भवति दारुणः। अरिश्च मित्रं भवति मित्रञ्चापि प्रदुष्यति। २९९०
अनित्यचित्तः पुरुषस्तस्मिन् को जातु विश्वसेत्। तस्मात् प्रधानं यत् कार्य्यं प्रत्यक्षं तत् समाचरेत्।
एकान्तेन हि विश्वासः कृत्स्नो धर्म्मार्थनाशकः। अविश्वासश्च सर्व्वत्र मृत्युना च विशिष्यते।
अकालमृत्युर्व्विश्वासो विश्वसन् हि विपद्यते। यस्मिन् करोति विश्वासमिच्छतस्तस्य जीवति।
तस्माद्विश्वसितव्यञ्च शङ्कितव्यञ्च केषुचित्। एषा नीतिगतिस्तात लक्ष्या चैव सनातनी।
यं मन्येत ममाभावादिममर्थागमः स्पृशेत्। नित्यं तस्मात् शङ्कितव्यममित्रं तं विदुर्ब्बुधाः। २९९५
यस्य क्षेत्रादप्युदकं क्षेत्रमन्यस्य गच्छति। न तत्रानिच्छतस्तस्य भिद्येरन् सर्व्वसेतवः।
तथैवात्युदकाद्भीतस्तस्य भेदनमिच्छति। यमेवं लक्षणं विद्यात्तममित्रं विनिर्द्दिशेत्।
यस्य वृद्ध्या न तृप्येत क्षये दीनतरो भवेत्। एतदुत्तममित्रस्य निमित्तमिति चक्षते।
यन्मन्येत ममाभावादस्याभावो भवेदिति। तस्मिन् कुर्व्वीत विश्वासं यथा पितरि वै तथा।
तं शक्त्या वर्द्धमानञ्च सर्व्वतः परिबृंहयेत्। नित्यं क्षताद्वारयति यो धर्म्मेष्वपि कर्म्मसु। ३०००

चतात्मजीतं विजानीयादुत्तमं मित्रलक्षणं । ये तस्य क्षतमिच्छन्ति ते तस्य रिपवः स्मृताः ।
व्यसनान्नित्यभीतो यः समृद्ध्या यो न दुष्यति । यत् स्यादेवं विधं मित्रं तदात्मसममुच्यते ।
रूपवर्णस्वरोपेतस्तितिक्षुरनसूयकः । कुलीनः कुलसम्पन्नः स तस्मात् प्रत्यनन्तरः ।
मेधावी स्मृतिमान् दक्षः प्रकृत्या चानृशंसवान् । यो मानितोऽमानितो वा न च दुष्येत् कदाचन ।
ऋत्विग्वा यदि वाचार्य्यः सखा वाऽत्यन्तसंस्तुतः । गृहे वसेदमात्यस्ते स स्यात् परमपूजितः । १००५
स ते विद्यात् परं मन्त्रं प्रकृतिञ्चार्थधर्मयोः । विश्वासस्ते भवेत्तत्र यथा पितरि वै तथा ।
नैव द्वौ न त्रयः कार्य्या न मृष्येरन् परस्परं । एकार्थे ह्येव भूतानां भेदो भवति सर्व्वदा ।
कीर्त्तिप्रधानो यस्तु स्याद्यश्च स्यात् समये स्थितः । समर्थान् यश्च न द्वेष्टि नानर्थान् कुरुते च यः ।
यो न कामाद्भयाल्लोभात् क्रोधाद्वा धर्म्ममुत्सृजेत् । दक्षः पर्य्याप्तवचनः स ते स्यात् प्रत्यनन्तरः ।
कुलीनः शीलसम्पन्नस्तितिक्षुरविकत्थनः । शूरश्चार्य्यश्च विद्वांश्च प्रतिपत्तिविशारदः । १०१०
एते ह्यमात्याः कर्त्तव्याः सर्व्वकर्म्मस्ववस्थिताः । पूजिताः संविभक्ताश्च सुसहायाः स्वनुष्ठिताः ।
कृत्स्नमेते विनिक्षिप्ताः प्रतिरूपेषु कर्म्मसु । युक्ता महत्सु कार्य्येषु श्रेयांस्युत्थापयन्त्युत ।
एते कर्म्माणि कुर्व्वन्ति स्पर्द्धमाना मिथः सदा । अनुतिष्ठन्ति चैवार्थमाचक्षाणाः परस्परं ।
ज्ञातिभ्यश्चैव बुध्येथा मृत्योरिव भयं सदा । उपराजेव राजर्द्धिं ज्ञातिर्न सहते सदा ।
ऋजोर्मृदोर्वदान्यस्य ह्रीमतः सत्यवादिनः । नान्यो ज्ञातेर्महाबाहो विनाशमभिनन्दति । १०१५
अज्ञातितोपि न सुखा नावज्ञेयास्ततः परं । अज्ञातिमन्तं पुरुषं परे चाभिभवन्त्युत ।
निकृतस्य नरैरन्यैर्ज्ञातिरेव परायणं । नान्यैर्निकारं सहते ज्ञातिर्ज्ञातेः कथञ्चन ।
आत्मानमेव जानाति निकृतं बान्धवैरपि । तेषु सन्ति गुणाश्चैव नैर्गुण्यं चैव लक्ष्यते ।
नाज्ञातिरनुगृह्णाति न चाज्ञातिर्नमस्यति । उभयं ज्ञातिवर्गेषु दृश्यते साध्वसाधु च ।
सम्मानयेत् पूजयेच्च वाचा नित्यञ्च कर्म्मणा । कुर्य्याच्च प्रियमेतेभ्यो नाप्रियं किञ्चिदाचरेत् । १०२०
विश्वस्तवदविश्वस्तस्तेषु वर्त्तेत सर्व्वदा । न हि दोषो गुणो वेति निरूप्यस्तेषु दृश्यते ।
अस्यैवं वर्त्तमानस्य पुरुषस्याप्रमादिनः । अमित्राः संप्रसीदन्ति तथा मित्रीभवन्त्यपि ।
य एवं वर्त्तते नित्यं ज्ञातिसम्बन्धिमण्डले । मित्रेष्वमित्रे मध्यस्थे चिरं यशसि तिष्ठति ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि अशीतितमोऽध्यायः ॥ ८० ॥

॥ युधिष्ठिर उवाच ॥ एवमग्राह्यके तस्मिन् ज्ञातिसम्बन्धिमण्डले । मित्रेष्वमित्रेष्वपि च कथं भावो विभाव्यते ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । संवादं वासुदेवस्य सुरर्षेर्नारदस्य च । १०२५
॥ वासुदेव उवाच ॥ नासुहृत् परमं मन्त्रं नारदार्हति वेदितुं । अपण्डितो वापि सुहृत् पण्डितो वाऽप्यनात्मवान् ।
स ते सौहृदमास्थाय किञ्चिद्वक्ष्यामि नारद । कृत्स्नं बुद्धिबलं प्रेक्ष्य संपृच्छे त्रिदिवङ्गम ।
दास्यमैश्वर्य्यवादेन ज्ञातीनां न करोम्यहं । अर्द्धं भोक्ताऽस्मि भोगानां वाग्दुरुक्तानि च क्षमे ।
अरणीमग्निकामो वा मथ्नाति हृदयं मम । वाचा दुरुक्तं देवर्षे तन्मे दहति नित्यदा ।

बलं सङ्कर्षणे नित्यं सौकुमार्य्यं पुनर्गदे । रूपेण मत्तः प्रद्युम्नः सोऽसहायोऽस्मि नारद । ३०२०
अन्ये हि सुमहाभागा बलवन्तो दुरासदाः । नित्योत्थानेन सम्पन्ना नारदान्धकवृष्णयः ।
यस्य न स्युर्न वै स स्याद्यस्य स्युः कृत्स्नमेव तत् । द्वाभ्यां निवारितो नित्यं वृणोम्येकतरं न च ।
स्यातां यस्याहुकाक्रूरौ किन्नु दुःखतरं ततः । यस्य चापि न तौ स्यातां किन्नु दुःखतरं ततः ।
सोऽहं कितवमातेव द्वयोरपि महामते । एकस्य जयमाशंसे द्वितीयस्य पराजयं ।
ममैवं क्लिश्यमानस्य नारदोभयतः सदा । वक्तुमर्हसि यच्छ्रेयो ज्ञातीनामात्मनस्तथा । ३०२५
॥ नारद उवाच ॥ आपदो द्विविधाः कृष्ण बाह्याश्चाभ्यन्तराश्च ह । प्रादुर्भवन्ति वार्ष्णेय स्वभावाद्यदि वाऽन्यतः ।
सेयमभ्यन्तरा तुभ्यमापत् कृत्स्ना स्वकर्म्मजा । अक्रूरभोजप्रभवा सर्व्वे ह्येते तदन्वयाः ।
अर्थहेतोर्हि कामाद्वा वाचा बीभत्सयाऽपि वा । आत्मना प्राप्तमैश्वर्य्यमन्यत्र प्रतिपादितं ।
कृतमूलमिदानीन्तु ज्ञातिशब्दं सहायवत् । न शक्यं पुनरादातुं वान्तमन्नमिव त्वया ।
बभ्रूग्रसेनयो राज्यं नाप्तुं शक्यं कथञ्चन । ज्ञातिभेदभयात् कृष्ण त्वया चापि विशेषतः । ३०३०
तच्चेत् सिध्येत् प्रयत्नेन कृत्वा कर्म्म सुदुष्करं । महाक्षयं व्ययो वा स्याद्विनाशो वा पुनर्भवेत् ।
अनायसेन शस्त्रेण मृदुना हृदयच्छिदा । जिह्वामुद्धर सर्व्वेषां परिमृज्यानुमृज्य च ।
॥ वासुदेव उवाच ॥ अनायसं मुने शस्त्रं मृदु विद्यामहं कथं । येनैषामुद्धरे जिह्वां परिमृज्यानुमृज्य च ।
॥ नारद उवाच ॥ शक्त्याऽन्नदानं सततं तितिक्षार्ज्जवमार्द्दवं । यथार्हप्रतिपूजा च शस्त्रमेतदनायसं ।
ज्ञातीनां वक्तुकामानां कटुकानि लघूनि च । गिरा त्वं हृदयं वाचं शमयस्व मनांसि च । ३०३५
नामहापुरुषः कश्चिन्नानात्मा नासहायवान् । महतीं धुरमाधत्ते तामुद्यम्योरसा वह ।
सर्व्व एव गुरुं भारमनड्वान् वहते समे । दुर्गे प्रतीतः सुगवो भारं वहति दुर्व्वहं ।
भेदाद्विनाशः सङ्घानां सङ्घमुख्योऽसि केशव । यथा त्वां प्राप्य नोत्सीदेदयं सङ्घस्तथा कुरु ।
नान्यत्र बुद्धिक्षान्तिभ्यां नान्यत्रेन्द्रियनिग्रहात् । नान्यत्र धनसन्त्यागाद्गणः प्राज्ञेऽवतिष्ठते ।
धन्यं यशस्यमायुष्यं स्वपक्षोद्भावनं सदा । ज्ञातीनामविनाशः स्याद्यथा कृष्ण तथा कुरु । ३०४०
आयत्याञ्च तदात्वे च न तेऽस्त्यविदितं प्रभो । षाड्गुण्यस्य विधानेन यात्रायानविधौ तथा ।
यादवाः कुकुरा भोजाः सर्व्वे चान्धकवृष्णयः । त्वय्यासक्ता महाबाहो लोका लोकेश्वराश्च ये ।
उपासते हि त्वद्बुद्धिमृषयश्चापि माधव । त्वं गुरुः सर्व्वभूतानां जानीषे त्वं गतागतं ।
त्वामासाद्य यदुश्रेष्ठमेधन्ते यादवाः सुखं ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि वासुदेवनारदसंवादे एकाशीतितमोऽध्यायः ॥ ८१ ॥

॥ भीष्म उवाच ॥ एषा प्रथमतो वृत्तिर्द्वितीयां शृणु भारत । यः कश्चिज्जनयेदर्थं राज्ञा रक्ष्यः सदा नरः । ३०४५
ह्रियमाणममात्येन भृतो वा यदि वाऽभृतः । यो राजकोषं नश्यन्तमाचक्षीत युधिष्ठिर ।
श्रोतव्यमस्य च रहो रक्ष्यश्चामात्यतो भवेत् । अमात्या ह्युपहर्त्तारो भूयिष्ठं घ्नन्ति भारत ।
राजकोषस्य गोप्तारं राजकोषविलोपकाः । समेत्य सर्व्वे बाधन्ते स विनश्यत्यरक्षितः ।

अत्राप्युदाहरन्तीममितिहासं पुरातनं । मुनिः कालकवृक्षीयः कौशल्यं यदुवाच ह ।
कौशल्यानामाधिपत्यं सम्प्राप्तं क्षेमदर्शिनं । मुनिः कालकवृक्षीय आजगामेति नः श्रुतं । ३०६०
स काकं पञ्जरे बद्धा विषयं क्षेमदर्शिनः । सर्व्वं पर्य्यचरद्युक्तः प्रवृत्त्यर्थी पुनः पुनः ।
अधीध्वं वायसीं विद्यां शंसन्ति मम वायसाः । अनागतमतीतञ्च यच्च सम्प्रति वर्त्तते ।
इति राष्ट्रे परिपतन् बहुभिः पुरुषैः सह । सर्व्वेषां राजयुक्तानां दुष्कारं परिदृष्टवान् ।
स बुद्धा तस्य राष्ट्रस्य व्यवसायं हि सर्व्वशः । राजयुक्तापहारांश्च सर्व्वान् बुद्धा ततस्ततः ।
ततः स काकमादाय राजानं द्रष्टुमागमत् । सर्व्वज्ञोऽस्मीति वचनं ब्रुवाणः संशितव्रतः । ३०६५
स्म कौशल्यमागम्य राजाऽमात्यमलङ्कृतं । प्राह काकस्य वचनादमुत्रेदं त्वया कृतं ।
असौ चासौ च जानीते राजकोषस्त्वया हृतः । एवमाख्याति काकोऽयं तच्छीघ्रमनुगम्यतां ।
तथाऽन्यानपि स प्राह राजकोषहरांस्तदा । न चास्य वचनं किञ्चिदनृतं श्रूयते क्वचित् ।
तेन विप्रकृताः सर्व्वे राजयुक्ताः कुरूद्वह । तमस्याभिप्रसुप्तस्य निशि काकमवेधयन् ।
वायसन्तु विनिर्भिन्नं दृष्ट्वा बाणेन पञ्जरे । पूर्व्वाह्णे ब्राह्मणो वाक्यं क्षेमदर्शिनमब्रवीत् । ३०७०
राजंस्त्वामभयं याचे प्रभुं प्राणधनेश्वरं । अनुज्ञातस्त्वया ब्रूयां वचनं भवतो हितं ।
मित्रार्थमभिसन्तप्तो भक्त्या सर्व्वात्मना गतः । अयं तवार्थो ह्रियते यो ब्रूयादक्षमान्वितः ।
सम्बुबोधयिषुर्मित्रं सदश्वमिव सारथिः । अतिमन्युप्रसक्तो हि प्रसह्य हितकारणात् ।
तथाविधस्य सुहृदा क्षन्तव्यं स्वं विजानता । ऐश्वर्य्यमिच्छता नित्यं पुरुषेण बुभूषता ।
तं राजा प्रत्युवाचेदं यत्किञ्चिन्मां भवान् वदेत् । कस्मादहं न क्षमेयमाकाङ्क्षन्नात्मनो हितं । ३०७५
ब्राह्मण प्रतिजाने ते प्रब्रूहि यदिहेच्छसि । करिष्यामि हि ते वाक्यं यदस्मान् विप्र वक्ष्यसि ।
॥ मुनिरुवाच ॥ ज्ञात्वाऽनयाननयांश्चापि भृत्यतस्ते भयानि च । भक्त्या वृत्तिं समाख्यातुं भवतोऽन्तिकमागमं ।
प्रागेवोक्तस्तु दोषोऽयमाचार्य्यैर्नृपसेविनां । अगतीका गतिर्ह्येषा पापा राजोपसेविनां ।
आशीविषैश्च तस्याहुः सङ्गतं तस्य राजभिः । बहुमित्राश्च राजानो बह्वमित्रास्तथैव च ।
तेभ्यः सर्व्वेभ्य एवाहुर्भयं राजोपजीविनां । तथैषां राजतो राजन् मुहूर्त्तादेव भीर्भवेत् । ३०८०
नैकान्तेन प्रमादो हि शक्यः कर्त्तुं महीपतौ । न तु प्रमादः कर्त्तव्यः कथञ्चिद्भूतिमिच्छता ।
प्रमादाद्धि स्खलेद्राजा स्खलिते नास्ति जीवितं । अग्निं दीप्तमिवासीदेद्राजानमुपशिक्षितः ।
आशीविषमिव क्रुद्धं प्रभुं प्राणधनेश्वरं । यत्नेनोपचरेन्नित्यं नाहमस्मीति मानवः ।
दुर्व्याहृतात् शङ्कमानो दुःस्थिताद्दुरधिष्ठितात् । दुरासिताद्दुर्व्रजितादिङ्गिताद्दुर्विचेष्टितात् ।
देवतेव हि सर्व्वार्थान् कुर्य्याद्राजा प्रसादितः । वैश्वानर इव क्रुद्धः समूलमपि निर्दहेत् । ३०८५
इति राजन्नयः प्राह वर्त्तते च तथैव तत् । अथ भूयांसमेवार्थं करिष्यामि पुनः पुनः ।
ददात्यस्मद्विधोऽमात्यो बुद्धिसाहाय्यमापदि । वायसश्चैव मे राजन् ननु कार्य्याभिसंहितः ।
न च मेऽत्र भवान् गर्ह्यो न च तेषां भवान् प्रियः । हिताहितांस्तु बुध्येथा मा परोक्षमतिर्भवेः ।

ये त्वादानपरा एव वसन्ति भवतो गृहे। अभूतिकामा भूतानां तादृशैर्मेऽभिसंहितं।
ये वा भवद्विनाशेन राज्यमिच्छन्त्यनन्तरं। अन्तरैरभिसन्धाय राजन् सिध्यति नान्यथा। ३०९०
तेषामहं भयाद्राजन् गमिष्याम्यन्यमाश्रमं। तैर्हि मे सन्धितो बाणः काके निपतितः प्रभो।
छद्मकामैरकामस्य गमितो यमसादनं। दृष्टं ह्येतन्मया राजंस्तपोदीर्घेण चक्षुषा।
बहुनक्रझषग्राहां तिमिङ्गिलगणायुतां। काकेन बालिशेनेमां यामतार्षमहं नदीं।
स्थाण्वश्मकण्टकवतीं सिंहव्याघ्रसमाकुलां। दुरासदां दुष्प्रसहां गुहां हैमवतीमिव।
अग्निना तामसं दुर्गं नौभिराप्यञ्च गम्यते। राजदुर्गावतरणे नोपायं पण्डिता विदुः। ३०९५
गहनं भवतो राज्यमन्धकारं तमोऽन्वितं। नेह विश्वसितुं शक्यं भवताऽपि कुतो मया।
अतो नायं शुभो वासस्तुल्ये सदसती इह। वधो ह्येवात्र सुकृते दुष्कृते न च संशयः।
न्यायतो दुष्कृते घातः सुकृतेन कथञ्चन। नेह युक्तं चिरं स्थातुं जवेनैवाव्रजेद्बुधः।
सीता नाम नदी राजन् प्लवो यस्यां निमज्जति। तथोपमामिमां मन्ये वागुरां सर्व्वघातिनीं।
मधुप्रपातो हि भवान् भोजनं विषसंयुतं। असतामिव ते भावो वर्त्तते न सतामिव। ३१००
आशीविषैः परिवृतः कूपस्त्वमसि पार्थिव। दुर्गतीर्था बृहत्कूला कारीरा वेत्रसंयुता।
नदी मधुरपानीया यथा राजंस्तथा भवान्। श्वगृध्रगोमायुयुतो राजहंससमो ह्यसि।
यथाश्रित्य महावृक्षं कक्षः संवर्द्धते महान्। ततस्तं संवृणोत्येव तमतीत्य च वर्द्धते।
तेनैवोपेन्धनेनैनं दावो दहति दारुणः। तथोपमा ह्यमात्यास्ते राजंस्तान् परिशोधय।
त्वया चैव कृता राजन् भवता परिपालिताः। भवन्तमभिसन्धाय जिघांसन्ति भवत्प्रियं। ३१०५
उषितं शङ्कमानेन प्रमादं परिरक्षता। अन्तःसर्प इवागारे वीरपत्न्या इवालये।
शीलं जिज्ञासमानेन राज्ञश्च सहजीविनः। कच्चिज्जितेन्द्रियो राजा कच्चिदस्यान्तरा जिताः।
कच्चिदेषां प्रियो राजा कच्चिद्राज्ञः प्रियाः प्रजाः। विजिज्ञासुरिह प्राप्तस्तवाहं राजसत्तम।
तस्य मे रोचते राजन् क्षुधितस्येव भोजनं। अमात्या मे न रोचन्ते वितृष्णस्य यथोदकं।
भवतोऽर्थकृदित्येवं मयि दोषो हि तैः कृतः। विद्यते कारणं नान्यदिति मे नात्र संशयः। ३११०
न हि तेषामहं द्रुग्धस्तत्तेषां दोषदर्शनं। अरेर्हि दुर्हृदाद्भेयं भग्नपृष्ठादिवोरगात्।
॥ राजोवाच ॥ भूयसा परिहारेण सत्कारेण च भूयसा। पूजितो ब्राह्मणश्रेष्ठ भूयो वस गृहे मम।
ये त्वां ब्राह्मण नेच्छन्ति ते न वत्स्यन्ति मे गृहे। भवतैव हि तच्छेयं यत्तदेषामनन्तरं।
यथा स्यात्सुधृतो दण्डो यथा च सुकृतं कृतं। तथा समीक्ष्य भगवन् श्रेयसे विनियुङ्क्ष्व मां।
॥ मुनिरुवाच ॥ अदर्शयन्निमं दोषमेकैकं दुर्ब्बलीकुरु। ततः कारणमाज्ञाय पुरुषं पुरुषं जहि। ३११५
एकदोषा हि बहवो मृद्नीयुरपि कण्टकान्। मन्त्रभेदभयाद्राजंस्तस्मादेतद्ब्रवीमि ते।
वयन्तु ब्राह्मणा नाम मृदुदण्डाः कृपालवः। स्वस्ति चेच्छाम भवतः परेषाञ्च यथात्मनः।
राजन्नात्मानमाचक्षे सम्बन्धी भवतो ह्यहं। मुनिः कालकवृक्षीय इत्येवमभिसंश्रितः।

पितुः सखा च भवतः सचिवः सत्यसङ्गरः । आपन्ने भवतो राज्ये राजन् पितरि संस्थिते ।
सर्व्वकामान् परित्यज्य तपस्तप्तं तदा मया । स्नेहात्त्वान्तु ब्रवीम्येतन्मा भूयो विभ्रमेदिति । ३१२०
उभे दृष्ट्वा दुःखसुखे राज्यं प्राप्य यदृच्छया । राष्ट्रमामात्यरक्षेण कथं राजन् प्रमाद्यसि ।
ततो राजकुले नन्दी सञ्जज्ञे भूयसा पुनः । पुरोहितकुले चैव सम्प्राप्ते ब्राह्मणर्षभे ।
एकच्छत्रां महीं कृत्वा कौशल्याय यशस्विने । मुनिः कालकवृक्षीय ईजे क्रतुभिरुत्तमैः ।
हितं तद्वचनं श्रुत्वा कौशल्योऽप्यजयन्महीं । तथा च कृतवान्राजा यथोक्तं तेन भारत ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि कालकवृक्षीयोपाख्याने द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

॥ युधिष्ठिर उवाच ॥ सभासदः सहायाश्च सुहृदश्च विशाम्पते । परिच्छदास्तथाऽमात्याः कीदृशाः स्युः पितामह । ३१२५
॥ भीष्म उवाच ॥ ह्रीनिषेवास्तथा दान्ताः सत्यार्ज्जवसमन्विताः । शक्ताः कथयितुं सम्यक् ते तव स्युः सभासदः ।
अमात्यांश्चातिशूरांश्च ब्राह्मणांश्च परिश्रुतान् । सुसन्तुष्टांश्च कौन्तेय महोत्साहांश्च कर्म्मसु ।
एतान् सहायान् लिप्सेथाः सर्व्वास्वापत्सु भारत । कुलीनः पूजितो नित्यं नहि शक्तिं निगूहति ।
प्रसन्नमप्रसन्नं वा पीडितं हृतमेव वा । आवर्त्तयति भूयिष्ठं तदेव ह्यनुपालितं ।
कुलीना देशजाः प्राज्ञा रूपवन्तो बहुश्रुताः । प्रगल्भाश्चानुरक्ताश्च ते तव स्युः परिच्छदाः । ३१३०
दौष्कुलेयाश्च लुब्धाश्च नृशंसा निरपत्रपाः । ते त्वां तात निषेवेयुर्यावदार्द्रकपाणयः ।
कुलीनान् शीलसम्पन्नानिङ्गितज्ञाननिष्ठुरान् । देशकालविधानज्ञान् भर्त्तृकार्य्यहितैषिणः ।
नित्यमर्थेषु सर्व्वेषु राजा कुर्व्वीत मन्त्रिणः । अर्थमानार्घसत्कारैर्भोगैरुच्चावचैः प्रियान् ।
यानर्थभाजो मन्येथास्ते ते स्युः सुखभागिनः । अभिन्नवृत्ता विद्वांसः सद्वृत्ताश्चरितव्रताः ।
न त्वां नित्यार्थिनो जह्युरक्षुद्राः सत्यवादिनः । अनार्य्या ये न जानन्ति समयं मन्दचेतसः । ३१३५
तेभ्यः परिजुगुप्सेथा ये चापि समयच्युताः । नैकमिच्छेद्गणं हित्वा स्याच्चेदन्यतरग्रहः ।
यस्त्वेको बहुभिः श्रेयान् कामं तेन गणं त्यजेत् । श्रेयसो लक्षणं चैतद्विक्रमो यस्य दृश्यते ।
कीर्त्तिप्रधानो यश्च स्यात् समये यश्च तिष्ठति । समर्थान् पूजयेद्यश्च नास्पर्द्धैः स्पर्द्धते च यः ।
न च कामाद्भयात् क्रोधाल्लोभाद्वा धर्म्ममुत्सृजेत् । अमानी सत्यवाक् क्षान्तो जितात्मा मानसंयुतः ।
स ते मन्त्रसहायः स्यात् सर्व्वावस्थापरीक्षितः । कुलीनः कुलसम्पन्नस्तितिक्षुर्दक्ष आत्मवान् । ३१४०
शूरः कृतज्ञः सत्यश्च श्रेयसः पार्थ लक्षणं । तस्यैवं वर्त्तमानस्य पुरुषस्य विजानतः ।
अमित्राः सम्प्रसीदन्ति तथा मित्रीभवन्त्यपि । अत ऊर्द्ध्वममात्यानां परीक्षेत गुणागुणं ।
संयतात्मा कृतप्रज्ञो भूतिकामश्च भूमिपः । सम्बद्धाः पुरुषैराप्तैरभिजातैः स्वदेशजैः ।
अहार्य्यैरव्यभीचारैः सर्व्वशः सुपरीक्षितैः । यौनाः श्रौतास्तथा मौलास्तथैवाऽप्यनहङ्कृताः ।
कर्त्तव्या भूतिकामेन पुरुषेण बुभूषता । येषां वैनयिकी बुद्धिः प्रकृतिश्चैव शोभना । ३१४५
तेजो धैर्य्यं क्षमा शौचमनुरागः स्थितिर्धृतिः । परीक्ष्य च गुणान्नित्यं प्रौढभावान् धुरन्धरान् ।
पञ्चोपधा व्यतीतांश्च कुर्य्याद्राजाऽर्थकारिणः । पर्य्याप्तवचनान् वीरान् प्रतिपत्तिविशारदान् ।

कुलीनान् सत्त्वसम्पन्नानिङ्गितज्ञाननिष्ठुरान् । देशकालविधानज्ञान् भर्तृकार्य्यहितैषिणः ।
नित्यमर्थेषु सर्व्वेषु राजन् कुर्व्वीत मन्त्रिणः । हीनतेजोऽभिसंसृष्टो नैव जातु व्यवस्यति ।
अवश्यं जनयत्येव सर्व्वकर्म्मसु संशयं । एवमल्पश्रुतो मन्त्री कल्याणाभिजनोऽप्युत । ३१५०
धर्म्मार्थकामसंयुक्तो नालं मन्त्रं परीक्षितुं । तथैवानभिजातोऽपि काममस्तु बहुश्रुतः ।
अनायक इवाचक्षुर्मुह्यत्यणुषु कर्म्मसु । यो वाऽप्यस्थिरसङ्कल्पो बुद्धिमानागतागमः ।
उपायज्ञोऽपि नालं स कर्म्म प्रापयितुं चिरं । केवलात् पुनरादानात् कर्म्मणो नोपपद्यते ।
परामर्शोऽविशेषाणामश्रुतस्येह दुर्म्मतेः । मन्त्रिण्यननुरक्ते तु विश्वासो नोपपद्यते ।
तस्मादननुरक्ताय नैव मन्त्रं प्रकाशयेत् । व्यथयेद्धि स राजानं मन्त्रिभिः सहितोऽनृजुः । ३१५५
मारुतोऽपि हि तच्छिद्रैः प्रविश्याग्निरिव द्रुमं । संक्रुद्धश्चैकदा स्वामी स्थानाच्चैवापकर्षति ।
वाचा क्षिपति संरब्धः पुनः पश्चात् प्रसीदति । तानि तान्यनुरक्तेन शक्यानि हि तितिक्षितुं ।
मन्त्रिणाञ्च भवेत् क्रोधो विस्फूर्ज्जितमिवाशनेः । यस्तु संहरते तानि भर्त्तुः प्रियचिकीर्षया ।
समानसुखदुःखन्तं पृच्छेदर्थेषु मानवं । अनृजुस्त्वनुरक्तोऽपि सम्पन्नश्चेतरैर्गुणैः ।
राज्ञः प्रज्ञानयुक्तोऽपि न मन्त्रं श्रोतुमर्हति । योऽमित्रैः सह सम्बद्धो न पौरान् बहु मन्यते । ३१६०
असुहृत्तादृशो ज्ञेयो न मन्त्रं श्रोतुमर्हति । अविद्वानशुचिः स्तब्धः शत्रुसेवी विकत्थनः ।
असुहृत् क्रोधनो लुब्धो न मन्त्रं श्रोतुमर्हति । आगन्तुश्चानुरक्तोऽपि काममस्तु बहुश्रुतः ।
सत्कृतः संविभक्तो वा न मन्त्रं श्रोतुमर्हति । विधर्म्मतो विप्रकृतं पिता यस्याभवत् पुरा ।
सत्कृतः स्थापितः सोऽपि न मन्त्रं श्रोतुमर्हति । यः स्वल्पेनापि कार्य्येण सुहृदा कारितो भवेत् ।
पुनरन्यैर्गुणैर्युक्तो न मन्त्रं श्रोतुमर्हति । कृतप्रज्ञश्च मेधावी बुधो जानपदः शुचिः । ३१६५
सर्व्वकर्म्मसु यः शुद्धः स मन्त्रं श्रोतुमर्हति । ज्ञानविज्ञानसम्पन्नः प्रकृतिज्ञः परात्मनोः ।
सुहृदात्मसमो राज्ञः स मन्त्रं श्रोतुमर्हति । सत्यवाक् शीलसम्पन्नो गम्भीरः सत्रपो मृदुः ।
पितृपैतामहो यः स्यात् स मन्त्रं श्रोतुमर्हति । सन्तुष्टः सम्मतः सत्यः शौण्डीरो द्वेष्यपापकः ।
मन्त्रवित् कालवित् शूरः स मन्त्रं श्रोतुमर्हति । सर्व्वलोकमिमं शक्तः सान्त्वेन कुरुते वशे ।
तस्मै मन्त्रः प्रयोक्तव्यो दण्डमाधित्सता नृप । पौरजानपदा यस्मिन् विश्वासं धर्म्मतो गताः । ३१७०
योद्धा नयविपश्चिच्च स मन्त्रं श्रोतुमर्हति । तस्मात् सर्व्वगुणैरेतैरुपपन्नाः सुपूजिताः ।
मन्त्रिणः प्रकृतिज्ञाः स्युस्त्र्यवरा महदीप्सवः । स्वासु प्रकृतिषु च्छिद्रं लक्षयेरन् परस्य च ।
मन्त्रिणां मन्त्रमूलं हि राज्ञो राष्ट्रं विवर्द्धते । नास्य च्छिद्रं परः पश्येच्छिद्रेषु परमन्वियात् ।
गूहेत् कूर्म्म इवाङ्गानि रक्षेद्विवरमात्मनः । मन्त्रगूढा हि राज्यस्य मन्त्रिणो ये मनीषिणः ।
मन्त्रसंहननो राजा मन्त्राङ्गानीतरे जनाः । राज्यं प्रणिधिमूलं हि मन्त्रसारं प्रचक्षते । ३१७५
स्वामिनस्त्वनुवर्त्तन्ते वृत्त्यर्थमिह मन्त्रिणः । संविनीय मदक्रोधौ मानमीर्षाञ्च निर्वृताः ।
नित्यं पञ्चोपधातीतैर्मन्त्रयेत् सह मन्त्रिभिः ।

तेषां त्रयाणां विविधं विमर्शं विबुध्य चित्तं विनिवेश्य तत्र। स्वनिश्चयं तत्परिनिश्चयञ्च निवेदयेदुत्तरमन्त्रकाले।
धर्म्मार्थकामज्ञमुपेत्य पृच्छेद्युक्तो गुरुं ब्राह्मणमुत्तरार्थं। निष्ठा कृता तेन यदा सह स्यात्तन्मन्त्रमार्गं प्रणयेदसक्तः।
एवं सदा मन्त्रयितव्यमाहुर्ये मन्त्रतत्त्वार्थविनिश्चयज्ञाः। तस्मात्तमेवं प्रणयेत् सदैव मन्त्रं प्रजासंग्रहणे समर्थं। २१८०
न वामनाः कुब्जकृशा न खञ्जा नान्धो जडः स्त्री च नपुंसकञ्च। न चात्र तिर्य्यङ् न पुरो न पश्चान्नोर्द्ध्वं न चाधः प्रचरेत् कथञ्चित्।
आरुह्य वा वेश्म तथैव शून्यं स्थलं प्रकाशं कुशकाशहीनं। वागङ्गदोषान् परिहृत्य सर्व्वान् संमन्त्रयेत् कार्य्यमहीनकालं।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि मन्त्रणोपदेशे त्र्यशीतोऽध्यायः ॥ ८३ ॥

॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। बृहस्पतेश्च संवादं शक्रस्य च युधिष्ठिर।
॥ शक्र उवाच ॥ किंस्विदेकपदं ब्रह्मन् पुरुषः सम्यगाचरन्। प्रमाणं सर्व्वभूतानां यशश्चैवाप्नुयान्महत्।
॥ बृहस्पतिरुवाच ॥ सान्त्वमेकपदं शक्र पुरुषः सम्यगाचरन्। प्रमाणं सर्व्वभूतानां यशश्चैवाप्नुयान्महत्। २१८५
एतदेकपदं शक्र सर्व्वलोकसुखावहं। आचरन् सर्व्वभूतेषु प्रियो भवति सर्व्वदा।
यो हि नाभाषते किञ्चित् सर्व्वदा भ्रुकुटीमुखः। द्वेष्यो भवति भूतानां स सान्त्वमिह नाचरन्।
यस्तु सर्व्वमभिप्रेक्ष्य पूर्व्वमेवाभिभाषते। स्मितपूर्व्वाभिभाषी च तस्य लोकः प्रसीदति।
दानमेव हि सर्व्वत्र सान्त्वेनानभिजल्पितं। न प्रीणयति भूतानि निर्व्यञ्जनमिवाशनं।
आदानादपि भूतानां मधुरामीरयन् गिरं। सर्व्वलोकमिमं शक्र सान्त्वेन कुरुते वशे। २१९०
तस्मात् सान्त्वं प्रयोक्तव्यं दण्डमाधित्सताऽपि हि। फलञ्च जनयत्येवं न चास्योद्विजते जनः।
सुकृतेन हि सान्त्वस्य श्लक्ष्णस्य मधुरस्य च। सम्यगासेव्यमानस्य तुल्यं जातु न विद्यते।
॥ भीष्म उवाच ॥ इत्युक्तः कृतवान् सर्व्वं यथा शक्रः पुरोधसा। तथा त्वमपि कौन्तेय सम्यगेतत् समाचर।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि चतुरशीतोऽध्यायः ॥ ८४ ॥

॥ युधिष्ठिर उवाच ॥ कथं स्विदिह राजेन्द्र पालयन् पार्थिवः प्रजाः। प्रीतिं धर्म्मविशेषेण कीर्त्तिमाप्नोति शाश्वतीं।
॥ भीष्म उवाच ॥ व्यवहारेण शुद्धेन प्रजापालनतत्परः। प्राप्य धर्म्मञ्च कीर्त्तिञ्च लोकावाप्नोत्युभौ शुचिः। २१९५
॥ युधिष्ठिर उवाच ॥ कीदृशैर्व्यवहारैस्तु कैश्च व्यवहरेन्नृपः। एतत् पृष्टो महाप्राज्ञ यथावद्वक्तुमर्हसि।
ये चैव पूर्व्वकथिता गुणास्ते पुरुषं प्रति। नैकस्मिन् पुरुषे ह्येते विद्यन्त इति मे मतिः।
॥ भीष्म उवाच ॥ एवमेतन्महाप्राज्ञ यथा वदसि बुद्धिमान्। दुर्लभः पुरुषः कश्चिदेभिर्युक्तो गुणैः शुभैः।
किन्तु संक्षेपतः शीलं प्रयत्नेनेह दुर्लभं। वक्ष्यामि तु यथाऽमात्यान् यादृशांश्च करिष्यसि।
चतुरो ब्राह्मणान् वैद्यान् प्रगल्भान् स्नातकान् शुचीन्। क्षत्रियांश्च तथा चाष्टौ बलिनः शस्त्रपाणिनः। २२००
वैश्यान् वित्तेन सम्पन्नानेकविंशतिसंख्यया। त्रींश्च शूद्रान् विनीतांश्च शुचीन् कर्म्मणि पूर्व्वके।
अष्टाभिश्च गुणैर्युक्तं सूतं पौराणिकं तथा। पञ्चाशद्वर्षवयसं प्रगल्भमनसूयकं।
श्रुतिस्मृतिसमायुक्तं विनीतं समदर्शिनं। कार्य्ये विवदमानानां शक्तमर्थेष्वलोलुपं।
वर्ज्जितञ्चैव व्यसनैः सुघोरैः सप्तभिर्भृशं। अष्टानां मन्त्रिणां मध्ये मन्त्रं राजोपधारयेत्।
ततः सम्प्रेषयेद्राष्ट्रे राष्ट्रीयाय च दर्शयेत्। अनेन व्यवहारेण द्रष्टव्यास्ते प्रजाः सदा। २२०५

न चापि गूढं कार्य्यन्ते याच्यं कार्य्योपघातकं। कार्य्ये खलु विपन्ने त्वां योऽधर्म्मस्तांश्च पीडयेत्।
विद्रवेयुश्च राष्ट्रन्ते श्येनात् पक्षिगणा इव। परिस्रवेच्च सततं नौर्व्विशीर्णेव सागरे।
प्रजाः पालयतोऽसम्यगधर्म्मेणेह भूपतेः। हार्द्दं भयं सम्भवति स्वर्गश्चास्य विरुध्यते।
अथ योऽधर्म्मतः पाति राजामात्योऽथ वात्मजः। धर्म्मासने सन्नियुक्तो धर्म्ममूले नरर्षभ।
कार्य्येष्वधिकृताः सम्यगकुर्व्वन्तो नृपानुगाः। आत्मानं पुरतः कृत्वा यान्त्यधः सहपार्थिवाः। ३११०
बलात्कृतानां बलिभिः कृपणं बहु जल्पतां। नाथो वै भूमिपो नित्यमनाथानां नृपो भवेत्।
ततः साक्षिबलं साधु द्वैधवादकृतं भवेत्। असाक्षिकमनाथं वा परीक्ष्यं तद्विशेषतः।
अपराधानुरूपञ्च दण्डं पापेषु धारयेत्। वियोजयेद्धनैर्ऋद्धानधनानथ बन्धनैः।
विनयेच्चापि दुर्व्वृत्तान् प्रहारैरपि पार्थिवः। सान्त्वेनोपप्रदानेन शिष्टांश्च परिपालयेत्।
राज्ञो वधं चिकीर्षेद्यस्तस्य चित्रो वधो भवेत्। आदीपकस्य स्तेनस्य वर्णसङ्करिकस्य च। ३११५
सम्यक् प्रणयतो दण्डं भूमिपस्य विशाम्पते। युक्तस्य वा नास्त्यधर्म्मो धर्म्म एव हि शाश्वतः।
कामकारेण दण्डन्तु यः कुर्य्यादविचक्षणः। स इहाकीर्त्तिसंयुक्तो मृतो नरकमृच्छति।
न परस्य प्रवादेन परेषां दण्डमर्पयेत्। आगमानुगमं कृत्वा बध्नीयान्मोचयीत वा।
न तु हन्यान्नृपो जातु दूतं कस्याञ्चिदापदि। दूतस्य हन्ता निरयमाविशेत् सचिवैः सह।
यथोक्तवादिनं दूतं क्षत्रधर्म्मरतो नृपः। यो हन्यात् पितरस्तस्य भ्रूणहत्यामवाप्नुयुः। ३१२०
कुलीनः कुलसम्पन्नो वाग्मी दक्षः प्रियंवदः। यथोक्तवादी स्मृतिमान् दूतः स्यात् सप्तभिर्गुणैः।
एतैरेव गुणैर्युक्तः प्रतीहारोऽस्य रक्षिता। शिरोरक्षश्च भवति गुणैरेतैः समन्वितः।
धर्म्मशास्त्रार्थतत्त्वज्ञः सन्धिविग्रहिको भवेत्। मतिमान् धृतिमान् ह्रीमान् रहस्यविनिगूहिता।
कुलीनः सत्त्वसम्पन्नः शुक्लोऽमात्यः प्रशस्यते। एतैरेव गुणैर्युक्तस्तथा सेनापतिर्भवेत्।
व्यूहयन्त्रायुधानाञ्च तत्त्वज्ञो विक्रमान्वितः। वर्षशीतोष्णवातानां सहिष्णुः पररन्ध्रवित्। ३१२५
विश्वासयेत् परांश्चैव विश्वसेच्च न कस्यचित्। पुत्त्रेष्वपि हि राजेन्द्र विश्वासो न प्रशस्यते।
एतच्छास्त्रार्थतत्त्वन्तु मयाख्यातं तवानघ। अविश्वासो नरेन्द्राणां गुह्यं परममुच्यते।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि पञ्चाशीतोऽध्यायः॥ ८५ ॥
॥ युधिष्ठिर उवाच ॥ कथंविधं पुरं राजा स्वयमावस्तुमर्हति। कृतं वा कारयित्वा वा तन्मे ब्रूहि पितामह।
॥ भीष्म उवाच ॥ वस्तव्यं यत्र कौन्तेय सपुत्त्रज्ञातिबन्धुना। न्याय्यं तत्र परिप्रष्टुं वृत्तिं गुप्तिञ्च भारत।
तस्मात्ते वर्त्तयिष्यामि दुर्गकर्म्म विशेषतः। श्रुत्वा तथा विधातव्यमनुष्ठेयञ्च यत्नतः। ३१३०
षड्विधं दुर्गमास्थाय पुराण्यथ निवेशयेत्। सर्व्वसम्पत्प्रधानं यद्बाहुल्यञ्चापि सम्भवेत्।
धन्वदुर्गं महीदुर्गं गिरिदुर्गं तथैव च। मनुष्यदुर्गं मृद्दुर्गं वनदुर्गञ्च तानि षट्।
यत् पुरं दुर्गसम्पन्नं धान्यायुधसमन्वितं। दृढप्राकारपरिखं हस्त्यश्वरथसङ्कुलं।
विद्वांसः शिल्पिनो यत्र निचयाश्च सुसञ्चिताः। धार्म्मिकश्च जनो यत्र दाक्ष्यमुत्तममास्थितः।

ऊर्ज्जस्विनरनागाश्वं चत्वरापणशोभितं । प्रसिद्धव्यवहारञ्च प्रशान्तमकुतोभयं । ३२३५
सुप्रभं सानुनादञ्च सुप्रशस्तनिवेशनं । शूराढ्यजनसम्पन्नं ब्रह्मघोषानुनादितं ।
समाजोत्सवसम्पन्नं सदा पूजितदैवतं । वश्यामात्यबलो राजा तत्पुरं स्वयमाविशेत् ।
तत्र कोषं बलं मित्रं व्यवहारञ्च वर्द्धयेत् । पुरे जनपदे चैव सर्व्वदोषान्निवर्त्तयेत् ।
भाण्डागारायुधागारं प्रयत्नेनाभिवर्द्धयेत् । निचयान् वर्द्धयेत् सर्व्वांस्तथा यन्त्रायुधालयान् ।
काष्ठलोहतुषाङ्गारदारुशृङ्गास्थिवैणवान् । मज्जास्नेहवसाक्षौद्रमौषधग्राममेव च । ३२४०
शणं सर्ज्जरसं धान्यमायुधानि शरांस्तथा । चर्म्म स्नायुं तथा वेत्रं मुञ्जवल्वजबन्धनान् ।
आशयाश्चोदपानाश्च प्रभूतसलिलाकराः । निरोद्धव्याः सदा राज्ञा क्षीरिणश्च महीरुहाः ।
सत्कृताश्च प्रयत्नेन आचार्य्यर्त्विक्पुरोहिताः । महेष्वासाः स्थपतयः सांवत्सरचिकित्सकाः ।
प्राज्ञा मेधाविनो दान्ता दक्षाः शूरा बहुश्रुताः । कुलीनाः सत्त्वसम्पन्ना युक्ताः सर्व्वेषु कर्म्मसु ।
पूजयेद्धार्म्मिकान् राजा निगृह्णीयादधार्म्मिकान् । नियुञ्ज्याच्च प्रयत्नेन सर्व्ववर्णान् स्वकर्म्मसु । ३२४५
बाह्यमभ्यन्तरञ्चैव पौरजानपदं तथा । चारैः सुविदितं कृत्वा ततः कर्म्म प्रयोजयेत् ।
चरान् मन्त्रञ्च कोषञ्च दण्डञ्चैव विशेषतः । अनुतिष्ठेत् स्वयं राजा सर्व्वं ह्यत्र प्रतिष्ठितं ।
उदासीनारिमित्राणां सर्व्वमेव चिकीर्षितं । पुरे जनपदे चैव ज्ञातव्यं चारचक्षुषा ।
ततस्तेषां विधातव्यं सर्व्वमेवाप्रमादतः । भक्तान् पूजयता नित्यं द्विषतश्च निगृह्णता ।
यष्टव्यं क्रतुभिर्नित्यं दातव्यञ्चाप्यपीडया । प्रजानां रक्षणं कार्य्यं न कार्य्यं धर्म्मबाधकं । ३२५०
कृपणानाथवृद्धानां विधवानाञ्च योषितां । योगक्षेमञ्च वृत्तिञ्च नित्यमेव प्रकल्पयेत् ।
आश्रमेषु यथाकालं चैलभाजनभोजनं । सदैवोपहरेद्राजा सत्कृत्याभ्यर्च्य मान्य च ।
आत्मानं सर्व्वकार्य्याणि तापसे राष्ट्रमेव च । निवेदयेत् प्रयत्नेन तिष्ठेत् प्रह्वश्च सर्व्वदा ।
सर्व्वार्थत्यागिनं राजा कुले जातं बहुश्रुतं । पूजयेत्तादृशं दृष्ट्वा शयनासनभोजनैः ।
तस्मिन् कुर्व्वीत विश्वासं राजा कस्याञ्चिदापदि । तापसेषु हि विश्वासमपि कुर्व्वन्ति दस्यवः । ३२५५
तस्मिन्निधीनादधीत प्रज्ञां पर्य्याददीत च । न चाप्यभीक्ष्णं सेवेत भृशं वा प्रतिपूजयेत् ।
अन्यः कार्य्यः स्वराष्ट्रेषु परराष्ट्रेषु चापरः । अटवीषु परः कार्य्यः सामन्तनगरेष्वपि ।
तेषु सत्कारमानाभ्यां संविभागांश्च कारयेत् । परराष्ट्राटवीस्थेषु यथा स्वविषये तथा ।
ते कस्याञ्चिदवस्थायां शरणं शरणार्थिने । राज्ञे दद्युर्य्यथाकामं तापसाः संशितव्रताः ।
एष ते लक्षणोद्देशः सङ्क्षेपेण प्रकीर्त्तितः । यादृशे नगरे राजा स्वयमावस्तुमर्हति । ३२६०
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि दुर्गपरीक्षायां षडशीतोऽध्यायः ॥ ८६ ॥
॥ युधिष्ठिर उवाच ॥ राष्ट्रगुप्तिञ्च मे राजन् राष्ट्रस्यैव तु संग्रहं । सम्यग्जिज्ञासमानाय प्रब्रूहि भरतर्षभ ।
॥ भीष्म उवाच ॥ राष्ट्रगुप्तिञ्च ते सम्यग्राष्ट्रस्यैव तु संग्रहं । हन्त सर्व्वं प्रवक्ष्यामि तत्त्वमेकमनाः शृणु ।
ग्रामस्याधिपतिः कार्य्यो दशग्राम्यास्तथाऽपरः । द्विगुणायाः शतस्यैवं सहस्रस्य च कारयेत् ।

ग्रामेयान् ग्रामदोषांश्च ग्रामिकः प्रतिभावयेत् । तान् ब्रूयाद्दशपायासौ स तु विंशतिपाय वै ।
सोऽपि विंशत्यधिपतिर्वृत्तं जानपदे जने । ग्रामाणां शतपालाय सर्व्वमेव निवेदयेत् । ३२६५
यानि ग्राम्याणि भोज्यानि ग्रामिकस्तान्युपाश्नियात् । दशपस्तेन भर्त्तव्यस्तेनापि द्विगुणाधिपः ।
ग्रामं ग्रामशताध्यक्षो भोक्तुमर्हति सत्कृतः । महान्तं भरतश्रेष्ठ सुस्फीतं जनसङ्कुलं ।
तत्र ह्यनेकपायत्तं राज्ञो भवति भारत । शाखानगरमर्हस्तु सहस्रपतिरुत्तमः ।
धान्यं हिरण्यं भोगेन भोक्तुं राष्ट्रीयसङ्गतः । तेषां सङ्ग्रामकृत्यं स्याद्ग्रामकृत्यञ्च तेषु यत् ।
धर्म्मज्ञः सचिवः कश्चित्तत् प्रपश्येदतन्द्रितः । नगरे नगरे वा स्यादेकः सर्व्वार्थचिन्तकः । ३२७०
उच्चैः स्थाने घोररूपो नक्षत्राणामिव ग्रहः । भवेत् स तान् परिक्रामेत् सर्व्वानेव सभासदः ।
तेषां वृत्तिं परिणयेत् कश्चिद्राष्ट्रेषु तच्चरः । जिघांसवः पापकामाः परस्वादायिनः शठाः ।
रक्षाभ्यधिकृता नाम तेभ्यो रक्षेदिमाः प्रजाः । विक्रयं क्रयमध्वानं भक्तञ्च सपरिच्छदं ।
योगक्षेमञ्च सम्प्रेक्ष्य वणिजां कारयेत् करान् । उत्पत्तिं दानवृत्तिञ्च शिल्पं सम्प्रेक्ष्य चासकृत् ।
शिल्पं प्रति करानेवं शिल्पिनः प्रतिकारयेत् । उच्चावचकरा दाप्याः महाराज्ञा युधिष्ठिर । ३२७५
यथा यथा न सीदेरंस्तथा कुर्य्यान्महीपतिः । फलं कर्म्म च सम्प्रेक्ष्य ततः सर्व्वं प्रकल्पयेत् ।
फलं कर्म्म च निर्हेतु न कश्चित् सम्प्रवर्त्तते । यथा राजा च कर्त्ता च स्यातां कर्म्मणि भागिनौ ।
समवेक्ष्य तथा राज्ञा प्रणेयाः सततं कराः । नोच्छिन्द्यादात्मनो मूलं परेषाञ्चापि तृष्णया ।
ईहाद्वाराणि संरुध्य राजा सम्प्रीतिदर्शनः । प्रद्विषन्ति परिख्यातं राजानमतिखादिनं ।
प्रद्विष्टस्य कुतः श्रेयो नाप्रियो लभते फलं । वत्सौपम्येन दोग्धव्यं राष्ट्रमक्षीणबुद्धिना । ३२८०
भृतो वत्सो जातबलः पीडां सहति भारत । न कर्म्म कुरुते वत्सो भृशं दुग्धो युधिष्ठिर ।
राष्ट्रमप्यतिदुग्धं हि न कर्म्म कुरुते महत् । यो राष्ट्रमनुगृह्णाति परिरक्षन् स्वयं नृपः ।
सञ्जातमुपजीवन् स लभते च महत् फलं । आपदर्थञ्च निर्यातं राजा न इह विन्दते ।
राष्ट्रञ्च कोषभूतं स्यात् कोषो वेश्मगतस्तथा । पौरजानपदान् सर्व्वान् संश्रितोपाश्रितांस्तथा ।
यथाशक्त्यनुकम्पेत सर्व्वान् स्वल्पधनानपि । बाह्यं जनं भेदयित्वा भोक्तव्यो मध्यमः सुखं । ३२८५
एवं नास्य प्रकुप्यन्ति जनाः सुखितदुःखिताः । प्रागेव तु धनादानमनुभाष्य ततः पुनः ।
सन्निपत्य स्वविषये भयं राष्ट्रेषु दर्शयेत् । इयमापत् समुत्पन्ना परचक्रभयं महत् ।
अपि चान्ताय कल्पन्ते वेणोरिव फलागमः । अरयो मे समुत्थाय बहुभिर्दस्युभिः सह ।
इदमात्मवधायैव राष्ट्रमिच्छन्ति बाधितुं । अस्यामापदि घोरायां सम्प्राप्ते दारुणे भये ।
परित्राणाय भवतः प्रार्थयिष्ये धनानि वः । प्रतिदास्ये च भवतां सर्व्वञ्चाहं भयक्षये । ३२९०
नारयः प्रतिदास्यन्ति यद्धरेयुर्बलादितः । कलत्रमादितः कृत्वा सर्व्वं वो विनशेदिति ।
अपि चेत् पुत्त्रदारार्थमर्थसञ्चय इष्यते । नन्दामि वः प्रभावेण पुत्त्राणामिव चोदये ।
यथाशक्त्युपगृह्णामि राष्ट्रस्यापीडया च वः । आपत्स्वेव हि वोढव्यं भवद्भिः पुङ्गवैरिव ।

न प्रियं सततं कार्य्यं धनं कस्याञ्चिदापदि । इति वाचा मधुरया श्लक्ष्णया सोपचारया ।
स्वरश्मीनभ्यवसृजेद्योगमाधाय कालवित् । प्राकारं भृत्यभरणं व्ययं सङ्ग्रामतो भयं । ३२९५
योगक्षेमञ्च सम्प्रेक्ष्य गोमिनः कारयेत् करं । उपेक्षिता हि नश्येयुर्गोमिनोऽरण्यवासिनः ।
तस्मात्तेषु विशेषेण मृदुपूर्व्वं समाचरेत् । सान्त्वनं रक्षणं दानमवस्था चाप्यभीक्ष्णशः ।
गोमिनां पार्थ कर्त्तव्यः संविभागः प्रियाणि च । अजस्रमुपयोक्तव्यं फलं गोमिषु भारत ।
प्रभावयन्ति राष्ट्रञ्च व्यवहारं कृषिन्तथा । तस्माद्गोमिषु यत्नेन प्रीतिं कुर्य्याद्विचक्षणः ।
दयावानप्रमत्तश्च करान् सम्प्रणयेन्मृदून् । सर्व्वत्र क्षेमचरणं सुलभं नाम गोमिषु । ३३००
न ह्यतः सदृशं किञ्चिद्धनमस्ति युधिष्ठिर ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि सप्ताशीतोऽध्यायः ॥ ८७ ॥

॥ युधिष्ठिर उवाच ॥ यदा राजा समर्थोऽपि कोषार्थी स्यान्महामते । कथं प्रवर्त्तेत तदा तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ यथादेशं यथाकालं यथाबुद्धि यथाबलं । अनुशिष्यात् प्रजा राजा धर्म्मार्थी तद्धिते रतः ।
यथा तासाञ्च मन्येत श्रेय आत्मन एव च । तथा कर्म्माणि सर्व्वाणि राजा राष्ट्रेषु वर्त्तयेत् ।
मधुदोहं दुहेद्राष्ट्रं भ्रमरा इव पादपं । वत्सापेक्षी दुहेच्चैव स्तनांश्च न विकुट्टयेत् । ३३०५
जलौकावत् पिबेद्राष्ट्रं मृदुनैव नराधिपः । व्याघ्रीव च हरेत् पुत्रान् सन्दशेन्न च पीडयेत् ।
यथा शल्यकवानाखुः पदं धूनयते सदा । अतीक्ष्णेनाभ्युपायेन तथा राष्ट्रं समापिबेत् ।
अल्पेनाल्पेन देयेन वर्द्धमानं प्रदापयेत् । ततो भूयस्ततो भूयः क्रमवृद्धिं समाचरेत् ।
दमयन्निव दम्यानि शश्वद्भारं विवर्द्धयेत् । मृदुपूर्व्वं प्रयत्नेन पाशानभ्यवहारयेत् ।
सकृत्पाशावकीर्णास्ते न भविष्यन्ति दुर्द्दमाः । उचितेनैव भोक्तव्या न भविष्यन्ति यत्नतः । ३३१०
तस्मात् सर्व्वसमारम्भो दुर्लभः पुरुषं प्रति । यथामुख्यान् सान्त्वयित्वा भोक्तव्य इतरो जनः ।
ततस्तान् भेदयित्वा तु परस्परविवक्षितान् । भुञ्जीत सान्त्वयंश्चैव यथासुखमयत्नतः ।
न चास्थाने न चाकाले करांस्तेभ्यो निपातयेत् । आनुपूर्व्व्येण सान्त्वेन यथाकालं यथाविधि ।
उपायान् प्रब्रवीम्येतान्न मे माया विवक्षिता । अनुपायेन दमयन् प्रकोपयति वाजिनः ।
पानागारनिवेशाश्च वेश्याः प्रापणिकास्तथा । कुशीलवाः सकितवा ये चान्ये केचिदीदृशाः । ३३१५
नियम्याः सर्व्व एवैते ये राष्ट्रस्योपघातकाः । एते राष्ट्रेऽभितिष्ठन्तो बाधन्ते भद्रिकाः प्रजाः ।
न केनचिद्याचितव्यः कश्चित् कस्याञ्चिदापदि । इति व्यवस्था भूतानां पुरस्तान्मनुना कृता ।
सर्व्वे तथाऽनुजीवेयुर्न कुर्य्युः कर्म्म चेदिह । सर्व्व एव इमे लोका न भवेयुरसंशयं ।
प्रभुर्नियामने राजा य एतान्न नियच्छति । भुङ्क्ते स तस्य पापस्य चतुर्भागमिति श्रुतिः ।
भोक्ता तस्य तु पापस्य सुकृतस्य यथा तथा । नियन्तव्याः सदा राज्ञा पापा ये स्युर्नराधिप । ३३२०
कृतपापस्त्वसौ राजा य एतान्न नियच्छति । यथा कृतस्य धर्म्मस्य चतुर्भागमुपाश्नुते ।
स्थानान्येतानि संयम्य प्रसङ्गो भूतिनाशनः । कामप्रसक्तः पुरुषः किमकार्य्यं विवर्ज्जयेत् ।

मद्यमांसपरस्वानि तथा दारा धनानि च । आहरेद्रागवशगस्तथा शास्त्रं प्रवर्त्तयेत् ।
आपद्येव तु याचेरन् येषां नास्ति परिग्रहः । दातव्यं धर्म्मतस्तेभ्यस्त्वनुक्रोशाद्भयान्न तु ।
मा ते राष्ट्रे याचनका भूवन्मा चापि दस्यवः । एषां दातार एवैते नैते भूतस्य भावकाः ।    ३३२५
ये भूतान्यनुगृह्णन्ति वर्द्धयन्ति च ये प्रजाः । ते ते राष्ट्रेषु वर्त्तन्तां मा भूतानामभावकाः ।
दण्ड्यास्ते च महाराज धनादानप्रयोजकाः । प्रयोगं कारयेयुस्तान् यथा बलिकरांस्तथा
कृषिगोरक्ष्यवाणिज्यं यच्चान्यत् किञ्चिदीदृशं । पुरुषैः कारयेत् कर्म्म बहुभिः कर्म्मभेदतः ।
नरश्चेत् कृषिगोरक्ष्यवाणिज्यञ्चाप्यनुष्ठितः । संशयं लभते किञ्चित्तेन राजा विगर्ह्यते ।
धनिनः पूजयेन्नित्यं पानाच्छादनभोजनैः । वक्तव्याश्चानुगृह्णीध्वं प्रजाः सह मयेति वै ।    ३३३०
षडङ्गमेतन्महद्राज्ये धनिनो नाम भारत । ककुदं सर्व्वभूतानां धनस्थो नात्र संशयः ।
प्राज्ञः शूरो धनस्थश्च स्वामी धार्म्मिक एव च । तपस्वी सत्यवादी च बुद्धिमांश्चापि रक्षति ।
तस्मात् सर्व्वेषु भूतेषु प्रीतिमान् भव पार्थिव । सत्यमार्ज्जवमक्रोधमानृशंस्यञ्च पालय ।
एवं दण्डञ्च कोषञ्च मित्रं भूमिञ्च लप्स्यसि । सत्यार्ज्जवपरो राजन्मित्रकोषबलान्वितः ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि अष्टाशीतोऽध्यायः ॥ ८८ ॥

॥ भीष्म उवाच ॥ वनस्पतीन् भक्ष्यफलान्न च्छिन्द्युर्व्विषये तव । ब्राह्मणानां मूलफलं धर्म्ममाहुर्म्मनीषिणः ।    ३३३५
ब्राह्मणेभ्योऽतिरिक्तञ्च भुञ्जीरन्नितरे जनाः । न ब्राह्मणापराधेन हरेदन्यः कथञ्चन ।
विप्रश्चेत्त्यागमातिष्ठेदात्मार्थे वृत्तिकर्षितः । परिकल्प्याऽस्य वृत्तिः स्यात् सदारस्य नराधिप ।
स चेन्नोपनिवर्त्तेत वाच्यो ब्राह्मणसंसदि । कस्मिन्निदानीं मर्य्यादामयं लोकः करिष्यति ।
असंशयं निवर्त्तेत न चेद्वक्ष्यत्यतः परं । पूर्व्वं परोक्षं वक्तव्यमेतत् कौन्तेय शाश्वतं ।
आहुरेतज्जना ब्रह्मन् न चैतत् श्रद्दधाम्यहं । निमन्त्र्यश्च भवेद्भोगैरवृत्त्या चेत्तदाचरेत् ।    ३३४०
कृषिगोरक्ष्यवाणिज्यं लोकानामिह जीवनं । ऊर्द्ध्वञ्चैव त्रयी विद्या सा भूतान् भावयत्युत ।
तस्यां प्रयतमानायां ये स्युस्तत्परिपन्थिनः । दस्यवस्तद्वधायेह ब्रह्मा क्षत्रमथासृजत् ।
अमून् जय प्रजा रक्ष यजस्व क्रतुभिर्नृप । युध्यस्व समरे वीरो भूत्वा कौरवनन्दन ।
संरक्ष्यान् पालयेद्राजा स राजा राजसत्तमः । ये केचित्तान्न रक्षन्ति तैरर्थो नास्ति कश्चन ।
सदैव राज्ञा बोद्धव्यं सर्व्वलोकाद्युधिष्ठिर । तस्माद्धेतोर्हि भुञ्जीत मनुष्यानेव मानवः ।    ३३४५
आन्तरेभ्यः परान् रक्षन् परेभ्यः पुनरान्तरान् । परान् परेभ्यः स्वान् स्वेभ्यः सर्व्वान् पालय नित्यदा ।
आत्मानं सर्व्वतो रक्षन् राजा रक्षेत मेदिनीं । आत्ममूलमिदं सर्व्वमाहुर्व्वै विदुषो जनाः ।
किं छिद्रं कोऽनुषक्तो मे किं वाऽस्त्यविनिपातितं । कुतो मामाश्रयेद्दोष इति नित्यं विचिन्तयेत् ।
अतीतदिवसे वृत्तं प्रशंसन्ति न वा पुनः । गुप्तैश्चारैरनुमतैः पृथिवीमनुचारयेत् ।
जानीयुर्यदि मे वृत्तं प्रशंसन्ति न वा पुनः । कच्चिद्रोचेज्जनपदे कच्चिद्राष्ट्रे च मे यशः ।    ३३५०
धर्म्मज्ञानं धृतिमतां सङ्ग्रामेष्वपलायिनां । राष्ट्रे तु येन जीवन्ति ये तु राज्ञो न जीविनः ।

अमात्यानाञ्च सर्व्वेषां मध्यस्थानाञ्च सर्व्वशः । ये च त्वाभिप्रशंसेयुर्निन्देयुरथ वा पुनः ।
सर्व्वान् सुपरिणीतांस्तान् कारयेथा युधिष्ठिर । एकान्तेन हि सर्व्वेषां न शक्यं तात रोचितुं।
मित्रामित्रमथो मध्यं सर्व्वभूतेषु भारत ।

॥ युधिष्ठिर उवाच ॥ तुल्यबाहुबलानाञ्च तुल्यानाञ्च गुणैरपि । कथं स्यादधिकः कश्चित् स च भुञ्जीत मानवान् । ३३११

॥ भीष्म उवाच ॥ यचरा ह्यचरानद्युरदंष्ट्रान् दंष्ट्रिणस्तथा । आशीविष इव क्रुद्धा भुजगान् भुजगा इव ।
एतेभ्यश्चाप्रमत्तः स्यात् सदा शत्रोर्युधिष्ठिर । भारुण्डसदृशा ह्येते निपतन्ति प्रमादतः ।
कच्चित्ते वणिजो राष्ट्रे नोद्विजन्ति करार्द्दिताः । क्रीणन्तो बहुनाऽल्पेन कान्तारकृतविश्रमाः ।
कच्चित् कृषिकरा राष्ट्रं न जहत्यतिपीडिताः । ये वहन्ति धुरं राज्ञां ते तरन्तीतरानपि ।
इतो दत्तेन जीवन्ति देवाः पितृगणास्तथा । मानुषोरगरक्षांसि वयांसि पशवस्तथा । ३३१०
एषा ते राष्ट्रवृत्तिश्च राज्ञां गुप्तिश्च भारत । एतमेवार्थमाश्रित्य भूयो वक्ष्यामि पाण्डव ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि राष्ट्रगुप्तौ ऊननवतितमोऽध्यायः ॥ ८९ ॥

॥ भीष्म उवाच ॥ यानङ्गिराः क्षत्रधर्म्मानुतथ्यो ब्रह्मवित्तमः । मान्धात्रे यौवनाश्वाय प्रीतिमानभ्यभाषत ।
स यथाऽनुशशासैनमुतथ्यो ब्रह्मवित्तमः । तत्ते सर्व्वं प्रवक्ष्यामि निखिलेन युधिष्ठिर ।

॥ उतथ्य उवाच ॥ धर्म्माय राजा भवति न कामकरणाय तु । मान्धातरिति जानीहि राजा लोकस्य रक्षिता ।
राजा चरति चेद्धर्म्मं देवत्वायैव कल्पते । स चेदधर्म्मं चरति नरकायैव गच्छति । ३३१५
धर्म्मे तिष्ठन्ति भूतानि धर्म्मो राजनि तिष्ठति । तं राजा साधु यः शास्ति स राजा पृथिवीपतिः ।
राजा परमधर्म्मात्मा लक्ष्मीवान् धर्म्म उच्यते । देवाश्च गर्हां गच्छन्ति धर्म्मो नास्तीति चोच्यते ।
अधर्म्मे वर्त्तमानानामर्थसिद्धिः प्रदृश्यते । तदेव मङ्गलं लोकः सर्व्वः समनुवर्त्तते ।
उच्छिद्यते धर्म्मवृत्तमधर्म्मो वर्त्तते महान् । भयमाहुर्दिवारात्रं यदा पापो न वार्य्यते ।
ममेदमिति नैवैतत् साधूनां तात धर्म्मतः । न वै व्यवस्था भवति यदा पापो न वार्य्यते । ३३२०
नैव भार्य्या न पशवो न क्षेत्रं न निवेशनं । सन्दृश्येत मनुष्याणां यदा पापबलं भवेत् ।
देवाः पूजां न जानन्ति न स्वधा पितरस्तदा । न पूज्यन्ते ह्यतिथयो यदा पापो न वार्य्यते ।
न वेदानधिगच्छन्ति व्रतवन्तो द्विजातयः । न यज्ञांस्तन्वते विप्रा यदा पापो न वार्य्यते ।
वृद्धानामिव सत्त्वानां मनो भवति विह्वलं । मनुष्याणां महाराज यदा पापो न वार्य्यते ।
उभौ लोकावभिप्रेक्ष्य राजानमृषयः स्वयं । असृजन् सुमहद्भूतमयं धर्म्मो भविष्यति । ३३२५
यस्मिन् धर्म्मो विराजेत तं राजानं प्रचक्षते । यस्मिन् विलीयते धर्म्मस्तं देवा वृषलं विदुः ।
वृषो हि भगवान् धर्म्मो यस्तस्य कुरुते ह्यलं । वृषलं तं विदुर्द्देवास्तस्माद्धर्म्मं विवर्द्धयेत् ।
धर्म्मे वर्द्धति वर्द्धन्ति सर्व्वभूतानि सर्व्वदा । तस्मिन् ह्रसति हीयन्ते तस्माद्धर्म्मं न लोपयेत् ।
धनात् स्रवति धर्म्मो हि धारणादेति निश्चयः । अकार्य्याणां मनुष्येन्द्र स सीमान्तकरः स्मृतः ।
प्रभवार्थं हि भूतानां धर्म्मः सृष्टः स्वयम्भुवा । तस्मात् प्रवर्त्तयेद्धर्म्मं प्रजानुग्रहकारणात् । ३३३०

तस्माद्धि राजशार्दूल धर्म्मः श्रेष्ठतरः स्मृतः। स राजा यः प्रजाः शास्ति साधुकृत् पुरुषर्षभः।
कामक्रोधावनादृत्य धर्म्ममेवानुपालय। धर्म्मः श्रेयस्करतमो राज्ञां भरतसत्तम।
धर्म्मस्य ब्राह्मणो योनिस्तस्मात्तान् पूजयेत् सदा। ब्राह्मणानाञ्च मान्धातः कुर्य्यात् कामानमत्सरी।
तेषां ह्यकामकरणाद्राज्ञः सञ्जायते भयं। मित्राणि न च वर्द्धन्ते तथाऽमित्रीभवन्त्यपि।
ब्राह्मणानां सदाऽसूयाद्बाल्याद्वैरोचनो बलिः। अथाऽस्माच्छ्रीरपाक्रामद्याऽस्मिन्नासीत् प्रतापिनी। ३३८५
ततस्तस्मादपाक्रम्य साऽगच्छत् पाकशासनं। अथ सोऽन्वतपत् पश्चात् श्रियं दृष्ट्वा पुरन्दरे।
एतत् फलमसूयाया अभिमानस्य वा विभो। तस्माद्बुध्यस्व मान्धातर्म्मा त्वां जह्यात् प्रतापिनी।
दर्पो नाम श्रियः पुत्रो जज्ञेऽधर्म्मादिति श्रुतिः। तेन देवासुरा राजन्नीताः सुबहवो वशं।
राजर्षयश्च बहवस्तथा बुध्यस्व पार्थिव। राजा भवति तं जित्वा दासस्तेन पराजितः।
स यथा दर्पसहितमधर्म्मं नानुसेवसे। तथा वर्त्तस्व मान्धातश्चिरं चेत् स्थातुमिच्छसि। ३३९०
मत्तात् प्रमत्तात् पौगण्डादुन्मत्ताच्च विशेषतः। तदभ्यासादुपावर्त्तं संहितानाञ्च सेवनात्।
निगृहीतादमात्याच्च स्त्रीभ्यश्चैव विशेषतः। पर्व्वताद्विषमाद्दुर्गाद्धस्तिनोऽश्वात् सरीसृपात्।
एतेभ्यो नित्ययुक्तः स्यान्नक्तचर्य्याञ्च वर्ज्जयेत्। अत्यागञ्चाभिमानञ्च दम्भं क्रोधञ्च वर्ज्जयेत्।
अविज्ञातासु च स्त्रीषु क्लीवासु स्वैरिणीषु च। परभार्य्यासु कन्यासु नाचरेन्मैथुनं नृप।
कुलेषु पापरक्षांसि जायन्ते वर्णसङ्करात्। अपुमांसोऽङ्गहीनाश्च स्थूलजिह्वा विचेतसः। ३३९५
एते चान्ये च जायन्ते यदा राजा प्रमाद्यति। तस्माद्राज्ञा विशेषेण वर्त्तितव्यं प्रजाहिते।
क्षत्रियस्य प्रमत्तस्य दोषः सञ्जायते महान्। अधर्म्माः सम्प्रवर्द्धन्ते प्रजासङ्करकारकाः।
अशीते विद्यते शीतं शीते शीतं न विद्यते। अवृष्टिरतिवृष्टिश्च व्याधिश्चाप्याविशेत् प्रजाः।
नक्षत्राण्युपतिष्ठन्ति ग्रहा घोरास्तथागते। उत्पाताश्चात्र दृश्यन्ते बहवो राजनाशनाः।
अरक्षितात्मा यो राजा प्रजाश्चापि न रक्षति। प्रजाश्च तस्य क्षीयन्ते ततः सोऽनु विनश्यति। ३४००
द्वावाददाते ह्येकस्य द्वयोः सुबहवोऽपरे। कुमार्य्यः सम्प्रलुप्यन्ते तदाहुर्नृपदूषणं।
ममेदमिति नैकस्य मनुष्येष्ववतिष्ठति। त्यक्त्वा धर्म्मं यदा राजा प्रमादमनुतिष्ठति।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि उतथ्यगीतासु नवतितमोऽध्यायः ॥ ९० ॥
॥ उतथ्य उवाच ॥ कालवर्षी च पर्ज्जन्यो धर्म्मचारी च पार्थिवः। सम्पद्यदैषा भवति सा बिभर्त्ति सुखं प्रजाः।
यो न जानाति निर्हन्तुं वस्त्राणां रजको मलं। रक्तानां वा शोधयितुं यथा नास्ति तथैव सः।
एवमेतद्द्विजेन्द्राणां क्षत्रियाणां विशां तथा। शूद्रश्चतुर्थो वर्णानां नानाकर्म्मस्ववस्थितः। ३४०५
कर्म्म शूद्रे कृषिर्वैश्ये दण्डनीतिश्च राजनि। ब्रह्मचर्य्यं तपो मन्त्राः सत्यञ्चापि द्विजातिषु।
तेषां यः क्षत्रियो वेद वस्त्राणामिव शोधनं। शीलदोषान् विनिर्हन्तुं स पिता स प्रजापतिः।
कृतं त्रेता द्वापरश्च कलिश्च भरतर्षभ। राजवृत्तानि सर्व्वाणि राजैव युगमुच्यते।
चातुर्व्वर्ण्यं तथा वेदाश्चातुराश्रम्यमेव च। सर्व्वं प्रमुह्यते ह्येतद्यदा राजा प्रमाद्यति।

अग्नित्रेता त्रयी विद्या यज्ञाश्च सहदक्षिणाः। सर्व्व एव प्रमाद्यन्ति यदा राजा प्रमाद्यति। ३४१०

राजैव कर्त्ता भूतानां राजैव च विनाशकः। धर्म्मात्मा यः स कर्त्ता स्यादधर्म्मात्मा विनाशकः।

राज्ञो भार्य्याश्च पुत्राश्च बान्धवाः सुहृदस्तथा। समेत्य सर्व्वे शोचन्ति यदा राजा प्रमाद्यति।

हस्तिनोऽश्वाश्च गावश्चाप्युष्ट्राश्वतरगर्द्दभाः। अधर्म्मभूते नृपतौ सर्व्वे सीदन्ति जन्तवः।

दुर्ब्बलार्थं बलं सृष्टं धात्रा मान्धातरुच्यते। अबलन्तु महद्भूतं यस्मिन् सर्व्वं प्रतिष्ठितं।

यच्च भूतं सम्भजते ये च भूतास्तदन्वयाः। अधर्म्मस्थे हि नृपतौ सर्व्वे शोचन्ति पार्थिव। ३४१५

दुर्ब्बलस्य च यच्चक्षुर्मुनेराशीविषस्य च। अविषह्यतमं मन्ये मास्म दुर्ब्बलमासदः।

दुर्ब्बलांस्तात बुध्येथा नित्यमेवाविमानितान्। मा त्वां दुर्ब्बलचक्षूंषि प्रदहेयुः सबान्धवं।

न हि दुर्ब्बलदग्धस्य कुले किञ्चित् प्ररोहति। आमूलं निर्द्दहत्येव मास्म दुर्ब्बलमासदः।

अबलं वै बलात् श्रेयो यच्चातिबलवद्बलं। बलस्याबलदग्धस्य न किञ्चिदवशिष्यते।

विमानितो हतः क्रुष्टस्त्रातारञ्चेन्न विन्दति। अमानुषकृतस्तत्र दण्डो हन्ति नराधिपं। ३४२०

मास्म तात बले स्थित्वा भुञ्जीथा दुर्ब्बलं जनं। मा त्वां दुर्ब्बलचक्षूंषि दहन्त्वग्निरिवाश्रयं।

यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदतां। तानि पुत्रान् पशून् घ्नन्ति तेषां मिथ्याभिशंसनात्।

यदि नात्मनि पुत्रेषु न चेत् पौत्रेषु नप्तृषु। न हि पापं कृतं कर्म्म सद्यः फलति गौरिव।

यत्राबलो वध्यमानस्त्रातारं नाधिगच्छति। महान् दैवकृतस्तत्र दण्डः पतति दारुणः।

युक्ता यदा जनपदा भिक्षन्ते ब्राह्मणा इव। अभीक्ष्णं भिक्षुरूपेण राजानं घ्नन्ति तादृशाः। ३४२५

राज्ञो यदा जनपदे बहवो राजपूरुषाः। अनयेनोपवर्त्तन्ते तद्राज्ञः किल्विषं महत्।

यदाऽयुक्ता नयन्त्यर्थान् कामादर्थवशेन वा। कृपणं याचमानानां तद्राज्ञो वैशसं महत्।

महान् वृक्षो जायते वर्द्धते च तञ्चैव भूतानि समाश्रयन्ति। यदा वृक्षश्छिद्यते दह्यते च तदाश्रया अनिकेता भवन्ति।

यदा राष्ट्रे धर्म्ममग्र्यं चरन्ति संस्कारं वा राजगुणं ब्रुवाणाः। तैरेवाधर्म्मश्चरितो धर्म्ममोहात्तूर्णं जह्यात् सुकृतं दुष्कृतं वा।

यत्र पापा ज्ञायमानाश्चरन्ति सतां कलिर्विन्दते तत्र राज्ञः। यदा राजा शास्ति नरानशिष्टांस्तदा राज्यं वर्द्धते भूमिपस्य। ३४३०

यश्चामात्यान्मानयित्वा यथार्हं मन्त्रे च युद्धे च नृपो नियुञ्ज्यात्। विवर्द्धते तस्य राष्ट्रं नृपस्य भुङ्क्ते महीं चाप्यखिलां चिराय।

यश्चापि सुकृतं कर्म्म वाचञ्चैव सुभाषितां। समीक्ष्य पूजयन्राजा धर्म्ममाप्नोत्यनुत्तमं।

संविभज्य यदा भुङ्क्ते नामात्यानवमन्यते। निहन्ति बलिनं दृप्तं स राज्ञो धर्म्म उच्यते।

त्रायते हि यदा सर्व्वं वाचा कायेन कर्म्मणा। पुत्रस्यापि न मृष्येच्च स राज्ञो धर्म्म उच्यते।

संविभज्य यदा भुङ्क्ते नृपतिर्दुर्ब्बलान्नरान्। तदा भवन्ति बलिनः स राज्ञो धर्म्म उच्यते। ३४३५

यदा रक्षति राष्ट्राणि यदा दस्यूनपोहति । यदा जयति सङ्ग्रामे स राज्ञो धर्म्म उच्यते ।
पापमाचरतो यत्र कर्म्मणा व्याहृतेन वा । प्रियस्यापि न मृष्येत स राज्ञो धर्म्म उच्यते ।
यदा शारणिकान् राजा पुत्त्रवत् परिरक्षति । भिनत्ति च न मर्य्यादां स राज्ञो धर्म्म उच्यते ।
यदाप्तदक्षिणैर्यज्ञैर्यजते श्रद्धयाऽन्वितः । कामद्वेषावनादृत्य स राज्ञो धर्म्म उच्यते ।
कृपणानाथवृद्धानां यदाऽश्रु परिमार्ज्जति । हर्षं सञ्जनयन् नृणां स राज्ञो धर्म्म उच्यते ।  ३३४०
विवर्द्धयति मित्राणि तथाऽरींश्चापकर्षति । सम्पूजयति साधूंश्च स राज्ञो धर्म्म उच्यते ।
सत्यं पालयति प्रीत्या नित्यं भूमिं प्रयच्छति । पूजयेदतिथीन् भृत्यान् स राज्ञो धर्म्म उच्यते ।
निग्रहानुग्रहौ चोभौ यत्र स्यातां प्रतिष्ठितौ । अस्मिन् लोके परे चैव राजा स प्राप्नुते फलं ।
यमो राजा धार्म्मिकाणां मान्धातः परमेश्वरः । संयच्छन् भवति प्राणानसंयच्छंस्तु पापकः ।
ऋत्विक्पुरोहिताचार्य्यान् सत्कृत्यानवमन्य च । यदा सम्यक् प्रगृह्णाति स राज्ञो धर्म्म उच्यते ।  ३३४५
यमो यच्छति भूतानि सर्व्वाण्येवाविशेषतः । तथा राज्ञाऽनुकर्त्तव्यं यन्तव्या विधिवत् प्रजाः ।
सहस्राक्षेण राजा हि सर्व्वथैवोपमीयते । स पश्यति च यं धर्म्मं स धर्म्मः पुरुषर्षभ ।
अप्रमादेन शिक्षेथाः क्षमां बुद्धिं धृतिं मतिं । भूतानां सत्त्वजिज्ञासा साध्वसाधु च सर्व्वदा ।
सङ्ग्रहः सर्व्वभूतानां दानञ्च मधुरं वचः । पौरजानपदाश्चैव गोप्तव्यास्ते यथासुखं ।
न जात्वदक्षो नृपतिः प्रजाः शक्नोति रक्षितुं । भारो हि सुमहांस्तात राज्यं नाम सुदुष्करं ।  ३३५०
तद्दण्डविन्नृपः प्राज्ञः शूरः शक्नोति रक्षितुं । न हि शक्यमदण्डेन क्लीवेनाबुद्धिनाऽपि वा ।
अभिरूपैः कुले जातैर्दक्षैर्भक्तैर्बहुश्रुतैः । सर्व्वा बुद्धीः परीक्षेथास्तापसाश्रमिणामपि ।
अतस्त्वं सर्व्वभूतानां धर्म्मं वेत्स्यसि वै परं । स्वदेशे परदेशे वा न ते धर्म्मो विनङ्क्ष्यति ।
तस्मादर्थाच्च कामाच्च धर्म्म एवोत्तरोऽभवत् । अस्मिन् लोके परे चैव धर्म्मात्मा सुखमेधते ।
त्यजन्ति दारान् पुत्त्रांश्च मनुष्याः परिपूजिताः । सङ्ग्रहश्चैव भूतानां दानञ्च मधुरा च वाक् ।  ३३५५
अप्रमादश्च शौचञ्च राज्ञो भूतिकरं महत् । एतेभ्यश्चैव मान्धातः सततं मा प्रमादिथाः ।
अप्रमत्तो भवेद्राजा छिद्रदर्शी परात्मनोः । नास्य छिद्रं परः पश्येच्छिद्रेषु परमन्वियात् ।
एतद्वृत्तं वासवस्य यमस्य वरुणस्य च । राजर्षीणाञ्च सर्व्वेषां तत्त्वमप्यनुपालय ।
तत् कुरुष्व महाराज वृत्तं राजर्षिसेवितं । आतिष्ठ दिव्यं पन्थानमह्नाय भरतर्षभ ।
धर्म्मवृत्तं हि राजानं प्रेत्य चेह च भारत । देवर्षिपितृगन्धर्व्वाः कीर्त्तयन्ति महौजसः ।  ३३६०
॥ भीष्म उवाच ॥ स एवमुक्तो मान्धाता तेनोतथ्येन भारत । कृतवानविशङ्कस्तु एकः प्राप च मेदिनीं ।
भवानपि तथा सम्यक् मान्धातेव महीपते । धर्म्मं कृत्वा महीं रक्ष स्वर्गे स्थानमवाप्स्यसि ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि उतथ्यगीतासु एकनवतोऽध्यायः ॥ ९१ ॥
॥ युधिष्ठिर उवाच ॥ कथं धर्म्मे स्थातुमिच्छन् राजा वर्त्तेत धार्म्मिकः । पृच्छामि त्वां कुरुश्रेष्ठ तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । गीतं दृष्टार्थतत्त्वेन वामदेवेन धीमता ।

राजा वसुमना नाम ज्ञानवान् धृतिमान् शुचिः । महर्षिं परिपप्रच्छ वामदेवं तपस्विनं । ३५६५
धर्म्मार्थसहितैर्वाक्यैर्भगवन्ननुशाधि मां । येन वृत्तेन वै तिष्ठन्न च्यवेयं स्वधर्म्मतः ।
तमब्रवीद्वामदेवस्तेजस्वी तपतां वरः । हेमवर्णं सुखासीनं ययातिमिव नाहुषं ।
॥ वामदेव उवाच ॥ धर्म्ममेवानुवर्त्तस्व न धर्म्माद्विद्यते परं । धर्म्मे स्थिता हि राजानो जयन्ति पृथिवीमिमां ।
अर्थसिद्धेः परं धर्म्मं मन्यते यो महीपतिः । ऋतां च कुरुते बुद्धिं स धर्म्मेण विराजते ।
अधर्म्मदर्शी यो राजा बलादेव प्रवर्त्तते । क्षिप्रमेवापयातोऽस्मादुभौ प्रथममध्यमौ । ३५७०
असत्पापिष्ठसचिवो वध्यो लोकस्य धर्म्महा । सहैव परिवारेण क्षिप्रमेवावसीदति ।
अर्थानामननुष्ठाता कामचारी विकत्थनः । अपि सर्व्वां महीं लब्ध्वा क्षिप्रमेव विनश्यति ।
अथाददानः कल्याणमनसूयुर्ज्जितेन्द्रियः । वर्द्धते मतिमान्राजा स्रोतोभिरिव सागरः ।
न पूर्णोऽस्मीति मन्येत धर्म्मतः कामतोऽर्थतः । बुद्धितो मित्रतश्चापि सततं वसुधाधिपः ।
एतेष्वेव हि सर्व्वेषु लोकयात्रा प्रतिष्ठिता । एतानि शृण्वन् लभते यशः कीर्त्तिं श्रियः प्रजाः । ३५७५
एवं यो धर्म्मसंरम्भी धर्म्मार्थपरिचिन्तकः । अर्थान् समीक्ष्य भजते स ध्रुवं महदश्नुते ।
अदाता ह्यनतिस्नेहो दण्डेनावर्त्तयन् प्रजाः । साहसप्रकृती राजा क्षिप्रमेव विनश्यति ।
अथ पापकृतं बुद्ध्या न च पश्यत्यबुद्धिमान् । अकीर्त्त्याऽभिसमायुक्तो भूयो नरकमश्नुते ।
अथ मानयितुर्दातुः श्लक्ष्णस्य वशवर्त्तिनः । व्यसनं स्वमिवोत्पन्नं विजिघांसन्ति मानवाः ।
यस्य नास्ति गुरुर्धर्म्मे न चान्यानपि पृच्छति । सुखतन्त्रोऽर्थलाभेषु न चिरं सुखमश्नुते । ३५८०
गुरुप्रधानो धर्म्मेषु स्वयमर्थान्ववेक्षिता । धर्म्मप्रधानो लाभेषु स चिरं सुखमश्नुते ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि वामदेवगीतासु द्विनवतोऽध्यायः ॥ ९२ ॥
॥ वामदेव उवाच ॥ यत्राधर्म्मं प्रणयते दुर्व्वले बलवत्तरः । तां वृत्तिमुपजीवन्ति ये भवन्ति तदन्वयाः ।
राजानमनुवर्त्तन्ते पापं पापप्रवर्त्तकं । अविनीतमनुष्यन्तत् क्षिप्रं राष्ट्रं विनश्यति ।
यद्वृत्तमुपजीवन्ति प्रकृतिस्थस्य मानवाः । तदेव विषमस्थस्य स्वजनोऽपि न मृष्यते ।
साहसप्रकृतिर्यत्र किञ्चिदुल्बणमाचरेत् । अशास्त्रलक्षणो राजा क्षिप्रमेव विनश्यति । ३५८५
योऽत्यन्ताचरितां वृत्तिं क्षत्रियो नानुवर्त्तते । जितानामजितानाञ्च क्षत्रधर्म्मादपैति सः ।
द्विषन्तं कृतकल्याणं गृहीत्वा नृपतिं रणे । यो न मानयते द्वेषात् क्षत्रधर्म्मादपैति सः ।
शक्तः स्यात् सुमुखो राजा कुर्य्यात् कारुण्यमापदि । प्रियो भवति भूतानां न च विभ्रश्यते श्रियः ।
अप्रियं यस्य कुर्व्वीत भूयस्तस्य प्रियञ्चरेत् । न चिरेण प्रियः स स्यात् योऽप्रियः प्रियमाचरेत् ।
मृषावादं परिहरेत् कुर्य्यात् प्रियमयाचितः । न च कामान्न संरम्भान्न द्वेषाद्धर्म्ममुत्सृजेत् । ३५९०
नापत्रपेत प्रश्नेषु नाविभाव्यां गिरं सृजेत् । न त्वरेत न चासूयेत् तथा संगृह्यते परः ।
प्रियेणातिभृशं हृष्येदप्रियेण च संज्वरेत् । न तप्येदर्थकृच्छ्रेषु प्रजाहितमनुस्मरन् ।
यः प्रियं कुरुते नित्यं गुणतो वसुधाधिपः । तस्य कर्म्माणि सिध्यन्ति न च सन्त्यज्यते श्रिया ।

निवृत्तं प्रतिकूलेषु वर्त्तमानमनुप्रिये। भक्तं भजेत नृपतिः सदैव सुसमाहितः।
अप्रकीर्णेन्द्रियग्राममत्यन्तानुगतं शुचिं। शक्तं चैवानुरक्तञ्च युञ्ज्यान्महति कर्म्मणि। ३४९५
एवमेतैर्गुणैर्युक्तो योऽनुरज्यति भूमिपं। भर्त्तुरर्थेष्वप्रमत्तं नियुञ्ज्यादर्थकर्म्मणि।
मूढमैन्द्रियकं लुब्धमनार्य्यचरितं शठं। अनतीतोपधं हिंस्रं दुर्ब्बुद्धिमबहुश्रुतं।
त्यक्तोपात्तं मद्यरतं द्यूतस्त्रीमृगयापरं। कार्य्ये महति युञ्जानो हीयते नृपतिः श्रिया।
रक्षितात्मा च यो राजा रक्ष्यान् यश्चानुरक्षति। प्रजाश्च तस्य वर्द्धन्ते ध्रुवञ्च महदश्नुते।
ये केचिद्भूमिपतयः सर्व्वांस्तानन्ववेक्षयेत्। सुहृद्भिरनभिख्यातैस्तेन राजाऽतिरिच्यते। ३५००
अपकृत्य बलस्थस्य दूरस्थोऽस्मीति नाश्वसेत्। श्येनाभिपतनैरेते निपतन्ति प्रमाद्यतः।
दृढमूलस्त्वदुष्टात्मा विदित्वा बलमात्मनः। अबलानभियुञ्जीत न तु ये बलवत्तराः।
विक्रमेण महीं लब्ध्वा प्रजा धर्म्मेण पालयेत्। आहवे निधनं कुर्य्याद्राजा धर्म्मपरायणः।
मरणान्तमिदं सर्व्वं नेह किञ्चिदनामयं। तस्माद्धर्म्मे स्थितो राजा प्रजा धर्म्मेण पालयेत्।
रक्षाधिकरणं युद्धं तथा धर्म्मानुशासनं। मन्त्रचिन्ता सुखं काले पञ्चभिर्व्वर्द्धते मही। ३५०५
एतानि यस्य गुप्तानि स राजा राजसत्तमः। सततं वर्त्तमानोऽत्र राजा धत्ते महीमिमां।
नैतान्येकेन शक्यानि सातत्येनानुवीक्षितुं। तेषु सर्व्वं प्रतिष्ठाप्य राजा भुङ्क्ते चिरं महीं।
दातारं संविभक्तारं मार्द्दवोपगतं शुचिं। असन्त्यक्तमनुष्यञ्च तं जनाः कुर्व्वते नृपं।
यस्तु निःश्रेयसं श्रुत्वा ज्ञानं तत् प्रतिपद्यते। आत्मनो मतमुत्सृज्य तं लोकोऽनुविधीयते।
योऽर्थकामस्य वचनं प्रातिकूल्यान्न मृष्यते। शृणोति प्रतिकूलानि सर्व्वदा विमना इव। ३५१०
अग्राम्यचरितां वृत्तिं यो न सेवेत नित्यदा। जितानामजितानाञ्च क्षत्रधर्म्मादपैति सः।
निगृहीतादमात्याच्च स्त्रीभ्यश्चैव विशेषतः। पर्व्वताद्विषमाद्दुर्गाद्धस्तिनोऽश्वात् सरीसृपात्।
एतेभ्यो नित्ययुक्तः सन् रक्षेदात्मानमेव तु। मुख्यानमात्यान् यो हित्वा निहीनान् कुरुते प्रियान्।
स वै व्यसनमासाद्य गाधमार्त्तो न विन्दति। यः कल्याणगुणान् ज्ञातीन् द्वेषान्नोपबुभूषति।
अदृढात्मा दृढक्रोधः स मृत्योर्वसते ऽन्तिके। अथ यो गुणसम्पन्नान् हृदयस्य प्रियानपि। ३५१५
प्रियेण कुरुते वश्यांश्चिरं यशसि तिष्ठति। नाकाले प्रणयेदर्थान्नाप्रिये जातु सञ्ज्वरेत्।
प्रिये नातिभृशं तिष्ठेद्युज्येत शुभकर्म्मणि। के वाऽनुरक्ता राजानः के भयात् समुपाश्रिताः।
मध्यस्थदोषाः के चैषामिति नित्यं विचिन्तयेत्। न जातु बलवान् भूत्वा दुर्ब्बले विश्वसेत् क्वचित्।
भारुण्डसदृशा ह्येते निपतन्ति प्रमाद्यतः। अपि सर्व्वगुणैर्युक्तं भर्त्तारं प्रियवादिनं।
अभिद्रुह्यति पापात्मा न तस्माद्विश्वसेज्जनात्। एवं राजोपनिषदं ययातिः स्माह नाहुषः। ३५२०
मनुष्यविषये युक्तो हन्ति शत्रूननुत्तमान्।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि वामदेवगीतासु त्रिनवतोऽध्यायः ॥ ९३ ॥
॥ वामदेव उवाच ॥ अयुद्धेनैव विजयं वर्द्धयेद्वसुधाधिपः। जघन्यमाहुर्व्विजयं युद्धेन च नराधिप।

न चाप्यलब्धं लिप्सेत मूलेनातिदृढे सति । न हि दुर्ब्बलमूलस्य राज्ञो लाभो विधीयते ।
यस्य स्फीतो जनपदः सम्पन्नः प्रियराजकः । सन्तुष्टः पुष्टसचिवो दृढमूलः स पार्थिवः ।
यस्य योधाः सुसन्तुष्टाः सान्त्विताः सूपधास्थिताः । अल्पेनापि स दण्डेन महीं जयति पार्थिवः । ३५२५
पौरजानपदा यस्य भूतेषु च दयालवः । सधना धान्यवन्तश्च दृढमूलः स पार्थिवः ।
प्रतापकालमधिकं यदा मन्येत चात्मनः । तदा लिप्सेत मेधावी परभूमिधनान्युत ।
भोगेष्वदयमानस्य भूतेषु च दयावतः । वर्द्धते त्वरमाणस्य विषयो रक्षितात्मनः ।
तक्षेदात्मानमेवं स वनं परशुना यथा । यः सम्यग्वर्त्तमानेषु स्वेषु मिथ्या प्रवर्त्तते ।
नैवद्विषन्तो हीयन्ते राज्ञो नित्यमनिघ्नतः । क्रोधं निहन्तुं यो वेद तस्य द्वेष्टा न विद्यते । ३५३०
यदार्य्यजनविद्विष्टं कर्म्म तन्नाचरेद्बुधः । यत्कल्याणमभिध्यायेत्तत्रात्मानं नियोजयेत् ।
नैवमन्येऽवजानन्ति नात्मना परितप्यते । कृत्यशेषेण यो राजा सुखान्यनुबुभूषति ।
इदं वृत्तं मनुष्येषु वर्त्तते यो महीपतिः । उभौ लोकौ विनिर्ज्जित्य विजये सम्प्रतिष्ठते ।
॥ भीष्म उवाच ॥ इत्युक्तो वामदेवेन सर्व्वं तत् कृतवान्नृपः । तथा कुर्व्वंस्त्वमप्येतौ लोकौ जेता न संशयः ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि वामदेवगीतासु चतुर्नवतोऽध्यायः ॥ ९४ ॥
॥ युधिष्ठिर उवाच ॥ अथ यो विजिगीषेत क्षत्रियः क्षत्रियं युधि । कस्तस्य विजये धर्म्मो ह्येतत् पृष्टो ब्रवीहि मे । ३५३५
॥ भीष्म उवाच ॥ ससहायोऽसहायो वा राष्ट्रमागम्य भूमिपः । ब्रूयादहं वो राजेति रक्षिष्यामि च वः सदा ।
मम धर्म्म्यं बलिं दत्त किं वा मां प्रतिपत्स्यथ । ते चेत्तमागतं तत्र वृणुयुः कुशलं भवेत् ।
ते चेदक्षत्रियाः सन्तो विरुध्येरन् कथञ्चन । सर्व्वोपायैर्नियन्तव्या विकर्म्मस्था नराधिपाः ।
अशक्तं क्षत्रियं मत्वा शस्त्रं गृह्णात्यथापरः । त्राणायाप्यसमर्थन्तं मन्यमानमतीव च ।
॥ युधिष्ठिर उवाच ॥ अथ यः क्षत्रियो राजा क्षत्रियं प्रत्युपव्रजेत् । कथं स प्रतियोद्धव्यस्तन्मे ब्रूहि पितामह । ३५४०
॥ भीष्म उवाच ॥ नैवासन्नद्धकवचो योद्धव्यः क्षत्रियो रणे । एक एकेन वाच्यश्च विसृजेति क्षिपामि च ।
स चेत् सन्नद्ध आगच्छेत् सन्नद्धव्यं ततो भवेत् । स चेत् ससैन्य आगच्छेत् ससैन्यस्तमथाह्वयेत् ।
स चेन्निकृत्या युध्येत निकृत्या प्रतियोधयेत् । अथ चेद्धर्म्मतो युध्येद्धर्म्मेणैव निवारयेत् ।
नाश्वेन रथिनं यायादुदियाद्रथिनं रथी । व्यसनेन प्रहर्त्तव्यं न भीताय जिताय च ।
इषुर्लिप्तो न कर्णी स्यादसतामेतदायुधं । यथार्थमेव योद्धव्यं न क्रुध्येत जिघांसतः । ३५४५
निष्प्राणो नाभिहन्तव्यो नानपत्यः कथञ्चन । भग्नशस्त्रो विपन्नश्च कृत्तज्यो हतवाहनः ।
चिकित्स्यः स्यात् स्वविषये प्राप्यो वा स्वगृहे भवेत् । साधूनान्तु यदा भेदात् साधुश्चेद्व्यसनी भवेत् ।
निर्व्रणश्च स मोक्तव्य एष धर्म्मः सनातनः । तस्माद्धर्म्मेण योद्धव्य मिति स्वायम्भुवोऽब्रवीत् ।
सत्सु नित्यं सतां धर्म्मस्तमास्थाय न नाशयेत । यो वै जयत्यधर्म्मेण क्षत्रियो धर्म्मसङ्करः ।
आत्मानमात्मना हन्ति पापो निकृतिजीविनः । कर्म्म चैतदसाधूनामसाधुं साधुना जयेत् । ३५५०

धर्म्मेण निधनं श्रेयो न जयः पापकर्म्मणा। नाधर्म्मश्चरितो राजन् सद्यः फलति गौरिव।
मूलानि च प्रशाखाश्च दहन् समधिगच्छति। पापेन कर्म्मणा वित्तं लब्ध्वा पापः प्रहृष्यति।
स वर्द्धमानः स्तेयेन पापः पापे प्रसज्जति। न धर्म्मोऽस्तीति मन्वानः शुचीनवहसन्निव।
अश्रद्दधानश्च भवेद्विनाशमुपगच्छति। सम्बद्धो वारुणैः पाशैरमर्त्य इव मन्यते।
महादृतिरिवाध्मातः सुकृतेनैव वर्त्तते। ततः समूलो ह्रियते नदीकूलादिव द्रुमः। ३५८५
अथैनमभिनन्दन्ति भिन्नं कुम्भमिवाश्मनि। तस्माद्धर्म्मेण विजयं कोषं लिप्सेत भूमिपः।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि विजिगीषमाणवृत्ते पञ्चनवतोऽध्यायः ॥ ९५ ॥
॥ भीष्म उवाच ॥ नाधर्म्मेण महीं जेतुं लिप्सेत जगतीपतिः। अधर्म्मविजयं लब्ध्वा कोऽनुमन्येत भूमिपः।
अधर्म्मयुक्तो विजयो ह्यध्रुवोऽस्वर्ग्य एव च। सादयत्येष राजानं महीञ्च भरतर्षभ।
विशीर्णकवचञ्चैव तवास्मीति च वादिनं। कृताञ्जलिं न्यस्तशस्त्रं गृहीत्वा न विहिंसयेत्।
बलेन विजितो यश्च नैनं युध्येत भूमिपः। संवत्सरं विप्रणयेत्तस्माज्जातः पुनर्भवेत्। ३५९०
नार्व्वाक् संवत्सरात् कन्या प्रष्टव्या विक्रमाहृता। एवमेव धनं सर्व्वं यच्चान्यत् सहसा हृतं।
न तु बध्यधनं तिष्ठेत् पिबेयुर्ब्राह्मणाः पयः। युञ्जीरन्वाप्यनडुहः क्षन्तव्यं वा तदा भवेत्।
राज्ञा राजैव योद्धव्यस्तथा धर्म्मो विधीयते। नान्यो राजानमभ्यसेदराजन्यः कथञ्चन।
अनीकयोः संहतयोर्यदीयाद्ब्राह्मणोऽन्तरा। शान्तिमिच्छन्नुभयतो न योद्धव्यं तदा भवेत्।
मर्य्यादां शाश्वतीं भिन्द्याद्ब्राह्मणं योऽभिलङ्घयेत्। अथ चेल्लङ्घयेदेव मर्य्यादां क्षत्रियब्रुवः। ३५९५
अप्रशंस्यस्तदूर्द्ध्वं स्यादनादेयश्च संसदि। यस्तु धर्म्मविलोपेन मर्य्यादाभेदनेन च।
तां वृत्तिं नानुवर्त्तेत विजिगीषुर्महीपतिः। धर्म्मलब्धाद्धि विजयाल्लाभः कोऽभ्यधिको भवेत्।
सहसाऽनार्य्यभूतानि क्षिप्रमेव प्रसादयेत्। सान्त्वेन भोगदानेन स राज्ञां परमो नयः।
भुज्यमाना ह्ययोगेन स्वराष्ट्रादभितापिताः। अमित्रास्तमुपासीरन् व्यसनौघप्रतीक्षिणः।
अमित्रोपग्रहं चास्य ते कुर्य्युः क्षिप्रमापदि। सन्तुष्टाः सर्व्वतो राजन् राजव्यसनकाङ्क्षिणः। ३६००
नामित्रो विनिकर्त्तव्यो नातिच्छेद्यः कथञ्चन। जीवितं ह्यप्यतिच्छिन्नः सन्त्यजेच्च कदाचन।
अल्पेनापि च संयुक्तस्तुष्यत्येव नराधिपः। शुद्धं जीवितमेवापि तादृशो बहु मन्यते।
यस्य स्फीतो जनपदः सम्पन्नः प्रियराजकः। सन्तुष्टभृत्यसचिवो दृढमूलः स पार्थिवः।
ऋत्विक्पुरोहिताचार्य्या ये चान्ये श्रुतसत्तमाः। पूजार्हाः पूजिता यस्य स वै लोकविदुच्यते।
एतेनैव च वृत्तेन महीं प्राप सुरोत्तमः। अनेन चैन्द्रविषयं विजिगीषन्ति पार्थिवाः। ३६०५
भूमिवर्ज्जं धनं राजा जित्वा राजन्महाहवे। अपि चान्नौषधीः शश्वदाजहार प्रतर्द्दनः।
अग्निहोत्राग्निशेषञ्च हविर्भाजनमेव च। आजहार दिवोदासस्ततो विप्रकृतोऽभवत्।
सराजकाणि राष्ट्राणि नाभागो दक्षिणां ददौ। अन्यत्र श्रोत्रियस्वाच्च तापसार्थाच्च भारत।
उच्चावचानि वित्तानि धर्म्मज्ञानां युधिष्ठिर। आसन्राज्ञां पुराणानां सर्व्वं तन्मम रोचते।

सर्व्वविद्यातिरेकेण जयमिच्छेन्महीपतिः । न मायया न दम्भेन य इच्छेद्भूतिमात्मनः । ३५८०

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि षणवतोऽध्यायः ॥ ९६ ॥

॥ युधिष्ठिर उवाच ॥ क्षत्रधर्म्माद्धि पापीयान् न धर्म्मोऽस्ति नराधिप । अपयानेन युद्धेन राजा हन्ति महाजनं ।
अथ स्वकर्म्मणा केन लोकान् जयति पार्थिवः । विद्वन् जिज्ञासमानाय प्रब्रूहि भरतर्षभ ।
॥ भीष्म उवाच ॥ निग्रहेण च पापानां साधूनां संग्रहेण च । यज्ञैर्दानैश्च राजानो भवन्ति शुचयोऽमलाः ।
उपरुन्धन्ति राजानो भूतानि विजयार्थिनः । त एव विजयं प्राप्य वर्द्धयन्ति पुनः प्रजाः ।
अपविध्यन्ति पापानि दानयज्ञतपोबलैः । अनुग्रहाय भूतानां पुण्यमेषां विवर्द्धते । ३५८५
यथैव क्षेत्रनिर्य्याता निर्य्यातुं क्षेत्रमेव च । हिनस्ति धान्यं कक्षञ्च न च धान्यं विनश्यति ।
एवं शस्त्राणि मुञ्चन्तो घ्नन्ति वध्याननेकधा । तस्यैषा निष्कृतिः कृत्स्ना भूतानां भावनं पुनः ।
यो भूतानि धनाक्रान्त्या वधात् क्लेशाच्च रक्षति । दस्युभ्यः प्राणदानात् स धनदः सुखदो विराट् ।
स सर्व्वयज्ञैरीजानो राजाऽथाभयदक्षिणैः । अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकतां ।
ब्राह्मणार्थे समुत्पन्ने योऽरिभिः सृत्य युध्यति । आत्मानं यूपमुत्सृज्य स यज्ञोऽनन्तदक्षिणः । ३५९०
अभीतो विकिरन् शत्रून् प्रतिगृह्य शरांस्तथा । न तस्मात्त्रिदशाः श्रेयो भुवि पश्यन्ति किञ्चन ।
तस्य शस्त्राणि यावन्ति त्वचं भिन्दन्ति संयुगे । तावतः सोऽश्नुते लोकान् सर्व्वकामदुहोऽक्षयान् ।
यदस्य रुधिरं गात्रादाहवे सम्प्रवर्त्तते । सह तेनैव पापेन सर्व्वपापैः प्रमुच्यते ।
यानि दुःखानि सहते क्षत्रियो युधि तापितः । तेन तेन तपो भूय इति धर्म्मविदो विदुः ।
पृष्ठतो भीरवः संख्ये वर्त्तन्ते धर्म्मपूरुषाः । शूराच्छरणमिच्छन्तः पर्ज्जन्यादिव जीवनं । ३५९५
यदि शूरस्तथा क्षेमे प्रतिरक्षेद्यथा भये । प्रतिरूपं जनं कुर्य्यान्न च तद्वर्त्तते तथा ।
यदि ते कृतमाज्ञाय नमस्कुर्य्युः सदैव तं । युक्तं न्याय्यञ्च कुर्य्युस्ते न च तद्वर्त्तते तथा ।
पुरुषाणां समानानां दृश्यते महदन्तरं । संग्रामेऽनीकवेलायामुत्क्रुष्टेऽभिपतत्सु च ।
पतत्यभिमुखः शूरः परान् भीरुः पलायते । आस्थाय स्वर्ग्यमध्वानं सहायान् विषमे त्यजेत् ।
मास्म तांस्तादृशांस्तात जनिष्ठाः पुरुषाधमान् । ये सहायान् रणे हित्वा स्वस्तिमन्तो गृहान् ययुः । ३६००
अस्वस्ति तेभ्यः कुर्व्वन्ति देवा इन्द्रपुरोगमाः । त्यागेन यः सहायानां स्वान् प्राणांस्त्रातुमिच्छति ।
तं हन्युः काष्ठलोष्टैर्व्वा दहेयुर्व्वा कटाग्निना । पशुवन्मारयेयुर्व्वा क्षत्रिया ये स्युरीदृशाः ।
अधर्म्मः क्षत्रियस्यैव यच्छय्यामरणं भवेत् । विसृजन् श्लेष्ममूत्राणि कृपणं परिदेवयन् ।
अविक्षतेन देहेन प्रलयं योऽधिगच्छति । क्षत्रियो नास्य तत् कर्म्म प्रशंसन्ति पुराविदः ।
न गृहे मरणं तात क्षत्रियाणां प्रशस्यते । शौण्डीराणामशौण्डीर्य्यमधर्म्म्यं कृपणञ्च तत् । ३६०५
इदं दुःखं महत् कष्टं पापीय इति निष्टनन् । प्रतिध्वस्तमुखः पूतिरमात्याननुशोचयन् ।
अरोगाणां स्पृहयते मुहुर्म्मृत्युमपीच्छति । वीरो दृप्तोऽभिमानी च नेदृशं मृत्युमर्हति ।
रणेषु कदनं कृत्वा ज्ञातिभिः परिवारितः । तीक्ष्णैः शस्त्रैरभिक्लिष्टः क्षत्रियो मृत्युमर्हति ।

शूरो हि काममन्युभ्यामाविष्टो युध्यते भृशं । हन्यमानानि गात्राणि परैर्नैवावबुध्यते ।
स संख्ये निधनं प्राप्य प्रशस्तं लोकपूजितं । स्वधर्म्मं विपुलं प्राप्य शक्रस्यैति सलोकतां । २११०
सर्व्वोपायैरसुखमातिष्ठंस्त्यक्तजीवितः । प्राप्नोतीन्द्रस्य सालोक्यं शूरः पृष्ठमदर्शयन् ।
यत्र यत्र हतः शूरः शत्रुभिः परिवारितः । अक्षयान् लभते लोकान् यदि दैन्यं न सेवते ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि सप्तनवतोऽध्यायः ॥ ९७ ॥

॥ युधिष्ठिर उवाच ॥ के लोका युध्यमानानां शूराणामनिवर्त्तिनां । भवन्ति निधनं प्राप्य तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । अम्बरीषस्य संवादमिन्द्रस्य च युधिष्ठिर ।
अम्बरीषो हि नाभागिः स्वर्गं गत्वा सुदुर्लभं । ददर्श सुरलोकस्थं शक्रेण सचिवं सह । २११५
सर्व्वतेजोमयं दिव्यं विमानवरमास्थितं । उपर्य्युपरि गच्छन्तं स्वं वै सेनापतिं प्रभुं ।
स दृष्ट्वा परिगच्छन्तं सेनापतिमुदारधीः । ऋद्धिं दृष्ट्वा सुदेवस्य विस्मितः प्राह वासवं ।
॥ अम्बरीष उवाच ॥ सागरान्तां महीं कृत्स्नामनुशास्य यथाविधि । चातुर्व्वर्ण्ये यथाशास्त्रं प्रवृत्तो धर्म्मकाम्यया ।
ब्रह्मचर्य्येण घोरेण गुर्व्वाचारेण सेवया । वेदानधीत्य धर्म्मेण राजशास्त्रञ्च केवलं ।
अतिथीनन्नपानेन पितॄंश्च स्वधया तथा । ऋषीन् स्वाध्यायदीक्षाभिर्द्देवान् यज्ञैरनुत्तमैः । २१२०
क्षत्रधर्म्मस्थितो भूत्वा यथाशास्त्रं यथाविधि । उदीक्षमाणः पृतनां जयामि युधि वासव ।
देवराज सुदेवोऽयं मम सेनापतिः पुरा । आसीद्योधः प्रशान्तात्मा सोऽयं कस्मादतीव मां ।
॥ इन्द्र उवाच ॥ एतस्य विततस्तात सुदेवस्य बभूव ह । सङ्ग्रामयज्ञः सुमहान् यश्चान्यो युध्यते नरः ।
सन्नद्धो दीक्षितः सर्व्वो योधः प्राप्य चमूमुखं । युद्धयज्ञाधिकारस्थो भवतीति विनिश्चयः ।
॥ अम्बरीष उवाच ॥ कानि यज्ञे हवींष्यस्मिन् किमाज्यं का च दक्षिणा । ऋत्विजश्चात्र के प्रोक्तास्तन्मे ब्रूहि शतक्रतो । २१२५
॥ इन्द्र उवाच ॥ ऋत्विजः कुञ्जरास्तत्र वाजिनोऽध्वर्य्यवस्तथा । हवींषि परमांसानि रुधिरं त्वाज्यमुच्यते ।
शृगालगृध्रकाकोलाः सदस्यास्तत्र पक्षिणः । आज्यशेषं पिबन्त्येते हविः प्राश्नन्ति चाध्वरे ।
प्रासतोमरसङ्घाताः खड्गशक्तिपरश्वधाः । ज्वलन्तो निशिताः पीताः स्रुचस्तस्याथ सत्रिणः ।
चापवेगायतस्तीक्ष्णः परकायावभेदनः । ऋजुः सुनिशितः पीतः सायकश्च स्रुवो महान् ।
द्वीपिचर्म्मावनद्धश्च नागदन्तकृतत्सरुः । हस्तिहस्तहरः खड्गः स्फ्यो भवेत्तस्य संयुगे । २१३०
ज्वलितैर्न्निशितैः प्रासशक्त्यृष्टिसपरश्वधैः । शैक्यायसमयैस्तीक्ष्णैरभिघातो भवेद्वसु ।
सङ्ग्रामसमयविस्तीर्णमभिजातोद्भवं बहु । आवेगाद्यच्च रुधिरं सङ्ग्रामे स्रवते भुवि ।
साऽस्य पूर्णाहुतिर्होमे समृद्धा सर्व्वकामधुक् । छिन्धि भिन्धीत्ययं शब्दः श्रूयते वाहिनीमुखे ।
सामानि सामगास्तस्य गायन्ति यमसादने । हविर्द्धानन्तु तस्याहुः परेषां वाहिनीमुखं ।
कुञ्जराणां हयानाञ्च वर्म्मिणाञ्च समुच्चयः । अग्निः श्येनचितो नाम स च यज्ञे विधीयते । २१३५
उत्तिष्ठते कबन्धोऽत्र सहस्रे निहते तु यः । स यूपस्तस्य शूरस्य खादिरोऽष्टाश्रिरुच्यते ।

हस्तोपकृताः क्रोशन्ति कुञ्जराश्चाङ्कुशेरिताः। व्याघुष्टतलनादेन वषट्कारेण पार्थिव।
उद्गाता तत्र सङ्ग्रामे त्रिसामा दुन्दुभिर्नृप। ब्रह्मस्वे ह्रियमाणे तु त्यक्त्वा युद्धे प्रियां तनुं।
आत्मानं यूपमुत्सृज्य स यज्ञोऽनन्तदक्षिणः। भर्त्तुरर्थे च यः शूरो विक्रमेद्वाहिनीमुखे।
न भयाद्विनिवर्त्तेत तस्य लोका यथा मम। नीलचर्म्मावृतैः खड्गैर्बाहुभिः परिघोपमैः। ३६४०
यस्य वेदिरुपस्तीर्णा तस्य लोका यथा मम। यस्तु नापेक्षते किञ्चित् सहायं विजयस्थितः।
विगाह्य वाहिनीमध्यं तस्य लोका यथा मम। यस्य शोणितसंघाता भेरीमण्डूककच्छपा।
वीरास्थिशर्करा दुर्गा मांसशोणितकर्द्दमा। असिचर्म्मप्लवा घोरा केशशैवलशाद्वला।
अश्वनागरथैश्चैव सञ्छिन्नैः कृतसंक्रमा। पताकाध्वजवानीरा हतवारणवाहिनी।
शोणितोदा सुसंपूर्णा दुस्तरा पारगैर्नरैः। हतनागमहानक्रा परलोकवहा शिवा। ३६४५
ऋष्टिखड्गमहानौका गृध्रकङ्कबलप्लवा। पुरुषादानुचरिता भीरूणां कश्मलावहा।
नदी योधस्य सङ्ग्रामे तदस्यावभृथं स्मृतं। वेदी यस्य त्वमित्राणां शिरोभिश्च प्रकीर्य्यते।
अश्वस्कन्धैर्गजस्कन्धैस्तस्य लोका यथा मम। पत्नीशाला कृता यस्य परेषां वाहिनीमुखं।
हविर्द्धानं स्ववाहिन्यास्तदस्याऽऽहुर्मनीषिणः। सदस्या दक्षिणा योधा आग्नीध्रश्चोत्तरां दिशं।
शत्रुसेनाकलत्रस्य सर्व्वलोकानदूरतः। यदा ह्युभयतो व्यूहे भवत्याकाशमग्रतः। ३६५०
साऽस्य वेदिस्तदा यज्ञैर्नित्यं वेदास्त्रयोऽग्नयः। यस्तु योधः परावृत्तः सन्त्रस्तो हन्यते परैः।
अप्रतिष्ठः स नरकं याति नास्त्यत्र संशयः। यस्य शोणितवेगेन वेदिः स्यात् सम्परिप्लुता।
केशमांसास्थिसंपूर्णा स गच्छेत् परमां गतिं। यस्तु सेनापतिं हत्वा तद्यानमधिरोहति।
स विष्णुविक्रमक्रामी बृहस्पतिसमः प्रभुः। नायकं तत्कुमारं वा यो वा स्यात्तत्र पूजितः।
जीवग्राहं प्रगृह्णाति तस्य लोका यथा मम। आहवे तु हतं शूरं न शोचेत कथञ्चन। ३६५५
अशोच्यो हि हतः शूरः स्वर्गलोके महीयते। न ह्यन्नं नोदकं तस्य न स्नानं नाप्यशौचकं।
हतस्य कर्त्तुमिच्छन्ति तस्य लोकान् शृणुष्व मे। वराप्सरःसहस्राणि शूरमायोधने हतं।
त्वरमाणाऽभिधावन्ति मम भर्त्ता भवेदिति। एतत्तपश्च पुण्यञ्च धर्म्मश्चैव सनातनः।
चत्वारश्चाश्रमास्तस्य यो युद्धमनुपालयेत्। वृद्धबालौ न हन्तव्यौ न च स्त्री नैव पृष्ठतः।
तृणपूर्णमुखश्चैव तवास्मीति च यो वदेत्। जम्भं वृत्रं बलं पाकं शतमायं विरोचनं। ३६६०
दुर्व्वार्य्यञ्चैव नमुचिं नैकमायञ्च शम्बरं। विप्रचित्तञ्च दैतेयं दनोः पुत्रांश्च सर्व्वशः।
प्रह्लादञ्च निहत्याजौ ततो देवाधिपोऽभवं।
॥ भीष्म उवाच ॥ इत्येतत् शक्रवचनं निशम्य प्रतिगृह्य च। योधानामात्मनः सिद्धिमम्बरीषोऽभिपन्नवान्।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि अष्टनवतोऽध्यायः ॥ ९८ ॥
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। प्रतर्द्दनो मैथिलश्च सङ्ग्रामं यत्र चक्रतुः।
यज्ञोपवीती सङ्ग्रामे जनको मैथिलो यथा। योधानुद्धर्षयामास तन्निबोध युधिष्ठिर। ३६६५

जनको मैथिलो राजा महात्मा सर्व्वतत्त्ववित् । योधान् स्वान् दर्शयामास स्वर्गं नरकमेव च ।
अभीरूणामिमे लोका भास्वन्तो हन्त पश्यत । पूर्णा गन्धर्व्वकन्याभिः सर्व्वकामदुहोऽक्षयाः ।
इमे पलायमानानां नरकाः प्रत्युपस्थिताः । अकीर्त्तिः शाश्वती चैव पतितव्यमनन्तरं ।
तान् दृष्ट्वाऽरीन् विजयत भूत्वा सन्त्यागबुद्धयः । नरकस्याप्रतिष्ठस्य मा भूत वशवर्त्तिनः ।
त्यागमूलं हि शूराणां स्वर्गद्वारमनुत्तमं । इत्युक्तास्ते नृपतिना योधाः परपुरञ्जय । ३६७०
व्यजयन्त रणे शत्रून् हर्षयन्तो नरेश्वरं । तस्मादात्मवता नित्यं स्थातव्यं रणमूर्द्धनि ।
गजानां रथिनो मध्ये रथानामनुसादिनः । सादिनामन्तरे स्थाप्यं पादातमपि दंशितं ।
य एवं व्यूहते राजा स नित्यं जयति द्विषः । तस्मादेवं विधातव्यं नित्यमेव युधिष्ठिर ।
सर्व्वे स्वर्गमिच्छन्ति सुयुद्धेनातिमन्यवः । क्षोभयेयुरनीकानि सागरं मकरा यथा ।
हर्षयेयुर्व्विषण्णांश्च व्यवस्थाप्य परस्परं । जिताञ्च भूमिं रक्षेत भग्नान्नात्यनुसारयेत् । ३६७५
पुनरावर्त्तमानानां निराशानाञ्च जीविते । वेगः सुदुःसहो राजंस्तस्मान्नात्यनुसारयेत् ।
न हि प्रहर्त्तुमिच्छन्ति शूराः प्रद्रवतो भृशं । तस्मात् पलायमानानां कुर्य्यान्नात्यनुसारणं ।
चराणामचरा स्वन्नमदंष्ट्रा दंष्ट्रिणामपि । आपः पिपासतामन्नमन्नं शूरस्य कातराः ।
समानपृष्ठोदरपाणिपादाः पराभवं भीरवो वै व्रजन्ति । अतो भयार्त्ताः प्रणिपत्य भूयः कृताञ्जलीनुपतिष्ठन्ति
शूरान् ।
शूरबाहुषु लोकोऽयं लम्बते पुत्त्रवत् सदा । तस्मात् सर्व्वास्ववस्थासु शूरः सम्मानमर्हति । ३६८०
न हि शौर्य्यात् परं किञ्चित्त्रिषु लोकेषु विद्यते । शूरः सर्व्वं पालयति सर्व्वं शूरे प्रतिष्ठितं ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि नवनवतोऽध्यायः ॥ ९९ ॥
॥ युधिष्ठिर उवाच ॥ यथा जयार्थिनः सेनां नयन्ति भरतर्षभ । ईषद्धर्म्मं प्रपीड्यापि तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ सत्येन हि स्थितो धर्म्म उपपत्त्या तथाऽपरे । साध्वाचारतया केचित्तथैवौपयिकादपि ।
उपायधर्म्मान् वक्ष्यामि सिद्धार्थानर्थधर्म्मयोः । निर्म्मर्य्यादा दस्यवस्तु भवन्ति परिपन्थिनः ।
तेषां प्रतिविघातार्थं प्रवक्ष्याम्यथ नैगमं । कार्य्याणां सर्व्वसिद्ध्यर्थं तानुपायान्निबोध मे । ३६८५
उभे प्रज्ञे वेदितव्ये ऋज्वी वक्रा च भारत । जानन् वक्रां न सेवेत प्रतिबाधेत चागतान् ।
अमित्रा एव राजानं भेदेनोपचरन्त्युत । तां राजा निकृतिं जानन् यथा मित्रान् प्रबाधते ।
गजानां पार्श्वचर्म्माणि गोवृषाजगराणि च । शल्यकण्टकलोहानि तनुत्रचमराणि च ।
सितपीतानि शस्त्राणि सन्नाहाः पीतलोहिताः । नानारञ्जनरक्ताः स्युः पताकाः केतवश्च ह ।
ऋष्टयस्तोमराः खड्गा निशिताश्च परश्वधाः । फलकान्यथ चर्म्माणि प्रतिकल्प्यान्यनेकशः । ३६९०
अभिनीतानि शस्त्राणि योधाश्च कृतनिश्चयाः । चैत्र्यां वा मार्गशीर्ष्यां वा सेनायोगः प्रशस्यते ।
पक्वसस्या हि पृथिवी भवत्यम्बुमती तदा । नैवातिशीतो नात्युष्णः कालो भवति भारत ।
तस्मात्तदा योजयेत परेषां व्यसनेऽथ वा । एते हि योगाः सेनायाः प्रशस्ताः परबाधने ।

जलवांस्तृणवान्मार्गः समो गम्यः प्रशस्यते । चारैः सुविदिताभ्यासः कुशलैर्वनगोचरैः ।
न ह्यरण्येन शक्येत गन्तुं मृगगणैरिव । तस्मात् सेनासु तानेव योजयन्ति जयार्थिनः । ३६९५
अग्रतः पुरुषानीकं शक्तं चापि कुलोद्गतं । आवासस्तोयवान् दुर्गं एकमार्गः प्रशस्यते ।
परेषामुपसर्पाणां प्रतिषेधस्तथा भवेत् । आकाशात्तु वनाभ्याशं मन्यन्ते गुणवत्तरं ।
बहुभिर्गुणजातैश्च ये युद्धकुशला जनाः । उपन्यासो भवेत्तत्र बलानां नातिदूरतः ।
उपन्यासावतरणं पदातीनाञ्च गूहनं । अथ शत्रुप्रतीघातमापदर्थं परायणं ।
सप्तर्षीन् पृष्ठतः कृत्वा युध्येयुरचला इव । अनेन विधिना शत्रून् जिगीषेतापि दुर्ज्जयान् । ३७००
यतो वायुर्यतः सूर्य्यो यतः शुक्रस्ततो जयः । पूर्व्वं पूर्व्वं ज्याय एषां सन्निपाते युधिष्ठिर ।
अकर्द्दमामनुदकाममर्य्यादामलोष्टकां । अश्वभूमिं प्रशंसन्ति ये युद्धकुशला जनाः ।
अपङ्का गर्त्तरहिता रथभूमिः प्रशस्यते । नीचद्रुममहाकक्षा सोदका हस्तियोधिनां ।
बहुदुर्गा महाकक्षा वेणुवेत्रसमाकुला । पदातीनां क्षमा भूमिः पर्व्वतोपवनानि च ।
पदातिबहुला सेना दृढा भवति भारत । रथाश्वबहुला सेना सुदिनेषु प्रशस्यते । ३७०५
पदातिनागबहुला प्रावृट्काले प्रशस्यते । गुणानेतान् प्रसंख्याय देशकालौ प्रयोजयेत् ।
एवं सञ्चिन्त्य यो याति तिथिनक्षत्रपूजितः । विजयं लभते नित्यं सेनां सम्यक् प्रयोजयन् ।
प्रसुप्तांस्तृषितान् श्रान्तान् विकीर्णान्नाभिघातयेत् । मोक्षे प्रयाणे चलने पानभोजनकालयोः ।
अतिक्षिप्तान् व्यतिक्षिप्तान् निहतान् प्रतनूकृतान् । अविस्रब्धान् कृतारम्भानुपन्यासान् प्रतापितान् ।
बहिश्चरानुपन्यासान् कृतवेश्मानुसारिणः । पारम्पर्य्यागते द्वारे ये केचिदनुवर्त्तिनः । ३७१०
परिचर्य्यावतो द्वारे ये च केचन वर्गिणः । अनीकं ये विभिन्दन्ति भिन्नं संस्थापयन्ति च ।
समानाशनपानास्ते कार्य्या द्विगुणवेतनाः । दशाधिपतयः कार्य्याः शताधिपतयस्तथा ।
ततः सहस्राधिपतिं कुर्य्याच्छूरमतन्द्रितं । यथा मुख्यान् सन्निपात्य वक्तव्याः संशपामहे ।
विजयार्थं हि संग्रामे न त्यक्ष्यामः परस्परं । इहैव ते निवर्त्तन्तां ये च केचन भीरवः ।
ये घातयेयुः प्रवरं कुर्व्वाणास्तुमुलं प्रति । न सन्निपाते प्रदरं वधं वा कुर्य्युरीदृशाः । ३७१५
आत्मानञ्च स्वपक्षञ्च पालयन् हन्ति संयुगे । अर्थनाशो वधोऽकीर्त्तिरयशश्च पलायने ।
अमनोज्ञासुखा वाचः पुरुषस्य पलायने । प्रतिध्वस्तोष्ठदन्तस्य न्यस्तसर्व्वायुधस्य च ।
अमित्रैरवरुद्धस्य द्विषतामस्तु नः सदा । मनुष्यापसदा ह्येते ये भवन्ति पराङ्मुखाः ।
राशिवर्द्धनमात्रास्ते नैव ते प्रेत्य नो इह । अमित्रा हृष्टमनसः प्रत्युद्यान्ति पलायिनं ।
जयिनस्तु नरास्तात वन्दनैर्मङ्गलेन च । यस्य स्वसंग्रामगता यशो वै घ्नन्ति शत्रवः । ३७२०
तदसह्यतरं दुःखमहं मन्ये वधादपि । जयं जानीत धर्म्मस्य मूलं सर्व्वसुखस्य च ।
या भीरूणां परा ग्लानिः शूरस्तामधिगच्छति । ते वयं स्वर्गमिच्छन्तः संग्रामे त्यक्तजीविताः ।
जयन्तो वध्यमाना वा प्राप्नुयाम सद्गतिं । एवं संशप्तशपथाः समभित्यक्तजीविताः ।

अमित्रवाहिनीं धीराः प्रतिब्याहन्त्वभीरवः। अग्रतः पुरुषानीकमसिचर्म्मवतां भवेत्।
पृष्ठतः शकटानीकं कलत्रं मध्यतस्तथा। परेषाम्प्रतिघातार्थं पदातीनाञ्च गूहनं। १०२५
अपि तस्मिन् पुरे वृद्धा भवेयुर्ये पुरोगमाः। ये पुरस्तादभिमताः सत्त्ववन्तो मनस्विनः।
ते पूर्व्वमभिवर्त्तेरंस्तानेवेतरे जनाः। अपि चोद्धर्षणं कार्य्यं भीरूणामपि यत्नतः।
स्कन्धदर्शनमात्रात्तु तिष्ठेयुर्वा समीपतः। संहतान् योधयेदल्पान् कामं विस्तारयेद्बहून्।
सूचीमुखमनीकं स्यादल्पानां बहुभिः सह। सम्प्रयुक्ते निकृष्टे वा सत्यं वा यदि वाऽनृतं।
प्रगृह्य बाहून् क्रोशेत भग्ना भग्नाः परे इति। आगतं मे मित्रबलं प्रहरध्वमभीतवत्। १०३०
सत्त्ववन्तो ऽभिधावेयुः कुर्व्वन्तो भैरवारवान्। क्ष्वेडा किलकिलाः शब्दाः क्रकचा गोविषाणिकाः।
भेरीमृदङ्गपणवान्नादयेयुः पुरस्सरान्।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि शततमोऽध्यायः ॥ १०० ॥

॥ युधिष्ठिर उवाच ॥ किंशीलाः किंसमाचाराः कथंरूपाश्च भारत। किंसन्नाहाः कथंशस्त्रा जनाः स्युः सङ्गरे क्षमाः।
॥ भीष्म उवाच ॥ यथा चरितमेवात्र शस्त्रं पत्रं विधीयते। आचारन् वीरपुरुषस्तथा कार्य्येषु वर्त्तते।
गान्धाराः सिन्धुसौवीरा नखरप्रासयोधिनः। अभीरवः सुबलिनस्तद्बलं सर्व्वपारगं। १०३५
सर्व्वशस्त्रेषु कुशलाः सत्त्ववन्तो ह्युशीनराः। प्राच्या मातङ्गयुद्धेषु कुशलाः कूटयोधिनः।
तथा यवनकाम्बोजा मथुरामभितश्च ये। एते नियुद्धकुशला दाक्षिणात्याऽसिपाणयः।
सर्व्वत्र शूरा जायन्ते महासत्त्वा महाबलाः। प्राय एव समुद्दिष्टा लक्षणानि तु मे शृणु।
सिंहशार्दूलवाङ्नेत्राः सिंहशार्दूलगामिनः। पारावतकुलिङ्गाक्षाः सर्व्वे शूराः प्रमाथिनः।
मृगस्वरा द्वीपिनेत्रा ऋषभाक्षास्तरस्विनः। प्रमादिनश्च मन्दाश्च क्रोधनाः किङ्किणीस्वनाः। १०४०
मेघस्वनाः क्रोधमुखाः केचित् करभसन्निभाः। जिह्मनासाग्रजिह्वाश्च दूरगा दूरपातिनः।
बिडालकुब्जतनवस्तनुकेशास्तनुत्वचः। शीघ्राश्चपलवृत्ताश्च ते भवन्ति दुरासदाः।
गोधानिमीलिताः केचिन्मृदुप्रकृतयस्तथा। तुरङ्गगतिनिर्घोषास्ते नराः पारयिष्णवः।
सुसंहताः सुतनवो व्यूढोरस्काः सुसंस्थिताः। प्रवादितेषु कुप्यन्ति हृष्यन्ति कलहेषु च।
गम्भीराक्षा निःसृताक्षाः पिङ्गाक्षा भ्रुकुटीमुखाः। नकुलाक्षास्तथा चैव सर्व्वे शूरास्तनुत्यजः। १०४५
जिह्माक्षाः प्रललाटाश्च निर्म्मांसहनवोऽपि च। वज्रबाहङ्गुलीचक्राः कृशा धमनिसन्तताः।
प्रविशन्ति च वेगेन साम्पराये ह्युपस्थिते। वारणा इव संमत्तास्ते भवन्ति दुरासदाः।
दीप्तस्फुटितकेशान्ताः स्थूलपार्श्वहनूमुखाः। उन्नतांसाः पृथुग्रीवा विकटाः स्थूलपिण्डिकाः।
उद्धृता इव सुग्रीवा विनता विहगा इव। पिण्डशीर्षाहिवक्त्राश्च वृषदंशमुखास्तथा।
उग्रस्वरा मन्युमन्तो युद्धेष्वारावसारिणः। अधर्म्मज्ञाऽवलिप्ताश्च घोरा रौद्रप्रदर्शनाः। १०५०
त्यक्तात्मानः सर्व्वे एते अन्त्यजा ह्यनिवर्त्तिनः। पुरस्कार्य्याः सदा सैन्ये हन्यन्ते घ्नन्ति चाप्रिये।

अधार्म्मिका भिन्नवृत्ताः साध्वेनैषां पराभवः । एवमेव प्रकुर्वन्ति राज्ञोऽप्येते ह्यभीत्सवः ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि विजिगीषमाणवृत्ते एकाधिकशततमोऽध्यायः ॥ १०१ ॥

॥ युधिष्ठिर उवाच ॥ जयिष्णोः कानि रूपाणि भवन्ति भरतर्षभ । पृतनायाः प्रशस्तानि तानि चेच्छामि वेदितुं ।

॥ भीष्म उवाच ॥ जयिष्णो यानि रूपाणि भवन्ति भरतर्षभ । पृतनायाः प्रशस्तानि तानि वक्ष्यामि सर्व्वशः ।

दैवे पूर्व्वं प्रकुपिते मानुषे कालचोदिते । तद्विद्वांसोऽनुपश्यन्ति ज्ञानदिव्येन चक्षुषा । ३७५५

प्रायश्चित्तविधिञ्चात्र जपहोमांश्च तद्विदः । मङ्गलानि च कुर्व्वन्ति शमयन्त्यहितानि च ।

उदीर्णमनसो योधा वाहनानि च भारत । यस्यां भवन्ति सेनायां ध्रुवं तस्यां परो जयः ।

अन्वेतान् वायवो वान्ति तथैवेन्द्रधनूंषि च । अनुप्लवन्ते मेघाश्च तथादित्यस्य रश्मयः ।

गोमायवश्चानुकूला बलगृध्राश्च सर्व्वशः । अर्हयेयुर्यदा सेनां तदा सिद्धिरनुत्तमा ।

प्रसन्नभाः पावक ऊर्द्ध्वरश्मिः प्रदक्षिणावर्त्तशिखो विधूमः । पुण्या गन्धाश्चाहुतीनां भवन्ति जयस्यैतद्भाविनो रूपमाहुः । ३७६०

गम्भीरशब्दाश्च महास्वनाश्च शङ्खाश्च भेर्य्यश्च नदन्ति यत्र । युयुत्सवश्चाप्रतीपा भवन्ति जयस्यैतद्भाविनो रूपमाहुः ।

इष्टा मृगाः पृष्ठतो वामतश्च सम्प्रस्थितानाञ्च गमिष्यताञ्च । जिघांसतां दक्षिणाः सिद्धिमाहुर्ये त्वग्रतस्ते प्रतिषेधयन्ति ।

माङ्गल्यशब्दान् शकुना वदन्ति हंसाः क्रौञ्चाः शतपत्राश्च चाषाः । हृष्टा योधाः सत्त्ववन्तो भवन्ति जयस्यैतद्भाविनो रूपमाहुः ।

शस्त्रैर्यन्त्रैः कवचैः केतुभिश्च सुभानुभिर्मुखवर्णैश्च यूनां । भ्राजिष्मती दुष्प्रतिवीक्षणीया येषां चमूस्तेऽभिभवन्ति शत्रून् ।

शुश्रूषवश्चानभिमानिनश्च परस्परं सौहृदमास्थिताश्च । येषां योधाः शौचमनुष्ठिताश्च जयस्यैतद्भाविनो रूपमाहुः । ३७६५

शब्दाः स्पर्शास्तथा गन्धा विचरन्ति मनःप्रियाः । धैर्य्यञ्च विशते योधान् विजयस्य मुखञ्च तत् ।

इष्टो वामः प्रविष्टस्य दक्षिणः प्रविविक्षतः । पश्चात् संसाधयत्यर्थं पुरस्ताच्च निषेधति ।

सम्भृत्य महतीं सेनां चतुरङ्गां युधिष्ठिर । साम्नैव वर्त्तयेः पूर्व्वं प्रयतेथास्ततो युधि ।

जघन्य एष विजयो यद्युद्धं नाम भारत । यादृच्छिको युधि जयो दैवो वेति विचारणं ।

अपामिव महावेगस्त्रस्ता इव महामृगाः । दुर्न्निवार्य्यतमा चैव प्रभग्ना महती चमूः । ३७७०

भग्ना इत्येव भज्यन्ते विद्वांसोऽपि न कारणं । उदारसारा महती रुरुसङ्घोपमा चमूः ।

परस्परज्ञाः संहृष्टास्त्यक्तप्राणाः सुनिश्चिताः । अपि पञ्चाशतं शूरा मथ्नन्ति परवाहिनीं ।

अपि वा पञ्च षट् सप्त संहताः कृतनिश्चयाः । कुलीनाः पूजिताः सम्यग्विजयन्तीह शात्रवान् ।

सन्निपातो न मन्तव्यः शक्ये सति कथञ्चन । सान्त्वभेदप्रदानानां युद्धमुत्तरमुच्यते ।

सन्दर्शनेनैव सेनाया भयं भीरून् प्रबाधते । वज्रादिव प्रज्वलितादियं क नु पतिष्यति । ३७७५

अभिप्रयातां समितिं ज्ञात्वा ये प्रतियान्त्यथ । तेषां स्पन्दन्ति गात्राणि योधानां विजयस्य च ।

विषयो व्यथते राजन् सर्व्वः सस्थाणुजङ्गमः । अस्त्रप्रतापतप्तानां मज्जा सीदति देहिनां ।
तेषां सान्त्वं क्रूरमिश्रं प्रणेतव्यं पुनः पुनः । सम्पीड्यमाना हि परैर्योगमायान्ति सर्व्वतः ।
आन्तराणाञ्च भेदार्थं चरानभ्यवचारयेत् । यश्च तस्मात् परो राजा तेन सन्धिः प्रशस्यते ।
न हि तस्यान्यथा पीडा शक्या कर्त्तुं तथाविधा । यथा सार्द्धममित्रेण सर्व्वतः प्रतिबाधनं । ३७८०
क्षमा वै साधुमायाति न ह्यसाधुं क्षमा सदा । क्षमायाश्चाक्षमायाश्च पार्थ विद्धि प्रयोजनं ।
विजित्य क्षममाणस्य यशो राज्ञो विवर्द्धते । महापराधे ह्यप्यस्मिन् विश्वसन्त्यपि शत्रवः ।
मन्यते कर्षयित्वा तु क्षमा साध्वीति शम्बरः । असन्तप्तन्तु यद्दारु प्रत्येति प्रकृतिं पुनः ।
नैतत् प्रशंसन्त्याचार्य्या न तु साधुनिदर्शनं । अक्रोधेनाविनाशेन नियन्तव्याः स्वपुत्त्रवत् ।
द्वेष्यो भवति भूतानामुग्रो राजा युधिष्ठिर । मृदुमप्यवमन्यन्ते तस्मादुभयमाचरेत् । ३७८५
प्रहरिष्यन् प्रियं ब्रूयात् प्रहरन्नपि भारत । प्रहृत्य च कृपायीत शोचन्निव रुदन्निव ।
न मे प्रियं यन्निहताः संग्रामे मामकैर्नरैः । न च कुर्व्वन्ति मे वाक्यमुच्यमानाः पुनः पुनः ।
अहो जीवितमाकाङ्क्षेन्नेदृशो वधमर्हति । सुदुर्लभाः सुपुरुषाः सङ्ग्रामेष्वपलायिनः ।
कृतं ममाप्रियं तेन येनायं निहतो मृधे । इति वाचा वदन् हन्तॄन् पूजयेत रहोगतः ।
हन्तॄणामाहतानाञ्च यत् कुर्य्युरपराधिनः । क्रोशेद्बाहुं प्रगृह्यापि चिकीर्षन् जनसंग्रहं । ३७९०
एवं सर्व्वास्ववस्थासु सान्त्वपूर्व्वं समाचरेत् । प्रियो भवति भूतानां धर्म्मज्ञो वीतभीर्नृपः ।
विश्वासञ्चात्र गच्छन्ति सर्व्वभूतानि भारत । विश्वस्तः शक्यते भोक्तुं यथाकाममुपस्थितः ।
तस्माद्विश्वासयेद्राजा सर्व्वभूतान्यमायया । सर्व्वतः परिरक्षेच्च यो महीं भोक्तुमिच्छति ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि सेनानीतिकथने द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥
॥ युधिष्ठिर उवाच ॥ कथं मृदौ कथं तीक्ष्णे महापक्षे च पार्थिव । आदौ वर्त्तेत नृपतिस्तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । बृहस्पतेश्च संवादमिन्द्रस्य च युधिष्ठिर । ३७९५
बृहस्पतिं देवपतिरभिवाद्य कृताञ्जलिः । उपसङ्गम्य पप्रच्छ वासवः परवीरहा ।
॥ इन्द्र उवाच ॥ अहितेषु कथं ब्रह्मन् प्रवर्त्तेयमतन्द्रितः । असमुच्छिद्य चैवैतान्नियच्छेयमुपायतः ।
सेनयोर्व्यतिषङ्गेण जयः साधारणो भवेत् । किं कुर्व्वाणं न मां जह्यात् ज्वलिता श्रीः प्रतापिनी ।
ततो धर्म्मार्थकामानां कुशलः प्रतिभानवान् । राजधर्म्मविधानज्ञः प्रत्युवाच पुरन्दरं ।
॥ बृहस्पतिरुवाच ॥ न जातु कलहेनेच्छेन्नियन्तुमपकारिणः । बालैरासेवितं ह्येतद्यदमर्षो यदक्षमा । ३८००
न शत्रुर्व्विवृतः कार्य्यो वधमस्याभिकाङ्क्षता । क्रोधं भयञ्च हर्षञ्च नियम्य स्वयमात्मनि ।
अमित्रमुपसेवेत विश्वस्तवदविश्वसन् । प्रियमेव वदेन्नित्यं नाप्रियं किञ्चिदाचरेत् ।
विरमेच्छुष्कवैरेभ्यः कण्ठायासांश्च वर्ज्जयेत् । यथा वैतंसिको युक्तो द्विजानां सदृशस्वनः ।
तान् द्विजान् कुरुते वश्यांस्तथा युक्तो महीपतिः । वशञ्चोपनयेच्छत्रून्निहन्याच्च पुरन्दर ।
न नित्यं परिभूयारीन् सुखं स्वपिति वासव । जागर्त्त्येव हि दुष्टात्मा सङ्करेऽग्निरिवोत्थितः । ३८०५

न सन्निपातः कर्त्तव्यः सामान्ये विजये सति । विस्रम्भेणोपसन्धाय वशे कृत्वा रिपुः प्रभो ।
सम्प्रधार्य्य सहामात्यैर्मन्त्रविद्भिर्महात्मभिः । उपेक्षमाणोऽवज्ञातो हृदयेनापराजितः ।
अथास्य प्रहरेत् काले किञ्चिद्विचलिते पदे । दण्डञ्च दूषयेदस्य पुरुषैराप्तकारिभिः ।
आदिमध्यावसानज्ञः प्रच्छन्नञ्च विधारयेत् । बलानि दूषयेदस्य जानंश्चैव प्रमाणतः ।
भेदेनोपप्रदानेन संसृजेदौषधैस्तथा । न त्वेवं खलु संसर्गं रोचयेदरिभिः सह । ३८१०
दीर्घकालमपीक्षेत निहन्यादेव शात्रवान् । कालाकाङ्क्षी हि क्षपयेद्यथा विस्रम्भमाप्नुयुः ।
न सद्यान् विनिहन्याच्च द्रष्टव्यो विजयो ध्रुवः । न शल्यं वा घटयति न वाचा कुरुते व्रणं ।
प्राप्ते च प्रहरेत् काले न च संवर्त्तते पुनः । हन्तुकामस्य देवेन्द्र पुरुषस्य रिपून् प्रति ।
यो हि कालो व्यतिक्रामेत् पुरुषं कालकाङ्क्षिणं । दुर्लभः स पुनस्तेन कालः कर्म्म चिकीर्षुणा ।
ओजश्च विनयेदेव संगृह्णन् साधुसम्मतं । अकाले साधयेन्मित्रं न च प्राप्ते प्रपीडयेत् । ३८१५
विहाय कामं क्रोधञ्च तथाऽहङ्कारमेव च । युक्तो विवरमन्विच्छेदहितानां पुनः पुनः ।
मार्द्दवं दण्ड आलस्यं प्रमादश्च सुरोत्तम । मायाः सुविहिताः शक्र सादयन्त्यविचक्षणं ।
निहत्यैतानि चत्वारि मायां प्रतिविहाय च । ततः शक्नोति शत्रूणां प्रहर्त्तुमविचारयन् ।
यदैवैकेन शक्येत गुह्यं कर्त्तुं तदाचरेत् । यच्छन्ति सचिवा गुह्यं मिथो विश्रावयन्त्यपि ।
अशक्यमिति कृत्वा वा ततोऽन्यैः संविदञ्चरेत् । ब्रह्मदण्डमदृष्टेषु दृष्टेषु चतुरङ्गिणीं । ३८२०
भेदञ्च प्रथमं युञ्ज्यात्तूष्णीमपि तथैव च । काले प्रयोजयेद्राजा तस्मिंस्तस्मिंस्तदा तदा ।
प्रणिपातञ्च गच्छेत काले शत्रोर्ब्बलीयसः । युक्तोऽस्य वधमन्विच्छेदप्रमत्तः प्रमाद्यतः ।
प्रणिपातेन दानेन वाचा मधुरया ब्रुवन् । अमित्रमपि सेवेत न च जातु विशङ्कयेत् ।
स्थानानि शङ्कितानाञ्च नित्यमेव विवर्ज्जयेत् । न च तेष्वाश्वसेद्राजा जाग्रतीह निराकृताः ।
न ह्यतो दुष्करं कर्म्म किञ्चिदस्ति सुरोत्तम । यथा विविधवृत्तानामैश्वर्य्यममराधिप । ३८२५
तथा विविधशीलानामपि सम्भव उच्यते । यतते योगमास्थाय मित्रामित्रं विचारयेत् ।
मृदुमप्यवमन्यन्ते तीक्ष्णादुद्विजते जनः । मा तीक्ष्णो मा मृदुर्भूस्त्वं तीक्ष्णो भव मृदुर्भव ।
यथा वप्रे वेगवति सर्व्वतः संप्लुतोदके । नित्यं विवरणाद्बाधस्तथा राज्यं प्रमाद्यतः ।
न बहूनभियुञ्जीत यौगपद्येन शात्रवान् । साम्ना दानेन भेदेन दण्डेन च पुरन्दर ।
एकैकमेषां निष्पिष्य शिष्टेषु निपुणश्चरेत् । न तु शक्तोऽपि मेधावी सर्व्वानेवारभेन्नृप । ३८३०
यदा स्यान्महती सेना हयनागरथाकुला । पदातियन्त्रबहुला अनुरक्ता षडङ्गिनी ।
यदा बहुविधां वृद्धिं मन्येत प्रतिलोमतः । तदा विवृत्य प्रहरेद्दस्यूनामविचारयन् ।

न सामदण्डोपनिषत् प्रशस्यते न मार्द्दवं शत्रुषु यात्रिकं सदा । न शस्यघातो न च सङ्करक्रिया न चापि भूयः प्रकृतेर्विचारणा ।

मायाविभेदानुपसर्ज्जनानि तथैव पापं न यशः प्रयोगात् । आप्तैर्मनुष्यैरुपचारयेत पुरेषु राष्ट्रेषु च सम्प्रयुक्तान् ।

पुराणि चैषामनुसृत्य भूमिपाः पुरेषु भोगानखिलान् जयन्ति । पुरेषु नीतिं विहितां यथाविधि प्रयोजयन्तो बलवृत्र सूदन । ३८३५

प्रदाय गूढानि वसूनि राजन् प्रच्छिद्य भोगानवधाय च स्वान् । दुष्टान् स्वदोषैरिति कीर्त्तयित्वा पुरेषु राष्ट्रेषु च योजयन्ति ।

तथैव चान्यैरपि शास्त्रवेदिभिः स्वलङ्कृतैः शास्त्रविधानदृष्टिभिः । सुशिक्षितैर्भाष्यकथाविशारदैः पुरेषु कृत्यामुपधारयेच्च ।

॥ इन्द्र उवाच ॥ कानि लिङ्गानि दुष्टस्य भवन्ति द्विजसत्तम । कथं दुष्टं विजानीयामेतत् पृष्टो ब्रवीहि मे ।

॥ बृहस्पतिरुवाच ॥ परोक्षमगुणानाह सद्गुणानभ्यसूयते । परैर्वा कीर्त्त्यमानेषु तूष्णीमास्ते पराङ्मुखः ।

तूष्णीम्भावेऽपि विज्ञेयं न चेद्भवति कारणं । विश्वासमोष्ठौ दशति शिरसश्च प्रकम्पनं । ३८४०

करोत्यभीक्ष्णं संसृष्टमसंसृष्टश्च भाषते । अदृष्टितो न कुरुते दृष्टो नैवाभिभाषते ।

पृथगेत्य समश्नाति नेदमद्य यथाविधि । आसने शयने याने भावा लक्ष्या विशेषतः ।

आर्त्तिरार्त्ते प्रिये प्रीतिरेतावन्मित्रलक्षणं । विपरीतन्तु बोद्धव्यमरिलक्षणमेव तत् ।

एतान्येव यथोक्तानि बुध्येत त्रिदशाधिप । पुरुषाणां प्रदुष्टानां स्वभावो बलवत्तरः ।

इति दुष्टस्य विज्ञानमुक्तं ते सुरसत्तम । निशम्य शास्त्रतत्त्वार्थं यथावदमरेश्वर । ३८४५

॥ भीष्म उवाच ॥ स तद्वचः शत्रुनिबर्हणे रतस्तथा चकारावितथं बृहस्पतेः । चचार काले विजयाय चारिहा वशञ्च शत्रूनननयत् पुरन्दरः ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि इन्द्रबृहस्पतिसंवादे त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

॥ युधिष्ठिर उवाच ॥ धार्म्मिकोऽर्थानसम्प्राप्य राजाऽमात्यैः प्रबाधितः । च्युतः कोशाच्च दण्डाच्च सुखमिच्छन् कथञ्चरेत ।

॥ भीष्म उवाच ॥ अत्रायं क्षेमदर्शीय इतिहासोऽनुगीयते । तत्तेऽहं सम्प्रवक्ष्यामि तन्निबोध युधिष्ठिर ।

क्षेमदर्शी नृपसुतो यत्र क्षीणबलः पुरा । मुनिं कालकवृक्षीयमाजगामेति नः श्रुतं ।

तं पप्रच्छानुसंगृह्य कृच्छ्रामापदमास्थितः । ३८५०

॥ राजोवाच ॥ अर्थेषु भागी पुरुष ईहमानः पुनः पुनः । अलब्ध्वा मद्विधो राज्यं ब्रह्मन् किं कर्त्तुमर्हति ।

अन्यत्र मरणात् स्तैन्यादन्यत्र परसंश्रयात् । क्षुद्रादन्यत्र चाचारात् तन्ममाचक्ष्व सत्तम ।

व्याधिना चाभिपन्नस्य मानसेनेतरेण वा । धर्म्मज्ञश्च कृतज्ञश्च त्वद्विधः शरणं भवेत् ।

निर्व्विद्यति नरः कामान्निर्व्विद्य सुखमेधते । त्यक्त्वा प्रीतिञ्च शोकञ्च लब्ध्वा बुद्धिमयं वसु ।

सुखमर्थाश्रयं येषामनुशोचामि तानहं । मम ह्यर्थाः सुबहवो नष्टाः स्वप्न इवागताः । ३८५५

दुष्करं बत कुर्व्वन्ति महतोऽर्थांस्त्यजन्ति ये । वयं त्वेतान् परित्यक्तुमसतोऽपि न शक्नुमः ।

इमामवस्थां सम्प्राप्तं दीनमार्त्तं श्रिया च्युतं । यदन्यत् सुखमस्तीह तद्ब्रह्मन्ननुशाधि मां ।

कौशल्येनैवमुक्तस्तु राजपुत्त्रेण धीमता । मुनिः कालकवृक्षीयः प्रत्युवाच महाद्युतिः ।

॥ मुनिरुवाच ॥ पुरस्तादेव ते बुद्धिरियं कार्य्या विजानता । अनित्यं सर्व्वमेवैतदहञ्च मम चास्ति यत् ।

यत्किञ्चिन्मन्यसेऽस्तीति सर्व्वं नास्तीति विद्धि तत् । एवं न व्यथते प्राज्ञः कृच्छ्रामप्यापदं गतः । ३८६०

यच्च भूतं भविष्यच्च सर्व्वं तन्न भविष्यति। एवं विदितवेद्यस्त्वमधर्म्मेभ्यः प्रमोक्ष्यसे।
यच्च पूर्व्वं समाहारे यच्च पूर्व्वं परे परे। सर्व्वं तन्नास्ति ते चैव तज्ज्ञात्वा को नु संज्वरेत्।
भूत्वा च न भवत्येतदभूत्वा च भविष्यति। शोके न ह्यस्ति सामर्थ्यं शोकं कुर्य्यात् कथञ्चन।
क्व नु तेऽद्य पिता राजन् क्व नु तेऽद्य पितामहः। न त्वं पश्यसि तानद्य न त्वां पश्यन्ति तेऽपि च।
आत्मनोऽध्रुवतां पश्य तांस्त्वं किमनुशोचसि। बुद्ध्या चैवानुबुध्यस्व ध्रुवं हि न भविष्यसि। ३८६५
अहञ्च त्वञ्च नृपते सुहृदः शत्रवश्च ते। अवश्यं न भविष्यामः सर्व्वञ्च न भविष्यति।
ये तु विंशतिवर्षा वै त्रिंशद्वर्षाश्च मानवाः। अर्व्वागेव हि ते सर्व्वे मरिष्यन्ति शरच्छतात्।
अपि चेन्महतो वित्तात् प्रमुच्येत पूरुषः। नैतन्ममेति तन्मत्वा कुर्व्वीत प्रियमात्मनः।
अनागतं यन्न ममेति विद्यादतिक्रान्तं यन्न ममेति विद्यात्। दिष्टं बलीय इति मन्यमानास्ते पण्डितास्तत् सतां स्थानमाहुः।
अनाढ्याश्चापि जीवन्ति राज्यञ्चाप्यनुशासति। बुद्धिपौरुषसम्पन्नास्त्वया तुल्याधिका जनाः। ३८७०
न च त्वमिव शोचन्ति तस्मात्त्वमपि मा शुचः। किन्न त्वं तैर्नरैः श्रेयांस्तुल्यो वा बुद्धिपौरुषैः।
॥ राजोवाच ॥ यादृच्छिकं सर्व्वमासीत्तद्राज्यमिति चिन्तये। ह्रियते सर्व्वमेवेदं कालेन महता द्विज।
तस्यैव ह्रियमाणस्य स्रोतसैव तपोधन। फलमेतत् प्रपश्यामि यथालब्धेन वर्त्तयन्।
॥ मुनिरुवाच ॥ अनागतमतीतञ्च यथाऽतथ्यविनिश्चयात्। नानुशोचेत कौशल्य सर्व्वार्थेषु तथा भव।
अवाप्यान् कामयन्नर्थाननवाप्यान् कदाचन। प्रत्युत्पन्नाननुभवन् मा शुचस्त्वमनागतान्। ३८७५
यथालब्धोपपन्नार्थैस्तथा कौशल्य रंस्यसे। कच्चिच्छुद्धस्वभावेन श्रिया हीनो न शोचसि।
पुरस्ताद्भूतपूर्व्वत्वाद्धीनभाग्यो हि दुर्म्मतिः। धातारं गर्हते नित्यं लब्धार्थांश्च न मृष्यते।
अनर्हानपि चैवान्यान्मन्यते श्रीमतो जनान्। एतस्मात् कारणादेतद्दुःखं भूयोऽनुवर्त्तते।
ईर्ष्याभिमानसम्पन्ना राजन् पुरुषमानिनः। कच्चित्त्वं न तथा राजन् मत्सरी कोशलाधिप।
सहस्व श्रियमन्येषां यद्यपि त्वयि नास्ति सा। अन्यत्रापि सतीं लक्ष्मीं कुशला भुञ्जते सदा। ३८८०
अभिनिष्यन्दते श्रीर्हि सत्यपि द्विषतो जनं। श्रियञ्च पुत्रपौत्रञ्च मनुष्या धर्म्मचारिणः।
योगधर्म्मविदो धीराः स्वयमेव त्यजन्त्युत। बहुशङ्कुसुकं दृष्ट्वा विधित्सा धनमेव च।
तथाऽन्ये सन्त्यजन्त्येवं मत्वा परमदुर्ल्लभं। त्वं पुनः प्राज्ञरूपः सन् कृपणं परितप्यसे।
अकाम्यान् कामयानोऽर्थान् पराधीनानुपद्रवान्। तां बुद्धिमुपजिज्ञासुस्त्वमेवैतान् परित्यज।
अनर्थांश्चार्थरूपेण अर्थांश्चानर्थरूपिणः। अर्थायैव हि केषाञ्चिद्धननाशो भवत्युत। ३८८५
आनन्त्यं तत् सुखं मत्वा श्रियमन्यः परीप्सति। रममाणः श्रिया कश्चिन्नान्यच्छ्रेयोऽभिमन्यते।
तथा तस्येहमानस्य समारम्भो विनश्यति। कृच्छ्राल्लब्धमभिप्रेतं यदि कौशल्य नश्यति।
तदा निर्व्विद्यते सोऽर्थात् परिभग्नक्रमो नरः। धर्म्ममेकेऽभिपद्यन्ते कल्याणाभिजना नराः।
परत्र सुखमिच्छन्तो निर्व्विद्येयुश्च लौकिकात्। जीवितं सन्त्यजन्त्येके धनलोभपरा जनाः।

न जीवितार्थं मन्यन्ते पुरुषा हि धनादृते। पश्य तेषां कृपणतां पश्य तेषामबुद्धितां। ३८९०
अध्रुवे जीविते मोहादर्थदृष्टिमुपाश्रिताः। सञ्चये च विनाशान्ते मरणान्ते च जीविते।
संयोगे च वियोगान्ते को नु विप्रणयेन्मनः। धनं वा पुरुषो राजन् पुरुषं वा पुनर्धनं।
अवश्यं प्रजहात्येव तद्विद्वान् को नु संज्वरेत्। अन्येषामपि नश्यन्ति सुहृदश्च धनानि च।
पश्य बुद्ध्या मनुष्याणां राजन्नापदमात्मनः। नियच्छ यच्छ संयच्छ इन्द्रियाणि मनो गिरं।
प्रतिषेद्धा न चाप्येषु दुर्ब्बलेष्वहितेष्वपि। प्राप्तिसृष्टेषु भावेषु व्यपकृष्टेष्वसम्भवे। ३८९५
प्रज्ञानतृप्तो विक्रान्तस्त्वद्विधो नानुशोचति। अल्पमिच्छन्नचपलो मृदुर्दान्तः सुनिश्चितः।
ब्रह्मचर्य्योपपन्नश्च त्वद्विधो नैव शोचति। न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि।
नृशंसवृत्तिं पापिष्ठां दुष्टां कापुरुषोचितां। अपि मूलफलाजीवे रमस्वैको महावने।
वाग्यतः संगृहीतात्मा सर्व्वभूतदयान्वितः। सदृशं पण्डितस्यैतदीषादन्तेन दन्तिना।
यदेको रमतेऽरण्येष्वारण्येनैव तुष्यति। महाह्रदः सङ्क्षुभित आत्मनैव प्रसीदति। ३९००
एतदेवं गतस्याहं सुखं पश्यामि जीवितुं। असम्भवे श्रियो राजन् हीनस्य सचिवादिभिः।
दैवे प्रतिनिविष्टे च किं श्रेयो मन्यते भवान्।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि कालकवृक्षीये चतुरधिकशततोऽध्यायः ॥ १०४ ॥

॥ मुनिरुवाच ॥ अथ चेत् पौरुषं किञ्चित् क्षत्रियात्मनि पश्यसि। ब्रवीमि तान्तु ते नीतिं राज्यस्य प्रतिपत्तये।
तां चेच्छक्नोषि निर्म्मातुं कर्म्म चैव करिष्यसि। शृणु सर्व्वमशेषेण यत्त्वां वक्ष्यामि तत्त्वतः।
आचरिष्यसि चेत् कर्म्म महतोऽर्थानवाप्स्यसि। राज्यं राज्यस्य मन्त्रं वा महतीं वा पुनः श्रियं। ३९०५
अथैतद्रोचते राजन् पुनर्ब्रूहि ब्रवीमि ते।
॥ राजोवाच ॥ ब्रवीतु भगवान्नीतिमुपपन्नोऽस्म्यहं विभो। अमोघोऽयं भवत्वद्य त्वया सह समागमः।
॥ मुनिरुवाच ॥ हित्वा दम्भञ्च कामञ्च क्रोधं हर्षं भयन्तथा। अप्यमित्राणि सेवस्व प्रणिपत्य कृताञ्जलिः।
तमुत्तमेन शौचेन कर्म्मणा चाभिराधय। दातुमर्हति ते वित्तं वैदेहः सत्यसङ्गरः।
प्रमाणं सर्व्वभूतेषु प्रग्रहञ्च भविष्यसि। ततः सहायान् सोत्साहाल्लप्स्यसे व्यसनान् शुचीन्। ३९१०
वर्त्तमानः स्वशास्त्रे वै संयतात्मा जितेन्द्रियः। अभ्युद्धरति चात्मानं प्रसादयति च प्रजाः।
तेनैव त्वं धृतिमता श्रीमता चाभिसत्कृतः। प्रमाणं सर्व्वभूतेषु गत्वा प्रग्रहणं महत्।
ततः सुहृद्बलं लब्ध्वा मन्त्रयित्वा सुमन्त्रिभिः। आन्तरैर्भेदयित्वाऽरीन् बिल्वं बिल्वेन भेदय।
परैर्व्वा संविदं कृत्वा बलमप्यस्य घातय। अलभ्या ये शुभा भावास्स्त्रियश्चाच्छादनानि च।
शय्यासनानि यानानि महार्हाणि गृहाणि च। पक्षिणो मृगजातानि रसगन्धाः फलानि च। ३९१५
तेष्वेव सज्जयेथास्त्वं यथा नश्येत्स्वयं परः। यद्येवं प्रतिषेद्धव्यो यद्युपेक्षणमर्हति।
न जातु विवृतः कार्य्यः शत्रुः सुनयमिच्छता। रमस्व परमामित्रे विषये प्राज्ञसम्मतः।
भजस्व श्वेतकाकीयैर्मित्रधर्म्ममनर्थकैः। आरम्भांश्चास्य महतो दुश्चरांश्च प्रयोजय।

नदीवच्च विरोधांश्च बलवद्भिर्विरुध्यतां । उद्यानानि महार्हाणि शयनान्यासनानि च ।
प्रतिभोगसुखेनैव कोषमस्य विरेचय । यज्ञदाने प्रशाध्यस्मै ब्राह्मणाननुवर्त्य तान् । ३९२०
ते त्वां प्रतिकरिष्यन्ति तं भोक्ष्यन्ति वृका इव । असंशयं पुण्यशीलः प्राप्नोति परमां मतिं ।
त्रिविष्टपे पुण्यतमं स्थानं प्राप्नोति मानवः । कोषक्षये त्वमित्राणां वशं कौशल्य गच्छति ।
उभयत्र प्रसक्तस्य धर्म्मे चाधर्म्म एव च । फलार्थमूलं व्युच्छिद्येत्तेन नन्दन्ति शत्रवः ।
न चास्मै मानुषं कर्म्म दैवमस्योपवर्णय । असंशयं दैवपरः क्षिप्रमेव विनश्यति ।
याजयैनं विश्वजिता सर्व्वस्वेन वियुज्यतां । ततो गच्छति सिद्धार्थः पीड्यमानं महाजनं । ३९२५
योगधर्म्मविदं पुण्यं कञ्चिदस्योपवर्णय । अपि त्यागं बुभूषेत कच्चिद्गच्छेदनामयं ।
सिद्धेनौषधियोगेन सर्व्वशत्रुविनाशिना । नागानश्वान् मनुष्यांश्च कृतकैरुपघातय ।
एते चान्ये च बहवो दम्भयोगाः सुचिन्तिताः । शक्या विषहताः कर्त्तुं पुरुषेण कृतात्मना ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि कालकवृक्षीये पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥
॥ राजोवाच ॥ न निकृत्या न दम्भेन ब्रह्मन्निच्छामि जीवितुं । नाधर्म्मयुक्तानिच्छेयमर्थान् सुमहतोऽप्यहं ।
पुरस्तादेव भगवन्मयैतदपवर्जितं । येन मां नाभिशङ्केत येन कृत्स्नं हितं भवेत् । ३९३०
आनृशंस्येन धर्म्मेण लोके ह्यस्मिन् जिजीविषुः । नाहमेतदलं कर्त्तुं नैतत्त्वय्युपपद्यते ।
॥ मुनिरुवाच ॥ उपपन्नस्त्वमेतेन यथा क्षत्रिय भाषसे । प्रकृत्या ह्युपपन्नोऽसि बुद्ध्या वा बहुदर्शन ।
उभयोरेव वामर्थे यतिष्ये तव तस्य च । संश्लेषं वा करिष्यामि शाश्वतं ह्यनपायिनं ।
तादृशं हि कुले जातमनृशंसं बहुश्रुतं । अमात्यं को न कुर्व्वीत राज्यप्रणयकोविदं ।
यस्त्वं प्रच्यावितो राज्याद्व्यसनञ्चोत्तमं गतः । आनृशंस्येन वृत्तेन क्षत्रियेच्छसि जीवितुं । ३९३५
आगन्ता मद्गृहे तात वैदेहः सत्यसङ्गरः । अथाहं तं नियोक्ष्यामि तत् करिष्यत्यसंशयं ।
तत आहूय वैदेहं मुनिर्व्वचनमब्रवीत् । अयं राजकुले जातो विदिताभ्यन्तरो मम ।
आदर्श इव शुद्धात्मा शारदश्चन्द्रमा यथा । नास्मिन् पश्यामि वृजिनं सर्व्वतो मे परीक्षितः ।
तेन ते सन्धिरेवास्तु विश्वसास्मिन् यथा मयि । न राज्यमनमात्येन शक्यं शास्तुमपि त्र्यहं ।
अमात्यः शूर एव स्यात् बुद्धिसम्पन्न एव वा । ताभ्याञ्चैवोभयं राजन् पश्य राज्यप्रयोजनं । ३९४०
धर्म्मात्मनां क्वचिल्लोके नान्याऽस्ति गतिरीदृशी । महात्मा राजपुत्रोऽयं सतां मार्गमनुष्ठितः ।
सुसंगृहीतस्त्वेवैष त्वया धर्म्मपुरोगमः । संसेव्यमानः शत्रूंस्ते गृह्णीयान्महतो गणान् ।
यद्ययं प्रतियुध्येत्त्वां स्वकर्म्म क्षत्रियस्य तत् । जिगीषमाणस्त्वां युद्धे पितृपैतामहे पदे ।
त्वञ्चापि प्रतियुध्येथा विजिगीषुव्रते स्थितः । अयुद्ध्वैव नियोगान्मे वशे कुरु हिते स्थितः ।
स त्वं धर्म्ममवेक्षस्व हित्वा लोभमसाम्प्रतं । न च कामान्न च द्रोहात् स्वधर्म्मं हातुमर्हसि । ३९४५
नैव नित्यं जयस्तात नैव नित्यं पराजयः । तस्माद्भोजयितव्यश्च भोक्तव्यश्च परो जनः ।
आत्मन्यपि च संदृश्यावुभौ जयपराजयौ । निःशेषकारिणां तात निःशेषकरणाद्भयं ।

इत्युक्तः प्रत्युवाचेदं वचनं ब्राह्मणर्षभं । प्रतिपूज्याभिसत्कृत्य पूजार्हमनुमान्य च ।
यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयाद्बहुश्रुतः । श्रेयस्कामो यथा ब्रूयादुभयोरेव तत् क्षमं
यद्वद्वचनमुक्तोऽस्मि करिष्यामि च तत्तथा । एतद्धि परमं श्रेयो न मेऽत्रास्ति विचारणा । ३९५०
ततः कौशल्यमाहूय मैथिलो वाक्यमब्रवीत् । धर्म्मतो नीतितश्चैव लोकश्च विजितो मया ।
अहं त्वया चात्मगुणैर्ज्जितः पार्थिवसत्तम । आत्मानमनवज्ञाय जितवद्वर्त्ततां भवान् ।
नावमन्यामि ते बुद्धिं नावमन्ये च पौरुषं । नावमन्ये जयामीति जितवद्वर्त्ततां भवान् ।
यथावत् पूजितो राजन् गृहं गन्ताऽसि मे गृहं । ततः संपूज्य तौ विप्रं विश्वस्तौ जग्मतुर्गृहान् ।
वैदेहस्त्वथ कौशल्यं प्रवेश्य गृहमञ्जसा । पाद्यार्घमधुपर्कैस्तं पूजार्हं प्रत्यपूजयत् । ३९५५
ददौ दुहितरं चास्मै रत्नानि विविधानि च । एष राज्ञां परो धर्म्मोऽनित्यौ जयपराजयौ ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि कालकवृक्षीये षडधिकशततोऽध्यायः ॥ १०६ ॥
॥ युधिष्ठिर उवाच ॥ ब्राह्मणक्षत्रियविशां शूद्राणाञ्च परन्तप । धर्म्मवृत्तञ्च वित्तञ्च वृत्त्युपायाः फलानि च ।
राज्ञां वृत्तञ्च कोषञ्च कोषसञ्जननं जयः । अमात्यगुणवृत्तिश्च प्रकृतीनाञ्च वर्द्धनं ।
षाड्गुण्यगुणकल्पश्च सेनावृत्तिस्तथैव च । परिज्ञानञ्च दुष्टस्य लक्षणञ्च सतामपि ।
समहीनाधिकानाञ्च यथावल्लक्षणञ्च यत् । मध्यमस्य च तुष्ट्यर्थं यथा स्थेयं विवर्द्धता । ३९६०
क्षीणग्रहणवृत्तिश्च यथा धर्म्मं प्रकीर्त्तितं । लघुना देशरूपेण ग्रन्थयोगेन भारत ।
विजिगीषोस्तथा वृत्तमुक्तञ्चैव तथैव ते । गणानां वृत्तिमिच्छामि श्रोतुं मतिमतांवर ।
यथा गणाः प्रवर्द्धन्ते न भिद्यन्ते च भारत । अरींश्च विजिगीषन्ते सुहृदः प्राप्नुवन्ति च ।
भेदमूलो विनाशो हि गणानामुपलक्षये । मन्त्रसंवरणं दुःखं बहूनामिति मे मतिः ।
एतदिच्छाम्यहं श्रोतुं निखिलेन परन्तप । यथा च ते न भिद्येरंस्तच्च मे वद पार्थिव । ३९६५
॥ भीष्म उवाच ॥ गणानाञ्च कुलानाञ्च राज्ञां भरतसत्तम । वैरसन्दीपनावेतौ लोभामर्षौ नराधिप ।
लोभमेको हि वृणुते ततोऽमर्षमनन्तरं । तौ क्षयव्ययसंयुक्तावन्योन्यञ्च विनाशिनौ ।
चारमन्त्रबलादानैः सामदानविभेदनैः । क्षयव्ययभयोपायैः कर्षयन्तीतरेतरं ।
तत्रादानेन भिद्यन्ते गणाः संघातवृत्तयः । भिन्ना विमनसः सर्व्वे गच्छन्त्यरिवशं भयात् ।
भेदे गणा विनश्युर्हि भिन्नास्तु सुजयाः परैः । तस्मात् संघातयोगेन प्रयतेरन् गणाः सदा । ३९७०
अर्थाश्चैवाधिगम्यन्ते संघातबलपौरुषैः । बाह्याश्च मैत्रीं कुर्व्वन्ति तेषु संघातवृत्तिषु ।
ज्ञानवृद्धाः प्रशंसन्ति शुश्रूषन्तः परस्परं । विनिवृत्ताभिसन्धानाः सुखमेधन्ति सर्व्वशः ।
धर्म्मिष्ठान् व्यवहारांश्च स्थापयन्तश्च शास्त्रतः । यथावत् प्रतिपश्यन्तो विवर्द्धन्ते गणोत्तमाः ।
पुत्रान् भ्रातॄन् निगृह्णन्तो विनयन्तश्च तान् सदा । विनीतांश्च प्रगृह्णन्तो विवर्द्धन्ते गणोत्तमाः ।
चारमन्त्रविधानेषु कोषसन्निचयेषु च । नित्ययुक्ता महाबाहो वर्द्धन्ते सर्व्वतो गणाः । ३९७५
प्राज्ञान् शूरान्महोत्साहान् कर्म्मसु स्थिरपौरुषान् । मानयन्तः सदा युक्ता विवर्द्धन्ते गणा नृप ।

द्रव्यवन्तश्च शूराश्च शास्त्रज्ञाः शास्त्रपारगाः। कृच्छ्रास्वापत्सु संमूढान् गणाः सन्तारयन्ति ते।
क्रोधो भेदो भयं दण्डः कर्षणं निग्रहो वधः। नयत्यरिवशं सद्यो गणान् भरतसत्तम।
तस्मान्मानयितव्यास्ते गणमुख्याः प्रधानतः। लोकयात्रा समायत्ता भूयसी तेषु पार्थिव।
मन्त्रगुप्तिः प्रधानेषु चारश्चारिचकर्षण। न गणाः कृत्स्नशो मन्त्रं श्रोतुमर्हन्ति भारत। ३९८०
गणमुख्यैस्तु सम्भूय कार्य्यं गणहितं मिथः। पृथग्गणस्य भिन्नस्य विततस्य ततोऽन्यथा।
अर्थाः प्रत्यवसीदन्ति तथाऽनर्था भवन्ति च। तेषामन्योन्यभिन्नानां स्वशक्तिमनुतिष्ठतां।
निग्रहः पण्डितैः कार्य्यः क्षिप्रमेव प्रधानतः। कुलेषु कलहा जाताः कुलवृद्धैरुपेक्षिताः।
गोत्रस्य नाशं कुर्व्वन्ति गणभेदस्य कारकं। आभ्यन्तरभयं रक्ष्यमसारं वाह्यतो भयं।
आभ्यन्तरं भयं राजन् सद्यो मूलानि कृन्तति। अकस्मात् क्रोधमोहाभ्यां लोभाद्वाऽपि स्वभावजात्। ३९८५
अन्योन्यं नाभिभाषन्ते तत् पराभवलक्षणं। जात्या च सदृशाः सर्व्वे कुलेन सदृशास्तथा।
न चोद्योगेन बुद्ध्या वा रूपद्रव्येण वा पुनः। भेदाच्चैव प्रदानाच्च भिद्यन्ते रिपुभिर्गणाः।
तस्मात् सङ्घातमेवाहुर्गणानां शरणं महत्।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि सप्ताधिकशततोऽध्यायः ॥ १०७ ॥
॥ युधिष्ठिर उवाच ॥ महानयं धर्म्मपथो बहुशाखश्च भारत। किंस्विदेवेह धर्म्माणामनुष्ठेयतमं मतं।
किं कार्य्यं सर्व्वधर्म्माणां गरीयो भवतो मतं। यथाऽहं परमं धर्म्ममिह च प्रेत्य चाप्नुयां। ३९९०
॥ भीष्म उवाच ॥ मातापित्रोर्गुरूणाञ्च पूजा बहुमता मम। इह युक्तो नरो लोकान् यशश्च महदश्नुते।
यच्च तेऽभ्यनुजानीयुः कर्म्म तात सुपूजिताः। धर्म्माधर्म्मविरुद्धं वा तत् कर्त्तव्यं युधिष्ठिर।
न च तैरभ्यनुज्ञातो धर्म्ममन्यं समाचरेत्। यं च तेऽभ्यनुजानीयुः स धर्म्म इति निश्चयः।
एत एव त्रयो लोका एत एवाश्रमास्त्रयः। एत एव त्रयो वेदा एत एव त्रयोऽग्नयः।
पिता वै गार्हपत्योऽग्निर्म्माताऽग्निर्दक्षिणः स्मृतः। गुरुराहवनीयस्तु साऽग्नित्रेता गरीयसी। ३९९५
त्रिष्वप्रमाद्यन्नेतेषु त्रींल्लोकांश्च विजेष्यसि। पितृवृत्त्या त्विमं लोकं मातृवृत्त्या तथा परं।
ब्रह्मलोकं गुरोर्वृत्त्या नियमेन तरिष्यसि। सम्यगेतेषु वर्त्तस्व त्रिषु लोकेषु भारत।
यशः प्राप्स्यसि भद्रन्ते धर्म्मञ्च सुमहत्फलं। नैतानतिशयेज्जातु नात्यश्नीयान्न दूषयेत्।
नित्यं परिचरेच्चैव तद्वै सुकृतमुत्तमं। कीर्त्तिं पुण्यं यशो लोकान् प्राप्स्यसे राजसत्तम।
सर्व्वे तस्यादृता लोका यस्यैते त्रय आदृताः। अनादृतास्तु यस्यैते सर्व्वास्तस्याफलाः क्रियाः। ४०००
न चायं न परो लोकस्तस्य चैव परन्तप। अमानिता नित्यमेव यस्यैते गुरवस्त्रयः।
न चास्मिन्न परे लोके यशस्तस्य प्रकाशते। न चान्यदपि कल्याणं परत्र समुदाहृतं।
तेभ्य एव हि यत् सर्व्वं कृत्वा च विसृजाम्यहं। तदासीन्मे शतगुणं सहस्रगुणमेव च।
तस्मान्मे सम्प्रकाशन्ते त्रयो लोका युधिष्ठिर। दशैव तु सदाचार्य्यः श्रोत्रियानतिरिच्यते।
दशाचार्य्यानुपाध्याय उपाध्यायान् पिता दश। पितॄन्दश तु मातैका सर्व्वां वा पृथिवीमपि। ४००५

गुरुत्वेनातिभवति नास्ति मातृसमो गुरुः । गुरुर्गरीयान् पितृतो मातृतश्चेति मे मतिः ।
उभौ हि मातापितरौ जन्मन्येवोपयुज्यतः । शरीरमेव सृजतः पिता माता च भारत ।
आचार्य्यशिष्टा या जातिः सा दिव्या साऽजराऽमरा । अवध्या हि सदा माता पिता चाप्यपकारिणौ ।
न संदुष्यति तत् कृत्वा न च ते दूषयन्ति तं । धर्म्माय यतमानानां विदुर्देवा महर्षिभिः ।
य आवृणोत्यवितथेन कर्म्मणा ऋतं ब्रुवन्ननृतं सम्प्रयच्छन् । तं वै मन्येत पितरं मातरञ्च तस्मै न द्रुह्येत् कृतमस्य जानन् । ४०१०
विद्यां श्रुत्वा ये गुरुं नाद्रियन्ते प्रत्यासन्ना मनसा कर्म्मणा वा । तेषां पापं भ्रूणहत्याविशिष्टं नान्यस्तेभ्यः पापकृ
दस्ति लोके ।
तथैव ते गुरुभिर्भावनीयास्तथा तेषां गुरवोऽप्यर्चनीयाः ।
तस्मात् पूजयितव्याश्च संविभाज्याश्च यत्नतः । गुरवोऽर्च्चयितव्याश्च पुराणं धर्म्ममिच्छता ।
येन प्रीणाति पितरं तेन प्रीतः प्रजापतिः । प्रीणाति मातरं येन पृथिवी तेन पूजिता ।
येन प्रीणात्युपाध्यायं तेन स्याद्ब्रह्म पूजितं । मातृतः पितृतश्चैव तस्मात् पूज्यतमो गुरुः । ४०१५
ऋषयश्च हि देवाश्च प्रीयन्ते पितृभिः सह । पूज्यमानेषु गुरुषु तस्मात् पूज्यतमो गुरुः ।
केनचिन्न च वृत्तेन ह्यवज्ञेयो गुरुर्भवेत् । न च माता न च पिता मन्यते यादृशो गुरुः ।
न तेऽवमानमर्हन्ति न तेषां दूषयेत् कृतं । गुरूणामेव सत्कारं विदुर्देवा महर्षिभिः ।
उपाध्यायं पितरं मातरञ्च येऽभिद्रुह्यन्ते मनसा कर्म्मणा वा । तेषां पापं भ्रूणहत्याविशिष्टं तस्मान्नान्यः पापकृ
दस्ति लोके ।
भृतो वृद्धो यो न बिभर्त्ति पुत्रः स्वयोनिजः पितरं मातरञ्च । तद्वै पापं भ्रूणहत्याविशिष्टं तस्मान्नान्यः पापकृ
दस्ति लोके । ४०२०
मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य गुरुघातिनः । चतुर्णां वयमेतेषां निष्कृतिं नानुशुश्रुम ।
एतत् सर्व्वमनिर्द्देशेनैवमुक्तं यत् कर्त्तव्यं पुरुषेणेह लोके । एतच्छ्रेयो नान्यदस्माद्विशिष्टं सर्व्वान् धर्म्माननुसृत्यैतदुक्तं ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥
॥ युधिष्ठिर उवाच ॥ कथं धर्म्मे स्थातुमिच्छन्नरो वर्त्तेत भारत । विद्वन् जिज्ञासमानाय प्रब्रूहि भरतर्षभ ।
सत्यञ्चैवानृतञ्चोभे लोकानावृत्य तिष्ठतः । तयोः किमाचरेद्राजन् पुरुषो धर्म्मनिश्चितः ।
किंस्वित् सत्यं किमनृतं किंस्विद्धर्म्यं सनातनं । कस्मिन् काले वदेत् सत्यं कस्मिन् कालेऽनृतं वदेत् । ४०२५
॥ भीष्म उवाच ॥ सत्यस्य वचनं साधु न सत्याद्विद्यते परं । यत्तु लोकेषु दुर्ज्ञानं तत्प्रवक्ष्यामि भारत ।
भवेत् सत्यं न वक्तव्यं वक्तव्यमनृतं भवेत् । यत्रानृतं भवेत् सत्यं सत्यञ्चाप्यनृतं भवेत् ।
तादृशो बध्यते बालो यत्र सत्यमनुष्ठितं । सत्यानृते विनिश्चित्य ततो भवति धर्म्मवित् ।
अप्यनार्य्योऽकृतप्रज्ञः पुरुषोऽप्यतिदारुणः । सुमहत् प्राप्नुयात् पुण्यं बलाकोऽन्धवधादिव ।
किमाश्चर्य्यञ्च यन्मूढो धर्म्मकामोऽप्यधर्म्मवित् । सुमहत् प्राप्नुयात् पुण्यं गङ्गायामिव कौशिकः । ४०३०
तादृशोऽयमनुप्रश्नो यत्र धर्म्मः सुदुर्लभः । दुष्करः प्रतिसंख्यातुं न केनात्र व्यवस्यति ।

प्रभवार्थाय भूतानां धर्म्मप्रवचनं कृतं। यत् स्यात् प्रभवसंयुक्तं स धर्म्म इति निश्चयः।
अहिंसार्थाय भूतानां धर्म्मप्रवचनं कृतं। यत् स्यादहिंसासंयुक्तः स धर्म्म इति निश्चयः।
धारणाद्धर्म्ममित्याहुर्धर्म्मेण विधृताः प्रजाः। यत् स्याद्धारणसंयुक्तं स धर्म्म इति निश्चयः।
श्रुतिधर्म्म इति ह्येके नेत्याहुरपरे जनाः। न च तत् प्रत्यसूयामो न हि सर्व्वं विधीयते। ४०२५
ये न्यायेन जिहीर्षन्तो धनमिच्छन्ति कर्हिचित्। तेभ्यस्तु न तदाख्येयं स धर्म्म इति निश्चितः।
अकूजनेन चेन्मोक्षो नावकूजेत् कथञ्चन। अवश्यं कूजितव्ये वा शङ्केरन् वाऽप्यकूजनात्।
श्रेयस्तत्रानृतं वक्तुं सत्यादिति विचारितं। यः पापैः सह सम्बन्धान्मुच्यते शपथादपि।
न तेभ्योऽपि धनं देयं शक्ये सति कथञ्चन। पापेभ्योऽपि धनं दत्तं दातारमपि पीडयेत्।
स्वशरीरोपरोधेन धनमादातुमिच्छतः। सत्यसम्प्रतिपत्त्यर्थं यद्ब्रूयुः साक्षिणः क्वचित्। ४०३०
अनुक्त्वा तत्र तद्वाच्यं सर्व्वे तेऽनृतवादिनः। प्राणात्यये विवाहे च वक्तव्यमनृतं भवेत्।
अर्थस्य रक्षणार्थाय परेषां धर्म्मकारणात्। परेषां सिद्धिमाकाङ्क्षन् नीचः स्याद्धर्म्मभिक्षुकः।
प्रतिश्रुत्य प्रदातव्यः स्वकार्य्यस्तु बलात् कृतः। यः कश्चिद्धर्म्मसमयात् प्रच्युतो धर्म्मसाधनः।
दण्डेनैव स हन्तव्यस्तं पन्थानं समाश्रितः। च्युतः सदैव धर्म्मेभ्यो ऽमानवं धर्म्ममास्थितः।
शठः स्वधर्म्ममुत्सृज्य तमिच्छेदुपजीवितुं। सर्व्वोपायैर्निहन्तव्यः पापो निकृतिजीवनः। ४०३५
धनमित्येव पापानां सर्व्वेषामिह निश्चयः। अविषह्या ह्यसम्भोज्या निकृत्या पतनं गताः।
च्युता देवमनुष्येभ्यो यथा प्रेतास्तथैव ते। निर्यज्ञास्तपसा हीना मा स्म तैः सह सङ्गमः।
धननाशाद्दुःखतरं जीविताद्विप्रयोजनं। अयन्ते रोचतां धर्म्म इति वाच्यः प्रयत्नतः।
न कश्चिदस्ति पापानां धर्म्म इत्येष निश्चयः। तथागतञ्च यो हन्यान्नासौ पापेन लिप्यते।
स्वकर्म्मणा हतं हन्ति हत एव स हन्यते। तेषु यः समयं कश्चित् कुर्व्वीत हतबुद्धिषु। ४०४०
यथा काकश्च गृध्रश्च तथैवोपधिजीविनः। ऊर्द्ध्वं देहविमोक्षान्ते भवन्त्येतासु योनिषु।
यस्मिन् यथा वर्त्तते यो मनुष्यस्तस्मिंस्तथा वर्त्तितव्यं स धर्म्मः। मायाचारो मायया बाधितव्यः साध्वाचारः साधुना प्रत्युपेयः।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि सत्यानृतके नवाधिकशततमोऽध्यायः॥ १०९॥

॥ युधिष्ठिर उवाच॥ क्लिश्यमानेषु भूतेषु तैस्तैर्भावैस्ततस्ततः। दुर्गाण्यतितरेद्येन तन्मे ब्रूहि पितामह।
॥ भीष्म उवाच॥ आश्रमेषु यथोक्तेषु यथोक्तं ये द्विजातयः। वर्त्तन्ते संयतात्मानो दुर्गाण्यतितरन्ति ते।
ये दम्भान्नाचरन्ति स्म येषां वृत्तिश्च संयता। विषयांश्च निगृह्णन्ति दुर्गाण्यतितरन्ति ते। ४०४५
प्रत्याहुर्नोच्यमाना ये न हिंसन्ति च हिंसिताः। प्रयच्छन्ति न याचन्ते दुर्गाण्यतितरन्ति ते।
वासयन्त्यतिथीन्नित्यं नित्यं ये चानसूयकाः। नित्यं स्वाध्यायशीलाश्च दुर्गाण्यतितरन्ति ते।
मातापित्रोश्च ये वृत्तिं वर्त्तन्ते धर्म्मकोविदाः। वर्ज्जयन्ति दिवास्वप्नं दुर्गाण्यतितरन्ति ते।
ये वा पापं न कुर्व्वन्ति कर्म्मणा मनसा गिरा। निक्षिप्तदण्डा भूतेषु दुर्गाण्यतितरन्ति ते।

ये न लोभान्नयन्त्यर्थान् राजानो रजसाऽन्विताः। विषयान् परिरक्षन्ति दुर्गाण्यतितरन्ति ते। ४०६०
स्वेषु दारेषु वर्त्तन्ते नान्यवृत्तिमृतावृतौ। अग्निहोत्रपराः सन्तो दुर्गाण्यतितरन्ति ते।
आहवेषु च ये शूरास्त्यक्त्वा मरणजं भयं। धर्म्मेण जयमिच्छन्ति दुर्गाण्यतितरन्ति ते।
ये वदन्तीह सत्यानि प्राणत्यागेऽप्युपस्थिते। प्रमाणभूता भूतानां दुर्गाण्यतितरन्ति ते।
कर्म्माण्यकुहकार्थानि येषां वाचश्च सूनृताः। येषामर्थाश्च सन्नद्धा दुर्गाण्यतितरन्ति ते।
अनध्यायेषु ये विप्राः स्वाध्यायं नेह कुर्व्वते। तपोनिष्ठाः सुतपसो दुर्गाण्यतितरन्ति ते। ४०६५
ये तपश्च तपस्यन्ति कौमारब्रह्मचारिणः। विद्यावेदव्रतस्नाता दुर्गाण्यतितरन्ति ते।
ये च संशान्तरजसः संशान्ततमसश्च ये। सत्त्वे स्थिता महात्मानो दुर्गाण्यतितरन्ति ते।
येषां न कश्चित्त्रसति न त्रसन्ति हि कस्यचित्। येषामात्मसमो लोको दुर्गाण्यतितरन्ति ते।
परश्रिया न तप्यन्ति ये सन्तः पुरुषर्षभाः। ग्राम्यादर्थान्निवृत्ताश्च दुर्गाण्यतितरन्ति ते।
सर्व्वान्देवान्नमस्यन्ति सर्व्वधर्म्मांश्च शृण्वते। ये श्रद्दधानाः शान्ताश्च दुर्गाण्यतितरन्ति ते। ४०७०
ये न मानित्वमिच्छन्ति मानयन्ति च ये परान्। मान्यमानान्नमस्यन्ति दुर्गाण्यतितरन्ति ते।
ये च श्राद्धानि कुर्व्वन्ति तिथ्यां तिथ्यां प्रजार्थिनः। सुविशुद्धेन मनसा दुर्गाण्यतितरन्ति ते।
ये क्रोधं संनियच्छन्ति क्रुद्धान् संशमयन्ति च। न च कुप्यन्ति भूतानां दुर्गाण्यतितरन्ति ते।
मधु मांसञ्च ये नित्यं वर्ज्जयन्तीह मानवाः। जन्मप्रभृति मद्यञ्च दुर्गाण्यतितरन्ति ते।
यात्रार्थं भोजनं येषां सन्तानार्थञ्च मैथुनं। वाक् सत्यवचनार्थाय दुर्गाण्यतितरन्ति ते। ४०७५
ईश्वरं सर्व्वभूतानां जगतः प्रभवाप्ययं। भक्ता नारायणं देवं दुर्गाण्यतितरन्ति ते।
य एष पद्मरक्ताक्षः पीतवासा महाभुजः। सुहृद्भ्राता च मित्रञ्च सम्बन्धी च तथाऽच्युतः।
य इमान् सकलान् लोकान् चर्म्मवत् परिवेष्टयेत्। इच्छन् प्रभुरचिन्त्यात्मा गोविन्दः पुरुषोत्तमः।
स्थितः प्रियहिते जिष्णोः स एव पुरुषोत्तमः। राजंस्तव च दुर्द्धर्षो वैकुण्ठः पुरुषर्षभः।
य एनं संश्रयन्तीह भक्त्या नारायणं हरिं। ते तरन्तीह दुर्गाणि न चात्रास्ति विचारणा। ४०८०
दुर्गातितरणं ये च पठन्ति श्रावयन्ति च। कथयन्ति च विप्रेभ्यो दुर्गाण्यतितरन्ति ते।
इति कृत्यसमुद्देशः कीर्त्तितस्ते मयाऽनघ। तरन्ते येन दुर्गाणि परत्रेह च मानवाः।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि दुर्गातितरणे दशाधिकशतोऽध्यायः॥ ११० ॥
॥ युधिष्ठिर उवाच ॥ अशौम्याः सौम्यरूपेण सौम्याश्चासौम्यदर्शनाः। ईदृशान् पुरुषांस्तात कथं विद्यामहे वयं।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। व्याघ्रगोमायुसंवादं तन्निबोध युधिष्ठिर।
पुरिकायां पुरि पुरा श्रीमत्यां पौरिको नृपः। परहिंसारतिः क्रूरो बभूव पुरुषाधमः। ४०८५
स त्वायुषि परिक्षीणे जगामानीप्सितां गतिं। गोमायुत्वञ्च सम्प्राप्तो दूषितः पूर्व्वकर्म्मणा।
संस्मृत्य पूर्व्वभूतिञ्च निर्व्वेदं परमं गतः। न भक्षयति मांसानि परैरुपहृतान्यपि।
अहिंस्रः सर्व्वभूतेषु सत्यवाक् सुदृढव्रतः। स चकार यथाकालमाहारं पतितैः फलैः।

श्मशाने तस्य चावासो गोमायोः सम्मतोऽभवत्। जन्मभूम्यनुरोधाच्च नान्यं वासमरोचयत्।
तस्य शौचममृष्यन्तस्ते सर्व्वे सहजातयः। चालयन्ति स्म तां बुद्धिं वचनैः प्रश्रयोत्तरैः। ४०९०
वसन् पितृवने रौद्रे शौचे वर्त्तितुमिच्छसि। इयं विप्रतिपत्तिस्ते यदा त्वं पिशिताशनः।
तत्समानो भवास्माभिर्भोज्यं दास्यामहे वयं। भुङ्क्ष्व शौचं परित्यज्य यद्धि भुक्तं तदाऽस्तु ते।
इति तेषां वचः श्रुत्वा प्रत्युवाच समाहितः। मधुरैः प्रसृतैर्व्वाक्यैर्हेतुमद्भिरनिष्ठुरैः।
अप्रमाणा प्रसूतिर्मे शीलतः क्रियते कुलं। प्रार्थयामि च तत् कर्म्म येन विस्तीर्य्यते यशः।
श्मशाने यदि मे वासो समाधिर्मे निशम्यतां। आत्मा फलति कर्म्माणि नाश्रमो धर्म्मकारणं। ४०९५
आश्रमे यो द्विजं हन्याद्गां वा दद्यादनाश्रमे। किंनु तत् पातकं न स्यात्तद्वा दत्तं वृथा भवेत्।
भवन्तः स्वार्थलोभेन केवलं भक्षणे रताः। अनुबन्धे तु ये दोषास्तान्न पश्यन्ति मोहिताः।
अप्रत्ययकृतां गर्ह्यामर्थापनयदूषितां। इह चामुत्र चानिष्टां तस्माद्वृत्तिं न रोचये।
तं शुचिं पण्डितं मत्वा शार्दूलः ख्यातविक्रमः। कृत्वात्मसदृशीं पूजां साचिव्येऽवरयत्स्वयं।
॥ शार्दूल उवाच ॥ सौम्य विज्ञातरूपस्त्वं गच्छ यात्रां मया सह। व्रियन्तामीप्सिता भोगाः परिहार्य्याश्च पुष्कलाः। ४१००
तीक्ष्णा इति वयं ख्याता भवन्तो ज्ञापयामहे। मृदुपूर्व्वं हितश्चैव श्रेयश्चाधिगमिष्यसि।
अथ सम्पूज्य तद्वाक्यं मृगेन्द्रस्य महात्मनः। गोमायुः प्रश्रितं वाक्यं बभाषे किञ्चिदानतः।
॥ गोमायुरुवाच ॥ सदृशं मृगराजैतत्तव वाक्यं मदन्तरे। यत्सहायान्मृगयसे धर्म्मार्थकुशलान् शुचीन्।
न शक्यं ह्यनमात्येन महत्त्वमनुशासितुं। दुष्टामात्येन वा वीर शरीरपरिपन्थिना।
सहायाननुरक्तांस्तु नयज्ञानुपसंहितान्। परस्परमसंहृष्टान् विजिगीषूनलोलुपान्। ४१०५
अनतीतोपधान् प्राज्ञान् हिते युक्तान्मनस्विनः। पूजयेथा महाभाग यथाचार्य्यान् यथा पितॄन्।
न त्वेव मम सन्तोषाद्रोचतेऽन्यन्मृगाधिप। न कामये सुखान् भोगानैश्वर्य्यं वा त्वदाश्रयं।
न योक्ष्यति हि मे शीलं तव भृत्यैः पुरातनैः। ते त्वां विभेदयिष्यन्ति दुःशीलाश्च मदन्तरं।
न संश्रयः श्लाघनीयो ह्यन्येषामपि भास्वतां। कृतात्मा सुमहाभागः पापकेष्वप्यदारुणः।
दीर्घदर्शी महोत्साहः स्थूललक्षो महाबलः। कृती चामोघकर्त्ताऽसि भोगैश्च समलङ्कृतः। ४११०
न स्वल्पेनास्मि सन्तुष्टो दुःखावृत्तिरनुष्ठिता। सेवायाश्चापि नाभिज्ञः स्वच्छन्देन वनेचरः।
राजोपक्रोशदोषाश्च सर्व्वे संश्रयवासिनां। व्रतचर्य्या तु निःसङ्गा निर्भया वनवासिनां।
नृपेणाहूयमानस्य यत्तिष्ठति भयं हृदि। न तत्तिष्ठति तुष्टानां वने मूलफलाशिनां।
पानीयं वा निरायासं स्वाद्वन्नं वा भयोत्तरं। विचार्य्य खलु पश्यामि तत् सुखं यत्र निर्वृतिः।
अपराधैर्न तावन्तो भृत्याः शिष्टा नराधिपैः। उपघातैर्यथा भृत्या दूषिता निधनं गताः। ४११५
यदि त्वेतन्मया कार्य्यं मृगेन्द्र यदि मन्यसे। समयं कृतमिच्छामि वर्त्तितव्यं यथा मयि।
मदीया माननीयास्ते श्रोतव्यञ्च हितं वचः। कल्पिता या च मे वृत्तिः सा भवेत्त्वयि सुस्थिरा।
न मन्त्रयेयमन्यैस्ते सचिवैः सह कर्हिचित्। नीतिमन्तः परीप्सन्तो वृथा ब्रूयुः परे मयि।

एक एकेन संगम्य रहो ब्रूयां हितं वचः। न च ते ज्ञातिकार्य्येषु प्रष्टव्योऽहं हिताहिते।
मया सम्मन्त्र्य पश्चाच्च न हिंस्याः सचिवास्त्वया। मदीयानाञ्च कुपितो मा त्वं दण्डं निपातयेः। ४११०
एवमस्त्विति तेनासौ मृगेन्द्रेणाभिपूजितः। प्राप्तवान्मतिसाचिव्यं गोमायुर्व्याघ्रयोनितः।
तं तथा सत्कृतं दृष्ट्वा पूज्यमानं स्वकर्म्मसु। प्राद्विषन् कृतसंघाताः पूर्व्वभृत्या मुहुर्मुहुः।
मित्रबुद्ध्या च गोमायुं सान्त्वयित्वा प्रसाद्य च। दोषेषु समतां नेतुमैच्छन्नशुभबुद्धयः।
अन्यथा ह्युषिताः पूर्व्वं परद्रव्याभिहारिणः। अशक्ताः किञ्चिदादातुं द्रव्यं गोमायुयन्त्रिताः।
व्युत्थानञ्च विकाङ्क्षद्भिः कथाभिः प्रतिलोभ्यते। धनेन महता चैव बुद्धिरस्य विलोभ्यते। ४११५
न चापि स महाप्राज्ञस्तस्माद्धैर्य्याच्चचाल ह। अथास्य समयं कृत्वा विनाशाय तथाऽपरे।
ईप्सितञ्च मृगेन्द्रस्य मांसं यत्तत्र संस्कृतं। अपनीय स्वयं तद्धि तैर्न्यस्तं तस्य वेश्मनि।
यदर्थञ्चाप्यपहृतं येन तच्चैव मन्त्रितं। तस्य तद्विदितं सर्व्वं कारणार्थञ्च मर्षितं।
समयोऽयं कृतस्तेन साचिव्यमुपगच्छता। नोपघातस्त्वया कार्य्यो राजन् मैत्रीमिहेच्छता।
॥ भीष्म उवाच ॥ क्षुधितस्य मृगेन्द्रस्य भोक्तुमभ्युत्थितस्य च। भोजनायोपहर्त्तव्यं तन्मांसं नोपदृश्यते। ४१२०
मृगराजेन चाज्ञप्तं दृश्यतां चौर इत्युत। कृतकैश्चैव तन्मांसं मृगेन्द्रायोपवर्णितं।
सचिवेनापनीतं ते विदुषा प्राज्ञमानिना। सरोषस्त्वथ शार्दूलः श्रुत्वा गोमायुचापलं।
बभूवामर्षितो राजा वधञ्चास्य व्यरोचयत्। छिद्रं तु तस्य तद्दृष्ट्वा प्रोचुस्ते पूर्व्वमन्त्रिणः।
सर्व्वेषामेव सोऽस्माकं वृत्तिभङ्गे प्रवर्त्तते। निश्चित्यैवं पुनस्तस्य ते तत् कर्म्माण्यवर्णयन्।
इदं तस्येदृशं कर्म्म किन्तेन न कृतं भवेत्। श्रुतश्च स्वामिना पूर्व्वं यादृशश्चैव तादृशः। ४१२५
वाङ्मात्रेणैव धर्म्मिष्ठः स्वभावेन तु दारुणः। धर्म्मच्छद्मा ह्ययं पापो वृथाचारपरिग्रहः।
कार्य्यार्थं भोजनार्थेषु व्रतेषु कृतवान् श्रमं। यदि विप्रत्ययो ह्येष तदिदं दर्शयाम ते।
तन्मांसञ्चैव गोमायोस्तैः क्षणादाशु ढौकितं। मांसापनयनं ज्ञात्वा व्याघ्रः श्रुत्वा च तद्वचः।
आज्ञापयामास तदा गोमायुर्वध्यतामिति। शार्दूलस्य वचः श्रुत्वा शार्दूलजननी ततः।
मृगराजं हितैर्वाक्यैः सम्बोधयितुमागमत्। पुत्र नैतत्त्वया ग्राह्यं कपटारम्भसंयुतं। ४१३०
कर्म्मसंघर्षजैर्दोषैर्दुष्येताशुचिभिः शुचिः। नोच्छ्रितं सहते कश्चित् प्रक्रिया वैरकारिका।
शुचेरपि हि युक्तस्य दोष एव निपात्यते। मुनेरपि वनस्थस्य स्वानि कर्म्माणि कुर्व्वतः।
उत्पाद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः। लुब्धानां शुचयो द्वेष्याः कातराणां तरस्विनः।
मूर्खाणां पण्डिता द्वेष्या दरिद्राणां महाधनाः। अधार्म्मिकाणां धर्म्मिष्ठा विरूपाणां सुरूपिणः।
बहवः पण्डिता मूर्खा लुब्धा मायोपजीविनः। कुर्य्युर्दोषमदोषस्य बृहस्पतिमतेरपि। ४१३५
शून्यात्तच्च गृहान्मांसं यद्यप्यपहृतं तव। नेच्छते दीयमानञ्च साधु तावद्विमृश्यतां।
असभ्याः सभ्यसंकाशाः सभ्याश्चासभ्यदर्शनाः। दृश्यन्ते विविधा भावास्तेषु युक्तं परीक्षणं।
तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव। न चैवास्ति तलं व्योम्नि खद्योते न हुताशनः।

तस्मात् प्रत्यक्षदृष्टोऽपि युक्तो ह्यर्थः परीक्षितुं। परीक्ष्य ज्ञापयन्नर्थान्न पश्चात् परितप्यते।
न दुष्करमिदं पुत्र यत् प्रभुर्घातयेत् परं। श्लाघनीया यशस्या च लोके प्रभवतां क्षमा। ४१५०
ख्यापितोऽयं त्वया पुत्र सामन्तेष्वपि विश्रुतः। दुःखेनासाद्यते पात्रं धार्य्यतामेष ते सुहृत्।
दूषितं परदोषैर्हि गृह्णीते योऽन्यथा शुचिं। स्वयं संदूषितामात्यः क्षिप्रमेव विनश्यति।
तस्मादप्यरिसंघाताद्गोमायोः कश्चिदागतः। धर्म्मात्मा तेन चाख्यातं यथैतत् कपटं कृतं।
ततो विज्ञातचारित्रः सत्कृत्य स विमोक्षितः। परिष्वक्तश्च सस्नेहं मृगेन्द्रेण पुनः पुनः।
अनुज्ञाप्य मृगेन्द्रन्तु गोमायुर्नीतिशास्त्रवित्। तेनामर्षेण सन्तप्तः प्रायमासितुमैच्छत। ४१५५
शार्दूलस्तन्तु गोमायुं स्नेहात् प्रोत्फुल्ललोचनः। अवारयत् स धर्म्मिष्ठं पूजया प्रतिपूजयन्।
तं स गोमायुरालोक्य स्नेहादागतसम्भ्रमं। उवाच प्रणतो वाक्यं वाष्पगद्गदया गिरा।
पूजितोऽहं त्वया पूर्व्वं पश्चाच्चैव विमानितः। परेषामास्पदं नीतो वस्तुं नार्हाम्यहं त्वयि।
असन्तुष्टाश्च्युताः स्थानान्मानात् प्रत्यवरोपिताः। स्वयञ्चापहृता भृत्या ये चाप्युपहिताः परैः।
परिक्षीणाश्च लुब्धाश्च क्रुद्धा भीताः प्रतारिताः। हृतस्वा मानिनो ये च त्यक्तादाना महेप्सवः। ४१६०
सन्तापिताश्च ये केचिद्व्यसनौघप्रतीक्षिणः। अन्तर्हिताः सोपहितास्ते सर्व्वे परसाधनाः।
अवमानेन युक्तस्य स्थानभ्रष्टस्य वा पुनः। कथं यास्यसि विश्वासमहं तिष्ठामि वा कथं।
समर्थ इति संगृह्य स्थापयित्वा परीक्षितः। कृतञ्च समयं भित्वा त्वयाऽहमवमानितः।
प्रथमं यः समाख्यातः शीलवानिति संसदि। न वाच्यं तस्य वैगुण्यं प्रतिज्ञां परिरक्षता।
एवञ्चावमतस्येह विश्वासं मे न यास्यसि। त्वयि चापेतविश्वासे ममोद्वेगो भविष्यति। ४१६५
शङ्कितस्त्वमहं भीतः परे छिद्रानुदर्शिनः। अस्निग्धाश्चैव दुस्तोषाः कर्म्म चैतद्बहुच्छलं।
दुःखेन श्लिष्यते भिन्नं श्लिष्टं दुःखेन भिद्यते। भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्त्तते।
कश्चिदेव हि ते भर्त्तुर्दृश्यते न परात्मनोः। कार्य्यापेक्षा हि वर्त्तन्ते भावाः स्निग्धाः सुदुर्लभाः।
सुदुःखं पुरुषज्ञानं चित्तं येषां चलाचलं। समर्थो वाऽप्यशक्तो वा शतेष्वेकोऽधिगम्यते।
अकस्मात्प्रक्रिया नृणामकस्माच्चापकर्षणं। शुभाशुभे महत्त्वञ्च प्रकर्त्तुं बुद्धिलाघवं। ४१७०
एवंविधं सान्त्वमुक्त्वा धर्म्मकामार्थहेतुमत्। प्रसादयित्वा राजानं गोमायुर्वनमभ्यगात्।
अगृह्यानुनयं तस्य मृगेन्द्रस्य च बुद्धिमान्। गोमायुः प्रायमास्थाय त्यक्त्वा देहं दिवं ययौ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि व्याघ्रगोमायुसंवादे एकादशाधिकशततमोऽध्यायः॥ १११ ॥

॥ युधिष्ठिर उवाच ॥ किं पार्थिवेन कर्त्तव्यं किञ्च कृत्वा सुखी भवेत्। एतदाचक्ष्व तत्त्वेन सर्व्वधर्म्मभृताम्बर।
॥ भीष्म उवाच ॥ हन्त तेऽहं प्रवक्ष्यामि शृणु कार्य्यैकनिश्चयं। यथा राज्ञेह कर्त्तव्यं यच्च कृत्वा सुखी भवेत्।
नचैवं वर्त्तितव्यं स्म यथेदमनुशुश्रुम। उष्ट्रस्य तु महद्वृत्तं तन्निबोध युधिष्ठिर। ४१७५
जातिस्मरो महानुष्ट्रः प्राजापत्ययुगेऽभवत्। वरेण च्छन्दयामास ततश्चैनं पितामहः।

तपः सुमहदातिष्ठदरण्ये संशितव्रतः । तपसस्तस्य चान्तेऽथ प्रीतिमानभवद्विभुः ।
वरेण छन्दयामास ततश्चैनं पितामहः ।
॥ उष्ट्र उवाच ॥ भगवंस्त्वत्प्रसादान्मे दीर्घा ग्रीवा भवेदियं । योजनानां शतं साग्रं गच्छामि चरितुं विभो ।
एवमस्त्विति चोक्तः स वरदेन महात्मना । प्रतिलभ्य वरं श्रेष्ठं ययावुष्ट्रः स्वकं वनं । ४१८०
स चकार तदालस्यं वरदानात् सुदुर्म्मतिः । न चैच्छच्चरितुं गन्तुं दुरात्मा कालमोहितः ।
स कदाचित् प्रसार्य्यैव तां ग्रीवां शतयोजनां । चचार श्रान्तहृदयो वातश्चागात्ततो महान् ।
स गुहायां शिरोग्रीवां निधाय पशुरात्मनः । आस्तेऽनुवर्षमभ्यागात् सुमहत् प्लावयज्जगत् ।
अथ शीतपरीताङ्गो जम्बुकः क्षुच्छ्रमान्वितः । सदारस्तां गुहामाशु प्रविवेश जलार्दितः ।
स दृष्ट्वा मांसजीवी तु सुभृशं क्षुच्छ्रमान्वितः । अभक्षयत्ततो ग्रीवामुष्ट्रस्य भरतर्षभ । ४१८५
यदा त्वबुध्यतात्मानं भक्ष्यमाणं स वै पशुः । तदा सङ्कोचने यत्नमकरोद्भृशदुःखितः ।
यावदूर्द्ध्वमधश्चैव ग्रीवां संक्षिपते पशुः । तावत्तेन सदारेण जम्बुकेन स भक्षितः ।
स हत्वा भक्षयित्वा च तमुष्ट्रं जम्बुकस्तदा । विगते वातवर्षे तु निश्चक्राम गुहामुखात् ।
एवं दुर्ब्बुद्धिना प्राप्तमुष्ट्रेण निधनं तदा । आलस्यस्य क्रमात् पश्य महान्तं दोषमागतं ।
त्वमप्येवंविधं हित्वा योगेन नियतेन्द्रियः । वर्त्तस्व बुद्धिमूलन्तु विजयं मनुरब्रवीत् । ४१९०
बुद्धिश्रेष्ठानि कर्म्माणि बाहुमध्यानि भारत । तानि जङ्घाजघन्यानि भारप्रत्यवराणि च ।
राज्यं तिष्ठति दक्षस्य संगृहीतेन्द्रियस्य च । शान्तस्य बुद्धिमूलं हि विजयं मनुरब्रवीत् ।
गुह्यं मन्त्रं श्रुतवतः ससहायस्य चानघ । परीक्ष्यकारिणो ह्यर्थास्तिष्ठन्तीह युधिष्ठिर ।
सहाययुक्तेन मही कृत्स्ना शक्या प्रशासितुं ।
इदं हि सद्भिः कथितं विधिज्ञैः पुरा महेन्द्रप्रतिमप्रभाव । मयाऽपि चोक्तं तव शास्त्रदृष्ट्या यथैव बुद्ध्वा प्रचरस्व राजन् । ४१९१
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि उष्ट्रग्रीवोपाख्याने द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥
॥ युधिष्ठिर उवाच ॥ राजा राज्यमनुप्राप्य दुर्लभं भरतर्षभ । अमित्रस्यातिवृद्धस्य कथं तिष्ठेदसाधनः ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । सरिताञ्चैव संवादं सागरस्य च भारत ।
सुरारिनिलयः शश्वत् सागरः सरितां पतिः । पप्रच्छ सरितः सर्व्वाः संशयं जातमात्मनः ।
॥ सागर उवाच ॥ समूलशाखान् पश्यामि निहतान् क्षायिणो द्रुमान् । युष्माभिरिह पूर्णाभिर्व्वहतस्तत्र न वेतसं ।
अकायश्चाल्पसारश्च वेतसः कूलजश्च वः । अवज्ञया वा नानीतः किञ्च वा तेन वः कृतं । ४२००
तदहं श्रोतुमिच्छामि सर्व्वासामेव वो मतं । यथा चेमानि कूलानि हित्वा नायाति वेतसः ।
तत्र प्राह नदी गङ्गा वाक्यमुत्तममर्थवत् । हेतुमद्ग्राहकञ्चैव सागरं सरितां पतिं ।
॥ गङ्गोवाच ॥ तिष्ठन्त्येते यथास्थानं नगा ह्येकनिकेतनाः । ते त्यजन्ति ततः स्थानं प्रातिलोम्यान्न वेतसः ।
वेतसो वेगमायान्तं दृष्ट्वा नमति नापरे । सरिद्वेगेऽभ्यतिक्रान्ते स्थानमासाद्य तिष्ठति ।
कालज्ञः समयज्ञश्च सदा वश्यश्च नोद्धतः । अनुलोमस्तथा स्तब्धस्तेन नाभ्येति वेतसः । ४२०५

मारुतोदकवेगेन ये नमन्त्युन्नमन्ति च । ओषध्यः पादपा गुल्मा न ते यान्ति पराभवं ।

॥ भीष्म उवाच ॥ यो हि शत्रोर्व्विवृद्धस्य प्रभोर्व्वधविनाशने । पूर्व्वं न सहते वेगं क्षिप्रमेव विनश्यति ।

सारासारं बलं वीर्य्यमात्मनो द्विषतश्च यः । जानन् विचरति प्राज्ञो न स याति पराभवं ।

एवमेव यदा विद्वान्मन्यतेऽतिबलं रिपुं । संश्रयेद्वैतसीं वृत्तिमेतत् प्रज्ञानलक्षणं ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि सरित्सागरसंवादे त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

॥ युधिष्ठिर उवाच ॥ विद्वान्मूर्खप्रगल्भेन मृदुतीक्ष्णेन भारत । आक्रुश्यमाणः सदसि कथं कुर्य्यादरिन्दम । ४२१०

॥ भीष्म उवाच ॥ श्रूयतां पृथिवीपाल यथैषोऽर्थोऽनुगीयते । सदा सुचेताः सहते नरस्येहाल्पमेधसः ।

अरुष्यन् क्रुश्यमाणस्य सुकृतं नाम विन्दति । दुष्कृतञ्चात्मनोऽमर्षी रुष्यत्येवापमार्ष्टि वै ।

टिट्टिभं तमुपेक्षेत वाशमानमिवातुरं । लोकविद्वेषमापन्नो निष्फलं प्रतिपद्यते ।

इति संश्लाघते नित्यं तेन पापेन कर्म्मणा । इदमुक्तो मया कश्चित् सम्मतो जनसंसदि ।

स तत्र व्रीडितः शुष्का मृतकल्पोऽवतिष्ठते । श्लाघन्नश्लाघनीयेन कर्म्मणा निरपत्रपः । ४२१५

उपेक्षितव्यो यत्नेन तादृशः पुरुषाधमः । यद्यद्ब्रूयादल्पमतिस्तत्तदस्य सहेद्बुधः ।

प्राकृतो हि प्रशंसन् वा निन्दन् वा किं करिष्यति । वने काक इवाबुद्धिर्व्वाशमानो निरर्थकं ।

यदि वाग्भिः प्रयोगः स्यात् प्रयोगे पापकर्म्मणः । वागेवार्थो भवेत्तस्य न ह्येवार्थो जिघांसतः ।

निषेकं विपरीतं स आचष्टे वृत्तचेष्टया । मयूर इव कौपीनं नृत्यं सन्दर्शयन्निव ।

यस्यावाच्यं न लोकेऽस्ति नाकार्य्यञ्चापि किञ्चन । वाचन्तेन न सन्दध्याच्छुचिः संक्लिष्टकर्म्मणा । ४२२०

प्रत्यक्षं गुणवादी यः परोक्षे चापि निन्दकः । स मानवः श्ववल्लोके नष्टलोकपरावरः ।

तादृग्जनशतस्यापि यद्ददाति जुहोति च । परोक्षेणापवादी यस्तन्नाशयति तत्क्षणात् ।

तस्मात् प्राज्ञो नरः सद्यस्तादृशं पापचेतसं । वर्ज्जयेत् साधुभिर्व्वर्ज्ज्यं सारमेयामिषं यथा ।

परिवादं ब्रुवाणो हि दुरात्मा वै महाजने । प्रकाशयति दोषांस्तु सर्पः फणमिवोच्छ्रितं ।

तं स्वकर्म्माणि कुर्व्वाणं प्रतिकर्त्तुं य इच्छति । भस्मकूट इवाबुद्धिः खरो रजसि मज्जति । ४२२५

मनुष्यशालावृकमप्रशान्तं जनापवादे सततं निविष्टं । मातङ्गमुन्मत्तमिवोन्नदन्तं त्यजेत तं श्वानमिवातिरौद्रं ।

अधीरजुष्टे पथि वर्त्तमानं दमादपेतं विनयाच्च पापं । अरिव्रतं नित्यमभूतिकामं धिगस्तु तं पापमतिं मनुष्यं ।

प्रत्युच्यमानस्त्वभिभूय एभिर्निशाम्य माभूस्त्वमथार्त्तरूपः । उच्चस्य नीचेन हि सम्प्रयोगं विगर्हयन्ति स्थिरबुद्धयो ये ।

क्रुद्धो दशार्द्धेन हि ताडयेद्वा स पांशुभिर्व्वा विकिरेत्तुषैर्व्वा । विवृत्य दन्तांश्च विभीषयेद्वा सिद्धं हि मूढे कुपिते नृशंसे ।

विगर्हणां परमदुरात्मना कृतां सहेत यः संसदि दुर्ज्जनान्नरः । पठेदिदञ्चापि निदर्शनं सदा न वाङ्मयं स लभति किञ्चिदप्रियं । ४२३०

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि टिट्टिभकोपाख्याने चतुर्द्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

॥ युधिष्ठिर उवाच ॥ पितामह महाप्राज्ञ संशयो मे महानयं। सञ्छेत्तव्यस्त्वया राजन् भवान् कुलकरो हि नः।
पुरुषाणामयं तात दुर्वृत्तानां दुरात्मनां। कथितो वाक्यसञ्चारस्ततो विज्ञापयामि ते।
यद्धितं राज्यतन्त्रस्य कुलस्य च सुखोदयं। आयत्यां च तदात्वे च क्षेमवृद्धिकरञ्च यत्।
पुत्त्रपौत्त्राभिरामञ्च राष्ट्रवृद्धिकरञ्च यत्। अन्नपाने शरीरे च हितं यत्तद्ब्रवीहि मे।
अभिषिक्तो हि यो राजा राष्ट्रस्थोमित्त्रसंवृतः। स सुहृत्समुपेतो वा स कथं रञ्जयेत् प्रजाः। ४२११
यो ह्यसत्प्रग्रहरतिः स्नेहरागबलात्कृतः। इन्द्रियाणामनीशत्वादसज्जनबुभूषकः।
तस्य भृत्या विगुणतां यान्ति सर्व्वे कुलोद्गताः। न च भृत्यफलैरर्थैः स राजा सम्प्रयुज्यते।
एतान्मे संशयस्थस्य राजधर्म्मान् सुदुर्विदान्। बृहस्पतिसमो बुद्ध्या भवान् शंसितुमर्हति।
शंसिता पुरुषव्याघ्र त्वं नः कुलहिते रतः। क्षत्ता चैको महाप्राज्ञो यो नः शंसति सर्व्वदा।
त्वत्तः कुलहितं वाक्यं श्रुत्वा राज्यहितोदयं। अमृतस्याव्ययस्येव तृप्तः स्वप्स्याम्यहं सुखं। ४२४०
कीदृशाः सन्निकर्षस्था भृत्याः सर्व्वगुणान्विताः। कीदृशैः किं कुलीनैर्वा सह यात्रा विधीयते।
न ह्येको भृत्यरहितो राजा भवति रक्षिता। राज्यञ्चेदं जनः सर्व्वस्तत्कुलीनोऽभिकाङ्क्षति।
॥ भीष्म उवाच ॥ न च शक्यास्तु राज्यं हि प्रशास्यमेकेन भारत। असहायवता तात नैवार्थाः केचिदच्युत।
लब्धुं लब्ध्वा ह्यपि सदा रक्षितुं भरतर्षभ। यस्य भृत्यजनः सर्व्वो ज्ञानविज्ञानकोविदः।
हितैषी कुलजः स्निग्धः स राज्यफलमश्नुते। मन्त्त्रिणो यस्य कुलजा असंहार्य्याः सहोषिताः। ४२४५
नृपतेर्म्मतिदाः सन्तः सम्बन्धज्ञानकोविदाः। अनागतविधातारः कालज्ञानविशारदाः।
अतिक्रान्तमशोचन्तः स राज्यफलमश्नुते। समदुःखसुखा यस्य सहायाः प्रियकारिणः।
अर्थचिन्तापराः सत्याः स राज्यफलमश्नुते। यस्य नार्त्तो जनपदः सन्निकर्षगतः सदा।
अक्षुद्रः सत्पथालम्बी स राजा राज्यभाग्भवेत्। कोषाक्षपटलं यस्य कोषवृद्धिकरैर्नरैः।
आप्तैस्तुष्टैश्च सततं चीयते स नृपोत्तमः। कोष्ठागारमसंहार्य्यैराप्तैः सञ्चयतत्परैः। ४२५०
पात्त्रभूतैरलुब्धैश्च पाल्यमानं गुणी भवेत्। व्यवहारश्च नगरे यस्य कर्म्मफलोदयः।
दृश्यते शङ्खलिखितः स धर्म्मफलभाङ्नृपः। संगृहीतमनुष्यश्च यो राजा राजधर्म्मवित्।
षड्वर्गं प्रतिगृह्णाति स धर्म्मफलमश्नुते।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि पञ्चदशाधिकशततमोऽध्यायः॥ ११५ ॥

॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। निदर्शनं परं लोके सज्जनाचरिते सदा।
अस्यैवार्थस्य सदृशं यच्छ्रुतं मे तपोवने। जामदग्न्यस्य रामस्य यदुक्तमृषिसत्तमैः। ४२५५
वने महति कस्मिंश्चिदमनुष्यनिषेविते। ऋषिर्मूलफलाहारी नियतो नियतेन्द्रियः।
दीक्षादमपरः शान्तः स्वाध्यायपरमः शुचिः। उपवासविशुद्धात्मा सततं सत्पमाश्रितः।
तस्य संदृश्य सद्भावमुपविष्टस्य धीमतः। सर्व्वे सत्त्वाः समीपस्था भवन्ति वनचारिणः।
सिंहव्याघ्रगणाः क्रूरा मत्ताश्चैव महागजाः। द्वीपिनः खड्गभल्लूका ये चान्ये भीमदर्शनाः।

ते सुखप्रश्नदाः सर्व्वे भवन्ति कृतआगमाः । तस्यर्षेः शिष्यवच्चैव न्यग्भूताः प्रियकारिणः । ४२६०
दत्त्वा च ते सुखप्रश्नं सर्व्वे यान्ति यथागतं । ग्राम्यस्त्वेकः पशुस्तत्र नाजहात् स महामुनिं ।
भक्तोऽनुरक्तः सततमुपवासकृशोऽबलः । फलमूलोदकाहारः शान्तः शिष्टाकृतिर्यथा ।
तस्यर्षेरुपविष्टस्य पादमूले महामते । मनुष्यवद्गतो भावः स्नेहबद्धोऽभवद्भृशं ।
ततोऽभ्ययान्महावीर्य्यो द्वीपी क्षतजभोजनः । स्वार्थमत्यन्तसन्तुष्टः क्रूरः काल इवान्तकः ।
लेलिह्यमानस्तृषितः पुच्छास्फोटनतत्परः । व्यादितास्यः क्षुधाभुग्नः प्रार्थयानस्तदामिषं । ४२६५
दृष्ट्वा तं क्रूरमायान्तं जीवितार्थी नराधिप । प्रोवाच श्वा मुनिं तत्र तच्छृणुष्व विशाम्पते ।
श्वशत्रुर्भगवन्नेष द्वीपी मां हन्तुमिच्छति । त्वत्प्रसादाद्भयं न स्यात् तस्मान्मम महामुने ।
तथा कुरु महाबाहो सर्व्वज्ञस्त्वं न संशयः । स मुनिस्तस्य विज्ञाय भावज्ञो भयकारणं ।
रुतज्ञः सर्व्वसत्त्वानां तमैश्वर्य्यसमन्वितः ।
॥ मुनिरुवाच ॥ न भयं द्वीपिनः कार्य्यं मृत्युतस्ते कथञ्चन । एष श्वरूपरहितो द्वीपी भवसि पुत्रक । ४२७०
ततः श्वा द्वीपितां नीतो जाम्बूनदनिभाकृतिः । चित्राङ्गो विस्फुरद्दंष्ट्रो वने वसति निर्भयः ।
तं दृष्ट्वा संमुखे द्वीपी आत्मनः सदृशं पशुं । अविरुद्धस्ततस्तस्य क्षणेन समपद्यत ।
ततोऽभ्ययान्महारौद्रो व्यादितास्यः क्षुधाऽन्वितः । द्वीपिनं लेलिहद्वक्त्रो व्याघ्रो रुधिरलालसः ।
व्याघ्रं दृष्ट्वा क्षुधाक्लिष्टं दंष्ट्रिणं वनगोचरं । द्वीपी जीवितरक्षार्थमृषिं शरणमीयिवान् ।
संवासजं परं स्नेहमृषिणा कुर्व्वता तदा । स द्वीपी व्याघ्रतां नीतो रिपूणां बलवत्तरः । ४२७५
ततो दृष्ट्वा स शार्दूलो नाहनत्तं विशाम्पते । स तु श्वा व्याघ्रतां प्राप्य बलवान् पिशिताशनः ।
न मूलफलभोगेषु स्पृहामप्यकरोत्तदा । यथा मृगपतिर्नित्यं प्रकाङ्क्षति वनौकसः ।
तथैव स महाराज व्याघ्रः समभवत्तदा ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि ऋषिसंवादे षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥
॥ भीष्म उवाच ॥ व्याघ्रश्चोटजमूलस्थस्तृप्तः सुप्तो हतैर्मृगैः । नागश्चागात्तमुद्देशं मत्तो मेघ इवोत्थितः ।
प्रभिन्नकरटः प्रांशुः पद्मी विततकुम्भकः । सुविषाणो महाकायो मेघगम्भीरनिस्वनः । ४२८०
तं दृष्ट्वा कुञ्जरं मत्तमायान्तं मदगर्व्वितं । व्याघ्रो हस्तिभयात्त्रस्तस्तमृषिं शरणं ययौ ।
ततोऽनयत् कुञ्जरत्वं व्याघ्रं तमृषिसत्तमः । महामेघनिभं दृष्ट्वा स भीतो ह्यभवद्गजः ।
ततः कमलषण्डानि शल्लकीगहनानि च । व्यचरत् स मुदा युक्तः पद्मरेणुविभूषितः ।
कदाचिद्रममाणस्य हस्तिनः संमुखं तदा । ऋषेरुटजकस्थस्य कालोऽगच्छन्निशानिशं ।
अथाजगाम तं देशं केसरी केशरारुणः । गिरिकन्दरजो भीमः सिंहो नागकुलान्तकः । ४२८५
तं दृष्ट्वा सिंहमायान्तं नागः सिंहभयार्द्दितः । ऋषिं शरणमापेदे वेपमानो भयातुरः ।
स ततः सिंहतां नीतो नागेन्द्रो मुनिना तदा । वन्यं नागणयत् सिंहं तुल्यजातिसमन्वयात् ।
दृष्ट्वा च सोऽभवत् सिंहो वन्यो भयसमन्वितः । स चाश्रमेऽवसत् सिंहस्तस्मिन्नेव महावने ।

तद्भयात् पशवो नान्ये तपोवनसमीपतः । न्यवसन्त सदा त्रस्ता जीविताकाङ्क्षिणस्तदा ।
कदाचित् कालयोगेन सर्व्वप्राणिविहिंसकः । बलवान् क्षतजाहारो नानासत्त्वभयङ्करः । ४२८०
अष्टपादूर्द्ध्वनयनः शरभो वनगोचरः । तं सिंहं हन्तुमागच्छन्मुनेस्तस्य निवेशनं ।
तं मुनिः शरभञ्चक्रे बलोत्कटमरिन्दम । ततः स शरभो वन्यो मुनेः शरभमग्रतः ।
दृष्ट्वा बलिनमत्युग्रं द्रुतं सम्प्राद्रवद्वनात् । स एवं शरभस्थाने न्यस्तो मुनिना तदा ।
मुनेः पार्श्वगतो नित्यं शरभः सुखमाप्तवान् । ततः शरभसन्त्रस्ताः सर्व्वे मृगगणास्तदा ।
दिशः सम्प्राद्रवन् राजन् भयाज्जीवितकाङ्क्षिणः । शरभोऽप्यतिसंहृष्टो नित्यं प्राणिवधे रतः । ४२८५
फलमूलाशनं कर्त्तुं नैच्छत् स पिशिताशनः । ततो रुधिरतर्षेण बलिना शरभोऽन्वितः ।
इयेष तं मुनिं हन्तुमकृतज्ञः श्वयोनिजः । ततस्तेन तपःशक्त्या विदितो ज्ञानचक्षुषा ।
विज्ञाय च महाप्राज्ञो मुनिः श्वानं तमुक्तवान् । श्वा त्वं द्वीपित्वमापन्नो द्वीपी व्याघ्रत्वमागतः ।
व्याघ्रान्नागो मदपटुर्नागः सिंहत्वमागतः । सिंहस्त्वं बलमापन्नो भूयः शरभतां गतः ।
मया स्नेहपरीतेन विसृष्टो न कुलान्वयः । यस्मादेवमपापं मां पाप हिंसितुमिच्छसि । ४२९०
तस्मात् स्वयोनिमापन्नः श्वैव त्वं हि भविष्यसि । ततो मुनिजनद्वेष्टा दुष्टात्मा प्राकृतोऽबुधः ।
ऋषिणा शरभः शप्तस्तद्रूपं पुनराप्तवान् ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि ऋषिसंवादे सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥
॥ भीष्म उवाच ॥ स श्वा प्रकृतिमापन्नः परं दैन्यमुपागतः । ऋषिणा हुङ्कृतः पापस्तपोवनबहिष्कृतः ।
एवं राज्ञा मतिमता विदित्वा शीलशौचतां । आर्ज्जवं प्रकृतिं सत्त्वं कुलं वृत्तं श्रुतं दमं ।
अनुक्रोशं बलं वीर्य्यं प्रभावं प्रश्रयं क्षमां । भृत्या ये यत्र योग्याः स्युस्तत्र स्थाप्याः सुरक्षिताः । ४२९५
नापरीक्ष्य महीपालः सचिवं कर्त्तुमर्हति । अकुलीननराकीर्णो न राजा सुखमेधते ।
कुलजः प्रकृतो राज्ञा तत्कुलीनतया सदा । न पापे कुरुते बुद्धिं भिद्यमानोऽप्यनागसि ।
अकुलीनस्तु पुरुषः प्राकृतः साधुसंश्रयात् । दुर्लभैश्वर्य्यतां प्राप्तो निन्दितः शत्रुतां व्रजेत् ।
कुलीनं शिक्षितं प्राज्ञं ज्ञानविज्ञानपारगं । सर्व्वशास्त्रार्थतत्त्वज्ञं सहिष्णुं देशजं तथा ।
कृतज्ञं बलवन्तञ्च क्षान्तं दान्तं जितेन्द्रियं । अलुब्धं लब्धसन्तुष्टं स्वामिमित्रबुभूषकं । ४३००
सचिवं देशकालज्ञं सत्त्वसंग्रहणे रतं । सततं युक्तमनसं हितैषिणमतन्द्रितं ।
युक्ताचारं स्वविषये सन्धिविग्रहकोविदं । राज्ञस्त्रिवर्गवेत्तारं पौरजानपदप्रियं ।
खातकव्यूहतत्त्वज्ञं बलहर्षणकोविदं । इङ्गिताकारतत्त्वज्ञं यात्राज्ञानविशारदं ।
हस्तिशिक्षासु तत्त्वज्ञमहङ्कारविवर्ज्जितं । प्रगल्भं दक्षिणं दान्तं बलिनं युक्तकारिणं ।
चौक्षं चौक्षजनाकीर्णं सुमुखं सुखदर्शनं । नायकं नीतिकुशलं गुणचेष्टासमन्वितं । ४३०५
अस्तब्धं प्रश्रितं श्लक्ष्णं मृदुवादिनमेव च । धीरं शूरं महर्द्धिञ्च देशकालोपपादकं ।
सचिवं यः प्रकुरुते न चैनमवमन्यते । तस्य विस्तीर्य्यते राज्यं ज्योत्स्ना ग्रहपतेरिव ।

एतैरेव गुणैर्युक्तो राजा शास्त्रविशारदः । एष्टव्यो धर्म्मपरमः प्रजापालनतत्परः ।
धीरोऽमर्षी शुचिस्तीक्ष्णः काले पुरुषकारवित् । शुश्रूषुः श्रुतवान् श्रोता ऊहापोहविशारदः ।
मेधावी धारणायुक्तो यथा न्यायोपपादकः । दान्तः सदा प्रियाभाषी क्षमावांश्च विपर्य्यये । ४३२०
दानाच्छेदे स्वयं कारी श्रद्धालुः सुखदर्शनः । आर्त्तहस्तप्रदो नित्यममात्यो हि हिते रतः ।
नाहंवादी न निर्द्वन्द्वो न यत् किञ्चनकारकः । कृते कर्म्मण्यमात्यानां कर्त्ता भक्तजनप्रियः ।
सङ्गृहीतजनोऽस्तब्धः प्रसन्नवदनः सदा । सदा भृत्यजनापेक्षी न क्रोधी सुमहामनाः ।
युक्तदण्डो न निर्द्दण्डो धर्मकार्य्यानुशासनः । चारनेत्रः प्रजावेक्षी धर्म्मार्थकुशलः सदा ।
राजा गुणशताकीर्ण एष्टव्यस्तादृशो भवेत् । योधाश्चैव मनुष्येन्द्र सर्व्वे गुणगणैर्वृताः । ४३२५
अन्वेष्टव्याः सुपुरुषाः सहाया राज्यधारणे । न विमानयितव्यास्ते राज्ञा वृद्धिमभीप्सता ।
योधाः समरशौण्डीराः कृतज्ञाः शास्त्रकोविदाः । धर्म्मशास्त्रसमायुक्ताः पदातिजनसंवृताः ।
अभया गजपृष्ठस्था रथचर्य्याविशारदाः । इष्वस्त्रकुशला यस्य तस्येयं नृपतेर्मही ।
सर्व्वसंग्रहणे युक्तो नृपो भवति यः सदा । उत्थानशीलो मित्राढ्यः स राजा राजसत्तमः ।
शक्या चाश्वसहस्रेण वीरारोहेण भारत । संगृहीतमनुष्येण कृत्स्ना जेतुं वसुन्धरा । ४३३०
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि ऋषिसंवादे अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

॥ भीष्म उवाच ॥ एवं शुना समान् भृत्यान् स्वे स्वे स्थाने नराधिपः । नियोजयति कृत्येषु स राज्यफलमश्नुते ।
न श्वा स्वं स्थानमुत्क्रम्य प्रमाणमभिसत्कृतः । आरोप्यः श्वा स्वकात् स्थानादुत्क्रम्यान्यत् प्रमाद्यति ।
स्वजातिगुणसम्पन्नाः स्वेषु कर्म्मसु संस्थिताः । प्रकर्त्तव्या ह्यमात्यास्तु नास्थाने प्रक्रिया क्षमा ।
अनुरूपाणि कर्म्माणि भृत्येभ्यो यः प्रयच्छति । स भृत्यगुणसम्पन्नो राजा फलमुपाश्नुते ।
शरभः शरभस्थाने सिंहः सिंह इवोर्ज्जितः । व्याघ्रो व्याघ्र इव स्थाप्यो द्वीपी द्वीपी यथा तथा । ४३३५
कर्म्मस्विहानुरूपेषु न्यस्या भृत्या यथाविधि । प्रतिलोमं न भृत्यास्ते स्थाप्याः कर्म्मफलैषिणः ।
यः प्रमाणमतिक्रम्य प्रतिलोमं नराधिपः । भृत्यान् स्थापयतेऽबुद्धिर्न स रञ्जयते प्रजाः ।
न बालिशा न च क्षुद्रा नाप्राज्ञा नाजितेन्द्रियाः । नाकुलीना नराः सर्व्वे स्थाप्या गुणगणैषिणा ।
साधवः कुलजाः शूरा ज्ञानवन्तोऽनसूयकाः । अक्षुद्राः शुचयो दक्षाः स्युर्नराः पारिपार्श्वकाः ।
न्यग्भूतास्तत्पराः शान्ताश्चौक्षाः प्रकृतिजैः शुभाः । स्वस्थानानपकृष्टा ये ते स्यू राज्ञां बहिश्चराः । ४३४०
सिंहस्य सततं पार्श्वे सिंह एवानुगो भवेत् । असिंहः सिंहसहितः सिंहवल्लभते फलं ।
यस्तु सिंहः श्वभिः कीर्णः सिंहकर्म्मफले रतः । न स सिंहफलं भोक्तुं शक्तः श्वभिरुपासितः ।
एवमेतन्मनुष्येन्द्र शूरैः प्राज्ञैर्बहुश्रुतैः । कुलीनैः सह शक्येत कृत्स्नां जेतुं वसुन्धरां ।
नाविद्यो नानृजुः पार्श्वे नाप्राज्ञो नामहाधनः । संग्राह्यो वसुधपालैर्भृत्यो भृत्यवताम्वर ।
बाणवद्विसृता यान्ति स्वामिकार्य्यपरा नराः । ये भृत्याः पार्थिवहितास्तेषां सान्त्वं प्रयोजयेत् । ४३४५
कोषश्च सततं रक्ष्यो यत्नमास्थाय राजभिः । कोषमूला हि राजानः कोषो वृद्धिकरो भवेत् ।

कोष्ठागारञ्च ते नित्यं स्फीतैर्द्धान्यैः सुसंवृतं । सदाऽस्तु सत्सु संन्यस्तं धनधान्यपरो भव ।
नित्ययुक्ताश्च ते भृत्या भवन्तु रणकोविदाः । वाजिनाञ्च प्रयोगेषु वैशारद्यमिहेष्यते ।
ज्ञातिबन्धुजनावेक्षी मित्रसम्बन्धिसंवृतः । पौरकार्य्यहितान्वेषी भव कौरवनन्दन ।
एषा ते नैष्ठिकी बुद्धिः प्रज्ञा चाभिहिता मया । श्वा ते निदर्शनं तात किं भूयः श्रोतुमिच्छसि । ४२५०

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि ऋषिसंवादे ऊनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

॥ युधिष्ठिर उवाच ॥ राजवृत्तान्यनेकानि त्वया प्रोक्तानि भारत । पूर्व्वैः पूर्व्वनियुक्तानि राजधर्म्मार्थवेदिभिः ।
तदेव विस्तरेणोक्तं पूर्व्वदृष्टं सतां मतं । प्रणेयं राजधर्म्माणां प्रब्रूहि भरतर्षभ ।
॥ भीष्म उवाच ॥ रक्षणं सर्व्वभूतानामिति क्षात्रं परं मतं । तद्यथा रक्षणं कुर्य्यात्तथा शृणु महीपते ।
यथा बर्हाणि चित्राणि बिभर्त्ति भुजगाशनः । तथा बहुविधं राजा रूपं कुर्व्वीत धर्म्मवित् ।
तैक्ष्ण्यं जिह्मत्वमादान्तं सत्यमार्ज्जवमेव च । मध्यस्थः सत्त्वमातिष्ठंस्तथा वै सुखमृच्छति । ४२५५
यस्मिन्नर्थे हितं यत् स्यात्तद्वर्णं रूपमाविशेत् । बहुरूपस्य राज्ञो हि सूक्ष्मोऽप्यर्थो न सीदति ।
नित्यं रक्षितमन्त्रः स्याद्यथा मूकः शरच्छिखी । श्लक्ष्णाक्षरतनुः श्रीमान् भवेच्छास्त्रविशारदः ।
आपद्द्वारेषु युक्तः स्याज्जलप्रस्रवणेष्विव । शैलवर्षोदकानीव द्विजान् सिद्धान् समाश्रयेत् ।
अर्थकामः शिखां राजा कुर्य्याद्धर्म्मध्वजोपमां । नित्यमुद्यतदण्डः स्यादाचरेदप्रमादतः ।
लोके चायव्ययौ दृष्ट्वा वृहद्वृक्षमिवास्रवत् । मृजावान् स्यात् स्वयूथ्येषु भौमानि चरणैः क्षिपेत् । ४२६०
जातपक्षः परिस्पन्देत् प्रेक्षेद्वैकल्यमात्मनः । दोषान् विवृणुयाच्छत्रोः परपक्षान् विधूनयेत् ।
काननेष्विव पुष्पाणि बर्हिरर्थान् समाचरन् । उच्छ्रितानाश्रयेत् स्फीतान् नरेन्द्रानचलोपमान् ।
श्रयेच्छायामविज्ञातां गुप्तं रणमुपाश्रयेत् । प्रावृषीवासितग्रीवो मज्जेत निशि निर्ज्जने ।
मायूरेण गुणेनैव स्त्रीभिश्चालक्षितश्चरेत् । न जह्याच्च तनुत्राणं रक्षेदात्मानमात्मना ।
चारभूमिष्वभिगतान् पाशांश्च परिवर्ज्जयेत् । प्रणयेद्वापि तां भूमिं प्रणश्येद्गहने पुनः । ४२६५
हन्यात् क्रुद्धानतिविषान् ये जिह्मगतयोऽहिताः । नाशयेद्बलबर्हाणि सन्निवासान्निवासयेत् ।
सदा बर्हिनिभः कामं प्रशस्तं कृतमाचरेत् । सर्व्वतश्चाददेत् प्रज्ञां पतङ्गं गहनेष्विव ।
एवं मयूरवद्राजा स्वराज्यं परिपालयेत् । आत्मवृद्धिकरीं नीतिं विदधीत विचक्षणः ।
आत्मसंयमनं बुद्ध्या परबुद्ध्याऽवधारणं । बुद्ध्या चात्मगुणप्राप्तिरेतच्छास्त्रनिदर्शनं ।
परं विश्वासयेत् साम्ना स्वशक्तिञ्चोपलक्षयेत् । आत्मनः परिमर्षेण बुद्धिं बुद्ध्या विचारयेत् । ४२७०
सान्त्वयोगमतिः प्राज्ञः कार्य्याकार्य्यप्रयोजकः । निगूढबुद्धेर्धीरस्य वक्तव्ये वा कृतं तथा ।
संनिकृष्टां कथां प्राज्ञो यदि बुद्ध्या वृहस्पतिः । स्वभावमेष्यते तप्तं कृष्णायसमिवोदके ।
अनुयुञ्जीत कृत्यानि सर्व्वाण्येव महीपतिः । आगमैरुपदिष्टानि स्वस्य चैव परस्य च ।
मृदुशीलं तथा प्राज्ञं शूरञ्चार्थविधानवित् । स्वकर्म्मणि नियुञ्जीत ये चान्ये च बलाधिकाः ।
अथ दृष्ट्वा नियुक्तानि स्वानुरूपेषु कर्म्मसु । सर्व्वांस्ताननुवर्त्तेत स्वरांस्तन्त्रीरिवायताः । ४२७५

धर्म्माणामविरोधेन सर्व्वेषां प्रियमाचरेत् । ममायमिति राजा यः स पर्व्वत इवाचलः ।
व्यवसायं समाधाय सूर्य्यो रश्मीनिवायतान् । धर्म्ममेवाभिरक्षेत क्षमा तुल्ये प्रियाप्रिये ।
कुलप्रकृतिदेशानां धर्म्मज्ञान्मृदुभाषिणः । मध्ये वयसि निर्द्दोषान् हिते युक्तानविक्लवान् ।
अलुब्धान् शिक्षितान् दान्तान् धर्म्मेषु परिनिष्ठितान् । स्थापयेत् सर्व्वकार्य्येषु राजा धर्म्मार्थरक्षिणः ।
एतेन च प्रकारेण कृत्यानामागतिं गतिं । युक्तः समनुतिष्ठेत तुष्टश्चारैरुपस्कृतः । ४३८०
अमोघक्रोधहर्षस्य स्वयं कृत्यान्ववेक्षितुः । आत्मप्रत्ययकोषस्य वसुदैव वसुन्धरा ।
व्यक्तश्चानुग्रहो यस्य यथार्थश्चापि निग्रहः । गुप्तात्मा गुप्तराष्ट्रश्च स राजा राजधर्म्मवित् ।
नित्यं राष्ट्रमवेक्षेत गोभिः सूर्य्य इवोदितः । चारान् स्वनुचरान् विद्यात्तथा बुद्ध्या स्वयं चरेत् ।
कालं प्राप्तमुपादद्यान्नार्थं राजा प्रसूचयेत् । अहन्यहनि सन्दुह्यान्महीं गामिव बुद्धिमान् ।
यथाक्रमेण पुष्पेभ्यश्चिनोति मधु षट्पदः । तथा द्रव्यमुपादाय राजा कुर्व्वीत सञ्चयं । ४३८५
यद्धि गुप्तावशिष्टं स्यात्तद्वित्तं धर्म्मकामयोः । सञ्चयान्न विसर्गी स्याद्राजा शास्त्रविदात्मवान् ।
नार्थमल्पं परिभवेन्नावमन्येत शात्रवान् । बुद्ध्या तु बुध्येदात्मानं न चाबुद्धिषु विश्वसेत् ।

धृतिर्द्दाक्ष्यं संयमो बुद्धिरात्मा धैर्य्यं शौर्य्यं देशकालाप्रमादः । अल्पस्य वा बहुनो वापि वृद्धौ धनस्यैतान्यष्ट समिन्धनानि ।

अग्निः स्तोको वर्द्धते ऽप्याज्यसिक्तो बीजञ्चैकं रोहसहस्रमेति । आयव्ययौ विपुलौ संनिशाम्य तस्मादल्पं नावमन्येत वित्तं ।

बालोऽप्यबालः स्थविरो रिपुर्य्यः सदा प्रमत्तं पुरुषं निहन्यात् । कालेनान्यस्तस्य मूलं हरेत कालज्ञाता पार्थिवानां वरिष्ठः । ४३९०

हरेत् कीर्त्तिं धर्म्ममस्योपरुन्ध्यादर्थे दीर्घं वीर्य्यमस्योपहन्यात् । रिपुर्द्वेष्टा दुर्ब्बलो वा बली वा तस्माच्छत्रोर्नैव हीयेद्यतात्मा ।

क्षयं वृद्धिं पालनं सञ्चयं वा बुद्ध्वाऽप्युभौ संहतौ सर्व्वकामौ । ततश्चान्यन्मतिमान् सन्दधीत तस्माद्राजा बुद्धिमतां श्रयेत ।

बुद्धिर्द्दीप्ता बलवन्तं हिनस्ति बलं बुद्ध्या पाल्यते वर्द्धमानं । शत्रुर्ब्बुद्ध्या सीदते वर्द्धमानो बुद्धेः पश्चात् कर्म्म यत्तत् प्रशस्तं ।

सर्व्वान् कामान् कामयानो हि धीरः सत्त्वेनाल्पेनाश्नुते हीनदोषः । यश्चात्मानं प्रार्थयतेऽर्थमानैः श्रेयःपात्रं पूरयते च नाल्पं ।

तस्माद्राजा प्रगृहीतः प्रजासु मूलं लक्ष्म्याः सर्व्वशो ह्याददीत । दीर्घं कालं ह्यपि सम्पीड्यमानो विद्युत्सम्पातमपि वा नोर्ज्जितः स्यात् । ४३९५

विद्या तपो वा विपुलं धनं वा सर्व्वं ह्येतद्व्यवसायेन शक्यं । बुद्ध्यायत्तं तन्निवसेद्देहवत्सु तस्माद्विद्याद्व्यवसायं प्रभूतं ।
यत्रासते मतिमन्तो मनस्विनः शक्रो विष्णुर्यत्र सरस्वती च । वसन्ति भूतानि च यत्र नित्यं तस्माद्विद्वान्नावमन्येत देहं ।

लुब्धं हन्यात् सम्प्रदानेन नित्यं लुब्धस्तृप्तिं परवित्तस्य नैति । सर्व्वो लुब्धः कर्म्मगुणोपभोगे योऽर्थैर्हीनो धर्म्मकामौ जहाति ।

धनं भोगं पुत्त्रदारं समृद्धिं सर्व्वं लुब्धः प्रार्थयते परेषां । लुब्धे दोषाः सम्भवन्तीह सर्व्वे तस्माद्राजा न प्रगृह्णीत लुब्धं ।

सन्दर्शनेन पुरुषं जघन्यमपि चोदयेत् । आरम्भान् द्विषतां प्राज्ञः सर्व्वार्थांश्च प्रसूदयेत् । ४४००

धर्म्मान्वितेषु विज्ञाता मन्त्री गुप्तश्च पाण्डव । आप्तो राजा कुलीनश्च पर्य्याप्तो राजसंग्रहे ।

विधिप्रयुक्तान्नरदेवधर्म्मानुक्तान् समासेन निबोध बुद्ध्या । इमान् विदध्यादनुसृत्य यो वै राजा महीं पालयितुं स शक्तः ।

न नीतिजं यस्य विभागजं सुखं हठप्रणीतं विधिवत् प्रदृश्यते । न विद्यते तस्य गतिर्महीपतेर्न विद्यते राज्यसुखं ह्यनुत्तमं ।

धनैर्व्विशिष्टान्मतिशीलपूजितान् गुणोपपन्नान् युधि दृष्टविक्रमान् । गुणेषु दृष्ट्वा न चिरादिवात्मवान् यतोऽभिसन्धाय निहन्ति शात्रवान् ।

पश्येदुपायान् विविधैः क्रियापथैर्न चानुपायेन मतिं निवेशयेत् । श्रियं विशिष्टां विपुलं यशोधनं न दोषदर्शी पुरुषः समश्नुते । ४४०५

प्रीतिप्रवृत्तौ विनिवर्त्तितौ यथा सुहृत्सु विज्ञाय निवृत्य चोभयोः । यदेव मित्रं गुरुभारमावहेत्तदेव सुस्निग्धमुदाहरेद्बुधः ।

एतान्मयोक्तांश्चर राजधर्म्मान् नृणाञ्च गुप्तौ मतिमादधत्स्व । अवाप्स्यसे पुण्यफलं सुखेन सर्व्वो हि लोको नृप धर्म्ममूलः ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि विंशत्यधिकशततोऽध्यायः ॥ १२० ॥

॥ युधिष्ठिर उवाच ॥ अयं पितामहेनोक्तो राजधर्म्मः सनातनः । ईश्वरश्च महान् दण्डो दण्डे सर्व्वं प्रतिष्ठितं ।

देवतानामृषीणाञ्च पितॄणाञ्च महात्मनां । यक्षरक्षःपिशाचानां साध्यानाञ्च विशेषतः ।

सर्व्वेषां प्राणिनां लोके तिर्य्यग्योनिनिवासिनां । सर्व्वव्यापी महातेजा दण्डः श्रेयानिति प्रभो । ४४१०

इत्येवमुक्तं भवता दण्डे वै सचराचरं । पश्यतो लोकमासक्तं ससुरासुरमानुषं ।

एतदिच्छाम्यहं ज्ञातुं तत्त्वेन भरतर्षभ । को दण्डः कीदृशो दण्डः किंरूपः किम्परायणः ।

किमात्मकः कथम्भूतः कथम्मूर्त्तिः कथं प्रभो । जागर्त्ति च कथं दण्डः प्रजास्ववहितात्मकः ।

कश्च पूर्व्वापरमिदं जागर्त्ति प्रतिपालयन् । कश्च विज्ञायते पूर्व्वं को वरो दण्डसंज्ञितः ।

किं संस्थश्च भवेद्दण्डः का वाऽस्य गतिरुच्यते । ४४१५

॥ भीष्म उवाच ॥ शृणु कौरव्य यो दण्डो व्यवहारो यथा च सः । यस्मिन् हि सर्व्वमायत्तं स दण्ड इह केवलः

धर्म्मसंख्या महाराज व्यवहार इतीष्यते । तस्य लोपः कथं न स्याल्लोकेष्ववहितात्मनः ।

इत्येवं व्यवहारस्य व्यवहारत्वमिष्यते । अपि चैतत् पुरा राजन् मनुना प्रोक्तमादितः ।

सुप्रणीतेन दण्डेन प्रियाप्रियसमात्मना । प्रजा रक्षति यः सम्यक् धर्म्म एव स केवलः ।

यथोक्तमेतद्वचनं प्रागेव मनुना पुरा । यन्मयोक्तं मनुष्येन्द्र ब्रह्मणो वचनं महत् । ४४२०

प्रागिदं वचनं प्रोक्तमतः प्राग्वचनं विदुः । व्यवहारस्य चाख्यानाद्व्यवहार इहोच्यते ।

दण्डे त्रिवर्गः सततं सुप्रणीते प्रवर्त्तते । दैवं हि परमो दण्डो रूपतोऽग्निरिवोत्थितः ।

नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः । अष्टपान्नैकनयनः शङ्कुकर्णोर्द्ध्वरोमवान् ।

जटी द्विजिह्वस्ताम्रास्यो मृगराजतनुच्छदः । एतद्रूपं बिभर्त्युग्रं दण्डो नित्यं दुराधरः ।

असिर्द्धनुर्गदा शक्तिस्त्रिशूलं मुद्गरः शरः । मुषलं परशुश्चक्रं पाशो दण्डर्ष्टितोमराः । ४४२५

सर्व्वप्रहरणीयानि सन्ति यानि इह कानिचित् । दण्ड एव स सर्व्वात्मा लोके चरति मूर्त्तिमान् ।

भिन्दन् छिन्दन् रुजन् कृन्तन् दारयन् पाटयंस्तथा । घातयन्नभिधावंश्च दण्ड एव चरत्युत ।

असिर्व्विशसनो धर्म्मस्तीक्ष्णवर्त्मा दुराधरः । श्रीगर्भो विजयः शास्ता व्यवहारः सनातनः ।

शास्त्रं ब्राह्मणमन्त्राश्च शास्ता प्राग्वदताम्वर । धर्म्मपालोऽक्षरो देवः सत्यगो नित्यगोऽग्रजः ।

असङ्गो रुद्रतनयो मनुर्ज्येष्ठः शिवङ्करः । नामान्येतानि दण्डस्य कीर्त्तितानि युधिष्ठिर । ४४३०

दण्डो हि भगवान् विष्णुर्द्दण्डो नारायणः प्रभुः । शश्वद्रूपं महद्बिभ्रन्महापुरुष उच्यते ।

तथोक्ता ब्रह्मकन्येति लक्ष्मीर्वृत्तिः सरस्वती । दण्डनीतिर्ज्जगद्धात्री दण्डो हि बहुविग्रहः ।

अर्थानर्थौ सुखं दुःखं धर्म्माधर्म्मौ बलाबले । दौर्भाग्यं भागधेयञ्च पुण्यापुण्ये गुणागुणौ ।

कामाकामावृतुर्म्मासः शर्व्वरी दिवसः क्षणः । अप्रमादः प्रमादश्च हर्षक्रोधौ शमो दमः ।

दैवं पुरुषकारश्च मोक्षामोक्षौ भयाभये । हिंसाहिंसे तपो यज्ञः संयमोऽथ विषाविषं । ४४३५

अन्तश्चादिश्च मध्यञ्च कृत्यानाञ्च प्रपञ्चनं । मदः प्रमादो दर्पश्च दम्भो धैर्य्यं नयानयौ ।

अशक्तिः शक्तिरित्येवं मानस्तम्भौ व्ययाव्ययौ । विनयश्च विसर्गश्च कालाकालौ च भारत ।

अनृतं ज्ञानिता सत्यं श्रद्धाश्रद्धे तथैव च । क्लीवता व्यवसायश्च लाभालाभौ जयाजयौ ।

तीक्ष्णता मृदुता मृत्युरागमानागमौ तथा । विरोधश्चाविरोधश्च कार्य्याकार्य्ये बलाबले ।

असूया चानसूया च धर्म्माधर्म्मौ तथैव च । अपत्रपानपत्रपे ह्रीश्च सम्पद्विपत्पदं । ४४४०

तेजः कर्म्माणि पाण्डित्यं वाक् शक्तिस्तत्त्वबुद्धिता । एवं दण्डस्य कौरव्य लोकेऽस्मिन् बहुरूपता ।

न स्याद्यदीह दण्डो वै प्रमथेयुः परस्परं । भयाद्दण्डस्य नान्योन्यं घ्नन्ति चैव युधिष्ठिर ।

दण्डेन रक्ष्यमाणा हि राजन्नहरहः प्रजाः । राजानं वर्द्धयन्तीह तस्माद्दण्डः परायणं ।

व्यवस्थापयति क्षिप्रमिमं लोकं नरेश्वर । सत्ये व्यवस्थितो धर्म्मो ब्राह्मणेष्ववतिष्ठते ।

धर्म्मयुक्ता द्विजश्रेष्ठा देवयुक्ता भवन्ति च । बभूव यज्ञो वेदेभ्यो यज्ञः प्रीणाति देवताः । ४४४५

प्रीताश्च देवता नित्यमिन्द्रे परिवदन्त्यपि । अन्नं ददाति शक्रश्चाप्यनुगृह्णन्निमाः प्रजाः ।

प्राणाश्च सर्व्वभूतानां नित्यमन्ने प्रतिष्ठिताः । तस्मात् प्रजाः प्रतिष्ठन्ते दण्डो जागर्त्ति तासु च ।

एवंप्रयोजनश्चैव दण्डः क्षत्रियतां गतः । रक्षन् प्रजाः स जागर्त्ति नित्यं स्ववहितोऽक्षरः ।

ईश्वरः पुरुषः प्राणः सत्त्वं चित्तं प्रजापतिः । भूतात्मा जीव इत्येवं नामभिः प्रोच्यतेऽष्टभिः ।

अददद्दण्डमेवास्मै ध्रुवमैश्वर्य्यमेव च । बलेन यश्च संयुक्तः सदा पञ्चविधात्मकः । ४४५०

कुलं बहुधनामात्याः प्राज्ञाः प्रोक्ता बलानि तु । आहार्य्यमष्टकैर्द्रव्यैर्बलमन्यद्युधिष्ठिर ।
हस्तिनोऽश्वा रथाः पत्तिर्नावो विष्टिस्तथैव च । दैशिकाश्चाविकाश्चैव तदष्टाङ्गं बलं स्मृतं ।
अथवाऽङ्गस्य युक्तस्य रथिनो हस्तियायिनः । अश्वारोहाः पदाताश्च मन्त्रिणो रसदाश्च ये ।
भिक्षुकाः प्राड्विवाकाश्च मौहूर्त्ता दैवचिन्तकाः । कोषो मित्राणि धान्यञ्च सर्व्वोपकरणानि च ।
सप्तप्रकृति चाष्टाङ्गं शरीरमिह यद्विदुः । राज्यस्य दण्डमेवाङ्गं दण्डः प्रभव एव च । ४४५५
ईश्वरेण प्रयत्नेन कारणात् क्षत्रियस्य च । दण्डो दत्तः समानात्मा दण्डो हीदं सनातनं ।
राज्ञां पूज्यतमो नान्यो यथा धर्म्मः प्रदर्शितः । ब्रह्मणा लोकरक्षार्थं स्वधर्म्मस्थापनाय च ।
भर्तृप्रत्यय उत्पन्नो व्यवहारस्तथाऽपरः । तस्माद्यः सहितो दृष्टो भर्तृप्रत्ययलक्षणः ।
व्यवहारस्तु वेदात्मा वेदप्रत्यय उच्यते । मौलश्च नरशार्दूल शास्त्रोक्तश्च तथाऽपरः ।
उक्तो यश्चापि दण्डोऽसौ भर्तृप्रत्ययलक्षणः । ज्ञेयो नः स नरेन्द्रस्थो दण्डप्रत्ययलक्षणः । ४४६०
दण्डप्रत्ययदृष्टोऽपि व्यवहारात्मकः स्मृतः । व्यवहारः स्मृतो यश्च स वेदविषयात्मकः ।
यश्च वेदप्रसूतात्मा स धर्म्मो गुणदर्शनः । धर्म्मप्रत्यय उद्दिष्टो यथाधर्म्मं कृतात्मभिः ।
व्यवहारः प्रजागोप्ता ब्रह्मदिष्टो युधिष्ठिर । त्रीन् धारयति लोकान् वै सत्यात्मा भूतिवर्द्धनः ।
यश्च दण्डः स दृष्टो नो व्यवहारः सनातनः । व्यवहारश्च दृष्टो यः स वेद इति निश्चितं ।
यश्च वेदः स वै धर्म्मो यश्च धर्म्मः स सत्पथः । ब्रह्मा पितामहः पूर्व्वं बभूवाथ प्रजापतिः । ४४६५
लोकानां स हि सर्व्वेषां ससुरासुररक्षसां । समनुष्योरगवतां कर्त्ता चैव स भूतकृत् ।
ततोऽन्यव्यवहारोऽयं भर्तृप्रत्ययलक्षणः । तस्मादिदमथोवाच व्यवहारनिदर्शनं ।
माता पिता च भ्राता च भार्य्या चैव पुरोहितः । नादण्ड्यो विद्यते राज्ञो यः स धर्म्मेण तिष्ठति ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि दण्डकथने एकविंशत्यधिकशततोऽध्यायः ॥ १२१ ॥

॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । अङ्गेषु राजा द्युतिमान् वसुहोम इति श्रुतः ।
स राजा धर्म्मविन्नित्यं सह पत्न्या महातपाः मुञ्जपृष्ठं जगामाथ पितृदेवर्षिपूजितं । ४४७०
तत्र शृङ्गे हिमवतो मेरौ कनकपर्व्वते । यत्र मुञ्जावटे रामो जटाहरणमादिशत् ।
तदा प्रभृति राजेन्द्र ऋषिभिः संशितव्रतैः । मुञ्जपृष्ठ इति प्रोक्तः स देशो रुद्रसेवितः ।
स तत्र बहुभिर्युक्तस्तदा श्रुतिमयैर्गुणैः । ब्राह्मणानामनुमतो देवर्षिसदृशोऽभवत् ।
तं कदाचिददीनात्मा सखा शक्रस्य मानितः । अभ्यगच्छन्महीपालो मान्धाता शत्रुकर्शनः ।
सोऽपसृत्य तु मान्धाता वसुहोमं नराधिपं । दृष्ट्वा प्रकृष्टतपसं विनतोऽग्रेऽभ्यतिष्ठत । ४४७५
वसुहोमोऽपि राज्ञो वै पाद्यमर्घ्यं न्यवेदयत् । सप्ताङ्गस्य तु राज्यस्य पप्रच्छ कुशलाव्ययं ।
सद्भिराचरितं पूर्व्वं यथावदनुयायिनं । अपृच्छद्वसुहोमस्तं राजन् किं करवाणि ते ।
सोऽब्रवीत् परमप्रीतो मान्धाता राजसत्तमः । वसुहोमं महाप्राज्ञमासीनं कुरुनन्दन ।
॥ मान्धातोवाच ॥ बृहस्पतेर्मतं राजन्नधीतं सकलं त्वया । तथैवौशनसं शास्त्रं विज्ञातं ते नरोत्तम ।

तदहं ज्ञातुमिच्छामि दण्ड उत्पद्यते कथं । किंस्वास्य पूर्व्वं जागर्त्ति किं वा परममुच्यते । ४४८०
कथं क्षत्रियसंस्थश्च दण्डः सम्प्रत्यवस्थितः । ब्रूहि मे सुमहाप्राज्ञ ददाम्याचार्य्य वेतनं ।
॥ वसुहोम उवाच ॥ शृणु राजन् यथा दण्डः सम्भूतो लोकसंग्रहः । प्रजाविनयरक्षार्थं धर्म्मस्यात्मा सनातनः ।
ब्रह्मा यियक्षुर्भगवान् सर्व्वलोकपितामहः । ऋत्विजं नात्मनस्तुल्यं ददर्शेति हि नः श्रुतं ।
स गर्भं शिरसा देवो बहुवर्षाण्यधारयत् । पूर्णे वर्षसहस्रे तु स गर्भः क्षुवतोऽपतत् ।
स क्षुपो नाम सम्भूतः प्रजापतिररिन्दम । ऋत्विगासीन्महाराज यज्ञे तस्य महात्मनः । ४४८५
तस्मिन् प्रवृत्ते सत्रे तु ब्रह्मणः पार्थिवर्षभ । हृष्टरूपप्रधानत्वाद्दण्डः सोऽन्तर्हितोऽभवत् ।
तस्मिन्नन्तर्हिते चापि प्रजानां सङ्करोऽभवत् । नैव कार्य्यं नवाऽकार्य्यं भोज्याभोज्यं न विद्यते ।
पेयापेये कुतः सिद्धिर्हिंसन्ति च परस्परं । गम्यागम्यं तदा नासीत् स्वं परस्वञ्च वै समं ।
परस्परं विलुम्पन्ति सारमेया यथामिषं । अबलान् बलिनो घ्नन्ति निर्म्मर्य्यादमवर्त्तत ।
ततः पितामहो विष्णुं भगवन्तं सनातनं । संपूज्य वरदं देवं महादेवमथाब्रवीत् । ४४९०
अत्र त्वमनुकम्पां वै कर्त्तुमर्हसि केशव । सङ्करो न भवेदत्र यथा तद्वै विधीयतां ।
ततः स भगवान् ध्यात्वा चिरं शूलवरायुधः । आत्मानमात्मना दण्डं ससृजे देवसत्तमः ।
तस्माच्च धर्म्मचरणान्नीतिर्देवी सरस्वती । ससृजे दण्डनीतिं सा त्रिषु लोकेषु विश्रुता ।
भूयः स भगवान् ध्यात्वा चिरं शूलवरायुधः । तस्य तस्य निकायस्य चकारैकैकमीश्वरं ।
देवानामीश्वरञ्चक्रे देवं दशशतेक्षणं । यमं वैवस्वतञ्चापि पितॄणामकरोत् प्रभुं । ४४९५
धनानां रक्षसानाञ्च कुवेरमपि चेश्वरं । पर्व्वतानां पतिं मेरुं सरिताञ्च महोदधिं ।
अपां राज्ये ऽसुराणाञ्च विदधे वरुणं प्रभुं । मृत्युं प्राणेश्वरमथो तेजसाञ्च हुताशनं ।
रुद्राणामपि चेशानं गोप्तारं विदधे प्रभुं । महात्मानं महादेवं विशालाक्षं सनातनं ।
वशिष्ठमीशं विप्राणां वसूनां जातवेदसं । तेजसां भास्करञ्चक्रे नक्षत्राणां निशाकरं ।
वीरुधामंशुमन्तञ्च भूतानाञ्च प्रभुं वरं । कुमारं द्वादशभुजं स्कन्दं राजानमादिशत् । ४५००
कालं सर्व्वेशमकरोत् संहारविनयात्मकं । मृत्योश्चतुर्विभागस्य दुःखस्य च सुखस्य च ।
ईश्वरः सर्व्वदेवस्तु राजराजो नराधिपः । सर्व्वेषामेव रुद्राणां शूलपाणिरिति श्रुतिः ।
तमेवं ब्रह्मणः पुत्त्रमनुजातं क्षुपं ददौ । प्रजानामधिपं श्रेष्ठं सर्व्वभूतभृतामपि ।
महादेवस्ततस्तस्मिन् वृत्ते यज्ञे यथाविधि । दण्डं धर्म्मस्य गोप्तारं विष्णवे सत्कृतं ददौ ।
विष्णुरङ्गिरसे प्रादादङ्गिरा मुनिसत्तमः । प्रादादिन्द्रमरीचिभ्यां मरीचिर्भृगवे ददौ । ४५०५
भृगुर्ददावृषिभ्यस्तु दण्डं धर्म्मसमाहितं । ऋषयो लोकपालेभ्यो लोकपालाः क्षुपाय च ।
क्षुपस्तु मनवे प्रादादादित्यतनयाय च । पुत्त्रेभ्यः श्राद्धदेवस्तु सूक्ष्मधर्म्मार्थकारणात् ।
विभज्य दण्डः कर्त्तव्यो धर्म्मेण न यदृच्छया । दुष्टानां निग्रहो दण्डो हिरण्यं वाह्यतः क्रिया ।
व्यङ्गत्वञ्च शरीरस्य वधो नाल्पस्य कारणात् । शरीरपीडास्तास्तास्तु देहत्यागो विवासनं ।

तं ददौ सूर्य्यपुत्राय मनवे रक्षणार्थकं। आनुपूर्व्याच्च दण्डोऽयं प्रजा जागर्त्ति पालयन्। ४५१०
इन्द्रो जागर्त्ति भगवानिन्द्रादग्निर्विभावसुः। अग्नेर्जागर्त्ति वरुणो वरुणाच्च प्रजापतिः।
प्रजापतेस्ततो धर्म्मो जागर्त्ति विनयात्मकः। धर्म्माच्च ब्रह्मणः पुत्रो व्यवसायः सनातनः।
व्यवसायात्ततस्तेजो जागर्त्ति परिपालयन्। ओषध्यस्तेजसस्तस्मादोषधीभ्यश्च पर्व्वताः।
पर्व्वतेभ्यश्च जागर्त्ति रसो रसगुणात्तथा। जागर्त्ति निर्ऋतिर्देवी ज्योतींषि निर्ऋतेरपि।
वेदाः प्रतिष्ठा ज्योतिर्भ्यस्ततो हयशिराः प्रभुः। ब्रह्मा पितामहस्तस्माज्जागर्त्ति प्रभुरव्ययः। ४५१५
पितामहान्महादेवो जागर्त्ति भगवान् शिवः। विश्वेदेवाः शिवाच्चापि विश्वेभ्यश्च तथर्षयः।
ऋषिभ्यो भगवान् सोमः सोमाद्देवाः सनातनाः। देवेभ्यो ब्राह्मणा लोके जाग्रतीत्युपधारय।
ब्राह्मणेभ्यश्च राजन्या लोकान् रक्षन्ति धर्म्मतः। स्थावरं जङ्गमञ्चैव क्षत्रियेभ्यः सनातनं।
प्रजा जाग्रति लोकेऽस्मिन् दण्डो जागर्त्ति तासु च। सर्व्वं संक्षिपते दण्डः पितामहसमप्रभः।
जागर्त्ति कालः पूर्व्वञ्च मध्ये चान्ते च भारत। ईश्वरः सर्व्वलोकस्य महादेवः प्रजापतिः। ४५२०
देवदेवः शिवः शर्व्वो जागर्त्ति सततं प्रभुः। कपर्द्दी शङ्करो रुद्रः शिवः स्थाणुरुमापतिः।
इत्येष दण्डो विख्यात आदौ मध्ये तथा परे। भूमिपालो यथान्यायं वर्त्ततानेन धर्म्मवित्।
॥ भीष्म उवाच॥ इतीदं वसुहोमस्य शृणुयाद्यो मतं नरः। श्रुत्वा च सम्यग्वर्त्तेत स सर्व्वान् कामानवाप्नुयात्।
इति ते सर्व्वमाख्यातं यो दण्डो मनुजर्षभ। नियन्ता सर्व्वलोकस्य धर्म्माक्रान्तस्य भारत।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि दण्डोत्पत्तिकथने द्वाविंशत्यधिकशततमोऽध्यायः॥१२२॥
॥ युधिष्ठिर उवाच॥ तात सर्व्वार्थकामानां श्रोतुमिच्छामि निश्चयं। लोकयात्रा हि कार्त्स्न्येन त्रिष्वेतेषु प्रतिष्ठिता। ४५२५
धर्म्मार्थकामाः किंमूलास्त्रयाणां प्रभवश्च कः। अन्योन्यञ्चानुषज्जन्ते वर्त्तन्ते च पृथक् पृथक्।
॥ भीष्म उवाच॥ यदा ते स्युः सुमनसो लोके धर्म्मार्थनिश्चये। कालप्रभवसंस्थासु सज्जन्ते च त्रयस्तदा।
धर्म्ममूलः सदैवार्थः कामोऽर्थफलमुच्यते। सङ्कल्पमूलास्ते सर्व्वे सङ्कल्पो विषयात्मकः।
विषयाश्चैव कार्त्स्न्येन सर्व्व आहारसिद्धये। मूलमेतत्त्रिवर्गस्य निवृत्तिर्मोक्ष उच्यते।
धर्म्माच्छरीरसंगुप्तिर्धर्म्मार्थश्चार्थ उच्यते। कामो रतिफलश्चात्र सर्व्वे ते च रजस्वलाः। ४५३०
सन्निकृष्टांश्चरेदेतान्न चैतान्मनसा त्यजेत्। विमुक्तस्तपसा सर्व्वान् धर्म्मादीन् कामनैष्ठिकान्।
श्रेष्ठं बुद्धिस्त्रिवर्गस्य यदयं प्राप्नुयान्नरः। बुद्ध्या बुद्धिरिहार्थेन तदन्यानभिकष्टया।
अपध्यानमलो धर्म्मो मलोऽर्थस्य निगूहनं। संप्रमोदमलः कामो भूयः स्वगुणवर्ज्जितः।
अत्राप्युदाहरन्तीममितिहासं पुरातनं। कामन्दकस्य संवादमाङ्गरिष्ठस्य चोभयोः।
कामन्दमृषिमासीनमभिवाद्य नराधिपः। आङ्गरिष्ठोऽथ पप्रच्छ कृत्वा समयपर्ययं। ४५३५
यः पापं कुरुते राजा काममोहबलात्कृतः। प्रत्यासन्नस्य तस्यर्षे किं स्यात् पापप्रणाशनं।
अधर्म्मं धर्म्म इति च योऽज्ञानादाचरेन्नरः। तच्चापि प्रथितं लोके कथं राजा निवर्त्तयेत्।

॥ कामन्द उवाच ॥ यो धर्म्मार्थौ परित्यज्य काममेवानुवर्त्तते । स धर्म्मार्थपरित्यागात् प्रज्ञानाशमिहार्च्छति ।
प्रज्ञानाशात्मको मोहस्तथा धर्म्मार्थनाशकः । तस्मान्नास्तिकता चैव दुराचारश्च जायते ।
दुराचारान् यदा राजा प्रदुष्टान्न नियच्छति । तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव ॥ ४०
तं प्रजा नानुवर्त्तन्ते ब्राह्मणा न च साधवः । ततः संशयमाप्नोति तथा वध्यत्वमेति च ।
अपध्वस्तस्त्ववमतो दुःखं जीवितमृच्छति । जीवेच्च यदपध्वस्तस्तच्छुद्धं मरणं भवेत् ।
अत्रैतदाहुराचार्य्याः पापस्य परिगर्हणं । सेवितव्या त्रयी विद्या सत्कारो ब्राह्मणेषु च ।
महामना भवेद्धर्म्मे विवहेच्च महाकुले । ब्राह्मणांश्चापि सेवेत क्षमायुक्तान्मनस्विनः ।
जपेदुदकशीलः स्यात्ततं सुखमाश्रितः । धर्म्मान्वितान् सम्प्रविशेद्बहिः कृत्वैव दुष्कृतीन् ॥ ४५
प्रसादयेन्मधुरया वाचा वाऽप्यथ कर्म्मणा । तवास्मीति वदेन्नित्यं परेषां कीर्त्तयन् गुणान् ।
अपापो ह्येवमाचारः क्षिप्रं बहुमतो भवेत् । पापान्यपि हि कृच्छ्राणि शमयेन्नात्र संशयः ।
गुरवो हि परं धर्म्मं यं ब्रूयुस्तं तथा कुरु । गुरूणां हि प्रसादाद्धि श्रेयः परमवाप्स्यसि ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि कामन्दाङ्गरिष्ठसंवादे त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

॥ युधिष्ठिर उवाच ॥ इमे जना नरश्रेष्ठ प्रशंसन्ति सदा भुवि । धर्म्मस्य शीलमेवादौ ततो मे संशयो महान् ।
यदि तच्छक्यमस्माभिर्ज्ञातुं धर्म्मभृताम्बर । श्रोतुमिच्छामि तत् सर्व्वं यथैतदुपलभ्यते ॥ ५०
कथं तत् प्राप्यते शीलं श्रोतुमिच्छामि भारत । किंलक्षणञ्च तत् प्रोक्तं ब्रूहि मे वदताम्बर ।
॥ भीष्म उवाच ॥ पुरा दुर्य्योधनेनेह धृतराष्ट्राय मानद । आख्यातं तप्यमानेन श्रियं दृष्ट्वा तथागतां ।
इन्द्रप्रस्थे महाराज तव सभ्रातृकस्य ह । सभायाञ्चावहसनं तत् सर्व्वं शृणु भारत ।
भवतस्तां सभां दृष्ट्वा समृद्धिञ्चाप्यनुत्तमां । दुर्य्योधनस्तदासीनः सर्व्वं पित्रे न्यवेदयत् ।
श्रुत्वा हि धृतराष्ट्रश्च दुर्य्योधनवचस्तदा । अब्रवीत् कर्णसहितं दुर्य्योधनमिदं वचः ॥ ५
॥ धृतराष्ट्र उवाच ॥ किमर्थं तप्यसे पुत्र श्रोतुमिच्छामि तत्त्वतः । श्रुत्वा त्वामनुनेष्यामि यदि सम्यग्भविष्यति ।
त्वया च महदैश्वर्य्यं प्राप्तं परपुरञ्जय । किङ्करा भ्रातरः सर्व्वे मित्रसम्बन्धिनः सदा ।
आच्छादयसि प्रावारानश्नासि पिशितौदनं । आजानेया वहन्ति त्वां केनासि हरिणः कृशः ।
॥ दुर्य्योधन उवाच ॥ दश तानि सहस्राणि स्नातकानां महात्मनां । भुञ्जते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने ।
दृष्ट्वा च तां सभां दिव्यां दिव्यपुष्पफलान्वितां । अश्वांस्तित्तिरिकल्माषान् वस्त्राणि विविधानि च ॥ १०
दृष्ट्वा तां पाण्डवेयानां ऋद्धिं वैश्रवणीं शुभां । अमित्राणां सुमहतीमनुशोचामि भारत ।
॥ धृतराष्ट्र उवाच ॥ यदीच्छसि श्रियं तात यादृशी सा युधिष्ठिरे । विशिष्टां वा नरव्याघ्र शीलवान् भव पुत्रक ।
शीलेन हि त्रयो लोकाः शक्या जेतुं न संशयः । न हि किञ्चिदसाध्यं वै लोके शीलवतां भवेत् ।
एकरात्रेण मान्धाता त्र्यहेण जनमेजयः । सप्तरात्रेण नाभागः पृथिवीं प्रतिपेदिरे ।
एते हि पार्थिवाः सर्व्वे शीलवन्तो दयान्विताः । अतस्तेषां गुणक्रीता वसुधा स्वयमागता ॥ १५
॥ दुर्य्योधन उवाच ॥ कथं तत् प्राप्यते शीलं श्रोतुमिच्छामि भारत । येन शीलेन तैः प्राप्ता क्षिप्रमेव वसुन्धरा ।

॥ धृतराष्ट्र उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । नारदेन पुरा प्रोक्तं शीलमाश्रित्य भारत ।
प्रह्रादेन हृतं राज्यं महेन्द्रस्य महात्मनः । शीलमाश्रित्य दैत्येन त्रैलोक्यञ्च वशे कृतं ।
ततो बृहस्पतिं शक्रः प्राञ्जलिः समुपस्थितः । तमुवाच महाप्राज्ञः श्रेय इच्छामि वेदितुं ।
ततो बृहस्पतिस्तस्मै ज्ञानं नैःश्रेयसं परं । कथयामास भगवान् देवेन्द्राय कुरूद्वह । ४५७०
एतावच्छ्रेय इत्येव बृहस्पतिरभाषत । इन्द्रस्तु भूयः पप्रच्छ को विशेषो भवेदिति ।
॥ बृहस्पतिरुवाच ॥ विशेषोऽस्ति महांस्तात भार्गवस्य महात्मनः । अत्रागमय भद्रन्ते भूय एव सुरर्षभ ।
आत्मनस्तु ततः श्रेयो भार्गवात् सुमहातपाः । ज्ञानमागमयत् प्रीत्या पुनः स परमद्युतिः ।
तेनापि समनुज्ञातो भार्गवेण महात्मना । श्रेयोऽस्तीति पुनर्भूयः शुक्रमाह शतक्रतुः ।
भार्गवस्त्वाह धर्म्मज्ञः प्रह्रादस्य महात्मनः । ज्ञानमस्ति विशेषेणेत्युक्तो हृष्टश्च सोऽभवत् । ४५७५
स ततो ब्राह्मणो भूत्वा प्रह्रादं पाकशासनः । गत्वा प्रोवाच मेधावी श्रेय इच्छामि वेदितुं ।
प्रह्रादस्त्वब्रवीद्विप्रं क्षणो नास्ति द्विजर्षभ । त्रैलोक्यराज्यसक्तस्य ततो नोपदिशामि ते ।
ब्राह्मणस्त्वब्रवीद्राजन् यस्मिन् काले क्षणो भवेत् । तदोपादेष्टुमिच्छामि यद्यत्कार्य्यमनुत्तमं ।
ततः प्रीतोऽभवद्राजा प्रह्रादो ब्रह्मवादिनः । तथेत्युक्त्वा शुभे काले ज्ञानतत्त्वं ददौ तदा ।
ब्राह्मणोऽपि यथान्यायं गुरुवृत्तिमनुत्तमां । चकार सर्व्वभावेन यदस्य मनसेप्सितं । ४५८०
पृष्टश्च तेन बहुशः प्राप्तं कथमरिन्दम । त्रैलोक्यराज्यं धर्म्मज्ञ कारणं तद्ब्रवीहि मे ।
प्रह्रादोऽपि महाराज ब्राह्मणं वाक्यमब्रवीत् ।

॥ प्रह्राद उवाच ॥ नासूयामि द्विजान् विप्र राजाऽस्मीति कदाचन । काव्यानि वदतां तेषां संयच्छामि वहामि च ।
ते विस्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा । ते मां काव्यपथे युक्तं शुश्रूषुमनसूयकं ।
धर्म्मात्मानं जितक्रोधं नियतं संयतेन्द्रियं । समासिञ्चन्ति शास्तारः क्षौद्रं मध्विव मक्षिकाः । ४५८५
सोऽहं वागग्रविद्यानां रसानामवलेहिता । स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ।
एतत् पृथिव्याममृतमेतच्चक्षुरनुत्तमं । यद्ब्राह्मणमुखे काव्यमेतच्छ्रुत्वा प्रवर्त्तते ।
एतावच्छ्रेय इत्याह प्रह्रादो ब्रह्मवादिनं । शुश्रूषितस्तेन तदा दैत्येन्द्रो वाक्यमब्रवीत् ।
यथावद्गुरुवृत्त्या ते प्रीतोऽस्मि द्विजसत्तम । वरं वृणीष्व भद्रन्ते प्रदाताऽस्मि न संशयः ।
कृतमित्येव दैत्येन्द्रमुवाच स च वै द्विजः । प्रह्रादस्त्वब्रवीत् प्रीतो गृह्यतां वर इत्युत । ४५९०
॥ ब्राह्मण उवाच ॥ यदि राजन् प्रसन्नस्त्वं मम चेदिच्छसि प्रियं । भवतः शीलमिच्छामि प्राप्तुमेष वरो मम ।
ततः प्रीतश्च दैत्येन्द्रो भयमस्याभवन्महत् । वरे प्रदिष्टे विप्रेण नाल्पतेजाऽयमित्युत ।
एवमस्त्विति तं प्राह प्रह्रादो विस्मितस्तदा । उपाकृत्य तु विप्राय वरं दुःखान्वितोऽभवत् ।
दत्ते वरे गते विप्रे चिन्तासीन्महती तदा । प्रह्रादस्य महाराज निश्चयं न च जग्मिवान् ।
तस्य चिन्तयतस्तावच्छायाभूतं महाद्युते । तेजो विग्रहवत्तात शरीरमजहात्तदा । ४५९५
तमपृच्छन्महाकायं प्रह्रादः को भवानिति । प्रत्याह तन्तु शीलोऽस्मि त्यक्तो गच्छाम्यहं त्वया ।

तस्मिन् द्विजोत्तमे राजन् वत्स्याम्यहमनिन्दिते । योऽसौ शिष्यत्वमागम्य त्वयि नित्यं समाहितः ।
इत्युक्त्वाऽन्तर्हितं तद्वै शक्रस्याम्याविशत् प्रभो । तस्मिंस्तेजसि याते तु तादृग्रूपस्ततोऽपरः ।
शरीरान्निःसृतस्तस्य को भवानिति चाब्रवीत् । धर्मं प्रह्राद मां विद्धि यत्रासौ द्विजसत्तम ।
तत्र यास्यामि दैत्येन्द्र यतः शीलं ततो ह्यहं । ततोऽपरो महाराज प्रज्वलन्निव तेजसा । ४६००
शरीरान्निःसृतस्तस्य प्रह्लादस्य महात्मनः । को भवानिति पृष्टश्च तमाह स महाद्युतिः ।
सत्यं विद्ध्यसुरेन्द्राद्य प्रयास्ये धर्म्ममन्वहं । तस्मिन्ननुगते धर्म्मे महान् वै पुरुषोऽपरः ।
निश्चक्राम ततस्तस्मात् पृष्टश्चाह महाबलः । वृत्तं प्रह्राद मां विद्धि यतः सत्यं ततो ह्यहं ।
तस्मिन् गते महाशब्दः शरीरात्तस्य निर्ययौ । पृष्टश्चाह बलं विद्धि यतो वृत्तमहन्ततः ।
इत्युक्त्वा प्रययौ तत्र यतो वृत्तं नराधिप । ततः प्रभामयी देवी शरीरात्तस्य निर्ययौ । ४६०५
तामपृच्छत् स दैत्येन्द्रः सा श्रीरित्येनमब्रवीत् । उषिताऽस्मि स्वयं वीर त्वयि सत्यपराक्रम ।
त्वया त्यक्ता गमिष्यामि बलं ह्यनुगता ह्यहं । ततो भयं प्रादुरासीत् प्रह्लादस्य महात्मनः ।
अपृच्छत् स ततो भूयः क्व यासि कमलालये । त्वं हि सत्यव्रता देवी लोकस्य परमेश्वरी ।
कश्चासौ ब्राह्मणश्रेष्ठस्तत्त्वमिच्छामि वेदितुं ।
॥ श्रीरुवाच ॥ स शक्रो ब्रह्मचारी यस्त्वत्तश्चैवोपशिक्षितः । त्रैलोक्ये ते यदैश्वर्य्यं तत्तेनापहृतं प्रभो । ४६१०
शीलेन हि त्रयो लोकास्त्वया धर्म्मज्ञ निर्ज्जिताः । तद्विज्ञाय सुरेन्द्रेण तव शीलं हृतं प्रभो ।
धर्म्मः सत्यं तथा वृत्तं बलञ्चैव तथाऽप्यहं । शीलमूला महाप्राज्ञ सदा नास्त्यत्र संशयः ।
॥ भीष्म उवाच ॥ एवमुक्त्वा गता श्रीस्तु ते च सर्व्वे युधिष्ठिर । दुर्य्योधनस्तु पितरं भूय एवाब्रवीद्वचः ।
शीलस्य तत्त्वमिच्छामि वेत्तुं कौरवनन्दन । प्राप्यते च यथा शीलं तच्चोपायं वदस्व मे ।
॥ धृतराष्ट्र उवाच ॥ सोपायं पूर्व्वमुद्दिष्टं प्रह्लादेन महात्मना । सङ्क्षेपेण तु शीलस्य शृणु प्राप्तिं नरेश्वर । ४६१५
अद्रोहः सर्व्वभूतेषु कर्म्मणा मनसा गिरा । अनुग्रहश्च दानञ्च शीलमेतत् प्रशस्यते ।
यदन्येषां हितं न स्यादात्मनः कर्म्म पौरुषं । अपत्रपेत वा येन न तत् कुर्य्यात् कथञ्चन ।
तत्तु कर्म्म तथा कुर्य्याद्येन श्लाघ्येत संसदि । शीलं समासेनैतत्ते कथितं कुरुसत्तम ।
यद्यप्यशीला नृपते प्राप्नुवन्ति श्रियं क्वचित् । न भुञ्जते चिरं तात समूलाश्च न सन्ति ते ।
॥ धृतराष्ट्र उवाच ॥ एतद्विदित्वा तत्त्वेन शीलवान् भव पुत्रक । यदीच्छसि श्रियं तात सुविशिष्टां युधिष्ठिरात् । ४६२०
॥ भीष्म उवाच ॥ एतत् कथितवान् पुत्रे धृतराष्ट्रो नराधिपः । एतत् कुरुष्व कौन्तेय ततः प्राप्स्यसि तत्फलं ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्मानुशासनपर्व्वणि शीलवर्णने चतुर्विंशत्यधिकशततोऽध्यायः ॥ १२४ ॥
॥ युधिष्ठिर उवाच ॥ शीलं प्रधानं पुरुषे कथितं ते पितामह । कथं त्वाशा समुत्पन्ना या चाशा तद्वदस्व मे ।
संशयो मे महानेष समुत्पन्नः पितामह । छेत्ता तस्य च नान्योऽस्ति त्वत्तः परपुरञ्जय ।
पितामहाशा महती ममासीद्धि सुयोधने । प्राप्ते युद्धे तु यद्युक्तं तत् कर्त्ताऽयमिति प्रभो ।
सर्व्वस्याशा सुमहती पुरुषस्योपजायते । तस्यां विहन्यमानायां दुःखो मृत्युर्न संशयः । ४६२५

सोऽहं हताशो दुर्ब्बुद्धिः कृतघ्नेन दुरात्मना । धार्त्तराष्ट्रेण राजेन्द्र पश्य मन्दात्मतां मम ।
आशां महत्तरां मन्ये पर्व्वतादपि सद्रुमात् । आकाशादपि वा राजन्नप्रमेयैव वा पुनः ।
एषा चैव कुरुश्रेष्ठ दुर्न्निरीक्ष्या सुदुर्लभा । दुर्लभत्वाच्च पश्यामि किमन्यद्दुर्लभं ततः ।
॥ भीष्म उवाच ॥ अत्र ते वर्त्तयिष्यामि युधिष्ठिर निबोध तत् । इतिहासं सुमित्रस्य निर्व्वृत्तमृषभस्य च ।
सुमित्रो नाम राजर्षिर्हैहयो मृगयां गतः । ससार स मृगं विद्ध्वा वाणेनानतपर्व्वणा । ४६३०
स मृगो वाणमादाय ययावमितविक्रमः । स च राजा बलात्तूर्णं ससार मृगयूथपं ।
ततो निम्नं स्थलञ्चैव स मृगोऽद्रवदाशुगः । मुहूर्त्तमिव राजेन्द्र समेन स पथाऽगमत् ।
ततः स राजा तारुण्यादौरसेन बलेन च । ससार वाणासनभृत् सखड्गोऽसौ तनुत्रवान् ।
ततो नदान्नदींश्चैव पल्वलानि वनानि च । अतिक्रम्याभ्यतिक्रम्य ससारैको वनेचरः ।
स तु कामान्मृगो राजन्नासाद्यासाद्य तं नृपं । पुनरभ्येति जवनो जवेन महता ततः । ४६३५
स तस्य वाणैर्ब्बहुभिः समभ्यस्तो वनेचरः । प्रक्रीडन्निव राजेन्द्र पुनरभ्येति चान्तिकं ।
पुनश्च जवमास्थाय जवनो मृगयूथपः । अतीत्यातीत्य राजेन्द्र पुनरभ्येति चान्तिकं ।
तस्य मर्म्मच्छिदं घोरं तीक्ष्णमामित्रकर्शनः । समादाय शरं श्रेष्ठं कार्म्मुके तु तथाऽसृजत् ।
ततो गव्यूतिमात्रेण मृगयूथपयूथपः । तस्य वाणपथं मुक्त्वा तस्थिवान् प्रहसन्निव ।
तस्मिन्निपतिते वाणे भूमौ प्रज्वलिततेजसि । प्रविवेश महारण्यं मृगो राजाऽप्यथाद्रवत् । ४६४०
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि ऋषभगीतासु पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥
॥ भीष्म उवाच ॥ प्रविश्य स महारण्यं तापसानामथाश्रमं । आससाद ततो राजा श्रान्तश्चोपाविशत्तदा ।
तं कार्म्मुकधरं दृष्ट्वा श्रमार्त्तं क्षुधितं तदा । समेत्य ऋषयस्तस्मिन् पूजाञ्चक्रुर्यथाविधि ।
स पूजामृषिभिर्द्दत्तां सम्प्रगृह्य नराधिपः । अपृच्छत्तापसान् सर्व्वांस्तपसो वृद्धिमुत्तमां ।
ते तस्य राज्ञो वचनं सम्प्रगृह्य तपोधनाः । ऋषयो राजशार्दूलं तमपृच्छन् प्रयोजनं ।
केन भद्र सुखार्थेन सम्प्राप्तोऽसि तपोवनं । पदातिर्ब्बद्धनिस्त्रिंशो धन्वी वाणी नरेश्वर । ४६४५
एतदिच्छामहे श्रोतुं कुतः प्राप्तोऽसि मानद । कस्मिन् कुले तु जातस्त्वं किन्नामा चासि ब्रूहि नः ।
ततः स राजा सर्व्वेभ्यो द्विजेभ्यः पुरुषर्षभ । आचचक्षे यथान्यायं परिचर्य्यां च भारत ।
हैहयानां कुले जातः सुमित्रो मित्रनन्दनः । चरामि मृगयूथानि निघ्नन् वाणैः सहस्रशः ।
बलेन महता गुप्तः सामात्यः सावरोधनः । मृगस्तु विद्धो वाणेन मया सरति शल्यवान् ।
तं द्रवन्तमनुप्राप्तो वनमेतद्यदृच्छया । भवत्सकाशं नष्टश्रीर्हताशः श्रमकर्षितः । ४६५०
किन्नु दुःखमतोऽन्यद्वै यदहं श्रमकर्षितः । भवतामाश्रमं प्राप्तो हताशो भ्रष्टलक्षणः ।
न राजलक्षणत्यागो न पुरस्य तपोधनाः । दुःखं करोति तत्तीव्रं यथाशा विहता मम ।
हिमवान् वा महाशैलः समुद्रो वा महोदधिः । महत्त्वान्नान्वपद्येतां नभसो वाऽन्तरं तथा ।
आशायास्तपसि श्रेष्ठास्तथा नान्तमहं गतः । भवतां विदितं सर्व्वं सर्व्वज्ञा हि तपोधनाः ।

भवन्तः सुमहाभागास्तस्मात् पृच्छामि संशयं । आशावान् पुरुषो यः स्यादन्तरीक्षमथापि वा । ४६५५

किं नु ज्यायस्तरं लोके महत्त्वात् प्रतिभाति वः । एतदिच्छामि तत्त्वेन श्रोतुं किमिह दुर्लभं ।

यदि गुह्यं नरो नित्यं तदा प्रब्रूत मा चिरं । न गुह्यं श्रोतुमिच्छामि युष्मत्तो द्विजसत्तमाः ।

भवत्तपोविघातो वा यदि स्याद्विरमेत्ततः । यदि वास्ति कथायोगो योऽयं प्रश्नो मयेरितः ।

एतत् कारणसामर्थ्यं श्रोतुमिच्छामि तत्त्वतः । भवन्तोऽपि तपोनित्या ब्रूयुरेतत् समन्विताः ।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि ऋषभगीतासु षड्विंशत्यधिकशततोऽध्यायः ॥ १२६ ॥

॥ भीष्म उवाच ॥ ततस्तेषां समस्तानामृषीणामृषिसत्तमः । ऋषभो नाम विप्रर्षिर्विस्मयन्निदमब्रवीत् । ४६६०

पुराऽहं राजशार्दूल तीर्थान्यनुचरन् प्रभो । समासादितवान् दिव्यं नरनारायणाश्रमं ।

यत्र सा वदरी रम्या ह्रदो वैहायसस्तथा । यत्र चाश्वशिरा राजन् वेदान् पठति शाश्वतान् ।

तस्मिन् सरसि कृत्वाऽहं विधिवत्तर्पणं पुरा । पितॄणां देवतानाञ्च ततोऽश्रममियां तदा ।

रेमाते यत्र तौ नित्यं नरनारायणावृषी । अदूरादाश्रमं कञ्चिद्वासार्थमगमं तदा ।

तत्र चीराजिनधरं कृशमुच्चमतीव च । अद्राक्षमृषिमायान्तं तनुं नाम तपोधनं । ४६६५

अन्यैर्नरैर्महाबाहो वपुषाऽष्टगुणान्वितं । कृशता चापि राजर्षे न दृष्टा तादृशी क्वचित् ।

शरीरमपि राजेन्द्र तस्य कानिष्ठिकासमं । ग्रीवाबाहू तथा पादौ केशाश्चाद्भुतदर्शनाः ।

शिरः कायानुरूपञ्च कर्णौ नेत्रे तथैव च । तस्य वाक्चैव चेष्टा च सामान्ये राजसत्तम ।

दृष्ट्वाऽहं तं कृशं विप्रं भीतः परमदुर्म्मनाः । पादौ तस्याभिवाद्याथ स्थितः प्राञ्जलिरग्रतः ।

निवेद्य नामगोत्रे च पितरञ्च नरर्षभ । प्रदिष्टे चासने तेन शनैरहमुपाविशं । ४६७०

ततः स कथयामास कथां धर्म्मार्थसंहितां । ऋषिमध्ये महाराज तनुर्द्धर्म्मभृतां वरः ।

तस्मिंस्तु कथयत्येव राजा राजीवलोचनः । उपायाज्जवनैरश्वैः सबलः सावरोधनः ।

स्मरन् पुत्त्रमरण्ये वै नष्टं परमदुर्म्मनाः । भूरिद्युम्नपिता श्रीमान् वीरद्युम्नो महायशाः ।

इह द्रक्ष्यामि तं पुत्त्रं द्रक्ष्यामीहेति पार्थिवः । एवमाशाकृतो राजा चरन् वनमिदं पुरा ।

दुर्लभः स मया द्रष्टुं नूनं परमधार्म्मिकः । एकः पुत्त्रो महारण्ये नष्ट इत्यसकृत्तदा । ४६७५

दुर्लभः स मया द्रष्टुमाशा च महती मम । तया परीतगात्रोऽहं मुमूर्षुर्नात्र संशयः ।

एतच्छ्रुत्वा स भगवांस्तनुर्म्मुनिवरोत्तमः । अवाक्शिरा ध्यानपरो मुहूर्त्तमिव तस्थिवान् ।

तमनुध्यातमालक्ष्य राजा परमदुर्म्मनाः । उवाच वाक्यं दीनात्मा मन्दंमन्दमिवासकृत् ।

दुर्लभं किं नु देवर्षे आशायाश्चैव किं महत् । ब्रवीतु भगवानेतद्यदि गुह्यं न ते मयि ।

॥ मुनिरुवाच ॥ महर्षिर्भगवांस्तेन पूर्व्वमासीद्विमानितः । बालिशां बुद्धिमास्थाय मन्दभाग्यतयात्मनः । ४६८०

अर्थयन् कलशं राजन् काञ्चनं वल्कलानि च । अवज्ञापूर्व्वकेनापि न सम्पादितवांस्ततः ।

निर्व्विण्णः स तु राजर्षिर्निराशः समपद्यत । एवमुक्तोऽभिवाद्याथ तमृषिं लोकपूजितं ।

श्रान्तोऽवसीद्धर्म्मात्मा यथा त्वं नरसत्तम । अर्घं ततः समानीय पाद्यञ्चैव महानृषिः ।

आरण्येनैव विधिना राज्ञे सर्व्वं न्यवेदयत्। ततस्ते मुनयः सर्व्वे परिवार्य्य नरर्षभं।
उपाविशन्नरव्याघ्र सप्तर्षय इव ध्रुवं। अपृच्छंश्चैव ते तत्र राजानमपराजितं। ४६८५
प्रयोजनमिदं सर्व्वमाश्रमस्य निवेशने।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि ऋषभगीतासु सप्तविंशत्यधिकशततमोऽध्यायः॥ १२७ ॥
॥ राजोवाच ॥ वीरद्युम्न इति ख्यातो राजाऽहं दिक्षु विश्रुतः। भूरिद्युम्नं सुतं नष्टमन्वेष्टुं वनमागतः।
एकः पुत्त्रः स विप्राग्र्य बाल एव च मेऽनघ। न दृश्यते वने चास्मिंस्तमन्वेष्टुं चराम्यहं।
॥ ऋषभ उवाच ॥ इत्येवमुक्ते वचने राज्ञा मुनिरधोमुखः। तूष्णीमेवाभवत्तत्र न च प्रत्युक्तवान्नृपं।
स हि तेन पुरा विप्रो राज्ञा नात्यर्थमानितः। आशाकृतस्य राजेन्द्र तपो दीर्घं समास्थितः। ४६९०
प्रतिग्रहमहं राज्ञां न करिष्ये कथञ्चन। अन्येषाञ्चैव वर्णानामिति कृत्वा धियं तदा।
आशा हि पुरुषं बालं उत्थापयति तस्थुषी। तामहं व्यपनेष्यामि इति कृत्वा व्यवस्थितः।
वीरद्युम्नस्तु तं भूयः पप्रच्छ मुनिसत्तमं।
॥ राजोवाच ॥ आशायाः किं कृशत्वञ्च किञ्चेह भुवि दुर्लभं। ब्रवीतु भगवानेतत्त्वं हि धर्म्मार्थदर्शिवान्।
ततः संस्मृत्य तत् सर्व्वं स्मारयिष्यन्निवाब्रवीत्। राजानं भगवान् विप्रस्ततः कृशतनुस्तदा। ४६९५
॥ ऋषिरुवाच ॥ कृशत्वेन समं राजन्नाशाया विद्यते नृप। तस्या वै दुर्लभत्वाच्च प्रार्थिताः पार्थिवा मया।
॥ राजोवाच ॥ कृशाकृशे मया ब्रह्मन् गृहीते वचनात्तव। दुर्लभत्वञ्च तस्यैव वेदवाक्यमिव द्विज।
संशयस्तु महाप्राज्ञ सञ्जातो हृदये मम। तन्मुने मम तत्त्वेन वक्तुमर्हसि पृच्छतः।
त्वत्तः कृशतरं किं नु ब्रवीतु भगवानिदं। यदि गुह्यं न ते किञ्चिद्विद्यते मुनिसत्तम।
॥ कृश उवाच ॥ दुर्लभोऽप्यथवा नास्ति योऽर्थी धृतिमवाप्नुयात्। सुदुर्लभतरस्तात योऽर्थिनं नावमन्यते। ४७००
सत्कृत्य नोपकुरुते परं शक्त्या यथार्हतः। या सक्ता सर्व्वभूतेषु साशा कृशतरी मया।
कृतघ्नेषु च या सक्ता नृशंसेष्वलसेषु च। अपकारिषु चासक्ता साशा कृशतरी मया।
एकपुत्त्रः पिता पुत्त्रे नष्टे वा प्रोषितेऽपि वा। प्रवृत्तिं यो न जानाति साशा कृशतरी मया।
प्रसवे चैव नारीणां वृद्धानां पुत्त्रकारिता। तथा नरेन्द्र धनिनां साशा कृशतरी मया।
प्रदानकाङ्क्षिणीनाञ्च कन्यानां वयसि स्थिते। श्रुत्वा कथास्तथा युक्ताः साशा कृशतरी मया। ४७०५
एतच्छ्रुत्वा ततो राजन् स राजा सावरोधनः। संस्पृश्य पादौ शिरसा निपपात द्विजर्षभे।
॥ राजोवाच ॥ प्रसादये त्वां भगवन् पुत्त्रेणेच्छामि सङ्गमं। यदेतदुक्तं भवता सम्प्रति द्विजसत्तम।
सत्यमेतन्न सन्देहो यदेतद्व्याहृतं त्वया। ततः प्रहस्य भगवांस्तनुर्द्धर्म्मभृताम्बरः।
पुत्त्रमस्यानयत् क्षिप्रं तपसा च श्रुतेन च। स समानीय तत्पुत्त्रं तमुपालभ्य पार्थिवं।
आत्मानं दर्शयामास धर्म्मं धर्म्मभृताम्बरः। स दर्शयित्वा चात्मानं दिव्यमद्भुतदर्शनं। ४७१०
विपाप्मा विगतक्रोधश्चचार वनमन्तिकात्। एतद्दृष्टं मया राजंस्तथा च वचनं श्रुतं।
आशामपनयस्वाशु ततः कृशतरीमिमां।

॥ भीष्म उवाच ॥ स तथोक्तस्तदा राजवृषभेण महात्मना । कुमिरोपनयत् क्षिप्रमाशां कृशतरीं ततः ।
एवं त्वमपि कौन्तेय श्रुत्वा वाणीमिमां मम । स्थिरो भव महाराज हिमवानिव पर्व्वतः ।
त्वं हि प्रष्टा च श्रोता च कृच्छ्रेष्वनुगतेष्विह । श्रुत्वा मम महाराज न सन्तप्तुमिहार्हसि । ४०११
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्मानुशासनपर्व्वणि ऋषभगीतासु अष्टाविंशत्यधिकशततोऽध्यायः ॥ १२८ ॥

॥ युधिष्ठिर उवाच ॥ नामृतस्येव पर्य्याप्तिर्ममास्ति ब्रुवति त्वयि । यथा हि स्वात्मवन्तिस्तथा तृप्तोऽस्मि भारत ।
तस्मात् कथय भूयस्त्वं धर्म्ममेव पितामह । न हि तृप्तिमहं यामि पिवन् धर्म्मामृतं हि ते ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । गौतमस्य च संवादं यमस्य च महात्मनः ।
पारियात्रं गिरिं प्राप्य गौतमस्याश्रमो महान् । उवास गौतमो यत्र कालं तमपि मे शृणु ।
षष्टिं वर्षसहस्राणि सोऽतप्यद्गौतमस्तपः । तमुग्रतपसा युक्तं भावितं सुमहामुनिं । ४०२०
उपायातो नरव्याघ्र लोकपालो यमस्तदा । तमपश्यत् सुतपसमृषिं वै गौतमं तदा ।
स तं विदित्वा ब्रह्मर्षिर्यममागतमोजसा । प्राञ्जलिः प्रयतो भूत्वा उपविष्टस्तपोधनः ।
तं धर्म्मराजो दृष्ट्वैव सत्कृत्यैव द्विजर्षभं । न्यमन्त्रयत धर्म्मेण क्रियतां किमिति ब्रुवन् ।
॥ गौतम उवाच ॥ मातापितृभ्यामानृण्यं किं कृत्वा समवाप्नुयात् । कथञ्च लोकानाप्नोति पुरुषो दुर्लभान् शुभान् ।
॥ यम उवाच ॥ तपः शौचवता नित्यं सत्यधर्म्मरतेन च । मातापित्रोरहरहः पूजनं कार्य्यमञ्जसा । ४०२५
अश्वमेधैश्च यष्टव्यं बहुभिः स्वाप्तदक्षिणैः । तेन लोकानवाप्नोति पुरुषोऽद्भुतदर्शनान् ।
इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि ऊनत्रिंशदधिकशततोऽध्यायः ॥ १२९ ॥

॥ युधिष्ठिर उवाच ॥ मित्रैः प्रहीयमाणस्य बह्वमित्रस्य का गतिः । राज्ञः संक्षीणकोषस्य बलहीनस्य भारत ।
दुष्टामात्यसहायस्य श्रुतमन्त्रस्य सर्व्वतः । राज्यात् प्रच्यवमानस्य गतिमग्र्यामपश्यतः ।
परचक्राभियातस्य परराष्ट्राणि मृद्नतः । विग्रहे वर्त्तमानस्य दुर्ब्बलस्य बलीयसा ।
असंविहितराष्ट्रस्य देशकालावजानतः । अप्राप्यश्च भवेत् सान्त्वं भेदो वाऽप्यतिपीडनात् । ४०३०
जीवितन्त्वर्थहेतुर्व्वा तत्र किं सुकृतं भवेत् ।
॥ भीष्म उवाच ॥ गुह्यं धर्म्मञ्च मा प्राक्षीरतीव भरतर्षभ । अपृष्टो नोत्सहे वक्तुं धर्म्ममेतं युधिष्ठिर ।
धर्म्मो ह्यणीयान् वचनाद्बुद्धिश्च भरतर्षभ । श्रुत्वोपास्य सदाचारैः साधुर्भवति स क्वचित् ।
कर्म्मणा बुद्धिरूपेण भवत्याढ्यो न वा पुनः । तादृशोऽयमनुप्रश्नः संव्यवस्यः स्वया धिया ।
उपायं धर्म्मबहुलं यात्रार्थं शृणु भारत । नाहमेतादृशं धर्म्मं बुभूषे धर्म्मकारणात् । ४०३५
दुःखादान इह ह्येष स्यात्तु पश्चात् क्षयोपमः । अभिगम्य मतीनां हि सर्व्वासामेव निश्चयः
यथा यथा हि पुरुषो नित्यं शास्त्रमवेक्षते । तथा तथा विजानाति विज्ञानमथ रोचते ।
अविज्ञानादयोगो हि योगो भूतिकरः परः । अशङ्कमानो वचनमनसूयुरिदं शृणु ।
राज्ञः कोषक्षयादेव जायते बलसंक्षयः । कोषञ्च जनयेद्राजा निर्ज्जलेभ्यो यथा जलं ।
कालं प्राप्यानुगृह्णीयादेष धर्म्मः सनातनः । उपायधर्म्मं प्राप्येमं पूर्व्वैराचरितं जनैः । ४०४०

अन्यो धर्म्मः समर्थानामापत्स्वन्यश्च भारत । प्राक् कोषात् प्राप्यते धर्म्मो वृत्तिर्द्धर्म्माद्गरीयसी ।
धर्म्मं प्राप्य न्यायवृत्तिं न बलीयान्न विन्दति । यस्मादस्योपपत्तिरेकान्तेन न विद्यते ।
तस्मादापद्यधर्म्मोऽपि श्रूयते धर्म्मलक्षणः । अधर्म्मो जायते तस्मिन्निति वै कवयो विदुः ।
अनन्तरं क्षत्रियस्य तत्र किं विचिकित्स्यते । यथाऽस्य धर्म्मो न म्लायेन्नेयाच्छत्रुवशं यथा ।
तत् कर्त्तव्यमिति प्राहुर्नात्मानमवसादयेत् । सर्व्वात्मनैव धर्म्मस्य न परस्य न चात्मनः ।     ४७४५
सर्व्वोपायैरुज्जिहीर्षेदात्मानमिति निश्चयः । तत्र धर्म्मविदां तात निश्चयो धर्म्मनैपुणं ।
उद्यमो नैपुणं क्षात्रे बाहुवीर्य्यादिति श्रुतिः । क्षत्रियो वृत्तिसंरोधे कस्य नादातुमर्हति ।
अन्यत्र तापसस्वाच्च ब्राह्मणस्वाच्च भारत । यथा वै ब्राह्मणः सीदन्नयाज्यमपि याजयेत् ।
अभोज्यान्नानि चाश्नीयात्तथेदं नात्र संशयः । पीडितस्य किमद्वारमुत्पथो विधृतस्य च ।
अद्वारतः प्रद्रवति यदा भवति पीडितः । यस्य कोषबलग्लान्या सर्व्वलोकपराभवः ।     ४७५०
भैक्ष्यचर्य्या न विहिता न च विट्शूद्रजीविका । स्वधर्म्मानन्तरा वृत्तिर्जात्यानमनुपजीवतः ।
वहतः प्रथमं कल्पमनुकल्पेन जीवनं । आपद्गतेन धर्म्माणामन्यायेनोपजीवनं ।
अपि ह्येतत् ब्राह्मणेषु दृष्टं वृत्तिपरिक्षये । क्षत्रिये संशयः कस्मादित्येवं निश्चितं सदा ।
आददीत विशिष्टेभ्यो नावसीदेत् कथञ्चन । हन्तारं रक्षितारञ्च प्रजानां क्षत्रियं विदुः ।
तस्मात् संरक्षता कार्य्यमादानं क्षत्रबन्धुना । अन्यत्र राजन् हिंसाया वृत्तिर्नेहास्ति कस्यचित् ।     ४७५५
अप्यरण्यसमुत्थस्य एकस्य चरतो मुनेः । न शङ्खलिखितां वृत्तिं शक्यमास्थाय जीवितुं ।
विशेषतः कुरुश्रेष्ठ प्रजापालनमीप्सया । परस्परं हि संरक्ष्या राज्ञा राष्ट्रेण चापदि ।
नित्यमेव हि कर्त्तव्या एष धर्म्मः सनातनः । राजा राष्ट्रं यथापत्सु द्रव्यौघैरभिरक्षति ।
राष्ट्रेण राजा व्यसने रक्षितव्यस्तथा भवेत् । कोषं दण्डं बलं मित्रं यदन्यदपि सञ्चितं ।
न कुर्व्वीतान्तरं राष्ट्रे राजा परिगतः क्षुधा । वीजं भक्तेन सम्पाद्यमिति धर्म्मविदो विदुः ।     ४७६०
अत्रैतच्छम्बरस्याहुर्म्महामायस्य दर्शनं । धिक् तस्य जीवितं राज्ञो राष्ट्रं यस्यावसीदति ।
अवृत्त्याऽन्त्यमनुष्योऽपि यो वैदेशिक इत्यपि । राज्ञः कोषबलं मूलं कोषमूलं पुनर्बलं ।
तन्मूलं सर्व्वधर्म्माणां धर्म्ममूलाः पुनः प्रजाः । नान्यानपीडयित्वेह कोषः शक्यः कुतो बलं ।
तदर्थं पीडयित्वा च दोषं प्राप्तुं न सोऽर्हति । अकार्य्यमपि यज्ञार्थं क्रियते यज्ञकर्म्मसु ।
एतस्मात् कारणाद्राजा न दोषं प्राप्तुमर्हति । अर्थार्थमन्यद्भवति विपरीतमथापरं ।     ४७६५
अनर्थार्थमथाप्यन्यत्तत् सर्व्वं ह्यर्थकारणं । एवं बुद्ध्या संप्रपश्येन्मेधावी कर्म्मनिश्चयं ।
यज्ञार्थमन्यद्भवति यज्ञोऽन्यार्थस्तथापरः । यज्ञस्यार्थार्थमेवान्यत्तत् सर्व्वं यज्ञसाधनं ।
उपमामत्र वक्ष्यामि धर्म्मतत्त्वप्रकाशिनीं । यूपं छिन्दन्ति यज्ञार्थं तत्र ये परिपन्थिनः ।
द्रुमाः केचन सामन्ता ध्रुवं छिन्दन्ति तानपि । ते चापि निपतन्तोऽन्यान्निघ्नन्त्येव वनस्पतीन् ।
एवं कोषस्य महता ये नराः परिपन्थिनः । तानहत्वा न पश्यामि सिद्धिमत्र परन्तप ।     ४७७०

धनेन जायते लोकावुभौ परमिमं तथा। सत्यञ्च धर्म्मवचनं यथा नास्त्यधनस्तथा।
सर्व्वोपायैराददीत धनं यज्ञप्रयोजनं। न तुल्यदोषः स्यादेवं कार्य्याकार्य्येषु भारत।
नैतौ सम्भवतो राजन् कथञ्चिदपि पार्थिव। न ह्यरण्येषु पश्यामि धनवृद्धानहं क्वचित्।
यदिदं दृश्यते वित्तं पृथिव्यामिह किञ्चन। ममेदं स्यान्ममेदं स्यादित्येवं काङ्क्षते जनः।
न च राज्यसमो धर्म्मः कश्चिदस्ति परन्तप। धर्म्मः संशब्दितो राज्ञामापदर्थमतोऽन्यथा। ४७७५
दानेन कर्म्मणा चान्ये तपसाऽन्ये तपस्विनः। बुद्ध्या दाक्ष्येण चैवान्ये विन्दन्ति धनसञ्चयान्।
अधनं दुर्ब्बलं प्राहुर्धनेन बलवान् भवेत्। सर्व्वं धनवता प्राप्यं सर्व्वं तरति कोषवान्।
कोषेण धर्म्मः कामश्च परलोकस्तथा ह्ययं। तञ्च धर्म्मेण लिप्सेत नाधर्म्मेण कदाचन।

इति श्रीमहाभारते शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि त्रिंशदधिकशततमोऽध्यायः॥ १३०॥ समाप्तञ्चेदं राजधर्म्मानुशासनपर्व्व॥

## ॥ अथ आपद्धर्म्मपर्व्व ॥

॥ युधिष्ठिर उवाच॥ क्षीणस्य दीर्घसूत्रस्य सानुक्रोशस्य बन्धुषु। परिशङ्कितवृत्तस्य श्रुतमन्त्रस्य भारत।
विभक्तपुरराष्ट्रस्य निर्द्रव्यनिचयस्य च। असम्भावितमित्रस्य भिन्नामात्यस्य सर्व्वशः। ४७८०
परचक्राभियातस्य दुर्ब्बलस्य बलीयसा। आपन्नचेतसो ब्रूहि किं कार्य्यमवशिष्यते।
॥ भीष्म उवाच॥ बाह्यश्चेद्विजिगीषुः स्याद्धर्म्मार्थकुशलः शुचिः। जवेन सन्धिं कुर्व्वीत पूर्व्वपूर्व्वान् विमोक्षयन्।
योऽधर्म्मविजिगीषुः स्याद्बलवान् पापनिश्चयः। आत्मनः सन्निरोधेन सन्धिं तेनापि रोचयेत्।
अपास्य राजधानीं वा तरेद्द्रव्येण चापदं। तद्भावयुक्तो द्रव्याणि जीवन् पुनरुपार्ज्जयेत्।
यास्तु कोषबलत्यागात् शक्यास्तरितुमापदः। कस्तत्राधिकमात्मानं सन्त्यजेदर्थधर्म्मवित्। ४७८५
अवरोधान् जुगुप्सेत का सपत्नधने दया। न त्वेवात्मा प्रदातव्यः शक्ये सति कथञ्चन।
॥ युधिष्ठिर उवाच॥ आभ्यन्तरे प्रकुपिते बाह्ये चोपनिपीडिते। क्षीणे कोषे श्रुते मन्त्रे किं कार्य्यमवशिष्यते।
॥ भीष्म उवाच॥ क्षिप्रं वा सन्धिकामः स्यात् क्षिप्रं वा तीक्ष्णविक्रमः। तदापनयनं क्षिप्रमेतावत् साम्परायिकं।
अनुरक्तेन चेष्टेन हृष्टेन जगतीपतिः। अल्पेनापि हि सैन्येन महीं जयति भूमिपः।
हतो वा दिवमारोहेद्धत्वा वा क्षितिमावसेत्। युद्धे हि सन्त्यजन् प्राणान् शक्रस्यैति सलोकतां। ४७९०
सर्व्वलोकागमं कृत्वा मृदुत्वं गन्तुमेव च। विश्वासाद्विनयं कुर्य्याद्व्यवस्येच्चाप्युपायतः।
अपचिक्रमिषुः क्षिप्रं सान्त्वा वा परिसान्त्वयन्। विलङ्घयित्वा मन्त्रेण ततः स्वयमुपक्रमेत्।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि एकत्रिंशदधिकशततमोऽध्यायः॥ १३१॥
॥ युधिष्ठिर उवाच॥ हीने परमके धर्म्मे सर्व्वलोकाभिसंहिते। सर्व्वस्मिन् दस्युसाद्भूते पृथिव्यामुपजीवने।
केनचिद्ब्राह्मणो जीवेज्जघन्ये काल आगते। असंत्यजन् पुत्त्रपौत्त्राननुक्रोशात् पितामह।
॥ भीष्म उवाच॥ विज्ञानबलमास्थाय जीवितव्यं तथागते। सर्व्वं साध्वर्थमेवेदमसाध्वर्थं न किञ्चन। ४७९५

असाधुभ्योऽर्थमादाय साधुभ्यो यः प्रयच्छति। आत्मानं संक्रमं कृत्वा कृत्स्नधर्म्मविदेव सः।
आकाङ्क्षन्नात्मनो राजन् राज्यस्थितिमकोपयन्। अदत्तमेवाददीत दातुर्वित्तं ममेति च।
विज्ञानबलपूतो यो वर्त्तते निन्दितेष्वपि। वृत्तविज्ञानवान् धीरः कस्तं वा वक्तुमर्हति।
येषां बलकृता वृत्तिर्नैषामन्या न रोचते। तेजसाऽभिप्रवर्त्तन्ते बलवन्तो युधिष्ठिर।
यदेव प्राकृतं शास्त्रमविशेषेण वर्त्तते। तदेवमभ्यसेदेवं मेधावी चाप्यथोत्तरं। ४८००
ऋत्विक् पुरोहिताचार्य्यान् सत्कृतानभिसत्कृतान्। न ब्राह्मणान् घातयीत दोषान् प्राप्नोति घातयन्।
एतत् प्रमाणं लोकस्य चक्षुरेतत् सनातनं। तत्प्रमाणेऽवगाहेत तेन तत् साध्वसाधु वा।
बहवो ग्रामवास्तव्या रोषाद्ब्रूयुः परस्परं। न तेषां वचनाद्राजा सत्कुर्य्याद्घातयीत वा।
न वाच्यः परिवादोऽयं न श्रोतव्यः कथञ्चन। कर्णावथ पिधातव्यौ प्रस्थेयं चान्यतो भवेत्।
असतां शीलमेतद्वै परिवादोऽथ पैशुनं। गुणानामेव वक्तारः सन्तः सत्सु नराधिप। ४८०५
यथा सुमधुरौ दम्यौ सुदान्तौ साधुवाहिनौ। धुरमुद्यम्य वहतस्तथा वर्त्तेत वै नृपः।
यथा यथाऽस्य बहवः सहायाः स्युस्तथाऽपरे। आचारमेव मन्यन्ते गरीयो धर्म्मलक्षणं।
अपरे नैवमिच्छन्ति ये शङ्खलिखितप्रियाः। मात्सर्य्यादथ वा लोभान्न ब्रूयुर्वाक्यमीदृशं।
आर्षमप्यत्र पश्यन्ति विकर्म्मस्थस्य पातनं। न तादृक् सदृशं किञ्चित् प्रमाणं दृश्यते क्वचित्।
देवताश्च विकर्म्मस्थं पातयन्ति नराधमं। व्याजेन विन्दन् वित्तं हि धर्म्मात् स परिहीयते। ४८१०
सर्व्वतः सत्कृतः सद्भिर्भूतिः प्रवरकारणैः। हृदयेनाभ्यनुज्ञातो यो धर्म्मस्तं व्यवस्यति।
यश्चतुर्गुणसम्पन्नं धर्म्मं ब्रूयात् स धर्म्मवित्। अहेरिव हि धर्म्मस्य पदं दुःखं गवेषितुं।
यथा मृगस्य विद्धस्य पदमेकं पदं नयेत्। कक्षे रुधिरलेपेन तथा धर्म्मपदं नयेत्।
यथा सद्भिर्विनीतेन यथा गन्तव्यमित्युत। राजर्षीणां वृत्तमेतदेवं गच्छ युधिष्ठिर।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि राजर्षिवृत्तोनाम द्वात्रिंशदधिकशततमोऽध्यायः॥ १३२ ॥
॥ भीष्म उवाच ॥ स्वराष्ट्रात् परराष्ट्राच्च कोषं सञ्जनयेन्नृपः। कोषाद्धि धर्म्मः कौन्तेय राज्यमूलश्च वर्द्धते। ४८१५
तस्मात् सञ्जनयेत् कोषं सत्कृत्य परिपालयेत्। परिपाल्यानुतनुयादेष धर्म्मः सनातनः।
न कोषः शुद्धशौचेन न नृशंसेन जातुचित्। मध्यमं पदमास्थाय कोषसंग्रहणं चरेत्।
अबलस्य कुतः कोषो ह्यकोषस्य कुतो बलं। अबलस्य कुतो राज्यमराज्ञः श्रीर्भवेत् कुतः।
उच्चैर्वृत्तेः श्रियो हानिर्यथैव मरणं तथा। तस्मात् कोषं बलं मित्रमथ राजा विवर्द्धयेत्।
हीनकोषं हि राजानमवजानन्ति मानवाः। न चास्याल्पेन तुष्यन्ति कार्य्यमप्युत्सहन्ति च। ४८२०
श्रियो हि कारणाद्राजा सत्क्रियां लभते परां। साऽस्य गूहति पापानि वासो गुह्यमिव स्त्रियाः।
ऋद्धिमस्यानुतप्यन्ते पुरा विप्रकृता नराः। शालावृका इवाजस्रं जिघांसुमेव विन्दति।
ईदृशस्य कुतो राज्ञः सुखं भवति भारत। उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषं।
अप्यपर्व्वणि भज्येत न नमेतेह कस्यचित्। अप्यरण्यं समाश्रित्य चरेन्मृगगणैः सह।

नलेवोत्थितमर्य्यादैर्दस्युभिः सहितश्चरेत् । दस्यूनां सुलभा सेना रौद्रकर्म्मसु भारत । ४८२५
एकान्ततो ह्यमर्य्यादात् सर्व्वोऽप्युद्विजते जनः । दस्यवोऽप्यभिशङ्कन्ते निरनुक्रोशकारिणः ।
स्थापयेदेव मर्य्यादां जनचित्तप्रसादिनीं । अल्पेऽप्यर्थे तु मर्य्यादा लोके भवति पूजिता ।
नायं लोकोऽस्ति न पर इति व्यवसितो जनः । नालं गन्तुं हि विश्वासं नास्तिके भयशङ्किते ।
यथा सद्भिः परादानमहिंसा दस्युभिः कृता । अनुरज्यन्ति भूतानि समर्य्यादेषु दस्युषु ।
अयुध्यमानस्य वधो दारामर्षः कृतघ्नता । ब्रह्मवित्तस्य चादानं निःशेषकरणं तथा । ४८३०
स्त्रियामोषः पतिस्थानं दस्युष्वेतद्विगर्हितं । संश्लेषञ्च परस्त्रीभिर्दस्युरेतानि वर्ज्जयेत् ।
अभिसन्दधते ये च विश्वासायास्य मानवाः । अशेषमेवोपलभ्य कुर्व्वन्तीति विनिश्चयः ।
तस्मात् सशेषं कर्त्तव्यं स्वाधीनमपि दस्युभिः । न बलस्थोऽहमस्मीति नृशंसानि समाचरेत् ।
सशेषकारिणस्तात शेषं पश्यन्ति सर्व्वशः । निःशेषकारिणो नित्यं निःशेषकरणाद्भयं ।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

॥ भीष्म उवाच ॥ अत्र धर्म्मानुवचनं कथयन्ति पुराविदः । प्रत्यक्षावेव धर्म्मार्थौ क्षत्रियस्य विजानतः । ४८३५
तत्र न व्यवधातव्यं परोक्षा धर्म्मयापना । अधर्म्मो धर्म्म इत्येतद्यथा वृकपदं तथा ।
धर्म्माधर्म्मफले जातु ददर्शेह न कश्चन । बुभूषेद्बलमेवैतत् सर्व्वं बलवतो वशे ।
श्रियो बलममात्यांश्च बलवानिह विन्दति । यो ह्यनाढ्यः स पतितस्तदुच्छिष्टं यदल्पकं ।
बहुपथ्यं बलवति न किञ्चित् क्रियते भयात् । उभौ सत्याधिकारस्थौ त्रायेते महतो भयात् ।
अतिधर्म्माद्बलं मन्ये बलाद्धर्म्मः प्रवर्त्तते । बले प्रतिष्ठितो धर्म्मो धरण्यामिव जङ्गमं । ४८४०
धूमो वायोरिव वशे बलं धर्म्मोऽनुवर्त्तते । अनीश्वरो बले धर्म्मो द्रुमं वल्लीव संश्रिता ।
वशे बलवतां धर्म्मः सुखं भोगवतामिव । नास्त्यसाध्यं बलवतां सर्व्वं बलवतां शुचि ।
दुराचारः क्षीणबलः परित्राणं न गच्छति । अथ तस्मादुद्विजते सर्व्वो लोको वृकादिव ।
अपध्वस्तो ह्यवमतो दुःखं जीवति जीवितं । जीवितं यदपक्रुष्टं यथैव मरणन्तथा ।
यदेवमाहुः पापेन चारित्रेण विवर्ज्जितः । सुभृशं तप्यते तेन वाक्शल्येन परिक्षतः । ४८४५
अत्रैतदाहुराचार्य्याः पापस्य परिमोक्षणे । त्रयीं विद्यामवेक्षेत तथोपासीत वै द्विजान् ।
प्रसादयेच्चक्षुषा च वाचा वाप्यथ कर्म्मणा । महामनाश्चापि भवेद्विवहेच्च महाकुले ।
इत्यस्मीति वदेदेवं परेषां कीर्त्तयेद्गुणान् । जपेदुदकशीलः स्यात् पेशलो नातिजल्पकः ।
ब्रह्मक्षत्रं सम्प्रविशेद्बहु कृत्वा सुदुष्करं । उच्यमानो हि लोकेन बहुतत्तदचिन्तयन् ।
अपापो ह्येवमाचारः क्षिप्रं बहुमतो भवेत् । सुखञ्च चित्रं भुञ्जीत कृतेनैकेन गोपयेत् । ४८५०
लोके च लभते पूजां परत्रेह महत् फलं ।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । यथा दस्युः समर्य्यादः प्रेत्य भावेन नश्यति ।

प्रहर्त्ता मतिमान् शूरः श्रुतवान् सुनृशंसवान् । रक्षन्नाश्रमिणां धर्म्मं ब्रह्मण्यो गुरुपूजकः ।
निषाद्यां क्षत्रियाज्जातः क्षत्रधर्म्मानुपालकः । कायव्यो नाम नैषादिर्दस्युत्वात् सिद्धिमाप्तवान् ।
अरण्ये सायं पूर्व्वाह्णे मृगयूथप्रकोपिता । विधिज्ञो मृगजातीनां नैषादानाञ्च कोविदः ।  ४८५५
सर्व्वकालप्रदेशज्ञः पारियात्रचरः सदा । धर्म्मज्ञः सर्व्वभूतानाममोघेषुर्दृढायुधः ।
अप्यनेकशता सेना एक एव जिगाय यः । स वृद्धावन्धवधिरौ महारण्येऽभ्यपूजयत् ।
मधुमांसैर्मूलफलैरन्नैरुच्चावचैरपि । सत्कृत्य भोजयामास मान्यान् परिचचार च ।
आरण्यकान् प्रव्रजितान् ब्राह्मणान् परिपूजयन् । अपि तेभ्यो मृगान् हत्वा निनाय सततं वने ।
येऽस्मान्न प्रतिगृह्णन्ति दस्युतो जनशङ्कया । तेषामासज्य गेहेषु काल्य एव स गच्छति ।  ४८६०
बहूनि च सहस्राणि ग्रामणीत्वेऽभिवव्रिरे । निर्म्मर्य्यादानि दस्यूनां निरनुक्रोशवर्त्तिनां ।
॥ दस्यव ऊचुः ॥ मुहूर्त्तदेशकालज्ञः प्राज्ञः शूरो दृढव्रतः । ग्रामणीर्भव नो मुख्यः सर्व्वेषामेव सम्मतः ।
यथा यथा वक्ष्यसि नः करिष्यामस्तथा तथा । पालयास्मान् यथान्यायं यथा माता यथा पिता ।
॥ कायव्य उवाच ॥ मा वधीस्त्वं स्त्रियं भीरुं मा शिशुं मा तपस्विनं । नायुध्यमानो हन्तव्यो न च ग्राह्या बलात् स्त्रियः ।
सर्व्वथा स्त्री न हन्तव्या सर्व्वसत्त्वेषु केनचित् । नित्यन्तु ब्राह्मणे स्वस्ति योद्धव्यञ्च तदर्थतः ।  ४८६५
सत्यञ्च नाभिहन्तव्यं सारविघ्नञ्च मा कृथाः । पूज्यन्ते यत्र देवाश्च पितरोऽतिथयस्तथा ।
सर्व्वभूतेष्वपि च वै ब्राह्मणो मोक्षमर्हति । कार्य्या चापचितिस्तेषां सर्व्वस्वेनापि या भवेत् ।
यस्य ह्येते सम्प्रहृष्टा मन्त्रयन्ति पराभवं । न तस्य त्रिषु लोकेषु त्राता भवति कश्चन ।
यो ब्राह्मणान् परिवदेद्विनाशञ्चापि रोचयेत् । सूर्य्योदय इव ध्वान्ते ध्रुवं तस्य पराभवः ।
इहैव फलमासीनः प्रत्याकाङ्क्षेत सर्व्वशः । ये ये नो न प्रदास्यन्ति तांस्तांस्तेनाभियास्यति ।  ४८७०
शिष्ट्यर्थं विहितो दण्डो न वृद्ध्यर्थं विनिश्चयः । ये च शिष्टान् प्रबाधन्ते दण्डस्तेषां बधः स्मृतः ।
ये च राष्ट्रोपरोधेन वृद्धिं कुर्व्वन्ति केचन । तदैव तेऽनुमीयन्ते कुणपे क्रमयो यथा ।
ये पुनर्द्धर्म्मशास्त्रेण वर्त्तेरन्निह दस्यवः । अपि ते दस्यवो भूत्वा क्षिप्रं सिद्धिमवाप्नुयुः ।
॥ भीष्म उवाच ॥ ते सर्व्वमेवानुचक्रुः कायव्यस्यानुशासनं । वृद्धिञ्च लेभिरे सर्व्वे पापेभ्यश्चाप्युपारमन् ।
कायव्यः कर्म्मणा तेन महतीं सिद्धिमाप्तवान् । साधूनामाचरन् क्षेमं दस्यून् पापान्निवर्त्तयन् ।  ४८७५
इदं कायव्यचरितं यो नित्यमनुचिन्तयेत् । नारण्येभ्यो हि भूतेभ्यो भयं प्राप्नोति किञ्चन ।
न भयं तस्य भूतेभ्यः सर्व्वेभ्यस्चैव भारत । नासतो विद्यते राजन् स ह्यरण्येषु गोपतिः ।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥
॥ भीष्म उवाच ॥ अत्र गाथा ब्रह्मगीताः कीर्त्तयन्ति पुराविदः । येन मार्गेण राजा वै कोषं सञ्जनयत्युत ।
न धनं यज्ञशीलानां हार्य्यं देवस्वमेव च । दस्यूनां निष्क्रियाणाञ्च क्षत्रियो हर्त्तुमर्हति ।
इमाः प्रजाः क्षत्रियाणां राज्यभोगाश्च भारत । धनं हि क्षत्रियस्यैव द्वितीयस्य न विद्यते ।  ४८८०

तदस्य स्याद्दलार्थं वा धनं यज्ञार्थमेव च । अभोग्यास्त्वोषधीश्छित्त्वा भोग्या एव पचन्त्युत ।
यो नैव देवान्न पितॄन्न मर्त्त्यान् हविषाऽर्च्चति । अनर्थकं धनं तस्य प्राहुर्द्धर्म्मविदो जनाः ।
हरेत द्रविणं राजन् धार्म्मिकः पृथिवीपतिः । ततः प्रीणयते लोकं न कोशं तद्विधं नृपः ।
असाधुभ्योऽर्थमादाय साधुभ्यो यः प्रयच्छति । आत्मानं संक्रमं कृत्वा कृत्स्नधर्म्मविदेव सः ।
तथा तथा जयेल्लोकान् शक्त्या चैव यथा यथा । उद्भिज्जा जन्तवो यद्वत् शुक्लजीवा यथा यथा । ४८८५
अनिमित्तात् सम्भवति तथाऽयज्ञः प्रजायते । यथैव दंशमशकं यथा चाण्डपिपीलिकं ।
सैव वृत्तिरयज्ञेषु यथा धर्म्मो विधीयते । यथा ह्यकस्माद्भवति भूमौ पांशुर्व्विलोलितः ।
तथैवेह भवेद्धर्म्मः सूक्ष्मः सूक्ष्मतरस्तथा ।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि षट्त्रिंशदधिकशततोऽध्यायः ॥ १३६ ॥
॥ भीष्म उवाच ॥ अनागतविधाता च प्रत्युत्पन्नमतिश्च यः । द्वावेव सुखमेधेते दीर्घसूत्रो विनश्यति ।
अत्रैव चेदमव्यग्रं शृणुष्वाख्यानमुत्तमं । दीर्घसूत्रमुपाश्रित्य कार्य्याकार्य्यविनिश्चये । ४८९०
नातिगाधे जलाधारे सुहृदः शकुलास्त्रयः । प्रभूतमत्स्ये कौन्तेय बभूवुः सहचारिणः ।
तत्रैको दीर्घकालज्ञ उत्पन्नप्रतिभोऽपरः । दीर्घसूत्रश्च तत्रैकस्त्रयाणां सहचारिणां ।
कदाचित् तं जलस्थायं मत्स्यबन्धाः समन्ततः । निस्रावयामासुरथो निम्नेषु विविधैर्म्मुखैः ।
प्रक्षीयमाणं तन्दृष्ट्वा जलस्थायं भयागमे । अब्रवीद्दीर्घदर्शी तु तावुभौ सुहृदौ तदा ।
इयमापत् समुत्पन्ना सर्व्वेषां सलिलौकसां । शीघ्रमन्यत्र गच्छामः पन्था यावन्न दुष्यति । ४८९५
अनागतमनर्थं हि सुनयैर्य्यः प्रबाधयेत् । स न संशयमाप्नोति रोचतां भो व्रजामहे ।
दीर्घसूत्रस्तु यस्तत्र सोऽब्रवीत् सम्यगुच्यते । न तु कार्य्या त्वरा तावदिति मे निश्चिता मतिः ।
अथ सम्प्रतिपत्तिज्ञः प्राब्रवीद्दीर्घदर्शिनं । प्राप्ते काले न मे किञ्चिन्न्यायतः परिहास्यते ।
एवं श्रुत्वा निराक्रामद्दीर्घदर्शी महामतिः । जगाम स्रोतसा तेन गम्भीरं सलिलाशयं ।
ततः प्रस्रुततोयन्तं प्रसमीक्ष्य जलाशयं । बबन्धुर्व्विविधैर्य्योगैर्म्मत्स्यान्मत्स्योपजीविनः । ४९००
विलोड्यमाने तस्मिंस्तु स्रुततोये जलाशये । आगच्छद्बन्धनं तत्र दीर्घसूत्रः सहापरैः ।
उद्दाने क्रियमाणे तु मत्स्यानां तत्र रज्जुभिः । प्रविश्यान्तरमेतेषां स्थितः सम्प्रतिपत्तिमान् ।
गृह्णन्नेव तदुद्दानं गृहीत्वा तं तथैव सः । सर्व्वानेव च तांस्तत्र ते विदुर्ग्रथितानिति ।
ततः प्रक्षाल्यमानेषु मत्स्येषु विपुले जले । मुक्त्वा रज्जुं प्रमुक्तोऽसौ शीघ्रं सम्प्रतिपत्तिमान् ।
दीर्घसूत्रस्तु मन्दात्मा हीनबुद्धिरचेतनः । मरणं प्राप्तवान्मूढो यथैवोपहतेन्द्रियः । ४९०५
एवं प्राप्ततमं कालं यो मोहान्नावबुध्यते । स विनश्यति वै क्षिप्रं दीर्घसूत्रो यथा झषः ।
आदौ न कुरुते श्रेयः कुशलोऽस्मीति यः पुमान् । स संशयमवाप्नोति यथा सम्प्रतिपत्तिमान् ।
अनागतविधाता च प्रत्युत्पन्नमतिश्च यः । द्वावेव सुखमेधेते दीर्घसूत्रो विनश्यति ।
काष्ठा कला मुहूर्त्ताश्च दिवा रात्रिस्तथा लवाः । मासाः पक्षाः षडृतवः कल्पः संवत्सरास्तथा ।

पृथिवी देश इत्युक्तः कालः स च न दृश्यते। अभिप्रेतार्थसिद्ध्यर्थं ध्यायते यच्च तत्तथा। ४९१०

एतौ धर्म्मार्थशास्त्रेषु मोक्षशास्त्रेषु चर्षिभिः। प्रधानाविति निर्द्दिष्टौ कामे चाभिमतौ नृणां।

परीक्ष्यकारी युक्तश्च स सम्यक् समुपादयेत्। देशकालावभिप्रेतौ ताभ्यां फलमवाप्नुयात्।

इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि शाकुलोपाख्याने सप्तत्रिंशदधिकशततमोऽध्यायः॥ १३७॥

॥ युधिष्ठिर उवाच॥ सर्व्वत्र बुद्धिः कथिता श्रेष्ठा ते भरतर्षभ। अनागता तथोत्पन्ना दीर्घसूत्रा विनाशिनी।

तदिच्छामि तदा श्रोतुं बुद्धिन्ते भरतर्षभ। यथा राजा न मुह्येत शत्रुभिः परिवारितः।

धर्म्मार्थकुशलो राजा धर्म्मशास्त्रविशारदः। पृच्छामि त्वां कुरुश्रेष्ठ तन्मे व्याख्यातुमर्हसि। ४९१५

शत्रुभिर्बहुभिर्ग्रस्तो यथा वर्त्तेत पार्थिवः। एतदिच्छाम्यहं श्रोतुं सर्व्वमेव यथाविधि।

विषमस्थं हि राजानं शत्रवः परिपन्थिनः। बहवोऽप्येकमुद्धर्त्तुं यतन्ते पूर्व्वतापिताः।

सर्व्वत्र प्रार्थ्यमानेन दुर्व्बलेन महाबलैः। एकेनैवासहायेन शक्यं स्थातुं भवेत् कथं।

कथं मित्रमरिश्चापि विन्दते भरतर्षभ। चेष्टितव्यं कथञ्चात्र शत्रोर्मित्रस्य चान्तरे।

प्रज्ञातलक्षणे मित्रे तथैवामित्रतां गते। कथन्नु पुरुषः कुर्य्यात् कृत्वा किं वा सुखी भवेत्। ४९२०

विग्रहं केन वा कुर्य्यात् सन्धिं वा केन योजयेत्। कथं वा शत्रुमध्यस्थो वर्त्तेत बलवानपि।

एतद्वै सर्व्वकृत्यानां परं कृत्यं परन्तप। नैतस्य कश्चिद्वक्ताऽस्ति श्रोता वाऽपि सुदुर्लभः।

ऋते शान्तनवाद्भीष्मात् सत्यसन्धाज्जितेन्द्रियात्। तदन्विष्य महाभाग सर्व्वमेतद्ब्रवीहि मे।

॥ भीष्म उवाच॥ त्वद्युक्तोऽयमनुप्रश्नो युधिष्ठिर सुखोदयः। शृणु मे पुत्र कार्त्स्न्येन गुह्यमापत्सु भारत।

अमित्रो मित्रतां याति मित्रञ्चापि प्रदुष्यति। सामर्थ्ययोगात्कार्य्याणामनित्या वै सदा गतिः। ४९२५

तस्माद्विश्वसितव्यञ्च विग्रहञ्च समाचरेत्। देशं कालञ्च विज्ञाय कार्य्याकार्य्यविनिश्चये।

सन्धातव्यं बुधैर्नित्यं व्यवस्य च हितार्थिभिः। अमित्रैरपि सन्धेयं प्राणा रक्ष्या हि भारत।

यो ह्यमित्रैर्नरो नित्यं न सन्दध्यादपण्डितः। न सोऽर्थं प्राप्नुयात् किञ्चित् फलान्यपि च भारत।

यस्त्वमित्रेण सन्दध्यान्मित्रेण च विरुध्यते। अर्थयुक्तिं समालोक्य स महद्विन्दते फलं।

अत्राप्युदाहरन्तीममितिहासं पुरातनं। मार्ज्जारस्य च संवादं न्यग्रोधे मूषिकस्य च। ४९३०

वने महति कस्मिंश्चिन्न्यग्रोधः सुमहानभूत्। लताजालपरिच्छन्नो नानाद्विजगणान्वितः।

स्कन्धवान्मेघसङ्काशः शीतच्छायो मनोरमः। अरण्यमभितो जातस्तद्व्यालमृगाकुलः।

तस्य मूलं समाश्रित्य कृत्वा शतमुखं विलं। वसति स्म महाप्राज्ञः पलितो नाम मूषिकः।

शाखां तस्य समाश्रित्य वसति स्म सुखं पुरा। लोमशो नाम मार्ज्जारः पक्षिसङ्घातखादकः।

तत्र चागत्य चण्डालो ह्यरण्ये कृतकेतनः। प्रयोजयति चोन्माथं नित्यमस्तङ्गते रवौ। ४९३५

तत्र स्नायुमयान् पाशान् यथावत् संविधाय सः। गृहं गत्वा सुखं शेते प्रभातामेति शर्व्वरीं।

तत्र स्म नित्यं बध्यन्ते नक्तं बहुविधा मृगाः। कदाचिदत्र मार्ज्जारस्त्वप्रमत्तो व्यबध्यत।

तस्मिन् बद्धे महाप्राज्ञ शत्रौ नित्याततायिनि। तं कालं पलितो ज्ञात्वा प्रचचार सुनिर्भयः।

तेनानुचरिता तस्मिन् वने विश्वस्तचारिणा । भक्ष्यं मृगयमाणेन चिराद्दृष्टं तदामिषं ।
स तमुच्छ्रायमारुह्य तदामिषमभक्षयत् । तस्योपरि सपत्नस्य बद्धस्य मनसा हसन् । ४९४०
आमिषे तु प्रसक्तः स कदाचिदवलोकयन् । अपश्यदपरं घोरमात्मनः शत्रुमागतं ।
शरप्रसूनसङ्काशं महीविवरशायिनं । नकुलं हरितं नाम चपलं ताम्रलोचनं ।
तेन मूषिकगन्धेन त्वरमाणमुपागतं । भक्षार्थं संलिहानन्तं भूमावूर्द्ध्वमुखं स्थितं ।
शाखागतमरिञ्चान्यमपश्यत् कोटरालयं । उलूकं चन्द्रकं नाम तीक्ष्णतुण्डं क्षपाचरं ।
गतस्य विषयं तत्र नकुलोलूकयोस्तथा । अथास्यासीदियं चिन्ता तत्प्राप्य सुमहद्भयं । ४९४५
आपद्यस्यां सुकष्टायां मरणे प्रत्युपस्थिते । समन्ताद्भय उत्पन्ने कथं कार्य्यं हितैषिणा ।
स तथा सर्व्वतो रुद्धः सर्व्वत्र भयदर्शनः । अभवद्भयसन्तप्तश्चक्रे च परमां गतिं ।
आपद्विनाशभूयिष्ठं गतैः कार्य्यं हि जीवितं । समन्तात् संशयात् सैषा तस्मादापदुपस्थिता ।
गतं मां सहसा भूमिं नकुलो भक्षयिष्यति । उलूकश्चेह तिष्ठन्तं मार्ज्जारः पाशसंक्षयात् ।
न त्वेवास्मद्विधः प्राज्ञः सम्मोहं गन्तुमर्हति । करिष्ये जीविते यत्नं यावद्युक्त्या मतिग्रहात् । ४९५०
न हि बुद्ध्याऽन्वितः प्राज्ञो नीतिशास्त्रविशारदः । निमज्जत्यापदं प्राप्य महतीं दारुणामपि ।
न त्वन्यामिह मार्ज्जारात् गतिं पश्यामि साम्प्रतं । विषमस्थो ह्ययं शत्रुः कृत्यञ्चास्य महन्मया ।
जीवितार्थी कथन्त्वद्य शत्रुभिः प्रार्थितस्त्रिभिः । तस्मादेनमहं शत्रुं मार्ज्जारं संश्रयामि वै ।
नीतिशास्त्रं समाश्रित्य हितमस्योपवर्णये । येनेमं शत्रुसंघातं मतिपूर्व्वेण वञ्चये ।
अयमत्यन्तशत्रुर्मे वैषम्यं परमं गतः । मूढो ग्राहयितुं स्वार्थं सङ्गत्या यदि शक्यते । ४९५५
कदाचिद्व्यसनं प्राप्य सन्धिं कुर्य्यान्मया सह । बलिना सन्निकृष्टस्य शत्रोरपि परिग्रहः ।
कार्य्य इत्याहुराचार्य्या विषमे जीवितार्थिना । श्रेष्ठो हि पण्डितः शत्रुर्न च मित्रमपण्डितं ।
मम त्वमित्रे मार्ज्जारे जीवितं सम्प्रतिष्ठितं । हन्तास्मै संप्रवक्ष्यामि हेतुमात्माभिरक्षणं ।
अपीदानीमयं शत्रुः सङ्गत्या पण्डितो भवेत् । एवं विचिन्तयामास मूषिकः शत्रुचेष्टितं ।
ततोऽर्थगतितत्त्वज्ञः सन्धिविग्रहकालवित् । सान्त्वपूर्व्वमिदं वाक्यं मार्ज्जारं मूषिकोऽब्रवीत् । ४९६०
सौहृदेनाभिभाषे त्वां कच्चिन्मार्ज्जार जीवसि । जीवितं हि तवेच्छामि श्रेयः साधारणं हि नौ ।
न ते सौम्य भयं कार्य्यं जीविष्यसि यथासुखं । अहं त्वामुद्धरिष्यामि यदि मां न जिघांससि ।
अस्ति कश्चिदुपायोऽत्र दुष्करः प्रतिभाति मे । येन शक्यस्त्वया मोक्षः प्राप्तुं श्रेयस्तथा मया ।
मयाऽप्युपायो दृष्टोऽयं विचार्य्य मतिमात्मनः । आत्मार्थञ्च त्वदर्थञ्च श्रेयः साधारणं हि नौ ।
इदं हि नकुलोलूकं पापबुद्ध्याऽभिसंस्थितं । न धर्षयति मार्ज्जार तेन मे स्वस्ति साम्प्रतं । ४९६५
कूजंश्चपलनेत्रोऽयं कौशिको मां निरीक्षते । नगशाखाग्रगः पापस्तस्याहं भृशमुद्विजे ।
सतां साप्तपदं मैत्रं स सखा मेऽसि पण्डितः । सांवासकं करिष्यामि नास्ति ते भयमद्य वै ।
न हि शक्तोऽसि मार्ज्जार पाशं छेत्तुं मया विना । अहञ्छेत्स्यामि पाशांस्ते यदि मां त्वं न हिंससि ।

समाश्रितो द्रुमस्यायं मूलं त्वहमुपाश्रितः । चिरोषितावुभावावां वृक्षेऽस्मिन् विदितञ्च ते ।
यस्मिन्नाश्वसिते कश्चिद्यश्च नाश्वसिति क्वचित् । न तौ धीराः प्रशंसन्ति नित्यमुद्विग्नमानसौ । ४९७०
तस्माद्विवर्द्धतां प्रीतिर्नित्यं सङ्गतमस्तु नौ । कालातीतमिहार्थन्तु न प्रशंसन्ति पण्डिताः ।
अर्थयुक्तिमिमां तत्र यथाभूतां निशामय । तव जीवितमिच्छामि त्वं ममेच्छसि जीवितं ।
कश्चित्तरति काष्ठेन सुगम्भीरां महानदीं । स तारयति तत् काष्ठं स च काष्ठेन तार्य्यते ।
ईदृशो नौ समायोगो भविष्यति सुविस्तरः । अहं त्वां तारयिष्यामि माञ्च त्वं तारयिष्यसि ।
एवमुक्त्वा तु पलितस्तमर्थमुभयोर्हितं । हेतुमद्ग्रहणीयञ्च कालापेक्षी न्यवेक्ष च । ४९७५
अथ सुव्याहृतं श्रुत्वा तस्य शत्रोर्विचक्षणः । हेतुमद्ग्रहणीयार्थं मार्ज्जारो वाक्यमब्रवीत् ।
बुद्धिमान् वाक्यसम्पन्नस्तद्वाक्यमनुवर्णयन् । स्वामवस्थां समीक्ष्याथ साम्नैव प्रत्यपूजयत् ।
ततस्तीक्ष्णाग्रदशनो मणिवैदूर्य्यलोचनः । मूषिकं मन्दमुदीक्ष्य मार्ज्जारो लोमशोऽब्रवीत् ।
नन्दामि सौम्य भद्रन्ते यो मां जीवितुमिच्छसि । श्रेयश्च यदि जानीषे क्रियतां मा विचारय ।
अहं हि भृशमापन्नस्त्वमापन्नतरो मम । द्वयोरापन्नयोः सन्धिः क्रियतां मा चिराय च । ४९८०
विधास्ये प्राप्तकालं यत् कार्य्यं सिद्धिकरं विभो । मयि कृच्छ्राद्विनिर्मुक्ते न विनंक्ष्यति ते कृतं ।
न्यस्तमानोऽस्मि भक्तोऽस्मि शिष्यस्त्वद्धितकृत्तथा । निदेशवशवर्त्ती च भवन्तं शरणं गतः ।
इत्येवमुक्तः पलितो मार्ज्जारं वशमागतं । वाक्यं हितमुवाचेदमभिनीतार्थमर्थवत् ।
उदारं यद्भवानाह नैतच्चित्रं भवद्विधे । विहितो यस्तु मार्गो मे हितार्थं शृणु तं मम ।
अहं त्वाऽनुप्रवेक्ष्यामि नकुलान्मे महद्भयं । त्रायस्व भो मावधीस्त्वं शक्तोऽस्मि तव रक्षणे । ४९८५
उलूकाच्चैव मां रक्ष क्षुद्रः प्रार्थयते हि मां । अहं छेत्स्यामि ते पाशान् सखे सत्येन ते शपे ।
तद्वचः सङ्गतं श्रुत्वा लोमशो युक्तमर्थवत् । हर्षादुदीक्ष्य पलितं स्वागतेनाभ्यपूजयत् ।
तं संपूज्याथ पलितं मार्ज्जारः सौहृदे स्थितः । स विचिन्त्याब्रवीद्धीरः प्रीतस्त्वरित एव च ।
शीघ्रमागच्छ भद्रन्ते त्वं मे प्राणसमः सखा । तव प्राज्ञ प्रसादाद्धि प्रायः प्राप्स्यामि जीवितं ।
यद्यदेवं गतेनाद्य शक्यं कर्त्तुं मया तव । तदाज्ञापय कर्त्ताऽस्मि सन्धिरेवास्तु नौ सखे । ४९९०
अस्मात्तु सङ्कटान्मुक्तः समित्रगणबान्धवः । सर्व्वकार्य्याणि कर्त्ताऽहं प्रियाणि च हितानि च ।
मुक्तश्च व्यसनादस्मात् सौम्याहमपि नाम ते । प्रीतिमुत्पादयेयञ्च प्रतिकर्त्तुश्च सत्क्रियां ।
प्रत्युपकुर्व्वन् बह्वपि न भाति पूर्व्वोपकारिणा तुल्यः । एकः करोति हि कृते निष्कारणमेव कुरुतेऽन्यः ।
॥ भीष्म उवाच ॥ ग्राहयित्वा तु तं स्वार्थं मार्ज्जारं मूषिकस्तथा । प्रविवेश तु विश्रब्धः क्रोडमस्य कृतागसः ।
एवमाश्वासितो विद्वान् मार्ज्जारेण स मूषिकः । मार्ज्जारोरसि विश्रब्धः सुष्वाप पितृमातृवत् । ४९९५
लीनन्तु तस्य गात्रेषु मार्ज्जारस्य च मूषिकं । दृष्ट्वा तौ नकुलोलूकौ निराशौ प्रत्यपद्यतां ।
तथैव तौ सुसन्त्रस्तौ दृढमागततन्द्रितौ । दृष्ट्वा तयोः परां प्रीतिं विस्मयं परमङ्गतौ ।
बलिनौ मतिमन्तौ च सुवृत्तौ चाप्युपासितौ । अशक्तौ तु नयात्तस्मात् संप्रधर्षयितुं बलात् ।

कार्य्यार्थकृतसन्धी तौ दृष्ट्वा मार्ज्जारमूषिकौ । उलूकनकुलौ तूर्णं जग्मतुस्तौ स्वमालयं ।
लीनः स तस्य गात्रेषु पलितो देशकालवित् । चिच्छेद पाशान्नृपते कालापेक्षी शनैः शनैः । ५०००
अथ बन्धपरिक्लिष्टो मार्ज्जारो वीक्ष्य मूषिकं । छिन्दन्तं वै तदा पाशानत्वरन्तं त्वरान्वितः ।
तमत्वरन्तं पलितं पाशानां छेदने तथा । संचोदयितुमारेभे मार्ज्जारो मूषिकन्तदा ।
किं सौम्य नातित्वरसे किं कृतार्थोऽवमन्यसे । छिन्धि पाशानमित्रघ्न पुरा श्वपच एति च ।
इत्युक्तस्त्वरता तेन मतिमान्पलितोऽब्रवीत् । मार्ज्जारमकृतप्रज्ञं पथ्यमात्महितं वचः ।
तूष्णीं भव न ते सौम्य त्वरा कार्य्या न सम्भ्रमः । वयमेवात्र कालज्ञा न कालः परिहास्यते । ५००५
अकाले कृत्यमारब्धं कर्त्तुं नार्थाय कल्पते । तदेव काल आरब्धं महतेऽर्थाय कल्पते ।
अकाले विप्रमुक्तान्मे त्वत्त एव भयं भवेत् । तस्मात् कालं प्रतीक्षस्व किमिति त्वरसे सखे ।
यदा पश्यामि चाण्डालमायान्तं शस्त्रपाणिनं । ततश्छेत्स्यामि ते पाशान् प्राप्ते साधारणे भये ।
तस्मिन्काले प्रमुक्तस्त्वं तरुमेवाधिरोक्ष्यसे । न हि ते जीवितादन्यत् किञ्चित् कृत्यं भविष्यति ।
ततो भवत्यपाक्रान्ते त्रस्ते भीते च लोमश । अहं विलं प्रवेक्ष्यामि भवान् शाखां भजिष्यति । ५०१०
एवमुक्तस्तु मार्ज्जारो मूषिकेणात्मनो हितं । वचनं वाक्यतत्त्वज्ञो जीवितार्थी महामतिः ।
अथात्मकृत्यं त्वरितः सम्यक् प्रश्रुतमाचरन् । उवाच लोमशो वाक्यं मूषिकं चिरकारिणं ।
न ह्येव मित्रकार्य्याणि प्रीत्या कुर्व्वन्ति साधवः । यथा त्वं मोचितः कृच्छ्रात्त्वरमाणेन वै मया ।
तथा हि त्वरमाणेन त्वया कार्य्यं हितं मम । यत्नं कुरु महाप्राज्ञ यथा रक्षाऽवयोर्भवेत् ।
अथ वा पूर्व्ववैरं त्वं स्मरन् कालं जिहीर्षसि । पश्य दुष्कृतकर्म्मंस्त्वं व्यक्तमायुःक्षयन्तव । ५०१५
यदि किञ्चिन्मयाऽज्ञानात् पुरस्ताद्दुष्कृतं कृतं । न तन्मनसि कर्त्तव्यं क्षामये त्वां प्रसीद मे ।
तमेवंवादिनं प्राज्ञं शास्त्रबुद्धिसमन्वितः । उवाचेदं वचः श्रेष्ठं मार्ज्जारं मूषिकस्तदा ।
श्रुतं मे तव मार्ज्जार स्वमर्थं परिगृह्णतः । ममापि त्वं विजानासि स्वमर्थं परिगृह्णतः ।
यन्मित्रं भीतवत् साध्यं यन्मित्रं भयसंहितं । सुरक्षितव्यं तत् कार्य्यं पाणिः सर्पमुखादिव ।
कृत्वा बलवता सन्धिमात्मानं यो न रक्षति । अपथ्यमिव तद्भुक्तं तस्य नार्थाय कल्पते । ५०२०
न कश्चित् कस्यचिन्मित्रं न कश्चित् कस्यचित् सुहृत् । अर्थतस्तु निबध्यन्ते मित्राणि रिपवस्तथा ।
अर्थैरर्था निबध्यन्ते गजैर्वनगजा इव । न च कश्चित् कृते कार्य्ये कर्त्तारं समवेक्षते ।
तस्मात् सर्व्वाणि कार्य्याणि सावशेषाणि कारयेत् । तस्मिन् कालेऽपि च भवान् दिवाकीर्त्तिभयार्द्दितः ।
मम न ग्रहणे शक्तः पलायनपरायणः । छिन्नन्तु तन्तुबाहुल्यं तन्तुरेकोऽवशेषितः ।
छेत्स्याम्यतस्त्वमप्याशु निर्वृतो भव लोमश । तयोः संवदतोरेवं तथैवापन्नयोर्द्वयोः । ५०२५
क्षयं जगाम सा रात्रिर्लोमशस्त्वविशङ्कयं । ततः प्रभातसमये विकृतः कृष्णपिङ्गलः ।
स्थूलस्फिग्विकृतो रूक्षः श्वयूथपरिवारितः । शङ्कुकर्णो महावक्त्रो मलिनो घोरदर्शनः ।
परिघो नाम चाण्डालः शस्त्रपाणिरदृश्यत । तं दृष्ट्वा यमदूताभं मार्ज्जारस्त्रस्तचेतनः ।

उवाच वचनं भीतः किमिदानीं करिष्यसि। अथ तावपि सम्प्रेक्षा तं दृष्ट्वा घोरसंकुलं।
क्षणेन नकुलोलूकौ नैराश्यमुपजग्मतुः। बलिनौ मतिमन्तौ च सङ्घाते चाप्युपागतौ। ५०२०
अशक्तौ सुनयात्तस्मात् सम्प्रधर्षयितुं बलात्। कार्य्यार्थे कृतसन्धानौ दृष्ट्वा मार्ज्जारमूषिकौ।
उलूकनकुलौ तत्र जग्मतुः स्वं स्वमालयं। ततश्चिच्छेद तं पाशं मार्ज्जारस्य च मूषिकः।
विप्रमुक्तोऽथ मार्ज्जारस्तमेवाभ्यपतद्द्रुमं। स तस्मात् सम्भ्रमावर्त्तान्मुक्तो घोरेण शत्रुणा।
बिलं विवेश पलितः शाखां लेभे च लोमशः। उन्माथमप्यथादाय चाण्डालो वीक्ष्य सर्व्वशः।
विहताशः क्षणेनासीत् तस्माद्देशादपाक्रमत्। जगाम स्वस्वभवनं चाण्डालो भरतर्षभ। ५०२५
ततस्तस्माद्भयान्मुक्तो दुर्लभं प्राप्य जीवितं। बिलस्थं पादपाग्रस्थः पलितं लोमशोऽब्रवीत्।
अकृत्वा संविदं काञ्चित् सहसा समवप्लुतः। कृतज्ञं कृतकर्म्माणं कच्चिन्मां नाभिशङ्कसे।
गत्वा च मम विश्वासं दत्त्वा च मम जीवितं। मित्रोपभोगसमये किं मां त्वं नोपसर्पसि।
कृत्वा हि पूर्व्वं मित्राणि यः पश्चान्नानुतिष्ठति। न स मित्राणि लभते कृच्छ्रास्वापत्सु दुर्म्मतिः।
सत्कृतोऽहं त्वया मित्र सामर्थ्यादात्मनः सखे। स मां मित्रत्वमापन्नमुपभोक्तुं त्वमर्हसि। ५०३०
यानि मे सन्ति मित्राणि ये च सम्बन्धिबान्धवाः। सर्व्वे त्वां पूजयिष्यन्ति शिष्या गुरुमिव प्रियं।
अहञ्च पूजयिष्ये त्वां समित्रगणबान्धवं। जीवितस्य प्रदातारं कृतज्ञः को न पूजयेत्।
ईश्वरो मे भवानस्तु स्वशरीरगृहस्य च। अर्थानाञ्चैव सर्व्वेषामनुशास्ता च मे भव।
अमात्यो हि भव प्राज्ञ पितेवेह प्रशाधि मां। न तेऽस्ति भयमस्मत्तो जीवितेनात्मनः शपे।
बुद्ध्या त्वमुशना: साक्षाद्बलेनाधिकृता वयं। त्वं मन्त्रबलयुक्तो हि दत्त्वा जीवितमद्य मे। ५०३५
एवमुक्तः परां शान्तिं मार्ज्जारेण स मूषिकः। उवाच परमन्त्रज्ञः श्लक्ष्णमात्महितं वचः।
यद्भवानाह तत् सर्व्वं मया ते लोमश श्रुतं। ममापि तावद्ब्रुवतः शृणु यत् प्रतिभाति मे।
वेदितव्यानि मित्राणि विज्ञेयाश्चापि शत्रवः। एतत् सुसूक्ष्मं लोकेऽस्मिन् दृश्यते प्राज्ञसम्मतं।
शत्रुरूपा हि सुहृदो मित्ररूपाश्च शत्रवः। सन्धितास्ते न बुध्यन्ते कामक्रोधवशङ्गताः।
नास्ति जातु रिपुर्नाम मित्रं नाम न विद्यते। सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा। ५०४०
यो यस्मिन् जीवति स्वार्थं पश्येत् पीडां न जीवति। स तस्य मित्रं तावत् स्यात् यावन्न स्याद्विपर्य्ययः।
नास्ति मैत्री स्थिरा नाम न च ध्रुवमसौहृदं। अर्थयुक्त्याऽनुजायन्ते मित्राणि रिपवस्तथा।
मित्रञ्च शत्रुतामेति कस्मिंश्चित् कालपर्य्यये। शत्रुश्च मित्रतामेति स्वार्थो हि बलवत्तरः।
यो विश्वसिति मित्रेषु न विश्वसिति शत्रुषु। अर्थयुक्तिमविज्ञाय यः प्रीतौ कुरुते मनः।
मित्रे वा यदि वा शत्रौ तस्यापि चलिता मतिः। न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्। ५०४५
विश्वासाद्भयमुत्पन्नमपि मूलानि कृन्तति। अर्थयुक्त्या हि जायन्ते पिता माता सुतस्तथा।
मातुला भागिनेयाश्च तथा सम्बन्धिबान्धवाः। पुत्रं हि मातापितरौ त्यजतः पतितं प्रियं।
लोको रक्षति चात्मानं पश्य स्वार्थस्य सारतां। सामान्या निष्कृतिः प्राज्ञ यो मोक्षात् प्रत्यनन्तरं।

कृतं मृगयते भक्षं सुखोपायमसंशयं । अभिसन्धिज्ञ एव त्वं न्यग्रोधादवतारितः ।
पूर्व्वं निविष्टमुन्माथं चपलत्वान्न बुद्धवान् । आत्मनश्चपलो नास्ति कुतोऽन्येषां भविष्यति । ५०६०
तस्मात् सर्व्वाणि कार्य्याणि चपलो हन्त्यसंशयं । ब्रवीषि मधुरं यच्च प्रिय मेऽद्य भवानिति ।
तन्मित्रकारणं सर्व्वं विस्तरेणापि मे शृणु । कारणात् प्रियतामेति द्वेष्यो भवति कारणात् ।
अर्थार्थी जीवलोकोऽयं न कश्चित् कस्यचित् प्रियः । सख्यं सोदर्य्ययोर्भ्रात्रोर्दम्पत्योर्व्वा परस्परं ।
कस्यचिन्नाभिजानामि प्रीतिं निष्कारणामिह । यद्यपि भ्रातरः क्रुद्धा भार्य्या वा कारणान्तरे ।
स्वभावतस्ते प्रीयन्ते नेतरः प्रीयते जनः । प्रियो भवति दानेन प्रियवादेन चापरः । ५०६५
मन्त्रहोमजपैरन्यः कार्य्यार्थं प्रीयते जनः । उत्पन्ना कारणे प्रीतिरासीन्नौ कारणान्तरे ।
प्रध्वस्ते कारणस्थाने सा प्रीतिर्विनिवर्त्तते । किन्नु तत् कारणं मन्ये येनाहं भवतः प्रियः ।
अन्यत्राभ्यवहारार्थं तत्रापि च बुधा वयं । कालो हेतुं विकुरुते स्वार्थस्तमनुवर्त्तते ।
स्वार्थं प्राज्ञोऽभिजानाति प्राज्ञं लोकोऽनुवर्त्तते । न त्वीदृशं त्वया वाच्यं विदुषि स्वार्थपण्डिते ।
अकाले हि समर्थस्य स्नेहहेतुरयं तव । तस्मादहं चले स्वार्थात् सुस्थिरः सन्धिविग्रहे । ५०७०
अभ्राणामिव रूपाणि विकुर्व्वन्ति क्षणे क्षणे । अद्यैव हि रिपुर्भूत्वा पुनरद्यैव मे सुहृत् ।
पुनश्च रिपुरद्यैव युक्तीनां पश्य चापलं । आसीन्मैत्री तु तावन्नौ यावद्धेतुरभूत् पुरा ।
सा गता सह तेनैव कालयुक्तेन हेतुना । त्वं हि मे जातितः शत्रुः सामर्थ्यान्मित्रतां गतः ।
तत्कृत्यमभिनिर्व्वृत्तं प्रकृतिः शत्रुतां गता । सोऽहमेवं प्रणीतानि ज्ञात्वा शास्त्राणि तत्त्वतः ।
प्रविशेयं कथं पाशं त्वत्कृते तद्वदस्व मे । त्वद्वीर्य्येण प्रमुक्तोऽहं मद्वीर्य्येण तथा भवान् । ५०७५
अन्योन्यानुग्रहे वृत्ते नास्ति भूयः समागमः । त्वं हि सौम्य कृतार्थोऽद्य निर्वृत्तार्थास्तथा वयं ।
न ते स्वद्य मया कृत्यं किञ्चिदन्यत्र भक्षणात् । अहमन्नं भवान् भोक्ता दुर्व्वलोऽहं भवान् बली ।
नावयोर्विद्यते सन्धिर्व्वियुक्ते विषमे बले । स मन्येऽहं तव प्रज्ञां यन्मोक्षात् प्रत्यनन्तरं ।
भक्ष्यं प्रशंससे नूनं सुखोपायेन कर्म्मणा । भक्षार्थमवबद्धस्त्वं स मुक्तः पीडितः क्षुधा ।
शास्त्रजां मतिमास्थाय नूनं भक्षयिताऽद्य मां । जानामि क्षुधितन्तु त्वामाहारसमयश्च ते । ५०८०
स त्वं मामभिसन्धाय भक्ष्यं मृगयसे पुनः । यच्चापि पुत्रदारस्थो यत् सन्धिं सृजसे मयि ।
शुश्रूषां यतसे कर्त्तुं सखे मम न तत् क्षमं । त्वया मां सहितं दृष्ट्वा प्रिया भार्य्या सुताश्च ते ।
कस्मात्ते मां न खादेयुर्हृष्टाः प्रणयिनस्त्वयि । नाहं त्वया सहेष्यामि वृत्तो हेतुः समागमे ।
शिवं ध्यायस्व मे स्वस्थः सुकृतं स्मरसे यदि । शत्रोरनार्य्यभूतस्य क्लिष्टस्य क्षुधितस्य च ।
भक्ष्यं मृगयमाणस्य कः प्राज्ञो विषयं व्रजेत् । स्वस्ति तेऽस्तु गमिष्यामि दूरादपि तवोद्विजे । ५०८५
नाहं त्वया समेष्यामि निवृत्तो भव लोमश । यदि त्वं सुकृतं वेत्सि तत्सख्यमनुसारय ।
विश्वस्तं वा प्रमत्तं वा एतदेव कृतं भवेत् । बलवत्सन्निकर्षो हि न कदाचित् प्रशस्यते ।
प्रशान्तादपि मे पापाद्भेतव्यं बलिनः सदा । यदि स्वार्थं न ते कार्य्यं ब्रूहि किं करवाणि ते ।

कामं सर्व्वं प्रदास्यामि न त्वात्मानं कदाचन । आत्मार्थे सन्ततिस्त्याज्या राज्यं रत्नं धनानि च ।
अपि सर्व्वस्वमुत्सृज्य रक्षेदात्मानमात्मना । ऐश्वर्य्यधनरत्नानां प्रत्यमित्रे निवर्त्ततां । ५०९०
दृष्टा हि पुनरावृत्तिर्जीवतामिति नः श्रुतं । न त्वात्मनः सम्प्रदानं धनरत्नवदिष्यते ।
आत्मा हि सर्व्वदा रक्ष्यो दारैरपि धनैरपि । आत्मरक्षणतन्त्राणां सुपरीक्षितकारिणां ।
आपदो नोपपद्यन्ते पुरुषाणां स्वदोषजाः । शत्रुं सम्यग्विजानन्ति दुर्ब्बला ये बलीयसं ।
न तेषां चाल्यते बुद्धिः शास्त्रार्थकृतनिश्चया । इत्यभिव्यक्तमेवं स पलितेनाभिभर्त्सितः ।
मार्ज्जारो व्रीडितो भूत्वा मूषिकं वाक्यमब्रवीत् । ५०९५
॥ लोमश उवाच ॥ सत्यं शपे त्वयाऽहं वै मित्रद्रोहो विगर्हितः । तन्मन्येऽहं तव प्रज्ञां यस्त्वं मम हिते रतः ।
उक्तवानर्थतत्त्वेन मया सम्भिन्नदर्शनं । न तु मामन्यथा साधो त्वं गृहीतुमिहार्हसि ।
प्राणप्रदानजं त्वत्तो मयि सौहृदमागतं । धर्म्मज्ञोऽस्मि गुणज्ञोऽस्मि कृतज्ञोऽस्मि विशेषतः ।
मित्रेषु वत्सलश्चास्मि त्वद्भक्तश्च विशेषतः । तस्मादेवं पुनः साधो मया चरितुमर्हसि ।
त्वया हि याच्यमानोऽहं जह्यां प्राणान् सबान्धवः । विश्वासो हि बुधैर्दृष्टो मद्विधेषु मनस्विषु । ५१००
तदेतद्धर्म्मतत्त्वज्ञ न त्वं शङ्कितुमर्हसि । इति संस्तूयमानोऽपि मार्ज्जारेण स मूषिकः ।
मनसा भावगम्भीरो मार्ज्जारं वाक्यमब्रवीत् । साधुर्भवान् श्रुतार्थोऽस्मि प्रिये च न च विश्वसे ।
संस्तवैर्वा धनौघैर्व्वा नाहं शक्यः पुनस्त्वया । न ह्यमित्रे वशं यान्ति प्राज्ञा निष्कारणं सखे ।
अस्मिन्नर्थे च गाथे द्वे निबोधोशनसा कृते । शत्रुसाधारणे कृत्ये कृत्वा सन्धिं बलीयसा ।
समाहितश्चरेद्युक्त्या कृतार्थश्च न विश्वसेत् । न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् । ५१०५
नित्यं विश्वासयेदन्यान् परेषान्तु न विश्वसेत् । तस्मात् सर्व्वास्ववस्थासु रक्षेज्जीवितमात्मनः ।
द्रव्याणि सन्ततिश्चैव सर्व्वं भवति जीवतः । सङ्क्षेपो नीतिशास्त्राणामविश्वासः परो मतः ।
नृषु तस्मादविश्वासः पुष्कलं हितमात्मनः । बध्यन्ते न ह्यविश्वस्ताः शत्रुभिर्दुर्ब्बला अपि ।
विश्वस्तास्तेषु बध्यन्ते बलवन्तोऽपि दुर्ब्बलैः । त्वद्विधेभ्यो मया ह्यात्मा रक्ष्यो मार्ज्जार सर्व्वदा ।
रक्ष त्वमपि चात्मानं चाण्डालाज्जातकिल्बिषात् । स तस्य ब्रुवतस्त्वेवं सन्त्रासाज्जातसाध्वसः । ५११०
शाखां हित्वा जवेनाशु मार्ज्जारः प्रययौ ततः । ततः शास्त्रार्थतत्त्वज्ञो बुद्धिसामर्थ्यमात्मनः ।
विश्राव्य पलितः प्राज्ञो बिलमन्यज्जगाम ह । एवं प्रज्ञावता बुद्ध्या दुर्ब्बलेन महाबलाः ।
एकेन बहवो मित्राः पलितेनाभिसन्धिताः । अरिणाऽपि समर्थेन सन्धिं कुर्व्वीत पण्डितः ।
मूषिकश्च विडालश्च मुक्तावन्योन्यसंश्रयात् । इत्येष क्षत्रधर्म्मस्य मया मार्गेषु दर्शितः ।
विस्तरेण महाराज संक्षेपमपि मे शृणु । अन्योन्यकृतवैरौ तु चक्रतुः प्रीतिमुत्तमां । ५११५
अन्योन्यमभिसन्धातुं सम्बभूव तयोर्म्मतिः । तत्र प्राज्ञोऽभिसन्धत्ते सम्यग्बुद्धिसमाश्रयात् ।
अभिसन्धीयते प्राज्ञः प्रमादादपि वा बुधैः । तस्मादभीतवद्भीतो विश्वस्तवदविश्वसन् ।
न ह्यप्रमत्तश्चलति चलितो वा विनश्यति । कालेन रिपुणा सन्धिः काले मित्रेण विग्रहः ।

कार्य्यं इत्येव सन्धिज्ञाः प्राहुर्नित्यं नराधिप । एतज्ज्ञात्वा महाराज शास्त्रार्थमभिगम्य च ।

अभियुक्तः प्रयत्नश्च प्राग्भयाद्भीतवच्चरेत् । भीतवत्सन्धिः कार्य्यः प्रतिसन्धिस्तथैव च । ५१२०

भयादुत्पद्यते बुद्धिरप्रमत्ताभियोगतः । न भयं विद्यते राजन् भीतस्यानागते भये ।

अभीतस्य च विस्रम्भात् सुमहज्जायते भयं । अभीश्चरति यो नित्यं मन्त्रो देयः कथञ्चन ।

अविज्ञानाद्धि विज्ञातो गच्छेदास्पदर्शिषु । तस्मादभीतवद्भीतो विश्वस्तं वञ्च विश्वसन् ।

कार्य्याणां गुरुतां प्राप्य नानृतं किञ्चिदाचरेत् । एवमेतन्मया प्रोक्तमितिहासं युधिष्ठिर ।

श्रुत्वा त्वं सुहृदां मध्ये यथावत् समुपाचर । उपलभ्य मतिञ्चाग्र्यामरिमित्रान्तरन्तथा । ५१२५

सन्धिविग्रहकाले च मोक्षोपायस्तथैव च । शत्रुसाधारणे कृत्ये कृत्वा सन्धिं बलीयसा ।

समागमे चरेद्युक्त्या कृतार्थो न च विश्वसेत् । अविरुद्धां त्रिवर्गेण नीतिमेतां महीपते ।

अभ्युत्तिष्ठ श्रुतादस्माद्भूयः संरञ्जयन् प्रजाः । ब्राह्मणैश्चापि ते सार्द्धं यात्रा भवतु पाण्डव ।

ब्राह्मणा वै परं श्रेयो दिवि चेह च भारत । एते धर्म्मस्य वेत्तारः कृतज्ञाः सततं प्रभो ।

पूजिताः शुभकर्त्तारः पूजयेत्तान्नराधिप । राज्यं श्रेयः परं राजन् यशः कीर्त्तिञ्च लप्स्यसे । ५१३०

कुलस्य सन्ततिञ्चैव यथान्यायं यथाक्रमं ।

द्वयोरिमं भारत सन्धिविग्रहं सुभाषितं बुद्धिविशेषकारकं । यथा त्वेवत्स्य क्षितिपेन सर्व्वदा निषेवितव्यं नृप शत्रुमण्डले ।

इति श्रीमहाभारते शान्तिपर्व्वण्यापद्धर्म्मपर्व्वणि मार्ज्जारमूषिकसंवादे अष्टत्रिंशदधिकशततोऽध्यायः ॥ १३८ ॥

॥ युधिष्ठिर उवाच ॥ उक्तो मन्त्रो महाबाहो विश्वासो नास्ति शत्रुषु । कथं हि राजा वर्त्तेत यदि सर्व्वत्र नाश्वसेत् ।

विश्वासाद्धि परं राजन् राज्ञामुत्पद्यते भयं । कथं हि नाश्वसन्राजा शत्रून् जयति पार्थिव ।

एतन्मे संशयं छिन्धि मतिर्मे संप्रमुह्यति । अविश्वासकथामेतामुपश्रुत्य पितामह । ५१३५

॥ भीष्म उवाच ॥ शृणुष्व राजन् यद्वृत्तं ब्रह्मदत्तनिवेशने । पूजन्या सह संवादं ब्रह्मदत्तस्य भूपतेः ।

काम्पिल्ये ब्रह्मदत्तस्य त्वन्तःपुरनिवासिनी । पूजनी नाम शकुनिर्दीर्घकालं सहोषिता ।

रुतज्ञा सर्व्वभूतानां यथा वै जीवजीवकः । सर्व्वज्ञा सर्व्वतत्त्वज्ञा तिर्य्यग्योनिं गताऽपि सा ।

अभिप्रयाता सा तत्र पुत्त्रमेकं सुवर्च्चसं । समकालञ्च राज्ञोऽपि देव्यां पुत्त्रो व्यजायत ।

तयोरर्थे कृतज्ञा सा खेचरी पूजनी सदा । समुद्रतीरं सा गत्वा आजहार फलद्वयं । ५१४०

पुष्ट्यर्थञ्च स्वपुत्त्रस्य राजपुत्त्रस्य चैव ह । फलमेकं सुतायादाद्राजपुत्त्राय चापरं ।

अमृतास्वादसदृशं बलतेजोऽभिवर्द्धनं । आदायादाय सैवाशु तयोः प्रादात् पुनः पुनः ।

ततोऽगच्छत् परां वृद्धिं राजपुत्त्रः फलाशनात् । ततः स धात्र्या कक्षेण उह्यमानो नृपात्मजः ।

ददर्श तं पक्षिसुतं बाल्यादागत्य बालकः । ततो बाल्याच्च यत्नेन तेनाक्रीडत पक्षिणा ।

शून्ये च तमुपादाय पक्षिणं समजातकं । हत्वा ततः स राजेन्द्र धात्र्या हस्तमुपागतः । ५१४५

अथ सा पूजनी राजन्नागमत् फलहारिणी । अपश्यन्निहतं पुत्त्रं तेन बालेन भूतले ।

वाष्पपूर्णमुखी दीना दृष्ट्वा तं रुदती सुतं । पूजनी दुःखसन्तप्ता रुदती वाक्यमब्रवीत् ।

क्षत्रिये सङ्गतं नास्ति न प्रीतिर्न च सौहृदं । कारणैस्सान्त्वयन्त्येते कृतार्थाः सन्त्यजन्ति च ।
क्षत्रियेषु न विश्वासः कार्य्यः सर्व्वापकारिषु । अपकृत्यापि सततं सान्त्वयन्ति निरर्थकं ।
अहमस्य करोम्यद्य सदृशीं वैरयातनां । कृतघ्नस्य नृशंसस्य भृशं विश्वासघातिनः । ५१५०
सहजं जातवृद्धस्य तथैव सहभोजिनः । शरणागतस्य च वधस्त्रिविधं ह्येव पातकं ।
इत्युक्त्वा चरणाभ्यान्तु नेत्रे नृपसुतस्य सा । भित्त्वा स्वस्था तत इदं पूजनी वाक्यमब्रवीत् ।
इच्छयेह कृतं पापं तमेवाशूपसर्पति । कृतं प्रतिकृतं येषां न नश्यति शुभाशुभं ।
पापं कर्म्म कृतं किञ्चिद्यदि तस्मिन्न दृश्यते । नृपते तस्य पुत्रेषु पौत्रेष्वपि च नप्तृषु ।
ब्रह्मदत्तः सुतं दृष्ट्वा पूजन्या हृतलोचनं । कृते प्रतिकृतं मत्वा पूजनीमिदमब्रवीत् । ५१५५
॥ ब्रह्मदत्त उवाच ॥ अस्ति वै कृतमस्माभिरस्ति प्रतिकृतं त्वया । उभयं तत्समीभूतं वस पूजनि मागमः ।
॥ पूजन्युवाच ॥ सकृत्कृतापराधस्य तत्रैव परिलम्बतः । न तद्बुधाः प्रशंसन्ति श्रेयस्तत्रापसर्पणं ।
सान्त्वे प्रयुक्ते सततं कृतवैरे न विश्वसेत् । क्षिप्रं स बध्यते मूढो न हि वैरं प्रशाम्यति ।
अन्योन्यकृतवैराणां पुत्रपौत्त्रं नियच्छति । पुत्रपौत्त्रविनाशे च परलोकं नियच्छति ।
सर्व्वेषां कृतवैराणामविश्वासः सुखोदयः । एकान्ततो न विश्वासः कार्य्यो विश्वासघातकैः । ५१६०
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् । विश्वासाद्भयमुत्पन्नमपि मूलं निकृन्तति ।
कामं विश्वासयेदन्यान् परेषाञ्च न विश्वसेत् ।
माता पिता बान्धवानां वरिष्ठौ भार्य्या जरा बीजमात्रन्तु पुत्रः । भ्राता शत्रुः क्लिन्नपाणिर्वयस्य आत्मा ह्येकः सुखदुःखस्य भोक्ता ।
अन्योन्यकृतवैराणां न सन्धिरुपपद्यते । स च हेतुरतिक्रान्तो यदर्थमहमावसं ।
पूजितस्यार्थमानाभ्यां जन्तोः पूर्व्वापकारिणः । मनो भवत्यविश्वस्तं कर्म्म त्रासयतेऽबलान् । ५१६५
पूर्व्वं सम्मानना यत्र पश्चाच्चैव विमानना । जह्यात्तत् सत्त्ववान् स्थानं शत्रोः सम्मानितोऽपि सन् ।
उषिताऽस्मि तवागारे दीर्घकालं समर्चिता । तदिदं वैरमुत्पन्नं सुखमाशु व्रजाम्यहं ।
॥ ब्रह्मदत्त उवाच ॥ यः कृतं प्रतिकुर्य्याद्वै न स तत्रापराध्नुयात् । अनृणस्तेन भवति वस पूजनि मागमः ।
॥ पूजन्युवाच ॥ न कृतस्य च कर्त्तुश्च सख्यं सन्धीयते पुनः । हृदयं तत्र जानाति कर्त्तुश्चैव कृतस्य च ।
॥ ब्रह्मदत्त उवाच ॥ कृतस्य चैव कर्त्तुश्च कार्य्यं सन्धीयते पुनः । वैरस्योपशमो दृष्टः पापं नोपाश्नुते पुनः । ५१७०
॥ पूजन्युवाच ॥ नास्ति वैरमतिक्रान्तं सान्त्वितोऽस्मीति नाश्वसेत् । विश्वासाद्बध्यते लोके तस्माच्छ्रेयोऽप्यदर्शनं ।
तरसा ये न शक्यन्ते शस्त्रैः सुनिशितैरपि । साम्ना तेऽपि निगृह्यन्ते गजा इव करेणुभिः ।
॥ ब्रह्मदत्त उवाच ॥ संवासाज्जायते स्नेहो जीवितान्तकरेष्वपि । अन्योन्यस्य च विश्वासः श्वपचेन शुनो यथा ।
अन्योन्यकृतवैराणां संवासान्मृदुतां गतं । नैव तिष्ठति तद्वैरं पुष्करस्थमिवोदकं ।
॥ पूजन्युवाच ॥ वैरं पञ्चसमुत्थानं तच्च बुध्यन्ति पण्डिताः । स्त्रीकृतं वास्तुजं वाग्जं ससपत्नापराधजं । ५१७५
तत्र दाता न हन्तव्यः क्षत्रियेण विशेषतः । प्रकाशं वाऽप्रकाशञ्च बुद्ध्वा दोषबलाबलं ।

कृतवैरे न विश्वासः कार्य्यस्त्विह सुहृद्यपि । छन्नं सन्तिष्ठते वैरं गूढोऽग्निरिव दारुषु ।
न वित्तेन न पारुष्यैर्न च सान्त्वेन वा श्रुतैः । कोपाग्निः शाम्यते राजंस्तोयाग्निरिव सागरे ।
न हि वैराग्निरुद्भूतः कर्म्म चाप्यपराधजं । शाम्यत्यदग्ध्वा नृपते विना ह्येकतरक्षयात् ।
सत्कृतस्यार्थमानाभ्यामनुपूर्व्वापकारिणः । नादेयो मित्रविश्वासः कर्म्म त्रासयते बलात् । ५१८०
नैवापकार्य्यं कस्मिंश्चिदहं त्वयि तथा भवान् । उषिताऽस्मि गृहेऽहन्ते नेदानीं विश्वसाम्यहं ।
॥ ब्रह्मदत्त उवाच ॥ कालेन क्रियते कार्य्यं तथैव विविधाः क्रियाः । कालेनैते प्रवर्त्तन्ते कः कस्येहापराध्यति ।
तुल्यञ्चोभे प्रवर्त्तेते मरणं जन्म चैव ह । कार्य्यते चैव कालेन तन्निमित्तं न जीवति ।
बध्यन्ते युगपत् केचिदेकैकस्य न चापरे । कालो दहति भूतानि सम्प्राप्याग्निरिवेन्धनं ।
नाहं प्रमाणं नैव त्वमन्योन्यं कारणं शुभे । कालो नित्यमुपादत्ते सुखं दुःखञ्च देहिनां । ५१८५
एवं वसेह सस्नेहा यथाकाममहिंसिता । यत् कृतं तत्तु मे क्षान्तं त्वञ्च वै क्षम पूजनि ।
॥ पूजन्युवाच ॥ यदि कालः प्रमाणं ते न वैरं कस्यचिद्भवेत् । कस्मात्त्वपचितिं यान्ति बान्धवा बान्धवैर्हतैः ।
कस्माद्देवासुराः पूर्व्वमन्योन्यमभिजघ्निरे । यदि कालेन निर्वाणं सुखं दुःखं भवाभवौ ।
भिषजो भेषजं कर्त्तुं कस्मादिच्छन्ति रोगिणः । यदि कालेन पच्यन्ते भेषजैः किं प्रयोजनं ।
प्रलापः स महान् कस्मात् क्रियते शोकमूर्च्छितैः । यदि कालः प्रमाणन्ते कस्माद्धर्मोऽस्ति कर्त्तृषु । ५१९०
तव पुत्त्रो ममापत्यं हतवान् स हतो मया । अनन्तरं त्वयाऽहञ्च हन्तव्या हि नराधिप ।
अहं हि पुत्त्रशोकेन कृतपापा तवात्मजे । यथा त्वया प्रहर्त्तव्यं तथा तत्त्वञ्च मे शृणु ।
भक्षार्थं क्रीडनार्थञ्च नरा वाञ्छन्ति पक्षिणः । तृतीयो नास्ति संयोगो बधबन्धादृते क्षमः ।
बधबन्धभयादेते मोक्षतन्त्रमुपाश्रिताः । मरणोत्पातजं दुःखं प्राहुर्व्वेदविदो जनाः ।
सर्व्वस्य दयिताः प्राणाः सर्व्वस्य दयिताः सुताः । दुःखादुद्विजते सर्व्वः सर्व्वस्य सुखमीप्सितं । ५१९५
दुःखं जरा ब्रह्मदत्त दुःखमर्थविपर्य्ययः । दुःखञ्चानिष्टसंवासो दुःखमिष्टवियोजनं ।
बधबन्धकृतं दुःखं स्त्रीकृतं सहजं तथा । दुःखं सुतेन सततं जनान् विपरिवर्त्तते ।
न दुःखं परदुःखे वै केचिदाहुरबुद्धयः । यो दुःखं नाभिजानाति स जल्पति महाजने ।
यस्तु शोचति दुःखार्त्तः स कथं वक्तुमुत्सहेत् । रसज्ञः सर्व्वदुःखस्य यथात्मनि तथा परे ।
यत् कृतन्ते मया राजंस्त्वया च मम यत् कृतं । न तद्वर्षशतैः शक्यं व्यपोहितुमरिन्दम । ५२००
आवयोः कृतमन्योन्यं पुनः सन्धिर्न विद्यते । स्मृत्वा स्मृत्वा हि ते पुत्त्रं नवं वैरं भविष्यति ।
वैरमन्तिकमासाद्य यः प्रीतिं कर्त्तुमिच्छति । मृण्मयस्येव भग्नस्य यथा सन्धिर्न विद्यते ।
निश्चयः स्वार्थशास्त्रेषु विश्वासश्चासुखोदयः । उशनसैव गाथे द्वे प्रह्लादायाब्रवीत् पुरा ।
यो वैरिणः श्रद्धधते सत्ये सत्येतरेऽपि वा । बध्यन्ते श्रद्दधानास्तु मधु शुष्कतृणैर्यथा ।
न हि वैराणि शाम्यन्ति कुले दुःखगतानि च । आख्यातारश्च विद्यन्ते कुले वै म्रियते पुमान् । ५२०५
उपगृह्य तु वैराणि सान्त्वयन्ति नराधिप । अथैनं प्रतिपिंषन्ति पूर्णं घटमिवाश्मनि ।

सदा न विश्वसेद्राजा पापं कृत्वेह कस्यचित्। अपकृत्य परेषां हि विश्वासाद्दुःखमश्नुते।

॥ ब्रह्मदत्त उवाच ॥ नाविश्वासाद्विन्दतेऽर्थानीहते चापि किञ्चन। भयात्त्वेकतरान्नित्यं मृतकल्पा भवन्ति च।

॥ पूजन्युवाच ॥ यस्येह व्रणितौ पादौ पद्भ्यां च परिसर्पति। क्षन्येते तस्य तौ पादौ सुगुप्तमिह धावतः।

नेत्राभ्यां सरुजाभ्यां यः प्रतिवातमुदीक्षते। तस्य वायुरुजाऽत्यर्थं नेत्रयोर्भवति ध्रुवं। ५२१०

दुष्टं पन्थानमासाद्य यो मोहादुपपद्यते। आत्मनो बलमज्ञाय तदन्तं तस्य जीवितं।

यस्तु वर्षमविज्ञाय क्षेत्रं कर्षति मानवः। हीनः पुरुषकारेण सस्यं नैवाश्नुते ततः।

यस्तु तिक्तं कषायं वा स्वादु वा मधुरं हितं। आहारं कुरुते नित्यं सोऽमृतत्वाय कल्पते।

पथ्यं मुक्त्वा तु यो मोहाद्दुष्टमश्नाति भोजनं। परिणाममविज्ञाय तदन्तं तस्य जीवितं।

दैवं पुरुषकारश्च स्थितावन्योन्यसंश्रयात्। उदाराणान्तु सत् कर्म्म दैवं क्लीवा उपासते। ५२१५

कर्म्म चात्महितं कार्य्यं तीक्ष्णं वा यदि वा मृदु। ग्रस्यतेऽकर्म्मशीलस्तु सदाऽनर्थैरकिञ्चनः।

तस्मात् सर्व्वं व्यपोह्यार्थं कार्य्य एव पराक्रमः। सर्व्वस्वमपि सन्त्यज्य कार्य्यमात्महितं नरैः।

विद्या शौर्य्यञ्च दाक्ष्यञ्च बलं धैर्य्यञ्च पञ्चमं। मित्राणि सहजान्याहुर्वर्त्तयन्तीह तैर्बुधाः।

निवेशनञ्च कुप्यञ्च क्षेत्रं भार्य्या सुहृज्जनः। एतान्युपहितान्याहुः सर्व्वत्र लभते पुमान्।

सर्व्वत्र रमते प्राज्ञः सर्व्वत्र च विराजते। न विभीषयते कश्चिद्भीषितो न बिभेति च। ५२२०

नित्यं बुद्धिमतोऽप्यर्थः स्वल्पतोऽपि विवर्द्धते। दाक्ष्येणाकुर्व्वतः कर्म्म संयमात् प्रतितिष्ठति।

गृहस्नेहावबद्धानां नराणामल्पमेधसां। कुस्त्री खादति मांसानि माघमासे गवा इव।

गृहं क्षेत्राणि मित्राणि स्वदेश इति चापरे। इत्येवमवसीदन्ति नरा बुद्धिविपर्य्यये।

उत्पतेत् सरुजाद्देशाद्व्याधिदुर्भिक्षपीडितात्। अन्यत्र वस्तुं गच्छेद्वा वसेद्वा नित्यमानितः।

तस्मादन्यत्र यास्यामि वस्तुं नाहमिहोत्सहे। कृतमेतदनार्य्यं मे तव पुत्रे च पार्थिव। ५२२५

कुभार्य्याञ्च कुपुत्रञ्च कुराजानं कुसौहृदं। कुसम्बन्धं कुदेशञ्च दूरतः परिवर्ज्जयेत्।

कुपुत्रे नास्ति विश्वासः कुभार्य्यायां कुतो रतिः। कुराज्ये निर्वृतिर्नास्ति कुदेशे नास्ति जीविका।

कुमित्रे सङ्गतिर्नास्ति नित्यमस्थिरसौहृदे। अवमानः कुसम्बन्धे भवत्यर्थविपर्य्यये।

सा भार्य्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः। तन्मित्रं यत्र विश्वासः स देशो यत्र जीव्यते

यत्र नास्ति बलात्कारः स राजा तीव्रशासनः। भीरैव नास्ति सम्बन्धो दरिद्रं यो बुभूषते। ५२३०

भार्य्या देशोऽथ मित्राणि पुत्रसम्बन्धिबान्धवाः। एते सर्व्वे गुणवति धर्म्मनेत्रे महीपतौ।

अधर्म्मज्ञस्य विलयं प्रजा गच्छन्ति निग्रहात्। राजा मूलं त्रिवर्गस्य स्वप्रमत्तोऽनुपालयेत्।

बलिषड्भागमुद्धृत्य बलिं समुपयोजयेत्। न रक्षति प्रजाः सम्यक् यः स पार्थिवतस्करः।

दत्त्वाऽभयं यः स्वयमेव राजा न तत्प्रमाणं कुरुतेऽर्थलोभात्। स सर्व्वलोकादुपलभ्य पापं सोऽधर्म्मबुद्धिर्निरयं प्रयाति।

दत्त्वाऽभयं स्वयं राजा प्रमाणं कुरुते यदि। स सर्व्वसुखकृज्ज्ञेयः प्रजा धर्म्मेण पालयन्। ५२३५

माता पिता गुरुर्गोप्ता वह्निर्वैश्रवणो यमः। सप्त राज्ञो गुणानेतान्मनुराह प्रजापतिः।

पिता हि राजा राष्ट्रस्य प्रजानां योऽनुकम्पनः । तस्मिन्मिथ्याविनीते हि तिर्य्यग्गच्छति मानवः ।
सम्भावयति मातेव हीनमप्युपपद्यते । दहत्यग्निरिवानिष्टान् यमयन्नसतो यमः ।
इष्टेषु विसृजन्नर्थान् कुवेर इव कामदः । गुरुर्धर्म्मोपदेशेन गोप्ता च परिपालयन् ।
यस्तु रञ्जयते राजा पौरजानपदान् गुणैः । न तस्य भ्रमते राज्यं स्वयं धर्म्मानुपालनात् । ५२७०
स्वयं समुपजानन् हि पौरजानपदार्च्चनं । स सुखं प्रेक्षते राजा इह लोके परत्र च ।
नित्योद्विग्नाः प्रजा यस्य करभारप्रपीडिताः । अनर्थैर्विप्रलुप्यन्ते स गच्छति पराभवं ।
प्रजा यस्य विवर्द्धन्ते सरसीव महोत्पलं । स सर्व्वफलभाग्राजा स्वर्गलोके महीयते ।
बलिना विग्रहो राजन् न कदाचित् प्रशस्यते । बलिना विग्रहो यस्य कुतो राज्यं कुतः सुखं ।
॥ भीष्म उवाच ॥ सैवमुक्त्वा शकुनिका ब्रह्मदत्तं नराधिपं । राजानं समनुज्ञाप्य जगामाभीप्सितां दिशं । ५२७५
एतत्ते ब्रह्मदत्तस्य पूजन्या सह भाषितं । मयोक्तं नृपतिश्रेष्ठ किमन्यत् श्रोतुमिच्छसि ।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि ब्रह्मदत्तपूजनीसंवादे ऊनचत्वारिंशदधिकशततमोऽध्यायः॥१३९॥
॥ युधिष्ठिर उवाच ॥ युगक्षयात् परिक्षीणे धर्म्मे लोके च भारत । दस्युभिः पीड्यमाने च कथं स्थेयं पितामह ।
॥ भीष्म उवाच ॥ अत्र ते वर्त्तयिष्यामि नीतिमापत्सु भारत । उत्सृज्यापि घृणां काले यथा वर्त्तेत भूमिपः ।
अत्राप्युदाहरन्तीममितिहासं पुरातनं । भारद्वाजस्य संवादं राज्ञः शत्रुञ्जयस्य च ।
राजा शत्रुञ्जयो नाम सौवीरेषु महारथः । भारद्वाजमुपागम्य पप्रच्छार्थविनिश्चयं । ५२८०
अलब्धस्य कथं लिप्सा लब्धं केन विवर्द्धते । वर्द्धितं पाल्यते केन पालितं प्रणयेत् कथं ।
तस्मै विनिश्चितार्थाय परिपृष्टोऽर्थनिश्चयं । उवाच ब्राह्मणो वाक्यमिदं हेतुमदुत्तमं ।
नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः । अच्छिद्रश्छिद्रदर्शी च परेषां विवरानुगः ।
नित्यमुद्यतदण्डस्य भृशमुद्विजते नरः । तस्मात् सर्व्वाणि भूतानि दण्डेनैव प्रसाधयेत् ।
एवं दण्डं प्रशंसन्ति पण्डितास्तत्त्वदर्शिनः । तस्माच्चतुष्टये तस्मिन् प्रधानो दण्ड उच्यते । ५२८५
छिन्नमूले त्वधिष्ठाने सर्व्वेषां जीवनं हृतं । कथं हि शाखास्तिष्ठेयुश्छिन्नमूले वनस्पतौ ।
मूलमेवादितश्छिन्द्यात् परपक्षस्य पण्डितः । ततः सहायान् पक्षञ्च मूलमेवानुसाधयेत् ।
सुमन्त्रितं सुविक्रान्तं सुयुद्धं सुपलायितं । आपदास्पदकालेन कुर्व्वीत न विचारयेत् ।
वाङ्मात्रेण विनीतः स्याद्धृदयेन यथा क्षुरः । श्लक्ष्णपूर्व्वाभिभाषी च कामक्रोधौ च वर्ज्जयेत् ।
सपत्नसहिते कार्य्ये कृत्वा सन्धिं न विश्वसेत् । अपक्रामेत्ततः शीघ्रं कृतकार्य्यो विचक्षणः । ५२९०
शत्रुञ्च मित्ररूपेण सान्त्वेनैवाभिसान्त्वयेत् । नित्यशश्चोद्विजेत्तस्माद्गृहात् सर्पयुतादिव ।
यस्य बुद्धिं परिभवेत्तामतीतेन सान्त्वयेत् । अनागतेन दुष्प्रज्ञं प्रत्युत्पन्नेन पण्डितं ।
अञ्जलिं शपथं सान्त्वं प्रणम्य शिरसा वदेत् । अश्रुप्रमार्ज्जनञ्चैव कर्त्तव्यं भूतिमिच्छता ।
वहेदमित्रं स्कन्धेन यावत् कालस्य पर्य्ययः । प्राप्तकालन्तु विज्ञाय भिन्द्याद्घटमिवाश्मनि ।
मुहूर्त्तमपि राजेन्द्र तिन्दुकालातवज्ज्वलेत् । न तुषाग्निरिवानर्च्चिर्धूमायेत चिरं नरः । ५२९५

नाना चित्तोऽर्थसम्बन्धं कृतार्थेन समाचरेत्। अर्थी तु शक्यते भोक्तुं कृतकार्य्योऽवमन्यते।
तस्मात् सर्व्वाणि कार्य्याणि सावशेषाणि कारयेत्। कोकिलस्य वराहस्य मेरोः शून्यस्य वेश्मनः
नटस्य भक्तिमित्रस्य यत् श्रेयस्तत् समाचरेत्। उत्थायोत्थाय गच्छेत नित्ययुक्तो रिपोर्गृहात्।
कुशलञ्चास्य पृच्छेत यद्यप्यकुशलं भवेत्। नालसाः प्राप्नुवन्त्यर्थान्न क्लीवा नाभिमानिनः।
न च लोकरवाद्भीता न वै शश्वत्प्रतीक्षिणः। नास्यच्छिद्रं रिपुर्विद्याद्विद्याच्छिद्रं परस्य तु। ५२७०
गूहेत् कूर्म्म इवाङ्गानि रक्षेद्विवरमात्मनः। वकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत्।
वृकवच्चावलुम्पेत शरवच्च विनिष्पतेत्। पानमक्षास्तथा नार्य्यो मृगया गीतवादितं।
एतानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान्। कुर्य्यात्तृणमयं चापं शयीत मृगशायिकां।
अन्धः स्यादन्धवेलायां बाधिर्य्यमपि संश्रयेत्। देशकालौ समासाद्य विक्रमेत विचक्षणः।
देशकालाभ्यतीतो हि विक्रमो निष्फलो भवेत्। कालाकालौ सम्प्रधार्य्य बलाबलमथात्मनः। ५२७५
परस्परं बलं ज्ञात्वा तथात्मानं नियोजयेत्। दण्डेनोपनतं शत्रुं यो राजा न नियच्छति।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा। सुपुष्पितः स्यादफलः फलवान् स्याद्दुरारुहः।
आमः स्यात् पक्वसंकाशो न च शीर्य्येत कस्यचित्। आशां कालवतीं कुर्य्यात्तां च विघ्नेन योजयेत्।
विघ्नं निमित्ततो ब्रूयान्निमित्तञ्चापि हेतुतः। भीतवत् संविधातव्यं यावद्भयमनागतं।
आगतन्तु भयं दृष्ट्वा प्रहर्त्तव्यमभीतवत्। न संशयमनारुह्य नरो भद्राणि पश्यति। ५२८०
संशयं पुनरारुह्य यदि जीवति पश्यति। अनागतं विजानीयाद्यच्छेद्भयमुपस्थितं।
पुनर्वृद्धिभयात् किञ्चिदनिवृत्तं निशामयेत्। प्रत्युपस्थितकालस्य सुखस्य परिवर्ज्जनं।
अनागतसुखाशा च नैव बुद्धिमतां नयः। योऽरिणा सह सन्धाय सुखं स्वपिति विश्वसन्।
स वृक्षाग्रे प्रसुप्तो वा पतितः प्रतिबुध्यते। कर्म्मणा येन तेनैव मृदुना दारुणेन च।
उद्धरेद्दीनमात्मानं समर्थो धर्म्ममाचरेत्। ये सपत्नाः सपत्नानां सर्व्वांस्तानुपसेवयेत्। ५२८५
आत्मनश्चापि बोद्धव्याश्चारा विनिहिताः परैः। चारः सुविहितः कार्य्य आत्मनोऽथ परस्य च।
पाषण्डांस्तापसादींश्च परराष्ट्रे प्रवेशयेत्। उद्यानेषु विहारेषु प्रपास्वावसथेषु च।
पानागारे प्रवेशेषु तीर्थेषु च सभासु च। धर्म्माभिचारिणः पापाश्चारा लोकस्य कण्टकाः।
समागच्छन्ति तान् बुद्ध्वा नियच्छेच्छमयीत च। न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्।
विश्वासाद्भयमभ्येति नापरीक्ष्य च विश्वसेत्। विश्वासयित्वा तु परं तत्त्वभूतेन हेतुना। ५२९०
अथास्य प्रहरेत् काले किञ्चिद्विचलिते पदे। अशङ्क्यमपि शङ्केत नित्यं शङ्केत शङ्कितान्।
भयं ह्यशङ्किताज्जातं समूलमपि कृन्तति। अवधानेन मौनेन काषायेण जटाजिनैः।
विश्वासयित्वा द्वेष्टारमवलुम्पेद्यथा वृकः। पुत्रो वा यदि वा भ्राता पिता वा यदि वा सुहृत्।
अर्थस्य विघ्नं कुर्व्वाणा हन्तव्या भूतिमिच्छता। गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः।
उत्पथप्रतिपन्नस्य दण्डो भवति शाश्वतं। अभ्युत्थानाभिवादाभ्यां सम्प्रदानेन केनचित्। ५२९५

प्रतिपुष्पफलाघाती तीक्ष्णतुण्ड इव द्विजः । नाच्छित्त्वा परमर्म्माणि नाकृत्वा कर्म्म दारुणं ।
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियं । नास्ति जात्या रिपुर्नाम मित्रं वापि न विद्यते ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा । अमित्रं नैव मुञ्चेत वदन्तं कारुणान्यपि ।
दुःखं तत्र न कर्त्तव्यं हन्यात् पूर्व्वापकारिणं । संग्रहानुग्रहे यत्नः सदा कार्य्योऽनसूयता ।
निग्रहस्यापि यत्नेन कर्त्तव्यो भूतिमिच्छता । प्रहरिष्यन् प्रियं ब्रूयात् प्रहृत्यैव प्रियोत्तरं । १२००
असिनाऽपि शिरश्छित्त्वा शोचेत च रुदेत च । निमन्त्रयीत सान्त्वेन सम्मानेन तितिक्षया ।
लोकाराधनमित्येतत् कर्त्तव्यं भूतिमिच्छता । न शुष्कवैरं कुर्व्वीत बाहुभ्यां न नदीं तरेत् ।
अनर्थकमनायुष्यं गोविषाणस्य भक्षणं । दन्ताश्च परिमृज्यन्ते रसश्चापि न लभ्यते ।
त्रिवर्गस्त्रिविधा पीडा अनुबन्धास्तथैव च । अनुबन्धं तथा ज्ञात्वा पीडाश्च परिवर्ज्जयेत् ।
ऋणशेषमग्निशेषं शत्रुशेषं तथैव च । पुनः पुनः प्रवर्द्धन्ते तस्मात् शेषं न धारयेत् । १२०५
वर्द्धमानमृणं तिष्ठेत् परिभूताश्च शत्रवः । जनयन्ति भयं तीव्रं व्याधयश्चाप्युपेक्षिताः ।
नासम्यक्कृतकारी स्यादप्रमत्तः सदा भवेत् । कण्टकोऽपि हि दुश्छिन्नो विकारं कुरुते चिरं ।
वधेन च मनुष्याणां मार्गाणां दूषणेन च । आगाराणां विनाशैश्च परराष्ट्रं विनाशयेत् ।
गृध्रदृष्टिर्व्वकालीनः श्वचेष्टः सिंहविक्रमः । अनुद्विग्नः काकशङ्की भुजङ्गचरितं चरेत् ।
शूरमञ्जलिपातेन भीरुं भेदेन भेदयेत् । लुब्धमर्थप्रदानेन समं तुल्येन विग्रहः । १२१०
श्रेणीमुख्योपजापेषु वल्लभानुनयेषु च । अमात्यान् परिरक्षेत भेदसंघातयोरपि ।
मृदुरित्यवजानन्ति तीक्ष्ण इत्युद्विजन्ति च । तीक्ष्णकाले भवेत्तीक्ष्णो मृदुकाले मृदुर्भवेत् ।
मृदुनैव मृदुं छिन्धि मृदुना हन्ति दारुणं । नासाध्यं मृदुना किञ्चित्तस्मात्तीक्ष्णतरो मृदुः ।
काले मृदुर्यो भवति काले भवति दारुणः । प्रसाधयति कृत्यानि शत्रुश्चाप्यधितिष्ठति ।
पण्डितेन विरुद्धः सन् दूरस्थोऽस्मीति नाश्वसेत् । दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः । १२१५
न तत्तरेद्यस्य न पारमुत्तरेन्न तद्धरेद्यः पुनराहरेत् परः । न तत् खनेद्यस्य न मूलमुद्धरेन्न तं हन्याद्यस्य शिरो न
पातयेत् ।

इतीदमुक्तं वृजिनाभिसंहितं न चैतदेवं पुरुषः समाचरेत् । परप्रयुक्तेन कथं विभावयेदतो मयोक्तं भवतो हितार्थिना ।
यथावदुक्तं वचनं हितार्थिना निशम्य विप्रेण सुवीरराड्नृपः । तथाऽकरोद्वाक्यमदीनचेतनः श्रियञ्च दीप्तां बुभुजे सबान्धवः ।

इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि कणिकोपदेशे चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

॥ युधिष्ठिर उवाच ॥ हीने परमके धर्म्मे सर्व्वलोकाभिलङ्घिते । अधर्म्मे धर्म्मतां नीते धर्म्मे चाधर्म्मतां गते ।
मर्य्यादासु विनष्टासु क्षुभिते धर्म्मनिश्चये । राजभिः पीडिते लोके परैर्व्वाऽपि विशाम्पते । १२२०
सर्व्वाश्रयेषु मूढेषु कर्म्मसूपहतेषु च । कामाल्लोभाच्च मोहाच्च भयं पश्यत्सु भारत ।
अविश्वस्तेषु सर्व्वेषु नित्यं भीतेषु पार्थिव । निकृत्या हन्यमानेषु वञ्चयत्सु परस्परं ।
सम्प्रदीप्तेषु देशेषु ब्राह्मणे चातिपीडिते । अवर्षति च पर्ज्जन्ये मिथोभेदे समुत्थिते ।

सर्व्वस्मिन्दस्युसाद्भूते पृथिव्यामुपजीवने । केनस्विद्ब्राह्मणो जीवेज्जघन्ये काल आगते ।
असंतिक्षुः पुत्त्रपौत्त्राननुक्रोशान्नराधिप । कथमापत्सु वर्त्तेत तन्मे ब्रूहि पितामह ।  ५३२५
कथञ्च राजा वर्त्तेत लोके कलुषतां गते । कथमर्थाच्च धर्म्माच्च न हीयेत परन्तप ।
॥ भीष्म उवाच ॥ राजमूला महाबाहो योगक्षेमसुवृष्टयः । प्रजासु व्याधयश्चैव मरणञ्च भयानि च ।
कृतं त्रेता द्वापरञ्च कलिश्च भरतर्षभ । राजमूला इति गतिर्मम नास्त्यत्र संशयः ।
तस्मिंस्त्वभ्यागते काले प्रजानां दोषकारके । विज्ञानबलमास्थाय जीवितव्यं भवेत्तदा ।
अत्राप्युदाहरन्तीममितिहासं पुरातनं । विश्वामित्रस्य संवादं चाण्डालस्य च पक्कणे ।  ५३३०
त्रेताद्वापरयोः सन्धौ तदा दैवविधिः क्रमात् । अनावृष्टिरभूद्घोरा लोके द्वादशवार्षिकी ।
प्रजानामतिवृद्धानां युगान्ते समुपस्थिते । त्रेताविमोक्षसमये द्वापरप्रतिपादने ।
न ववर्ष सहस्राक्षः प्रतिलोमोऽभवद्गुरुः । जगाम दक्षिणं मार्गं सोमो व्यावृत्तलक्षणः ।
नावश्यायोऽपि रात्र्यभूत् कुत एवाभ्रजातयः । नद्यः सङ्क्षिप्ततोयौघाः किञ्चिदन्तर्गतास्ततः ।
सरांसि सरितश्चैव कूपाः प्रस्रवणानि च । हतत्विषो न लक्ष्यन्ते निसर्गाद्दैवकारितात् ।  ५३३५
उपशुष्कजलस्थाना विनिवृत्तसभा प्रपा । निवृत्तयज्ञस्वाध्याया निर्व्वषट्कारमङ्गला ।
उच्छिन्नकृषिगोरक्षा निवृत्तविपणापणा । निवृत्तयूपसम्भारा विप्रनष्टमहोत्सवा ।
अस्थिसञ्चयसङ्कीर्णा महाभूतरवाकुला । शून्यभूयिष्ठनगरा दग्धग्रामनिवेशना ।
क्वचिच्चौरैः क्वचिच्छस्त्रैः क्वचिद्राजभिरातुरैः । परस्परभयाच्चैव शून्यभूयिष्ठनिर्ज्जना ।
गतदैवतसंस्थाना वृद्धलोकनिराकृता । गोअजाविमहिषीहीना परस्परपराहृता ।  ५३४०
हतविप्रा हतारक्षा प्रनष्टौषधिसञ्चया । सर्व्वभूततरुप्राया बभूव वसुधा तदा ।
तस्मिन् प्रतिभये काले क्षते धर्म्मे युधिष्ठिर । बभ्रमुः क्षुधिता मर्त्याः खादमानाः परस्परं ।
ऋषयो नियमांस्त्यक्त्वा परित्यज्याग्निदेवताः । आश्रमान् सम्परित्यज्य पर्य्यधावन्नितस्ततः ।
विश्वामित्रोऽथ भगवान्महर्षिरनिकेतनः । क्षुधा परिगतो धीमान् समन्तात् पर्य्यधावत ।
त्यक्त्वा दारांश्च पुत्त्रांश्च कस्मिंश्च जनसंसदि । भक्ष्याभक्ष्यसमो भूत्वा निरग्निरनिकेतनः ।  ५३४५
स कदाचित् परिपतन् श्वपचानां निवेशनं । हिंस्राणां प्राणिघातानामाससाद वने क्वचित् ।
विभिन्नकलसाकीर्णं श्वचर्म्मच्छेदनायुतं । वराहखरभग्नास्थिकपालघटसंकुलं ।
मृतचेलपरिस्तीर्णं निर्म्माल्यकृतभूषणं । सर्पनिर्म्मोकमालाभिः कृतचिह्नकुटीमठं ।
कुक्कुटारावबहुलं गर्द्दभध्वनिनादितं । उद्घोषद्भिः खरैर्व्वाक्यैः कलहद्भिः परस्परं ।
उलूकपक्षिध्वजिभिर्द्देवतायतनैर्वृतं । लोहघण्टापरिष्कारं श्वयूथपरिवारितं ।  ५३५०
तत् प्रविश्य क्षुधाविष्टो विश्वामित्रो महानृषिः । आहारान्वेषणे युक्तः परं यत्नं समास्थितः ।
न च क्वचिदविन्दत् स भिक्षमाणोऽपि कौशिकः । मांसमन्नं फलं मूलमन्यद्वा तत्र किञ्चन ।
अहो कृच्छ्रं मया प्राप्तमिति निश्चित्य कौशिकः । पपात भूमौ दौर्ब्बल्यात्तस्मिंश्चाण्डालपक्कणे ।

स चिन्तयामास मुनिः किन्नु मे सुकृतं भवेत् । कथं वृथा न मृत्युः स्यादिति पार्थिवसत्तम ।
स ददर्श श्वमांसस्य कुतन्त्रीं विततां मुनिः । चाण्डालस्य गृहे राजन् सद्यः शस्त्रहतस्य वै । ५२५५
संचिन्तयामास तदा स्तैन्यं कार्य्यमितो मया । न हीदानीमुपायो मे विद्यते प्राणधारणे ।
आपत्सु विहितं स्तैन्यं विशिष्टस्य महीयसः । विप्रेण प्राणरक्षार्थं कर्त्तव्यमिति निश्चयः ।
हीनादादेयमादौ स्यात् समानात्तदनन्तरं । असम्भवे वाददीत विशिष्टादपि धार्म्मिकात् ।
सोऽहमन्त्यावसायिनां हराम्येनां प्रतिग्रहात् । न स्तैन्यदोषं पश्यामि हरिष्यामि श्वजाघनीं ।
एतां बुद्धिं समास्थाय विश्वामित्रो महामुनिः । तस्मिन् देशे स सुष्वाप श्वपचो यत्र भारत । ५२६०
स विगाढां निशां दृष्ट्वा सुप्ते चाण्डालपक्कणे । शनैरुत्थाय भगवान् प्रविवेश कुटीमतः ।
सुषुप्त इव चाण्डालः श्लेष्मापिहितलोचनः । परिभिन्नस्वरो रूक्षः प्रोवाचाप्रियदर्शनः ।
॥ श्वपच उवाच ॥ कः कुतन्त्रीं घटयति सुप्ते चाण्डालपक्कणे । जागर्म्मि नाहं सुप्तोऽस्मि हतोऽसीति च दारुणः ।
विश्वामित्रस्ततो भीतः सहसा तमुवाच ह । तत्र व्रीडाकुलमुखः सोद्वेगस्तेन कर्म्मणा ।
विश्वामित्रोऽहमायुष्मन्नागतोऽहं बुभुक्षितः । मावधीर्मम सद्बुद्धे यदि सम्यक् प्रपश्यसि । ५२६५
चाण्डालस्तद्वचः श्रुत्वा महर्षेर्भावितात्मनः । शयनादुपसम्भ्रान्त उद्ययौ प्रति तं ततः ।
स विसृज्याश्रु नेत्राभ्यां बहुमानात् कृताञ्जलिः । उवाच कौशिकं रात्रौ ब्रह्मन् किन्ते चिकीर्षितं ।
विश्वामित्रस्तु मातङ्गमुवाच परिसान्त्वयन् । क्षुधितोऽहं गतप्राणो हरिष्यामि श्वजाघनीं ।
क्षुधितः कलुषं यातो नास्ति ह्रीरशनार्थिनः । क्षुच्च मां दूषयत्यत्र हरिष्यामि श्वजाघनीं ।
अवसीदन्ति मे प्राणाः श्रुतिर्मे नश्यति क्षुधा । दुर्ब्बलो नष्टसंज्ञश्च भक्ष्याभक्ष्यविवर्ज्जितः । ५२७०
सोऽधर्म्मं बुध्यमानोऽपि हरिष्यामि श्वजाघनीं । अटन् भैक्षं न विन्दामि यदा युष्माकमालये ।
तदा बुद्धिः कृता पापे हरिष्यामि श्वजाघनीं । अग्निर्मुखं पुरोधाश्च देवानां शुचिषाड्विभुः ।
यथावत् सर्व्वभुग्ब्रह्मा तथा मां विद्धि धर्म्मतः । तमुवाच स चाण्डालो महर्षे शृणु मे वचः ।
श्रुत्वा तत्त्वं तथा तिष्ठ यथा धर्म्मो न हीयते । धर्म्मं तत्रापि विप्रर्षे शृणु यत्ते ब्रवीम्यहं ।
शृगालादधमं श्वानं प्रवदन्ति मनीषिणः । तस्याप्यधम उद्देशः शरीरस्य श्वजाघनी । ५२७५
नेदं सम्यग्व्यवसितं महर्षे धर्म्मगर्हितं । चाण्डालस्वस्य हरणमभक्ष्यस्य विशेषतः ।
साध्वन्यमनुपश्य त्वमुपायं प्राणधारणे । न मांसलोभात्तपसो नाशस्ते स्यान्महामुने ।
जानता विहितं धर्म्मं न कार्य्यो धर्म्मसङ्करः । मा स्म धर्म्मं परित्याक्षीस्त्वं हि धर्म्मभृतां वरः ।
विश्वामित्रस्ततो राजन्नित्युक्तो भरतर्षभ । क्षुधार्त्तः प्रत्युवाचेदं पुनरेव महामुनिः ।
निराहारस्य सुमहान्मम कालोऽभिधावतः । न विद्यतेऽप्युपायश्च कश्चिन्मे प्राणधारणे । ५२८०
येन येन विशेषेण कर्म्मणा येन केनचित् । अभ्युज्जीवेत् साद्यमानः समर्थो धर्म्ममाचरेत् ।
ऐन्द्रो धर्म्मः क्षत्त्रियाणां ब्राह्मणानामथाग्निकः । ब्रह्मवह्निर्म्मम बलं भक्षामि शमयन् क्षुधां ।
यथा यथैव जीवेद्धि तत् कर्त्तव्यमहेलया । जीवितं मरणात् श्रेयो जीवन् धर्म्ममवाप्नुयात् ।

सोऽहं जीवितमाकाङ्क्षन्नभक्ष्यस्यापि भक्षणं। व्यवस्ये बुद्धिपूर्व्वं वै तद्भवाननुमन्यतां।

जीवन्धर्म्मञ्चरिष्यामि प्रणोत्स्याम्यशुभानि तु। तपोभिर्व्विद्यया चैव ज्योतींषीव महत्तमः। ५३८५

॥ श्वपच उवाच ॥ नैतत् खादन् प्राप्स्यते दीर्घमायुर्नैव प्राणान्नामृतस्येव तृप्तिः। भिक्षामन्यां भिक्ष मा ते मनोऽस्तु श्वभक्षणे श्वा ह्यभक्ष्यो द्विजानां।

॥ विश्वामित्र उवाच ॥ न दुर्भिक्षे सुलभं मांसमन्यत् श्वपाक नान्नं न च मेऽस्ति वित्तं। क्षुधार्त्तश्चाहमगतिर्निराशः श्वमांसे चास्मिन् षड्रसान् साधु मन्ये।

॥ श्वपच उवाच ॥ पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रस्य वै विशः। यथाशास्त्रं प्रमाणन्ते माऽभक्ष्ये मानसं कृथाः।

॥ विश्वामित्र उवाच ॥ अगस्त्येनासुरो जग्धो वातापिः क्षुधितेन वै। अहमापद्गतः क्षुब्धो भक्षयिष्ये श्वजाघनीं।

॥ श्वपच उवाच ॥ भिक्षामन्यामाहरेति न च कर्त्तुमिहार्हसि। न नूनं कार्य्यमेतद्वै हर कामं श्वजाघनीं। ५३९०

॥ विश्वामित्र उवाच ॥ शिष्टा वै कारणं धर्म्मे तद्वृत्तमनुवर्त्तये। परां मेध्याशनादेनां भक्ष्यां मन्ये श्वजाघनीं।

॥ श्वपच उवाच ॥ असता यत् समाचीर्णं न स धर्म्मः सनातनः। नाकार्य्यमिह कार्य्यं वै मा छलेनाशुभं कृथाः।

॥ विश्वामित्र उवाच ॥ न पातकं नावमतमृषिः सन् कर्त्तुमर्हति। समौ च श्वमृगौ मन्ये तस्माद्भक्ष्ये श्वजाघनीं।

॥ श्वपच उवाच ॥ यद्ब्राह्मणार्थे कृतमर्थितेन तेनर्षिणा तदवस्याधिकारे। स वै धर्म्मो यत्र न पापमस्ति सर्व्वैरुपायैर्गुरवो हि रक्ष्याः।

॥ विश्वामित्र उवाच ॥ मित्रञ्च मे ब्राह्मणस्यायमात्मा प्रियश्च मे पूज्यतमश्च लोके। तं भर्त्तुकामोऽहमिमां जिहीर्षे नृशंसानामीदृशानां न बिभ्ये। ५३९५

॥ श्वपच उवाच ॥ कामं नरा जीवितं सन्त्यजन्ति न चाभक्ष्ये क्वचित् कुर्व्वन्ति बुद्धिं। सर्व्वान् कामान् प्राप्नुवन्तीह विद्वन् प्रियस्व कामं सहितः क्षुधैव।

॥ विश्वामित्र उवाच ॥ स्थाने भवेत् संशयः प्रेत्यभावे निःसंशयः कर्म्मणां वै विनाशः। अहं पुनर्व्रतनित्यः शमात्मा मूलं रक्ष्यं भक्षयिष्याम्यभक्ष्यं।

बुद्ध्यात्मके व्यक्तमस्तीति पुण्यं मोहात्मके यत्र यथा श्वभक्ष्ये। यद्यप्येतत् संशयात्मा चरामि नाहं भविष्यामि यथा त्वमेव।

॥ श्वपच उवाच ॥ गोपनीयमिदं दुःखमिति मे निश्चिता मतिः। दुष्कृतो ब्राह्मणः सन् यस्त्वामहमुपालभे।

॥ विश्वामित्र उवाच ॥ पिबन्त्येवोदकं गावो मण्डूकेषु रुवत्स्वपि। न तेऽधिकारो धर्म्मेऽस्ति माभूरात्मप्रशंसकः। ५४००

॥ श्वपच उवाच ॥ सुहृद्भूत्वा अनुशासे त्वां कृपा हि त्वयि मे द्विज। यदिदं श्रेय आधत्स्व मा लोभात् पापकं कृथा

॥ विश्वामित्र उवाच ॥ सुहृन्मे त्वं सुखेप्सुश्चेदापदो मां समुद्धर। जानेऽहं धर्म्मतोऽऽत्मानं शौनीमुत्सृज्य जाघनीं।

॥ श्वपच उवाच ॥ नैवोत्सहे भवते दातुमेतां नोपेक्षितुं ह्रियमाणं स्वमन्नं। उभौ स्यावः पापलोकावलिप्तौ दाता चाहं ब्राह्मणस्त्वं प्रतीच्छन्।

॥ विश्वामित्र उवाच ॥ भक्षाम्येतद्वृजिनं कर्म्म कृत्वा जीवंश्चरिष्यामि महापवित्रं । प्र पूतात्मा धर्म्ममेवाभिपत्स्ये यदे तयोर्गुरु तद्वै ब्रवीहि ।

॥ श्वपच उवाच ॥ आत्मैव साक्षी कुलधर्म्मकृत्ये त्वमेव जानासि यदत्र दुष्कृतं । यो ह्याद्रियाद्भक्ष्यमिति श्वमांसं मन्ये न तस्यास्ति विवर्ज्जनीयं । ५४०५

॥ विश्वामित्र उवाच ॥ उपादाने खादने चास्ति दोषः कार्य्यात्यये नित्यमत्रापवादः । यस्मिन् हिंसा नानृतं वाच्यलेशोऽभक्ष्यक्रिया यत्र न तद्गरीयः ।

॥ श्वपच उवाच ॥ यद्येष हेतुस्तव खादनेऽस्य न ते वेदः कारणं नार्य्यधर्म्मः । तस्माद्भक्ष्ये ऽभक्ष्ये वा द्विजेन्द्र दोषं न पश्यामि यथेदमत्र ।

॥ विश्वामित्र उवाच ॥ नैवातिपापं भक्ष्यमाणस्य दृष्टं सुरान्तु पीत्वा पततीति शब्दः । अन्योन्यकार्य्याणि यथा तथैव न पापमात्रेण कृतं हिनस्ति ।

॥ श्वपच उवाच ॥ अस्थानतो हीनतः कुत्सिताद्वा तद्विद्वांसं बाधते साधुवृत्तं । स्थानं पुनर्यो लभतेऽभिषङ्गात्तेनापि दण्डः सहितव्य एव ।

॥ भीष्म उवाच ॥ एवमुक्त्वा निववृते मातङ्गः कौशिकं तदा । विश्वामित्रो जहारैव कृतबुद्धिः श्वजाघनीं । ५४१०

ततो जग्राह स श्वाङ्गं जीवितार्थी महामुनिः । सदारस्तामुपाहृत्य वने भोक्तुमियेष सः ।

अथास्य बुद्धिरभवत् विधिनाऽहं श्वजाघनीं । भक्षयामि यथाकामं पूर्व्वं सन्तर्प्य देवताः ।

ततोऽग्निमुपसंहृत्य ब्राह्मेण विधिना मुनिः । ऐन्द्राग्नेयेन विधिना चरुं श्रपयत स्वयं ।

ततः समारभत् कर्म्म दैवं पित्र्यञ्च भारत । आहूय देवानिन्द्रादीन् भागं भागं विधिक्रमात् ।

एतस्मिन्नेव काले तु प्रववर्ष स वासवः । सञ्जीवयन् प्रजाः सर्व्वा जनयामास चौषधीः । ५४१५

विश्वामित्रोऽपि भगवांस्तपसा दग्धकिल्बिषः । कालेन महता सिद्धिमवाप परमाद्भुतां ।

स संहृत्य च तत् कर्म्म अनास्वाद्य च तद्धविः । तोषयामास देवांश्च पितॄंश्च द्विजसत्तमः ।

एवं विद्वानदीनात्मा व्यसनस्थो जिजीविषुः । सर्व्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत् ।

एतां बुद्धिं समास्थाय जीवितव्यं सदा भवेत् । जीवन् पुण्यमवाप्नोति पुरुषो भद्रमश्नुते ।

तस्मात् कौन्तेय विदुषा धर्म्माधर्म्मविनिश्चये । बुद्धिमास्थाय लोकेऽस्मिन् वर्त्तितव्यं कृतात्मना । ५४२०

इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि विश्वामित्रश्वपचसंवादे एकचत्वारिंशदधिकशततोऽध्यायः ॥ १४१ ॥

॥ युधिष्ठिर उवाच ॥ यदि घोरं समुद्दिष्टमश्रद्धेयमिवानृतं । अस्ति स्विद्दस्युमर्य्यादा यामहं परिवर्ज्जये ।

संमुह्यामि विषीदामि धर्म्मो मे शिथिलीकृते । उद्यमं नाधिगच्छामि कदाचित् परिसान्त्वयन् ।

॥ भीष्म उवाच ॥ नैतत् श्रुत्वा समादिव तव धर्म्मानुशासनं । प्रज्ञासमवहारोऽयं कविभिः संभृतं मधु ।

बह्व्यः प्रतिविधातव्याः प्रज्ञा राज्ञा ततस्ततः । नैकशाखेन धर्म्मेण यात्रैषा संप्रवर्त्तते ।

बुद्धिसंजननो धर्म्म आचारश्च सतां सदा । श्रेयो भवति कौरव्य सदा तद्विद्धि मे वचः । ५४२५

बुद्धिश्रेष्ठा हि राजानश्चरन्ति विजयैषिणः । धर्म्मः प्रतिविधातव्यो बुद्ध्या राज्ञा ततस्ततः ।

नैकशाखेन धर्म्मेण राज्ञो धर्म्मो विधीयते । दुर्ब्बलस्य कुतः प्रज्ञा पुरस्तादनुपाहृता ।
अद्वैधज्ञः पथि द्वैधे संशयं प्राप्तुमर्हति । बुद्धिद्वैधं वेदितव्यं पुरस्तादेव भारत ।
पार्श्वतः करणं प्राज्ञो विष्टम्भित्वा प्रकारयेत् । जनस्तच्चरितं धर्म्मं विजानात्यन्यथाऽन्यथा ।
अमिथ्याज्ञानिनः केचिन्मिथ्याविज्ञानिनः परे । तद्वै यथायथं बुद्ध्वा ज्ञानमाददते सतां । ५४२०
परिमुष्णन्ति शास्त्राणि धर्म्मस्य परिपन्थिनः । वैषम्यमर्थविद्यानां निरर्थाः ख्यापयन्ति ते ।
आजिजीविषवो विद्यां यशःकामा समन्ततः । ते सर्व्वे नृप पापिष्ठा धर्म्मस्य परिपन्थिनः ।
अपक्वमतयो मन्दा न जानन्ति यथायथं । यथा ह्यशास्त्रकुशलाः सर्व्वत्रायुक्तिनिष्ठिताः ।
परिमुष्णन्ति शास्त्राणि शास्त्रदोषानुदर्शिनः । विज्ञातमर्थं विद्यानां न सम्यगिति वर्त्तते ।
निन्दया परविद्यानां स्वविद्यां ख्यापयन्ति च । वागस्त्रा वाक्छुरीभूता दुग्धविद्याफला इव । ५४२५
तान् विद्यावणिजो विद्धि राक्षसानिव भारत । व्याजेन सद्भिर्व्विहितो धर्म्मस्ते परिहास्यति ।
न धर्म्मवचनं वाचा नैव बुद्ध्येति नः श्रुतं । इति वार्हस्पतं ज्ञानं प्रोवाच मघवा स्वयं ।
नत्वेव वचनं किञ्चिदनिमित्तादिहोच्यते । सुविनीतेन शास्त्रेण न व्यवस्यन्त्यथापरे ।
लोकयात्रामिहैके तु धर्म्मं प्राहुर्म्मनीषिणः । समुद्दिष्टं सतां धर्म्मं स्वयमूहेत पण्डितः ।
अमर्षाच्छास्त्रसम्मोहादविज्ञानाच्च भारत । शास्त्रं प्राज्ञस्य वदतः समूहे यात्यदर्शनं । ५४३०
आगतागमया बुद्ध्या वचनेन प्रशस्यते । अज्ञानाज्ज्ञानहेतुत्वाद्वचनं साधु मन्यते ।
अनया हृतमेवेदमिति शास्त्रमपार्थकं । दैतेयानुशनाः प्राह संशयच्छेदनं पुरा ।
ज्ञानमप्यपदेश्यं हि यथा नास्ति तथैव तत् । तं तथा छिन्नमूलेन सन्नोदयितुमर्हसि ।
अनव्यवहितं यो वा नेदं वाक्यमुपाश्नुते । उग्रायैव हि सृष्टोऽसि कर्म्मणे न त्वमीक्षसे ।
अङ्ग मामन्ववेक्षस्व राजन्याय बुभूषत । यथा प्रमुच्यते त्वन्या यदर्थं न प्रमोदते । ५४३५
अजोऽश्वः क्षत्रमित्येतत् सदृशं ब्रह्मणा कृतं । तस्मादभीक्ष्णं भूतानां यात्रा काचित् प्रसिध्यति ।
यस्त्ववध्यवधे दोषः स वध्यस्यावधे स्मृतः । सा चैव खलु मर्य्यादा यामयं परिवर्ज्जयेत् ।
तस्मात्तीक्ष्णः प्रजा राजा स्वधर्म्मे स्थापयेत्ततः । अन्योन्यं भक्षयन्तो हि प्रचरेयुर्वृका इव ।
यस्य दस्युगणा राष्ट्रे ध्वाङ्क्षा मत्स्यान् जलादिव । विहरन्ति परस्वानि स वै क्षत्रियपांसनः ।
कुलीनान् सचिवान् कृत्वा वेदविद्यासमन्वितान् । प्रशाधि पृथिवीं राजन् प्रजा धर्म्मेण पालयन् । ५४४०
विहीनं कर्म्मणाऽन्यायं यः प्रगृह्णाति भूमिपः । उपायस्याविशेषज्ञं तद्वै क्षत्रं नपुंसकं ।
नैवोग्रं नैव चानुग्रं धर्म्मेणेह प्रशस्यते । उभयं न व्यतिक्रामेदुग्रो भूत्वा मृदुर्भव ।
कष्टः क्षत्रियधर्म्मोऽयं सौहृदं त्वयि मे स्थितं । उग्रकर्म्मणि सृष्टोऽसि तस्माद्राज्यं प्रशाधि वै ।
अशिष्टनिग्रहो नित्यं नित्यं शिष्टस्य पालनं । एवं शक्रोऽब्रवीद्धीमानापत्सु भरतर्षभ ।
॥ युधिष्ठिर उवाच ॥ अस्ति चेदिह मर्य्यादा यामन्या नाभिलङ्घयेत् । पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह । ५४४१

॥ भीष्म उवाच ॥ ब्राह्मणांश्चैव सेवेत विद्यावृद्धांस्तपस्विनः। श्रुतचारित्रवृत्ताढ्यान् पवित्रं श्रेष्ठमुत्तमम्।
या देवतासु वृत्तिस्ते साऽस्तु विप्रेषु नित्यदा। क्रुद्धैर्हि विप्रैः कर्म्माणि कृतानि बहुधा नृप।
प्रीत्या यशो भवेन्मुख्यमप्रीत्या परमं भयं। प्रीता ह्यमृतवद्विप्राः क्रुद्धाश्चैव विषं यथा।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥
॥ युधिष्ठिर उवाच ॥ पितामह महाप्राज्ञ सर्व्वशास्त्रविशारद। शरणं पालयानस्य यो धर्म्मस्तं ब्रवीहि मे।
॥ भीष्म उवाच ॥ महान् धर्म्मो महाराज शरणागतपालने। अर्हः प्रष्टुं भवांश्चैव प्रश्नं भरतसत्तम। ५५६०
शिबिप्रभृतयो राजन्राजानः शरणागतान्। परिपाल्य महात्मानः संसिद्धिं परमां गताः।
श्रूयते च कपोतेन शत्रुः शरणमागतः। पूजितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः।
॥ युधिष्ठिर उवाच ॥ कथं कपोतेन पुरा शत्रुः शरणमागतः। स्वमांसं भोजितः कां च गतिं लेभे स भारत।
॥ भीष्म उवाच ॥ शृणु राजन् कथां दिव्यां सर्व्वपापप्रणाशिनीं। नृपतेर्मुचुकुन्दस्य कथितां भार्गवेण वै।
इममर्थं पुरा पार्थ मुचुकुन्दो नराधिपः। भार्गवं परिपप्रच्छ प्रणतः पुरुषर्षभ। ५५६५
तस्मै शुश्रूषमाणाय भार्गवोऽकथयत् कथां। इमां यथा कपोतेन सिद्धिः प्राप्ता नराधिप।
॥ मुनिरुवाच ॥ धर्म्मनिश्चयसंयुक्तां कामार्थसहितां कथां। शृणुष्वावहितो राजन् गदतो मे महाभुज।
कश्चित् क्षुद्रसमाचारः पृथिव्यां कालसम्मितः। विचचार महारण्ये घोरः शकुनिलुब्धकः।
काकोल इव कृष्णाङ्गो रूक्षः कालसम्मितः। दीर्घजङ्घो ह्रस्वपादो महावक्त्रो महाहनुः।
नैव तस्य सुहृत् कश्चिन्न सम्बन्धी न बान्धवाः। स हि तैः संपरित्यक्तस्तेन रौद्रेण कर्म्मणा। ५५७०
नरः पापसमाचारस्त्यक्तव्यो दूरतो बुधैः। आत्मानं योऽभिसन्धत्ते सोऽन्यस्य स्यात् कथं हितः।
ये नृशंसा दुरात्मानः प्राणिप्राणहरा नराः। उद्वेजनीया भूतानां व्याला इव भवन्ति ते।
स वै जालकमादाय द्विजान् हत्वा वने सदा। चकार विक्रयं तेषां पतङ्गानां जनाधिप।
एवन्तु वर्त्तमानस्य तस्य वृत्तिं दुरात्मनः। अगमत् सुमहान् कालो न चाधर्म्ममबुध्यत।
तस्य भार्य्यासहायस्य रममाणस्य शाश्वतं। दैवयोगविमूढस्य नान्या वृत्तिररोचत। ५५७५
ततः कदाचित्तस्याथ वनस्थस्य समन्ततः। पातयन्निव वृक्षांस्तान् सुमहान् वातसम्भ्रमः।
मेघसङ्कुलमाकाशं विद्युन्मण्डलमण्डितं। सञ्छन्नन्तु मुहूर्त्तेन नौसार्थैरिव सागरः।
वारिधारासमूहेन संप्रहृष्टः शतक्रतुः। क्षणेन पूरयामास सलिलेन वसुन्धरां।
ततो धाराकुले काले संभ्रमन्नष्टचेतनः। शीतार्त्तस्तद्वनं सर्व्वमाकुलेनान्तरात्मना।
नैव निम्नं स्थलं वाऽपि सोऽविन्दत विहङ्गहा। पूरितो हि जलौघेन तस्य मार्गो वनस्य तु। ५५८०
पक्षिणो वर्षवेगेन हता लीनास्तदाऽभवन्। मृगाः सिंहवराहाश्च स्थलमाश्रित्य शेरते।
महता वातवर्षेण त्रासितास्ते वनौकसः। भयार्त्ताश्च क्षुधार्त्ताश्च बभ्रमुः सहिता वने।
स तु शीतहतैर्गात्रैर्जगाम न तस्थिवान्। ददर्श पतितां भूमौ कपोतीं शीतविह्वलां।
दृष्ट्वार्त्तोऽपि हि पापात्मा स तां पञ्जरकेऽक्षिपत्। स्वयं दुःखाभिभूतोऽपि दुःखमेवाकरोत् परे।

पापात्मा पापकारित्वात् पापमेव चकार सः । सोऽपश्यद्गगनस्पर्शं मेघनीलं वनस्पतिं । ५४८५
सेव्यमानं विहङ्गौघैश्छायावासफलार्थिभिः । धात्रा परोपकाराय स साधुरिव निर्म्मितः ।
अथाभवत् क्षणेनैव वियद्विमलतारकं । महत् सर इवोत्फुल्लं कुमुदच्छुरितोदकं ।
ताराढ्यं कुमुदाकारमाकाशं निर्म्मलं बहु । घनैर्मुक्तं नभो दृष्ट्वा लुब्धकः शीतविक्लवः ।
दिशो विलोकयामास विगाढां प्रेक्ष्य शर्व्वरीं । दूरतो मे निवेशश्च अस्माद्देशादिति प्रभो ।
कृतबुद्धिर्द्रुमे तस्मिन् वस्तुं तां रजनीं ततः । साञ्जलिः प्रणतिं कृत्वा वाक्यमाह वनस्पतिं । ५४९०
शरणं यामि यान्यस्मिन् दैवतानि वनस्पतौ । स शिलायां शिरः कृत्वा पर्णान्यास्तीर्य्य भूतले ।
दुःखेन महताविष्टस्ततः सुष्वाप पक्षिहा ।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि कपोतलुब्धकसंवादे त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥
॥ भीष्म उवाच ॥ अथ वृक्षस्य शाखायां विहगः ससुहृज्जनः । दीर्घकालोषितो राजंस्तत्र चित्रतनूरुहः ।
तस्य काल्यं गता भार्य्या चरितुं नाभ्यवर्त्तत । प्राप्तां च रजनीं दृष्ट्वा स पक्षी पर्य्यतप्यत ।
वातवर्षं महच्चासीन्न चागच्छति मे प्रिया । किन्नु तत्कारणं येन साऽद्यापि न निवर्त्तते । ५४९५
अपि स्वस्ति भवेत्तस्याः प्रियाया मम कानने । तया विरहितं हीदं शून्यमद्य गृहं मम ।
पुत्रपौत्रवधूभृत्यैराकीर्णमपि सर्व्वतः । भार्य्याहीनं गृहस्थस्य शून्यमेव गृहं भवेत् ।
न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते । गृहन्तु गृहिणीहीनमरण्यसदृशं मतं ।
यदि सा रक्तनेत्रान्ता चित्राङ्गी मधुरस्वरा । अद्य नायाति मे कान्ता न कार्य्यं जीवितेन मे ।
न भुङ्क्ते मय्यभुक्ते या नास्नाते स्नाति सुव्रता । नातिष्ठत्युपतिष्ठेत शेते च शयिते मयि । ५५००
हृष्टे भवति सा हृष्टा दुःखिते मयि दुःखिता । प्रोषिते दीनवदना क्रुद्धे च प्रियवादिनी ।
पतिव्रता पतिगतिः पतिप्रियहिते रता । यस्य स्यात्तादृशी भार्य्या धन्यः स पुरुषो भुवि ।
सा हि श्रान्तं क्षुधार्त्तञ्च जानीते मां तपस्विनी । अनुरक्ता स्थिरा चैव भक्ता स्निग्धा यशस्विनी ।
वृक्षमूलेऽपि दयिता यस्य तिष्ठति तद्गृहं । प्रासादोऽपि तया हीनः कान्तार इति निश्चितं ।
धर्म्मार्थकामकालेषु भार्य्या पुंसः सहायिनी । विदेशगमने चास्य सैव विश्वासकारिका । ५५०५
भार्य्या हि परमो ह्यर्थः पुरुषस्येह पठ्यते । असहायस्य लोकेऽस्मिन् लोकयात्रा सहायिनी ।
तथा रोगाभिभूतस्य नित्यं कृच्छ्रगतस्य च । नास्ति भार्य्यासमं किञ्चिन्नरस्यार्त्तस्य भेषजं ।
नास्ति भार्य्यासमो बन्धुर्नास्ति भार्य्यासमा गतिः । नास्ति भार्य्यासमो लोके सहायो धर्म्मसंग्रहे ।
यस्य भार्य्या गृहे नास्ति साध्वी च प्रियवादिनी । अरण्यं तेन गन्तव्यं यथाऽरण्यं तथा गृहं ।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि भार्य्याप्रशंसायां चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥
॥ भीष्म उवाच ॥ एवं विलपतस्तस्य श्रुत्वा तु करुणं वचः । गृहीता शकुनिघ्नेन कपोती वाक्यमब्रवीत् । ५५१०
॥ कपोत्युवाच ॥ अहो ऽतीव सुभाग्याऽहं यस्या मे दयितः पतिः । असतो वा सतो वाऽपि गुणानेवं प्रभाषते ।
न सा स्त्री ह्यभिमन्तव्या यस्यां भर्त्ता न तुष्यति । तुष्टे भर्त्तरि नारीणां तुष्टाः स्युः सर्व्वदेवताः ।

अग्निसाक्षिकमित्येव भर्त्ता वै दैवतं परं। दावाग्निनेव निर्द्दग्धा सपुष्पस्तवका लता।
भस्मीभवति सा नारी यस्या भर्त्ता न तुष्यति। इति सञ्चिन्त्य दुःखार्त्ता भर्त्तारं दुःखितं तदा।
कपोती लुब्धकेनापि गृहीता वाक्यमब्रवीत्। हन्त वक्ष्यामि ते श्रेयः श्रुत्वा तु कुरु तत्तथा। ५५१५
शरणागतसन्त्राता भव कान्त विशेषतः। एष शाकुनिकः शेते तव वासं समाश्रितः।
शीतार्त्तस्य क्षुधार्त्तस्य पूजामस्मै समाचर। यो हि कश्चिद्द्विजं हन्याद्गां वा लोकस्य मातरं।
शरणागतञ्च यो हन्यात्तुल्यं तेषाञ्च पातकं। अस्माकं विहिता वृत्तिः कापोती जातिधर्म्मतः।
सा न्याय्यात्मवता नित्यं त्वद्विधेनानुवर्त्तितुं। यस्तु धर्म्मं यथाशक्ति गृहस्थो ह्यनुवर्त्तते।
स प्रेत्य लभते लोकानक्षयानिति शुश्रुम। स त्वं सन्तानवानद्य पुत्रवानसि च द्विज। ५५२०
तत्स्वदेहे दयां त्यक्त्वा धर्म्मार्थौ परिगृह्य च। पूजामस्मै प्रयुङ्क्ष्व त्वं प्रीयेतास्य मनो यथा।
मत्कृते मा च सन्तापं कुर्व्वीथास्त्वं विहङ्गम। शरीरयात्राकृत्यार्थमन्यान्दारानुपैष्यसि।
इति सा शकुनी वाक्यं पञ्जरस्था तपस्विनी। अतिदुःखान्विता प्राह भर्त्तारं समुदीक्ष्य च।

इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि कपोतलुब्धकसंवादे पञ्चचत्वारिंशदधिकशततमोऽध्यायः॥ १४५॥

॥ भीष्म उवाच॥ स पत्न्या वचनं श्रुत्वा धर्म्मयुक्तिसमन्वितं। हर्षेण महता युक्तो वाष्पव्याकुललोचनः।
तं वै शाकुनिकं दृष्ट्वा विधिदृष्टेन कर्म्मणा। स पक्षी पूजयामास यत्नात्तं पक्षिजीविनं। ५५२५
उवाच स्वागतं तेऽद्य ब्रूहि किं करवाणि ते। सन्तापश्च न कर्त्तव्यः स्वगृहे वर्त्तते भवान्।
तद्ब्रवीतु भवान् क्षिप्रं किं करोमि किमिच्छसि। प्रणयेन ब्रवीमि त्वां त्वं हि नः शरणागतः।
अरावप्युचितं कार्य्यमातिथ्यं गृहमागते। छेत्तुमप्यागते च्छायां नोपसंहरते द्रुमः।
शरणागतस्य कर्त्तव्यमातिथ्यं हि प्रयत्नतः। पञ्चयज्ञप्रवृत्तेन गृहस्थेन विशेषतः।
पञ्चयज्ञांस्तु यो मोहान्न करोति गृहाश्रमे। तस्य नायं न च परो लोको भवति धर्म्मतः। ५५३०
तद्ब्रूहि मां सुविस्रब्धो यत्त्वं वाचा वदिष्यसि। तत् करिष्याम्यहं सर्व्वं मा त्वं शोके मनः कृथाः।
तस्य तद्वचनं श्रुत्वा शकुनेर्लुब्धकोऽब्रवीत्। बाधते खलु मे शीतं सन्त्राणं हि विधीयतां।
एवमुक्तस्ततः पक्षी पर्णान्यास्तीर्य्य भूतले। यथाशक्त्या हि पर्णेन ज्वलनार्थं द्रुतं ययौ।
गत्वाऽङ्गारकर्म्मान्तं गृहीत्वाऽग्निमथागमत्। ततः शुष्केषु पर्णेषु पावकं सोऽप्यदीपयत्।
स संदीप्तं महत्कृत्वा तमाह शरणागतं। प्रतापय सुविस्रब्धः स्वगात्राण्यकुतोभयः। ५५३५
स तथोक्तस्तथेत्युक्त्वा लुब्धो गात्राण्यतापयत्। अग्निप्रत्यागतप्राणस्ततःप्राह विहङ्गमं।
हर्षेण महताविष्टो वाक्यं व्याकुललोचनः। तथैनं शकुनिं दृष्ट्वा विधिदृष्टेन कर्म्मणा।
दत्तमाहारमिच्छामि त्वया क्षुद्बाधते हि मां। स तद्वचः प्रतिश्रुत्य वाक्यमाह विहङ्गमः।
न मेऽस्ति विभवो येन नाशयेयं क्षुधान्तव। उत्पन्नेन हि जीवामो वयं नित्यं वनौकसः।
सञ्चयो नास्ति चास्माकं मुनीनामिव भोजने। इत्युक्त्वा तं तदा तत्र विवर्णवदनोऽभवत्। ५५४०
कथं नु खलु कर्त्तव्यमिति चिन्तापरस्तदा। बभूव भरतश्रेष्ठ गर्हयन् वृत्तिमात्मनः।

मुहूर्त्ताल्लब्धसंज्ञस्तु स पक्षी पक्षिघातिनं । उवाच तर्पयिष्ये त्वां मुहूर्त्तं प्रतिपालय ।
इत्युक्त्वा शुष्कपर्णैस्तु समुज्ज्वाल्य हुताशनं । हर्षेण महताविष्टः स पक्षी वाक्यमब्रवीत् ।
ऋषीणां देवतानाञ्च पितॄणाञ्च महात्मनां । श्रुतः पूर्व्वं मया धर्म्मो महानतिथिपूजने ।
कुरुष्वानुग्रहं सौम्य सत्यमेतद्ब्रवीमि ते । निश्चिता खलु मे बुद्धिरतिथिप्रतिपूजने ।   ५५७५
ततः कृतप्रतिज्ञो वै स पक्षी प्रहसन्निव । तमग्निं त्रिः परिक्रम्य प्रविवेश महामतिः ।
अग्निमध्ये प्रविष्टन्तु लुब्धो दृष्ट्वा तु पक्षिणं । चिन्तयामास मनसा किमिदं वै कृतं मया ।
अहो मम नृशंसस्य गर्हितस्य स्वकर्म्मणा । अधर्म्मः सुमहान् घोरो भविष्यति न संशयः ।
एवं बहुविधं भूरि विललाप स लुब्धकः । गर्हयन् स्वानि कर्म्माणि द्विजं दृष्ट्वा तथागतं ।
इति श्रीमहाभारते शान्तिपर्व्वण्यापद्धर्म्मपर्व्वणि कपोतलुब्धकसंवादे षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥
॥ भीष्म उवाच ॥ ततः स लुब्धकः पश्यन् क्षुधयाऽभिपरिप्लुतः । कपोतमग्निपतितं वाक्यं पुनरुवाच ह ।   ५५८०
किमीदृशं नृशंसेन मया कृतमबुद्धिना । भविष्यति हि मे नित्यं पातकं कृतजीविनः ।
स विनिन्दंस्तथात्मानं पुनः पुनरुवाच ह । अविश्वास्यः सुदुर्ब्बुद्धिः सदा निकृतिनिश्चयः ।
शुभं कर्म्म परित्यज्य सोऽहं शकुनिलुब्धकः । नृशंसस्य ममाद्यायं प्रत्यादेशो न संशयः ।
दत्तः स्वमांसं दहता कपोतेन महात्मना । सोऽहं त्यक्ष्ये प्रियान् प्राणान् पुत्रान्दारान् विसृज्य च ।
उपदिष्टो हि मे धर्म्मः कपोतेन महात्मना । अद्यप्रभृति देहं स्वं सर्व्वभोगैर्व्विवर्ज्जितं ।   ५५८५
यथा स्वल्पं सरो ग्रीष्मे शोषयिष्याम्यहं तथा । क्षुत्पिपासातपसहः कृशो धमनिसन्ततः ।
उपवासैर्ब्बहुविधैश्चरिष्ये पारलौकिकं । अहो देहप्रदानेन दर्शिताऽतिथिपूजना ।
तस्माद्धर्म्मं चरिष्यामि धर्म्मो हि परमा गतिः । दृष्टो धर्म्मो हि धर्म्मिष्ठे यादृशो विहगोत्तमे ।
एवमुक्त्वा विनिश्चित्य रौद्रकर्म्मा स लुब्धकः । महाप्रस्थानमाश्रित्य प्रययौ शंसितव्रतः ।
ततो यष्टिं शलाकाश्च जालकं पञ्जरन्तथा । ताञ्च बद्धां कपोतीं स प्रमुच्य विससर्ज्ज ह ।   ५५९०
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि कपोतलुब्धकसंवादे सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥
॥ भीष्म उवाच ॥ ततो गते शाकुनिके कपोती प्राह दुःखिता । संस्मृत्य सा च भर्त्तारं रुदती शोककर्षिता ।
नाहन्ते विप्रियं कान्त कदाचिदपि संस्मरे । सर्व्वाऽपि विधवा नारी बहुपुत्राऽपि शोचते ।
शोच्या भवति बन्धूनां पतिहीना तपस्विनी । लालिताऽहं त्वया नित्यं बहुमानाच्च पूजिता ।
वचनैर्म्मधुरैः स्निग्धैरसंक्लिष्टमनोहरैः । कन्दरेषु च शैलानां नदीनां निर्झरेषु च ।
द्रुमाग्रेषु च रम्येषु रमिताऽहं त्वया सह । आकाशगमने चैव विहृताऽहं त्वया सुखं ।   ५५९५
रमामि स्म पुरा कान्त तन्मे नास्त्यद्य किञ्चन । मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य हि दातारं भर्त्तारं का न पूजयेत् । नास्ति भर्तृसमो नाथो नास्ति भर्तृसमं सुखं ।
विसृज्य धनसर्व्वस्वं भर्त्ता वै शरणं स्त्रियाः । न कार्य्यमिह मे नाथ जीवितेन त्वया विना ।
पतिहीना तु का नारी सती जीवितुमुत्सहेत् । एवं विलप्य बहुधा करुणं सा सुदुःखिता ।

पतिव्रता सम्प्रदीप्तं प्रविवेश हुताशनं। तत्रस्थिमाङ्गदधरं भर्त्तारं साऽन्वपश्यत। ५५७०
विमानस्थं सुकृतिभिः पूज्यमानं महात्मभिः। चित्रमाल्याम्बरधरं सर्व्वाभरणभूषितं।
विमानशतकोटीभिरावृतं पुण्यकर्म्मभिः। ततः स्वर्गं गतः पक्षी विमानवरमास्थितः।
कर्म्मणा पूजितस्तत्र रेमे स सह भार्य्यया।

इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि कपोतलुब्धकसंवादे अष्टाचत्वारिंशदधिकशततमोऽध्यायः॥ १४८ ॥

॥ भीष्म उवाच ॥ विमानस्थौ तु तौ राजन् लुब्धकः खे ददर्श ह। दृष्ट्वा तौ दम्पती दुःखादचिन्तयत तां गतिं।
ईदृशेनैव तपसा गच्छेयं परमां गतिं। इति बुद्ध्या विनिश्चित्य गमनायोपचक्रमे। ५५७५
महाप्रस्थानमाश्रित्य लुब्धकः पक्षिजीवकः। निश्चेष्टो मरुदाहारो निर्म्ममः स्वर्गकाङ्क्षया।
ततोऽपश्यत् सुविस्तीर्णं हृद्यं पद्मविभूषितं। नानापक्षिगणाकीर्णं सरः शीतजलं शिवं।
पिपासार्त्तोऽपि तद्दृष्ट्वा तृप्तः स्यान्नात्र संशयः। उपवासकृशोऽत्यर्थं स तु पार्थिव लुब्धकः।
अनवेक्ष्यैव संहृष्टः श्वापदाध्युषितं वनं। महान्तं निश्चयं कृत्वा लुब्धकः प्रविवेश ह।
प्रविशन्नेव स वनं निगृहीतः स कण्टकैः। स कण्टकैर्व्विभिन्नाङ्गो लोहितार्द्रीकृतच्छविः। ५५८०
बभ्राम तस्मिन् विजने नानामृगसमाकुले। ततो द्रुमाणां महतां पवनेन वने तदा।
उदतिष्ठत संघर्षात् सुमहान् हव्यवाहनः। तद्वनं वृक्षसम्पूर्णं लताविटपसंकुलं।
ददाह पावकः क्रुद्धो युगान्ताग्निसमप्रभः। स्वज्वालैः पवनोद्धूतैर्व्विस्फुलिङ्गैः समन्ततः।
ददाह तद्वनं घोरं मृगपक्षिसमाकुलं। ततः स देहमोक्षार्थं सम्प्रहृष्टेन चेतसा।
अभ्यधावत वर्द्धन्तं पावकं लुब्धकस्तदा। ततस्तेनाग्निना दग्धो लुब्धको नष्टकल्मषः। ५५८५
जगाम परमां सिद्धिं ततो भरतसत्तम। ततः स्वर्गस्थमात्मानमपश्यद्विगतज्वरः।
यक्षगन्धर्व्वसिद्धानां मध्ये भ्राजन्तमिन्द्रवत्। एवं खलु कपोतश्च कपोती च पतिव्रता।
लुब्धकेन सह स्वर्गं गताः पुण्येन कर्म्मणा। याऽपि चैवंविधा नारी भर्त्तारमनुवर्त्तते।
विराजते हि सा क्षिप्रं कपोतीव दिविस्थिता। एवमेतत् पुरावृत्तं लुब्धकस्य महात्मनः।
कपोतस्य च धर्म्मिष्ठा गतिः पुण्येन कर्म्मणा। यश्चेदं शृणुयान्नित्यं यश्चेदं परिकीर्त्तयेत्। ५५९०
नाशुभं विद्यते तस्य मनसाऽपि प्रमादतः। युधिष्ठिर महानेष धर्म्मो धर्म्मभृताम्वर।
गोघ्नेष्वपि भवेदस्मिन्निष्कृतिः पापकर्म्मणः। न निष्कृतिर्भवेत्तस्य यो हन्याच्छरणागतं।
इतिहासमिमं श्रुत्वा पुण्यं पापप्रणाशनं। न दुर्गतिमवाप्नोति स्वर्गलोकञ्च गच्छति।

इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि कपोतलुब्धकसंवादे ऊनपञ्चाशदधिकशततमोऽध्यायः॥ १४९ ॥

॥ युधिष्ठिर उवाच ॥ अबुद्धिपूर्व्वं यत्पापं कुर्य्याद्भरतसत्तम। मुच्यते स कथं तस्मादेतत् सर्व्वं ब्रवीहि मे।
॥ भीष्म उवाच ॥ अत्र ते वर्त्तयिष्यामि पुराणमृषिसंस्तुतं। इन्द्रोतः शौनको विप्रो यदाह जनमेजयं। ५५९५
आसीद्राजा महावीर्य्यः पारीक्षिज्जनमेजयः। अबुद्धिपूर्व्वमागच्छत् ब्रह्महत्यां महीपतिः।
ब्राह्मणाः सर्व्व एवैते तत्यजुः सपुरोहिताः। स जगाम वनं राजा दह्यमानो दिवानिशं।

प्रजाभिः स परित्यक्तश्चकार कुशलं महत् । अतिवेलं तपस्तेपे दह्यमानः स मन्युना ।
ब्रह्महत्यापनोदार्थमपृच्छद्ब्राह्मणान् बहून् । पर्य्यटन् पृथिवीं कृत्स्नां देशे देशे नराधिपः ।
तत्रेतिहासं वक्ष्यामि धर्म्मस्यास्योपबृंहणं । दह्यमानः पापकृत्या जगाम जनमेजयः । ५६००
चरिष्यमाण इन्द्रोतं शौनकं संशितव्रतं । समासाद्योपजग्राह पादयोः परिपीडयन् ।
ऋषिर्दृष्ट्वा नृपं तत्र जगर्हे सुभृशं तदा । कर्त्ता पापस्य महतो भ्रूणहा किमिहागतः ।
किं तवास्मासु कर्त्तव्यं मा मां स्प्राक्षीः कथञ्चन । गच्छ गच्छ न ते स्थानं प्रीणात्यस्मानिति ब्रुवन् ।
रुधिरस्येव ते गन्धः शवस्येव च दर्शनं । अशिवः शिवसङ्काशो मृतो जीवन्निवाटसि ।
ब्रह्ममृत्युरशुद्धात्मा पापमेवानुचिन्तयन् । प्रबुध्यसे प्रस्वपिषि वर्त्तसे परमेऽसुखे । ५६०५
मोघन्ते जीवितं राजन् परिक्लिष्टश्च जीवसि । पापायैव हि सृष्टोऽसि कर्म्मणेह यवीयसे ।
बहुकल्याणमिच्छन्त ईहन्ते पितरः सुतान् । तपसा देवतेज्याभिर्वन्दनेन तितिक्षया ।
पितृवंशमिमं पश्य त्वत्कृते नरकं गतं । निरर्थाः सर्व्व एवैषामाशाबन्धास्त्वदाश्रयाः ।
यान् पूजयन्तो विन्दन्ति स्वर्गमायुर्यशः प्रजाः । तेषु त्वं सततं द्वेष्टा ब्राह्मणेषु निरर्थकः ।
इमं लोकं विमुच्य त्वमवाङ्मूर्द्धा पतिष्यसि । अशाश्वतीः शाश्वतीश्च समाः पापेन कर्म्मणा । ५६१०
अर्द्यमानो यत्र गृध्रैः शितिकण्ठैरयोमुखैः । ततश्च पुनरावृत्तः पापयोनिं गमिष्यसि ।
यदिदं मन्यसे राजन्नायमस्ति कुतः परः । प्रतिस्मारयितारस्त्वां यमदूता यमक्षये ।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि इन्द्रोतपारीक्षितीये पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥
॥ भीष्म उवाच ॥ एवमुक्तः प्रत्युवाच तं मुनिं जनमेजयः । गर्ह्यं भवान् गर्हयते निन्द्यं निन्दति मां पुनः ।
किं कार्य्यं मां धिक् कुरुते तस्मात्त्वाऽहं प्रसादये । सर्व्वं हीदं दुष्कृतं मे ज्वलाम्यग्नाविवाहितः ।
स्वकर्म्माण्यभिसन्धाय नाभिनन्दति मे मनः । प्राप्य घोरं भयं नूनं मया वैवस्वतादपि । ५६१५
तत्तु शल्यमनिर्हृत्य कथं शक्ष्यामि जीवितुं । सर्व्वं मन्युं विनीय त्वमभिमां वद शौनक ।
महानायं ब्राह्मणानां भूयो वक्ष्यामि साम्प्रतं । अस्तु शेषं कुलस्यास्य मा पुराऽभूदिदं कुलं ।
न हि नो ब्रह्मशप्तानां शेषं भवितुमर्हति । स्तुतीरलभमानानां संविदं वेदनिश्चितान् ।
निर्व्विद्यमानस्त्वात्मानं भूयो वक्ष्यामि शाश्वतं । भूयश्चैवाभिरक्षन्तु निर्द्धनान् निर्जना इव ।
न ह्ययज्ञा अमुं लोकं प्राप्नुवन्ति कथञ्चन । अपातान् प्रतितिष्ठन्ति पुलिन्दशबरा इव । ५६२०
अविज्ञायैव मे प्रज्ञां बालस्येव स पण्डितः । ब्रह्मन् पितेव पुत्रस्य प्रीतिमान् भव शौनक ।
॥ शौनक उवाच ॥ किमाश्चर्य्यं यदप्राज्ञो बहु कुर्य्यादसाम्प्रतं । इति वै पण्डितो भूत्वा भूतानां नानुकुप्यते ।
प्रज्ञाप्रासादमारुह्य अशोच्यः शोचते जनान् । जगतीस्थानिवाद्रिस्थः प्रज्ञया प्रतिपत्स्यति ।
न चोपलभ्यते तेन न चाश्चर्य्याणि कुर्व्वते । निर्व्विण्णात्मा परोक्षो वा धिक्कृतः सर्व्वसाधुषु ।
विदितं भवतो वीर्य्यं माहात्म्यं वेद आगमे । कुरुष्वेह यथाशान्ति ब्रह्मा शरणमस्तु ते । ५६२५
तद्वै पारत्रिकं तात ब्राह्मणानामकुप्यतां । अथवा तप्यसे पापे धर्म्ममेवानुपश्य वै ।

॥ जनमेजय उवाच ॥ अनुतप्ये च पापेन न च धर्म्मं विलोपये । बुभूषुं भजमानञ्च प्रीतिमान् भव शौनक ।
॥ शौनक उवाच ॥ छित्त्वा दम्भञ्च मानञ्च प्रीतिमिच्छामि ते नृप । सर्व्वभूतहिते तिष्ठ धर्म्मञ्चैव प्रतिस्मरन् ।
न भयान्न च कार्पण्यान्न लोभात्त्वामुपाह्वये । तां मे दैवीं गिरं सत्यां शृणु त्वं ब्राह्मणैः सह ।
सोऽहं न केनचिच्चार्थी त्वाञ्च धर्म्मादुपाह्वये । क्रोशतां सर्व्वभूतानां हाहाधिगिति जल्पतां । ५५३०
वक्ष्यन्ति मामधर्म्मज्ञं त्यक्ष्यन्ति सुहृदो जनाः । ता वाचः सुहृदः श्रुत्वा संज्वरिष्यन्ति मे भृशं ।
केचिदेव महाप्राज्ञाः प्रतिज्ञास्यन्ति तत्त्वतः । जानीहि मे कृतं तात ब्राह्मणान् प्रति भारत ।
यथा ते मत्कृते क्षेमं लभन्ते ते तथा कुरु । प्रतिजानीहि चाद्रोहो ब्राह्मणानां नराधिप ।
॥ जनमेजय उवाच ॥ नैव वाचा न मनसा पुनर्ज्जातु न कर्म्मणा । द्रोग्धाऽस्मि ब्राह्मणान् विप्र चरणावपि ते स्पृशे ।

इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि इन्द्रोतपारीक्षितीये एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

॥ शौनक उवाच ॥ तस्मात्तेऽहं प्रवक्ष्यामि धर्म्ममावृत्तचेतसे । श्रीमान्महाबलस्तुष्टः स्वयं धर्म्ममवेक्षसे । ५५३५
पुरस्ताद्दारुणो भूत्वा सुचित्रतरमेव तत् । अनुगृह्णाति भूतानि स्वेन वृत्तेन पार्थिवः ।
कृत्स्नं नूनं स दहति इति लोको व्यवस्यति । यच्च त्वं तादृशो भूत्वा धर्म्ममेवानुपश्यसि ।
हित्वा तु सुचिरं भक्ष्यं भोज्यांश्च तप आस्थितः । इत्येतदभिभूतानामद्भुतं जनमेजय ।
योऽदुर्लभो भवेद्दाता कृपणो वा तपोधनः । अनाश्चर्य्यं तदित्याहुर्नातिदूरेण वर्त्तते ।
एतदेव हि कार्पण्यं समग्रमसमीक्षितं । यच्चेत् समीक्षयैव स्यात् भवेत्तस्मिंस्तता गुणः । ५५४०
यज्ञो दानं दया वेदाः सत्यञ्च पृथिवीपते । पञ्चैतानि पवित्राणि षष्ठं सुचरितं तपः ।
तदेव राज्ञां परमं पवित्रं जनमेजय । तेन सम्यग्गृहीतेन श्रेयांसं धर्म्ममाप्स्यसि ।
पुण्यदेशाभिगमनं पवित्रं परमं स्मृतं । अत्राप्युदाहरन्तीमां गाथां गीतां ययातिना ।
यो मर्त्त्यः प्रतिपद्येत आयुर्जीवितमात्मनः । यज्ञमेकान्ततः कृत्वा तत् संन्यस्य तपश्चरेत् ।
पुण्यमाहुः कुरुक्षेत्रं कुरुक्षेत्रात् सरस्वतीं । सरस्वत्याश्च तीर्थानि तीर्थेभ्यश्च पृथूदकं । ५५४५
यत्रावगाह्य पीत्वा च नैनं श्वोमरणं तपेत् । महासरः पुष्कराणि प्रभासोत्तरमानसे ।
कालोदकञ्च गन्ताऽसि लब्धायुर्ज्जीविते पुनः । सरस्वतीदृषद्वत्योः सङ्गमो मानसः सरः ।
स्वाध्यायशीलः स्थानेषु सर्व्वेष्वेवमुपस्पृशेत् । त्यागधर्म्मः पवित्राणां संन्यासं मनुरब्रवीत् ।
अत्राप्युदाहरन्तीमा गाथाः सत्यवता कृताः । यथा कुमारः सत्यो वै नैव पुण्यो न पापकृत् ।
न ह्यस्ति सर्व्वभूतेषु दुःखमस्मिन् कुतः सुखं । एवं प्रकृतिभूतानां सर्व्वसंसर्गयायिनां । ५५५०
त्यजतां जीवितं श्रेयो निवृत्ते पुण्यपातके । यत्त्वेव राज्ञो ज्यायिष्ठं कार्य्याणां तद्ब्रवीमि ते ।
बलेन संविभागैश्च जय स्वर्गं जनेश्वर । यस्यैव बलमोजश्च स धर्म्मस्य प्रभुर्नरः ।
ब्राह्मणार्थं सुखार्थं हि त्वं पाहि वसुधां नृप । यथैवैतान् पुराऽक्षेप्सीस्तथैवैतान् प्रसादय ।
अपि धिक्क्रियमाणोऽपि त्यज्यमानोऽप्यनेकधा । आत्मनो दर्शनाद्विप्रान्न हन्ताऽस्मीति मार्गय ।
घटमानः स्वकार्य्येषु कुरु निःश्रेयसं परं । हिमाग्निघोरसदृशो राजा भवति कश्चन । ५५५५

शाकुन्तलामनिकल्पो वा भवेदन्यः परन्तप । न विशेषेण गन्तव्यमविच्छिन्नेन वा पुनः ।
न जातु नाहमस्मीति सुप्रसक्तमसाधुषु । विकर्म्मणा तप्यमानः पापाद्विपरिमुच्यते ।
नैतत् कार्य्यं पुनरिति द्वितीयात् परिमुच्यते । चरिष्ये धर्म्ममेवेति तृतीयात् परिमुच्यते।
शुचिस्तीर्थान्यनुचरन् बहुलात् परिमुच्यते । कल्याणमनुकर्त्तव्यं पुरुषेण बुभूषता ।
ये सुगन्धीनि सेवन्ते तथागन्धा भवन्ति ते । ये दुर्गन्धीनि सेवन्ते तथागन्धा भवन्ति ते।  ५६६०
तपश्चर्य्यापरः सद्यः पापाद्विपरिमुच्यते । संवत्सरमुपास्याग्निमभिशस्तः प्रमुच्यते ।
त्रीणि वर्षाण्युपास्याग्निं भ्रूणहा विप्रमुच्यते । महासरः पुष्कराणि प्रभासोत्तरमानसे ।
अभ्येत्य योजनशतं भ्रूणहा विप्रमुच्यते । यावतः प्राणिनो हन्यात्तज्जातीयांस्तु तावतः ।
प्रमीयमाणानुन्मोच्य प्राणिहा विप्रमुच्यते । अपि चाप्सु निमज्जेत जपंस्त्रिरघमर्षणं ।
यथाऽश्वमेधावभृथस्तथा तन्मनुरब्रवीत् । तत् क्षिप्रं नुदते पापं सत्कारं लभते तथा ।  ५६६५
अपि चैनं प्रसीदन्ति भूतानि जडमूकवत् ।
बृहस्पतिं देवगुरुं सुरासुराः सर्व्वे समेत्याभ्यनुयुज्य राजन् । धर्म्मे फलं वेत्थ फलं महर्षे तथैव तस्मिन्नरके पारलोक्ये ।
उभे तु यस्य सदृशे भवेतां किंस्वित्तयोस्तस्य जयोऽथ न स्यात् । आचक्ष्व नः पुण्यफलं महर्षे कथं पापं नुदते धर्म्मशीलः ।
॥ बृहस्पतिरुवाच ॥ कृत्वा पापं पूर्व्वमबुद्धिपूर्व्वं पुण्यानि चेत् कुरुते बुद्धिपूर्व्वं । स तत् पापं नुदते कर्म्मशीलो वासो यथा मलिनं क्षारयुक्तं ।
पापं कृत्वाऽभिमन्येत नाहमस्मीति पूरुषः । तच्चिकीर्षति कल्याणं श्रद्दधानोऽनसूयकः ।  ५६७०
छिद्राणि विवृतान्येव साधूनां चावृणोति यः । यः पापं पुरुषः कृत्वा कल्याणमभिपद्यते ।
यथादित्यः प्रातरुद्यंस्तमः सर्व्वं व्यपोहति । कल्याणमाचरन्नेवं सर्व्वपापं व्यपोहति ।
॥ भीष्म उवाच ॥ एवमुक्त्वा तु राजानमिन्द्रोतो जनमेजयं । याजयामास विधिवद्वाजिमेधेन शौनकः ।
ततः स राजा व्यपनीतकल्मषः श्रियोवृतः प्रज्वलिताग्निरूपवान् । विवेश राज्यं स्वममित्रकर्षणो यथा दिवं पूर्णवपुर्निशाकरः ।

इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि इन्द्रोतपारिक्षितीये द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

॥ युधिष्ठिर उवाच ॥ कच्चित् पितामहेनासीच्छ्रुतं वा दृष्टमेव च । कच्चिन्मर्त्यो मृतो राजन् पुनरुज्जीवितोऽभवत् ।  ५६७५
॥ भीष्म उवाच ॥ शृणु राजन् यथावृत्तमितिहासं पुरातनं । गृध्रजम्बुकसंवादं यो वृत्तो नैमिषे पुरा ।
कस्यचिद्ब्राह्मणस्यासीद्दुःखलब्धः सुतो मृतः । बाल एव विशालाक्षो बालग्रहनिपीडितः ।
दुःखिताः केचिदादाय बालमप्राप्तयौवनं । कुलसर्व्वस्वभूतं वै रुदन्तः शोकविह्वलाः ।
बालं मृतं गृहीत्वाऽथ श्मशानाभिमुखाः स्थिताः । अङ्केनैव च संक्राम्य रुरुदुर्भृशदुःखिताः ।
शोचन्तस्तस्य पूर्व्वोक्तान् भाषितांश्चासकृत् पुनः । तं बालं भूतले क्षिप्य प्रतिगन्तुं न शक्नुयुः ।  ५६८०

तेषां रुदितशब्देन गृध्रोऽभ्येत्य वचोऽब्रवीत् । एकात्मजमिमं लोके त्यक्त्वा गच्छत मा चिरं ।
इह पुंसां सहस्राणि स्त्रीसहस्राणि चैव ह । समानीतानि कालेन हित्वा वै यान्ति बान्धवाः ।
सम्पश्यत जगत् सर्व्वं सुखदुःखैरधिष्ठितं । संयोगो विप्रयोगश्च पर्य्यायेणोपलभ्यते ।
गृहीत्वा ये च गच्छन्ति ये तु यान्ति च तान्मृतान् । तेऽप्यायुषः प्रमाणेन स्वेन गच्छन्ति जन्तवः ।
अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसंकुले । कङ्कालबहुले रौद्रे सर्व्वप्राणिभयङ्करे । ५५८८
न पुनर्ज्जीवितः कश्चित् कालधर्म्ममुपागतः । प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ।
सर्व्वेण खलु मर्त्तव्यं मर्त्यलोके प्रसूयता । कृतान्तविहिते मार्गे मृतं को जीवयिष्यति ।
कर्म्मान्तविरते लोके अस्तं गच्छति भास्करः । गम्यतां स्वमधिष्ठानं सुतस्नेहं विसृज्य वै ।
ततो गृध्रवचः श्रुत्वा प्राक्रोशन्तस्तदा नृप । बान्धवास्तेऽभ्यगच्छन्त पुत्रमुत्सृज्य भूतले ।
विनिश्चित्याथ च तदा विक्रोशन्तस्ततस्ततः । मृतमित्येव गच्छन्तो निराशास्तस्य दर्शने । ५५९०
निश्चितार्थाश्च ते सर्व्वे सन्त्यजन्तः स्वमात्मजं । निराशा जीविते तस्य मार्गमावृत्य धिष्ठिताः ।
ध्वाङ्क्षपक्षसवर्णस्तु बिलान्निःसृत्य जम्बुकः । गच्छमानान् स्म तानाह निर्घृणाः खलु मानुषाः ।
आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत मा भयं । बहुरूपो मुहूर्त्तश्च जीवत्यपि कदाचन ।
यूयं भूमौ विनिक्षिप्य पुत्रस्नेहविनाकृताः । श्मशाने सुतमुत्सृज्य कस्माद्गच्छत निर्घृणाः ।
न वोऽस्त्यस्मिन् सुते स्नेहो बाले मधुरभाषिणि । यस्य भाषितमात्रेण प्रसादमधिगच्छत । ५५९५
ते पश्यत सुतस्नेहो यादृशः पक्षिपक्षिणां । न तेषां धारयित्वा तान् कश्चिदस्ति फलागमः ।
चतुष्पात्पक्षिकीटानां प्राणिनां स्नेहसङ्गिनां । परलोकगतिस्थानां मुनियज्ञक्रिया इव ।
तेषां पुत्राभिरामाणामिह लोके परत्र च । न गुणो दृश्यते कश्चित् प्रजाः सन्धारयन्ति च ।
अपश्यतां प्रियान् पुत्रांस्तेषां शोको न तिष्ठति । न च पुष्णन्ति संवृद्धास्ते मातापितरौ क्वचित् ।
मानुषाणां कुतः स्नेहो येषां शोको भविष्यति । इमं कुलकरं पुत्रं त्यक्त्वा क्व नु गमिष्यथ । ५६००
चिरं मुञ्चत वाष्पञ्च चिरं स्नेहेन पश्यत । एवंविधानि हीष्टानि दुस्त्यजानि विशेषतः ।
क्षीणस्याथाभियुक्तस्य श्मशानाभिमुखस्य च । बान्धवा यत्र तिष्ठन्ति तत्रान्यो नाधिगच्छति ।
सर्व्वस्य दयिताः प्राणाः सर्व्वः स्नेहञ्च विन्दति । तिर्य्यग्योनिष्वपि सतां स्नेहं पश्यत यादृशं ।
त्यक्त्वा कथं गच्छथेमं पद्मलोलायताक्षिकं । यथा नवोद्वाहकृतं स्नानमाल्यविभूषितं ।
जम्बुकस्य वचः श्रुत्वा कृपणं परिदेवतः । न्यवर्त्तन्त तदा सर्व्वे शवार्थं ते स्म मानुषाः । ५६०५
॥ गृध्र उवाच ॥ अहो वत नृशंसेन जम्बुकेनाल्पमेधसा । क्षुद्रेणोक्ता हीनसत्त्वा मानुषाः किं निवर्त्तथ ।
पञ्चभूतपरित्यक्तं शून्यं काष्ठत्वमागतं । कस्मात् शोचत तिष्ठन्तमात्मानं किन्न शोचथ ।
तपः कुरुत वै तीव्रं मुच्यध्वं येन किल्बिषात् । तपसा लभ्यते सर्व्वं विलापः किं करिष्यति ।
अनिष्टानि च भाग्यानि जातानि सह मूर्त्तिना । येन गच्छति बालोऽयं दत्त्वा शोकमनन्तकं ।
धनं गावः सुवर्णञ्च मणिरत्नमथापि च । अपत्यञ्च तपोमूलं तपोयोगाच्च लभ्यते । ५६१०

यया कृता च भूतेषु प्राप्यते सुखदुःखिता । गृहीत्वा जायते जन्तुर्दुःखानि च सुखानि च ।
न कर्म्मणा पितुः पुत्त्रः पिता वा पुत्त्रकर्म्मणा । मार्गेणान्येन गच्छन्ति बद्धाः सुकृतदुष्कृतैः ।
धर्म्मञ्चरत यत्नेन यथाऽधर्म्मान्निवर्त्तत । वर्त्तध्वञ्च यथाकालं दैवतेषु द्विजेषु च ।
शोकं त्यजत दैन्यञ्च सुतस्नेहान्निवर्त्तत । त्यज्यतामयमाकाशे ततः शीघ्रं निवर्त्तत ।
यत् करोति शुभं कर्म्म तथा कर्म्म सुदारुणं । तत् कर्त्तैव समश्नाति बान्धवानां किमत्र ह । ५६९५
इह त्यक्त्वा न तिष्ठन्ति बान्धवा बान्धवं प्रियं । स्नेहमुत्सृज्य गच्छन्ति बाष्पपूर्णाविलेक्षणाः ।
प्राज्ञो वा यदि वा मूर्खः सधनो निर्द्धनोऽपि वा । सर्व्वः कालवशं याति शुभाशुभसमन्वितः ।
किं करिष्यथ शोचित्वा मृतं किमनुशोचथ । सर्व्वस्य हि प्रभुः कालो धर्म्मतः समदर्शनः ।
यौवनस्थांश्च बालांश्च वृद्धान् गर्भगतानपि । सर्व्वानाविशते मृत्युरेवम्भूतमिदं जगत् ।
॥ जम्बुक उवाच ॥ अहो मन्दीकृतः स्नेहो गृध्रेणेहाल्पबुद्धिना । पुत्त्रस्नेहाभिभूतानां युष्माकं शोचतां भृशं । ५७००
समैः सम्यक्प्रयुक्तैश्च वचनैः प्रत्ययोत्तरैः । यद्गच्छति जनस्त्यायं स्नेहमुत्सृज्य दुस्त्यजं ।
अहो पुत्त्रवियोगेन मृतशून्योपसेवनात् । क्रोशतां सुभृशं दुःखं विवत्सानां गवामिव ।
अद्य शोकं विजानामि मानुषाणां महीतले । स्नेहं हि कारणं कृत्वा ममाप्यश्रूण्यथापतन् ।
यत्नो हि सततं कार्य्यस्ततो दैवेन सिध्यति । दैवं पुरुषकारश्च कृतान्तेनोपपद्यते ।
अनिर्व्वेदः सदा कार्य्यो निर्व्वेदाद्धि कुतः सुखं । प्रयत्नात् प्राप्यते ह्यर्थः कस्माद्गच्छत निर्द्दयाः । ५७०५
आत्ममांसोपवृत्तञ्च शरीरार्द्धमयीं तनुं । पितॄणां वंशकर्त्तारं वने त्यक्त्वा क्व यास्यथ ।
अथवाऽस्तं गते सूर्य्ये सन्ध्याकाल उपस्थिते । ततो नेष्यथ वा पुत्त्रमिहस्था वा भविष्यथ ।
॥ गृध्र उवाच ॥ अद्य वर्षसहस्रं मे साग्रं जातस्य मानुषाः । न च पश्यामि जीवन्तं मृतं स्त्रीपुंनपुंसकं ।
मृता गर्भेषु जायन्ते जातमात्रा म्रियन्ति च । चङ्क्रमन्तो म्रियन्ते च यौवनस्थास्तथाऽपरे ।
अनित्यानीह भाग्यानि चतुष्पात्पक्षिणामपि । जङ्गमानां नगानां वाऽप्यायुरग्रेऽवतिष्ठते । ५७१०
इष्टदारवियुक्ताश्च पुत्त्रशोकान्वितास्तथा । दह्यमानाः स्म शोकेन गृहं गच्छन्ति नित्यशः ।
अनिष्टानां सहस्राणि तथेष्टानां शतानि च । उत्सृज्येह प्रयाता वै बान्धवा भृशदुःखिताः ।
त्यज्यतामेष निस्तेजाः शून्यः काष्ठत्वमागतः । अन्यदेहविषक्तं हि शावं काष्ठत्वमागतं ।
त्यक्तजीवस्य चैवास्य कस्माद्धित्वा न गच्छत । निरर्थको ह्ययं स्नेहो निष्फलश्च परिश्रमः ।
चक्षुर्भ्यां न च कर्णाभ्यां संशृणोति समीक्षते । कस्मादेनं समुत्सृज्य न गृहान् गच्छताशु वै । ५७१५
मोक्षधर्म्माश्रितैर्व्वाक्यैर्हेतुमद्भिः सुनिष्ठुरैः । मयोक्ता गच्छत क्षिप्रं स्वं स्वमेव निवेशनं ।
प्रज्ञाविज्ञानयुक्तेन बुद्धिसंज्ञाप्रदायिना । वचनं श्राविता नूनं मानुषाः संन्यवर्त्तत ।
शोको द्विगुणतां याति दृष्ट्वा स्मृत्वा च चेष्टितं । इत्येतद्वचनं श्रुत्वा सन्निवृत्तास्तु मानुषाः ।
अपश्यन्तं तदा सुप्तं द्रुममागत्य जम्बुकः ।
॥ जम्बुक उवाच ॥ इमं कनकवर्णाभं भूषणैः समलङ्कृतं । गृध्रवाक्यात् कथं पुत्त्रं त्यजध्वं पितृपिण्डदं । ५७२०

न स्नेहस्य च विच्छेदो विलापरुदितस्य च । मृतस्यास्य परित्यागात्तापो वै भविता ध्रुवं ।
श्रूयते शम्बुके शूद्रे हते ब्राह्मणदारकः । जीवितो धर्म्ममासाद्य रामात् सत्यपराक्रमात् ।
तथा श्वेतस्य राजर्षेर्बालो दिष्टान्तमागतः । श्वेतेन धर्म्मनिष्ठेन मृतः संजीवितः पुनः ।
तथा कश्चिद्भवेत् सिद्धो मुनिर्वा देवताऽपि वा । कृपणानामनुक्रोशं कुर्य्याद्वो रुदतामिह ।
इत्युक्तास्ते न्यवर्त्तन्त शोकार्त्ताः पुत्त्रवत्सलाः । अङ्के शिरः समाधाय रुरुदुर्बहु विस्तरं । ५०७५
तेषां रुदितशब्देन गृध्रोऽभ्येत्य वचोऽब्रवीत् ।
॥ गृध्र उवाच ॥ अश्रुपातपरिक्लिन्नः पाणिस्पर्शप्रपीडितः । धर्म्मराजप्रयोगाच्च दीर्घनिद्रां प्रवेशितः ।
तपसाऽपि हि संयुक्ता धनवन्तो महाधियः । सर्व्वे मृत्युवशं यान्ति तदिदं प्रेतपत्तनं ।
बालवृद्धसहस्राणि सदा संत्यज्य बान्धवाः । दिनानि चैव रात्रीश्च दुःखं तिष्ठन्ति भूतले ।
अलं निर्ब्बन्धमागत्य शोकस्य परिधारणे । अप्रत्ययं कुतो ह्यस्य पुनरद्येह जीवितं । ५०८०
मृतस्योत्सृष्टदेहस्य पुनर्देहो न विद्यते । नैव मूर्त्तिप्रदानेन जम्बुकस्य शतैरपि ।
शक्यं जीवयितुं ह्येष बालो वर्षशतैरपि । अथ रुद्रः कुमारो वा ब्रह्मा वा विष्णुरेव च ।
वरमस्मै प्रयच्छेयुस्ततो जीवेदयं शिशुः । नैव वाष्पविमोक्षेण न वा श्वासकृतेन च ।
न दीर्घरुदितेनायं पुनर्जीवं गमिष्यति । अहञ्च क्रोष्टुकश्चैव यूयं ये चास्य बान्धवाः ।
धर्म्माधर्म्मौ गृहीत्वेह सर्व्वे वर्त्तामहेऽध्वनि । अप्रियं परुषञ्चापि परद्रोहं परस्त्रियं । ५०८५
अधर्म्ममनृतञ्चैव दूरात् प्राज्ञो विवर्ज्जयेत् । धर्म्मं सत्यं श्रुतं न्याय्यं महतीं प्राणिनां दयां ।
अजिह्मत्वमशाठ्यञ्च यत्नतः परिमार्गत । मातरं पितरं वाऽपि बान्धवान् सुहृदस्तथा ।
जीवतो ये न पश्यन्ति तेषां धर्म्मविपर्य्ययः । यो न पश्यति चक्षुर्भ्यां नेङ्गते च कथञ्चन ।
तस्य निष्ठावसानान्ते रुदन्तः किं करिष्यथ । इत्युक्तास्ते सुतं त्यक्त्वा भूमौ शोकपरिप्लुताः ।
दह्यमानाः सुतस्नेहात् प्रययुर्बान्धवा गृहं । ५०९०
॥ जम्बुक उवाच ॥ दारुणो मर्त्यलोकोऽयं सर्व्वप्राणिविनाशनः । इष्टबन्धुवियोगश्च तथेहाल्पञ्च जीवितं ।
बह्वलीकमसत्यञ्चाप्यतिवादाप्रियंवदं । इमं प्रेक्ष्य पुनर्भावं दुःखशोकविवर्द्धनं ।
न मे मानुषलोकोऽयं मुहूर्त्तमपि रोचते । अहो धिग्गृध्रवाक्येन यथैवाबुद्धयस्तथा ।
कथं गच्छत निःस्नेहाः सुतस्नेहं विसृज्य च । प्रदीप्ताः पुत्त्रशोकेन सन्निवर्त्तत मानुषाः ।
श्रुत्वा गृध्रस्य वचनं पापस्येहाकृतात्मनः । सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखं । ५०९५
सुखदुःखावृते लोके नेहास्त्येकमनन्तरं । इमं क्षितितले त्यक्त्वा बालं रूपसमन्वितं ।
कुलशोभाकरं मूढाः पुत्त्रं त्यक्त्वा क्व यास्यथ । रूपयौवनसम्पन्नं द्योतमानमिव श्रिया ।
जीवन्तमेव पश्यामि मनसा नात्र संशयः । विनाशो नास्य न हि वै सुखं प्राप्स्यथ मानुषाः ।
पुत्त्रशोकाभितप्तानां मृतानामद्य वः क्षमं । सुखसम्भावनं कृत्वा धारयित्वा सुखं स्वयं ।
त्यक्त्वा गमिष्यथ क्वाद्य समुत्सृज्याल्पबुद्धिवत् । ५१००

॥ भीष्म उवाच ॥ तथा धर्म्मविरोधेन प्रियमिथ्याभिधायिना । श्मशानवासिना नित्यं रात्रिं मृगयता नृप ।
ततो मध्यस्थतां नीता वचनैरमृतोपमैः । जम्बुकेन स्वकार्य्यार्थं बान्धवास्तस्य धिष्ठिताः ।
॥ गृध्र उवाच ॥ अयं प्रेतसमाकीर्णो यक्षराक्षससेवितः । दारुणः काननोद्देशः कौशिकैरभिनादितः ।
भीमः सुघोरश्च तथा नीलमेघसमप्रभः । अस्मिन् शवं परित्यज्य प्रेतकार्य्याण्युपासत ।
भानुर्य्यावत्प्रयात्यस्तं यावच्च विमला दिशः । तावदेनं परित्यज्य प्रेतकार्य्याण्युपासत । ५०७५
नदन्ति परुषं श्येनाः शिवाः क्रोशन्ति दारुणं । मृगेन्द्राः प्रतिनन्दन्ति रविरस्तञ्च गच्छति ।
चिताधूमेन नीलेन संरज्यन्ते च पादपाः । श्मशाने च निराहाराः प्रतिनर्द्दन्ति देवताः ।
सर्व्वे विकृतदेहाश्चाप्यस्मिन्देशे सुदारुणे । युष्मान् प्रधर्षयिष्यन्ति विकृता मांसभोजिनः ।
क्रूरश्चायं वनोद्देशो भयमद्य भविष्यति । त्यज्यतां काष्ठभूतोऽयं मृष्यतां जाम्बुकं वचः ।
यदि जम्बुकवाक्यानि निष्फलान्यनृतानि च । श्रोष्यथ भ्रष्टविज्ञानास्ततः सर्व्वे विनंक्ष्यथ । ५०८०
॥ जम्बुक उवाच ॥ स्थीयतां नेह भेतव्यं यावत्तपति भास्करः । तावदस्मिन् सुते स्नेहादनिर्व्वेदेन वर्त्तत ।
स्वैरं रुदन्तो विस्रब्धाश्चिरं स्नेहेन पश्यत । स्थीयतां यावदादित्यः किञ्च क्रव्यादभाषितैः ।
यदि गृध्रस्य वाक्यानि तीव्राणि रभसानि च । गृह्णीत मोहितात्मानः सुतो वो न भविष्यति ।
॥ भीष्म उवाच ॥ गृध्रोऽस्तमित्याह गतो गतो नेति च जम्बुकः । मृतस्य तं परिजनमूचतुस्तौ क्षुधान्वितौ
स्वकार्य्यबद्धकक्षौ तौ राजन् गृध्रोऽथ जम्बुकः । क्षुत्पिपासापरिश्रान्तौ शास्त्रमालम्ब्य जल्पतः । ५०८५
तयोर्व्विज्ञानविदुषोर्द्वयोर्म्मृगपतत्त्रिणोः । वाक्यैरमृतकल्पैस्तैः प्रतिष्ठन्ति व्रजन्ति च ।
शोकदैन्यसमाविष्टा रुदन्तस्तस्थिरे तदा । स्वकार्य्यकुशलाभ्यान्तु संभ्राम्यन्तेह नैपुणात् ।
तथा तयोर्व्विवदतोर्व्विज्ञानविदुषोर्द्वयोः । बान्धवानां स्थितानाञ्चाप्युपातिष्ठत शङ्करः ।
देव्या प्रणोदितो देवः कारुण्यार्द्रीकृतेक्षणः । ततस्तानाह मनुजान् वरदोऽस्मीति शङ्करः ।
ते प्रत्यूचुरिदं वाक्यं दुःखिताः प्रणताः स्थिताः । एकपुत्रविहीनानां सर्व्वेषां जीवितार्थिनां । ५०९०
पुत्रस्य नो जीवदानाज्जीवितं दातुमर्हसि । एवमुक्तः स भगवान् वारिपूर्णेन चक्षुषा ।
जीवितं स्म कुमाराय प्रादाद्वर्षशतानि वै । तथा गोमायुगृध्राभ्यां प्राददत् क्षुद्विनाशनं ।
वरं पिनाकी भगवान् सर्व्वभूतहिते रतः । ततः प्रणम्य ते देवं श्रेयो हर्षसमन्विताः ।
कृतकृत्याः सुखं हृष्टाः प्रातिष्ठन्त तदा विभो । अनिर्व्वेदेन दीर्घेण निश्चयेन ध्रुवेण च ।
देवदेवप्रसादाच्च क्षिप्रं फलमवाप्यते । पश्य दैवस्य संयोगं बान्धवानाञ्च निश्चयं । ५०९५
कृपणानान्तु रुदतां कृतमश्रुप्रमार्ज्जनं । पश्य चाल्पेन कालेन निश्चयान्वेषणेन च ।
प्रसादं शङ्करात् प्राप्य दुःखिताः सुखमाप्नुवन् । ते विस्मिताः प्रहृष्टाश्च पुत्रसञ्जीवनात् पुनः ।
बभूवुर्भरतश्रेष्ठ प्रसादाच्छङ्करस्य वै । ततस्ते त्वरिता राजंस्त्यक्त्वा शोकं शिशूद्भवं
विविशुः पुत्रमादाय नगरं हृष्टमानसाः । एषा बुद्धिः समस्तानाञ्चातुर्व्वर्ण्येन दर्शिता ।

धर्म्मार्थमोक्षसंयुक्तमितिहासमिमं शृणु । श्रुत्वा मनुष्यः सततमिह प्रेत्य च मोदते ॥ ५८००

इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि मृगगोमायुसंवादे त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

॥ युधिष्ठिर उवाच ॥ बलिनः प्रत्यमित्रस्य नित्यमासन्नवर्त्तिनः । उपकारापकाराभ्यां समर्थस्योद्यतस्य च ।
मोहाद्विकत्थनामात्रैरसारोऽल्पबलो लघुः । वाग्भिरप्रतिरूपाभिरभिद्रुह्य पितामह ।
आत्मनो बलमास्थाय कथं वर्त्तेत मानवः । आगच्छतोऽतिक्रुद्धस्य तस्योद्धरणकाम्यया ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । संवादं भरतश्रेष्ठ शाल्मलेः पवनस्य च ।
हिमवन्तं समासाद्य महानासीद्वनस्पतिः । वर्षपूगाभिसंवृद्धः शाखी स्कन्धी पलाशवान् । ५८०५
तत्र स्म मत्तमातङ्गा घर्म्मार्त्ताः श्रमकर्षिताः । विश्राम्यन्ति महाबाहो तथाऽन्या मृगजातयः ।
नल्वमात्रपरीणाहो घनच्छायो वनस्पतिः । शारिकाशुकसंजुष्टः पुष्पवान् फलवानपि ।
सार्थिका वणिजश्चापि तापसाश्च वनौकसः । वसन्ति तत्र मार्गस्थाः सुरम्ये नगसत्तमे ।
तस्य ता विपुलाः शाखा दृष्ट्वा स्कन्धांश्च सर्व्वशः । अभिगम्याब्रवीदेनं नारदो भरतर्षभ ।
अहो नु रमणीयस्त्वमहो चासि मनोहरः । प्रीयामहे त्वया नित्यं तरुप्रवर शाल्मले । ५८१०
सदैव शकुनास्तात मृगाश्चाथ तथा गजाः । वसन्ति तव संहृष्टा मनोहरमनोहराः ।
तव शाखा महाशाख स्कन्धाश्च विपुलास्तथा । न वै प्रभग्नान् पश्यामि मारुतेन कथञ्चन ।
किन्नु ते पवनस्तात प्रीतिमानथ वा सुहृत् । त्वां रक्षति सदा येन वनेऽत्र पवनो ध्रुवं ।
भगवान् पवनः स्थानाद्वृक्षानुच्चावचानपि । पर्व्वतानाञ्च शिखराण्याचालयति वेगवान् ।
शोषयत्येव पातालं वहन्गन्धवहः शुचिः । सरांसि सरितश्चैव सागरांश्च तथैव च । ५८१५
संरक्षति त्वां पवनः सखित्वेन न संशयः । तस्मात्त्वं बहुशाखोऽपि पर्णवान् पुष्पवानपि ।
इदञ्च रमणीयन्ते प्रतिभाति वनस्पते । यदिमे विहगास्तात रमन्ते मुदितास्त्वयि ।
एषां पृथक्समस्तानां श्रूयते मधुरस्वरः । पुष्पसम्मोदने काले वाशतां सुमनोहरं ।
तथेमे गर्ज्जिता नागाः स्वयूथकुलशोभिताः । घर्म्मार्त्तास्त्वां समासाद्य सुखं विन्दन्ति शाल्मले ।
तथैव मृगजातीभिरन्याभिरभिशोभसे । तथा सर्व्वाधिवासैश्च शोभसे मेरुवद्द्रुम । ५८२०
ब्राह्मणैश्च तपःसिद्धैस्तापसैः श्रमणैस्तथा । त्रिविष्टपसमं मन्ये तवायतनमेव ह ।

इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि पवनशाल्मलिसंवादे चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

॥ नारद उवाच ॥ बन्धुत्वादथ वा सख्याच्छाल्मले नात्र संशयः । पालयत्येव सततं भीमः सर्व्वगोऽनिलः ।
न्यग्भावं परमं वायोः शाल्मले त्वमुपागतः । तवाहमस्मीति सदा येन रक्षति मारुतः ।
न तं पश्याम्यहं वृक्षं पर्व्वतं वेश्म चेदृशं । यन्न वायुबलाद्भग्नं पृथिव्यामिति मे मतिः ।
त्वं पुनः कारणैर्नूनं रक्ष्यसे शाल्मले यथा । वायुना सपरीवारस्तेन तिष्ठस्यसंशयं । ५८२५
॥ शाल्मलिरुवाच ॥ न मे वायुः सखा ब्रह्मन्न बन्धुर्न च मे सुहृत् । परमेष्ठी तथा नैव येन रक्षति चानिलः ।

मम तेजो बलं भीमं वायोरपि हि नारद। कलामष्टादशीं प्राणैर्न मे प्राप्नोति मारुतः।
आगच्छन् परुषो वायुर्मया विष्टम्भितो बलात्। भञ्जन् द्रुमान् पर्व्वतांश्च यच्चान्यदपि किञ्चन।
स मया बहुशो भग्नः प्रभञ्जन् वै प्रभञ्जनः। तस्मान्न बिभ्ये देवर्षे क्रुद्धादपि समीरणात्।
॥ नारद उवाच ॥ शाल्मले विपरीतं ते दर्शनं नात्र संशयः। न हि वायोर्बलेनास्ति भूतं तुल्यबलं क्वचित्। ५७९०
इन्द्रो यमो वैश्रवणो वरुणश्च जलेश्वरः। नैतेऽपि तुल्या मरुतः किं पुनस्त्वं वनस्पते।
यच्च किञ्चिदिह प्राणी चेष्टते शाल्मले भुवि। सर्व्वत्र भगवान् वायुश्चेष्टाप्राणकरः प्रभुः।
एष चेष्टयते सम्यक् प्राणिनः सम्यगायतः। असम्यगायतो भूयश्चेष्टते विकृतं नृषु।
स त्वमेवंविधं वायुं सर्व्वसत्त्वभृतां वरं। न पूजयसि पूज्यं तं किमन्यद्बुद्धिलाघवात्।
असारश्चापि दुर्म्मेधाः केवलं बहु भाषसे। क्रोधादिभिरवच्छन्नो मिथ्या वदसि शाल्मले। ५७९५
मम रोषः समुत्पन्नस्त्वय्येवं संप्रभाषति। ब्रवीम्येष स्वयं वायोस्तव दुर्भाषितं बहु।
चन्दनैः स्यन्दनैः शालैः सरलैर्देवदारुभिः। वेतसैर्धन्वनैश्चापि ये चान्ये बलवत्तराः।
तैश्चापि नैवं दुर्ब्बुद्धे क्षिप्तो वायुः कृतात्मभिः। तेऽपि जानन्ति वायोश्च बलमात्मन एव च।
तस्मात्ते वै नमस्यन्ति श्वसनं तरुसत्तमाः। त्वन्तु मोहान्न जानीषे वायोर्ब्बलमनन्तकं।
एवं तस्माद्गमिष्यामि सकाशं मातरिश्वनः। ५८००
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि पवनशाल्मलिसंवादे पञ्चपञ्चाशदधिकशततमोऽध्यायः॥ १५५ ॥
॥ भीष्म उवाच ॥ एवमुक्त्वा तु राजेन्द्र शाल्मलिं ब्रह्मवित्तमः। नारदः पवने सर्व्वं शाल्मलेर्व्वाक्यमब्रवीत्।
॥ नारद उवाच ॥ हिमवत्पृष्ठजः कश्चिच्छाल्मलिः परिवारवान्। वृहन्मूलो वृहच्छायः स त्वां वायोऽवमन्यते।
बह्व्याक्षेपयुक्तानि त्वामाह वचनानि सः। न युक्तानि मया वायो तानि वक्तुं तवाग्रतः।
जानामि त्वामहं वायो सर्व्वप्राणभृतां वरं। वरिष्ठञ्च गरिष्ठञ्च क्रोधे वैवस्वतं यथा।
॥ भीष्म उवाच ॥ एतत्तु वचनं श्रुत्वा नारदस्य समीरणः। शाल्मलिं तमुपागम्य क्रुद्धो वचनमब्रवीत्। ५८०५
॥ वायुरुवाच ॥ शाल्मले नारदे गच्छंस्त्वयोक्तो मद्विगर्हणं। अहं वायुः प्रभावन्ते दर्शयाम्यात्मनो बलं।
अहं त्वामभिजानामि विदितश्चासि मे द्रुम। पितामहः प्रजासर्गे त्वयि विश्रान्तवान् प्रभुः।
तस्य विश्रमणादेष प्रसादो मत्कृतस्तव। रक्ष्यसे तेन दुर्ब्बुद्धे नात्मवीर्य्याद्द्रुमाधम।
यन्मां त्वमवजानीषे यथाऽन्यं प्राकृतं तथा। दर्शयाम्येष चात्मानं यथा मां नावमन्यसे।
॥ भीष्म उवाच ॥ एवमुक्तस्ततः प्राह शाल्मलिः प्रहसन्निव। पवन त्वञ्च मे क्रुद्धो दर्शयात्मानमात्मना। ५८१०
मयि वै त्यज्यतां क्रोधः किं मे क्रुद्धः करिष्यसि। न ते बिभेमि पवन यद्यपि त्वं स्वयं प्रभुः।
बलाधिकोऽहं त्वत्तश्च न भीः कार्य्या मया तव। ये तु बुद्ध्या तु बलिनस्ते भवन्ति बलीयसः।
प्राणमात्रबला ये वै नैव ते बलिनो मताः। इत्येवमुक्तः पवनः श्वइत्येवाब्रवीद्वचः।
दर्शयिष्यामि ते तेजस्ततो रात्रिरुपागमत्। अथ निश्चित्य मनसा शाल्मलिर्व्वातकारितं।
पश्यमानस्तदात्मानमसमं मातरिश्वना। नारदे यन्मया प्रोक्तं वचनं प्रति तन्मृषा। ५८१५

असमर्थो ह्यहं वायोर्बलेन बलवान् हि सः। मारुतो बलवान्नित्यं यथा वै नारदोऽब्रवीत्।

अहन्तु दुर्ब्बलोऽन्येभ्यो वृक्षेभ्यो नात्र संशयः। किन्तु बुद्ध्या समो नास्ति मया कश्चिद्वनस्पतिः।

तदहं बुद्धिमास्थाय भयं मोक्ष्ये समीरणात्। यदि तां बुद्धिमास्थाय तिष्ठेयुः पर्णिनो वने।

अरिष्टाः स्युः सदा क्रुद्धात् पवनान्नात्र संशयः। ते तु बाला न जानन्ति यथा वै तान् समीरणः।

समीरयति संक्रुद्धो यथा जानाम्यहं तथा। ५८६०

इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि पवनशाल्मलिसंवादे षट्पञ्चाशदधिकशततोऽध्यायः॥ १५६॥

॥ भीष्म उवाच ॥ ततो निश्चित्य मनसा शाल्मलिः क्षुभितस्तदा। शाखास्कन्धान् प्रशाखाश्च स्वयमेव व्यशातयत्।

स परित्यज्य शाखाश्च पत्राणि कुसुमानि च। प्रभाते वायुमायान्तं प्रत्यैक्षत वनस्पतिः।

ततः क्रुद्धः श्वसन् वायुः पातयन् वै महाद्रुमान्। आजगामाथ तं देशमास्ते यत्र स शाल्मलिः।

त हीनपर्णं पतिताग्रशाखं विशीर्णपुष्पं प्रसमीक्ष्य वायुः। उवाच वाक्यं स्मयमान एवं मुदा युतः शाल्मलिमुग्रशाखं।

॥ वायुरुवाच ॥ अहमप्येवमेवं त्वां कुर्व्वाणः शाल्मले रुषा। आत्मना यत् कृतं कृत्स्नं शाखानामपकर्षणं। ५८६५

हीनपुष्पाग्रशाखस्त्वं शीर्णाङ्कुरपलाशकः। आत्मदुर्म्मन्त्रितेनेह मद्वीर्य्यवशगः कृतः।

॥ भीष्म उवाच ॥ एतच्छ्रुत्वा वचो वायोः शाल्मलिर्व्रीडितस्तदा। अतप्यत वचः श्रुत्वा नारदो यत्तदाऽब्रवीत्।

एवं हि राजशार्दूल दुर्ब्बलः सन् बलीयसा। वैरमारभते बालस्तप्यते शाल्मलिर्यथा।

तस्माद्वैरं न कुर्व्वीत दुर्ब्बलो बलवत्तरैः। शोचेद्धि वैरं कुर्व्वाणो यथा वै शाल्मलिस्तथा।

न हि वैरं महात्मानो विवृण्वन्त्यपकारिषु। शनैः शनैर्महाराज दर्शयन्ति स्म ते बलं। ५८७०

वैरं न कुर्व्वीत नरो दुर्ब्बुद्धिर्बुद्धिजीविना। बुद्धिर्बुद्धिमतो याति तृणेष्विव हुताशनः।

नहि बुद्ध्या समं किञ्चिद्विद्यते पुरुषे नृप। तथा बलेन राजेन्द्र न समोऽस्तीह कश्चन।

तस्मात् क्षमेत बालाय जडान्धबधिराय च। बलाधिकाय राजेन्द्र तद्दृष्टं त्वयि शत्रुहन्।

अक्षौहिण्यो दशैका च सप्त चैव समुद्यते। बलेन न समा राजन्नर्ज्जुनस्य महात्मनः।

निहताश्चैव भग्नाश्च पाण्डवेन यशस्विना। चरता बलमास्थाय पाकशासनिना मृधे। ५८७५

उक्तास्ते राजधर्म्मा आपद्धर्म्माश्च भारत। विस्तरेण महाराज किं भूयः श्रोतुमिच्छसि।

इति श्रीमहाभारते शान्तिपर्व्वण्यापद्धर्म्मपर्व्वणि पवनशाल्मलिसंवादे सप्तपञ्चाशदधिकशततोऽध्यायः॥ १५७॥

॥ युधिष्ठिर उवाच ॥ पापस्य यदधिष्ठानं यतः पापं प्रवर्त्तते। एतदिच्छाम्यहं श्रोतुं तत्त्वेन भरतर्षभ।

॥ भीष्म उवाच ॥ पापस्य यदधिष्ठानं तच्छृणुष्व नराधिप। एको लोभो महाग्राहो लोभात् पापं प्रवर्त्तते।

अतः पापमधर्म्मश्च तथा दुःखमनुत्तमं। निकृत्या मूलमेतद्धि येन पापकृतो जनाः।

लोभात् क्रोधः प्रभवति लोभात् कामः प्रवर्त्तते। लोभान्मोहश्च माया च मानः स्तम्भः परासुता। ५८८०

अक्षमा ह्रीपरित्यागः श्रीनाशो धर्म्मसंक्षयः। अभिध्याऽप्रख्यता चैव सर्व्वं लोभात् प्रवर्त्तते।

अत्यागश्चातितर्षश्च विकर्म्मसु च या क्रिया। कुलविद्यामदश्चैव रूपैश्वर्य्यमदस्तथा।

सर्व्वभूतेष्वभिद्रोहः सर्व्वभूतेष्वसत्कृतिः। सर्व्वभूतेष्वविश्वासः सर्व्वभूतेष्वनार्ज्जवं।

हरणं परवित्तानां परदाराभिमर्षणं । वाग्वेगो मनसो वेगो निन्दावेगस्तथैव च ।
उपस्थोदरयोर्वेगो मृत्युवेगश्च दारुणः । ईर्ष्यावेगश्च बलवान् मिथ्यावेगश्च दुर्ज्जयः । ५८८५
रसवेगश्च दुर्व्वार्य्यः श्रोत्रवेगश्च दुःसहः । कुत्सा विकत्था मात्सर्य्यं पापं दुष्करकारिता ।
साहसानाञ्च सर्व्वेषामकार्य्याणां क्रियास्तथा । जातौ बाल्ये च कौमारे यौवने चापि मानवाः ।
न सन्त्यजन्त्यात्मकर्म्म यो न जीर्य्यति जीर्य्यतः । यो न पूरयितुं शक्यो लोभः प्राप्त्या कुरूद्वह ।
नित्यं गम्भीरतोयाभिरापगाभिरिवोदधिः । न प्रहृष्यति यो लाभैः कामैर्यश्च न तृप्यति ।
यो न देवैर्न गन्धर्व्वैर्नासुरैर्न महोरगैः । ज्ञायते नृप तत्त्वेन सर्व्वैर्भूतगणैस्तथा । ५८९०
स लोभः सह मोहेन विजेतव्यो जितात्मना । दम्भो द्रोहश्च निन्दा च पैशुन्यं मत्सरस्तथा ।
भवन्त्येतानि कौरव्य लुब्धानामकृतात्मनां । सुमहान्त्यपि शास्त्राणि धारयन्ति बहुश्रुताः ।
छेत्तारः संशयानाञ्च क्लिश्यन्तीहाल्पबुद्धयः । द्वेषक्रोधप्रसक्ताश्च शिष्टाचारबहिष्कृताः ।
अन्तःक्रूरा वाङ्मधुराः कूपाश्छन्नास्तृणैरिव । धर्म्मवैतंसिकाः क्षुद्रा मुष्णन्ति ध्वजिनो जगत् ।
कुर्व्वते च बहून् मार्गांस्तान् हेतुबलमाश्रिताः । सतां मार्गान् विलुम्पन्ति लोभज्ञानेष्ववस्थिताः । ५८९५
धर्म्मस्य ह्रियमाणस्य लोभग्रस्तैर्दुरात्मभिः । या या विक्रियते संस्था ततः साऽपि प्रपद्यते ।
दर्पः क्रोधो मदः स्वप्नो हर्षः शोकोऽतिमानिता । एत एव हि कौरव्य दृश्यन्ते लुब्धबुद्धिषु ।
एतानशिष्टान् बुध्यस्व नित्यं लोभसमन्वितान् । शिष्टांस्तु परिपृच्छेथा यान् वक्ष्यामि शुचिव्रतान् ।
येष्वावृत्तिभयं नास्ति परलोकभयं न च । नामिषेषु प्रसङ्गोऽस्ति न प्रियेष्वप्रियेषु च ।
शिष्टाचारः प्रियो येषु दमो येषु प्रतिष्ठितः । सुखं दुःखं समं येषां सत्यं येषां परायणं । ५९००
दातारो न गृहीतारो दयावन्तस्तथैव च । पितृदेवातिथेयाश्च नित्योद्युक्तास्तथैव च ।
सर्व्वोपकारिणो वीराः सर्व्वधर्म्मानुपालकाः । सर्व्वभूतहिताश्चैव सर्व्वदेयाश्च भारत ।
न ते चालयितुं शक्या धर्म्मव्यापारकारिणः । न तेषां भिद्यते वृत्तं यत् पुरा साधुभिः कृतं ।
न त्रासिनो न चपला न रौद्राः सत्पथे स्थिताः । ते सेव्याः साधुभिर्नित्यं येष्वहिंसा प्रतिष्ठिता ।
कामक्रोधव्यपेता ये निर्म्ममा निरहङ्कृताः । सुव्रताः स्थिरमर्य्यादास्तानुपास्व च पृच्छ च । ५९०५
न धनार्थं यशोऽर्थं वा धर्म्मस्तेषां युधिष्ठिर । अवश्यं कार्य्य इत्येव शरीरस्य क्रियास्तथा ।
न भयं क्रोधचापल्ये न शोकस्तेषु विद्यते । न धर्म्मध्वजिनश्चैव न गुह्यं कश्चिदास्थिताः ।
येष्वलोभस्तथाऽमोहो ये च सत्यार्ज्जवे स्थिताः । तेषु कौन्तेय रज्येथा येषां न भ्रश्यते पुनः ।
ये न हृष्यन्ति लाभेषु नालाभेषु व्यथन्ति च । निर्म्मला निरहङ्काराः सत्त्वस्थाः समदर्शिनः ।
लाभालाभौ सुखदुःखे च तात प्रियाप्रियं मरणं जीवितञ्च । समानि येषां स्थिरविक्रमाणां बुभुत्सतां सत्त्वपथे स्थितानां । ५९१०
धर्म्मप्रियांस्तान् सुमहानुभावान् दान्तोऽप्रमत्तश्च समर्च्चयेथाः । दैवात् सर्व्वे गुणवन्तो भवन्ति शुभाशुभे वाक्प्रलापास्तथान्ये ।

इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि अष्टपञ्चाशदधिकशततोऽध्यायः ॥ १५८ ॥

॥ युधिष्ठिर उवाच ॥ अनर्थानामधिष्ठानमुक्तो लोभः पितामह । अज्ञानमपि वै तात श्रोतुमिच्छामि तत्त्वतः ।

॥ भीष्म उवाच ॥ करोति पापं योऽज्ञानान्नात्मनो वेत्ति च क्षमं । प्रद्वेष्टि साधुवृत्तांश्च स लोकस्यैति वाच्यतां ।
अज्ञानान्निरयं याति तथाऽज्ञानेन दुर्गतिं । अज्ञानात् क्लेशमाप्नोति तथापत्सु निमज्जति ।
॥ युधिष्ठिर उवाच ॥ अज्ञानस्य प्रवृत्तिञ्च स्थानं वृद्धिक्षयोदयौ । मूलं योगं गतिं कालं कारणं हेतुमेव च । ६९१५
श्रोतुमिच्छामि तत्त्वेन यथावदिह पार्थिव । अज्ञानप्रसवं हीदं यद्दुःखमुपलभ्यते ।
॥ भीष्म उवाच ॥ रागो द्वेषस्तथा मोहो हर्षः शोकोऽभिमानिता । कामः क्रोधश्च दर्पश्च तन्द्रा चालस्यमेव च ।
इच्छा द्वेषस्तथा तापः परवृद्ध्युपतापिता । अज्ञानमेतन्निर्द्दिष्टं पापानाञ्चैव याः क्रियाः ।
एतस्य वा प्रवृत्तेश्च वृद्ध्यादीन् यांश्च पृच्छसि । विस्तरेण महाराज शृणु तच्च विशेषतः ।
उभावेतौ समफलौ समदोषौ च भारत । अज्ञानञ्चातिलोभश्चाप्येकं जानीहि पार्थिव । ६९२०
लोभप्रभवमज्ञानं वृद्धं भूयः प्रवर्द्धते । स्थाने स्थाने भवे क्षीणं उपैति विविधां गतिं ।
मूलं लोभस्य मोहो वै कालात्मगतिरेव च । छिन्ने भिन्ने तथा लोभे कारणं काल एव च ।
तस्याज्ञानाद्धि लोभो हि लोभादज्ञानमेव च । सर्व्वदोषास्तथा लोभात्तस्माल्लोभं विवर्ज्जयेत् ।
जनको युवनाश्वश्च वृषादर्भिः प्रसेनजित् । लोभक्षयाद्दिवं प्राप्तास्तथैवान्ये जनाधिपाः ।
प्रत्यक्षन्तु कुरुश्रेष्ठ त्यज लोभमिहात्मना । त्यक्त्वा लोभं सुखं लोके प्रेत्य चानुचरिष्यसि । ६९२५
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि आत्मज्ञाने ऊनषष्ट्यधिकशततोऽध्यायः ॥ १५९ ॥
॥ युधिष्ठिर उवाच ॥ स्वाध्याये कृतयत्नस्य नरस्य च पितामह । धर्म्मकामस्य धर्म्मात्मन् किं नु श्रेय इहोच्यते ।
बहुधा दर्शने लोके श्रेयो यदिह मन्यसे । अस्मिँल्लोके परे चैव तन्मे ब्रूहि पितामह ।
महानयं धर्म्मपथो बहुशाखश्च भारत । किंस्विदेवेह धर्म्माणामनुष्ठेयतमं मतं ।
धर्म्मस्य महतो राजन् बहुशाखस्य तत्त्वतः । यन्मूलं परमं तात तत्सर्व्वं ब्रूहि तत्त्वतः ।
॥ भीष्म उवाच ॥ हन्त ते कथयिष्यामि येन श्रेयो ह्यवाप्स्यसि । पीत्वाऽमृतमिव प्राज्ञो ज्ञानतृप्तो भविष्यसि । ६९३०
धर्म्मस्य विधयो नैके ये वै प्रोक्ता महर्षिभिः । स्वं स्वं विज्ञानमाश्रित्य दमस्तेषां परायणं ।
दमं निःश्रेयसं प्राहुर्वृद्धा निश्चयदर्शिनः । ब्राह्मणस्य विशेषेण दमो धर्म्मः सनातनः ।
दमात्तस्य क्रियासिद्धिर्यथावदुपलभ्यते । दमो दानं तथा यज्ञानधीतञ्चातिवर्त्तते ।
दमस्तेजो वर्द्धयति पवित्रञ्च दमः परं । विपाप्मा तेजसा युक्तः पुरुषो विन्दते महत् ।
दमेन सदृशं धर्म्मं नान्यं लोकेषु शुश्रुम । दमो हि परमो लोके प्रशस्तः सर्व्वधर्म्मिणां । ६९३५
प्रेत्य चापि मनुष्येन्द्र परमं विन्दते सुखं । दमेन हि समायुक्तो महान्तं धर्म्ममश्नुते ।
सुखं दान्तः प्रस्वपिति सुखञ्च प्रतिबुध्यते । सुखं पर्य्येति लोकांश्च मनश्चास्य प्रसीदति ।
अदान्तः पुरुषः क्लेशमभीक्ष्णं प्रतिपद्यते । अनर्थांश्च बहूनन्यान् प्रसृजत्यात्मदोषजान् ।
आश्रमेषु चतुर्ष्वाहुर्दममेवोत्तमं व्रतं । तस्य लिङ्गानि वक्ष्यामि येषां समुदयो दमः ।
क्षमा धृतिरहिंसा च समता सत्यमार्ज्जवं । इन्द्रियाभिजयो दाक्ष्यं मार्द्दवं ह्रीरचापलं । ६९४०
अकार्पण्यमसंरम्भः सन्तोषः प्रियवादिता । अविहिंसानसूया चाप्येषां समुदयो दमः ।

गुरुपूजा च कौरव्य दया भूतेषु पैशुनं । अपवादं मृषावादं स्तुतिनिन्दाविवर्ज्जनं ।
कामं क्रोधञ्च लोभञ्च दर्पं स्तम्भं विकत्थनं । रोषमीर्ष्यावमानञ्च नैव दान्तो निषेवते ।
अनिन्दितो ह्यकामात्मा नाल्पेच्छ्वर्थनसूयकः । समुद्रकल्पः स नरो न कथञ्चन पूर्य्यते ।
अहं त्वयि मम त्वञ्च मयि तेषु तथाऽप्यहं । पूर्व्वसम्बन्धिसंयोगं नैतद्दान्तो निषेवते । ६९७५
सर्व्वा ग्राम्यास्तथाऽरण्या याश्च लोके प्रवृत्तयः । निन्दाञ्चैव प्रशंसाञ्च यो नाश्रयति मुच्यते ।
मैत्रोऽथ शीलसम्पन्नः प्रसन्नात्मात्मविच्च यः । मुक्तस्य विविधैः सङ्गैस्तस्य प्रेत्य फलं महत् ।
सुवृत्तः शीलसम्पन्नः प्रसन्नात्मात्मविद्बुधः । प्राप्येह लोके सत्कारं सुगतिं प्रतिपद्यते ।
कर्म्म यत् शुभमेवेह सद्भिराचरितञ्च यत् । तदेव ज्ञानयुक्तस्य मुनेर्वर्त्म न हीयते ।
निष्क्रम्य वनमास्थाय ज्ञानयुक्तो जितेन्द्रियः । कालाकाङ्क्षी चरत्येवं ब्रह्मभूयाय कल्पते । ६९८०
अभयं यस्य भूतेभ्यो भूतानामभयं यतः । तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन ।
अवाचिनोति कर्म्माणि न च सम्प्रचिनोति ह । समः सर्व्वेषु भूतेषु मैत्रायणगतिश्चरेत् ।
शकुनीनामिवाकाशे जले वारिचरस्य च । यथा गतिर्न दृश्येत तथा तस्य न संशयः ।
गृहानुत्सृज्य यो राजन्मोक्षमेवाऽभिपद्यते । लोकास्तेजोमयास्तस्य कल्पन्ते शाश्वतीः समाः ।
संन्यस्य सर्व्वकर्म्माणि संन्यस्य विधिवत्तपः । संन्यस्य विविधा विद्याः सर्व्वं संन्यस्य चैव ह । ६९८५
कामे शुचिरनावृत्तः प्रसन्नात्मात्मवित्शुचिः । प्राप्येह लोके सत्कारं स्वर्गं समभिपद्यते ।
यच्च पैतामहं स्थानं ब्रह्मराशिसमुद्भवं । गुहायां पिहितं नित्यं तद्दमेनाभिगम्यते ।
ज्ञानारामस्य बुद्धस्य सर्व्वभूताविरोधिनः । नावृत्तिभयमस्तीह परलोकभयं कुतः ।
एक एव दमे दोषो द्वितीयो नोपपद्यते । यदेनं क्षमया युक्तमशक्तं मन्यते जनः ।
एकोऽस्य सुमहाप्राज्ञ दोषः स्यात् सुमहान् गुणः । क्षमया विपुला लोकाः सुलभा हि सहिष्णुता । ६९९०
दान्तस्य किमरण्येन तथाऽदान्तस्य भारत । यत्रैव निवसेद्दान्तस्तदरण्यं स चाश्रमः ।
॥ वैशम्पायन उवाच ॥ एतद्भीष्मस्य वचनं श्रुत्वा राजा युधिष्ठिरः । अमृतेनेव सन्तृप्तः प्रहृष्टः समपद्यत ।
पुनश्च परिपप्रच्छ भीष्मं धर्म्मभृतां वरं । ततः प्रीतः स चोवाच तस्मै सर्व्वं कुरूद्वहः ।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि दमकथने षष्ठ्यधिकशततमोऽध्यायः ॥ १६० ॥
॥ भीष्म उवाच ॥ सर्व्वमेतत्तपोमूलं कवयः परिचक्षते । न ह्यतप्ततपा मूढः क्रियाफलमवाप्नुते ।
प्रजापतिरिदं सर्व्वं तपसैवासृजत्प्रभुः । तथैव वेदानृषयस्तपसा प्रतिपेदिरे । ६९९५
तपसैव सपर्य्यास्ते फलमूलानि यानि च । त्रीन् लोकांस्तपसा सिद्धाः पश्यन्ति सुसमाहिताः ।
औषधान्यगदादीनि क्रियाश्च विविधास्तथा । तपसैव हि सिध्यन्ति तपोमूलं हि साधनं ।
यद्दुरापं भवेत् किञ्चित्तत् सर्व्वं तपसो भवेत् । ऐश्वर्य्यमृषयः प्राप्तास्तपसैव न संशयः ।
सुरापोऽसम्मतादायी भ्रूणहा गुरुतल्पगः । तपसैव सुतप्तेन नरः पापाद्विमुच्यते ।
तपसो बहुरूपस्य तैस्तैर्द्वारैः प्रवर्त्ततः । निवृत्त्या वर्त्तमानस्य तपो नानशनात् परं । ७०००

अहिंसा सत्यवचनं दानमिन्द्रियनिग्रहः। एतेभ्यो हि महाराज तपो नानशनात् परं।
न दुष्करतरं दानान्नातिमातरमाश्रमः। त्रैविद्येभ्यः परं नास्ति संन्यासः परमन्तपः।
इन्द्रियाणीह रक्षन्ति स्वर्गधर्म्माभिगुप्तये। तस्मादर्थे च धर्म्मे च तपो नानशनात् परं।
ऋषयः पितरो देवा मनुष्या मृगपक्षिणः। यानि चान्यानि भूतानि स्थावराणि चराणि च।
तपःपरायणाः सर्व्वे सिध्यन्ति तपसा च ते। इत्येवं तपसा देवा महत्त्वं प्रतिपेदिरे। ६९७५
इमानीष्टविभागानि फलानि तपसः सदा। तपसा शक्यते प्राप्तुं देवत्वमपि निश्चयात्।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि तपःकथने एकषष्ट्यधिकशततोऽध्यायः॥ १६१ ॥
॥ युधिष्ठिर उवाच ॥ सत्यं धर्म्मं प्रशंसन्ति विप्रर्षिपितृदेवताः। सत्यमिच्छाम्यहं श्रोतुं तन्मे ब्रूहि पितामह।
सत्यं किंलक्षणं राजन् कथं वा तदवाप्यते। सत्यं प्राप्य भवेत् किञ्च कथञ्चैव तदुच्यतां।
॥ भीष्म उवाच ॥ चातुर्व्वर्ण्यस्य धर्म्माणां सङ्करो न प्रशस्यते। अविकारितमं सत्यं सर्व्ववर्णेषु भारत।
सत्यं सत्सु सदा धर्म्मः सत्यं धर्म्मः सनातनः। सत्यमेव नमस्येत सत्यं हि परमा गतिः। ६९८०
सत्यं धर्म्मस्तपोयोगः सत्यं ब्रह्म सनातनं। सत्यं यज्ञः परः प्रोक्तः सर्व्वं सत्ये प्रतिष्ठितं।
आचारानिह सत्यस्य यथावदनुपूर्व्वशः। लक्षणञ्च प्रवक्ष्यामि सत्यस्येह यथाक्रमं।
प्राप्यते च यथा सत्यं तच्च श्रोतुमिहार्हसि। सत्यं त्रयोदशविधं सर्व्वलोकेषु भारत।
सत्यञ्च समता चैव दमश्चैव न संशयः। अमात्सर्य्यं क्षमा चैव ह्रीस्तितिक्षाऽनसूयता।
त्यागो ध्यानमथार्य्यत्वं धृतिश्च सततं दया। अहिंसा चैव राजेन्द्र सत्याकारास्त्रयोदश। ६९८५
सत्यं नामाव्ययं नित्यमविकारि तथैव च। सर्व्वधर्म्माविरुद्धेन योगेनैतदवाप्यते।
आत्मनीष्टे तथाऽनिष्टे रिपौ च समता तथा। इच्छाद्वेषक्षयं प्राप्य कामक्रोधक्षयं तथा।
दमो नान्यस्पृहा नित्यं गाम्भीर्य्यं धैर्य्यमेव च। अभयं रोगशमनं ज्ञानेनैतदवाप्यते।
अमात्सर्य्यं बुधाः प्राहुर्दाने धर्म्मे च संयमः। अवस्थितेन नित्यञ्च सत्येनामत्सरी भवेत्।
अक्षमायाः क्षमायाश्च प्रियाणीहाप्रियाणि च। क्षमते सम्मतः साधु साध्वाप्नोति च सत्यवाक्। ६९९०
कल्याणं कुरुते वाढं धीमान्न ग्लायते क्वचित्। प्रशान्तवाङ्मना नित्यं ह्रीस्तु धर्म्मादवाप्यते।
धर्म्मार्थहेतोः क्षमते तितिक्षा क्षान्तिरुच्यते। लोकसंग्रहणार्थं वै सा तु धैर्य्येण लभ्यते।
त्यागः स्नेहस्य यत्त्यागो विषयाणां तथैव च। रागद्वेषप्रहीणस्य त्यागो भवति नान्यथा।
आर्य्यता नाम भूतानां यः करोति प्रयत्नतः। शुभं कर्म्म निराकारो वीतरागस्तथैव च।
धृतिर्नाम सुखे दुःखे यथा नाप्नोति विक्रियां। तां भजेत सदा प्राज्ञो य इच्छेद्भूतिमात्मनः। ६९९५
सर्व्वथा क्षमिणा भाव्यं तथा सत्यपरेण च। वीतहर्षभयक्रोधो धृतिमाप्नोति पण्डितः।
अद्रोहः सर्व्वभूतेषु कर्म्मणा मनसा गिरा। अनुग्रहश्च दानञ्च सतां धर्म्मः सनातनः।
एते त्रयोदशाकाराः पृथक् सत्यैकलक्षणाः। भजन्ते सत्यमेवेह बृंहयन्ते च भारत।
नान्तः शक्यो गुणानाञ्च वक्तुं सत्यस्य पार्थिव। अतः सत्यं प्रशंसन्ति विप्राः सपितृदेवताः।

नास्ति सत्यात् परो धर्म्मो नानृतात् पातकं परं । श्रुतिर्हि सत्यं धर्म्मस्य तस्मात् सत्यं न लोपयेत् । ६०००
उपैति सत्यादानं हि तथा यज्ञाः सदक्षिणाः । त्रेताग्निहोत्रं वेदाश्च ये चान्ये धर्म्मनिश्चयाः ।
अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतं । अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि सत्यकथने द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥
॥ युधिष्ठिर उवाच ॥ यतः प्रभवति क्रोधः कामो वा भरतर्षभ । शोकमोहौ विधित्सा च परासुत्वञ्च तद्वद ।
लोभो मात्सर्य्यमीर्षा च कुत्साऽसूया कृपा भयं । एतत् सर्व्वं महाप्राज्ञ याथातथ्येन मे वद ।
॥ भीष्म उवाच ॥ त्रयोदशैतेऽतिबलाः शत्रवः प्राणिनां स्मृताः । उपासन्ते महाराज समन्तात् पुरुषानिह । ६००५
एते प्रमत्तं पुरुषमप्रमत्तास्तुदन्ति च । वृका इव विलुम्पन्ति दृष्ट्वैव पुरुषं बलात् ।
एभ्यः प्रवर्त्तते दुःखमेभ्यः पापं प्रवर्त्तते । इति मर्त्त्यो विजानीयात् सततं पुरुषर्षभ ।
एतेषामुदयं स्थानं क्षयञ्च पृथिवीपते । हन्त ते कीर्त्तयिष्यामि क्रोधस्योत्पत्तिमादितः ।
यथातत्त्वं क्षितिपते तदिहैकमनाः शृणु । लोभात् क्रोधः प्रभवति परदोषैरुदीर्य्यते ।
क्षमया तिष्ठते राजन् क्षमया विनिवर्त्तते । सङ्कल्पाज्जायते कामः सेव्यमानो विवर्द्धते । ६०१०
यदा प्राज्ञो विरमते तदा सद्यः प्रणश्यति । परासूया क्रोधलोभावन्तरा प्रतिमुच्यते ।
दयया सर्व्वभूतानां निर्व्वेदात् सा निवर्त्तते । अवद्यदर्शनादेति तत्त्वज्ञानाच्च धीमतां ।
अज्ञानप्रभवो मोहः पापाभ्यासात् प्रवर्त्तते । यदा प्राज्ञेषु रमते तदा सद्यः प्रणश्यति ।
विरुद्धानीह शास्त्राणि पश्यन्तीह कुरूद्वह । विधित्सा जायते तत्र तत्त्वज्ञानान्निवर्त्तते ।
प्रीत्या शोकः प्रभवति वियोगात्तस्य देहिनः । यदा निरर्थकं वेत्ति तदा सद्यः प्रणश्यति । ६०१५
परासुता क्रोधलोभादभ्यासाच्च प्रवर्त्तते । दयायाः सर्व्वभूतानां निर्व्वेदात् सा निवर्त्तते ।
सत्यत्यागात्तु मात्सर्य्यमहितानाञ्च सेवया । एतत्तु क्षीयते तात साधूनामुपसेवनात् ।
कुलाज्ज्ञानात्तथैश्वर्य्यान्मदो भवति देहिनां । एभिरेव तु विज्ञातैः स च सद्यः प्रणश्यति ।
ईर्षा कामात् प्रभवति संहर्षाच्चैव जायते । इतरेषान्तु सत्त्वानां प्रज्ञया सा प्रणश्यति ।
विभ्रमाल्लोकबाह्यानां द्वेष्यैर्व्वाक्यैरसम्मतैः । कुत्सा सञ्जायते राजन् लोकान् प्रेक्ष्याभिशाम्यति । ६०२०
इति कर्त्तुं न शक्ता ये बलस्थायापकारिणे । असूया जायते तीव्रा कारुण्याद्विनिवर्त्तते ।
कृपणान् सन्ततं दृष्ट्वा ततः सञ्जायते कृपा । धर्म्मनिष्ठां यदा वेत्ति तदा शाम्यति सा कृपा ।
अज्ञानप्रभवो लोभो भूतानां दृश्यते सदा । अस्थिरत्वञ्च भोगानां दृष्ट्वा ज्ञात्वा निवर्त्तते ।
एतान्येव जितान्याहुः प्रशमाच्च त्रयोदश । एते हि धार्त्तराष्ट्राणां सर्व्वे दोषास्त्रयोदश ।
त्वया सत्यार्थिना नित्यं विजिता ज्येष्ठसेवनात् । ६०२५
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि लोभोपाख्याने त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥
॥ युधिष्ठिर उवाच ॥ आनृशंस्यं विजानामि दर्शनेन सतां सदा । नृशंसान्न विजानामि तेषां कर्म्म च भारत ।
कण्टकान् कूपमग्निञ्च वर्ज्जयन्ति यथा नराः । तथा नृशंसकर्म्माणं वर्ज्जयन्ति नरा नरं ।

नृशंसो हि दह्यते प्रेत्य चेह च भारत । तस्मात्त्वं ब्रूहि कौरव्य तस्य धर्म्मविनिश्चयं ।
॥ भीष्म उवाच ॥ स्पृहा स्यादहिते चैव विवित्सा चैव कर्म्मणां । आक्रोष्टा क्रुश्यते चैव वञ्चितो बुध्यते स च ।
दत्तानुकीर्त्तिर्विषमः क्षुद्रो नैकृतिकः शठः । असंविभागी मानी च तथा सङ्गी विकत्थनः । १०२०
सर्व्वातिशङ्की पुरुषो बलीशः कृपणोऽथ वा । वर्गप्रशंसी सततमाश्रमद्वेषसङ्करी ।
हिंसाविहारः सततमविशेषगुणागुणः । बह्वलीको मनस्वी च लुब्धोऽत्यर्थं नृशंसकृत् ।
धर्म्मशीलं गुणोपेतं पापमित्यवगच्छति । आत्मशीलानुमानेन न विश्वसिति कस्यचित् ।
परेषां यत्र दोषः स्यात् तद्गुह्यं सम्प्रकाशयेत् । समानेष्वेव दोषेषु वृत्त्यर्थमुपघातयेत् ।
तथोपकारिणञ्चैव मन्यते वञ्चितं परं । दत्त्वाऽपि च धनं काले सन्तपत्युपकारिणे । १०२५
भक्ष्यं पेयमथालेह्यं यच्चान्यत् साधुभोजनं । प्रेक्षमाणेषु योऽश्नीयान्नृशंस इति तं वदेत् ।
ब्राह्मणेभ्यः प्रदायाग्रं यः सुहृद्भिः सहाश्नुते । स प्रेत्य लभते स्वर्गमिह चानन्त्यमश्नुते ।
एष ते भरतश्रेष्ठ नृशंसः परिकीर्त्तितः । सदा विवर्ज्जनीयो हि पुरुषेण विजानता ।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि नृशंसकथने चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥
॥ भीष्म उवाच ॥ कृतार्थो यक्ष्यमाणश्च सर्व्ववेदान्तगश्च यः । आचार्य्यपितृकार्य्यार्थं स्वाध्यायार्थमथापि च ।
एते वै साधवो दृष्टा ब्राह्मणा धर्म्मभिक्षवः । निःस्वेभ्यो देयमेतेभ्यो दानं विद्या च भारत । १०३०
अन्यत्र दक्षिणादानं देयं भरतसत्तम । अन्येभ्योऽपि बहिर्व्वेदि नाकृतान्नं विधीयते ।
सर्व्वरत्नानि राजा हि यथार्हं प्रतिपादयेत् । ब्राह्मणा एव वेदाश्च यज्ञाश्च बहुदक्षिणाः ।
अन्योन्यं विभवाचारा यजन्ते गुणतः सदा । यस्य त्रैवार्षिकं भक्तं पर्य्याप्तं भृत्यवृत्तये ।
अधिकं वापि विद्येत स सोमं पातुमर्हति । यज्ञश्चेत् प्रतिरुद्धः स्यादङ्गेनैकेन यज्वनः ।
ब्राह्मणस्य विशेषेण धार्म्मिके सति राजनि । यो वैश्यः स्याद्बहुपशुर्हीनक्रतुरसोमपः । १०३५
कुटुम्बात्तस्य तद्वित्तं यज्ञार्थं पार्थिवो हरेत् । आहरेदथ नो किञ्चित् कामं शूद्रस्य वेश्मनः ।
न हि यज्ञेषु शूद्रस्य किञ्चिदस्ति परिग्रहः । यो नाहिताग्निः शतगुरयज्वा च सहस्रगुः ।
तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् । अदातृभ्यो हरेद्वित्तं विख्याप्य नृपतिः सदा ।
तथैवाचरतो धर्म्मो नृपतेः स्यादथाखिलः । तथैव शृणु मे भक्तं भक्तानि षडनश्नतः ।
अश्वस्तनविधानेन हर्त्तव्यं हीनकर्म्मणः । खलात् क्षेत्रात्तथारामात् यतो वाऽप्युपपद्यते । १०४०
आख्यातव्यं नृपस्यैतत् पृच्छतेऽपृच्छतेऽपि वा । न तस्मै धारयेद्दण्डं राजा धर्म्मेण धर्म्मवित् ।
क्षत्रियस्य तु बालिश्याद्ब्राह्मणः क्लिश्यते क्षुधा । श्रुतशीले समाज्ञाय वृत्तिमस्य प्रकल्पयेत् ।
अथैनं परिरक्षेत पिता पुत्रमिवौरसं । इष्टिं वैश्वानरीं नित्यं निर्व्वपेदब्दपर्य्यये ।
अनुकल्पः परो धर्म्मो धर्म्मवादैस्तु केवलं । विश्वैर्देवैश्च साध्यैश्च ब्राह्मणैश्च महर्षिभिः ।
आपत्सु मरणाद्भीतैर्विधिप्रतिनिधीकृतः । प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते । १०४५
न साम्परायिकं तस्य दुर्म्मतेर्व्विद्यते फलं । न ब्राह्मणो निवेदेत किञ्चिद्राजनि वेदवित् ।

स्ववीर्य्याच्चान्यवीर्य्याच्च स्ववीर्य्यं बलवत्तरं। तस्माद्राजा सदा तेजो दुःसहं ब्रह्मवादिनां।
कर्त्ता शास्ता विधाता च ब्राह्मणो देव उच्यते। तस्मिन्नाकुशलं ब्रूयान्न शुष्कामीरयेद्गिरं।
क्षत्त्रियो बाहुवीर्य्येण तरेदापदमात्मनः। धनेन वैश्यः शूद्रश्च मन्त्रैर्होमैश्च वै द्विजः।
नैव कन्या न युवतिर्नामन्त्रो न च बालिशः। परिवेष्टाऽग्निहोत्रस्य भवेन्नासंस्कृतस्तथा। ६०१०
नरके निपतन्त्येते जुह्वानाः स च यस्य तत्। तस्माद्वैतानकुशलो होता स्याद्वेदपारगः।
प्राजापत्यमदत्त्वाऽश्वमग्न्याधेयस्य दक्षिणां। अनाहिताग्निरिति स प्रोच्यते धर्म्मदर्शिभिः।
पुण्यानि यानि कुर्व्वीत श्रद्दधानो जितेन्द्रियः। अनाप्तदक्षिणैर्यज्ञैर्न यजेत कथञ्चन।
प्रजाः पशूंश्च स्वर्गञ्च हन्ति यज्ञो ह्यदक्षिणः। इन्द्रियाणि यशः कीर्त्तिमायुश्चाप्यवकृन्तति।
उदक्यामासते ये च द्विजाः केचिदनग्नयः। होमं वा श्रोत्रियो येषां ते सर्व्वे पापकारिणः॥ ६०१५
उदपानोदके ग्रामे ब्राह्मणो वृषलीपतिः। उषित्वा द्वादश समाः शूद्रकर्म्मैव गच्छति।
अभार्य्यां शयने बिभ्रत् शूद्रं वृद्धं च वै द्विजः। अब्राह्मणं मन्यमानस्तृणेष्वासीत पृष्ठतः।
तथा संशुध्यते राजन् शृणु चात्र वचो मम।
यदेकरात्रेण करोति पापं निकृष्टवर्णं ब्राह्मणः सेवमानः। स्थानासनाभ्यां विचरन् व्रती च त्रिभिर्वर्षैः शमयेदात्मपापं।
न नर्म्मयुक्तमनृतं हिनस्ति न स्त्रीषु राजन्न विवाहकाले। न गुर्व्वर्थे नात्मनो जीवितार्थे पञ्चानृतान्याहुरपातकानि। ६०२०
श्रद्दधानः शुभां विद्यां हीनादपि समाप्नुयात्। सुवर्णमपि चामेध्यादाददीताविचारयन्।
स्त्रीरत्नं दुष्कुलाच्चापि विषादप्यमृतं पिबेत्। अदुष्टा हि स्त्रियो रत्नमाप इत्येव धर्म्मतः।
गोब्राह्मणहितार्थञ्च वर्णानां सङ्करेषु च। वैश्यो गृह्णीत शस्त्राणि परित्राणार्थमात्मनः।
सुरापानं ब्रह्महत्या गुरुतल्पमथापि वा। अनिर्देश्यानि मन्यन्ते प्राणान्तमिति धारणा।
सुवर्णहरणं स्तैन्यं विप्रस्वञ्चेति पातकं। विहरन्मद्यपानाच्च अगम्यागमनादपि। ६०२५
पतितैः सम्प्रयोगाच्च ब्राह्मणीयोनितस्तथा। अचिरेण महाराज पतितो वै भवत्युत।
संवत्सरेण पतति पतितेन सहाचरन्। याजनाध्यापनाद्यौनान्न तु यानासनाशनात्।
एतानि हित्वा ऽतोऽन्यानि निर्देश्यानीति भारत। निर्देश्यानेन विधिना कालेनाव्यसनी भवेत्।
अन्नं वोर्ध्वं गृहीतव्यं प्रेतकर्म्मण्यपातिते। त्रिषु त्वेतेषु पूर्व्वेषु न कुर्व्वीत विचारणं।
अमात्यान् वा गुरून् वाऽपि जह्याद्दूरेण धार्म्मिकः। प्रायश्चित्तान्यकुर्व्वाणा न तैरर्हन्ति संविदं। ६०३०
अधर्म्मकारी धर्म्मेण तपसा हन्ति किल्बिषं। ब्रुवंस्तेन इति स्तेनं तावत् प्राप्नोति किल्बिषं।
अस्तेनं स्तेन इत्युक्त्वा द्विगुणं पापमाप्नुयात्। त्रिभागं ब्रह्महत्यायाः कन्या प्राप्नोति दुष्यती।
यस्तु दूषयिता तस्याः शेषं प्राप्नोति पाप्मनः। ब्राह्मणायावगूर्य्येह स्पृष्ट्वा गुरुतरं भवेत्।
वर्षाणां हि शतं तावत् प्रतिष्ठां नाधिगच्छति। सहस्रं त्वेव वर्षाणां निपात्य नरकं व्रजेत्।

तस्मान्नैवावगूर्य्येत नैव जातु निपातयेत् । शोणितं यावतः पांशून् संगृह्णीयाद्द्विजक्षतात् । ६०८५
तावतीः स समा राजन् नरके प्रतिपद्यते । भ्रूणहाहवमध्ये तु शुद्ध्येत शस्त्रपाततः ।
आत्मानं जुहुयाद्वह्नौ समिद्धे तेन शुद्ध्यते । सुरापो वारुणीमुष्णां पीत्वा पापात् प्रमुच्यते ।
तया स काये निर्द्दग्धे मृत्युं वा प्राप्य शुद्ध्यति । लोकांश्च लभते विप्रो नान्यथा लभते हि सः ।
गुरुतल्पमधिष्ठाय दुरात्मा पापचेतनः । स्त्र्याकारप्रतिमां लिङ्ग्य मृत्युना सोऽभिशुद्ध्यति ।
अथ वा शिश्नवृषणावादायाञ्जलिना स्वयं । नैर्ऋतीं दिशमास्थाय निपतेत् स त्वजिह्मगः । ६०९०
ब्राह्मणार्थेऽपि वा प्राणान् संत्यजेत्तेन शुद्ध्यति । अश्वमेधेन वाऽपीष्ट्वा अथ वा गोसवेन वा ।
अग्निष्टोमेन वा सम्यगिह प्रेत्य च पूज्यते । तथैव द्वादशसमाः कपाली ब्रह्महा भवेत् ।
ब्रह्मचारी भवेन्नित्यं स्वकर्म्म ख्यापयन्मुनिः । एवं वा तपसा युक्तो ब्रह्महा स मुनिर्भवेत् ।
एवन्तु समभिज्ञातामात्रेयीं वा निपातयेत् । द्विगुणा ब्रह्महत्या वै आत्रेयी निधने भवेत् ।
सुरापो नियताहारो ब्रह्मचारी क्षितीशयः । ऊर्द्ध्वं त्रिभ्योऽपि वर्षेभ्यो यजेताग्निष्टुतापरं । ६०९५
ऋषभैकसहस्रं वा गा दत्त्वा शौचमाप्नुयात् । वैश्यं हत्वा तु वर्षे द्वे ऋषभैकशतञ्च गाः ।
शूद्रं हत्वाब्दमेवैकमृषभञ्च शतञ्च गाः । श्ववराहखरान् हत्वा शौद्रमेव व्रतञ्चरेत् ।
मार्ज्जारचाषमण्डूकान् काकं व्यालञ्च मूषिकं । उक्तः पशुसमो दोषो राजन् प्राणिनिपातनात् ।
प्रायश्चित्तान्यथान्यानि प्रवक्ष्याम्यनुपूर्व्वशः । अल्पे वाऽप्यथ शोचेत पृथक् संवत्सरञ्चरेत् ।
त्रीणि श्रोत्रियभार्य्यायां परदारे च द्वे स्मृते । काले चतुर्थे भुञ्जानो ब्रह्मचारी व्रती भवेत् । ६१००
स्थानासनाभ्यां विहरेत् त्रिरह्नोऽभ्युपयन्नपः । एवमेव निराकर्त्ता यश्चाग्नीनपविध्यति ।
त्यजत्यकारणे यश्च पितरं मातरं गुरुं । पतितः स्यात् स कौरव्य यथा धर्म्मेषु निश्चयः ।
ग्रासाच्छादनमात्रन्तु दद्यादिति निदर्शनं । भार्य्यायां व्यभिचारिण्यां निरुद्धायां विशेषतः ।
यत् पुंसः परदारेषु तदेनां चारयेद्व्रतं । श्रेयांसं शयनं हित्वा याऽन्यत् पापं निगच्छति ।
श्वभिस्तामर्द्दयेद्राजा संस्थाने बहुविस्तरे । पुमांसमुन्नयेत् प्राज्ञः शयने तप्त आयसे । ६१०५
अप्याद्धीत दारूणि तत्र दह्येत पापकृत् । एष दण्डो महाराज स्त्रीणां भर्त्तृव्यतिक्रमात् ।
संवत्सराभिशस्तस्य दुष्टस्य द्विगुणो भवेत् । द्वे तस्य त्रीणि वर्षाणि चत्वारि सह सेविनि ।
कुचरः पञ्च वर्षाणि चरेद्भैक्ष्यं मुनिव्रतः । परिवित्तिः परिवेत्ता या चैव परिविद्यते ।
पाणिग्राहश्च धर्म्मेण सर्व्वे ते पतिताः स्मृताः । चरेयुः सर्व्व एवैते वीरहा यद्व्रतञ्चरेत् ।
चान्द्रायणञ्चरेन्मासं कृच्छ्रं वा पापशुद्धये । परिवेत्ता प्रयच्छेत परिवित्ताय तां स्नुषां । ६११०
ज्येष्ठेन त्वभ्यनुज्ञातो यवीयानप्यनन्तरं । एवञ्च मोक्षमाप्नोति तौ च सा चैव धर्म्मतः ।
अमानुषीषु गोवर्ज्जमनावृष्टिर्न दुष्यति । अधिष्ठातारमन्तारं पशूनां पुरुषं विदुः ।
परिधायोर्द्ध्ववालन्तु पात्रमादाय मृण्मयं । चरेत् सप्त गृहान्नित्यं स्वकर्म्म परिकीर्त्तयन् ।
तत्रैव लब्धभोजी स्यात् द्वादशाहात् स शुद्ध्यति । चरेत् संवत्सरञ्चापि तद्व्रतं येन क्लन्तति ।

भवेत्तु मानसेष्वेवं प्रायश्चित्तमनुत्तमं। दानं वा दानशक्तेषु सर्व्वमेतत् प्रकल्पयेत्। ६११५

अनास्तिकेषु गोमात्रं दानमेकं प्रचक्षते। श्ववराहमनुष्याणां कुक्कुटस्य खरस्य च।

मांसं मूत्रं पुरीषं वा प्राश्य संस्कारमर्हति। ब्राह्मणस्तु सुरापस्य गन्धमादाय सोमपः।

अपस्त्र्यहं पिबेदुष्णं त्र्यहमुष्णं पयः पिबेत्। त्र्यहमुष्णं पयः पीत्वा वायुभक्षो भवेत्त्र्यहं।

एवमेतत् समुद्दिष्टं प्रायश्चित्तं सनातनं। ब्राह्मणस्य विशेषेण यदज्ञानेन सम्भवेत्।

इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि प्रायश्चित्तीये पञ्चषष्ट्यधिकशततमोऽध्यायः॥ १६५ ॥

॥ वैशम्पायन उवाच ॥ कथान्तरमथासाद्य खड्गयुद्धविशारदः। नकुलः शरतल्पस्थमिदमाह पितामहं। ६१२०

॥ नकुल उवाच ॥ धनुः प्रहरणं श्रेष्ठमतोवात्र पितामह। यतस्तु मम धर्म्मज्ञ खड्ग एव सुसंशितः।

विशीर्णे कार्म्मुके राजन् प्रक्षीणेषु च वाजिषु। खड्गेन शक्यते युद्धे साध्वात्मा परिरक्षितुं।

शरासनधरांश्चैव गदाशक्तिधरांस्तथा। एकः खड्गधरो वीरः समर्थः प्रतिबाधितुं।

एतन्मे संशयश्चैव कौतूहलमतीव च। किंस्वित् प्रहरणं श्रेष्ठं सर्व्वयुद्धेषु पार्थिव।

कथञ्चोत्पादितः खड्गः कस्मै चार्थाय केन च। पूर्ब्बाचार्य्यञ्च खड्गस्य प्रब्रूहि प्रपितामह। ६१२५

॥ वैशम्पायन उवाच॥ तस्य तद्वचनं श्रुत्वा माद्रीपुत्त्रस्य धीमतः। स तु कौशलसंयुक्तं सूक्ष्मचित्रार्थवद्वतं।

ततस्तस्योत्तरं वाक्यं स्वरवर्णोपपादितं। शिक्षया चोपपन्नाय द्रोणशिष्याय भारत।

उवाच स तु धर्म्मज्ञो धनुर्व्वेदस्य पारगः। शरतल्पगतो भीष्मो नकुलाय महात्मने।

॥ भीष्म उवाच ॥ तत्त्वं शृणुष्व माद्रेय यदेतत् परिपृच्छसि। प्रबोधितोऽस्मि भवता धातुमानिव पर्व्वतः।

सलिलैकार्णवं तात पुरा सर्व्वमभूदिदं। निष्प्रकम्पमनाकाशमनिर्द्देश्यमहीतलं। ६१३०

तमसा वृतमस्पर्शमपि गम्भीरदर्शनं। निःशब्दं वा प्रमेयञ्च तत्र जज्ञे पितामहः।

सोऽसृजद्वातमग्निञ्च भास्करञ्चापि वीर्य्यवान्। आकाशमसृजच्चोर्द्धमधो भूमिञ्च नैर्ऋतीं।

नभः सचन्द्रतारञ्च नक्षत्राणि ग्रहांस्तथा। संवत्सरानृतून्मासान् पक्षानथ लवान् क्षणान्।

ततः शरीरं लोकस्थं स्थापयित्वा पितामहः। जनयामास भगवान् पुत्त्रानुत्तमतेजसः।

मरीचिमृषिमत्रिञ्च पुलस्त्यं पुलहं क्रतुं। वशिष्ठाङ्गिरसौ चोभौ रुद्रञ्च प्रभुमीश्वरं। ६१३५

प्राचेतसस्तथा दक्षः कन्याः षष्टिमजीजनत्। ता वै ब्रह्मर्षयः सर्व्वाः प्रजार्थं प्रतिपेदिरे।

ताभ्यो विश्वानि भूतानि देवाः पितृगणास्तथा। गन्धर्व्वाप्सरसश्चैव रक्षांसि विविधानि च।

पतत्त्रिमृगमीनाश्च प्लवङ्गाश्च महोरगाः। तथा पक्षिगणाः सर्व्वे जलस्थितिविचारिणः।

उद्भिदः स्वेदजाश्चैव साण्डजाश्च जरायुजाः। जज्ञे तात जगत्सर्व्वं तथा स्थावरजङ्गमं।

भूतसर्गमिमं कृत्वा सर्व्वलोकपितामहः। शाश्वतं वेदपठितं धर्म्मं प्रयुयुजे ततः। ६१४०

तस्मिन् धर्म्मे स्थिता देवाः सहाचार्य्यपुरोहिताः। आदित्या वसवो रुद्राः ससाध्या मरुदश्विनः।

भृग्वत्र्यङ्गिरसः सिद्धाः काश्यपाश्च तपोधनाः। वशिष्ठगौतमागस्त्यास्तथा नारदपर्व्वतौ।

ऋषयो बालिखिल्याश्च प्रभासाः सिकतास्तथा। घृतपाः सोमपा यव्या वैश्वानरमरीचिपाः।

आक्रुष्टाश्चैव हंसाश्च चरन्तो वाऽग्नियोनयः । वानप्रस्थाः प्रशमवश्च स्थिता ब्रह्मानुशासने ।
दानवेन्द्रास्त्वतिक्रम्य तत्पितामहशासनं । धर्म्मस्यापचयं चक्रुः क्रोधलोभसमन्विताः । ६१४५
हिरण्यकशिपुश्चैव हिरण्याक्षो विरोचनः । शम्बरो विप्रचित्तिश्च प्रह्लादो नमुचिर्ब्बलिः ।
एते चान्ये च बहवः सगणा दैत्यदानवाः । धर्म्मसेतुमतिक्रम्य रेमिरे धर्म्मनिश्चयाः ।
सर्व्वे तुल्याभिजातीया यथा देवास्तथा वयं । इत्येवं धर्म्ममास्थाय स्पर्द्धमानाः सुरर्षिभिः ।
न प्रियं नाप्यनुक्रोशं चक्रुर्भूतेषु भारत । त्रीनुपायानुपाक्रम्य दण्डेन रुरुधुः प्रजाः ।
न जग्मुः संविदं तैश्च दर्पादसुरसत्तमाः । अथ वै भगवान् ब्रह्मा ब्रह्मर्षिभिरुपस्थितः । ६१५०
तथा हिमवतः शृङ्गे सुरम्ये पद्मतारके । शतयोजनविस्तारे मणिरत्नचयाचिते ।
तस्मिन् गिरिवरे पुत्र पुष्पितद्रुमकानने । तस्थौ स विबुधश्रेष्ठो ब्रह्मा लोकार्थसिद्धये ।
ततो वर्षसहस्रान्ते वितानमकरोत्प्रभुः । विधिना कल्पदृष्टेन यथावच्चोपपादितं ।
ऋषिभिर्यज्ञपटुभिर्यथावत्कर्म्मकर्त्तृभिः । समिद्भिः परिसङ्कीर्णं दीप्यमानैश्च पावकैः ।
काञ्चनैर्यज्ञभाण्डैश्च भ्राजिष्णुभिरलंकृतं । वृतं देवगणैश्चैव प्रवरैर्यज्ञमण्डलं । ६१५५
तथा ब्रह्मर्षिभिश्चैव सदस्यैरुपशोभितं । तत्र घोरतमं वृत्तमृषीणां मे परिश्रुतं ।
चन्द्रमा विमलं व्योम यथाऽभ्युदिततारकं । विकीर्य्याग्निं तथाभूतमुत्थितं श्रूयते तदा ।
नीलोत्पलसवर्णाभं तीक्ष्णदंष्ट्रं कृशोदरं । प्रांशुं सुदुर्द्धर्षतरं तथैव ह्यमितौजसं ।
तस्मिन्नुत्पतमाने च प्रचचाल वसुन्धरा । महोर्म्मिकलिलावर्त्तश्चुक्षुभे स महोदधिः ।
पेतुरुल्का महोत्पाताः शाखाश्च मुमुचुर्द्रुमाः । अप्रशान्ता दिशः सर्व्वाः पवनश्चाशिवो ववौ । ६१६०
मुहुर्म्मुहुश्च भूतानि प्राव्यथन्त भयात्तथा । ततः स तुमुलं दृष्ट्वा तच्च भूतमुपस्थितं ।
महर्षिसुरगन्धर्व्वानुवाचेदं पितामहः । मयैवं चिन्तितं भूतमसिर्नामैष वीर्य्यवान् ।
रक्षणार्थाय लोकस्य वधाय च सुरद्विषां । ततस्तद्रूपमुत्सृज्य बभौ निस्त्रिंश एव सः ।
विमलस्तीक्ष्णधारश्च कालोऽन्तक इवोद्यतः । ततः स शितिकण्ठाय रुद्रायर्षभकेतवे ।
ब्रह्मा ददावसिं तीक्ष्णमधर्म्मप्रतिवारणं । ततः स भगवान् रुद्रो महर्षिजनसंस्तुतः । ६१६५
प्रगृह्यासिममेयात्मा रूपमन्यच्चकार ह । चतुर्ब्बाहुः स्पृशन्मूर्द्ध्ना भूस्थितोऽपि दिवाकरं ।
ऊर्द्ध्वदृष्टिर्म्महालिङ्गो मुखाज्ज्वालाः समुत्सृजन् । विकुर्व्वन् बहुधा वर्णान्नीलपाण्डुरलोहितान् ।
विभ्रत् कृष्णाजिनं वासो हेमप्रवरतारकं । नेत्रञ्चैकं ललाटेन भास्करप्रतिमं वहन् ।
शुशुभातेऽतिविमले द्वे नेत्रे कृष्णपिङ्गले । ततो देवो महादेवः शूलपाणिर्भगाक्षिहा ।
संप्रगृह्य तु निस्त्रिंशं कालाग्निसमवर्च्चसं । त्रिकूटं चर्म्म चोद्यम्य सविद्युतमिवाम्बुदं । ६१७०
चचार विविधान्मार्गान् महाबलपराक्रमः । विधुन्वन्नसिमाकाशे तथा युद्धचिकीर्षया ।
तस्य नादं विनदतो महाहासञ्च मुञ्चतः । बभौ प्रतिभयं रूपं तदा रुद्रस्य भारत ।
तद्रूपधारिणं रुद्रं रौद्रकर्म्मचिकीर्षया । निशम्य दानवाः सर्व्वे हृष्टाः समभिदुद्रुवुः ।

अश्मभिश्चाभ्यवर्षन्त प्रदीप्तैश्च तथोल्मुकैः । घोरैः प्रहरणैश्चान्यैः क्षुरधारैरयोमयैः

ततस्तु दानवानीकं संप्रणेतारमच्युतं । रुद्रं दृष्ट्वा बलोद्भूतं प्रमुमोह चचाल च । ६१७५

चित्रं शीघ्रपदत्वाच्च चरन्तमसिपाणिनं । तमेकमसुराः सर्व्वे सहस्रमिति मेनिरे ।

छिन्दन् भिन्दन् रुजन् कृन्तन् दारयन् पोथयन्नपि । अचरद्वैरिसङ्घेषु दावाग्निरिव कक्षगः ।

असिवेगप्रभग्नास्ते छिन्नबाहूरुवक्षसः । संप्रकीर्णान्त्रगात्राश्च पेतुरुर्व्व्यां महाबलाः ।

अपरे दानवा भग्नाः खड्गपातावपीडिताः । अन्योन्यमभिनर्द्दन्तो दिशः संप्रतिपेदिरे ।

भूमिं केचित् प्रविविशुः पर्व्वतानपरे तथा । अपरे जग्मुराकाशमपरेऽम्भः समाविशन् । ६१८०

तस्मिन्महति संवृत्ते समरे भृशदारुणे । बभूव भूः प्रतिभया मांसशोणितकर्द्दमा ।

दानवानां शरीरैश्च पतितैः शोणितोक्षितैः । समाकीर्णा महाबाहो शैलैरिव किंशुकैः ।

स रुद्रो दानवान् हत्वा कृत्वा धर्म्मोत्तरं जगत् । रौद्रं रूपमथोत्क्षिप्य चक्रे रूपं शिवं शिवः ।

ततो महर्षयः सर्व्वे सर्व्वे देवगणास्तथा । जयेनाद्भुतकल्पेन देवदेवं तथाऽर्च्चयन् ।

ततः स भगवान् रुद्रो दानवक्षतजोक्षितं । असिं धर्म्मस्य गोप्तारं ददौ सत्कृत्य विष्णवे । ६१८५

विष्णुर्म्मरीचये प्रादान्मरीचिर्भगवानपि । महर्षिभ्यो ददौ खड्गमृषयो वासवाय च ।

महेन्द्रो लोकपालेभ्यो लोकपालास्तु पुत्रक । मनवे सूर्य्यपुत्राय ददुः खड्गं सुविस्तरं ।

ऊचुश्चैनं तथा वाक्यं मानुषाणां त्वमीश्वरः । असिना धर्म्मगर्भेण पालयस्व प्रजा इति ।

धर्म्मसेतुमतिक्रान्ताः स्थूलसूक्ष्मात्मकारणात् । विभज्य दण्डं रक्ष्यास्तु धर्म्मतो न यदृच्छया ।

दुर्व्वाचा निग्रहो दण्डो हिरण्यबहुलस्तथा । व्यङ्गता च शरीरस्य वधो वाऽनल्पकारणात् । ६१९०

असेरेतानि रूपाणि दुर्व्वारादीनि निर्द्दिशेत् । असेरेवं प्रमाणानि परिपाल्य व्यतिक्रमात् ।

स विसृज्याथ पुत्रं स्वं प्रजानामधिपं ततः । मनुः प्रजानां रक्षार्थं क्षुपाय प्रददावसिं ।

क्षुपाज्जग्राह चेक्ष्वाकुरिक्ष्वाकोश्च पुरूरवाः । आयुश्च तस्माल्लेभे तं नहुषश्च ततो भुवि ।

ययातिर्नहुषाच्चापि पूरुस्तस्माच्च लब्धवान् । अमूर्त्तरयसस्तस्मात्ततो भूमिशयो नृपः ।

भरतश्चापि दौष्मन्तिर्लेभे भूमिशयादसिं । तस्माल्लेभे च धर्म्मज्ञो राजन्नैलविलस्तथा । ६१९५

ततश्चैलविलाल्लेभे धुन्धुमारो नरेश्वरः । धुन्धुमाराच्च काम्बोजो मुचुकुन्दस्ततोऽलभत् ।

मुचुकुन्दान्मरुत्तश्च मरुत्तादपि रैवतः । रैवताद्युवनाश्वश्च युवनाश्वात्ततो रघुः ।

इक्ष्वाकुवंशजस्तस्माद्धरिणाश्वः प्रतापवान् । हरिणाश्वादसिं लेभे शुनकः शुनकादपि ।

उशीनरो वै धर्म्मात्मा तस्माद्भोजः सयादवः । यदुभ्यश्च शिविर्लेभे शिवेश्चापि प्रतर्द्दनः ।

प्रतर्द्दनादष्टकश्च पृषदश्वोऽष्टकादपि । पृषदश्वाद्भरद्वाजो द्रोणस्तस्मात् कृपस्ततः । ६२००

ततस्तु भ्रातृभिः सार्द्धं परमासिमवाप्तवान् । कृत्तिकास्तस्य नक्षत्रमसेरग्निश्च दैवतं ।

रोहिणी गोत्रमास्याथ रुद्रश्च गुरुरुत्तमः । असेरष्टौ हि नामानि रहस्यानि निबोध मे ।

पाण्डवेय सदा यानि कीर्त्तयन् लभते जयं । असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ।

श्रीगर्भो विजयश्चैव धर्म्मपालस्तथैव च। अग्यः प्रहरणानाञ्च खड्गो माद्रवतीसुत।
महेश्वरप्रणीतश्च पुराणे निश्चयं गतः। पृथुस्तूत्पादयामास धनुराद्यमरिन्दम। ६२०३
तेनेयं पृथिवी दुग्धा शस्यानि सुबहून्यपि। धर्म्मेण च यथा पूर्व्वं वैन्येन परिरक्षिता।
तदेतदार्षं माद्रेय पुराणं कर्त्तुमर्हसि। असेश्च पूजा कर्त्तव्या सदा युद्धविशारदैः।
इत्येष प्रथमः कल्पो व्याख्यातस्ते सुविस्तरात्। असेरुत्पत्तिसंसर्गो यथावद्भरतर्षभ।
सर्व्वथैतदिदं श्रुत्वा खड्गसाधनमुत्तमं। लभते पुरुषः कीर्त्तिं प्रेत्य चानन्त्यमश्नुते।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि खड्गोत्पत्तिकथने षट्षष्ट्यधिकशततोऽध्यायः॥ १६६ ॥

॥ वैशम्पायन उवाच ॥ इत्युक्तवति भीष्मे तु तूष्णीम्भूते युधिष्ठिरः। पप्रच्छावसथं गत्वा भ्रातॄन् विदुरपञ्चमान्। ६२१०
धर्म्मे चार्थे च कामे च लोकवृत्तिः समाहिता। तेषां गरीयान् कतमो मध्यमः को लघुश्च कः।
कस्मिंश्चात्मा नियन्तव्यस्त्रिवर्गविजयाय वै। संहृष्टा नैष्ठिकं वाक्यं यथावद्वक्तुमर्हथ।
ततोऽर्थगतितत्त्वज्ञः प्रथमं प्रतिभानवान्। जगाद विदुरो वाक्यं धर्म्मशास्त्रमनुस्मरन्।
॥ विदुर उवाच ॥ बाहुश्रुत्यं तपस्त्यागः श्रद्धा यज्ञक्रिया क्षमा। भावशुद्धिर्दया सत्यं संयमश्चात्मसम्पदः।
एतदेवाभिपद्यस्व मा ते भूच्चलितं मनः। एतन्मूलौ हि धर्म्मार्थावेतदेकपदं हि मे। ६२१५
धर्म्मेणैवर्षयस्तीर्णा धर्म्मे लोकाः प्रतिष्ठिताः। धर्म्मेण देवा ववृधुर्धर्म्मे चार्थः समाहितः।
धर्म्मो राजन् गुणश्रेष्ठो मध्यमो ह्यर्थ उच्यते। कामो यवीयानिति च प्रवदन्ति मनीषिणः।
तस्माद्धर्म्मप्रधानेन भवितव्यं यतात्मना। तथा च सर्व्वभूतेषु वर्त्तितव्यं यथात्मनि।

॥ वैशम्पायन उवाच ॥ समाप्तवचने तस्मिन्नर्थशास्त्रविशारदः। पार्थो धर्म्मार्थतत्त्वज्ञो जगौ वाक्यं प्रचोदितः।

॥ अर्ज्जुन उवाच ॥ कर्म्मभूमिरियं राजन्निह वार्त्ता प्रशस्यते। कृषिर्व्वाणिज्यगोरक्ष्यं शिल्पानि विविधानि च। ६२२०
अर्थ इत्येव सर्व्वेषां कर्म्मणामव्यतिक्रमः। न ह्यृतेऽर्थेन वर्त्तेते धर्म्मकामाविति श्रुतिः।
विषयैरर्थवान् धर्म्ममाराधयितुमुत्तमं। कामञ्च चरितुं शक्तो दुष्प्रापमकृतात्मभिः।
अर्थस्यावयवावेतौ धर्म्मकामाविति श्रुतिः। अर्थसिद्ध्या विनिर्वृत्तावुभावेतौ भविष्यतः।
तद्गतार्थं हि पुरुषं विशिष्टतरयोनयः। ब्रह्माणमिव भूतानि सततं पर्य्युपासते।
जटाजिनधरा दान्ताः पङ्कदिग्धा जितेन्द्रियाः। मुण्डा निस्तन्तवश्चापि वसन्त्यर्थार्थिनः पृथक्। ६२२५
कषायवसनाश्चान्ये श्मश्रुला ह्रीनिषेविणः। विद्वांसश्चैव शान्ताश्च मुक्ताः सर्व्वपरिग्रहैः।
अर्थार्थिनः सन्ति केचिदपरे स्वर्गकाङ्क्षिणः। कुलप्रत्यागमाश्चैके स्वं स्वं धर्म्ममनुष्ठिताः।
आस्तिका नास्तिकाश्चैव नियताः संयमे परे। अप्रज्ञानं तमोभूतं प्रज्ञानन्तु प्रकाशिता।
भृत्यान् भोगैर्द्विषो दण्डैर्यो योजयति सोऽर्थवान्। एतन्मतिमतां श्रेष्ठ मतं मम यथायथं।
अनयोस्तु निबोध त्वं वचनं वाक्यकण्ठयोः। ६२३०

॥ वैशम्पायन उवाच ॥ ततो धर्म्मार्थकुशलौ माद्रीपुत्रावनन्तरं। नकुलः सहदेवश्च वाक्यं जगदतुः परं।

॥ नकुलसहदेवावूचतुः॥ आसीनश्च शयानश्च विचरन्नपि वा स्थितः। अर्थयोगं दृढं कुर्य्याद्योगैरुच्चावचैरपि।

अर्थस्तु वै विनिर्दिष्टे दुर्लभे परमप्रिये । इह कामानवाप्नोति प्रत्यक्षं नात्र संशयः ।
योऽर्थो धर्म्मेण संयुक्तो धर्म्मो यश्चार्थसंयुतः । तद्धि त्वामृतसंवादं तस्मादेतौ मताविह ।
अनर्थस्य न कामोऽस्ति तथाऽर्थोऽधर्म्मिणः कुतः । तस्मादुद्विजते लोको धर्म्मार्थाद्यो बहिष्कृतः । १२३५
तस्माद्धर्म्मप्रधानेन साध्योऽर्थः संयतात्मना । विश्वस्तेषु हि भूतेषु कल्पते सर्व्वमेव हि ।
धर्म्मं समाचरेत् पूर्व्वं ततोऽर्थं धर्म्मसंयुतं । ततः कामञ्चरेत् पश्चात् सिद्धार्थः स हि तत्परं ।
॥ वैशम्पायन उवाच ॥ विरेमतुस्तु तद्वाक्यमुक्त्वा तावश्विनीसुतौ । भीमसेनस्तदा वाक्यमिदं वक्तुं प्रचक्रमे ।
॥ भीमसेन उवाच ॥ नाकामः कामयत्यर्थं नाकामो धर्म्ममिच्छति । नाकामः कामयानोऽस्ति तस्मात् कामो विशिष्यते ।
पत्राग्रफलमूलाद्या वायुभक्षाः सुसंयताः । वेदोपवेदेष्वपरे युक्ताः स्वाध्यायपारगाः । १२४०
कामेन युक्ता ऋषयस्तपस्येव समाहिताः । श्राद्धयज्ञक्रियायाञ्च तथा दानप्रतिग्रहे ।
वणिजः कर्षका गोपाः कारवः शिल्पिनस्तथा । दैवकर्म्मकृतश्चैव युक्ताः कामेन कर्म्मसु ।
समुद्रं वा विशन्त्यन्ये नराः कामेन संयुताः । कामो हि विविधाकारः सर्व्वं कामेन सन्ततं ।
नास्ति नासीन्नाभविष्यद्भूतं कामात्मकात् परं । एतत् सारं महाराज धर्म्मार्थावत्र संस्थितौ ।
नवनीतं यथा दध्नस्तथा कामोऽर्थधर्म्मतः । श्रेयस्तैलं हि पिण्याकाद् घृतं श्रेय उदश्वितः । १२४५
श्रेयः पुष्पफलं काष्ठात् कामो धर्म्मार्थयोर्व्वरः । पुष्पतो मध्विव रसः काम आभ्यां तथा स्मृतः ।
कामो धर्म्मार्थयोर्योनिः कामश्चाथ तदात्मकः ।

नाकामतो ब्राह्मणाः स्वन्नमर्थान्नाकामतो ददति ब्राह्मणेभ्यः । नाकामतो विविधा लोकचेष्टा तस्मात् कामः प्राक् त्रिवर्गस्य दृष्टः ।

सुचारुवेशाभिरलङ्कृताभिर्मदोत्कटाभिः प्रियदर्शनाभिः । रमस्व योषाभिरुपेत्य कामं कामो हि राजंस्तव परो भवेन्नः ।

बुद्धिर्ममैषा परिषत्स्थितस्य मा भूद्विचारस्तव धर्म्मपुत्र । स्यात् संहितं सद्भिरफल्गुसारं समेति वाक्यं परमानृशंसं । १२५०

धर्म्मार्थकामाः सममेव सेव्या यो ह्येकभक्तः स नरो जघन्यः । तयोस्तु दाक्ष्यं प्रवदन्ति मध्यं स उत्तमो योऽभिरतस्त्रिवर्गे ।

प्राज्ञः सुहृच्चन्दनसारलिप्तो विचित्रमाल्याभरणैरुपेतः । ततो वचः संग्रहविस्तरेण प्रोक्त्वाऽथ वीरान् विरराम भीमः ।

ततो मुहूर्त्तादथ धर्म्मराजो वाक्यानि तेषामनुचिन्त्य सम्यक् । उवाच वाचा वितथं स्मरन् वै बहुश्रुतो धर्म्मभृतां वरिष्ठः ।

॥ युधिष्ठिर उवाच ॥ निःसंशयं निश्चितधर्म्मशास्त्राः सर्व्वे भवन्तो विदितप्रमाणाः । विज्ञातुकामस्य ममेह वाक्यमुक्तं यद्वै नैष्ठिकं तत् श्रुतं मे ।

इदं त्ववश्यं गदतो ममापि वाक्यं निबोधध्वमनन्यभावाः । यो वै न पापे निरतो न पुण्ये नार्थे न धर्म्मे मनुजो न कामे । १२५५

विमुक्तदोषः समलोष्टकाञ्चनो विमुच्यते दुःखसुखार्थसिद्धेः । भूतानि जातिमरणात्मकानि जराविकारैश्च समन्वितानि ।

भूयश्च तैस्तैः प्रतिबोधितानि मोक्षं प्रशंसन्ति न तच्च विद्मः । स्नेहेन युक्तस्य न चास्ति मुक्तिरिति स्वयम्भूर्भगवानुवाच ।
बुधाश्च निर्व्वाणपरा भवन्ति तस्मान्न कुर्य्यात् प्रियमप्रियञ्च । एतत् प्रधानञ्च न कामकारो यथा नियुक्तोऽस्मि तथा करोमि ।
भूतानि सर्व्वाणि विधिर्नियुङ्क्ते विधिर्ब्बलीयानिति वित्त सर्व्वे । न कर्म्मणाप्नोत्यनवाप्यमर्थं यद्भावि तद्वै भवतीति वित्त ।
त्रिवर्गहीनोऽपि हि विन्दतेऽर्थं तस्मादिदं लोकहिताय गुह्यं । ६२६०
॥ वैशम्पायन उवाच ॥ ततस्तदग्र्यं वचनं मनोगतं समस्तमाज्ञाय ततो हि हेतुमत् । तदा प्रणेदुश्च जहर्षिरे च ते कुरुप्रवीराय च चक्रिरेऽञ्जलिं ।
सुचारुवर्णाक्षरचारुभूषितां मनोनुगां निर्द्धुतवाक्यकण्टकां । निशम्य तां पार्थिवपार्थभाषितां गिरं नरेन्द्राः प्रशशंसुरेव ते ।
स चापि तान् धर्म्मसुतो महामनास्तदा प्रतीतान् प्रशशंस वीर्य्यवान् । पुनश्च पप्रच्छ सरिद्वरासुतं ततः परं धर्म्ममहीनचेतसं ।
इति श्रीमहाभारते शान्तिपर्व्वण्यापद्धर्म्मपर्व्वणि षड्जगीतायां सप्तषष्ट्यधिकशततोऽध्यायः ॥ १६७ ॥
॥ युधिष्ठिर उवाच ॥ पितामह महाप्राज्ञ कुरूणां प्रीतिवर्द्धन । प्रश्नं कञ्चित् प्रवक्ष्यामि तन्मे व्याख्यातुमर्हसि ।
कीदृशा मानवाः सौम्याः कैः प्रीतिः परमा भवेत् । आयत्याञ्च तदात्वे च के क्षमास्तान् वदस्व मे । ६२६५
न हि तत्र धनं स्फीतं न च सम्बन्धिबान्धवाः । तिष्ठन्ति यत्र सुहृदस्तिष्ठन्तीति मतिर्म्मम ।
दुर्लभो हि सुहृत् श्रोता दुर्लभश्च हितः सुहृत् । एतद्धर्म्मभृतां श्रेष्ठ सर्व्वं व्याख्यातुमर्हसि ।
॥ भीष्म उवाच ॥ सन्धेयान् पुरुषान् राजन्नसन्धेयांश्च तत्त्वतः । वदतो मे निबोध त्वं निखिलेन युधिष्ठिर ।
लुब्धः क्रूरस्त्यक्तधर्म्मा निकृतिः शठ एव च । क्षुद्रः पापसमाचारः सर्व्वशङ्की तथाऽलसः ।
दीर्घसूत्रोऽनृजुः क्रुष्टो गुरुदारप्रधर्षकः । व्यसने यः परित्यागी दुरात्मा निरपत्रपः । ६२७०
सर्व्वतः पापदर्शी च नास्तिको वेदनिन्दकः । संप्रकीर्णेन्द्रियो लोके यः कामं निरतश्चरेत् ।
असत्यो लोकविद्विष्टः समये चानवस्थितः । पिशुनोऽथाकृतप्रज्ञो मत्सरी पापनिश्चयः ।
दुःशीलोऽथाकृतात्मा च नृशंसः कितवस्तथा । मित्रैरपकृतिर्नित्यमिच्छतेऽर्थं परस्य यः ।
ददतश्च यथाशक्ति यो न तुष्यति मन्दधीः । अधैर्य्यमपि यो युङ्क्ते सदा मित्रं नरर्षभ ।
अस्थाने क्रोधनोऽयुक्तो यश्चाकस्माद्विरुध्यते । सुहृदश्चैव कल्याणानाशु त्यजति किल्बिषी । ६२७५
अल्पेऽप्यपकृते मूढस्तथाज्ञानात्कृतेऽपि च । कार्य्यसेवी च मित्रेषु मित्रद्वेषी नराधिप ।
शत्रुर्म्मित्रमुखो यश्च जिह्मप्रेक्षी विलोचनः । न विरज्यति कल्याणे यः कुर्य्यात्तादृशं नरं ।
पानपो द्वेषणः क्रोधी निर्घृणः परुषस्तथा । परोपतापी मित्रध्रुक् तथा प्राणिवधे रतः ।
कृतघ्नश्चाधमो लोके न सन्धेयः कदाचन । छिद्रान्वेषी ह्यसन्धेयः सन्धेयानपि मे शृणु ।
कुलीना वाक्यसम्पन्ना ज्ञानविज्ञानकोविदाः । रूपवन्तो गुणोपेतास्तथाऽलुब्धा जितश्रमाः । ६२८०

सन्मित्राश्च कृतज्ञाश्च सर्व्वज्ञा लोभवर्ज्जिताः । माधुर्य्यगुणसम्पन्नाः सत्यसन्धा जितेन्द्रियाः ।
व्यायामशीलाः सततं कुलपुत्राः कुलोद्वहाः । दोषैर्विमुक्ताः प्रथितास्ते ग्राह्याः पार्थिवैर्नराः ।
यथाशक्तिसमाचाराः संप्रतुष्यन्ति हि प्रभो । नास्थाने क्रोधवन्तश्च न चाकस्माद्विरागिणः ।
विरक्ताश्च न दुष्यन्ति मनसाऽप्यर्थकोविदाः । आत्मानं पीडयित्वाऽपि सुहृत्कार्य्यपरायणाः ।
विरज्यन्ति न मित्रेभ्यो वासो रक्तमिवाविकं । क्रोधाच्च लोभमोहाभ्यां नानर्थे युवतीषु च । ६२८५
न दर्शयन्ति सुहृदो विश्वस्ता धर्म्मवत्सलाः । लोष्टकाञ्चनतुल्यार्थाः सुहृत्सु दृढबुद्धयः ।
ये चरन्त्यभिमानानि निसृष्टात्मविभूषणाः । संगृह्णन्तः परिजनं स्वाम्यर्थपरमाः सदा ।
ईदृशैः पुरुषश्रेष्ठैर्यः सन्धिं कुरुते नृपः । तस्य विस्तीर्य्यते राज्यं ज्योत्स्ना ग्रहपतेरिव ।
शास्त्रनित्या जितक्रोधा बलवन्तो रणे सदा । जन्मशीलगुणोपेताः सन्धेयाः पुरुषोत्तमाः ।
ये च दोषसमायुक्ता नराः प्रोक्ता मयाऽनघ । तेषामप्यधमा राजन् कृतघ्ना मित्रघातकाः । ६२९०
त्यक्तव्यास्तु दुराचाराः सर्व्वेषामिति निश्चयः ।
॥ युधिष्ठिर उवाच ॥ विस्तरेणाथ सम्बन्धं श्रोतुमिच्छामि तत्त्वतः । मित्रद्रोही कृतघ्नश्च यः प्रोक्तस्तद्वदस्व मे ।
॥ भीष्म उवाच ॥ हन्त ते वर्त्तयिष्येऽहमितिहासं पुरातनं । उदीच्यां दिशि यद्वृत्तं म्लेच्छेषु मनुजाधिप ।
ब्राह्मणो मध्यदेशीयः कश्चिद्वै ब्रह्मवर्ज्जितं । ग्रामं वृद्धियुतं वीक्ष्य प्राविशद्भैक्ष्यकाङ्क्षया ।
तत्र दस्युर्धनयुतः सर्व्ववर्णविशेषवित् । ब्रह्मण्यः सत्यसन्धश्च दाने च निरतोऽभवत् । ६२९५
तस्य क्षयमुपागम्य ततो भिक्षामयाचत । प्रतिश्रयञ्च वासार्थं भिक्षाञ्चैवाथ वार्षिकीं ।
प्रादात्तस्मै च विप्राय वस्त्रञ्च सदशं नवं । नारीञ्चापि वयोपेतां भर्त्रा विरहितां तथा ।
एतत् संप्राप्य हृष्टात्मा दस्योः सर्व्वं द्विजस्तथा । तस्मिन् गृहवरे राजंस्तया रेमे स गौतमः ।
कुटुम्बार्थञ्च दास्याश्च साहाय्यञ्चाप्यथाकरोत् । तत्रावसत् स वर्षाणि समृद्धे शवरालये ।
वाणवेधे परं यत्नमकरोच्चैव गौतमः । चक्राङ्गान् स च नित्यं वै सर्व्वतो वनगोचरान् । ६३००
जघान गौतमो राजन् यथा दस्युगणास्तथा । हिंसापटुर्घृणाहीनः सदा प्राणिवधे रतः ।
गौतमः सन्निकर्षेण दस्युभिः समतामियात् । तथा तु वसतस्तस्य दस्युग्रामे सुखं तदा ।
अगमन् बहवो मासा निघ्नतः पक्षिणो बहून् । ततः कदाचिदपरो द्विजस्तं देशमागतः ।
जटाचीराजिनधरः स्वाध्यायपरमः शुचिः । विनीतो नियताहारो ब्राह्मणो वेदपारगः ।
स ब्रह्मचारी तद्देश्यः सखा तस्यैव सुप्रियः । तं दस्युग्राममगमद्यत्रासौ गौतमोऽवसत् । ६३०५
स तु विप्रगृहान्वेषी शूद्रान्नपरिवर्ज्जकः । ग्रामे दस्युसमाकीर्णे व्यचरत् सर्व्वतो दिशं ।
ततः स गौतमगृहं प्रविवेश द्विजोत्तमः । गौतमश्चापि संप्राप्तस्तावन्योन्येन सङ्गतौ ।
चक्राङ्गभारस्कन्धन्तं धनुष्पाणिं धृतायुधं । रुधिरेणावसिक्ताङ्गं गृहद्वारमुपागतं ।
तं दृष्ट्वा पुरुषादाभमपध्वस्तं क्षयागतं । अभिज्ञाय द्विजो व्रीडन्निदं वाक्यमथाब्रवीत् ।
किमिदं कुरुषे मोहाद्विप्रस्त्वं हि कुलोद्वहः । मध्यदेशपरिज्ञातो दस्युभावं गतः कथं । ६३१०

पूर्व्वान् स्मर द्विज ज्ञातीन् प्रख्यातान् वेदपारगान्। तेषां वंशेऽभिजातस्त्वमीदृशः कुलपांसनः ।
अवबुध्यात्मनात्मानं सत्त्वं शीलं श्रुतं दमं । अनुक्रोशञ्च संस्मृत्य त्यज वासमिदं द्विज ।
एवमुक्तः स सुहृदा तेन तत्र हितैषिणा । प्रत्युवाच ततो राजन् विनिश्चित्य तदार्त्तवत् ।
निर्द्धनोऽस्मि द्विजश्रेष्ठ नापि वेदविदप्यहं । वित्तार्थमिह संप्राप्तं विद्धि मां द्विजसत्तम ।
त्वद्दर्शनात्तु विप्रेन्द्र कृतार्थोऽस्म्यद्य वै द्विज । आवां हि सह यास्यावः श्वो वसस्वाद्य शर्व्वरीं । ६२१५
स तत्र न्यवसद्विप्रो घृणी किञ्चिदसंस्पृशन् । क्षुधितश्छन्द्यमानोऽपि भोजनं नाभ्यनन्दत ।
इति श्रीमहाभारते शान्तिपर्व्वण्यापद्धर्म्मपर्व्वणि कृतघ्नोपाख्याने अष्टषष्ट्यधिकशततोऽध्यायः ॥ १६८ ॥
॥ भीष्म उवाच ॥ तस्यां निशायां व्युष्टायां गते तस्मिन् द्विजोत्तमे । निष्क्रम्य गौतमोऽगच्छत् समुद्रं प्रति भारत ।
सामुद्रिकान् स वणिजस्ततोऽपश्यत् स्थितान् पथि । स तेन सह सार्थेन प्रययौ सागरं प्रति ।
स तु सार्थो महान्राजन् कस्मिंश्चिद्गिरिगह्वरे । मत्तेन द्विरदेनाथ निहतः प्रायशोऽभवत् ।
स कथञ्चिद्भयात्तस्माद्विमुक्तो ब्राह्मणस्तदा । कान्दिग्भूतो जीवितार्थी प्रदुद्रावोत्तरां दिशं । ६२२०
स तु सार्थपरिभ्रष्टस्तस्माद्देशात्तथा च्युतः । एकाकी व्यचरत्तत्र वने किम्पुरुषो यथा ।
स पन्थानमथासाद्य समुद्राभिसरं तदा । आससाद वनं रम्यं दिव्यं पुष्पितपादपं ।
सर्व्वर्त्तुकैराम्रवनैः पुष्पितैरुपशोभितं । नन्दनोद्देशसदृशं यक्षकिन्नरसेवितं ।
शालैस्तालैस्तमालैश्च कालागुरुवनैस्तथा । चन्दनस्य च मुख्यस्य पादपैरुपशोभितं ।
गिरिप्रस्थेषु रम्येषु तेषु तेषु सुगन्धिषु । समन्ततो द्विजश्रेष्ठास्तत्राकूजन्त वै तदा । ६२२५
मनुष्यवदनास्त्वान्ये भारुण्डा इति विश्रुताः । भूलिङ्गशकुनास्त्वान्ये सामुद्राः पर्व्वतोद्भवाः ।
स तान्यतिमनोज्ञानि विहङ्गानां रुतानि वै । शृण्वन् सुरमणीयानि विप्रोऽगच्छत गौतमः ।
ततोऽपश्यत् सुरम्येषु सुवर्णसिकताचिते । देशे समे सुखे चित्रे स्वर्गोद्देशसमे नृप ।
श्रिया जुष्टं महावृक्षं न्यग्रोधञ्च सुमण्डलं । शाखाभिरनुरूपाभिर्भूषितं छत्रसन्निभं ।
तस्य मूलञ्च संसिक्तं बरचन्दनवारिणा । दिव्यपुष्पान्वितं श्रीमत् पितामहसभोपमं । ६२३०
तं दृष्ट्वा गौतमः प्रीतो मनःकान्तमनुत्तमं । मेध्यं सुरगृहप्रख्यं पुष्पितैः पादपैर्वृतं ।
तमासाद्य मुदा युक्तस्तस्याधस्तादुपाविशत् । तत्रासीनस्य कौन्तेय गौतमस्य सुखः शिवः ।
पुष्पाणि समुपस्पृश्य प्रववावनिलः शुभः । ह्लादयन् सर्व्वगात्राणि गौतमस्य तदा नृप ।
स तु विप्रः प्रशान्तश्च स्पृष्टः पुण्येन वायुना । सुखमासाद्य सुष्वाप भास्करश्चास्तमभ्ययात् ।
ततोऽस्तं भास्करे याते सन्ध्याकाल उपस्थिते । आजगाम स्वभवनं ब्रह्मलोकात् खगोत्तमः । ६२३५
नाडीजङ्घ इति ख्यातो दयितो ब्रह्मणः सखा । बकराजो महाप्राज्ञः कश्यपस्यात्मसम्भवः ।
राजधर्म्मेति विख्यातो बभूवाप्रतिमो भुवि । देवकन्यासुतः श्रीमान् विद्वान् देवसमप्रभः ।
मृष्टाभरणसम्पन्नो भूषणैरर्कसन्निभैः । भूषितः सर्व्वगात्रेषु देवगर्भः श्रिया ज्वलन् ।
तमागतं खगं दृष्ट्वा गौतमो विस्मितोऽभवत् । क्षुत्पिपासापरिश्रान्तो हिंसार्थी चाभ्यवैक्षत ।

॥ राजधर्म्मोवाच ॥ स्वागतं भवतो विप्र दिष्ट्या प्राप्तोऽसि मे गृहं । अस्तञ्च सविता यातः सन्ध्येयं समुपस्थिता । ६२४०
मम त्वं निलयं प्राप्तः प्रियातिथिरनिन्दितः । पूजितो यास्यसि प्रातर्व्विधिदृष्टेन कर्म्मणा ।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि कृतघ्नोपाख्याने ऊनसप्तत्यधिकशततोऽध्यायः ॥ १६९ ॥

॥ भीष्म उवाच ॥ गिरं तां मधुरां श्रुत्वा गौतमो विस्मितस्तदा । कौतूहलान्वितो राजन् राजधर्म्माणमैक्षत ।
॥ राजधर्म्मोवाच ॥ भोः कश्यपस्य पुत्रोऽहं माता दाक्षायणी च मे । अतिथिस्त्वं गुणोपेतः स्वागतं ते द्विजोत्तम ।
॥ भीष्म उवाच ॥ तस्मै दत्त्वा स सत्कारं विधिदृष्टेन कर्म्मणा । शालपुष्पमयीं दिव्यां वृषीं वै समकल्पयत् ।
भगीरथरथाक्रान्तदेशान् गङ्गानिषेविताम् । ये चरन्ति महामीनास्तांश्च तस्यान्वकल्पयत् । ६२४५
वह्निञ्चापि सुसन्दीप्तं मीनांश्चापि सुपीवरान् । स गौतमायातिथये न्यवेदयत काश्यपिः ।
भुक्तवन्तञ्च तं विप्रं प्रीतात्मानं महातपाः । क्लमापनयनार्थं स पक्षाभ्यामभ्यवीजयत् ।
ततो विश्रान्तमासीनं गोत्रप्रश्नमपृच्छत । सोऽब्रवीद्गौतमोऽस्मीति ब्रह्म नान्यमुदाहरत् ।
तस्मै पर्णमयं दिव्यं दिव्यपुष्पाभिवासितं । गन्धाढ्यं शयनं प्रादात् स शिश्ये तत्र वै सुखं ।
अथोपविष्टं शयने गौतमं धर्म्मराट् तदा । पप्रच्छ काश्यपो वाग्मी किमागमनकारणं । ६२५०
ततोऽब्रवीद्गौतमस्तं दरिद्रोऽहं महामते । समुद्रगमनाकाङ्क्षी द्रव्यार्थमिति भारत ।
तं काश्यपोऽब्रवीत् प्रीतो नोत्कण्ठां कर्त्तुमर्हसि । कृतकार्य्यो द्विजश्रेष्ठ सद्रव्यो यास्यसे गृहान् ।
चतुर्व्विधा ह्यर्थसिद्धिर्बृहस्पतिमतं यथा । पारम्पर्य्यं तथा दैवं काम्यं मैत्रमिति प्रभो ।
प्रादुर्भूतोऽस्मि ते मित्रं सुहृत्त्वञ्च मम त्वयि । सोऽहं तथा यतिष्यामि भविष्यसि यथाऽर्थवान् ।
ततः प्रभातसमये सुखं दृष्ट्वाऽब्रवीदिदं । गच्छ सौम्य पथाऽनेन कृतकृत्यो भविष्यसि । ६२५५
इतस्त्रियोजनं गत्वा राक्षसाधिपतिर्महान् । विरूपाक्ष इति ख्यातः सखा मम महाबलः ।
तं गच्छ द्विजमुख्य त्वं स मद्वाक्यप्रचोदितः । कामानभीप्सितांस्तुभ्यं दाता नास्त्यत्र संशयः ।
इत्युक्तः स ययौ राजन् गौतमो विगतक्लमः । फलान्यमृतकल्पानि भक्षयन् स यथेष्टतः ।
चन्दनागुरुमुख्यानि त्वक्पत्राणां वनानि च । तस्मिन् पथि महाराज सेवमानो द्रुतं ययौ ।
ततो मेरुव्रजं नाम नगरं शैलतोरणं । शैलप्राकारवप्रञ्च शैलयन्त्राकुलं तथा । ६२६०
विदितश्चाभवत्तस्य राक्षसेन्द्रस्य धीमतः । प्रहितः सुहृदा राजन् प्रीयमाणः प्रियातिथिः ।
ततः स राक्षसेन्द्रः स्वान् प्रेष्यानाह युधिष्ठिर । गौतमो नगरद्वाराच्छीघ्रमानीयतामिति ।
ततः पुरवरात्तस्मात् पुरुषाः श्येनचेष्टनाः । गौतमेत्यभिभाषन्तः पुरद्वारमुपागमन् ।
ते तमूचुर्म्महाराज राजप्रेष्यास्तदा द्विजं । त्वरस्व तूर्णमागच्छ राजा त्वां द्रष्टुमिच्छति ।
राक्षसाधिपतिर्व्वीरो विरूपाक्ष इति श्रुतः । स त्वां त्वरति वै द्रष्टुं तत् क्षिप्रं संविधीयतां । ६२६५
ततः स प्राद्रवद्विप्रो विस्मयाद्विगतक्लमः । गौतमः परमर्द्धिं तां पश्यन् परमविस्मितः ।
तैरेव सहितो राज्ञो वेश्म तूर्णमुपाद्रवत् । दर्शनं राक्षसेन्द्रस्य काङ्क्षमाणो द्विजस्तदा ।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि कृतघ्नोपाख्याने सप्तत्यधिकशततोऽध्यायः ॥ १७० ॥

॥ भीष्म उवाच ॥ ततः स विदितो राज्ञः प्रविश्य गृहमुत्तमं। पूजितो राक्षसेन्द्रेण निषसादासनोत्तमे।
पृष्टश्च गोत्रचरणं स्वाध्यायं ब्रह्मचारिकं। न तत्र व्याजहारान्यद्गोत्रमात्राद्दृते द्विजः।
ब्रह्मवर्चसहीनस्य स्वाध्यायोपरतस्य च। गोत्रमात्रविदो राजा निवासं समपृच्छत। ६३७०
॥ राक्षस उवाच ॥ क्व ते निवासः कल्याण किंगोत्रा ब्राह्मणी च ते। तत्त्वं ब्रूहि न भीः कार्य्या विश्वसस्व यथासुखं।
॥ गौतम उवाच ॥ मध्यदेशप्रसूतोऽहं वासो मे शवरालये। शूद्रा पुनर्भूर्भार्य्या मे सत्यमेतद्ब्रवीमि ते।
॥ भीष्म उवाच ॥ ततो राजा विममृशे कथं कार्य्यमिदं भवेत्। कथं वा सुकृतं मे स्यादिति बुद्ध्याऽन्वचिन्तयत्।
अयं वै जन्मना विप्रः सुहृत्तस्य महात्मनः। सम्प्रेषितश्च तेनायं काश्यपेन ममान्तिकं।
तस्य प्रियं करिष्यामि स हि मामाश्रितः सदा। भ्राता मे बान्धवश्चासौ सखा च हृदयङ्गमः। ६३७५
कार्त्तिक्यामद्य भोक्तारः सहस्रं मे द्विजोत्तमाः। तत्रायमपि भोक्ता च देयमस्मै च मे धनं।
स चाद्य दिवसः पुण्यो अतिथिश्चायमागतः। सङ्कल्पितञ्चैव धनं किं विचार्य्यमतः परं।
ततः सहस्रं विप्राणां विदुषां समलङ्कृतं। स्नातानामनुसंप्राप्तं सुमहत्क्षौमवाससां।
तानागतान् द्विजश्रेष्ठान् विरूपाक्षो विशाम्पते। यथार्हं प्रतिजग्राह विधिदृष्टेन कर्म्मणा।
बृष्यस्तेषान्तु संन्यस्ता राक्षसेन्द्रस्य शासनात्। भूमौ वरकुशास्तीर्णाः प्रेष्यैर्भरतसत्तम। ६३८०
तासु ते पूजिता राज्ञा निषण्णा द्विजसत्तमाः। तिलदर्भोदकेनाथ अर्च्चिता विधिवद्द्विजाः।
विश्वेदेवाः सपितरः साग्नयश्चोपकल्पिताः। विलिप्ताः पुष्पवन्तश्च सुप्रचाराः सुपूजिताः।
व्यराजन्त महाराज नक्षत्रपतयो यथा। ततो जाम्बूनदीः पात्रीर्वज्राङ्का विमलाः शुभाः।
वराम्नपूर्णा विप्रेभ्यः प्रादान्मधुघृतप्लुताः। तस्य नित्यं सदाषाढ्यां माघ्याञ्च बहवो द्विजाः।
ईप्सितं भोजनवरं लभन्ते सत्कृतं सदा। विशेषतस्तु कार्त्तिक्यां द्विजेभ्यः संप्रयच्छति। ६३८५
शरद्व्यपाये रत्नानि पौर्णमास्यामिति श्रुतिः। सुवर्णं रजतञ्चैव मणीनथ च मौक्तिकान्।
वज्रान् महाधनांश्चैव वैदूर्य्याजिनराङ्कवान्। रत्नराशीन् विनिक्षिप्य दक्षिणार्थे स भारत।
ततः प्राह द्विजश्रेष्ठान् विरूपाक्षो महाबलः। गृह्णीत रत्नान्येतानि यथोत्साहं यथेष्टतः।
येषु येषु च भाण्डेषु भुक्तं वो द्विजसत्तमाः। तान्येवादाय गच्छध्वं स्ववेश्मानीति भारत।
इत्युक्तवचने तस्मिन् राक्षसेन्द्रे महात्मनि। यथेष्टं तानि रत्नानि जगृहुर्ब्राह्मणर्षभाः। ६३९०
ततो महार्हास्ते सर्व्वे रत्नैरभ्यर्च्चिताः शुभैः। ब्राह्मणा हृष्टवसनाः सुप्रीताः स्म ततोऽभवन्।
ततस्तान् राक्षसेन्द्रश्च द्विजानाह पुनर्व्वचः। नानादेशगतान्राजन् राक्षसान् प्रतिसिध्य वै।
अद्यैकं दिवसं विप्रा न वोऽस्तीह भयं क्वचित्। राक्षसेभ्यः प्रमोदध्वमिष्टतो यात मा चिरं।
ततः प्रदुद्रुवुः सर्व्वे विप्रसंघाः समन्ततः। गौतमोऽपि सुवर्णस्य भारमादाय सत्वरः।
कृच्छ्रात् समुद्वहन् भारं न्यग्रोधं समुपागमत्। न्यषीदच्च परिश्रान्तः क्लान्तश्च क्षुधितश्च सः। ६३९५
ततस्तमभ्यगाद्राजन् राजधर्म्मा खगोत्तमः। स्वागतेनाभिनन्दंश्च गौतमं मित्रवत्सलः।
तस्य पक्षाग्रविक्षेपैः क्लमं व्यपनयत् खगः। पूजाञ्चाप्यकरोद्धीमान् भोजनञ्चाप्यकल्पयत्।

स भुक्तवान् सुविश्रान्तो गौतमोऽचिन्तयत्तदा। हाटकस्याभिरूपस्य भारोऽयं सुमहान्मया।
गृहीतो लोभमोहाभ्यां दूरञ्च गमनं मम। न चास्ति पथि भोक्तव्यं प्राणसन्धारणं मम।
किं कृत्वा धारयेयं वै प्राणानित्यभ्यचिन्तयत्। ततः स पथि भोक्तव्यं प्रेक्षमाणो न किञ्चन। ६४००
कृतघ्नः पुरुषव्याघ्र मनसेदमचिन्तयत्। अयं बकपतिः पार्श्वे मांसराशिः स्थितो महान्।
इमं हत्वा गृहीत्वा च यास्येऽहं समभिद्रुतं।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि कृतघ्नोपाख्याने एकसप्तत्यधिकशततोऽध्यायः॥ १७१॥
॥ भीष्म उवाच ॥ अथ तत्र महार्च्चिष्मानननलो वातसारथिः। तस्याविदूरे रक्षार्थं खगेन्द्रेण कृतोऽभवत्।
स चापि पार्श्वे सुष्वाप विश्वस्तो बकराट् तदा। कृतघ्नस्तु स दुष्टात्मा तं जिघांसुरजागृत।
ततोऽलातेन दीप्तेन विश्वस्तं विजघान तं। निहत्य च मुदा युक्तः सोऽनुबन्धं न दृष्टवान्। ६४०५
स तं विपक्षरोमाणं कृत्वाऽग्नावपचत्तदा। तं गृहीत्वा सुवर्णञ्च ययौ द्रुततरं द्विजः।
ततोऽन्यस्मिन् गते चाह्नि विरूपाक्षोऽब्रवीत् सुतं। न प्रेक्षे राजधर्म्माणमद्य पुत्र खगोत्तमं।
स पूर्व्वसन्ध्यां ब्रह्माणं वन्दितुं याति सर्व्वदा। मां वा दृष्ट्वा कदाचित् स न गच्छति गृहं खगः।
उभे द्विरात्रं सन्ध्ये वै नाभ्यगात् स ममालयं। तस्मान्न शुद्ध्यते भावो मम स ज्ञायतां सुहृत्।
स्वाध्यायेन वियुक्तो हि ब्रह्मवर्च्चसवर्ज्जितः। तद्गतस्तत्र मे शङ्का हन्यात्तं स द्विजाधमः। ६४१०
दुराचारस्तु दुर्ब्बुद्धिरिङ्गितैर्लक्षितो मया। निष्कृपो दारुणाकारो दुष्टो दस्युरिवाधमः।
गौतमः स गतस्तत्र तेनोद्विग्नं मनो मम। पुत्र शीघ्रमितो गत्वा राजधर्म्मनिवेशनं।
ज्ञायतां स विशुद्धात्मा यदि जीवति मा चिरं। स एवमुक्तस्त्वरितो रक्षोभिः सहितो ययौ।
न्यग्रोधं तत्र चापश्यत् कङ्कालं राजधर्म्मणः। स रुदन्नगमत् पुत्रो राक्षसेन्द्रस्य धीमतः।
त्वरमाणः परं शक्त्या गौतमग्रहणाय वै। ततो विदूरे जगृहुर्गौतमं राक्षसास्तदा। ६४१५
राजधर्म्मशरीरञ्च पक्षास्थिचरणोज्झितं। तमादायाथ रक्षांसि द्रुतं मेरुव्रजं ययुः।
राज्ञश्च दर्शयामासुः शरीरं राजधर्म्मणः। कृतघ्नं पुरुषं तञ्च गौतमं पापकारिणं।
रुरोद राजा तं दृष्ट्वा सामात्यः सपुरोहितः। आर्त्तनादश्च सुमहानभूत्तस्य निवेशने।
सस्त्रीकुमारञ्च पुरं बभूवास्वस्थमानसं। अथाब्रवीन्नृपः पुत्रं पापोऽयं बध्यतामिति।
अस्य मांसैरिमे सर्व्वे विहरन्तु यथेष्टतः। पापाचारः पापकर्म्मा पापात्मा पापसाधनः। ६४२०
हन्तव्योऽयं मम मतिर्भवद्भिरिति राक्षसाः। इत्युक्ता राक्षसेन्द्रेण राक्षसा घोरविक्रमाः।
नैच्छन्त तं भक्षयितुं पापकर्म्माणमित्युत। दस्यूनां दीयतामेष साध्वद्य पुरुषाधमः।
इत्यूचुस्ते महाराज राक्षसेन्द्रं निशाचराः। शिरोभिः प्रणताः सर्व्वे व्याहरन्राक्षसाधिपं।
न दातुमर्हसि त्वं नो भक्षणायास्य किल्विषं। एवमस्त्विति तानाह राक्षसेन्द्रो निशाचरान्।
दस्यूनां दीयतामेष कृतघ्नोऽद्यैव राक्षसाः। इत्युक्ता राक्षसास्तेन शूलपट्टिशपाणयः। ६४२५
कृत्वा तं खण्डशः पापं दस्युभ्यः प्रददुस्तदा। दस्यवश्चापि नैच्छन्त तमत्तुं पापकारिणं।

क्रव्यादा अपि राजेन्द्र कृतघ्नं नोपभुञ्जते। ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा।
निष्कृतिर्व्विहिता राजन् कृतघ्ने नास्ति निष्कृतिः। मित्रद्रोही कृतघ्नश्च नृशंसश्च नराधमः।
क्रव्यादैः कृमिभिश्चान्यैर्न भुज्यन्ते हि तादृशाः।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि कृतघ्नोपाख्याने द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥
॥ भीष्म उवाच ॥ ततश्चितां बकपतेः कारयामास राक्षसः। रत्नैर्गन्धैश्च बहुभिर्व्वस्त्रैश्च समलंकृताम्। ६४३०
ततः प्रज्वाल्य नृपतिर्ब्बकराजं प्रतापवान्। प्रेतकार्य्याणि विधिवद्राक्षसेन्द्रश्चकार ह।
तस्मिन् कालेऽपि सुरभिर्देवी दाक्षायणी शुभा। उपरिष्टात्ततस्तस्य सा बभूव पयस्विनी।
तस्या वक्त्राच्च्युतः फेनः क्षीरमिश्रस्तदाऽनघ। सोऽपतद्वै ततस्तस्यां चितायां राजधर्म्मणः।
ततः सञ्जीवितस्तेन बकराजस्तदाऽनघ। उत्पत्य च समीयाय विरूपाक्षं बकाधिपः।
ततोऽभ्ययाद्देवराजो विरूपाक्षपुरं तदा। प्राह चेदं विरूपाक्षं दिष्ट्या सञ्जीवितस्त्वया। ६४३५
श्रावयामास चेन्द्रस्तं विरूपाक्षं पुरातनम्। यथा शापः पुरा दत्तो ब्रह्मणा राजधर्म्मणः।
यदा बकपती राजन् ब्रह्माणं नोपसर्पति। ततो रोषादिदं प्राह खगेन्द्राय पितामहः।
यस्मान्मूढो मम सभां नागतोऽसौ बकाधमः। तस्माद्वधं स दुष्टात्मा न चिरात् समवाप्स्यति।
तदयं तस्य वचनान्निहतो गौतमेन वै। तेनैवामृतसिक्तश्च पुनः सञ्जीवितो बकः।
राजधर्म्मा बकः प्राह प्रणिपत्य पुरन्दरम्। यदि तेऽनुग्रहकृता मयि बुद्धिः सुरेश्वर। ६४४०
सखायं मे सुदयितं गौतमं जीवयेत्पुनः। तस्य वाक्यं समादाय वासवः पुरुषर्षभ।
सिक्त्वाऽमृतेन तं विप्रं गौतमं जीवयत्तदा। स भाण्डोपस्करं राजंस्तमासाद्य बकाधिपः।
सम्परिष्वज्य सुहृदं प्रीत्या परमया युतः। अथ तं पापकर्म्माणं राजधर्म्मा बकाधिपः।
विसर्ज्जयित्वा सधनं प्रविवेश स्वमालयम्। यथोचितञ्च स बको ययौ ब्रह्मसदस्तथा।
ब्रह्मा चैनं महात्मानमातिथ्येनाभ्यपूजयत्। गौतमश्चापि सम्प्राप्य पुनस्तं शवरालयम्। ६४४५
शूद्रायां जनयामास पुत्रान्दुष्कृतकारिणः। शापश्च सुमहांस्तस्य दत्तः सुरगणैस्तदा।
कुक्षौ पुनर्भ्वाः पापोऽयं जनयित्वा चिरात् सुतान्। निरयं प्राप्स्यति महत् कृतघ्नोऽयमिति प्रभो।
एतत् प्राह पुरा सर्व्वं नारदो मम भारत। संस्मृत्य चापि सुमहदाख्यानं भरतर्षभ।
मयाऽपि भवते सर्व्वं यथावदनुवर्णितम्। कुतः कृतघ्नस्य यशः कुतः स्थानं कुतः सुखम्।
अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः। मित्रद्रोहो न कर्त्तव्यः पुरुषेण विशेषतः। ६४५०
मित्रध्रुक् नरकं घोरमनन्तं प्रतिपद्यते। कृतज्ञेन सदा भाव्यं मित्रकामेन चैव ह।
मित्राच्च लभते सर्व्वं मित्रात् पूजां लभेत च। मित्राद्भोगांश्च भुञ्जीत मित्रेणापत्सु मुच्यते।
सत्कारैरुत्तमैर्मित्रं पूजयेत विचक्षणः। परित्याज्यो बुधैः पापः कृतघ्नो निरपत्रपः।
मित्रद्रोही कुलाङ्गारः पापकर्म्मा नराधमः। एष धर्म्मभृतां श्रेष्ठ प्रोक्तः पापो मया तव।
मित्रद्रोही कृतघ्नो वै किं भूयः श्रोतुमिच्छसि। ६४५५

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा तदा वाक्यं भीष्मेणोक्तं महात्मना। युधिष्ठिरः प्रीतमना बभूव जनमेजय।
इति श्रीमहाभारते शान्तिपर्व्वणि आपद्धर्म्मपर्व्वणि कृतघ्नोपाख्याने त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥ समाप्तञ्चेदं आपद्धर्म्मपर्व्व ॥

## ॥ अथ मोक्षधर्म्मपर्व्व ॥

॥ युधिष्ठिर उवाच ॥ धर्म्माः पितामहेनोक्ता राजधर्म्माश्रिताः शुभाः। धर्म्ममाश्रमिणां श्रेष्ठं वक्तुमर्हसि पार्थिव।
॥ भीष्म उवाच ॥ सर्व्वत्र विहितो धर्म्मः सत्यप्रेत्य तपःफलं। बहुद्वारस्य धर्म्मस्य नेहास्ति विफला क्रिया।
यस्मिन् यस्मिंस्तु विषये यो यो याति विनिश्चयं। स तमेवाभिजानाति नान्यं भरतसत्तम।
यथा यथा च पर्य्येति लोकतन्त्रमसारवत्। तथा तथा विरागोऽत्र जायते नात्र संशयः। ६५६०
एवं व्यवसिते लोके बहुदोषे युधिष्ठिर। आत्ममोक्षनिमित्तं वै यतेत मतिमान्नरः।
॥ युधिष्ठिर उवाच ॥ नष्टे धने वा दारे वा पुत्त्रे पितरि वा मृते। यया बुद्ध्या नुदेच्छोकं तन्मे ब्रूहि पितामह।
॥ भीष्म उवाच ॥ नष्टे धने वा दारे वा पुत्त्रे पितरि वा मृते। अहो दुःखमिति ध्यायन् शोकस्यापचितिं चरेत्।
अत्राप्युदाहरन्तीममितिहासं पुरातनं। यथा सेनजितं विप्रः कश्चिदेत्याब्रवीत् सुहृत्।
पुत्त्रशोकाभिसन्तप्तं राजानं शोकविह्वलं। विषण्णमनसं दृष्ट्वा विप्रो वचनमब्रवीत्। ६५६५
किन्नु खल्वसि मूढस्त्वं शोच्यः किमनुशोचसि। यदा त्वामपि शोचन्तः शोच्या यास्यन्ति तां गतिं।
त्वञ्चैवाहञ्च ये चान्ये त्वामुपासन्ति पार्थिव। सर्व्वे तत्र गमिष्यामो यत एवागता वयं।
॥ सेनजिदुवाच ॥ का बुद्धिः किं तपो विप्र कः समाधिस्तपोधन। किं ज्ञानं किं श्रुतञ्चैव यत् प्राप्य न विषीदसि।
॥ ब्राह्मण उवाच ॥ पश्य भूतानि दुःखेन व्यतिषक्तानि सर्व्वशः। उत्तमाधममध्यानि तेषु तेष्विह कर्म्मसु।
आत्माऽपि चायं न मम सर्व्वा वा पृथिवी मम। यथा मम तथाऽन्येषामिति चिन्त्य न मे व्यथा। ६५७०
एतां बुद्धिमहं प्राप्य न प्रहृष्ये न च व्यथे। यथा काष्ठञ्च काष्ठञ्च समेयातां महोदधौ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः। एवं पुत्त्राश्च पौत्त्राश्च ज्ञातयो बान्धवास्तथा।
तेषां स्नेहो न कर्त्तव्यो विप्रयोगो ध्रुवो हि तैः। अदर्शनादापतितः पुनश्चादर्शनं गतः।
न त्वाऽसौ वेद न त्वं तं कः सन् किमनुशोचसि। तृष्णार्त्तिप्रभवं दुःखं दुःखार्त्तिप्रभवं सुखं।
सुखात् सञ्जायते दुःखं दुःखमेवं पुनः पुनः। सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखं। ६५७५
सुखदुःखे मनुष्याणां चक्रवत् परिवर्त्ततः। सुखात्त्वं दुःखमापन्नः पुनरापत्स्यसे सुखं।
न नित्यं लभते दुःखं न नित्यं लभते सुखं। शरीरमेवायतनं दुःखस्य च सुखस्य च।
शरीरमेवायतनं सुखस्य दुःखस्य चाप्यायतनं शरीरं। यद्यच्छरीरेण करोति कर्म्म तेनैव देही समुपाश्नुते तत्।
जीवितञ्च शरीरेण जात्यैव सह जायते। उभे सह विवर्त्तेते उभे सह विनश्यतः।
स्नेहपाशैर्बहुविधैराविष्टविषया जनाः। अकृतार्थाश्च सीदन्ते जले सैकतसेतवः। ६५८०
स्नेहेन तिलवत् सर्व्वं सर्गचक्रे निपीड्यते। तिलपीडैरिवाक्रम्य क्लेशैरज्ञानसम्भवैः।

सञ्चिनोत्यशुभं कर्म्म कलत्रापेक्षया नरः। एकः क्लेशानवाप्नोति परत्रेह च मानवः।
पुत्त्रदारकुटुम्बेषु प्रसक्ताः सर्व्वमानवाः। शोकपङ्कार्णवे मग्ना जीर्णा वनगजा इव।
पुत्त्रनाशे वित्तनाशे ज्ञातिसम्बन्धिनामपि। प्राप्यते सुमहद्दुःखं दावाग्निप्रतिमं विभो।
दैवायत्तमिदं सर्व्वं सुखदुःखे भवाभवौ। असुहृत् ससुहृच्चापि सशत्रुर्मित्रवानपि। ६४८५
सप्रज्ञः प्रज्ञया हीनो दैवेन लभते सुखं। नालं सुखाय सुहृदो नालं दुःखाय शत्रवः।
न च प्रज्ञाऽलमर्थानां न सुखानामलं धनं। न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये।
लोकपर्य्यायवृत्तान्तं प्राज्ञो जानाति नेतरः। बुद्धिमन्तञ्च शूरञ्च मूढं भीरुं जडं कविं।
दुर्ब्बलं बलवन्तञ्च भागिनं भजते सुखं। धेनुर्व्वत्सस्य गोपस्य स्वामिनस्तस्करस्य च।
पयः पिबति यस्तस्य धेनुस्तस्येति निश्चयः। ये च मूढतमा लोके ये च बुद्धेः परं गताः। ६४९०
ते नराः सुखमेधन्ते क्लिश्यत्यन्तरितो जनः। अन्त्येषु रेमिरे धीरा न ते मध्येषु रेमिरे।
अन्त्यप्राप्तिं सुखम्प्राहुर्दुःखमन्तरमन्त्ययोः। ये च बुद्धिसुखं प्राप्ता द्वन्द्वातीता विमत्सराः।
तान्नैवार्था न चानर्था व्यथयन्ति कदाचन। अथ ये बुद्धिमप्राप्ता व्यतिक्रान्ताश्च मूढतां।
तेऽतिवेलं प्रहृष्यन्ति सन्तापमुपयान्ति च। नित्यं प्रमुदिता मूढा दिवि देवगणा इव।
अवलेपन महता परिभूत्या विचेतसः। सुखं दुःखान्तमालस्यं दुःखं दाक्ष्यं सुखोदयं। ६४९५
भूतिस्त्वेवं श्रिया सार्द्धं दक्षे वसति नालसे। सुखं वा यदि वा दुःखं प्रियं वा यदि वाऽप्रियं।
प्राप्तं प्राप्तमुपासीत हृदयेनापराजितः। शोकस्थानसहस्राणि भयस्थानशतानि च।
दिवसे दिवसे मूढमाविशन्ति न पण्डितं। बुद्धिमन्तं कृतप्रज्ञं शुश्रूषुमनसूयकं।
दान्तं जितेन्द्रियं चापि शोको न स्पृशते नरं। एतां बुद्धिं समास्थाय गुप्तचित्तश्चरेद्बुधः।
उदयास्तमयज्ञं हि न शोकः स्प्रष्टुमर्हति। यन्निमित्तं भवेच्छोकस्तापो वा दुःखमेव च। ६५००
आयासो वा यतो मूलमेकाङ्गमपि तत्त्यजेत्। किञ्चिदेव ममत्वेन यदा भवति कल्पितं।
तदेव परितापार्थं सर्व्वं सम्पद्यते तदा। यद्यत्त्यजति कामानान्तत् सुखस्याभिपूर्य्यते।
कामानुसारी पुरुषः कामाननु विनश्यति। यच्च कामसुखं लोके यच्च दिव्यं महत् सुखं।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलां। पूर्व्वदेहकृतं कर्म्म शुभं वा यदि वाऽशुभं।
प्राज्ञं मूढं तथा शूरं भजते यादृशं कृतं। एवमेव किलैतानि प्रियाण्येवाप्रियाणि च। ६५०५
जीवेषु परिवर्त्तन्ते दुःखानि च सुखानि च। एतां बुद्धिं समास्थाय सुखमास्ते गुणान्वितः।
सर्व्वान् कामान् जुगुप्सेत क्रोधं कुर्व्वीत पृष्ठतः। वृत्त एष हृदि प्रौढो मृत्युरेष मनोभवः।
क्रोधो नाम शरीरस्थो देहिनां प्रोच्यते बुधैः। यदा संहरते कामान् कूर्म्मोऽङ्गानीव सर्व्वशः।
तदात्मज्योतिरात्माऽयमात्मन्येव प्रपश्यति। न बिभेति यदा चायं यदा चास्मान्न बिभ्यति।
यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा। उभे सत्यानृते त्यक्त्वा शोकानन्दौ भयाभये। ६५१०
प्रियाप्रिये परित्यज्य प्रशान्तात्मा भविष्यति। यदा न कुरुते भावं सर्व्वभूतेषु पापकं।

कर्म्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा । या दुस्त्यजा दुर्म्मतिभिर्या न जीर्य्यति जीर्य्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखं । अत्र पिङ्गलया गीता गाथाः श्रूयन्ति पार्थिव ।
यथा सा कृच्छ्रकालेऽपि लेभे धर्म्मं सनातनं । संकेते पिङ्गला वेश्या कान्तेनासीद्विनाकृता ।
अथ कृच्छ्रगता शान्तां बुद्धिमास्थापयत्तदा ।　　　　६५१५
॥ पिङ्गलोवाच ॥ उन्मत्ताहमनुन्मत्तं कान्तमन्ववसं चिरं । अन्तिके रमणं सन्तं नैनमध्यगमं पुरा ।
एकस्थूणं नवद्वारमपि धास्याम्यगारकं । का हि कान्तमिहायान्तमयं कान्तेति मंस्यते ।
अकामां कामरूपेण धूर्त्ता नरकरूपिणः । न पुनर्वञ्चयिष्यन्ति प्रतिबुद्धाऽस्मि जागृमि ।
अनर्थो हि भवेदर्थो दैवात् पूर्व्वकृतेन वा । संबुद्धाऽहं निराकारा नाहमद्याजितेन्द्रिया ।
सुखं निराशः स्वपिति नैराश्यं परमं सुखं । आशामनाशां कृत्वा हि सुखं स्वपिति पिङ्गला ।　　　　६५२०
॥ भीष्म उवाच ॥ एतैश्चान्यैश्च विप्रस्य हेतुमद्भिः प्रभाषितैः । पर्य्यवस्थापितो राजा सेनजिन्मुमुदे सुखी ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पिङ्गलागीतायां चतुःसप्तत्यधिकशततोऽध्यायः ॥ १७४ ॥
॥ युधिष्ठिर उवाच ॥ अतिक्रामति कालेऽस्मिन् सर्व्वभूतक्षयावहे । किं श्रेयः प्रतिपद्येत तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । पितुः पुत्रेण संवादं तन्निबोध युधिष्ठिर ।
द्विजातेः कस्यचित् पार्थ स्वाध्यायनिरतस्य वै । बभूव पुत्रो मेधावी मेधावी नाम नामतः ।
सोऽब्रवीत् पितरं पुत्रः स्वाध्यायकरणे रतं । मोक्षधर्म्मार्थकुशलो लोकतत्त्वविचक्षणः ।　　　　६५२५
॥ पुत्र उवाच ॥ धीरः किंस्वित्तात कुर्य्यात् प्रजानन् क्षिप्रं ह्यायुर्भ्रश्यते मानवानां । पितस्तदाचक्ष्व यथार्थयोगं ममानुपूर्व्व्या येन धर्म्मं चरेयं ।
॥ पितोवाच ॥ वेदानधीत्य ब्रह्मचर्य्येण पुत्र पुत्रानिच्छेत् पावनार्थं पितॄणां । अग्नीनाधाय विधिवच्चेष्टयज्ञो वनं प्रविश्याथ मुनिर्बुभूषेत् ।
॥ पुत्र उवाच ॥ एवमभ्याहते लोके समन्तात् परिवारिते । अमोघासु पतन्तीषु किं धीर इव भाषसे ।
॥ पितोवाच ॥ कथमभ्याहतो लोकः केन वा परिवारितः । अमोघाः काः पतन्तीह किं नु भीषयसीव मां ।
॥ पुत्र उवाच ॥ मृत्युनाऽभ्याहतो लोको जरया परिवारितः । अहोरात्राः पतन्त्येते ननु कस्मान्न बुध्यसे ।　　　　६५३०
अमोघा रात्रयश्चापि नित्यमायान्ति यान्ति च । यदाऽहमेतज्जानामि न मृत्युस्तिष्ठतीति ह ।
सोऽहं कथं प्रतीक्षिष्ये ज्ञानेनापिहितश्चरन् । रात्र्यां रात्र्यां व्यतीतायामायुरल्पतरं यदा ।
तदैव वन्ध्यं दिवसमिति विद्याद्विचक्षणः । गाधोदके मत्स्य इव सुखं विन्देत कस्तदा ।
अनवाप्तेषु कामेषु मृत्युरभ्येति मानवं । पुष्पाणीव विचिन्वन्तमन्यत्र गतमानसं ।
वृकीवोरणमासाद्य मृत्युरादाय गच्छति । अद्यैव कुरु यच्छ्रेयो मा त्वां कालोऽत्यगादयं ।　　　　६५३५
अकृतेष्वेव कार्य्येषु मृत्युर्वै संप्रकर्षति । श्वः कार्य्यमद्य कुर्व्वीत पूर्व्वाह्णे चापराह्णिकं ।
न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतं । को हि जानाति कस्याद्य मृत्युकालो भविष्यति ।
युवैव धर्म्मशीलः स्यादनित्यं खलु जीवितं । कृते धर्म्मे भवेत् कीर्त्तिरिह प्रेत्य च वै सुखं ।

मोहेन हि समाविष्टः पुत्रदारार्थमुद्यतः । कृत्वा कार्य्यमकार्य्यं वा पुष्टिमेषां प्रयच्छति ।
तं पुत्रपशुसम्पन्नं व्यासक्तमनसं नरं । सुप्तं व्याघ्रो मृगमिव मृत्युरादाय गच्छति । ६५४०
सञ्चिन्वानकमेवैकं कामानामवितृप्तकं । व्याघ्रः पशुमिवादाय मृत्युरादाय गच्छति ।
इदं कृतमिदं कार्य्यमिदमन्यत्कृताकृतं । एवमीहासुखासक्तं कृतान्तः कुरुते वशे ।
कृतानां फलमप्राप्तं कर्म्मणां कर्म्मसंज्ञितं । क्षेत्रापणगृहासक्तं मृत्युरादाय गच्छति ।
दुर्ब्बलं बलवन्तञ्च शूरं भीरुं जडं कविं । अप्राप्तं सर्व्वकामार्थान्मृत्युरादाय गच्छति ।
मृत्युर्जरा च व्याधिश्च दुःखञ्चानेककारणं । अनुषक्तं यदा देहे किं स्वस्थ इव तिष्ठसि । ६५४५
जातमेवान्तकोऽन्ताय जरा चान्वेति देहिनं । अनुषक्ता द्वयेनैते भावाः स्थावरजङ्गमाः ।
मृत्योर्व्वा मुखमेतद्वै या ग्रामे वसतो रतिः । देवानामेष वै गोष्ठो यदरण्यमिति श्रुतिः ।
निबन्धिनी रज्जुरेषा या ग्रामे वसतो रतिः । छित्त्वैतां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ।
न हिंसयति यः प्राणान्मनोवाक्कायहेतुभिः । जीवितार्थापनयनैः कर्म्मभिर्न स बध्यते ।
न मृत्युसेनामायान्तीं जातु कश्चित्प्रबाधते । ऋते सत्यमसत्याज्यं सत्ये ह्यमृतमाश्रितं । ६५५०
तस्मात्सत्यव्रताचारः सत्ययोगपरायणः । सत्यागमः सदा दान्तः सत्येनैवान्तकं जयेत् ।
अमृतञ्चैव मृत्युश्च द्वयं देहे प्रतिष्ठितं । मृत्युरापद्यते मोहात्सत्येनापद्यतेऽमृतं ।
सोऽहं ह्यहिंस्रः सत्यार्थी कामक्रोधबहिष्कृतः । समदुःखसुखः क्षेमी मृत्युं हास्याम्यमर्त्यवत् ।
शान्तियज्ञरतो दान्तो ब्रह्मयज्ञे स्थितो मुनिः । वाङ्मनःकर्म्मयज्ञश्च भविष्याम्युदगायने ।
पशुयज्ञैः कथं हिंस्रैर्मादृशो यष्टुमर्हति । अन्तवद्भिरिव प्राज्ञः क्षेत्रयज्ञैः पिशाचवत् । ६५५५
यस्य वाङ्मनसी स्यातां सम्यक् प्रणिहिते सदा । तपस्त्यागश्च सत्यञ्च स वै परमवाप्नुयात् ।
नास्ति विद्यासमं चक्षुर्नास्ति सत्यसमं तपः । नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखं ।
आत्मन्येवात्मना जात आत्मनिष्ठोऽप्रजोऽपि वा । आत्मन्येव भविष्यामि न मां तारयति प्रजा ।
नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च । शीलं स्थितिर्दण्डनिधानमार्ज्जवं ततस्ततश्चोपरमः क्रियाभ्यः ।
किन्ते धनैर्ब्बान्धवैर्व्वाऽपि किन्ते किन्ते दारैर्ब्राह्मण यो मरिष्यसि । आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क्व गताः पिता च । ६५६०
॥ भीष्म उवाच ॥ पुत्रस्यैतद्वचः श्रुत्वा यथाऽकार्षीत् पिता नृप । तथा त्वमपि वर्त्तस्व सत्यधर्म्मपरायणः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पितापुत्रसंवादे पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥
॥ युधिष्ठिर उवाच ॥ धनिनोऽथाधना ये च वर्त्तयन्ते स्वतन्त्रिणः । सुखदुःखागमस्तेषां कः कथं वा पितामह ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । शम्पाकेनेह मुक्तेन गीतं शान्तिगतेन च ।
अब्रवीन्मां पुरा कश्चिद्ब्राह्मणस्त्यागमाश्रितः । क्लिश्यमानः कुदारेण कुचैलेन बुभुक्षया ।
उत्पन्नमिह लोके वै जन्मप्रभृति मानवं । विविधान्युपवर्त्तन्ते दुःखानि च सुखानि च । ६५६५

तयोरेकतरे मार्गे यदेनमभिसंनयेत् । न सुखं प्राप्य संहृष्येन्नासुखं प्राप्य संज्वरेत् ।
न वै चरसि यच्छ्रेय आत्मनो वा यदीशिषे । अकामात्मापि हि सदा धुरमुद्यम्य चैव ह ।
अकिञ्चनः परिपतन् सुखमास्वादयिष्यसि । अकिञ्चनः सुखं शेते समुत्तिष्ठति चैव ह ।
आकिञ्चन्यं सुखं लोके पथ्यं शिवमनामयं । अनमित्रपथो ह्येष दुर्लभः सुलभो मतः ।
अकिञ्चनस्य शुद्धस्य उपपन्नस्य सर्व्वतः । अवेक्षमाणस्त्रीँल्लोकान्न तुल्यमिह लक्षये । ६६७०
आकिञ्चन्यञ्च राज्यञ्च तुलया समतोलयं । अत्यरिच्यत दारिद्र्यं राज्यादपि गुणाधिकं ।
आकिञ्चन्ये च राज्ये च विशेषः सुमहानयं । नित्योद्विग्नो हि धनवान्मृत्योरास्यगतो यथा ।
नैवास्याग्निर्न चारिष्टो न मृत्युर्न च दस्यवः । प्रभवन्ति धनत्यागाद्विमुक्तस्य निराशिषः ।
तं वै सदा कामचरमनुपस्तीर्णशायिनं । बाहूपधानं शाम्यन्तं प्रशंसन्ति दिवौकसः ।
धनवान् क्रोधलोभाभ्यामाविष्टो नष्टचेतनः । तिर्य्यगीक्षः शुष्कमुखः पापको भ्रुकुटीमुखः । ६६७५
निर्दशन्नधरोष्ठञ्च क्रुद्धो दारुणभाषिता । कस्तमिच्छेत् परिद्रष्टुं दातुमिच्छति चेन्महीं ।
श्रिया ह्यभीक्ष्णं संवासो मोहयत्यविचक्षणं । स तस्य चित्तं हरति शारदाभ्रमिवानिलः ।
अथैनं रूपमानश्च धनमानश्च विन्दति । अभिजातोऽस्मि शुद्धोऽस्मि नास्मि केवलमानुषः ।
इत्येभिः कारणैस्तस्य त्रिभिश्चित्तं प्रमाद्यति । संप्रसक्तमना भोगान् विसृज्य पितृसञ्चितान् ।
परिक्षीणः परस्वानामादानं साधु मन्यते । तमतिक्रान्तमर्य्यादमाददानं ततस्ततः । ६६८०
प्रतिषेधन्ति राजानो लुब्धा मृगमिवेषुभिः । एवमेतानि दुःखानि तानि तानीह मानवं ।
विविधान्युपपद्यन्ते गात्रसंस्पर्शजान्यपि । तेषां परमदुःखानां बुद्ध्या भैषज्यमाचरेत् ।
लोकधर्म्ममवज्ञाय ध्रुवाणामध्रुवैः सह । नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परं ।
नात्यक्त्वा चाभयः शेते त्यक्त्वा सर्व्वं सुखी भव । इत्येतद्धास्तिनपुरे ब्राह्मणेनोपवर्णितं ।
शम्पाकेन पुरा मह्यं तस्मात्त्यागः परो मतः । ६६८५

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शम्पाकगीतायां षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

॥ युधिष्ठिर उवाच ॥ ईहमानः समारम्भान् यदि नासादयेद्धनं । धनतृष्णाभिभूतश्च किं कुर्व्वन् सुखमाप्नुयात् ।
॥ भीष्म उवाच ॥ सर्व्वसाम्यमनायासः सत्यवाक्यञ्च भारत । निर्व्वेदश्चाविधित्सा च यस्य स्यात् स सुखी नरः ।
एतान्येव पदान्याहुः पञ्च वृद्धाः प्रशान्तये । एष स्वर्गश्च धर्म्मश्च सुखञ्चानुत्तमं मतं ।
अत्राप्युदाहरन्तीममितिहासं पुरातनं । निर्व्वेदान्मङ्किना गीतं तन्निबोध युधिष्ठिर ।
ईहमानो धनं मङ्किर्भग्नेहश्च पुनः पुनः । केनचिद्धनशेषेण क्रीतवान्दम्यगोयुगं । ६६९०
सुसम्बद्धौ तु तौ दम्यौ दमनायाभिनिःसृतौ । आसीनमुष्ट्रं मध्येन सहसैवाभ्यधावतां ।
तयोः संप्राप्तयोरुष्ट्रः स्कन्धदेशममर्षणः । उत्थायोत्क्षिप्य तौ दम्यौ प्रससार महाजवः ।
ह्रियमाणौ तु तौ दम्यौ तेनोष्ट्रेण प्रमाथिना । म्रियमाणौ च संप्रेक्ष्य मङ्किस्तत्राब्रवीदिदं ।
न चैवाविहितं शक्यं दक्षेणापीहितं धनं । युक्तेन श्रद्धया सम्यगीहां समनुतिष्ठता ।

कृतस्य पूर्व्वं चानर्थैर्युक्तस्याप्यनुतिष्ठतः । इमं पश्यत सङ्गत्या मम दैवमुपप्लवं । ६५९५
उद्यम्योद्यम्य मे दम्यौ विषमेणैव गच्छतः । उत्क्षिप्य काकतालीयमुन्मथेनैव धावतः ।
मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम । शुद्धं हि दैवमेवेदं हठेनैवास्ति पौरुषं ।
यदि वाप्युपपद्येत पौरुषं नाम कर्हिचित् । अन्विष्यमाणं तदपि दैवमेवावतिष्ठते ।
तस्मान्निर्वेद एवेह गन्तव्यः सुखमिच्छता । सुखं स्वपिति निर्व्विण्णो निराशश्चार्थसाधने ।
अहो सम्यक् शुकेनोक्तं सर्व्वतः परिमुच्यता । प्रतिष्ठता महारण्यं जनकस्य निवेशनात् । ६६००
यः कामानाप्नुयात् सर्व्वान् यश्चैतान् केवलांस्त्यजेत् । प्रापणात् सर्व्वकामानां परित्यागो विशिष्यते ।
नान्तं सर्व्वविधित्सानां गतपूर्व्वोऽस्ति कश्चन । शरीरे जीविते चैव तृष्णा मन्दस्य वर्द्धते ।
निवर्त्तस्व विधित्साभ्यः शाम्य निर्व्विद्य कामुक । असकृच्चासि निकृतो न च निर्व्विद्यसे ततः ।
यदि नाहं विनाश्यस्ते यद्येवं रमसे मया । मा मां योजय लोभेन वृथा त्वं वित्तकामुक ।
सञ्चितं सञ्चितं द्रव्यं नष्टं तव पुनः पुनः । कदाचिन्मोक्ष्यसे मूढ धनेहां धनकामुक । ६६०५
अहो नु मम बालिश्यं योऽहं क्रीडनकस्तव । किं नैव जातु पुरुषः परेषां प्रेष्यतामियात् ।
न पूर्व्वे नापरे जातु कामानामन्तमाप्नुवन् । त्यक्त्वा सर्व्वसमारम्भान् प्रतिबुद्धोऽस्मि जागृमि ।
नूनं ते हृदयं काम वज्रसारमयं दृढं । यदनर्थशताविष्टं शतधा न विदीर्य्यते ।
जानामि काम त्वां चैव यच्च किञ्चित् प्रियं तव । तवाहं प्रियमन्विच्छन्नात्मन्युपलभे सुखं ।
काम जानामि ते मूलं सङ्कल्पात् किल जायसे । न त्वां सङ्कल्पयिष्यामि समूलो न भविष्यसि । ६६१०
ईहा धनस्य न सुखा लब्ध्वा चिन्ता च भूयसी । लब्धनाशो यथा मृत्युर्लब्धं भवति वा न वा ।
परेत्य यो न लभते ततो दुःखतरं नु किं । न च तुष्यति लब्धेन भूय एव च मार्गति ।
अनुतर्षुल एवार्थः स्वादु गाङ्गमिवोदकं । मद्विलापनमेतत्तु प्रतिबुद्धोऽस्मि सन्त्यज ।
य इमं मामकं देहं भूतग्रामं समाश्रितः । स यात्वितो यथाकामं वसतां वा यथासुखं ।
न युष्मास्विह मे प्रीतिः कामलोभानुसारिषु । तस्मादुत्सृज्य कामान् वै सत्यमेवाश्रयाम्यहं । ६६१५
सर्व्वभूतान्यहं देहे पश्यन् मनसि चात्मनः । योगे बुद्धिं श्रुते सत्त्वं मनो ब्रह्मणि धारयन् ।
विहरिष्याम्यनासक्तः सुखी लोकान्निरामयः । यथा मां त्वं पुनर्नैवं दुःखेषु प्रणिधास्यसि ।
त्वया हि मे प्रणुन्नस्य गतिरन्या न विद्यते । तृष्णाशोकश्रमाणां हि त्वं कामप्रभवः सदा ।
धननाशेऽधिकं दुःखं मन्ये सर्व्वमहत्तरं । ज्ञातयो ह्यवमन्यन्ते मित्राणि च धनच्युतं ।
अवज्ञानसहस्रैस्तु दोषाः कष्टतरा धने । धने सुखकला या तु साऽपि दुःखे विधीयते । ६६२०
धनमस्येति पुरुषं पुरो निघ्नन्ति दस्यवः । क्लिश्यन्ति विविधैर्दण्डैर्नित्यमुद्वेजयन्ति च ।
अर्थलोलुपता दुःखमिति बुद्धं चिरान्मया । यद्यदालम्बसे कामं तत्तदेवानुरुध्यसे ।
अतत्त्वज्ञोऽसि बालश्च दुस्तोषोऽपूरणोऽनलः । नैव त्वं वेत्थ सुलभं नैव त्वं वेत्थ दुर्लभं ।
पाताल इव दुष्पूरो मां दुःखैर्योक्तुमिच्छसि । नाहमद्य समावेष्टुं शक्यः काम पुनस्त्वया ।

॥ युधिष्ठिर उवाच ॥ केन वृत्तेन वृत्तज्ञ वीतशोकश्चरेन्महीं । किञ्च कुर्व्वन्नरो लोके प्राप्नोति गतिमुत्तमां ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । प्रह्लादस्य च संवादं मुनेराजगरस्य च ।
चरन्तं ब्राह्मणं कञ्चित् कल्यचित्तमनामयं । पप्रच्छ राजा प्रह्लादो बुद्धिमान् बुद्धिसम्मतं । ६६५५
॥ प्रह्लाद उवाच ॥ स्वस्थः शक्तो मृदुर्दान्तो निर्विधित्सोऽनसूयकः । सुवाक् प्रगल्भो मेधावी प्राज्ञश्चरसि बालवत् ।
नैव प्रार्थयसे लाभं नालाभेष्वनुशोचसि । नित्यतृप्त इव ब्रह्मन् न किञ्चिदवमन्यसे ।
स्रोतसा ह्रियमाणासु प्रजासु विमना इव । धर्म्मकामार्थकार्य्येषु कूटस्थ इव लक्ष्यसे ।
नानुतिष्ठसि धर्म्मार्थौ न कामे चापि वर्त्तसे । इन्द्रियार्थाननादृत्य मुक्तश्चरसि साक्षिवत् ।
का नु प्रज्ञा श्रुतं वा किं वृत्तिर्व्वा का नु ते मुने । क्षिप्रमाचक्ष्व मे ब्रह्मन् श्रेयो यदिह मन्यसे । ६६६०
॥ भीष्म उवाच ॥ अनुयुक्तः स मेधावी लोकधर्म्मविधानवित् । उवाच श्लक्ष्णया वाचा प्रह्लादमनपार्थया ।
पश्य प्रह्लाद भूतानामुत्पत्तिमनिमित्ततः । ह्रासं वृद्धिं विनाशञ्च न प्रहृष्ये न च व्यथे ।
स्वभावादेव संदृश्य वर्त्तमानाः प्रवृत्तयः । स्वभावनिरताः सर्व्वाः परितुष्ये न केनचित् ।
पश्य प्रह्लाद संयोगान् विप्रयोगपरायणान् । सञ्चयांश्च विनाशान्तान् क्वचिद्विदधे मनः
अन्तवन्ति च भूतानि गुणयुक्तानि पश्यतः । उत्पत्तिनिधनज्ञस्य किं कार्य्यमवशिष्यते । ६६६५
जलजानामपि ह्यन्तं पर्य्यायेणोपलक्षये । महतामपि कायानां सूक्ष्माणाञ्च महोदधौ ।
जङ्गमस्थावराणाञ्च भूतानामसुराधिप । पार्थिवानामपि व्यक्तं मृत्युं पश्यामि सर्व्वशः ।
अन्तरिक्षचराणाञ्च दानवोत्तमपक्षिणां । उत्तिष्ठते यथाकालं मृत्युर्ब्बलवतामपि ।
दिवि सञ्चरमाणानि ह्रस्वानि च महान्ति च । ज्योतींष्यपि यथाकालं पतमानानि लक्षये ।
इति भूतानि सम्पश्यन्ननुषक्तानि मृत्युना । सर्व्वसामान्यतो विद्वान् कृतकृत्यः सुखं स्वपे । ६६७०
सुमहान्तमपि ग्रासं ग्रसे लब्धं यदृच्छया । शये पुनरभुञ्जानो दिवसानि बहून्यपि ।
आशयन्त्यपि मामन्नं पुनर्ब्बहुगुणं बहु । पुनरल्पं पुनस्तोकं पुनर्न्नैवोपपद्यते ।
कणं कदाचित्खादामि पिण्याकमपि च ग्रसे । भक्षये शालिमांसानि भक्ष्यांश्चोच्चावचान् पुनः ।
शये कदाचित् पर्य्यङ्के भूमावपि पुनः शये । प्रासादे चाऽपि मे शय्या कदाचिदुपपद्यते ।
धारयामि च चीराणि शाणक्षौमाजिनानि च । महार्हाणि च वासांसि धारयाम्यहमेकदा । ६६७५
न सन्निपतितं धर्म्म्यमुपभोगं यदृच्छया । प्रत्याचक्षे न चाप्येनमनुरुन्ध्ये सुदुर्लभे ।
अचलमनिधनं शिवं विशोकं शुचिमतुलं विदुषां मते प्रविष्टं । अनभिमतमसेवितं विमूढैर्व्रतमिदमाजगरं शुचिश्चरामि ।
अचलितमतिरच्युतः स्वधर्म्मात् परिमितसंसरणः परावरज्ञः । विगतभयकषायलोभमोहो व्रतमिदमाजगरं शुचिश्चरामि ।
अनियतफलभक्ष्यभोज्यपेयं विधिपरिणामविभक्तदेशकालं । हृदयसुखमसेवितं कदर्य्यैर्व्रतमिदमाजगरं शुचिश्चरामि ।
इदमिदमिति तृष्णयाऽभिभूतं जनमनवाप्तधनं विषीदमानं । निपुणमनुनिशाम्य तत्त्वबुद्ध्या व्रतमिदमाजगरं शुचिश्चरामि । ६६८०

बहुविधमनुदृश्य चार्थहेतोः कृपणमिहार्य्यमनार्य्यमाश्रयन्तं। उपशमरुचिरात्मवान् प्रशान्तो व्रतमिदमाजगरं शुचिश्चरामि।
सुखमसुखमलाभमर्थलाभं रतिमरतिं मरणञ्च जीवितञ्च। विधिनियतमवेक्ष्य तत्त्वतोऽहं व्रतमिदमाजगरं शुचिश्च
 रामि।
अपगतभयरागमोहदर्पो धृतिमतिबुद्धिसमन्वितः प्रशान्तः। उपगतफलभोगिनो निशम्य व्रतमिदमाजगरं शुचिश्चरामि।
अनियतशयनासनः प्रकृत्या दमनियमव्रतसत्यशौचयुक्तः। अपगतफलसञ्चयः प्रहृष्टो व्रतमिदमाजगरं शुचिश्च
 रामि।
अपगतमसुखार्थमीहनार्थैरुपगतबुद्धिरवेक्ष्य चात्मसंस्थं। तृषितमनियतं मनो नियन्तुं व्रतमिदमाजगरं शुचिश्चरामि। ६८८५
न हृदयमनुरुध्य वाङ्मनो वा प्रियसुखदुर्लभतामनित्यताञ्च। तदुभयमुपलक्षयन्निवाहं व्रतमिदमाजगरं शुचिश्च
 रामि।
बहुकथितमिदं हि बुद्धिमद्भिः कविभिरभिप्रथयद्भिरात्मकीर्त्तिं। इदमिदमिति तत्र तत्र तत्तत्स्वपरमतैर्गहनं प्रत
 र्कयद्भिः।
तदहमनुनिशम्य विप्रपातं पृथगभिपन्नमिहाबुधैर्मनुष्यैः। अनवसितमनन्तदोषपारं नृषु विचरामि विनीतरोषतृष्णः।
॥ भीष्म उवाच ॥ अजगरचरितव्रतं महात्मा य इह नरोऽनुचरेद्विनीतरागः। अपगतभयलोभमोहमन्युः स खलु सुखी
 विचरेदिमं विहारं।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि प्रह्लादाजगरसंवादे ऊनाशीत्यधिकशततमोऽध्यायः॥ १७९ ॥

॥ युधिष्ठिर उवाच ॥ बान्धवाः कर्म्म वित्तं वा प्रज्ञा चेह पितामह। नरस्य का प्रतिष्ठा स्यादेतत् पृष्टो वदस्व मे। ६८९०
॥ भीष्म उवाच ॥ प्रज्ञा प्रतिष्ठा भूतानां प्रज्ञा लाभः परो मतः। प्रज्ञा निःश्रेयसी लोके प्रज्ञा स्वर्गो मतः सतां।
 प्रज्ञया प्रापितार्थो हि बलिरैश्वर्य्यसंक्षये। प्रह्लादो नमुचिर्म्मङ्किस्तस्याः किं विद्यते परं।
 अत्राप्युदाहरन्तीममितिहासं पुरातनं। इन्द्रकाश्यपसंवादं तन्निबोध युधिष्ठिर ॥
 वैश्यः कश्चिदृषिसुतं काश्यपं संशितव्रतं। रथेन पातयामास श्रीमान् दृप्तस्तपस्विनं।
 आर्त्तः स पतितः क्रुद्धस्त्यक्त्वात्मानमथाब्रवीत्। मरिष्याम्यधनस्येह जीवितार्थो न विद्यते। ६८९५
 तथा मुमूर्षुमासीनमकूजन्तमचेतसं। इन्द्रः शृगालरूपेण बभाषे क्रुद्धमानसं।
 मनुष्ययोनिमिच्छन्ति सर्व्वभूतानि सर्व्वशः। मनुष्यत्वे च विप्रत्वं सर्व्व एवाभिनन्दति।
 मनुष्यो ब्राह्मणश्चासि श्रोत्रियश्चासि काश्यप। सुदुर्लभमवाप्यैतन्न दोषान्मर्त्तुमर्हसि।
 सर्व्वे लाभाः साभिमाना इति सत्या च ते श्रुतिः। सन्तोषणीयरूपोऽसि लोभाद्यदभिमन्यसे।
 अहो सिद्धार्थता तेषां येषां सन्तीह पाणयः। अतीव स्पृहये तेषां येषां सन्तीह पाणयः। ६९००
 पाणिमद्भ्यः स्पृहाऽस्माकं यथा तव धनस्य वै। न पाणिलाभादधिको लाभः कश्चन विद्यते।
 अपाणित्वादयं ब्रह्मन् कण्टकं नोद्धरामहे। जन्तूनुच्चावचानङ्गे दशतो न कषाम वा।
 अथ येषां पुनः पाणी देवदत्तौ दशाङ्गुली। उद्धरन्ति कृमीनङ्गाद्दशतो निकषन्ति च।
 वर्षाहिमातपानाञ्च परित्राणानि कुर्व्वते। चैलमन्नं सुखं शय्यां निवातञ्चोपभुञ्जते।

अधिष्ठाय च मां लोके भुञ्जते वाहयन्ति च । उपायैर्बहुभिश्चैव वश्यानात्मनि कुर्व्वते । ६७०५
ये खल्वजिह्वाः कृपणा अल्पप्राणा अपाणयः । सहन्ते तानि दुःखानि दिष्ट्या त्वं न तथा मुने ।
दिष्ट्या त्वं न शृगालो वै न कृमिर्न च मूषिकः । न सर्पो न च मण्डूको न चान्यः पापयोनिजः ।
एतावताऽपि लाभेन तोष्टुमर्हसि काश्यप । किं पुनर्योऽसि सत्त्वानां सर्व्वेषां ब्राह्मणोत्तमः ।
इमे मां कृमयोऽदन्ति येषामुद्धरणाय वै । नास्ति शक्तिरपाणित्वात् पश्यावस्थामिमां मम ।
अकार्य्यमिति चैवेमं नात्मानं सन्त्यजाम्यहं । नातः पापीयसीं योनिं पतेयमपरामिति । ६७१०
मध्ये वै पापयोनीनां शार्गालीयामहं गतः । पापीयस्यो बहुतरा इतोऽन्याः पापयोनयः ।
जात्यैवैके सुखितराः सन्त्यन्ये भृशदुःखिताः । नैकान्तं सुखमेवेह क्वचित् पश्यामि कस्यचित् ।
मनुष्या ह्याढ्यतां प्राप्य राज्यमिच्छन्त्यनन्तरं । राज्याद्देवत्वमिच्छन्ति देवत्वादिन्द्रतामपि ।
भवेस्त्वं यद्यपि त्वाढ्यो न राजा न च दैवतं । दैवतं प्राप्य चेन्द्रत्वं नैव तुष्येस्तथा सति ।
न तृप्तिः प्रियलाभेऽस्ति तृष्णा नाद्भिः प्रशाम्यति । संप्रज्वलति सा भूयः समिद्भिरिव पावकः । ६७१५
अस्त्येव त्वयि शोकोऽपि हर्षश्चापि तथा त्वयि । सुखदुःखे तथा चोभे तत्र का परिदेवना ।
परिच्छिद्यैव कामानां सर्व्वेषाञ्चैव कर्म्मणां । मूलं बुद्धीन्द्रियग्रामं शकुन्तानिव पञ्जरे ।
न द्वितीयस्य शिरसश्छेदनं विद्यते क्वचित् । न च पाणेस्तृतीयस्य यन्नास्ति न ततो भयं ।
न खल्वप्यरसज्ञस्य कामः क्वचन जायते । संस्पर्शाद्दर्शनाद्वापि श्रवणाद्वाऽपि जायते ।
न त्वं स्मरसि वारुण्या लट्वाकानाञ्च पक्षिणां । ताभ्याञ्चाभ्यधिको भक्ष्यो न कश्चिद्विद्यते क्वचित् । ६७२०
यानि चान्यानि भूतेषु भक्ष्यजातानि काश्यप । येषामभुक्तपूर्व्वं ते तेषामस्मृतिरेव च ।
अप्राशनमसंस्पर्शमसन्दर्शनमेव च । पुरुषस्यैव नियमो मन्ये श्रेयो न संशयः ।
पाणिमन्तो बलवन्तो धनवन्तो न संशयः । मनुष्या मानुषैरेव दासत्वमुपपादिताः ।
वधबन्धपरिक्लेशैः क्लिश्यन्ते च पुनः पुनः । ते खल्वपि रमन्ते च मोदन्ते च हसन्ति च ।
अपरे बाहुबलिनः कृतविद्या मनस्विनः । जुगुप्सितां सुकृपणां पापवृत्तिमुपासते । ६७२५
उत्सहन्ते च ते वृत्तिमन्यामप्युपसेवितुं । स्वकर्म्मणा तु नियतं भवितव्यन्तु तत्तथा ।
न पुल्कसो न चाण्डाल आत्मानं त्यक्तुमिच्छति । तया तुष्टः स्वया योन्या मायां पश्यस्व यादृशीं ।
दृष्ट्वा कुणीन् पक्षहतान् मनुष्यानामयाविनः । सुखं पूर्णः स्वया योन्या लब्धलाभोऽसि काश्यप ।
यदि ब्राह्मण देहस्ते निरातङ्को निरामयः । अङ्गानि च समग्राणि न च लोकेषु धिक्कृतः ।
न केनचित् प्रवादेन सत्येनैवापहारिणा । धर्म्मायोत्तिष्ठ विप्रर्षे नात्मानं त्यक्तुमर्हसि । ६७३०
यदि ब्रह्मन् शृणोष्येतच्छ्रद्दधासि च मे वचः । वेदोक्तस्यैव धर्म्मस्य फलं मुख्यमवाप्स्यसि ।
स्वाध्यायमग्निसंस्कारमप्रमत्तोऽनुपालय । सत्यं दमञ्च दानञ्च स्पर्द्धिष्ठा मा च केनचित् ।
ये केचन स्वध्ययनाः प्राप्ता यजनयाजनं । कथन्ते त्वनुशोचेयुर्ध्यायेयुर्वाऽप्यशोभनं ।
इच्छन्तस्ते विहाराय सुखं महदवाप्नुयुः । उत जाताः सुनक्षत्रे सुतिथौ सुमुहूर्त्तजाः ।

यज्ञदानप्रजेहायां यतन्ते शक्तिपूर्व्वकं। नक्तञ्चास्तुरेष्वन्ते दुःखिता दुर्म्मुखक्षताः। ६८२५
सम्पतन्त्यासुरीं योनिं यज्ञप्रसववर्ज्जिताः। अहमासं पण्डितको हैतुको वेदनिन्दकः।
आन्वीक्षिकीन्तर्कविद्यामनुरक्तो निरर्थिकां। हेतुवादान् प्रवदिता वक्ता संसत्सु हेतुमत्।
आक्रोष्टा चातिवक्ता च ब्रह्मवाक्येषु वै द्विजान्। नास्तिकः सर्व्वशङ्की च मूर्खः पण्डितमानिकः।
तस्येयं फलनिर्वृत्तिः शृगालत्वं मम द्विज। अपि जातु तथा तत्स्यादहोरात्रशतैरपि।
यदहं मानुषीं योनिं शृगालः प्राप्नुयां पुनः। सन्तुष्टश्चाप्रमत्तश्च यज्ञदानतपोरतः। ६८३०
ज्ञेयज्ञाता भवेयं वै वर्ज्यवर्ज्जयिता तथा। ततः स मुनिरुत्थाय काश्यपस्तमुवाच ह।
अहो वतासि कुशलो बुद्धिमांश्चेति विस्मितः। समवैक्षत तं विप्रो ज्ञानदीर्घेण चक्षुषा।
ददर्श चैनं देवानान्देवमिन्द्रं शचीपतिं। ततः संपूजयामास काश्यपो हरिवाहनं।
अनुज्ञातस्तु तेनाथ प्रविवेश स्वमालयं।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शृगालकाश्यपसंवादे अशीत्यधिकशततोऽध्यायः॥ १८० ॥

॥ युधिष्ठिर उवाच ॥ यद्यस्ति दत्तमिष्टं वा तपस्तप्तं तथैव च। गुरूणां वाऽपि शुश्रूषा तन्मे ब्रूहि पितामह। ६८३५
॥ भीष्म उवाच ॥ आत्मनाऽनर्थयुक्तेन पापे निविशते मनः। स्वकर्म्मकलुषं कृत्वा कृच्छ्रे लोके विधीयते।
दुर्भिक्षादेव दुर्भिक्षं क्लेशात् क्लेशं भयाद्भयं। मृतेभ्यः प्रमृतं यान्ति दरिद्राः पापकारिणः।
उत्सवादुत्सवं यान्ति स्वर्गात् स्वर्गं सुखात्सुखं। श्रद्दधानाश्च दान्ताश्च धनाढ्याः शुभकारिणः।
व्यालकुञ्जरदुर्गेषु सर्पचौरभयेषु च। हस्तावापेन गच्छन्ति नास्तिकाः किमतः परं।
प्रियदेवातिथेयाश्च वदान्याः प्रियसाधवः। क्षेम्यमात्मवतां मार्गमास्थिता हस्तदक्षिणं। ६८४०
पुलाका इव धान्येषु पुत्तिका इव पक्षिषु। तद्विधास्ते मनुष्याणां येषां धर्म्मो न कारणं।
सुशीघ्रमभिधावन्तं विधानमनुधावति। शेते सह शयानेन येन येन यथा कृतं।
उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति। करोति कुर्व्वतः कर्म्म छायेवानुविधीयते।
येन येन यथा यद्यत्पुरा कर्म्म समीहितं। तत्तदेव नरो भुङ्क्ते नित्यं विहितमात्मना।
स्वकर्म्मफलनिक्षेपं विधानपरिरक्षितं। भूतग्राममिमं कालः समन्तात्परिकर्षति। ६८४५
अचोद्यमानानि यथा पुष्पाणि च फलानि च। स्वं कालं नातिवर्त्तन्ते तथा कर्म्म पुराकृतं।
संमानश्चावमानश्च लाभालाभौ क्षयोदयौ। प्रवृत्तानि निवर्त्तन्ते विधानान्ते पुनः पुनः।
आत्मना विहितं दुःखमात्मना विहितं सुखं। गर्भशय्यामुपादाय भुज्यते पौर्व्वदेहिकं।
बालो युवा च वृद्धश्च यत्करोति शुभाशुभं। तस्यां तस्यामवस्थायां तत्फलं प्रतिपद्यते।
यथा धेनुसहस्रेषु वत्सो विन्दति मातरं। तथा पूर्व्वकृतं कर्म्म कर्त्तारमनुगच्छति। ६८५०
समुन्नमग्रतो वस्त्रं पश्चाच्छुद्ध्यति कर्म्मणा। उपवासैः प्रतप्तानां दीर्घं सुखमनन्तकं।
दीर्घकालेन तपसा सेवितेन तपोवने। धर्म्मनिर्द्धूतपापानां संपद्यन्ते मनोरथाः।
शकुनानामिवाकाशे मत्स्यानामिव चोदके। पदं यथा न दृश्येत तथा ज्ञानविदां गतिः।

अक्षमन्वीत्पाक्षगोः कीर्त्तितैश्च व्यतिक्रमैः। पैशुनं चानुरूपञ्च कर्त्तव्यं हितमात्मनः।

॥ इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्मपर्व्वणि एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

॥ युधिष्ठिर उवाच ॥ कुतः सृष्टमिदं विश्वं जगत् स्थावरजङ्गमं। प्रलये च कमभ्येति तन्मे ब्रूहि पितामह। ६७१२

ससागरः सगगनः सशैलः सबलाहकः। सभूमिः साग्निपवनो लोकोऽयं केन निर्म्मितः।

कथं सृष्टानि भूतानि कथं वर्णविभक्तयः। शौचाशौचं कथं तेषां धर्म्माधर्म्मविधिः कथं।

कीदृशो जीवतां जीवः क्व वा गच्छन्ति ये मृताः। अस्माल्लोकादमुं लोकं सर्व्वं शंसतु नो भवान्।

॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। भृगुणाऽभिहितं शास्त्रं भरद्वाजाय पृच्छते।

कैलासशिखरे दृष्ट्वा दीप्यमानं महौजसं। भृगुं महर्षिमासीनं भरद्वाजो ऽन्वपृच्छत। ६७००

ससागरः सगगनः सशैलः सबलाहकः। सभूमिः साग्निपवनो लोकोऽयं केन निर्म्मितः।

कथं सृष्टानि भूतानि कथं वर्णविभक्तयः। शौचाशौचं कथं तेषां धर्म्माधर्म्मविधिः कथं।

कीदृशो जीवतां जीवः क्व वा गच्छन्ति ये मृताः। परलोकमिमञ्चापि सर्व्वं शंसितुमर्हसि।

एवं स भगवान् पृष्टो भरद्वाजेन संशयं। ब्रह्मर्षिर्ब्रह्मसङ्काशः सर्व्वं तस्मै ततोऽब्रवीत्।

॥ भृगुरुवाच ॥ मानसो नाम यः पूर्व्वो विश्रुतो वै महर्षिभिः। अनादिनिधनो देवस्तथाऽभेद्योऽजरामरः। ६७०५

अव्यक्त इति विख्यातः शाश्वतोऽथाक्षयोऽव्ययः। यतः सृष्टानि भूतानि जायन्ते च म्रियन्ति च।

सोऽसृजत् प्रथमं देवो महान्तं नाम नामतः। महान् ससर्ज्जाहङ्कारं स चापि भगवानथ।

आकाशमिति विख्यातं सर्व्वभूतधरः प्रभुः। आकाशादभवद्वारि सलिलादग्निमारुतौ।

अग्निमारुतसंयोगात्ततः समभवन्मही। ततस्तेजोमयं दिव्यं पद्मं सृष्टं स्वयम्भुवा।

तस्मात् पद्मात् समभवद्ब्रह्मा वेदमयो निधिः। अहङ्कार इति ख्यातः सर्व्वभूतात्मभूतकृत्। ६७१०

ब्रह्मा वै स महातेजा य एते पञ्चधातवः। शैलास्तस्यास्थिसंज्ञास्तु मेदोमांसञ्च मेदिनी।

समुद्रास्तस्य रुधिरमाकाशमुदरं तथा। पवनश्चैव निश्वासस्तेजोऽग्निर्निम्नगाः शिराः।

अग्नीषोमौ तु चन्द्रार्कौ नयने तस्य विश्रुते। नभश्चोर्द्ध्वं शिरस्तस्य क्षितिः पादौ भुजा दिशः।

दुर्व्विज्ञेयो ह्यचिन्त्यात्मा सिद्धैरपि न संशयः। स एष भगवान् विष्णुरनन्त इति विश्रुतः।

सर्व्वभूतात्मभूतस्थो दुर्व्विज्ञेयोऽकृतात्मभिः। अहङ्कारस्य यः स्रष्टा सर्व्वभूतभवाय वै। ६७१५

यतः समभवद्विश्वं पृष्टोऽहं यदिह त्वया।

॥ भरद्वाज उवाच ॥ गगनस्य दिशाञ्चैव भूतलस्यानिलस्य वा। कान्यत्र परिमाणानि संशयं छिन्धि तत्त्वतः।

॥ भृगुरुवाच ॥ अनन्तमेतदाकाशं सिद्धदैवतसेवितं। रम्यं नानाश्रयाकीर्णं यस्यान्तो नाधिगम्यते।

ऊर्द्ध्वं गतेरधस्तात्तु चन्द्रादित्यौ न दृश्यतः। तत्र देवाः स्वयं दीप्ता भास्कराभाऽग्निवर्चसः।

तेऽप्यन्तं न पश्यन्ति नभसः प्रथितौजसः। दुर्गमत्वादनन्तत्वादिति मे विद्धि मानद। ६७२०

उपरिष्टोपरिष्टात्तु प्रज्वलद्भिः स्वयं प्रभैः। निरुद्धमेतदाकाशमप्रमेयं सुरैरपि।

पृथिव्यन्ते समुद्रास्तु समुद्रान्ते तमः स्मृतं। तमसोऽन्ते जलं प्राहुर्ज्जलस्यान्तेऽग्निरेव च।

रसातलान्ते सलिलं जलान्ते पन्नगाधिपाः । तदन्ते पुनराकाशमाकाशान्ते पुनर्ज्जलं ।
एवमन्तं भगवतः प्रमाणं सलिलस्य च । अग्निमारुततोयेभ्यो दुर्ज्ञेयं दैवतैरपि ।
अग्निमारुततोयानां वर्णाः क्षितितलस्य च । आकाशादपि मनुष्ये भिद्यन्ते तत्त्वदर्शनात् ।    ६७९५
पठन्ति चैव मुनयः शास्त्रेषु विविधेषु च । त्रैलोक्यसागरे चैव प्रमाणं विहितं यथा ।
अदृश्याय त्वगम्याय कः प्रमाणमुदाहरेत् । सिद्धानां देवतानाञ्च यदा परिमिता गतिः ।
तदा गौणमनन्तस्य नामानन्तेति विश्रुतं । नामधेयानुरूपस्य मानसस्य महात्मनः ।
यदा तु दिव्यं यद्रूपं ह्रसते वर्द्धते पुनः । कोऽन्यस्तद्वेदितुं शक्तो योऽपि स्यात्तद्विधोऽपरः ।
ततः पुष्करतः सृष्टः सर्व्वज्ञो मूर्त्तिमान् प्रभुः । ब्रह्मा धर्म्ममयः पूर्व्वः प्रजापतिरनुत्तमः ।    ६८००
॥ भरद्वाज उवाच ॥ पुष्कराद्यदि संभूतो ज्येष्ठं भवति पुष्करं । ब्रह्माणं पूर्व्वजञ्चाह भवान् सन्देह एव मे ।
॥ भृगुरुवाच ॥ मानसस्येह या मूर्त्तिर्ब्रह्मत्वं समुपागता । तस्यासनविधानार्थं पृथिवी पद्ममुच्यते ।
कर्णिकां तस्य पद्मस्य मेरुर्गगनमुच्छ्रितः । तस्य मध्ये स्थितो लोकान् सृजते जगतः प्रभुः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि भृगुभरद्वाजसंवादे द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥
॥ भरद्वाज उवाच ॥ प्रजाविसर्गं विविधं कथं स सृजते प्रभुः । मेरुमध्ये स्थितो ब्रह्मा तद्ब्रूहि द्विजसत्तम ।
॥ भृगुरुवाच ॥ प्रजाविसर्गं विविधं मानसो मनसाऽसृजत् । संरक्षणार्थं भूतानां सृष्टं प्रथमतो जलं ।    ६८०५
यः प्राणः सर्व्वभूतानां वर्द्धन्ते येन च प्रजाः । परित्यक्ताश्च नश्यन्ति तेनेदं सर्व्वमावृतं ।
पृथिवी पर्व्वता मेघा मूर्त्तिमन्तश्च येऽपरे । सर्व्वन्तद्वारुणं ज्ञेयमापस्तस्तम्भिरे यतः ।
॥ भरद्वाज उवाच ॥ कथं सलिलमुत्पन्नं कथञ्चैवाग्निमारुतौ । कथं वा मेदिनी सृष्टेत्यत्र मे संशयो महान् ।
॥ भृगुरुवाच ॥ ब्रह्मकल्पे पुरा ब्रह्मन् ब्रह्मर्षीणां समागमे । लोकसम्भवसन्देहः समुत्पन्नो महात्मनां ।
तेऽतिष्ठन् ध्यानमालम्ब्य मौनमास्थाय निश्चलाः । त्यक्ताहाराः पवनपा दिव्यं वर्षशतं द्विजाः ।    ६८१०
तेषां ब्रह्ममयी वाणी सर्व्वेषां श्रोत्रमागमत् । दिव्या सरस्वती तत्र सम्बभूव नभस्तलात् ।
पुरा स्तिमितमाकाशमनन्तमचलोपमं । नष्टचन्द्रार्कपवनं प्रसुप्तमिव सम्बभौ ।
ततः सलिलमुत्पन्नं तमसीवापरं तमः । तस्माच्च सलिलोत्पीडादुदतिष्ठत मारुतः ।
यथा भाजनमच्छिद्रं निःशब्दमिव लक्ष्यते । तच्चाम्भसा पूर्य्यमाणं स शब्दं कुरुते ऽनिलः ।
यथा सलिलसंरुद्धे नभसोऽन्ते निरन्तरे । भित्त्वाऽर्णवतलं वायुः समुत्पतति घोषवान् ।    ६८१५
स एष चरते वायुरर्णवोत्पीडसम्भवः । आकाशस्थानमासाद्य प्रशान्तिं नाधिगच्छति ।
तस्मिन् वाय्वम्बुसङ्घर्षे दीप्ततेजा महाबलः । प्रादुरभूदूर्द्ध्वशिखः कृत्वा निस्तिमिरं नभः ।
अग्निः पवनसंयुक्तः खं समाक्षिपते जलं । सोऽग्निर्मारुतसंयोगाद्घनत्वमुपपद्यते ।
तस्याकाशं निपततः स्नेहस्तिष्ठति योऽपरः । स सङ्घातत्वमापन्नो भूमित्वमनुगच्छति ।
रसानां सर्व्वगन्धानां स्नेहानां प्राणिनां तथा । भूमिर्योनिरिह ज्ञेया यस्यां सर्व्वं प्रसूयते ।    ६८२०
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि भृगुभरद्वाजसंवादे त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

॥ भरद्वाज उवाच ॥ य एते धातवः पञ्च ब्रह्मा यानसृजत् पुरा । आवृता यैरिमे लोका महाभूताभिसंज्ञिताः ।
यदाऽसृजत् सहस्राणि भूतानां स महामतिः । पञ्चानामेव भूतत्वं कथं समुपपद्यते ।
॥ भृगुरुवाच ॥ अमितानां महाशब्दो यान्ति भूतानि सम्भवं । ततस्तेषां महाभूतशब्दोऽयमुपपद्यते ।
चेष्टा वायुः खमाकाशमूष्माऽग्निः सलिलं द्रवः । पृथिवी चाथ संघातः शरीरं पाञ्चभौतिकं ।
इत्येतैः पञ्चभिर्भूतैर्युक्तं स्थावरजङ्गमं । श्रोत्रं घ्राणं रसः स्पर्शो दृष्टिश्चेन्द्रियसंज्ञिताः । ६८२५
॥ भरद्वाज उवाच ॥ पञ्चभिर्यदि भूतैस्तु युक्ताः स्थावरजङ्गमाः । स्थावराणां न दृश्यन्ते शरीरे पञ्च धातवः ।
अनूष्मणामचेष्टानां घनानाञ्चैव तत्त्वतः । वृक्षाणां नोपलभ्यन्ते शरीरे पञ्च धातवः ।
न शृण्वन्ति न पश्यन्ति न गन्धरसवेदिनः । न च स्पर्शं विजानन्ति ते कथं पाञ्चभौतिकाः ।
अद्रवत्वादनग्नित्वादभूमित्वादवायुतः । आकाशस्याप्रमेयत्वाद्वृक्षाणां नास्ति भौतिकं ।
॥ भृगुरुवाच ॥ घनानामपि वृक्षाणामाकाशोऽस्ति न संशयः । तेषां पुष्पफलव्यक्तिर्नित्यं समुपपद्यते । ६८३०
ऊष्मतो म्लायते पर्णं त्वक् फलं पुष्पमेव च । म्लायते शीर्य्यते चापि स्पर्शस्तेनात्र विद्यते ।
वाय्वग्न्यशनिनिर्घोषैः फलं पुष्पं विशीर्य्यते । श्रोत्रेण गृह्यते शब्दस्तस्माच्छृण्वन्ति पादपाः ।
वल्ली वेष्टयते वृक्षं सर्व्वतश्चैव गच्छति । न ह्यदृष्टेश्च मार्गोऽस्ति तस्मात् पश्यन्ति पादपाः ।
पुण्यापुण्यैस्तथा गन्धैर्धूपैश्च विविधैरपि । अरोगाः पुष्पिताः सन्ति तस्माज्जिघ्रन्ति पादपाः ।
पादैः सलिलपानाच्च व्याधीनाञ्चापि दर्शनात् । व्याधिप्रतिक्रियत्वाच्च विद्यते रसनं द्रुमे । ६८३५
वक्त्रेणोत्पलनालेन यथोर्द्ध्वं जलमाददेत् । तथा पवनसंयुक्तः पादैः पिबति पादपः ।
सुखदुःखयोश्च ग्रहणाच्छिन्नस्य च विरोहणात् । जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते ।
तेन तज्जलमादत्तं जरयत्यग्निमारुतौ । आहारपरिणामाच्च स्नेहो वृद्धिश्च जायते ।
जङ्गमानाञ्च सर्व्वेषां शरीरे पञ्च धातवः । प्रत्येकशः प्रभिद्यन्ते यैः शरीरं विचेष्टते ।
त्वक् च मांसं तथाऽस्थीनि मज्जा स्नायुश्च पञ्चमं । इत्येतदिह संघातं शरीरे पृथिवीमयं । ६८४०
तेजो ह्यग्निस्तथा क्रोधश्चक्षुरूष्मा तथैव च । अग्निर्जरयते यच्च पञ्चाग्नेयाः शरीरिणः ।
श्रोत्रं घ्राणं तथास्यञ्च हृदयं कोष्ठमेव च । आकाशात् प्राणिनामेते शरीरे पञ्च धातवः ।
श्लेष्मा पित्तमथ स्वेदो वसा शोणितमेव च । इत्यापः पञ्चधा देहे भवन्ति प्राणिनां सदा ।
प्राणात् प्रणीयते प्राणी व्यानाद्व्यायच्छते तथा । गच्छत्यपानोऽधश्चैव समानो हृद्यवस्थितः ।
उदानादुच्छ्वसिति च प्रतिभेदाच्च भाषते । इत्येते वायवः पञ्च चेष्टयन्तीह देहिनं । ६८४५
भूमेर्गन्धगुणान्वेत्ति रसञ्चाद्भ्यः शरीरवान् । ज्योतिषा चक्षुषा रूपं स्पर्शं वेत्ति च वायुना ।
गन्धः स्पर्शो रसो रूपं शब्दश्चात्र गुणाः स्मृताः । तस्य गन्धस्य वक्ष्यामि विस्तराभिहितान् गुणान् ।
इष्टश्चानिष्टगन्धश्च मधुरः कटुरेव च । निर्हारी संहतः स्निग्धो रूक्षो विशद एव वा ।
एवं नवविधो ज्ञेयः पार्थिवो गन्धविस्तरः । ज्योतिः पश्यति चक्षुर्भ्यां स्पर्शं वेत्ति च वायुना ।
शब्दः स्पर्शश्च रूपञ्च रसश्चापि गुणाः स्मृताः । रसज्ञानन्तु वक्ष्यामि तन्मे निगदतः शृणु । ६८५०

रसो बहुविधः प्रोक्तः ऋषिभिः प्रथितात्मभिः। मधुरो लवणस्तिक्तः कषायोऽम्लः कटुस्तथा।
एष षड्विधविस्तारो रसो वारिमयः स्मृतः। शब्दः स्पर्शश्च रूपञ्च त्रिगुणं ज्योतिरुच्यते।
ज्योतिः पश्यति रूपाणि रूपञ्च बहुधा स्मृतं। ह्रस्वो दीर्घस्तथा स्थूलश्चतुरस्रोऽणुवृत्तवान्।
शुक्लः कृष्णस्तथा रक्तो नीलः पीतोऽरुणस्तथा। कठिनश्चिक्कणः श्लक्ष्णः पिच्छिलो मृदुदारुणः।
एवं षोडशविस्तारो ज्योतीरूपगुणः स्मृतः। वायव्यस्तु गुणः स्पर्शः स्पर्शश्च बहुधा स्मृतः। ६८५५
उष्णः शीतः सुखो दुःखः स्निग्धो विशद एव च। तथा खरो मृदुः रूक्षो लघुर्गुरुतरोऽपि च।
शब्दस्पर्शौ च विज्ञेयौ द्विगुणो वायुरित्युत। एवमेकादशविधो वायव्यो गुण उच्यते।
तत्रैकगुणमाकाशं शब्द इत्येव तत् स्मृतं। तस्य शब्दस्य वक्ष्यामि विस्तरं विविधात्मकं।
षड्ज ऋषभगान्धारौ मध्यमो धैवतस्तथा। पञ्चमश्चापि विज्ञेयस्तथा चापि निषादवान्।
एष सप्तविधः प्रोक्तो गुण आकाशसम्भवः। ऐश्वर्य्येण तु सर्व्वत्र स्थितोऽपि पटहादिषु। ६८६०
मृदङ्गभेरीशङ्खानां स्तनयित्नोरथस्य च। यः कश्चिच्छ्रूयते शब्दः प्राणिनोऽप्राणिनोऽपि वा।
एतेषामेव सर्व्वेषां विषये संप्रकीर्त्तितः। एवं बहुविधाकारः शब्द आकाशसम्भवः।
आकाशजं शब्दमाहुरेभिर्वायुगुणैः सह। अव्याहतैश्चेतयते न वेत्ति विषमस्थितैः।
आप्याय्यन्ते च ते नित्यं धातवस्तैस्तु धातुभिः। आपोऽग्निर्मारुतश्चैव नित्यं जाग्रति देहिषु।
मूलमेते शरीरस्य व्याप्य प्राणानिह स्थिताः। ६८६५

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि भृगुभरद्वाजसंवादे चतुरशीत्यधिकशततमोऽध्यायः॥ १८४॥

॥ भरद्वाज उवाच ॥ पार्थिवं धातुमासाद्य शारीरोऽग्निः कथं प्रभो। अवकाशविशेषेण कथं वर्त्तयतेऽनिलः।
॥ भृगुरुवाच ॥ वायोर्गतिमहं ब्रह्मन् कथयिष्यामि तेऽनघ। प्राणिनामनिलो देहान् यथा चेष्टयते बली।
श्रितो मूर्द्धानमग्निस्तु शरीरं परिपालयन्। प्राणो मूर्द्धनि चाग्नौ च वर्त्तमानो विचेष्टते।
स जन्तुः सर्व्वभूतात्मा पुरुषः स सनातनः। मनोबुद्धिरहङ्कारो भूतानि विषयश्च सः।
एवं त्विह स सर्व्वत्र प्राणेन परिचाल्यते। पृष्ठतस्तु समानेन स्वां स्वां गतिमुपाश्रितः। ६८७०
वस्तिमूलं गुदञ्चैव पावकं समुपाश्रितः। वहन्मूत्रं पुरीषञ्चाप्यपानः परिवर्त्तते।
प्रयत्ने कर्म्मणि बले य एकस्त्रिषु वर्त्तते। उदान इति तं प्राहुरध्यात्मविदुषो जनाः।
सन्धिष्वपि च सर्व्वेषु सन्निविष्टस्तथाऽनिलः। शरीरेषु मनुष्याणां व्यान इत्युपदिश्यते।
धातुष्वग्निस्तु विततः समानेन समीरितः। रसान् धातूंश्च दोषांश्च वर्त्तयन्नवतिष्ठते।
अपानप्राणयोर्मध्ये प्राणापानसमाहितः। समन्वितस्त्वधिष्ठानं सम्यक् पचति पावकः। ६८७५
आस्यं हि पायुपर्य्यन्तमन्ते स्याद्गुदसंज्ञितं। स्रोतांस्यस्मात् प्रजायन्ते सर्व्वस्रोतांसि देहिनां।
प्राणानां सन्निपाताच्च सन्निपातः प्रजायते। ऊष्मा चाग्निरिति ज्ञेयो योऽन्नं पचति देहिनां।
अग्निवेगवहः प्राणो गुदान्ते प्रतिहन्यते। स ऊर्द्ध्वमागम्य पुनः समुत्क्षिपति पावकं।

पश्चाच्छ्रयस्त्वधो नाभ्यामूर्द्धमामाश्रयः स्थितः । नाभिमध्ये शरीरस्य सर्व्वे प्राणाश्च संस्थिताः ।
प्रस्थिता हृदयात्सर्व्वे तिर्य्यगूर्द्धमधस्तथा । वहन्त्यन्नरसान्नाड्यो दश प्राणप्रचोदिताः । १८८०
एष मार्गोऽथ योगानां येन गच्छन्ति तत्पदं । जितक्लमा समा धीरा मूर्द्धन्यात्मानमादधन् ।
एवं सर्व्वेषु विहितः प्राणापानेषु देहिनां । तस्मिन् समिध्यते नित्यमग्निः स्थाल्यामिवाहितः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि भृगुभरद्वाजसंवादे पञ्चाशीत्यधिकशततोऽध्यायः ॥ १८५ ॥
॥ भरद्वाज उवाच ॥ यदि प्राणयते वायुर्वायुरेव विचेष्टते । श्वसित्याभाषते चैव तस्माज्जीवो निरर्थकः ।
यदुष्मभाव आग्नेयो वह्निना पच्यते यदि । अग्निर्जरयते चैतत्तस्माज्जीवो निरर्थकः ।
जन्तोः प्रमीयमाणस्य जीवो नैवोपलभ्यते । वायुरेव जहात्येनमुष्मभावश्च नश्यति । १८८५
यदि वायुमयो जीवः संश्लेषो यदि वा पुनः । वायुमण्डलवद्दृश्यो गच्छेत् सह मरुद्गणैः ।
संश्लेषो यदि वातेन यदि तस्मात् प्रणश्यति । महार्णवविमुक्तत्वादन्यत् सलिलभाजनं ।
कूपे वा सलिलं दद्यात् प्रदीपं वा हुताशने । क्षिप्रं प्रविश्य नश्येत यथा नश्यत्यसौ तथा ।
पञ्चधारणके ह्यस्मिन् शरीरे जीवितं कुतः । तेषामन्यतराभावाच्चतुर्णां नास्ति संशयः ।
नश्यन्त्यापो ह्यनाहाराद्वायुरुच्छ्वासनिग्रहात् । नश्यते कोष्ठभेदात् खमग्निर्नश्यत्यभोजनात् । १८९०
व्याधिव्रणपरिक्लेशैर्मेदिनी चैव शीर्य्यते । पीडितेऽन्यतरे ह्येषां सङ्घातो याति पञ्चधा ।
तस्मिन् पञ्चत्वमापन्ने जीवः किमनुधावति । किं वेदयति वा जीवः किं शृणोति ब्रवीति च ।
एषा गौः परलोकस्थं तारयिष्यति मामिति । यो दत्त्वा म्रियते जन्तुः सा गौः कं तारयिष्यति ।
गौश्च प्रतिग्रहीता च दाता चैव समं यदा । इहैव विलयं यान्ति कुतस्तेषां समागमः ।
विहगैरुपयुक्तस्य शैलाग्रात् पतितस्य वा । अग्निना चोपयुक्तस्य कुतः सञ्जीवनं पुनः । १८९५
छिन्नस्य यदि वृक्षस्य न मूलं प्रतिरोहति । वीजान्यस्य प्ररोहन्ति मृतः क्व पुनरेष्यति ।
वीजमात्रं पुरा सृष्टं यदेतत्परिवर्त्तते । मृता मृताः प्रणश्यन्ति वीजाद्वीजं प्रवर्त्तते ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि भृगुभरद्वाजसंवादे षडशीत्यधिकशततोऽध्यायः ॥ १८६ ॥
॥ भृगुरुवाच ॥ न प्रणाशोऽस्ति जीवस्य दत्तस्य च कृतस्य च । याति देहान्तरं प्राणी शरीरन्तु विशीर्य्यते ।
न शरीराश्रितो जीवस्तस्मिन्नष्टे प्रणश्यति । समिधामिव दग्धानां यथाग्निर्दृश्यते तथा ।
॥ भरद्वाज उवाच ॥ अग्नेर्य्यथा तथा तस्य यदि नाशो न विद्यते । इन्धनस्योपयोगान्ते स चाग्निर्नोपलभ्यते । १९००
नश्यतीत्येव जानामि शान्तमग्निमनिन्धनं । गतिर्यस्य प्रमाणं वा संस्थानं वा न विद्यते ।
॥ भृगुरुवाच ॥ समिधामुपयोगान्ते यथाऽग्निर्नोपलभ्यते । आकाशानुगतत्वाद्धि दुर्ग्राह्यो हि निराश्रयः ।
तथा शरीरसन्त्यागे जीवो ह्याकाशवत् स्थितः । न गृह्यते सुसूक्ष्मत्वाद्यथा ज्योतिर्न संशयः ।
प्राणान् धारयते ह्यग्निः स जीव उपधार्य्यतां । वायुसन्धारणो ह्यग्निर्नश्यत्युच्छ्वासनिग्रहात् ।
तस्मिन्नष्टे शरीराग्नौ ततो देहमचेतनं । पतितं याति भूमित्वमयनं तस्य हि क्षितिः । १९०५

जङ्गमानां हि सर्व्वेषां स्थावराणां तथैव च। आकाशं पवनोऽन्वेति ज्योतिस्तमनुगच्छति।
तेषां त्रयाणामेकत्वात् द्वयं भूमौ प्रतिष्ठितं। यत्र खं तत्र पवनस्तत्राग्निर्यत्र मारुतः।
अमूर्त्तयस्ते विज्ञेया मूर्त्तिमन्तः शरीरिणां।
॥ भरद्वाज उवाच ॥ यद्यग्निमारुतौ भूमिः खमापश्च शरीरिषु। जीवः किंलक्षणस्तत्रेत्येतदाचक्ष्व मेऽनघ।
पञ्चात्मके पञ्चरतौ पञ्चविज्ञानचेतने। शरीरे प्राणिनां जीवं वेत्तुमिच्छामि यादृशं। ६९१०
मांसशोणितसङ्घाते मेदःस्नाय्वस्थिसञ्चये। भिद्यमाने शरीरे तु जीवो नैवोपलभ्यते।
यद्यजीवं शरीरन्तु पञ्चभूतसमन्वितं। शारीरे मानसे दुःखे कस्तां वेदयते रुजं।
शृणोति कथितं जीवः कर्णाभ्यां न शृणोति तत्। महर्षे मनसि व्यग्रे तस्माज्जीवो निरर्थकः।
सर्व्वं पश्यति यद्दृश्यं मनोयुक्तेन चक्षुषा। मनसि व्याकुले चक्षुः पश्यन्नपि न पश्यति।
न पश्यति न चाघ्राति न शृणोति न भाषते। न च स्पर्शरसौ वेत्ति निद्रावशगतः पुनः। ६९१५
हृष्यति क्रुध्यते कोऽत्र शोचत्युद्विजते च कः। इच्छति ध्यायति द्वेष्टि वाचमीरयते च कः।
॥ भृगुरुवाच ॥ न पञ्चसाधारणमत्र किञ्चिच्छरीरमेको वहतेऽन्तरात्मा। स वेत्ति गन्धांश्च रसान् श्रुतीश्च स्पर्शञ्च रूपञ्च गुणाश्च येऽन्ये।
पञ्चात्मके पञ्चगुणप्रदर्शी स सर्व्वगात्रानुगतोऽन्तरात्मा। स वेत्ति दुःखानि सुखानि चात्र तद्विप्रयोगात्तु न वेत्ति देहः।
यदा न रूपं न स्पर्शो नोष्मभावश्च पावके। तदा शान्ते शरीराग्नौ देहत्यागेन नश्यति।
आपोमयमिदं सर्व्वमापो मूर्त्तिः शरीरिणां। तत्रात्मा मानसो ब्रह्मा सर्व्वभूतेषु लोककृत्। ६९२०
आत्मा क्षेत्रज्ञ इत्युक्तः संयुक्तः प्राकृतैर्गुणैः। तैरेव तु विनिर्म्मुक्तः परमात्मेत्युदाहृतः।
आत्मानं तं विजानीहि सर्व्वलोकहितात्मकं। तस्मिन् यः संश्रितो देहे ह्यब्बिन्दुरिव पुष्करे।
क्षेत्रज्ञं तं विजानीहि नित्यं लोकहितात्मकं। तमो रजश्च सत्वञ्च विद्धि जीवगुणानिमान्।
सचेतनं जीवगुणं वदन्ति स चेष्टते चेष्टयते च सर्व्वं। अतः परं क्षेत्रविदो वदन्ति प्रावर्त्तयद्यो भुवनानि सप्त।
न जीवनाशोऽस्ति हि देहभेदे मिथ्यैतदाहुर्म्मृत इत्यबुद्धाः। जीवस्तु देहान्तरितः प्रयाति दशार्द्धता तस्य शरीरभेदः। ६९२५
एवं सर्व्वेषु भूतेषु गूढश्चरति संवृतः। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया तत्त्वदर्शिभिः।
तं पूर्व्वापररात्रेषु युञ्जानः सततं बुधः। लघ्वाहारो विशुद्धात्मा पश्यत्यात्मानमात्मनि।
चित्तस्य हि प्रसादेन हित्वा कर्म्म शुभाशुभं। प्रसन्नात्मात्मनि स्थित्वा सुखमानन्त्यमश्नुते।
मानसोऽग्निः शरीरेषु जीव इत्यभिधीयते। सृष्टिः प्रजापतेरेषा भूताध्यात्मविनिश्चये।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि भृगुभरद्वाजसंवादे सप्ताशीत्यधिकशततोऽध्यायः ॥ १८७ ॥
॥ भृगुरुवाच ॥ असृजद्ब्राह्मणानेवं पूर्व्वं ब्रह्मा प्रजापतीन्। आत्मतेजोऽभिनिर्वृत्तान् भास्कराग्निसमप्रभान्। ६९३०
ततः सत्यञ्च धर्म्मञ्च तपो ब्रह्म च शाश्वतं। आचारञ्चैव शौचञ्च स्वर्गाय विदधे प्रभुः।
देवदानवगन्धर्व्वा दैत्यासुरमहोरगाः। यक्षराक्षसनागाश्च पिशाचा मनुजास्तथा।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च द्विजसत्तम। ये चान्ये भूतसंघानां वर्णांस्तांश्चापि निर्म्ममे।

ब्राह्मणानां सितो वर्णः क्षत्रियाणान्तु लोहितः । वैश्यानां पीतको वर्णः शूद्राणामसितस्तथा ।

॥ भरद्वाज उवाच ॥ चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभिद्यते । सर्व्वेषां खलु वर्णानां दृश्यते वर्णसङ्करः । ६९३५

कामः क्रोधो भयं लोभः शोकश्चिन्ता क्षुधा श्रमः । सर्व्वेषां नः प्रभवति कस्माद्वर्णो विभिद्यते ।

स्वेदमूत्रपुरीषाणि श्लेष्मा पित्तं सशोणितं । तनुः क्षरति सर्व्वेषां कस्माद्वर्णो विभज्यते ।

जङ्गमानामसंख्येयाः स्थावराणाञ्च जातयः । तेषां विविधवर्णानां कुतो वर्णविनिश्चयः ।

॥ भृगुरुवाच ॥ न विशेषोऽस्ति वर्णानां सर्व्वं ब्राह्ममिदं जगत् । ब्रह्मणा पूर्व्वसृष्टं हि कर्म्मभिर्व्वर्णतां गतं ।

कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः । त्यक्तस्वधर्म्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः । ६९४०

गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः । स्वधर्म्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः ।

हिंसाऽनृतप्रिया लुब्धाः सर्व्वकर्म्मोपजीविनः । कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः ।

इत्येतैः कर्म्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः । धर्म्मो यज्ञक्रिया तेषां नित्यं न प्रतिषिध्यते ।

इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती । विहिता ब्रह्मणा पूर्व्वं लोभात्त्वज्ञानतां गताः ।

ब्राह्मणा ब्रह्मतन्त्रस्थास्तपस्तेषां न नश्यति । ब्रह्म धारयतां नित्यं व्रतानि नियमांस्तथा । ६९४५

ब्रह्म चैव परं सृष्टं ये न जानन्ति तेऽद्विजाः । तेषां बहुविधास्त्वन्यास्तत्र तत्र हि जातयः ।

पिशाचा राक्षसाः प्रेता विविधा म्लेच्छजातयः । प्रनष्टज्ञानविज्ञानाः स्वच्छन्दाचारचेष्टिताः ।

प्रजा ब्राह्मणसंस्काराः स्वकर्म्मकृतनिश्चयाः । ऋषिभिः स्वेन तपसा सृज्यन्ते चापरे परैः ।

आदिदेवसमुद्भूता ब्रह्ममूलाऽक्षयाऽव्यया । सा सृष्टिर्मानसी नाम धर्म्मतन्त्रपरायणा ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि भृगुभरद्वाजसंवादे अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

॥ भरद्वाज उवाच ॥ ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम । वैश्यः शूद्रश्च विप्रर्षे तद्ब्रूहि वदताम्वर । ६९५०

॥ भृगुरुवाच ॥ जातकर्म्मादिभिर्य्यस्तु संस्कारैः संस्कृतः शुचिः । वेदाध्ययनसम्पन्नः षट्सु कर्म्मस्ववस्थितः ।

शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः । नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते ।

सत्यं दानमथाद्रोह आनृशंस्यं त्रपा घृणा । तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ।

क्षत्रजं सेवते कर्म्म वेदाध्ययनसङ्गतः । दानादानरतिर्य्यस्तु स वै क्षत्रिय उच्यते ।

विशत्याशु पशुभ्यश्च कृष्यादानरतिः शुचिः । वेदाध्ययनसम्पन्नः स वैश्य इति संज्ञितः । ६९५५

सर्व्वभक्ष्यरतिर्नित्यं सर्व्वकर्म्मकरोऽशुचिः । त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः ।

शूद्रे चैतद्भवेल्लक्ष्यं द्विजे तच्च न विद्यते । स वै शूद्रो भवेच्छूद्रो ब्राह्मणो ब्राह्मणो न च ।

सर्व्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः । एतत् पवित्रं ज्ञानानां तथा चैवात्मसंयमः ।

वार्य्यौ सर्व्वात्मना तौ हि श्रेयोघातार्थमुच्छ्रितौ । नित्यं क्रोधात् श्रियं रक्षेत् तपो रक्षेच्च मत्सरात् ।

विद्यां मानापमानाभ्यामात्मानन्तु प्रमादतः । यस्य सर्व्वे समारम्भा निराशीर्बन्धना द्विज । ६९६०

त्यागे यस्य हुतं सर्व्वं स त्यागी स च बुद्धिमान् । अहिंस्रः सर्व्वभूतानां मैत्रायणगतश्चरेत् ।

परिग्रहान् परित्यज्य भवेद्बुद्ध्या जितेन्द्रियः । अशोकं स्थानमातिष्ठेदिह चामुत्र चाभयं ।

तपोनित्येन दान्तेन मुनिना संयतात्मना। अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना।
इन्द्रियैर्गृह्यते यद्यत्तत्तद्व्यक्तमिति स्थितिः। अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियं।
अविश्रम्भेण गन्तव्यं विश्रम्भे धारयेन्मनः। मनः प्राणे निगृह्णीयात् प्राणं ब्रह्मणि धारयेत्। ६९९५
निर्वेदादेव निर्वाणं न च किञ्चिद्विचिन्तयेत्। सुखं वै ब्राह्मणो ब्रह्म निर्वेदेनाधिगच्छति।
शौचेन सततं युक्तः सदाचारसमन्वितः। सानुक्रोशश्च भूतेषु तद्द्विजातिषु लक्षणं।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि भृगुभरद्वाजसंवादे ऊननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥
॥ भृगुरुवाच ॥ सत्यं ब्रह्म तपः सत्यं सत्यं विसृजते प्रजाः। सत्येन धार्य्यते लोकः स्वर्गं सत्येन गच्छति।
अनृतं तमसो रूपं तमसा नीयते ह्यधः। तमोग्रस्ता न पश्यन्ति प्रकाशं तमसावृताः।
स्वर्गः प्रकाश इत्याहुर्नरकं तम एव च। सत्यानृतं तदुभयं प्राप्यते जगतीचरैः। ७०००
तत्राप्येवंविधा लोके वृत्तिः सत्यानृते भवेत्। धर्म्माधर्म्मौ प्रकाशश्च तमो दुःखं सुखं तथा।
तत्र यत् सत्यं स धर्म्मो यो धर्म्मः स प्रकाशो यः प्रकाशस्तत्सुखमिति। तत्र यदनृतं सोऽधर्म्मो योऽधर्म्मस्तत्तमो यत्तमस्तद्दुःखमिति।
अत्रोच्यते। शारीरैर्मानसैर्दुःखैः सुखैश्चाप्यसुखोदयैः। लोकसृष्टिं प्रपश्यन्तो न मुह्यन्ति विचक्षणाः।
तत्र दुःखविमोक्षार्थं प्रयतेत विचक्षणः। सुखं ह्यनित्यं भूतानामिह लोके परत्र च।
राहुग्रस्तस्य सोमस्य यथा ज्योत्स्ना न भासते। तथा तमोऽभिभूतानां भूतानां नश्यते सुखं। ७००५
तत् खलु द्विविधं सुखमुच्यते शारीरं मानसञ्च। इह खल्वमुष्मिंश्च लोके वस्तुप्रवृत्तयः सुखार्थमभिधीयन्ते न ह्यतः परं त्रिवर्गफलं विशिष्टतरमस्ति स एव काम्यो गुणविशेषो धर्म्मार्थगुणारम्भस्तद्धेतुरस्योत्पत्तिः सुखप्रयोजनार्थ आरम्भः।

॥ भरद्वाज उवाच॥ यदेतद्भवताऽभिहितं सुखानां परमा स्थितिरिति न तदुपगृह्णीमो न ह्येषामृषीणां महति स्थितानामप्राप्य एष काम्यो गुणविशेषो न चैनमभिलषन्ति च तपसि श्रूयते त्रिलोककृद्ब्रह्मा प्रभुरेकाकी तिष्ठति ब्रह्मचारी न कामसुखेष्वात्मानमवदधाति। अपि च भगवान् विश्वेश्वर उमापतिः काममभिवर्त्तमानमनङ्गत्वेन शममनयत्। तस्माद्ब्रूमो न तु महात्मभिरयं प्रतिगृहीतो न त्वेष तावद्विशिष्टो गुणविशेष इति नैतद्भगवतः प्रत्येमि। भगवता तूक्तं सुखान्न परमस्तीति लोकप्रवादो हि द्विविधः फलोदयः सुकृतात् सुखमवाप्यते दुष्कृताद्दुःखमिति।

॥ भृगुरुवाच ॥ अत्रोच्यते। अनृतात् खलु तमः प्रादुर्भूतं ततस्तमोग्रस्ता अधर्म्ममेवानुवर्त्तन्ते न धर्म्मं क्रोधलोभहिंसाऽनृतादिभिरवच्छन्नाः न खल्वस्मिन् लोके नामुत्र सुखमाप्नुवन्ति। विविधव्याधिरुजोपतापैरवकीर्य्यन्ते। वधबन्धनपरिक्लेशादिभिश्च क्षुत्पिपासाश्रमकृतैरुपतापैरुपतप्यन्ते। वर्षावात्युष्णातिशीतकृतैश्च प्रतिभयैः शारीरैर्दुःखैरुपतप्यन्ते। बन्धुधनविनाशविप्रयोगकृतैश्च मानसैः शोकैरभिभूयन्ते जरामृत्युकृतैश्चान्यैरिति।

यस्त्वेतैः शारीरैर्मानसैर्दुःखैर्न संस्पृश्यते स सुखं वेद। न चैते दोषाः स्वर्गे प्रादुर्भवन्ति तत्र खलु भवति॥
सुसुखः पवनः स्वर्गे गन्धश्च सुरभिस्तथा। क्षुत्पिपासाश्रमो नास्ति न जरा न च पापकं। ७०१०
नित्यमेव सुखं स्वर्गे सुखं दुःखमिहोभयं। नरके दुःखमेवाहुः सुखं तत्परमं पदं।

पृथिवी सर्व्वभूतानां जनित्री तद्विधाः स्त्रियः । पुमान् प्रजापतिस्तत्र शुक्रं तेजोमयं विदुः ।
इत्येतल्लोकनिर्माणं ब्रह्मणा विहितं पुरा । प्रजाः समनुवर्त्तन्ते स्वैः स्वैः कर्म्मभिरावृताः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि भृगुभरद्वाजसंवादे नवत्यधिकशततोऽध्यायः ॥ १९० ॥
॥ भरद्वाज उवाच ॥ दानस्य किं फलं प्राहुर्धर्म्मस्य चरितस्य च । तपसश्च सुतप्तस्य स्वाध्यायस्य हुतस्य वा ।
॥ भृगुरुवाच ॥ हुतेन शाम्यते पापं स्वाध्याये शान्तिरुत्तमा । दानेन भोगानित्याहुस्तपसा स्वर्गमाप्नुयात् । ६९८५
दानन्तु द्विविधं प्राहुः परत्रार्थमिहैव च । सद्भ्यो यद्दीयते किञ्चित्तत् परत्रोपतिष्ठते ।
असद्भ्यो दीयते यत्तु तद्दानमिह भुज्यते । यादृशं दीयते दानं तादृशं फलमश्नुते ।
॥ भरद्वाज उवाच ॥ किं कस्य धर्म्माचरणं किं वाऽधर्म्मस्य लक्षणं । धर्म्मः कतिविधो वाऽपि तद्भवान् वक्तुमर्हति ।
॥ भृगुरुवाच ॥ स्वधर्म्माचरणे युक्ता ये भवन्ति मनीषिणः । तेषां स्वर्गफलावाप्तिर्योऽन्यथा स विमुह्यते ।
॥ भरद्वाज उवाच ॥ यदेतच्चातुराश्रम्यं ब्रह्मर्षिविहितं पुरा । तेषां स्वे स्वे समाचारास्तान्मे वक्तुमिहार्हसि । ६९९०

॥ भृगुरुवाच ॥ पूर्व्वमेव भगवता ब्रह्मणा लोकहितमनुतिष्ठता धर्म्मसंरक्षणार्थमाश्रमाश्चत्वारोऽभिनिर्दिष्टाः । तत्र गुरुकुलवासमेव प्रथममाश्रममुदाहरन्ति । सम्यगत्र शौचसंस्कारनियमव्रतविनियतात्मा उभे सन्ध्ये भास्कराग्निदैवतान्युपस्थाय विहाय तन्द्रालस्ये गुरोरभिवादनवेदाभ्यासश्रवणपवित्रीकृतान्तरात्मा त्रिषवणमुपस्पृश्य ब्रह्मचर्य्याग्निपरिचरणगुरुशुश्रूषानित्यभिक्षाभैक्षादिसर्व्वनिवेदितान्तरात्मा गुरुवचननिर्देशानुष्ठानाप्रतिकूलो गुरुप्रसादलब्धस्वाध्यायतत्परः स्यात् ।
॥ भवति चात्र श्लोकः ॥ गुरुं यस्तु समाराध्य द्विजो वेदमवाप्नुयात् । तस्य स्वर्गफलावाप्तिः सिध्यते चास्य मानसमिति ।

गार्हस्थ्यं खलु द्वितीयमाश्रमं वदन्ति तस्य समुदाचारलक्षणं सर्व्वमनुव्याख्यास्यामः । समावृत्तानां सदाचाराणां सह धर्म्मचर्य्याफलार्थिनां गृहाश्रमो विधीयते । धर्म्मार्थकामावाप्तिर्ह्यत्र त्रिवर्गसाधनमपेक्षागर्हितेन कर्म्मणा धनान्यादाय स्वाध्यायोपलब्धप्रकर्षेण वा ब्रह्मर्षिनिर्म्मितेन वा अद्रिसारगतेन वा हव्यकव्यनियमाभ्यासदैवतप्रसादोपलब्धेन वा धनेन गृहस्थो गार्हस्थ्यं वर्त्तयेत् तद्धि सर्व्वाश्रमाणां मूलमुदाहरन्ति । गुरुकुलनिवासिनः परिव्राजका ये चान्ये सङ्कल्पितव्रतनियमधर्म्मानुष्ठायिनस्तेषामप्यत एव भिक्षाबलिसंविभागाः प्रवर्त्तन्ते ।

वानप्रस्थानाञ्च द्रव्योपस्कार इति प्रायशः खल्वेते साधवः साधुपथ्योदनाः स्वाध्यायप्रसङ्गिनस्तीर्थाभिगमनदेशदर्शनार्थं पृथिवीं पर्य्यटन्ति तेषां प्रत्युत्थानाभिगमनमनसूयावाक्प्रदानसुखशक्त्यासनसुखशयनाभ्यवहारसत्क्रिया चेति ।
॥ भवति चात्र श्लोकः ॥ अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते । स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति । ६९९५
अपि चात्र यज्ञक्रियाभिर्देवताः प्रीयन्ते निवापेन पितरो विद्याभ्यासश्रवणधारणेन ऋषयः अपत्योत्पादनेन प्रजापतिरिति ।

॥ श्लोकौ चात्र भवतः ॥ वात्सल्यात् सर्व्वभूतेभ्यो वाच्याः श्रोत्रसुखा गिरः । परितापोपघातश्च पारुष्यञ्चात्र गर्हितं ।
अवज्ञानमहङ्कारो दम्भश्चैव विगर्हितः । अहिंसा सत्यमक्रोधः सर्व्वाश्रमगतं तपः ।

अपि चात्र माल्याभरणवस्त्राभ्यङ्गनित्योपभोगनृत्यगीतवादित्रश्रुतिसुखनयनाभिरामदर्शनानां प्राप्तिर्भक्ष्यभोज्यलेह्यपेयचूष्याणामभ्यवहार्य्याणां विविधानामुपभोगः स्वविहारसन्तोषः कामसुखावाप्तिरिति ।

त्रिवर्गगुणनिर्वृत्तिर्यस्य नित्यं गृहाश्रमे । स सुखान्यनुभूयेह शिष्टानां गतिमाप्नुयात् । ७०००

उञ्छवृत्तिर्गृहस्थो यः स्वधर्म्मचरणे रतः । त्यक्तकामसुखारम्भः स्वर्गस्तस्य न दुर्लभः ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि भृगुभरद्वाजसंवादे एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

॥ भृगुरुवाच ॥ वानप्रस्थाः खल्वपि धर्म्ममनुसरन्तः पुण्यानि तीर्थानि नदीप्रस्रवणानि सुविविक्तेष्वरण्येषु मृगमहिषवराहशार्दूलवनगजाकीर्णेषु तपस्यन्तो ऽनुसञ्चरन्ति त्यक्तग्राम्यवस्त्राभ्यवहारोपभोगा वन्यौषधिफलमूलपर्णपरिमितविचित्रनियताहाराः स्थानासनिनो भूमिपाषाणसिकताशर्करावालुकाभस्मशायिनः काशकुशचर्म्मवल्कलसंवृताङ्गाः केशश्मश्रुनखलोमधारिणो नियतकालोपस्पर्शना अस्कन्दितकालबलिहोमानुष्ठायिनः समित्कुशकुसुमोपहारसंमार्ज्जनलब्धविश्रामाः शीतोष्णवर्षपवनविष्टम्भविभिन्नसर्व्वत्वचो विविधनियमोपयोगचर्य्यानुष्ठानविहितपरिशुष्कमांसशोणितत्वगस्थिभूता धृतिपराः सत्त्वयोगाच्छरीराण्युद्वहन्ते ।

यस्त्वेतां नियतश्चर्य्यां ब्रह्मर्षिविहितां चरेत् । स दहेदग्निवद्दोषान् जयेल्लोकांश्च दुर्ज्जयान् ।

परिव्राजकानां पुनराचारः । तद्यथा । विमुच्याग्निधनकलत्रपरिबर्हणसङ्गेष्वात्मानं स्नेहपाशानवधूय परिव्रजन्ति। समलोष्टाश्मकाञ्चनास्त्रिवर्गप्रवृत्तेष्वसक्तबुद्धयः अरिमित्रोदासीनानां तुल्यदर्शनाः स्थावरजरायुजाण्डजस्वेदजोद्भिज्जानां भूतानां वाङ्मनःकर्म्मभिरनभिद्रोहिणो ऽनिकेताः पर्व्वतपुलिनवृक्षमूलदेवतायतनान्यनुचरन्तो वासार्थमुपेयुर्नगरं ग्रामं वा नगरे पञ्चरात्रिका ग्रामे चैकरात्रिकाः । प्रविश्य च प्राणधारणार्थं द्विजातीनां भवनान्यसङ्कीर्णकर्म्मणामुपतिष्ठेयुः । पात्रपतितायाचितभैक्ष्याः कामक्रोधदर्पलोभमोहकार्पण्यदम्भपरिवादाभिमानहिंसानिवृत्ता इति । ७००५

॥ भवन्ति चात्र श्लोकाः ॥

अभयं सर्व्वभूतेभ्यो दत्त्वा चरते मुनिः । न तस्य सर्व्वभूतेभ्यो भयमुत्पद्यते क्वचित् ।
कृत्वाऽग्निहोत्रं स्वशरीरसंस्थं शारीरमग्निं स्वमुखे जुहोति । विप्रस्तु भैक्षोपगतैर्हविर्भिश्चिताग्निना स व्रजते हि लोकान् ।
मोक्षाश्रमं यश्चरते यथोक्तं शुचिः सुसंकल्पितयुक्तबुद्धिः । अनिन्धनं ज्योतिरिव प्रशान्तं स ब्रह्मलोकं श्रयते द्विजातिः ।

॥ भरद्वाज उवाच ॥ अस्माल्लोकात् परो लोकः श्रूयते नोपलभ्यते। तमहं ज्ञातुमिच्छामि तद्भवान् वक्तुमर्हति ।
॥ भृगुरुवाच ॥ उत्तरे हिमवत्पार्श्वे पुण्ये सर्व्वगुणान्विते । पुण्यः क्षेम्यश्च काम्यश्च स परो लोक उच्यते। ७०१०
तत्र ह्यपापकर्म्माणः शुचयोऽत्यन्तनिर्म्मलाः । लोभमोहपरित्यक्ता मानवा निरुपद्रवाः ।
स स्वर्गसदृशो देशस्तत्र युक्ताः शुभा गुणाः । काले मृत्युः प्रभवति स्पृशन्ति व्याधयो न च ।
न लोभः परदारेषु स्वदारनिरतो जनः । नान्योन्यं बध्यते तत्र द्रव्येषु च न विस्मयः ।
परो ह्यधर्म्मो नैवास्ति सन्देहो नापि जायते। कृतस्य तु फलं तत्र प्रत्यक्षमुपलभ्यते ।
पानाशनासनोपेताः प्रासादभवनाश्रयाः । सर्व्वकामैर्वृताः केचिद्धेमाभरणभूषिताः । ७०१५
प्राणधारणमात्रन्तु केषाञ्चिदुपपद्यते। श्रमेण महता केचित् कुर्व्वन्ति प्राणधारणं ।
इह धर्म्मपराः केचित् केचिन्नैकृतिका नराः । सुखिता दुःखिताः केचिन्निर्द्धना धनिनोऽपरे ।
इह श्रमो भयं मोहः क्षुधा तीव्रा च जायते। लोभश्चार्थकृतो नृणां येन मुह्यन्त्यपण्डिताः ।
इह वार्त्ता बहुविधा धर्म्माधर्म्मस्य कारिणः । यस्तद्वेदोभयं प्राज्ञः पाप्मना न स लिप्यते ।
सोपधं निकृतिः स्तेयं परिवादो ह्यसूयिता । परोपघातो हिंसा च पैशुन्यमनृतं तथा । ७०२०

एतानासेवते यस्तु तपस्तस्य प्रहीयते । यश्चैतान्नाचरेद्विद्वांस्तपस्तस्य विवर्द्धते ।
इह चिन्ता बहुविधा धर्म्माधर्म्मस्य कर्म्मणः । कर्म्मभूमिरियं लोके इह कृत्वा शुभाशुभं ।
शुभैः शुभमवाप्नोति तथाऽशुभमथान्यथा । इह प्रजापतिः पूर्व्वं देवाः सर्षिगणास्तथा ।
इष्टेष्टतपसः पूता ब्रह्मलोकमुपाश्रिताः । उत्तरः पृथिवीभागः सर्व्वपुण्यतमः शुभः ।
इहत्यास्तत्र जायन्ते ये वै पुण्यकृतो जनाः । असत्कारमृच्छन्ति तिर्य्यग्योनिषु चापरे । ७०२५
क्षीणायुषस्तथा चान्ये नश्यन्ति पृथिवीतले । अन्योन्यभक्षणासक्ता लोभमोहसमन्विताः ।
इहैव परिवर्त्तन्ते न ते यान्त्युत्तरां दिशं । ये गुरून् पर्य्युपासन्ते नियता ब्रह्मचारिणः ।
पन्थानं सर्व्वलोकानां विजानन्ति मनीषिणः । इत्युक्तोऽयं मया धर्म्मः संक्षिप्तो ब्रह्मनिर्म्मितः ।
धर्म्माधर्म्मौ हि लोकस्य यो वै वेत्ति स बुद्धिमान् ।
॥ भीष्म उवाच ॥ इत्युक्तो भृगुणा राजन् भरद्वाजः प्रतापवान् । भृगुं परमधर्म्मात्मा विस्मितः प्रत्यपूजयत् । ७०३०
एष ते प्रभवो राजन् जगतः संप्रकीर्त्तितः । निखिलेन महाप्राज्ञ किम्भूयः श्रोतुमिच्छसि ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि भृगुभरद्वाजसंवादे द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥
॥ युधिष्ठिर उवाच ॥ आचारस्य विधिं तात प्रोच्यमानं त्वयाऽनघ । श्रोतुमिच्छामि धर्म्मज्ञ सर्व्वज्ञो ह्यसि मे मतः ।
॥ भीष्म उवाच ॥ दुराचारा दुर्व्विचेष्टा दुष्प्रज्ञाः प्रियसाहसाः । असन्तस्त्विति विख्याताः सन्तश्चाचारलक्षणाः ।
पुरीषं यदि वा मूत्रं ये न कुर्व्वन्ति मानवाः । राजमार्गे गवां मध्ये धान्यमध्ये च ते शुभाः ।
शौचमावश्यकं कृत्वा देवतानाञ्च तर्पणं । धर्म्ममाहुर्म्मनुष्याणामुपस्पृश्य नदीं तरेत् । ७०३५
सूर्य्यं सदोपतिष्ठेत न च सूर्य्योदये स्वपेत् । सायं प्रातर्ज्जपेत् सन्ध्यां तिष्ठन् पूर्व्वां तथेतरां ।
पञ्चार्द्रो भोजनं भुञ्ज्यात् प्राङ्मुखो मौनमास्थितः । न निन्द्यादन्नभक्ष्यांश्च स्वादु स्वादु च भक्षयेत् ।
नार्द्रपाणिः समुत्तिष्ठेन्नार्द्रपादः स्वपेन्निशि । देवर्षिर्न्नारदः प्राह एतदाचारलक्षणं ।
शुचिं देशमनड्वाहं देवं गोष्ठं चतुष्पथं । ब्राह्मणं धार्म्मिकं चैत्यं नित्यं कुर्य्यात् प्रदक्षिणं ।
अतिथीनाञ्च सर्व्वेषां प्रेष्याणां स्वजनस्य च । सामान्यं भोजनं भृत्यैः पुरुषस्य प्रशस्यते । ७०४०
सायम्प्रातर्म्मनुष्याणामशनं देवनिर्म्मितं । नान्तरा भोजनं दृष्टमुपवासी तथा भवेत् ।
होमकाले तथा जुह्वदृतुकाले तथा व्रजन् । अनन्यस्त्रीजनः प्राज्ञो ब्रह्मचारी तथा भवेत् ।
अमृतं ब्राह्मणोच्छिष्टं जनन्या हृदयं कृतं । तज्जनाः पर्य्युपासन्ते सत्यं सन्तः समासते ।
लोष्टमर्द्दी तृणच्छेदी नखखादी च यो नरः । नित्योच्छिष्टः सङ्कुसुको नेहायुर्व्विन्दते महत् ।
यजुषा संस्कृतं मांसं निवृत्तो मांसभक्षणात् । न भक्षयेद्वृथा मांसं पृष्ठमांसञ्च वर्ज्जयेत् । ७०४५
स्वदेशे परदेशे वा अतिथिं नोपवासयेत् । काम्यकर्म्मफलं लब्ध्वा गुरूणामुपपादयेत् ।
गुरुभ्य आसनं देयं कर्त्तव्यञ्चाभिवादनं । गुरूनभ्यर्च्च्य युज्यन्ते आयुषा यशसा श्रिया ।
नेक्षेतादित्यमुद्यन्तं न च नग्नां परस्त्रियं । मैथुनं सततं धर्म्म्यं गुह्ये चैव समाचरेत् ।
तीर्थानां हृदयं तीर्थं शुचीनां हृदयं शुचिः । सर्व्वमार्य्यकृतं चौक्षं वालसंस्पर्शनानि च ।

दर्शने दर्शने नित्यं सुखप्रश्नमुदाहरेत्। सायम्प्रातश्च विप्राणां प्रदिष्टमभिवादनं। ७०५०
देवागारे गवां मध्ये ब्राह्मणानां क्रियापथे। स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत्।
सायम्प्रातश्च विप्राणां पूजनञ्च यथाविधि। पण्यानां शोभते पण्यं कृषीणां वाद्यते कृषिः।
बहुकारञ्च शस्यानां वाह्ये वाहो गवां तथा। सम्पन्नं भाजने नित्यं पानीये तर्पणं तथा।
सुशृतं पायसे ब्रूयाद्यवाग्वां कृशरे तथा। श्मश्रुकर्म्मणि संप्राप्ते क्षुते स्नानेऽथ भोजने।
व्याधितानाञ्च सर्व्वेषामायुष्यमभिनन्दनं। प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत्। ७०५५
सह स्त्रियाऽथ शयनं सह भोज्यञ्च वर्ज्जयेत्। त्वं कारं नामधेयञ्च ज्येष्ठानां परिवर्ज्जयेत्।
अवराणां समानानामुभयेषां न दुष्यति। हृदयं पापवृत्तानां पापमाख्याति वैकृतं।
ज्ञानपूर्व्वं विनश्यन्ति गूहमाना महाजने। ज्ञानपूर्व्वं कृतं पापं छादयन्त्यबहुश्रुताः।
नैनं मनुष्याः पश्यन्ति पश्यन्त्येव दिवौकसः। पापेनापिहितं पापं पापमेवानुवर्त्तते।
धर्म्मेणापिहितो धर्म्मो धर्म्मेवानुवर्त्तते। धार्म्मिकेण कृतो धर्म्मो धर्म्ममेवानुवर्त्तते। ७०६०
पापं कृतं न स्मरतीह मूढो विवर्त्तमानस्य तदेति कर्त्तुः। राहुर्यथा चन्द्रमुपैति चापि तथाऽबुधं पापमुपैति कर्म्म।
आशया सञ्चितं द्रव्यं दुःखेनैवोपभुज्यते। तद्बुधा न प्रशंसन्ति मरणं न प्रतीक्षते।
मानसं सर्व्वभूतानां धर्म्ममाहुर्म्मनीषिणः। तस्मात् सर्व्वेषु भूतेषु मनसा शिवमाचरेत्।
एक एव चरेद्धर्म्मं नास्ति धर्म्मे सहायता। केवलं विधिमासाद्य सहायः किं करिष्यति।
धर्म्मो योनिर्म्मनुष्याणां देवानाममृतं दिवि। प्रेत्यभावे सुखं धर्म्माच्छश्वत्तैरुपभुज्यते। ७०६५
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि आचारविधौ त्रिनवत्यधिकशतोऽध्यायः॥ १९३ ॥
॥ युधिष्ठिर उवाच ॥ अध्यात्मं नाम यदिदं पुरुषस्येह चिन्त्यते। यदध्यात्मं यथा चैतत्तन्मे ब्रूहि पितामह।
कुतः सृष्टमिदं विश्वं ब्रह्मन् स्थावरजङ्गमं। प्रलये च कमभ्येति तन्मे वक्तुमिहार्हसि।
॥ भीष्म उवाच ॥ अध्यात्ममिति मां पार्थ यदेतदनुपृच्छसि। तद्व्याख्यास्यामि ते तात श्रेयस्करतमं सुखं।
सृष्टिप्रलयसंयुक्तमाचार्यैः परिदर्शितं। यज्ज्ञात्वा पुरुषो लोके प्रीतिं सौख्यञ्च विन्दति।
फललाभश्च तस्य स्यात् सर्व्वभूतहितञ्च तत्। पृथिवी वायुराकाशमापोज्योतिश्च पञ्चमं। ७०७०
महाभूतानि भूतानां सर्व्वेषां प्रभवाप्ययौ। यतः सृष्टानि तत्रैव तानि यान्ति पुनः पुनः।
महाभूतानि भूतेभ्यः सागरस्योर्म्मयो यथा। प्रसार्य्य च यथाऽङ्गानि कूर्म्मः संहरते पुनः।
तद्वद्भूतानि भूतात्मा सृष्टानि हरते पुनः। महाभूतानि पञ्चैव सर्व्वभूतेषु भूतकृत्।
अकरोत्तेषु वैषम्यं तत्तु जीवो न पश्यति। शब्दः श्रोत्रं तथा खानि त्रयमाकाशयोनिजं।
वायोः स्पर्शस्तथा चेष्टा त्वक् चैव त्रितयं स्मृतं। रूपं चक्षुस्तथा पाकस्त्रिविधं तेज उच्यते। ७०७५
रसः क्लेदश्च जिह्वा च त्रयो जलगुणाः स्मृताः। घ्रेयं घ्राणं शरीरञ्च एते भूमिगुणास्त्रयः।
महाभूतानि पञ्चैव षष्ठञ्च मन उच्यते। इन्द्रियाणि मनश्चैव विज्ञानान्यस्य भारत।
सप्तमी बुद्धिरित्याहुः क्षेत्रज्ञः पुनरष्टमः। चक्षुरालोचनायैव संशयं कुरुते मनः।

बुद्धिरध्यवसानाय क्षेत्रज्ञः साक्षिवत् स्थितः। ऊर्द्ध्वं पादतलाभ्यां यदर्व्वाक् चोर्द्ध्वञ्च पश्यति।
एतेन सर्व्वमेवेदं विद्ध्यभिव्याप्तमन्तरं। पुरुषैरिन्द्रियाणीह वेदितव्यानि कृत्स्नशः। ७०८०
तमो रजश्च सत्त्वञ्च तेऽपि भावास्तदाश्रिताः। एतां बुद्ध्वा नरो बुद्ध्या भूतानामागतिं गतिं।
समवेक्ष्य शनैश्चैव लभते शममुत्तमं। गुणैर्नेनीयते बुद्धिर्बुद्धिरेवेन्द्रियाण्यपि।
मनः षष्ठानि भूतानि बुद्ध्यभावे कुतो गुणाः। इति तन्मयमेवैतत् सर्व्वं स्थावरजङ्गमं।
प्रलीयते चोद्भवति तस्मान्निर्द्दिश्यते तथा। येन पश्यति तच्चक्षुः शृणोति श्रोत्रमुच्यते।
जिघ्रति घ्राणमित्याहू रसं जानाति जिह्वया। त्वचा स्पर्शयते स्पर्शं बुद्धिर्व्विक्रियते सकृत्। ७०८५
येन प्रार्थयते किञ्चित्तदा भवति तन्मनः। अधिष्ठानानि बुद्धेर्हि पृथगर्थानि पञ्चधा।
इन्द्रियाणीति यान्याहुस्तान्यदृश्योऽधितिष्ठति। पुरुषे तिष्ठती बुद्धिस्त्रिषु भावेषु वर्त्तते।
कदाचिल्लभते प्रीतिं कदाचिदनुशोचति। न सुखेन न दुःखेन कदाचिदपि वर्त्तते।
एवं नराणां मनसि त्रिषु भावेष्ववस्थिता। सेयं भावात्मिका भावांस्त्रीनेतानतिवर्त्तते।
सरितां सागरो भर्त्ता महावेलामिवोर्म्मिमान्। अतिभावगता बुद्धिर्भावे मनसि वर्त्तते। ७०९०
प्रवर्त्तमानन्तु रजस्तद्भावमनुवर्त्तते। इन्द्रियाणि हि सर्व्वाणि प्रवर्त्तयति सा तदा।
प्रीतिः सत्त्वं रजः शोकस्तमो मोहस्तु ते त्रयः। ये ये च भावा लोकेऽस्मिन् सर्व्वेष्वेतेषु वै त्रिषु।
इति बुद्धिगतिः सर्व्वा व्याख्याता तव भारत। इन्द्रियाणि च सर्व्वाणि विजेतव्यानि धीमता।
सत्त्वं रजस्तमश्चैव प्राणिनां संश्रिताः सदा। त्रिविधा वेदना चैव सर्व्वसत्त्वेषु दृश्यते।
सात्त्विकी राजसी चैव तामसी चेति भारत। सुखस्पर्शः सत्त्वगुणो दुःखस्पर्शो रजोगुणः। ७०९५
तमोगुणेन संयुक्तौ भवतो व्यावहारिकौ। तत्र यत्प्रीतिसंयुक्तं काये मनसि वा भवेत्।
वर्त्तते सात्त्विको भाव इत्याचक्षीत तत्तथा। अथ यद्दुःखसंयुक्तमप्रीतिकरमात्मनः।
प्रवृत्तं रज इत्येव तन्न संरभ्य चिन्तयेत्। अथ यन्मोहसंयुक्तमव्यक्तविषयं भवेत्।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत्। प्रहर्षः प्रीतिरानन्दः सुखं संशान्तचित्तता।
कथञ्चिदभिवर्त्तन्त इत्येते सात्त्विका गुणाः। अतुष्टिः परितापश्च शोको लोभस्तथा क्षमा। ७१००
लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुभिः। अवमानस्तथा मोहः प्रमादः स्वप्नतन्द्रिता।
कथञ्चिदभिवर्त्तन्ते विविधास्तामसा गुणाः। दूरगं बहुधागामि प्रार्थनासंशयात्मकं।
मनः सुनियतं यस्य स सुखी प्रेत्य चेह च। सत्त्वक्षेत्रज्ञयोरेतदन्तरं पश्य सूक्ष्मयोः।
सृजते तु गुणानेक एको न सृजते गुणान्। मशकोडुम्बरौ वाऽपि संप्रयुक्तौ यथा सदा।
अन्योन्यमेतौ स्यातान्च सम्प्रयोगस्तथा तयोः। पृथग्भूतौ प्रकृत्या तौ सम्प्रयुक्तौ च सर्व्वदा। ७१०५
यथा मत्स्यो जलञ्चैव सम्प्रयुक्तौ तथैव तौ। न गुणा विदुरात्मानं स गुणान् वेत्ति सर्व्वशः।
परिद्रष्टा गुणानान्तु संस्रष्टा मन्यते तथा। इन्द्रियैस्तु प्रदीपार्थं कुरुते बुद्धिसप्तमैः।
निर्व्विचेष्टैरजानद्भिः परमात्मा प्रदीपवत्। सृजते हि गुणान् सत्त्वं क्षेत्रज्ञः परिपश्यति।

सम्प्रयोगस्तयोरेष सत्त्वक्षेत्रज्ञयोर्ध्रुवः। आश्रयो नास्ति सत्त्वस्य क्षेत्रज्ञस्य च कश्चन।
सत्त्वं मनः संसृजते न गुणान् वै कदाचन। रश्मींस्तेषां समनसा यदा सम्यङ्नियच्छति। ७११०
तदा प्रकाशते ऽस्यात्मा घटे दीपो ज्वलन्निव। त्यक्त्वा यः प्राकृतं कर्म्म नित्यमात्मरतिर्म्मुनिः।
सर्व्वभूतात्मभूतस्मात् स गच्छेदुत्तमां गतिं। यथा वारिचरः पक्षी सलिलेन न लिप्यते।
एवमेव कृतप्रज्ञो भूतेषु परिवर्त्तते। एवं स्वभावमेवैतत् स्वबुद्ध्या विहरेन्नरः।
अशोचन्नप्रहृष्यंश्च समो विगतमत्सरः। स्वभावयुक्त्या युक्तस्तु स नित्यं सृजते गुणान्।
ऊर्णनाभिर्यथा सूत्रं विज्ञेयास्तन्तुवद्गुणाः। प्रध्वस्ता न निवर्त्तन्ते निवृत्तिर्नोपलभ्यते। ७११५
प्रत्यक्षेण परोक्षन्तदनुमानेन सिध्यति। एवमेके व्यवस्यन्ति निवृत्तिरिति चापरे।
उभयं सम्प्रधार्य्यैतद्व्यवस्येत यथामति। इतीमं हृदयग्रन्थिं बुद्धिभेदमयं दृढं।
विमुच्य सुखमासीत न शोचेच्छिन्नसंशयः। मलिनाः प्राप्नुयुः शुद्धिं यथा पूर्णां नदीं नराः।
अवगाह्य सुविद्वांसो विद्धि ज्ञानमिदं तथा। महानद्या हि पारज्ञस्तप्यते न तदन्यथा।
न तु तप्यति तत्त्वज्ञः फले ज्ञाते तरत्युत। एवं ये विदुरध्यात्मं कैवल्यं ज्ञानमुत्तमं। ७१२०
एतां बुद्ध्वा नरः सर्व्वां भूतानामागतिं गतिं। अवेक्ष्य च शनैर्ब्बुद्ध्या लभते शमनन्ततः।
त्रिवर्गो यस्य विदितः प्रेक्ष्य यश्च विमुञ्चति। अन्विष्य मनसा युक्तस्तत्त्वदर्शी निरुत्सुकः।
न चात्मा शक्यते द्रष्टुमिन्द्रियैश्च विभागशः। तत्र तत्र विसृष्टैश्च दुर्व्वार्य्यैश्चाकृतात्मभिः।
एतद्बुद्ध्वा भवेद्बुद्धः किमन्यद्बुद्धलक्षणं। विज्ञाय तद्धि मन्यन्ते कृतकृत्या मनीषिणः।
न भवति विदुषां ततो भयं यदविदुषां सुमहद्भयं भवेत्। नहि गतिरधिकाऽस्ति कस्यचित् सति हि गुणे प्रवदन्त्य
तुल्यतां। ७१२५
यः करोत्यनभिसन्धिपूर्व्वकं तच्च निर्णुदति यत् पुरा कृतं। नाप्रियं तदुभयं कुतः प्रियं तस्य तज्जनयतीह कुर्व्वतः।
लोकमातुरमसूयते जनस्तस्य तज्जनयतीह सर्व्वतः। लोक आतुरजनान्निराविशंस्तत्तदेव बहु पश्य शोचतः।
तत्र पश्य कुशलानशोचतो ये विदुस्तदुभयं पदं सतां।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि चतुर्न्नवत्यधिकशततोऽध्यायः॥ १९४ ॥
॥ भीष्म उवाच ॥ हन्त वक्ष्यामि ते पार्थ ध्यानयोगञ्चतुर्व्विधं। यं ज्ञात्वा शाश्वतीं सिद्धिं गच्छन्तीह महर्षयः।
यथा स्वनुष्ठितं ध्यानं तथा कुर्व्वन्ति योगिनः। महर्षयो ज्ञानतृप्ता निर्व्वाणगतमानसाः। ७१३०
नावर्त्तन्ते पुनः पार्थ मुक्ताः संसारदोषतः। जन्मदोषपरिक्षीणाः स्वभावे पर्य्यवस्थिताः।
निर्द्वन्द्वा नित्यसत्त्वस्था विमुक्ता निष्परिग्रहाः। असङ्गान्यविवादीनि मनःशान्तिकराणि च।
तत्र ध्यानेन संश्लिष्टमेकाग्रं धारयेन्मनः। पिण्डीकृत्येन्द्रियग्राममासीनः काष्ठवन्मुनिः।
शब्दं न विन्देच्छ्रोत्रेण स्पर्शं त्वचा न वेदयेत्। रूपं न चक्षुषा विन्द्याज्जिह्वया न रसांस्तथा।
घ्रेयाण्यपि च सर्व्वाणि जह्याद्ध्यानेन योगवित्। पञ्चवर्गप्रमाथीनि नेच्छेच्चैतानि वीर्य्यवान्। ७१३५
ततो मनसि संगृह्य पञ्चवर्गं विचक्षणः। समादध्यान्मनो भ्रान्तमिन्द्रियैः सह पञ्चभिः।

विषञ्चारि निरालम्बं पञ्चद्वारं चलाचलं । पूर्व्वं ध्यानपथे धीरः समादध्यान्मनोऽन्तरा ।
इन्द्रियाणि मनश्चैव यदा पिण्डीकरोत्ययं । एष ध्यानपथः पूर्व्वो मया समनुवर्णितः ।
तस्य तत् पूर्व्वसंरुद्धमात्मनः षष्ठमान्तरं । स्फुरिष्यति समुद्भ्रान्ता विद्युदम्बुधरे यथा ।
जलबिन्दुर्यथा लोलः पर्णस्थः सर्व्वतश्चलः । एवमेवास्य चित्तञ्च भवति ध्यानवर्त्मनि । ७१४०
समाहितं क्षणं किञ्चिद्ध्यानवर्त्मनि तिष्ठति । पुनर्वायुपथं भ्रान्तं मनो भवति वायुवत् ।
अनिर्व्वेदो गतक्लेशो गततन्द्रीरमत्सरी । समादध्यात् पुनश्चेतो ध्यानेन ध्यानयोगवित् ।
विचारश्च विवेकश्च वितर्कश्चोपजायते । मुनेः समादधानस्य प्रथमं ध्यानमादितः ।
मनसा क्लिश्यमानस्तु समाधानञ्च कारयेत् । न निर्व्वेदं मुनिर्गच्छेत् कुर्य्यादेवात्मनो हितं ।
पांशुभस्मकरीषाणां यथा वै राशयश्चिताः । सहसा वारिणा सिक्ता न यान्ति परिभावनं । ७१४५
किञ्चित् स्निग्धं यथा च स्याच्छुष्कचूर्णमभावितं । क्रमशस्तु शनैर्गच्छेत् सर्व्वन्तत् परिभावनं ।
एवमेवेन्द्रियग्रामं शनैः संपरिभावयेत् । संहरेत् क्रमशश्चैव स सम्यक् प्रशमिष्यति ।
स्वयमेवं मनश्चैवं पञ्चवर्गञ्च भारत । पूर्व्वं ध्यानपथे स्थाप्य नित्ययोगेन शाम्यति ।
न तत् पुरुषकारेण न च दैवेन केनचित् । सुखमेष्यति तत्तस्य यदेवं संयतात्मनः ।
सुखेन तेन संयुक्तो रंस्यते ध्यानकर्म्मणि । गच्छन्ति योगिनो ह्येवं निर्व्वाणं तन्निरामयं । ७१५०

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि अध्यात्मे पञ्चनवत्यधिकशततोऽध्यायः ॥ १९५ ॥

॥ युधिष्ठिर उवाच ॥ चातुराश्रम्यमुक्तन्ते राजधर्म्मास्तथैव च । नानाश्रयाश्च बहव इतिहासाः पृथग्विधाः ।
श्रुतास्त्वत्तः कथाश्चैव धर्म्मयुक्ता महामते । सन्देहोऽस्ति तु कश्चिन्मे तद्भवान् वक्तुमर्हति ।
जापकानां फलावाप्तिं श्रोतुमिच्छामि भारत । किं फलं जपतामुक्तं क्व वा तिष्ठन्ति जापकाः ।
जपस्य च विधिं कृत्स्नं वक्तुमर्हसि मेऽनघ । जापका इति किञ्चैतत् सांख्ययोगक्रियाविधिः ।
किं यज्ञविधिरेवैष किमेतज्जप्यमुच्यते । एतन्मे सर्व्वमाचक्ष्व सर्व्वज्ञो ह्यसि मे मतः । ७१५५

॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । यमस्य यत् पुरा वृत्तं कालस्य ब्राह्मणस्य च ।
सांख्ययोगौ तु यावुक्तौ मुनिभिर्मोक्षदर्शिभिः । संन्यास एव वेदान्ते वर्त्तते जपनं प्रति ।
वेदवादाश्च निर्वृत्ताः शान्ता ब्रह्मण्यवस्थिताः । सांख्ययोगौ तु यावुक्तौ मुनिभिः शुभदर्शिभिः ।
मार्गौ तावप्युभावेतौ संश्रितौ न च संश्रितौ । यथा संश्रूयते राजन् कारणं चात्र वक्ष्यते ।
मनः समाधिरत्रापि तथेन्द्रियजयः स्मृतः । सत्यमग्निपरीचारो विविक्तानाञ्च सेवनं । ७१६०
ध्यानं तपो दमः क्षान्तिरनसूया मिताशनं । विषयप्रतिसंहारो मितजल्पस्तथा शमः ।
एष प्रवर्त्तको यज्ञो निवर्त्तकमथो शृणु । यथा निवर्त्तते कर्म्म जपतो ब्रह्मचारिणः ।
एतत् सर्व्वमशेषेण यथोक्तं परिवर्त्तयेत् । विरतं मार्गमासाद्य व्यक्ताव्यक्तमनाश्रयं ।
कुशोच्चयनिषण्णः सन् कुशहस्तः कुशैः शिखी । कुशैः परिवृतस्तस्मिन् मध्ये छन्नः कुशैस्तथा ।
विषयेभ्यो नमस्कुर्य्याद्विषयान्न च भावयेत् । साम्यमुत्पाद्य मनसा मनस्येव मनो दधत् । ७१६५

तद्बुद्ध्या ध्यायति ब्रह्म जपन् वै संहितां हितां। संन्यस्यत्यथ वा तां वै समाधौ पर्य्यवस्थितः।
ध्यानमुत्पादयत्यत्र संहिता बलसंश्रयात्। शुद्धात्मा तपसा दान्तो निवृत्तद्वेषकामवान्।
अरागमोहो निर्द्वन्द्वो न शोचति न सज्जते। न कर्त्ता कारणानाञ्च न कार्य्याणामिति स्थितिः।
न चाहङ्कारयोगेन मनः प्रस्थापयेत् क्वचित्। न चार्थग्रहणे युक्तो नावमानी न चाक्रियः।
ध्यानक्रियापरो युक्तो ध्यानवान् ध्याननिश्चयः। ध्याने समाधिमुत्पाद्य तदपि त्यजति क्रमात्। ७१७०
स वै तस्यामवस्थायां सर्व्वत्यागकृतः सुखं। निरिच्छस्त्यजति प्राणान् ब्राह्मीं संविशते तनुं।
अथवा नेच्छते तत्र ब्रह्मकायनिषेवणं। उत्क्रामति च मार्गस्थो नैव क्वचन जायते।
आत्मबुद्ध्या समास्थाय शान्तीभूतो निरामयः। अमृतं विरजः शुद्धमात्मानं प्रतिपद्यते।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि जापकोपाख्याने षण्णवत्यधिकशततोऽध्यायः॥ १९६॥
॥ युधिष्ठिर उवाच॥ गतीनामुत्तमा प्राप्तिः कथिता जापकेष्विह। एकैवैषा गतिस्तेषामुत यान्त्यपरामपि।
॥ भीष्म उवाच॥ शृणुष्वावहितो राजन् जापकानां गतिं विभो। यथा गच्छन्ति निरयाननेकान् पुरुषर्षभ। ७१७५
यथोक्तपूर्व्वं पूर्व्वं यो नानुतिष्ठति जापकः। एकदेशक्रियश्चात्र निरयं स च गच्छति।
अवमानेन कुरुते न प्रीयति न हृष्यति। ईदृशो जापको याति निरये नात्र संशयः।
अहङ्कारकृतश्चैव सर्व्वे निरयगामिनः। पराऽवमानी पुरुषो भविता निरयोपगः।
अभिध्यापूर्व्वकं जप्यं कुरुते यश्च मोहितः। यत्रास्य रागः पतति तत्र तत्रोपपद्यते।
अथैश्वर्य्यप्रवृत्तेषु जापकस्तत्र रज्यते। स एव निरयस्तस्य नासौ तस्मात् प्रमुच्यते। ७१८०
रागेण जापको जप्यं कुरुते तत्र मोहितः। यत्रास्य रागः पतति तत्र तत्रोपपद्यते।
दुर्ब्बुद्धिरकृतप्रज्ञश्चले मनसि तिष्ठति। चलामेव गतिं याति निरयं वा नियच्छति।
अकृतप्रज्ञको बालो मोहं गच्छति जापकः। स मोहान्निरयं याति तत्र गत्वाऽनुशोचति।
दृढग्राही करोमीति जप्यं जपति जापकः। न सम्पूर्णो न संयुक्तो निरयं सोऽनुगच्छति।
॥ युधिष्ठिर उवाच॥ अनिवृत्तं परं यत्तदव्यक्तं ब्रह्मणि स्थितं। तद्भूतो जापकः कस्मात् स शरीरमिहाविशेत्। ७१८५
॥ भीष्म उवाच॥ दुष्प्रज्ञानेन निरया बहवः समुदाहृताः। प्रशस्तं जापकत्वञ्च दोषाश्चैते तदात्मकाः।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि जापकोपाख्याने सप्तनवत्यधिकशततोऽध्यायः॥ १९७॥
॥ युधिष्ठिर उवाच॥ कीदृशं निरयं याति जापको वर्णयस्व मे। कौतूहलं हि राजन्मे तद्भवान् वक्तुमर्हति।
॥ भीष्म उवाच॥ धर्म्मस्यांशप्रसूतोऽसि धर्म्मिष्ठोऽसि स्वभावतः। धर्म्ममूलाश्रयं वाक्यं शृणुष्वावहितोऽनघ।
अमूनि यानि स्थानानि देवानां परमात्मनां। नानासंस्थानवर्णानि नानारूपफलानि च।
दिव्यानि कामचारीणि विमानानि सभास्तथा। आक्रीडा विविधा राजन् पद्मिन्यश्चैव काञ्चनाः। ७१९०
चतुर्णां लोकपालानां शुक्रस्याथ बृहस्पतेः। मरुतां विश्वदेवानां साध्यानामश्विनोरपि।
रुद्रादित्यवसूनाञ्च तथाऽन्येषां दिवौकसां। एते वै निरयास्तात स्थानस्य परमात्मनः।
अभयञ्चानिमित्तञ्च न तत् क्लेशसमावृतं। द्वाभ्यां मुक्तं त्रिभिर्म्मुक्तमष्टाभिस्त्रिभिरेव च।

चतुर्लक्षणवर्ज्जन्तु चतुष्कारणवर्ज्जितं । अप्रहर्षमनानन्दमशोकं विगतक्लमं ।
कालः सम्पच्यते तत्र कालस्तत्र न वै प्रभुः । स कालस्य प्रभू राजन् स्वर्गस्यापि तथेश्वरः । ७१९५
आत्मकेवलतां प्राप्तस्तत्र गत्वा न शोचति । ईदृशं परमं स्थानं निरयास्ते च तादृशाः ।
एते ते निरयाः प्रोक्ताः सर्व्व एव यथातथं । तस्य स्थानवरस्येह सर्व्वे निरयसंज्ञिताः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि जापकोपाख्याने अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

॥ युधिष्ठिर उवाच ॥ कालमृत्युयमानाञ्च इक्ष्वाकोर्ब्राह्मणस्य च । विवादो व्याहृतः पूर्व्वं तद्भवान् वक्तुमर्हति ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । इक्ष्वाकोः सूर्य्यपुत्रस्य यद्वृत्तं ब्राह्मणस्य च ।
कालस्य मृत्योश्च तथा यद्वृत्तं तन्निबोध मे । यथा स तेषां संवादो यस्मिन् स्थानेऽपि चाभवत् । ७२००
ब्राह्मणो जापकः कश्चिद्धर्म्मवृत्तो महायशाः । षडङ्गविन्महाप्राज्ञः पैप्पलादिः स कौशिकः ।
तस्यापरोक्षं विज्ञानं षडङ्गेषु बभूव ह । वेदेषु चैव निष्णातो हिमवत्पादसंश्रयः ।
सोऽन्त्यं ब्राह्मं तपस्तेपे संहितां संयतो जपन् । तस्य वर्षसहस्रन्तु नियमेन तथा गतं ।
स देव्या दर्शितः साक्षात् प्रीताऽस्मीति तदा किल । जप्यमावर्त्तयंस्तूष्णीं न स तां किञ्चिदब्रवीत् ।
तस्यानुकम्पया देवी प्रीता समभवत्तदा । वेदमाता ततस्तस्य तज्जप्यं समपूजयत् । ७२०५
समाप्तजप्यस्तूत्थाय शिरसा पादयोस्तदा । पपात देव्या धर्म्मात्मा वचनञ्चेदमब्रवीत् ।
दिष्ट्या देवि प्रसन्ना त्वं दर्शनञ्च गता मम । यदि चापि प्रसन्नाऽसि जप्ये मे रमतां मनः ।
॥ सावित्र्युवाच ॥ किं प्रार्थयसि विप्रर्षे किञ्चेष्टं करवाणि ते । प्रब्रूहि जपतां श्रेष्ठ सर्व्वं तत्ते भविष्यति ।
इत्युक्तः स तदा देव्या विप्रः प्रोवाच धर्म्मवित् । जप्यं प्रति ममेच्छेयं वर्द्धत्विति पुनः पुनः ।
मनसश्च समाधिर्मे वर्द्धतामहरहः शुभे । तत्तथेति ततो देवी मधुरं प्रत्यभाषत । ७२१०
इदञ्चैवापरं प्राह देवी तत्प्रियकाम्यया । निरयं नैव याता त्वं यत्र याता द्विजर्षभाः ।
यास्यसि ब्रह्मणः स्थानमनिमित्तमनिन्दितं । साधये भविता चैतद्यत्त्वयाऽहमिहार्थिता ।
नियतो जप चैकाग्रो धर्म्मस्त्वां समुपैष्यति । कालो मृत्युर्यमश्चैव समायास्यन्ति तेऽन्तिकं ।
भविता च विवादोऽत्र तव तेषाञ्च धर्म्मतः ।
॥ भीष्म उवाच ॥ एवमुक्त्वा भगवती जगाम भवनं स्वकं । ब्राह्मणोऽपि जपन्नास्ते दिव्यं वर्षशतं तथा । ७२१५
सदा दान्तो जितक्रोधः सत्यसन्धोऽनसूयकः । समाप्ते नियमे तस्मिन्नथ विप्रस्य धीमतः ।
साक्षात् प्रीतस्तदा धर्म्मो दर्शयामास तं द्विजं ।
॥ धर्म्म उवाच ॥ द्विजाते पश्य मां धर्म्ममहं त्वां द्रष्टुमागतः । जप्यस्यास्य फलं यत्तत् संप्राप्तं तच्च मे शृणु ।
जिता लोकास्त्वया सर्व्वे ये दिव्या ये च मानुषाः । देवानां निलयान् साधो सर्व्वानुत्क्रम्य यास्यसि ।
प्राणत्यागं कुरु मुने गच्छ लोकान् यथेप्सितान् । त्यक्त्वात्मनः शरीरञ्च ततो लोकानवाप्स्यसि । ७२२०
॥ ब्राह्मण उवाच ॥ किन्नु लोकैर्हि मे धर्म्म गच्छ त्वञ्च यथासुखं । बहुदुःखसुखं देहं नोत्सृजेयमहं विभो ।
॥ धर्म्म उवाच ॥ अवश्यं भोः शरीरन्ते त्यक्तव्यं मुनिपुङ्गव । स्वर्गमारोह भो विप्र किं वा वै रोचतेऽनघ ।

॥ ब्राह्मण उवाच ॥ न रोचये स्वर्गवासं विना देहमहं विभो । गच्छ धर्म्म न मे श्रद्धा स्वर्गं गन्तुं विनात्मना ।

॥ धर्म्म उवाच ॥ अलं देहे मनः कृत्वा त्यक्त्वा देहं सुखी भव । गच्छ लोकानरजसो यत्र गत्वा न शोचसि ।

॥ ब्राह्मण उवाच ॥ रमे जपन्महाभाग कृतं लोकैः सनातनैः । सशरीरेण गन्तव्यो मया स्वर्गो न वा विभो ।  ७२२५

॥ धर्म्म उवाच ॥ यदि त्वं नेच्छसे त्यक्तुं शरीरं पश्य वै द्विज । एष कालस्तथा मृत्युर्यमश्च त्वामुपागताः ।

॥ भीष्म उवाच ॥ अथ वैवस्वतः कालो मृत्युश्च त्रितयं विभो । ब्राह्मणं तं महाभागमुपगम्येदमब्रुवन् ।

॥ यम उवाच ॥ तपसोऽस्य सुतप्तस्य तथा सुचरितस्य च । फलप्राप्तिस्तव श्रेष्ठा यमोऽहं त्वामुपब्रुवे ।

॥ काल उवाच ॥ यथावदस्य जप्यस्य फलं प्राप्तमनुत्तमं । कालस्ते स्वर्गमारोढुं कालोऽहं त्वामुपागतः ।

॥ मृत्युरुवाच ॥ मृत्युं मां विद्धि धर्म्मज्ञ रूपिणं स्वयमागतं । कालेन चोदितो विप्र त्वामितो नेतुमद्य वै ।  ७२३०

॥ ब्राह्मण उवाच ॥ स्वागतं सूर्य्यपुत्राय कालाय च महात्मने । मृत्यवे चाथ धर्म्माय किं कार्य्यं करवाणि वः ।

॥ भीष्म उवाच ॥ अर्घ्यं पाद्यञ्च दत्त्वा स तेभ्यस्तत्र समागमे । अब्रवीत् परमप्रीतः स्वशक्त्या किं करोमि वः ।

तस्मिन्नेवाथ काले तु तीर्थयात्रामुपागतः । इक्ष्वाकुरगमत्तत्र समेता यत्र ते विभो ।

सर्व्वानेव तु राजर्षिः संपूज्याथ प्रणम्य च । कुशलप्रश्नमकरोत् सर्व्वेषां राजसत्तमः ।

तस्मै सोऽथासनं दत्त्वा पाद्यमर्घ्यं तथैव च । अब्रवीद्ब्राह्मणो वाक्यं कृत्वा कुशलसंविदं ।  ७२३५

स्वागतं ते महाराज ब्रूहि यद्यदिहेच्छसि । स्वशक्त्या किं करोमीह तद्भवान् प्रब्रवीतु मां ।

॥ राजोवाच ॥ राजाऽहं ब्राह्मणस्त्वं यदा षट्कर्म्मसंस्थितः । ददानि वसु किञ्चित्ते प्रार्थितं तद्वदस्व मे ।

॥ ब्राह्मण उवाच ॥ द्विविधा ब्राह्मणा राजन् धर्म्मश्च द्विविधः स्मृतः । प्रवृत्तश्च निवृत्तश्च निवृत्तोऽहं प्रतिग्रहात् ।

तेभ्यः प्रयच्छ दानानि ये प्रवृत्ता नराधिप । अहं न प्रतिगृह्णामि किमिष्टं किं ददामि ते ।

ब्रूहि त्वं नृपतिश्रेष्ठ तपसा साधयामि किं ।  ७२४०

॥ राजोवाच ॥ क्षत्रियोऽहं न जानामि देहीति वचनं क्वचित् । प्रयच्छ युद्धमित्येवं वादिनः स्मो द्विजोत्तम ।

॥ ब्राह्मण उवाच ॥ तुष्यसि त्वं स्वधर्म्मेण तथा तुष्टा वयं नृप । अन्योन्यस्यान्तरं नास्ति यदिष्टं तत्समाचर ।

॥ राजोवाच ॥ स्वशक्त्याऽहं ददानीति त्वया पूर्व्वमुदाहृतं । याचे त्वां दीयतां मह्यं जप्यस्यास्य फलं द्विज ।

॥ ब्राह्मण उवाच ॥ युद्धं मम सदा वाणी याचतीति विकत्थसे । न च युद्धं मया सार्द्धं किमर्थं याचसे पुनः ।

॥ राजोवाच ॥ वाग्वज्रा ब्राह्मणाः प्रोक्ताः क्षत्रिया बाहुजीविनः । वाग्युद्धं तदिदं तीव्रं मम विप्र त्वया सह ।  ७२४५

॥ ब्राह्मण उवाच ॥ सैवाद्यापि प्रतिज्ञा मे स्वशक्त्या किं प्रदीयतां । ब्रूहि दास्यामि राजेन्द्र विभवे सति मा चिरं ।

॥ राजोवाच ॥ यत्तद्वर्षशतं पूर्णं जप्यं वै जपता त्वया । फलं प्राप्तं तत् प्रयच्छ मम दित्सुर्भवान् यदि ।

॥ ब्राह्मण उवाच ॥ परमं गृह्यतां तस्य फलं यज्जपितं मया । अर्द्धं त्वमविचारेण फलं तस्य समाप्नुहि ।

अथवा सर्व्वमेवेह मामकं जापकं फलं । राजन् प्राप्नुहि कामं त्वं यदि सर्व्वमिहेच्छसि ।

॥ राजोवाच ॥ कृतं सर्व्वेण भद्रन्ते जप्यं यद्याचितं मया । स्वस्ति तेऽस्तु गमिष्यामि किञ्च तस्य फलं वद ।  ७२५०

॥ ब्राह्मण उवाच ॥ फलप्राप्तिं न जानामि दत्तं यज्जपितं मया । अयं धर्म्मश्च कालश्च यमो मृत्युश्च साक्षिणः ।

॥ राजोवाच ॥ अज्ञातमस्य धर्मस्य फलं किं मे करिष्यति । फलं ब्रवीषि धर्मस्य न चेज्जप्यकृतस्य मां ।
प्राप्नोतु तत्फलं विप्रो नाहमिच्छे ससंशयं ।
॥ ब्राह्मण उवाच ॥ नाददेऽपरवक्तव्यं दत्तञ्चास्य फलं मया । वाक्यं प्रमाणं राजर्षे ममाद्य तव चैव हि ।
नाभिसन्धिर्मया जप्ये कृतपूर्व्वः कदाचन । जप्यस्य राजशार्दूल कथं वेत्स्याम्यहं फलं । ७२५५
ददस्वेति त्वया चोक्तं ददामीति मया तथा । न वाचं दूषयिष्यामि सत्यं रक्ष स्थिरो भव ।
अथैवं वदतो मेऽद्य वचनं न करिष्यसि । महानधर्म्मो भविता तव राजन्मृषाकृतः ।
न युक्तन्तु मृषावाणी त्वया वक्तुमरिन्दम । तथा मयाऽप्यभिहितं मिथ्या कर्त्तुं न शक्यते ।
संश्रुतञ्च मया पूर्व्वं ददानीत्यविचारितं । तद्गृह्णीष्वाविचारेण यदि सत्ये स्थितो भवान् ।
इहागम्य हि मां राजन् जाप्यं फलमयाचिथाः । तस्मान्निसृष्टं गृह्णीष्व भव सत्ये स्थिरोऽपि च । ७२६०
नायं लोकोऽस्ति न परो न च पूर्व्वान् स तारयेत् । कुत एव जनिष्यांस्तु मृषावादपरायणः ।
न यज्ञफलदानानि नियमास्तारयन्ति हि । यथा सत्यं परे लोके तथेह पुरुषर्षभ ।
तपांसि यानि चीर्णानि चरिष्यन्ति च यत्तपः । शतैः शतसहस्रैश्च तैः सत्यान्न विशिष्यते ।
सत्यमेकाक्षरं ब्रह्म सत्यमेकाक्षरं तपः । सत्यमेकाक्षरो यज्ञः सत्यमेकाक्षरं श्रुतं ।
सत्यं वेदेषु जागर्त्ति फलं सत्ये परं स्मृतं । सत्याद्धर्म्मो दमश्चैव सर्व्वं सत्ये प्रतिष्ठितं । ७२६५
सत्यं वेदास्तथाऽङ्गानि सत्यं विद्यास्तथा विधिः । व्रतचर्य्या तथा सत्यमोङ्कारः सत्यमेव च ।
प्राणिनां जननं सत्यं सत्यं सन्ततिरेव च । सत्येन वायुरभ्येति सत्येन तपते रविः ।
सत्येन चाग्निर्दहति स्वर्गः सत्ये प्रतिष्ठितः । सत्यं यज्ञस्तपो वेदास्तोभा मन्त्राः सरस्वती ।
तुलामारोपितो धर्म्मः सत्यञ्चैवेति नः श्रुतं । समकक्षां तुलयतो यतः सत्यं ततोऽधिकं ।
यतो धर्म्मस्ततः सत्यं सर्व्वं सत्येन वर्द्धते । किमर्थमनृतं कर्म्म कर्त्तुं राजंस्त्वमिच्छसि । ७२७०
सत्ये कुरु स्थिरं भावं मा राजन्ननृतं कृथाः । कस्मात्त्वमनृतं वाक्यं देहीति कुरुषेऽशुभं ।
यदि जप्यफलं दत्तं मया नेषिष्यसे नृप । धर्म्मेभ्यः संपरिभ्रष्टो लोकाननुचरिष्यसि ।
संश्रुत्य यो न दित्सेत याचित्वा यश्च नेच्छति । उभावानृतिकावेतौ न मृषा कर्त्तुमर्हसि ।
॥ राजोवाच ॥ योद्धव्यं रक्षितव्यञ्च क्षत्रधर्म्मः किल द्विज । दातारः क्षत्रियाः प्रोक्ता गृह्णीयां भवतः कथं ।
॥ ब्राह्मण उवाच ॥ न च्छन्दयामि ते राजन्नापि ते गृहमाव्रजं । इहागम्य तु याचित्वा न गृह्णीषे पुनः कथं । ७२७५
॥ धर्म्म उवाच ॥ अविवादोऽस्तु युवयोर्वित्तं मां धर्म्ममागतं । द्विजो दानफलैर्युक्तो राजा सत्यफलेन च ।
॥ स्वर्ग उवाच ॥ स्वर्गं मां विद्धि राजेन्द्र रूपिणं स्वयमागतं । अविवादोऽस्तु युवयोरुभौ तुल्यफलौ युवां ।
॥ राजोवाच ॥ कृतं स्वर्गेण मे कार्य्यं गच्छ स्वर्ग यथागतं । विप्रो यदीच्छते गन्तुं चीर्णं गृह्णातु मे फलं ।
॥ ब्राह्मण उवाच ॥ बाल्ये यदि स्यादज्ञानान्मया हस्तः प्रसारितः । निवृत्तलक्षणं धर्म्ममुपासे संहितां जपन् ।
निवृत्तं मां चिराद्राजन् विप्रलोभयसे कथं । स्वेन कार्य्यं करिष्यामि त्वत्तो नेच्छे फलं नृप । ७२८०
तपः स्वाध्यायशीलोऽहं निवृत्तश्च प्रतिग्रहात् ।

॥ राजोवाच ॥ यदि विप्र विसृष्टन्ते जप्यस्य फलमुत्तमं। आवयोर्यत् फलं किञ्चित् सहितं नौ तदस्त्विह।
द्विजाः प्रतिग्रहे युक्ता दातारो राजवंशजाः। यदि धर्म्मः श्रुतो विप्र सहैव फलमस्तु नौ।
मा वाभूत् सह भोज्यन्नौ मदीयं फलमाप्नुहि। प्रतीच्छ मत्कृतं धर्म्मं यदि ते मय्यनुग्रहः।
॥ भीष्म उवाच ॥ ततो विकृतवेशौ द्वौ पुरुषौ समुपस्थितौ। गृहीत्वाऽन्योन्यमावेश्य कुचैलावूचतुर्व्वचः। ७२८५
न मे धारयसीत्येको धारयामीति चापरः। इहास्ति नौ विवादोऽयमयं राजाऽनुशासकः।
सत्यं ब्रवीम्यहमिदं न मे धारयते भवान्। अनृतं वदसीह त्वमृणन्ते धारयाम्यहं।
तावुभौ सुभृशं तप्तौ राजानमिदमूचतुः। परीक्ष त्वं यथा स्याव नावामिह विगर्हितौ।
॥ विरूप उवाच ॥ धारयामि नरव्याघ्र विकृतस्येह गोः फलं। ददतश्च न गृह्णाति विकृतो मे महीपते।
॥ विकृत उवाच ॥ न मे धारयते किञ्चिद्विरूपोऽयं नराधिप। मिथ्या ब्रवीत्ययं हि त्वां सत्याभासं नराधिप। ७२९०
॥ राजोवाच ॥ विरूप किं धारयते भवानस्य ब्रवीतु मे। श्रुत्वा तथा करिष्येऽहमिति मे धीयते मनः।
॥ विरूप उवाच ॥ शृणुष्वावहितो राजन् यथैतद्धारयाम्यहं। विकृतस्यास्य राजर्षे निखिलेन नराधिप।
अनेन धर्म्मप्राप्त्यर्थं शुभा दत्ता पुराऽनघ। धेनुर्व्विप्राय राजर्षे तपःस्वाध्यायशीलिने।
तस्यास्तस्यायं मया राजन् फलमभ्येत्य याचितः। विकृतेन च मे दत्तं विशुद्धेनान्तरात्मना।
ततो मे सुकृतं कर्म्म कृतमात्मविशुद्धये। गावौ च कपिले क्रीत्वा वत्सले बहुदोहने। ७२९५
ते चोञ्छवृत्तये राजन् मया समपवर्ज्जिते। यथाविधि यथाश्रद्धं तदस्याहं पुनः प्रभो।
इहाद्यैव गृहीत्वा तु प्रयच्छे द्विगुणं फलं। एवं स्यात् पुरुषव्याघ्र कः शुद्धः कोऽत्र दोषवान्।
एवं विवदमानौ स्वस्त्वामिहाभ्यागतौ नृप। कुरु धर्म्ममधर्म्मं वा विनये नौ समादध।
यदि नेच्छति मे दानं यथा दत्तमनेन वै। भवानत्र स्थिरो भूत्वा मार्गे स्थापयिताऽद्य नौ।
॥ राजोवाच ॥ दीयमानं न गृह्णासि ऋणं कस्मात्त्वमद्य वै। यथैव तेऽभ्यनुज्ञातं तथा गृह्णीष्व मा चिरं। ७३००
॥ विकृत उवाच॥ धारयामीत्यनेनोक्तं ददानीति तथा मया। नायं मे धारयत्यद्य गच्छतां यत्र वाञ्छति।
॥ राजोवाच ॥ ददतोऽस्य न गृह्णासि विषमं प्रतिभाति मे। दण्ड्यो हि त्वं मम मतो नास्त्यत्र खलु संशयः।
॥ विकृत उवाच ॥ मयाऽस्य दत्तं राजर्षे गृह्णीयां तत् कथं पुनः। काममत्रापराधो मे दण्डमाज्ञापय प्रभो।
॥ विरूप उवाच ॥ दीयमानं यदि मया नैषिष्यसि कथञ्चन। नियंस्यति त्वां नृपतिरयं धर्म्मानुशासकः।
॥ विकृत उवाच ॥ स्वं मया याचितेनेह दत्तं कथमिहाद्य तत्। गृह्णीयां गच्छतु भवानभ्यनुज्ञां ददानि ते। ७३०५
॥ ब्राह्मण उवाच॥ श्रुतमेतत्त्वया राजन्ननयोः कथितं द्वयोः। प्रतिज्ञातं मया यत्ते तद्गृहाणाविचारितं।
॥ राजोवाच ॥ प्रस्तुतं सुमहत् कार्य्यमनयोर्गह्वरं यथा। जापकस्य दृढीकारः कथमेतद्भविष्यति।
यदि तावन्न गृह्णामि ब्राह्मणेनापवर्ज्जितं। कथं न लिप्येयमहं पापेन महताऽद्य वै।
तौ चोवाच स राजर्षिः कृतकार्य्यौ गमिष्यथः। नेदानीं मामिहासाद्य राजधर्म्मो भवेन्मृषा।
स्वधर्म्मः परिपाल्यस्तु राज्ञामिति विनिश्चयः। विप्रधर्म्मश्च गहनो मामनात्मानमाविशत्। ७३१०
॥ ब्राह्मण उवाच ॥ गृहाण धारयेऽहञ्च याचितं संश्रुतं मया। न चेद्गृहीष्यसे राजन् शपिष्ये त्वां न संशयः।

॥ राजोवाच ॥ धिगावयोर्व्यवसायं कार्य्ययोरेव निश्चयः । इत्यर्थं मे प्रतीतव्यं कथं तुल्यं भवेदिति ।

एष पाणिरपूर्व्वं मे निक्षेपार्थं प्रसारितः । यदि धारयसे विप्र तदिहाद्य प्रदीयतां ।

॥ ब्राह्मण उवाच ॥ संहितां जपता यावान् गुणः कश्चित् कृतो मया । तत्सर्व्वं प्रतिगृह्णीष्व यदि किञ्चिदिहास्ति मे ।

॥ राजोवाच ॥ जलमेतन्निपतितं मम पाणौ द्विजोत्तम । सममस्तु सहैवास्तु प्रतिगृह्णातु वै भवान् । ७२१५

॥ विरूप उवाच ॥ कामक्रोधौ विद्धि नौ त्वमावाभ्यां कारितो भवान् । समेति च यदुक्तन्ते समा लोकास्तवास्य च ।

नायं धारयते किञ्चिज्जिज्ञासा त्वत्कृते कृता । कालो धर्म्मस्तथा मृत्युः कामक्रोधौ तथा युवां ।

सर्व्वमन्योन्यनिष्कर्षे निघृष्टं पश्यतस्तव । गच्छ लोकान् जितान् स्वेन कर्म्मणा यत्र वाञ्छसि ।

॥ भीष्म उवाच ॥ जापकानां फलावाप्तिर्म्मया ते सम्प्रदर्शिता । गतिः स्थानञ्च लोकाश्च जापकेन यथा जिताः ।

प्रयाति संहिताध्यायी ब्रह्माणं परमेष्ठिनं । अथवाऽग्निं समायाति सूर्य्यमाविशतेऽपि वा । ७२२०

स तैजसेन भावेन यदि तत्र रमत्युत । गुणांस्तेषां समाधत्ते रागेण प्रतिमोहितः ।

एवं सोमे तथा वायौ भूम्याकाशशरीरगः । स रागस्तत्र वसति गुणांस्तेषां समाचरन् ।

अथ तत्र विरागी स गच्छति त्वथ संशयं । परममव्ययमिच्छन् स तमेवाविशते पुनः ।

अमृताच्चामृतं प्राप्तः शान्तीभूतो निरात्मवान् । ब्रह्मभूतः स निर्द्वन्द्वः सुखी शान्तो निरामयः ।

ब्रह्मस्थानमनावर्त्तमेकमक्षरसंज्ञकं । अदुःखमजरं शान्तं स्थानं तत्प्रतिपद्यते । ७२२५

चतुर्भिर्लक्षणैर्हीनं तथा षड्भिः सषोडशैः । पुरुषं तमतिक्रम्य आकाशं प्रतिपद्यते ।

अथ नेच्छति रागात्मा सर्व्वं तदधितिष्ठति । यच्च प्रार्थयते तच्च मनसा प्रतिपद्यते ।

अथवा वीक्षते लोकान् सर्व्वान्निरयसंस्थितान् । निस्पृहः सर्व्वतो मुक्तस्तत्र वै रमते सुखं ।

एवमेषा महाराज जापकस्य गतिर्यथा । एतत्ते सर्व्वमाख्यातं किं भूयः श्रोतुमर्हसि ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि जापकोपाख्याने नवनवत्यधिकशततमोऽध्यायः ॥ १९९ ॥

॥ युधिष्ठिर उवाच ॥ किमुत्तरं तदा तौ स्म चक्रतुस्तस्य भाषिते । ब्राह्मणो वाऽथवा राजा तन्मे ब्रूहि पितामह । ७२३०

अथवा तौ गतौ तत्र यदेतत्कीर्त्तितं त्वया । संवादो वा तयोः कोऽभूत्किं वा तौ तत्र चक्रतुः ।

॥ भीष्म उवाच ॥ तथेत्येवं प्रतिश्रुत्य धर्म्मं संपूज्य च प्रभो । यमं कालञ्च मृत्युञ्च स्वर्गं संपूज्य चार्हतः ।

पूर्व्वं ये चापरे तत्र समेता ब्राह्मणर्षभाः । सर्व्वान् सम्पूज्य शिरसा राजानं सोऽब्रवीद्द्विजः ।

फलेनानेन संयुक्तो राजर्षे गच्छ पुण्यतां । भवता चाभ्यनुज्ञातो जपेयं भूय एव हि ।

वरश्च मम पूर्व्वं हि दत्तो देव्या महाबल । श्रद्धा ते जपतो नित्यं भवित्विति विशाम्पते । ७२३५

॥ राजोवाच ॥ यद्येवमफला सिद्धिः श्रद्धा च जपितुं तव । गच्छ विप्र मया सार्द्धं जापकं फलमाप्नुहि ।

॥ ब्राह्मण उवाच ॥ कृतः प्रयत्नः सुमहान् सर्व्वेषां सन्निधाविह । सह तुल्यफलावावां गच्छावो यत्र नौ गतिः ।

व्यवसायं तयोस्तत्र विदित्वा त्रिदशेश्वरः । सह देवैरुपययौ लोकपालैस्तथैव च ।

साध्याश्च विश्वे मरुतो वाद्यानि सुमहान्ति च । नद्यः शैलाः समुद्राश्च तीर्थानि विविधानि च ।

तपांसि संयोगविधिर्व्वेदाः स्तोभाः सरस्वती । नारदः पर्व्वतश्चैव विश्वावसुर्हाहाहूहूः । ७२४०

गन्धर्व्वश्चित्रसेनश्च परिवारगणैर्युतः। नागाः सिद्धाश्च मुनयो देवदेवः प्रजापतिः।
विष्णुः सहस्रशीर्षश्च देवोऽचिन्त्यः समागमत्। अवाद्यन्तान्तरीक्षे च भेर्य्यस्तूर्य्याणि वा विभो।
पुष्पवर्षाणि दिव्यानि तत्र तेषां महात्मनां। ननृतुश्चाप्सरःसंघास्तत्र समन्ततः।
अथ स्वर्गस्तथारूपी ब्राह्मणं वाक्यमब्रवीत्। संसिद्धस्त्वं महाभागस्त्वञ्च सिद्धस्तथा नृप।
अथ तौ सहितौ राजन्नन्योन्यविधिना ततः। विषयप्रतिसंहारमुभावेव प्रचक्रतुः। ७२४५
प्राणापानावथोदानं समानं व्यानमेव च। एवं तौ मनसि स्थाप्य दधतुः प्राणयोर्म्मनः।
उपस्थायोदरे तौ च नासिकाग्रमधो भ्रुवोः। भ्रूकुट्याश्चैव मनसा शनैर्द्धारयतस्तदा।
निश्चेष्टाभ्यां शरीराभ्यां स्थिरदृष्टी समाहितौ। जितात्मानौ तथाधाय मूर्द्धन्यात्मानमेव च।
तालुदेशमथोद्दाल्य ब्राह्मणस्य महात्मनः। ज्योतिर्ज्वाला सुमहती जगाम त्रिदिवं तदा।
हाहाकारस्तदा दिक्षु सर्व्वेषां सुमहानभूत्। तज्ज्योतिस्तूयमानं स ब्रह्माणं प्राविशत्तदा। ७२५०
ततः स्वागतमित्याह तत्तेजः प्रपितामहः। प्रादेशमात्रं पुरुषं प्रत्युद्गम्य विशाम्पते।
भूयश्चैवापरं प्राह वचनं मधुरं तदा। जापकैस्तुल्यफलता योगानां नात्र संशयः।
योगस्य तावदेतेभ्यः प्रत्यक्षं फलदर्शनं। जापकानां विशिष्टन्तु प्रत्युत्थानं समाहितं।
उष्यतां मयि चेत्युक्त्वाऽचेतयत्सततं पुनः। अथास्यं प्रविवेशास्य ब्राह्मणो विगतज्वरः।
राजाऽप्येतेन विधिना भगवन्तं पितामहं। यथैव द्विजशार्दूलस्तथैव प्राविशत्तदा। ७२५५
स्वयम्भुवमथो देवा अभिवाद्य ततोऽब्रुवन्। जापकानां विशिष्टन्तु प्रत्युत्थानं समाहितं।
जापकार्थमयं यत्नो यदर्थं वयमागताः। कृतपूजाविमौ तुल्यौ त्वया तुल्यफलाविमौ।
योगजापकयोर्दृष्टं फलं सुमहदद्य वै। सर्व्वान् लोकानतिक्रम्य गच्छेतां यत्र वाञ्छितं।
॥ब्रह्मोवाच॥ महास्मृतिं पठेद्यस्तु तथैवानुस्मृतिं शुभां। तावप्येतेन विधिना गच्छेतां मत्सलोकतां।
यश्च योगे भवेद्भक्तः सोऽपि नास्त्यत्र संशयः। विधिनाऽनेन देहान्ते मम लोकानवाप्नुयात्। ७२६०
साधये गम्यताञ्चैव यथास्थानानि सिद्धये।
॥भीष्म उवाच॥ इत्युक्त्वा स तदा देवस्तत्रैवान्तरधीयत। आमन्त्र्य च ततो देवा ययुः स्वं स्वं निवेशनं।
ते च सर्व्वे महात्मानो धर्म्मं सत्कृत्य तत्र वै। पृष्ठतोऽनुययूराजन् सर्व्वे सुप्रीतचेतसः।
एतत् फलं जापकानां गतिश्चैषा प्रकीर्त्तिता। यथाश्रुतं महाराज किम्भूयः श्रोतुमिच्छसि।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि जापकोपाख्याने द्विशतोऽध्यायः॥ २००॥
॥युधिष्ठिर उवाच॥ किं फलं ज्ञानयोगस्य वेदानां नियमस्य च। भूतात्मा च कथं ज्ञेयस्तन्मे ब्रूहि पितामह। ७२६५
॥भीष्म उवाच॥ तत्राप्युदाहरन्तीममितिहासं पुरातनं। मनोः प्रजापतेर्व्वादं महर्षेश्च बृहस्पतेः।
प्रजापतिं श्रेष्ठतमं प्रजानां देवर्षिसंघप्रवरो महर्षिः। बृहस्पतिः प्रश्नमिमं पुराणं पप्रच्छ शिष्योऽथ गुरुं प्रणम्य।
यत्कारणं यत्र विधिः प्रवृत्तो ज्ञाने फलं यत्प्रवदन्ति विप्राः। यन्मन्त्रशब्दैरकृतप्रकाशं तदुच्यतां मे भगवन् यथावत्।
यदार्थशास्त्रागममन्त्रविद्भिर्यज्ञैरनेकैरथ गोप्रदानैः। फलं महद्भिर्यदुपास्यते च किन्तत् कथं वा भविता क्व वा तत्।

मही महौजाः पवनोऽन्तरीक्षं जलौकसश्चैव जलं दिवञ्च । दिवौकसश्चापि यतः प्रसूतास्तदुच्यतां मे भगवन् पुराणं । ७१७०
ज्ञानं यतः प्रार्थयते नरो वै ततस्तदर्थो भवति प्रवृत्तिः । न चाप्यहं वेद परं पुराणं मिथ्याप्रवृत्तिञ्च कथं नु कुर्य्यां ।
ऋक्सामसंघांश्च यजूंषि चापि च्छन्दांसि नक्षत्रगतिं निरुक्तं । अधीत्य च व्याकरणं सकल्पं शिक्षाञ्च भूतप्रकृतिं न वेद्मि ।
स मे भवान् शंसतु सर्व्वमेतत् सामान्यशब्देश्च विशेषणैश्च । स मे भवान् शंसतु तावदेतज्ज्ञाने फलं कर्म्मणि वा यदस्ति ।
यथा च देहाच्च्यवते शरीरी पुनः शरीरञ्च यथाऽभ्युपैति ।
॥ मनुरुवाच ॥ यद्यत् प्रियं यस्य सुखं तदाहुस्तदेव दुःखं प्रवदन्त्यनिष्टं । इष्टञ्च मे स्यादितरच्च न स्यादेतत्कृते कर्म्मविधिः प्रवृत्तः । ७१७५
इष्टन्त्वनिष्टञ्च न मां भजेतेत्येतत् कृते ज्ञानविधिः प्रवृत्तः । कामात्मकाश्छन्दसि कर्म्मयोगा एभिर्विमुक्तः परमश्नुवीत ।
नानाविधे कर्म्मपथे सुखार्थी नरः प्रवृत्तो निरयं प्रयाति ।
॥ वृहस्पतिरुवाच ॥ इष्टन्त्वनिष्टञ्च सुखासुखे च साशीस्त्ववच्छन्दति कर्म्मभिश्च ।
॥ मनुरुवाच ॥ एभिर्विमुक्तः परमाविवेश एतत्कृते कर्म्मविधिः प्रवृत्तः । कामात्मकांश्छन्दति कर्म्मयोग एभिर्विमुक्तः परमाददीत ।
आत्मादिभिः कर्म्मभिरिध्यमानो धर्म्मे प्रवृत्तो द्युतिमान् सुखार्थी । परं हि तत् कर्म्मपथादपेतं निराशिषं ब्रह्म परं ह्युपैति । ७१८०
प्रजाः सृष्टा मनसा कर्म्मणा च द्वावेवैतौ सत्पथौ लोकजुष्टौ । दृष्टं कर्म्म शाश्वतञ्चान्तवच्च मनस्त्यागः कारणं नान्यदस्ति ।
स्वेनात्मना चक्षुरिव प्रणेता निशात्यये तपसा संवृतात्मा । ज्ञानन्तु विज्ञानगुणेन युक्तं कर्म्माशुभं पश्यति वर्ज्जनीयं ।
सर्पान् कुशाग्राणि तथोदपानं ज्ञात्वा मनुष्याः परिवर्ज्जयन्ति । अज्ञानतस्तत्र पतन्ति केचिज्ज्ञाने फलं पश्य यथा विशिष्टं ।
कृत्स्नस्तु मन्त्रो विधिवत्प्रयुक्तो यज्ञा यथोक्तास्त्विह दक्षिणाश्च । अन्नप्रदानं मनसः समाधिः पञ्चात्मकं कर्म्मफलं वदन्ति ।
गुणात्मकं कर्म्म वदन्ति वेदास्तस्मान्मन्त्रो मन्त्रपूर्व्वं हि कर्म्म । विधिर्व्विधेयं मनसोपपत्तिः फलस्य भोक्ता तु तथा शरीरी । ७१८५
शब्दाश्च रूपाणि रसाश्च पुण्याः स्पर्शाश्च गन्धाश्च शुभास्तथैव । नरो न संस्थानगतःप्रभुः स्यादेतत् फलं सिध्यति कर्म्म लोके ।
यद्यच्छरीरेण करोति कर्म्म शरीरयुक्तः समुपाश्नुते तत् । शरीरमेवायतनं सुखस्य दुःखस्य चाप्यायतनं शरीरं ।
वाचा तु यत्कर्म्म करोति किञ्चिद्वाचैव सर्व्वं समुपाश्नुते तत् । मनस्तु यत्कर्म्म करोति किञ्चिन्मनस्थ एवायमुपाश्नुते तत् ।
यथा यथा कर्म्मगुणं फलार्थी करोत्ययं कर्म्मफले निविष्टः । तथा तथाऽयं गुणसंप्रयुक्तः शुभाशुभं कर्म्मफलं भुनक्ति ।
मत्स्यो यथा स्रोत इवाभिपाती तथा कृतं पूर्व्वमुपैति कर्म्म । शुभे त्वसौ तुष्यति दुष्कृते तु न तुष्यते वै परमः शरीरी । ७१९०
यतो जगत् सर्व्वमिदं प्रसूतं ज्ञात्वात्मवन्तो व्यतियान्ति यत्तत् । यन्मन्त्रशब्दैरकृतप्रकाशं तदुच्यमानं शृणु मे परं यत् ।
रसैर्विमुक्तं विविधैश्च गन्धैरशब्दमस्पर्शमरूपवच्च । अग्राह्यमव्यक्तमवर्णमेकं पञ्चप्रकारान् ससृजे प्रजानां ।
न स्त्री पुमान्नापि नपुंसकञ्च न सन्न चासत् सदसच्च तन्न । पश्यन्ति यद्ब्रह्मविदो मनुष्यास्तदक्षरं न क्षरतीति विद्धि ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि मनुवृहस्पतिसंवादे एकाधिकद्विशततोऽध्यायः ॥ २०१ ॥

॥ मनुरुवाच ॥ अक्षरात् खं ततो वायुस्ततो ज्योतिस्ततो जलं । जलात् प्रसूता जगती जगत्यां जायते जगत् ।

एतैः शरीरैर्जलमेव गत्वा जलाच्च तेजः पवनोऽन्तरीक्षं । खाद्वै निवर्त्तन्ति न भाविनस्ते मोक्षञ्च ते वै परमाप्नुवन्ति । ७४९५

नोष्णं न शीतं मृदु नापि तीक्ष्णं नाम्लं कषायं मधुरं न तिक्तं । न शब्दवन्नापि च गन्धवत्तन्न रूपवत्तत् परमस्वभावं ।

स्पर्शन्तनुर्वेद रसञ्च जिह्वा घ्राणञ्च गन्धान् श्रवणौ च शब्दान् । रूपाणि चक्षुर्न च तत्परं यत् गृह्णन्त्यनध्यात्मविदो मनुष्याः ।

निवर्त्तयित्वा रसनां रसेभ्यो घ्राणञ्च गन्धाच्छ्रवणौ च शब्दात् । स्पर्शात्त्वचं रूपगुणात्तु चक्षुस्ततः परं पश्यति स्वं स्वभावं ।

यतो गृहीत्वा हि करोति यच्च यस्मिंश्च तामारभते प्रवृत्तिं । यस्मिंश्च यच्चेन च यश्च कर्त्ता यत्कारणन्ते समुदायमाहुः ।

यद्वाऽप्यभूद्व्यापकं साधकञ्च यन्मन्त्रवत् स्थास्यति चापि लोके । यः सर्व्वहेतुः परमात्मकारी तत् कारणं कार्य्यमतो यद-
न्यत् । ७५००

यथा हि कश्चित् सुकृतैर्मनुष्यः शुभाशुभं प्राप्नुतेऽथाविरोधात् । एवं शरीरेषु शुभाशुभेषु स्वकर्म्मजैर्ज्ञानमिदं निबद्धं ।

यथा प्रदीप्तः पुरतः प्रदीपः प्रकाशमन्यस्य करोति दीप्यन् । तथेह पञ्चेन्द्रियदीपवृक्षा ज्ञानप्रदीप्ताः परवन्त एव ।

यथा च राज्ञो बहवो ह्यमात्याः पृथक् प्रमाणं प्रवदन्ति युक्ताः । तद्वच्छरीरेषु भवन्ति पञ्च ज्ञानैकदेशाः परमः स तेभ्यः ।

यथार्च्चिषोऽग्नेः पवनस्य वेगा मरीचयोऽर्कस्य नदीषु चापः । गच्छन्ति चायान्ति च सञ्चरन्त्यस्तद्वच्छरीराणि शरीरिणान्तु ।

यथा च कश्चित् परशुं गृहीत्वा धूमं न पश्येज्ज्वलनञ्च काष्ठे । तद्वच्छरीरोदरपाणिपादं छित्त्वा न पश्यन्ति ततो यद-
न्यत् । ७५०५

तान्येव काष्ठानि यथा विमथ्य धूमञ्च पश्येत् ज्वलनञ्च योगात् । तद्वत् सबुद्धिः सममिन्द्रियात्मा बुधः परं पश्यति तं
स्वभावं ।

यथात्मनोऽङ्गं पतितं पृथिव्यां स्वप्नान्तरे पश्यति चात्मनोऽन्यत् । श्रोत्रादियुक्तः सुमहान् सबुद्धिर्लिङ्गात्तथा गच्छति
लिङ्गमन्यत् ।

उत्पत्तिवृद्धिव्ययसन्निपातैर्न युज्यतेऽसौ परमः शरीरी । अनेन लिङ्गेन तु लिङ्गमन्यद्गच्छत्यदृष्टः फलसन्नियोगात् ।

न चक्षुषा पश्यति रूपमात्मनो न चापि संस्पर्शमुपैति किञ्चित् । न चापि तैः साधयते तु कार्य्यं ते तं न पश्यन्ति स पश्यते
तान् ।

यथा समीपे ज्वलतोऽनलस्य सन्तापजं रूपमुपैति कश्चित् । न चापरं रूपगुणं बिभर्त्ति तथैव तद्दृश्यति रूपमस्य । ७५१०

तथा मनुष्यः परिमुच्य कायमदृश्यमन्यद्विशते शरीरं । विसृज्य भूतेषु महत्सु देहं तदाश्रयञ्चैव बिभर्त्ति रूपं ।

खं वायुमग्निं सलिलं तथोर्व्वीं समं ततोऽभ्याविशते शरीरी । नानाश्रयाः कर्म्मसु वर्त्तमानाः श्रोत्रादयः पञ्चगुणान् श्रयन्ते ।

श्रोत्रं खतो घ्राणमथो पृथिव्यास्तेजोमयं रूपमथो विपाकः । जलाश्रयं तेज उक्तं रसञ्च वाय्वात्मकः स्पर्शकृतो गुणश्च ।

महत्सु भूतेषु वसन्ति पञ्च पञ्चेन्द्रियार्थाश्च तथेन्द्रियेषु । सर्व्वाणि चैतानि मनोनुगानि बुद्धिं मनोऽन्वेति मनः स्वभावं ।

शुभाशुभं कर्म्म कृतं यदन्यत्तदेव प्रत्याददते स्वदेहे । मनोऽनुवर्त्तन्ति परावराणि जलौकसः स्रोत इवानुकूलं । ७५१५

चलं यथा दृष्टिपथं परैति सूक्ष्मं महद्रूपमिवाभिभाति । स्वरूपमालोचयते च रूपं परं तथा बुद्धिपथं परैति ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि मनुवृहस्पतिसंवादे द्व्यधिकद्विशततोऽध्यायः ॥ २०२ ॥

॥ मनुरुवाच ॥ यदिन्द्रियैस्तूपहितं पुरस्तात् प्राप्तान् गुणान् संस्मरते चिराय । तेष्विन्द्रियेषूपहतेषु पश्चात् स बुद्धिरूपः
परमस्वभावः ।

यथेन्द्रियार्थान् युगपत् समस्तान्नोपेक्षते कृत्स्नमतुल्यकालं । तथा चलं सञ्चरते स विद्वांस्तस्मात् स एकः परमः शरीरी ।
रजस्तमः सत्त्वमथो तृतीयं गच्छत्यसौ स्थानगुणान् विरूपान् । तथेन्द्रियाण्याविशते शरीरी हुताशनं वायुरिवेन्धनस्थं ।
न चक्षुषा पश्यति रूपमात्मनो न पश्यति स्पर्शनमिन्द्रियाणां । न श्रोत्रलिङ्गं श्रवणेन दर्शनं तथा कृतं पश्यति तद्विन श्यति । ७४१०

श्रोत्रादीनि न पश्यन्ति स्वं स्वमात्मानमात्मना । सर्व्वज्ञः सर्व्वदर्शी च सर्व्वज्ञस्तानि पश्यति
यथा हिमवतः पार्श्वं पृष्ठं चन्द्रमसो यथा । न दृष्टपूर्व्वं मनुजैर्न च तन्नास्ति तावता ।
तद्वद्भूतेषु भूतात्मा सूक्ष्मो ज्ञानात्मवानसौ । अदृष्टपूर्व्वश्चक्षुर्भ्यां न चासौ नास्ति तावता ।
पश्यन्नपि यथा लक्ष्म जगत् सोमेन विन्दति । एवमस्ति न चोत्पन्नं न च तन्न परायणं ।
रूपवन्तमरूपत्वादुदयास्तमने बुधाः । धिया समनुपश्यन्ति तद्गताः सवितुर्गतिं । ७४१५
तथा बुद्धिप्रदीपेन दूरस्थं सुविपश्चितः । प्रत्यासन्नं निनीषन्ते ज्ञेयं ज्ञानाभिसंहितं ।
न हि खल्वनुपायेन कश्चिदर्थोऽभिसिध्यति । सूत्रजालैर्यथा मत्स्यान् बध्नन्ति जलजीविनः ।
मृगैर्मृगाणां ग्रहणं पक्षिणां पक्षिभिर्यथा । गजानाञ्च गजैरेवं ज्ञेयं ज्ञानेन गृह्यते ।
अहिरेव ह्यहेः पादान् पश्यतीति हि नः श्रुतं । तद्वन्मूर्त्तिषु मूर्त्तिस्थं ज्ञेयं ज्ञानेन पश्यति
नोत्सहन्ते यथा वेत्तुमिन्द्रियैरिन्द्रियाण्यपि । तथैवेह परा बुद्धिः परं बोध्यं न पश्यति । ७४२०
यथा चन्द्रो ह्यमावास्यामलिङ्गत्वान्न दृश्यते । न च नाशोऽस्य भवति तथा विद्धि शरीरिणं ।
क्षीणकोषो ह्यमावास्यां चन्द्रमा न प्रकाशते । तद्वन्मूर्त्तिविमुक्तोऽसौ शरीरी नोपलभ्यते ।
यथाकाशान्तरं प्राप्य चन्द्रमा भ्राजते पुनः । तद्वल्लिङ्गान्तरं प्राप्य शरीरी भ्राजते पुनः ।
जन्म वृद्धिः क्षयश्चास्य प्रत्यक्षेणोपलभ्यते । सा तु चान्द्रमसी वृत्तिर्न तु तस्य शरीरिणः ।
उत्पत्तिवृद्धिव्ययतो यथा स इति गृह्यते । चन्द्र एव त्वमावास्यां तथा भवति मूर्त्तिमान् । ७४२५
नोपसर्पद्विमुञ्चद्वा शशिनं दृश्यते तमः । विसृजंश्चोपसर्पंश्च तद्वत् पश्य शरीरिणं ।
यथा चन्द्रार्कसंयुक्तं तमस्तदुपलभ्यते । तद्वच्छरीरसंयुक्तः शरीरीत्युपलभ्यते ।
यथा चन्द्रार्कनिर्मुक्तः स राहुर्नोपलभ्यते । तद्वच्छरीरनिर्मुक्तः शरीरी नोपलभ्यते ।
यथा चन्द्रो ह्यमावास्यां नक्षत्रैर्युज्यते गतः । तद्वच्छरीरनिर्मुक्तः फलैर्युज्यति कर्म्मणः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि मनुवृहस्पतिसंवादे त्र्यधिकद्विशततोऽध्यायः ॥ २०३
॥ मनुरुवाच ॥ यथा व्यक्तमिदं शेते स्वप्ने चरति चेतनं । ज्ञानमिन्द्रियसंयुक्तं तद्वत् प्रेत्य भवाभवौ । ७४३०
यथाऽम्भसि प्रसन्ने तु रूपं पश्यति चक्षुषा । तद्वत् प्रसन्नेन्द्रियत्वाज्ज्ञेयं ज्ञानेन पश्यति ।
स एव लुलिते तस्मिन् यथा रूपं न पश्यति । तथेन्द्रियाकुलीभावे ज्ञेयं ज्ञानेन पश्यति ।
अबुद्धिरज्ञानकृता अबुद्ध्या दुष्यते मनः । दुष्टस्य मनसः पञ्च सम्प्रदुष्यन्ति मानसाः ।
अज्ञानतृप्तो विषयेष्ववगाढो न तृप्यते । अदृष्टवच्च भूतात्मा विषयेभ्यो निवर्त्तते ।
तर्षच्छेदो न भवति पुरुषस्येह कल्मषात् । निवर्त्तते तदा तर्षः पापमन्तगतं यदा । ७४३५

विषयेषु तु संसर्गाच्छाश्वतस्य तु संश्रयात् । मनसा चान्यथा काङ्क्षन् परं न प्रतिपद्यते ।
ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्म्मणः । यथादर्शतले प्रख्ये पश्यत्यात्मानमात्मनि ।
प्रसृतैरिन्द्रियैर्दुःखी तैरेव नियतैः सुखी । तस्मादिन्द्रियरूपेभ्यो यच्छेदात्मानमात्मना ।
इन्द्रियेभ्यो मनः पूर्व्वं बुद्धिः परतरा ततः । बुद्धेः परतरं ज्ञानं ज्ञानात् परतरं महत् ।
अव्यक्तात् प्रसृतं ज्ञानं ततो बुद्धिस्ततो मनः । मनः श्रोत्रादिभिर्युक्तं शब्दादीन् साधु पश्यति । ७४५०
यस्तांस्त्यजति शब्दादीन् सर्व्वांश्च व्यक्तयस्तथा । विमुञ्चेत् प्राकृतान् ग्रामांस्तान्मुक्त्वाऽमृतमश्नुते ।
उद्यन् हि सविता यद्वत् सृजते रश्मिमण्डलं । स एवास्तमुपागच्छंस्तदेवात्मनि यच्छति ।
अन्तरात्मा तथा देहमाविश्येन्द्रियरश्मिभिः । प्राप्येन्द्रियगुणान् पञ्च सोऽस्तमावृत्य गच्छति ।
प्रणीतं कर्म्मणा मार्गं नीयमानः पुनः पुनः । प्राप्नोत्ययं कर्म्मफलं प्रवृत्तं धर्म्ममात्मवित् ।
विषया विनिवर्त्तन्ते निराहारस्य देहिनः । रसवर्ज्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते । ७४५५
बुद्धिः कर्म्मगुणैर्हीना यदा मनसि वर्त्तते । तदा सम्पद्यते ब्रह्म तत्रैव प्रलयं गतं ।
अस्पर्शनमशृण्वानमनास्वादमदर्शनं । अघ्राणमवितर्कञ्च सत्त्वं प्रविशते परं ।
मनस्याकृतयो मग्ना मनस्त्वभिगतं मतिं । मतिस्त्वभिगता ज्ञानं ज्ञानञ्चाभिगतं परं ।
इन्द्रियैर्म्मनसः सिद्धिर्न बुद्धिं बुध्यते मनः । न बुद्धिर्बुध्यतेऽव्यक्तं सूक्ष्मं त्वेतानि पश्यति ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि मनुबृहस्पतिसंवादे चतुरधिकद्विशततोऽध्यायः ॥ २०४ ॥
॥ मनुरुवाच ॥ दुःखोपघाते शारीरे मानसे चाप्युपस्थिते । यस्मिन्न शक्यते कर्त्तुं यत्नस्तं नानुचिन्तयेत् । ७४६०
भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् । चिन्त्यमानं हि चाभ्येति भूयश्चापि प्रवर्त्तते ।
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः । एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् ।
अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः । आरोग्यं प्रियसंवासो गृध्येत्तत्र न पण्डितः ।
न जानपदिकं दुःखमेकः शोचितुमर्हति । अशोचन् प्रतिकुर्व्वीत यदि पश्येदुपक्रमं ।
सुखाद्बहुतरं दुःखं जीविते नास्ति संशयः । स्निग्धस्य चेन्द्रियार्थेषु मोहान्मरणमप्रियं । ७४६५
परित्यजति यो दुःखं सुखं वाऽप्युभयं नरः । अभ्येति ब्रह्म सोऽत्यन्तं न ते शोचन्ति पण्डिताः ।
दुःखमर्था हि युज्यन्ते पालनेन च ते सुखं । दुःखेन चाधिगम्यन्ते नाशमेषां न चिन्तयेत् ।
ज्ञानं ज्ञेयाभिनिर्वृत्तं विद्धि ज्ञानगुणं मनः । प्रज्ञाकरणसंयुक्तं ततो बुद्धिः प्रवर्त्तते
यदा कर्म्मगुणोपेता बुद्धिर्म्मनसि वर्त्तते । तदा प्रज्ञायते ब्रह्म ध्यानयोगसमाधिना ।
सेयं गुणवती बुद्धिर्गुणेष्वेवाभिवर्त्तते । अपरादभिनिःसृत्य गिरेः शृङ्गादिवोदकं । ७४७०
यदा निर्गुणमाप्नोति ध्यानं मनसि पूर्व्वजं । तदा प्रज्ञायते ब्रह्म निकषं निकषे यथा ।
मनस्त्वपहृतं पूर्व्वमिन्द्रियार्थनिदर्शकं । न समक्षगुणापेक्षि निर्गुणस्य निदर्शकं ।
सर्व्वाण्येतानि संवार्य्य द्वाराणि मनसि स्थितः । मनस्येकाग्रतां कृत्वा तत्परं प्रतिपद्यते ।
यथा महान्ति भूतानि निवर्त्तन्ते गुणक्षये । तथेन्द्रियाण्युपादाय बुद्धिर्म्मनसि वर्त्तते ।

यदा मनसि सा बुद्धिर्व्वर्त्ततेऽन्तरचारिणी । व्यवसायगुणोपेता तदा सम्पद्यते मनः । ७४७५
गुणवद्भिर्गुणोपेतं यदा ध्यानगुणं मनः । तदा सर्व्वान् गुणान् हित्वा निर्गुणं प्रतिपद्यते ।
अव्यक्तस्येह विज्ञाने नास्ति तुल्यं निदर्शनं । यत्र नास्ति पदन्यासः कस्तं विषयमाप्नुयात्
तपसा चानुमानेन गुणैर्जात्या श्रुतेन च । निनीषेत् परमं ब्रह्म विशुद्धेनान्तरात्मना ।
गुणहीनो हितं मार्गं वहिः समनुवर्त्तते । गुणाभावात् प्रकृत्या वा निस्तर्क्यं ज्ञेयसञ्ज्ञितं ।
नैर्गुण्याद्ब्रह्म चाप्नोति सगुणत्वान्निवर्त्तते । गुणप्रचारिणी बुद्धिर्हुताशन इवेन्धने । ७४८०
यथा पञ्च विमुक्तानि इन्द्रियाणि स्वकर्म्मभिः । तथा हि परमं ब्रह्म विमुक्तं प्रकृतेः परं ।
एवं प्रकृतितः सर्व्वे प्रवर्त्तन्ते शरीरिणः । निवर्त्तन्ते निवृत्तौ च स्वर्गं चैवोपयान्ति च ।
पुरुषः प्रकृतिर्बुद्धिर्व्विषयाश्चेन्द्रियाणि च । अहङ्कारोऽभिमानश्च समूहो भूतसंज्ञकः ।
एतस्याद्या प्रवृत्तिस्तु प्रधानात् सम्प्रवर्त्तते । द्वितीया मिथुनव्यक्तिमविशेषान्नियच्छति ।
धर्म्मादुत्कृष्यते श्रेयस्तथा श्रेयोऽप्यधर्म्मतः । रागवान् प्रकृतिं ह्येति विरक्तो ज्ञानवान् भवेत् । ७४८५
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि मनुवृहस्पतिसंवादे पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥
॥ मनुरुवाच ॥ यदा तैः पञ्चभिः पञ्च युक्तानि मनसा सह । अथ तद्द्रक्ष्यते ब्रह्म मणौ सूत्रमिवार्पितं ।
तदेव च यथा सूत्रं सुवर्णे वर्त्तते पुनः । मुक्तास्वथ प्रवालेषु मृण्मये राजते तथा ।
तद्वद्गोऽश्वमनुष्येषु तद्वद्धस्तिमृगादिषु । तद्वत्कीटपतङ्गेषु प्रसक्तात्मा स्वकर्म्मभिः ।
येन येन शरीरेण यद्यत् कर्म्म करोत्ययं । तेन तेन शरीरेण तत्तत्फलमुपाश्नुते ।
यथा ह्येकरसा भूमिरोषध्यर्थानुसारिणी । तथा कर्म्मानुगा बुद्धिरन्तरात्मानुदर्शिनी । ७४९०
ज्ञानपूर्व्वा भवेल्लिप्सा लिप्सापूर्व्वाऽभिसन्धिता । अभिसन्धिपूर्व्वकं कर्म्म कर्म्ममूलं ततः फलं ।
फलं कर्म्मात्मकं विद्यात् कर्म्म ज्ञेयात्मकं तथा । ज्ञेयं ज्ञानात्मकं विद्याज्ज्ञानं सदसदात्मकं ।
ज्ञानानाञ्च फलानाञ्च ज्ञेयानां कर्म्मणां तथा । क्षयान्ते यत्फलं दिव्यं ज्ञानं ज्ञेयप्रतिष्ठितं ।
महद्धि परमं भूतं यत् प्रपश्यन्ति योगिनः । अबुधास्तन्न पश्यन्ति ह्यात्मस्था गुणबुद्धयः ।
पृथिवीरूपतो रूपमपामिह महत्तरं । अद्भ्यो महत्तरं तेजस्तेजसः पवनो महान् । ७४९५
पवनाच्च महद्व्योम तस्मात् परतरं मनः । मनसो महती बुद्धिर्बुद्धेः कालो महान् स्मृतः ।
कालात् स भगवान् विष्णुर्यस्य सर्व्वमिदं जगत् । नादिर्न मध्यं नैवान्तस्तस्य देवस्य विद्यते ।
अनादित्वादमध्यत्वादनन्तत्वाच्च सोऽव्ययः । अत्येति सर्व्वदुःखानि दुःखं ह्यन्तवदुच्यते ।
तद्ब्रह्म परमं प्रोक्तं तद्धाम परमं पदं । तद्गत्वा कालविषयाद्विमुक्ता मोक्षमाश्रिताः ।
गुणेष्वेते प्रकाशन्ते निर्गुणत्वात्ततः परं । निवृत्तिलक्षणो धर्म्मस्तथाऽनन्त्याय कल्पते । ७५००
ऋचो यजूंषि सामानि शरीराणि व्यपाश्रिताः । जिह्वाग्रेषु प्रवर्त्तन्ते यत्नसाध्या विनाशिनः ।
न चैवमिष्यते ब्रह्म शरीराश्रयसम्भवं । न यत्नसाध्यं तद्ब्रह्म नादिमध्यं न चान्तवत् ।
ऋचामादिस्तथा साम्नां यजुषामादिरुच्यते । अन्तश्चादिमतां दृष्टो न त्वादिर्ब्रह्मणः स्मृतः ।

अनादित्वादनन्तत्वात्तदनन्तमथाव्ययं। अव्ययत्वाच्च निर्दुःखं द्वन्द्वाभावस्ततः परं।
अदृष्टतोऽनुपायाच्च प्रतिसन्धेश्च कर्म्मणः। न तेन मर्त्याः पश्यन्ति येन गच्छन्ति तत्परं। ७५०५
विषयेषु च संसर्गाच्छाश्वतस्य च दर्शनात्। मनसा चान्यदाकाङ्क्षन् परं न प्रतिपद्यते।
गुणान् यदिह पश्यन्ति तदिच्छन्त्यपरे जनाः। परं नैवाभिकाङ्क्षन्ति निर्गुणत्वाद्गुणार्थिनः।
गुणैर्यस्त्ववरैर्युक्तः कथं विद्यात् परान् गुणान्। अनुमानाद्धि गन्तव्यं गुणैरवयवैः परं।
सूक्ष्मेण मनसा विद्मो वाचा वक्तुं न शक्नुमः। मनो हि मनसा ग्राह्यं दर्शनेन च दर्शनं।
ज्ञानेन निर्म्मलीकृत्य बुद्धिं बुद्ध्या मनस्तथा। मनसा चेन्द्रियग्राममक्षरं प्रतिपद्यते। ७५१०
बुद्धिप्रहीणो मनसा समृद्धो निराशिषं निर्गुणमभ्युपैति। परन्त्यजन्तीह विलोड्यमाना हुताशनं वायुरिवेन्धनस्थं।
गुणादाने विप्रयोगे च तेषां मनः सदा बुद्धिपरावराभ्यां। अनेनैव विधिना सम्प्रवृत्तो गुणादाने ब्रह्मशरीरमेति।
अव्यक्तात्मा पुरुषो व्यक्तकर्म्मा सोऽव्यक्तत्वं गच्छति ह्यन्तकाले। तैरेवायं चेन्द्रियैर्व्वर्द्धमानैर्ग्लायद्भिर्व्वा वर्त्तते कामरूपः।
सर्व्वैरयञ्चेन्द्रियैः सम्प्रयुक्तो देहं प्राप्तः पञ्चभूताश्रयः स्यात्। नासामर्थ्याद्गच्छति कर्म्मणेह हीनस्तेन परमेणाव्ययेन।
पृथ्व्या नरः पश्यति नान्तमस्या ह्यन्तश्चास्या भविता चेति विद्धि। परं नयन्तीह विलोड्यमानं यथा प्लवं वायुरिवार्णवस्थं। ७५१५
दिवाकरो गुणमुपलभ्य निर्गुणो यथा भवेदपगतरश्मिमण्डलः। तथा ह्यसौ मुनिरिह निर्व्विशेषवान् स निर्गुणं प्रविशति ब्रह्म चाव्ययं।
अनागतं सुकृतवतां परां गतिं स्वयम्भुवं प्रभवनिधानमव्ययं। सनातनं यदमृतमव्ययं ध्रुवं विचार्य्य तत् परममृतत्वमश्नुते।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि मनुवृहस्पतिसंवादे षडधिकद्विशतोऽध्यायः॥ २०६॥
॥ युधिष्ठिर उवाच॥ पितामह महाप्राज्ञ पुण्डरीकाक्षमच्युतं। कर्त्तारमकृतं विष्णुं भूतानां प्रभवाप्ययं।
नारायणं हृषीकेशं गोविन्दमपराजितं। तत्त्वेन भरतश्रेष्ठ श्रोतुमिच्छामि केशवं।
॥ भीष्म उवाच॥ श्रुतोऽयमर्थो रामस्य जामदग्न्यस्य जल्पतः। नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च। ७५२०
असितो देवलस्तात वाल्मीकिश्च महातपाः। मार्कण्डेयश्च गोविन्दे कथयत्यद्भुतं महत्।
केशवो भरतश्रेष्ठ भगवानीश्वरः प्रभुः। पुरुषः सर्व्वमित्येव श्रूयते बहुधा विभुः।
किन्तु यानि विदुर्लोके ब्राह्मणाः शार्ङ्गधन्वनि। महात्मनि महाबाहो शृणु तानि युधिष्ठिर।
यानि चाहुर्म्मनुष्येन्द्र ये पुराणविदो जनाः। कर्म्माणि त्विह गोविन्दे कीर्त्तयिष्यामि तान्यहं।
महाभूतानि भूतात्मा महात्मा पुरुषोत्तमः। वायुर्ज्योतिस्तथा चापः खञ्च गाञ्चानुकल्पयन्। ७५२५
स सृष्ट्वा पृथिवीञ्चैव सर्व्वभूतेश्वरः प्रभुः। अप्स्वेव शयनञ्चक्रे महात्मा पुरुषोत्तमः।
सर्व्वतेजोमयस्तस्मिञ्छयानः पुरुषोत्तमः। सोऽग्रजं सर्व्वभूतानां सङ्कर्षणमकल्पयत्।
आश्रयं सर्व्वभूतानां मनसेतीह शुश्रुम। स धारयति भूतानि उभे भूतभविष्यती।
ततस्तस्मिन् महाबाहो प्रादुर्भूते महात्मनि। भास्करप्रतिमं दिव्यं नाभ्यां पद्ममजायत।
स तत्र भगवान्देवः पुष्करे भ्राजयन्दिशः। ब्रह्मा समभवत्तात सर्व्वभूतपितामहः। ७५३०

तस्मिन्नपि महाबाहो प्रादुर्भूते महात्मनि । तस्मात् पूर्व्वजो जज्ञे मधुर्नाम महासुरः ।
तमुग्रमुग्रकर्म्माणमुग्रं कर्म्म समास्थित । ब्रह्मणोऽपचितिं कुर्व्वन् जघान पुरुषोत्तमः ।
तस्य तात बधात् सर्व्वे देवदानवमानवाः । मधुसूदनमित्याहुर्वृषभं सर्व्वसात्वतां ।
ब्रह्मा ऽनुससृजे पुत्रान्मानसान्दक्षसत्तमान् । मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुं ।
मरीचिः काश्यपं तात पुत्त्रमग्र्यमग्रजः । मानसं जनयामास तनयं ब्रह्मवित्तमं । ७५४५
अङ्गुष्ठात् ससृजे ब्रह्मा मरीचेरपि पूर्व्वजं । सोऽभवद्भरतश्रेष्ठ दक्षो नाम प्रजापतिः ।
तस्य पूर्व्वमजायन्त दश तिस्रश्च भारत । प्रजापतेर्दुहितरस्तासां ज्येष्ठाभवद्दितिः ।
सर्व्वधर्म्मविशेषज्ञः पुण्यकीर्त्तिर्म्महायशाः । मारीचः काश्यपस्तात सर्व्वासामभवत् पतिः ।
उत्पाद्य तु महाभागस्तासामवरजा दश । ददौ धर्म्माय धर्म्मज्ञो दक्ष एव प्रजापतिः ।
धर्म्मस्य वसवः पुत्त्रा रुद्राश्चामिततेजसः । विश्वेदेवाश्च साध्याश्च मरुत्वन्तश्च भारत । ७५५०
अपराश्च यवीयस्यस्ताभ्योऽन्याः सप्तविंशतिः । सोमस्तासां महाभागः सर्व्वासामभवत् पतिः ।
इतरास्तु व्यजायन्त गन्धर्व्वांस्तुरगान् द्विजान् । गाश्च किम्पुरुषान्मत्स्यानुद्भिज्जांश्च वनस्पतीन् ।
आदित्यानदितिर्ज्जज्ञे देवश्रेष्ठान्महाबलान् । तेषां विष्णुर्व्वामनोऽभूद्गोविन्दश्चाभवत् प्रभुः ।
तस्य विक्रमणाच्चापि देवानां श्रीर्व्यवर्द्धत । दानवाश्च पराभूता दैतेयी चासुरी प्रजा ।
विप्रचित्तिप्रधानांश्च दानवानसृजद्दनुः । दितिस्तु सर्व्वानसुरान्महासत्त्वानजीजनत् । ७५५५
अहोरात्रञ्च कालञ्च यथर्त्तु मधुसूदनः । पूर्व्वाह्णञ्चापराह्णञ्च सर्व्वमेवान्वकल्पयत् ।
अध्याय सोऽसृजन्मेघांस्तथा स्थावरजङ्गमान् । पृथिवीं सोऽसृजद्विश्वां सहितां भूरितेजसा ।
ततः कृष्णो महाभागः पुनरेव युधिष्ठिर । ब्राह्मणानां शतं श्रेष्ठं मुखाद्देवासृजत् प्रभुः ।
बाहुभ्यां क्षत्त्रियशतं वैश्यानामूरुतः शतं । पद्भ्यां शूद्रशतञ्चैव केशवो भरतर्षभ ।
स एवञ्चतुरो वर्णान् समुत्पाद्य महातपाः । अध्यक्षं सर्व्वभूतानां धातारमकरोत् स्वयं । ७५६०
वेदविद्याविधातारं ब्रह्माणममितद्युतिं । भूतमातृगणाध्यक्षं विरूपाक्षञ्च सोऽसृजत् ।
शासितारञ्च पापानां पितॄणां समवर्त्तिनं । असृजत् सर्व्वभूतात्मा निधिपञ्च धनेश्वरं ।
यादसामसृजन्नाथं वरुणञ्च जलेश्वरं । वासवं सर्व्वदेवानामध्यक्षमकरोत् प्रभुः ।
यावद्यावदभूच्छ्रद्धा देहं धारयितुं नृणां । तावत्तावदजीवंस्ते नासीद्यमकृतं भयं ।
न चैषां मैथुनो धर्म्मो बभूव भरतर्षभ । सङ्कल्पादेव चैतेषामपत्यमुपपद्यते । ७५६५
ततस्त्रेतायुगे काले संस्पर्शाज्जायते प्रजा । न ह्यभून्मैथुनो धर्म्मस्तेषामपि जनाधिप ।
द्वापरे मैथुनो धर्म्मः प्रजानामभवन्नृप । तथा कलियुगे राजन् द्वन्द्वमापेदिरे जनाः ।
एष भूतपतिस्तात स्वध्यक्षश्च तथोच्यते । निरपेक्षांश्च कौन्तेय कीर्त्तयिष्यामि तच्छृणु ।
दक्षिणापथगामिन्यः सर्व्वे नरवरान्ध्रकाः । गुहाः पुलिन्दाः शवराश्चुचुका मद्रकैः सह ।
उत्तरापथजन्मानः कीर्त्तयिष्यामि तानपि । यौनकाम्बोजगान्धाराः किराता वर्व्वरैः सह । ७५७०

एते पापकृतस्तात चरन्ति पृथिवीमिमां। श्वपाकबलगृध्राणां स्वधर्म्माणो नराधिप।
नैते कृतयुगे तात चरन्ति पृथिवीमिमां। त्रेताप्रभृति वर्द्धन्ते ते जना भरतर्षभ।
ततस्तस्मिन् महाघोरे सन्ध्याकाल उपस्थिते। राजानः समसज्जन्त समासाद्येतरेतरं।
एवमेष कुरुश्रेष्ठ प्रादुर्भूतो महात्मणा। देवं देवर्षिराचष्ट नारदः सर्व्वलोकदृक्।
नारदोऽप्यथ कृष्णस्य परं मेने नराधिप। शाश्वतत्वं महाबाहो यथावद्भरतर्षभ। ७५६९
एवमेष महाबाहुः केशवः सत्यविक्रमः। अचिन्त्यः पुण्डरीकाक्षो नैष केवलमानुषः।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि सर्व्वभूतोत्पत्तिर्नाम सप्ताधिकद्विशतोऽध्यायः॥ २०७॥
॥ युधिष्ठिर उवाच॥ के पूर्व्वमासन् पतयः प्रजानां भरतर्षभ। के चर्षयो महाभागा दिक्षु प्रत्येकशः स्मृताः।
॥ भीष्म उवाच॥ श्रूयतां भरतश्रेष्ठ यन्मां त्वं परिपृच्छसि। प्रजानां पतयो येऽस्मिन् दिक्षु ये चर्षयः स्मृताः।
एकः स्वयम्भुर्भगवानाद्यो ब्रह्मा सनातनः। ब्रह्मणः सप्त वै पुत्रा महात्मानः स्वयम्भुवः।
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः। वशिष्ठश्च महाभागः सदृशो वै स्वयम्भुवा। ७५७०
सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः। अत ऊर्द्ध्वं प्रवक्ष्यामि सर्व्वानेव प्रजापतीन्।
अत्रिवंशे समुत्पन्नो ब्रह्मयोनिः सनातनः। प्राचीनवर्हिर्भगवांस्तस्मात् प्राचेतसो दश।
दशानां तनयस्त्वेको दक्षो नाम प्रजापतिः। तस्य द्वे नामनी लोके दक्षः क इति चोच्यते।
मरीचेः कश्यपः पुत्रस्तस्य द्वे नामनी स्मृते। अरिष्टनेमिरित्येके कश्यपेत्यपरे विदुः।
अत्रेश्चैवौरसः श्रीमान्राजा सोमश्च वीर्य्यवान्। सहस्रं यश्च दिव्यानां युगानां पर्य्युपासिता। ७५७५
अर्य्यमा चैव भगवान् ये चास्य तनया विभो। एते प्रदेशाः कथिता भुवनानां प्रभावनाः।
शशविन्दोश्च भार्य्याणां सहस्राणि दशाच्युत। एकैकस्यां सहस्रन्तु तनयानामभूत्तदा।
एवं शतसहस्राणि दश तस्य महात्मनः। पुत्त्राणाञ्च न ते कञ्चिदिच्छन्त्यन्यं प्रजापतिं।
प्रजामाचक्षते विप्राः पुराणाः शाशविन्दवीं। स वृष्णिवंशप्रभवो महावंशः प्रजापतेः।
एते प्रजानां पतयः समुद्दिष्टा यशस्विनः। अतः परं प्रवक्ष्यामि देवांस्त्रिभुवनेश्वरान्। ७५८०
भगोंऽशश्चार्य्यमा चैव मित्रोऽथ वरुणस्तथा। सविता चैव धाता च विवस्वांश्च महाबलः।
त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते। इत्येते द्वादशादित्याः कश्यपस्यात्मसम्भवाः।
नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनावपि। मार्त्तण्डस्यात्मजावेतावष्टमस्य महात्मनः।
ते च पूर्व्वं सुराश्चेति विविधाः पितरः स्मृताः। त्वष्टुश्चैवात्मजः श्रीमान् विश्वरूपो महायशाः।
अजैकपादहिर्ब्रध्नो विरूपाक्षोऽथ रैवतः। हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः। ७५८५
सावित्रश्च जयन्तश्च पिनाकी चापराजितः। पूर्व्वमेव महाभागा वसवोऽष्टौ प्रकीर्त्तिताः।
एत एवंविधा देवा मनोरेव प्रजापतेः। ते च पूर्व्वं सुराश्चेति द्विविधाः पितरः स्मृताः।
शीलयौवनतस्त्वन्यस्तथाऽन्यः सिद्धसाध्ययोः। ऋभवो मरुतश्चैव देवानाञ्चादितो गणाः।
एवमेते समाम्नाता विश्वेदेवास्तथाऽश्विनौ। आदित्याः क्षत्रियास्तेषां विशश्च मरुतस्तथा।

अश्विनौ तु स्मृतौ शूद्रौ तपस्युग्रे समास्थितौ । स्मृतास्त्वङ्गिरसो देवा ब्राह्मणा इति निश्चयः । ७५९०
इत्येतत् सर्व्वदेवानां चातुर्व्वर्ण्यं प्रकीर्त्तितं । एतान् वै प्रातरुत्थाय देवान् यस्तु प्रकीर्त्तयेत् ।
स्वजादन्यकृताच्चैव सर्व्वपापात् प्रमुच्यते । यवक्रीतोऽथ रैभ्यश्च अर्व्वावसुपरावसू ।
औशिजश्चैव कक्षीवान् बलश्चाङ्गिरसः स्मृतः । ऋषिर्मेधातिथेः पुत्रः कण्वो बर्हिषदस्तथा
त्रैलोक्यभावनास्तात प्राच्यां सप्तर्षयस्तथा । उन्मुचो विमुचश्चैव स्वस्त्यात्रेयश्च वीर्य्यवान् ।
प्रमुचश्चेध्मवाहश्च भगवांश्च दृढव्रतः । मित्रावरुणयोः पुत्रस्तथागस्त्यः प्रतापवान् । ७५९५
एते ब्रह्मर्षयो नित्यमाश्रिता दक्षिणां दिशं । उषङ्गुः कवषो धौम्यः परिव्याधश्च वीर्य्यवान् ।
एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः । अत्रेः पुत्रश्च भगवांस्तथा सारस्वतः प्रभुः ।
एते चैव महात्मानः पश्चिमामाश्रिता दिशं । आत्रेयश्च वसिष्ठश्च काश्यपश्च महानृषिः ।
गौतमोऽथ भरद्वाजो विश्वामित्रोऽथ कौशिकः । तथैव पुत्रो भगवानृचीकस्य महात्मनः ।
जमदग्निश्च सप्तैते उदीचीमाश्रिता दिशं । एते प्रतिदिशं सर्व्वे कीर्त्तितास्तिग्मतेजसः । ७६००
साक्षिभूता महात्मानो भुवनानां प्रभावनाः । एवमेते महात्मानः स्थिताः प्रत्येकशो दिशं ।
एतेषां कीर्त्तनं कृत्वा सर्व्वपापात् प्रमुच्यते । यस्यां यस्यां दिशि ह्येते तां दिशं शरणं गतः ।
मुच्यते सर्व्वपापेभ्यः स्वस्तिमांश्च गृहं व्रजेत् ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि दिशां स्वस्तिके अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥

॥ युधिष्ठिर उवाच ॥ पितामह महाप्राज्ञ युधि सत्यपराक्रम । श्रोतुमिच्छामि कार्त्स्न्येन कृष्णमव्ययमीश्वरं ।
यच्चास्य तेजः सुमहद्यच्च कर्म्म पुराकृतं । तन्मे सर्व्वं यथातत्त्वं ब्रूहि त्वं पुरुषर्षभ । ७६०५
तिर्य्यग्योनिगतो रूपं कथं धारितवान् प्रभुः । केन कार्य्यनिसर्गेण तन्माख्याहि महाबल ।
॥ भीष्म उवाच ॥ पुराऽहं मृगयां यातो मार्कण्डेयाश्रमे स्थितः । तत्रापश्यन्मुनिगणान् समासीनान् सहस्रशः ।
ततस्ते मधुपर्केण पूजाञ्चक्रुरथो मयि । प्रतिगृह्य च तां पूजां प्रत्यनन्दमृषीनहं ।
कथैषा कथिता तत्र कश्यपेन महर्षिणा । मनःप्रह्लादिनी दिव्या तामिहैकमनाः शृणु ।
पुरा दानवमुख्या हि क्रोधलोभसमन्विताः । बलेन मत्ताः शतशो नरकाद्या महासुराः । ७६१०
तथैव चान्ये बहवो दानवा युद्धदुर्म्मदाः । न सहन्ते स्म देवानां समृद्धिं तामनुत्तमां ।
दानवैरर्द्यमानास्तु देवा देवर्षयस्तथा । न शर्म्म लेभिरे राजन् विशमानास्ततस्ततः ।
पृथिवीमार्त्तरूपान्ते समपश्यन् दिवौकसः । दानवैरभिसंकीर्णां घोररूपैर्महाबलैः ।
भारार्त्तामपहृष्टाञ्च दुःखितां सन्निमज्जतीं । अथादितेयाः सन्त्रस्ता ब्रह्माणमिदमब्रुवन् ।
कथं शक्यामहे ब्रह्मन् दानवैरभिमर्द्दनं । स्वयम्भूस्तानुवाचेदं निसृष्टोऽत्र विधिर्मया । ७६१५
ते वरेणाभिसम्पन्ना बलेन च मदेन च । नावबुध्यन्ति संमूढा विष्णुमव्यक्तदर्शनं ।
वराहरूपिणं देवमधृष्यममरैरपि । एष वेगेन गत्वा हि यत्र ते दानवाधमाः ।
अन्तर्भूमिगता घोरा निवसन्ति सहस्रशः । शमयिष्यति तच्छ्रुत्वा जहृषुः सुरसत्तमाः ।

ततो विष्णुर्म्महातेजा वाराहं रूपमास्थितः। अन्तर्भूमिं सम्प्रविश्य जगाम दितिजान् प्रति।

दृष्ट्वा च सहिताः सर्व्वे दैत्याः सत्त्वममानुषं। प्रसह्य तरसा सर्व्वे सन्तस्थुः कालमोहिताः। ७६२०

ततस्ते समभिद्रुत्य वराहं जगृहुः समं। संक्रुद्धाश्च वराहं तं व्यकर्षन्त समन्ततः।

दानवेन्द्रा महाकाया महावीर्य्यबलोच्छ्रिताः। नाशक्नुवंश्च किञ्चित्ते तस्य कर्त्तुं तदा विभो।

ततोऽगच्छन् विस्मयन्ते दानवेन्द्रा भयं तथा। संशयं गतमात्मानं मेनिरे च सहस्रशः।

ततो देवाधिदेवः स योगात्मा योगसारथिः। योगमास्थाय भगवांस्तदा भरतसत्तम।

विननाद महानादं क्षोभयन् दैत्यदानवान्। सन्नादिता येन लोकाः सर्व्वाश्चैव दिशो दश। ७६२५

तेन सन्नादशब्देन लोकानां क्षोभ आगमत्। सन्त्रस्ताश्च भृशं लोके देवाः शक्रपुरोगमाः।

निर्व्विचेष्टं जगच्चापि बभूवातिभृशं तदा। स्थावरं जङ्गमञ्चैव तेन नादेन मोहितं।

ततस्ते दानवाः सर्व्वे तेन नादेन भीषिताः। पेतुर्गतासवश्चैव विष्णुतेजःप्रमोहिताः।

रसातलगतश्चापि वराहस्त्रिदशद्विषः। खुरैर्व्विदारयामास मांसमेदोऽस्थिसञ्चयान्।

नादेन तेन महता सनातन इति स्मृतः। पद्मनाभो महायोगी भूताचार्य्यः स भूतराट्। ७६३०

ततो देवगणाः सर्व्वे पितामहमुपाद्रवन्। तत्र गत्वा महात्मान ऊचुश्चैव जगत्पतिं।

नादोऽयं कीदृशो देव नैनं विद्म वयं प्रभो। कोऽसौ हि कस्य वा नादो येन विह्वलितं जगत्।

देवाश्च दानवाश्चैव मोहितास्तस्य तेजसा। एतस्मिन्नन्तरे विष्णुर्व्वाराहं रूपमास्थितः।

उदतिष्ठन्महाबाहो स्तूयमानो महर्षिभिः।

॥ पितामह उवाच ॥ निहत्य दानवपतीन् महावर्ष्मा महाबलः। एष देवो महायोगी भूतात्मा भूतभावनः। ७६३५

सर्व्वभूतेश्वरो योगी मुनिरात्मा तथात्मनः। स्थिरीभवत कृष्णोऽयं सर्व्वविघ्नविनाशनः।

कृत्वा कर्म्मातिसाध्वेतदशक्यममितप्रभः। समायातः स्वमात्मानं महाभागो महाद्युतिः।

पद्मनाभो महायोगी महात्मा भूतभावनः। न सन्तापो न भीः कार्य्या शोको वा सुरसत्तमाः।

विधिरेष प्रभावश्च कालः संक्षयकारकः। लोकान् धारयता तेन नादो मुक्तो महात्मना।

स एष हि महाबाहुः सर्व्वलोकनमस्कृतः। अच्युतः पुण्डरीकाक्षः सर्व्वभूतादिरीश्वरः। ७६४०

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि अन्तर्भूमिविक्रीडिते नवाधिकद्विशततोऽध्यायः॥ २०९ ॥

॥ युधिष्ठिर उवाच ॥ योगं मे परमं तात मोक्षस्य वद भारत। तमहं तत्त्वतो ज्ञातुमिच्छामि वदतांवर।

॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। संवादं मोक्षसंयुक्तं शिष्यस्य गुरुणा सह।

कश्चिद्ब्राह्मणमासीनमाचार्य्यमृषिसत्तमं। तेजोराशिं महात्मानं सत्यसन्धं जितेन्द्रियं।

शिष्यः परममेधावी श्रेयोऽर्थी सुसमाहितः। चरणावुपसंगृह्य स्थितः प्राञ्जलिरब्रवीत्।

उपासनात् प्रसन्नोऽसि यदि वै भगवन्मम। संशयो मे महान् कश्चित्तन्मे व्याख्यातुमर्हसि। ७६४५

कुतश्चाहं कुतश्च त्वं तत् सम्यग्ब्रूहि तत्परं। कथञ्च सर्व्वभूतेषु समेषु द्विजसत्तम।

सन्यवृत्ता निवर्त्तन्ते विपरीताः क्षयोदयाः । वेदेषु चापि यद्वाक्यं लौकिकं व्यापकञ्च यत् ।
एतद्विद्वन् यथातत्त्वं सर्व्वं व्याख्यातुमर्हसि ।
॥ गुरुरुवाच ॥ शृणु शिष्य महाप्राज्ञ ब्रह्म गुह्यमिदं परं । अध्यात्मं सर्व्वविद्यानामागमानाञ्च यद्वसु । ७७८०
वासुदेवः परमिदं विश्वस्य ब्रह्मणो मुखं । सत्यं ज्ञानमथो यज्ञस्तितिक्षा दम आर्ज्जवं ।
पुरुषं सनातनं विष्णुं यत्तं वेदविदो विदुः । सर्गप्रलयकर्त्तारमव्यक्तं ब्रह्म शाश्वतं ।
तदिदं ब्रह्म वार्ष्णेयमितिहासं शृणुष्व मे । ब्राह्मणो ब्राह्मणैः श्राव्यो राजन्यः क्षत्रियैस्तथा ।
वैश्यो वैश्यैस्तथा श्राव्यः शूद्रः शूद्रैर्महामनाः । माहात्म्यं देवदेवस्य विष्णोरमिततेजसः ।
अर्हस्त्वमसि कल्याणं वार्ष्णेयं शृणु यत्परं । कालचक्रमनाद्यन्तं भावाभावस्वलक्षणं ।
त्रैलोक्यं सर्व्वभूतेषु चक्रवत् परिवर्त्तते । यत्तदक्षरमव्यक्तममृतं ब्रह्म शाश्वतं । ७७८५
वदन्ति पुरुषव्याघ्र केशवं पुरुषर्षभं । पितॄन्देवानृषींश्चैव तथा वै यक्षराक्षसान् ।
नागासुरमनुष्यांश्च सृजते परमोऽव्ययः । तथैव वेदशास्त्राणि लोकधर्म्मांश्च शाश्वतान् ।
प्रलयं प्रकृतिं प्राप्य युगादौ सृजते पुनः । यथर्त्तावृतुलिङ्गानि नानारूपाणि पर्य्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु । अथ यद्यद्यदाभाति कालयोगाद्युगादिषु ।
तत्तदुत्पद्यते ज्ञानं लोकयात्राविधानजं । युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः । ७७९०
लेभिरे तपसा पूर्व्वमनुज्ञाताः स्वयम्भुवा । वेद विवेद भगवान् वेदाङ्गानि बृहस्पतिः ।
भार्गवो नीतिशास्त्रन्तु जगाद जगतो हितं । गान्धर्व्वं नारदो वेद भरद्वाजो धनुर्ग्रहं ।
देवर्षिचरितं गार्ग्यः कृष्णात्रेयश्चिकित्सितं । न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः ।
हेत्वागमसमाचारैर्यदुक्तं तदुपास्यतां । अनाद्यं तत्परं ब्रह्म न देवा नर्षयो विदुः ।
एकस्तद्वेद भगवान् धाता नारायणः प्रभुः । नारायणादृषिगणास्तथा मुख्याः सुरासुराः । ७७९५
राजर्षयः पुराणाश्च परमं दुःखभेषजं । पुरुषाधिष्ठितान् भावान् प्रकृतिः सूयते यदा ।
हेतुयुक्तमतः पूर्व्वं जगत् संपरिवर्त्तते । दीपादन्ये यथा दीपाः प्रवर्त्तन्ते सहस्रशः ।
प्रकृतिः सूयते तद्वदानन्त्यान्नापचीयते । अव्यक्तात् कर्म्मजा बुद्धिरहङ्कारं प्रसूयते ।
आकाशञ्चाप्यहङ्काराद्वायुराकाशसम्भवः । वायोस्तेजस्तथा चाप अद्भ्योऽथ वसुधोद्गता ।
मूलप्रकृतयोऽष्टौ ता जगदेतास्ववस्थितं । ज्ञानेन्द्रियाण्यतः पञ्च पञ्च कर्म्मेन्द्रियाण्यपि । ७८००
विषयाः पञ्च चैकञ्च विकारे षोडशं मनः । श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं ज्ञानेन्द्रियाण्यथ ।
पादौ पायुरुपस्थश्च हस्तौ वाक्कर्म्मणी अपि । शब्दः स्पर्शश्च रूपञ्च रसो गन्धस्तथैव च ।
विज्ञेयं व्यापकञ्चित्तं तेषु सर्व्वगतं मनः । रसज्ञाने तु जिह्वेयं व्याहृते वाक् तथोच्यते ।
इन्द्रियैर्व्विविधैर्युक्तं सर्व्वं व्यक्तं मनस्तथा । विद्यात्तु षोडशैतानि दैवतानि विभागशः ।
देहेषु ज्ञानकर्त्तारमुपासीनमुपासते । तद्वत् सोमगुणा जिह्वा गन्धस्तु पृथिवीगुणः । ७८०५

श्रोत्रं नभोगुणञ्चैव चक्षुरग्नेर्गुणन्तथा। स्पर्शं वायुगुणं विद्यात् सर्व्वभूतेषु सर्व्वदा।
मनः सत्त्वगुणं प्राहुः सत्त्वमव्यक्तजं तथा। सर्व्वभूतात्मभूतस्थं तस्माद्बुध्येत बुद्धिमान्।
एते भावा जगत् सर्व्वं वहन्ति सचराचरं। श्रिता विरजसं देवं यमाहुः प्रकृतेः परं।
नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितं। व्याप्य शेते महानात्मा तस्मात् पुरुष उच्यते।
अजरः सोऽमरश्चैव व्यक्ताव्यक्तोपदेशवान्। व्यापकः सगुणः सूक्ष्मः सर्व्वभूतगुणाश्रयः। ७६८०
यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान्। ज्ञानात्मानं तथा विद्यात् पुरुषं सर्व्वजन्तुषु।
श्रोत्रं वेदयते वेद्यं स शृणोति स पश्यति। कारणं तस्य देहोऽयं स कर्त्ता सर्व्वकर्म्मणां।
अग्निर्द्दारुगतो यद्वद्भिन्ने दारौ न दृश्यते। तथैवात्मा शरीरस्थो योगेनैवानुदृश्यते।
अग्निर्यथा ह्युपायेन मथित्वा दारु दृश्यते। तथैवात्मा शरीरस्थो योगेनैवात्र दृश्यते।
नदीष्वापो यथा युक्ता यथा सूर्य्ये मरीचयः। सन्ततत्वाद्यथा यान्ति तथा देहाः शरीरिणां। ७६८५
स्वप्नयोगे यथैवात्मा पञ्चेन्द्रियसमायुतः। देहमुत्सृज्य वै याति तथैवात्रोपलभ्यते।
कर्म्मणा बाध्यते पूर्व्वं कर्म्मणा चोपलभ्यते। कर्म्मणा नीयतेऽन्यत्र स्वकृतेन बलीयसा।
स तु देहाद्यथा देहं त्यक्त्वाऽन्यं प्रतिपद्यते। तथाऽन्यं सम्प्रवक्ष्यामि भूतग्रामं स्वकर्म्मजं।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वार्ष्णेयाध्यात्मे दशाधिकद्विशततोऽध्यायः॥ २१०॥
॥ भीष्म उवाच॥ चतुर्विधानि भूतानि स्थावराणि चराणि च। अव्यक्तप्रभवान्याहुरव्यक्तनिधनानि च।
अव्यक्तलक्षणं विद्यादव्यक्तात्मात्मकं मनः। यथाऽश्वत्थकणीकायामन्तर्भूतो महाद्रुमः। ७६९०
निष्पन्नो दृश्यते व्यक्तमव्यक्तात् सम्भवस्तथा। अभिद्रवत्ययस्कान्तमयो निश्चेतनं यथा।
स्वभावहेतुजा भावा यद्वदन्यदपीदृशं। तद्वदव्यक्तजा भावाः कर्त्तुः कारणलक्षणाः।
अचेतनाश्चेतयितुः कारणादभिसंहताः। न भूर्न खं द्यौर्भूतानि नर्षयो न सुरासुराः।
नान्यदासीदृते जीवमासेदुर्न तु संहतं। पूर्व्वं नित्यं सर्व्वगतं मनो हेतुमलक्षणं।
अज्ञानकर्म्मनिर्द्दिष्टमेतत् कारणलक्षणं। तत्कारणैर्हि संयुक्तं कार्य्यसंग्रहकारकं। ७६९५
येनैतद्वर्त्तते चक्रमनादिनिधनं महत्। अव्यक्तनाभं व्यक्तारं विकारपरिमण्डलं।
क्षेत्रज्ञाधिष्ठितं चक्रं स्निग्धाक्षं वर्त्तते ध्रुवं। स्निग्धत्वात्तिलवत् सर्व्वं चक्रेऽस्मिन् पीड्यते जगत्।
तिलपीडैरिवाक्रम्य भोगैरज्ञानसम्भवैः। कर्म्म तत् कुरुते तर्षादहङ्कारपरिग्रहः।
कार्य्यकारणसंयोगे स हेतुरुपपादितः। नाभ्येति कारणं कार्य्यं न कार्य्यं कारणं तथा।
कार्य्याणान्तूपकरणे कालो भवति हेतुमान्। हेतुयुक्ताः प्रकृतयो विकाराश्च परस्परं। ७७००
अन्योन्यमभिवर्त्तन्ते पुरुषाधिष्ठिताः सदा। राजसैस्तामसैर्भावैश्च्युतो हेतुबलान्वितः।
क्षेत्रज्ञमेवानुयाति पांशुर्व्वातेरितो यथा। न च तैः स्पृश्यते भावैर्न ते तेन महात्मना।
सरजस्कोऽरजस्कश्च नैव वायुर्भवेत्तथा। तथैतदन्तरं विद्यात् सत्त्वक्षेत्रज्ञयोर्बुधः।
अभ्यासात् स तथा युक्तो न गच्छेत् प्रकृतिं पुनः। सन्देहमेतमुत्पन्नमच्छिनद्भगवानृषिः।

तथा वार्त्तां समीक्षेत कृतलक्षणसम्मितां । बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः । ७७०५
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुनः ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वार्ष्णेयाध्यात्मे एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

॥ भीष्म उवाच ॥ प्रवृत्तिलक्षणो धर्म्मो यथा समुपपद्यते । तेषां विज्ञाननिष्ठानामन्यत्तत्त्वं न रोचते ।
दुर्ल्लभा वेदविद्वांसो वेदोक्तेषु व्यवस्थिताः । प्रयोजनमहत्त्वात्तु मार्गमिच्छन्ति संस्तुतं ।
सद्भिराचरितत्वात्तु वृत्तमेतदगर्हितं । इयं सा बुद्धिरन्येयं यया याति पराङ्गतिं ।
शरीरवानुपादत्ते मोहात् सर्व्वान् परिग्रहान् । क्रोधलोभादिभिर्भावैर्युक्तो राजसतामसैः । ७७१०
नाशुद्धमाचरेत्तस्मादभीप्सन् देहयापनं । कर्म्मणा विवरं कुर्व्वन्न लोकानाप्नुयाच्छुभान् ।
लोहयुक्तं यथा हेम विपक्वं न विराजते । तथा पक्वकषायाख्यं विज्ञानं न प्रकाशते ।
यश्चाधर्म्मं चरेल्लोभात् कामक्रोधावनुप्लवन् । धर्म्म्यं पन्थानमाक्रम्य सानुबन्धो विनश्यति ।
शब्दादीन् विषयांस्तस्मान्न संरागादयं व्रजेत् । क्रोधो हर्षो विषादश्च जायते हि परस्परात् ।
पञ्चभूतात्मके देहे सत्त्वे राजसतामसे । कमभिष्टुवते चायं कं वा क्रोशति किं वदन् । ७७१५
स्पर्शरूपरसाद्येषु सङ्गं गच्छन्ति बालिशाः । नावगच्छन्ति विज्ञानादात्मानं पार्थिवं गुणं ।
मृण्मयं शरणं यद्वन्मृदैव परिलिप्यते । पार्थिवोऽयं तथा देहो मृद्विकारान्न नश्यति ।
मधु तैलं पयः सर्पिर्म्मांसानि लवणं गुडः । धान्यानि फलमूलानि मृद्विकाराः सहाम्भसा ।
यद्वत् कान्तारमातिष्ठन्नौत्सुक्यं समनुव्रजेत् । ग्राम्यमाहारमादद्यादस्वाद्वपि हि यापनं ।
तद्वत् संसारकान्तारमातिष्ठन् श्रमतत्परः । यात्रार्थमद्यादाहारं व्याधितो भेषजं यथा । ७७२०
सत्यशौचार्ज्जवत्यागैर्व्वर्च्चसा विक्रमेण च । क्षान्त्या धृत्या च बुद्ध्या च मनसा तपसैव च ।
भावान् सर्व्वानुपावृत्तान् समीक्ष्य विषयात्मकान् । शान्तिमिच्छन्नदीनात्मा संयच्छेदिन्द्रियाणि च ।
सत्त्वेन रजसा चैव तमसा चैव मोहिताः । चक्रवत् परिवर्त्तन्ते ह्यज्ञानाज्जन्तवो भृशं ।
तस्मात् सम्यक् परीक्षेत दोषानज्ञानसम्भवान् । अज्ञानप्रभवं दुःखमहङ्कारं परित्यजेत् ।
महाभूतानीन्द्रियाणि गुणाः सत्त्वं रजस्तमः । त्रैलोक्यं सेश्वरं कर्म्म अहङ्कारे प्रतिष्ठितं । ७७२५
यथेह नियतः कालो दर्शयत्यार्त्तवान् गुणान् । तद्वद्भूतेष्वहङ्कारं विद्यात् कर्म्मप्रवर्त्तकं ।
संमोहकं तमो विद्यात् कृष्णमज्ञानसम्भवं । प्रीतिदुःखनिबद्धांश्च समस्तांस्त्रीनथो गुणान् ।
सत्त्वस्य रजसश्चैव तमसश्च निबोध तान् । प्रसादो हर्षजा प्रीतिरसन्देहो धृतिः स्मृतिः ।
एतान् सत्त्वगुणान् विद्यादिमान् राजसतामसान् । कामक्रोधौ प्रमादश्च लोभमोहौ भयं क्लमः ।
विषादशोकावरतिर्म्मानदर्पावनार्य्यता । दोषाणामेवमादीनां परीक्ष्य गुरुलाघवं । ७७३०
विमृशेदात्मसंस्थानमेकैकमनुसन्ततं ।

॥ युधिष्ठिर उवाच ॥ के दोषा मनसा त्यक्ताः के बुद्ध्या शिथिलीकृताः । के पुनः पुनरायान्ति के मोहादफला इव ।

केषां बलाबलं बुद्ध्वा हेतुभिर्विमृषेद्बुधः। एष मे संशयस्तात तन्मे ब्रूहि पितामह।
॥ भीष्म उवाच॥ दोषैर्मूलादवच्छिन्नैर्विशुद्धात्मा विमुच्यते। विनाशयति सम्भूतमयस्मयमयो यथा।
तथा कृतात्मा सहजैर्दोषैर्नश्यति तामसैः। राजसं तामसञ्चैव शुद्धात्मकमकल्मषं। ७८४९
तत् सर्व्वं देहिनां वीजं सत्त्वमात्मवतः समं। तस्मादात्मवता वर्ज्यं रजश्च तम एव च।
रजस्तमोभ्यां निर्म्मुक्तं सत्त्वं निर्म्मलतामियात्। अथवा मन्त्रवद्ब्रूयुरात्मा दानाय दुष्कृतं।
स वै हेतुरनादाने शुद्धधर्म्मानुपालने। रजसाऽधर्म्मयुक्तानि कार्य्याण्यपि समाप्नुते।
अर्थयुक्तानि चात्यर्थं कामान् सर्व्वांश्च सेवते। तमसा लोभयुक्तानि क्रोधजानि च सेवते।
हिंसाविहाराभिरतस्तन्द्री निद्रासमन्वितः। सत्त्वस्थः सात्त्विकान् भावान् शुद्धान् पश्यति संश्रितः। ७८५०
स देही विमलः श्रीमान् श्रद्धाविद्यासमन्वितः।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वार्ष्णेयाध्यात्मे द्वादशाधिकद्विशततोऽध्यायः॥ २१२ ॥
॥ भीष्म उवाच॥ रजसा साध्यते मोहस्तमसा भरतर्षभ। क्रोधलोभौ भयं दर्प एतेषां सादनाच्छुचिः।
परमं परमात्मानं देवमक्षयमव्ययं। विष्णुमव्यक्तसंस्थानं विभुं तं देवसत्तमं।
तस्य मायापिनद्धाङ्गा ज्ञानभ्रष्टा विचेतसः। मानवा ज्ञानसंमोहात्ततः क्रोधं प्रयान्ति वै।
क्रोधात् काममवाप्याथ लोभमोहौ च मानवाः। मानदर्पमहङ्कारमहङ्कारात्ततः क्रियाः। ७८५१
क्रियाभिः स्नेहसम्बन्धान् स्नेहाच्छोकमनन्तरं। सुखदुःखक्रियारम्भाज्जन्माजन्मकृतक्षणाः।
जन्मतो गर्भवासन्तु शुक्रशोणितसम्भवं। पुरीषमूत्रविक्लेदं शोणितप्रभवाविलं।
तृष्णाभिभूतैस्तैर्बद्धस्तानेवाभिपरिस्रवन्। संसारतन्त्रवाहिन्यस्तत्र बुद्ध्येत योषितः।
प्रकृत्या क्षेत्रभूतास्ता नराः क्षेत्रज्ञलक्षणाः। तस्मादेता विशेषेण न चाभीयुर्व्विपश्चितः।
कृत्या ह्येता घोररूपा मोहयन्त्यविचक्षणान्। रजस्यन्तर्हिता मूर्त्तिरिन्द्रियाणां सनातनी। ७८५०
तस्मात्तदात्मकाद्रागाद्बीजाज्जायन्ति जन्तवः। स्वदेहजानस्वसंज्ञान् यद्वदङ्गात् कृमींस्त्यजेत्।
स्वसंज्ञानस्वकांस्तद्वत् सुतसंज्ञान् कृमींस्त्यजेत्। शुक्रतो रसतश्चैव देहाज्जायन्ति जन्तवः।
स्वभावात् कर्म्मयोगाद्वा तानुपेक्षेत बुद्धिमान्। रजस्तमसि पर्य्यस्तं सत्त्वञ्च रजसि स्थितं।
ज्ञानाधिष्ठितमव्यक्तं बुद्ध्यहङ्कारलक्षणं। तद्बीजं देहिनामाहुस्तद्बीजं जीवसंज्ञितं।
कर्म्मणा कालयुक्तेन संसारपरिवर्त्तनं। रमत्ययं यथा स्वप्ने मनसा देहवानिव। ७८५५
कर्म्मगर्भैर्गुणैर्देही गर्भे तदुपलभ्यते। कर्म्मणा वीजभूतेन चोद्यते यद्यदिन्द्रियं।
जायते तदहङ्काराद्रागयुक्तेन चेतसा। शब्दरागाच्छ्रोत्रमस्य जायते भावितात्मनः।
रूपरागात्तथा चक्षुर्घ्राणं गन्धचिकीर्षया। स्पर्शने त्वक् तथा वायुः प्राणापानव्यपाश्रयः।
व्यानोदानौ समानश्च पञ्चधा देहयापनं। सञ्जातैर्ज्जायते गात्रैः कर्म्मजैर्व्व्रह्मणा वृतः।
दुःखाद्यन्तैर्दुःखमध्यैर्नरः शारीरमानसैः। दुःखं विद्यादुपादानादभिमानाच्च वर्द्धते। ७८६०
त्यागात्तेभ्यो निरोधः स्यान्निरोधज्ञो विमुच्यते। इन्द्रियाणां रजस्येव प्रलयप्रभवावुभौ।

परीक्ष्य सञ्चरेद्विद्वान् यथावच्छास्त्रचक्षुषा । ज्ञानेन्द्रियाणीन्द्रियार्थान्नोपसर्पन्नतर्षुलः ।
हीनश्च करणैर्देही न देहं पुनरर्हति ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वार्ष्णेयाध्यात्मे त्रयोदशाधिकद्विशततोऽध्यायः ॥ २१३ ॥

॥ भीष्म उवाच ॥ अथोपायं प्रवक्ष्यामि यथावच्छास्त्रचक्षुषा । तद्विज्ञानाच्चरन् राजन् प्राप्नुयात् परमां गतिं ।
सर्व्वेषामेव भूतानां पुरुषः श्रेष्ठ उच्यते । पुरुषेभ्यो द्विजानाहुर्द्विजेभ्यो मन्त्रदर्शिनः । ७०६५
सर्व्वभूतात्मभूतास्ते सर्व्वज्ञाः सर्व्वदर्शिनः । ब्राह्मणा वेदशास्त्रज्ञास्तत्त्वार्थगतनिश्चयाः ।
नेत्रहीनो यथा ह्येकः कृच्छ्राणि लभतेऽध्वनि । ज्ञानहीनस्तथा लोके तस्माज्ज्ञानविदोऽधिकाः ।
तांस्तानुपासते धर्म्मान् धर्म्मकामा यथागमं । न त्वेषामर्थसामान्यमन्तरेण गुणानिमान् ।
वाग्देहमनसां शौचं क्षमा सत्यं धृतिः स्मृतिः । सर्व्वधर्म्मेषु धर्म्मज्ञा ज्ञापयन्ति गुणान् शुभान् ।
यदिदं ब्रह्मणो रूपं ब्रह्मचर्य्यमिति स्मृतं । परन्तत्सर्व्वधर्म्मेभ्यस्तेन यान्ति परां गतिं । ७०७०
लिङ्गसंयोगहीनं यच्छब्दस्पर्शविवर्ज्जितं । श्रोत्रेण श्रवणञ्चैव चक्षुषा चैव दर्शनं ।
वाक्सम्भाषाप्रवृत्तं यत्तन्मनः परिवर्ज्जितं । बुद्ध्या चाध्यवसायीत ब्रह्मचर्य्यमकल्मषं ।
सम्यग्वृत्तिर्ब्रह्मलोकं प्राप्नुयान्मध्यमः सुरान् । द्विजाग्र्यो जायते विद्वान् कन्यसीं वृत्तिमास्थितः ।
सुदुष्करं ब्रह्मचर्य्यमुपायन्तत्र मे शृणु । सम्प्रवृत्तमुदीर्णञ्च निगृह्णीयाद्द्विजो रजः ।
योषितो न कथाः श्राव्या न निरीक्ष्या निरम्बराः । कथञ्चिद्दर्शनादासां दुर्ब्बलानाविशेद्रजः । ७०७५
रागोत्पन्नश्चरेत् कृच्छ्रमह्नस्त्रिःप्रविशेदपः । मग्नः स्वप्ने च मनसा त्रिर्जपेदघमर्षणं ।
पाप्मानं निर्द्दहेदेवमन्तर्भूतरजोमयं । ज्ञानयुक्तेन मनसा सन्ततेन विचक्षणः ।
कुणपामेध्यसंयुक्तं यद्वदच्छिद्रबन्धनं । तद्वद्देहगतं विद्यादात्मानं देहबन्धनं ।
वातपित्तकफान् रक्तं त्वङ्मांसं स्नायुमस्थि च । मज्जां देहं शिराजालैस्तर्पयन्ति रसा नृणां ।
दश विद्याद्धमन्योऽत्र पञ्चेन्द्रियगुणावहाः । याभिः सूक्ष्माः प्रजायन्ते धमन्योऽन्याः सहस्रशः । ७०८०
एवमेताः शिरानद्यो रसोदा देहसागरं । तर्पयन्ति यथाकालमापगा इव सागरं ।
मध्ये च हृदयस्यैका शिरा तत्र मनोवहा । शुक्रं सङ्कल्पजं नृणां सर्व्वगात्रैर्व्विमुञ्चति ।
सर्व्वगात्रप्रतापिन्यस्तस्या ह्यनुगताः शिराः । नेत्रयोः प्रतिपद्यन्ते वहन्त्यस्तैजसं गुणं ।
पयस्यन्तर्हितं सर्पिर्य्यद्वन्निर्म्मथ्यते खजैः । शुक्रं निर्म्मथ्यते तद्वद्देहसङ्कल्पजैः खजैः ।
स्वप्नेऽप्येवं यथाऽभ्येति मनः सङ्कल्पजं रजः । शुक्रं सङ्कल्पजं देहात् सृजत्यस्य मनोवहा । ७०८५
महर्षिर्भगवानत्रिर्व्वेद तच्छुक्रसम्भवं । त्रिबीजमिन्द्रदैवत्यं तस्मादिन्द्रियमुच्यते ।
ये वै शुक्रगतिं विद्युर्भूतसङ्करकारिकां । विरागा दग्धदोषास्ते नाप्नुयुर्द्देहसम्भवं ।
गुणानां साम्यमागत्य मनसैव मनोवहं । देहकर्म्मा नुदन् प्राणानन्तकाले विमुच्यते ।
भविता मनसो ज्ञानं मन एव प्रजायते । ज्योतिष्मद्विरजो नित्यं मन्त्रसिद्धं महात्मनां ।
तस्मात्तदभिघाताय कर्म्म कुर्य्यादकल्मषं । रजस्तमश्च हित्वेह यथेष्टां गतिमाप्नुयात् । ७०९०

तरुणाधिगतं ज्ञानं जरादुर्ब्बलतां गतं । विपक्कबुद्धिः कालेन आदत्ते मानसं बलं ।
सुदुर्गमिव पन्थानमतीत्य गुणबन्धनं । यथा पश्येत्तथा दोषानतीत्यामृतमश्नुते ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वार्ष्णेयाध्यात्मे चतुर्द्दशाधिकद्विशतोऽध्यायः ॥ ॥ २१४ ॥
॥ भीष्म उवाच ॥ दुरन्तेष्विन्द्रियार्थेषु सक्ताः सीदन्ति जन्तवः । ये त्वसक्ता महात्मानस्ते यान्ति परमां गतिं ।
जन्ममृत्युजरादुःखैर्व्याधिभिर्म्मानसक्लमैः । दृष्ट्वैव सन्ततं लोकं घटेन्मोक्षाय बुद्धिमान् ।
वाङ्मनोभ्यां शरीरेण शुचिः स्यादनहङ्कृतः । प्रशान्तो ज्ञानवान् भिक्षुर्निरपेक्षश्चरेत् सुखं । ७७९९
अथवा मनसः सङ्गं पश्यन् भूतानुकम्पया । तत्राप्युपेक्षां कुर्व्वीत ज्ञात्वा कर्म्मफलं जगत् ।
यत् कृतं स्याच्छुभं कर्म्म पापं वा यदि वाश्नुते । तस्माच्छुभानि कर्म्माणि कुर्य्याद्वाग्बुद्धिकर्म्मभिः ।
अहिंसा सत्यवचनं सर्व्वभूतेषु चार्ज्जवं । क्षमा चैवाप्रमादश्च यस्यैते स सुखी भवेत् ।
तस्मात् समाहितं बुद्ध्या मनो भूतेषु धारयेत् । यश्चैनं परमं धर्म्मं सर्व्वभूतसुखावहं ।
दुःखनिःसरणं वेद सर्व्वज्ञः स सुखी भवेत् । तस्मात् समाहितं बुद्ध्या मनो भूतेषु धारयेत् । ७८००
नापध्यायेन्न स्पृहयेन्नाबद्धं चिन्तयेदसत् । अथामोघप्रयत्नेन मनो ज्ञाने निवेशयेत् ।
वाचामोघप्रयोगेण मनोज्ञं तत् प्रवर्त्तते । विवक्षता च सद्वाक्यं धर्म्मं सूक्ष्ममवेक्षता ।
सत्यां वाचमहिंस्राञ्च वदेदनपवादिनीं । कल्कापेतामपरुषामनृशंसामपैशुनां ।
ईदृगल्पञ्च वक्तव्यमविक्षिप्तेन चेतसा । वाक्प्रबद्धो हि संसारो विरागाद्व्याहरेद्यदि ।
बुद्ध्याऽप्यनुगृहीतेन मनसा कर्म्म तामसं । रजोभूतैर्हि करणैः कर्म्मणि प्रतिपद्यते । ७८०५
स दुःखं प्राप्य लोकेऽस्मिन्नरकायोपपद्यते । तस्मान्मनोवाक्शरीरैराचरेद्धैर्य्यमात्मनः ।
प्रकीर्णमेष भारं हि यद्वद्धार्य्येत दस्युभिः । प्रतिलोमां दिशं बुद्ध्वा संसारमबुधास्तथा ।
तानेव च यथा दस्युः क्षिप्त्वा गच्छेच्छिवां दिशं । तथा रजस्तमःकर्म्माण्युत्सृज्य प्राप्नुयात् सुखं
निःसन्दिग्धमनीहो वै मुक्तः सर्व्वपरिग्रहैः । विविक्तचारी लघ्वाशी तपस्वी नियतेन्द्रियः ।
ज्ञानदग्धपरिक्लेशः प्रयोगरतिरात्मवान् । निष्प्रचारेण मनसा परं तदधिगच्छति । ७८१०
धृतिमानात्मवान् बुद्धिं निगृह्णीयादसंशयं । मनो बुद्ध्या निगृह्णीयाद्विषयान्मनसात्मनः ।
निगृहीतेन्द्रियस्यास्य कुर्व्वाणस्य मनो वशे । देवतास्तत् प्रकाशन्ते हृष्टा यान्ति तमीश्वरं ।
ताभिः संसक्तमनसो ब्रह्म तत् सम्प्रकाशते । एतैश्चापगतैः सत्त्वे ब्रह्मभूयाय कल्पते ।
अथवा न प्रकाशेत योगतन्त्रैरुपक्रमेत् । येन तन्त्रयतस्तन्त्रं वृत्तिः स्यात्तत्तदाचरेत् ।
कणकुल्माषपिण्याकशाकयावकशक्तवः । तथा मूलफलं भैक्ष्यं पर्य्यायेणोपयोजयेत् । ७८१५
आहारं नियमञ्चैव देशे काले च सात्त्विकं । तत् परीक्ष्यानुवर्त्तेत तत् प्रवृत्त्यनुपूर्व्वकं ।
प्रवृत्तं नोपरुन्धीत शनैरग्निमिवेन्धयेत् । ज्ञानान्वितं तथा ज्ञानमर्कवत् सम्प्रकाशते ।
ज्ञानाधिष्ठानमज्ञानं त्रीँल्लोकानधितिष्ठति । विज्ञानानुगतं ज्ञानमज्ञानेनापकृष्यते ।
पृथक्त्वात् सम्प्रयोगाच्च नासूयुर्व्वेद शाश्वतं । स तयोरपवर्गज्ञो वीतरागो विमुच्यते ।

वयोऽतीतो जरामृत्यू जित्वा ब्रह्म सनातनं । अमृतं तदवाप्नोति यत्तदक्षरमव्ययं । ७८२०

॥ इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वार्ष्णेयाध्यात्मे पञ्चदशाधिकद्विशततोऽध्यायः ॥ २१५ ॥

॥ भीष्म उवाच ॥ निष्कल्मषं ब्रह्मचर्य्यमिच्छता चरितुं सदा । निद्रा सर्व्वात्मना त्याज्या स्वप्नदोषानवेक्षता ।

स्वप्ने हि रजसा देही तमसा चाभिभूयते । देहान्तरमिवापन्नश्चरत्यपगतस्पृहः ।

ज्ञानाभ्यासाज्जागरणं जिज्ञासार्थमनन्तरं । विज्ञानाभिनिवेशात्तु जागरत्यनिशं सदा ।

अत्राह को न्वयं भावः स्वप्ने विषयवानिव । प्रलीनैरिन्द्रियैर्देही वर्त्तते देहवानिव ।

अत्रोच्यते यथा ह्येतद्वेद योगेश्वरो हरिः । तथैतदुपपन्नार्थं वर्णयन्ति महर्षयः । ७८२५

इन्द्रियाणां श्रमात् स्वप्नमाहुः सर्व्वगतं बुधाः । मनसस्तु प्रलीनत्वात्तत्तदाहुर्निदर्शनं ।

कार्य्यव्यासक्तमनसः सङ्कल्पो जाग्रतो ह्यपि । यद्वन्मनोरथैश्वर्य्यं स्वप्ने तद्वन्मनोगतं ।

संसाराणामसंख्यानां कामात्मा तदवाप्नुयात् । मनस्यन्तर्हितं सर्व्वं वेद सोत्तमपूरुषः ।

गुणानामपि यद्यत्तत् कर्म्मणा चाप्युपस्थितं । तत्तत् शंसन्ति भूतानि मनो यद्भावितं यथा ।

ततस्तमुपवर्त्तन्ते गुणा राजसतामसाः । सात्त्विका वा यथायोगमानन्तर्य्यफलोदयं । ७८३०

ततः पश्यत्यसंबुद्धो वातपित्तकफोत्तरान् । रजस्तमोगतैर्भावैस्तदप्याहुर्दुरत्ययं ।

प्रसन्नैरिन्द्रियैर्यद्यत् सङ्कल्पयति मानसं । तत्तत् स्वप्नेऽप्युपरते मनोदृष्टिर्निरीक्षते ।

व्यापकं सर्व्वभूतेषु वर्त्ततेऽप्रतिघं मनः । आत्मप्रभावात्तं विद्यात् सर्व्वा ह्यात्मनि देवताः ।

मनस्यन्तर्हितं द्वारं देहमास्थाय मानुषं । यत्तत्सदसदव्यक्तं स्वपित्यस्मिन्निदर्शनं ।

सर्व्वभूतात्मभूतस्थं तमध्यात्मगुणं विदुः । लिप्सेत मनसा यश्च सङ्कल्पादैश्वरं गुणं । ७८३५

आत्मप्रसादं तं विद्यात् सर्व्वा ह्यात्मनि देवताः । एवं हि तपसा युक्तमर्कवत्तमसः परं ।

त्रैलोक्यप्रकृतिर्देही तमसोऽन्ते महेश्वरः । तपो ह्यधिष्ठितं देवैस्तपोघ्नमसुरैस्तमः ।

एतद्देवासुरैर्गुप्तं तदाहुर्ज्ञानलक्षणं । सत्त्वं रजस्तमश्चेति देवासुरगुणान् विदुः ।

सत्त्वं देवगुणान् विद्यादितरावासुरौ गुणौ । ब्रह्म तत् परमं ज्ञानममृतं ज्योतिरक्षरं ।

ये विदुर्भावितात्मानस्ते यान्ति परमां गतिं । हेतुमच्छक्यमाख्यातुमेतावज्ज्ञानचक्षुषा । ७८४०

प्रत्याहारेण वा शक्यमक्षरं ब्रह्म वेदितुं ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वार्ष्णेयाध्यात्मे षोडशाधिकद्विशततोऽध्यायः ॥ २१६ ॥

॥ भीष्म उवाच ॥ न स वेद परं ब्रह्म यो न वेद चतुष्टयं । व्यक्ताव्यक्ते च यत्तत्त्वं सम्प्राप्तं परमर्षिणा ।

व्यक्तं मृत्युमुखं विद्यादव्यक्तममृतं पदं । प्रवृत्तिलक्षणं धर्म्ममृषिर्नारायणोऽब्रवीत् ।

तत्रैवावस्थितं सर्व्वं त्रैलोक्यं सचराचरं । निवृत्तिलक्षणं धर्म्ममव्यक्तं ब्रह्म शाश्वतं ।

प्रवृत्तिलक्षणं धर्म्मं प्रजापतिरथाब्रवीत् । प्रवृत्तिः पुनरावृत्तिर्निवृत्तिः परमा गतिः । ७८४५

तां गतिं परमामेति निवृत्तिपरमो मुनिः । ज्ञानतत्त्वपरो नित्यं शुभाशुभनिदर्शकः ।

तदेवमेतौ विज्ञेयावव्यक्तपुरुषावुभौ । अव्यक्तपुरुषाभ्यान्तु यत् स्यादन्यन्महत्तरं ।

तं विशेषमवेक्षेत विशेषेण विचक्षणः। अनाद्यन्तावुभावेतावलिङ्गौ चाप्युभावपि।
उभौ नित्यावविचलौ महद्भ्यश्च महत्तरौ। सामान्यमेतदुभयोरेवं ह्यन्यद्विशेषणं।
प्रकृत्या सर्गधर्म्मिण्या तथा त्रिगुणधर्म्मया। विपरीतमतो विद्यात् क्षेत्रज्ञस्य खलक्षणं। ७८५०
प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितं। अग्राह्यौ पुरुषावेतावलिङ्गत्वादसंहितौ।
संयोगलक्षणोत्पत्तिः कर्म्मणा गृह्यते यथा। करणैः कर्म्मनिर्वृत्तिः कर्त्ता यद्यद्विचेष्टते।
कीर्त्त्यते शब्दसंज्ञाभिः कोऽहमेषोऽप्यसाविति। उष्णीषवान् यथा वस्त्रैस्त्रिभिर्भवति संवृतः।
संवृतोऽयं तथा देही सत्त्वराजसतामसैः। तस्माच्चतुष्टयं वेद्यमेतैर्हेतुभिरावृतं।
यथा संज्ञो ह्ययं सम्यगन्तकाले न मुह्यति। श्रियं दिव्यामभिप्रेप्सुर्व्वर्ष्मवान् मनसा शुचिः। ७८५५
शारीरैरिन्द्रियैरुग्रैश्चरेन्निष्कल्मषं तपः। त्रैलोक्यं तपसा व्याप्तमन्तर्भूतेन भास्वता।
सूर्य्यश्च चन्द्रमाश्चैव भासतस्तपसा दिवि। प्रकाशस्तपसो ज्ञानं लोके संशब्दितं तपः।
रजस्तमोघ्नं यत्कर्म्म तपसस्तत् खलक्षणं। ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते।
वाङ्मनोनियमः सम्यङ्मानसं तप उच्यते। विधिज्ञेभ्यो द्विजातिभ्यो ग्राह्यमन्नं विशिष्यते।
आहारनियमेनास्य पाप्मा शाम्यति राजसः। वैमनस्यञ्च विषये यान्त्यस्य करणानि च। ७८६०
तस्मात्तन्मात्रमादद्याद्यावदत्र प्रयोजनं। अन्तकाले बलोत्कार्षाच्छनैः कुर्य्यादनातुरं।
एवं युक्तेन मनसा ज्ञानं यदुपपद्यते। रजोवर्ज्योऽप्ययं देही देहवाञ्छब्दवच्चरेत्।
कार्य्यैरव्याहतमतिर्वैराग्यात् प्रकृतिस्थिरः। आदेहादप्रमादाच्च देहान्ताद्विप्रमुच्यते।
हेतुयुक्तः सदा सर्गो भूतानां प्रलयस्तथा। परप्रत्ययसर्गे तु नियतिर्नानुवर्त्तते।
भावान्तप्रभवप्रज्ञा आसते ये विपर्य्ययं। धृत्या देहान् धारयन्तो बुद्धिसंक्षिप्तचेतसः। ७८६५
स्थानेभ्यो ध्वंसमानाश्च सूक्ष्मत्वात्तानुपासते। यथागमञ्च गत्वा वै बुद्ध्या तत्रैव बुद्ध्यते।
देहान्तं कश्चिदन्वास्ते भावितात्मा निराश्रयं। युक्तं धारणया सम्यक् सतः केचिदुपासते।
अभ्यस्यन्ति परं देवं विद्युत्संशब्दिताक्षरं। अन्तकाले ह्युपासन्ते तपसा दग्धकिल्बिषाः।
सर्व्व एते महात्मानो गच्छन्ति परमां गतिं। सूक्ष्मं विशेषणं तेषामवेक्षेच्छास्त्रचक्षुषा।
देहन्तु परमं विद्याद्विमुक्तमपरिग्रहं। अन्तरीक्षादन्यतरं धारणासक्तमानसं। ७८७०
मर्त्यलोकाद्विमुच्यन्ते विद्यासंसक्तचेतसः। ब्रह्मभूता विरजसस्ततो यान्ति पराङ्गतिं।
एवमेकायनं धर्म्ममाहुर्व्वेदविदो जनाः। यथाज्ञानमुपासन्तः सर्व्वे यान्ति परां गतिं।
कषायवर्ज्जितं ज्ञानं येषामुत्पद्यतेऽचलं। यान्ति तेऽपि परान् लोकान् विमुच्यन्ते यथाबलं।
भगवन्तमजं दिव्यं विष्णुमव्यक्तसंज्ञितं। भावेन यान्ति शुद्धा ये ज्ञानतृप्ता निराशिषः।
ज्ञात्वात्मस्थं हरिञ्चैव न निवर्त्तन्ति तेऽव्ययाः। प्राप्य तत् परमं स्थानं मोदन्तेऽक्षरमव्ययं। ७८७५
एतावदेतद्विज्ञानमेतदस्ति न चास्ति च। तृष्णाबद्धं जगत् सर्व्वं चक्रवत् परिवर्त्तते।
विसतन्तुर्यथैवायमन्तस्थः सर्व्वतो विसे। तृष्णातन्तुरनाद्यन्तस्तथा देहगतः सदा।

सूच्या सूत्रं यथा वस्त्रे संसारयति वायकः । तद्वत् संसारसूत्रं हि तृष्णासूच्या निबध्यते ।
विकारं प्रकृतिञ्चैव पुरुषञ्च सनातनं । यो यथावद्विजानाति स वितृष्णो विमुच्यते ।
प्रकाशं भगवानेतदृषिर्नारायणोऽमृतं । भूतानामनुकम्पार्थं जगाद जगतो गतिः । ७८८०

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वार्ष्णेयाध्यात्मे सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥

॥ युधिष्ठिर उवाच ॥ केन वृत्तेन वृत्तज्ञ जनको मिथिलाधिपः । जगाम मोक्षं मोक्षज्ञो भोगानुत्सृज्य मानुषान् ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । येन वृत्तेन वृत्तज्ञो जगाम सुमहत्सुखं ।
जनको जनदेवस्तु मिथिलायां जनाधिपः । और्द्ध्वदेहिकधर्म्माणामासीद्युक्तो विचिन्तने ।
तस्य स्म शतमाचार्य्या वसन्ति सततं गृहे । दर्शयन्तः पृथग्धर्म्मान्नानाश्रमनिवासिनः ।
स तेषां प्रेत्यभावे च प्रेत्यजातौ विनिश्चये । आगमस्थः स भूयिष्ठमात्मतत्त्वेन तुष्यति । ७८८५
तत्र पञ्चशिखो नाम कापिलेयो महामुनिः । परिधावन्महीं कृत्स्नां जगाम मिथिलामथ ।
सर्व्वसंन्यासधर्म्माणां तत्त्वज्ञानविनिश्चये । सुपर्य्यवसितार्थश्च निर्द्वन्द्वो नष्टसंशयः ।
ऋषीणामाहुरेकं यं कामादवसितं नृषु । शाश्वतं सुखमत्यन्तमन्विच्छन्तं सुदुर्लभं ।
यमाहुः कपिलं सांख्याः परमर्षिं प्रजापतिं । स मन्ये तेन रूपेण विस्मापयति हि स्वयं ।
आसुरेः प्रथमं शिष्यं यमाहुश्चिरजीविनं । पञ्चस्रोतसि यः सत्रमास्ते वर्षसहस्रिकं । ७८९०
तत्र चासीनमागम्य कापिलं मण्डलं महत् । पञ्चस्रोतसि निष्णातः पञ्चरात्रविशारदः ।
पञ्चज्ञः पञ्चकृत्पञ्च गुणः पञ्चशिखः स्मृतः । पुरुषावस्थमव्यक्तं परमार्थं न्यवेदयत् ।
इष्टसत्रेण सम्पृष्टो भूयश्च तपसासुरिः । क्षेत्रक्षेत्रज्ञयोर्व्यक्तिं बुबुधे देवदर्शनः ।
यत्तदेकाक्षरं ब्रह्म नानारूपं प्रदृश्यते । आसुरिर्मण्डले तस्मिन् प्रतिपेदे तदव्ययं ।
तस्य पञ्चशिखः शिष्यो मानुष्या पयसा भृतः । ब्राह्मणी कपिला नाम काचिदासीत् कुटुम्बिनी । ७८९५
तस्याः पुत्त्रत्वमागम्य स्त्रियाः स पिबति स्तनौ । ततः स कापिलेयत्वं लेभे बुद्धिञ्च नैष्ठिकीं ।
एतन्मे भगवानाह कापिलेयस्य सम्भवं । तस्य तत् कापिलेयत्वं सर्व्ववित्त्वमनुत्तमं ।
सामान्यं जनकं ज्ञात्वा धर्म्मज्ञो ज्ञानमुत्तमं । उपेत्य शतमाचार्य्यान्मोहयामास हेतुभिः ।
जनकस्त्वभिसंरक्तः कापिलेयानुदर्शनात् । उत्सृज्य शतमाचार्य्यान् पृष्ठतोऽनुजगाम तं ।
तस्मै परमकल्याय प्रणताय च धर्म्मतः । अब्रवीत् परमं मोक्षं यत्तत् सांख्येऽभिधीयते । ७९००
जातनिर्व्वेदमुक्त्वा स कर्म्मनिर्व्वेदमब्रवीत् । कर्म्मनिर्व्वेदमुक्त्वा च धर्म्मनिर्व्वेदमब्रवीत् ।
यदर्थं धर्म्मसंसर्गः कर्म्मणाञ्च फलोदयः । तमनाश्वासिकं मोहं विनाशि चलमध्रुवं ।
दृश्यमाने विनाशे च प्रत्यक्षे लोकसाक्षिके । आगमात् परमस्तीति ब्रुवन्नपि पराजितः ।
अनात्मा ह्यात्मनो मृत्युः क्लेशो मृत्युर्जरामयः । आत्मानं मन्यते मोहात्तदसम्यक् परं मतं ।
अथ चेदेवमप्यस्ति यल्लोके नोपपद्यते । अजरोऽयममृत्युश्च राजाऽसौ मन्यते यथा । ७९०५
अस्ति नास्तीति चाप्येतत्तस्मिन्नसति लक्षणे । किमधिष्ठाय तद्ब्रूयाल्लोकयात्राविनिश्चयं ।

प्रत्यक्षं ह्येतयोर्मूलं कृतान्तैतिह्ययोरपि। प्रत्यक्षेणागमो भिन्नः कृतान्तो वा न किञ्चन।
यत्र यत्रानुमानेऽस्मिन् कृतं भावयतोऽपि च। नान्यो जीवः शरीरस्य नास्तिकानां मते स्थितः।
रेता वटकणीकायां घृतपाकाधिवासनं। जातिः स्मृतिरयस्कान्तः सूर्य्यकान्तोऽम्बुभक्षणं।
प्रेत्यभूतात्ययश्चैव देवताद्युपयाचनं। मृते कर्म्मनिवृत्तिश्च प्रमाणमिति निश्चयः। ७९१०
न त्वेते हेतवः सन्ति ये केचिन्मूर्त्तिसंस्थिताः। अमर्त्यस्य हि मर्त्येन सामान्यं नोपलभ्यते।
अविद्या कर्म्मतृष्णा च केचिदाहुः पुनर्भवे। कारणं लोभमोहौ तु दोषाणाञ्च निषेवणं।
अविद्यां क्षेत्रमाहुर्हि कर्म्म बीजं तथा कृतं। तृष्णा संजननं स्नेह एष तेषां पुनर्भवः।
तस्मिन् गूढे च दग्धे च भिन्ने मरणधर्म्मिणि। अन्योऽस्माज्जायते देहस्तमाहुः सत्त्वसङ्क्षयं।
यदा स्वरूपतश्चान्यो जातितः शुभतोऽर्थतः। कथमस्मिन् स इत्येव सम्बन्धः स्यादसंहितं। ७९१५
एवं सति च का प्रीतिर्दानविद्यातपोबलैः। यदस्याचरितं कर्म्म सर्व्वमन्यत् प्रपद्यते।
अपि ह्ययमिहैवान्यैः प्राकृतैर्दुःखितो भवेत्। सुखितो दुःखितो वाऽपि दृश्यादृश्यविनिर्णयः।
तथा हि मुषलैर्हन्युः शरीरं तत् पुनर्भवेत्। पृथग्ज्ञानं यदन्यच्च येनैतन्नोपपद्यते।
ऋतुसंवत्सरौ तिथ्यः शीतोष्णेऽथ प्रियाप्रिये। यथाऽतीतानि पश्यन्ति तादृशः सत्त्वसङ्क्षयः।
जरयाऽभिपरीतस्य मृत्युना च विनाशिना। दुर्ब्बलं दुर्ब्बलं पूर्ब्बं गृहस्येव विनश्यति। ७९२०
इन्द्रियाणि मनो वायुः शोणितं मांसमस्थि च। आनुपूर्ब्ब्या विनश्यन्ति स्वन्धातुमुपयान्ति च।
लोकयात्राविघातश्च दानधर्म्मफलागमे। तदर्थं वेदशब्दाश्च व्यवहाराश्च लौकिकाः।
इति सम्यङ्मनस्येते बहवः सन्ति हेतवः। एतदस्तीदमस्तीति न किञ्चित् प्रतिदृश्यते।
तेषां विमृशतामेव तत्तत्समभिधावतां। क्वचिन्निविशते बुद्धिस्तत्र जीर्य्यति वृक्षवत्।
एवमर्थैरनर्थैश्च दुःखिताः सर्व्वजन्तवः। आगमैरपकृष्यन्ते हस्तिपैर्हस्तिनो यथा। ७९२५
अर्थांस्तथात्यन्तसुखावहांश्च लिप्सन्त एते बहवो विशुष्काः। महत्तरं दुःखमनुप्रपन्ना हित्वाऽऽमिषं मृत्युवशं प्रयान्ति।
विनाशिनो ह्यध्रुवजीवितस्य किं बन्धुभिर्मित्रपरिग्रहैश्च। विहाय यो गच्छति सर्व्वमेव क्षणेन गत्वा न निवर्त्तते च।
भूव्योमतोयानलवायवोऽपि सदा शरीरं प्रतिपालयन्ति। इतीदमालक्ष्य रतिः कुतो भवेद्विनाशिनोऽप्यस्य न कर्म्म विद्यते।
इदमनुपधिवाक्यमच्छलं परमनिरामयमात्मसाक्षिकं। नरपतिरभिवीक्ष्य विस्मितः पुनरनुयोक्तुमिदं प्रचक्रमे।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पञ्चशिखवाक्ये अष्टादशाधिकद्विशतोऽध्यायः॥ २१८॥
॥ भीष्म उवाच॥ जनको जनदेवस्तु ज्ञापितः परमर्षिणा। पुनरेवानुपप्रच्छ साम्पराये भवाभवौ। ७९३०
॥ जनक उवाच॥ भगवन् यदि न प्रेत्यसंज्ञा भवति कस्यचित्। एवं सति किमज्ञानं ज्ञानं किं वा करिष्यति।
सर्व्वमुच्छेदनिष्ठं स्यात् पश्य चैतद्द्विजोत्तम। अप्रमत्तः प्रमत्तो वा किं विशेषं करिष्यति।
असंसर्गो हि भूतेषु संसर्गो वा विनाशिषु। कस्मै क्रियेत कल्प्येत निश्चयः कोऽत्र तत्त्वतः।
॥ भीष्म उवाच॥ तमसा हि प्रतिच्छन्नं विभ्रान्तमिव चातुरं। पुनः प्रशमयन् वाक्यैः कविः पञ्चशिखोऽब्रवीत्।
उच्छेदनिष्ठा नेहास्ति भावनिष्ठा न विद्यते। अयं ह्यपि समाहारः शरीरेन्द्रियचेतसां। ७९३५

वर्त्तन्ते पृथगन्योन्यमप्यपाश्रित्य कर्म्मसु । धातवः पञ्चधा तोयं खं वायुर्ज्योतिषो धरा ।
ते स्वभावेन तिष्ठन्ति वियुज्यन्ते स्वभावतः । आकाशं वायुरूष्मा च स्नेहो यच्चापि पार्थिवः ।
एष पञ्चसमाहारः शरीरमपि नैकधा । ज्ञानमूष्मा च वायुश्च त्रिविधः कार्य्यसंग्रहः ।
इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना मनः । प्राणापानौ विकारश्च धातवश्चात्र निःसृताः
श्रवणं स्पर्शनं जिह्वा दृष्टिर्नासा तथैव च । इन्द्रियाणीति पञ्चैते चित्तपूर्व्वं गता गुणाः । ७९४०
तत्र विज्ञानसंयुक्ता त्रिविधा चेतना ध्रुवा । सुखदुःखेति यामाहुरदुःखामसुखेति च ।
शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च मूर्त्तयः । एते ह्यामरणात् पञ्च षड्गुणा ज्ञानसिद्धये ।
तेषु कर्म्मनिसर्गश्च सर्व्वतत्त्वार्थनिश्चयः । तमाहुः परमं शुक्रं बुद्धिरित्यव्ययं महत् ।
इमं गुणसमाहारमात्मभावेन पश्यतः । असम्यग्दर्शनैर्दुःखमनन्तं नोपशाम्यति ।
अनात्मेति च यद्दृष्टं तेनाहं न ममेत्यपि । वर्त्तते किमधिष्ठाना प्रसक्ता दुःखसन्ततिः । ७९४५
अत्र सम्यग्वधो नाम त्यागशास्त्रमनुत्तमं । शृणु यत्तव मोक्षाय भाष्यमाणं भविष्यति ।
त्याग एव हि सर्व्वेषां युक्तानामपि कर्म्मणां । नित्यं मिथ्याविनीतानां क्लेशो दुःखवहो मतः ।
द्रव्यत्यागे तु कर्म्माणि भोगत्यागे व्रतान्यपि । सुखत्यागे तपोयोगं सर्व्वत्यागे समापना ।
तस्य मार्गोऽयमद्वैधः सर्व्वत्यागस्य दर्शितः । विप्रहाणाय दुःखस्य दुर्गतिस्त्वन्यथा भवेत् ।
पञ्च ज्ञानेन्द्रियाण्युक्ता मनःषष्ठानि चेतसि । बलषष्ठानि वक्ष्यामि पञ्चकर्म्मेन्द्रियाणि तु । ७९५०
हस्तौ कर्म्मेन्द्रियं ज्ञेयमथ पादौ गतीन्द्रियं । प्रजनानन्दयोः शेफो निसर्गे पायुरिन्द्रियं ।
वाक् च शब्दविशेषार्थामिति पञ्चान्वितं विदुः । एवमेकादशैतानि बुद्ध्याशु विसृजेन्मनः ।
कर्णौ शब्दश्च चित्तञ्च त्रयः श्रवणसंग्रहे । तथा स्पर्शे तथा रूपे तथैव रसगन्धयोः ।
एवं पञ्चत्रिका ह्येते गुणास्तदुपलब्धये । येनायं त्रिविधो भावः पर्य्यायात् समुपस्थितः ।
सात्त्विको राजसश्चापि तामसश्चापि ते त्रयः । त्रिविधा वेदना येषु प्रसृताः सर्व्वसाधनाः । ७९५५
प्रहर्षः प्रीतिरानन्दः सुखं संशान्तचित्तता । अकुतश्चित् कुतश्चिद्वा चित्ततः सात्त्विको गुणः ।
अतुष्टिः परितापश्च शोको लोभस्तथाऽक्षमा । लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुतः ।
अविवेकस्तथा मोहः प्रमादः स्वप्नतन्द्रिता । कथञ्चिदपि वर्त्तन्ते विविधास्तामसा गुणाः ।
अत्र यत् प्रीतिसंयुक्तं काये मनसि वा भवेत् । वर्त्तते सात्त्विको भाव इत्यपेक्षेत तत्तथा ।
यत्त्वसन्तोषसंयुक्तमप्रीतिकरमात्मनः । प्रवृत्तं रज इत्येवं ततस्तदपि चिन्तयेत् । ७९६०
अथ यन्मोहसंयुक्तं काये मनसि वा भवेत् । अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत्
श्रोत्रं व्योमाश्रितं भूतं शब्दः श्रोत्रं समाश्रितः । नोभयं शब्दविज्ञाने विज्ञानस्येतरस्य वा ।
एवं त्वक्चक्षुषी जिह्वा नासिका चेति पञ्चमी । स्पर्शे रूपे रसे गन्धे तानि चेतो मनश्च तत् ।
स्वकर्म्मयुगपद्भावो दशस्वेतेषु तिष्ठति । चित्तमेकादशं विद्धि बुद्धिर्द्वादशमी भवेत् ।
तेषामयुगपद्भावे उच्छेदो नास्ति तामसः । आस्थितो युगपद्भावो व्यवहारः स लौकिकः । ७९६५

इन्द्रियाण्यपि सूक्ष्माणि दृष्ट्वा पूर्व्वश्रुतागमात्। चिन्तयन्नानुपर्य्येति त्रिभिरेवान्वितो गुणैः।
यत्तमोपहतं चित्तमाशुसंहारमध्रुवं। करोत्युपरमं काये तदाहुस्तामसं बुधाः।
यद्यदागमसंयुक्तं न कृच्छ्रमनुपश्यति। अथ तत्राप्युपादत्ते तमोव्यक्तमिवानृतं।
एवमेष प्रसंख्यातः स्वकर्म्मप्रत्ययो गुणः। कथञ्चिद्वर्त्तते सम्यक् केषाञ्चिद्वा निवर्त्तत।
एतदाहुः समाहारं क्षेत्रमध्यात्मचिन्तकाः। स्थितो मनसि यो भावः स वै क्षेत्रज्ञ उच्यते। ७९७०
एवं सति क उच्छेदः शाश्वतो वा कथं भवेत्। स्वभावाद्वर्त्तमानेषु सर्व्वभूतेषु हेतुतः।
यथार्णवगता नद्यो व्यक्तीर्जहति नाम च। नदाश्च तानि यच्छन्ति तादृशः सत्त्वसङ्क्षयः।
एवं सति कुतः संज्ञा प्रेत्यभावे पुनर्भवेत्। प्रतिसंमिश्रिते जीवे गृह्यमाणे च सर्व्वतः।
इमाश्च यो वेद विमोक्षबुद्धिमात्मानमन्विच्छति चाप्रमत्तः। न लिप्यते कर्म्मफलैरनिष्टैः पत्रं बिसस्येव जलेन सिक्तं।
दृढैश्च पाशैर्व्बहुभिर्व्विमुक्तः प्रजानिमित्तैरपि दैवतैश्च। यदा ह्यसौ सुखदुःखे जहाति मुक्तस्तदाऽग्र्यां गतिमेत्य लिङ्गः। ७९७५
श्रुतिप्रमाणागममङ्गलैश्च शेते जरामृत्युभयादभीतः। क्षीणे च पुण्ये विगते च पापे ततो निमित्ते च फले विनष्टे।
अलेपमाकाशमलिङ्गमेवमास्थाय पश्यन्ति महत्यसक्ताः। यथोर्णनाभिः परिवर्त्तमानस्तन्तुक्षये तिष्ठति पात्यमानः।
तथा विमुक्तः प्रजहाति दुःखं विध्वंसते लोष्ट इवाद्रिमिच्छन्। यथा रुरुः शृङ्गमयो पुराणं हित्वा त्वचं वाऽप्युरगो यथा च।
विहाय गच्छत्यनवेक्षमाणस्तथा विमुक्तो विजहाति दुःखं। द्रुमं यथा वाऽप्युदके पतन्तमुत्सृज्य पक्षी निपतत्यसक्तः।
तथा ह्यसौ सुखदुःखे विहाय मुक्तः परार्द्ध्यां गतिमेत्य लिङ्गः। ७९८०
अपि च भवति मैथिलेन गीतं नगरमुपाहितमग्निनाऽभिवीक्ष्य। न खलु मम हि दह्यतेऽत्र किञ्चित् स्वयमिदमाह किल स्म भूमिपालः।
इदममृतपदं निशम्य राजा स्वयमिह पञ्चशिखेन भाष्यमाणं। निखिलमभिसमीक्ष्य निश्चितार्थः परमसुखी विजहार वीतशोकः।
इमं यः पठति विमोक्षनिश्चयं महीपते सततमवेक्षते तथा। उपद्रवान्नानुभवत्यदुःखितः प्रमुच्यते कपिलमिवेत्य मैथिलः।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पञ्चशिखवाक्ये ऊनविंशत्यधिकद्विशततोऽध्यायः॥ २१९॥

॥ युधिष्ठिर उवाच ॥ किं कुर्व्वन् सुखमाप्नोति किं कुर्व्वन्दुःखमाप्नुयात्। किं कुर्व्वन्निर्भयो लोके सिद्धश्चरति भारत।
॥ भीष्म उवाच ॥ दममेव प्रशंसन्ति वृद्धाः श्रुतिसमाधयः। सर्व्वेषामेव वर्णानां ब्राह्मणस्य विशेषतः। ७९८५
नादान्तस्य क्रियासिद्धिर्यथावदुपपद्यते। क्रिया तपश्च सत्यञ्च दमे सर्व्वं प्रतिष्ठितं।
दमस्तेजो वर्द्धयति पवित्रं दम उच्यते। विपाप्मा निर्भयो दान्तः पुरुषो विन्दते महत्।
सुखं दान्तः प्रस्वपिति सुखञ्च प्रतिबुध्यते। सुखं लोके विपर्य्येति मनश्चास्य प्रसीदति।
तेजो दमेन ध्रियते तन्न तीक्ष्णोऽधिगच्छति। अमित्रांश्च बहून्नित्यं पृथगात्मनि पश्यति।
क्रव्याद्भ्य इव भूतानामदान्तेभ्यः सदा भयं। तेषां विप्रतिषेधार्थं राजा सृष्टः स्वयम्भुवा। ७९९०
आश्रमेषु च सर्व्वेषु दम एव विशिष्यते। यच्च तेषु फलं धर्म्मे भूयो दान्ते तदुच्यते।
तेषां लिङ्गानि वक्ष्यामि येषां समुदयो दमः। अकार्पण्यमसंरम्भः सन्तोषः श्रद्दधानता।

अक्रोध आर्ज्जवं नित्यं नातिवादोऽभिमानिता । गुरुपूजाऽनसूया च दया भूतेष्वपैशुनं ।
जनवादमृषावादस्तुतिनिन्दाविवर्ज्जनं । साधुकामश्च स्पृहयेन्नायतिं प्रत्ययेषु च ।
अवैरकृत्सूपचारः समो निन्दाप्रशंसयोः । सुवृत्तः शीलसम्पन्नः प्रसन्नात्मात्मवान् प्रभुः । ७९९५
प्राप्य लोके च सत्कारं स्वर्गं वै प्रेत्य गच्छति । दुर्गमं सर्व्वभूतानां प्रापयन्मोदते सुखी ।
सर्व्वभूतहिते युक्तो न स्म यो द्विषते जनं । महाह्रद इवाक्षोभ्यः प्रज्ञातृप्तः प्रसीदति ।
अभयं यस्य भूतेभ्यः सर्व्वेषामभयं यतः । नमस्यः सर्व्वभूतानां दान्तो भवति बुद्धिमान् ।
न हृष्यति महत्यर्थे व्यसने च न शोचति । स वै परिमितप्रज्ञः स दान्तो द्विज उच्यते ।
कर्म्मभिः श्रुतसम्पन्नः सद्भिराचरितः शुचिः । सदैव दमसंयुक्तस्तस्य भुङ्क्ते महाफलं । ८०००
अनसूया क्षमा शान्तिः सन्तोषः प्रियवादिता । सत्यं दानमनायासो नैष मार्गो दुरात्मनां ।
कामक्रोधौ च लोभश्च परस्येर्ष्या विकत्थना । कामक्रोधौ वशे कृत्वा ब्रह्मचारी जितेन्द्रियः ।
विक्रम्य घोरे तमसि ब्राह्मणः शंसितव्रतः । कालाकाङ्क्षी चरेल्लोकान्निरपाय इवात्मवान् ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि दमप्रशंसायां विंशत्यधिकद्विशततोऽध्यायः ॥ २२० ॥
॥ युधिष्ठिर उवाच ॥ द्विजातयो व्रतोपेता यदिदं भुञ्जते हविः । अन्नं ब्राह्मणकामाय कथमेतत् पितामह ।
॥ भीष्म उवाच ॥ अवेदोक्तव्रतोपेता भुञ्जानाः कार्य्यकारिणः । वेदोक्तेषु च भुञ्जाना व्रतलुप्ता युधिष्ठिर । ८००५
॥ युधिष्ठिर उवाच ॥ यदिदं तप इत्याहुरुपवासं पृथग्जनाः । एतत्तपो महाराज उताहो किं तपो भवेत् ।
॥ भीष्म उवाच ॥ मासपक्षोपवासेन मन्यन्ते यत्तपो जनाः । आत्मतन्त्रोपघातस्तु न तपस्तत् सतां मतं ।
त्यागश्च सन्नतिश्चैव शिष्यते तप उत्तमं । सदोपवासी स भवेद्ब्रह्मचारी सदा भवेत् ।
मुनिश्च स्यात् सदा विप्रो दैवतश्च सदा भवेत् । कुटुम्बिको धर्म्मकामः सदाऽस्वप्नश्च भारत ।
अमांसादी सदा च स्यात् पवित्रश्च सदा भवेत् । अमृताशी सदा च स्याद्दैवतातिथिपूजकः । ८०१०
विघसाशी सदा च स्यात् सदा चैवातिथिव्रतः । श्रद्दधानः सदा च स्याद्दैवतद्विजपूजकः ।
॥ युधिष्ठिर उवाच ॥ कथं सदोपवासी स्याद्ब्रह्मचारी कथं भवेत् । विघसाशी कथञ्च स्यात् सदा चैवातिथिव्रतः ।
॥ भीष्म उवाच ॥ अन्तरा प्रातराशञ्च सायमाशन्तथैव च । सदोपवासी स भवेद्यो न भुङ्क्तेऽन्तरा पुनः ।
भार्य्यां गच्छन् ब्रह्मचारी ऋतौ भवति वै द्विजः । ऋतवादी भवेन्नित्यं ज्ञाननित्यश्च यो नरः ।
न भक्षयेद्वृथामांसममांसाशी भवत्यपि । दाननित्यः पवित्रश्च अस्वप्नश्च दिवाऽस्वपन् । ८०१५
भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु सदा नरः । अमृतं केवलं भुङ्क्ते इति विद्धि युधिष्ठिर ।
अभुक्तवत्सु नाश्नानः सततं यस्तु वै द्विजः । अभोजनेन तेनास्य जितः स्वर्गो भवत्युत ।
देवताभ्यः पितृभ्यश्च भृत्येभ्योऽतिथिभिः सह । अवशिष्टन्तु योऽश्नाति तमाहुर्विघसाशिनं ।
तेषां लोका ह्यपर्य्यन्ताः सदने ब्रह्मणा सह । उपस्थिताश्चाप्सरोभिः परियान्ति दिवौकसः ।
देवताभिश्च ये सार्द्धं पितृभिश्चोपभुञ्जते । रमन्ते पुत्त्रपौत्त्रैश्च तेषां गतिरनुत्तमा । ८०२०
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि अमृतप्राश्निके एकविंशत्यधिकद्विशततोऽध्यायः ॥ २२१ ॥

॥ युधिष्ठिर उवाच ॥ यदिदं कर्म्म लोकेऽस्मिन् शुभं वा यदि वाऽशुभं । पुरुषं योजयत्येव फलयोगेन भारत ।
कर्त्ताऽस्ति तस्य पुरुष उताहो नेति संशयः । एतदिच्छामि तत्त्वेन त्वत्तः श्रोतुं पितामह ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । प्रह्लादस्य च संवादमिन्द्रस्य च युधिष्ठिर ।
असक्तं धुतपाप्मानं कुले जातं बहुश्रुतं । अस्तब्धमनहङ्कारं सत्त्वस्थं समये रतं ।
तुल्यनिन्दास्तुतिं दान्तं शून्यागारनिवासिनं । चराचराणां भूतानां विदितप्रभवाव्ययं । ८०२५
अक्रुध्यन्तमहृष्यन्तमप्रियेषु प्रियेषु च । काञ्चने वाऽथ लोष्टे वा उभयोः समदर्शनं ।
आत्मनि श्रेयसि ज्ञाने धीरं निश्चितनिश्चयं । परावरज्ञं भूतानां सर्व्वज्ञं समदर्शनं ।
शक्रः प्रह्लादमासीनमेकान्ते संयतेन्द्रियं । बुभुत्समानस्तत्प्रज्ञामभिगम्येदमब्रवीत् ।
यैः कश्चित् सम्मतो लोके गुणैः स्यात् पुरुषो नृप । भवत्यनपगान् सर्व्वांस्तान् गुणान् लक्षयामहे ।
अथ ते लक्ष्यते बुद्धिः समा बालजनैरिह । आत्मानं मन्यमानः सन् श्रेयः किमिह मन्यसे । ८०३०
बद्धः पाशैश्च्युतः स्थानाद्द्विषतां वशमागतः । श्रिया विहीनः प्रह्लाद शोचितव्ये न शोचसि ।
प्रज्ञालाभात्तु दैतेय उताहो धृतिमत्तया । प्रह्लाद सुस्थरूपोऽसि पश्यन् व्यसनमात्मनः ।
इति सञ्चोदितस्तेन धीरो निश्चितनिश्चयः । उवाच श्लक्ष्णया वाचा स्वां प्रज्ञामनुवर्णयन् ।
॥ प्रह्लाद उवाच ॥ प्रवृत्तिञ्च निवृत्तिञ्च भूतानां यो न बुध्यते । तस्य स्तम्भो भवेद्बाल्यान्नास्ति स्तम्भोऽनुपश्यतः ।
स्वभावात् सम्प्रवर्त्तन्ते निवर्त्तन्ते तथैव च । सर्व्वे भावास्तथाऽभावाः पुरुषार्थो न विद्यते । ८०३५
पुरुषार्थस्य चाभावे नास्ति कश्चिच्च कारकः । स्वयं न कुर्व्वतस्तस्य जातु मानो भवेदिह ।
यस्तु कर्त्तारमात्मानं मन्यते साध्वसाधु वा । तस्य दोषवती प्रज्ञा अतत्त्वज्ञेति मे मतिः ।
यदि स्यात् पुरुषः कर्त्ता शक्रात्मश्रेयसे ध्रुवं । आरम्भास्तस्य सिद्ध्येयुर्न तु जातु पराभवेत् ।
अनिष्टस्य हि निर्वृत्तिरनिर्वृत्तिः प्रियस्य च । लक्ष्यते यतमानानां पुरुषार्थस्ततः कुतः ।
अनिष्टस्याभिनिर्वृत्तिमिष्टसंवृत्तिमेव च । अप्रयत्नेन पश्यामः केषाञ्चित्तत् स्वभावतः । ८०४०
प्रतिरूपतराः केचिद्दृश्यन्ते बुद्धिमत्तराः । विरूपेभ्योऽल्पबुद्धिभ्यो लिप्समाना धनागमं ।
स्वभावप्रेरिताः सर्व्वे निविशन्ते गुणा यदा । शुभाशुभास्तदा तत्र कस्य किं मानकारणं ।
स्वभावादेव तत् सर्व्वमिति मे निश्चिता मतिः । आत्मप्रतिष्ठा प्रज्ञा वा मम नास्ति ततोऽन्यथा ।
कर्म्मजन्त्विह मन्यन्ते फलयोगं शुभाशुभं । कर्म्मजं विषयं कृत्स्नमहं वक्ष्यामि तच्छृणु ।
यथा वेदयते कश्चिदोदनं वायसोऽश्नदन् । एवं सर्व्वाणि कर्म्माणि स्वभावस्यैव लक्षणं । ८०४५
विकारानेव यो वेद न वेद प्रकृतिं परां । तस्य स्तम्भो भवेद्बाल्यान्नास्ति स्तम्भोऽनुपश्यतः ।
स्वभावभाविनो भावान् सर्व्वानेवेह निश्चयात् । बुध्यमानस्य दर्पो वा मानो वा किं करिष्यति ।
वेद धर्म्मविधिं कृत्स्नं भूतानाञ्चाप्यनित्यतां । तस्माच्छक्र न शोचामि सर्व्वं ह्येवेदमन्तवत् ।
निर्म्ममो निरहङ्कारो निराशीर्मुक्तबन्धनः । स्वस्थो व्यपेतः पश्यामि भूतानां प्रभवाप्ययौ ।
कृतप्रज्ञस्य दान्तस्य वितृष्णस्य निराशिषः । नायासो विद्यते शक्र पश्यतो लोकमव्ययं । ८०५०

प्रकृतौ च विकारे च न मे प्रीतिर्न च द्विषे । द्वेष्टारञ्च न पश्यामि यो मामद्य ममायते ।
नोर्द्ध्वं नावाङ् न तिर्य्यञ्च न क्वचिच्छक्र कामये । न हि ज्ञेये न विज्ञाने न ज्ञाने शर्म्म विद्यते ।
॥ शक्र उवाच ॥ येनैषा लभ्यते प्रज्ञा येन शान्तिरवाप्यते । प्रब्रूहि तमुपायं मे सम्यक् प्रह्राद पृच्छतः ।
॥ प्रह्राद उवाच । आर्ज्जवेनाप्रमादेन प्रसादेनात्मवत्तया । वृद्धशुश्रूषया शक्र पुरुषो लभते महत् ।
स्वभावाल्लभते प्रज्ञां शान्तिमेति स्वभावतः । स्वभावादेव तत् सर्व्वं यत्किञ्चिदनुपश्यसि । ८०५५
इत्युक्तो दैत्यपतिना शक्रो विस्मयमागमत् । प्रीतिमांश्च तदा राजंस्तद्वाक्यं प्रत्यपूजयत् ।
स तदाऽभ्यर्च्च्य दैत्येन्द्रं त्रैलोक्यपतिरीश्वरः । असुरेन्द्रमुपामन्त्र्य जगाम स्वं निवेशनं ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शक्रप्रह्रादसंवादे द्वाविंशत्यधिकद्विशततोऽध्यायः ॥ २२२ ॥
॥ युधिष्ठिर उवाच ॥ यया बुद्ध्या महीपालो भ्रष्टश्रीर्व्विचरेन्महीं । कालदण्डविनिष्पिष्टस्तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । वासवस्य च संवादं बलेर्व्वैरोचनस्य च ।
पितामहमुपागम्य प्रणिपत्य कृताञ्जलिः । सर्व्वानेवासुरान् जित्वा बलिं पप्रच्छ वासवः । ८०६०
यस्य स्म ददतो वित्तं न कदाचन हीयते । तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिं ।
स वायुर्व्वरुणश्चैव स रविः स च चन्द्रमाः । सोऽग्निस्तपति भूतानि जलञ्च स भवत्युत ।
तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिं । स एव ह्यस्तमयते स स्म विद्योतते दिशः ।
स वर्षति स्म वर्षाणि यथाकालमतन्द्रितः । तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिं ।
॥ ब्रह्मोवाच ॥ नैतत्ते साधु मघवन् यदेनमनुपृच्छसि । पृष्टस्तु नानृतं ब्रूयात्तस्माद्वक्ष्यामि ते बलिं । ८०६५
उष्ट्रेषु यदि वा गोषु खरेष्वश्वेषु वा पुनः । वरिष्ठो भविता जन्तुः शून्यागारे शचीपते ।
॥ शक्र उवाच ॥ यदि स्म बलिना ब्रह्मन् शून्यागारे समेयिवान् । हन्यामेनं न वा हन्यां तद्ब्रह्मन्ननुशाधि मां ।
॥ ब्रह्मोवाच ॥ मा स्म शक्र बलिं हिंसीर्न बलिर्व्वधमर्हति । न्यायस्तु शक्र प्रष्टव्यस्त्वया वासव काम्यया ।
॥ भीष्म उवाच ॥ एवमुक्तो भगवता महेन्द्रः पृथिवीं तदा । चचारैरावतस्कन्धमधिरुह्य श्रिया वृतः ।
ततो ददर्श स बलिं खरवेशेन संवृतं । यथाख्यातं भगवता शून्यागारकृतालयं । ८०७०
॥ शक्र उवाच ॥ खरयोनिमनुप्राप्तस्तुषभक्षोऽसि दानव । इयन्ते योनिरधमा शोचस्याहो न शोचसि ।
अदृष्टं बत पश्यामि द्विषतां वशमागतं । श्रिया विहीनं मित्रैश्च भ्रष्टवीर्य्यपराक्रमं ।
यत्तद्यानसहस्रैस्त्वं ज्ञातिभिः परिवारितः । लोकान् प्रतापयन् सर्व्वान् यास्यस्मानवितर्कयन् ।
त्वन्मुखाश्चैव दैतेया व्यतिष्ठंस्तव शासने । अकृष्टपच्या च मही तवैश्वर्य्ये बभूव ह ।
इदञ्च तेऽद्य व्यसनं शोचस्याहो न शोचसि । यदाऽतिष्ठः समुद्रस्य पूर्व्वकूले विलेलिहन् । ८०७५
ज्ञातीन् विभजतो वित्तं तदासीत्ते मनः कथं । यत्ते सहस्रसमिता ननृतुर्द्देवयोषितः ।
बहूनि वर्षपूगानि विहारे दीप्यतः श्रिया । सर्व्वाः पुष्करमालिन्यः सर्व्वाः काञ्चनसप्रभाः ।
कथमद्य तदा चैव मनस्ते दानवेश्वर । छत्रं तवासीत् सुमहत् सौवर्णं रत्नभूषितं ।
ननृतुस्तत्र गन्धर्व्वाः षट्सहस्राणि सप्तधा । यूपस्तवासीत् सुमहान् यजतः सर्व्वकाञ्चनः ।

यच्चाददः सहस्राणि अयुतानां गवां दश। अनन्तरं सहस्रेण तदासीदैत्य का मतिः। ८०८०

यदा च पृथिवीं सर्व्वां यजमानोऽनुपर्य्यगाः  शम्याक्षेपेण विधिना तदासीत् किन्नु ते हृदि।

न ते पश्यामि भृङ्गारं न छत्रं व्यजने न च। ब्रह्मदत्ताञ्च ते मालां न पश्याम्यसुराधिप।

॥ बलिरुवाच ॥ न त्वं पश्यसि भृङ्गारं न छत्रं व्यजने न च। ब्रह्मदत्ताञ्च मे मालां न त्वं द्रक्ष्यसि वासव।

गुहायां निहतानि त्वं मम रत्नानि पृच्छसि। यदा मे भविता कालस्तदा त्वं तानि द्रक्ष्यसि।

न त्वेतदनुरूपन्ते यशसो वा कुलस्य वा। समृद्धार्थोऽसमृद्धार्थं यन्मां कत्थितुमिच्छसि। ८०८५

न हि दुःखेषु शोचन्ते न प्रहृष्यन्ति चर्द्धिषु। कृतप्रज्ञा ज्ञानतृप्ताः क्षान्ताः सन्तो मनीषिणः।

त्वन्तु प्राकृतया बुद्ध्या पुरन्दर विकत्थसे। यदाऽहमिव भावी स्यास्तदा नैवं वदिष्यसि।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि बलिवासवसंवादे त्रयोविंशत्यधिकद्विशततोऽध्यायः॥ २२३ ॥

॥ भीष्म उवाच ॥ पुनरेव तु तं शक्रः प्रहसन्निदमब्रवीत्। निःश्वसन्तं यथा नागं प्रव्याहाराय भारत।

॥ शक्र उवाच ॥ यत्तद्यानसहस्रेण ज्ञातिभिः परिवारितः। लोकान् प्रतापयन् सर्व्वान् यास्यस्माकं वितर्कयन्।

दृष्ट्वा सुकृपणाञ्चेमामवस्थामात्मनो बले। ज्ञातिमित्रपरित्यक्तः शोचस्याहो न शोचसि। ८०९०

प्रीतिं प्राप्यातुलां पूर्व्वं लोकांश्चात्मवशे स्थितान्। विनिपातमिमं वाद्य शोचस्याहो न शोचसि।

॥ बलिरुवाच ॥ अनित्यमुपलक्ष्येह कालपर्य्यायधर्म्मतः। तस्माच्छक्र न शोचामि सर्व्वं ह्येवेदमन्तवत्।

अन्तवन्त इमे देहा भूतानाञ्च सुराधिप। तेन शक्र न शोचामि नापराधादिदं मम।

जीवितञ्च शरीरञ्च जात्यैव सह जायते। उभे सह विवर्द्धेते उभे सह विनश्यतः।

न हीदृशमहं भावमवशः प्राप्य केवलं। यदेवमभिजानामि का व्यथा मे विजानतः। ८०९५

भूतानां निधनं निष्ठा स्रोतसामिव सागरः। नैतत्सम्यग्विजानन्तो नरा मुह्यन्ति वज्रधृक्।

ये त्वेवं नाभिजानन्ति रजोमोहपरायणाः। ते कृच्छ्रं प्राप्य सीदन्ति बुद्धिर्येषां प्रणश्यति।

बुद्धिलाभात्तु पुरुषः सर्व्वं तुदति किल्बिषं। विपाप्मा लभते सत्त्वं सत्त्वस्थः सम्प्रसीदति।

ततस्तु ये निवर्त्तन्ते जायन्ते वा पुनः पुनः। कृपणाः परितप्यन्ते तैरर्थैरभिचोदिताः।

अर्थसिद्धिमनर्थञ्च जीवितं मरणं तथा। सुखदुःखफलञ्चैव न द्वेष्मि न च कामये। ८१००

हतं हन्ति हतो ह्येव यो नरो हन्ति कञ्चन। उभौ तौ न विजानीतो यश्च हन्ति हतश्च यः।

हत्वा जित्वा च मघवन् यः कश्चित् पुरुषायते। अकर्त्ता ह्येव भवति कर्त्ता ह्येव करोति तत्।

को हि लोकस्य कुरुते विनाशप्रभवावुभौ। कृतं हि तत् कृतेनैव कर्त्ता तस्यापि चापरः।

पृथिवी ज्योतिराकाशमापो वायुश्च पञ्चमः। एतद्योनीनि भूतानि तत्र का परिदेवना।

महाविद्योऽल्पविद्यश्च बलवान् दुर्ब्बलश्च यः। दर्शनीयो विरूपश्च सुभगो दुर्भगश्च यः। ८१०५

सर्व्वं कालः समादत्ते गम्भीरः स्वेन तेजसा। तस्मिन् कालवशं प्राप्ते का व्यथा मे विजानतः।

दग्धमेवानुदहति हतमेवानुहन्यते। नश्यते नष्टमेवाग्रे लब्धव्यं लभते नरः।

नास्य द्वीपः कुतः पारो नावारः सम्प्रदृश्यते। नान्तमस्य प्रपश्यामि विधेर्दिव्यस्य चिन्तयन्।

यदि मे पश्यतः कालो भूतानि न विनाशयेत् । स्यान्मे हर्षश्च दर्पश्च क्रोधश्चैव शचीपते ।
तुषभक्षन्तु मां ज्ञात्वा प्रविविक्तजने गृहे । बिभ्रतं गार्द्दभं रूपमागत्य परिगर्हसे । ८११०
इच्छन्नहं विकुर्य्यां हि रूपाणि बहुधात्मनः । विभीषणानि यानीक्ष्य पलायेथास्त्वमेव मे ।
कालः सर्व्वं समादत्ते कालः सर्व्वं प्रयच्छति । कालेन विहितं सर्व्वं मा कृथाः शक्र पौरुषं ।
पुरा सर्व्वं प्रव्यथितं मयि क्रुद्धे पुरन्दर । अवैमि त्वस्य लोकस्य सर्व्वं शक्र सनातनं ।
त्वमप्येवमवेक्षस्व स्वमात्मना विस्मयं गमः । प्रभवश्च प्रभावश्च नात्मसंस्थः कदाचन ।
कौमारमेव ते चित्तं तथैवाद्य यथा पुरा । समवेक्षस्व मघवन् बुद्धिं विन्दस्व नैष्ठिकीं । ८११५
देवा मनुष्याः पितरो गन्धर्व्वोरगराक्षसाः । आसन् सर्व्वे मम वशे तत्सर्व्वं वेत्थ वासव ।
नमस्तस्यै दिशेऽप्यस्तु यस्यां वैरोचनो बलिः । इति मामभ्यपद्यन्त बुद्धिमात्सर्य्यमोहिताः ।
नाहं तदनुशोचामि नात्मभ्रंशं शचीपते । एवं मे निश्चिता बुद्धिः शास्तु तिष्ठाम्यहं वशे ।
दृश्यते हि कुले जातो दर्शनीयः प्रतापवान् । दुःखं जीवन् सहामात्यो भवितव्यं हि तत्तथा ।
दौष्कुलेयस्तथा मूढो दुर्ज्जातः शक्र दृश्यते । सुखं जीवन् सहामात्यो भवितव्यं हि तत्तथा । ८१२०
कल्याणी रूपसम्पन्ना दुर्भगा शक्र दृश्यते । अलक्षणा विरूपा च सुभगा दृश्यतेऽपरा ।
नैतदस्मत्कृतं शक्र नैतच्छक्र त्वया कृतं । यत्त्वमेवं गतो वज्रिन् यच्चाप्येवं गता वयं ।
न कर्म्म भवताऽप्येतत् कृतं मम शतक्रतो । ऋद्धिर्व्वाऽप्यथ वा नर्द्धिः पर्य्यायकृतमेव तत् ।
पश्यामि त्वां विराजन्तं देवराजमवस्थितं । श्रीमन्तं द्युतिमन्तञ्च गर्ज्जमानं ममोपरि ।
एवं नैव न चेत् कालो मामाक्रम्य स्थितो भवेत् । पातयेयमहं त्वाऽद्य सवज्रमपि मुष्टिना । ८१२५
न तु विक्रमकालोऽयं शान्तिकालोऽयमागतः । कालः स्थापयते सर्व्वं कालः पचति वै तथा ।
माञ्चेदभ्यागतः कालो दानवेश्वरपूजितं । गर्ज्जन्तं प्रतपन्तञ्च कमन्यं नागमिष्यति ।
द्वादशानान्तु भवतामादित्यानां महात्मनां । तेजांस्येकेन सर्व्वेषां देवराज धृतानि मे ।
अहमेवोद्वहाम्यापो विसृजामि च वासव । तपामि चैव त्रैलोक्यं विद्योताम्यहमेव च ।
संरक्षामि विलुम्पामि ददाम्यहमथाददे । संयच्छामि नियच्छामि लोकेषु प्रभुरीश्वरः । ८१३०
तदद्य विनिवृत्तं मे प्रभुत्वममराधिप । कालसैन्यावगाढस्य सर्व्वं न प्रतिभाति मे ।
नाहं कर्त्ता न चैव त्वं नान्यः कर्त्ता शचीपते । पर्य्यायेण हि भुज्यन्ते लोकाः शक्र यदृच्छया ।
मासमासार्द्धवेश्मानमहोरात्राभिसंवृतं । ऋतुद्वारं वर्षमुखमायुर्व्वेदविदो जनाः ।
आहुः सर्व्वमिदं चिन्त्यं जनाः केचिन्मनीषया । अस्याः पञ्चैव चिन्तायाः पर्य्येष्यामि च पञ्चधा ।
गम्भीरं गहनं ब्रह्म महत्तोयार्णवं यथा । अनादिनिधनञ्चाक्षरञ्चरं क्षरमेव च । ८१३५
सत्त्वेषु लिङ्गमाविश्य निर्लिङ्गमपि तत् स्वयं । मन्यन्ते ध्रुवमेवैनं ये जनास्तत्त्वदर्शिनः ।
भूतानान्तु विपर्य्यासं कुरुते भगवानिति । न ह्येतावद्भवेद्गम्यं न यस्मात् प्रभवेत् पुनः ।
गतिं हि सर्व्वभूतानामगत्वा क्व गमिष्यसि । यो धावता न हातव्यस्तिष्ठन्नपि न हीयते ।

तमिन्द्रियाणि सर्व्वाणि नानुपश्यन्ति पञ्चधा । आहुरेनं केचिदग्निं केचिदाहुः प्रजापतिं ।
ऋतून्मासार्द्धमासांश्च दिवसांश्च क्षणांस्तथा । पूर्व्वाह्णमपराह्णञ्च मध्याह्नमपि चापरे । ८१४०
मुहूर्त्तमपि चैवाहुरेकं सन्तमनेकधा । तं कालमिति जानीहि यस्य सर्व्वमिदं वशे ।
बहूनीन्द्रसहस्राणि समतीतानि वासव । बलवीर्य्योपपन्नानि यथैव त्वं शचीपते ।
त्वामप्यतिबलं शक्र देवराजं बलोत्कटं । प्राप्ते काले महावीर्य्यः कालः संशमयिष्यति ।
य इदं सर्व्वमादत्ते तस्माच्छक्र स्थिरो भव । मया त्वया च पूर्व्वैश्च न च शक्यो निवर्त्तितुं ।
यामेतां प्राप्य जानीषे राजश्रियमनुत्तमां । स्थिता मयीति तन्मिथ्या नैषा ह्येकत्र तिष्ठति । ८१४५
स्थिता हीन्द्रसहस्रेषु त्वद्विशिष्टतमेष्वियं । मां च लोला परित्यज्य त्वामगाद्विबुधाधिप ।
मैवं शक्र पुनः कार्षीः शान्तो भवितुमर्हसि । त्वामप्येवंविधं ज्ञात्वा क्षिप्रमन्यं गमिष्यति ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि बलिवासवसंवादे चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥

॥ भीष्म उवाच ॥ शतक्रतुरथापश्यद्बलेर्दीप्तां महात्मनः । स्वरूपिणीं शरीराद्धि निष्क्रामन्तीं तदा श्रियं ।
तां दृष्ट्वा प्रभयोद्दीप्तां भगवान् पाकशासनः । विस्मयोत्फुल्लनयनो बलिं पप्रच्छ वासवः ।
॥ शक्र उवाच ॥ बले केयमपक्रान्ता रोचमाना शिखण्डिनी । त्वत्तः स्थिता सकेयूरा दीप्यमाना स्वतेजसा । ८१५०
॥ बलिरुवाच ॥ न हीमामासुरीं वेद्मि न दैवीं न च मानुषीं । त्वमेनां पृच्छ वा मा वा यथेष्टं कुरु वासव ।
॥ शक्र उवाच ॥ का त्वं बलेरपक्रान्ता रोचमाना शिखण्डिनी । अजानतो ममाचक्ष्व नामधेयं शुचिस्मिते ।
का त्वं तिष्ठसि मामेव दीप्यमाना स्वतेजसा । हित्वा दैत्येश्वरं सुभ्रु तन्ममाचक्ष्व पृच्छतः ।
॥ श्रीरुवाच ॥ न मां विरोचनो वेद नायं वैरोचनो बलिः । आहुर्मां दुःसहेत्येवं विधित्सेति च मां विदुः ।
भूतिर्लक्ष्मीति मामाहुः श्रीरित्येवञ्च वासव । त्वं मां शक्र न जानीषे सर्व्वे देवा न मां विदुः । ८१५५
॥ शक्र उवाच ॥ किमिदं त्वं मम कृते उताहो बलिनः कृते । दुःसहे विजहास्येनं चिरसंवासिनी सती ।
॥ श्रीरुवाच ॥ न धाता न विधाता मां विदधाति कथञ्चन । कालस्तु शक्र पर्य्यागान्मैनं शक्रावमन्यथाः ।
॥ शक्र उवाच ॥ कथं त्वया बलिस्त्यक्तः किमर्थं वा शिखण्डिनी । कथञ्च मां न जह्यास्त्वं तन्मे ब्रूहि शुचिस्मिते ।
॥ श्रीरुवाच ॥ सत्ये स्थितास्मि दाने च व्रते तपसि चैव हि । पराक्रमे च धर्म्मे च पराचीनस्ततो बलिः ।
ब्रह्मण्योऽयं पुरा भूत्वा सत्यवादी जितेन्द्रियः । अभ्यसूयद्ब्राह्मणानामुच्छिष्टश्चास्पृशद्घृतं । ८१६०
यज्ञशीलः सदा भूत्वा मामेव यजतेत्ययं । प्रोवाच लोकान् मूढात्मा कालेनोपनिपीडितः ।
अपाकृता ततः शक्र त्वयि वत्स्यामि वासव । अप्रमत्तेन धार्य्याऽस्मि तपसा विक्रमेण च ।
॥ शक्र उवाच ॥ नास्ति देवमनुष्येषु सर्व्वभूतेषु वा पुमान् । यस्त्वामेको विषहितुं शक्नुयात् कमलालये ।
॥ श्रीरुवाच ॥ नैव देवो न गन्धर्व्वो नासुरो न च राक्षसः । यो मामेको विषहितुं शक्तः कश्चित् पुरन्दर ।
॥ शक्र उवाच ॥ तिष्ठेथा मयि नित्यं त्वं यथा तद्ब्रूहि मे शुभे । तत्करिष्यामि ते वाक्यमृतं तद्वक्तुमर्हसि । ८१६५
॥ श्रीरुवाच ॥ स्थास्यामि नित्यं देवेन्द्र यथा त्वयि निबोध तत् । विधिना वेददृष्टेन चतुर्द्धा विभजस्व मां ।
॥ शक्र उवाच ॥ अहं वै त्वां निधास्यामि यथाशक्ति यथाबलं । न तु मेऽतिक्रमः स्याद्वै सदा लक्ष्मि तवान्तिके ।

भूमिरेव मनुष्येषु धारिणी भूतभाविनी । सा ते पादं तितिक्षेत समर्था हीति मे मतिः ।

॥ श्रीरुवाच ॥ एष मे निहितः पादो योऽयं भूमौ प्रतिष्ठितः । द्वितीयं शक्र पादं मे तस्मात् सुनिहितं कुरु ।

॥ शक्र उवाच ॥ आप एव मनुष्येषु द्रवन्त्यः परिचारिणीः । तास्ते पादं तितिक्षन्तामलमापस्तितिक्षितुं । ८२७०

॥ श्रीरुवाच ॥ एष मे निहितः पादो योऽयमप्सु प्रतिष्ठितः । तृतीयं शक्र पादं मे तस्मात् सुनिहितं कुरु ।

॥ शक्र उवाच ॥ यस्मिन् वेदाश्च यज्ञाश्च यस्मिन् देवाः प्रतिष्ठिताः । तृतीयं पादमग्निस्ते सुधृतं धारयिष्यति ।

॥ श्रीरुवाच ॥ एष मे निहितः पादो योऽयमग्नौ प्रतिष्ठितः । चतुर्थं शक्र पादं मे तस्मात् सुनिहितं कुरु ।

॥ शक्र उवाच ॥ ये वै सन्तो मनुष्येषु ब्रह्मण्याः सत्यवादिनः । ते ते पादं तितिक्षन्तामलं सन्तस्तितिक्षितुं ।

॥ श्रीरुवाच ॥ एष मे निहितः पादो योऽयं सत्सु प्रतिष्ठितः । एवं हि निहिताः शक्र भूतेषु परिधत्स्व मां । ८२७५

॥ शक्र उवाच ॥ भूतानामिह यो वै त्वां मया विनिहितां सतीं । उपहन्यात् स मे द्विष्यात्तथा शृण्वन्तु मे वचः ।

ततस्त्यक्तः श्रिया राजा दैत्यानां बलिरब्रवीत् ।

॥ बलिरुवाच ॥ यावत् पुरस्तात् प्रतपेत्तावद्वै दक्षिणां दिशं । पश्चिमां तावदेवापि तथोदीचीं दिवाकरः ।

तथा मध्यन्दिने सूर्य्यो नास्तमेति यदा तदा । पुनर्देवासुरं युद्धं भावि जेताऽस्मि वस्तदा ।

सर्व्वलोकान् यदादित्य एकस्थस्तापयिष्यति । तदा देवासुरे युद्धे जेताऽहं त्वां शतक्रतो । ८२८०

॥ शक्र उवाच ॥ ब्रह्मणाऽस्मि समादिष्टो न हन्तव्यो भवानिति । तेन तेऽहं बले वज्रं न विमुञ्चामि मूर्द्धनि ।

यथेष्टं गच्छ दैत्येन्द्र स्वस्ति तेऽस्तु महासुर । आदित्यो नाऽवतपिता कदाचिन्मध्यतः स्थितः ।

स्थापितो ह्यस्य समयः पूर्व्वमेव स्वयम्भुवा । अजस्रं परियात्येष सत्येनावतपन् प्रजाः ।

अयनं तस्य षण्मासानुत्तरं दक्षिणं तथा । येन संयाति लोकेषु शीतोष्णे विसृजन् रविः ।

॥ भीष्म उवाच ॥ एवमुक्तस्तु दैत्येन्द्रो बलिरिन्द्रेण भारत । जगाम दक्षिणामाशामुदीचीन्तु पुरन्दरः । ८२८५

इत्येतद्बलिना गीतमनहङ्कारसंज्ञितं । वाक्यं श्रुत्वा सहस्राक्षः खमेवारुरुहे तदा ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि श्रीवासवसंवादे पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥

॥ भीष्म उवाच ॥ अत्रैवोदाहरन्तीममितिहासं पुरातनं । शतक्रतोश्च संवादं नमुचेश्च युधिष्ठिर ।

श्रिया विहीनमासीनमक्षोभ्यमिव सागरं । भवाभवज्ञं भूतानामित्युवाच पुरन्दरः ।

बद्धः पाशैश्च्युतः स्थानात् द्विषतां वशमागतः । श्रिया विहीनो नमुचे शोचस्याहो न शोचसि ।

॥ नमुचिरुवाच ॥ अनिवार्य्येण शोकेन शरीरञ्चोपतप्यते । अमित्राश्च प्रहृष्यन्ति शोके नास्ति सहायता । ८२९०

तस्माच्छक्र न शोचामि सर्व्वं ह्येवेदमन्तवत् । सन्तापाद्भ्रश्यते रूपं सन्तापाद्भ्रश्यते श्रियः ।

सन्तापाद्भ्रश्यते चायुर्धर्म्मश्चैव सुरेश्वर । विनीय खलु तद्दुःखमागतं वै मनस्त्वं ।

ध्यातव्यं मनसा हृद्यं कल्याणं संविजानता । यदा यदा हि पुरुषः कल्याणे कुरुते मनः ।

तदा तस्य प्रसिध्यन्ति सर्व्वार्था नात्र संशयः ।

एकः शास्ता न द्वितीयोऽस्ति शास्ता गर्भे शयानं पुरुषं शास्ति शास्ता । तेनानुयुक्तः प्रवणादिवोदकं यथा नियुक्तो

ऽस्मि तथा वहामि । ८२९५

भवाभवौ त्वभिजानन् गरीयो ज्ञानाच्छ्रेयो न तु तद्वै करोमि । आशासु धर्म्यासु परासु कुर्व्वन् यथा नियुक्तोऽस्मि तथा वहामि ।

यथा यथाऽस्य प्राप्तव्यं प्राप्नोत्येव तथा तथा । भवितव्यं यथा यच्च भवत्येव तथा तथा ।

यत्र यत्रैव संयुक्तो धात्रा गर्भे पुनः पुनः । तत्र तत्रैव वसति न यत्र स्वयमिच्छति ।

भावो योऽयमनुप्राप्तो भवितव्यमिदं मम । इति यस्य सदा भावो न स मुह्येत् कदाचन ।

पर्य्यायैर्हन्यमानानामभियोक्ता न विद्यते । दुःखमेतत्तु यद्द्वेष्टा कर्त्ताऽहमिति मन्यते ।    ८२००

ऋषींश्च देवांश्च महासुरांश्च त्रैविद्यवृद्धांश्च वने मुनींश्च । कान् वापदो नोपनमन्ति लोके परावरज्ञास्तु न सम्भ्रमन्ति ।

न पण्डितः क्रुध्यति नाभिपद्यते न चापि संसीदति न प्रहृष्यति । न चातिकृच्छ्रव्यसनेषु शोचते स्थितः प्रकृत्या हिमवानिवाचलः ।

यमर्थसिद्धिः परमा न हर्षयेत्तथैव काले व्यसनं न मोहयेत् । सुखञ्च दुःखञ्च तथैव मध्यमं निषेवते यः स धुरन्धरो नरः ।

यां यामवस्थां पुरुषोऽधिगच्छेत् तस्यां रमेतापरितप्यमानः । एवं प्रवृद्धं प्रणुदन्मनोजं सन्तापयामास करं शरीरात् ।

न तत् सदः सत्परिषत् सभा च सा प्राप्य यां न कुरुते सदा भयं । धर्म्मतत्त्वमवगाह्य बुद्धिमान् योऽभ्युपैति स धुरन्धरो नरः ।    ८२०५

प्राज्ञस्य कर्म्माणि दुरन्वयानि न वै प्राज्ञो मुह्यति मोहकाले । स्थानाच्च्युतश्चेन्न मुमोह गौतमस्तावत्कृच्छ्रामापदं प्राप्यवृद्धः ।

न मन्त्रबलवीर्य्येण प्रज्ञया पौरुषेण च । न शीलेन न वृत्तेन तथा नैवार्थसम्पदा ।

अलभ्यं लभते मर्त्यस्तत्र का परिदेवना । यदेवमनुजातस्य धातारो विदधुः पुरा ।

तदेवानुचरिष्यामि किं मे मृत्युः करिष्यति । लब्धव्यान्येव लभते गन्तव्यान्येव गच्छति ।

प्राप्तव्यान्येव चाप्नोति दुःखानि च सुखानि च । एतद्विदित्वा कार्त्स्न्येन यो न मुह्यति मानवः ।    ८२१०

कुशली सर्व्वदुःखेषु स वै सर्व्वधनो नरः ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शक्रनमुचिसंवादे षड्विंशत्यधिकद्विशतोऽध्यायः ॥ २२६ ॥

॥ युधिष्ठिर उवाच ॥ मग्नस्य व्यसने कृच्छ्रे किं श्रेयः पुरुषस्य हि । बन्धुनाशे महीपाल राज्यनाशेऽथ वा पुनः ।

त्वं हि नः परमो वक्ता लोकेऽस्मिन् भरतर्षभ । एतद्भवन्तं पृच्छामि तन्मे त्वं वक्तुमर्हसि ।

॥ भीष्म उवाच ॥ पुत्त्रदारैः सुखैश्चैव वियुक्तस्य धनेन वा । मग्नस्य व्यसने कृच्छ्रे धृतिः श्रेयस्करी नृप ।

धैर्य्येण युक्तं सततं शरीरं न विशीर्य्यते । विशोकता सुखं धत्ते धत्ते चारोग्यमुत्तमं ।    ८२१५

आरोग्याच्च शरीरस्य स पुनर्व्विन्दते श्रियं । यश्च प्राज्ञो नरस्तात सात्त्विकीं वृत्तिमास्थितः ।

तस्यैश्वर्य्यञ्च धैर्य्यञ्च व्यवसायश्च कर्म्मसु । अत्रैवोदाहरन्तीममितिहासं पुरातनं ।

बलिवासवसंवादं पुनरेव युधिष्ठिर । वृत्ते देवासुरे युद्धे दैत्यदानवसंक्षये ।

विष्णुक्रान्तेषु लोकेषु देवराजे शतक्रतौ । इज्यमानेषु देवेषु चातुर्व्वर्ण्ये व्यवस्थिते ।

समृद्ध्यमाने त्रैलोक्ये प्रीतियुक्ते स्वयम्भुवि । रुद्रैर्वसुभिरादित्यैरश्विभ्यामपि चर्षिभिः ।    ८२२०

गन्धर्व्वैर्भुजगेन्द्रैश्च सिद्धैश्चान्यैर्वृतः प्रभुः । चतुर्दन्तं सुदान्तञ्च वारणेन्द्रं श्रिया वृतं ।

आरुह्यैरावतं शक्रस्त्रैलोक्यमनुसंययौ । स कदाचित् समुद्रान्ते कस्मिंश्चिद्गिरिगह्वरे ।
बलिं वैरोचनिं वज्री ददर्शोपससर्प च । तमैरावतमूर्द्धस्थं प्रेक्ष्य देवगणैर्वृतं ।
सुरेन्द्रमिन्द्रं दैत्येन्द्रो न शुशोच न विव्यथे । दृष्ट्वा तमविकारस्थं तिष्ठन्तं निर्भयं बलिं ।
अधिरूढो द्विपश्रेष्ठमित्युवाच शतक्रतुः । दैत्य न व्यथसे शौर्य्यादथ वा वृद्धसेवया । ८२२५
तपसा भावितत्वाद्वा सर्व्वथैतत् सुदुष्करं । शत्रुभिर्वशमानीतो हीनः स्थानादनुत्तमात् ।
वैरोचने किमाश्रित्य शोचितव्ये न शोचसि । श्रैष्ठ्यं प्राप्य स्वजातीनां महाभोगाननुत्तमान् ।
हृतस्वरत्नराज्यस्त्वं ब्रूहि कस्मान्न शोचसि । ईश्वरो हि पुरा भूत्वा पितृपैतामहे पदे ।
तत्त्वमद्य हृतं दृष्ट्वा सपत्नैः किं न शोचसि । बद्धश्च वारुणैः पाशैर्वज्रेण च समाहतः ।
हृतदारो हृतधनो ब्रूहि कस्मान्न शोचसि । नष्टश्रीर्विभवभ्रष्टो यन्न शोचसि दुष्करं । ८२३०
त्रैलोक्यराज्यनाशे हि कोऽन्यो जीवितुमुत्सहेत् । एतच्चान्यच्च परुषं ब्रुवन्तं परिभूय तं ।
श्रुत्वा सुखमसम्भ्रान्तो बलिर्वैरोचनोऽब्रवीत् ।
॥ बलिरुवाच ॥ निगृहीते मयि भृशं शक्र किं कत्थितेन ते । वज्रमुद्यम्य तिष्ठन्तं पश्यामि त्वां पुरन्दर ।
अशक्तः पूर्व्वमासीस्त्वं कथञ्चिच्छक्ततां गतः । कस्त्वदन्य इमां वाचं सुक्रूरां वक्तुमर्हति ।
यस्तु शत्रोर्वशस्थस्य शक्तोऽपि कुरुते दयां । हस्तप्राप्तस्य वीरस्य तञ्चैव पुरुषं विदुः । ८२३५
अनिश्चयो हि युद्धेषु द्वयोर्विवदमानयोः । एकः प्राप्नोति विजयमेकश्चैव पराजयं ।
मा च ते भूत् स्वभावोऽयमिति दैवतपुङ्गव । ईश्वरः सर्व्वभूतानां विक्रमेण जितो बलात् ।
नैतदस्मत्कृतं शक्र नैतच्छक्र कृतं त्वया । यत्त्वमेवङ्गतो वज्रिन् यद्वाप्येवङ्गता वयं ।
अहमासं यथाद्य त्वं भविता त्वं यथा वयं । माऽवमंस्था मया कर्म्म दुष्कृतं कृतमित्युत ।
सुखदुःखे हि पुरुषः पर्य्यायेणाधिगच्छति । पर्य्यायेणासि शक्रत्वं प्राप्तः शक्र न कर्म्मणा । ८२४०
कालः काले नयति मां त्वाञ्च कालो नयत्ययं । तेनाहं त्वं यथा नाद्य त्वञ्चापि न यथा वयं ।
न मातृपितृशुश्रूषा न च दैवतपूजनं । नान्यो गुणसमाचारः पुरुषस्य सुखावहः ।
न विद्या न तपो दानं न मित्राणि न बान्धवाः । शक्नुवन्ति परित्रातुं नरं कालेन पीडितं ।
नागामिनमनर्थं हि प्रतिघातशतैरपि । शक्नुवन्ति प्रतिव्योढुमृते बुद्धिबलान्नराः ।
पर्य्यायैर्हन्यमानानां परित्राता न विद्यते । इदन्तु दुःखं यच्छक्र कर्त्ताऽहमिति मन्यसे । ८२४५
यदि कर्त्ता भवेत् कर्त्ता न क्रियेत कदाचन । यस्मात्तु क्रियते कर्त्ता तस्मात् कर्त्ताऽप्यनीश्वरः ।
कालेन त्वाऽहमजयं कालेनाहं जितस्त्वया । गन्ता गतिमतां कालः कालः कलयति प्रजाः ।
इन्द्र प्राकृतया बुद्ध्या प्रलयं नावबुध्यसे । केचित्त्वां बहुमन्यन्ते श्रैष्ठ्यं प्राप्तं स्वकर्म्मणा ।
कथमस्मद्विधो नाम जानन् लोकप्रवृत्तयः । कालेनाभ्याहतः शोचेन्मुह्येद्वाऽप्यथ विभ्रमेत ।
नित्यं कालपरीतस्य मम वा मद्विधस्य वा । बुद्धिर्व्यसनमासाद्य भिन्ना नौरिव सीदति । ८२५०
अहञ्च त्वञ्च ये चान्ये भविष्यन्ति सुराधिपाः । ते सर्व्वे शक्र यास्यन्ति मार्गमिन्द्रशतैर्गतं ।

त्वामप्येवं सुदुर्द्धर्षं ज्वलन्तं परया श्रिया। काले परिणते कालः कालयिष्यति मामिव।
बहूनीन्द्रसहस्राणि दैवतानां युगे युगे। अभ्यतीतानि कालेन कालो हि दुरतिक्रमः।
इदन्तु लब्ध्वा संस्थानमात्मानं बहु मन्यसे। सर्व्वभूतभवं देवं ब्रह्माणमिव शाश्वतं।
न चेदमचलं स्थानमनन्तं वाऽपि कस्यचित्। त्वन्तु बालिशया बुद्ध्या ममेदमिति मन्यसे। ८१८५
अविश्वस्ते विश्वसिषि मन्यसे चाध्रुवे ध्रुवं। नित्यं कालपरीतात्मा भवत्येवं सुरेश्वर।
ममेयमिति मोहात्त्वं राजश्रियमभीप्ससि। नेयं तव न चास्माकं न चान्येषां स्थिरा सदा।
अतिक्रम्य बहूनन्यांस्त्वयि तावदियं गता। किञ्चित्कालमियं स्थित्वा त्वयि वासव चञ्चला।
गौर्निवासमिवोत्सृज्य पुनरन्यं गमिष्यति। राजलोका ह्यतिक्रान्ता यान्न संख्यातुमुत्सहे।
त्वत्तो बहुतराश्चान्ये भविष्यन्ति पुरन्दर। सवृक्षौषधिरत्नेयं सह सत्त्ववनाकरा। ८१९०
तानिदानीं न पश्यामि यैर्भुक्तेयं पुरा मही। पृथुरैलोमयो भीमो नरकः शम्बरस्तथा।
अश्वग्रीवः पुलोमा च स्वर्भानुरमितध्वजः। प्रह्लादो नमुचिर्दक्षो विप्रचित्तिर्विरोचनः।
ह्रीनिषेवः सुहोत्रश्च भूरिहा पुष्पवान् वृषः। सत्येषुर्ऋषभो बाहुः कपिलाश्वो विरूपकः।
वाणः कार्त्तस्वरो वह्निर्व्विश्वदंष्ट्रोऽथ नैर्ऋतिः। सङ्कोचोऽथ वरीताक्षो वराहोऽश्वो रुचिप्रभः।
विश्वजित् प्रतिरूपश्च वृषाण्डो विष्करो मधुः। हिरण्यकशिपुश्चैव कैटभश्चैव दानवः। ८१९५
दैतेया दानवाश्चैव सर्व्वे ते नैर्ऋतैः सह। एते चान्ये च बहवः पूर्व्वे पुर्व्वतराश्च ये।
दैत्येन्द्रा दानवेन्द्राश्च यांश्चान्याननुशुश्रुम। बहवः पूर्व्वदैत्येन्द्राः सन्त्यज्य पृथिवीं गताः।
कालेनाभ्याहताः सर्व्वे कालो हि बलवत्तरः। सर्व्वैः क्रतुशतैरिष्टं न त्वमेकः शतक्रतुः।
सर्व्वे धर्म्मपराश्चासन् सर्व्वे सततसत्रिणः। अन्तरीक्षचराः सर्व्वे सर्व्वेऽभिमुखयोधिनः।
सर्व्वे संहननोपेताः सर्व्वे परिघबाहवः। सर्व्वे मायाशतधराः सर्व्वे ते कामरूपिणः। ८२००
सर्व्वे समरमासाद्य न श्रूयन्ते पराजिताः। सर्व्वे सत्यव्रतपराः सर्व्वे कामविहारिणः।
सर्व्वे वेदव्रतपराः सर्व्वे चैव बहुश्रुताः। सर्व्वे सम्मतमैश्वर्य्यमीश्वराः प्रतिपेदिरे।
न चैश्वर्य्यमदस्तेषां भूतपूर्व्वो महात्मनां। सर्व्वे यथार्हदातारः सर्व्वे विगतमत्सराः।
सर्व्वे सर्व्वेषु भूतेषु यथावत् प्रतिपेदिरे। सर्व्वे दाक्षायणीपुत्त्राः प्राजापत्या महाबलाः।
ज्वलन्तः प्रतपन्तश्च कालेन प्रतिसंहताः। त्वञ्चैवेमां यदा भुक्त्वा पृथिवीं त्यक्ष्यसे पुनः। ८२०५
न शक्ष्यसि तदा शक्र नियन्तुं शोकमात्मनः। मुञ्चेच्छां कामभोगेषु मुञ्चेमं श्रीभवं मदं।
एवं स्वराज्यनाशे त्वं शोकं सम्प्रसहिष्यसि। शोककाले शुचो मा त्वं हर्षकाले च मा हृषः।
अतीतानागतं हित्वा प्रत्युत्पन्नेन वर्त्तय। माञ्चेदभ्यागतः कालः सदा युक्तमतन्द्रितः।
क्षमस्व न चिरादिन्द्र त्वामप्युपगमिष्यति। त्रासयन्निव देवेन्द्र वाग्भिस्तक्षसि मामिह।
संयते मयि नूनं त्वमात्मानं बहु मन्यसे। कालः प्रथममायान्मां पश्चात्त्वामनुधावति। ८२१०
तेन गर्ज्जसि देवेन्द्र पूर्व्वं कालहते मयि। को हि स्थातुमलं लोके मम क्रुद्धस्य संयुगे।

कालस्तु बलवान् प्राप्तस्तेन तिष्ठसि वासव । यत्तदर्थमहत्वानां पूर्वं भवितुमर्हति ।
यथा मे सर्व्वगात्राणि न स्वस्थानि महौजसः । अहमैन्द्राच्च्युतः स्थानात्त्वमिन्द्रः प्रकृतो दिवि ।
सुचित्रे जीवलोकेऽस्मिन्नुपास्यः कालपर्य्ययात् । किं हि कृत्वा त्वमिन्द्रोऽद्य किं वा कृत्वा वयं च्युताः ॥
कालः कर्त्ता विकर्त्ता च सर्व्वमन्यदकारणं । नाशं विनाशमैश्वर्य्यं सुखं दुःखं भवाभवौ । ८२८८
विद्वान् प्राप्यैवमत्यर्थं न प्रहृष्येन्न च व्यथेत् । त्वमेव हीन्द्र वेत्थास्मान् वेदाहं त्वाञ्च वासव ।
किं कत्थसे मां किञ्च त्वं कालेन निरपत्रप । त्वमेव हि पुरा वेत्थ यत्तदा पौरुषं मम ।
समरेषु च विक्रान्तं पर्य्याप्तं तन्निदर्शनं । आदित्याश्चैव रुद्राश्च साध्याश्च वसुभिः सह ।
मया विनिर्ज्जिताः पूर्व्वं मरुतश्च शचीपते । त्वमेव शक्र जानासि देवासुरसमागमे ।
समेता विबुधा भग्नाः तरसा समरे मया । पर्व्वताश्चासकृत् क्षिप्ताः सवनाः सवनौकसः । ८२९०
सटङ्कशिखरा भग्नाः समरे मूर्द्ध्नि ते मया । किन्तु शक्यं मया कर्त्तुं कालो हि दुरतिक्रमः ।
न हि त्वां नोत्सहे हन्तुं सवज्रमपि मुष्टिना । न तु विक्रमकालोऽयं क्षमाकालोऽयमागतः ।
तेन त्वां मर्षये शक्र दुर्म्मर्षणतरस्त्वया । तं मां परिणते काले परीतं कालवह्निना ।
नियतं कालपाशेन बद्धं शक्र विकत्थसे । अयं स पुरुषः श्यामो लोकस्य दुरतिक्रमः ।
बद्ध्वा तिष्ठति मां रौद्रः पशुं रशनया यथा । लाभालाभौ सुखं दुःखं कामक्रोधौ भवाभवौ । ८२९५
वधबन्धप्रमोक्षञ्च सर्व्वं कालेन लभ्यते । नाहं कर्त्ता न कर्त्ता त्वं कर्त्ता यस्तु सदा प्रभुः ।
सोऽयं पचति कालो मां वृक्षे फलमिवागतं । यान्येव पुरुषः कुर्व्वन् सुखैः कालेन युज्यते ।
पुनस्तान्येव कुर्व्वाणो दुःखैः कालेन युज्यते । न च कालेन कालज्ञः स्पृष्टः शोचितुमर्हति ।
तेन शक्र न शोचामि नास्ति शोके सहायता । यदा हि शोचतः शोको व्यसनं नापकर्षति ।
सामर्थ्यं शोचतो नास्तीत्यतोऽहं नाद्य शोचिमि । एवमुक्तः सहस्राक्षो भगवान् पाकशासनः । ८३००
प्रतिसंहृत्य संरम्भमित्युवाच शतक्रतुः । सवज्रमुद्यतं बाहुं दृष्ट्वा पाशांश्च वारुणान् ।
कस्येह न व्यथेद्बुद्धिर्म्मृत्योरपि जिघांसतः । सा ते न व्यथते बुद्धिरचला तत्त्वदर्शिनी ।
ध्रुवं न व्यथसेऽद्य त्वं धैर्य्यात् सत्यपराक्रमः । को हि विश्वासमर्थेषु शरीरे वा शरीरभृत् ।
कर्त्तुमुत्सहते लोके दृष्ट्वा सम्प्रस्थितं जगत् । अहमप्येवमेवैनं लोकं जानाम्यशाश्वतं ।
कालाग्नावाहितं घोरे गुह्ये सततगेऽक्षरे । न चात्र परिहारोऽस्ति कालस्पृष्टस्य कस्यचित् । ८३०५
सूक्ष्माणां महताञ्चैव भूतानां परिपच्यतां । अनीशस्याप्रमत्तस्य भूतानि पचतः सदा ।
अनिवृत्तस्य कालस्य क्षयं प्राप्तो न मुच्यते । अप्रमत्तः प्रमत्तेषु कालो जागर्त्ति देहिषु ।
प्रयत्नेनाप्यपक्रान्तो दृष्टपूर्व्वो न केनचित् । पुराणः शाश्वतो धर्म्मः सर्व्वप्राणभृतां समः ।
कालो न परिहार्य्यश्च न चास्यास्ति व्यतिक्रमः । अहोरात्रांश्च मासांश्च क्षणान् काष्ठा लवान् कलाः ।
सम्पिण्डयति यः कालो वृद्धिं वार्द्धुषिको यथा । इदमद्य करिष्यामि श्वः कर्त्तास्मीति वादिनं । ८३१०
कालो हरति सम्प्राप्तो नदीवेग इव द्रुमं । इदानीं तावदेवासौ मया दृष्टः कथं मृतः ।

इति कालेन ह्रियतां प्रलापः श्रूयते नृणां। नश्यन्त्यर्थास्तथा भोगाः स्थानमैश्वर्य्यमेव वा।
जीवितं जीवलोकस्य कालेनागम्य नीयते। उच्छ्रया विनिपातान्ता भावोऽभावः स एव च।
अनित्यमध्रुवं सर्व्वं व्यवसायो हि दुष्करः। सा ते न व्यथते बुद्धिरचला तत्त्वदर्शिनी।
अहमासं पुरा चेति मनसाऽपि न बुध्यसे। कालेनाक्रम्य लोकेऽस्मिन् पच्यमाने बलीयसा। ८२१५
अज्येष्ठमकनिष्ठञ्च क्षियमाणो न बुध्यते। ईर्ष्याभिमानलोभेषु कामक्रोधभयेषु च।
स्पृहा मोहाभिमानेषु लोकः सक्तो विमुह्यति। भवांस्तु भावतत्त्वज्ञो विद्वान् ज्ञानतपोऽन्वितः।
कालं पश्यति सुव्यक्तं पाणावामलकं यथा। कालचारित्रतत्त्वज्ञः सर्व्वशास्त्रविशारदः।
वैरोचने कृतात्माऽसि स्पृहणीयो विजानतां। सर्व्वलोको ह्ययं मन्ये बुद्ध्या परिगतस्त्वया।
विहरन् सर्व्वतो मुक्तो न क्वचित् परिसज्जसे। रजश्च हि तमश्च त्वां स्पृशतो न जितेन्द्रियं। ८२२०
निष्प्रीतिं नष्टसन्तापमात्मानं त्वमुपाससे। सुहृदं सर्व्वभूतानां निर्व्वैरं शान्तमानसं।
दृष्ट्वा त्वां मम सञ्जाता त्वय्यनुक्रोशिनी मतिः। नाहमेतादृशं बुद्धं हन्तुमिच्छामि बन्धने।
आनृशंस्यं परो धर्म्मो ह्यनुक्रोशश्च मे त्वयि। मोक्ष्यन्ति वारुणाः पाशास्तवेमे कालपर्य्ययात्।
प्रजानामपचारेण स्वस्ति तेऽस्तु महासुर। यदा श्वश्रूं स्नुषां वृद्धां परिचारेण योक्ष्यते।
पुत्त्रश्च पितरं मोहात् प्रेषयिष्यति कर्म्मसु। ब्राह्मणैः कारयिष्यन्ति वृषलाः पादधावनं। ८२२५
शूद्राश्च ब्राह्मणीं भार्य्यामुपयास्यन्ति निर्भयाः। वियोनिषु विमोक्ष्यन्ति बीजानि पुरुषा यदा।
सङ्करं कांस्यभाण्डैश्च बलिञ्चैव कुपात्त्रिकैः। चातुर्व्वर्ण्यं यदा कृत्स्नममर्य्यादं भविष्यति।
एकैकस्ते तदा पाशः क्रमशः परिमोक्ष्यते। अस्मत्तस्ते भयं नास्ति समयं प्रतिपालय।
सुखी भव निराबाधः स्वस्थचेता निरामयः।
तमेवमुक्त्वा भगवाञ्छतक्रतुः प्रतिप्रयातो गजराजवाहनः। विजित्य सर्व्वानसुरान् सुराधिपो ननन्द हर्षेण बभूव चैकराट्। ८२३०
महर्षयस्तुष्टुवुरञ्जसा च तं वृषाकपिं सर्व्वचराचरेश्वरं। हिमापहो हव्यमुवाह चाध्वरे तथाऽमृतं चार्पितमीश्वरोऽपि हि।
द्विजोत्तमैः सर्व्वगतैरभिष्टुतो विदीप्ततेजा गतमन्युरीश्वरः। प्रशान्तचेता मुदितः स्वमालयं त्रिपिष्टपं प्राप्य मुमोद वासवः।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि बलिवासवसंवादे सप्तविंशत्यधिकद्विशततोऽध्यायः ॥ २२७॥

॥ युधिष्ठिर उवाच ॥ पूर्व्वरूपाणि मे राजन् पुरुषस्य भविष्यतः। पराभविष्यतश्चैव तन्मे ब्रूहि पितामह।
॥ भीष्म उवाच ॥ मन एव मनुष्यस्य पूर्व्वरूपाणि शंसति। भविष्यतश्च भद्रन्ते तथैव न भविष्यतः।
अत्राप्युदाहरन्तीममितिहासं पुरातनं। श्रिया शक्रस्य संवादं तन्निबोध युधिष्ठिर। ८२३५
महतस्तपसो व्युष्ट्या पश्यन् लोकौ परावरौ। सामान्यमृषिभिर्गत्वा ब्रह्मलोकनिवासिभिः।
ब्रह्मेवामितदीप्तौजाः शान्तपाप्मा महातपाः। विचचार यथाकामं त्रिषु लोकेषु नारदः।
कदाचित् प्रातरुत्थाय पिस्पृक्षुः सलिलं शुचि। ध्रुवद्वारभवां गङ्गां जगामावततार च।
सहस्रनयनश्चापि वज्री शम्बरपाकहा। तस्या देवर्षिजुष्टायास्तीरमभ्याजगाम ह।

तावाप्लुत्य यतात्मानौ कृतजप्यौ समाहितौ । नद्याः पुलिनमासाद्य सूक्ष्मकाञ्चनवालुकं । ८४०
पुण्यकर्मभिराख्यातौ देवर्षिकथिताः कथाः । चक्रतुस्तौ तथासीनौ महर्षिकथितास्तथा ।
पूर्ववृत्तव्यपेतानि कथयन्तौ समाहितौ । अथ भास्करमुद्यन्तं रश्मिजालपुरस्कृतं ।
पूर्णमण्डलमालोक्य तावुत्थायोपतस्थतुः । अभितस्तूदयन्तन्तमर्कमर्कमिवापरं ।
आकाशे ददृशे ज्योतिरुद्यतार्चिःसमप्रभं । तयोः समीपं सम्प्राप्तं प्रत्यदृश्यत भारत ।
तत्सुपर्णार्करचितमास्थितं वैष्णवं पदं । भाभिरप्रतिमं भाति त्रैलोक्यमवभासयत् । ८४५
दिव्याभिरूपशोभाभिरप्सरोभिः पुरस्कृतं । बृहतीमंशुमत्प्रख्यां बृहद्भानोरिवार्चिषं ।
नक्षत्रकल्पाभरणां तां मौक्तिकसमस्रजं । श्रियं ददृशतुः पद्मां साक्षात् पद्मदलस्थितां ।
साऽवरुह्य विमानाग्रादङ्गनानामनुत्तमा । अभ्यागच्छत्त्रिलोकेशं देवर्षिञ्चापि नारदं ।
नारदानुगतः साक्षान्मघवांस्तामुपागमत् । कृताञ्जलिपुटो देवीं निवेद्यात्मानमात्मना ।
चक्रे चानुपमां पूजां तस्याश्चापि स सर्ववित् । देवराजः श्रियं राजन् वाक्यञ्चेदमुवाच ह । ८५०
॥ शक्र उवाच ॥ का त्वं केन च कार्येण सम्प्राप्ता चारुहासिनि । कुतश्चागम्यते सुभ्रु गन्तव्यं क्व च ते शुभे ।
॥ श्रीरुवाच ॥ पुण्येषु त्रिषु लोकेषु सर्वे स्थावरजङ्गमाः । ममात्मभावमिच्छन्तो यतन्ते परमात्मना ।
साऽहं वै पङ्कजे जाता सूर्यरश्मिविबोधिते । भूत्यर्थं सर्वभूतानां पद्मा श्रीः पद्ममालिनी ।
अहं लक्ष्मीरहं भूतिः श्रीश्चाहं बलसूदन । अहं श्रद्धा च मेधा च सन्नतिर्विजितिः स्थितिः ।
अहं धृतिरहं सिद्धिरहं त्विड्भूतिरेव च । अहं स्वाहा स्वधा चैव सन्नतिर्नियतिः स्मृतिः । ८५५
राज्ञां विजयमानानां सेनाग्रेषु ध्वजेषु च । निवासे धर्मशीलानां विषयेषु पुरेषु च ।
जितकाशिनि शूरे च संग्रामेष्वनिवर्त्तिनि । निवसामि मनुष्येन्द्रे सदैव बलसूदन ।
धर्मनित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि । प्रश्रिते दानशीले च सदैव निवसाम्यहं ।
असुरेष्ववसं पूर्वं सत्यधर्मनिबन्धना । विपरीतांस्तु तान् बुद्ध्वा त्वयि वासमरोचयं ।
॥ शक्र उवाच ॥ कथं वृत्तेषु दैत्येषु त्वमवात्सीर्वरानने । दृष्ट्वा च किमिहागास्त्वं हित्वा दैतेयदानवान् । ८६०
॥ श्रीरुवाच ॥ स्वधर्ममनुतिष्ठत्सु धैर्यादचलितेषु च । स्वर्गमार्गाभिरामेषु सत्त्वेषु निरता ह्यहं ।
दानाध्ययनयज्ञेज्या पितृदैवतपूजनं । गुरूणामतिथीनाञ्च तेषां सत्यमवर्त्तत ।
सुसंमृष्टगृहाश्चासन् जितस्त्रीका हुताग्नयः । गुरुशुश्रूषका दान्ता ब्रह्मण्याः सत्यवादिनः ।
श्रद्दधाना जितक्रोधा दानशीलाऽनसूयवः । भृतपुत्रा भृतामात्या भृतदारा ह्यनीर्षवः ।
अमर्षेण न चान्योन्यं स्पृहयन्ते कदाचन । न च जातूपतप्यन्ते धीराः परसमृद्धिभिः । ८६५
दातारः संगृहीतार आर्याः करुणवेदिनः । महाप्रसादा ऋजवो दृढभक्ता जितेन्द्रियाः ।
सन्तुष्टभृत्यसचिवाः कृतज्ञाः प्रियवादिनः । यथार्हमानार्थकरा ह्रीनिषेवा यतव्रताः ।
नित्यं पर्वसु सुस्नाता स्वनुलिप्ताः स्वलङ्कृताः । उपवासतपःशीलाः प्रतीता ब्रह्मवादिनः ।
नैतानभ्युदियात्सूर्यो न चाप्यासन् प्रगेशयाः । रात्रौ दधि च सक्तूंश्च नित्यमेव व्यवर्जयन् ।

कल्यं घृतञ्चान्ववेचन् प्रयता ब्रह्मवादिनः। मङ्गल्यान्यपि चापश्यन् ब्राह्मणांश्चाप्यपूजयन्। ८१७०
सदा हि वदतां धर्म्मं सदा चाप्रतिगृह्णतां। अर्द्धञ्च रात्र्याः स्वपतां दिवा चास्वपतां तथा।
कृपणानाथवृद्धानां दुर्ब्बलातुरयोषितां। दयाञ्च संविभागञ्च नित्यमेवानुमोदतां।
त्रस्तं विषण्णमुद्विग्नं भयार्त्तं व्याधितं कृशं। हृतस्वं व्यसनार्त्तञ्च नित्यमाश्वासयन्ति ते।
धर्म्ममेवान्ववर्त्तन्त न हिंसन्ति परस्परं। अनुकूलाश्च कार्य्येषु गुरुवृद्धोपसेविनः।
पितॄन् देवातिथींश्चैव यथावत्तेऽभ्यपूजयन्। अवशेषाणि चाश्नन्ति नित्यं सत्यतपोधृताः। ८१७५
नैकेऽश्नन्ति सुसम्पन्नं न गच्छन्ति परस्त्रियं। सर्व्वभूतेष्ववर्त्तन्त यथात्मनि दयां प्रति।
नैवाकाशे न पशुषु वियोनौ न च पर्व्वसु। इन्द्रियस्य विसर्गन्ते रोचयन्ति कदाचन।
नित्यं दानं तथा दाक्ष्यमार्ज्जवञ्चैव नित्यदा। उत्साहोऽथानहङ्कारः परमं सौहृदं क्षमा।
सत्यं दानं तपः शौचं कारुण्यं वागनिष्ठुरा। मित्रेषु चानभिद्रोहः सर्व्वन्तेष्वभवत्प्रभो।
निद्रा तन्द्रीरसम्प्रीतिरसूयाऽथानवेक्षिता। अरतिश्च विषादश्च स्पृहा चाप्यविशन्न तान्। ८१८०
साऽहमेवं गुणेष्वेव दानवेष्ववसं पुरा। प्रजासर्गमुपादाय नैकं युगविपर्य्ययं।
ततः कालविपर्य्यासे तेषां गुणविपर्य्ययात्। अपश्यं निर्गतं धर्म्मं कामक्रोधवशात्मनां।
सभासदाञ्च वृद्धानां सतां कथयतां कथाः। प्राहसन्नभ्यसूयंश्च सर्व्ववृद्धान् गुणावराः।
युवानश्च समासीना वृद्धानभिगतान् सतः। नाभ्युत्थानाभिवादाभ्यां यथापूर्व्वमपूजयन्।
वर्त्तयत्येव पितरि पुत्त्रः प्रभवते तथा। अभृत्या भृत्यतां प्राप्य ख्यापयन्त्यनपत्रपाः। ८१८५
तथा धर्म्मादपेतेन कर्म्मणा गर्हितेन ये। महतः प्राप्नुवन्त्यर्थांस्तेषां तत्राभवत् स्पृहा।
उच्चैश्चाभ्यवदन्रात्रौ नीचैस्तत्राग्निरज्वलत्। पुत्त्राः पितॄनत्यचरन्नार्य्यश्चात्यचरन् पतीन्।
मातरं पितरं वृद्धमाचार्य्यमतिथिं गुरुं। गुरुत्वान्नाभ्यनन्दन्त कुमारान्नान्वपालयन्।
भिक्षां बलिमदत्त्वा च स्वयमन्नानि भुञ्जते। अनिष्ट्वा संविभज्याथ पितृदेवातिथीन् गुरून्।
न शौचमन्वरुध्यन्त तेषां सूदजनास्तथा। मनसा कर्म्मणा वाचा भक्ष्यमासीदनावृतं। ८१९०
विप्रकीर्णानि धान्यानि काकमूषिकभोजनं। अपावृतं पयोऽतिष्ठदुच्छिष्टाश्चास्पृशन् घृतं।
कुद्दालं दात्त्रपिटकं प्रकीर्णं कांस्यभाजनं। द्रव्योपकरणं सर्व्वं नान्ववैक्षत् कुटुम्बिनी।
प्राकारागारविध्वंसान्न स्म ते प्रतिकुर्व्वते। नाद्रियन्ते पशून् बद्ध्वा यवसेनोदकेन च।
बालानां प्रेक्षमाणानां स्वयं भक्ष्यमभक्षयन्। तथा भृत्यजनं सर्व्वमसन्तर्प्य च दानवाः।
पायसं कृशरं मांसमपूपानथ शष्कुलीः। अपाचयन्नात्मनोऽर्थे वृथामांसान्यभक्षयन्। ८१९५
उत्सूर्य्यशायिनश्चासन् सर्व्वे चासन् प्रगेनिशाः। अवर्त्तन् कलहाश्चात्र दिवारात्रं गृहे गृहे।
अनार्य्याश्चार्य्यमासीनं पर्य्युपासन्न तत्र ह। आश्रमस्थान् विधर्म्मस्थाः प्राद्विषन्त परस्परं।
सङ्कराश्चाभ्यवर्त्तन्त न च शौचमवर्त्तत। ये च वेदविदो विप्रा विस्पष्टमनृचश्च ये।
निरन्तरविशेषास्ते बहुमानावमानयोः। हारमाभरणं वेशं गतं स्थितमवेक्षितं।

मया कुरूणां वर यत् प्रचोदितं भवाभवस्येह परं निदर्शनं। तदद्य सर्व्वं परिकीर्त्तितं मया परीक्ष्य तत्त्वं परिगन्तुम र्हसि।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि श्रीवासवसंवादे अष्टाविंशत्यधिकद्विशतोऽध्यायः॥ २२८॥

॥ युधिष्ठिर उवाच॥ किंशीलः किंसमाचारः किंविद्यः किंपराक्रमः। प्राप्नोति ब्रह्मणः स्थानं यत् परं प्रकृतेर्ध्रुवं।

॥ भीष्म उवाच॥ मोक्षधर्म्मेषु नियतो लघ्वाहारी जितेन्द्रियः। प्राप्नोति ब्रह्मणः स्थानं तत् परं प्रकृतेर्ध्रुवं। ८४३०

अत्राप्युदाहरन्तीममितिहासं पुरातनं। जैगीषव्यस्य संवादमसितस्य च भारत।

जैगीषव्यं महाप्राज्ञं धर्म्माणामागतागमं। अक्रुध्यन्तमहृष्यन्तमसितो देवलोऽब्रवीत्।

॥ देवल उवाच॥ न प्रीयसे वन्द्यमानो निन्द्यमानो न कुप्यसे। का ते प्रज्ञा कुतश्चैषा किन्ते तस्याः परायणं।

॥ भीष्म उवाच॥ इति तेनानुयुक्तः स तमुवाच महातपाः। महद्वाक्यमसन्दिग्धं पुष्कलार्थपदं शुचि।

॥ जैगीषव्य उवाच॥ या गतिर्या परा काष्ठा या शान्तिः पुण्यकर्म्मणां। तान्तेऽहं सम्प्रवक्ष्यामि महतीमृषिसत्तम। ८४३५

निन्दत्सु च समा नित्यं प्रशंसत्सु च देवल। निह्नुवन्ति च ये तेषां समयं सुकृतञ्च यत्।

उक्ताश्च न वदिष्यन्ति वक्तारमहिते हितं। प्रतिहन्तुं न चेच्छन्ति हन्तारं वै मनीषिणः।

नाप्राप्तमनुशोचन्ति प्राप्तकालानि कुर्व्वते। न चातीतानि शोचन्ति न चैव प्रतिजानते।

सम्प्राप्तायाञ्च पूजायां कामादर्थेषु देवल। यथोपपत्तिं कुर्व्वन्ति शक्तिमन्तः कृतव्रताः।

पक्वविद्या महाप्राज्ञा जितक्रोधा जितेन्द्रियाः। मनसा कर्म्मणा वाचा नापराध्यन्ति कर्हिचित्। ८४४०

अनीर्ष्यवो न चान्योन्यं विहिंसन्ति कदाचन। न च जातूपतप्यन्ते धीराः परसमृद्धिभिः।

निन्दाप्रशंसे चात्यर्थं न वदन्ति परस्य ये। न च निन्दाप्रशंसाभ्यां विक्रियन्ते कदाचन।

सर्व्वतश्च प्रशान्ता ये सर्व्वभूतहिते रताः। न क्रुध्यन्ति न हृष्यन्ति नापराध्यन्ति कस्यचित्।

विमुच्य हृदयग्रन्थिं चंक्रमन्ति यथासुखं। न येषां बान्धवाः सन्ति ये चान्येषां न बान्धवाः।

अमित्राश्च न सन्त्येषां ये चामित्रा न कस्यचित्। य एवं कुर्व्वते मर्त्याः सुखं जीवन्ति सर्व्वदा। ८४४५

ये धर्म्मञ्चानुरुध्यन्ते सर्व्वज्ञा द्विजसत्तम। ये ह्यतो विच्युता मार्गात्ते हृष्यन्त्युद्विजन्ति च।

आस्थितस्तमहं मार्गमसूयिष्यामि कं कथं। निन्द्यमानः प्रशस्तो वा हृष्येऽहं केन हेतुना।

यद्यदिच्छन्ति तत्तस्मादभिगच्छन्तु मानवाः। न मे निन्दाप्रशंसाभ्यां ह्रासवृद्धी भविष्यतः।

अमृतस्येव किं तृप्येदवमानस्य तत्त्ववित्। विषस्येवोद्विजेन्नित्यं सम्मानस्य विचक्षणः।

अवज्ञातः सुखं शेते इह चामुत्र चाभयं। विमुक्तः सर्व्वदोषेभ्यो योऽवमन्ता स बुध्यते। ८४५०

पराङ्गतिञ्च ये केचित् प्रार्थयन्ति मनीषिणः। एतद्व्रतं समाहृत्य सुखमेधन्ति ते जनाः।

सर्व्वतश्च समाहृत्य क्रतून् सर्व्वान् जितेन्द्रियः। प्राप्नोति ब्रह्मणः स्थानं यत्परं प्रकृतेर्ध्रुवं।

नास्य देवा न गन्धर्व्वा न पिशाचा न राक्षसाः। पदमन्ववरोहन्ति प्राप्तस्य परमां गतिं।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि जैगीषव्यासितसंवादे ऊनत्रिंशदधिकद्विशतोऽध्यायः॥ २२९॥

॥ युधिष्ठिर उवाच॥ प्रियः सर्व्वस्य लोकस्य सर्व्वसत्त्वाभिनन्दिता। गुणैः सर्व्वैरुपेतश्च को न्वस्ति भुवि मानवः।

॥ भीष्म उवाच ॥ अत्र ते वर्त्तयिष्यामि पृच्छतो भरतर्षभ । उग्रसेनस्य संवादं नारदे केशवस्य च । ८४८५
॥ उग्रसेन उवाच । यस्य संकल्पते लोको नारदस्य प्रकीर्त्तने । मन्ये स गुणसम्पन्नो ब्रूहि तन्मम पृच्छतः ।
॥ वासुदेव उवाच । कुकुराधिप यानन्ये शृणु तान्मे विवक्षतः । नारदस्य गुणान् साधून् संक्षेपेण नराधिप ।
न चारित्रनिमित्तोऽस्याहङ्कारो देहतापनः । अभिन्नश्रुतचारित्रस्तस्मात् सर्व्वत्र पूजितः ।
अरतिः क्रोधचापल्ये भयं नैतानि नारदे । अदीर्घसूत्रः शूरश्च तस्मात् सर्व्वत्र पूजितः ।
उपास्यो नारदो बाढं वाचि नास्य व्यतिक्रमः । कामतो यदि वा लोभात्तस्मात् सर्व्वत्र पूजितः । ८४९०
अध्यात्मविधितत्त्वज्ञः क्षान्तः शक्तो जितेन्द्रियः । ऋजुश्च सत्यवादी च तस्मात् सर्व्वत्र पूजितः ।
तेजसा यशसा बुद्ध्या ज्ञानेन विनयेन च । जन्मना तपसा वृद्धस्तस्मात् सर्व्वत्र पूजितः ।
सुशीलः सुखसंवेशः सुभोजः स्वादरः शुचिः । सुवाक्यश्चाप्यनीर्ष्यश्च तस्मात् सर्व्वत्र पूजितः ।
कल्याणं कुरुते बाढं पापमस्मिन्न विद्यते । न प्रीयते परानर्थैस्तस्मात् सर्व्वत्र पूजितः ।
वेदश्रुतिभिराख्यानैरर्थानभिजिगीषति । तितिक्षुरनवज्ञश्च तस्मात् सर्व्वत्र पूजितः । ८४९५
समत्वाच्च प्रियो नास्ति नाप्रियश्च कथञ्चन । मनोऽनुकूलवादी च तस्मात् सर्व्वत्र पूजितः ।
बहुश्रुतश्चित्रकथः पण्डितोऽव्यालसोऽशठः । अदीनोऽक्रोधनोऽलुब्धस्तस्मात् सर्व्वत्र पूजितः ।
नार्थे धने वा कामे वा भूतपूर्व्वोऽस्य विग्रहः । दोषाश्चास्य समुच्छिन्नास्तस्मात् सर्व्वत्र पूजितः ।
दृढभक्तिरनिन्द्यात्मा श्रुतवाननृशंसवान् । वीतसम्मोहदोषश्च तस्मात् सर्व्वत्र पूजितः ।
असक्तः सर्व्वसङ्गेषु सक्तात्मेव च लक्ष्यते । अदीर्घसंशयो वाग्मी तस्मात् सर्व्वत्र पूजितः । ८५००
समाधिर्नास्य कामार्थे नात्मानं स्तौति कर्हिचित् । अनीर्ष्युर्मृदुसंवादस्तस्मात् सर्व्वत्र पूजितः ।
लोकस्य विविधं चित्तं प्रेक्षते चाप्यकुत्सयन् । संसर्गविद्याकुशलस्तस्मात् सर्व्वत्र पूजितः ।
नासूयत्यागमं कञ्चित् स्वनयेनोपजीवति । अवन्ध्यकालो वश्यात्मा तस्मात् सर्व्वत्र पूजितः ।
कृतश्रमः कृतप्रज्ञो न च तृप्तः समाश्रितः । नित्ययुक्तोऽप्रमत्तश्च तस्मात् सर्व्वत्र पूजितः ।
नापत्रपश्च युक्तश्च नियुक्तः श्रेयसे परैः । अभेत्ता परगुह्यानां तस्मात् सर्व्वत्र पूजितः । ८५०५
न हृष्यत्यर्थलाभेषु नालाभेषु व्यथत्यपि । स्थिरबुद्धिरसक्तात्मा तस्मात् सर्व्वत्र पूजितः ।
तं सर्व्वगुणसम्पन्नं दक्षं शुचिमनामयं । कालज्ञञ्च प्रियज्ञञ्च कः प्रियं न करिष्यति ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वासुदेवोग्रसेनसंवादे त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥
॥ युधिष्ठिर उवाच ॥ आद्यन्तं सर्व्वभूतानां ज्ञातुमिच्छामि कौरव । ध्यानं कर्म्म च कालञ्च तथैवायुर्युगे युगे ।
लोकतत्त्वञ्च कार्त्स्न्येन भूतानामागतिं गतिं । सर्गञ्च निधनञ्चैव कुत एतत् प्रवर्त्तते ।
यदि तेऽनुग्रहे बुद्धिरस्मास्विह सतांवर । एतद्भवन्तं पृच्छामि तद्भवान् प्रब्रवीतु मे । ८५१०
पूर्व्वं हि कथितं श्रुत्वा भृगुभाषितमुत्तमं । भरद्वाजस्य विप्रर्षेस्ततो मे बुद्धिरुत्तमा ।
जाता परमधर्म्मिष्ठा दिव्यसंस्थानसंस्थिता । ततो भूयस्तु पृच्छामि तद्भवान् वक्तुमर्हति ।
॥ भीष्म उवाच ॥ अत्र ते वर्त्तयिष्येऽहमितिहासं पुरातनं । जगौ यद्भगवान् व्यासः पुत्राय परिपृच्छते ।

अधीत्य वेदानखिलान् साङ्गोपनिषदस्तथा। अन्विच्छन्नैष्ठिकं कर्म्म धर्म्मनैपुणदर्शनात्।
कृष्णद्वैपायनं व्यासं पुत्त्रो वैयासकिः शुकः। पप्रच्छ सन्देहमिमं छिन्नधर्म्मार्थसंशयं। ८४८५

॥ शुक उवाच ॥ भूतग्रामस्य कर्त्तारं कालज्ञानेन निष्ठितं। ब्राह्मणस्य च यत् कृत्यं तद्भवान् वक्तुमर्हति।

॥ भीष्म उवाच॥ तस्मै प्रोवाच तत् सर्व्वं पिता पुत्त्राय पृच्छते। अतीतानागते विद्वान् सर्व्वज्ञः सर्व्वधर्म्मवित्।

॥ व्यास उवाच ॥ अनाद्यन्तमजं दिव्यमजरं ध्रुवमव्ययं। अप्रतर्क्यमविज्ञेयं ब्रह्माग्रे संप्रवर्त्तते।

काष्ठा निमेषा दश पञ्च चैव त्रिंशत्तु काष्ठा गणयेत्कलां तां। त्रिंशत्कलश्चापि भवेन्मुहूर्त्तो भागः कलाया दशमश्च यः स्यात्।
त्रिंशन्मुहूर्त्तन्तु भवेदहश्च रात्रिश्च संख्या मुनिभिः प्रणीता। मासः स्मृतो राव्यहनी च त्रिंशत्संवत्सरो द्वादशमास उक्तः। ८४९०

संवत्सरं द्वे त्वयने वदन्ति संख्याविदो दक्षिणमुत्तरञ्च।
अहोरात्रे विभजते सूर्य्यो मानुषलौकिके। रात्रिः स्वप्नाय भूतानां चेष्टायै कर्म्मणामहः।
पित्र्ये राव्यहनी मासः प्रविभागस्तयोः पुनः। शुक्लोऽहः कर्म्मचेष्टायां कृष्णः स्वप्नाय शर्व्वरी।
दैवे राव्यहनी वर्षं प्रविभागस्तयोः पुनः। अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायणं।
ये ते राव्यहनी पूर्व्वे कीर्त्तिते जीवलौकिके। तयोः संख्याय वर्षाग्रं ब्राह्मे वक्ष्याम्यहःक्षपे। ८४९५
पृथक् संवत्सराग्राणि प्रवक्ष्याम्यनुपूर्व्वशः। कृते त्रेतायुगे चैव द्वापरे च कलौ तथा।
चत्वार्य्याहुः सहस्राणि वर्षाणां तत् कृतं युगं। तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः।
इतरेषु ससन्ध्येषु सन्ध्यांशेषु ततस्त्रिषु। एकपादेन हीयन्ते सहस्राणि शतानि च।
एतानि शाश्वतान् लोकान् धारयन्ति सनातनान्। एतद्ब्रह्मविदां तात विदितं ब्रह्म शाश्वतं।
चतुष्पात्सकलो धर्म्मः सत्यञ्चैव कृते युगे। नाधर्म्मेणागमः कश्चित्परस्तस्य प्रवर्त्तते। ८५००
इतरेष्वागमाद्धर्म्मः पादशस्त्ववरोप्यते। चौर्य्यकानृतमायाभिरधर्म्मश्चोपचीयते।
अरोगाः सर्व्वसिद्धार्थाश्चतुर्व्वर्षशतायुषः। कृते त्रेतायुगे त्वेषां पादशो ह्रसते वयः।
वेदवादाश्चानुयुगं ह्रसन्तीति ह नः श्रुतं। आयूंषि चाशिषश्चैव वेदस्यैव च यत्फलं।
अन्ये कृतयुगे धर्म्मास्त्रेतायां द्वापरेऽपरे। अन्ये कलियुगे नृणां युगह्रासानुरूपतः।
तपः परं कृतयुगे त्रेतायां ज्ञानमुत्तमं। द्वापरे यज्ञमेवाहुर्द्दानमेकं कलौ युगे। ८५०५
एतां द्वादशसाहस्रीं युगाख्यां कवयो विदुः। सहस्रपरिवर्त्तन्तद्ब्राह्मं दिवसमुच्यते।
रात्रिमेतावतीञ्चैव तदादौ विश्वमीश्वरः। प्रलये ध्यानमाविश्य सुप्त्वा सोऽन्ते विबुध्यते।
सहस्रयुगपर्य्यन्तमहर्यद्ब्रह्मणो विदुः। रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः।
प्रतिबुद्धो विकुरुते ब्रह्माक्षय्यं क्षपाक्षये। सृजते च महद्भूतं तस्माद्व्यक्तात्मकं मनः।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने एकत्रिंशदधिकद्विशतोऽध्यायः ॥ २३१ ॥

॥ व्यास उवाच ॥ ब्रह्मतेजोमयं शुक्रं यस्य सर्व्वमिदं जगत्। एकस्य भूतं भूतस्य द्वयं स्थावरजङ्गमं। ८५१०
अहर्म्मुखे विबुद्धः सन् सृजतेऽविद्यया जगत्। अग्र एव महद्भूतमाशु व्यक्तात्मकं मनः।

अभिभूयेह चार्च्चिष्मान् वायुस्त्वात्मगुणान् स्वकान् । दूरंगमं बहुधागामि प्रार्थनासंशयात्मकं ।
मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया । आकाशं जायते तस्मात्तस्य शब्दं गुणं विदुः ।
आकाशात्तु विकुर्व्वाणात् सर्व्वगन्धवहः शुचिः । बलवान् जायते वायुस्तस्य स्पर्शो गुणो मतः ।
वायोरपि विकुर्व्वाणाज्ज्योतिर्भवति भास्वरं । रोचिष्णु जायते शुक्लं तद्रूपगुणमुच्यते । ८५१५
ज्योतिषोऽपि विकुर्व्वाणाद्भवन्त्यापो रसात्मिकाः । अद्भ्यो गन्धगुणा भूमिः पूर्व्वैषा सृष्टिरुच्यते ।
गुणाः पूर्व्वस्य पूर्व्वस्य प्राप्नुवन्त्युत्तरोत्तरं । तेषां यावद्यथा यच्च तत्तत्तावद्गुणं स्मृतं ।
उपलभ्याप्सु चेद्गन्धं केचिद्ब्रूयुरनैपुणात् । पृथिव्यामेव तं विद्यादपां वायोश्च संश्रितं ।
एते सप्तविधात्मानो नानावीर्य्याः पृथक् पृथक् । नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ।
ते समेत्य महात्मानो अन्योन्यमभिसंश्रिताः । शरीराश्रयणं प्राप्तास्ततः पुरुष उच्यते । ८५२०
शरीरं श्रयणाद्भवति मूर्त्तिमत् षोडशात्मकं । तमाविशन्ति भूतानि महान्ति सह कर्म्मणा ।
सर्व्वभूतानि चाहार्य्य तपसश्चरणाय च । आदिकर्त्ता स भूतानां तमेवाहुः प्रजापतिं ।
स वै सृजति भूतानि स्थावराणि चराणि च । ततः स सृजति ब्रह्मा देवर्षिपितृमानवान् ।
लोकान्नदीः समुद्रांश्च दिशः शैलान् वनस्पतीन् । नरकिन्नररक्षांसि वयःपशुमृगोरगान् ।
अव्ययञ्च व्ययञ्चैव द्वयं स्थावरजङ्गमं । तेषां ये यानि कर्म्माणि प्राक् सृष्ट्यां प्रतिपेदिरे । ८५२५
तान्येव प्रतिपद्यन्ते सृज्यमानाः पुनः पुनः । हिंस्राहिंस्रे मृदुक्रूरे धर्म्माधर्म्मावृतानृते ।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते । महाभूतेषु नानात्वमिन्द्रियार्थेषु मूर्त्तिषु ।
विनियोगञ्च भूतानां धातैव विदधात्युत । केचित् पुरुषकारन्तु प्राहुः कर्म्मसु मानवाः ।
दैवमित्यपरे विप्राः स्वभावं भूतचिन्तकाः । पौरुषं कर्म्म दैवञ्च फलवृत्तिस्वभावतः ।
त्रय एते पृथग्भूता न विवेकन्तु केचन । एवमेतच्च नैवञ्च न चोभे नानुभे न च । ८५३०
कर्म्मस्था विषयं ब्रूयुः सत्त्वस्थाः समदर्शिनः । तपो निःश्रेयसं जन्तोस्तस्य मूलं शमो दमः ।
तेन सर्व्वानवाप्नोति यान् कामान् मनसेच्छति । तपसा तदवाप्नोति यद्भूत्वा सृजते जगत् ।
स तद्भूतश्च सर्व्वेषां भूतानां भवति प्रभुः । ऋषयस्तपसा वेदानध्यैषन्त दिवानिशं ।
अनादिनिधना विद्या वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतः सर्व्वाः प्रवृत्तयः ।
ऋषीणां नामधेयानि याश्च वेदेषु सृष्टयः । नानारूपञ्च भूतानां कर्म्मणाञ्च प्रवर्त्तनम् । ८५३५
वेदशब्देभ्य एवादौ निर्म्मिमीते स ईश्वरः । नामधेयानि चर्षीणां याश्च वेदेषु सृष्टयः ।
शर्व्वर्य्यन्ते सुजातानामन्येभ्यो विदधात्यजः । नामभेदस्तपः कर्म्मयज्ञाख्या लोकसिद्धयः ।
आत्मसिद्धिस्तु वेदेषु प्रोच्यते दशभिः क्रमैः । यदुक्तं वेदवादेषु गहनं वेददर्शिभिः ।
तदन्तेषु यथायुक्तं क्रमयोगेन लक्ष्यते । कर्म्मजोऽयं पृथग्भावो द्वन्द्वयुक्तोऽपि देहिनः ।
आत्मसिद्धिस्तु विज्ञानाज्जहाति पुरुषो बलात् । द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत् । ८५४०
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति । आलम्भयज्ञाः क्षत्राश्च हविर्यज्ञा विशः स्मृताः ।

परिचारयज्ञाः शूद्रास्तु तपोयज्ञा द्विजातयः । त्रेतायुगे विधिस्त्वेष यज्ञानां न कृते युगे ।
द्वापरे विप्लवं यान्ति यज्ञाः कलियुगे तथा । अपृथग्धर्म्मिणो मर्त्या ऋक्सामानि यजूंषि च ।
काम्या इष्टीः पृथग्दृष्ट्वा तपोभिस्तप एव च । त्रेतायान्तु समस्ता ये प्रादुरासन्महाबलाः ।
संयन्तारः स्थावराणां जङ्गमानाञ्च सर्व्वशः । त्रेतायां संहता वेदा यज्ञा वर्णाश्रमास्तथा । ८५४५
संरोधादायुषस्त्वेते भ्रश्यन्ते द्वापरे युगे । दृश्यन्ते न च दृश्यन्ते वेदाः कलियुगेऽखिलाः ।
उत्सीदन्ते सयज्ञाश्च केवला धर्म्मपीडिताः । कृते युगे यस्तु धर्म्मो ब्राह्मणेषु प्रदृश्यते ।
आत्मवत्सु तपोवत्सु श्रुतवत्सु प्रतिष्ठितः । स धर्म्मव्रतसंयोगं यथा धर्म्मं युगे युगे ।
विक्रीयन्ते स्वधर्म्मस्था वेदवादा यथागमं । यथा विश्वानि भूतानि वृष्ट्या भूयांसि प्रावृषि ।
सृज्यन्ते जङ्गमस्थानि तथा धर्म्मा युगे युगे । यथर्त्तुष्वृतुलिङ्गानि नानारूपाणि पर्य्यये । ८५५०
दृश्यन्ते तानि तान्येव तथा ब्रह्महरादिषु । विहितं कालनानात्वमनादिनिधनं तथा ।
कीर्त्तितं तत्पुरस्तात्ते तत् सूते चात्ति च प्रजाः । दधाति भवति स्थानं भूतानां संयमो मतं ।
स्वभावेनैव वर्त्तन्ते द्वन्द्वयुक्तानि भूरिशः । सर्गकालक्रिया वेदाः कर्त्ता कार्य्यक्रियाफलं ।
प्रोक्तन्ते पुत्त्र सर्व्वं वै यन्मां त्वं परिपृच्छसि ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने द्वात्रिंशदधिकद्विशततोऽध्यायः ॥ २३२ ॥

॥ व्यास उवाच ॥ प्रत्याहारन्तु वक्ष्यामि शर्व्वर्य्यादौ गतेऽहनि । यथेदं कुरुतेऽध्यात्मं सुसूक्ष्मं विश्वमीश्वरः । ८५५५
दिवि सूर्य्यस्तथा सप्त दहन्ति शिखिनोऽर्च्चिषः । सर्व्वमेतत्तदर्च्चिर्भिः पूर्णं जाज्वल्यते जगत् ।
पृथिव्यां यानि भूतानि जङ्गमानि ध्रुवाणि च । तान्यवाग्रे प्रलीयन्ते भूमित्वमुपयान्ति च ।
ततः प्रलीने सर्व्वस्मिन् स्थावरे जङ्गमे तथा । निर्वृक्षा निस्तृणा भूमिर्दृश्यते कूर्म्मपृष्ठवत् ।
भूमेरपि गुणं गन्धमाप आददते यदा । आत्तगन्धा तदा भूमिः प्रलयत्वाय कल्पते ।
आपस्तत्र प्रतिष्ठन्ति ऊर्म्मिमत्यो महास्वनाः । सर्व्वमेवेदमापूर्य्य तिष्ठन्ति च चरन्ति च । ८५६०
अपामपि गुणं तात ज्योतिराददते यदा । आपस्तदा त्वात्तगुणा ज्योतिःषूपरमन्ति वै ।
यदादित्यं स्थितं मध्ये गूहन्ति शिखिनोऽर्च्चिषः । सर्व्वमेवेदमर्च्चिर्भिः पूर्णं जाज्वल्यते नभः ।
ज्योतिषोऽपि गुणं रूपं वायुराददते यदा । प्रशाम्यति ततो ज्योतिर्व्वायुर्दोधूयते महान् ।
ततस्तु स्वनमासाद्य वायुः सम्भवमात्मनः । अधश्चोर्द्ध्वञ्च तिर्य्यक्च दोधवीति दिशो दश ।
वायोरपि गुणं स्पर्शमाकाशं ग्रसते यदा । प्रशाम्यति तदा वायुः खन्तु तिष्ठति नादवत् । ८५६५
अरूपमरसस्पर्शमगन्धं न च मूर्त्तिमत् । सर्व्वलोकप्रणदितं खन्तु तिष्ठति नादवत् ।
आकाशस्य गुणं शब्दमभिव्यक्तात्मकं मनः । मनसो व्यक्तमव्यक्तं ब्राह्मः सम्प्रति सञ्चरः ।
तदात्मगुणमाविश्य मनो ग्रसति चन्द्रमाः । मनस्युपरते चापि चन्द्रमस्युपतिष्ठते ।
तन्तु कालेन महता सङ्कल्पं कुरुते वशे । चित्तं ग्रसति सङ्कल्पस्तच्च ज्ञानमनुत्तमं ।
कालो गिरति विज्ञानं कालं बलमिति श्रुतिः । बलं कालो ग्रसति तु तं विद्या कुरुते वशे । ८५७०

आकाशस्य तदा घोषं तं विद्वान् कुरुतेऽात्मनि । तदव्यक्तं परं ब्रह्म तच्छाश्वतमनुत्तमं ।
एवं सर्व्वाणि भूतानि ब्रह्मैव प्रतिसञ्चरः । यथावत् कीर्त्तितं सम्यगेवमेतदसंशयं ।
बोद्धव्यं विद्यामयं दृष्ट्वा योगिभिः परमात्मभिः । एवं विस्तारसंक्षेपौ ब्रह्माव्यक्ते पुनः पुनः ।
युगसाहस्रयोरादावहोरात्रस्तथैव च ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने चयस्त्रिंशदधिकद्विशततोऽध्यायः ॥ २३३ ॥

॥ व्यास उवाच ॥ भूतग्रामे नियुक्तं यत्तदेतत् कीर्त्तितं मया । ब्राह्मणस्य तु यत् कृत्यं तत्ते वक्ष्यामि तच्छृणु । ८५७५
जातकर्म्मप्रभृत्यस्य कर्म्मणां दक्षिणावतां । क्रिया स्यादासमावृत्तेराचार्य्ये वेदपारगे ।
अधीत्य वेदानखिलान् गुरुशुश्रूषणे रतः । गुरूणामनृणो भूत्वा समावर्त्तेत यज्ञवित् ।
आचार्य्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमं । आविमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि ।
प्रजासर्गेण दारैश्च ब्रह्मचर्य्येण वा पुनः । वने गुरुसकाशे वा यतिधर्म्मेण वा पुनः ।
गृहस्थस्त्वेव धर्म्माणां सर्व्वेषां मूलमुच्यते । यत्र पक्वकषायो हि दान्तः सर्व्वत्र सिध्यति । ८५८०
प्रजावान् श्रोत्रियो यज्वा मुक्त एव ऋणैस्त्रिभिः । अथान्यानाश्रमान् पश्चात् पूतो गच्छेत कर्म्मभिः ।
यत्पृथिव्यां पुण्यतमं विद्यास्थानं तदावसेत् । यतेत तस्मिन् प्रामाण्यं गन्तुं यशसि चोत्तमे ।
तपसा वा सुमहता विद्यानां पारणेन वा । इज्यया वा प्रदानैर्व्वा विप्राणां वर्द्धते यशः ।
यावदस्य भवत्यस्मिन् कीर्त्तिर्लोके यशस्करी । तावत् पुण्यकृतां लोकानन्तान् पुरुषोऽश्नुते ।
अध्यापयेदधीयीत याजयेत यजेत वा । न वृथा प्रतिगृह्णीयान्न च दद्यात् कथञ्चन । ८५८५
याज्यतः शिष्यतो वाऽपि कन्याया वा धनं महत् । यद्यागच्छेद्यजेद्दद्यान्नैकोऽश्नीयात् कथञ्चन ।
गृहमावसतो ह्यस्य नान्यत्तीर्थं प्रतिग्रहात् । देवर्षिपितृगुर्व्वर्थं वृद्धातुरबुभुक्षतां ।
अन्तर्हिताभितप्तानां यथाशक्ति बुभूषतां । द्रव्याणामतिशक्त्याऽपि देयमेषां कृतादपि ।
अर्हतामनुरूपाणां नादेयं ह्यस्ति किञ्चन । उच्चैःश्रवसमप्यश्वं प्रापणीयं सतां विदुः ।
अनुनीय यथाकामं सत्यसन्धो महाव्रतः । स्वैः प्राणैर्ब्राह्मणप्राणान् परित्राय दिवं गतः । ८५९०
रन्तिदेवश्च सांकृत्यो वशिष्ठाय महात्मने । अपः प्रदाय शीतोष्णा नाकपृष्ठे महीयते ।
आत्रेयश्चेन्द्रदमनो ह्यर्हते विविधं धनं । दत्त्वा लोकान् ययौ धीमाननन्तान् स महीपतिः ।
शिविरौशीनरोऽङ्गानि सुतञ्च प्रियमौरसं । ब्राह्मणार्थमुपाकृत्य नाकपृष्ठमितो गतः ।
प्रतर्द्दनः काशिपतिः प्रदाय नयने स्वके । ब्राह्मणायातुलां कीर्त्तिमिह चामुत्र चाश्नुते ।
दिव्यमष्टशलाकन्तु सौवर्णं परमर्द्धिमत् । छत्रं देवावृधो दत्त्वा सराष्ट्रोऽभ्यपतद्दिवं । ८५९५
सांकृतिश्च तथात्रेयः शिष्येभ्यो ब्रह्म निर्गुणं । उपदिश्य महातेजा गतो लोकाननुत्तमान् ।
अम्बरीषो गवां दत्त्वा ब्राह्मणेभ्यः प्रतापवान् । अर्व्वुदानि दशैकञ्च सराष्ट्रोऽभ्यपतद्दिवं ।
सावित्री कुण्डले दिव्ये शरीरं जनमेजयः । ब्राह्मणार्थे परित्यज्य जग्मतुर्लोकमुत्तमं ।
सर्व्वरत्नं वृषादर्भिर्युवनाश्वः प्रियाः स्त्रियः । रम्यमावसथञ्चैव दत्त्वा स्वर्लोकमास्थितः ।

निमीराजश्च वैदेहो जामदग्न्यो वसुन्धरां । ब्राह्मणेभ्यो ददौ चापि गयश्चोर्व्वीं सपत्तनां ।　८६००
अवर्षति च पर्ज्जन्ये सर्व्वभूतानि भूतकृत् । वशिष्ठो जीवयामास प्रजापतिरिव प्रजाः ।
करन्धमस्य पुत्रस्तु कृतात्मा मरुतस्तथा । कन्यामङ्गिरसे दत्त्वा दिवमाशु जगाम ह ।
ब्रह्मदत्तश्च पाञ्चाल्यो राजा बुद्धिमतांवरः । निधिं शङ्खं द्विजाग्र्येभ्यो दत्त्वा लोकानवाप्तवान् ।
राजा मित्रसहश्चापि वशिष्ठाय महात्मने । दमयन्तीं प्रियां दत्त्वा तया सह दिवङ्गतः ।
सहस्रजिच्च राजर्षिः प्राणानिष्टान्महायशाः । ब्राह्मणार्थे परित्यज्य गतो लोकाननुत्तमान् ।　८६०५
सर्व्वकामैश्च संपूर्णं दत्त्वा वेश्म हिरण्मयं । मुद्गलाय गतः स्वर्गं शतद्युम्नो महीपतिः ।
नाम्ना च द्युतिमान्नाम शाल्वराजः प्रतापवान् । दत्त्वा राज्यमृचीकाय गतो लोकाननुत्तमान् ।
मदिराश्वश्च राजर्षिर्दत्त्वा कन्यां सुमध्यमां । हिरण्यहस्ताय गतो लोकान् देवैरभिष्टुतान् ।
लोमपादश्च राजर्षिः शान्तां दत्त्वा सुतां प्रभुः । ऋष्यशृङ्गाय विपुलैः सर्व्वकामैरयुज्यत ।
दत्त्वा शतसहस्रन्तु गवां राजा प्रसेनजित् । सवत्सानां महातेजा गतो लोकाननुत्तमान् ।　८६१०
एते चान्ये च बहवो दानेन तपसैव च । महात्मानो गताः स्वर्गं शिष्टात्मानो जितेन्द्रियाः ।
तेषां प्रतिष्ठिता कीर्त्तिर्यावत् स्थास्यति मेदिनी । दानयज्ञप्रजासर्गैरेते हि दिवमाप्नुवन् ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने चतुस्त्रिंशदधिकद्विशततोऽध्यायः ॥ २३४ ॥
॥ व्यास उवाच ॥ त्रयीविद्यामवेक्षेत वेदेषूक्तामथाङ्गतः । ऋक्सामवर्णाक्षरतो यजुषोऽथर्व्वणस्तथा ।
तिष्ठत्येतेषु भगवान् षट्सु कर्म्मसु संस्थितः । वेदवादेषु कुशला ह्यध्यात्मकुशलाश्च ये ।
सत्त्ववन्तो महाभागाः पश्यन्ति प्रभवाव्ययं । एवं धर्म्मेण वर्त्तेत क्रियां शिष्टवदाचरेत् ।　८६१५
असंरोधेन भूतानां वृत्तिं लिप्सेत वै द्विजः । सद्भ्य आगतविज्ञानः शिष्टः शास्त्रविचक्षणः ।
स्वधर्म्मेण क्रिया लोके कर्म्मसत्त्वस्वसञ्चरः । तिष्ठते तेषु गृहवान् षट्सु कर्म्मसु स द्विजः ।
पञ्चभिः सततं यज्ञैः श्रद्दधानो यजेत च । धृतिमानप्रमत्तश्च दान्तो धर्म्मविदात्मवान् ।
वीतहर्षमदक्रोधो ब्राह्मणो नावसीदति । दानमध्ययनं यज्ञस्तपो ह्रीरार्ज्जवं दमः ।
एतैर्व्वर्द्धयते तेजः पाप्मानञ्चापकर्षति । धूतपाप्मा च मेधावी लघ्वाहारो जितेन्द्रियः ।　८६२०
कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदं । अग्नींश्च ब्राह्मणांश्चार्च्चेद्देवताः प्रणमेत च ।
वर्ज्जयेदुषतीं वाचं हिंसाञ्चाधर्म्मसंहितां । एषा पूर्व्वगता वृत्तिर्ब्राह्मणस्य विधीयते ।
ज्ञानागमेन कर्म्माणि कुर्व्वन् कर्म्मसु सिद्ध्यति । पञ्चेन्द्रियजलां घोरां लोभमूलां सुदुस्तरां ।
मन्युपङ्कामनाधृष्यां नदीं तरति बुद्धिमान् । कालमभ्युद्यतं पश्येन्नित्यमत्यन्तमोहनं ।
महता विधिदृष्टेन बलेनाप्रतिघातिना । स्वभावस्रोतसा वृत्तमुह्यते सततं जगत् ।　८६२५
कालोदकेन महता वर्षावर्त्तेन सन्ततं । मासोर्म्मिणर्त्तुवेगेन पक्षोलपतृणेन च ।
निमिषोन्मेषफेणेन अहोरात्रजलेन च । कामग्राहेण घोरेण वेदयज्ञप्लवेन च ।
धर्म्मद्वीपेन भूतानां चार्थकामजलेन च । ऋतवाङ्मोक्षतीरेण विहिंसातरुवाहिना ।

युगह्रदौघमध्येन ब्रह्मप्रायभवेन च। धात्रा सृष्टानि भूतानि कृष्यन्ते यमसादनं।
एतत् प्रज्ञामयैर्धीरा निस्तरन्ति मनीषिणः। प्लवैरप्लववन्तो हि किं करिष्यन्त्यचेतसः। ८६३०
उपपन्नं हि यत् प्राज्ञो निस्तरेन्नेतरो जनः। दूरतो गुणदोषौ हि प्राज्ञः सर्व्वत्र पश्यति।
संशयं स तु कामात्मा चलचित्तोऽल्पचेतनः। अप्राज्ञो न तरत्येनं यो ह्यास्ते न स गच्छति।
अप्लवोऽहि महादोषं मुह्यमानो नियच्छति। कामग्राहगृहीतस्य ज्ञानमप्यस्य न प्लवः।
तस्मादुन्मज्जनस्यार्थे प्रयतेत विचक्षणः। एतदुन्मज्जनं तस्य यदयं ब्राह्मणो भवेत्।
अवदातेषु संजातस्त्रिसन्देहस्त्रिकर्म्मकृत्। तस्मादुन्मज्जने तिष्ठेत् प्रज्ञया निस्तरेद्यथा। ८६३५
संस्कृतस्य हि दान्तस्य नियतस्य यतात्मनः। प्राज्ञस्यानन्तरा सिद्धिरिह लोके परत्र च।
वर्त्तेत तेषु गृहवानक्रुध्यन्ननसूयकः। पञ्चभिः सततं यज्ञैर्विघसाशी यजेत च।
सतां धर्म्मेण वर्त्तेत क्रियां शिष्टवदाचरेत्। असंरोधेन लोकस्य वृत्तिं लिप्सेदगर्हितां।
श्रुतविज्ञानतत्त्वज्ञः शिष्टाचारो विचक्षणः। स्वधर्म्मेण क्रियावांश्च कर्म्मणा सोऽप्यसङ्करः।
क्रियावान् श्रद्दधानो हि दान्तः प्राज्ञोऽनसूयकः। धर्म्माधर्म्मविशेषज्ञः सर्व्वं तरति दुस्तरं। ८६४०
धृतिमानप्रमत्तश्च दान्तो धर्म्मविदात्मवान्। वीतहर्षमदक्रोधो ब्राह्मणो नावसीदति।
एषा पुरातनी वृत्तिर्ब्राह्मणस्य विधीयते। ज्ञानवत्त्वे च कर्म्माणि कुर्व्वन् सर्व्वत्र सिध्यति।
अधर्म्मं धर्म्मकामो हि करोति ह्यविचक्षणः। धर्म्मं वा धर्म्मसंकाशं शोचन्निव करोति सः।
धर्म्मं करोमीति करोत्यधर्म्ममधर्म्मकामश्च करोति धर्म्मं। उभे बालः कर्म्मणी न प्रजानन् स जायते म्रियते चापि देही।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने पञ्चत्रिंशदधिकद्विशततोऽध्यायः ॥ २३५ ॥

॥ व्यास उवाच ॥ अथ चेद्रोचयेदेतद्द्रुह्येत स्रोतसा यथा। उन्मज्जंश्च निमज्जंश्च ज्ञानवान् प्लववान् भवेत्। ८६४५
प्रज्ञया निश्चिता धीरास्तारयन्त्यबुधान् प्लवैः। नाबुधास्तारयन्त्यन्यानात्मानं वा कथञ्चन।
छिन्नदोषो मुनिर्योगान्युक्तो युञ्जीत द्वादश। देशकर्म्मानुरागार्थानुपायापायनिश्चयः।
चक्षुराहारसंहारैर्मनसा दर्शनेन च। यच्छेद्वाङ्मनसी बुद्ध्या य इच्छेज्ज्ञानमुत्तमं।
ज्ञानेन यच्छेदात्मानं य इच्छेच्छान्तिमात्मनः। एतेषाञ्चेदनुद्रष्टा पुरुषोऽपि सुदारुणः।
यदि वा सर्व्ववेदज्ञो यदि वाऽप्यनृचो द्विजः। यदि वा धार्म्मिको यज्वा यदि वा पापकृत्तमः। ८६५०
यदि वा पुरुषव्याघ्रो यदि वा क्लैब्यधारितः। तरत्येवं महादुर्गं जरामरणसागरं।
एवं ह्येतेन योगेन युञ्जानो ह्येकमन्ततः। अपि जिज्ञासमानोऽपि शब्दब्रह्मातिवर्त्तते।
धर्म्मोपस्थो ह्रीवरूथ उपायापायकूवरः। अपानाक्षः प्राणयुगः प्रज्ञायुर्जीवबन्धनः।
चेतनाबन्धुरश्चारुश्चाचारग्रहनेमिमान्। दर्शनस्पर्शनवहो घ्राणश्रवणवाहनः।
प्रज्ञानाभिः सर्व्वतन्त्रः प्रतोदो ज्ञानसारथिः। क्षेत्रज्ञाधिष्ठितो धीरः श्रद्धादमपुरःसरः। ८६५५
त्यागसूक्ष्मानुगः क्षेम्यः शौचगो ध्यानगोचरः। जीवयुक्तो रथो दिव्यो ब्रह्मलोके विराजते।

अथ सन्तरमाणस्य रथमेवं युयुक्षतः। अक्षरं गन्तुमनसो विधिं वक्ष्यामि शीघ्रगं।
सप्त या धारणाः कृत्स्ना वाग्यतः प्रतिपद्यते। पृष्ठतः पार्श्वतश्चान्यास्तावत्यस्ताः प्रधारणाः।
क्रमशः पार्थिवं यच्च वायव्यं खं तथा पयः। ज्योतिषो यत्तदैश्वर्य्यमहङ्कारस्य बुद्धितः।
अव्यक्तस्य तथैश्वर्य्यं क्रमशः प्रतिपद्यते। विक्रमाश्चापि यस्यैते तथा युक्तेषु योगतः। ८६६०
तथा योगस्य युक्तस्य सिद्धिमात्मनि पश्यतः। निर्म्मुच्यमानः सूक्ष्मत्वाद्रूपाणीमानि पश्यतः।
शैशिरस्तु यथा धूमः सूक्ष्मः संश्रयते नभः। तथा देहाद्विमुक्तस्य पूर्व्वरूपं भवत्युत।
अथ धूमस्य विरमे द्वितीयं रूपदर्शनं। जलरूपमिवाकाशे तथैवात्मनि पश्यति।
अपां व्यतिक्रमे चास्य वह्निरूपं प्रकाशते। तस्मिन्नुपरतेऽप्यस्य पीतशस्त्रः प्रकाशते।
ऊर्णारूपसवर्णस्य तस्य रूपं प्रकाशते। अथ श्वेतां गतिं गत्वा वायव्यं सूक्ष्ममप्युत। ८६६५
अप्युक्तं तेजसः सौक्ष्म्यमप्युक्तं ब्राह्मणस्य वै। एतेष्वपि हि जातेषु फलजातानि मे शृणु।
जातस्य पार्थिवैश्वर्य्यैः सृष्टिरत्र विधीयते। प्रजापतिरिवाक्षोभ्यः शरीरात् सृजते प्रजाः।
अङ्गुल्यङ्गुष्ठमात्रेण हस्तपादेन वा तथा। पृथिवीं कम्पयत्येको गुणो वायोरिति श्रुतिः।
आकाशभूतस्त्वाकाशे सवर्णत्वात् प्रकाशते। वर्णतो गृह्यते चापि कामात् पिबति चाशयान्।
न चास्य तेजसां रूपं दृश्यते शाम्यते तथा। अहङ्कारेऽस्य विजिते पञ्चैते स्युर्व्वशानुगाः। ८६७०
षण्णामात्मनि बुद्धौ च जितायां प्रभवत्यथ। निर्द्दोषप्रतिभा ह्येनं कृत्स्ना समभिवर्त्तते।
तथैव व्यक्तमात्मानमव्यक्तं प्रतिपद्यते। यतो विसरते लोको भवति व्यक्तसंज्ञकः।
तत्राव्यक्तमयीं विद्यां शृणु त्वं विस्तरेण मे। तथा व्यक्तमयञ्चैव साङ्ख्ये पूर्व्वं निबोध मे।
पञ्चविंशतितत्त्वानि तुल्यान्युभयतः समं। योगे साङ्ख्येऽपि च तथा विशेषं तत्र मे शृणु।
प्रोक्तं तद्व्यक्तमित्येव जायते वर्द्धते च यत्। जीर्य्यते म्रियते चैव चतुर्भिर्लक्षणैर्युतं। ८६७५
विपरीतमतो यत्तु तदव्यक्तमुदाहृतं। द्वावात्मानौ च वेदेषु सिद्धान्तेष्वप्युदाहृतौ।
चतुर्लक्षणजं त्वाद्यं चतुर्व्वर्गं प्रचक्षते। व्यक्तमव्यक्तजञ्चैव तथा बुद्धमचेतनं।
सत्त्वं क्षेत्रज्ञ इत्येतद्द्वयमप्यनुदर्शितं। द्वावात्मानौ च वेदेषु विषयेष्वनुरज्यतः।
विषयात् प्रतिसंहारः साङ्ख्यानां विद्धि लक्षणं। निर्म्ममश्चानहङ्कारो निर्द्वन्द्वश्छिन्नसंशयः।
नैव क्रुध्यति न द्वेष्टि नानृता भाषते गिरः। आक्रुष्टस्ताडितश्चैव मैत्रेण ध्याति नाशुभं। ८६८०
वाग्दण्डकर्म्ममनसां त्रयाणाञ्च निवर्त्तकः। समः सर्व्वेषु भूतेषु ब्रह्माणमभिवर्त्तते।
नैवेच्छति न चानिच्छो यात्रामात्रव्यवस्थितः। अलोलुपोऽव्यथो दान्तो न कृती न निराकृती।
नास्येन्द्रियमनेकाग्रं नाविक्षिप्तमनोरथः। सर्व्वभूतसदृङ्मैत्रसमलोष्टककाञ्चनः।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः। अस्पृहः सर्व्वकामेभ्यो ब्रह्मचर्य्यदृढव्रतः।
अहिंस्रः सर्व्वभूतानामीदृक् साङ्ख्यो विमुच्यते। यथा योगाद्विमुच्यन्ते कारणैर्यैर्निबोध तत्। ८६८५
योगैश्वर्य्यमतिक्रान्तो यो निष्क्रामति मुच्यते। इत्येषा भावजा बुद्धिः कथिता ते न संशयः।

एवम्भवति निर्द्वन्द्वो ब्रह्माणञ्चाधिगच्छति । कर्म्मणा मनसा युक्तो ब्रह्माणं चाभिवर्त्तते ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥

॥ व्यास उवाच ॥ अथ ज्ञानप्लवं धीरो गृहीत्वा शान्तिमात्मनः । उन्मज्जंश्च निमज्जंश्च ज्ञानमेवाभिसंश्रयेत् ।
॥ शुक उवाच ॥ किन्तज्ज्ञानमथो विद्या यया निस्तरते द्वयं । प्रवृत्तिलक्षणो धर्म्मो निवृत्तिरिति वा वद ।
॥ व्यास उवाच ॥ यस्तु पश्यन् स्वभावेन विना भावमचेतनः । पुष्यते च पुनः सर्व्वान् प्रज्ञया मुक्तहेतुकान् । ८६९०
येषाञ्चैकान्तभावेन स्वभावात् कारणं मतं । पूत्वा तृणबुषीकां वा ते लभन्ते न किञ्चन ।
ये चैनं पक्षमाश्रित्य निवर्त्तन्त्यल्पमेधसः । स्वभावं कारणं ज्ञात्वा न श्रेयः प्राप्नुवन्ति ते ।
स्वभावो हि विनाशाय मोहकर्म्ममनोभवः । निरुक्तमेतयोरेतत् स्वभावपरिभावयोः ।
कृष्यादीनीह कर्म्माणि शस्यसंहरणानि च । प्रज्ञावद्भिः प्रक्लृप्तानि यानासनगृहाणि च ।
आक्रीडानां गृहाणाञ्च गदानामगदस्य च । प्रज्ञावन्तः प्रयोक्तारो ज्ञानवद्भिरनुष्ठिताः । ८६९५
प्रज्ञा संयोजयत्यर्थैः प्रज्ञाः श्रेयोऽधिगच्छति । राजानो भुञ्जते राज्यं प्रज्ञया तुल्यलक्षणाः ।
परावरन्तु भूतानां ज्ञानेनैवोपलभ्यते । विद्यया तात सृष्टानां विद्यैवेह परा गतिः ।
भूतानां जन्म सर्व्वेषां विविधानां चतुर्व्विधं । जरायुजाण्डजोद्भिज्जस्वेदजञ्चोपलक्षयेत् ।
स्थावरेभ्यो विशिष्टानि जङ्गमान्युपधारयेत् । उपपन्नं हि यच्चेष्टा विशिष्येत विशिष्यया ।
आहुर्व्वै बहुपादानि जङ्गमानि द्वयानि तु । बहुपाद्भ्यो विशिष्टानि द्विपादानि बहून्यपि । ८७००
द्विपदानि द्वयान्याहुः पार्थिवानीतराणि च । पार्थिवानि विशिष्टानि तानि ह्यन्नानि भुञ्जते
पार्थिवानि द्वयान्याहुर्म्मध्यमान्युत्तमानि तु । मध्यमानि विशिष्टानि जातिधर्म्मोपधारणात् ।
मध्यमानि द्वयान्याहुर्धर्म्मज्ञानीतराणि च । धर्म्मज्ञानि विशिष्टानि कार्य्याकार्य्योपधारणात् ।
धर्म्मज्ञानि द्वयान्याहुर्व्वेदज्ञानीतराणि च । वेदज्ञानि विशिष्टानि वेदो ह्येषु प्रतिष्ठितः ।
वेदज्ञानि द्वयान्याहुः प्रवक्तॄणीतराणि च । प्रवक्तॄणि विशिष्टानि सर्व्वधर्म्मोपधारणात् । ८७०५
विज्ञायन्ते हि यैर्व्वेदाः सधर्म्माः सक्रियाफलाः । सधर्म्मा निखिला वेदाः प्रवक्तृभ्यो विनिःसृताः ।
प्रवक्तॄणि द्वयान्याहुरात्मज्ञानीतराणि च । आत्मज्ञानि विशिष्टानि जन्माजन्मोपधारणात् ।
धर्म्मद्वयं हि यो वेद स धर्म्मज्ञः स सर्व्ववित् । स त्यागी सत्यसंकल्पः सत्यः शुचिरथेश्वरः ।
ब्रह्मज्ञानप्रतिष्ठं हि तं देवा ब्राह्मणं विदुः । शब्दब्रह्मणि निष्णातं परे च कृतनिश्चयं ।
अन्तःस्थञ्च बहिःस्थञ्च साधियज्ञाधिदैवतं । ज्ञानान्विता हि पश्यन्ति ते देवास्तात ते द्विजाः ८७१०
तेषु विश्वमिदं भूतं सर्व्वञ्च जगदाहितं । तेषां माहात्म्यभावस्य सदृशं नास्ति किञ्चन ।
आद्यन्ते निधनञ्चैव कर्म्म चातीत्य सर्व्वशः । चतुर्व्विधस्य भूतस्य सर्व्वस्येशाः स्वयम्भुवः ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥

॥ व्यास उवाच ॥ एषा पूर्व्वतरा वृत्तिर्ब्राह्मणस्य विधीयते । ज्ञानवानेव कर्म्माणि कुर्व्वन् सर्व्वत्र सिध्यति ।
तत्र चेन्न भवेदेवं संशयः कर्म्मसिद्धये । किन्नु कर्म्म स्वभावोऽयं ज्ञानं कर्म्मेति वा पुनः ।

तत्र वेदविधिः स स्याज्ज्ञानश्चेत् पुरुषं प्रति। उपपत्त्युपलब्धिभ्यां वर्णयिष्यामि तच्छृणु। ८७२६
पौरुषं कारणं केचिदाहुः कर्म्मसु मानवाः। दैवमेके प्रशंसन्ति स्वभावमपरे जनाः।
पौरुषं कर्म्म दैवञ्च कालवृत्तिस्वभावतः। त्रयमेतत्पृथग्भूतमविवेकन्तु केचन।
एतदेवञ्च नैवञ्च न चोभे नानुभे तथा। कर्म्मस्था विषयं ब्रूयुः सत्त्वस्थाः समदर्शिनः।
त्रेतायां द्वापरे चैव कलिजाश्च ससंशयाः। तपस्विनः प्रशान्ताश्च सत्त्वस्थाश्च कृते युगे।
अपृथग्दर्शिनः सर्व्वे ऋक्सामसु यजुःषु च। कामद्वेषौ पृथक्कृत्वा तपः कृत उपासते। ८७३०
तपोधर्म्मेण संयुक्तस्तपोनित्यः सुसंशितः। तेन सर्व्वानवाप्नोति कामान् यान्मनसेच्छति।
तपसा तदवाप्नोति यद्भूत्वा सृजते जगत्। तद्भूतश्च ततः सर्व्वो भूतानां भवति प्रभुः।
तदुक्तं वेदवादेषु गहनं वेददर्शिभिः। वेदान्तेषु पुनर्व्यक्तं कर्म्मयोगेन लक्ष्यते।
आरम्भयज्ञाः क्षत्त्राश्च हविर्यज्ञा विशः स्मृताः। परिचारयज्ञाः शूद्राश्च जपयज्ञा द्विजातयः।
परिनिष्ठितकार्य्यो हि स्वाध्यायेन द्विजो भवेत्। कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते। ८७३५
त्रेतादौ केवला वेदा यज्ञा वर्णाश्रमास्तथा। संरोधादायुषस्त्वेते व्यस्यन्ते द्वापरे युगे।
द्वापरे विप्लवं यान्ति वेदाः कलियुगे तथा। दृश्यन्ते नापि दृश्यन्ते कलेरन्ते पुनः किल।
उत्सीदन्ति स्वधर्म्माश्च तत्राधर्म्मेण पीडिताः। गवां भूमेश्च ये चापामोषधीनाञ्च ये रसाः।
अधर्म्मान्तर्हिता वेदा वेदधर्म्मास्तथाश्रमाः। विक्रियन्ते स्वधर्म्मस्थाः स्थावराणि चराणि च।
यथा सर्व्वाणि भूतानि वृष्टिर्भौमानि वर्षति। सृजते सर्व्वतोऽङ्गानि तथा वेदा युगे युगे। ८७४०
निश्चितं कालनानात्वमनादिनिधनञ्च यत्। कीर्त्तितं यत्पुरस्तान्मे सूते यच्चात्ति च प्रजाः।
यच्चेदं प्रभवः स्थानं भूतानां संयमो यमः। स्वभावेनैव वर्त्तन्ते द्वन्द्वसृष्टानि भूरिशः।
सर्गः कालो धृतिर्व्वेदाः कर्त्ता कार्य्यं क्रिया फलं। एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने अष्टत्रिंशदधिकद्विशततोऽध्यायः॥ २३८ ॥
॥ भीष्म उवाच ॥ इत्युक्तोऽभिप्रशस्यैतत् परमर्षेस्तु शासनं। मोक्षधर्म्मार्थसंयुक्तमिदं प्रष्टुं प्रचक्रमे।
॥ शुक उवाच ॥ प्रज्ञावान् श्रोत्रियो यज्वा कृतप्रज्ञोऽनसूयकः। अनागतमनैतिह्यं कथं ब्रह्माधिगच्छति। ८७४५
तपसा ब्रह्मचर्य्येण सर्व्वत्यागेन मेधया। साङ्ख्ये वा यदि वा योग एतत् पृष्टो वदस्व मे।
मनसश्चेन्द्रियाणाञ्च यथैकाग्र्यमवाप्यते। येनोपायेन पुरुषैस्तत्त्वं व्याख्यातुमर्हसि।
॥ व्यास उवाच ॥ नान्यत्र विद्यातपसोर्नान्यत्रेन्द्रियनिग्रहात्। नान्यत्र सर्व्वसन्त्यागात् सिद्धिं विन्दति कश्चन।
महाभूतानि सर्व्वाणि पृथक् सिद्धिः स्वयम्भुवः। भूयिष्ठं प्राणभृद्ग्रामे निविष्टानि शरीरिषु।
भूमेर्द्देहो जलात् स्नेहो ज्योतिषश्चक्षुषी स्मृते। प्राणापानाश्रयो वायुः खेष्वाकाशं शरीरिणां। ८७५०
क्रान्ते विष्णुर्ब्बले शक्रः कोष्ठेऽग्निर्भोक्तुमिच्छति। कर्णयोः प्रदिशः श्रोत्रं जिह्वायां वाक् सरस्वती।
कर्णौ त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी। दर्शनीयेन्द्रियोक्तानि द्वाराण्याहारसिद्धये।
शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः। इन्द्रियार्थान् पृथग्विद्यादिन्द्रियेभ्यस्तु नित्यदा।

इन्द्रियाणि मनो युङ्क्ते वश्यान् यन्तेव वाजिनः । मनश्चापि सदा युङ्क्ते भूतात्मा हृदयाश्रितः ।
इन्द्रियाणां तथैवैषां सर्व्वेषामीश्वरं मनः । नियमे च विसर्गे च भूतात्मा मनसस्तथा । ८७४५
इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना मनः । प्राणापानौ च जीवश्च नित्यं देहेषु देहिनां ।
आश्रयो नास्ति सत्त्वस्य गुणाः शब्दो न चेतना । सत्त्वं हि तेजः सृजति न गुणान् वै कथञ्चन ।
एवं सप्तदशं देहे वृतं षोडशभिर्गुणैः । मनीषी मनसा विप्रः पश्यत्यात्मानमात्मनि ।
न ह्ययं चक्षुषा दृश्यो न च सर्व्वैरपीन्द्रियैः । मनसा तु प्रदीपेन महानात्मा प्रकाशते ।
अशब्दस्पर्शरूपन्तद्‌रसागन्धमव्ययं । अशरीरं शरीरेषु निरीक्षेत निरिन्द्रियं । ८७५०
अव्यक्तं सर्व्वदेहेषु मर्त्येषु परमाश्रितं । योऽनुपश्यति स प्रेत्य कल्पते ब्रह्मभूयसे ।
विद्याभिजनसम्पन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ।
स हि सर्व्वेषु भूतेषु जङ्गमेषु ध्रुवेषु च । वसत्येको महानात्मा येन सर्व्वमिदं ततं ।
सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि । यदा पश्यति भूतात्मा ब्रह्म सम्पद्यते तदा ।
यावानात्मनि वेदात्मा तावानात्मा परात्मनि । य एवं सततं वेद सोऽमृतत्वाय कल्पते । ८७५५
सर्व्वभूतात्मभूतस्य सर्व्वभूतहितस्य च । देवाऽपि मार्गे मुह्यन्ति अपदस्य पदैषिणः ।
शकुन्तानामिवाकाशे मत्स्यानामिव चोदके । यथा गतिर्न दृश्येत तथा ज्ञानविदां गतिः ।
कालः पचति भूतानि सर्व्वाण्येवात्मनात्मनि । यस्मिंस्तु पच्यते कालस्तं वेदेह न कश्चन ।
न तदूर्द्ध्वं न तिर्य्यक् च नाधो न च पुनः पुनः । न मध्ये प्रतिगृह्णीते नैव किञ्चित् कुतश्चन ।
सर्व्वेऽन्तःस्था इमे लोका वाह्यमेषां न किञ्चन । यद्यप्यग्रे समागच्छेद्यथा वाणो गुणच्युतः । ८७६०
नैवान्तं कारणस्येयाद्यद्यपि स्यान्मनोजवः । तस्मात् सूक्ष्मात् सूक्ष्मतरं नास्ति स्थूलतरं ततः ।
सर्व्वतः पाणिपादन्तत् सर्व्वतोऽक्षिशिरोमुखं । सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति ।
तदेवाणोरणुतरं तन्महद्भ्यो महत्तरं । तदन्तः सर्व्वभूतानां ध्रुवं तिष्ठन्न दृश्यते ।
अक्षरञ्च क्षरञ्चैव द्वैधीभावोऽयमात्मनः । क्षरः सर्व्वेषु भूतेषु दिव्यं त्वमृतमक्षरं ।
नवद्वारं पुरं गत्वा हंसो हि नियतो वशी । ईशः सर्व्वस्य भूतस्य स्थावरस्य चरस्य च । ८७६५
हानिभङ्गविकल्पानां नवानां सञ्चयेन च । शरीराणामजस्याहुर्हंसत्वं पारदर्शिनः ।
हंसोक्तञ्चाक्षरञ्चैव कूटस्थं यत्तदक्षरं । तद्विद्वानक्षरं प्राप्य जहाति प्राणजन्मनी ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने ऊनचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २३९ ॥

॥ व्यास उवाच ॥ पृच्छतस्तव सत्पुत्र यथावदिह तत्त्वतः । साङ्ख्यज्ञानेन संयुक्तं यदेतत् कीर्त्तितं मया ।
योगकृत्यन्तु ते कृत्स्नं वर्त्तयिष्यामि तच्छृणु । एकत्वं बुद्धिमनसोरिन्द्रियाणाञ्च सर्व्वशः ।
आत्मनो व्यापिनस्तात ज्ञानमेतदनुत्तमं । तदेतदुपशान्तेन दान्तेनाध्यात्मशीलिना । ८७७०
आत्मारामेण बुद्धेन बोद्धव्यं शुचिकर्म्मणा । योगदोषान् समुच्छिद्य पञ्च यान् कवयो विदुः ।
कामं क्रोधञ्च लोभञ्च भयं स्वप्नञ्च पञ्चमं । क्रोधं शमेन जयति कामं सङ्कल्पवर्ज्जनात् ।

सत्त्वसंसेवनाद्धीरो निद्रामुच्छेत्तुमर्हति। धृत्या शिश्नोदरं रक्षेत् पाणिपादञ्च चक्षुषा।
चक्षुःश्रोत्रे च मनसा मनो वाचञ्च कर्म्मणा। अप्रमादाद्भयं जह्याद्दम्भं प्राज्ञोपसेवनात्।
एवमेतान् योगदोषान् जयेन्नित्यमतन्द्रितः। अग्नींश्च ब्राह्मणांश्चार्च्चेद्देवताः प्रणमेत च। ८७७४
वर्ज्जयेदुषतीं वाचं हिंसायुक्तां मनोनुदां। ब्रह्मतेजोमयं शुक्रं यस्य सर्व्वमिदं रसः।
एतस्य भूतं भूतस्य दृष्टं स्थावरजङ्गमं। ध्यानमध्ययनं दानं सत्यं ह्रीरार्ज्जवं क्षमा।
शौचमाचारसंशुद्धिरिन्द्रियाणाञ्च निग्रहः। एतैर्विवर्द्धते तेजः पाप्मानञ्चापकर्षति।
सिध्यन्ति चास्य सर्व्वार्था विज्ञानञ्च प्रवर्त्तते। समः सर्व्वेषु भूतेषु लब्धालब्धेन वर्त्तयन्।
धूतपाप्मा तु तेजस्वी लघ्वाहारो जितेन्द्रियः। कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदं। ८७८०
मनसश्चेन्द्रियाणाञ्च कृत्वैकाग्र्यं समाहितः। पूर्व्वरात्रापरार्द्धे च धारयेन्मन आत्मनि।
जन्तोः पञ्चेन्द्रियस्यास्य यदेकं छिद्रमिन्द्रियं। ततोऽस्य स्रवते प्रज्ञा दृतेः पादादिवोदकं।
मनस्तु पूर्व्वमादद्यात् कुमीनमिव मत्स्यहा। ततः श्रोत्रं ततश्चक्षुर्जिह्वां घ्राणञ्च योगवित्।
तत एतानि संयम्य मनसि स्थापयेद्यतिः। तथैवापोह्य संकल्पान्मनो ह्यात्मनि धारयेत्।
पञ्चेन्द्रियाणि सन्धाय मनसि स्थापयेद्यतिः। यदैतान्यवतिष्ठन्ति मनःषष्ठान्यथात्मनि। ८७८५
प्रसीदन्ति च संस्थाय तदा ब्रह्म प्रकाशते। विधूम इव दीप्तार्च्चिरादित्य इव दीप्तिमान्।
वैद्युतोऽग्निरिवाकाशे दृश्यतेत्मा तथात्मनि। सर्व्वस्तत्र स सर्व्वत्र व्यापकत्वाच्च दृश्यते।
तं पश्यन्ति महात्मानो ब्राह्मणा ये मनीषिणः। धृतिमन्तो महाप्राज्ञाः सर्व्वभूतहिते रताः।
एवं परिमितं कालमाचरन् संशितव्रतः। आसीनो हि रहस्येको गच्छेदक्षरसाम्यतां।
प्रमोहो भ्रम आवर्त्तो घ्राणश्रवणदर्शने। अद्भुतानि रसस्पर्शे शीतोष्णे मारुताकृतिः। ८७९०
प्रतिभामुपसर्गांश्चाप्युपसंगृह्य योगतः। तांस्तत्त्वविदनादृत्य आत्मन्येव निवर्त्तयेत्।
कुर्य्यात् परिचयं योगे त्रैकाल्ये नियतो मुनिः। गिरिशृङ्गे तथा चैत्ये वृक्षाग्रेषु च योजयेत्।
संनियम्येन्द्रियग्रामं कोष्ठे भाण्डमना इव। एकाग्रश्चिन्तयेन्नित्यं योगान्नोद्विजयेन्मनः।
येनोपायेन शक्येत संनियन्तुं चलं मनः। तत्र युक्तो निषेवेत न चैव विचलेत्ततः।
शून्या गिरिगुहाश्चैव देवतायतनानि च। शून्यागाराणि चैकाग्रो निवासार्थमुपक्रमेत्। ८७९५
नाभिष्वजेत् परं वाचा कर्म्मणा मनसाऽपि वा। उपेक्षको यताहारो लब्धालब्धे समो भवेत्।
यश्चैनमभिनन्देत यश्चैनमपवादयेत्। समस्तयोश्चाप्युभयोर्नाभिध्यायेच्छुभाशुभं।
न प्रहृष्येत लाभेषु नालाभेषु च चिन्तयेत्। समः सर्व्वेषु भूतेषु सधर्म्मा मातरिश्वनः।
एवं स्वस्थात्मनः साधोः सर्व्वत्र समदर्शिनः। षण्मासान्नित्ययुक्तस्य शब्दब्रह्मातिवर्त्तते।
वेदनार्त्ताः प्रजा दृष्ट्वा समलोष्टाश्मकाञ्चनः। एतस्मिन् विरतो मार्गे विरमेन्न च मोहितः। ८८००
अपि वर्णावकृष्टस्तु नारी वा धर्म्मकाङ्क्षिणी। तावप्येतेन मार्गेण गच्छेतां परमां गतिं।
अजं पुराणमजरं सनातनं यदिन्द्रियैरुपलभेत निश्चलैः। अणोरणीयो महतो महत्तरं तदात्मना पश्यति मुक्तमात्मवान्।

इदं महर्षेर्व्वचनं महात्मनो यथावदुक्तं मनसाऽनुदृश्य च । अवेक्ष्य चेमां परमेष्ठिसाम्यतां प्रयान्ति चाभूतगतिं मनीषिणः ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने चत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४० ॥

॥ शुक उवाच ॥ यदिदं वेदवचनं कुरु कर्म्म त्यजेति च । कां दिशं विद्यया यान्ति कांश्च गच्छन्ति कर्म्मणा ।

एतद्वै श्रोतुमिच्छामि तद्भवान् प्रब्रवीतु मे । एतच्चान्योन्यवैरूप्ये वर्त्तेते प्रतिकूलतः । ८८०५

भीष्म उवाच ॥ इत्युक्तः प्रत्युवाचेदं पराशरसुतः सुतं । कर्म्मविद्यामयावेतौ व्याख्यास्यामि क्षराक्षरौ ।

यां दिशं विद्यया यान्ति यांश्च गच्छन्ति कर्म्मणा । शृणुष्वैकमना वत्स गह्वरं ह्येतदन्तरं ।

अस्ति धर्म्म इति प्रोक्तं नास्तीत्यत्रैव यो वदेत् । तस्य पक्षस्य सदृशमिदं मम भवेदथ ।

द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः । प्रवृत्तिलक्षणो धर्म्मो निवृत्तौ च सुभाषितः ।

कर्म्मणा बध्यते जन्तुर्व्विद्यया तु प्रमुच्यते । तस्मात् कर्म्म न कुर्व्वन्ति यतयः पारदर्शिनः । ८८१०

कर्म्मणा जायते प्रेत्य मूर्त्तिमान् षोडशात्मकः । विद्यया जायते नित्यमव्यक्तं ह्यव्ययात्मकं ।

कर्म्म त्वेके प्रशंसन्ति स्वल्पबुद्धिरता नराः । तेन ते देहजालानि रमयन्त उपासते ।

ये तु बुद्धिं परां प्राप्ता धर्म्मनैपुणदर्शिनः । न ते कर्म्म प्रशंसन्ति कूपं नद्यां पिबन्निव ।

कर्म्मणः फलमाप्नोति सुखदुःखे भवाभवौ । विद्यया तदवाप्नोति यत्र गत्वा न शोचति ।

यत्र गत्वा न म्रियते यत्र गत्वा न जायते । न पुनर्जायते यत्र यत्र गत्वा न वर्त्तते । ८८१५

यत्र तद्ब्रह्म परममव्यक्तमचलं ध्रुवं । अव्याहतमनायासममृतञ्चावियोगि च ।

द्वन्द्वैर्न यत्र बाध्यन्ते मानसेन च कर्म्मणा । समाः सर्व्वत्र मैत्राश्च सर्व्वभूतहिते रताः ।

विद्यामयोऽन्यः पुरुषस्तात कर्म्ममयोऽपरः । विद्धि चन्द्रमसं दर्शे सूक्ष्मया कलया स्थितं ।

तदेतदृषिणा प्रोक्तं विस्तरेणानुगीयते । नवजं शशिनं दृष्ट्वा वक्रतन्तुमिवाम्बरे ।

एकादशविकारात्मा कलासम्भारसंभृतः । मूर्त्तिमानिति तं विद्धि तात कर्म्मगुणात्मकं । ८८२०

देवो यः संश्रितस्तस्मिन्नब्बिन्दुरिव पुष्करे । क्षेत्रज्ञं तं विजानीयात् नित्यं योगजितात्मकं ।

तमो रजश्च सत्त्वञ्च विद्धि जीवगुणात्मकं । जीवमात्मगुणं विद्यादात्मानं परमात्मनः ।

सचेतनं जीवगुणं वदन्ति स चेष्टते जीवयते च सर्व्वं । ततः परं क्षेत्रविदो वदन्ति प्राकल्पयद्यो भुवनानि सप्त ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने एकचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४१ ॥

॥ शुक उवाच ॥ क्षरात्प्रभृति यः सर्गः सगुणानीन्द्रियाणि च । बुद्ध्यैश्वर्य्यातिसर्गोऽयं प्रधानस्यात्मनः श्रुतं ।

भूय एव तु लोकेऽस्मिन् सद्वृत्तिं कालहैतुकीं । यया सन्तः प्रवर्त्तन्ते तदिच्छाम्यनुवर्त्तितुं । ८८२५

वेदे वचनमुक्तन्तु कुरु कर्म्म त्यजेति च । कथमेतद्विजानीयां तच्च व्याख्यातुमर्हसि ।

लोकवृत्तान्ततत्त्वज्ञः पूतोऽहं गुरुशासनात् । कृत्वा बुद्धिं विमुक्तात्मा द्रक्ष्याम्यात्मानमव्ययं ।

॥ व्यास उवाच ॥ यथा वै विहिता वृत्तिः पुरस्ताद्ब्रह्मणा स्वयं । एषा पूर्व्वतरैः सद्भिराचीर्णा परमर्षिभिः ।

ब्रह्मचर्य्येण वै लोकान् जयन्ति परमर्षयः । आत्मनश्च ततः श्रेयांस्यन्विच्छन्मनसात्मनि ।

वने मूलफलाशो च तप्यन् सुविपुलं तपः। पुण्यायतनचारी च भूतानामविहिंसकः। ८८३०
विधूमे सन्नमुषले वानप्रस्थप्रतिश्रये। काले प्राप्ते चरन् भैक्षं कल्पते ब्रह्मभूयसे।
निस्तुतिर्निर्नमस्कारः परित्यज्य शुभाशुभे। अरण्ये विचरैकाकी येन केनचिदाशितः।
॥ शुक उवाच ॥ यदिदं वेदवचनं लोकवादे विरुध्यते। प्रमाणे चाप्रमाणे च विरुद्धे शास्त्रता कुतः।
इत्येतच्छ्रोतुमिच्छामि प्रमाणं तूभयं कथं। कर्म्मणामविरोधेन कथं मोक्षः प्रवर्त्तते।
॥ भीष्म उवाच ॥ इत्युक्तः प्रत्युवाचेदं गन्धवत्याः सुतः सुतं। ऋषिस्तत्पूजयन् वाक्यं पुत्त्रस्यामिततेजसः। ८८३५
॥ व्यास उवाच ॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः। यथोक्तचारिणः सर्व्वे गच्छन्ति परमां गतिं।
एको वाऽप्याश्रमानेतान् योऽनुतिष्ठेद्यथाविधि। अकामद्वेषसंयुक्तः स परत्र विधीयते।
चतुष्पदी हि निःश्रेणी ब्रह्मण्येषा प्रतिष्ठिता। एतामारुह्य निःश्रेणीं ब्रह्मलोके महीयते।
आयुषस्तु चतुर्भागं ब्रह्मचार्य्यनसूयकः। गुरौ वा गुरुपुत्त्रे वा वसेद्धर्म्मार्थकोविदः।
जघन्यशायी पूर्व्वं स्यादुत्थाय गुरुवेश्मनि। यच्च शिष्येण कर्त्तव्यं कार्य्यं दासेन वा पुनः। ८८४०
कृतमित्येव तत्सर्व्वं कृत्वा तिष्ठेत पार्श्वतः। किङ्करः सर्व्वकारी स्यात्सर्व्वकर्म्मसु कोविदः।
कर्म्मातिशेषेण गुरावध्येतव्यं बुभूषता। दक्षिणोऽनपवादी स्यादाहूतो गुरुमाश्रयेत्।
शुचिर्दक्षो गुणोपेतो ब्रूयादिष्टमिवान्तरा। चक्षुषा गुरुमव्यग्रो निरीक्षेत जितेन्द्रियः।
नाभुक्तवति चाश्नीयादपीतवति नो पिबेत्। नातिष्ठति तथासीत नासुप्ते प्रस्वपेत च।
उत्तानाभ्याञ्च पाणिभ्यां पादावस्य मृदु स्पृशेत्। दक्षिणं दक्षिणेनैव सव्यं सव्येन पीडयेत्। ८८४५
अभिवाद्य गुरुं ब्रूयादधीष्व भगवन्निति। इदं करिष्ये भगवन्निदञ्चापि कृतं मया।
ब्रह्मंस्तदपि कर्त्ताऽस्मि यद्भवान् वक्ष्यते पुनः। इति सर्व्वमनुज्ञाप्य निवेद्य च यथाविधि।
कुर्य्यात् कृत्वा च तत् सर्व्वमाख्येयं गुरवे पुनः। यांस्तु गन्धान्रसान् वाऽपि ब्रह्मचारी न सेवते।
सेवेत तान् समावृत्त इति धर्म्मेषु निश्चयः। ये केचिद्विस्तरेणोक्ता नियमा ब्रह्मचारिणः।
तान् सर्व्वानाचरेन्नित्यं भवेच्चानपगो गुरोः। स एवं गुरवे प्रीतिमुपहृत्य यथाबलं। ८८५०
आश्रमादाश्रमेष्वेव शिष्यो वर्त्तेत कर्म्मणा। वेदव्रतोपवासेन चतुर्थे चायुषो गते।
गुरवे दक्षिणां दत्त्वा समावर्त्तेद्यथाविधि। धर्म्मलब्धैर्युतो दारैरग्नीनुत्पाद्य यत्नतः।
द्वितीयमायुषो भागं गृहमेधी भवेद्व्रती।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने द्विचत्वारिंशदधिकद्विशततोऽध्यायः॥ २४२ ॥
॥ व्यास उवाच ॥ द्वितीयमायुषो भागं गृहमेधी गृहे वसेत्। धर्म्मलब्धैर्युतो दारैरग्नीनाहृत्य सुव्रतः।
गृहस्थवृत्तयश्चैव चतस्रः कविभिः स्मृताः। कुशूलधान्यः प्रथमः कुम्भधान्यस्त्वनन्तरं। ८८५५
अश्वस्तनोऽथ कापोतीमाश्रितो वृत्तिमाहरेत्। तेषां परः परो ज्यायान् धर्म्मतो धर्म्मजित्तमः।
षट्कर्म्मा वर्त्तयत्येकस्त्रिभिरन्यः प्रवर्त्तते। द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रे व्यवस्थितः।
गृहमेधिव्रतान्यत्र महान्तीह प्रचक्षते। नात्मार्थे पाचयेदन्नं न वृथा घातयेत् पशून्।

प्राणी वा यदि वाऽप्राणी संस्कारं यजुषाऽर्हति । न दिवा प्रस्वपेज्जातु न पूर्व्वापररात्रिषु ।
न भुञ्जीतान्तरा काले नानृतावाह्वयेत् स्त्रियं । नास्यानश्नन् गृहे विप्रो वसेत् कश्चिदपूजितः । ८८६०
तथाऽस्यातिथयः पूज्या हव्यकव्यवहाः सदा । वेदविद्याव्रतस्नाताः श्रोत्रिया वेदपारगाः ।
स्वधर्म्मजीविनो दान्ताः क्रियावन्तस्तपस्विनः । तेषां हव्यञ्च कव्यञ्चाप्यर्हणार्थं विधीयते ।
नखरैः सम्प्रयातस्य स्वधर्म्मज्ञापकस्य च । अपविद्धाग्निहोत्रस्य गुरोर्व्वालीककारिणः ।
संविभागोऽत्र भूतानां सर्व्वेषामेव शिष्यते । तथैवापचमानेभ्यः प्रदेयं गृहमेधिना ।
विघसाशी भवेन्नित्यं नित्यञ्चामृतभोजनः । अमृतं यज्ञशेषं स्याद्भोजनं हविषा समं । ८८६५
भृत्यशेषन्तु योऽश्नाति तमाहुर्व्विघसाशिनं । विघसं भृत्यशेषन्तु यज्ञशेषमथामृतं ।
स्वदारनिरतो दान्तो ह्यनसूयुर्जितेन्द्रियः । ऋत्विक्पुरोहिताचार्य्यैर्मातुलातिथिसंश्रितैः ।
वृद्धबालातुरैर्वैद्यैर्ज्ञातिसम्बन्धिबान्धवैः । मातापितृभ्यां जामीभिर्भ्रात्रा पुत्त्रेण भार्य्यया ।
दुहित्रा दासवर्गेण विवादं न समाचरेत् । एतान् विमुच्य संवादान् सर्व्वपापैर्व्विमुच्यते ।
एतैर्ज्जितस्तु जयति सर्व्वान् लोकान्न संशयः । आचार्य्यो ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः । ८८७०
अतिथिस्त्विन्द्रलोकस्य देवलोकस्य चर्त्विजः । जामयोऽप्सरसां लोके वैश्वदेवे तु ज्ञातयः ।
सम्बन्धिबान्धवा दिक्षु पृथिव्यां मातृमातुलौ । वृद्धबालातुरकृशास्त्वाकाशे प्रभविष्णवः ।
भ्राता ज्येष्ठः समः पित्रा भार्य्या पुत्त्रः स्वका तनुः । छाया स्वा दासवर्गश्च दुहिता कृपणं परं ।
तस्मादेतैरधिक्षिप्तः सर्व्वं नित्यमसंज्वरः । गृहधर्म्मपरो विद्वान् धर्म्मशीलो जितक्लमः ।
न चार्थबद्धः कर्म्माणि धर्म्मवान् कश्चिदाचरेत् । गृहस्थवृत्तयस्तिस्रस्तासां निःश्रेयसं परं । ८८७५
परं परं तथैवाऽऽश्रमातुराश्रममेव तत् । यथोक्ता नियमास्तेषां सर्व्वं कार्य्यं बुभूषता ।
कुम्भधान्यैरुञ्छशिलैः कापोतीञ्चास्थितास्तथा । यस्मिंश्चैते वसन्त्यर्हास्तद्राष्ट्रमभिवर्द्धते ।
पूर्व्वापरान् दश परान् पुनाति च पितामहान् । गृहस्थवृत्तिञ्चाप्येता वर्त्तयेद्यो गतव्यथः ।
स चक्रधरलोकानां सदृशीमाप्नुयाद्गतिं । जितेन्द्रियाणामथ वा गतिरेषा विधीयते ।
स्वर्गलोको गृहस्थानामुदारमनसां हितः । स्वर्गो विमानसंयुक्तो वेददृष्टः सुपुष्पितः । ८८८०
स्वर्गलोको गृहस्थानां प्रतिष्ठा नियतात्मनां । ब्रह्मणा विहिता योनिरेषा यत्नाद्विधीयते ।
द्वितीयं क्रमशः प्राप्य स्वर्गलोके महीयते ।
अतः परं परममुदारमाश्रमं तृतीयमाहुस्त्यजतां कलेवरं । वनौकसां गृहपतिनामनुत्तमं शृणुष्व संक्लिष्टशरीरकारिणां ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने त्रिचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४३ ॥
॥ भीष्म उवाच ॥ प्रोक्ता गृहस्थवृत्तिस्ते विहिता या मनीषिभिः । तदनन्तरमुक्तं यत्तन्निबोध युधिष्ठिर ।
क्रमशस्त्ववधूयैनां तृतीयां वृत्तिमुत्तमां । संयोगव्रतखिन्नानां वानप्रस्थाश्रमौकसां । ८८८५
श्रूयतां पुत्त्र भद्रन्ते सर्व्वलोकाश्रमात्मनां । प्रेक्षापूर्व्वं प्रवृत्तानां पुण्यदेशनिवासिनां ।
॥ व्यास उवाच ॥ गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । अपत्यस्यैव चापत्यं वनमेव तदाश्रयेत् ।

तृतीयमायुषो भागं वानप्रस्थाश्रमे वसेत् । तानेवाग्नीन् परिचरेद्यजमानो दिवौकसः ।
नियतो नियताहारः षष्ठभक्तो प्रमत्तवान् । तदग्निहोत्रं ता गावो यज्ञाङ्गानि च सर्व्वशः ।
अफालकृष्टं व्रीहियवं नीवारं विघसानि च । हवींषि सम्प्रयच्छेत मखेष्वत्रापि पञ्चसु । ८८९०
वानप्रस्थाश्रमेऽप्येताश्चतस्रो वृत्तयः स्मृताः । सद्यः प्रक्षालकाः केचित् केचिन्मासिकसञ्चयाः ।
वार्षिकं सञ्चयं केचित्केचिद्द्वादशवार्षिकं । कुर्व्वन्त्यतिथिपूजार्थं यज्ञतन्त्रार्थमेव वा ।
अभ्रावकाशवर्षासु हेमन्ते जलसंश्रयाः । ग्रीष्मे च पञ्चतपसः शश्वच्च मितभोजनाः ।
भूमौ विपरिवर्त्तन्ते तिष्ठन्ति प्रपदैरपि । स्थानासनैर्व्वर्त्तयन्ति सवनेष्वभिषिञ्चते ।
दन्तोलूखलिकाः केचिदश्मकुट्टास्तथाऽपरे । शुक्लपक्षे पिवन्त्येके यवागूं क्वथितां सकृत् । ८८९५
कृष्णपक्षे पिवन्त्यन्ये भुञ्जते वा यथागमं । मूलैरेके फलैरेके पुष्पैरेके दृढव्रताः ।
वर्त्तयन्ति यथान्यायं वैखानसगतिं श्रिताः । एताश्चान्याश्च विविधा दीक्षास्तेषां मनीषिणां ।
चतुर्थश्चौपनिषदो धर्म्मः साधारणः स्मृतः । वानप्रस्थाद्गृहस्थाच्च ततोऽन्यः सम्प्रवर्त्तते ।
अस्मिन्नेव युगे तात विप्रैः सर्व्वार्थदर्शिभिः । अगस्त्यः सप्त ऋषयो मधुच्छन्दोऽघमर्षणः ।
सांकृतिः सुदिवातण्डिर्यथा वासोऽकृतश्रमः । अहोवीर्य्यस्तथा काव्यस्ताण्ड्यो मेधातिथिर्बुधः । ८९००
बलवान् कर्णनिर्व्वाकः शून्यपालः कृतश्रमः । एवं धर्म्मं कृतवन्तस्ततः स्वर्गमुपागमन् ।
तात प्रत्यक्षधर्म्माणस्तथा यायावरा गणाः । ऋषीणामुग्रतपसां धर्म्मनैपुणदर्शिनां ।
अन्ये चापरिमेयाश्च ब्राह्मणा वनमाश्रिताः । वैखानसा बालखिल्याः सैकताश्च तथाऽपरे ।
कर्म्मभिस्ते निरानन्दा धर्म्मनित्या जितेन्द्रियाः । गताः प्रत्यक्षधर्म्माणस्ते सर्व्वे वनमाश्रिताः ।
अनक्षत्रास्त्वनाधृष्या दृश्यन्ते ज्योतिषां गणाः । जरया च परिद्यूनो व्याधिना च प्रपीडितः । ८९०५
चतुर्थे चायुषः शेषे वानप्रस्थाश्रमं त्यजेत् । सद्यस्कारां निरूप्येष्टिं सर्व्ववेदसदक्षिणां ।
आत्मयाजी सोऽत्मरतिरात्मक्रीडात्मसंश्रयः । आत्मन्यग्नीन् समारोप्य त्यक्त्वा सर्व्वपरिग्रहान् ।
साद्यस्कांश्च यजेद्यज्ञानिष्टीश्चैवेह सर्व्वदा । यदेव याजिनां यज्ञादात्मनीज्या प्रवर्त्तते ।
त्रींश्चैवाग्नीन् यजेत् सम्यगात्मन्येवात्ममोक्षणात् । प्राणेभ्यो यजुषः पञ्च षट् प्राश्नीयादकुत्सयन् ।
केशलोमनखान् वाप्य वानप्रस्थो मुनिस्ततः । आश्रमादाश्रमं पुण्यं पूतो गच्छति कर्म्मभिः । ८९१०
अभयं सर्व्वभूतेभ्यो दत्त्वा यः प्रव्रजेद्द्विजः । लोकास्तेजोमयास्तस्य प्रेत्य चानन्त्यमश्नुते ।
**सुशील**वृत्तो व्यपनीतकल्मषो न चेह नामुत्र च कर्त्तुमीहते । अरोषमोहो गतसन्धिविग्रहो भवेदुदासीनवदात्मविन्नरः ।
**यमेषु** चैवानुगतेषु न व्यथेत् स्वशास्त्रसूत्राहुतिमन्त्रविक्रमः । भवेद्यथेष्टा गतिरात्मवेदिनि न संशयो धर्म्मपरे जितेन्द्रिये ।
**ततः परं** ज्येष्ठमतीव सद्गुणैरधिष्ठितं त्रीनधिवृत्तिमुत्तमं । चतुर्थमुक्तं परमाश्रमं शृणु प्रकीर्त्त्यमानं परमं परायणं ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने चतुश्चत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४४ ॥
॥ शुक उवाच ॥ वर्त्तमानस्तथैवात्र वानप्रस्थाश्रमे यथा । योक्तव्योऽत्मा कथं शक्त्या वेद्यं वै काङ्क्षता परं । ८९१५
॥ व्यास उवाच ॥ प्राप्य संस्कारमेताभ्यामाश्रमाभ्यां ततः परं । यत् कार्य्यं परमार्थन्तु तदिहैकमनाः शृणु ।

कषायं पाचयित्वाशु श्रेणिस्थानेषु च त्रिषु । प्रव्रजेच्च परं स्थानं पारिव्राज्यमनुत्तमं ।
तन्मूलानेवमभ्यस्य वर्त्ततां श्रूयतां तथा । एक एव चरेद्धर्म्मं सिद्ध्यर्थमसहायवान् ।
एकश्चरति यः पश्यन्न जहाति न हीयते । अनग्निरनिकेतः स्याद्ग्राममन्नार्थमाश्रयेत् ।
अश्वस्तनविधाता स्यान्मुनिर्भावसमाहितः । लघ्वाशी नियताहारः सकृदन्ननिषेविता । ८९२०
कपालं वृक्षमूलानि कुचेलमसहायता । उपेक्षा सर्व्वभूतानामेतावद्भिक्षुलक्षणं ।
यस्मिन् वाचः प्रविशन्ति कूपं त्रस्ता द्विपा इव । न वक्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत् ।
नैव पश्येन्न शृणुयादवाच्यं जातु कस्यचित् । ब्राह्मणानां विशेषेण नैव ब्रूयात् कथञ्चन ।
यद्ब्राह्मणस्य कुशलं तदेव सततं वदेत् । तूष्णीमासीत निन्दायां कुर्व्वन् भेषज्यमात्मनः ।
येन पूर्णमिवाकाशं भवत्येकेन सर्व्वदा । शून्यं येन जनाकीर्णं तं देवा ब्राह्मणं विदुः । ८९२५
येन केनचिदाच्छन्नो येन केनचिदाशितः । यत्र क्वचन शायी च तं देवा ब्राह्मणं विदुः ।
अहेरिव गणाद्भीतः सौहित्यान्नरकादिव । कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः ।
न क्रुध्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः । सर्व्वभूतेष्वभयदस्तं देवा ब्राह्मणं विदुः ।
नाभिनन्देत मरणं नाभिनन्देत जीवितं । कालमेव प्रतीक्षेत निदेशं भृतको यथा ।
अनभ्याहतचित्तः स्यादनभ्याहतवाग्भवेत् । निर्म्मुक्तः सर्व्वपापेभ्यो निरमित्रस्य किं भयं । ८९३०
अभयं सर्व्वभूतेभ्यो भूतानामभयं यतः । तस्य मोहाद्विमुक्तस्य भयं नास्ति कुतश्चन ।
यथा नागपदेऽन्यानि पदानि पदगामिनां । सर्व्वाण्येवापिधीयन्ते पदजातानि कौञ्जरे ।
एवं सर्व्वमहिंसायां धर्म्मार्थमपि धीयते । अमृतः स नित्यं वसति यो हिंसां न प्रपद्यते ।
अहिंसकः समः सत्यो धृतिमान्नियतेन्द्रियः । शरण्यः सर्व्वभूतानां गतिमाप्नोत्यनुत्तमां ।
एवं प्रज्ञानतृप्तस्य निर्भयस्य निराशिषः । न मृत्युरतिगो भावः स मृत्युमभिगच्छति । ८९३५
विमुक्तं सर्व्वसङ्गेभ्यो मुनिमाकाशवत् स्थितं । अस्वमेकचरं शान्तं तं देवा ब्राह्मणं विदुः ।
जीवितं यस्य धर्म्मार्थं धर्म्मो हर्य्यर्थमेव च । अहोरात्राश्च पुण्यार्थं तं देवा ब्राह्मणं विदुः ।
निराशिषमनारम्भं निर्नमस्कारमस्तुतिं । निर्म्मुक्तं बन्धनैः सर्व्वैस्तं देवा ब्राह्मणं विदुः ।

सर्व्वाणि भूतानि सुखे रमन्ते सर्व्वाणि दुःखस्य भृशं त्रसन्ते । तेषां भयोत्पादनजातखेदः कुर्य्यान्न कर्म्माणि हि श्रद्दधानः ।

दानं हि भूताभयदक्षिणायाः सर्व्वाणि दानान्यधितिष्ठतीह । तीक्ष्णां तनुं यः प्रथमं जहाति सोऽनन्त्यमाप्नोत्यभयं प्रजाभ्यः । ८९४०

उत्तान आस्ये न हविर्जुहोति लोकस्य नाभिर्ज्जगतः प्रतिष्ठा । तस्याङ्गमङ्गानि कृताकृतञ्च वैश्वानरः सर्व्वमिदं प्रपेदे ।
प्रादेशमात्रे हृदि निःसृतं यत्तस्मिन् प्राणानात्मयाजी जुहोति । तस्याग्निहोत्रं हुतमात्मसंस्थं सर्व्वेषु लोकेषु सदैवतेषु ।
दैवं त्रिधातुं त्रिवृतं सुपर्णं ये विद्युरग्र्यां परमात्मताञ्च । ते सर्व्वलोकेषु महीयमाना देवाः समर्त्याः सुकृतं वदन्ति ।
वेदांश्च वेद्यञ्च विधिञ्च कृत्स्नमथो निरुक्तं परमार्थताञ्च । सर्व्वं शरीरात्मनि यः प्रवेद तस्यैव देवाः स्पृहयन्ति नित्यं ।

भूमावसक्तं दिवि चाप्रमेयं हिरण्मयं योऽण्डजमण्डमध्ये । पतत्त्रिणं पक्षिणमन्तरीक्षे यो वेद भोग्यात्मनि रश्मिदीप्तः । ८९४५

आवर्त्तमानमजरं विवर्त्तनं षण्णाभिकं द्वादशारं सुपर्व्व । यस्येदमास्योपरि याति विश्वं तत् कालचक्रं निहितं गुहायां ।

यः सम्प्रसादं जगतः शरीरं सर्व्वान् स लोकानधिगच्छतीह । तस्मिन् हि सन्तर्पयतीह देवांस्ते वै तृप्तास्तर्पयन्त्यास्यमस्य ।

तेजोमयो नित्यमयः पुराणो लोकाननन्तानभयानुपैति । भूतानि यस्मान्न त्रसन्ते कदाचित् स भूतानां न च त्रसते कदाचित् ।

अगर्हणीयो न च गर्हतेऽन्यान् स वै विप्रः परमात्मानमीक्षेत् । विनीतमोहो व्यपनीतकल्मषो न चेह नामुत्र च सोऽन्नमर्च्छति ।

अरोषमोहः समलोष्टकाञ्चनः प्रहीणकोषो गतसन्धिविग्रहः । अपेतनिन्दास्तुतिरप्रियाप्रियश्चरन्नुदासीनवदेष भिक्षुकः । ८९५०

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने पञ्चचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४५ ॥

॥ व्यास उवाच ॥ प्रकृत्यास्तु विकाराये क्षेत्रज्ञस्तैरधिष्ठितः । न चैनं ते प्रजानन्ति स तु जानाति तानपि ।

तैश्चैवं कुरुते कार्य्यं मनःषष्ठैरिहेन्द्रियैः । सुदान्तैरिव संयन्ता दृढैः परमवाजिभिः ।

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यः परमं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ।

महतः परमव्यक्तमव्यक्तात् परतोऽमृतं । अमृतान्न परं किञ्चित् सा काष्ठा सा परा गतिः ।

एवं सर्व्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः । ८९५५

अन्तरात्मनि संलीय मनःषष्ठानि मेधया । इन्द्रियाणीन्द्रियार्थांश्च बहुचिन्त्यमचिन्तयन् ।

ध्यानेनोपरमं कृत्वा विद्यासम्पादितं मनः । अनीश्वरः प्रशान्तात्मा ततोऽर्च्छत्यमृतं पदं ।

इन्द्रियाणान्तु सर्व्वेषां वश्यात्मा चलितस्मृतिः । आत्मनः सम्प्रदानेन मर्त्यो मृत्युमुपाश्नुते ।

आहत्य सर्व्वसंकल्पान् सत्त्वे चित्तं निवेशयेत् । सत्त्वे चित्तं समावेश्य ततः कालञ्जरो भवेत् ।

चित्तप्रसादेन यतिर्ज्जहातीह शुभाशुभं । प्रसन्नात्मात्मनि स्थित्वा सुखमत्यन्तमश्नुते । ८९६०

लक्षणन्तु प्रसादस्य यथा स्वप्ने सुखं स्वपेत् । निवाते वा यथा दीपो दीप्यमानो न कम्पते ।

एवं पूर्व्वापरे काले युञ्जन्नात्मानमात्मनि । लघ्वाहारो विशुद्धात्मा पश्यत्यात्मानमात्मनि ।

रहस्यं सर्व्ववेदानामनैतिह्यमनागमं । आत्मप्रत्ययिकं शास्त्रमिदं पुत्त्रानुशासनं ।

धर्म्माख्यानेषु सर्व्वेषु सत्याख्यानेषु यद्वसु । दशेदमृक्सहस्राणि निर्म्मथ्यामृतमुद्धृतं ।

नवनीतं यथा दध्नः काष्ठादग्निर्यथैव च । तथैव विदुषां ज्ञानं पुत्त्रहेतोः समुद्धृत । ८९६५

स्नातकानामिदं शास्त्रं वाच्यं पुत्त्रानुशासनं । तदिदं नाप्रशान्ताय नादान्तायातपस्विने ।

नावेदविदुषे वाच्यं तथा नानुगताय च । नासूयकायानृजवे न चानिर्द्दिष्टकारिणे ।

न तर्कशास्त्रदग्धाय तथैव पिशुनाय च । श्लाघिने श्लाघनीयाय प्रशान्ताय तपस्विने ।

इदं प्रियाय पुत्राय शिष्यायानुगताय च । रहस्यधर्मं वक्तव्यं नान्यस्मै तु कथञ्चन ।
यद्यप्यस्य महीं दद्याद्रत्नपूर्णामिमां नरः । इदमेव ततः श्रेय इति मन्येत तत्त्ववित् । ८८७०
अतो गुह्यतरार्थं तदध्यात्ममतिमानुषं । यत्तन्महर्षिभिर्दृष्टं वेदान्तेषु च गीयते ।
तत्तेऽहं सम्प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
यच्च ते मनसि वर्त्तते परं यच्च चास्ति तव संशयः क्वचित् । श्रूयतामयमहं तवागतः पुत्र किं हि कथयामि ते पुनः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥
॥ शुक उवाच ॥ अध्यात्मं विस्तरेणेह पुनरेव वदस्व मे । यदध्यात्मं यथा चेदं भगवन्नृषिसत्तम ।
॥ व्यास उवाच ॥ अध्यात्मं यदिदं तात पुरुषस्येह पठ्यते । तत्तेऽहं वर्त्तयिष्यामि तस्य व्याख्यामिमां शृणु । ८८७५
भूमिरापस्तथा ज्योतिर्व्वायुराकाश एव च । महाभूतानि भूतानां सागरस्योर्म्मयो यथा ।
प्रसार्य्येह यथाऽङ्गानि कूर्म्मः संहरते पुनः । तद्वन्महान्ति भूतानि यवीयःसु विकुर्व्वते ।
इति तन्मयमेवेदं सर्व्वं स्थावरजङ्गमं । सर्गे च प्रलये चैव तस्मिन्निर्दिश्यते तथा ।
महाभूतानि पञ्चैव सर्व्वभूतेषु भूतकृत् । अकरोत्तात वैषम्यं यस्मिन् यदनुपश्यति ।
॥ शुक उवाच ॥ अकरोद्यच्छरीरेषु कथं तदुपलक्षयेत् । इन्द्रियाणि गुणाः केचित् कथं तानुपलक्षयेत् । ८८८०
॥ व्यास उवाच ॥ एतत्ते वर्त्तयिष्यामि यथावदनुपूर्व्वशः । शृणु तत्त्वमिहैकाग्रो यथातत्त्वं यथा च तत् ।
शब्दः श्रोत्रं तथा खानि त्रयमाकाशसम्भवं । प्राणश्चेष्टा तथा स्पर्श एते वायुगुणास्त्रयः ।
रूपञ्चक्षुर्विपाकश्च त्रिधा ज्योतिर्विधीयते । रसोऽथ रसनं स्नेहो गुणास्त्वेते त्रयोऽम्भसः ।
घ्रेयं घ्राणं शरीरञ्च भूमेरेते गुणास्त्रयः । एतावानिन्द्रियग्रामो व्याख्यातः पाञ्चभौतिकः ।
वायोः स्पर्शो रसोऽद्भ्यश्च ज्योतिषो रूपमुच्यते । आकाशप्रभवः शब्दो गन्धो भूमिगुणः स्मृतः । ८८८५
मनो बुद्धिः स्वभावश्च त्रय एते स्वयोनिजाः । न गुणानतिवर्त्तन्ते गुणेभ्यः परमागताः ।
यथा कूर्म्म इवाङ्गानि प्रसार्य्य विनियच्छति । एवमेवेन्द्रियग्रामं बुद्धिः सृष्ट्वा नियच्छति ।
यदूर्द्ध्वं पादतलयोरवाङ्मूर्द्ध्नश्च पश्यति । एतस्मिन्नेव कृत्ये तु वर्त्तते बुद्धिरुत्तमा ।
गुणान्नेनीयते बुद्धिर्ब्बुद्धिरेवेन्द्रियाण्यपि । मनःषष्ठानि सर्व्वाणि बुद्ध्यभावे कुतो गुणाः ।
इन्द्रियाणि नरे पञ्च षष्ठन्तु मन उच्यते । सप्तमीं बुद्धिमेवाहुः क्षेत्रज्ञं पुनरष्टमं । ८८९०
चक्षुरालोचनायैव संशयं कुरुते मनः । बुद्धिरध्यवसानाय साक्षी क्षेत्रज्ञ उच्यते ।
रजस्तमश्च सत्त्वञ्च त्रय एते स्वयोनिजाः । समाः सर्व्वेषु भूतेषु तान् गुणानुपलक्षयेत् ।
तत्र यत्प्रीतिसंयुक्तं किञ्चिदात्मनि लक्षयेत् । प्रशान्तमिव संशुद्धं सत्त्वं तदुपधारयेत् ।
यत्तु सन्तापसंयुक्तं काये मनसि वा भवेत् । प्रवृत्तं रज इत्येवं तत्र चाप्युपलक्षयेत् ।
यत्तु संमोहसंयुक्तमव्यक्तविषयं भवेत् । अप्रतर्क्यमविज्ञेयं तमस्तदुपधार्य्यतां । ८८९५
प्रहर्षः प्रीतिरानन्दः साम्यं स्वस्थात्मचित्तता । अकस्माद्यदि वा कस्माद्वर्त्तन्ते सात्त्विका गुणाः ।
अभिमानो मृषावादो लोभो मोहस्तथा क्षमा । लिङ्गानि रजसस्तानि वर्त्तन्ते हेतुहेतुतः ।

तथा मोहः प्रमादश्च निद्रा तन्द्रा प्रबोधिता । कथञ्चिदभिवर्त्तन्ते विज्ञेयास्तामसा गुणाः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने सप्तचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४७ ॥
॥ व्यास उवाच ॥ मनो विसृजते भावं बुद्धिरध्यवसायिनी । हृदयं प्रियाप्रिये वेद त्रिविधा कर्म्मचोदना ।
इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यः परमं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा परो मतः । ९०००
बुद्धिरात्मा मनुष्यस्य बुद्धिरेवात्मनात्मनि । यदा विकुरुते भावं तदा भवति सा मनः ।
इन्द्रियाणां पृथग्भावाद्बुद्धिर्विक्रियते ह्यतः । शृण्वती भवति श्रोत्रं स्पृशती स्पर्श उच्यते ।
पश्यती भवते दृष्टीरसती रसनं भवेत् । जिघ्रती भवति घ्राणं बुद्धिर्विक्रियते पृथक् ।
इन्द्रियाणि तु तान्याहुस्तेष्वदृश्योऽधितिष्ठति । तिष्ठन्ती पुरुषे बुद्धिस्त्रिषु भावेषु वर्त्तते ।
कदाचिल्लभते प्रीतिं कदाचिदपि शोचति । न सुखेन न दुःखेन कदाचिदिह युज्यते । ९००५
सेयं भावात्मिका भावांस्त्रीनेतानतिवर्त्तते । सरितां सागरो भर्त्ता महावेलामिवोर्म्मिमान् ।
यदा प्रार्थयते किञ्चित्तदा भवति सा मनः । अधिष्ठानानि वै बुद्ध्या पृथगेतानि संस्मरेत् ।
इन्द्रियाण्येव मेध्यानि विजेतव्यानि कृत्स्नशः । सर्व्वाण्येवानुपूर्व्व्येण यद्यदाऽनुविधीयते ।
अविभागगता बुद्धिर्भावैर्म्मनसि वर्त्तते । ये चैव भावा वर्त्तन्ते सर्व्व एष्वेव ते त्रिषु ।
अन्वर्थाः सम्प्रवर्त्तन्ते रथनेमिमरा इव । प्रदीपार्थं मनः कुर्य्यादिन्द्रियैर्बुद्धिसत्तमैः । ९०१०
निश्चरद्भिर्यथायोगमुदासीनैर्यदृच्छया । एवं स्वभावमेवेदमिति विद्वान्न मुह्यति ।
अशोचन्नप्रहृष्यन् हि नित्यं विगतमत्सरः । न चात्मा शक्यते द्रष्टुमिन्द्रियैः कामगोचरैः ।
प्रवर्त्तमानैरनघैर्दुष्करैरकृतात्मभिः । तेषान्तु मनसा रश्मीन् यदा सम्यङ्नियच्छति ।
तदा प्रकाशतेऽस्यात्मा दीपदीप्ता यथाकृतिः । सर्व्वेषामेव भूतानां तमस्यपगते यथा ।
प्रकाशं लभते सर्व्वं तथेदमुपधार्य्यतां । यथा वारिचरः पक्षी न लिप्यति जले चरन् । ९०१५
विमुक्तात्मा तथा योगी गुणदोषैर्न लिप्यते । एवमेव कृतप्रज्ञो न दोषैर्विषयांश्चरन् ।
असज्जमानः सर्व्वेषु कथञ्चन न लिप्यते । त्यक्त्वा पूर्व्वकृतं कर्म्म रतिर्यस्य सदात्मनि ।
सर्व्वभूतात्मभूतस्य गुणवर्गेष्वसज्जतः । सत्त्वमात्मा प्रसरति गुणाश्चापि कदाचन ।
न गुणा विदुरात्मानं गुणान् वेद स सर्व्वदा । परिद्रष्टा गुणानाञ्च परिस्रष्टा यथातथं ।
सत्त्वक्षेत्रज्ञयोरेतदन्तरं विद्धि सूक्ष्मयोः । सृजतेऽत्र गुणानेक एको न सृजते गुणान् । ९०२०
पृथग्भूतौ प्रकृत्या तौ सम्प्रयुक्तौ च सर्व्वदा । यथा मत्स्योऽद्भिरन्यः स्यात् संप्रयुक्तौ तथैव तौ ।
मशकोदुम्बरौ वाऽपि सम्प्रयुक्तौ यथा सह । इषीका वा यथा मुञ्जे पृथक् च सह चैव च ।
तथैव सहितावेतावन्योन्यस्मिन् प्रतिष्ठितौ ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने अष्टचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४८ ॥
॥ व्यास उवाच ॥ सृजते तु गुणान् सत्त्वं क्षेत्रज्ञस्त्वनुतिष्ठति । गुणान् विक्रियतः सर्व्वानुदासीनवदीश्वरः ।
स्वभावयुक्तं तत्सर्व्वं यदिमान् सृजते गुणान् । ऊर्णनाभिर्यथा सूत्रं सृजते तद्गुणांस्तथा । ९०२१

प्रध्वस्ता न निवर्त्तन्ते प्रवृत्तिर्नोपलभ्यते । एवमेके व्यवस्यन्ति निवृत्तिरिति चापरे ।
उभयं सम्प्रधार्य्यैतदध्यवस्येद्यथामति । अनेनैव विधानेन भवेद्गात्माश्रयो महान् ।
अनादिनिधनो ह्यात्मा तं बुद्धा विचरेन्नरः । अक्रुध्यन्नप्रहृष्यंश्च नित्यं विगतमत्सरः ।
इत्येवं हृदयग्रन्थिं बुद्धिचिन्तामयं दृढं । अनित्यं सुखमासीत अशोचंश्छिन्नसंशयः ।
ताम्येयुः प्रच्युताः पृथ्व्या यथा पूर्णां नदीं नराः । अवगाढा ह्यविद्वांसो विद्धि लोकमिमं तथा । ९०२०
न तु ताम्यति वै विद्वान् स्थले चरति तत्त्ववित् । एवं यो विन्दते त्मानं केवलं ज्ञानमात्मनः ।
एवं बुद्धा नरः सर्व्वं भूतानामागतिं गतिं । समवेक्ष्य च वैषम्यं लभते शममुत्तमं ।
एतद्वै जन्मसामर्थ्यं ब्राह्मणस्य विशेषतः । आत्मज्ञानं शमश्चैव पर्य्याप्तं तत्परायणं ।
एतद्बुद्धा भवेद्बुद्धः किमन्यद्बुद्धलक्षणं । विज्ञायैतद्विमुच्यन्ते कृतकृत्या मनीषिणः ।
न भवति विदुषां महद्भयं यदविदुषां महद्भयं परत्र । न हि गतिरधिकाऽस्ति कस्यचिद्भवति हि या विदुषः सनातनी । ९०२५
लोकमातुरमसूयते जनस्तत्तदेव च निरीक्ष्य शोचते । तत्र पश्य कुशलानशोचतो ये विदुस्तदुभयं कृताकृतं ।
यत्करोत्यनभिसन्धिपूर्व्वकं तच्च निर्नुदति यत्पुरा कृतं । न प्रियं तदुभयं न चाप्रियं तस्य तज्जनयतीह कुर्व्वतः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने ऊनपञ्चाशदधिकद्विशततोऽध्यायः ॥ २४९ ॥
॥ शुक उवाच ॥ यस्माद्धर्म्मात्परो धर्म्मो विद्यते नेह कश्चन । यो विशिष्टश्च धर्म्मेभ्यस्तं भवान् प्रब्रवीतु मे ।
॥ व्यास उवाच ॥ धर्म्मन्ते सम्प्रवक्ष्यामि पुराणमृषिभिः कृतं । विशिष्टं सर्व्वधर्म्मेभ्यस्तमिहैकमनाः शृणु ।
इन्द्रियाणि प्रमाथीनि बुद्धा संयम्य यत्नतः । सर्व्वतो निष्पतिष्णूनि पिता बालानिवात्मजान् । ९०३०
मनसश्चेन्द्रियाणाञ्चाप्यैकाग्र्यं परमं तपः । तज्ज्यायः सर्व्वधर्म्मेभ्यः स धर्म्मः पर उच्यते ।
तानि सर्व्वाणि सन्धाय मनःषष्ठानि मेधया । आत्मतृप्त इवासीत बहुचिन्त्यमचिन्तयन् ।
गोचरेभ्यो निवृत्तानि यदा स्थास्यन्ति वेश्मनि । तदा त्वमात्मनात्मानं परं द्रक्ष्यसि शाश्वतं ।
सर्व्वात्मानं महात्मानं विधूममिव पावकं । तं पश्यन्ति महात्मानो ब्राह्मणा ये मनीषिणः ।
यथा पुष्पफलोपेतो बहुशाखो महाद्रुमः । आत्मनो नाभिजानीते क्व मे पुष्पं क्व मे फलं । ९०३५
एवमात्मा न जानीते क्व गमिष्ये कुतस्त्वहं । अन्यो ह्यात्माऽन्तरात्माऽस्ति यः सर्व्वमनुपश्यति ।
ज्ञानदीपेन दीप्तेन पश्यत्यात्मानमात्मना । दृष्ट्वा त्वमात्मनात्मानं निरात्मा भव सर्व्ववित् ।
विमुक्तः सर्व्वपापेभ्यो मुक्तत्वच इवोरगः । परां बुद्धिमवाप्येह विपाप्मा विगतज्वरः ।
सर्व्वतःस्रोतसं घोरां नदीं लोकप्रवाहिणीं । पञ्चेन्द्रियग्राहवतीं मनःसंकल्परोधसं ।
लोभमोहतृणच्छन्नां कामक्रोधसरीसृपां । सत्यतीर्थामृतक्षोभां क्रोधपङ्कां सरिद्वरां । ९०४०
अव्यक्तप्रभवां शीघ्रां दुस्तरामकृतात्मभिः । प्रतरस्व नदीं बुद्धा कामग्राहसमाकुलां ।
संसारसागरगमां योनिपातालदुस्तरां । आत्मजन्मोद्भवां तात जिह्वावर्त्तां दुरासदां ।
यां तरन्ति कृतप्रज्ञा धृतिमन्तो मनीषिणः । तां तीर्णः सर्व्वतो मुक्तो विपूतात्मात्मविच्छुचिः ।

उत्तमां बुद्धिमास्थाय ब्रह्मभूयान् भविष्यसि । सन्तीर्णः सर्व्वसंसारात् प्रसन्नात्मा विकल्मषः ।
भूमिष्ठानीव भूतानि पर्व्वतस्थो निशामय । अक्रुध्यन्नप्रहृष्यंश्च न नृशंसमतिस्तथा । ६०५५
ततो द्रक्ष्यसि सर्व्वेषां भूतानां प्रभवाप्ययौ । एवं वै सर्व्वभूतेभ्यो विशिष्टं मेनिरे बुधाः ।
धर्म्मं धर्म्मभृतां श्रेष्ठा मुनयस्तत्त्वदर्शिनः । आत्मनो व्यापिनो ज्ञानमिदं पुत्त्रानुशासनं ।
प्रयताय प्रवक्तव्यं हितायानुगताय च । आत्मज्ञानमिदं गुह्यं सर्व्वगुह्यतमं महत् ।
अब्रुवं यदहं तात आत्मसाक्षिकमञ्जसा । नैव स्त्री न पुमानेतन्नैव चेदं नपुंसकं ।
अदुःखमसुखं ब्रह्म भूतभव्यभवात्मकं । नैतज्ज्ञात्वा पुमान् स्त्री वा पुनर्भवमवाप्नुते । ६०६०
अभवप्रतिपत्त्यर्थमेतद्धर्म्मं विधीयते । यथा मतानि सर्व्वाणि यथैतानि यथा तथा ।
कथितानि मया पुत्त्र भवन्ति न भवन्ति च ।
तत्प्रीतियुक्तेन गुणान्वितेन पुत्त्रेण सत्पुत्त्र दमान्वितेन । पृष्टो हि सम्प्रीतमना यथार्थं ब्रूयात् सुतस्येह यदुक्तमेतत् ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने पञ्चाशदधिकद्विशततोऽध्यायः ॥ २५० ॥

॥ व्यास उवाच ॥ गन्धान् रसान्नानुरुन्ध्यात् सुखं वा नालङ्कारांश्चाप्नुयात्तस्य तस्य । मानञ्च कीर्त्तिञ्च यशश्च नेच्छेत् स वै प्रचारः पश्यतो ब्राह्मणस्य ।
सर्व्वान् वेदानधीयीत शुश्रूषुर्ब्रह्मचर्य्यवान् । ऋचो यजूंषि सामानि यो वेद न स वै द्विजः । ६०६५
ज्ञातिवत् सर्व्वभूतानां सर्व्ववित् सर्व्ववेदवित् । नाकामो म्रियते जातु न तेन न च वै द्विजः ।
इष्टीश्च विविधाः प्राप्य क्रतूंश्चैवाप्तदक्षिणान् । प्राप्नोति नैव ब्राह्मण्यमविधानात् कथञ्चन ।
यदा चायं न बिभेति यदा चास्मान्न बिभ्यति । यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा ।
यदा न कुरुते भावं सर्व्वभूतेषु पापकं । कर्म्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ।
कामबन्धनमेवैकं नान्यदस्तीह बन्धनं । कामबन्धनमुक्तो हि ब्रह्मभूयाय कल्पते । ६०७०
कामतो मुच्यमानस्तु धूम्राभ्रादिव चन्द्रमाः । विरजाः कालमाकाङ्क्षन् धीरो धैर्य्येण वर्त्तते ।
आपूर्य्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् । तद्वत् कामा यं प्रविशन्ति सर्व्वे स शान्तिमाप्नोति न कामकामः ।
स कामकान्तो न तु कामकामः स वै कामात् स्वर्गमुपैति देही ।
वेदस्योपनिषत् सत्यं सत्यस्योपनिषद्दमः । दमस्योपनिषद्दानं दानस्योपनिषत्तपः ।
तपसोपनिषत्त्यागस्त्यागस्योपनिषत् सुखं । सुखस्योपनिषत् स्वर्गः स्वर्गस्योपनिषच्छमः । ६०७५
क्लेदनं शोकमनसोः सन्तापं तृष्णया सह । सत्त्वमिच्छसि सन्तोषाच्छान्तिलक्षणमुत्तमं ।
विशोको निर्म्ममः शान्तः प्रसन्नात्मा विमत्सरः । षड्भिर्लक्षणवानेतैः समग्रः पुनरेष्यति ।
षड्भिः सत्त्वगुणोपेतैः प्राज्ञैरधिगतं त्रिभिः । ये विदुः प्रेत्य चात्मानमिहस्थं तं गुणं विदुः ।
अकृत्रिममसंहार्य्यं प्राकृतं निरुपस्कृतं । अध्यात्मं सुकृतं प्राप्तः सुखमव्ययमश्नुते ।
निःप्रचारं मनः कृत्वा प्रतिष्ठाप्य च सर्व्वशः । यामयं लभते तुष्टिं सा न शक्यात्मनोऽन्यथा । ६०८०

येन दृप्यत्यभुञ्जानो येन तृप्यत्यवित्तवान । येनास्नेहो बलं धत्ते यस्तं वेद स वेदवित् ।
संगुप्तान्यात्मनो द्वाराण्यपिधाय विचिन्तयन् । यो ह्यास्ते ब्राह्मणः शिष्टः स आत्मरतिरुच्यते ।
समाहितं परे तत्त्वे क्षीणकाममवस्थितं । सर्व्वतः सुखमन्वेति वपुश्चान्द्रमसं यथा ।
अविशेषाणि भूतानि गुणांश्च जहतो मुनेः । सुखेनापोह्यते दुःखं भास्करेण तमो यथा ।
तमतिक्रान्तकर्म्माणमतिक्रान्तगुणक्षयं । ब्राह्मणं विषयाश्लिष्टं जरामृत्यू न विन्दतः । ९०८५
स यदा सर्व्वतो मुक्तः समः पर्य्यवतिष्ठते । इन्द्रियाणीन्द्रियार्थांश्च शरीरस्थोऽतिवर्त्तते ।
कारणं परमं प्राप्य अतिक्रान्तस्य कार्य्यतां । पुनरावर्त्तनं नास्ति सम्प्राप्तस्य परं पदं ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने एकपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५१ ॥
॥ व्यास उवाच ॥ द्वन्द्वानि मोक्षजिज्ञासुरर्थधर्म्मावनुष्ठितः । वक्त्रा गुणवता शिष्यः श्राव्यपूर्व्वमिदं महत् ।
आकाशं मारुतो ज्योतिरापः पृथ्वी च पञ्चमी । भावाभावौ च कालश्च सर्व्वभूतेषु पञ्चसु ।
अन्तरात्मकमाकाशं तन्मयं श्रोत्रमिन्द्रियं । तस्य शब्दं गुणं विद्यान्मूर्त्तिशास्त्रविधानवित् । ९०९०
चरणं मारुतात्मेति प्राणापानौ च तन्मयौ । स्पर्शनञ्चेन्द्रियं विद्यात्तथा स्पर्शञ्च तन्मयं ।
तापः पाकः प्रकाशश्च ज्योतिश्चक्षुश्च पञ्चमं । तस्य रूपं गुणं विद्यात्ताम्रगौरासितात्मकं ।
प्रक्लेदः क्षुद्रता स्नेह इत्यपामुपदिश्यते । असृङ्मज्जा च यच्चान्यत् स्निग्धं विद्यात्तदात्मकं ।
रसनञ्चेन्द्रियं जिह्वा रसश्चापां गुणो मतः । सङ्घातः पार्थिवो धातुरस्थिदन्तनखानि च ।
श्मश्रु रोम च केशाश्च शिरा स्नायु च चर्म्म च । इन्द्रियं घ्राणसंज्ञातं नासिकेत्यभिसंज्ञिका । ९०९५
गन्धश्चैवेन्द्रियार्थोऽयं विज्ञेयः पृथिवीमयः । उत्तरेषु गुणाः सन्ति सर्व्वसत्त्वेषु चोत्तराः ।
पञ्चानां भूतसङ्घानां सन्ततिं मुनयो विदुः । मनो नवममेवाहु बुद्धिस्तु दशमी स्मृता ।
एकादशस्त्वनन्तात्मा स सर्व्वः पर उच्यते । व्यवसायात्मिका बुद्धिर्मनो व्याकरणात्मकं ।
कर्म्मानुमानाद्विज्ञेयः स जीवः क्षेत्रसंज्ञकः । एभिः कालात्मकैर्भावैर्यः सर्व्वैः सर्व्वमन्वितं ।
पश्यत्यकलुषं कर्म्म स मोहं नानुवर्त्तते । ९१००
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने द्विपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५२ ॥
॥ व्यास उवाच ॥ शरीरादिप्रमुक्तं हि सूक्ष्मभूतं शरीरिणं । कर्म्मभिः परिपश्यन्ति शास्त्रोक्तैः शास्त्रवेदिनः ।
यथा मरीच्यः सहिताश्चरन्ति सर्व्वत्र तिष्ठन्ति च दृश्यमानाः । देहैर्व्विमुक्ता विचरन्ति लोकांस्तथैव सत्त्वान्यतिमानुषाणि ।
प्रतिरूपं यथैवाप्सु तापः सूर्य्यस्य लक्ष्यते । सत्त्ववत्सु तथा सत्त्वं प्रतिरूपं स पश्यति ।
तानि सूक्ष्माणि सत्त्वानि विमुक्तानि शरीरतः । स्वेन सत्त्वेन सत्त्वज्ञाः पश्यन्ति नियतेन्द्रियाः ।
स्वपतां जाग्रताञ्चैव सर्व्वेषामात्मचिन्तितं । प्रधानाद्द्वेधमुक्तानां जहतां कर्म्मजं रजः । ९१०५
यथाऽहनि तथा रात्रौ यथा रात्रौ तथाऽहनि । वशे तिष्ठति सत्त्वात्मा सततं योगयोगिनां ।
तेषां नित्यं सदा नित्यो भूतात्मा सततं गुणैः । सप्तभिस्त्वन्वितः सूक्ष्मैश्चरिष्णुरजरामरः ।

मनोबुद्धिपराभूतः स्वदेहपरदेहवित्। स्वप्नेष्वपि भवत्येष विज्ञाता सुखदुःखयोः।
तत्रापि लभते दुःखं तत्रापि लभते सुखं। क्रोधलोभौ तु तत्रापि कृत्वा व्यसनमृच्छति।
प्रीणितश्चापि भवति महतोऽर्थानवाप्य च। करोति पुण्यं तत्रापि जीवन्निव च पश्यति। ९११०
अहोरात्रान्तर्गतश्चापि गर्भत्वं समुपेयिवान्। दश मासान् वसन् कुक्षौ नैषोऽन्नमिव जीर्य्यते।
तमेतमतितेजोऽंशं भूतात्मानं हृदि स्थितं। तमोरजोभ्यामाविष्टा नानुपश्यन्ति मूर्त्तिषु।
योगशास्त्रपरा भूत्वा तमात्मानं परीप्सवः। अनुच्छ्वासान्यमूर्त्तानि यानि वज्रोपमान्यपि।
पृथग्भूतेषु सृष्टेषु चतुर्थाश्रमकर्म्मसु। समाधौ योगमेवैतच्छाण्डिल्यः शममब्रवीत्।
विदित्वा सप्त सूक्ष्माणि षडङ्गञ्च महेश्वरं। प्रधानविनियोगस्थं परं ब्रह्मानुपश्यति। ९११५
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने त्रिपञ्चाशदधिकद्विशततोऽध्यायः॥ २५३ ॥
॥ व्यास उवाच ॥ हृदि कामद्रुमश्चित्रो मोहसञ्चयसम्भवः। क्रोधमानमहास्कन्धो विधित्सापरिषेचनः।
तस्य चाज्ञानमाधारः प्रमादः परिषेचनं। सोऽभ्यसूयापलाशो हि पुरा दुष्कृतसारवान्।
सम्मोहचिन्ताविटपः शोकशाखो भयाङ्कुरः। मोहनीभिः पिपासाभिर्लताभिरनुवेष्टितः।
उपासते महावृक्षं सुलुब्धास्तत्फलेप्सवः। आयासैः संयुताः पाशैः फलदं परिवेष्ट्य तं।
यस्तान् पाशान् वशे कृत्वा तं वृक्षमपकर्षति। गतः स दुःखयोरन्तं त्यज्यमानस्तयोर्द्वयोः। ९१२०
संरोहत्यकृतप्रज्ञः सदा येन हि पादपं। स तमेव ततो हन्ति विषग्रन्थिरिवातुरं।
तस्यानुगतमूलस्य मूलमुद्ध्रियते बलात्। योगप्रसादात् कृतिना साम्येन परमासिना।
एवं यो वेद कामस्य केवलस्य निवर्त्तनं। बन्धं वै कामशास्त्रस्य स दुःखान्यतिवर्त्तते।
शरीरं पुरमित्याहुः स्वामिनी बुद्धिरिष्यते। तत्त्वबुद्धेः शरीरस्थं मनो नामार्थचिन्तकं।
इन्द्रियाणि मनः पौरास्तदर्थन्तु परा कृतिः। तत्र द्वौ दारुणौ दोषौ तमो नाम रजस्तथा। ९१२५
तदर्थमुपजीवन्ति पौराः सह पुरेश्वरैः। अद्वारेण तमेवार्थं द्वौ दोषावुपजीवतः।
तत्र बुद्धिर्हि दुर्द्धर्षा मनः सामान्यमुच्यते। पौराश्चापि मनस्त्रस्तास्तेषामपि चला स्थितिः।
यदर्थं बुद्धिरध्यास्ते सोऽनर्थः परिषीदति। यदर्थं पृथगध्यास्ते मनस्तत् परिषीदति।
पृथग्भूतं मनो बुद्ध्या मनो भवति केवलं। तत्रैनं विष्टतं शून्यं रजः पर्य्यवतिष्ठते।
तन्मनः कुरुते सख्यं रजसा सह सङ्गतं। तस्मादाय जनं पौरं रजसे संप्रयच्छति। ९१३
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने चतुःपञ्चाशदधिकद्विशततोऽध्यायः॥ २५४ ॥
॥ भीष्म उवाच ॥ भूतानां परिसङ्ख्यानं भूयः पुत्र निशामय। द्वैपायनमुखाद्भ्रष्टं श्लाघया परयाऽनघ।
दीप्तानलनिभः प्राह भगवान्धूमवर्च्चसे। ततोऽहमपि वक्ष्यामि भूयः पुत्र निदर्शनं।
भूमेः स्थैर्य्यं गुरुत्वञ्च काठिन्यं प्रसवार्थता। गन्धो गुरुत्वं शक्तिश्च संघातस्थापना धृतिः।
अपां शैत्यं तथा क्लेदो द्रवत्वं स्नेहसौम्यता। जिह्वा विस्यन्दनञ्चापि भौमानां श्रपणं तथा।
अग्नेर्द्दुर्द्धर्षता ज्योतिस्तापः पाकः प्रकाशनं। शौचं रागो लघुस्तैक्ष्ण्यं सततञ्चोर्द्ध्वभासिता। ९१३१

वायोरनियमस्पर्शो वादस्थानं स्वतन्त्रता । बलं शैघ्र्यञ्च मोक्षञ्च कर्म्मचेष्टात्मता भवः ।
आकाशस्य गुणः शब्दो व्यापित्वं छिद्रताऽपि च । अनाश्रयमनालम्बमव्यक्तमविकारिता ।
अप्रतीघातिता चैव भूतत्वं विकृतानि च । गुणाः पञ्चाशतं प्रोक्ताः पञ्चभूतात्मभाविताः ।
धैर्य्योपपत्तिर्व्यक्तिश्च विसर्गः कल्पना क्षमा । सदसच्चाशुता चैव मनसो नव वै गुणाः ।
इष्टानिष्टविपत्तिश्च व्यवसायः समाधिता । संशयः प्रतिपत्तिश्च बुद्धेः पञ्च गुणान् विदुः । ९१४०
॥ युधिष्ठिर उवाच ॥ कथं पञ्चगुणा बुद्धिः कथं पञ्चेन्द्रिया गुणाः । एतन्मे सर्व्वमाचक्ष्व सूक्ष्मज्ञानं पितामह ।
॥ भीष्म उवाच ॥ आहुः षष्टिं बुद्धिगुणान् वै भूतविशिष्टा नित्यविषक्ताः । भूतविभूतीश्चाक्षरसृष्टाः पुत्र न नित्यं तदिह वदन्ति ।
तत् पुत्र चिन्ताकलितं तदुक्तमनागतं वै तव सम्प्रतीह । भूतार्थतत्त्वं तदवाप्य सर्व्वं भूतप्रभावाद्भव शान्तबुद्धिः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने पञ्चपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५५ ॥
॥ युधिष्ठिर उवाच ॥ य इमे पृथिवीपालाः शेरते पृथिवीतले । पृतनामध्य एते हि गतसंज्ञा महाबलाः ।
एकैकशो भीमबला नागायुतबलास्तथा । एते हि निहताः सङ्ख्ये तुल्यतेजोबलैर्नरैः । ९१४५
नैषां पश्यामि हन्तारं प्राणिनां संयुगे परं । विक्रमेणोपसम्पन्नास्तेजोबलसमन्विताः ।
अथ चेमे महाप्राज्ञाः शेरते हि गतासवः । मृता इति च शब्दोऽयं वर्त्तत्येषु गतासुषु ।
इमे मृता नृपतयः प्रायशो भीमविक्रमाः । तत्र मे संशयो जातः कुतः संज्ञा मृता इति ।
कस्य मृत्युः कुतो मृत्युः केन मृत्युरिह प्रजाः । हरत्यमरसंकाश तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ पुरा कृतयुगे तात राजासीदनुकम्पकः । स शत्रुवशमापन्नः संग्रामे क्षीणवाहनः । ९१५०
तस्य पुत्रो हरिर्नाम नारायणसमो बले । स शत्रुभिर्हतः सङ्ख्ये सबलः सपदानुगः ।
स राजा शत्रुवशगः पुत्रशोकसमन्वितः । यदृच्छया शान्तिपरो ददर्श भुवि नारदं ।
तस्मै स सर्व्वमाचष्ट यथा वृत्तं जनेश्वरः । शत्रुभिर्ग्रहणं सङ्ख्ये पुत्रस्य मरणं तथा ।
तस्य तद्वचनं श्रुत्वा नारदोऽथ तपोधनः । आख्यानमिदमाचष्ट पुत्रशोकापहं तदा ।
॥ नारद उवाच ॥ राजन् शृणु समाख्यानमद्येदं बहुविस्तरं । यथा वृत्तं श्रुतञ्चैव मयेदं वसुधाधिप । ९१५५
प्रजाः सृष्ट्वा महातेजाः प्रजासर्गे पितामहः । अतीव वृद्धा बहुला नामृष्यत पुनः प्रजाः ।
न ह्यन्तरमभूत् किञ्चित् क्वचिज्जन्तुभिरच्युत । निरुच्छ्वासमिवोन्नद्धं त्रैलोक्यमभवन्नृप ।
तस्य चिन्ता समुत्पन्ना संहारं प्रति भूपते । चिन्तयन्नाध्यगच्छच्च संहारे हेतुकारणं ।
तस्य रोषान्महाराज खेभ्योऽग्निरुदतिष्ठत । तेन सर्व्वा दिशो राजन्ददाह स पितामहः ।
ततो दिवं भुवं खञ्च जगच्च सचराचरं । ददाह पावको राजन् भगवत्कोपसम्भवः । ९१६०
तत्रादह्यन्त भूतानि जङ्गमानि ध्रुवाणि च । महता क्रोधवेगेन कुपिते प्रपितामहे ।
ततो हरिजटः स्थाणुर्वेदाध्वरपतिः शिवः । जगाम शरणं देवो ब्रह्माणं परवीरहा ।
तस्मिन्नभिगते स्थाणौ प्रजानां हितकाम्यया । अब्रवीत् परमो देवो ज्वलन्निव तदा शिवं ।

करवाण्यद्य कं कामं वरार्होऽसि मतो मम। कर्त्ता ह्यस्मि प्रियं शम्भो तव यद्धृदि वर्त्तते।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि प्रजापतिसंवादे सप्तपञ्चाशदधिकद्विशततोऽध्यायः॥ २५७॥
॥ स्थाणुरुवाच॥ प्रजासर्गनिमित्तं मे कार्य्यवत्तामिमां प्रभो। विद्धि सृष्टास्त्वया हीमा मा कुप्यासां पितामह। ९१६५
तव तेजोऽग्निना देव प्रजा दह्यन्ति सर्व्वशः। ता दृष्ट्वा मम कारुण्यं मा कुप्यासां जगत्प्रभो।
॥ प्रजापतिरुवाच॥ न कुप्ये न च मे कामो न भवेयुः प्रजा इति। लाघवार्थं धरण्यास्तु ततः संहार इष्यते।
इयं हि मां सदा देवी भारार्त्ता समचोदयत्। संहारार्थं महादेव भारेणाप्सु निमज्जती।
यदाऽहं नाधिगच्छामि बुद्ध्या बहु विचारयन्। संहारमासां वृद्धानां ततो मां क्रोध आविशत्।
॥ स्थाणुरुवाच॥ संहारार्थं प्रसीदस्व मा क्रुधो विबुधेश्वर। मा प्रजाः स्थावरञ्चैव जङ्गमञ्च व्यनीनशन्। ९१७०
पल्वलानि च सर्व्वाणि सर्व्वञ्चैव तृणोलपं। स्थावरं जङ्गमञ्चैव भूतग्रामं चतुर्विधं।
तदेतद्भस्मसाद्भूतं जगत् सर्व्वमुपप्लुतं। प्रसीद भगवन् साधो वर एष वृतो मया।
नष्टा न पुनरेष्यन्ति प्रजा ह्येताः कथञ्चन। तस्मान्निवर्त्ततामेतत्तेन स्वेनैव तेजसा।
उपायमन्यं सम्पश्य भूतानां हितकाम्यया। यथाऽमी जन्तवः सर्व्वे न दह्येरन् पितामह।
अभावं हि न गच्छेयुरुच्छिन्नप्रजनाः प्रजाः। अधिदैवे नियुक्तोऽस्मि त्वया लोकेश्वरेश्वर। ९१७५
तद्भवं हि जगन्नाथ एतत् स्थावरजङ्गमं। प्रसाद्य त्वां महादेव याचाम्यावृत्तिजाः प्रजाः।
॥ नारद उवाच॥ श्रुत्वा तु वचनं देवः स्थाणोर्नियतवाङ्मनाः। तेजस्तत् संनिजग्राह पुनरेवान्तरात्मनि।
ततोऽग्निमुपसंहृत्य भगवान् लोकपूजितः। प्रवृत्तिञ्च निवृत्तिञ्च कल्पयामास वै प्रभुः।
उपसंहरतस्तस्य तमग्निं रोषजं तदा। प्रादुर्ब्बभूव विश्वेभ्यः खेभ्यो नारी महात्मनः।
कृष्णरक्ताम्बरधरा कृष्णनेत्रतलान्तरा। दिव्यकुण्डलसंपन्ना दिव्याभरणभूषिता। ९१८०
सा विनिःसृत्य वै खेभ्यो दक्षिणामाश्रिता दिशं। ददृशाते च तां कन्यां देवौ विश्वेश्वरावुभौ।
तामाहूय तदा देवो लोकानामादिरीश्वरः। मृत्यो इति महीपाल जहि चेमाः प्रजा इति।
त्वं हि संहारबुद्ध्या मे चिन्तिता रुषितेन च। तस्मात् संहर सर्व्वास्त्वं प्रजाः सजडपण्डिताः।
अविशेषेण चैव त्वं प्रजाः संहर कामिनि। मम त्वं हि नियोगेन श्रेयः परमवाप्स्यसि।
एवमुक्ता तु सा देवी मृत्युः कमलमालिनी। प्रदध्यौ दुःखिता बाला साश्रुपातमतीव च। ९१८५
पाणिभ्याञ्चैव जग्राह तान्यश्रूणि जनेश्वर। मानवानां हितार्थाय ययाचे पुनरेव ह।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि मृत्युप्रजापतिसंवादे अष्टपञ्चाशदधिकद्विशततोऽध्यायः॥ २५८॥
॥ नारद उवाच॥ विनीय दुःखमबला सात्मनैवायतेक्षणा। उवाच प्राञ्जलिर्भूत्वा लतेवावर्ज्जिता तदा।
त्वया सृष्टा कथं नारी मादृशी वदताम्बर। रौद्रकर्म्माऽभिजायेत सर्व्वप्राणिभयङ्करी।
बिभेम्यहमधर्म्मस्य धर्म्म्यमादिश कर्म्म मे। त्वं मां भीतामवेक्षस्व शिवेनेक्षस्व चक्षुषा।
बालान् वृद्धान् वयस्थांश्च न हरेयमनागसः। प्राणिनः प्राणिनामीश नमस्तेऽस्तु प्रसीद मे। ९१९०
प्रियान् पुत्त्रान् वयस्यांश्च भ्रातृन् मातृः पितृनपि। अपध्यास्यन्ति यद्येवं मृतास्तेषां बिभेम्यहं।

कृपणाश्रुपरिक्लेदो दह्येमां शाश्वतीः समाः । तेभ्योऽहं बलवद्भीता शरणं त्वामुपागता ।
यमस्य भवने देव पात्यन्ते पापकर्म्मिणः । प्रसादये त्वां वरदं प्रसादं कुरु मे प्रभो ।
एतदिच्छाम्यहं कामं त्वत्तो लोकपितामह । इच्छेयं त्वत्प्रसादार्थं तपस्तप्तुं महेश्वर ।
॥ पितामह उवाच ॥ मृत्यो सङ्कल्पिता मे त्वं प्रजाः संहारहेतुना । गच्छ संहर सर्व्वास्त्वं प्रजा मा च विचारय । ९१९५
एतदेवमवश्यं हि भविता नैतदन्यथा । क्रियतामनवद्याङ्गि यथोक्तं मद्वचोऽनघे ।
एवमुक्ता महाबाहो मृत्युः परपुरञ्जय । न व्याजहार तस्थौ च प्रह्वा भगवदुन्मुखी ।
पुनः पुनरथोक्ता सा गतसत्त्वेव भामिनी । तूष्णीमासीत्ततो देवो देवानामीश्वरेश्वरः ।
प्रससाद किल ब्रह्मा स्वयमेवात्मनात्मनि । स्मयमानश्च लोकेशो लोकान् सर्व्वानवैक्षत ।
निवृत्तरोषे तस्मिंस्तु भगवत्यपराजिते । सा कन्याऽथ जगामास्य समीपादिति नः श्रुतं । ९२००
अपसृत्याप्रतिश्रुत्य प्रजासंहरणं तदा । त्वरमाणेव राजेन्द्र मृत्युर्धेनुकमभ्यगात् ।
सा तत्र परमं देवी तपोऽचरत दुश्चरं । समा ह्येकपदे तस्थौ दश पद्मानि पञ्च च ।
तां तथा कुर्व्वतीं तत्र तपः परमदुश्चरं । पुनरेव महातेजा ब्रह्मा वचनमब्रवीत् ।
कुरुष्व मे वचो मृत्यो तदनादृत्य सत्वरा । तथैवैकपदे तात पुनरन्यानि सप्त सा ।
तस्थौ पद्मानि षट् चैव पञ्च द्वे चैव मानद । भूयः पद्मायुतं तात मृगैः सह चचार सा । ९२०५
द्वे चायुते नरश्रेष्ठ वाय्वाहारा महामते । पुनरेव ततो राजन् मौनमातिष्ठदुत्तमं ।
अप्सु वर्षसहस्राणि सप्त चैकञ्च पार्थिव । ततो जगाम सा कन्या कौशिकीं नृपसत्तम ।
तत्र वायुजलाहारा चचार नियमं पुनः । ततो ययौ महाभागा गङ्गां मेरुञ्च केवलं ।
तस्थौ दार्व्विव निश्चेष्टा प्रजानां हितकाम्यया । ततो हिमवतो मूर्द्ध्नि यत्र देवाः समीजिरे ।
तत्राङ्गुष्ठेन राजेन्द्र निखर्व्वमपरं ततः । तस्थौ पितामहञ्चैव तोषयामास यत्नतः । ९२१०
ततस्तामब्रवीत्तत्र लोकानां प्रभवाप्ययः । किमिदं वर्त्तते पुत्रि क्रियतां मम तद्वचः ।
ततोऽब्रवीत् पुनर्मृत्युर्भगवन्तं पितामहं । न हरेयं प्रजा देव पुनस्त्वाहं प्रसादये ।
तामधर्म्मभयाद्भीतां पुनरेव प्रयाचतीं । तदाऽब्रवीद्देवदेवो निगृह्येदं वचस्ततः ।
अधर्म्मो नास्ति ते मृत्यो संयच्छेमाः प्रजाः शुभे । मया ह्युक्तं मृषा भद्रे भविता नेह किञ्चन ।
धर्म्मः सनातनश्च त्वामिहैवानुप्रवेक्ष्यति । अहञ्च विबुधाश्चैव त्वद्धिते निरताः सदा । ९२१५
इममन्यञ्च ते कामं ददामि मनसेप्सितं । न त्वां दोषेण यास्यन्ति व्याधिसम्पीडिताः प्रजाः ।
पुरुषेषु स्वरूपेण पुरुषस्त्वं भविष्यसि । स्त्रीषु स्त्रीरूपिणी चैव तृतीयेषु नपुंसकं ।
सैवमुक्ता महाराज कृताञ्जलिरुवाच ह । पुनरेव महात्मानं नेति देवेशमव्ययं ।
तामब्रवीत्तदा देवो मृत्यो संहर मानवान् । अधर्म्मस्ते न भविता तथा ध्यास्याम्यहं शुभे ।
यानश्रुबिन्दून् पतितानपश्यं ये पाणिभ्यां धारितास्ते पुरस्तात् । ते व्याधयो मानवान् घोररूपाः प्राप्ते काले कालयिष्यन्ति मृत्यो । ९२२०

सर्व्वेषां त्वं प्राणिनामन्तकाले कामक्रोधौ सहितौ योजयेथाः। एवं धर्म्मस्त्वामुपैष्यत्यमेयो न चाधर्म्मं लप्स्यसे तुल्यवृत्तिः।

एवं धर्म्मं पालयिष्यस्यथो त्वं न चात्मानं मज्जयिष्यस्यधर्म्मे। तस्मात् कामं रोचयस्वाभ्यागतं त्वं संयोज्याथो संहरस्वेह जन्तून्।

सा वै तदा मृत्युसंज्ञापदेशा भीता शापाद्बाढमित्यब्रवीत्तं। अथो प्राणान् प्राणिनामन्तकाले कामक्रोधौ प्राप्य निर्म्मोह्य हन्ति।

मृत्योर्ये ते व्याधयश्चाश्रुपाता मनुष्याणां रुज्यते यैः शरीरं। सर्व्वेषां वै प्राणिनां प्राणनाशे तस्माच्छोकं मा कृथा बुद्ध्यबुद्ध्या।

सर्व्वे देवाः प्राणिनां प्राणनाशे गत्वा वृत्ताः सन्निवृत्तास्तथैव। एवं सर्व्वे मानवाः प्राणनाशे गत्वा वृत्ता देववद्राजसिंह। ९२२५

वायुर्भीमो भीमनादो महौजाः स सर्व्वेषां प्राणिनां प्राणभूतः। नानावृत्तिर्देहिनां देहभेदे तस्माद्वायुर्देवदेवो विशिष्टः।

सर्व्वे देवा मर्त्यसंज्ञाविशिष्टाः सर्व्वे मर्त्या देवसंज्ञाविशिष्टाः। तस्मात् पुत्रं मा शुचो राजसिंह पुत्रः स्वर्गं प्राप्यते मोदते च।

एवं मृत्युर्देवसृष्टा प्रजानां प्राप्ते काले संहरन्ती यथावत्। तस्याश्चैव व्याधयस्तेऽश्रुपाताः प्राप्ते काले संहरन्तीह जन्तून्।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि मृत्युप्रजापतिसंवादे ऊनषष्ट्यधिकद्विशततमोऽध्यायः॥ २५९ ॥

॥ युधिष्ठिर उवाच ॥ इमे वै मानवाः सर्व्वे धर्म्मं प्रति विशङ्किताः। कोऽयं धर्म्मः कुतो धर्म्मस्तन्मे ब्रूहि पितामह।

धर्म्मस्त्वयमिहार्थः किममुत्रार्थोऽपि वा भवेत्। उभयार्थो हि वा धर्म्मस्तन्मे ब्रूहि पितामह। ९२३०

॥ भीष्म उवाच ॥ सदाचारः स्मृतिर्वेदास्त्रिविधं धर्म्मलक्षणं। चतुर्थमर्थमित्याहुः कवयो धर्म्मलक्षणं।

अपि ह्युक्तानि धर्म्माणि व्यवस्यन्त्युत्तरावरे। लोकयात्रार्थमेवेह धर्म्मस्य नियमः कृतः।

उभयत्र सुखोदर्क इह चैव परत्र च। अलब्ध्वा निपुणं धर्म्मं पापः पापेन युज्यते।

न च पापकृतः पापान्मुच्यन्ते केचिदापदि। अपापवादी भवति यदा भवति धर्म्मवित्।

धर्म्मस्य निष्ठा त्वाचारस्तमेवाश्रित्य भोत्स्यसे। यदा धर्म्मसमाविष्टो धनं गृह्णाति तस्करः। ९२३५

रमते निर्हरन् स्तेनः परवित्तमराजके। यदाऽस्य तद्धरन्त्यन्ये तदा राजानमिच्छति।

तदा तेषां स्पृहयते ये वै तुष्टाः स्वकैर्धनैः। अभीतः शुचिरभ्येति राजद्वारमशङ्कितः।

न हि दुश्चरितं किञ्चिदन्तरात्मनि पश्यति। सत्यस्य वचनं साधु न सत्याद्विद्यते परं।

सत्येन विधृतं सर्व्वं सर्व्वं सत्ये प्रतिष्ठितं। अपि पापकृतो रौद्राः सत्यं कृत्वा पृथक् पृथक्।

अद्रोहमविसंवादं प्रवर्त्तन्ते तदाश्रयाः। ते चेन्मिथो धृतिं कुर्य्युर्विनश्येयुरसंशयं। ९२४०

न हर्त्तव्यं परधनमिति धर्म्मः सनातनः। मन्यन्ते बलवन्तस्तं दुर्ब्बलैः सम्प्रकीर्त्तितं।

यदा नियतिदौर्ब्बल्यमथैषामेव रोचते। न ह्यत्यन्तं बलवन्तो भवन्ति सुखिनोऽपि वा।

तस्मादनार्ज्जवे बुद्धिर्न कार्य्या ते कदाचन । असाधुभ्योऽस्य न भयं न चौरेभ्यो न राजतः ।
अकिञ्चित् कस्यचित् कुर्व्वन्निर्भयः शुचिरावसेत् । सर्व्वतः शङ्कते स्तेनो मृगो ग्राममिवेयिवान् ।
बहुधा चरितं पापमन्यत्रैवानुपश्यति । मुदितः शुचिरभ्येति सर्व्वतो निर्भयः सदा । ९२०५
न हि दुश्चरितं किञ्चिदात्मनोऽन्येषु पश्यति । दातव्यमित्ययं धर्म्म उक्तो भूतहिते रतैः ।
तं मन्यन्ते धनयुताः कृपणैः सम्प्रवर्त्तितं । यदा नियतिकार्पण्यमथैषामेव रोचते ।
न ह्यत्यन्तं धनवन्तो भवन्ति सुखिनोऽपि वा । यदन्यैर्विहितं नेच्छेदात्मनः कर्म्म पूरुषः ।
न तत्परेषु कुर्व्वीत जानन्नप्रियमात्मनः । योऽन्यस्य स्यादुपपतिः स कं किं वक्तुमर्हति ।
यदन्यस्य ततः कुर्य्यान्न मृष्येदिति मे मतिः । जीवितुं यः स्वयं चेच्छेत् कथं सोऽन्यं प्रघातयेत् । ९२१०
यद्यदात्मनि चेच्छेत तत्परस्यापि चिन्तयेत् । अतिरिक्तैः संविभजेद्भोगैरन्यानकिञ्चनान् ।
एतस्मात् कारणाद्धात्रा कुसीदं सम्प्रवर्त्तितं । यस्मिंस्तु देवाः समये सन्तिष्ठेरंस्तथा भवेत् ।
अथवा लाभसमये स्थितिर्धर्म्मेऽपि शोभना । सर्व्वं प्रियाभ्युपगतं धर्म्ममाहुर्मनीषिणः ।
पश्यैतं लक्षणोद्देशं धर्म्माधर्म्मे युधिष्ठिर । लोकसंग्रहसंयुक्तं विधात्रा विहितं पुरा ।
सूक्ष्मधर्म्मार्थनियतं सतां चरितमुत्तमं । धर्म्मलक्षणमाख्यातमेतत्ते कुरुसत्तम । ९२१५
तस्मादनार्ज्जवे बुद्धिर्न ते कार्य्या कथञ्चन ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि धर्म्मलक्षणकथने षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥
॥ युधिष्ठिर उवाच ॥ सूक्ष्मं साधुसमुद्दिष्टं नियतं शास्त्रलक्षणं । प्रतिभा त्वस्ति मे काचित्तां ब्रूयामनुमानतः ।
भूयांसो हृदये ये मे प्रश्नास्ते व्याहृतास्त्वया । इदन्त्वन्यत् प्रवक्ष्यामि न राजन् विग्रहादिव ।
इमानि हि प्राणयन्ति सृजन्त्युत्तारयन्ति च । न धर्म्मः परिपाठेन शक्यो भारत वेदितुं ।
अन्यो धर्म्मः समस्थस्य विषमस्थस्य चापरः । आपदस्तु कथं शक्याः परिपाठेन वेदितुं । ९२२०
सदाचारो मतो धर्म्मः सन्तस्त्वाचारलक्षणाः । साध्यासाध्यं कथं शक्यं सदाचारो ह्यलक्षणः ।
दृश्यते हि धर्म्मरूपेणाधर्म्मं प्राकृतश्चरन् । धर्म्मञ्चाधर्म्मरूपेण कश्चिदप्राकृतश्चरन् ।
पुनरस्य प्रमाणं हि निर्द्दिष्टं शास्त्रकोविदैः । वेदवादाश्चानुयुगं ह्रसन्तीतीह नः श्रुतं ।
अन्ये कृतयुगे धर्म्मास्त्रेतायां द्वापरे परे । अन्ये कलियुगे धर्म्मा यथाशक्तिकृता इव ।
आम्नायवचनं सत्यमित्ययं लोकसंग्रहः । आम्नायेभ्यः पुनर्व्वेदाः प्रसृताः सर्व्वतोमुखाः । ९२२५
ते चेत् सर्व्वप्रमाणं वै प्रमाणं तन्न विद्यते । प्रमाणेऽप्यप्रमाणेन विरुद्धे शास्त्रता कुतः ।
धर्म्मस्य क्रियमाणस्य बलवद्भिर्दुरात्मभिः । या या विक्रियते संस्था ततः साऽपि प्रणश्यति ।
विद्म चैवं न वा विद्म शक्यं वा वेदितुं न वा । अणीयान् क्षुरधाराया गरीयानपि पर्व्वतात् ।
गन्धर्व्वनगराकारः प्रथमं संप्रदृश्यते । अन्वीक्ष्यमाणः कविभिः पुनर्गच्छत्यदर्शनं ।
निपानानीव गोभ्योऽपि क्षेत्रे कुल्येव भारत । स्मृतिर्हि शाश्वतो धर्म्मो विप्रहीणो न दृश्यते । ९२३०
कामादन्ये क्षयाच्चान्ये कारणैरपरैस्तथा । असन्तोऽपि वृथाचारं भजन्ते बहवोऽपरे ।

ततो यज्ञः प्रभवति नास्तिक्यमपि जल्पसि। नहि वर्त्तेदयं लोको वार्त्तामुत्सृज्य केवलां।
॥ तुलाधार उवाच ॥ वक्ष्यामि जाजले वृत्तिं नास्मि ब्राह्मण नास्तिकः। न यज्ञञ्च विनिन्दामि यज्ञवित्तु सुदुर्लभः।
नमो ब्राह्मणयज्ञाय ये च यज्ञविदो जनाः। स्वयज्ञं ब्राह्मणा हित्वा क्षात्रयज्ञमिहास्थिताः। ९४००
लुब्धैर्वित्तपरैर्ब्रह्मन्नास्तिकैः सम्प्रवर्त्तितं। वेदवादानविज्ञाय सत्याभासमिवानृतं।
इदं देयमिदं देयमिति चायं प्रशस्यते। अतस्तैन्यं प्रभवति विकर्म्माणि च जाजले।
यदेव सुकृतं हव्यं तेन तुष्यन्ति देवताः। नमस्कारेण हविषा स्वाध्यायैरौषधैस्तथा।
पूजा स्याद्देवतानां हि यथा शास्त्रनिदर्शनं। इष्टापूर्त्तादसाधूनां विगुणा जायते प्रजा।
लुब्धेभ्यो जायते लुब्धः समेभ्यो जायते समः। यजमानस्तथात्मानमृत्विजश्च तथा प्रजाः। ९४०५
यज्ञात् प्रजा प्रभवति नभसोऽम्भ इवामलं। अग्नौ प्रास्ताहुतिर्ब्रह्मन्नादित्यमुपगच्छति।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः। तस्मात् सुनिष्ठिताः पूर्व्वे सर्व्वान् कामांश्च लेभिरे।
अकृष्टपच्या पृथिवी आशीर्भिर्व्वीरुधोऽभवन्। न ते यज्ञेष्वात्मसु वा फलं पश्यन्ति किञ्चन।
शङ्कमानाः फलं यज्ञे ये यजेरन् कथञ्चन। जायन्तेऽसाधवो धूर्त्ता लुब्धा वित्तप्रयोजनाः।
स स्म पापकृतां लोकान् गच्छेदशुभकर्म्मणा। प्रमाणमप्रमाणेन यः कुर्य्यादशुभं नरः। ९४१०
पापात्मा सोऽकृतप्रज्ञः सदैवेह द्विजोत्तम। कर्त्तव्यमिति कर्त्तव्यं वेत्ति वै ब्राह्मणो भयं।
ब्रह्मैव वर्त्तते लोके नैव कर्त्तव्यतां पुनः। विगुणञ्च पुनः कर्म्म ज्याय इत्यनुशुश्रुम।
सर्व्वभूतोपघातश्च फलभावे च संयमः। सत्ययज्ञा दमयज्ञा अर्थलुब्धार्थतृप्तयः।
उत्पन्नत्यागिनः सर्व्वे जना आसन्नमत्सराः। क्षेत्रक्षेत्रज्ञतत्त्वज्ञाः स्वयज्ञपरिनिष्ठिताः।
ब्राह्मं वेदमधीयन्तस्तोषयन्त्यपरानपि। अखिलं दैवतं सर्व्वं ब्रह्म ब्राह्मणि संश्रितं। ९४१५
तुष्यन्ति तृप्यतो देवास्तृप्तास्तृप्तस्य जाजले। यथा सर्व्वरसैस्तृप्तो नाभिनन्दति किञ्चन।
तथा प्रज्ञानतृप्तस्य नित्यतृप्तिः सुखोदया। धर्म्माधारा धर्म्मसुखाः कृत्स्नव्यवसितास्तथा।
अस्ति नस्तत्त्वतो भूय इति प्राज्ञस्त्ववेक्षते। ज्ञानविज्ञानिनः केचित् परं पारं तितीर्षवः।
अतीव पुण्यदं पुण्यं पुण्याभिजनसंहितं। यत्र गत्वा न शोचन्ति न च्यवन्ति व्यथन्ति वा।
ते तु तद्ब्रह्मणः स्थानं प्राप्नुवन्तीह सात्त्विकाः। नैव ते स्वर्गमिच्छन्ति न यजन्ति यशोधनैः। ९४२०
सतां वर्त्मानुवर्त्तन्ते यजन्ते त्वविहिंसया। वनस्पतीनोषधीश्च फलं मूलञ्च ते विदुः।
न चैतानृत्विजो लुब्धा याजयन्ति फलार्थिनः। स्वमेव चार्थं कुर्व्वाणा यज्ञञ्चक्रुः पुनर्द्विजाः।
परिनिष्ठितकर्म्माणः प्रजानुग्रहकाम्यया। तस्मात्तानृत्विजो लुब्धा याजयन्त्यशुभान्नरान्।
प्रापयेयुः प्रजाः स्वर्गं स्वधर्म्माचरणेन वै। इति मे वर्त्तते बुद्धिः समा सर्व्वत्र जाजले।
यानि यज्ञेष्विहेज्यन्ति सदा प्राज्ञा द्विजर्षभाः। तेन ते देवयानेन पथा यान्ति महामुने। ९४२५
आवृत्तिस्तत्र चैकस्य नास्त्यावृत्तिर्म्मनीषिणः। उभौ तौ देवयानेन गच्छतो जाजले यथा।
स्वयञ्चैषामनडुहो युज्यन्ति च वहन्ति च। स्वयमुस्राश्च दुह्यन्ते मनःसङ्कल्पसिद्धिभिः।

स्वयं यूपानुपादाय यजन्ते स्वाप्तदक्षिणैः । यस्तथा भावितात्मा स्यात् स गामालब्धुमर्हति ।
ओषधीभिस्तथा ब्रह्मन् यजेरंस्ते न तादृशाः । इति त्यागं पुरस्कृत्य तादृशं प्रब्रवीमि ते ।
निराशिषमनारम्भं निर्नमस्कारमस्तुतिं । अक्षीणं क्षीणकर्म्माणं तं देवा ब्राह्मणं विदुः । ९४२०
न श्रावयन् न च यजन् ददद्ब्राह्मणेषु च । काम्यां वृत्तिं लिप्समानः कां गतिं याति जाजले ।
इदन्तु दैवतं कृत्वा यथा यज्ञमवाप्नुयात् ।
॥ जाजलिरुवाच ॥ न वै मुनीनां शृणुमः स्म तत्त्वं पृच्छामि ते वाणिज कष्टमेतत् । पूर्व्वे पूर्व्वे चास्य नावेक्षमाणा नातः परं तमृषयः स्थापयन्ति ।
यस्मिन्नेवात्मतीर्थेन पशवः प्राप्नुयुः सुखं । अथ स्म कर्म्मणा केन वाणिज प्राप्नुयात् सुखं ।
शंस मे तन्महाप्राज्ञ भृशं वै श्रद्दधामि ते । ९४२५
॥ तुलाधार उवाच ॥ उत यज्ञा उतायज्ञा मखं नार्हन्ति ते क्वचित् । आज्येन पयसा दध्ना पूर्णाहुत्या विशेषतः ।
वालैः शृङ्गेण पादेन सम्भरत्येव गौर्मखं । पत्नीसंयानेन विधिना प्रकरोति नियोजयन् ।
इष्टन्तु दैवतं कृत्वा यथा यज्ञमवाप्नुयात् । पुरोडाशो हि सर्व्वेषां पशूनां मेध्य उच्यते ।
सर्व्वा नद्यः सरस्वत्यः सर्व्वे पुण्याः शिलोच्चयाः । जाजले तीर्थमात्मैव मा स्म देशातिथिर्भव ।
एतानीदृशकान् धर्म्मानाचरन्निह जाजले । कारणैर्धर्म्ममन्विच्छन् स लोकानाप्नुते शुभान् । ९४३०
॥ भीष्म उवाच ॥ एतानीदृशकान् धर्म्मान् तुलाधारः प्रशंसति । उपपत्त्याऽभिसम्पन्नान् नित्यं सद्भिर्निषेवितान् ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि तुलाधारजाजलिसंवादे चतुःषष्ठ्यधिकद्विशततोऽध्यायः ॥ २६४ ॥
॥ तुलाधार उवाच ॥ सद्भिर्व्वा यदि वाऽसद्भिः पन्थानमिममास्थितं । प्रत्यक्षं क्रियतां साधु ततो ज्ञास्यसि तद्यथा ।
एते शकुन्ता बहवः समन्ताद्विचरन्ति ह । तवोत्तमाङ्गे सम्भूताः श्येनाश्चान्याश्च जातयः ।
आह्वयैतान् महाब्रह्मन् विशमानांस्ततस्ततः । पश्यैमान् हस्तपादेषु श्लिष्टान् देहेषु सर्व्वशः ।
सम्भावयन्ति पितरं त्वया सम्भाविताः खगाः । असंशयं पिता वै त्वं पुत्त्राणामाह्वय जाजले । ९४३५
॥ भीष्म उवाच ॥ ततो जाजलिना तेन समाहूताः पतत्त्रिणः । वाचमुच्चारयन्ति स्म धर्म्मस्य वचनात् किल ।
अहिंसादिकृतं कर्म्म इह चैव परत्र च । श्रद्धां निहन्ति वै ब्रह्मन् सा हता हन्ति तं नरं ।
समानां श्रद्दधानानां संयतानां सुचेतसां । कुर्व्वतां यज्ञ इत्येव न यज्ञो जातु नेष्यते ।
श्रद्धा वैवस्वती सेयं सूर्य्यस्य दुहिता द्विज । सावित्री प्रसवित्री च बहिर्वाङ्मनसी ततः ।
वाग्वृद्धं त्रायते श्रद्धा मनोवृद्धञ्च भारत । श्रद्धावृद्धं वाङ्मनसी न यज्ञस्त्रातुमर्हति । ९४४०
अत्र गाथा ब्रह्मगीताः कीर्त्तयन्ति पुराविदः । शुचेरश्रद्दधानस्य श्रद्दधानस्य चाशुचेः ।
देवा वित्तमममन्यन्त सदृशं यज्ञकर्म्मणि । श्रोत्रियस्य कदर्य्यस्य वदान्यस्य च वार्द्धुषेः ।
मीमांसित्वोभयं देवाः सममन्नमकल्पयन् । प्रजापतिस्तानुवाच विषमं कृतमित्युत ।
श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् । भोज्यमन्नं वदान्यस्य कदर्य्यस्य न वार्द्धुषेः ।
अश्रद्दधान एवैको देवानां नार्हते हविः । तस्यैवान्नं न भोक्तव्यमिति धर्म्मविदो विदुः । ९४४५

अश्रद्धा परमं पापं श्रद्धा पापप्रमोचनी । जहाति पापं श्रद्धावान् सर्पो जीर्णामिव त्वचं ।
ज्यायसी या पवित्राणां निवृत्तिः श्रद्धया सह । निवृत्तशीलदोषो यः श्रद्धावान् पूत एव सः ।
किं तस्य तपसा कार्य्यं किं वृत्तेन किमात्मना । श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ।
इति धर्म्मः समाख्यातः सद्भिर्धर्म्मार्थदर्शिभिः । वयं जिज्ञासमानास्तु सम्प्राप्ता धर्म्मदर्शनात् ।
श्रद्धां कुरु महाप्राज्ञ ततः प्राप्स्यसि यत् परं । श्रद्धावान् श्रद्दधानश्च धर्म्मश्चैव हि जाजले । ९४५०
स्ववर्त्मनि स्थितश्चैव गरीयानेव जाजले ।
॥ भीष्म उवाच ॥ ततोऽचिरेण कालेन तुलाधारः स एव च । दिवं गत्वा महाप्राज्ञौ विहरेतां यथासुखं ।
स्वस्वस्थानमुपागम्य स्वकर्म्मपरिवर्ज्जितं । एवं बहुविधार्थञ्च तुलाधारेण भाषितं ।
सम्यक् चैदमुपालब्धो धर्म्मश्लोकः सनातनः । तस्य विख्यातवीर्य्यस्य श्रुत्वा वाक्यानि स द्विजः ।
तुलाधारस्य कौन्तेय शान्तिमेवान्वपद्यत । एवं बहुमतार्थञ्च तुलाधारेण भाषितं । ९४५५
यथौपम्येन दृष्टेन किम्भूयः श्रोतुमिच्छसि ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि तुलाधारजाजलिसंवादे पञ्चषष्ट्यधिकद्विशततोऽध्यायः ॥ २६५ ॥
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । प्रजानामनुकम्पार्थं गीतं राज्ञा विचख्नुना ।
छिन्नस्थूणं वृषं दृष्ट्वा विलापञ्च गवां भृशं । गोग्रहे यज्ञवाटस्य प्रेक्षमाणः स पार्थिवः ।
स्वस्ति गोभ्योऽस्तु लोकेषु ततो निर्व्वचनं कृतं । हिंसायां हि प्रवृत्तायामाशीरेषा तु कल्पिता ।
अव्यवस्थितमर्य्यादैर्व्विमूढैर्नास्तिकैर्नरैः । संशयात्मभिरव्यक्तैर्हिंसा समनुवर्णिता । ९४६०
सर्व्वकर्म्मस्वहिंसां हि धर्म्मात्मा मनुरब्रवीत् । कामकाराद्विहिंसन्ति वहिर्व्वेद्यां पशून्नराः ।
तस्मात् प्रमाणतः कार्य्यो धर्म्मः सूक्ष्मो विजानता । अहिंसा सर्व्वभूतेभ्यो धर्म्मेभ्यो ज्यायसी मता ।
उपोष्य संशितो भूत्वा हित्वा वेदकृताः श्रुतीः । आचार इत्यनाचारः कृपणाः फलहेतवः ।
यदि यज्ञांश्च वृक्षांश्च यूपांश्चोद्दिश्य मानवाः । वृथामांसानि खादन्ति नैष धर्म्मः प्रशस्यते ।
सुरां मत्स्यान्मधु मांसमासवं कृशरौदनं । धूर्त्तैः प्रवर्त्तितं ह्येतन्नैतद्वेदेषु कल्पितं । ९४६५
मानान्मोहाच्च लोभाच्च लौल्यमेतत् प्रकल्पितं । विष्णुमेवाभिजानन्ति सर्व्वयज्ञेषु ब्राह्मणाः ।
पायसैः सुमनोभिश्च तस्यापि यजनं स्मृतं । यज्ञियाश्चैव ये वृक्षा वेदेषु परिकल्पिताः ।
यच्चापि किञ्चित् कर्त्तव्यमन्यच्चोक्षैः सुसंस्कृतं । महत् सत्त्वैः शुद्धभावैः सर्व्वं देवार्हमेव तत् ।
॥ युधिष्ठिर उवाच ॥ शरीरमापदश्चापि विवदन्त्यविहिंसतः । कथं यात्रा शरीरस्य निरारम्भस्य सेत्स्यते ।
॥ भीष्म उवाच ॥ यथा शरीरं न ग्लायेत् नेयान्मृत्युवशं यथा । तथा कर्म्मसु वर्त्तेत समर्थो धर्म्ममाचरेत् । ९४७०
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि विचख्नुगीतायां षट्षष्ट्यधिकद्विशततोऽध्यायः ॥ २६६ ॥
॥ युधिष्ठिर उवाच ॥ कथं कार्य्यं परीक्षेत शीघ्रं वाऽथ चिरेण वा । सर्व्वथा कार्य्यदुर्गेऽस्मिन् भवान्नः परमो गुरुः ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । चिरकारेस्तु यत् पूर्व्वं वृत्तमाङ्गिरसे कुले ।
चिरकारिक भद्रन्ते भद्रन्ते चिरकारिक । चिरकारी हि मेधावी नापराध्यति कर्म्मसु ।

चिरकारी महाप्राज्ञो गौतमस्याभवत् सुतः । चिरेण सर्व्वकार्य्याणि विमृश्यार्थान् प्रपद्यते ।
चिरं सञ्चिन्तयन्नर्थांश्चिरं जाग्रत् चिरं स्वपन् । चिरं कार्य्याभिपत्तिञ्च चिरकारी तथोच्यते । ९८८५
अलसग्रहणं प्राप्तो दुर्मेधावी तथोच्यते । बुद्धिलाघवयुक्तेन जनेनादीर्घदर्शिना ।
व्यभिचारे तु कस्मिंश्चिद्व्यतिक्रम्यापरान् सुतान् । पित्रोक्तः कुपितेनाथ जहीमां जननीमिति ।
इत्युक्त्वा स तदा विप्रो गौतमो जपतांवरः । अविमृश्य महाभागो वनमेव जगाम सः ।
स तथेति चिरेणोक्त्वा स्वभावाच्चिरकारिकः । विमृश्य चिरकारित्वाच्चिन्तयामास वै चिरं ।
पितुराज्ञां कथं कुर्य्यां न हन्यां मातरं कथं । कथं धर्म्मच्छले नास्मिन्निमज्जेयमसाधुवत् । ९८९०
पितुराज्ञा परो धर्म्मः स्वधर्म्मो मातृरक्षणं । अस्वतन्त्रञ्च पुत्रत्वं किं नु मां नानुपीडयेत् ।
स्त्रियं हत्वा मातरञ्च को हि जातु सुखी भवेत् । पितरञ्चाप्यवज्ञाय कः प्रतिष्ठामवाप्नुयात् ।
अनवज्ञा पितुर्युक्ता धारणं मातृरक्षणं । युक्तक्षमावुभावेतौ नातिवर्त्तेत मां कथं ।
पिता ह्यात्मानमाधत्ते जायायां जज्ञिवानिति । शीलचारित्रगोत्रस्य धारणार्थं कुलस्य च ।
सोऽहं मात्रा स्वयं पित्रा पुत्रत्वे प्रकृतः पुनः । विज्ञानं मे कथं न स्याद्द्वौ बुद्ध्ये चात्मसम्भवं । ९८९५
जातकर्म्मणि यत् प्राह पिता यच्चोपकर्म्मणि । पर्य्याप्तः स दृढीकारः पितुर्गौरवनिश्चये ।
गुरुरग्र्यः परो धर्म्मः पोषणाध्यापनान्वितः । पिता यदाह धर्म्मः स वेदेष्वपि सुनिश्चितः ।
प्रीतिमात्रं पितुः पुत्त्रः सर्व्वं पुत्त्रस्य वै पिता । शरीरादीनि देयानि पिता त्वेकः प्रयच्छति ।
तस्मात् पितुर्व्वचः कार्य्यं न विचार्य्यं कथञ्चन । पातकान्यपि पूयन्ते पितुः शासनकारिणः ।
भोग्ये भोज्ये प्रवचने सर्व्वलोकनिदर्शने । भर्त्रा चैव समायोगे सीमन्तोन्नयने तथा । ९९००
पिता धर्म्मः पिता स्वर्गः पिता हि परमं तपः । पितरि प्रीतिमापन्ने सर्व्वाः प्रीयन्ति देवताः ।
आशिषस्ता भजन्त्येनं पुरुषं प्राह यत्पिता । निष्कृतिः सर्व्वपापानां पिता यच्चाभिनन्दति ।
मुच्यते बन्धनात् पुष्पं फलं वृन्तात् प्रमुच्यते । क्लिश्यन्नपि सुतं स्नेहैः पिता पुत्त्रं न मुञ्चति ।
एतद्विचिन्तितं तावत् पुत्त्रस्य पितृगौरवं । पिता नाल्पतरं स्थानं चिन्तयिष्यामि मातरं ।
यो ह्ययं मयि सङ्घातो मर्त्यत्वे पाञ्चभौतिकः । अस्य मे जननी हेतुः पावकस्य यथाऽरणिः । ९९०५
माता देहारणिः पुंसां सर्व्वस्यार्त्तस्य निर्वृतिः । मातृलाभे सनाथत्वमनाथत्वं विपर्य्यये ।
न च शोचति नाप्येनं स्थाविर्य्यमपकर्षति । श्रिया हीनोऽपि यो गेहमम्बेति प्रतिपद्यते ।
पुत्त्रपौत्त्रोपपन्नोऽपि जननीं यः समाश्रितः । अपि वर्षशतस्यान्ते स द्विहायनवच्चरेत् ।
समर्थं वाऽसमर्थं वा कृशं वाऽप्यकृशं तथा । रक्षत्येव सुतं माता नान्यः पोष्टा विधानतः ।
तदा स वृद्धो भवति तदा भवति दुःखितः । तदा शून्यं जगत्तस्य यदा मात्रा वियुज्यते । ९९१०
नास्ति मातृसमा छाया नास्ति मातृसमा गतिः । नास्ति मातृसमं त्राणं नास्ति मातृसमा प्रिया ।
कुक्षिसन्धारणाद्धात्री जननाज्जननी स्मृता । अङ्गानां वर्द्धनादम्बा वीरसूत्वेन वीरसूः ।
शिशोः शुश्रूषणाच्छुश्रूर्माता देहमनन्तरं । चेतनावान्नरो हन्याद्यस्य न सुषिरं शिरः ।

दम्पत्योः प्राणसंश्लेषे योऽभिसन्धिः कृतः किल। तं माता च पिता चेति भूतार्थो मातरि स्थितः।
माता जानाति यद्गोत्रं माता जानाति यस्य सः। मातुर्भरणमात्रेण प्रीतिः स्नेहः पितुः प्रजाः। ६५१५
पाणिबन्धं स्वयं कृत्वा सह धर्म्ममुपेत्य च। यदा यास्यन्ति पुरुषाः स्त्रियो नार्हन्ति याच्यतां।
भरणाद्धि स्त्रिया भर्त्ता पात्याच्चैव स्त्रियाः पतिः। गुणस्यास्य निवृत्तौ तु न भर्त्ता न पुनः पतिः।
एवं स्त्री नापराप्नोति नर एवापराध्यति। व्युच्चरंश्च महादोषं नर एवापराध्यति।
स्त्रिया हि परमो भर्त्ता दैवतं परमं स्मृतं। तस्यात्मना तु सदृशमात्मानं परमं ददौ।
नापराधोऽस्ति नारीणां नर एवापराध्यति। सर्व्वकार्य्यापराध्यत्वान्नापराध्यन्ति चाङ्गनाः। ६५२०
यस्य नोक्तोऽथ निर्द्देशः स्त्रिया मैथुनतृप्तये। तस्य स्मारयतो व्यक्तमधर्म्मो नास्ति संशयः।
यावन्नारीं मातरञ्च गौरवे चाधिके स्थितां। अवध्यान्तु विजानीयुः पशवोऽप्यविचक्षणाः।
देवतानां समावायमेकस्थं पितरं विदुः। मर्त्यानां देवतानाञ्च स्नेहादभ्येति मातरं।
एवं विमृषतस्तस्य चिरकारितया बहु। दीर्घः कालो व्यतिक्रान्तस्ततोऽस्याभ्यागमत् पिता।
मेधातिथिर्म्महाप्राज्ञो गौतमस्तपसि स्थितः। विमृश्य तेन कालेन पत्न्याः संस्थाव्यतिक्रमं। ६५२५
सोऽब्रवीद्भृशसन्तप्तो दुःखेनाश्रूणि वर्त्तयन्। श्रुतधैर्य्यप्रसादेन पश्चात्तापमुपागतः।
आश्रमं मम सम्प्राप्तस्त्रिलोकेशः पुरन्दरः। अतिथिव्रतमास्थाय ब्राह्मणं रूपमास्थितः।
स मया सान्त्वितो वाग्भिः स्वागतेनाभिपूजितः। अर्घ्यं पाद्यं यथान्यायं मया च प्रतिपादितः।
परवानस्मि चेत्युक्तः प्रणयिष्यति तेन च। अत्र चाकुशले जाते स्त्रिया नास्ति व्यतिक्रमः।
एवं न स्त्री न चैवाहं नाध्वगस्त्रिदशेश्वरः। अपराध्यति धर्म्मस्य प्रमादस्त्वपराध्यति। ६५३०
ईर्ष्याजं व्यसनं प्राहुस्तेन चैवोर्द्ध्वरेतसः। ईर्ष्यया त्वहमाक्षिप्तो मग्नो दुष्कृतसागरे।
हत्वा साध्वीञ्च नारीञ्च व्यसनित्वाच्च वासितां। भर्त्तव्यत्वेन भार्य्याञ्च को नु मां तारयिष्यति।
अन्तरेण मया ज्ञप्तश्चिरकारीत्युदारधीः। यद्यद्य चिरकारी स्यात् स मां त्रायेत पातकात्।
चिरकारिक भद्रन्ते भद्रन्ते चिरकारिक। यद्यद्य चिरकारी त्वं ततोऽसि चिरकारिकः।
त्राहि मां मातरञ्चैव तपो यच्चार्ज्जितं मया। आत्मानं पातकेभ्यश्च भवाद्य चिरकारिकः। ६५३५
सहजं चिरकारित्वमतिप्रज्ञतया तव। सफलं तत्तथा तेऽस्तु भवाद्य चिरकारिकः।
चिरमाशंसितो मात्रा चिरं गर्भेण धारितः। सफलं चिरकारित्वं कुरु त्वं चिरकारिक।
चिरायते च सन्तापाच्चिरं स्वपिति धारितः। आवयोश्चिरसन्तापादवेक्ष्य चिरकारिक।
एवं सुदुःखितो राजन् महर्षिर्गौतमस्तदा। चिरकारिं ददर्शाथ पुत्रं स्थितमथान्तिके।
चिरकारी तु पितरं दृष्ट्वा परमदुःखितः। शस्त्रं त्यक्त्वा ततो मूर्द्ध्ना प्रसादायोपचक्रमे। ६५४०
गौतमस्तं ततो दृष्ट्वा शिरसा पतितं भुवि। पत्नीञ्चैव निराकारां परामभ्यागमन्मुदं।
न हि सा तेन सम्भेदं पत्नी नीता महात्मना। विजने चाश्रमस्थेन पुत्त्रश्चापि समाहितः।
हन्या इति समादेशः शस्त्रपाणौ सुते स्थिते। विनीते प्रसवत्यर्थे विवासे चात्मकर्म्मसु।

बुद्धिश्चासीत् सुतं दृष्ट्वा पितुश्चरणयोर्गतं। शस्त्रग्रहणचापल्यं संवृणोति भयादिति।
ततः पित्रा चिरं स्तुत्वा चिरमाघ्राय मूर्द्धनि। चिरं दोर्भ्यां परिष्वज्य चिरं जीवेत्युदाहृतः। ९५४५
एवं स गौतमः पुत्रं प्रीतिहर्षगुणैर्युतः। अभिनन्द्य महाप्राज्ञ इदं वचनमब्रवीत्।
चिरकारिक भद्रन्ते चिरकारी चिरं भव। चिराय यदि ते सौम्य चिरमस्मि न दुःखितः।
गाथाश्चाप्यब्रवीद्विद्वान् गौतमो मुनिसत्तमः। चिरकारिषु धीरेषु गुणोद्देशसमाश्रयाः।
चिरेण मित्रं बध्नीयात् चिरेण च कृतं त्यजेत्। चिरेण हि कृतं मित्रं चिरं धारणमर्हति।
रागे दर्पे च माने च द्रोहे पापे च कर्म्मणि। अप्रिये चैव कर्त्तव्ये चिरकारी प्रशस्यते। ९५५०
बन्धूनां सुहृदाञ्चैव भृत्यानां स्त्रीजनस्य च। अव्यक्तेष्वपराधेषु चिरकारी प्रशस्यते।
एवं स गौतमस्तस्य प्रीतः पुत्रस्य भारत। कर्म्मणाऽनेन कौरव्य चिरकारितया तथा।
एवं सर्व्वेषु कार्य्येषु विमृश्य पुरुषस्ततः। चिरेण निश्चयं कृत्वा चिरं न परितप्यते।
चिरं धारयते रोषं चिरं कर्म्म नियच्छति। पश्चात्तापकरं कर्म्म न किञ्चिदुपपद्यते।
चिरं वृद्धानुपासीत चिरमन्वास्य पूजयेत्। चिरं धर्म्मं निषेवेत कुर्य्याच्चान्वेषणं चिरं। ९५५५
चिरमन्वास्य विदुषश्चिरं शिष्टान्निषेव्य च। चिरं विनीय चात्मानश्चिरं यात्यनवज्ञतां।
ब्रुवतश्च परस्यापि वाक्यं धर्म्मोपसंहितं। चिरं पृष्टोऽपि च ब्रूयात् चिरं न परितप्यते।
उपास्य बहुलास्तस्मिन्नाश्रमे सुमहातपाः। समाः स्वर्गं गतो विप्रः पुत्रेण सहितस्तदा।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि चिरकारिकोपाख्याने सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥

॥ युधिष्ठिर उवाच ॥ कथं राजा प्रजा रक्षेन्न च किञ्चित् प्रघातयेत्। पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। द्युमत्सेनस्य संवादं राज्ञा सत्यवता सह। ९५६०
अव्याहृतं व्याजहार सत्यवानिति नः श्रुतं। वधायोपनीयमानेषु पितुरेवानुशासनात्।
अधर्म्मतां याति धर्म्मो यात्यधर्म्मश्च धर्म्मतां। वधो नाम भवेद्धर्म्मो नैतद्भवितुमर्हति।
॥ द्युमत्सेन उवाच ॥ अथ चेदवधो धर्म्मो धर्म्मः को जातुचिद्भवेत्। दस्यवश्चेन्न हन्येरन् सत्यवन् सङ्करो भवेत्।
ममेदमिति नास्यैतत् प्रवर्त्तेत कलौ युगे। लोकयात्रा न चैव स्यादथ चेद्वेत्थ शंस नः।
॥ सत्यवानुवाच ॥ सर्व्व एव त्रयो वर्णाः कार्य्या ब्राह्मणबन्धनाः। धर्म्मपाशनिबद्धानामन्योऽप्येवं चरिष्यति। ९५६५
यो यस्तेषामपचरेत्तमाचक्षीत वै द्विजः। अयं मे न शृणोतीति तस्मिन् राजा प्रधारयेत्।
तत्त्वाभेदेन यच्छास्त्रं तत् कार्य्यं नान्यथाविधं। असमीक्ष्यैव कर्म्माणि नीतिशास्त्रं यथाविधि।
दस्यून्निहन्ति वै राजा भूयसो वाऽप्यनागसः। भार्य्या माता पिता पुत्रो हन्यते पुरुषेण ते।
परेणापकृतो राजा तस्मात् सम्यक् प्रधारयेत्। असाधुश्चैव पुरुषो लभते शीलमेकदा।
साधोश्चापि ह्यसाधुभ्यः शोभना जायते प्रजा। न मूलघातः कर्त्तव्यो नैष धर्म्मः सनातनः। ९५७०
अपि खल्ववधेनैव प्रायश्चित्तं विधीयते। उद्वेजनेन बन्धेन विरूपकरणेन च।
वधदण्डेन ते क्लेश्या न पुरोहितसंसदि। यदा पुरोहितं वा ते पर्य्येयुः शरणैषिणः।

करिष्यामः पुनर्ब्रह्मन् न पापमिति वादिनः। तदा विसर्गमर्हाः स्युरितीदं धातृशासनं।
बिभ्रद्दण्डाजिनं मुण्डो ब्राह्मणोऽर्हति शासनं। गरीयांसो गरीयांसमपराधे पुनः पुनः।
तदा विसर्गमर्हन्ति न यथा प्रथमे तथा। ९७०५
॥ द्युमत्सेन उवाच ॥ यत्र यत्रैव शक्येरन् संयन्तुं समये प्रजाः। स तावान् प्रोच्यते धर्म्मो यावन्न प्रतिलङ्घ्यते।
अहन्यमानेषु पुनः सर्व्वमेव पराभवेत्। पूर्व्वे पूर्व्वतरे चैव सुशास्या अभवन् जनाः।
मृदवः सत्यभूयिष्ठा अल्पद्रोहाऽल्पमन्यवः। पुरा धिग्दण्ड एवासीद्वाग्दण्डस्तदनन्तरं।
आसीदादानदण्डोऽपि बधदण्डोऽद्य वर्त्तते। बधेनापि न शक्यन्ते नियन्तुमपरे जनाः।
नैव दस्युर्मनुष्याणां न देवानामिति श्रुतिः। न गन्धर्व्वपितॄणाञ्च कः कस्येह न कश्चन। ९७१०
पद्मं श्मशानादादत्ते पिशाचाश्चापि दैवतं। तेषु कः समयं कुर्य्यादज्ञेषु हतबुद्धिषु।
॥ सत्यवानुवाच ॥ तान् शक्नोषि चेत् साधून् परित्रातुमहिंसया। कस्यचिद्भूतभव्यस्य लाभेनान्तं तथा कुरु।
राजानो लोकयात्रार्थं तप्यन्ते परमं तपः। तेऽपत्रपन्ति तादृग्भ्यस्तथावृत्ता भवन्ति च।
वित्रास्यमानाः सुकृतो न कामाद्घ्नन्ति दुष्कृतीन्। सुकृतेनैव राजानो भूयिष्ठं शासते प्रजाः।
श्रेयसः श्रेयसो ह्येवं वृत्तं लोकोऽनुवर्त्तते। सदैव हि गुरोर्वृत्तमनुवर्त्तन्ति मानवाः। ९७१५
आत्मानमसमाधाय समाधित्सति यः परान्। विषयेष्विन्द्रियवशं मानवाः प्रहसन्ति तं।
यो राज्ञो दम्भमोहेन किञ्चित् कुर्य्यादसाम्प्रतं। सर्व्वोपायैर्नियम्यः स तथा पापान्निवर्त्तते।
आत्मैवादौ नियन्तव्यो दुष्कृतं संनियच्छता। दण्डयेच्च महादण्डैरपि बन्धूननन्तरान्।
यत्र वै पापकर्म्मा वै न महद्दुःखमर्च्छति। वर्द्धन्ते तत्र पापानि धर्म्मो ह्रसति च ध्रुवं।
इति कारुण्यशीलस्तु विद्वान् वै ब्राह्मणोऽन्वशात्। इति चैवानुशिष्टोऽस्मि पूर्व्वैस्तात पितामहैः। ९७२०
आश्वासयद्भिः सुभृशमनुक्रोशात्तथैव च। एतत् प्रथमकल्पेन राजा कृतयुगे जयेत्।
पादोनेनापि धर्म्मेण गच्छेत्त्रेतायुगे तथा। द्वापरे तु द्विपादेन पादेन त्वपरे युगे।
तथा कलियुगे प्राप्ते राज्ञो दुश्चरितेन ह। भवेत् कालविशेषेण कला धर्म्मस्य षोडशी।
अथ प्रथमकल्पेन सत्यवन् सङ्करो भवेत्। आयुः शक्तिञ्च कालञ्च निर्द्दिश्य तप आदिशेत्।
सत्याय हि यथा नेह जह्याद्धर्म्मफलं महत्। भूतानामनुकम्पार्थं मनुः स्वायम्भुवोऽब्रवीत्। ९७२५
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि द्युमत्सेनसत्यवत्संवादे अष्टषष्ट्यधिकद्विशततोऽध्यायः॥ २६८॥
॥ युधिष्ठिर उवाच ॥ अविरोधेन भूतानां योगः षाड्गुण्यकारकः। यः स्यादुभयभाग्धर्म्मस्तन्मे ब्रूहि पितामह।
गार्हस्थ्यस्य च धर्म्मस्य योगधर्म्मस्य चोभयोः। अदूर संप्रस्थितयोः किंस्वित् श्रेयः पितामह।
॥ भीष्म उवाच ॥ उभौ धर्म्मौ महाभागावुभौ परमदुश्चरौ। उभौ महाफलौ तौ तु सद्भिराचरितावुभौ।
अत्र ते वर्त्तयिष्यामि प्रामाण्यमुभयोस्तयोः। शृणुष्वैकमनाः पार्थ छिन्नधर्म्मार्थसंशयं।
अत्राप्युदाहरन्तीममितिहासं पुरातनं। कपिलस्य गोश्च संवादं तन्निबोध युधिष्ठिर। ९७३०
आम्नायमनुपश्यन् हि पुराणं शाश्वतं ध्रुवं। नहुषः पूर्व्वमालेभे त्वष्टुर्गामिति नः श्रुतं।

तां नियुक्तामदीनात्मा सत्त्वस्थः संयमे रतः। ज्ञानवान्नियताहारो ददर्श कपिलस्तदा।
स बुद्धिमुत्तमां प्राप्तो नैष्ठिकीमकुतोभयां। सतीमशिथिलां सत्यां वेदा इत्यब्रवीत् सकृत्।
तां गामृषिः स्यूमरश्मिः प्रविश्य यतिमब्रवीत्। हंहो वेदा यदि मता धर्म्माः के नापरे मताः।
तपस्विनो धृतिमन्तः श्रुतिविज्ञानचक्षुषः। सर्व्वमार्षं हि मन्यन्ते व्याहृतं विदितात्मनः। ९९०५
तस्यैवं गततृष्णस्य विज्वरस्य निराशिषः। का विवक्षाऽस्ति वेदेषु निरारम्भस्य सर्व्वतः।
॥ कपिल उवाच ॥ नाहं वेदान् विनिन्दामि न विवक्षामि कर्हिचित्। पृथगाश्रमिणां कर्म्माण्येकार्थानीति नः श्रुतं।
गच्छत्येव परित्यागी वानप्रस्थश्च गच्छति। गृहस्थो ब्रह्मचारी च उभौ तावपि गच्छतः।
देवयाना हि पन्थानश्चत्वारः शाश्वता मताः। एषां ज्यायःकनीयस्त्वं फलेषूक्तं बलाबलं।
एवं विदित्वा सर्व्वार्थानारभेतेति वैदिकं। नारभेतेति चान्यत्र नैष्ठिकी श्रूयते श्रुतिः। ९९१०
अनारम्भे हि दोषः स्यादारम्भे दोष उत्तमः। एवं स्थितस्य शास्त्रस्य दुर्व्विज्ञेयं बलाबलं।
यद्यत्र किञ्चित् प्रत्यक्षमहिंसायाः परं मतं। ऋते त्वागमशास्त्रेभ्यो ब्रूहि तद्यदि पश्यसि।
॥ स्यूमरश्मिरुवाच ॥ स्वर्गकामो यजेतेति सततं श्रूयते श्रुतिः। फलं प्रकल्प्य पूर्व्वं हि ततो यज्ञः प्रतायते।
अजश्चाश्वश्च मेषश्च गौश्च पक्षिगणाश्च ये। ग्राम्यारण्याश्चौषधयः प्राणस्यान्नमिति श्रुतिः।
तथैवान्नं ह्यहरहः सायम्प्रातर्निरुप्यते। पशवश्चाथ धान्यञ्च यज्ञस्याङ्गमिति श्रुतिः। ९९१५
एतानि सह यज्ञेन प्रजापतिरकल्पयत्। तेन प्रजापतिर्देवान् यज्ञेनायजत प्रभुः।
तस्यान्योन्यचराः सर्व्वे प्राणिनः सप्त सप्तधा। यज्ञेषूपाकृतं विश्वं प्राहुरुत्तमसंज्ञितं।
एतच्चैवाभ्यनुज्ञातं पूर्व्वैः पूर्व्वतरैस्तथा। को जातु न विचिन्वीत विद्वान् स्वां शक्तिमात्मनः।
पशवश्च मनुष्याश्च द्रुमाश्चौषधिभिः सह। स्वर्गमेवाभिकाङ्क्षन्ते न च स्वर्गस्ततो मखात्।
ओषध्यः पशवो वृक्षा वीरुदाज्यपयोदधि। हविर्भूमिर्दिशः श्रद्धा कालश्चैतानि द्वादश। ९९२०
ऋचो यजूंषि सामानि यजमानश्च षोडश। अग्निर्ज्ञेयो गृहपतिः स सप्तदश उच्यते।
अङ्गान्येतानि यज्ञस्य यज्ञो मूलमिति श्रुतिः। आज्येन पयसा दध्ना शकृतामिक्षया त्वचा।
वालैः शृङ्गेण पादेन सम्भवत्येव गौर्म्मखं। एवं प्रत्येकशः सर्व्वं यद्यदस्य विधीयते।
यज्ञं वहन्ति सम्भूय सहर्त्विग्भिः सदक्षिणैः। संहत्यैतानि सर्व्वाणि यज्ञं निर्व्वर्त्तयन्त्युत।
यज्ञार्थानि हि सृष्टानि यथार्था श्रूयते श्रुतिः। एवं पूर्व्वतराः सर्व्वे प्रवृत्ताश्चैव मानवाः। ९९२५
न हिनस्ति नारभते नाभिद्रुह्यन्ति किञ्चन। यज्ञो यष्टव्य इत्येव योजयत्यफलेप्सया।
यज्ञाङ्गान्यपि चैतानि यथोक्तान्यनुपूर्व्वशः। विधिना विधियुक्तानि धारयन्ति परस्परं।
आम्नायमार्षं पश्यामि यस्मिन् वेदाः प्रतिष्ठिताः। तं विद्वांसोऽनुपश्यन्ति ब्राह्मणस्यानुदर्शनात्।
ब्राह्मणप्रभवो यज्ञो ब्राह्मणार्पण एव च। अनुयज्ञं जगत् सर्व्वं यज्ञश्चानुजगत् सदा।
ओमिति ब्रह्मणो योनिर्नमः स्वाहा स्वधा वषट्। यस्यैतानि प्रयुज्यन्ते यथाशक्ति कृतान्यपि। ९९३०
न तस्य त्रिषु लोकेषु परलोकभयं विदुः। इति वेदा वदन्तीह सिद्धाश्च परमर्षयः।

ऋचो यजूंषि सामानि स्तोभाश्च विधिचोदिताः । यस्मिन्नेतानि सर्व्वाणि भवन्तीह स वै द्विजः ।
अग्न्याधेये यद्भवति यच्च सोमेषु ते द्विज । यच्चेतरैर्म्महायज्ञैर्व्वेद तद्भगवान् पुनः ।
तस्माद्ब्रह्मन् यजेच्चैव याजयेच्चाविचारयन् । यजतः स्वर्गविधिना प्रेत्य स्वर्गफलं महत् ।
नायं लोकोऽस्ति यज्ञानां परश्चेति विनिश्चयः । वेदवादविदश्चैव प्रमाणमुभयं तदा ।    ९९५

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि गोकपिलीये ऊनसप्तत्यधिकद्विशततोऽध्यायः ॥ २६९ ॥

॥ कपिल उवाच ॥ एतावदनुपश्यन्ति यतयो यान्ति मार्गगाः । नैषां सर्व्वेषु लोकेषु कश्चिदस्ति व्यतिक्रमः ।
निर्द्वन्द्वा निर्नमस्कारा निराशीर्ब्बन्धना बुधाः । विमुक्ताः सर्व्वपापेभ्यश्चरन्ति शुचयोऽमलाः ।
अपवर्गेऽथ सन्त्यागे बुद्धौ च कृतनिश्चयाः । ब्रह्मिष्ठा ब्रह्मभूताश्च ब्रह्मण्येव कृतालयाः ।
विशोका नष्टरजसस्तेषां लोकाः सनातनाः । तेषां गतिं परां प्राप्य गार्हस्थ्ये किं प्रयोजनं ।
॥ स्यूमरश्मिरुवाच ॥ यद्येषा परमा काष्ठा यद्येषा परमा गतिः । गृहस्थानव्यपाश्रित्य नाश्रमोऽन्यः प्रवर्त्तते ।    ९९५०
यथा मातरमाश्रित्य सर्व्वे जीवन्ति जन्तवः । एवं गार्हस्थ्यमाश्रित्य वर्त्तन्त इतराश्रमाः ।
गृहस्थ एव यजते गृहस्थस्तप्यते तपः । गार्हस्थ्यमस्य धर्म्मस्य मूलं यत्किञ्चिदेजते ।
प्रजनाद्यभिनिर्वृत्ताः सर्व्वे प्राणभृतो जनाः । प्रजनञ्चाप्युतान्यत्र न कथञ्चन विद्यते ।
यास्तु स्युर्वहिरोषध्यो वहिरन्यास्तथा द्विजाः । ओषधिभ्यो वहिर्यस्मात् प्राणात् कश्चिन्न दृश्यते ।
कस्यैषा वाग्भवेत् सत्या मोक्षो नास्ति गृहादिति । अश्रद्दधानैरप्राज्ञैः सूक्ष्मदर्शनवर्ज्जितैः ।    ९९५५
निराशैरलसैः श्रान्तैस्तप्यमानैः स्वकर्म्मभिः । श्रमस्योपरमो दृष्टः प्रव्रज्यायामपण्डितैः ।
त्रैलोक्यस्यैव हेतुर्हि मर्य्यादा शाश्वती ध्रुवा । ब्राह्मणो नाम भगवन् जन्मप्रभृति पूज्यते ।
प्राग्गर्भधानान्मन्त्रा हि प्रवर्त्तन्ते द्विजातिषु । अविस्रम्भेषु वर्त्तन्ते विस्रम्भेष्वप्यसंशयं ।
दाहे पुनः संश्रयणे संश्रिते पात्रभोजने । दाने गवां पशूनां वा पिण्डानामप्सु मज्जने ।
अर्च्चिष्मन्तो वर्हिषदः क्रव्यादाः पितरस्तथा । मृतस्याप्यनुमन्यन्ते मन्त्रा मन्त्राश्च कारणं ।    ९९६०
एवं क्रोशत्सु वेदेषु कुतो मोक्षोऽस्ति कस्यचित् । ऋणवन्तो यदा मर्त्त्याः पितृदेवद्विजातिषु ।
श्रिया विहीनैरलसैः पण्डितैः सम्प्रवर्त्तितं । वेदवादापरिज्ञानं सत्याभासमिवानृतं ।
न वै पापैर्ह्रियते कृष्यते वा यो ब्राह्मणो यजते वेदशास्त्रैः । ऊर्द्ध्वं यज्ञैः पशुभिः सार्द्धमेति सन्तर्पितस्तर्पयते च कामैः ।
न वेदानां परिभवान्न शाठ्येन न मायया । महत् प्राप्नोति पुरुषो ब्रह्मणि ब्रह्म विन्दति ।
॥ कपिल उवाच ॥ दर्शञ्च पौर्णमासञ्च अग्निहोत्रञ्च धीमतः । चातुर्म्मास्यानि चैवासन् तेषु धर्म्मः सनातनः ।    ९९६५
अनारम्भाः सुधृतयः शुचयो ब्रह्मसंज्ञिताः । ब्रह्मणैव स्मते देवांस्तर्पयन्त्यमृतैषिणः ।
सर्व्वभूतात्मभूतस्य सर्व्वभूतानि पश्यतः । देवाऽपि मार्गे मुह्यन्ति अपदस्य पदैषिणः ।
चतुर्द्वारं पुरुषं चतुर्म्मुखं चतुर्द्धा चैनमुपयाति वाचा । बाहुभ्यां वाच उदरादुपस्थात्तेषां द्वारं द्वारपालो बुभूषेत् ।
नाक्षैर्द्दीव्येन्नाददीतान्यवित्तं न वा योनी यस्य शृतं प्रगृह्णात् । क्रुद्धो न चैव प्रहरेत धीमान् तथाऽस्य तत् पाणि पादं सुगुप्तं ।

नाक्रोशमिच्छेन्न वृथा वदेच्च न पैशुनं जनवादञ्च कुर्य्यात् । सत्यव्रतो मितभाषोऽप्रमत्तस्तस्याऽस्य वाग्द्वारमथो सुगुप्तं । ९८६०
नानाशन: स्यान्न महाशन: स्यादलोलुप: साधुभिरागत: स्यात् । यात्रार्थमाहारमिहाददीत तथाऽस्य स्याज्जाठरी द्वार गुप्ति: ।
न वीरपत्नीं विहरेत नारीं न चापि नारीमनृतावाह्वयीत । भार्य्याव्रतं ह्यात्मनि धारयीत तथाऽस्योपस्थद्वारगुप्तिर्भवेत ।
द्वाराणि यस्य सर्व्वाणि सुगुप्तानि मनीषिण: । उपस्थमुदरं बाहू वाक् चतुर्थी भवेद्द्विज ।
मोघान्यगुप्तद्वारस्य सर्व्वाण्येव भवन्त्युत । किन्तस्य तपसा कार्य्यं किं यज्ञेन किमात्मना ।
अनुत्तरीयवसनमनुपस्तीर्णशायिनं । बाहूपधानं शाम्यन्तं तं देवा ब्राह्मणं विदु: । ९८६५
द्वन्द्वारामेषु सर्व्वेषु य एको रमते मुनि: । परेषामननुध्यायंस्तं देवा ब्राह्मणं विदु: ।
येन सर्व्वमिदं बुद्धं प्रकृतिर्व्विकृतिश्च या । गतिज्ञ: सर्व्वभूतानां तं देवा ब्राह्मणं विदु: ।
अभयं सर्व्वभूतेभ्य: सर्व्वेषामभयं यत: । सर्व्वभूतात्मभूतो यस्तं देवा ब्राह्मणं विदु: ।
नान्तरेणानुजानन्ति दानयज्ञक्रियाफलं । अविज्ञाय च तत् सर्व्वमन्यद्रोचयते फलं ।
स्वकर्म्मभि: संश्रितानां तपो घोरत्वमागतं । तं सदाचारमाश्रित्य पुराणं शाश्वतं ध्रुवं । ९८७०
अशक्नुवन्तश्चरितुं किञ्चिद्धर्म्मेषु सूचितं । निरापद्धर्म्म आचारो ह्यप्रमादोऽपराभव: ।
फलवन्ति च कर्म्माणि व्युष्टिमन्ति ध्रुवाणि च । विगुणानि च पश्यन्ति तथा नैकान्तिकानि च ।
गुणाश्चात्र सुदुर्ज्ञेया ज्ञाताश्चात्र सुदुष्करा: । अनुष्ठिताश्चान्तवन्त इति त्वमनुपश्यसि ।
॥ स्यूमरश्मिरुवाच ॥ यथा च वेदप्रामाण्यं त्यागश्च सफलो यथा । तौ पन्थानावुभौ व्यक्तौ भगवंस्तद्ब्रवीहि मे ।
॥ कपिल उवाच ॥ प्रत्यक्षमिह पश्यन्ति भवन्त: सत्पथे स्थिता: । प्रत्यक्षन्तु किमत्रास्ति यद्भवन्त उपासते । ९८७५
॥ स्यूमरश्मिरुवाच ॥ स्यूमरश्मिरहं ब्रह्मन् जिज्ञासार्थमिहागत: । श्रेयस्काम: प्रत्यवोचमार्ज्जवान्न विवक्षया ।
इमञ्च संशयं घोरं भगवान् प्रब्रवीतु मे । प्रत्यक्षमिह पश्यन्तो भवन्त: सत्पथे स्थिता: ।
किमत्र प्रत्यक्षतमं भवन्तोयमुपासते । अन्यत्र तर्कशास्त्रेभ्य आगमार्थं यथागमं ।
आगमो वेदवादास्तु तर्कशास्त्राणि चागम: । यथाश्रममुपासीत आगमस्तत्र सिद्ध्यति ।
सिद्धि: प्रत्यक्षरूपा च दृश्यत्यागमनिश्चयात् । नौर्नावीव निबद्धा हि स्रोतसा सनिबन्धना । ९८८०
ह्रियमाणा कथं विप्र कुबुद्धींस्तारयिष्यति । एतद्ब्रवीतु भगवानुपपन्नोऽस्म्यधीहि भो: ।
नैव त्यागी न सन्तुष्टो न शोको न निरामय: । नानिर्व्विधित्सो नावृत्तो नापवृत्तोऽस्ति कश्चन ।
भवन्तोऽपि च हृष्यन्ति शोचन्ति च यथा वयं । इन्द्रियार्थाश्च भवतां समाना: सर्व्वजन्तुषु ।
एवं चतुर्णां वर्णानामाश्रमाणां प्रवृत्तिषु । एकमालम्बमानानां निर्णये किं निरामयं ।
॥ कपिल उवाच ॥ यद्यदाचरते शास्त्रमर्थ्यं सर्व्वप्रवृत्तिषु । यस्य यत्र ह्यनुष्ठानं तत्र तत्र निरामयं । ९८८५
ज्ञानं ज्ञावयते सर्व्वं यो ज्ञानं ह्यनुवर्त्तते । ज्ञानादपेत्य या वृत्ति: सा विनाशयति प्रजा: ।
भवन्तो ज्ञानिनो व्यक्तं सर्व्वतश्च निरामया: । ऐकात्म्यं नाम कश्चिद्धि कदाचिदुपपद्यते ।
शास्त्रं ह्यबुद्ध्वा तत्त्वेन केचिद्वादबला जना: । कामद्वेषाभिभूतत्वादहङ्कारवशं गता: ।

याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः । ब्रह्मस्तेना निरारम्भा दर्पमोहवशानुगाः ।
नैर्गुण्यमेव पश्यन्ति न गुणाननुयुञ्जते । तेषां तमःशरीराणां तम एव परायणं । ९९९०
यो यथाप्रकृतिर्जन्तुः प्रकृतेः स्याद्वशानुगः । तस्य द्वेषश्च कामश्च क्रोधो दम्भोऽनृतं मदः ।
नित्यमेवाभिवर्द्धन्ते गुणाः प्रकृतिसम्भवाः । एवं ध्यात्वाऽनुपश्यन्तः सन्त्यजेयुः शुभाशुभं ।
परां गतिमभीप्सन्तो यतयः शमये रताः ।
॥ स्यूमरश्मिरुवाच ॥ सर्व्वमेतन्मया ब्रह्मन् शास्त्रतः परिकीर्त्तितं । न ह्यविज्ञाय शास्त्रार्थं प्रवर्त्तन्ते प्रवृत्तयः ।
यः कश्चिन्न्याय्य आचारः सर्व्वं शास्त्रमिति श्रुतिः । यदन्याय्यमशास्त्रं तदित्येषा श्रूयते श्रुतिः । ९९९५
न प्रवृत्तिर्ऋते शास्त्रात् काचिदस्तीति निश्चयः । यदन्यद्वेदवादेभ्यस्तदशास्त्रमिति श्रुतिः ।
शास्त्रादपेतं पश्यन्ति बहवो व्यक्तमानिनः । अविज्ञानहतप्रज्ञा हीनप्रज्ञास्तमोवृताः ।
शास्त्रदोषान्न पश्यन्ति शोचन्ति च यथा वयं । इन्द्रियार्थाश्च भवतां समानाः सर्व्वजन्तुषु ।
एवं चतुर्णां वर्णानामाश्रमाणां प्रवृत्तिषु । एकमालम्बमानानां निर्णयः सर्व्वतो द्विज ।
आनन्त्यं वदमानेन शक्तेनावर्ज्जितात्मना । शक्यन्त्वेकेन युक्तेन कृतकृत्येन सर्व्वशः । १०००
पिण्डमात्रमुपाश्रित्य चरितुं सर्व्वतोदिशं । तेनाविवदमानेन व्यक्तेन विजितात्मना ।
वेदवादं व्यपाश्रित्य मोक्षोऽस्तीति प्रभाषितुं । अपेतन्यायशास्त्रेण सर्व्वलोकविगर्हिणा ।
इदन्तु दुष्करं कर्म्म कुटुम्बमभिसंश्रितं । दानमध्ययनं यज्ञः प्रजासन्तानमार्ज्जवं ।
यद्येतदेवं कृत्वाऽपि न विमोक्षोऽस्ति कस्यचित् । धिक् कर्त्तारञ्च कार्य्यञ्च श्रमश्चायं निरर्थकः ।
नास्तिक्यमन्यथा च स्याद्वेदानां पृष्ठतः क्रिया । एतस्यानन्त्यमिच्छामि भगवन् श्रोतुमञ्जसा । १००५
तत्त्वं वदस्व मे ब्रह्मन्नुपसन्नोऽस्म्यधीहि भोः । यथा ते विदितो मोक्षस्तथेच्छाम्युपशिक्षितुं ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि गोकपिलीये सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥
॥ कपिल उवाच ॥ वेदाः प्रमाणं लोकानां न वेदाः पृष्ठतः कृताः । द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति । शरीरमेतत् कुरुते यद्वेदे कुरुते तनुं ।
कृतशुद्धशरीरो हि पात्रं भवति ब्राह्मणः । आनन्त्यमत्र बुद्ध्येदं कर्म्मणान्तद्ब्रवीमि ते ।
निरागममनैतिह्यं प्रत्यक्षं लोकसाक्षिकं । धर्म्म इत्येव ये यज्ञान् वितन्वन्ति निराशिषः । १०१०
उत्पन्नत्यागिनो ऽलुब्धाः कृपासूयाविवर्ज्जिताः । धनानामेष वै पन्थास्तीर्थेषु प्रतिपादनं ।
अनाश्रिताः पापकर्म्म कदाचित् कर्म्मयोगिनः । मनः सङ्कल्पसंसिद्धा विशुद्धज्ञाननिश्चयाः ।
अक्रुध्यन्तोऽनसूयन्तो निरहङ्कारमत्सराः । ज्ञाननिष्ठास्त्रिशुक्लाश्च सर्व्वभूतहिते रताः ।
आसन् गृहस्था भूयिष्ठा अव्युत्क्रान्ताः स्वकर्म्मसु । राजानश्च तथा युक्ता ब्राह्मणाश्च यथाविधि ।
समा ह्यार्ज्जवसम्पन्नाः सन्तुष्टा ज्ञाननिश्चयाः । प्रत्यक्षधर्म्माः शुचयः श्रद्दधानाः परावरे । १०१५
पुरस्ताद्भावितात्मानो यथावच्चरितव्रताः । चरन्ति धर्म्मं कृच्छ्रेऽपि दुर्गे चैवापि संहताः ।
संहत्य धर्म्मं चरतां पुरासीत् सुखमेव तत् । तेषां नासीद्विधातव्यं प्रायश्चित्तं कथञ्चन ।

सत्यं हि धर्म्ममास्थाय दुराधर्षतमा मताः । न मात्रामनुरुध्यन्ते न धर्म्मच्छलमन्ततः ।
य एव प्रथमः कल्पस्तमेवाभ्याचरन् सह । तेषां नासीद्विधातव्यं प्रायश्चित्तं कदाचन ।
तस्मिन् विधौ स्थितानां हि प्रायश्चित्तं न विद्यते । दुर्ब्बलात्तत्र उत्पन्नं प्रायश्चित्तमिति श्रुतिः । ९७२०
एवं बहुविधा विप्राः पुराणा यज्ञवाहनाः । त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो यशस्विनः ।
यजन्तोऽहरहर्यज्ञैर्निराशीर्ब्बन्धना बुधाः । तेषां यज्ञाश्च वेदाश्च कर्म्माणि च यथागमं ।
आगमाश्च यथाकालं संकल्पाश्च यथाक्रमं । अपेतकामक्रोधानां दुश्चराचारकर्म्मणां ।
स्वकर्म्मभिः संशितानां प्रकृत्या संशितात्मनां । ऋजूनां शमनित्यानां स्वेषु कर्म्मसु वर्त्ततां ।
सर्व्वमानन्त्यमेवासीदिति नः शाश्वती श्रुतिः । तेषामदीनसत्त्वानां दुश्चराचारकर्म्मणां । ९७२५
स्वकर्म्मभिः सम्भृतानां तपो घोरत्वमागतं । तं सदाचारमाश्चर्य्यं पुराणं शाश्वतं ध्रुवं ।
अशक्नुवद्भिश्चरितुं किञ्चिद्धर्म्मेषु सूच्यतां । निरापद्धर्म्म आचारो ह्यप्रमादोऽपराभवः ।
सर्व्ववर्णेषु जातेषु नासीत्कश्चिद्व्यतिक्रमः । धर्म्ममेकञ्चतुर्द्धा हि ब्राह्मणा आश्रमं विदुः ।
तं सन्तो विधिवत्प्राप्य गच्छन्ति परमां गतिं । गृहेभ्य एव निष्क्रम्य वनमन्ये समाश्रिताः ।
गृहमेवाभिसंश्रित्य ततोऽन्ये ब्रह्मचारिणः । तत्र ते दिवि दृश्यन्ते ज्योतिर्भूता द्विजातयः । ९७३०
नक्षत्राणीव धिष्ण्येषु बहवस्तारकागणाः । आनन्त्यमुपसंप्राप्ताः सन्तोषादिति वैदिकं ।
यद्यागच्छन्ति संसारं पुनर्य्योनिषु तादृशाः । न लिप्यन्ते पापकृत्यैः कदाचित्कर्म्मयोनितः ।
एवमेव ब्रह्मचारी शुश्रूषुर्घोरनिश्चयः । एवं युक्तो ब्राह्मणः स्यादन्यो ब्राह्मणको भवेत् ।
कर्म्मैवं पुरुषस्याह शुभं वा यदि वाऽशुभं । एवं पक्वकषायाणामानन्त्येन श्रुतेन च ।
सर्व्वमानन्त्यमासीद्वै एवं नः शाश्वती श्रुतिः । तेषामपेततृष्णानां निर्णिक्तानां शुभात्मनां । ९७३५
चतुर्थ्थौपनिषद्धर्म्मः साधारण इति स्मृतिः । संसिद्धैः साध्यते नित्यं ब्राह्मणैर्नियतात्मभिः ।
सन्तोषमूलस्त्यागात्मा ज्ञानाधिष्ठानमुच्यते । अपवर्गमतिर्न्नित्यो यतिधर्म्मः सनातनः ।
साधारणः केवलो वा यथाबलमुपास्यते । गच्छतां गच्छतां क्षेमं दुर्ब्बलोऽत्रावसीदति ।
ब्रह्मणः पदमन्विच्छन् संसारान्मुच्यते शुचिः ।

॥ स्यूमरश्मिरुवाच ॥ ये भुञ्जते ये ददते यजन्तेऽधीयते च ये । मात्राभिरुपलब्धाभिर्ये वा त्यागं समाश्रिताः । ९७४०
एतेषां प्रेत्यभावे तु कतमः स्वर्गजित्तमः । एतदाचक्ष्व मे ब्रह्मन् यथातत्त्वेन पृच्छतः ।
॥ कपिल उवाच ॥ परिग्रहाः शुभाः सर्व्वे गुणतामभ्युपागताः । न तु त्यागसुखं प्राप्ता एतत्त्वमपि पश्यसि ।
॥ स्यूमरश्मिरुवाच ॥ भवन्तो ज्ञाननिष्ठा वै गृहस्थाः कर्म्मनिश्चयाः । आश्रमाणाञ्च सर्व्वेषां निष्ठायामैक्यमुच्यते ।
एकत्वेन पृथक्त्वेन विशेषो नात्र दृश्यते । तद्यथावद्यथान्यायं भगवान् प्रब्रवीतु मे ।
॥ कपिल उवाच ॥ शरीरपक्तिः कर्म्माणि ज्ञानन्तु परमा गतिः । कषाये कर्म्मभिः पक्वे रसज्ञाने च तिष्ठति । ९७४५
आनृशंस्यं क्षमा शान्तिरहिंसा सत्यमार्ज्जवं । अद्रोहो नाभिमानश्च ह्रीस्तितिक्षा शमस्तथा ।
पन्थानो ब्रह्मणस्त्वेते एतैः प्राप्नोति यत्परं । तद्विद्वाननुबुध्येत मनसा कर्म्मनिश्चयं ।

यां विप्राः सर्व्वतः शान्ता विशुद्धा ज्ञाननिश्चयाः । गतिं गच्छन्ति सन्तुष्टास्तामाहुः परमां गतिं ।
वेदांश्च वेदितव्यञ्च विदित्वा च तथा स्थितिं । एवं वेदविदित्याहुरतोऽन्यो वातरेचकः ।
सर्व्वं विदुर्व्वेदविदो वेदे सर्व्वं प्रतिष्ठितं । वेदे हि निष्ठा सर्व्वस्य यद्यदस्ति च नास्ति च ।　　९७५०
एषैव निष्ठा सर्व्वत्र यत्तदस्ति च नास्ति च । एतदन्तञ्च मध्यञ्च सर्व्वासच्च विजानतः ।
समाप्तं त्याग इत्येव सर्व्वं वेदेषु निष्ठितं । सन्तोष इत्यनुगतमपवर्गे प्रतिष्ठितं ।
ऋतं सत्यं विदितं वेदितव्यं सर्व्वस्यात्मा स्थावरं जङ्गमञ्च । सर्व्वं शिवं यच्छिवमुत्तरञ्च ब्रह्माव्यक्तप्रभवञ्चाव्ययञ्च ।
तेजः क्षमा शान्तिरनामयं शुभं तथाविधं व्योम सनातनं ध्रुवं । एतैः सर्व्वैर्गम्यते बुद्धिनेत्रैस्तस्मै नमो ब्रह्मणे ब्राह्मणाय ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि गोकपिलीये एकसप्तत्यधिकद्विशततोऽध्यायः ॥ २७१ ॥
॥ युधिष्ठिर उवाच ॥ धर्म्ममर्थञ्च कामञ्च वेदाः शंसन्ति भारत । कस्य लाभो विशिष्टोऽत्र तन्मे ब्रूहि पितामह ।　　९७५५
॥ भीष्म उवाच ॥ अत्र ते वर्त्तयिष्यामि इतिहासं पुरातनं । कुण्डधारेण यत् प्रीत्या भक्तायोपकृतं पुरा ।
अधनो ब्राह्मणः कश्चित् कामाद्धर्म्ममवैक्षत । यज्ञार्थं स ततोऽर्थार्थी तपोऽतप्यत दारुणं ।
स निश्चयमथो कृत्वा पूजयामास देवताः । भक्त्या न चैवाध्यगच्छद्धनं सम्पूज्य देवताः ।
ततश्चिन्तामनुप्राप्तः कतमं दैवतन्नु तत् । यन्मे द्रुतं प्रसीदेत मानुषैरजडीकृतं ।
सोऽथ सौम्येन मनसा देवानुचरमन्तिके । प्रत्यपश्यज्जलधरं कुण्डधारमवस्थितं ।　　९७६०
दृष्ट्वैव तं महाबाहुं तस्य भक्तिरजायत । अयं मे धास्यति श्रेयो वपुरेतद्धि तादृशं ।
सन्निकृष्टश्च देवस्य न चान्यैर्मानुषैर्वृतः । एष मे दास्यति धनं प्रभूतं शीघ्रमेव च ।
ततो धूपैश्च गन्धैश्च माल्यैरुच्चावचैरपि । बलिभिर्व्विविधाभिश्च पूजयामास तं द्विजः ।
ततस्त्वल्पेन कालेन तुष्टो जलधरस्तदा । तस्योपकारनियतामिमां वाचमुवाच ह ।
ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा । निष्कृतिर्व्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ।　　९७६५
आशायास्तनयो धर्म्मः क्रोधोऽसूयासुतः स्मृतः । लोभः पुत्रो निकृत्यायाः कृतघ्नो नार्हति प्रजां ।
ततः स ब्राह्मणः स्वप्ने कुण्डधारस्य तेजसा । अपश्यत् सर्व्वभूतानि कुशेषु शयितस्तदा ।
शमेन तपसा चैव भक्त्या च निरुपस्कृतः । शुद्धात्मा ब्राह्मणो रात्रौ निदर्शनमपश्यत ।
मणिभद्रं स तत्रस्थं देवतानां महाद्युतिं । अपश्यत महात्मानं व्यादिशन्तं युधिष्ठिर ।
तत्र देवाः प्रयच्छन्ति राज्यानि विविधानि च । शुभैः कर्म्मभिरारब्धाः प्रच्छिन्दन्त्यशुभेषु च ।　　९७७०
पश्यतामथ यक्षाणां कुण्डधारो महाद्युतिः । निपत्य पतितो भूमौ देवानां भरतर्षभ ।
ततस्तु देववचनान्मणिभद्रो महामनाः । उवाच पतितं भूमौ कुण्डधार किमिष्यते ।
कुण्डधार उवाच ॥ यदि देवाः प्रसन्ना मे भक्तोऽयं ब्राह्मणो मम । अस्यानुग्रहमिच्छामि कृतं किञ्चित् सुखोदयं ।
ततस्तं मणिभद्रस्तु पुनर्व्वचनमब्रवीत् । देवानामेव वचनात् कुण्डधारं महाद्युतिं ।
॥ मणिभद्र उवाच ॥ उत्तिष्ठोत्तिष्ठ भद्रन्ते कृतकृत्यः सुखी भव । धनार्थी यदि विप्रोऽयं धनमस्मै प्रदीयतां ।　　९७७५
यावद्धनं प्रार्थयते ब्राह्मणोऽयं सखा तव । देवानां शासनात्तावदसंख्येयं ददाम्यहं ।

विचार्य्य कुण्डधारस्तु मानुष्यं चलमध्रुवं । तपसे मतिमाधत्त ब्राह्मणस्य युधिष्ठिर ।

॥ कुण्डधार उवाच ॥ नाहं धनानि याचामि ब्राह्मणाय धनप्रद । अन्यमेवाहमिच्छामि भक्तायानुग्रहं कृतं ।

पृथिवीं रत्नपूर्णां वा महद्वा रत्नसञ्चयं । भक्ताय नाहमिच्छामि भवेदेष तु धार्म्मिकः ।

धर्म्मेऽस्य रमतां बुद्धिर्धर्म्मञ्चैवोपजीवतु । धर्म्मप्रधानो भवतु ममैषोऽनुग्रहो मतः । ९८८०

॥ मणिभद्र उवाच ॥ सदा धर्म्मफलं राज्यं सुखानि विविधानि च । फलान्येवायमश्नातु कायक्लेशविवर्ज्जितः ।

॥ भीष्म उवाच ॥ ततस्तदेव बहुशः कुण्डधारो महायशाः । अभ्यासमकरोद्धर्म्मे ततस्तुष्टाऽस्य देवताः ।

॥ मणिभद्र उवाच ॥ प्रीतास्ते देवताः सर्व्वा द्विजस्यास्य तथैव च । भविष्यत्येष धर्म्मात्मा धर्म्मे चाधास्यते मतिः ।

ततः प्रीतो जलधरः कृतकार्य्यो युधिष्ठिर । ईप्सितं मनसो लब्ध्वा वरमन्यैः सुदुर्लभं ।

ततोऽपश्यत चीराणि सूक्ष्माणि द्विजसत्तमः । पार्श्वतोऽभ्याशतो न्यस्तान्यथ निर्व्वेदमागतः । ९८८५

॥ ब्राह्मण उवाच ॥ अयं न सुकृतं वेत्ति को न्वन्यो वेत्स्यते कृतं । गच्छामि वनमेवाहं वरं धर्म्मेण जीवितुं ।

॥ भीष्म उवाच ॥ निर्व्वेदाद्देवतानाञ्च प्रसादात् स द्विजोत्तमः । वनं प्रविश्य सुमहत्तप आरब्धवांस्तदा ।

देवतातिथिशेषेण फलमूलाशनो द्विजः । धर्म्मे चास्य महाराज दृढा बुद्धिरजायत ।

त्यक्त्वा मूलफलं सर्व्वं पर्णाहारोऽभवद्द्विजः । पर्णं त्यक्त्वा जलाहारः पुनरासीद्द्विजस्तदा ।

वायुभक्षस्ततः पश्चाद्बहून् वर्षगणानभूत् । न चास्य क्षीयते प्राणस्तदद्भुतमिवाभवत् । ९८९०

धर्म्मे च श्रद्दधानस्य तपस्युग्रे च वर्त्ततः । कालेन महता तस्य दिव्या दृष्टिरजायत ।

तस्य बुद्धिः प्रादुरासीद्यदि दद्यामहं धनं । तुष्टः कस्मैचिदेवेह मिथ्यावाङ्न भवेन्मम ।

ततः प्रहृष्टवदनो भूय आरब्धवांस्तपः । भूयश्चाचिन्तयत् सिद्धो यत्परं सोऽभिमन्यते ।

यदि दद्यामहं राज्यं तुष्टो वै यस्य कस्यचित् । स भवेदचिराद्राजा न मिथ्या वाग्भवेन्मम ।

तस्य साक्षात् कुण्डधारो दर्शयामास भारत । ब्राह्मणस्य तपोयोगात् सौहृदेनाभिचोदितः । ९८९५

समागम्य स तेनाथ पूजाञ्चक्रे यथाविधि । ब्राह्मणः कुण्डधारस्य विस्मितश्चाभवन्नृप ।

ततोऽब्रवीत् कुण्डधारो दिव्यन्ते चक्षुरुत्तमं । पश्य राज्ञां गतिं विप्र लोकांश्चैव तु चक्षुषा ।

ततो राजसहस्राणि मग्नानि निरये तदा । दूरादपश्यद्विप्रः स दिव्ययुक्तेन चक्षुषा ।

॥ कुण्डधार उवाच ॥ मां पूजयित्वा भावेन यदि त्वं दुःखमाप्नुयाः । कृतं मया भवेत् किन्ते कश्च तेऽनुग्रहो भवेत् ।

पश्य पश्य च भूयस्त्वं कामानिच्छेत् कथं नरः । स्वर्गद्वारं हि संरुद्धं मानुषेषु विशेषतः । ९९००

॥ भीष्म उवाच ॥ ततोऽपश्यत् स कामञ्च क्रोधं लोभं भयं मदं । निद्रां तन्द्रीं तथालस्यमावृत्य पुरुषान् स्थितान् ।

॥ कुण्डधार उवाच ॥ एतैर्लोकाः सुसंरुद्धा देवानां मानुषाद्भयं । तथैव देववचनाद्विघ्नं कुर्व्वन्ति सर्व्वशः ।

न देवैरननुज्ञातः कश्चिद्भवति धार्म्मिकः । एष शक्तोऽसि तपसा दातुं राज्यं धनानि च ।

॥ भीष्म उवाच ॥ ततः पपात शिरसा ब्राह्मणस्तोयधारिणे । उवाच चैनं धर्म्मात्मा महान्मेऽनुग्रहः कृतः ।

कामलोभानुबन्धेन पुरा ते यदसूयितं । मया स्नेहमविज्ञाय तत्र मे क्षन्तुमर्हसि । ९९०५

क्षान्तमेव मयेत्युक्त्वा कुण्डधारो द्विजर्षभं । सम्परिष्वज्य बाहुभ्यां तत्रैवान्तरधीयत ।

ततः सर्व्वांस्तदा लोकान् ब्राह्मणोऽनुचचार ह। कुण्डधारप्रसादेन तपसा सिद्धिमागतः।
विहायसा च गमनं तथा सङ्कल्पितार्थता। धर्म्मात् शक्त्या तथा योगात् या चैव परमा गतिः।
देवता ब्राह्मणाः सन्तो यक्षा मानुषचारणाः। धार्म्मिकान् पूजयन्तीह न धनाढ्यान् कामिनः।
सुप्रसन्ना हि ते देवा यत्ते धर्म्मे रता मतिः। धने सुखकला काचित् धर्म्मे तु परमं सुखं। ९८१०
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि कुण्डधारोपाख्याने द्विसप्तत्यधिकद्विशततोऽध्यायः॥ २७२॥
॥ युधिष्ठिर उवाच॥ बहूनां यज्ञतपसामेकार्थानां पितामह। धर्म्मार्थं न सुखार्थार्थं कथं यज्ञः समाहितः।
॥ भीष्म उवाच॥ अत्र ते वर्त्तयिष्यामि नारदेनानुकीर्त्तितं। उञ्छवृत्तेः पुरावृत्तं यज्ञार्थे ब्राह्मणस्य च।
॥ नारद उवाच॥ राष्ट्रे धर्म्मोत्तरे श्रेष्ठे विदर्भेष्वभवद्द्विजः। उञ्छवृत्तिरृषिः कश्चिद्यज्ञं यष्टुं समादधे।
श्यामाकमशनन्तत्र सूर्य्यपर्णी सुवर्च्चला। तिक्तञ्च विरसं शाकं तपसा स्वादुतां गतं।
उपगम्य वने सिद्धिं सर्व्वभूताविहिंसया। अपि मूलफलैरिष्टो यज्ञः स्वर्ग्यः परन्तप। ९८१५
तस्य भार्य्या व्रतकृशा शुचिः पुष्करधारिणी। यज्ञपत्नी समानीता सत्येनानुविधीयते।
सा तु शापपरित्रस्ता तत्स्वभावानुवर्त्तिनी। मायूरजीर्णपर्णानां वस्त्रं तस्याश्च वर्णितं।
अकामया कृतस्तत्र यज्ञो होत्रनुशासनात्। शुक्रस्य चापध्यानात्तु पुनराज्ञाति धर्म्मवित्।
तस्मिन् वने समीपस्थो मृगोऽभूत् सहवासिकः। वचोभिरब्रवीत् सत्यं त्वयेदं दुष्कृतं कृतं।
यदि मन्त्राङ्गहीनोऽयं यज्ञो भवति वै कृतः। माम्भोः प्रक्षिप होत्रे त्वं गच्छ स्वर्गमनिन्दितः। ९८२०
ततस्तु यज्ञे सावित्री साक्षात्तं संन्यमन्त्रयत्। निमन्त्रयन्ती प्रत्युक्ता न हन्यां सहवासिनं।
एवमुक्ता निवृत्ता सा प्रविष्टा यज्ञपावकं। किन्नु दुश्चरितं यज्ञे दिदृक्षुः सा रसातलं।
स तु बद्धाऽञ्जलिं सत्यमयाचद्धरिणः पुनः। सत्येन स परिष्वज्य सन्दिष्टो गम्यतामिति।
ततः स हरिणो गत्वा पदान्यष्टौ न्यवर्त्तत। साधु हिंसय मां सत्यं हतो यास्यामि सद्गतिं।
पश्य ह्यप्सरसो दिव्या मया दत्तेन चक्षुषा। विमानानि विचित्राणि गन्धर्व्वाणां महात्मनां। ९८२५
ततः स सुचिरं दृष्ट्वा स्पृहालग्नेन चक्षुषा। मृगमालोक्य हिंसायां स्वर्गवासं समर्थयत्।
स तु धर्म्मो मृगो भूत्वा बहुवर्षोषितो वने। तस्य निष्कृतिमाधत्त न ह्यसौ यज्ञसंविधिः।
तस्य तेनानुभावेन मृगहिंसात्मनस्तदा। तपो महत् समुच्छिन्नं तस्माद्धिंसा न यज्ञिया।
ततस्तं भगवान् धर्म्मो यज्ञं याजयत स्वयं। समाधानञ्च भार्य्याया लेभे स तपसा परं।
अहिंसा सकलो धर्म्मो हिंसाधर्म्मस्तथाविधः। सत्यन्तेऽहं प्रवक्ष्यामि यो धर्म्मः सत्यवादिनां। ९८३०
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि यज्ञनिन्दायां त्रिसप्तत्यधिकद्विशततोऽध्यायः॥ २७३॥
॥ युधिष्ठिर उवाच॥ कथम्भवति पापात्मा कथं धर्म्मं करोति वा। केन निर्व्वेदमादत्ते मोक्षं वा केन गच्छति।
॥ भीष्म उवाच॥ विदिताः सर्व्वधर्म्मास्ते स्थित्यर्थं त्वन्तु पृच्छसि। शृणु मोक्षं सनिर्व्वेदं पापं धर्म्मञ्च मूलतः।
विज्ञानार्थं हि पञ्चानामिच्छापूर्व्वं प्रवर्त्तते। प्राप्य तान् जायते कामो द्वेषो वा भरतर्षभ।
ततस्तदर्थं यतते कर्म्म चारभते महत्। इष्टानां रूपगन्धानामभ्यासञ्च चिकीर्षति।

ततो रागः प्रभवति द्वेषश्च तदनन्तरं । ततो लोभः प्रभवति मोहश्च तदनन्तरं । ९८२५
लोभमोहाभिभूतस्य रागद्वेषान्वितस्य च । न धर्मे आयता बुद्धिर्व्याजाद्धर्मं करोति च ।
व्याजेन चरते धर्ममर्थं व्याजेन रोचते । व्याजेन सिद्ध्यमानेषु धनेषु कुरुनन्दन ।
तत्रैव कुरुते बुद्धिं ततः पापं चिकीर्षति । सुहृद्भिर्वार्य्यमाणोऽपि पण्डितैश्चापि भारत ।
उत्तरं न्यायसम्बद्धं ब्रवीति विधिचोदितं । अधर्मस्त्रिविधस्तस्य वर्द्धते रागमोहजः ।
पापं चिन्तयते चैव प्रब्रवीति करोति च । तस्याधर्मप्रवृत्तस्य दोषान् पश्यन्ति साधवः । ९८३०
एकशीलाश्च मित्रत्वं भजन्ते पापकर्म्मिणः । स नेह सुखमाप्नोति कुत एव परत्र वै ।
एवम्भवति पापात्मा धर्म्मात्मानन्तु मे शृणु । यथा कुशलधर्मा स कुशलं प्रतिपद्यते ।
कुशलेनैव धर्मेण गतिमिष्टां प्रपद्यते । स एतान् प्रज्ञया दोषान् पूर्व्वमेवानुपश्यति ।
कुशलः सुखदुःखानां साधूंश्चाप्युपसेवते । तस्य साधुसमाचारादभ्यासाच्चैव वर्द्धते ।
प्रज्ञा धर्मे च रमते धर्मं चैवोपजीवति । सोऽथ धर्म्मादवाप्तेषु धनेषु कुरुते मनः । ९८३५
तस्यैव सिञ्चते मूलं गुणान् पश्यति यत्र वै । धर्म्मात्मा भवति ह्येवं मित्रञ्च लभते शुभं ।
स मित्रधनलाभात्तु प्रेत्य चेह च नन्दति । शब्दे स्पर्शे रसे रूपे तथा गन्धे च भारत ।
प्रभुत्वं लभते जन्तुर्धर्म्मस्यैतत् फलं विदुः । स तु धर्म्मफलं लब्ध्वा न हृष्यति युधिष्ठिर ।
अतृप्यमाणो निर्व्वेदमादत्ते ज्ञानचक्षुषा । प्रज्ञाचक्षुर्यदा कामे रसे गन्धे न रज्यते ।
शब्दे स्पर्शे तथा रूपे न च भावयते मनः । विमुच्यते तदा कामान्न च धर्म्मं विमुञ्चति । ९८४०
धर्म्मत्यागे च यतते दृष्ट्वा लोकं क्षयात्मकं । ततो मोक्षाय यतते नानुपायादुपायतः ।
शनैर्निर्व्वेदमादत्ते पापं कर्म्म जहाति च । धर्म्मात्मा चैव भवति मोक्षञ्च लभते परं ।
एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि । पापं धर्म्मस्तथा मोक्षो निर्व्वेदश्चैव भारत ।
तस्माद्धर्म्मे प्रवर्त्तेथाः सर्व्वावस्थं युधिष्ठिर । धर्म्मे स्थितानां कौन्तेय सिद्धिर्भवति शाश्वती ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि चतुःप्राश्निके चतुःसप्तत्यधिकद्विशततोऽध्यायः ॥ २७४ ॥

॥ युधिष्ठिर उवाच ॥ मोक्षः पितामहेनोक्त उपायान्नानुपायतः । तमुपायं यथान्यायं श्रोतुमिच्छामि भारत । ९८४५
॥ भीष्म उवाच ॥ त्वय्येवैतन्महाप्राज्ञ युक्तं निपुणदर्शनं । येनोपायेन सर्व्वार्थं नित्यं मृगयसेऽनघ ।
करणे घटस्य या बुद्धिर्घटोत्पत्तौ न सा मता । एवं धर्म्माभ्युपायेषु नान्यद्धर्म्मेषु कारणं ।
पूर्व्वे समुद्रे यः पन्था न स गच्छति पश्चिमं । एकः पन्था हि मोक्षस्य तन्मे विस्तरतः शृणु ।
क्षमया क्रोधमुच्छिन्द्यात् कामं सङ्कल्पवर्ज्जनात् । सत्त्वसंसेवनाद्धीरो निद्राञ्चोच्छेत्तुमर्हति ।
अप्रमादाद्भयं रक्षेत् श्वासं क्षेत्रज्ञशीलनात् । इच्छां द्वेषञ्च कामञ्च धैर्य्येण विनिवर्त्तयेत् । ९८५०
भ्रमं संमोहमावर्त्तमभ्यासाद्विनिवर्त्तयेत् । निद्राञ्च प्रतिभाञ्चैव ज्ञानाभ्यासेन तत्त्ववित् ।
उपद्रवांस्तथा रोगान् हितजीर्णमिताशनात् । लोभं मोहञ्च सन्तोषाद्विषयांस्तत्त्वदर्शनात् ।
अनुक्रोशादधर्म्मञ्च जयेद्धर्म्ममवेक्षया । आयत्या च जयेदाशामर्थं सङ्गविवर्ज्जनात् ।

अनित्यत्वेन च खेदं क्षुधां योगेन पण्डितः। कारुण्येनात्मनो मानं तृष्णाञ्च परितोषतः।
उत्थानेन जयेत्तन्द्रीं वितर्कं निश्चयाज्जयेत्। मौनेन बहुभाषाञ्च शौर्येण च भयं त्यजेत्।  ९८६५
यच्छेद्वाङ्मनसी बुद्ध्या तां यच्छेज्ज्ञानचक्षुषा। ज्ञानमात्मावबोधेन यच्छेदात्मानमात्मना।
तदेतदुपशान्तेन बोद्धव्यं शुचिकर्म्मणा। योगदोषान् समुच्छिद्य पञ्च यान् कवयो विदुः।
कामं क्रोधञ्च लोभञ्च भयं स्वप्नञ्च पञ्चमं। परित्यज्य निषेवेत यतवाग्योगसाधनात्।
ध्यानमध्ययनं दानं सत्यं ह्रीरार्ज्जवं क्षमा। शौचमाहारतः शुद्धिरिन्द्रियाणाञ्च संयमः।
एतैर्विवर्द्धते तेजः पाप्मानमुपहन्ति च। सिध्यन्ति चास्य सङ्कल्पा विज्ञानञ्च प्रवर्त्तते।  ९८७०
धूतपापः स तेजस्वी लघ्वाहारो जितेन्द्रियः। कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदं।
अमूढत्वमसङ्गित्वं कामक्रोधविवर्ज्जनं। अदैन्यमनुदीर्णत्वमनुद्वेगो व्यवस्थितिः।
एष मार्गो हि मोक्षस्य प्रसन्नो विमलः शुचिः। तथा वाक्कायमनसां नियमः कामतोऽन्यथा।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि योगाचारानुवर्णने पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥
॥ भीष्म उवाच ॥ अत्रैवोदाहरन्तीममितिहासं पुरातनं। नारदस्य च संवादं देवलस्यासितस्य च ।
आसीनं देवलं वृद्धं बुद्ध्वा बुद्धिमताम्वरं। नारदः परिपप्रच्छ भूतानां प्रभवाप्ययं ।  ९८७५
॥ नारद उवाच ॥ कुतः सृष्टमिदं विश्वं ब्रह्मन् स्थावरजङ्गमं। प्रलये च कमभ्येति तद्भवान् प्रब्रवीतु मे।
॥ असित उवाच ॥ येभ्यः सृजति भूतानि कालो भावप्रचोदितः। महाभूतानि पञ्चेति तान्याहुर्भूतचिन्तकाः।
तेभ्यः सृजति भूतानि काल आत्मप्रचोदितः। एतेभ्यो यः परं ब्रूयादसद्ब्रूयादसंशयं।
विद्धि नारद पञ्चैतान् शाश्वतानचलान् ध्रुवान्। महतस्तेजसो राशीन् कालषष्ठान् स्वभावतः।
आपश्चैवान्तरीक्षञ्च पृथिवी वायुपावकौ। नासीद्धि परमन्तेभ्यो भूतेभ्यो मुक्तसंशयं।  ९८८०
नोपपत्त्या न वा युक्त्या त्वसद्ब्रूयादसंशयं वेत्थ तानभिनिर्वृत्तान् षडेते यस्य राशयः।
पञ्चैव तानि कालश्च भावाभावौ च केवलौ। अष्टौ भूतानि भूतानां शाश्वतानि भवाप्ययौ।
अभावं यान्ति तेष्वेव तेभ्यश्च प्रभवन्त्यपि। विनष्टोऽपि च तान्येव जन्तुर्भवति पञ्चधा।
तस्य भूमिमयो देहः श्रोत्रमाकाशसम्भवं। सूर्य्याच्चक्षुरयो वायोरद्भ्यस्तु खलु शोणितं।
चक्षुषी नासिका कर्णौ त्वग्जिह्वेति च पञ्चमी। इन्द्रियाणीन्द्रियार्थानां ज्ञानानि कवयो विदुः।  ९८८५
दर्शनं श्रवणं घ्राणं स्पर्शनं रसनन्तथा। उपपत्त्या गुणान् विद्धि पञ्च पञ्चसु पञ्चधा।
रूपं गन्धो रसः स्पर्शः शब्दश्चैवाथ तद्गुणाः। इन्द्रियैरुपलभ्यन्ते पञ्चधा पञ्च पञ्चभिः।
रूपं गन्धं रसं स्पर्शं शब्दञ्चैवाथ तद्गुणान्। इन्द्रियाणि न बुध्यन्ते क्षेत्रज्ञस्तैस्तु बुध्यते।
चित्तमिन्द्रियसङ्घातात्परं तस्मात् परं मनः। मनसस्तु परा बुद्धिः क्षेत्रज्ञो बुद्धितः परः।
पूर्व्वं चेतयते जन्तुरिन्द्रियैर्विषयान् पृथक्। विचार्य्य मनसा पश्चादथ बुद्ध्या व्यवस्यति।  ९८९०
इन्द्रियैरुपलब्धार्थान् बुद्धिमांस्तु व्यवस्यति। चित्तमिन्द्रियसङ्घातं मनो बुद्धिस्तथाष्टमी।
अष्टौ ज्ञानेन्द्रियाण्याहुरेतान्यध्यात्मचिन्तकाः। पाणिपादञ्च पायुञ्च मेहनं पञ्चमं मुखं।

इति संशब्द्यमानानि शृणु कर्म्मेन्द्रियाण्यपि । जल्पनाभ्यवहारार्थं मुखमिन्द्रियमुच्यते ।
गमनेन्द्रियं तथा पादौ कर्म्मणः करणे करौ । पायूपस्थं विसर्गार्थमिन्द्रिये तुल्यकर्म्मणी ।
विसर्गे च पुरीषस्य विसर्गे चापि कामिके । बलं षष्ठं षडेतानि वाचा सम्यग्यथागमं । ९८९५
ज्ञानचेष्टेन्द्रियगुणाः सर्व्वे संशब्दिता मया । इन्द्रियाणां स्वकर्म्मभ्यः श्रमादुपरमो यदा ।
भवतीन्द्रियसन्त्यागादथ स्वपिति वै नरः । इन्द्रियाणां व्युपरमे मनो व्युपरतं यदि ।
सेवते विषयानेव तद्विद्यात्स्वप्नदर्शनं । सात्त्विकाश्चैव ये भावास्तथा तामसराजसाः ।
कर्म्मयुक्तान् प्रशंसन्ति सात्त्विकानितरांस्तथा । आनन्दः कर्म्मणां सिद्धिः प्रतिपत्तिः परा गतिः ।
सात्त्विकस्य निमित्तानि भावान् संश्रयते स्मृतिः । जन्तुष्वेकतमेष्वेवं भावा ये विधिमाश्रिताः । ९९००
भावयोरीप्सितं नित्यं प्रत्यक्षं गमनन्तयोः । इन्द्रियाणि च भावाश्च गुणाः सप्तदश स्मृताः ।
तेषामष्टादशो देही यः शरीरे स शाश्वतः । अथ वा सशरीरास्ते गुणाः सर्व्वे शरीरिणां ।
संश्रितास्तद्वियोगे हि सशरीरा न सन्ति ते । अथवा सन्निपातोऽयं शरीरं पाञ्चभौतिकं ।
एकश्च दश चाष्टौ च गुणाः सह शरीरिणा । ऊष्मणा सह विंशो वा संघातः पाञ्चभौतिकः ।
महान् सन्धारयत्येतच्छरीरं वायुना सह । तस्य प्रभावयुक्तस्य निमित्तं देहभेदने । ९९०५
तथैवोत्पद्यते किञ्चित्पञ्चत्वं गच्छते तथा । पुण्यपापविनाशान्ते पुण्यपापसमीरितः ।
देहं विशति कालेन ततोऽयं कर्म्मसम्भवं । हित्वा हित्वा ह्ययं प्रैति देहाद्देहं कृताश्रयः ।
कालसञ्चोदितः क्षेत्री विशीर्णाद्वा गृहाद्गृहं । तत्र नैवानुतप्यन्ते प्राज्ञा निश्चितनिश्चयाः ।
कृपणास्त्वनुतप्यन्ते जनाः सम्बन्धदर्शिनः । न ह्ययं कस्यचित्कश्चिन्नास्य कश्चन विद्यते ।
भवत्येको ह्ययं नित्यं शरीरे सुखदुःखभृत् । नैव संजायते जन्तुर्न च जातु विपद्यते । ९९१०
याति देहमयं मुक्त्वा कदाचित्परमां गतिं । पुण्यपापमयं देहं क्षपयन् कर्म्मसंक्षयात् ।
क्षीणदेहः पुनर्देही ब्रह्मत्वमुपगच्छति । पुण्यपापक्षयार्थं हि सांख्यज्ञानं विधीयते ।
तत्क्षये ह्यस्य पश्यन्ति ब्रह्मभावे परां गतिं ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारदासितसंवादे षट्सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७६ ॥

॥ युधिष्ठिर उवाच ॥ भ्रातरः पितरः पौत्रा ज्ञातयः सुहृदः सुताः । अर्थहेतोर्हताः क्रूरैरस्माभिः पापकर्म्मभिः ।
येयमर्थोद्भवा तृष्णा कथमेतां पितामह । निवर्त्तयेयं पापानि तृष्णया कारिता वयं । ९९१५
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । गीतं विदेहराजेन माण्डव्यायानुपृच्छते ।
सुसुखं वत जीवामि यस्य मे नास्ति किञ्चन । मिथिलायां प्रदीप्तायां न मे दह्यति किञ्चन ।
अर्थाः खलु समृद्धा हि बाढं दुःखं विजानतां । असमृद्धास्त्वपि सदा मोहयन्त्यविचक्षणान् ।
यच्च कामसुखं लोके यच्च दिव्यं महत् सुखं । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलां ।
यथैव शृङ्गं गोः काले वर्द्धमानस्य वर्द्धते । तथैव तृष्णा वित्तेन वर्द्धमानेन वर्द्धते । ९९२०
किञ्चिदेव ममत्वेन यदा भवति कल्पितं । तदेव परितापाय नाशे सम्पद्यते पुनः ।

नकामाननुरुध्येत दुःखं कामेषु वै रतिः। प्राप्यार्थमुपयुञ्जीत धर्म्मं कामान् विसर्ज्जयेत्।
विद्वान् सर्व्वेषु भूतेषु आत्मना सोपमो भवेत्। कृतकृत्यो विशुद्धात्मा सर्व्वं त्यजति चैव ह।
उभे सत्यानृते त्यक्त्वा शोकानन्दौ प्रियाप्रिये। भयाभये च संत्यज्य संप्रशान्तो निरामयः।
या दुस्त्यजा दुर्म्मतिभिर्या न जीर्य्यति जीर्य्यतः। योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखं। ९९२५
चारित्रमात्मनः पश्यंश्चन्द्रशुद्धमनामयं। धर्म्मात्मा लभते कीर्त्तिं प्रेत्य चेह यथासुखं।
राज्ञस्तद्वचनं श्रुत्वा प्रीतिमानभवद्द्विजः। पूजयित्वा च तद्वाक्यं माण्डव्यो मोक्षमाश्रितः।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि माण्डव्यजनकसंवादे सप्तसप्तत्यधिकद्विशततमोऽध्यायः॥ २७७॥
॥ युधिष्ठिर उवाच॥ अतिक्रामति कालेऽस्मिन् सर्व्वभूतभयावहे। किं श्रेयः प्रतिपद्येत तन्मे ब्रूहि पितामह।
॥ भीष्म उवाच॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। पितुः पुत्त्रेण संवादं तन्निबोध युधिष्ठिर।
द्विजातेः कस्यचित् पार्थ स्वाध्यायनिरतस्य वै। पुत्त्रो बभूव मेधावी मेधावी नाम नामतः। ९९३०
सोऽब्रवीत् पितरं पुत्त्रः स्वाध्यायकरणे रतं। मोक्षधर्म्मेष्वकुशलं मोक्षधर्म्मविचक्षणः।
॥ पुत्त्र उवाच॥ धीरः किं स्वित्तात कुर्य्यात् प्रजानन् क्षिप्रं ह्यायुर्भ्रश्यते मानवानां। पितस्तथाख्याहि यथार्थयोगं ममानुपूर्व्व्या येन धर्म्मं चरेयं।
॥ पितोवाच॥ अधीत्य वेदान् ब्रह्मचर्य्येण पुत्त्र पुत्त्रानिच्छेत् पावनार्थं पितॄणां। अग्नीनाधाय विधिवच्चेष्टयज्ञो वनं प्रविश्याथ मुनिर्बुभूषेत्।
॥ पुत्त्र उवाच॥ एवमभ्याहते लोके सर्व्वतः परिवारिते। अमोघासु पतन्तीषु किं धीर इव भाषसे।
॥ पितोवाच॥ कथमभ्याहतो लोकः केन वा परिवारितः। अमोघाः काः पतन्तीह किं नु भीषयसीव मां। ९९३५
॥ पुत्त्र उवाच॥ मृत्युनाऽभ्याहतो लोको जरया परिवारितः। अहोरात्राः पतन्तीमे ननु कस्मान्न बुध्यसे।
यदाऽहमेव जानामि न मृत्युस्तिष्ठतीति ह। सोऽहं कथं प्रतीक्षिष्ये ज्ञानेनापिहितश्चरन्।
रात्र्यां रात्र्यां व्यतीतायामायुरल्पतरं यदा। गाधोदके मत्स्य इव सुखं विन्देत कस्तदा।
पुष्पाणीव विचिन्वन्तमन्यत्र गतमानसं। अनवाप्तेषु कामेषु मृत्युरभ्येति मानवं।
श्वः कार्य्यमद्य कुर्व्वीत पूर्व्वाह्णे चापराह्णिकं। न हि प्रतीक्षते मृत्युः कृतं वाऽस्य न वा कृतं। ९९४०
अद्यैव कुरु यच्छ्रेयो मा त्वां कालोऽत्यगान्महान्। को हि जानाति कस्याद्य मृत्युकालो भविष्यति।
अकृतेष्वेव कार्य्येषु मृत्युर्व्वै सम्प्रकर्षति। युवैव धर्म्मशीलः स्यादनिमित्तं हि जीवितं।
कृते धर्म्मे भवेत् प्रीतिरिह प्रेत्य च शाश्वती। मोहेन हि समाविष्टः पुत्त्रदारार्थमुद्यतः।
कृत्वा कार्य्यमकार्य्यं वा तुष्टिमेषां प्रयच्छति। तं पुत्त्रपशुसम्पन्नं व्यासक्तमनसं नरं।
सुप्तं व्याघ्रं महौघो वा मृत्युरादाय गच्छति। संचिन्वानकमेवैनं कामानामवितृप्तकं। ९९४५
वृकीवोरणमासाद्य मृत्युरादाय गच्छति। इदं कृतमिदं कार्य्यमिदमन्यत् कृताकृतं।
एवमीहासमायुक्तं मृत्युरादाय गच्छति। कृतानां फलमप्राप्तं कार्य्याणां कर्म्मसङ्गिनं।
क्षेत्रापणगृहासक्तं मृत्युरादाय गच्छति। दुर्ब्बलं बलवन्तञ्च प्राज्ञं शूरं जडं कविं।

अप्राप्तसर्व्वकामार्थं मृत्युरादाय गच्छति । मृत्युर्ज्जरा च व्याधिश्च दुःखञ्चानेककारणं ।
असन्त्याज्यं यदा मर्त्यैः किं स्वस्थ इव तिष्ठसि । जातमेवान्तकोऽन्ताय जरा चान्वेति देहिनं । ९९५०
अनुषक्ता द्वयेनैते भावाः स्थावरजङ्गमाः । न मृत्युसेनामायान्तीं जातु कश्चित् प्रबाधते ।
यस्मात् सत्यमृते लोकं सत्ये ह्यमृतमाश्रितं । मृत्योर्व्वा गृहमेतद्वै या ग्रामे वसतो रतिः ।
देवानामेष वै गोष्ठो यदरण्यमिति श्रुतिः । निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः ।
छित्त्वैनां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः । यो न हिंसति सत्त्वानि मनोवाक्कर्म्महेतुभिः ।
जीवितार्थापनयनैः प्राणिभिर्न स बध्यते । तस्मात् सत्यव्रताचारः सत्यव्रतपरायणः । ९९५५
सत्यकामः समो दान्तः सत्येनैवान्तकं जयेत् । अमृतञ्चैव मृत्युश्च द्वयं देहे प्रतिष्ठितं ।
मृत्युरापद्यते मोहात् सत्येनापद्यतेऽमृतं । सोऽहं सत्यमहिंसार्थी कामक्रोधवहिष्कृतः ।
समाश्रित्य सुखं क्षेमी मृत्युं हास्याम्यमृत्युवत् । शान्तियज्ञरतो दान्तो ब्रह्मयज्ञे स्थितो मुनिः ।
वाङ्मनःकर्म्मयज्ञश्च भविष्याम्युदगायने । पशुयज्ञैः कथं हिंस्रैर्म्मादृशो यष्टुमर्हति ।
अन्तवद्भिरुत प्राज्ञः क्षत्रयज्ञैः पिशाचवत् । आत्मन्येवात्मना जात आत्मनिष्ठोऽप्रजः पितः । ९९६०
आत्मयज्ञो भविष्यामि न मां तारयति प्रजा । यस्य वाङ्मनसी स्यातां सम्यक् प्रणिहिते सदा ।
तपस्त्यागश्च योगश्च स तैः सर्व्वमवाप्नुयात् । नास्ति विद्यासमं चक्षुर्नास्ति विद्यासमं फलं ।
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखं ।

नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च । शीले स्थितिर्द्दण्डविधानमार्ज्जवं ततस्ततश्चोपरमः क्रियाभ्यः ।

किन्ते धनैर्ब्बान्धवैर्व्वाऽपि किन्ते किन्ते दारैर्ब्राह्मण यो मरिष्यसि । आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क्व गताः पिता च । ९९६२

॥ भीष्म उवाच ॥ पुत्त्रस्यैतद्वचः श्रुत्वा तथाऽकार्षीत पिता नृप । तथा त्वमपि वर्त्तस्व सत्यधर्म्मपरायणः ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पितापुत्त्रसंवादे अष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७८ ॥

॥ युधिष्ठिर उवाच ॥ किंशीलः किंसमाचारः किंविद्यः किंपरायणः । प्राप्नोति ब्रह्मणः स्थानं यत् परं प्रकृतेर्ध्रुवं ।
॥ भीष्म उवाच ॥ मोक्षधर्म्मेषु निरतो लघ्वाहारो जितेन्द्रियः । प्राप्नोति परमं स्थानं यत् परं प्रकृतेर्ध्रुवं ।
स्वगृहादभिनिःसृत्य लाभालाभे समो मुनिः । समुपोढेषु कामेषु निरपेक्षः परिव्रजेत् ।
न चक्षुषा न मनसा न वाचा दूषयेदपि । न प्रत्यक्षं परोक्षं वा दूषणं व्याहरेत् क्वचित् । ९९७०
न हिंस्यात् सर्व्वभूतानि मैत्रायणगतश्चरेत् । नेदं जीवितमासाद्य वैरं कुर्व्वीत केनचित् ।
अभिवादास्तितिक्षेत नाभिमन्येत किञ्चन । क्रोध्यमानः प्रियं ब्रूयादाक्रुष्टः कुशलं वदेत् ।
प्रदक्षिणञ्च सव्यञ्च ग्राममध्ये न चाचरेत् । भैक्षचर्य्यामनापन्नो न गच्छेत् पूर्व्वकेतितः ।
अवकीर्णः सुगुप्तश्च न वाचा ह्यप्रियं वदेत् । मृदुः स्यादप्रतिक्रूरो विस्रब्धः स्यादकत्थनः ।
विधूमे न्यस्तमुषले व्यङ्गारे भुक्तवज्जने । अतीतपात्रसञ्चारे भिक्षां लिप्सेत वै मुनिः । ९९७५

प्राणयात्रिकमात्रः स्यान्मात्रालाभेष्वनादृतः । अलाभे न विहन्येत लाभश्चैनं न हर्षयेत् ।

लाभं साधारणं नैच्छेन्न भुञ्जीताभिपूजितः । अभिपूजितलाभं हि जुगुप्सेतैव तादृशः ।

न चान्नदोषान्निन्देत न गुणानभिपूजयेत् । शय्यासने विविक्ते च नित्यमेवाभिपूजयेत् ।

शून्यागारं वृक्षमूलमरण्यमथवा गुहां । अज्ञातचर्य्यां गत्वाऽन्यां ततोऽन्यत्रैव संविशेत् ।

अनुरोधविरोधाभ्यां समः स्यादचलो ध्रुवः । सुकृतं दुष्कृतञ्चोभे नानुरुध्येत कर्म्मणा । ९९८०

नित्यतृप्तः सुसन्तुष्टः प्रसन्नवदनेन्द्रियः । विभीर्जप्यपरो मौनी वैराग्यं समुपाश्रितः ।

अभ्यस्तं भौतिकं पश्यन् भूतानामागतिं गतिं । निःस्पृहः समदर्शी च पक्वापक्वेन वर्त्तयन् ।

आत्मना यः प्रशान्तात्मा लघ्वाहारो जितेन्द्रियः ।

वाचो वेगं मनसः क्रोधवेगं हिंसावेगमुदरोपस्थवेगं । एतान् वेगान् विनयेद्वै तपस्वी निन्दा चास्य हृदयं नोपहन्यात् ।

मध्यस्थ एव तिष्ठेत प्रशंसानिन्दयोः समः । एतत् पवित्रं परमं परिव्राजक आश्रमे । ९९८५

महात्मा सुव्रतो दान्तः सर्व्वत्रैवानपाश्रितः । अपूर्व्वचारकः सौम्यो ह्यनिकेतः समाहितः ।

वानप्रस्थगृहस्थाभ्यां न संसृज्येत कर्हिचित् । अज्ञातलिप्सां लिप्सेत न चैनं हर्ष आविशेत् ।

विजानतां मोक्ष एष श्रमः स्यादविजानतां । मोक्षयानमिदं कृत्स्नं विदुषां हारितोऽब्रवीत् ।

अभयं सर्व्वभूतेभ्यो दत्त्वा यः प्रव्रजेद्गृहात् । लोकास्तेजोमयास्तस्य तथानन्त्याय कल्पते ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि हारीतगीतायां ऊनाशीत्यधिकद्विशततमोऽध्यायः ॥ २७९ ॥

॥ युधिष्ठिर उवाच ॥ धन्या धन्या इति जनाः सर्व्वेऽस्मान् प्रवदन्त्युत । न दुःखिततरः कश्चित् पुमानस्माभिरस्ति ह । ९९९०

लोकसम्भावितैर्दुःखं यत् प्राप्तं कुरुसत्तम । प्राप्य जातिं मनुष्येषु देवैरपि पितामह ।

कदा वयं करिष्यामः संन्यासं दुःखसंज्ञकं । दुःखमेतच्छरीराणां धारणं कुरुसत्तम ।

विमुक्ताः सप्तदशभिर्हेतुभूतैश्च पञ्चभिः । इन्द्रियार्थैर्गुणैश्चैव अष्टाभिश्च पितामह ।

न गच्छन्ति पुनर्भावं मुनयः संशितव्रताः । कदा वयं गमिष्यामो राज्यं हित्वा परन्तप ।

॥ भीष्म उवाच ॥ नास्त्यनन्तं महाराज सर्व्वं संख्यानगोचरं । पुनर्भावोऽपि विख्यातो नास्ति किञ्चिदिहाचलं । ९९९५

न चापि मन्यसे राजन्नेष दोषः प्रसङ्गतः । उद्योगादेव धर्म्मज्ञाः कालेनैव गमिष्यथ ।

ईशोऽयं सततं देही नृपते पुण्यपापयोः । तत एव समुत्थेन तमसा रुध्यतेऽपि च ।

यथाऽञ्जनमयो वायुः पुनर्म्मानःशिलं रजः । अनुप्रविश्य तद्वर्णो दृश्यते रञ्जयन्दिशः ।

तथा कर्म्मफलैर्देही रञ्जितस्तमसा वृतः । विवर्णो वर्णमाश्रित्य देहेषु परिवर्त्तते ।

ज्ञानेन हि यदा जन्तुरज्ञानप्रभवं तमः । व्यपोहति तदा ब्रह्म प्रकाशति सनातनं । १००००

अयत्नसाध्यं मुनयो वदन्ति ये चापि मुक्तास्त उपासितव्याः । त्वया च लोकेन च सामरैश्च तस्मान्न शाम्यन्ति महर्षिसङ्घाः ।

अस्मिन्नर्थे पुरा गीतं शृणुष्वैकमना नृप । यथा दैत्येन वृत्रेण भ्रष्टैश्वर्य्येण चेष्टितं ।

निर्ज्जितेनासहायेन हृतराज्येन भारत । शोचता शत्रुमध्ये बुद्धिमास्थाय केवलां ।

भ्रष्टैश्वर्य्यं पुरा वृत्रमुशना वाक्यमब्रवीत् । कच्चित् पराजितस्याद्य न व्यथा तेऽस्ति दानव ।
॥ वृत्र उवाच ॥ सत्येन तपसा चैव विदित्वा संशयं ह्यहं । न शोचामि न हृष्यामि भूतानामागतिं गतिं । १०००५
कालसंचोदिता जीवा मज्जन्ति नरकेऽवशाः । परितुष्टानि सर्व्वाणि दिव्यान्याहुर्मनीषिणः ।
क्षपयित्वा तु तं कालं गणितं कालचोदिताः । सावशेषेण कालेन सम्भवन्ति पुनः पुनः ।
तिर्य्यग्योनिसहस्राणि गत्वा नरकमेव च । निर्गच्छन्त्यवशा जीवाः कालबन्धनबन्धनाः ।
एवं संसरमाणानि जीवान्यहमदृष्टवान् । यथा कर्म्म तथा लाभ इति शास्त्रनिदर्शनं ।
तिर्य्यग्गच्छन्ति नरकं मानुष्यं दैवमेव च । सुखदुःखे प्रियद्वेष्ये चरित्वा पूर्व्वमेव च । १००१०
कृतान्तविधिसंयुक्तः सर्व्वलोकः प्रपद्यते । गतं गच्छन्ति चाध्वानं सर्व्वभूतानि सर्व्वदा ।
कालसंख्यानसंख्यातं सृष्टिस्थितिपरायणं । तं भाषमाणं भगवानुशना प्रत्यभाषत ।
धीमान् दुष्टप्रलापांस्त्वं तात कस्मात् प्रभाषसे ।
॥ वृत्र उवाच ॥ प्रत्यक्षमेतद्भवतस्तथाऽन्येषां मनीषिणां । मया यज्जयलुब्धेन पुरा तप्तं महत्तपः ।
गन्धानादाय भूतानां रसांश्च विविधानपि । अवर्द्धं त्रीन् समाक्रम्य लोकान् वै स्वेन तेजसा । १००१५
ज्वालामालापरिक्षिप्तो वैहायसचरस्तथा । अजेयः सर्व्वभूतानामासं नित्यमपेतभीः ।
ऐश्वर्य्यं तपसा प्राप्तं भ्रष्टं तच्च स्वकर्म्मभिः । धृतिमास्थाय भगवन् न शोचामि ततस्त्वहं ।
युयुत्सुना महेन्द्रेण पुरा सार्द्धं महात्मना । ततो मे भगवान्दृष्टो हरिर्नारायणः प्रभुः ।
वैकुण्ठः पुरुषोऽनन्तः शुक्लो विष्णुः सनातनः । मुञ्जकेशो हरिश्मश्रुः सर्व्वभूतपितामहः ।
नूनन्तु तस्य तपसः सावशेषं ममास्ति वै । यदहं प्रष्टुमिच्छामि भगवन् कर्म्मणः फलं । १००२०
ऐश्वर्य्यं वै महद्ब्रह्म वर्णे कस्मिन् प्रतिष्ठितं । निवर्त्तते चापि पुनः कथमैश्वर्य्यमुत्तमं ।
कस्माद्भूतानि जीवन्ति प्रवर्त्तन्ते तथा पुनः । किं वा फलं परं प्राप्य जीवस्तिष्ठति शाश्वतः ।
केन वा कर्म्मणा शक्यमथ ज्ञानेन केन वा । तदवाप्तुं फलं विप्र तन्मे व्याख्यातुमर्हसि ।
इतीदमुक्तः स मुनिस्तदानीं प्रत्याह यत्तच्छृणु राजसिंह । मयोच्यमानं पुरुषर्षभ त्वमनन्यचित्तः सह सोदरीयैः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वृत्रगीतासु अशीत्यधिकद्विशततमोऽध्यायः ॥ २८० ॥
॥ उशनोवाच ॥ नमस्तस्मै भगवते देवाय प्रभविष्णवे । यस्य पृथ्वीतलं तात साकाशं बाहुगोचरं । १००२५
मूर्द्धा यस्य त्वनन्तञ्च स्थानं दानवसत्तम । तस्याहं ते प्रवक्ष्यामि विष्णोर्माहात्म्यमुत्तमं ।
तयोः संवदतोरेवमाजगाम महामुनिः । सनत्कुमारो धर्म्मात्मा संशयच्छेदनाय वै ।
स पूजितोऽसुरेन्द्रेण मुनिनोशनसा तथा । निषसादासने राजन् महार्हे मुनिपुङ्गवः ।
तमासीनं महाप्राज्ञमुशना वाक्यमब्रवीत् । ब्रूह्यस्मै दानवेन्द्राय विष्णोर्माहात्म्यमुत्तमं ।
सनत्कुमारस्तु ततः श्रुत्वा प्राह वचोऽर्थवत् । विष्णोर्माहात्म्यसंयुक्तं दानवेन्द्राय धीमते । १००३०
शृणु सर्व्वमिदं दैत्य विष्णोर्माहात्म्यमुत्तमं । विष्णौ जगत् स्थितं सर्व्वमिति विद्धि परन्तप ।
सृजत्येष महाबाहो भूतग्रामं चराचरं । एष चाक्षिपते काले काले विसृजते पुनः ।

अस्मिन् गच्छन्ति विलयमस्माच्च प्रभवन्त्युत। नैव ज्ञानवता शक्यं तपसा नैव चेज्यया।
सम्प्राप्तुमिन्द्रियाणान्तु संयमेनैव शक्यते। बाह्ये चाभ्यन्तरे चैव कर्म्मणो मनसि स्थितः।
निर्म्मलीकुरुते बुद्ध्या सोऽमुत्रानन्त्यमश्नुते। यथा हिरण्यकर्त्ता वै रूप्यमग्नौ विशोधयेत्। १०७४५
बहुशोऽतिप्रयत्नेन महतात्मकृतेन च। तद्वज्जातिशतैर्जीवः शुद्ध्यतेऽल्पेन कर्म्मणा।
यत्नेन महता चैवाप्येकजातौ विशुद्ध्यते। लीलयाऽल्पं यथा गात्रात् प्रमृज्यादात्मनो रजः।
बहुयत्नेन महता दोषनिर्हरणन्तथा। यथा चाल्पेन माल्येन वासितं तिलसर्षपं।
न मुञ्चति स्वकं गन्धं तद्वत्सूक्ष्मस्य दर्शनं। तदेव बहुभिर्माल्यैर्वास्यमानं पुनः पुनः।
विमुञ्चति स्वकं गन्धं माल्यगन्धे च तिष्ठति। एवं जातिशतैर्युक्तो गुणैरेव प्रसङ्गिषु। १०७५०
बुद्ध्या निवर्त्तते दोषो यत्नेनाभ्यासजेन च। कर्म्मणा स्वनुरक्तानि विरक्तानि च दानव।
यथा कर्म्मविशेषांश्च प्राप्नुवन्ति तथा शृणु। यथा च सम्प्रवर्त्तन्ते यस्मिंस्तिष्ठन्ति वा विभो।
तत्तेऽनुपूर्व्व्या व्याख्यास्ये तदिहैकमनाः शृणु। अनादिनिधनः श्रीमान् हरिर्नारायणः प्रभुः।
स वै सृजति भूतानि स्थावराणि चराणि च। स वै सर्व्वेषु भूतेषु क्षरश्चाक्षर एव च।
एकादशविकारात्मा जगत्पिबति रश्मिभिः। पादौ तस्य महीं विद्धि मूर्द्धानं दिवमित्युत। १०७५५
बाहवस्तु दिशो दैत्य श्रोत्रमाकाशमेव च। तस्य तेजोमयः सूर्य्यो मनश्चन्द्रमसि स्थितं।
बुद्धिर्ज्ञानगता नित्यं रसस्त्वप्सु प्रतिष्ठितः। भ्रुवोरनन्तरास्तस्य ग्रहा दानवसत्तम।
नक्षत्रचक्रं नेत्राभ्यां पादयोर्भूश्च दानव। रजस्तमश्च सत्त्वञ्च विद्धि नारायणात्मकं।
सोऽश्रमाणां फलं तात कर्म्मणस्तत्फलं विदुः। अकर्म्मणः फलञ्चैव स एव परमव्ययः।
छन्दांसि यस्य रोमाणि अक्षरञ्च सरस्वती। बहुश्रयो बहुमुखो धर्म्मो हृदि समाश्रितः। १०७६०
स ब्रह्मपरमो धर्म्मस्तपश्च सदसच्च सः। श्रुतिशास्त्रग्रहोपेतः षोडशर्त्विक् क्रतुश्च सः।
पितामहश्च विष्णुश्च सोऽश्विनौ स पुरन्दरः। मित्रोऽथ वरुणश्चैव यमोऽथ धनदस्तथा।
ते पृथग्दर्शनास्तस्य संविदन्ति तथैकतां। एकस्य विद्धि देवस्य सर्व्वं जगदिदं वशे।
नानाभूतस्य दैत्येन्द्र तस्यैकत्वं वदत्ययं। जन्तुः पश्यति विज्ञानात्ततो ब्रह्म प्रकाशते।

संहारविक्षेपसहस्रकोटीस्तिष्ठन्ति जीवाः प्रचरन्ति चान्ये। प्रजाविसर्गस्य च पारिमाण्यं वापीसहस्राणि बहूनि दैत्य। १०७६५
वाप्यः पुनर्योजनविस्तृतास्ताः क्रोशञ्च गम्भीरतयाऽवगाढाः। आयामतः पञ्चशताश्च सर्व्वाः प्रत्येकशो योजनतः प्रवृद्धाः।
वाप्या जलं क्षिप्यति वालकोट्या त्वह्ना सकृच्चाप्यथ न द्वितीयं। तासां क्षये विद्धि परं विसर्गं संहारमेकस्य तथा प्रजानां।
षड्जीववर्णाः परमं प्रमाणं कृष्णो धूम्रो नीलमथास्य मध्यं। रक्तं पुनः सह्यतरं सुखन्तु हारिद्रवर्णं सुसुखञ्च शुक्लं।
परन्तु शुक्लं विमलं विशोकं गतक्लमं सिद्ध्यति दानवेन्द्र। गत्वा तु योनिप्रभवाणि दैत्य सहस्रशः सिद्धिमुपैति जीवः।

गतिश्च यां दर्शनमाह देवो गत्वा शुभं दर्शनमेव चापि । गतिः पुनर्वर्णकृता प्रजानां वर्णस्तथा कालकृतोऽसुरेन्द्र । १००६०

शतं सहस्राणि चतुर्दशेह परा गतिर्जीवगुणस्य दैत्य । आरोहणन्तत् कृतमेव विद्धि स्थानन्तथा निःसरणञ्च तेषां ।

कृष्णस्य वर्णस्य गतिर्निकृष्टा स सज्जते नरके पच्यमानः । स्थानन्तथा दुर्गतिभिस्तु तस्य प्रजाविसर्गान् सुबहून् वदन्ति ।

शतं सहस्राणि ततश्चरित्वा प्राप्नोति वर्णं हरितन्तु पश्चात् । स चैव तस्मिन्निवसत्यनीशो युगक्षये तमसा संवृतात्मा ।

स वै यदा सत्त्वगुणेन युक्तस्तमो व्यपोहन् घटते स्वबुद्ध्या । स लोहितं वर्णमुपैति नीलान्मनुष्यलोके परिवर्त्तते च ।

स तत्र संहारविसर्गमेकं स्वधर्मजैर्बन्धनैः क्लिश्यमानः । ततः स हारिद्रमुपैति वर्णं संहारविक्षेपशते व्यतीते । १००६५

हारिद्रवर्णस्तु प्रजाविसर्गात् सहस्रशस्तिष्ठति सञ्चरन् वै । अविप्रमुक्तो निरये च दैत्य ततः सहस्राणि दशापराणि ।

गतीः सहस्राणि च पञ्च तस्य चत्वारि संवर्त्तकृतानि चैव । विमुक्तमेनं निरयाच्च विद्धि सर्व्वेषु चान्येषु च सम्भवेषु ।

स देवलोके विहरत्यभीक्ष्णं ततश्च्युतो मानुषतामुपैति । संहारविक्षेपशतानि चाष्टौ मर्त्येषु तिष्ठन्नमृतत्वमेति ।

सोऽस्मादथ भ्रश्यति कालयोगात् कृष्णे तले तिष्ठति सर्व्वकष्टे । यथा त्वयं सिध्यति जीवलोकस्तत्तेऽभिधास्याम्यसुरप्रवीर ।

दैवानि स व्यूहशतानि सप्त रक्तो हरिद्रोऽथ तथैव शुक्लः । संश्रित्य सन्धावति शुक्लमेतमष्टावरानर्च्यतमान् स लोकान् । १००७०

अष्टौ च षष्टिश्च शतानि यानि मनोविरुद्धानि महाद्युतीनां । शुक्लस्य वर्णस्य परा गतिर्या त्रीण्येव रुद्धानि महानुभाव ।

संहारविक्षेपमनिष्टमेकं चत्वारि चान्यानि वसत्यनीशः । षष्ठस्य वर्णस्य परा गतिर्या सिद्धा विशिष्टस्य गतक्लमस्य ।

सप्तोत्तरन्तत्र वसत्यनीशः संहारविक्षेपशतं सशेषं । तस्मादुपावृत्य मनुष्यलोके ततो महान्मानुषतामुपैति ।

तस्मादुपावृत्य ततः क्रमेण सोऽग्र्येण सन्तिष्ठति भूतसर्गं । स सप्तकृत्वश्च परैति लोकान् संहारविक्षेपकृतप्रभावः ।

सप्तैव संहारमुपप्लवानि सम्भाव्य सन्तिष्ठति जीवलोके । ततोऽव्ययं स्थानमनन्तमेति देवस्य विष्णोरथ ब्रह्मणश्च । १००७५

शेषस्य चैवाथ नरस्य चैव देवस्य विष्णोः परमस्य चैव । संहारकाले परिदग्धकाया ब्रह्माणमायान्ति सदा प्रजा हि ।

चेष्टात्मनो देवगणाश्च सर्व्वे ये ब्रह्मलोकादपराः स्म तेऽपि । प्रजाविसर्गन्तु सशेषकालं स्थानानि स्वान्येव सरन्ति जीवाः ।

निःशेषतस्तत्पदं यान्ति चान्ते सर्व्वे देवा ये सदृशा मनुष्याः । ये तु च्युताः सिद्धलोकात् क्रमेण तेषां गतिं यान्ति यथाऽनुपूर्व्व्या ।

जीवाः परे तद्बलतुल्यरूपाः स्वं स्वं विधिं यान्ति विपर्य्ययेण । स यावदेवास्ति सशेषभुक्ते प्रजाश्च देव्यौ च तथैव शुक्ले ।

तावत्तदा तेषु विशुद्धभावः संयम्य पञ्चेन्द्रियरूपमेतत् । शुद्धां गतिं तां परमां परैति शुद्धेन नित्यं मनसा विचिन्वन् । १००८०

ततोऽव्ययं स्थानमुपैति ब्रह्म दुष्प्राप्यमभ्येति स शाश्वतं वै। इत्येतदाख्यातमहीनसत्त्व नारायणस्येह बलं मया ते।

॥ वृत्र उवाच ॥ एवं गते मे न विषादोऽस्ति कश्चित् सम्यक् च पश्यामि वचस्तवैतत्। श्रुत्वा तु ते वाचमदीनसत्त्व विकल्मषोऽस्म्यद्य तथा विपाप्मा।

प्रवृत्तमेतद्भगवन्महर्षे महाद्युतेश्चक्रमनन्तवीर्य्यं। विष्णोरनन्तस्य सनातनन्तत् स्थानं सर्गा यत्र सर्व्वे प्रवृत्ताः।

स वै महात्मा पुरुषोत्तमो वै तस्मिन् जगत् सर्व्वमिदं प्रतिष्ठितं।

॥ भीष्म उवाच ॥ एवमुक्त्वा स कौन्तेय वृत्रः प्राणानवासृजत्। योजयित्वा तथात्मानं परं स्थानमवाप्तवान्। १००८५

॥ युधिष्ठिर उवाच ॥ अयं स भगवान् देवः पितामह जनार्द्दनः। सनत्कुमारो वृत्राय यत्तदाख्यातवान् पुरा।

॥ भीष्म उवाच ॥ मूलस्थायी महादेवो भगवान् स्वेन तेजसा। तत्स्थः सृजति तान् भावान् नानारूपान् महामनाः।

तुरीयार्द्धेन तस्येमं विद्धि केशवमच्युतं। तुरीयार्द्धेन लोकांस्त्रीन् भावयत्येष बुद्धिमान्।

अर्व्वाक् स्थितस्तु यः स्थायी कल्पान्ते परिवर्त्तते। स शेते भगवानप्सु योऽसावतिबलः प्रभुः।

तान् विधाता प्रसन्नात्मा लोकांश्चरति शाश्वतान्। १००९०

सर्व्वाण्यशून्यानि करोत्यनन्तः सनातनः सञ्चरते च लोकान्। स चानिरुद्धः सृजते महात्मा तत्स्थं जगत् सर्व्वमिदं विचित्रं।

॥ युधिष्ठिर उवाच ॥ वृत्रेण परमार्थज्ञ दृष्टा मन्येऽऽत्मनो गतिः। शुभा तस्मात् स सुखितो न शोचति पितामह।

शुक्लः शुक्लाभिजातीयः साध्यो नावर्त्ततेऽनघ। तिर्य्यग्गतेश्च निर्मुक्तो निरयाच्च पितामह।

हारिद्रवर्णे रक्ते वा वर्त्तमानस्तु पार्थिव। तिर्य्यगेवानुपश्येत कर्म्मभिस्तामसैर्वृतः।

वयन्तु भृशमापन्ना रक्ता दुःखसुखेऽसुखे। कां गतिं प्रतिपत्स्यामो नीलां कृष्णाधमामथ। १००९५

॥ भीष्म उवाच ॥ शुद्धाभिजनसम्पन्नाः पाण्डवाः संशितव्रताः। विहृत्य देवलोकेषु पुनर्म्मानुष्यमेष्यथ।

प्रजाविसर्गे च सुखेन काले प्रत्येत्य देवेषु सुखानि भुक्त्वा। सुखेन संयास्यथ सिद्धसंख्यां मा वो भयं भूद्विमलाः स्थ सर्व्वे।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वृत्रगीतायां एकाशीत्यधिकद्विशतोऽध्यायः ॥ २८१ ॥

॥ युधिष्ठिर उवाच ॥ अहो धर्म्मिष्ठता तात वृत्रस्यामिततेजसः। यस्य विज्ञानमतुलं विष्णौ भक्तिश्च तादृशी।

दुर्व्विज्ञेयं पदं तात विष्णोरमिततेजसः। कथं वा राजशार्दूल पदन्तु ज्ञातवानसौ।

भवता कथितं ह्येतच्छ्रद्दधे चाहमच्युत। भूयस्तु मे समुत्पन्ना बुद्धिरव्यक्तदर्शनात्। १०१००

कथं विनिहतो वृत्रः शक्रेण पुरुषर्षभ। धर्म्मिष्ठो विष्णुभक्तश्च तत्त्वज्ञश्च पदान्वये।

एतन्मे संशयं ब्रूहि पृच्छते भरतर्षभ। वृत्रस्तु राजशार्दूल यथा शक्रेण निर्ज्जितः।

यथा चैवाभवद्युद्धं तथाचक्ष्व पितामह। विस्तरेण महाबाहो परं कौतूहलं हि मे।

॥ भीष्म उवाच ॥ रथेनेन्द्रः प्रयातो वै सार्द्धं देवगणैः पुरा। ददर्शाथाग्रतो वृत्रं धिष्ठितं पर्व्वतोपमं।

योजनानां शतान्यूर्द्ध्वं पञ्चोच्छ्रितमरिन्दम। शतानि विस्तरेणाथ त्रीण्येवाभ्यधिकानि वै। १०१०५

तत् प्रेक्ष्य तादृशं रूपं त्रैलोक्येनापि दुर्ज्जयं। वृत्रस्य देवाः सन्त्रस्ता न शान्तिमुपलेभिरे।

शक्रस्य तु तदा राजन्नूरुस्तम्भो व्यजायत। भयाद्वृत्रस्य सहसा दृष्ट्वा तद्रूपमुत्तमं।

॥ भीष्म उवाच ॥ आविश्यमाने दैत्ये तु ज्वरेणाथ महासुरे । देवतानामृषीणाञ्च हर्षान्नादो महानभूत् ।
ततो दुन्दुभयश्चैव शङ्खाश्च सुमहास्वनाः । मुरजा डिण्डिमाश्चैव प्रावाद्यन्त सहस्रशः ।
असुराणान्तु सर्व्वेषां स्मृतिलोपो महानभूत् । मायानाशश्च बलवान् क्षणेन समपद्यत । १०१४०
तथाविष्टमथो ज्ञात्वा ऋषयो देवतास्तथा । स्तुवन्तः शक्रमीशानं तथा प्राचोदयन्नपि ।
रथस्थस्य हि शक्रस्य युद्धकाले महात्मनः । ऋषिभिस्तूयमानस्य रूपमासीत् सुदुर्द्दृशं ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वृत्रवधे द्व्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८२ ॥

॥ भीष्म उवाच ॥ वृत्रस्य तु महाराज ज्वराविष्टस्य सर्व्वशः । अभवन् यानि लिङ्गानि शरीरे तानि मे शृणु ।
ज्वलितास्योऽभवद्घोरो वैवर्ण्यञ्चागमत् परं । गात्रकम्पश्च सुमहान् श्वासश्चाप्यभवन्महान् ।
रोमहर्षश्च तीव्रोऽभून्निश्वासश्च महानृप । शिवा चाशिवसङ्काशा तस्य वक्त्रात् सुदारुणा । १०१४५
निष्पपात महाघोरा स्मृतिः सा तस्य भारत । उल्काश्च ज्वलितास्तस्य दीप्ताः पार्श्वे प्रपेदिरे ।
गृध्राः कङ्का बलाकाश्च वाचोऽमुञ्चन् सुदारुणाः । वृत्रस्योपरि संहृष्टाश्चक्रवत् परिबभ्रमुः ।
ततस्तं रथमास्थाय देवाप्यायित आहवे । वज्रोद्यतकरः शक्रस्तं दैत्यं समवैक्षत ।
अमानुषमथो नादं स मुमोच महासुरः । व्यजृम्भ चैव राजेन्द्र तीव्रज्वरसमन्वितः ।
अथास्य जृम्भतः शक्रस्ततो वज्रमवासृजत् । स वज्रः सुमहातेजा कालाग्निसदृशोपमः । १०१५०
क्षिप्रमेव महाकायं वृत्रं दैत्यमपातयत् । ततो नादः समभवत् पुनरेव समन्ततः ।
वृत्रं विनिहतं दृष्ट्वा देवानां भरतर्षभ । वृत्रन्तु हत्वा मघवान् दानवारिर्महायशाः ।
वज्रेण विष्णुयुक्तेन दिवमेव समाविशत् । अथ वृत्रस्य कौरव्य शरीरादभिनिःसृता ।
ब्रह्मवध्या महाघोरा रौद्रा लोकभयावहा । करालदशना भीमा विकृता कृष्णपिङ्गला ।
प्रकीर्णमूर्द्धजा चैव घोरनेत्रा च भारत । कपालमालिनी चैव कृत्येव भरतर्षभ । १०१५५
रुधिरार्द्रा च धर्म्मज्ञ चीरवल्कलवासिनी । साऽभिनिष्क्रम्य राजेन्द्र तादृग्रूपाभयावहा ।
वज्रिणं मृगयामास तदा भरतसत्तम । कस्यचित्त्वथ कालस्य वृत्रहा कुरुनन्दन ।
स्वर्गायाभिमुखः प्रायाल्लोकानां हितकाम्यया । सा विनिःसरमाणन्तु दृष्ट्वा शक्रं महौजसं ।
जग्राह बध्या देवेन्द्रं सुलग्ना चाभवत्तदा । स हि तस्मिन् समुत्पन्ने ब्रह्मबध्याकृते भये ।
नलिन्या बिसमध्यस्थ उवासाब्दगणान् बहून् । अनुसृत्य तु यत्नात्स तया वै ब्रह्महत्यया । १०१६०
तदा गृहीतः कौरव्य निस्तेजाः समपद्यत । तस्या व्यपोहने शक्रः परं यत्नञ्चकार ह ।
न चाशकत्तां देवेन्द्रो ब्रह्मबध्यां व्यपोहितुं । गृहीत एव तु तया देवेन्द्रो भरतर्षभ ।
पितामहमुपागम्य शिरसा प्रत्यपूजयत् । ज्ञात्वा गृहीतं शक्रं स द्विजप्रवरबध्यया ।
ब्रह्मा संचिन्तयामास तदा भरतसत्तम । तामुवाच महाबाहो ब्रह्मबध्यां पितामहः ।
स्वरेण मधुरेणाथ सान्त्वयन्निव भारत । मुच्यतां त्रिदशेन्द्रोऽयं मत्प्रियं कुरु भाविनि । १०१६५
ब्रूहि किन्ते करोम्यद्य कामं किं त्वमिहेच्छसि ।

॥ ब्रह्मवध्युवाच ॥ त्रिलोकपूजिते देवे प्रीते त्रैलोक्यकर्त्तरि । कृतमेवेह मन्यामि निवासन्तु विधत्स्व मे ।
त्वया कृतेयं मर्य्यादा लोकसंरक्षणार्थिना । स्थापना वै सुमहती त्वया देव प्रवर्त्तिता ।
प्रीते तु त्वयि धर्म्मज्ञ सर्व्वलोकेश्वर प्रभो । शक्रादपगमिष्यामि निवासं संविधत्स्व मे ।
॥ भीष्म उवाच ॥ तथेति तां प्राह तदा ब्रह्मवध्यां पितामहः । उपायतः स शक्रस्य ब्रह्मवध्यां व्यपोहत । १०२७०
ततः स्वयम्भुवा ध्यातस्तत्र वह्निर्महात्मना । ब्रह्माणमुपसङ्गम्य ततो वचनमब्रवीत् ।
प्राप्तोऽस्मि भगवन्देव त्वत्सकाशमनिन्दित । यत्कर्त्तव्यं मया देव तद्भवान् वक्तुमर्हति ।
॥ ब्रह्मोवाच ॥ बहुधा विभजिष्यामि ब्रह्मवध्यामिमामहं । शक्रस्याद्य विमोक्षार्थं चतुर्भागं प्रतीच्छ वै ।
॥ अग्निरुवाच ॥ मम मोक्षस्य कोऽन्तो वै ब्रह्मन् ध्यायस्व वै प्रभो । एतदिच्छामि विज्ञातुं तत्त्वतो लोकपूजित ।
॥ ब्रह्मोवाच ॥ यस्त्वां ज्वलन्तमासाद्य स्वयं वै मानवः क्वचित् । बीजौषधिरसैर्वह्ने न यक्ष्यति तमोवृतः । १०२७५
तमेषा यास्यति क्षिप्रं तत्रैव च निवत्स्यति । ब्रह्मवध्या हव्यवाह व्येतु ते मानसो ज्वरः ।
इत्युक्तः प्रतिजग्राह तद्वचो हव्यकव्यभुक् । पितामहस्य भगवांस्तथा च तदभूत्प्रभो ।
ततो वृक्षौषधितृणं समाहूय पितामहः । इममर्थं महाराज वक्तुं समुपचक्रमे ।
ततो वृक्षौषधितृणं तथैवोक्तं यथातथं । व्यथितं वह्निवद्राजन् ब्रह्माणमिदमब्रवीत् ।
अस्माकं ब्रह्मवध्यायाः कोऽन्तो लोकपितामह । दैवेनाभिहतानस्मान् पुनर्हन्तुमर्हसि । १०२८०
वयमग्निं तथा शीतं वर्षञ्च पवनेरितं । सहामः सततं देव तथा च्छेदनभेदने ।
ब्रह्मवध्यामिमामद्य भवतः शासनाद्वयं । ग्रहीष्यामस्त्रिलोकेश मोक्षं चिन्तयतां भवान् ।
॥ ब्रह्मोवाच ॥ पर्व्वकाले तु सम्प्राप्ते यो वै छेदनभेदनं । करिष्यति नरो मोहात्तमेषाऽनुगमिष्यति ।
॥ भीष्म उवाच ॥ ततो वृक्षौषधितृणमेवमुक्तं महात्मना । ब्रह्माणमभिसम्पूज्य जगामाशु यथा गतं ।
आहूयाप्सरसो देवस्ततो लोकपितामहः । वाचा मधुरया प्राह सान्त्वयन्निव भारत । १०२८५
इयमिन्द्रादनुप्राप्ता ब्रह्मवध्या वराङ्गना । चतुर्थमस्या भागञ्च मयोक्ताः सम्प्रतीच्छत ।
॥ अप्सरस ऊचुः ॥ ग्रहणे कृतबुद्धीनां देवेश तव शासनात् । मोक्षं समयतोऽस्माकं चिन्तयस्व पितामह ।
॥ ब्रह्मोवाच ॥ रजस्वलासु नारीषु यो वै मैथुनमाचरेत् । तमेषा यास्यति क्षिप्रं व्येतु वो मानसो ज्वरः ।
॥ भीष्म उवाच ॥ तथेति हृष्टमनस इत्युक्त्वाऽप्सरसां गणाः । स्वानि स्थानानि सम्प्राप्य रेमिरे भरतर्षभ ।
ततस्त्रिलोककृद्देवः पुनरेव महातपाः । अपः सञ्चिन्तयामास ध्यातास्ताश्चाप्यथागमन् । १०२९०
तास्तु सर्व्वाः समागम्य ब्रह्माणममितौजसं । इदमूचुर्व्वचो राजन् प्रणिपत्य पितामहं ।
इमाः स्म देव सम्प्राप्तास्त्वत्सकाशमरिन्दम । शासनात्तव लोकेश समाज्ञापय नः प्रभो ।
॥ ब्रह्मोवाच ॥ इयं वृत्रादनुप्राप्ता पुरुहूतं महाभया । ब्रह्मवध्या चतुर्थांशमस्या यूयं प्रतीच्छत ।
॥ आप ऊचुः ॥ एवं भवतु लोकेश यथा वदसि नः प्रभो । मोक्षं समयतोऽस्माकं सञ्चिन्तयितुमर्हसि ।
त्वं हि देवेश सर्व्वस्य जगतः परमा गतिः । कोऽन्यः प्रसाद्यो हि भवेद्यः कृच्छ्रान्नः समुद्धरेत् । १०२९५
॥ ब्रह्मोवाच ॥ अल्पा इति मतिं कृत्वा यो नरो बुद्धिमोहितः । श्लेष्ममूत्रपुरीषाणि युष्मासु प्रतिमोक्ष्यति ।

तमियं यास्यति क्षिप्रं तत्रैव च निवत्स्यति। तथा वो भविता मोक्ष इति सत्यं ब्रवीमि वः।
ततो विमुच्य देवेन्द्रं ब्रह्मवध्या युधिष्ठिर। यथाविसृष्टं तं वासमगमद्देवशासनात्।
एवं शक्रेण सम्प्राप्ता ब्रह्मवध्या जनाधिप। पितामहमनुज्ञाप्य सोऽश्वमेधमकल्पयत्।
श्रूयते च महाराज सम्प्राप्ता वासवेन वै। ब्रह्मवध्या ततः शुद्धिं हयमेधेन लब्धवान्। १०२००
समवाप्य श्रियं देवो हत्वाऽरींश्च सहस्रशः। प्रहर्षमतुलं लेभे वासवः पृथिवीपते।
वृत्रस्य रुधिराच्चैव शिखण्डाः पार्थ जज्ञिरे। द्विजातिभिरभक्ष्यास्ते दीक्षितैश्च तपोधनैः।
सर्व्वावस्थं त्वमप्येषां द्विजातीनां प्रियं कुरु। इमे हि भूतले देवाः प्रथिताः कुरुनन्दन।
एवं शक्रेण कौरव्य बुद्धिसौक्ष्म्यान्महासुरः। उपायपूर्व्वं निहतो वृत्रो ह्यमिततेजसा।
एवं त्वमपि कौन्तेय पृथिव्यामपराजितः। भविष्यसि यथा देवः शतक्रतुरमित्रहा। १०२०५
ये तु शक्रकथां दिव्यामिमां पर्व्वसु पर्व्वसु। विप्रमध्ये वदिष्यन्ति न ते प्राप्स्यन्ति किल्बिषं।
इत्येतद्वृत्रमाश्रित्य शक्रस्यात्यद्भुतं महत्। कथितं कर्म्म ते तात किं भूयः श्रोतुमिच्छसि।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वृत्रवधे त्र्यशीत्यधिकद्विशततमोऽध्यायः॥ २८३ ॥
॥ युधिष्ठिर उवाच ॥ पितामह महाप्राज्ञ सर्व्वशास्त्रविशारद। अस्मिन् वृत्रवधादेव विवक्षा मम जायते।
ज्वरेण मोहितो वृत्रः कथितस्ते जनाधिप। निहतो वासवेनेह वज्रेणेति तदाऽनघ।
कथमेष महाप्राज्ञ ज्वरः प्रादुर्ब्बभौ कुतः। ज्वरोत्पत्तिं निपुणतः श्रोतुमिच्छाम्यहं प्रभो। १०२१०
॥ भीष्म उवाच ॥ शृणु राजन् ज्वरस्येमं सम्भवं लोकविश्रुतं। विस्तरं चास्य वक्ष्यामि यादृशं चैव भारत।
पुरा मेरोर्महाराज शृङ्गं त्रैलोक्यपूजितं। ज्योतिष्कं नाम सावित्रं सर्व्वरत्नविभूषितं।
अप्रमेयमनाधृष्यं सर्व्वलोकेषु भारत। तत्र देवो गिरितटे हेमधातुविभूषिते।
पर्य्यङ्क इव विभ्राजन्नुपविष्टो बभूव ह। शैलराजसुता चास्य नित्यं पार्श्वे स्थिता बभौ।
तथा देवा महात्मानो वसवश्चामितौजसः। तथैव च महात्मानावश्विनौ भिषजाम्वरौ। १०२१५
तथा वैश्रवणो राजा गुह्यकैरभिसंवृतः। यक्षाणामीश्वरः श्रीमान् कैलासनिलयः प्रभुः।
उपासन्त महात्मानमुशना च महामुनिः। सनत्कुमारप्रमुखास्तथैव च महर्षयः।
अङ्गिरःप्रमुखाश्चैव तथा देवर्षयोऽपरे। विश्वावसुश्च गन्धर्व्वस्तथा नारदपर्व्वतौ।
अप्सरोगणसङ्घाश्च समाजग्मुरनेकशः। ववौ सुखः शिवो वायुर्नानागन्धवहः शुचिः।
सर्व्वर्त्तुकुसुमोपेताः पुष्पवन्तो द्रुमास्तथा। तथा विद्याधराश्चैव सिद्धाश्चैव तपोधनाः। १०२२०
महादेवं पशुपतिं पर्य्युपासन्त भारत। भूतानि च महाराज नानारूपधराण्यथ।
राक्षसाश्च महारौद्राः पिशाचाश्च महाबलाः। बहुरूपधरा हृष्टा नानाप्रहरणोद्यताः।
देवस्यानुचरास्तत्र तस्थिरे चानलोपमाः। नन्दी च भगवांस्तत्र देवस्यानुमते स्थितः।
प्रगृह्य ज्वलितं शूलं दीप्यमानः स्वतेजसा। गङ्गा च सरितां श्रेष्ठा सर्व्वतीर्थजलोद्भवा।
पर्य्युपासत तं देवं रूपिणी कुरुनन्दन। स एवं भगवांस्तत्र पूज्यमानः सुरर्षिभिः। १०२२५

देव्या सुमहातेजा महादेवो यथासुखम्। कस्यचित्त्वथ कालस्य दक्षो नाम प्रजापतिः।
पूर्व्वोक्तेन विधानेन यक्ष्यमाणोऽन्वपद्यत। ततस्तस्य मखं देवाः सर्व्वे शक्रपुरोगमाः।
गमनाय समागम्य बुद्धिमापेदिरे तदा। ते विमानैर्महात्मानो ज्वलितैर्ज्वलनप्रभाः।
देवस्यानुमते गच्छन् गङ्गाद्वारमिति श्रुतिः। प्रस्थिता देवता दृष्ट्वा शैलराजसुता तदा।
उवाच वचनं साध्वी देवं पशुपतिं पतिं। भगवन् क्व नु यान्त्येते देवाः शक्रपुरोगमाः। १०२३०
ब्रूहि तत्त्वेन तत्त्वज्ञ संशयो मे महानयं।
॥ महेश्वर उवाच ॥ दक्षो नाम महाभागे प्रजानां पतिरुत्तमः। हयमेधेन यजते तत्र यान्ति दिवौकसः।
॥ उमोवाच ॥ यज्ञमेतं महादेव किमर्थं नाधिगच्छसि। केन वा प्रतिषेधेन गमनन्ते न विद्यते।
॥ महेश्वर उवाच ॥ सुरैरेव महाभागे पूर्व्वमेतदनुष्ठितं। यज्ञेषु सर्व्वेषु मम न भाग उपकल्पितः।
पूर्व्वोपायोपपन्नेन मार्गेण वरवर्णिनि। न मे सुराः प्रयच्छन्ति भागं यज्ञस्य धर्म्मतः। १०२३५
॥ उमोवाच ॥ भगवन् सर्व्वभूतेषु प्रभावाभ्यधिको गुणैः। अजय्यश्चाप्यधृष्यश्च तेजसा यशसा श्रिया।
अनेन ते महाभाग प्रतिषेधेन भागतः। अतीव दुःखमुत्पन्नं वेपथुश्च ममानघ।
॥ भीष्म उवाच ॥ एवमुक्त्वा तु सा देवी देवं पशुपतिं पतिं। तूष्णीम्भूताऽभवद्राजन् दह्यमानेन चेतसा।
अथ देव्या मतं ज्ञात्वा हृद्गतं यच्चिकीर्षितं। स समाज्ञापयामास तिष्ठ त्वमिति नन्दिनं।
ततो योगबलं कृत्वा सर्व्वयोगेश्वरेश्वरः। तं यज्ञं स महातेजा भीमैरनुचरैस्तदा। १०२४०
सहसा घातयामास देवदेवः पिनाकधृक्। केचिन्नादानमुञ्चन्त केचिद्धासांश्च चक्रिरे।
रुधिरेणापरे राजंस्तत्राग्निं समवाकिरन्। केचिद्यूपान् समुत्पाट्य बभ्रमुर्विकृताननाः।
आस्यैरन्ये चाग्रसन्त तथैव परिचारकान्। ततः स यज्ञो नृपते वध्यमानः समन्ततः।
आस्थाय मृगरूपं वै खमेवाभ्यगमत्तदा। तन्तु यज्ञं तथारूपं गच्छन्तमुपलभ्य सः।
धनुरादाय बाणेन तदाऽन्वसरत प्रभुः। ततस्तस्य सुरेशस्य क्रोधादमिततेजसः। १०२४५
ललाटात्प्रसृतो घोरः स्वेदविन्दुर्बभूव ह। तस्मिन् पतितमात्रे च स्वेदविन्दौ तदा भुवि।
प्रादुर्ब्बभूव सुमहानग्निः कालानलोपमः। तत्र चाजायत तदा पुरुषः पुरुषर्षभ।
ह्रस्वोऽतिमात्रं रक्ताक्षो हरिश्मश्रुर्विभीषणः। ऊर्द्ध्वकेशोऽतिरोमाङ्गः श्येनोलूकस्तथैव च।
करालः कृष्णवर्णश्च रक्तवासास्तथैव च। तं यज्ञं सुमहासत्त्वोऽदहत्कक्षमिवानलः।
व्यचरत्सर्व्वतो देवान् प्राद्रवत्स ऋषींस्तथा। देवाश्चाप्यद्रवन् सर्व्वे ततो भीता दिशो दश। १०२५०
तेन तस्मिन् विचरता पुरुषेण विशाम्पते। पृथिवी व्यचलद्राजन्नतीव भरतर्षभ।
हाहाभूतं जगत्सर्व्वमुपलक्ष्य तदा प्रभुः। पितामहो महादेवं दर्शयन् प्रत्यभाषत।
॥ ब्रह्मोवाच ॥ भवतोऽपि सुराः सर्व्वे भागं दास्यन्ति वै प्रभो। क्रियतां प्रतिसंहारः सर्व्वदेवेश्वर त्वया।
इमा हि देवताः सर्व्वा ऋषयश्च परन्तप। तव क्रोधान्महादेव न शान्तिमुपलेभिरे।
यश्चैष पुरुषो जातः स्वेदात्ते विबुधोत्तम। ज्वरो नामैष धर्म्मज्ञ लोकेषु प्रचरिष्यति। १०२५५

एकीभूतस्य न त्वस्य धारणे तेजसः प्रभो। समर्था सकला पृथ्वी बहुधा सृज्यतामयं।
इत्युक्तो ब्रह्मणा देवो भागे चापि प्रकल्पिते। भगवन्तं तथेत्याह ब्रह्माणममितौजसं।
परां च प्रीतिमगमदुत्स्मयंश्च पिनाकधृक्। अवाप च तदा भागं यथोक्तं ब्रह्मणा भवः।
ज्वरञ्च सर्व्वधर्म्मज्ञो बहुधा व्यसृजत्तदा। शान्त्यर्थं सर्व्वभूतानां शृणु तच्चापि पुत्रक।
शीर्षाभितापो नागानां पर्व्वतानां शिलाजतु। अपान्तु नीलिकां विद्यान्निर्म्मोकं भुजगेषु च। १०२६०
खोरकः सौरभेयाणामूषरं पृथिवीतले। पशूनामपि धर्म्मज्ञ दृष्टिप्रत्यवरोधनं।
रन्ध्रागतमथाश्वानां शिखोद्भेदश्च वर्हिणां। नेत्ररोगः कोकिलस्य ज्वरः प्रोक्तो महात्मना।
अवीनां पित्तभेदश्च सर्व्वेषामिति नः श्रुतं। शुकानामपि सर्व्वेषां हिक्किका प्रोच्यते ज्वरः।
शार्दूलेष्वथ धर्म्मज्ञ श्रमो ज्वर इहोच्यते। मानुषेषु तु धर्म्मज्ञ ज्वरो नामैष भारत।
मरणे जन्मनि तथा मध्ये चाविशते नरं। एतन्माहेश्वरं तेजो ज्वरो नाम सुदारुणः। १०२६५
नमस्यश्चैव मान्यश्च सर्व्वप्राणिभिरीश्वरः। अनेन हि समाविष्टो वृत्रो धर्म्मभृताम्वरः।
व्यजृम्भत ततः शक्रस्तस्मै वज्रमवासृजत्। प्रविश्य वज्रं वृत्रञ्च दारयामास भारत।
दारितश्च स वज्रेण महायोगी महासुरः। जगाम परमं स्थानं विष्णोरमिततेजसः।
विष्णुभक्त्या हि तेनेदं जगद्व्याप्तमभूत्तदा। तस्माच्च निहतो युद्धे विष्णोः स्थानमवाप्तवान्।
इत्येष वृत्रमाश्रित्य ज्वरस्य महतो मया। विस्तरः कथितः पुत्र किमन्यत्प्रब्रवीमि ते। १०२७०
इमां ज्वरोत्पत्तिमदीनमानसः पठेत्सदा यः सुसमाहितो नरः। विमुक्तरोगः स सुखी मुदा युतो लभेत कामान् स यथा मनीषितान्।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि ज्वरोत्पत्तिकथने चतुरशीत्यधिकद्विशतोऽध्यायः॥ २८४ ॥

॥ जनमेजय उवाच ॥ प्राचेतसस्य दक्षस्य कथं वैवस्वतेऽन्तरे। विनाशमगमद्ब्रह्मन् हयमेधः प्रजापतेः।
देव्या मन्युकृतं मत्वा क्रुद्धः सर्व्वात्मकः प्रभुः। प्रसादात्तस्य दक्षेण स यज्ञः सन्धितः कथं।
एतद्वेदितुमिच्छेयं तन्मे ब्रूहि यथातथं।
॥ वैशम्पायन उवाच ॥ पुरा हिमवतः पृष्ठे दक्षो वै यज्ञमाहरत्। गङ्गाद्वारे शुभे देशे ऋषिसिद्धनिषेविते। १०२७५
गन्धर्व्वाप्सरसाकीर्णे नानाद्रुमलतावृते। ऋषिसंघैः परिवृतं दक्षं धर्म्मभृतां वरं।
पृथिव्यामन्तरीक्षे च ये च स्वर्लोकवासिनः। सर्व्वे प्राञ्जलयो भूत्वा उपतस्थुः प्रजापतिं।
देवदानवगन्धर्व्वाः पिशाचोरगराक्षसाः। हाहाहूहूश्च गन्धर्व्वौ तुम्बुरुर्नारदस्तथा।
विश्वावसुर्विश्वसेनो गन्धर्व्वाप्सरसस्तथा। आदित्या वसवो रुद्राः साध्याः सह मरुद्गणैः।
इन्द्रेण सहिताः सर्व्वे आगता यज्ञभागिनः। उष्मपाः सोमपाश्चैव धूमपा आज्यपास्तथा। १०२८०
ऋषयः पितरश्चैव आगता ब्रह्मणा सह। एते चान्ये च बहवो भूतग्रामाश्चतुर्विधाः।
जरायुजाण्डजाश्चैव सहसा स्वेदजोद्भिजैः। आहूता मन्त्रिताः सर्व्वे देवाश्च सह पत्निभिः।
विराजन्ते विमानस्था दीप्यमाना इवाग्नयः। तान्दृष्ट्वा मन्युनाविष्टो दधीचिर्व्वाक्यमब्रवीत्।

नायं यज्ञो न वा धर्म्मो यत्र रुद्रो न इज्यते । बधबन्धं प्रपन्ना वै किन्नु कालस्य पर्य्ययः ।
किन्नु मोहान्न पश्यन्ति विनाशं पर्य्युपस्थितं । उपस्थितं महाघोरं न बुध्यन्ति महाध्वरे । १०२८५
इत्युक्त्वा स महायोगी पश्यति ध्यानचक्षुषा । स पश्यति महादेवं देवीञ्च वरदां शुभां ।
नारदञ्च महात्मानं तस्या देव्याः समीपतः । सन्तोषं परमं लेभे इति निश्चित्य योगवित् ।
एकमन्त्रास्तु ते सर्व्वे येनेशो न निमन्त्रितः । तस्माद्देशादपाक्रम्य दधीचिर्व्वाक्यमब्रवीत् ।
अपूज्यपूजनाच्चैव पूज्यानाञ्चाप्यपूजनात् । नृघातकसमं पापं शश्वत् प्राप्नोति मानवः ।
अनृतं नोक्तपूर्व्वं मे न च वक्ष्ये कदाचन । देवतानामृषीणाञ्च मध्ये सत्यं ब्रवीम्यहं । १०२९०
आगतं पशुभर्त्तारं स्रष्टारं जगतः पतिं । अध्वरे यज्ञभोक्तारं सर्व्वेषां पश्यत प्रभुं ।
॥ दक्ष उवाच ॥ सन्ति नो बहवो रुद्राः शूलहस्ताः कपर्द्दिनः । एकादशस्थानगता नाहं वेद्मि महेश्वरं ।
॥ दधीचिरुवाच ॥ सर्व्वेषामेव मन्त्रोऽयं येनाशो न निमन्त्रितः । यथाऽहं शङ्करादूर्द्ध्वं नान्यं पश्यामि दैवतं ।
तथा दक्षस्य विपुलो यज्ञोऽयं न भविष्यति ।

॥ दक्ष उवाच ॥ एतन्मखेशाय सुवर्णपात्रे हविः समस्तं विधिमन्त्रपूतं । विष्णोर्नयाम्यप्रतिमस्य भागं प्रभुर्व्विभुश्चाहवनीय एषः । १०२९५

॥ देव्युवाच ॥ किं नाम दानं नियमं तपो वा कुर्य्यामहं येन पतिर्म्ममाद्य । लभेत भागं भगवानचिन्त्यो ह्यर्द्धं तथा भागमथो तृतीयं ।

एवं ब्रुवाणां भगवान् स्वपत्नीं प्रहृष्टरूपः क्षुभितामुवाच । न वेत्सि मां देवि कृशोदराङ्गि किन्नाम युक्तं वचनं मखेशे ।
अहं विजानामि विशालनेत्रे ध्यानेन हीना न विदन्त्यसन्तः । तवाद्य मोहेन च सेन्द्रदेवा लोकास्त्रयः सर्व्वत एव मूढाः ।
मामध्वरे शंसितारः स्तुवन्ति रथन्तरं सामगाश्चोपगान्ति । मां ब्राह्मणा ब्रह्मविदो यजन्ते ममाध्वर्य्यवः कल्पयन्ते च भागं ।

॥ देव्युवाच ॥ सुप्राकृतोऽपि पुरुषः सर्व्वः स्त्रीजनसंसदि । स्तौति गर्व्वायते चापि स्वमात्मानं न संशयः । १०३००
॥ भगवानुवाच ॥ नात्मानं स्तौमि देवेशि पश्य मे तनुमध्यमे । यं स्रक्ष्यामि वरारोहे यागार्थे वरवर्णिनि ।
इत्युक्त्वा भगवान् पत्नीमुमां प्राणैरपि प्रियां । सोऽसृजद्भगवान् वक्त्राद्भूतं घोरप्रहर्षणं ।
तमुवाचाक्षिप मखं दक्षस्येति महेश्वरः । ततो वक्त्राद्विमुक्तेन सिंहेनैकेन लीलया ।
देव्या मन्युव्यपोहार्थं हतो दक्षस्य वै क्रतुः । मन्युना च महाभीमा महाकाली महेश्वरी ।
आत्मनः कर्म्मसाक्षित्वे तेन सार्द्धं सहानुगा । देवस्यानुमतं मत्वा प्रणम्य शिरसा ततः । १०३०५
आत्मनः सदृशः शौर्य्याद्बलरूपसमन्वितः । स एव भगवान् क्रोधः प्रतिरूपसमन्वितः ।
अनन्तबलवीर्य्यश्च अनन्तबलपौरुषः । वीरभद्र इति ख्यातो देव्या मन्युप्रमार्ज्जकः ।
सोऽसृजद्रोमकूपेभ्यो रौम्याख्यान् गणेश्वरान् । रुद्रतुल्या गणा रौद्रा रुद्रवीर्य्यपराक्रमाः ।
ते निपेतुस्ततस्तूर्णं दक्षयज्ञविहिंसया । भीमरूपा महाकायाः शतशोऽथ सहस्रशः ।
ततः किलकिलाशब्दैराकाशं पूरयन्ति च । तेन शब्देन महता त्रस्तास्तत्र दिवौकसः । १०३१०
पर्व्वताश्च व्यशीर्य्यन्त चकम्पे च वसुन्धरा । मारुताश्चैव घूर्णन्ते चुक्षुभे वरुणालयः ।

अग्नयो नैव दीप्यन्ते नैव दीप्यति भास्करः। ग्रहा नैव प्रकाशन्ते नक्षत्राणि न चन्द्रमाः।
ऋषयो न प्रकाशन्ते न देवा न च मानुषाः। एवन्तु तिमिरीभूते निर्द्दहन्त्यपमानिताः।
प्रहरन्त्यपरे घोरा यूपानुत्पाटयन्ति च। प्रमर्द्दन्ति तथा चान्ये विमर्द्दन्ति तथा रे।
आधावन्ति प्रधावन्ति वायुवेगा मनोजवाः। चूर्ण्यन्ते यज्ञपात्राणि दिव्यान्याभरणानि च। १०२१५
विशीर्णा इव दृश्यन्ते तारा इव नभस्तले। दिव्यान्नपानभक्ष्याणां राशयः पर्व्वतोपमाः।
क्षीरनद्योऽथ दृश्यन्ते घृतपायसकर्द्दमाः। दधिमण्डोदका दिव्याः खण्डशर्करवालुकाः।
षड्रसा निवहन्त्येता गुडकुल्या मनोरमाः। उच्चावचानि मांसानि भक्ष्याणि विविधानि च।
पानकानि च दिव्यानि लेह्यचूष्याणि यानि च। भुञ्जते विविधैर्व्वक्त्रैर्व्विलुम्पन्त्याक्षिपन्ति च।
रुद्रकोपान्महाकायाः कालाग्निसदृशोपमाः। क्षोभयन् सुरसैन्यानि भीषयन्तः समन्ततः। १०२२०
क्रीडन्ति विविधाकाराश्चिक्षिपुः सुरयोषितः। रुद्रक्रोधात् प्रयत्नेन सर्व्वदेवैः सुरक्षिते।
तं यज्ञमदहच्छीघ्रं रुद्रकर्म्मा समन्ततः। चकार भैरवं नादं सर्व्वभूतभयङ्करं।
छित्त्वा शिरो वै यज्ञस्य ननाद च मुमोद च। ततो ब्रह्मादयो देवा दक्षश्चैव प्रजापतिः।
ऊचुः प्राञ्जलयः सर्व्वे कथ्यतां को भवानिति।
॥ वीरभद्र उवाच ॥ नाहं रुद्रो न वा देवो नैव भोक्तुमिहागतः। देव्या मन्युकृतं मत्वा क्रुद्धः सर्व्वात्मकः प्रभुः। १०२२५
द्रष्टुं वा नैव विप्रेन्द्रा नैव कौतूहलेन वा। तव यज्ञविघातार्थं संप्राप्तं विद्धि मामिह।
वीरभद्र इति ख्यातो रुद्रकोपाद्विनिःसृतः। भद्रकालीति विख्याता देव्याः कोपाद्विनिःसृता।
प्रेषितौ देवदेवेन यज्ञान्तिकमिहागतौ। शरणं गच्छ विप्रेन्द्र देवदेवमुमापतिं।
वरं क्रोधोऽपि देवस्य वरदानं न चान्यतः। वीरभद्रवचः श्रुत्वा दक्षो धर्म्मभृताम्वरः।
तोषयामास स्तोत्रेण प्रणिपत्य महेश्वरं। प्रपद्ये देवमीशानं शाश्वतं ध्रुवमव्ययं। १०२३०
महादेवं महात्मानं विश्वस्य जगतः पतिं। दक्षः प्रजापतिर्येन्द्रैर्व्वेदैः सुसमाहितैः।
आहूता देवताः सर्व्वा ऋषयश्च तपोधनाः। देवो नाहूयते तत्र विश्वकर्म्मा महेश्वरः।
तत्र क्रुद्धा महादेवी गणांस्तत्र व्यसर्ज्जयत्। प्रदीप्ते यज्ञवाटे तु विद्रुतेषु द्विजातिषु।
तारागणमनुप्राप्ते रौद्रे दीप्ते महात्मनि। शूलनिर्भिन्नहृदयैः कूजद्भिः परिचारकैः।
निखातोत्पाटितैर्यूपैरपविद्धैरितस्ततः। उत्पतद्भिः पतद्भिश्च गृध्रैरामिषगृद्धिभिः। १०२३५
पक्षवातविनिर्द्धूतैः शिवाशतनिनादितैः। यक्षगन्धर्व्वसङ्घैश्च पिशाचोरगराक्षसैः।
प्राणापानौ संनिरुध्य वक्त्रस्थानेन यत्नतः। विचार्य्य सर्व्वतो दृष्टिं बहुदृक्छिरमित्रजित्।
सहसा देवदेवेशो ह्यग्निकुण्डात् समुत्थितः। बिभ्रत् सूर्य्यसहस्रस्य तेजः संवर्त्तकोपमः।
स्मितं कृत्वाऽब्रवीद्वाक्यं ब्रूहि किं करवाणि ते। श्राविते च महाध्याये देवानां गुरुणा ततः।
तमुवाचाञ्जलिं कृत्वा दक्षो देवं प्रजापतिः। भीतशङ्कितवित्रस्तः सवाष्पवदनेक्षणः। १०२४०
यदि प्रसन्नो भगवान् यदि वाऽहं भवत्प्रियः। यदि चाहमनुग्राह्यो यदि वा वरदो मम।

यद्गन्धं भक्षितं पीतमशितं यच्च नाशितं । चूर्णीकृतापविद्धञ्च यज्ञसम्भारमीदृशं ।
दीर्घकालेन महता प्रयत्नेन सुसञ्चितं । तन्न मिथ्या भवेद्यन्मे वरमेतमहं वृणे ।
तथाऽस्त्वित्याह भगवान् भगनेत्रहरो हरः । धर्म्माध्यक्षो विरूपाक्षस्त्र्यक्षो देवः प्रजापतिः ।
जानुभ्यामवनीं गत्वा दक्षो लब्ध्वा भवाद्वरं । नाम्नामष्टसहस्रेण स्तुतवान् वृषभध्वजं । १०२०५

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि दक्षयज्ञविनाशे पञ्चाशीत्यधिकद्विशततमोऽध्यायः ॥ २८५ ॥

॥ युधिष्ठिर उवाच ॥ यैर्नामभिस्तु भगवान् दक्षो देवं प्रजापतिः । वक्तुमर्हसि मे तात श्रोतुं श्रद्धा ममानघ ।
॥ भीष्म उवाच ॥ श्रूयतां देवदेवस्य नामान्यद्भुतकर्म्मणः । गूढव्रतस्य गुह्यानि प्रकाशानि च भारत ।
नमस्ते देवदेवेश देवारिबलसूदन । देवेन्द्र बलविष्टम्भ देवदानवपूजित ।
सहस्राक्ष विरूपाक्ष त्र्यक्ष यक्षाधिप प्रिय । सर्व्वतः पाणिपादान्त सर्व्वतोऽक्षिशिरोमुख ।
सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठसि । शङ्कुकर्ण महाकर्ण कुम्भकर्णार्णवालय । १०२१०
गजेन्द्रकर्ण गोकर्ण पाणिकर्ण नमोऽस्तु ते । शतोदर शतावर्त्त शतजिह्व नमोऽस्तु ते ।
गायन्ति त्वां गायत्रिणो अर्च्चयन्त्यर्कमर्किणः । ब्रह्माणं त्वां शतक्रतुमूर्द्ध्वं खमिव मेनिरे ।
मूर्त्तौ हि ते महामूर्त्ते समुद्राम्बरसन्निभ । सर्व्वा वै देवता ह्यस्मिन् गावो गोष्ठ इवासते ।
भवच्छरीरे पश्यामि सोममग्निं जलेश्वरं । आदित्यमथ वै विष्णुं ब्रह्माणञ्च बृहस्पतिं ।
भगवान् कारणं कार्य्यं क्रिया करणमेव च । असतश्च सतश्चैव तथैव प्रभवाप्ययौ । १०२१५
नमो भवाय शर्व्वाय रुद्राय वरदाय च । पशूनां पतये नित्यं नमोऽस्त्वन्धकघातिने ।
त्रिजटाय त्रिशीर्षाय त्रिशूलवरपाणिने । त्र्यम्बकाय त्रिनेत्राय त्रिपुरघ्नाय वै नमः ।
नमश्चण्डाय मुण्डाय अण्डायाण्डधराय च । दण्डिने समकर्णाय दण्डिमुण्डाय वै नमः ।
नमोर्द्ध्वदंष्ट्रकेशाय शुक्लायावतताय च । विलोहिताय धूम्राय नीलग्रीवाय वै नमः ।
नमोऽस्त्वप्रतिरूपाय विरूपाय शिवाय च । सूर्य्याय सूर्य्यमालाय सूर्य्यध्वजपताकिने । १०२२०
नमः प्रमथनाथाय वृषस्कन्धाय धन्विने । शत्रुन्दमाय दण्डाय पर्णचीरपटाय च ।
नमो हिरण्यगर्भाय हिरण्यकवचाय च । हिरण्यकृतचूडाय हिरण्यपतये नमः ।
नमस्तुताय स्तुत्याय स्तूयमानाय वै नमः । सर्व्वाय सर्व्वभक्ष्याय सर्व्वभूतान्तरात्मने ।
नमो होत्रेऽथ मन्त्राय शुक्लध्वजपताकिने । नमो नाभाय नाभ्याय नमः कटकटाय च ।
नमोऽस्तु कृशनाशाय कृशाङ्गाय कृशाय च । संहृष्टाय नमस्तुभ्यं नमः किलकिलाय च । १०२२५
नमोऽस्तु शयमानाय शयितायोत्थिताय च । स्थिताय धावमानाय मुण्डाय जटिलाय च ।
नमो नर्त्तनशीलाय मुखवादित्रवादिने । नाद्योपहारलुब्धाय गीतवादित्रशालिने ।
नमो ज्येष्ठाय श्रेष्ठाय बलप्रमथनाय च । कालनाथाय कल्पाय क्षयायोपक्षयाय च ।
भीमदुन्दुभिहासाय भीमव्रतधराय च । उग्राय च नमो नित्यं नमोऽस्तु दशबाहवे ।
नमः कपालहस्ताय चितिभस्मप्रियाय च । विभीषणाय भीष्माय भीमव्रतधराय च । १०२३०

नमो विकृतवक्त्राय खड्गजिह्वाय दंष्ट्रिणे । पक्वाममांसलुब्धाय तुम्बीवीणाप्रियाय च ।
नमो वृषाय वृष्याय गोवृषाय वृषाय च । कटङ्कटाय दण्डाय नमः पचपचाय च ।
नमः सर्व्ववरिष्ठाय वराय वरदाय च । वरमाल्यगन्धवस्त्राय वरातिवरदे नमः ।
नमो रक्तविरक्ताय भावनायाक्षमालिने । सम्भिन्नाय विभिन्नाय च्छायायातपनाय च ।
अघोरघोररूपाय घोरघोरतराय च । नमः शिवाय शान्ताय नमः शान्ततमाय च । १०३७५
एकपाद्बहुनेत्राय एकशीर्षे नमो नमः । क्षुद्राय क्षुद्रलुब्धाय संविभागप्रियाय च ।
पञ्चालाय सिताङ्गाय नमः शमशमाय च । नमश्चण्डिकघण्टाय घण्टायाघण्टघण्टिने ।
सहस्राध्मातघण्टाय घण्टामालाप्रियाय च । प्राणघण्टाय गन्धाय नमः कलकलाय च ।
हुंहुंहुंकारपाराय हुंहुंकारप्रियाय च । नमः शमशमे नित्यं गिरिवृक्षालयाय च ।
गर्भमांसशृगालाय तारकाय तराय च । नमो यज्ञाय यजिने हुताय प्रहुताय च । १०३८०
यज्ञवाहाय दान्ताय तप्याय तपनाय च । नमस्तटाय तव्याय तटानां पतये नमः ।
अन्नदायान्नपतये नमस्त्वन्नभुजे तथा । नमः सहस्रशीर्षाय सहस्रचरणाय च ।
सहस्रोद्यतशूलाय सहस्रनयनाय च । नमो बालार्कवर्णाय बालरूपधराय च ।
बालानुचरगुप्ताय बालक्रीडनकाय च । नमो वृद्धाय लुब्धाय क्षुब्धाय क्षोभणाय च ।
तरङ्गाङ्कितकेशाय मुञ्जकेशाय वै नमः । नमः षट्कर्म्मतुष्टाय त्रिकर्म्मनिरताय च । १०३८५
वर्णाश्रमाणां विधिवत् पृथक्कर्म्मनिवर्त्तिने । नमो घुष्याय घोषाय नमः कलकलाय च ।
श्वेतपिङ्गलनेत्राय कृष्णरक्तेक्षणाय च । प्राणभग्नाय दण्डाय स्फोटनाय कृशाय च ।
धर्म्मकामार्थमोक्षाणां कथनीयकथाय च । सांख्याय सांख्यमुख्याय सांख्ययोगप्रवर्त्तिने ।
नमो रथ्यविरथ्याय चतुष्पथरताय च । कृष्णाजिनोत्तरीयाय व्यालयज्ञोपवीतिने ।
ईशानवज्रसंघात हरिकेश नमोऽस्तु ते । त्र्यम्बिकाम्बिकनाथाय व्यक्ताव्यक्त नमोऽस्तु ते । १०३९०
काम कामद कामघ्न तृप्तातृप्तविचारिणे । सर्व्व सर्व्वद सर्व्वघ्न सन्ध्याराग नमोऽस्तु ते ।
महामेघचयप्रख्य महाकाल नमोऽस्तु ते । स्थूलजीर्णाङ्गजटिले वल्कलाजिनधारिणे ।
दीप्तसूर्य्याग्निजटिले वल्कलाजिनवाससे । सहस्रसूर्य्यप्रतिम तपोनित्य नमोऽस्तु ते ।
उन्मादन शतावर्त्त गङ्गातोयार्द्रमूर्द्धज । चन्द्रावर्त्त युगावर्त्त मेघावर्त्त नमोऽस्तु ते ।
त्वमन्नमन्नभोक्ता च अन्नदोऽन्नभुगेव च । अन्नस्रष्टा च पक्ता च पक्वभुक् पवनोऽनलः । १०३९५
जरायुजाण्डजाश्चैव स्वेदजाश्च तथोद्भिजाः । त्वमेव देवदेवेश भूतग्रामश्चतुर्व्विधः ।
चराचरस्य स्रष्टा त्वं प्रतिहर्त्ता तथैव च । त्वामाहुर्ब्रह्मविदुषो ब्रह्म ब्रह्मविदाम्वर ।
मनसः परमा योनिः खं वायुर्ज्योतिषां निधिः । ऋक्सामानि तथोङ्कारमाहुस्त्वां ब्रह्मवादिनः ।
हायि हायि हुवा होयि हुवा होयि तथाऽसकृत् । गायन्ति त्वां सुरश्रेष्ठ सामगा ब्रह्मवादिनः ।
यजुर्म्मय ऋङ्मयश्च त्वमाहुतिमयस्तथा । पठ्यसे श्रुतिभिश्चैव वेदोपनिषदां गणैः । १०४००

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णावराश्च ये । त्वमेव मेघसङ्घाश्च विद्युतस्तनितगर्ज्जितः ।
संवत्सरस्त्वमृतवो मासो मासार्द्धमेव च । युगं निमेषाः काष्ठाश्च नक्षत्राणि ग्रहाः कलाः ।
वृक्षाणां ककुदोऽसि त्वं गिरीणां शिखराणि च । व्याघ्रो मृगाणां पततां तार्क्ष्योऽनन्तश्च भोगिनां ।
क्षीरोदोऽस्युदधीनाञ्च यन्त्राणां धनुरेव च । वज्रः प्रहरणानाञ्च व्रतानां सत्यमेव च ।
त्वमेव द्वेष इच्छा च रागो मोहः क्षमाक्षमे । व्यवसायो धृतिर्लोभः कामक्रोधौ जयाजयौ । १०४०५
त्वं गदी त्वं शरी चापी खट्वाङ्गी झर्झरी तथा । छेत्ता भेत्ता प्रहर्त्ता त्वं नेता मन्तापिता मतः ।
दशलक्षणसंयुक्तो धर्म्मोऽर्थः काम एव च । गङ्गा समुद्राः सरितः पल्वलानि सरांसि च ।
लता वल्ल्यस्तृणौषध्यः पशवो मृगपक्षिणः । द्रव्यकर्म्मसमारम्भः कालपुष्पफलप्रदाः ।
आदिश्चान्तश्च वेदानां गायत्र्योङ्कार एव च । हरितो रोहितो नीलः कृष्णो रक्तस्तथाऽरुणः ।
कद्रुश्च कपिलश्चैव कपोतो मेचकस्तथा । सवर्णश्च सुवर्णश्च वर्णकारो घनोपमः । १०४१०
सुवर्णनामा च तथा सुवर्णप्रिय एव च । त्वमिन्द्रश्च यमश्चैव वरदो धनदोऽनलः ।
उपप्लवश्चित्रभानुः स्वर्भानुर्भानुरेव च । होत्रं होता च होम्यञ्च हुतञ्चैव तथा प्रभुः ।
त्रिसौपर्णं तथा ब्रह्म यजुषां शतरुद्रियं । पवित्रञ्च पवित्राणां मङ्गलानाञ्च मङ्गलं ।
गिरिको हिण्डुको वृक्षो जीवः पुद्गल एव च । प्राणः सत्त्वं रजश्चैव तमश्चाप्रमदस्तथा ।
प्राणोऽपानः समानश्च उदानो व्यान एव च । उन्मेषश्च निमेषश्च क्षुतं जृम्भितमेव च । १०४१५
लोहितान्तर्गता दृष्टिर्महावक्त्रो महोदरः । शुचिरोमा हरिश्मश्रुरूर्द्ध्वकेशश्चलाचलः ।
गीतवादित्रतत्त्वज्ञो गीतवादनकप्रियः । मत्स्यो जलचरो जाल्योऽकलः केलिकलः कलिः ।
अकालश्चातिकालश्च दुष्कालः काल एव च । मृत्युः क्षुरश्च कृत्यश्च पक्षोऽपक्षक्षयङ्करः ।
मेघकालो महादंष्ट्रः संवर्त्तकबलाहकः । घण्टोऽघण्टो घटी घण्टी चरुचेली मिलीमिली ।
ब्रह्मकायिकमग्नीनां दण्डी मुण्डस्त्रिदण्डधृक् । चतुर्युगश्चतुर्वेदश्चातुर्होत्रप्रवर्त्तकः । १०४२०
चातुराश्रम्यनेता च चातुर्वर्ण्यकरश्च यः । सदा चाक्षप्रियो धूर्त्तो गणाध्यक्षो गणाधिपः ।
रक्तमाल्याम्बरधरो गिरीशो गिरिकप्रियः । शिल्पिकः शिल्पिनां श्रेष्ठः सर्व्वशिल्पप्रवर्त्तकः ।
भगनेत्राङ्कुशश्चण्डः पूष्णो दन्तविनाशनः । स्वाहा स्वधा वषट्कारो नमस्कारो नमो नमः ।
गूढव्रतो गुह्यतपास्तारकस्तारकामयः । धाता विधाता सन्धाता विधाता धारणोऽधरः ।
ब्रह्मा तपश्च सत्यञ्च ब्रह्मचर्य्यमथार्ज्जवं । भूतात्मा भूतकृद्भूतो भूतभव्यभवोद्भवः । १०४२५
भूर्भुवः स्वरितश्चैव ध्रुवो दान्तो महेश्वरः । दीक्षितोऽदीक्षितः क्षान्तो दुर्दान्तो दान्तनाशनः ।
चन्द्रावर्त्तो युगावर्त्तः संवर्त्तः सम्प्रवर्त्तकः । कामो विन्दुरणुः स्थूलः कर्णिकारस्रजप्रियः ।
नन्दीमुखो भीममुखः सुमुखो दुर्मुखोऽमुखः । चतुर्म्मुखो बहुमुखो रणेष्वग्निमुखस्तथा ।
हिरण्यगर्भः शकुनिर्महोरगपतिर्व्विराट् । अधर्म्महा महापार्श्वश्चण्डधारो गणाधिपः ।
गोनर्द्दो गोप्रतारश्च गोवृषेश्वरवाहनः । त्रैलोक्यगोप्ता गोविन्दो गोमार्गो मार्ग एव च । १०४३०

श्रेष्ठः स्थिरश्च स्थाणुश्च निष्कम्पः कम्प एव च । दुर्व्वारणो दुर्व्विषहो दुःसहो दुरतिक्रमः ।
दुर्द्धर्षो दुष्प्रकम्पश्च दुर्व्विषो दुर्ज्जयो जयः । शशः शशाङ्कः शमनः शीतोष्णक्षुज्जराधिधृक् ।
आधयो व्याधयश्चैव व्याधिहा व्याधिरेव च । मम यज्ञमृगव्याधो व्याधीनामागमो गमः ।
शिखण्डी पुण्डरीकाक्षः पुण्डरीकवनालयः । दण्डधारस्त्र्यम्बकश्च उग्रदण्डोऽण्डनाशनः ।
विषाग्रपात् सुरश्रेष्ठः सोमपास्त्वं मरुत्पतिः । अमृतपास्त्वं जगन्नाथ देव देवगणेश्वरः । १०४३५
विषाग्निपा मृत्युपाश्च क्षीरपाः सोमपास्तथा । मधुश्च्युतानामग्रपास्त्वं त्वमेव तुषिताज्यपाः ।
हिरण्यरेताः पुरुषस्त्वमेव त्वं स्त्री पुमांस्त्वञ्च नपुंसकञ्च । बालो युवा स्थविरो जीर्णदंष्ट्रस्त्वं नागेन्द्रः शक्रस्त्वं विश्वकृद्विश्व
कर्त्ता ।
विश्वकृद्विश्वकृतां वरेण्यस्त्वं विश्वबाहो विश्वरूपस्तेजस्वी विश्वतोमुखः । चन्द्रादित्यौ चक्षुषी ते हृदयञ्च पितामहः ।
महोदधिः सरस्वती वाग्बलमनलोऽनिलः । अहोरात्रं निमेषोन्मेषकर्म्मा ।
न ब्रह्मा न च गोविन्दः पौराणा ऋषयो न ते । माहात्म्यं वेदितुं शक्ता याथातथ्येन ते शिव । १०४४०
या मूर्त्तयः सुसूक्ष्मास्ते न मह्यं यान्ति दर्शनं । ताहि मां सततं रक्ष पिता पुत्त्रमिवौरसं ।
रक्ष मां रक्षणीयोऽहं तवानघ नमोऽस्तु ते । भक्तानुकम्पी भगवान् भक्तश्चाहं सदा त्वयि ।
यः सहस्राण्यनेकानि पुंसामावृत्य दुर्दृशः । तिष्ठत्येकः समुद्रान्ते स मे गोप्ताऽस्तु नित्यशः ।
यं विनिद्रा जितश्वासाः सत्त्वस्थाः संयतेन्द्रियाः । ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ।
जटिले दण्डिने नित्यं लम्बोदरशरीरिणे । कमण्डलुनिषङ्गाय तस्मै ब्रह्मात्मने नमः । १०४४५
यस्य केशेषु जीमूता नद्यः सर्व्वाङ्गसन्धिषु । कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ।
सम्भक्ष्य सर्व्वभूतानि युगान्ते पर्य्युपस्थिते । यः शेते जलमध्यस्थस्तं प्रपद्ये ऽम्बुशायिनं ।
प्रविश्य वदनं राहोर्यः सोमं पिबते निशि । ग्रसत्यर्कञ्च स्वर्भानुर्भूत्वा मां सोऽभिरक्षतु ।
ये चानुपतिता गर्भा यथाभागानुपासते । नमस्तेभ्यः स्वधा स्वाहा प्राप्नुवन्तु मुदन्तु ते ।
येऽङ्गुष्ठमात्राः पुरुषा देहस्थाः सर्व्वदेहिनां । रक्षन्तु ते हि मां नित्यं नित्यञ्चाप्याययन्तु मां । १०४५०
ये न रोदन्ति देहस्था देहिनो रोदयन्ति च । हर्षयन्ति न हृष्यन्ति नमस्तेभ्योऽस्तु नित्यशः ।
ये नदीषु समुद्रेषु पर्व्वतेषु गुहासु च । वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च ।
चतुष्पथेषु रथ्यासु चत्वरेषु तटेषु च । हस्त्यश्वरथशालासु जीर्णोद्यानालयेषु च ।
येषु पञ्चसु भूतेषु दिशासु विदिशासु च । चन्द्रार्कयोर्म्मध्यगता ये च चन्द्रार्करश्मिषु ।
रसातलगता ये च ये च तस्मै परं गताः । नमस्तेभ्यो नमस्तेभ्यो नमस्तेभ्योऽस्तु नित्यशः । १०४५५
येषां न विद्यते संख्या प्रमाणं रूपमेव च । असंख्येयगुणा रुद्रा नमस्तेभ्योऽस्तु नित्यशः ।
सर्व्वभूतकरो यस्मात् सर्व्वभूतपतिर्हरः । सर्व्वभूतान्तरात्मा च तेन त्वं न निमन्त्रितः ।
त्वमेव हीज्यसे यस्माद्यज्ञैर्विविधदक्षिणैः । त्वमेव कर्त्ता सर्व्वस्य तेन त्वं न निमन्त्रितः ।
अथवा मायया देव सूक्ष्मया तव मोहितः । एतस्मात् कारणाद्वाऽपि तेन त्वं न निमन्त्रितः ।

प्रसीद मम भद्रन्ते भव भावगतस्य मे । त्वयि मे हृदयं देव त्वयि बुद्धिर्मनस्त्वयि । १०४६०

स्तुत्वैवं स महादेवं विरराम प्रजापतिः । भगवानपि सुप्रीतः पुनर्दक्षमभाषत ।

परितुष्टोऽस्मि ते दक्ष स्तवेनानेन सुव्रत । बहुनाऽत्र किमुक्तेन मत्समीपे भविष्यसि ।

अश्वमेधसहस्रस्य वाजपेयशतस्य च । प्रजापते मत्प्रसादात्फलभागी भविष्यति ।

अथैनमब्रवीद्वाक्यं लोकस्याधिपतिर्भवः । आश्वासनकरं वाक्यं वाक्यविद्वाक्यसम्मतं ।

दक्ष दक्ष न कर्त्तव्यो मन्युर्विघ्नमिमं प्रति । अहं यज्ञहरस्तुभ्यं दृष्टमेतत् पुरातनं । १०४६५

भूयश्च ते वरं दद्मि तं त्वं गृह्णीष्व सुव्रत । प्रसन्नवदनो भूत्वा तदिहैकमनाः शृणु ।

वेदात् षडङ्गादुद्धृत्य सांख्ययोगाच्च युक्तितः । तपः सुतप्तं विपुलं दुश्चरं देवदानवैः ।

अपूर्व्वं सर्व्वतोभद्रं विश्वतोमुखमव्ययं । अब्देर्दशाहसंयुक्तं गूढमप्राज्ञनिन्दितं ।

वर्णाश्रमकृतैर्द्धर्म्मैर्विपरीतं क्वचित् समं । गतान्तैरध्यवसितमत्याश्रममिदं व्रतं ।

मया पाशुपतं दक्ष शुभमुत्पादितं पुरा । तस्य चीर्णस्य तत्सम्यक् फलं भवति पुष्कलं । १०४७०

तथास्तु ते महाभाग त्यज्यतां मानसो ज्वरः । एवमुक्त्वा महादेवः सपत्नीकः सहानुगः ।

अदर्शनमनुप्राप्तो दक्षस्यामितविक्रमः । दक्षप्रोक्तं स्तवमिमं कीर्त्तयेद्यः शृणोति वा ।

नाशुभं प्राप्नुयात् किञ्चिद्दीर्घमायुरवाप्नुयात् । यथा सर्व्वेषु देवेषु वरिष्ठो भगवाञ्छिवः ।

तथा स्तवो वरिष्ठोऽयं स्तवानां ब्रह्मसम्मितः । यशोराज्यसुखैश्वर्य्यकामार्थधनकाङ्क्षिभिः ।

श्रोतव्यो भक्तिमास्थाय विद्याकामैश्च यत्नतः । व्याधितो दुःखितो दीनश्चौरग्रस्तो भयार्द्दितः । १०४७५

राजकार्य्याभियुक्तो वा मुच्यते महतो भयात् । अनेनैव तु देहेन गणानां समतां व्रजेत् ।

तेजसा यशसा चैव युक्तो भवति निर्म्मलः । न राक्षसाः पिशाचा वा न भूता न विनायकाः ।

विघ्नं कुर्य्युर्गृहे तत्र यत्रायं पठ्यते स्तवः । शृणुयाच्चैव या नारी तद्भक्ता ब्रह्मचारिणी ।

पितृपक्षे मातृपक्षे पूज्या भवति देववत् । शृणुयाद्यः स्तवं कृत्स्नं कीर्त्तयेद्वा समाहितः ।

तस्य सर्व्वाणि कर्म्माणि सिद्धिं गच्छन्त्यभीक्ष्णशः । मनसा चिन्तितं यच्च यच्च वाचाऽनुकीर्त्तितं । १०४८०

सर्व्वं सम्पद्यते तस्य स्तवस्यास्यानुकीर्त्तनात् । देवस्य च गुहस्यापि देव्या नन्दीश्वरस्य च ।

वलिं सुविहितं कृत्वा दमेन नियमेन च । ततस्तु युक्तो गृह्णीयान्नामान्याशु यथाक्रमं ।

ईप्सितान् लभते सोऽर्थान् भोगान् कामांश्च मानवः । मृतश्च स्वर्गमाप्नोति तिर्य्यक्षु च न जायते ।

इत्याह भगवान् व्यासः पराशरसुतः प्रभुः ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि दक्षप्रोक्तशिवसहस्रनामस्तोत्रे षडशीत्यधिकद्विशततमोऽध्यायः ॥ २८६ ॥

॥ युधिष्ठिर उवाच ॥ अध्यात्मं नाम यदिदं पुरुषस्येह विद्यते । यदध्यात्मं यतश्चैव तन्मे ब्रूहि पितामह । १०४८५

॥ भीष्म उवाच ॥ सर्व्वज्ञानपरं बुद्ध्वा यन्मां त्वमनुपृच्छसि । तद्व्याख्यास्यामि ते तात तस्य व्याख्यामिमां शृणु ।

पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं । महाभूतानि भूतानां सर्व्वेषां प्रभवाप्ययौ ।

स तेषां गुणसंघातः शरीरं भरतर्षभ । सततं हि प्रलीयन्ते गुणास्ते प्रभवन्ति च ।

ततः सृष्टानि भूतानि तानि यान्ति पुनः पुनः । महाभूतानि भूतेभ्य ऊर्म्मयः सागरे यथा ।
प्रसारयित्वेहाङ्गानि कूर्म्मः संहरते यथा । तद्वद्भूतानि भूतानामणीयांसि यवीयसां ।　१०४९०
आकाशात् खलु यो घोषः संघातस्तु महीगुणः । वायोः प्राणो रसस्त्वद्भ्यो रूपं तेजस उच्यते ।
इत्येतन्मयमेवैतत्सर्व्वं स्थावरजङ्गमं । प्रलये च तमभ्येति तस्मादुद्दिश्यते पुनः ।
महाभूतानि पञ्चैव सर्व्वभूतेषु भूतकृत् । विषमान् व्यवधानाय यस्मिन् यदनुपश्यति ।
शब्दः श्रोत्रं तथा खानि त्रयमाकाशयोनिजं । रसः स्नेहश्च जिह्वा च अपामेते गुणाः स्मृताः ।
रूपं चक्षुर्व्विपाकश्च त्रिविधं ज्योतिरुच्यते । घ्रेयं घ्राणं शरीरञ्च एते भूमिगुणाः स्मृताः ।　१०४९५
प्राणः स्पर्शश्च चेष्टा च वायोरेते गुणाः स्मृताः । इति सर्व्वगुणा राजन् व्याख्याताः पाञ्चभौतिकाः ।
सत्त्वं रजस्तमः कालः कर्म्म बुद्धिश्च भारत । मनःषष्ठानि चैतेषु ईश्वरः समकल्पयत् ।
यदूर्द्ध्वं पादतलयोरवाङ्मूर्द्ध्नश्च पश्यसि । एतस्मिन्नेव कृत्स्नेयं वर्त्तते बुद्धिरन्तरे ।
इन्द्रियाणि नरे पञ्च षष्ठन्तु मन उच्यते । सप्तमीं बुद्धिमेवाहुः क्षेत्रज्ञः पुनरष्टमः ।
इन्द्रियाणि च कर्त्ता च विचेतव्यानि भागशः । ततः सत्त्वं रजश्चैव तेऽपि भावास्तदाश्रयाः ।　१०५००
चक्षुरालोचनायैव संशयं कुरुते मनः । बुद्धिरध्यवसानाय साक्षी क्षेत्रज्ञ उच्यते ।
तमः सत्त्वं रजश्चेति कालः कर्म्म च भारत । गुणैर्न्नेनीयते बुद्धिर्बुद्धिरेवेन्द्रियाणि च ।
मनःषष्ठानि सर्व्वाणि बुद्ध्यभावे कुतो गुणाः । येन पश्यति तच्चक्षुः शृण्वती श्रोत्रमुच्यते ।
जिघ्रती भवति घ्राणं रसती रसना रसान् । स्पर्शनं स्पर्शती स्पर्शान् बुद्धिर्व्विक्रियते सकृत् ।
यदा प्रार्थयते किञ्चित्तदा भवति सा मनः । अधिष्ठानानि बुद्ध्या हि पृथगेतानि पञ्चधा ।　१०५०५
इन्द्रियाणीति तान्याहुस्तेषु दुष्टेषु दुष्यति । पुरुषे तिष्ठती बुद्धिस्त्रिषु भावेषु वर्त्तते ।
कदाचिल्लभते प्रीतिं कदाचिदपि शोचति । न सुखेन न दुःखेन कदाचिदपि वर्त्तते ।
सेयं भावात्मिका भावांस्त्रीनेतान् परिवर्त्तते । सरितां सागरो भर्त्ता यथा वेलामिवोर्म्मिमान् ।
इति भावगता बुद्धिर्भावे मनसि वर्त्तते । प्रवर्त्तमानन्तु रजस्तद्भावेनानुवर्त्तते ।
प्रहर्षः प्रीतिरानन्दः सुखं संशान्तचित्तता । कथञ्चिदुपपद्यन्ते पुरुषे सात्त्विका गुणाः ।　१०५१०
परिदाहस्तथा शोकः सन्तापो मूर्त्तिरक्षमा । लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुभिः ।
अविद्या रागमोहौ च प्रमादस्तब्धता भयं । असमृद्धिस्तथा दैन्यं प्रमोहः स्वप्नतन्द्रिता ।
कथञ्चिदुपवर्त्तन्ते विविधास्तामसा गुणाः । अत्र यत् प्रीतिसंयुक्तं काये मनसि वा भवेत् ।
वर्त्तते सात्त्विको भाव इत्युपेक्षेत तत्तथा । अथ यद्दुःखसंयुक्तमप्रीतिकरमात्मनः ।
प्रवृत्तं रज इत्येव तदसंरभ्य चिन्तयेत् । अथ यन्मोहसंयुक्तं काये मनसि वा भवेत् ।　१०५१५
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् । इति बुद्धिगतीः सर्व्वा व्याख्याता यावतीरिह ।
एतद्बुद्ध्वा भवेद्बुद्धः किमन्यद्बुद्धलक्षणं । सत्त्वक्षेत्रज्ञयोरेतदन्तरं विद्धि सूक्ष्मयोः ।
सृजतेऽत्र गुणानेक एको न सृजते गुणान् । पृथग्भूतौ प्रकृत्या तु सम्प्रयुक्तौ च सर्व्वदा ।

यथा मत्स्योऽद्भिरन्यः स्यात् सम्प्रयुक्तो भवेत्तथा । न गुणा विदुरात्मानं स गुणान् वेद सर्व्वतः ।
परिद्रष्टा गुणानान्तु संस्रष्टा मन्यते यथा । आश्रयो नास्ति सत्त्वस्य गुणशब्दो न चेतना । १०५२०
सत्त्वमस्य सृजन्त्यन्ये गुणान् वेद कदाचन । सृजते हि गुणान् सत्त्वं क्षेत्रज्ञः परिपश्यति ।
संप्रयोगस्तयोरेष सत्त्वक्षेत्रज्ञयोर्ध्रुवः । इन्द्रियैस्तु प्रदीपार्थं क्रियते बुद्धिरन्तरा ।
निश्चक्षुर्भिरजानद्भिरिन्द्रियाणि प्रदीपवत् । एवं स्वभावमेवैतत् तद्बुद्ध्वा विहरेन्नरः ।
अशोचन् अप्रहृष्यंश्च स वै विगतमत्सरः । स्वभावसिद्धमेवैतत् यदिमान् सृजते गुणान् ।
ऊर्णनाभिर्यथा सूत्रं विज्ञेयास्तन्तुवद्गुणाः । प्रध्वस्ता न निवर्त्तन्ते प्रवृत्तिर्नोपलभ्यते । १०५२५
एवमेके व्यवस्यन्ति निवृत्तिरिति चापरे । इतीमं हृदयग्रन्थिं बुद्धिचिन्तामयं दृढं ।
विमुच्य सुखमासीत विशोकश्छिन्नसंशयः । ताम्येयुः प्रच्युताः पृथ्वीं मोहपूर्णां नदीं नराः ।
यथा गाधमविद्वांसो बुद्धियोगमयं तथा । नैव ताम्यन्ति विद्वांसः प्लवन्तः पारमम्भसः ।
अध्यात्मविदुषो धीरा ज्ञानन्तु परमं प्लवः ।

न भवति विदुषां महद्भयं यदविदुषां सुमहद्भयं भवेत् । न हि गतिरधिकाऽस्ति कस्यचित् सदुपदर्शयतीह तुल्यतां । १०५३०

यत्करोति बहुदोषमेकतस्तच्च दूषयति यत् पुरा कृतं । नाप्रियं तदुभयं करोत्यसौ यच्च दूषयति यत् करोति च ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पाञ्चभौतिके सप्ताशीत्यधिकद्विशततमोऽध्यायः ॥ २८७ ॥

॥ युधिष्ठिर उवाच ॥ सुदुःखाच्च मृत्योश्च त्रसन्ते प्राणिनः सदा । उभयं नो यथा न स्यात्तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । नारदस्य च संवादं समङ्गस्य च भारत ।
॥ नारद उवाच ॥ उरसेव प्रणमसे बाहुभ्यां तरसीव च । सम्प्रहृष्टमना नित्यं विशोक इव लक्ष्यसे ।
उद्वेगं न हि ते किञ्चित् सुसूक्ष्ममपि लक्षये । नित्यतृप्त इव स्वस्थो बालवच्च विचेष्टसे । १०५३५
॥ समङ्ग उवाच ॥ भूतं भव्यं भविष्यञ्च सर्व्वमेतत्तु मानद । तेषां तत्त्वानि जानामि ततो न विमना ह्यहं ।
उपक्रमानहं वेद पुनरेव फलोदयान् । लोके फलानि चित्राणि ततो न विमना ह्यहं ।
अगाधाश्चाप्रतिष्ठाश्च गतिमन्तश्च नारद । अन्धा जडाश्च जीवन्ति पश्यास्मानपि जीवतः ।
विहितेनैव जीवन्ति अरोगाङ्गा दिवौकसः । बलवन्तोऽबलाश्चैव तद्वदस्मान् सभाजय ।
सहस्रिणोऽपि जीवन्ति जीवन्ति शतिनस्तथा । शोचन्तश्चान्ये जीवन्ति पश्यास्मानपि जीवतः । १०५४०

यदा न शोचेम हि किन्नु नः स्यात् धर्म्मेण वा नारद कर्म्मणा वा । कृतान्तवश्यानि यदा सुखानि दुःखानि वा यन्न विधर्षयन्ति ।

यस्मै प्राज्ञाः कथयन्ते मनुष्याः प्रज्ञामूलो हीन्द्रियाणां प्रसादः । मुह्यन्ति शोचन्ति तथेन्द्रियाणि प्रज्ञालाभो नास्ति मूढेन्द्रियस्य ।

मूढस्य दर्पः स पुनर्मोह एव मूढस्य नायं न परोऽस्ति लोकः । न ह्येव दुःखानि सदा भवन्ति सुखस्य वा नित्यशो लाभ एव ।

भवात्मकं परिवर्त्तमानं न मादृशः संज्वरं जातु कुर्य्यात्। इष्टान् भोगाननुरुध्येत् सुखं वा न चिन्तयेद्दुःखमभ्यागतं वा।
समाहितो न स्पृहयेत् परेषां नानागतं नाभिनन्देच्च लाभं। न चाभिहृष्येद्विपुलेऽर्थलाभे तथाऽर्थनाशे च न वै विषीदेत्। १०५४५
न बान्धवा न च वित्तं न कौल्यं न च श्रुतं न च मन्त्रा न वीर्य्यं। दुःखात्त्रातुं सर्व्व एवोत्सहन्ते परत्र शीलेन तु यान्ति शान्तिं।
नास्ति बुद्धिरयुक्तस्य नायोगाद्विन्दते सुखं। धृतिश्च दुःखत्यागश्चेत्युभयन्तु सुखं नृप।
प्रियं हि हर्षजननं हर्षं उत्सेकवर्द्धनं। उत्सेको नरकायैव तस्मात्तान् सन्त्यजाम्यहं।
एतान् शोकभयोत्सेकान् मोहनान् सुखदुःखयोः। पश्यामि साक्षिवल्लोके देहस्यास्य विचेष्टनात्।
अर्थकामौ परित्यज्य विशोको विगतज्वरः। तृष्णामोहौ तु सन्त्यज्य चरामि पृथिवीमिमां। १०५५०
न च मृत्योर्न वा धर्म्मान्न लोभान्न कुतश्चन। पीतामृतस्येवात्यन्तमिह चामुत्र चाभयं।
एतद्ब्रह्मन् विजानामि महत् कृत्वा तपोऽव्ययं। तेन नारद सम्प्राप्तो न मां शोकः प्रबाधते।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि समङ्गनारदसंवादे अष्टाशीत्यधिकद्विशततमोऽध्यायः॥ २८८॥
॥ युधिष्ठिर उवाच॥ अतत्त्वज्ञस्य शास्त्राणां सततं संशयात्मनः। अकृतव्यवसायस्य श्रेयो ब्रूहि पितामह।
॥ भीष्म उवाच॥ गुरुपूजा च सततं वृद्धानां पर्य्युपासनं। श्रवणञ्चैव शास्त्राणां कूटस्थं श्रेय उच्यते।
अत्राप्युदाहरन्तीममितिहासं पुरातनं। गालवस्य च संवादं देवर्षेर्नारदस्य च। १०५५५
वीतमोहक्लमं विप्रं ज्ञानतृप्तं जितेन्द्रियं। श्रेयस्कामो यतात्मानं नारदं गालवोऽब्रवीत्।
यैः कैश्चित् सम्मतो लोके गुणैस्तु पुरुषो मुने। भवत्यनपगान् सर्व्वांस्तान् गुणान् लक्षयामहे।
भवानेवंविधोऽस्माकं संशयं छेत्तुमर्हति। अमूढश्चिरमूढानां लोकतत्त्वमजानतां।
ज्ञाने ह्येवं प्रवृत्तिः स्यात् कार्य्याकार्य्यविशेषतः। यत् कार्य्यं न व्यवस्यामस्तद्भवान् वक्तुमर्हति।
भगवन्नाश्रमाः सर्व्वे पृथगाचारदर्शिनः। इदं श्रेय इदं श्रेय इति सर्व्वे प्रबोधिताः। १०५६०
तांस्तु विप्रस्थितान् दृष्ट्वा शास्त्रैः शास्त्राभिनन्दिनः। स्वशास्त्रैः परितुष्टांश्च श्रेयो नोपलभामहे।
शास्त्रं यदि भवेदेकं श्रेयो व्यक्तं भवेत्तदा। शास्त्रैश्च बहुभिर्भूयः श्रेयो गुह्यं प्रवेशितं।
एतस्मात् कारणाच्छ्रेयः कलिलं प्रतिभाति मे। ब्रवीतु भगवांस्तन्मे उपसन्नोऽस्म्यधीहि भोः।
॥ नारद उवाच॥ आश्रमास्तात चत्वारो यथा सङ्कल्पिताः पृथक्। तान् सर्व्वाननुपश्य त्वं समाश्रित्येति गालव।
तेषां तेषां तथा हि त्वमाश्रमाणां ततस्ततः। नानारूपं गुणोद्देशं पश्य विप्रस्थितं पृथक्। १०५६५
न यान्ति चैव ते सम्यगभिप्रेतमसंशयं। यच्चापश्यंस्तथा सम्यगाश्रमाणां पराङ्गतिं।
यत्तु निःश्रेयसं सम्यक् तच्चैवासंशयात्मकं। अनुग्रहश्च मित्राणाममित्राणाञ्च निग्रहं।
संग्रहश्च त्रिवर्गस्य श्रेय आहुर्मनीषिणः। निवृत्तिः कर्म्मणः पापात् सततं पुण्यशीलता।
सद्भिश्च समुदाचारः श्रेय एतदसंशयं। मार्द्दवं सर्व्वभूतेषु व्यवहारेषु चार्ज्जवं।
वाक्चैव मधुरा प्रोक्ता श्रेय एतदसंशयं। देवतेभ्यः पितृभ्यश्च संविभागोऽतिथिष्वपि। १०५७०

सर्वत्यागश्च भृत्यानां श्रेय एतदसंशयं। सत्यस्य वचनं श्रेयः सत्यज्ञानन्तु दुष्करं।
यद्भूतहितमत्यन्तमेतत् सत्यं ब्रवीम्यहं। अहङ्कारस्य च त्यागः प्रमादस्य च निग्रहः।
सन्तोषश्चैकचर्य्या च कूटस्थं श्रेय उच्यते। धर्मेण वेदाध्ययनं वेदाङ्गानां तथैव च।
ज्ञानार्थानाञ्च जिज्ञासा श्रेय एतदसंशयं। शब्दरूपरसस्पर्शान् सह गन्धेन केवलान्।
नात्यर्थमुपसेवेत श्रेयसोऽर्थी कथञ्चन। नक्तञ्चर्य्यां दिवास्वप्नमालस्यं पैशुनं मदं। १०५७५
अतियोगमयोगञ्च श्रेयसोऽर्थी परित्यजेत्। आत्मोत्कर्षं न मार्गेत परेषां परिनिन्दया।
स्वगुणैरेव मार्गेत विप्रकर्षं पृथग्जनात्। निर्गुणास्त्वेव भूयिष्ठमात्मसम्भाविता नराः।
दोषैरन्यान् गुणवतः क्षिपन्त्यात्मगुणक्षयात्। अनुच्यमानास्तु पुनस्ते मन्यन्ते महाजनात्।
गुणवत्तरमात्मानं स्वेन मानेन दर्पिताः। अब्रुवन् कस्यचिन्निन्दामात्मपूजामवर्णयन्।
विपश्चिद्गुणसम्पन्नः प्राप्नोत्येव महद्यशः। अब्रुवन्वाति सुरभिर्गन्धः सुमनसां शुचिः। १०५८०
तथैवाव्याहरन् भाति विमलो भानुरम्बरे। एवमादीनि चान्यानि परित्यक्तानि मेधया।
ज्वलन्ति यशसा लोके यानि न व्याहरन्ति च। न लोके दीप्यते मूर्खः केवलात्मप्रशंसया।
अपि चापिहितः श्वभ्रे कृतविद्यः प्रकाशते। असदुच्चैरपि प्रोक्तः शब्दः समुपशाम्यति।
दीप्यते त्वेव लोकेषु शनैरपि सुभाषितं। मूढानामवलिप्तानामसारं भाषितं बहु।
दर्शयत्यन्तरात्मानमग्निरूपमिवांशुमान्। एतस्मात् कारणात् प्रज्ञां मृगयन्ते पृथग्विधां १०५८५
प्रज्ञालाभो हि भूतानामुत्तमः प्रतिभाति मे। नापृष्टः कस्यचिद्ब्रूयान्नाप्यन्यायेन पृच्छतः।
ज्ञानवानपि मेधावी जडवत् समुपाविशेत्। ततो वासम्परीक्षेत धर्मनित्येषु साधुषु।
मनुष्येषु वदान्येषु स्वधर्मनिरतेषु च। चतुर्णां यत्र वर्णानां धर्मव्यतिकरो भवेत्।
न तत्र वासं कुर्व्वीत श्रेयोऽर्थी वै कथञ्चन। निरारम्भोऽप्ययमिह यथालब्धोपजीवनः।
पुण्यं पुण्येषु विमलं पापं पापेषु चाप्नुयात्। अपामग्नेस्तथेन्दोश्च स्पर्शं वेदयते यथा। १०५९०
तथा पश्यामहे स्पर्शमुभयोः पुण्यपापयोः। अपश्यन्तोऽनुविषयं भुञ्जते विघसाशिनः।
भुञ्जानश्चात्मविषयान् विषयान् विद्धि कर्म्मणा। यत्रागमयमानानामसत्कारेण पृच्छतां।
प्रब्रूयाद्ब्राह्मणो धर्मं त्यजेत्तं देशमात्मवान्। शिष्योपाध्यायिका वृत्तिर्यत्र स्यात् सुसमाहिता।
यथावत् शास्त्रसम्पन्ना कस्तं देशं परित्यजेत्। आकाशस्था ध्रुवं यत्र दोषान् ब्रूयुर्व्विपश्चितां
आत्मपूजाभिकामो वै को वसेत्तत्र पण्डितः। यत्र संलोडिता लुब्धैः प्रायशो धर्मसेतवः। १०५९५
प्रदीप्तमिव चैलान्तं कस्तं देशं न सन्त्यजेत्। यत्र धर्म्ममनाशङ्काश्चरेयुर्व्वीतमत्सराः।
भवेत्तत्र वसेच्चैव पुण्यशीलेषु साधुषु। धर्ममर्थनिमित्तञ्च चरेयुर्यत्र मानवाः।
न ताननुवसेज्जातु ते हि पापकृतो जनाः। कर्म्मणा यत्र पापेन वर्त्तन्ते जीवितेप्सवः।
व्यवधावेत् ततस्तूर्णं ससर्पाच्छरणादिव। येन खट्वासमारूढः कर्म्मणाऽनुशयी भवेत्।
आदितस्तन्न कर्त्तव्यमिच्छता भवमात्मनः। यत्र राजा च राज्ञश्च पुरुषाः प्रत्यनन्तराः। १०६००

कुटुम्बिनामग्रभुञ्जन्तेषु ग्रामेषु वसेत्तत्रात्मवान् । नित्यास्त्रियभोक्तारो धर्म्मनित्याः सनातनाः ।
याजनाध्यापने युक्ता यत्र तद्ग्राममावसेत् । स्वाहास्वधावषट्कारा यत्र सम्यगनुष्ठिताः ।
अजस्रञ्चैव वर्त्तन्ते वसेत्तत्राविचारयन् । अशुचीन् यत्र पश्येत ब्राह्मणान् वृत्तिकर्षितान् ।
त्यजेत्तद्ग्राममासन्नमुपसृष्टमिवामिषं । प्रीयमाणा नरा यत्र प्रयच्छेयुरयाचिताः ।
स्वस्थचित्तो वसेत्तत्र कृतकृत्यमिवात्मवान् । दण्डो यत्राविनीतेषु सत्कारश्च कृतात्मसु ।　　१०९०५
चरेत्तत्र वसंश्चैव पुण्यशीलेषु साधुषु । उपसृष्टेषु दान्तेषु दुराचारेषु साधुषु ।
अविनीतेषु लुब्धेषु सुमहद्दण्डधारणं । यत्र राजा धर्म्मनित्यो राज्यं धर्म्मेण पालयेत् ।
अपास्य कामान् कामेशो वसेत्तत्राविचारयन् । तथाशीला हि राजानः सर्व्वान् विषयवासिनः ।
श्रेयसा योजयन्त्याशु श्रेयसि प्रत्युपस्थिते । पृच्छतस्ते मया तात श्रेय एतदुदाहृतं ।
न हि शक्यं प्रधानेन श्रेयः संख्यातुमात्मनः । एवं प्रवर्त्तमानस्य वृत्तिं प्रणिहितात्मनः ।　　१०९१०
तपसैवेह बहुलं श्रेयो व्यक्तं भविष्यति ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि श्रेयोवाचिके जनगवत्यधिकद्विशततोऽध्यायः ॥ २८९ ॥

॥ युधिष्ठिर उवाच ॥ कथं नु युक्तः पृथिवीं चरेदस्मद्विधो नृपः । नित्यं कैश्च गुणैर्युक्तः सङ्गपाशाद्विमुच्यते ।
॥ भीष्म उवाच ॥ अत्र ते वर्त्तयिष्येऽहमितिहासं पुरातनं । अरिष्टनेमिना प्रोक्तं सगरायानुपृच्छते ।
॥ सगर उवाच ॥ किं श्रेयः परमं ब्रह्मन् कृत्वेह सुखमश्नुते । कथं न शोचेन्न क्षुभ्येदेतदिच्छामि वेदितुं ।
॥ भीष्म उवाच ॥ एवमुक्तस्तदा तार्क्ष्यः सर्व्वशास्त्रविदाम्वरः । विबुध्य सम्पदं चाग्र्यं सदाक्यमिदमब्रवीत् ।　　१०९१५
सुखं मोक्षसुखं लोके न च मूढोऽवगच्छति । प्रसक्तः पुत्त्रपशुषु धनधान्यसमाकुलः ।
सक्तबुद्धिरशान्तात्मा न शक्यं तच्चिकित्सितुं । स्नेहपाशसितो मूढो न स मोक्षाय कल्पते ।
स्नेहजानिह ते पाशान् वक्ष्यामि शृणु तान्मम । सकर्णकेन शिरसा शक्याः श्रोतुं विजानता ।
सम्भाव्य पुत्त्रान् कालेन यौवनस्थान्निवेश्य च । समर्थान् जीवने ज्ञात्वा मुक्तश्चर यथासुखं ।
भार्य्यां पुत्त्रवतीं वृद्धां लालितां पुत्त्रवत्सलां । ज्ञात्वा प्रजहि कालेन परार्थमनुदृश्य च ।　　१०९२०
सापत्यो निरपत्यो वा मुक्तश्चर यथासुखं । इन्द्रियैरिन्द्रियार्थांस्त्वमनुभूय यथाविधि ।
कृतकौतूहलस्तेषु मुक्तश्चर यथासुखं । उपपत्त्योपलब्धेषु लाभेषु च समो भव ।
एष तावत्समासेन तव संकीर्त्तितो मया । मोक्षार्थो विस्तरेणापि भूयो वक्ष्यामि तच्छृणु ।
मुक्ता वीतभया लोके चरन्ति सुखिनो नराः । सक्तभावा विनश्यन्ति नरास्तत्र न संशयः
आहारसञ्चयाश्चैव तथा कीटे पिपीलिकाः । असक्ताः सुखिनो लोके सक्ताश्चैव विनाशिनः ।　　१०९२५
स्वजनेन च ते चिन्ता कर्त्तव्या मोक्षबुद्धिना । इमे मया विनाभूता भविष्यन्ति कथन्त्विति ।
स्वयमुत्पद्यते जन्तुः स्वयमेव विवर्द्धते । सुखदुःखे तथा मृत्युं स्वयमेवाधिगच्छति ।
भोजनाच्छादने चैव माता पिता च संग्रहं । स्वकृतेनाधिगच्छन्ति लोके नास्त्यकृतं पुरा ।
धात्रा विहितभक्ष्याणि सर्व्वभूतानि मेदिनीं । लोके विपरिधावन्ति रक्षितानि स्वकर्म्मभिः ।

स्वयं मृत्पिण्डभूतस्य परतन्त्रस्य सर्व्वदा । को हेतुः स्वजनं पोष्टुं रक्षितुं वा कृतात्मनः । १०९२०
स्वजनं हि यदा मृत्युर्हन्त्येव तव पश्यतः । कृतेऽपि यत्ने महति तत्र बोध्यस्वमात्मना ।
जीवन्तमपि चैवैनं भरणे रक्षणे तथा । असमाप्ते परित्यज्य पश्चादपि मरिष्यसि ।
यदा मृतस्य स्वजनं न ज्ञास्यसि कदाचन । सुखितं दुःखितं वापि ननु बोध्यस्वमात्मना ।
मृते वा त्वयि जीवे वा यदा भोक्ष्यति वै जनः । स्वकृतं ननु बुद्ध्वैवं कर्त्तव्यं हितमात्मनः ।
एवं विजानन् लोकेऽस्मिन् कः कस्येत्यभिनिश्चितः । मोक्षे निवेशय मनो भूयश्चाप्युपधारय । १०९२५
क्षुत्पिपासादयो भावा जिता यस्येह देहिनः । क्रोधो लोभस्तथा मोहः सत्त्ववान् मुक्त एव सः ।
द्यूते पाने तथा स्त्रीषु मृगयायाञ्च यो नरः । न प्रमाद्यति संमोहात् सततं मुक्त एव सः ।
दिवसे दिवसे नाम रात्रौ रात्रौ पुमान् सदा । भोक्तव्यमिति यः खिन्नो दोषबुद्धिः स उच्यते ।
आत्मभावं तथा स्त्रीषु मुक्तमेवं पुनः पुनः । यः पश्यति सदा युक्तो यथावन्मुक्त एव सः ।
सम्भवञ्च विनाशञ्च भूतानां चेष्टितं तथा । यस्तत्त्वतो विजानाति लोकेऽस्मिन्मुक्त एव सः । १०९३०
प्रस्थं वाहसहस्रेषु यात्रार्थञ्चैव कोटिषु । प्रासादे मञ्चकं स्थानं यः पश्यति स मुच्यते ।
मृत्युनाऽभ्याहतं लोकं व्याधिभिश्चोपपीडितं । अवृत्तिकर्षितञ्चैव यः पश्यति स मुच्यते ।
यः पश्यति स सन्तुष्टो न पश्यंश्च विहन्यते । यश्चाप्यल्पेन सन्तुष्टो लोकेऽस्मिन्मुक्त एव सः ।
अग्नीषोमाविदं सर्व्वमिति यश्चानुपश्यति । न च संस्पृश्यते भावैरद्भुतैर्मुक्त एव सः ।
पर्य्यङ्कशय्या भूमिश्च समाने यस्य देहिनः । शालयश्च कदन्नञ्च यस्य स्यान्मुक्त एव सः । १०९३५
क्षौमञ्च कुशचीरञ्च कौशेयं वल्कलानि च । आविकं चर्म्म च समं यस्य स्यान्मुक्त एव सः ।
पञ्चभूतसमुद्भूतं लोकं यश्चानुपश्यति । तथा च वर्त्तते दृष्ट्वा लोकेऽस्मिन्मुक्त एव सः ।
सुखदुःखे समे यस्य लाभालाभौ जयाजयौ । इच्छाद्वेषौ भयोद्वेगौ सर्व्वथा मुक्त एव सः ।
रक्तमूत्रपुरीषाणां दोषाणां सञ्चयांस्तथा । शरीरं दोषबहुलं दृष्ट्वा चैव विमुच्यते ।
वलीपलितसंयोगं कार्श्यं वैवर्ण्यमेव च । कुब्जभावञ्च जरया यः पश्यति स मुच्यते । १०९४०
पुंस्त्वोपघातं कालेन दर्शनोपरमन्तथा । वाधिर्य्यं प्राणमन्दत्वं यः पश्यति स मुच्यते ।
गतानृषींस्तथा देवानसुरांश्च तथा गतान् । लोकादस्मात् परं लोकं यः पश्यति स मुच्यते ।
प्रभावैरन्वितास्तैस्तैः पार्थिवेन्द्राः सहस्रशः । ये गताः पृथिवीं त्यक्त्वा इति ज्ञात्वा विमुच्यते ।
अर्थांश्च दुर्लभान् लोके क्लेशांश्च सुलभांस्तथा । दुःखञ्चैव कुटुम्बार्थे यः पश्यति स मुच्यते ।
अपत्यानाञ्च वैगुण्यं जनं विगुणमेव च । पश्यन् भूयिष्ठशो लोके को मोक्षं नाभिपूजयेत् । १०९४५
शास्त्राल्लोकाच्च यो बुद्धः सर्व्वं पश्यति मानवः । असारमिव मानुष्यं सर्व्वथा मुक्त एव सः ।
एतच्छ्रुत्वा मम वचो भवांश्चरतु मुक्तवत् । गार्हस्थ्ये यदि वा मोक्षे कृता बुद्धिरविक्लवा ।
तत्तस्य वचनं श्रुत्वा सम्यक् स पृथिवीपतिः । मोक्षजैश्च गुणैर्युक्तः पालयामास च प्रजाः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि सगरारिष्टनेमिसंवादे नवत्यधिकद्विशततोऽध्यायः ॥ २९० ॥

॥ युधिष्ठिर उवाच ॥ तिष्ठते मे सदा तात कौतूहलमिदं हृदि। तदहं श्रोतुमिच्छामि त्वत्तः कुरुपितामह।
कथं देवर्षिरुशना सदा काव्यो महामतिः। असुराणां प्रियकरः सुराणामप्रिये रतः। १०६६०
वर्द्धयामास तेजश्च किमर्थममितौजसां। नित्यं वैरनिबद्धाश्च दानवाः सुरसत्तमैः।
कथञ्चाप्युशनाः प्राप शुक्रत्वममरद्युतिः। ऋद्धिञ्च स कथं प्राप्तः सर्व्वमेतद्ब्रवीहि मे।
न याति च स तेजस्वी मध्येन नभसः कथं। एतदिच्छामि विज्ञातुं निखिलेन पितामह।
॥ भीष्म उवाच ॥ शृणु राजन्नवहितः सर्व्वमेतद्यथातथं। यथामति यथा चैतत् श्रुतपूर्व्वं मयाऽनघ।
एष भार्गवदायादो मुनिर्मान्यो दृढव्रतः। सुराणां विप्रियकरो निमित्ते कारणात्मके। १०६६५
इन्द्रोऽथ धनदो राजा यक्षरक्षोधिपः सदा। प्रभविष्णुश्च कोषस्य जगतश्च तथा प्रभुः।
तस्यात्मानमथाविश्य योगसिद्धो महामुनिः। रुद्ध्वा धनपतिं देवं योगेन हृतवान् वसु।
हृते धने ततः शर्म्म न लेभे धनदस्तथा। आपन्नमन्युः संविग्नः सोऽभ्यगात् सुरसत्तमं।
निवेदयामास तदा शिवायामिततेजसे। देवश्रेष्ठाय रुद्राय सौम्याय बहुरूपिणे।
योगात्मकेनोशनसा रुद्ध्वा मम हृतं वसु। योगेनात्मगतं कृत्वा निःसृतश्च महातपाः। १०६७०
एतच्छ्रुत्वा ततः क्रुद्धो महायोगी महेश्वरः। संरक्तनयनो राजन् शूलमादाय तस्थिवान्।
क्वासौ क्वासाविति प्राह गृहीत्वा परमायुधं। उशना दूरतस्तस्य बभौ ज्ञात्वा चिकीर्षितं।
स महायोगिनो बुद्ध्वा तं रोषं वै महात्मनः। गतिमागमनं वेत्ति स्थानञ्चैव ततः प्रभुः।
सञ्चिन्त्योग्रेण तपसा महात्मानं महेश्वरं। उशना योगसिद्धात्मा शूलाग्रे प्रत्यदृश्यत।
विज्ञातरूपः स तदा तपःसिद्धोऽथ धन्विना। ज्ञात्वा शूलञ्च देवेशः पाणिना समनामयत्। १०६७५
आनतेनाथ शूलेन पाणिनाऽमिततेजसा। पिनाकमिति चोवाच शूलमुग्रायुधः प्रभुः।
पाणिमध्यगतं दृष्ट्वा भार्गवं तमुमापतिः। आस्यं विवृत्य ककुदी पाणिना प्राक्षिपच्छनैः।
स तु प्रविष्ट उशना कोष्ठं माहेश्वरं प्रभुः। व्यचरच्चापि तत्रासौ महात्मा भृगुनन्दनः।
॥ युधिष्ठिर उवाच ॥ किमर्थं व्यचरद्राजन्नुशनास्तस्य धीमतः। जठरे देवदेवस्य किञ्चाकार्षीन्महाद्युतिः।
॥ भीष्म उवाच ॥ पुरा सोऽन्तर्ज्जलगतः स्थाणुभूतो महाव्रतः। वर्षाणामभवद्राजन् प्रयुतान्यर्ब्बुदानि च। १०६८०
उदतिष्ठत्तपस्तप्त्वा दुश्चरञ्च महाह्रदात्। ततो देवातिदेवस्तं ब्रह्मा वै समसर्पत।
तपोवृद्धिमपृच्छच्च कुशलञ्चैवमव्ययः। तपः सुचीर्णमिति च प्रोवाच वृषभध्वजः।
तत्संयोगेन वृद्धिञ्चाप्यपश्यत् स तु शङ्करः। महामतिरचिन्त्यात्मा सत्यधर्म्मरतः सदा।
स तेनाढ्यो महायोगी तपसा च धनेन च। व्यराजत महाराज त्रिषु लोकेषु वीर्य्यवान्।
ततः पिनाकी योगात्मा ध्यानयोगं समाविशत्। उशनास्तु समुद्विग्नो निलिल्ये जठरे ततः। १०६८५
तुष्टाव च महायोगी देवं तत्रस्थ एव च। निःसारं काङ्क्षमाणः स तेन स्म प्रतिहन्यते।
उशनास्तु तथोवाच जठरस्थो महामुनिः। प्रसादं मे कुरुष्वेति पुनः पुनररिन्दम।
तमुवाच महादेवो गच्छ शिश्नेन मोक्षणं। इति सर्व्वाणि स्रोतांसि रुद्ध्वा त्रिदशपुङ्गवः।

अपश्यमानस्तद्द्वारं सर्व्वतः पिहितो मुनिः । पर्य्यक्रामद्दह्यमान इतश्चेतश्च तेजसा ।
स वै निष्क्रम्य शिश्नेन शुक्रत्वमभिपेदिवान् । कार्य्येण तेन नभसो नागच्छत स मध्यतः । १०९९०
विनिष्क्रान्तन्तु तं दृष्ट्वा ज्वलन्तमिव तेजसा । भवो रोषसमाविष्टः शूलोद्यतकरः स्थितः ।
अवारयत तं देवी क्रुद्धं पशुपतिं पतिं । पुत्त्रत्वमगमद्देव्या वारिते शङ्करे च सः ।
॥ देव्युवाच ॥ हिंसनीयस्त्वया नैव मम पुत्त्रत्वमागतः । न हि देवोदरात् कश्चित् निःसृतो नाशमर्हति ।
ततः प्रीतो भवो देव्याः प्रहसंश्चेदमब्रवीत् । गच्छत्वेष यथाकाममिति राजन् पुनः पुनः ।
ततः प्रणम्य वरदं देवं देवीमुमान्तथा । उशनाः प्रापतद्धीमान् गतिमिष्टां महामुनिः । १०९९५
एतत्ते कथितं तात भार्गवस्य महात्मनः । चरितं भरतश्रेष्ठ यन्मां त्वं परिपृच्छसि ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि भवभार्गवसमागमे एकनवत्यधिकद्विशततमोऽध्यायः ॥ २९१ ॥

॥ युधिष्ठिर उवाच ॥ अतः परं महाबाहो यच्छ्रेयस्तद्ब्रवीहि मे । न तृप्याम्यमृतस्येव वचसस्ते पितामह ।
किं कर्म्म पुरुषः कृत्वा शुभं पुरुषसत्तम । श्रेयः परमवाप्नोति प्रेत्य चेह च तद्वद ।
॥ भीष्म उवाच ॥ अत्र ते वर्त्तयिष्यामि यथा पूर्व्वं महायशाः । पराशरं महात्मानं पप्रच्छ जनको नृपः ।
किं श्रेयः सर्व्वभूतानामस्मिन् लोके परत्र च । यद्भवेत् प्रतिपत्तव्यं तद्भवान् प्रब्रवीतु मे । १००००
ततः स तपसा युक्तः सर्व्वधर्म्मविधानवित् । नृपायानुग्रहमना मुनिर्व्वाक्यमथाब्रवीत् ।
॥ पराशर उवाच ॥ धर्म्म एव कृतः श्रेयानिह लोके परत्र च । तस्माद्धि परमं नास्ति यथा प्राहुर्म्मनीषिणः ।
प्रतिपद्य नरो धर्म्मं स्वर्गलोके महीयते । धर्म्मात्मकः कर्म्मविधिर्देहिनां नृपसत्तम ।
तस्मिन्नाश्रमिणः सन्तः स्वकर्म्माणीह कुर्व्वते । चतुर्व्विधा हि लोकेऽस्मिन् यात्रा तात विधीयते ।
मर्त्त्या यत्रावतिष्ठन्ते सा च कामात् प्रवर्त्तते । सुकृतासुकृतं कर्म्म निषेव्य विविधैः क्रमैः । १०००५
दशार्द्धप्रविभक्तानां भूतानां बहुधा गतिः । सौवर्णं राजतञ्चापि यथा भाण्डं निषिच्यते ।
तथा निषिच्यते जन्तुः पूर्व्वकर्म्मवशानुगः । नाबीजाज्जायते किञ्चिन्नाकृत्वा सुखमेधते ।
सुकृतैर्व्विन्दते सौख्यं प्राप्य देहक्षयं नरः । दैवं तात न पश्यामि नास्ति दैवस्य साधनं ।
स्वभावतो हि संसिद्धा देवगन्धर्व्वदानवाः । प्रेत्य यान्ति कृतं कर्म्म न स्मरन्ति सदा जनाः ।
ते वै तस्य फलप्राप्तौ कर्म्म चापि चतुर्व्विधं । लोकयात्राश्रयश्चैव शब्दो वेदाश्रयः कृतः । १००१०
शान्त्यर्थं मनसस्तात नैतद्वृद्धानुशासनं । चक्षुषा मनसा वाचा कर्म्मणा च चतुर्व्विधं ।
कुरुते यादृशं कर्म्म तादृशं प्रतिपद्यते । निरन्तरञ्च मिश्रञ्च लभते कर्म्म पार्थिव ।
कल्याणं यदि वा पापं न तु नाशोऽस्य विद्यते । कदाचित् सुकृतं तात कूटस्थमिव तिष्ठति ।
मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते । ततो दुःखक्षयं कृत्वा सुकृतं कर्म्म सेवते ।
सुकृतक्षयाद्दुष्कृतञ्च तद्विद्धि मनुजाधिप । दमः क्षमा धृतिस्तेजः सन्तोषः सत्यवादिता । १००१५
ह्रीरहिंसाऽव्यसनिता दाक्ष्यञ्चेति सुखावहाः । दुष्कृते सुकृते चापि न जन्तुर्नियतो भवेत् ।
नित्यं मनःसमाधाने प्रयतेत विचक्षणः । नायं परस्य सुकृतं दुष्कृतञ्चापि सेवते ।

करोति यादृशं कर्म्म तादृशं प्रतिपद्यते। सुखदुःखे समाधाय पुमानन्येन गच्छति।
अन्येनैव जनः सर्व्वः सङ्गतो यश्च पार्थिवः। परेषां यदसूयेत न तत् कुर्यात् स्वयं नरः।
यो ह्यसूयुस्तया युक्तः सोऽवहासं नियच्छति। १०७२०

भोक्ता राजन्यो ब्राह्मणः सर्व्वभक्ष्यो वैश्योऽनीहावान् हीनवर्णोऽलसश्च। विद्वांश्चाशीलो वृत्तहीनः कुलीनः सत्याद्विभ्रष्टो ब्राह्मणः स्त्री च दुष्टा।
रागी युक्तः पचमानोऽात्महेतोर्मूर्खो वक्ता नृपहीनञ्च राष्ट्रं। एते सर्व्वे शोच्यतां यान्ति राजन् यश्चायुक्तः स्नेहहीनः प्रजासु।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पराशरगीतासु द्विनवत्यधिकद्विशततोऽध्यायः॥ २९२॥

॥ पराशर उवाच॥ मनोरथरथं प्राप्य इन्द्रियार्थहयं नरः। रश्मिभिर्ज्ञानसम्भूतैर्यो गच्छति स बुद्धिमान्।
सेवाश्रितेन मनसा वृत्तिहीनस्य शस्यते। द्विजातिहस्तान्निर्वृत्ता न तु तुल्यात् परस्परात्।
आयुर्न सुलभं लब्ध्वा नावकर्षेद्विशाम्पते। उत्कर्षार्थं प्रयतेत नरः पुण्येन कर्म्मणा। १०७२५
वर्णेभ्यो हि परिभ्रष्टो न वै संमानमर्हति। न तु यः सत्क्रियां प्राप्य राजसं कर्म्म सेवते।
वर्णोत्कर्षमवाप्नोति नरः पुण्येन कर्म्मणा। दुर्लभं तमलब्ध्वा हि हन्यात् पापेन कर्म्मणा।
अज्ञानाद्धि कृतं पापं तपसैवाभिनिर्णुदेत्। पापं हि कर्म्म फलति पापमेव स्वयं कृतं।
तस्मात् पापं न सेवेत कर्म्म दुःखफलोदयं। पापानुबन्धं यत् कर्म्म यद्यपि स्यान्महाफलं।
तन्न सेवेत मेधावी शुचिः कुशलिनं यथा। किं कष्टमनुपश्यामि फलं पापस्य कर्म्मणः। १०७३०
प्रत्यापन्नस्य हि ततो ऽनात्मा तावद्विरोचत। प्रत्यापत्तिश्च यस्येह बालिशस्य न जायते।
तस्यापि सुमहांस्तापः प्रस्थितस्योपजायते। विरक्तं शोध्यते वस्त्रं न तु कृष्णोपसंहितं।
प्रयत्नेन मनुष्येन्द्र पापमेवं निबोध मे। स्वयं कृत्वा तु यः पापं शुभमेवानुतिष्ठति।
प्रायश्चित्तं नरः कर्त्तुमुभयं सोऽश्नुते पृथक्। अज्ञानात्तु कृतां हिंसामहिंसा व्यपकर्षति।
ब्राह्मणः शास्त्रनिर्द्देशादित्याहुर्ब्रह्मवादिनः। तथा कामकृतं नास्य विहिंसैवानुकर्षति। १०७३५
इत्याहुर्ब्रह्मशास्त्रज्ञा ब्राह्मणा ब्रह्मवादिनः। अहन्तु तावत् पश्यामि कर्म्म यद्वर्त्तते कृतं।
गुणयुक्तं प्रकाशं वा पापेनानुपसंहितं। यथा सूक्ष्माणि कर्म्माणि फलन्तीह यथातथं।
बुद्धियुक्तानि तानीह कृतानि मनसा सह। भवत्यल्पफलं कर्म्म सेवितं नित्यमुल्वणं।
अबुद्धिपूर्व्वं धर्म्मज्ञ कृतमुग्रेण कर्म्मणा। कृतानि यानि कर्म्माणि दैवतैर्मुनिभिस्तथा।
न चरेत्तानि धर्म्मात्मा श्रुत्वा चापि न कुत्सयेत्। सञ्चिन्त्य मनसा राजन् विदित्वा शक्यमात्मनः। १०७४०
करोति यः शुभं कर्म्म स वै भद्राणि पश्यति। न वै कपाले सलिलं संन्यस्तं हीयते यथा।
न वेतरे तथा भावं प्राप्नोति सुखभावितं। स तोयेऽन्यत्तु यत्तोयं तस्मिन्नेव प्रसिच्यते।
वृद्धे वृद्धिमवाप्नोति सलिले सलिलं यथा। एवं कर्म्माणि यानीह बुद्धियुक्तानि पार्थिव।
समानि चैव यानीह तानि पुण्यतमान्यपि।

राज्ञा जेतव्याः शत्रवश्चोन्नताश्च सम्यक् कर्त्तव्यं पालनञ्च प्रजानां । अग्निश्चेयो बहुभिश्चापि यज्ञैरन्ते मध्ये वा वनमाश्रित्य स्थेयं । १०७४५

दमान्वितः पुरुषो धर्मशीलो भूतानि चात्मानमिवानुपश्येत् । गरीयसः पूजयेदात्मशक्त्या सत्येन शीलेन सुखं नरेन्द्र ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पराशरगीतायां त्रिनवत्यधिकद्विशततमोऽध्यायः ॥ २९३ ॥

॥ पराशर उवाच ॥ कः कस्य चोपकुरुते कश्च कस्मै प्रयच्छति । प्राणी करोत्ययं कर्म सर्वमात्मार्थमात्मना ।
गौरवेण परित्यक्तं निःस्नेहं परिवर्ज्जयेत् । सोदर्यं भ्रातरमपि किमुतान्यं पृथग्जनं ।
विशिष्टस्य विशिष्टाच्च तुल्यौ दानप्रतिग्रहौ । तयोः पुण्यतरं दानं तद्द्विजस्य प्रयच्छतः ।
न्यायागतं धनं वर्णैर्न्यायेनैव विवर्द्धितं । संरक्ष्यं यत्नमास्थाय धर्मार्थमिति निश्चयः । १०७५०
न धर्मार्थी नृशंसेन कर्मणा धनमर्ज्जयेत् । शक्तितः सर्वकार्याणि कुर्यान्नर्द्धिमनुस्मरेत् ।
अपो हि प्रयतः शीतास्तापिता ज्वलनेन वा । शक्तितोऽतिथये दत्त्वा क्षुधार्तायाश्नुते फलं ।
रन्तिदेवेन लोकेष्टा सिद्धिः प्राप्ता महात्मना । फलपत्रैरथो मूलैर्मुनीनर्चितवानसौ ।
तैरेव फलपत्रैश्च स माठरमतोषयत् । तस्माल्लेभे परं स्थानं शैब्योऽपि पृथिवीपतिः ।
देवतातिथिभृत्येभ्यः पितृभ्यश्चात्मनस्तथा । ऋणवान् जायते मर्त्यस्तस्मादनृणतां व्रजेत् । १०७५५
स्वाध्यायेन महर्षिभ्यो देवेभ्यो यज्ञकर्मणा । पितृभ्यः श्राद्धदानेन नृणामभ्यर्चनेन च ।
वाचः शेषावहार्य्येण पालनेनात्मनोऽपि च । यथावद्भृत्यवर्गस्य चिकीर्षेत् कर्म आदितः ।
प्रयत्नेन च संसिद्धा धनैरपि विवर्ज्जिताः । सम्यग्घुत्वा हुतवहं मुनयः सिद्धिमागताः ।
विश्वामित्रस्य पुत्रत्वमृचीकतनयोऽगमत् । ऋग्भिः स्तुत्वा महाबाहो देवान् वै यज्ञभागिनः ।
गतः शुक्रत्वमुशना देवदेवप्रसादनात् । देवीं स्तुत्वा तु गगने मोदते यशसा वृतः । १०७६०
असितो देवलश्चैव तथा नारदपर्व्वतौ । कक्षीवान् जामदग्न्यश्च रामस्ताण्ड्यस्तथांशुमान् ।
वशिष्ठो जमदग्निश्च विश्वामित्रोऽत्रिरेव च । भरद्वाजो हरिश्मश्रुः कुण्डधारः श्रुतश्रवाः ।
एते महर्षयः स्तुत्वा विष्णुमृग्भिः समाहिताः । लेभिरे तपसा सिद्धिं प्रसादात्तस्य धीमतः ।
अनर्हाश्चार्हतां प्राप्ताः सन्तः स्तुत्वा तमेव ह । न तु वृद्धिमिहान्विच्छेत् कर्म कृत्वा जुगुप्सितं ।
येऽर्था धर्मेण ते सत्या येऽधर्मेण धिगस्तु तान् । धर्मं वै शाश्वतं लोके न जह्याद्धनकाङ्क्षया । १०७६५
आहिताग्निर्हि धर्मात्मा यः स पुण्यकृदुत्तमः । वेदा हि सर्वे राजेन्द्र स्थितास्त्रिष्वग्निषु प्रभो ।
स चाप्यग्न्याहितो विप्रः क्रिया यस्य न हीयते । श्रेयो ह्यनाहिताग्नित्वमग्निहोत्रं न निष्क्रियं ।
अग्निरात्मा च माता च पिता जनयिता तथा । गुरुश्च नरशार्दूल परिचर्य्या यथातथं ।

मानं त्यक्त्वा यो नरो वृद्धसेवी विद्वान् क्लीवः पश्यति प्रीतियोगात् । दाक्ष्येण हीनो धर्मयुक्तो न दान्तो लोकेऽस्मिन् वै पूज्यते सद्भिरार्य्यः ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पराशरगीतायां चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥ २९४ ॥

॥ पराशर उवाच ॥ वृत्तिः सकाशाद्वर्णेभ्यस्त्रिभ्यो हीनस्य शोभना । प्रीत्योपनीता निर्द्दिष्टा धर्म्मिष्ठान् कुरुते सदा । १०७००
वृत्तिश्चेन्नास्ति शूद्रस्य पितृपैतामही ध्रुवा । न वृत्तिं परतो मार्गेत् शुश्रूषान्तु प्रयोजयेत् ।
सद्भिस्तु सह संसर्गः शोभते धर्म्मदर्शिभिः । नित्यं सर्व्वास्ववस्थासु नासद्भिरिति मे मतिः ।
यथोदयगिरौ द्रव्यं सन्निकर्षेण दीप्यते । तथा सत्सन्निकर्षेण हीनवर्णोऽपि दीप्यते ।
यादृशेन हि वर्णेन भाव्यते शुक्लमम्बरं । तादृशं कुरुते रूपमेतदेवमवेहि मे ।
तस्माद्गुणेषु रज्येथा मा दोषेषु कदाचन । अनित्यमिह मर्त्त्यानां जीवितं हि चलाचलं । १०७०५
सुखे वा यदि वा दुःखे वर्त्तमानो विचक्षणः । यश्चिनोति शुभान्येव स तन्त्राणीह पश्यति ।
धर्म्मादपेतं यत् कर्म्म यद्यपि स्यान्महाफलं । न तत् सेवेत मेधावी न तद्धितमिहोच्यते ।
यो हृत्वा गोसहस्राणि नृपो दद्यादरक्षिता । स शब्दमात्रफलभाक् राजा भवति तस्करः ।
स्वयम्भूरसृजच्चाग्रे धातारं लोकसत्कृतं । धाताऽसृजत् पुत्त्रमेकं लोकानां धारणे रतं ।
तमर्च्चयित्वा वैश्यस्तु कुर्य्यादत्यर्थमृद्धिमत् । रक्षितव्यन्तु राजन्यैरुपयोज्यं द्विजातिभिः । १०७१०
अजिह्मैरशठक्रोधैर्हव्यकव्यप्रयोक्तृभिः । शूद्रैर्निर्म्मार्ज्जनं कार्य्यमेवं धर्म्मो न नश्यति ।
अप्रनष्टे ततो धर्म्मे भवन्ति सुखिताः प्रजाः । सुखेन तासां राजेन्द्र मोदन्ते दिवि देवताः ।
तस्माद्यो रक्षति नृपः स धर्म्मेणेति पूज्यते । अधीते चापि यो विप्रो वैश्यो यश्चार्ज्जने रतः ।
यश्च शुश्रूषते शूद्रः सततं नियतेन्द्रियः । अतोऽन्यथा मनुष्येन्द्र स्वधर्म्मात् परिहीयते ।
प्राणसन्तापनिर्द्दिष्टाः काकिन्योऽपि महाफलाः । न्यायेनोपार्ज्जिता दत्ताः किमुतान्याः सहस्रशः । १०७१५
सत्कृत्य हि द्विजातिभ्यो यो ददाति नराधिपः । यादृशं तादृशं नित्यमश्नाति फलमूर्ज्जितं ।
अभिगम्य च तत्तुष्ट्या दत्तमाहुरभिष्टुतं । याचितेन तु यद्दत्तं तदाहुर्म्मध्यमं बुधाः ।
अवज्ञया दीयते यत्तथैवाश्रद्धयाऽपि वा । तदाहुरधमं दानं मुनयः सत्यवादिनः ।
अतिक्रामेन्मज्जमानो विविधेन नरः सदा । तथा प्रयत्नं कुर्व्वीत यथा मुच्येत संशयात् ।
दमेन शोभते विप्रः क्षत्त्रियो विजयेन तु । धनेन वैश्यः शूद्रस्तु नित्यं दाक्ष्येण शोभते । १०७२०
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पराशरगीतायां पञ्चनवत्यधिकद्विशततमोऽध्यायः ॥ २९५ ॥
॥ पराशर उवाच ॥ प्रतिग्रहागता विप्रे क्षत्त्रिये युधि निर्ज्जिताः । वैश्ये न्यायार्ज्जिताश्चैव शूद्रे शुश्रूषयाऽर्ज्जिताः ।
स्वल्पाऽप्यर्थाः प्रशस्यन्ते धर्म्मस्यार्थे महाफलाः । नित्यं त्रयाणां वर्णानां शुश्रूषुः शूद्र उच्यते ।
क्षत्त्रधर्म्मा वैश्यधर्म्मा नावृत्तिः पतते द्विजः । शूद्रधर्म्मा यदा तु स्यात्तदा पतति वै द्विजः ।
वाणिज्यं पाशुपाल्यञ्च तथा शिल्पोपजीवनं । शूद्रस्यापि विधीयन्ते यदा वृत्तिर्न जायते ।
रङ्गावतरणञ्चैव तथा रूपोपजीवनं । मद्यमांसोपजीव्यञ्च विक्रयं लोहचर्म्मणोः । १०७२५
अपूर्व्विणा न कर्त्तव्यं कर्म्म लोके विगर्हितं । कृतपूर्व्वन्तु त्यजतो महान् धर्म्म इति श्रुतिः ।
संसिद्धः पुरुषो लोके यदाचरति पापकं । मदेनाभिप्लुतमनास्तच्च न ग्राह्यमुच्यते ।
श्रूयन्ते हि पुराणेषु प्रजा धिग्दण्डशासनाः । दान्ता धर्म्मप्रधानाश्च न्यायधर्म्मानुवर्त्तिकाः ।

धर्म्म एव सदा नृणामिह राजन् प्रशस्यते। धर्म्मवृद्धा गुणानेव सेवन्ते हि नरा भुवि ।
तं धर्म्ममसुरास्तात नामृष्यन्त जनाधिप । विवर्द्धमानाः क्रमशस्तत्र तेऽन्वाविशन् प्रजाः । १०८००
तासां दर्पः समभवत् प्रजानां धर्म्मनाशनः । दर्पात्मनान्ततः पश्चात् क्रोधस्तासामजायत ।
ततः क्रोधाभिभूतानां वृत्तं लज्जासमन्वितं । ह्रीश्चैवाप्यनशद्राजंस्ततो मोहो व्यजायत ।
ततो मोहपरीतास्ता नापश्यन्त यथा पुरा । परस्परावमर्द्देन वर्द्धयन्तो यथासुखं ।
ताः प्राप्य तु स धिग्दण्डो न कारणमतोऽभवत् । ततोऽभ्यगच्छन्देवांश्च ब्राह्मणांश्चावमन्य ह ।
एतस्मिन्नेव काले तु देवा देववरं शिवं । अगच्छञ्छरणं धीरं बहुरूपं गुणाधिकं । १०८०५
तेन स्म ते गगनगाः सपुराः पातिताः क्षितौ । तिस्रोऽप्येकेन बाणेन देवाप्यायिततेजसा ।
तेषामधिपतिस्त्वासीद्भीमो भीमपराक्रमः । देवतानां भयकरः स हतः शूलपाणिना ।
तस्मिन् हतेऽथ स्वं भावं प्रत्यपद्यन्त मानवाः । प्रावर्त्तन्त च वेदा वै शास्त्राणि च यथा पुरा ।
ततोऽभिषिच्य राज्ये तु देवानां दिवि वासवं । सप्तर्षयश्चान्वयुञ्जन्नराणां दण्डधारणे ।
सप्तर्षीणामथोर्द्धञ्च विपृथुर्नाम पार्थिवः । राजानः क्षत्रियाश्चैव मण्डलेषु पृथक् पृथक् । १०८१०
महाकुलेषु ये जाता वृद्धाः पूर्व्वतराश्च ये । तेषामप्यासुरो भावो हृदयान्नापसर्पति ।
तस्मात्तेनैव भावेन सानुषङ्गेण पार्थिवाः । आसुराण्येव कर्म्माणि न्यसेवन् भीमविक्रमाः ।
प्रत्यतिष्ठंश्च तेष्वेव तान्येव स्थापयन्त्यपि । भजन्ते तेन चाद्यापि ये बालिशतरा नराः ।
तस्मादहं ब्रवीमि त्वां राजन् सञ्चिन्त्य शास्त्रतः । संसिद्धाधिगमं कुर्य्यात् कर्म्म हिंसात्मकं त्यजेत् ।
न सङ्करेण द्रविणं प्रचिन्वीयाद्विचक्षणः । धर्म्मार्थं न्यायमुत्सृज्य न तत्कल्याणमुच्यते । १०८१५
स त्वमेवंविधो दान्तः क्षत्रियः प्रियबान्धवः । प्रजा भृत्यांश्च पुत्रांश्च स्वधर्म्मेणानुपालय ।
इष्टानिष्टसमायोगे वैरं सौहार्द्दमेव च । अथ जातिसहस्राणि बहूनि परिवर्त्तते ।
तस्माद्गुणेषु रज्यस्व मा दोषेषु कथञ्चन । निर्गुणोऽपि हि दुर्ब्बुद्धिरात्मनः सोऽतिरज्यते ।
मानुषेषु महाराज धर्म्माधर्म्मौ प्रवर्त्ततः । न तथाऽन्येषु भूतेषु मनुष्यरहितेष्विह ।
धर्म्मशीलो नरो विद्वानीहकोऽनीहकोऽपि वा । आत्मभूतः सदा लोके चरेद्भूतान्यहिंसया । १०८२०
यदा व्यपेतहृल्लेखं मनो भवति तस्य वै । नानृतञ्चैव भवति तदा कल्याणमृच्छति ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पराशरगीतायां षण्णवत्यधिकद्विशततमोऽध्यायः ॥ २९६ ॥

॥ पराशर उवाच ॥ एष धर्म्मविधिस्तात गृहस्थस्य प्रकीर्त्तितः । तपोविधिन्तु वक्ष्यामि तन्मे निगदतः शृणु ।
प्रायेण च गृहस्थस्य ममत्वं नाम जायते । सङ्गागतं नरश्रेष्ठ भावै राजसतामसैः ।
गृहाण्याश्रित्य गावश्च क्षेत्राणि च धनानि च । दाराः पुत्राश्च भृत्याश्च भवन्तीह नरस्य वै ।
एवन्तस्य प्रवृत्तस्य नित्यमेवानुपश्यतः । रागद्वेषौ विवर्द्धेते ह्यनित्यत्वमपश्यतः । १०८२५
रागद्वेषाभिभूतञ्च नरं द्रव्यवशानुगं । मोहजाता रतिर्नाम समुपैति नराधिप ।
कृतार्थं भोगिनं मत्वा सर्व्वो रतिपरायणः । लाभं ग्राम्यसुखादन्यं रतितो नानुपश्यति ।

ततो लोभाभिभूतात्मा सङ्गाद्वर्द्धयते जनं। तुष्ट्यर्थं चैव तस्येह जनस्यार्थं चिकीर्षति।
स जानन्नपि चाकार्य्यमर्थार्थं सेवते नरः। बालस्नेहपरीतात्मा तत्क्षयाच्चानुतप्यते।
ततो मानेन सम्पन्नो रक्षन्नात्मपराजयं। करोति येन भोगी स्यामिति तस्माद्विनश्यति। १०८१०
तथा हि बुद्धियुक्तानां शाश्वतं ब्रह्मवादिनां। अन्विच्छतां शुभं कर्म्म नराणां त्यजतां सुखं।
स्नेहायतननाशाच्च धननाशाच्च पार्थिव। आधिव्याधिप्रतापाच्च निर्व्वेदमुपगच्छति।
निर्व्वेदादात्मसम्बोधः सम्बोधाच्छास्त्रदर्शनं। शास्त्रार्थदर्शनाद्राजंस्तप एवानुपश्यति।
दुर्लभो हि मनुष्येन्द्र नरः प्रत्यवमर्शवान्। यो वै प्रियसुखे क्षीणस्तपः कर्त्तुं व्यवस्यति।
तपः सर्व्वगतं तात हीनस्यापि विधीयते। जितेन्द्रियस्य दान्तस्य स्वर्गमार्गप्रवर्त्तकं। १०८१५
प्रजापतिः प्रजाः पूर्व्वमसृजत्तपसा विभुः। क्वचित् क्वचिद्व्रतपरो व्रतान्यास्थाय पार्थिव।
आदित्या वसवो रुद्रास्तथैवाग्न्यश्विमारुताः। विश्वेदेवास्तथा साध्याः पितरोऽथ मरुद्गणाः।
यक्षराक्षसगन्धर्व्वाः सिद्धाश्चान्ये दिवौकसः। संसिद्धास्तपसा तात ये चान्ये स्वर्गवासिनः।
ये चादौ ब्राह्मणाः सृष्टा ब्रह्मणा तपसा पुरा। ते भावयन्तः पृथिवीं विचरन्ति दिवं तथा।
मर्त्यलोके च राजानो ये चान्ये गृहमेधिनः। महाकुलेषु दृश्यन्ते तत् सर्व्वं तपसः फलं। १०८२०
कौशिकानि च वस्त्राणि शुभान्याभरणानि च। वाहनासनयानानि तत् सर्व्वं तपसः फलं।
मनोऽनुकूलाः प्रमदा रूपवत्यः सहस्रशः। वासः प्रासादपृष्ठे च तत्सर्व्वं तपसः फलं।
शयनानि च मुख्यानि भोज्यानि विविधानि च। अभिप्रेतानि सर्व्वाणि भवन्ति शुभकर्म्मिणां।
नाप्राप्यं तपसः किञ्चित्त्रैलोक्येऽपि परन्तप। उपभोगपरित्यागः फलान्यकृतकर्म्मणां।
सुखितो दुःखितो वाऽपि नरो लोभं परित्यजेत्। अवेक्ष्य मनसा शास्त्रं बुद्ध्या च नृपसत्तम। १०८२५
असन्तोषोऽसुखायेति लोभादिन्द्रियसंभ्रमः। ततोऽस्य नश्यति प्रज्ञा विद्येवाभ्यासवर्ज्जिता
नष्टप्रज्ञो यदा तु स्यात्तदा न्यायं न पश्यति। तस्मात् सुखक्षये प्राप्ते पुमानुग्रं तपश्चरेत्।
यदिष्टं तत् सुखं प्राहुर्द्वेष्यं दुःखमिहेष्यते। कृताकृतस्य तपसः फलं पश्यस्व यादृशं।
नित्यं भद्राणि पश्यन्ति विषयांश्चोपभुञ्जते। प्राकाश्यं चैव गच्छन्ति कृत्वा निष्कल्मषं तपः।
अप्रियाण्यवमानांश्च दुःखं बहुविधात्मकं। फलार्थी तत्फलं त्यक्त्वा प्राप्नोति विषयात्मकं। १०८३०
धर्म्मे तपसि दाने च विचिकित्सा यस्य जायते। स कृत्वा पापकान्येवं निरयं प्रतिपद्यते।
सुखे तु वर्त्तमानो वै दुःखे वाऽपि नरोत्तम। स्ववृत्ताद्यो न चलते शास्त्रचक्षुः स मानवः।
इषुप्रपातमात्रं हि स्पर्शयोगे रतिः स्मृता। रसने दर्शने घ्राणे श्रवणे च विशाम्पते।
ततोऽस्य जायते तीव्रा वेदना तत्क्षयात् पुनः। अबुधा न प्रशंसन्ति मोक्षं सुखमनुत्तमं।
ततः फलार्थं सर्व्वस्य भवन्ति ज्यायसे गुणाः। धर्म्मवृत्त्या च सततं कामार्थाभ्यां न हीयते। १०८३५
अप्रयत्नागताः सेव्या गृहस्थैर्विषयाः सदा। प्रयत्नेनोपगम्यश्च स्वधर्म्म इति मे मतिः।
मानिनां कुलजातानां नित्यं शास्त्रार्थचक्षुषां। क्रियाधर्म्मविमुक्तानामशक्त्या संवृतात्मनां।

क्रियमाणं यदा कर्म्म नाशं गच्छति मानुषं। तेषां नान्यदृते लोके तपसः कर्म्म विद्यते।
सर्व्वात्मना तु कुर्व्वीत गृहस्थः कर्म्म निश्चयं। दाक्ष्येण हव्यकव्यार्थं स्वधर्म्मं विचरन्नृप।
यथा नदीनदाः सर्व्वे सागरे यान्ति संस्थितिं। एवमाश्रमिणः सर्व्वे गृहस्थे यान्ति संस्थितिं। १०८६०
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पराशरगीतायां सप्तनवत्यधिकद्विशततमोऽध्यायः॥ २९७॥
॥ जनक उवाच ॥ वर्णो विशेषवर्णानां महर्षे केन जायते। एतदिच्छाम्यहं श्रोतुं तद्ब्रूहि वदताम्बर।
यदेतज्जायतेऽपत्यं स एवायमिति श्रुतिः। कथं ब्राह्मणतो जातो विशेषे ग्रहणं गतः।
॥ पराशर उवाच ॥ एवमेतन्महाराज येन जातः स एव सः। तपसस्त्वपकर्षेण जातिग्रहणतां गतः।
सुक्षेत्राच्च सुबीजाच्च पुण्यो भवति सम्भवः। अतोऽन्यतरतो हीनादवरो नाम जायते।
वक्त्राद्भुजाभ्यामूरुभ्यां पद्भ्यां चैवाथ जज्ञिरे। सृजतः प्रजापतेर्लोकानिति धर्म्मविदो विदुः। १०८६५
मुखजा ब्राह्मणास्तात बाहुजाः क्षत्रियाः स्मृताः। ऊरुजा धनिनो राजन् पादजाः परिचारकाः।
चतुर्णामेव वर्णानामागमः पुरुषर्षभ। अतोऽन्ये त्वतिरिक्ता ये ते वै सङ्करजाः स्मृताः।
क्षत्रियातिरथाम्बष्ठा उग्रा वैदेहकास्तथा। श्वपाकाः पुल्कसाः स्तेना निषादाः सूतमागधाः।
अयोगाः करणा व्रात्याश्चाण्डालाश्च नराधिप। एते चतुर्भ्यो वर्णेभ्यो जायन्ते वै परस्परात्।
॥ जनक उवाच ॥ ब्रह्मणैकेन जातानां नानात्वं गोत्रतः कथं। बहूनीह हि लोके वै गोत्राणि मुनिसत्तम। १०८७०
यत्र तत्र कथं जाताः स्वयोनिं मुनयो गताः। शूद्रयोनौ समुत्पन्ना वियोनौ च तथाऽपरे।
॥ पराशर उवाच ॥ राजन्नैतद्भवेद्ग्राह्यमपकृष्टेन जन्मना। महात्मनां समुत्पत्तिस्तपसा भावितात्मनां।
उत्पाद्य पुत्रान्मुनयो नृपते यत्र तत्र ह। स्वेनैव तपसा तेषामृषित्वं प्रददुः पुनः।
पितामहश्च मे पूर्व्वमृष्यशृङ्गश्च काश्यपः। वेदस्ताण्ड्यः कृपश्चैव काक्षीवत्कमठादयः।
यवक्रीतश्च नृपते द्रोणश्च वदताम्बरः। आयुर्म्मतङ्गो दत्तश्च द्रुमदो मात्स्य एव च। १०८७५
एते स्वां प्रकृतिं प्राप्ता वैदेह तपसोऽश्रयात्। प्रतिष्ठिता वेदविदो दमेन तपसैव हि।
मूलगोत्राणि चत्वारि समुत्पन्नानि पार्थिव। अङ्गिराः काश्यपश्चैव वशिष्ठो भृगुरेव च।
कर्म्मतोऽन्यानि गोत्राणि समुत्पन्नानि पार्थिव। नामधेयानि तपसा तानि च ग्रहणं सतां।
॥ जनक उवाच ॥ विशेषधर्म्मान् वर्णानां प्रब्रूहि भगवन्मम। ततः सामान्यधर्म्मांश्च सर्व्वत्र कुशलो ह्यसि।
॥ पराशर उवाच ॥ प्रतिग्रहो याजनञ्च तथैवाध्यापनं नृप। विशेषधर्म्मो विप्राणां रक्षा क्षत्रस्य शोभना। १०८८०
कृषिश्च पाशुपाल्यञ्च वाणिज्यञ्च विशामपि। द्विजानां परिचर्य्या च शूद्रकर्म्म नराधिप।
विशेषधर्म्मा नृपते वर्णानां परिकीर्त्तिताः। धर्म्मान् साधारणांस्तात विस्तरेण शृणुष्व मे।
आनृशंस्यमहिंसा चाप्रमादः संविभागिता। श्राद्धकर्म्मातिथेयञ्च सत्यमक्रोध एव च।
स्वेषु दारेषु सन्तोषः शौचं नित्यानसूयता। आत्मज्ञानं तितिक्षा च धर्म्माः साधारणा नृप।
ब्राह्मणा क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः। अत्र तेषामधीकारो धर्म्मेषु द्विपदाम्बर। १०८८५
विकर्म्मावस्थिता वर्णाः पतन्ति नृपते त्रयः। उन्नमन्ति यथा सन्तमाश्रित्येह स्वकर्म्मसु।

शिरास्नाय्वस्थिसंघातं बीभत्सामेध्यसंकुलं । भूतानामिन्द्रियाणाञ्च गुणानाञ्च समागमं ।
त्वगन्तं देहमित्याहुर्विद्वांसोऽध्यात्मचिन्तकाः । गुणैरपि परिक्षीणं शरीरं मर्त्यतां गतं ।
शरीरिणा परित्यक्तं निश्चेष्टं गतचेतनं । भूतैः प्रकृतिमापन्नैस्ततो भूमौ निमज्जति । १०९१५
भावितं कर्म्मयोगेन जायते तत्र तत्र ह । इदं शरीरं वैदेह म्रियते यत्र यत्र ह ।
तत्स्वभावोऽपरो दृष्टो विसर्गः कर्म्मणस्तथा । न जायते तु नृपते कञ्चित् कालमयं पुनः ।
परिभ्रमति भूतात्मा द्यामिवाम्बुधरो महान् । स पुनर्ज्जायते राजन् प्राप्येहायतनं नृप ।
मनसः परमो ह्यात्मा इन्द्रियेभ्यः परं मनः । विविधानाञ्च भूतानां जङ्गमाः परमा नृप ।
जङ्गमानामपि तथा द्विपदाः परमा मताः । द्विपदानामपि तथा द्विजा वै परमाः स्मृताः । १०९२०
द्विजानामपि राजेन्द्र प्रज्ञावन्तः परा मताः । प्राज्ञानामात्मसम्बुद्धाः सम्बुद्धानाममानिनः ।
जातमन्वेति मरणं नृणामिति विनिश्चयः । अन्तवन्ति हि कर्म्माणि सेवन्ते गुणतः प्रजाः ।
आपन्ने तूत्तरां काष्ठां सूर्य्ये यो निधनं व्रजेत् । नक्षत्रे च मुहूर्त्ते च पुण्ये राजन् स पुण्यकृत् ।
अयोजयित्वा क्लेशेन जनं प्लाव्य च दुष्कृतं । मृत्युनाप्राकृतेनेह कर्म्म कृत्वात्मशक्तिभिः ।
विषमुद्बन्धनं दाहो दस्युहस्तात्तथा वधः । दंष्ट्रिभ्यश्च पशुभ्यश्च प्राकृतो वध उच्यते । १०९२५
न चैभिः पुण्यकर्म्माणो युज्यन्ते चाभिसन्धिजैः । एवंविधैश्च बहुभिरपरैः प्राकृतैरपि ।
ऊर्द्ध्वं भित्त्वा प्रतिष्ठन्ते प्राणाः पुण्यवतां नृप । मध्यतो मध्यपुण्यानामधो दुष्कृतकर्म्मणां ।
एकः शत्रुर्न्न द्वितीयोऽस्ति शत्रुरज्ञानतुल्यः पुरुषस्य राजन् । येनावृतः कुरुते संप्रयुक्तो घोराणि कर्म्माणि सुदारुणानि ।
प्रबोधनार्थं श्रुतिधर्म्मयुक्तं वृद्धानुपास्य प्रभवेत यस्य । प्रयत्नसाध्यो हि स राजपुत्त्र प्रज्ञाशरेणोन्मथितः परैति ।
अधीत्य वेदांस्तपसा ब्रह्मचारी यज्ञान् शक्त्या सन्निसृज्येह पञ्च । वनं गच्छेत्पुरुषो धर्म्मकामः श्रेयः स्थित्वा स्थापयित्वा स्ववंशं । १०९३०
उपभोगैरपि त्यक्तं नात्मानं सादयेन्नरः । चाण्डालत्वेऽपि मानुष्यं सर्व्वथा तात शोभनं ।
इयं हि योनिः प्रथमा यां प्राप्य जगतीपते । आत्मा वै शक्यते त्रातुं कर्म्मभिः शुभलक्षणैः ।
कथं न विप्रणश्येम योनितोऽस्या इति प्रभो । कुर्व्वन्ति धर्म्मं मनुजाः श्रुतिप्रामाण्यदर्शनात् ।
यो दुर्लभतरं प्राप्य मानुष्यं द्विषते नरः । धर्म्मावमन्ता कामात्मा भवेत्स खलु वञ्चते ।
यस्तु प्रीतिपुरोगेण चक्षुषा तात पश्यति । दीपोपमानि भूतानि यावदर्थान् प्रपश्यति । १०९३५
सान्त्वनान्नप्रदानेन प्रियवादेन चाप्युत । समदुःखसुखो भूत्वा स परत्र न हीयते ।
दानं त्यागः शोभना मूर्त्तिरद्भ्यो भूयः प्लाव्यं तपसा वै शरीरं । सरस्वती नैमिषपुष्करेषु ये चाप्यन्ये पुण्यदेशाः पृथिव्यां ।
गृहेषु येषामसवः पतन्ति तेषामथो निर्हरणं प्रशस्तं । यानेन वै प्रापणञ्च श्मशाने शौचेन नूनं विधिना चैव दाहः ।
इष्टिः पुष्टिर्यजनं याजनञ्च दानं पुण्यानां कर्म्मणाञ्च प्रयोगः । शक्त्या पित्र्यं यच्च किञ्चित्प्रशस्तं सर्व्वाण्यात्मार्थे मानवोऽयं करोति ।
धर्म्मशास्त्राणि वेदाश्च षडङ्गानि नराधिप । श्रेयसोऽर्थे विधीयन्ते नरस्याक्लिष्टकर्म्मणः । १०९४०

॥ भीष्म उवाच ॥ एतद्वै सर्व्वमाख्यातं मुनिना सुमहात्मना । विदेहराजाय पुरा श्रेयसोऽर्थे नराधिप ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पराशरगीतायां नवनवत्यधिकद्विशततोऽध्यायः ॥ २९९ ॥

॥ भीष्म उवाच ॥ पुनरेव तु पप्रच्छ जनको मिथिलाधिपः । पराशरं महात्मानं धर्म्मे परमनिश्चयं ।

॥ जनक उवाच ॥ किं श्रेयः का गतिर्ब्रह्मन् किं कृतं न विनश्यति । क्व गतो न निवर्त्तेत तन्मे ब्रूहि महामते ।

॥ पराशर उवाच ॥ असङ्गः श्रेयसो मूलं ज्ञानं ज्ञानगतिः परा । चीर्णं तपो न प्रणश्येद्वापः क्षेत्रे न नश्यति ।

छित्त्वा धर्म्ममयं पाशं यदा धर्म्मेऽभिरज्यते । दत्त्वाऽभयकृतं दानं तदा सिद्धिमवाप्नुते । १०८७५

यो ददाति सहस्राणि गवामश्वशतानि च । अभयं सर्व्वभूतेभ्यः सदा तमभिवर्त्तते ।

वसन् विषयमध्येऽपि न वसत्येव बुद्धिमान् । संवसत्येव दुर्बुद्धिरसत्सु विषयेष्वपि ।

नाधर्म्मः श्लिष्यते प्राज्ञं पयः पुष्करपर्णवत् । अप्राज्ञमधिकं पापं श्लिष्यते जतुकाष्ठवत् ।

नाधर्म्मः कारणापेक्षी कर्त्तारमभिमुञ्चति । कर्त्ता खलु यथाकालं ततः समभिपद्यते ।

न भिद्यन्ते कृतात्मान आत्मप्रत्ययदर्शिनः । बुद्धिकर्म्मेन्द्रियाणां हि प्रमत्तो यो न बुध्यते । १०८८०

शुभाशुभेषु सक्तात्मा प्राप्नोति सुमहद्भयं । वीतरागो जितक्रोधः सम्यग्वर्त्तति यः सदा ।

विषये वर्त्तमानोऽपि न स पापेन युज्यते । मर्य्यादायां धर्म्मसेतुर्निबद्धो नैव सीदति ।

पुष्टस्रोत इवायत्तः स्फीतो भवति सञ्चयः । यथा भानुगतं तेजो मणिः शुद्धः समाधिना ।

आदत्ते राजशार्दूल तथा योगः प्रवर्त्तते ।

यथा तिलानामिह पुष्पसंश्रयात् पृथक् पृथग्याति गुणोऽतिसौम्यतां । तथा नराणान्तु विभावितात्मनां यथाश्रयं सत्त्वगुणः प्रवर्त्तते । १०८८५

जहाति दारांश्च जहाति सम्पदः पदञ्च यानं विविधाश्च सत्क्रियाः । त्रिविष्टपे जातमतिर्यदा नरस्तदाऽस्य बुद्धिर्व्विषयेषु भिद्यते ।

प्रसक्तबुद्धिर्व्विषयेषु यो नरो न बुध्यते ह्यात्महितं कदाचन । स सर्व्वभावानुगतेन चेतसा नृपामिषेणेव झषो विकृष्यते ।

सङ्घातवान्मर्त्त्यलोकः परस्परमपाश्रितः । कदलीगर्भनिःसारो नौरिवाप्सु निमज्जति ।

न धर्म्मकालः पुरुषस्य निश्चितो न चापि मृत्युः पुरुषं प्रतीक्षते । सदा हि धर्म्मस्य क्रियैव शोभना यदा नरो मृत्युमुखेऽभिवर्त्तते ।

यथाऽन्धः स्वगृहे युक्तो ह्यभ्यासादेव गच्छति । तथा युक्तेन मनसा प्राज्ञो गच्छति तां गतिं । १०८९०

मरणं जन्मनि प्रोक्तं जन्म वै मरणाश्रितं । अविद्वान्मोक्षधर्म्मेषु बद्धो भवति चक्रवत् ।

बुद्धिमार्गप्रयातस्य सुखन्त्विह परत्र च । विस्तराः क्लेशसंयुक्ताः संक्षेपास्तु सुखावहाः ।

परार्थं विस्तराः सर्व्वे त्यागमात्महितं विदुः । यथा मृणालानुगतमाशु मुञ्चति कर्द्दमं ।

तथात्मा पुरुषस्येह मनसा परिमुच्यते । मनः प्रणयतेत्मानं स एनमभियुञ्जति ।

युक्तो यदा स भवति तदा तं पश्यते परं । परार्थे वर्त्तमानस्तु स्वं कार्य्यं योऽभिमन्यते । १०८९५

इन्द्रियार्थेषु संसक्तः स्वकार्य्यात् परिमुच्यते । अधस्तिर्य्यग्गतिञ्चैव स्वर्गे चैव परां गतिं ।

हंसो भूत्वाऽथ सौवर्णस्त्वजो नित्यः प्रजापतिः। स वै पर्य्येति लोकांस्त्रीनथ साध्यानुपागमत्।

॥ साध्या ऊचुः॥ शकुने वयं स्म देवा वै साध्यास्त्वामनुयुज्महे। पृच्छामस्त्वां मोक्षधर्म्मं भवांश्च किल मोक्षवित्। १०९९५

श्रुतोऽसि नः पण्डितो धीरवादी साधुशब्दश्चरते ते पतत्रिन्। किं मन्यसे श्रेष्ठतमं द्विज त्वं कस्मिन् मनस्ते रमते महात्मन्।

तन्नः कार्य्यं पक्षिवर प्रशाधि यत् कार्य्याणां मन्यसे श्रेष्ठमेकं। यत्कृत्वा वै पुरुषः सर्व्वबन्धैर्विमुच्यते विहगेन्द्रेह शीघ्रं।

॥ हंस उवाच॥ इदं कार्य्यममृताशाः शृणोमि तपो दमः सत्यमात्माभिगुप्तिः। ग्रन्थीन् विमुच्य हृदयस्य सर्व्वान् प्रियाप्रिये स्वं वशमानयीत।

नारुन्तुदः स्यान्न नृशंसवादी न हीनतः परमभ्याददीत। ययाऽस्य वाचा पर उद्विजेत न तां वदेद्रुशतीं पापलोक्यां।

वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि। परस्य नामर्म्मसु ते पतन्ति तान् पण्डितो नावसृजेत् परेषु। ११०००

परश्चेदेनमतिवादवाणैर्भृशं विध्येच्छम एवेह कार्य्यः। संरोष्यमाणः प्रतिहृष्यते यः स आदत्ते सुकृतं वै परस्य।

क्षेपाभिमानादभिषङ्गव्यलीकं निगृह्णाति ज्वलितं यश्च मन्युं। अदुष्टचेता मुदितोऽनसूयुः स आदत्ते सुकृतं वै परेषां।

आक्रुश्यमानो न वदामि किञ्चित् क्षमाम्यहं ताड्यमानश्च नित्यं। श्रेष्ठं ह्येतत् यत् क्षमामाहुरार्य्याः सत्यं तथैवार्ज्जवमानृशंस्यं।

वेदस्योपनिषत् सत्यं सत्यस्योपनिषद्दमः। दमस्योपनिषन्मोक्ष एतत् सर्व्वानुशासनं।

वाचो वेगं मनसः क्रोधवेगं विवित्सावेगमुदरोपस्थवेगं। एतान् वेगान् यो विषहेदुदीर्णांस्तं मन्येऽहं ब्राह्मणं वै मुनिञ्च। ११००५

अक्रोधनः क्रुध्यतां वै विशिष्टस्तथा तितिक्षुरतितिक्षोर्व्विशिष्टः। अमानुषान्मानुषो वै विशिष्टस्तथाऽज्ञानाज्ज्ञानविद्वै विशिष्टः।

आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः। आक्रोष्टारं निर्द्दहति सुकृतञ्चास्य विन्दति।

योऽनात्युक्तः प्राह रूक्षं प्रियं वा यो वा हतो न प्रतिहन्ति धैर्य्यात्। पापञ्च यो नेच्छति तस्य हन्तुस्तस्येह देवाः स्पृहयन्ति नित्यं।

पापीयसः क्षमेतैव श्रेयसः सदृशस्य च। विमानितो हतोऽक्रुष्ट एवं सिद्धिं गमिष्यति।

सदाऽहमार्य्यान्निभृतोऽप्युपासे न मे विवित्सा न च मेऽस्ति रोषः। न चाप्यहं लिप्समानः परैमि न चैव किञ्चिद्विषमेण यामि। ११०१०

नाहं शप्तः प्रतिशपामि किञ्चिद्दमं द्वारं ह्यमृतस्येह वेद्मि। गुह्यं ब्रह्म तदिदं वो ब्रवीमि न मानुषात् श्रेष्ठतरं हि किञ्चित्।

निर्म्मुच्यमानः पापेभ्यो घनेभ्य इव चन्द्रमाः। विरजाः कालमाकाङ्क्षन् धीरो धैर्य्येण सिध्यति।

यः सर्व्वेषां भवति ह्यर्च्चनीय उत्सेचने स्तम्भ इवाभिजातः। यस्मै वाचं सुप्रशस्तां वदन्ति स वै देवान् गच्छति संयतात्मा।

न तथा वक्तुमिच्छन्ति कल्याणान् पुरुषे गुणान्। यथैषां वक्तुमिच्छन्ति नैर्गुण्यमनुयुञ्जकाः।

यस्य वाङ्मनसी गुप्ते सम्यक् प्रणिहिते सदा। वेदास्तपश्च त्यागश्च स इदं सर्व्वमाप्नुयात्। ११०१५

आक्रोशनावमानाभ्यां नाबुधान् गर्हयेद्बुधः। तस्मान्न वर्द्धयेदन्यं न चात्मानं विहिंसयेत्।

अमृतस्येव संतृप्येदवमानस्य पण्डितः । सुखं ह्यवमतः शेते योऽवमन्ता स नश्यति ।
यत् क्रोधनो यजते यद्ददाति यद्वा तपस्तप्यति यज्जुहोति । वैवस्वतस्तद्धरतेऽस्य सर्वं मोघः श्रमो भवति हि क्रोधनस्य ।
चत्वारि यस्य द्वाराणि सुगुप्तान्यमरोत्तमाः । उपस्थमुदरं हस्तौ वाक् चतुर्थी स धर्मवित् ।
सत्यं दमं ह्यार्जवमानृशंस्यं धृतिं तितिक्षामभिसेवमानः । स्वाध्यायनित्योऽस्पृहयन् परेषामेकान्तशील्यूर्द्ध्वगतिर्भवेत् सः । ११०२०
सर्वानेताननुचरन् वत्सवच्चतुरः स्तनान् । न पावनतमं किंचित् सत्यादध्यगमं क्वचित् ।
आचक्षेऽहं मनुष्येभ्यो देवेभ्यः प्रतिसंचरन् । सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ।
यादृशैः संनिवसति यादृशांश्चोपसेवते । यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः ।
यदि सन्तं सेवति यद्यसन्तं तपस्विनं यदि वा स्तेनमेव । वासो यथा रङ्गवशं प्रयाति तथा स तेषां वशमभ्युपैति ।
सदा देवाः साधुभिः संवदन्ते न मानुषं विषयं यान्ति द्रष्टुं । नेन्दुः समः स्यादसमो हि वायुरुच्चावचं विषयं यः स वेद । ११०२५
अदुष्टं वर्त्तमाने तु हृदयान्तरपूरुषे । तेनैव देवाः प्रीयन्ते सतां मार्गस्थितेन वै ।
शिश्नोदरे ये निरताः सदैव स्तेना नरा वाक्परुषाश्च नित्यं । अपेतदोषानपि तान् विदित्वा दूराद्देवाः संपरिवर्जयन्ति ।
न वै देवा हीनसत्त्वेन तोष्याः सर्वाशिना दुष्कृतकर्मणा वा । सत्यव्रता ये तु नराः कृतज्ञा धर्मे रतास्तैः सह संभजन्ते ।
अव्याहृतं व्याहृताच्छ्रेय आहुः सत्यं वदेद्व्याहृतं तद्द्वितीयं । धर्मं वदेद्व्याहृतं तत्तृतीयं प्रियं वदेद्व्याहृतं तच्चतुर्थं ।
॥ साध्या ऊचुः ॥ केनायमावृतो लोकः केन वा न प्रकाशते । केन त्यजति मित्राणि केन स्वर्गं न गच्छति । ११०३०
॥ हंस उवाच ॥ अज्ञानेनावृतो लोको मात्सर्यान्न प्रकाशते । लोभात्त्यजति मित्राणि सङ्गात् स्वर्गं न गच्छति ।
॥ साध्या ऊचुः ॥ कः स्विदेको रमते ब्राह्मणानां कः स्विदेको बहुभिर्जोषमास्ते । कः स्विदेको बलवान् दुर्बलोऽपि कः स्विदेषां कलहं नान्ववैति ।
॥ हंस उवाच ॥ प्राज्ञ एको रमते ब्राह्मणानां प्राज्ञश्चैको बहुभिर्जोषमास्ते । प्राज्ञ एको बलवान् दुर्बलोऽपि प्राज्ञ एषां कलहं नान्ववैति ।
॥ साध्या ऊचुः ॥ किं ब्राह्मणानां देवत्वं किञ्च साधुत्वमुच्यते । असाधुत्वञ्च किमेषां किमेषां मानुषं मतं ।
॥ हंस उवाच ॥ स्वाध्याय एषां देवत्वं व्रतं साधुत्वमुच्यते । असाधुत्वं परीवादो मृत्युर्मानुष्यमुच्यते । ११०३५
॥ भीष्म उवाच ॥ संवाद इत्ययं श्रेष्ठः साध्यानां परिकीर्त्तितः । क्षेत्रं वै कर्मणां योनिः सद्भावः सत्यमुच्यते ।

इति श्रीमहाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि हंसगीतायां एकाधिकत्रिशततमोऽध्यायः ॥ ३०१ ॥

॥ युधिष्ठिर उवाच ॥ साङ्ख्ये योगे च मे तात विशेषं वक्तुमर्हसि । तव धर्मज्ञ सर्वं हि विदितं कुरुसत्तम ।
॥ भीष्म उवाच ॥ साङ्ख्याः साङ्ख्यं प्रशंसन्ति योगा योगं द्विजातयः । वदन्ति कारणं श्रेष्ठं स्वपक्षोद्भावनाय वै ।
अनीश्वरः कथं मुच्येदित्येवं शत्रुकर्शन । वदन्ति कारणं श्रेष्ठं योगाः सम्यङ्मनीषिणः ।
वदन्ति कारणञ्चेदं साङ्ख्याः सम्यग्द्विजातयः । विज्ञायेह गतीः सर्वा विरक्तो विषयेषु यः । ११०४०

ऊर्द्ध्वं स देहात् सुव्यक्तं विमुच्येदिति नान्यथा। एतदाऊर्म्महाप्राज्ञाः साङ्ख्यं वै मोक्षदर्शनं।
स्वपक्षे कारणं ग्राह्यं समर्थे वचनं हितं। शिष्टानां हि मतं ग्राह्यं त्वद्विधैः शिष्टसम्मतैः।
प्रत्यक्षहेतवो योगाः साङ्ख्याः शास्त्रविनिश्चयाः। उभे चैते मते तत्त्वे मम तात युधिष्ठिर।
उभे चैते मते ज्ञाने नृपते शिष्टसंमते। अनुष्ठिते यथाशास्त्रं येन तां परमां गतिं।
तुल्यं शौचं तपोयुक्तं दया भूतेषु चानघ। व्रतानां धारणं तुल्यं दर्शनं न समन्तयोः। ११०४५
॥ युधिष्ठिर उवाच ॥ यदि तुल्यं व्रतं शौचं दया चात्र फलं तथा। न तुल्यं दर्शनं कस्मात्तन्मे ब्रूहि पितामह।
॥ भीष्म उवाच ॥ रागं मोहं तथा स्नेहं कामं क्रोधञ्च केवलं। योगाच्छित्त्वा ततो दोषान् पञ्चैतान् प्राप्नुवन्ति तत्।
यथैवानिमिषाः स्थूला जालं छित्त्वा पुनर्ज्जलं। प्राप्नुवन्ति तथा योगास्तत्पदं वीतकल्मषाः।
तथैव वागुरां छित्त्वा बलवन्तो यथा मृगाः। प्राप्नुयुर्व्विमलं मार्गं विमुक्ताः सर्व्वबन्धनैः।
लोभजानि तथा राजन् बन्धनानि बलान्विताः। छित्त्वा योगाः परं मार्गं गच्छन्ति विमलं शिवं। ११०५०
अबलाश्च मृगा राजन् वागुरासु तथाऽपरे। विनश्यन्ति न सन्देहस्तद्वद्योगबलादृते।
बलहीनाश्च कौन्तेय यथा जालं गता झषाः। वधं गच्छन्ति राजेन्द्र योगास्तद्वत् सुदुर्व्बलाः।
यथा च शकुनाः सूक्ष्मं प्राप्य जालमरिन्दम। तत्र सक्ता विपद्यन्ते मुच्यन्ते च बलान्विताः।
कर्म्मजैर्व्बन्धनैर्बद्धास्तद्वद्योगाः परन्तप। अबला वै विनश्यन्ति मुच्यन्ते च बलान्विताः।
अल्पकश्च यथा राजन् वह्निः शाम्यति दुर्व्बलः। आक्रान्त इन्धनैः स्थूलैस्तद्वद्योगोऽबलः प्रभो। ११०५५
स एव च यदा राजन् वह्निर्ज्जातबलः पुनः। समीरणगतः क्षिप्रं दहेत् कृत्स्नां महीमपि।
तद्वज्जातबलो योगी दीप्ततेजा महाबलः। अन्तकाल इवादित्यः कृत्स्नं संशोषयेज्जगत्।
दुर्व्बलश्च यथा राजन् स्रोतसा ह्रियते नरः। बलहीनस्तथा योगो विषयैर्ह्रियतेऽवशः।
तदेव च महास्रोतो विष्टम्भयति वारणः। तद्वद्योगबलं लब्ध्वा व्यूहते विषयान् बहून्।
विशन्ति चावशाः पार्थं योगाद्योगबलान्विताः। प्रजापतीनृषीन् देवान् महाभूतानि चेश्वराः। ११०६०
न यमो नान्तकः क्रुद्धो न मृत्युर्भीमविक्रमः। ईशते नृपते सर्व्वे योगस्यामिततेजसः।
आत्मनाञ्च सहस्राणि बहूनि भरतर्षभ। योगः कुर्य्याद्बलं प्राप्य तैश्च सर्व्वैर्महीञ्चरेत्।
प्राप्नुयाद्विषयान् कश्चित् पुनश्चोग्रं तपश्चरेत्। संक्षिपेच्च पुनस्तात सूर्य्यस्तेजोगुणानिव।
बलस्थस्य हि योगस्य बन्धनेशस्य पार्थिव। विमोक्षे प्रभविष्णुत्वमुपपन्नमसंशयं।
बलानि योगप्राप्तानि मयैतानि विशाम्पते। निदर्शनार्थं सूक्ष्माणि वक्ष्यामि च पुनस्तव। ११०६५
आत्मनश्च समाधाने धारणां प्रति वा विभो। निदर्शनानि सूक्ष्माणि शृणु मे भरतर्षभ।
अप्रमत्तो यथा धन्वी लक्ष्यं हन्ति समाहितः। युक्तः सम्यक् तथा योगी मोक्षं प्राप्नोत्यसंशयं।
स्नेहपूर्णे यथा पात्रे मन आधाय निश्चलं। पुरुषो युक्त आरोहेत् सोपानं युक्तमानसः।
युक्तस्तथाऽयमात्मानं योगः पार्थिव निश्चलं। करोत्यमलमात्मानं भास्करोपमदर्शनं।
यथा च नावं कौन्तेय कर्णधारः समाहितः। महार्णवगतां शीघ्रं नयेत् पार्थिवसत्तम। ११०७०

तद्वदात्मसमाधानं युक्त्वा योगेन तत्त्ववित्। दुर्गमं स्थानमाप्नोति हित्वा देहमिमं नृप।
सारथिश्च यथा युक्त्वा सदश्वान् सुसमाहितः। देशमिष्टं नयत्याशु धन्विनं पुरुषर्षभ।
तथैव नृपते योगी धारणासु समाहितः। प्राप्नोत्याशु परं स्थानं लक्षं मुक्त इवाशुगः।
प्रवेश्यात्मनि चात्मानं योगी तिष्ठति योऽचलः। पापं हन्ति पुनीतानां पदमाप्नोति योऽजरं।
नाभ्यां कण्ठे च शीर्षे च हृदि वक्षसि पार्श्वयोः। दर्शने श्रवणे चापि घ्राणे चामितविक्रम। ११०७५
स्थानेष्वेतेषु यो योगी महाव्रतसमाहितः। आत्मना सूक्ष्ममात्मानं युङ्क्ते सम्यग्विशाम्पते।
स शीघ्रममलप्रज्ञः कर्म दग्ध्वा शुभाशुभं। उत्तमं योगमास्थाय यदीच्छति विमुच्यते।
॥ युधिष्ठिर उवाच ॥ आहारान् कीदृशान् कृत्वा कानि जित्वा च भारत। योगी बलमवाप्नोति तद्भवान् वक्तुमर्हति।
॥ भीष्म उवाच ॥ कणानां भक्षणे युक्तः पिण्याकस्य च भारत। स्नेहानां वर्ज्जने युक्तो योगी बलमवाप्नुयात्।
भुञ्जानो यावकं रूक्षं दीर्घकालमरिन्दम। एकाहारो विशुद्धात्मा योगी बलमवाप्नुयात्। ११०८०
पक्षान् मासानृतूंश्चैतान् संवत्सरानहस्तथा। अपः पीत्वा पयोमिश्रा योगी बलमवाप्नुयात्।
अखण्डमपि वा मांसं सततं मनुजेश्वर। उपोष्य सम्यक् शुद्धात्मा योगी बलमवाप्नुयात्।
कामं जित्वा तथा क्रोधं शीतोष्णवर्षमेव च। भयं शोकं तथा श्वासं पौरुषान् विषयांस्तथा।
अरतिं दुर्ज्जयाञ्चैव घोरां तृष्णाञ्च पार्थिव। स्पर्शं निद्रां तथा तन्द्रां दुर्ज्जयां नृपसत्तम।
दीपयन्ति महात्मानः सूक्ष्ममात्मानमात्मना। वीतरागा महाप्रज्ञा ध्यानाध्ययनसंपदा। ११०८५
दुर्गस्त्वेष महापन्था ब्राह्मणानां विपश्चितां। यः कश्चिद्व्रजति ह्यस्मिन् क्षेमेण भरतर्षभ।
यथा कश्चिद्वनं घोरं बहुसर्पसरीसृपं। श्वभ्रवत्तोयहीनञ्च दुर्गमं बहुकण्टकं।
अभक्तमटवीप्रायं दावदग्धमहीरुहं। पन्थानं तस्कराकीर्णं क्षेमेणाभिपतेद्युवा।
योगमार्गं तथासाद्य यः कश्चिद्भजते द्विजः। क्षेमेणोपरमेन्मार्गाद्बहुदोषो हि स स्मृतः।
सुस्थेयं क्षुरधारासु निशितासु महीपते। धारणासु तु योगस्य दुःस्थेयमकृतात्मभिः। ११०९०
विपन्ना धारणास्तात नयन्ति न शुभां गतिं। नेतृहीना यथा नावः पुरुषानर्णवे नृप।
यस्तु तिष्ठति कौन्तेय धारणासु यथाविधि। मरणं जन्म दुःखञ्च सुखञ्च स विमुञ्चति।
नानाशास्त्रेषु निष्पन्नं योगेष्विदमुदाहृतं। परं योगस्य यत् कृत्यं निश्चितं तद्द्विजातिषु।
परं हि तद्ब्रह्ममयं महात्मन् ब्रह्माणमीशं वरदञ्च विष्णुं। भवञ्च धर्मञ्च षडाननञ्च षड्ब्रह्मपुत्रांश्च महानुभावान्।
तमश्च कष्टं सुमहद्रजश्च सत्त्वञ्च शुद्धं प्रकृतिं पराञ्च। सिद्धिञ्च देवीं वरुणस्य पत्नीं तेजश्च कृत्स्नं सुमहच्च धैर्य्यं। ११०९५
ताराधिपं खे विमलं सतारं विश्वांश्च देवानुरगान् पितॄंश्च। शैलांश्च कृत्स्नानुदधींश्च घोरान्नदीश्च सर्व्वाः सवनान् घनांश्च।
नागान्नगान् यक्षगणान् दिशश्च गन्धर्व्वसंघान् पुरुषान् स्त्रियश्च। परस्परं प्राप्य महान् महात्मा विशेत योगी न चिरा-
द्विमुक्तः।
कथा च येयं नृपते प्रसक्ता देवे महावीर्य्यमतौ शुभेयं। योगी स सर्व्वानभिभूय मर्त्त्यान्नारायणात्मा कुरुते महात्मा।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि योगविधौ द्व्यधिकत्रिशततमोऽध्यायः ॥ ३०२ ॥

॥ युधिष्ठिर उवाच ॥ सम्यक् त्वयाऽयं नृपते वर्णितः शिष्टसम्मतः । योगमार्गो यथान्यायं शिष्यायेह हितैषिणा ।
सांख्ये त्विदानीं कार्त्स्न्येन विधिं प्रब्रूहि पृच्छते । त्रिषु लोकेषु यज्ज्ञानं सर्व्वं तद्विदितं हि ते ।
॥ भीष्म उवाच ॥ शृणु मे त्वमिदं सूक्ष्मं सांख्यानां विदितात्मनां । विहितं यतिभिः सर्व्वैः कपिलादिभिरीश्वरैः । १११००
यस्मिन्न विभ्रमाः केचिद्दृश्यन्ते मनुजर्षभ । गुणाश्च यस्मिन् बहवो दोषहानिश्च केवला ।
ज्ञानेन परिसंख्याय सदोषान् विषयान्नृप । मानुषान् दुर्जयान् कृत्स्नान् पैशाचान् विषयांस्तथा ।
राक्षसान् विषयान् ज्ञात्वा यक्षाणां विषयांस्तथा । विषयानौरगान् ज्ञात्वा गान्धर्व्वविषयांस्तथा ।
पितॄणां विषयान् ज्ञात्वा तिर्य्यक्षु चरतां नृप । सुपर्णविषयान् ज्ञात्वा मरुतां विषयांस्तथा ।
राजर्षिविषयान् ज्ञात्वा ब्रह्मर्षिविषयांस्तथा । आसुरान् विषयान् ज्ञात्वा वैश्वदेवांस्तथैव च । १११०५
देवर्षिविषयान् ज्ञात्वा योगानामपि चेश्वरान् । प्रजापतीनां विषयान् ब्रह्मणो विषयांस्तथा ।
आयुषश्च परं कालं लोके विज्ञाय तत्त्वतः । सुखस्य च परं तत्त्वं विज्ञाय वदताम्बर ।
प्राप्ते काले च यद्दुःखं पततं विषयैषिणां । तिर्य्यक्षु पततां दुःखं पततां नरके च यत् ।
स्वर्गस्य च गुणान् कृत्स्नान् दोषान् सर्व्वांश्च भारत । वेदवादेऽपि ये दोषा गुणा ये चापि वैदिकाः ।
ज्ञानयोगे च ये दोषा गुणा योगे च ये नृप । सांख्यज्ञाने च ये दोषास्तथैव च गुणा नृप । ११११०
सत्त्वं दशगुणं ज्ञात्वा रजो नवगुणन्तथा । तमश्चाष्टगुणं ज्ञात्वा बुद्धिं सप्तगुणान्तथा ।
षड्गुणञ्च मनो ज्ञात्वा नभः पञ्चगुणन्तथा । बुद्धिं चतुर्गुणां ज्ञात्वा तमश्च त्रिगुणं तथा ।
द्विगुणञ्च रजो ज्ञात्वा सत्त्वमेकगुणं पुनः । मार्गं विज्ञाय तत्त्वेन प्रलये प्रेक्षणे तथा ।
ज्ञानविज्ञानसम्पन्नाः कारणैर्भाविताः शुभाः । प्राप्नुवन्ति शुभं मोक्षं सूक्ष्मा इव नभः परं ।
रूपेण दृष्टिं संयुक्तां घ्राणं गन्धगुणेन च । शब्दे सक्तं तथा श्रोत्रं जिह्वां रसगुणेषु च । ११११५
तनुं स्पर्शे तथा सक्तां वायुं नभसि चाश्रितं । मोहं तमसि संयुक्तं लोभमर्थेषु संश्रितं ।
विष्णुं क्रान्ते बले शक्रं कोष्ठे सक्तं तथाऽनलं । अप्सु देवीं समायुक्तामापस्तेजसि संश्रिताः ।
तेजो वायौ तु संसक्तं वायुं नभसि चाश्रितं । नभो महति संयुक्तं महद्बुद्धौ च संश्रितं ।
बुद्धिं तमसि संसक्तां तमो रजसि संश्रितं । रजः सत्त्वे तथा सक्तं सत्त्वं सक्तं तथात्मनि ।
सक्तमात्मानमीशे च देवे नारायणे तथा । देवं मोक्षे च संसक्तं मोक्षं सक्तन्तु न क्वचित् । १११२०
ज्ञात्वा सत्त्वगुणं देहं वृतं षोडशभिर्गुणैः । स्वभावं चेतनाञ्चैव ज्ञात्वा देहसमाश्रिते ।
मध्यस्थमेकमात्मानं पापं यस्मिन्न विद्यते । द्वितीयं कर्म्म विज्ञाय नृपते विषयैषिणां ।
इन्द्रियाणीन्द्रियार्थांश्च सर्व्वानात्मनि संश्रितान् । दुर्लभत्वञ्च मोक्षस्य विज्ञाय श्रुतिपूर्व्वकं ।
प्राणापानौ समानञ्च व्यानोदानौ च तत्त्वतः । अधश्चैवानिलं ज्ञात्वा प्रवहञ्चानिलं पुनः ।
सप्त वातांस्तथा ज्ञात्वा सप्तधा विहितान् पुनः । प्रजापतीनृषींश्चैव मार्गांश्चैव बहून् वरान् । १११२५
सप्तर्षींश्च बहून् ज्ञात्वा राजर्षींश्च परन्तप । सुरर्षीन्महतश्चान्यान् ब्रह्मर्षीन् सूर्य्यसन्निभान् ।
ऐश्वर्य्याच्च्यावितान् दृष्ट्वा कालेन महता नृप । महतां भूतसङ्घानां श्रुत्वा नाशञ्च पार्थिव ।

गतिञ्चाप्यशुभां ज्ञात्वा नृपते पापकर्म्मिणां । वैतरण्याञ्च यद्दुःखं पतितानां यमक्षये ।
योनीषु च विचित्रासु संसारानशुभांस्तथा । जठरे चाशुभे वासं शोणितोदकभाजने ।
श्लेष्ममूत्रपुरीषे च तीव्रगन्धसमन्विते । शुक्रशोणितसंघाते मज्जास्नायुपरिग्रहे । १११३०
शिराशतसमाकीर्णे नवद्वारपुरेऽशुचौ । विज्ञाय हितमात्मानं योगांश्च विविधान्नृप ।
तामसानाञ्च जन्तूनां रमणीयावृतात्मनां । सात्त्विकानाञ्च जन्तूनां कुत्सितं भरतर्षभ ।
गर्हितं महतामर्थे साङ्ख्यानां विदितात्मनां । उपप्लवांस्तथा घोरान् शशिनस्तेजसस्तथा ।
ताराणां पतनं दृष्ट्वा नक्षत्राणाञ्च पर्य्ययं । द्वन्द्वानां विप्रयोगञ्च विज्ञाय कृपणं नृप ।
अन्योन्यभक्षणं दृष्ट्वा भूतानामपि चाशुभं । बाल्ये मोहञ्च विज्ञाय क्षयं देहस्य चाशुभं । १११३५
रागे मोहे च संप्राप्ते क्वचित् सत्त्वं समाश्रितं । सहस्रेषु नरः कश्चित् मोक्षबुद्धिं समाश्रितः ।
दुर्लभत्वञ्च मोक्षस्य विज्ञाय श्रुतिपूर्व्वकं । बहुमानमलब्धेषु लब्धे मध्यस्थतां पुनः ।
विषयाणाञ्च दौरात्म्यं विज्ञाय नृपते पुनः । गतासूनाञ्च कौन्तेय देहान्दृष्ट्वा तथाऽशुभान् ।
वासं कुलेषु जन्तूनां दुःखं विज्ञाय भारत । ब्रह्मघ्नानां गतिं ज्ञात्वा पतितानां सुदारुणां ।
सुरापाने च सक्तानां ब्राह्मणानां दुरात्मनां । गुरुदारप्रसक्तानां गतिं विज्ञाय चाशुभां । १११४०
जननीषु च वर्त्तन्ते ये नसम्यग्युधिष्ठिर । सदेवकेषु लोकेषु ये न वर्त्तन्ति मानवाः ।
तेन ज्ञानेन विज्ञाय गतिञ्चाशुभकर्म्मणां । तिर्य्यग्योनिगतानाञ्च विज्ञाय गतयः पृथक् ।
वेदवादांस्तथा चित्रानृतूनां पर्य्ययांस्तथा । क्षयं संवत्सराणाञ्च मासानाञ्च क्षयन्तथा ।
पक्षक्षयं तथा दृष्ट्वा दिवसानाञ्च संक्षयं । क्षयं वृद्धिञ्च चन्द्रस्य दृष्ट्वा प्रत्यक्षतस्तथा ।
वृद्धिं दृष्ट्वा समुद्राणां क्षयन्तेषां तथा पुनः । क्षयं धनानां दृष्ट्वा च पुनर्वृद्धिं तथैव च । १११४५
संयोगानां क्षयं दृष्ट्वा युगानाञ्च विशेषतः । क्षयञ्च दृष्ट्वा शैलानां क्षयञ्च सरितान्तथा ।
वर्णानाञ्च क्षयं दृष्ट्वा क्षयान्तञ्च पुनः पुनः । जरां मृत्युं तथा जन्म दृष्ट्वा दुःखानि चैव ह ।
देहदोषांस्तथा ज्ञात्वा तेषां दुःखञ्च तत्त्वतः । देहविक्लवताञ्चैव सम्यग्विज्ञाय तत्त्वतः ।
आत्मदोषांश्च विज्ञाय सर्व्वानात्मनि संश्रितान् । स्वदेहादुत्थितान् गन्धांस्तथा विज्ञाय चाशुभान् ।
॥ युधिष्ठिर उवाच ॥ कान् स्वगात्रोद्भवान् दोषान् पश्यस्यमितविक्रम । एतन्मे संशयं कृत्स्नं वक्तुमर्हसि तत्त्वतः । १११५०
॥ भीष्म उवाच ॥ पञ्च दोषान् प्रभो देहे प्रवदन्ति मनीषिणः । मार्गज्ञाः कापिलाः साङ्ख्याः शृणु तानरिसूदन ।
कामक्रोधौ भयं निद्रा पञ्चमः श्वास उच्यते । एते दोषाः शरीरेषु दृश्यन्ते सर्व्वदेहिनां ।
छिन्दन्ति क्षमया क्रोधं कामं संकल्पवर्ज्जनात् । सत्त्वसंसेवनान्निद्रामप्रमादाद्भयन्तथा ।
छिन्दन्ति पञ्चमं श्वासमल्पाहारतया नृप । गुणान् गुणशतैर्ज्ञात्वा दोषान् दोषशतैरपि ।
हेतून् हेतुशतैश्चित्रैश्चित्रान् विज्ञाय तत्त्वतः । अपां फेनोपमं लोकं विष्णोर्मायाशतैर्वृतं । १११५५
चित्रभित्तिप्रतीकाशं नलसारमनर्थकं । तमःश्वभ्रनिभं दृष्ट्वा वर्षबुद्बुदसन्निभं ।
नाशप्रायं सुखाद्धीनं नाशोत्तरमिहावशं । रजस्तमसि संमग्नं पङ्के द्विपमिवावशं ।

सांख्या राजन् महाप्राज्ञास्त्यक्त्वा देहं प्रजाकृतं । ज्ञानयोगेन सांख्येन व्यापिना महता नृप ।
राजसानशुभान् गन्धांस्तामसांश्च तथाविधान् । पुण्यांश्च सात्त्विकान् गन्धान् स्पर्शजान् देहसंश्रितान् ।
छित्त्वाशु ज्ञानशस्त्रेण तपोदण्डेन भारत । ततो दुःखोदकं घोरं चिन्ताशोकमहाह्रदं । ११११६०
व्याधिमृत्युमहाग्राहं महाभयमहोरगं । तमःकूर्म्मं रजोमीनं प्रज्ञया सन्तरन्त्युत ।
स्नेहपङ्कं जरादुर्गं ज्ञानद्वीपमरिन्दम । कर्म्मागाधं सत्यतीरं स्थितव्रतमरिन्दम ।
हिंसाशीघ्रमहावेगं नानारससमाकरं । नानाप्रीतिमहारत्नं दुःखज्वरसमीरणं ।
शोकतृष्णामहावर्त्तं तीक्ष्णव्याधिमहागजं । अस्थिसंघातसंघट्टं श्लेष्मफेनमरिन्दम ।
दानमुक्ताकरं घोरं शोणितह्रदविद्रुमं । हसितोत्कृष्टनिर्घोषं नानाज्ञानसुदुस्तरं । ११११६५
रोदनाश्रुमलक्षारं सङ्गत्यागपरायणं । पुनराजन्मलोकौघं पुत्त्रबान्धवपत्तनं ।
अहिंसासत्यमर्य्यादं प्राणत्यागमहोर्म्मिणं । वेदान्तगमनद्वीपं सर्व्वभूतदयोदधिं ।
मोक्षदुर्लभविषयं वडवामुखसागरं । तरन्ति यतयः सिद्धा ज्ञानयोगेन भारत ।
तीर्त्वा च दुस्तरं जन्म विशन्ति विमलं नभः । ततस्तान् सुकृतीन् सांख्यान् सूर्य्यो वहति रश्मिभिः ।
पद्मतन्तुवदाविश्य प्रवहन् विषयान्नृप । तत्र तान् प्रवहो वायुः प्रतिगृह्णाति भारत । ११११७०
वीतरागान् यतीन् सिद्धान् वीर्य्ययुक्तांस्तपोधनान् । सूक्ष्मः शीतः सुगन्धी च सुखस्पर्शश्च भारत ।
सप्तानां मरुतां श्रेष्ठो लोकान् गच्छति यः शुभान् । स तान् वहति कौन्तेय नभसः परमां गतिं ।
नभो वहति लोकेश रजसः परमां गतिं । रजो वहति राजेन्द्र सत्त्वस्य परमां गतिं ।
सत्त्वं वहति शुद्धात्मन् परं नारायणं प्रभुं । प्रभुर्व्वहति शुद्धात्मा परमात्मानमात्मना ।
परमात्मानमासाद्य तद्भूतायतनाऽमलाः । अमृतत्वाय कल्पन्ते न निवर्त्तन्ति वा विभो । ११११७५
परमा सा गतिः पार्थ निर्द्वन्द्वानां महात्मनां । सत्यार्ज्जवरतानां वै सर्व्वभूतदयावतां ।
॥ युधिष्ठिर उवाच ॥ स्थानमुत्तममासाद्य भगवन्तं स्थिरव्रताः । आजन्ममरणं वा ते स्मरन्त्युत न वाऽनघ ।
यदत्र तथ्यं तन्मे त्वं यथावद्वक्तुमर्हसि । त्वदृते पुरुषं नान्यं प्रष्टुमर्हामि कौरव ।
मोक्षे दोषो महानेष प्राप्य सिद्धिगतानृषीन् । यदि तत्रैव विज्ञाने वर्त्तन्ते यतयः परे ।
प्रवृत्तिलक्षणं धर्म्मं पश्यामि परमं नृप । मग्नस्य हि परं ज्ञानं किन्तु दुःखतरम्भवेत् । ११११८०
॥ भीष्म उवाच ॥ यथान्यायं त्वया तात प्रश्नः पृष्टः सुसङ्कटः । बुधानामपि संमोहः प्रश्नेऽस्मिन् भरतर्षभ ।
अत्रापि तत्त्वं परमं शृणु सम्यङ्मयेरितं । बुद्धिश्च परमा यत्र कापिलानां महात्मनां ।
इन्द्रियाण्यवबुद्ध्यन्ते स्वदेहे देहिनां नृप । करणान्यात्मनस्तानि सूक्ष्मः पश्यति तैस्तु सः ।
आत्मना विप्रहीणानि काष्ठकुड्यसमानि तु । विनश्यन्ति न सन्देहः फेना इव महार्णवे ।
इन्द्रियैः सह सुप्तस्य देहिनः शत्रुतापन । सूक्ष्मश्चरति सर्व्वत्र नभसीव समीरणः । ११११८५
स पश्यति यथान्यायं स्पर्शान् स्पृशति वा विभो । बुध्यमानो यथा पूर्व्वमखिलेनेह भारत ।
इन्द्रियाणीह सर्व्वाणि स्वे स्वे स्थाने यथाविधि । अनीशत्वात् प्रलीयन्ते सर्पा हतविषा इव ।

इन्द्रियाणान्तु सर्व्वेषां स्वस्थानेष्वेव सर्व्वशः। प्राकाम्यगतयः सूक्ष्मास्ताभ्यो ह्यात्मा न संशयः ।
सत्त्वस्य च गुणान् कृत्स्नान् रजसश्च गुणान् पुनः । गुणांश्च तमसः सर्व्वान् गुणान् बुद्धेश्च भारत ।
गुणांश्च मनसश्चापि नभसश्च गुणांश्च सः । गुणान् वायोश्च धर्म्मात्मन् तेजसश्च गुणान् पुनः । १११९०
अपां गुणांस्तथा पार्थ पार्थिवांश्च गुणानपि । सर्व्वात्मैव गुणैर्व्याप्य क्षेत्रज्ञेषु युधिष्ठिर ।
आत्मा च याति क्षेत्रज्ञं कर्म्मणी च शुभाशुभे । शिष्या इव महात्मानमिन्द्रियाणि च तं प्रभो ।
प्रकृतिञ्चाप्यतिक्रम्य गच्छत्यात्मानमव्ययं । परं नारायणात्मानं निर्द्वन्द्वं प्रकृतेः परं ।
विमुक्तः पुण्यपापेभ्यः प्रविष्टस्तमनामयं । परमात्मानमगुणं न निवर्त्तति भारत ।
शिष्टं तत्र मनस्तात इन्द्रियाणि च भारत । आगच्छन्ति यथाकालं गुरोः सन्देशकारिणः । १११९५
शक्यञ्चाल्पेन कालेन शान्तिं प्राप्तुं गुणार्थिना । एवमुक्तेन कौन्तेय युक्तज्ञानेन मोक्षिणा ।
सांख्या राजन्महाप्राज्ञा गच्छन्ति परमां गतिं । ज्ञानेनानेन कौन्तेय तुल्यं ज्ञानं न विद्यते ।
अत्र ते संशयो माभूज्ज्ञानं सांख्यं परं मतं । अक्षरं ध्रुवमेवोक्तं पूर्णं ब्रह्म सनातनं ।
अनादिमध्यनिधनं निर्द्वन्द्वं कर्त्तृ शाश्वतं । कूटस्थञ्चैव नित्यञ्च यद्वदन्ति मनीषिणः ।
यतः सर्व्वाः प्रवर्त्तन्ते सर्गप्रलयविक्रियाः । यच्च शंसन्ति शास्त्रेषु वदन्ति परमर्षयः । ११२००
सर्व्वे विप्राश्च देवाश्च तथा शमविदो जनाः । ब्रह्मण्यं परमं देवमनन्तं परमच्युतं ।
प्रार्थयन्तश्च तं विप्रा वदन्ति गुणबुद्धयः । सम्यग्युक्तास्तथा योगाः सांख्याश्चामितदर्शनाः ।
अमूर्त्तेस्तस्य कौन्तेय सांख्यं मूर्त्तिरिति श्रुतिः । अभिज्ञानानि तस्याहुर्मतं हि भरतर्षभ ।
द्विविधानीह भूतानि पृथिव्यां पृथिवीपते । जङ्गमागमसंज्ञानि जङ्गमन्तु विशिष्यते ।

ज्ञानं महद्यद्धि महत्सु राजन् वेदेषु सांख्येषु तथैव योगे । यच्चापि दृष्टं विविधं पुराणे सांख्यागतं तन्निखिलं नरेन्द्र । ११२०५

यच्चेतिहासेषु महत्सु दृष्टं यच्चार्थशास्त्रे नृप शिष्टजुष्टे । ज्ञानञ्च योगे यदिहास्ति किञ्चित् सांख्यागतं तच्च महन्महात्मन् ।

शमश्च दृष्टः परमं बलञ्च ज्ञानञ्च सूक्ष्मञ्च यथावदुक्तं । तपांसि सूक्ष्माणि सुखानि चैव सांख्ये यथावद्विहितानि राजन् ।

विपर्य्यये तस्य हि पार्थ देवान् गच्छन्ति सांख्याः सततं सुखेन । तांश्चानुसञ्चार्य्य ततः कृतार्थाः पतन्ति विप्रेषु यतेषु भूयः ।

हित्वा च देहं प्रविशन्ति देवं दिवौकसो द्यामिव पार्थ सांख्याः । अतोऽधिकं तेऽभिरता महार्हे सांख्ये द्विजाः पार्थिव शिष्टजुष्टे ।

तेषां न तिर्य्यग्गमनं हि दृष्टं नार्व्वाग्गतिः पापकृताधिवासः । न वा प्रधाना अपि ते द्विजातयो ये ज्ञानमेतं नृपतेऽनुरक्ताः । ११२१०

सांख्यं विशालं परमं पुराणं महार्णवं विमलमुदारकान्तं । कृत्स्नञ्च सांख्यं नृपते महात्मा नारायणो धारयतेऽप्रमेयं ।

इतश्चोक्तं नरदेव तत्त्वं नारायणो विश्वमिदं पुराणं। स सर्गकाले च करोति सर्गं संहारकाले च तदत्ति भूयः।
संहृत्य सर्व्वं निजदेहसंस्थं कृत्वा सुशेते जगदन्तरात्मा।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि सांख्यकथने व्यधिकत्रिशततमोऽध्यायः॥ ३०२॥

॥ युधिष्ठिर उवाच॥ किन्तदक्षरमित्युक्तं यस्मान्नावर्त्तते पुनः। किञ्च तत् क्षरमित्युक्तं यस्मादावर्त्तते पुनः।
अक्षरक्षरयोर्व्यक्तिं पृच्छाम्यरिनिसूदन। उपलब्धुं महाबाहो तत्त्वेन कुरुनन्दन। ११२१५
त्वं हि ज्ञाननिधिर्व्विप्रैरुच्यसे वेदपारगैः। ऋषिभिश्च महाभागैर्यतिभिश्च महात्मभिः।
शेषमल्पं दिनानान्ते दक्षिणायनभास्करे। आवृत्ते भगवत्यर्के गन्ताऽसि परमां गतिं।
त्वयि प्रतिगते श्रेयः कुतः श्रोष्यामहे वयं। कुरुवंशप्रदीपस्त्वं ज्ञानदीपेन दीप्यसे।
तदेतच्छ्रोतुमिच्छामि त्वत्तः कुरुकुलोद्वह। न तृप्यामीह राजेन्द्र शृण्वन्नमृतमीदृशं।
॥ भीष्म उवाच॥ अत्र ते वर्त्तयिष्यामि इतिहासं पुरातनं। वशिष्ठस्य च संवादं करालजनकस्य च। ११२२०
वशिष्ठं श्रेष्ठमासीनमृषीणां भास्करद्युतिं। पप्रच्छ जनको राजा ज्ञानं नैःश्रेयसं परं।
परमध्यात्मकुशलमध्यात्मगतिनिश्चयं। मैत्रावरुणिमासीनमभिवाद्य कृताञ्जलिः।
स्वक्षरं प्रश्रितं वाक्यं मधुरञ्चाप्यनुल्वणं। पप्रच्छर्षिवरं राजा करालजनकः पुरा।
भगवन् श्रोतुमिच्छामि परं ब्रह्म सनातनं। यस्मान्न पुनरावृत्तिमाप्नुवन्ति मनीषिणः।
यच्च तत्क्षरमित्युक्तं यत्रेदं क्षरते जगत्। यच्चाक्षरमिति प्रोक्तं शिवं क्षेम्यमनामयं। ११२२५
॥ वशिष्ठ उवाच॥ श्रूयतां पृथिवीपाल क्षरतीदं यथा जगत्। यन्न क्षरति पूर्व्वेण यावत्कालेन वाऽप्यथ।
युगं द्वादशसाहस्रं कल्पं विद्धि चतुर्युगं। दशकल्पशतावृत्तमहस्तद्ब्राह्ममुच्यते।
रात्रिश्चैतावती राजन् यस्यान्ते प्रतिबुध्यते। सृजत्यनन्तकर्म्माणं महान्तं भूतमग्रजं।
मूर्त्तिमन्तममूर्त्तात्मा विश्वं शम्भुः स्वयम्भुवः। अणिमा लघिमा प्राप्तिरीशानं ज्योतिरव्ययं।
सर्व्वतः पाणिपादान्तं सर्व्वतोऽक्षिशिरोमुखं। सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति। ११२३०
हिरण्यगर्भो भगवानेष बुद्धिरिति स्मृतः। महानिति च योगेषु विरिञ्चिरिति चाप्यजः।
सांख्ये च पठ्यते शास्त्रे नामभिर्ब्बहुधात्मकः। विचित्ररूपो विश्वात्मा एकोऽक्षर इति स्मृतः।
वृतं नैकात्मकं येन कृतं त्रैलोक्यमात्मना। तथैव बहुरूपत्वाद्विश्वरूप इति श्रुतः।
एष वै विक्रियापन्नः सृजत्यात्मानमात्मना। अहङ्कारं महातेजाः प्रजापतिमहङ्कृतं।
अव्यक्ताद्व्यक्तमापन्नं विद्यासर्गं वदन्ति तं। महान्तञ्चाप्यहङ्कारमविद्यासर्गमेव च। ११२३५
अविधिश्च विधिश्चैव समुत्पन्नौ तथैकतः। विद्याविद्येति विख्याते श्रुतिशास्त्रार्थचिन्तकैः।
भूतसर्गमहङ्कारात्तृतीयं विद्धि पार्थिव। अहङ्कारेषु सर्व्वेषु चतुर्थं विद्धि वै कृतं।
वायुर्ज्योतिरथाकाशमापोऽथ पृथिवी तथा। शब्दः स्पर्शश्च रूपञ्च रसो गन्धस्तथैव च।
एवं युगपदुत्पन्नं दशवर्गमसंशयं। पञ्चमं विद्धि राजेन्द्र भौतिकं सर्गमर्थवत्।
श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणमेव च पञ्चमं। वाक् च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च। ११२४०

बुद्धीन्द्रियाणि चैतानि तथा कर्म्मेन्द्रियाणि च । सम्भूतानीह युगपन्मनसा सह पार्थिव ।
एषा तत्त्वचतुर्विंशी सर्व्वाकृतिषु वर्त्तते । यां ज्ञात्वा नाभिशोचन्ति ब्राह्मणास्तत्त्वदर्शिनः ।
एतद्देहं समाख्यातं त्रैलोक्ये सर्व्वदेहिषु । वेदितव्यं नरश्रेष्ठ सदेवनरदानवे ।
सयक्षभूतगन्धर्व्वे सकिन्नरमहोरगे । सचारणपिशाचे वै सदेवर्षिनिशाचरे ।
सदंशकीटमशके सपूतिकृमिमूषिके । शुनि श्वपाके चैणेये सचाण्डाले सपुल्कसे । ११२४५
हस्त्यश्वखरशार्दूले सवृक्षे गवि चैव ह । यच्च मूर्त्तिमयं किञ्चित् सर्व्वत्रैतन्निदर्शनं ।
जले भुवि तथाकाशे नान्यत्रेति विनिश्चयः । स्थानं देहवतामासीदित्येवमनुशुश्रुम ।
कृत्स्नमेतावतस्तात क्षरते व्यक्तसंज्ञितं । अहन्यहनि भूतात्मा ततः क्षर इति स्मृतः ।
एतदक्षरमित्युक्तं क्षरतीदं तथा जगत् । जगन्मोहात्मकं प्राहुरव्यक्तं व्यक्तसंज्ञकं ।
महांश्चैवाक्षरो नित्यमेतत्क्षरनिदर्शनं । कथितन्ते महाराज यस्मात्त्वं परिपृच्छसि । ११२५०
पञ्चविंशतिमो विष्णुर्निस्तत्त्वस्तत्त्वसंज्ञितः । तत्त्वसंश्रयणादेतत् तत्त्वमाहुर्मनीषिणः ।
यन्मर्त्त्यमसृजद्व्यक्तं तत्तन्मूर्त्त्यधितिष्ठति । चतुर्विंशतिमोऽव्यक्तो ह्यमूर्त्तः पञ्चविंशकः ।
स एव हृदि सर्व्वासु मूर्त्तिष्वातिष्ठते त्मवान् । चेतयंश्चेतनो नित्यः सर्व्वमूर्त्तिरमूर्त्तिमान् ।
सर्गप्रलयधर्म्मिण्या स सर्गप्रलयात्मकः । गोचरे वर्त्तते नित्यं निर्गुणं गुणसंज्ञितं ।
एवमेष महानात्मा सर्गप्रलयकोविदः । विकुर्व्वाणः प्रकृतिमानभिमन्यत्यबुद्धिमान् । ११२५५
तमःसत्त्वरजोयुक्तस्तासु तास्विह योनिषु । लीयते प्रतिबुद्धत्वादबुद्धजनसेवनात् ।
सहवासविनाशित्वान्नान्योऽहमिति मन्यते । योऽहं सोऽहमिति ह्युक्तो गुणानेवानुवर्त्तते ।
तमसा तामसान् भावान् विविधान् प्रतिपद्यते । रजसा राजसांश्चैव सात्त्विकान् सत्त्वसंश्रयात् ।
शुक्ललोहितकृष्णानि रूपाण्येतानि त्रीणि तु । सर्व्वाण्येतानि रूपाणि जानीह प्राकृतानि वै ।
तामसा निरयं यान्ति राजसा मानुषानथ । सात्त्विका देवलोकाय गच्छन्ति सुखभागिनः । ११२६०
निष्कैवल्येन पापेन तिर्य्यग्योनिमवाप्नुयात् । पुण्यपापेन मानुष्यं पुण्येनैकेन देवताः ।
एवमव्यक्तविषयं क्षरमाहुर्मनीषिणः । पञ्चविंशतिमो योऽयं ज्ञानादेव प्रवर्त्तते ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वशिष्ठकरालजनकसंवादे चतुरधिकत्रिशततमोऽध्यायः ॥ ३०४ ॥

॥ वशिष्ठ उवाच ॥ एवमप्रतिबुद्धत्वादबुद्धमनुवर्त्तते । देहाद्देहसहस्राणि तथा समभिपद्यते ।
तिर्य्यग्योनिसहस्रेषु कदाचिद्देवतास्वपि । उपपद्यति संयोगाद्गुणैः सह गुणक्षयात् ।
मानुषत्वाद्दिवं याति दिवो मानुष्यमेव च । मानुष्यान्निरयस्थानमानन्त्यं प्रतिपद्यते । ११२६५
कोषकारो यथात्मानं कीटः समनुरुन्धति । सूत्रतन्तुगुणैर्नित्यं तथाऽयमगुणो गुणैः ।
द्वन्द्वमेति च निर्द्वन्द्वस्तासु तास्विह योनिषु । शीर्षरोगेऽक्षिरोगे च दन्तशूले गलग्रहे ।
जलोदरे तृषारोगे ज्वरगण्डे विषूचिके । श्वित्रे कुष्ठेऽग्निदग्धे च सिध्मापस्मारयोरपि ।
यानि चान्यानि द्वन्द्वानि प्राकृतानि शरीरिषु । उत्पद्यन्ते विचित्राणि तान्येषोऽप्यभिमन्यते ।

तिर्य्यग्योनिसहस्रेषु कदाचिद्देवतास्वपि । अभिमन्यत्यभीमानात्तथैव सुकृतान्यपि । ११९७०
शुक्लवासाश्चतुर्व्वासाः शायी नित्यमधस्तथा । मण्डूकशायी च तथा वीरासनगतस्तथा ।
चीरधारणमाकाशे शयनं स्थानमेव च । इष्टकाप्रस्तरे चैव कण्टकप्रस्तरे तथा ।
भस्मप्रस्तरशायी च भूमिशय्यातलेषु च । वीरस्थानाम्बुपङ्के च शयनं फलकेषु च ।
विविधासु च शय्यासु फलगृध्यान्वितस्तथा । मुञ्जमेखलनग्नत्वं क्षौमकृष्णाजिनानि च ।
शाणीवालपरीधानो व्याघ्रचर्म्मपरिच्छदः । सिंहचर्म्मपरीधानः पट्टवासास्तथैव च । ११९७५
फलकं परिधानश्च तथा कण्टकवस्त्रधृक् । कीटकावसनश्चैव चीरवासास्तथैव च ।
वस्त्राणि चान्यानि बहून्यभिमन्यत्यबुद्धिमान् । भोजनानि विचित्राणि रत्नानि विविधानि च ।
एकरात्रान्तराशित्वमेककालिकभोजनं । चतुर्थाष्टमकालश्च षष्ठकालिक एव च ।
षड्रात्रभोजनश्चैव तथैवाष्टाहभोजनः । सप्तरात्रदशाहारो द्वादशाह्निकभोजनः ।
मासोपवासी मूलाशी फलाहारस्तथैव च । वायुभक्षोऽम्बुपिण्याकदधिगोमयभोजनः । ११९८०
गोमूत्रभोजनश्चैव शाकपुष्पाद एव च । शैवालभोजनश्चैव तथाचामेन वर्त्तयन् ।
वर्त्तयन् शीर्णपर्णैश्च प्रकीर्णफलभोजनः । विविधानि च कृच्छ्राणि सेवते सिद्धिकाङ्क्षया ।
चान्द्रायणानि विधिवल्लिङ्गानि विविधानि च । चातुराश्रम्यपन्थानमाश्रयत्यपथानपि ।
उपाश्रमानप्यपरान् पाषण्डान् विविधानपि । विविक्ताश्च शिलाच्छायास्तथा प्रस्रवणानि च ।
पुलिनानि विविक्तानि विविक्तानि वनानि च । देवस्थानानि पुण्यानि विविक्तानि सरांसि च । ११९८५
विविक्ताश्चापि शैलानां गुहा गृहनिभोपमाः । विविक्तानि च जप्यानि व्रतानि विविधानि च ।
नियमान् विविधांश्चापि विविधानि तपांसि च । यज्ञांश्च विविधाकारान् विधींश्च विविधांस्तथा ।
वणिक्पथं द्विजं क्षत्रं वैश्यशूद्रांस्तथैव च । दानञ्च विविधाकारं दीनान्धकृपणादिषु ।
अभिमन्यत्यसंबोधात्तथैव त्रिविधान् गुणान् । सत्त्वं रजस्तमश्चैव धर्म्मार्थौ काम एव च ।
प्रकृत्यात्मानमेवात्मा एवं प्रविभजत्युत । स्वधाकारवषट्कारौ स्वाहाकारनमस्क्रियाः । ११९९०
याजनाध्यापनं दानं तथैवाहुः प्रतिग्रहं । यजनाध्ययने चैव यच्चान्यदपि किञ्चन ।
जन्ममृत्युविवादे च तथा विशसनेऽपि च । शुभाशुभमयं सर्व्वमेतदाहुः क्रियापथं ।
प्रकृतिः कुरुते देवी भवं प्रलयमेव च । दिवसान्ते गुणानेतानभ्येत्यैकोऽवतिष्ठते ।
रश्मिजालमिवादित्यस्तत्तत्काले नियच्छति । एवमेषोऽसकृत् पूर्व्वं क्रीडार्थमभिमन्यते ।
आत्मरूपगुणानेतान् विविधान् हृदयप्रियान् । एवमेतां विकुर्व्वाणः सर्गप्रलयधर्म्मिणीं । ११९९५
क्रियां क्रियापथे रक्तस्त्रिगुणां त्रिगुणाधिपः । क्रियां क्रियापथोपेतस्तथा तदिति मन्यते ।
प्रकृत्या सर्व्वमेवेदं जगदन्धीकृतं विभो । रजसा तमसा चैव व्याप्तं सर्व्वमनेकधा ।
एवं द्वन्द्वान्यथैतानि समावर्त्तन्ति नित्यशः । ममैवैतानि जायन्ते धावन्ते तानि मामिति ।
निस्तर्त्तव्यान्यथैतानि सर्व्वाणीति नराधिप । मन्यते यं ह्यबुद्धत्वात्तथैव सुकृतान्यपि ।

भोक्तव्यानि मयैतानि देवलोकगतेन वै। इहैव चैनं भोक्ष्यामि शुभाशुभफलोदयं। ११२००
सुखमेव तु कर्त्तव्यं सकृत् कृत्वा सुखं मम। यावदन्तञ्च मे सौख्यं जात्यां जात्यां भविष्यति।
भविष्यति च मे दुःखं कृतेनेहाप्यनन्तकं। महद्दुःखं हि मानुष्यं निरये चापि मज्जनं।
निरयाच्चापि मानुष्यं कालेनैष्याम्यहं पुनः। मनुष्यत्वाच्च देवत्वं देवत्वात् पौरुषं पुनः।
मनुष्यत्वाच्च निरयं पर्य्यायेणोपगच्छति। य एवं वेत्ति नित्यं वै निरात्मात्मगुणैर्वृतः।
तेन देवमनुष्येषु निरये चोपपद्यते। ममत्वेनावृतो नित्यं तत्रैव परिवर्त्तते। ११२०५
सर्गकोटिसहस्राणि मरणान्तासु मूर्त्तिषु। य एवं कुरुते कर्म्म शुभाशुभफलात्मकं।
स एवं फलमाप्नोति त्रिषु लोकेषु मूर्त्तिमान्। प्रकृतिः कुरुते कर्म्म शुभाशुभफलात्मकं।
प्रकृतिश्च तदश्नाति त्रिषु लोकेषु कामगा। तिर्य्यग्योनिमनुष्यत्वे देवलोके तथैव च।
त्रीणि स्थानानि चैतानि जानीयात् प्राकृतानि ह। अलिङ्गां प्रकृतिं त्वाहुर्लिङ्गैरनुमिमीमहे।
तथैव पौरुषं लिङ्गमनुमानाद्धि मन्यते। स लिङ्गान्तरमासाद्य प्राकृतं लिङ्गमव्रणं। ११२१०
व्रणद्वाराण्यधिष्ठाय कर्म्मण्यात्मनि मन्यते। श्रोत्रादीनि तु सर्व्वाणि पञ्चकर्म्मेन्द्रियाण्यथ।
वागादीनि प्रवर्त्तन्ते गुणेष्विह गुणैः सह। अहमेतानि वै सर्व्वमप्येतानीन्द्रियाणि ह।
निरिन्द्रियो हि मन्येत व्रणवानस्मि निर्व्रणः। अलिङ्गो लिङ्गमात्मानमकालः कालमात्मनः।
असत्त्वं सत्त्वमात्मानमतत्त्वं तत्त्वमात्मनः। अमृत्युर्मृत्युमात्मानमचरश्चरमात्मनः।
अक्षेत्रः क्षेत्रमात्मानमसर्गः सर्गमात्मनः। अतपास्तप आत्मानमगतिर्गतिमात्मनः। ११२१५
अभवो भवमात्मानमभयो भयमात्मनः। अक्षरः क्षरमात्मानमबुद्धिस्त्वभिमन्यते।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वशिष्ठकरालजनकसंवादे पञ्चाधिकत्रिशततमोऽध्यायः॥ ३०५॥

॥ वशिष्ठ उवाच॥ एवमप्रतिबुद्धत्वादबुद्धजनसेवनात्। सर्गकोटिसहस्राणि पतनान्तानि गच्छति।
धाम्ना धामसहस्राणि मरणान्तानि गच्छति। तिर्य्यग्योनिमनुष्यत्वे देवलोके तथैव च।
चन्द्रमा इव भूतानां पुनस्तत्र सहस्रशः। लीयते प्रतिबुद्धत्वादेवमेष ह्यबुद्धिमान्।
कला पञ्चदशी योनिस्तद्धाम प्रतिबुध्यते। नित्यमेतद्धि जानीहि सोमं वै षोडशीं कलां। ११२२०
कलायां जायतेऽजस्रं पुनः पुनरबुद्धिमान्। धाम तस्योपयुञ्जन्ति भूय एवोपजायते।
षोडशी तु कला सूक्ष्मा स सोम उपधार्य्यतां। न त्वुपयुज्यते देवैर्देवानुपयुनक्ति सा।
एतामक्षपयित्वा हि जायते नृपसत्तम। सा ह्यस्य प्रकृतिर्दृष्टा तत्क्षयान्मोक्ष उच्यते।
तदेव षोडशकलं देहमव्यक्तसंज्ञकं। ममायमिति मन्वानस्तत्रैव परिवर्त्तते।
पञ्चविंशो महानात्मा तस्यैवाप्रतिरोधनात्। विमलस्य विशुद्धस्य शुद्धाशुद्धनिषेवणात्। ११२२५
अशुद्ध एव शुद्धात्मा तादृग्भवति पार्थिव। अबुद्धसेवनाच्चापि बुद्धोऽप्यबुद्धतां व्रजेत्।
तथैवाप्रतिबुद्धोऽपि विज्ञेयो नृपसत्तम। प्रकृतेस्त्रिगुणायास्तु सेवनात्त्रिगुणो भवेत्।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वशिष्ठकरालजनकसंवादे षडधिकत्रिशततमोऽध्यायः॥ ३०६॥

॥ जनक उवाच ॥ अक्षरक्षरयोरेष द्वयोः सम्बन्ध इष्यते। स्त्रीपुंसोर्व्वाऽपि भगवन् सम्बन्धस्तद्वदुच्यते।
ऋते तु पुरुषं नेह स्त्री गर्भं धारयत्युत। ऋते स्त्रियं न पुरुषो रूपं निर्व्वर्त्तयेत्तथा।
अन्योन्यस्याभिसम्बन्धादन्योन्यगुणसंश्रयात्। रूपं निर्व्वर्त्तयत्येतदेवं सर्व्वासु योनिषु। ११११०
रत्यर्थमभिसम्बन्धादन्योन्यगुणसंश्रयात्। ऋतौ निवर्त्तते रूपं तद्वक्ष्यामि निदर्शनं।
ये गुणाः पुरुषस्येह ये च मातृगुणास्तथा। अस्थिस्नायुश्च मज्जा च जानीमः पितृतो द्विज।
त्वङ्मांसशोणितञ्चेति मातृजान्यपि शुश्रुम। एवमेतद्द्विजश्रेष्ठ वेदे शास्त्रे च पठ्यते।
प्रमाणं यत् स्ववेदोक्तं शास्त्रोक्तं यच्च पठ्यते। वेदशास्त्रद्वयञ्चैव प्रमाणं तत् सनातनं।
अन्योन्यगुणसंरोधादन्योन्यगुणसंश्रयात्। एवमेवाभिसम्बद्धौ नित्यं प्रकृतिपूरुषौ। ११११५
पश्यामि भगवंस्तस्मान्मोक्षधर्म्मो न विद्यते। अथ वानन्तरकृतं किञ्चिदेव निदर्शनं।
तन्ममाचक्ष्व तत्त्वेन प्रत्यक्षो ह्यसि सर्व्वदा। मोक्षकामा वयञ्चापि काङ्क्षामो यदनामयं।
अदेहमजरं नित्यमतीन्द्रियमनीश्वरं।
॥ वशिष्ठ उवाच ॥ यदेतदुक्तं भवता वेदशास्त्रनिदर्शनं। एवमेतद्यथा चैतन्निगृह्णाति तथा भवान्।
धार्य्यते हि त्वया ग्रन्थ उभयोर्व्वेदशास्त्रयोः। न तु ग्रन्थस्य तत्त्वज्ञो यथावत्त्वं नरेश्वर। १११२०
यो हि वेदे च शास्त्रे च ग्रन्थधारणतत्परः। न च ग्रन्थार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा।
भारं स वहते तस्य ग्रन्थस्यार्थं न वेत्ति यः। यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य ग्रन्थागमो वृथा।
ग्रन्थस्यार्थस्य पृष्टः सन् तादृशो वक्तुमर्हति। यथा तत्त्वाभिगमनादर्थं तस्य स विन्दति।
न यः संसत्सु कथयेद्ग्रन्थार्थं स्थूलबुद्धिमान्। स कथं मन्दविज्ञानो ग्रन्थं वक्ष्यति निर्णयात्।
निर्णयञ्चापि छिद्रात्मा न तं वक्ष्यति तत्त्वतः। सोपहासात्मतामेति यस्माच्चैवात्मवानपि। १११२५
तस्मात्त्वं शृणु राजेन्द्र यथैतदनुदृश्यते। याथातथ्येन सांख्येषु योगेषु च महात्मसु।
यदेव योगाः पश्यन्ति सांख्यैस्तदनुगम्यते। एकं सांख्यञ्च योगञ्च यः पश्यति स बुद्धिमान्।
त्वङ्मांसं रुधिरं मेदः पित्तं मज्जा च स्नायु च। एतदैन्द्रियकं तात यद्भवानिदमाह मां।
द्रव्याद्द्रव्यस्य निर्वृत्तिरिन्द्रियादिन्द्रियं तथा। देहाद्देहमवाप्नोति बीजाद्बीजं तथैव च।
निरिन्द्रियस्याबीजस्य निर्द्रव्यस्याप्यदेहिनः। कथं गुणा भविष्यन्ति निर्गुणत्वान्महात्मनः। १११३०
गुणा गुणेषु जायन्ते तत्रैव निविशन्ति च। एवं गुणाः प्रकृतितो जायन्ते निविशन्ति च।
त्वङ्मांसं रुधिरं मेदः पित्तं मज्जाऽस्थि स्नायु च। अष्टौ तान्यथ शुक्रेण जानीहि प्राकृतानि वै।
पुमांश्चैवापुमांश्चैव त्रैलिङ्ग्यं प्राकृतं स्मृतं। न वाऽपुमान् पुमांश्चैव स लिङ्गीत्यभिधीयते।
अलिङ्गात् प्रकृतिर्लिङ्गैरुपालभ्यति सात्मजैः। यथा पुष्पफलैर्नित्यमृतवो मूर्त्तयस्तथा।
एवमप्यनुमानेन ह्यलिङ्गमुपलभ्यते। पञ्चविंशतिमस्तात लिङ्गेषु नियतात्मकः। १११३५
अनादिनिधनोऽनन्तः सर्व्वदर्शी निरामयः। केवलन्त्वभिमानित्वाद्गुणेषु गुण उच्यते।
गुणा गुणवतः सन्ति निर्गुणस्य कुतो गुणाः। तस्मादेवं विजानन्ति ये गुणा गुणदर्शिनः।

यदा त्वेष गुणानेतान् प्राकृतानभिमन्यते । तदा स गुणवांश्चैव तं परमेवानुपश्यति ।
यत्तद्बुद्धेः परं प्राहुः सांख्ययोगाश्च सर्व्वशः ।' बुध्यमानं महाप्राज्ञमबुद्धपरिवर्ज्जनात् ।
अप्रबुद्धमथाव्यक्तमगुणं प्राहुरीश्वरं । निर्गुणञ्चेश्वरं नित्यमधिष्ठातारमेव च । ११२६०
प्रकृतेश्च गुणानाञ्च पञ्चविंशतिकं बुधाः । सांख्ययोगे च कुशला बुध्यन्ते परमैषिणः ।
यदा प्रबुध्य त्वव्यक्तमवस्थाजन्मभीरवः । बुध्यमानं प्रबुध्यन्ति गमयन्ति समं तदा ।
एतन्निदर्शनं सम्यगसम्यगनिदर्शनं । बुध्यमानाप्रबुद्धाभ्यां पृथक् पृथगरिन्दम ।
परस्परेणैतदुक्तं क्षराक्षरनिदर्शनं । एकत्वमक्षरं प्राहुर्नानात्वं क्षरमुच्यते ।
पञ्चविंशतिनिष्ठोऽयं यदा सम्यक् प्रवर्त्तते । एकत्वं दर्शनञ्चास्य नानात्वञ्चाप्यदर्शनं । ११२६५
तत्त्वनिस्तत्त्वयोरेतत् पृथगेव निदर्शनं । पञ्चविंशतिसर्गन्तु तत्त्वमाहुर्मनीषिणः ।
निस्तत्त्वं पञ्चविंशस्य परमाहुर्निदर्शनं । सर्गस्य वर्गमाचारं तत्त्वं तत्त्वात् सनातनं ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वशिष्ठकरालजनकसंवादे सप्ताधिकत्रिशततोऽध्यायः ॥ ३०७ ॥

॥ जनक उवाच ॥ नानात्वैकत्वमित्युक्तं त्वयैतदृषिसत्तम । पश्याम्येतद्धि सन्दिग्धमेतयोर्वै निदर्शनं ।
तथा बुद्धप्रबुद्धाभ्यां बुध्यमानस्य चानघ । स्थूलबुद्ध्या न पश्यामि तत्त्वमेतन्न संशयः ।
अक्षरक्षरयोरुक्तं त्वया यदपि कारणं । तदप्यस्थिरबुद्धित्वात् प्रनष्टमिव मेऽनघ । ११२७०
तदेतच्छ्रोतुमिच्छामि नानात्वैकत्वदर्शनं । बुद्धञ्चाप्रतिबुद्धञ्च बुध्यमानञ्च तत्त्वतः ।
विद्याविद्ये च भगवन्नक्षरं क्षरमेव च । सांख्यं योगञ्च कार्त्स्न्येन पृथक् चैवापृथक् च ह ।
॥ वशिष्ठ उवाच ॥ हन्त ते सम्प्रवक्ष्यामि यदेतदनुपृच्छसि । योगकृत्यं महाराज पृथगेव शृणुष्व मे ।
योगकृत्यन्तु योगानां ध्यानमेव परं बलं । तच्चापि द्विविधं ध्यानमाहुर्विद्याविदो जनाः ।
एकाग्रता च मनसः प्राणायामस्तथैव च । प्राणायामस्तु सगुणो निर्गुणो मनसस्तथा । ११२७५
मूत्रोत्सर्गपुरीषे च भोजने च नराधिप । त्रिकालं नाभियुञ्जीत शेषं युञ्जीत तत्परः ।
इन्द्रियाणीन्द्रियार्थेभ्यो निवर्त्त्य मनसा शुचिः । दशद्वादशभिर्व्वाऽपि चतुर्व्विंशात् परन्ततः ।
सञ्चोदनाभिर्मतिमानात्मानञ्चोदयेदथ । तिष्ठन्तमजरं तन्तु यत्तदुक्तं मनीषिभिः ।
तैश्चात्मा सततं ज्ञेय इत्येवमनुशुश्रुम । द्रुतं ह्यहीनमनसो नान्यथेति विनिश्चयः ।
विमुक्तः सर्व्वसङ्गेभ्यो लघ्वाहारो जितेन्द्रियः । पूर्व्वरात्रेऽपररात्रे धारयीत मनोऽऽत्मनि । ११२८०
स्थिरीकृत्येन्द्रियग्रामं मनसा मिथिलेश्वर । मनो बुद्ध्या स्थिरं कृत्वा पाषाण इव निश्चलः ।
स्थाणुवच्चाप्यकम्पः स्याद्गिरिवच्चापि निश्चलः । बुधा विधिविधानज्ञास्तदा युक्तं प्रचक्षते ।
न शृणोति न वा घ्राति न रस्यति न पश्यति । न च स्पर्शं विजानाति न सङ्कल्पयते मनः ।
न चाभिमन्यते किञ्चिन्न च बुध्यति काष्ठवत् । तदा प्रकृतिमापन्नं युक्तमाहुर्मनीषिणः ।
निर्व्वाते हि यथा दीप्यन्दीपस्तद्वत् प्रकाशते । निर्लिङ्गो ऽविचलश्चोर्द्धं न तिर्य्यग्गतिमाप्नुयात् । ११२८५
तदा तमनुपश्येत यस्मिन् दृष्टे न कथ्यते । हृदयस्थोऽन्तरात्मेति ज्ञेयो ज्ञस्तात मद्विधैः ।

विधूम इव सप्तार्च्चिरादित्य इव रश्मिमान् । वैद्युतोऽग्निरिवाकाशे दृश्यतेत्मा तथात्मनि ।
ये पश्यन्ति महात्मानो धृतिमन्तो मनीषिणः । ब्राह्मणा ब्रह्मयोनिस्था ह्ययोनिममृतात्मकं ।
तदेवाहुरणुभ्योऽणु तन्महद्भ्यो महत्तरं । तत्तत्त्वं सर्व्वभूतेषु ध्रुवं तिष्ठन्न दृश्यते ।
बुद्धिद्रव्येण दृश्येत मनोदीपेन लोककृत् । महतस्तमसस्तात पारे तिष्ठन्नतामसः । ११२९०
स तमोनुद इत्युक्तः सर्व्वज्ञैर्व्वेदपारगैः । विमलो वितमस्कश्च निर्लिङ्गो लिङ्गसंज्ञितः ।
योग एष हि योगानां किमन्यद्योगलक्षणं । एवं पश्यं प्रपश्यन्ति आत्मानमजरं परं ।
योगदर्शनमेतावदुक्तन्ते तत्त्वतो मया । सांख्यज्ञानं प्रवक्ष्यामि परिसंख्यानदर्शनं ।
अव्यक्तमाहुः प्रकृतिं परं प्रकृतिवादिनः । तस्मान्महत् समुत्पन्नं द्वितीयं राजसत्तम ।
अहङ्कारस्तु महतस्तृतीयमिति नः श्रुतं । पञ्चभूतान्यहङ्कारादाहुः संख्यात्मदर्शिनः । ११२९५
एताः प्रकृतयश्चाष्टौ विकाराश्चापि षोडश । पञ्च चैव विशेषा वै तथा पञ्चेन्द्रियाणि च ।
एतावदेव तत्त्वानां सांख्यमाहुर्म्मनीषिणः । सांख्ये विधिविधानज्ञा नित्यं सांख्यपथे रताः ।
यस्माद्यदभिजायेत तत्तत्रैव प्रलीयते । लीयन्ते प्रतिलोमानि सृज्यन्ते चान्तरात्मना ।
अनुलोमेन जायन्ते लीयन्ते प्रतिलोमतः । गुणा गुणेषु सततं सागरस्योर्म्मयो यथा ।
सर्गप्रलय एतावान् प्रकृतेर्नृपसत्तम । एकत्वं प्रलये चास्य बहुत्वञ्च यदाऽसृजत् । ११३००
एवमेव च राजेन्द्र विज्ञेयं ज्ञानकोविदैः । अधिष्ठातारमव्यक्तमस्याप्येतन्निदर्शनं ।
एकत्वञ्च बहुत्वञ्च प्रकृतेरर्थतत्त्ववान् । एकत्वं प्रलये चास्य बहुत्वञ्च प्रवर्त्तनात् ।
बहुधात्मा प्रकुर्व्वीत प्रकृतिं प्रसवात्मिकां । तच्च क्षेत्रं महानात्मा पञ्चविंशोऽधितिष्ठति ।
अधिष्ठातेति राजेन्द्र प्रोच्यते यतिसत्तमैः । अधिष्ठानादधिष्ठाता क्षेत्राणामिति नः श्रुतं ।
क्षेत्रं जानाति चाव्यक्तं क्षेत्रज्ञ इति चोच्यते । अव्यक्तिके प्रविशते पुरुषश्चेति कथ्यते । ११३०५
अन्यदेव च क्षेत्रं स्यादन्यः क्षेत्रज्ञ उच्यते । क्षेत्रमव्यक्तमित्युक्तं ज्ञातारं पञ्चविंशकं ।
अन्यदेव च ज्ञानं स्यादन्यज्ज्ञेयं तदुच्यते । ज्ञानमव्यक्तमित्युक्तं ज्ञेयो वै पञ्चविंशकः ।
अव्यक्तं क्षेत्रमित्युक्तं तथा सत्त्वं तथेश्वरः । अनीश्वरमतत्त्वञ्च तत्त्वं तत्पञ्चविंशकं ।
सांख्यदर्शनमेतावत् परिसंख्यानुदर्शनं । सांख्याः प्रकुर्व्वते चैव प्रकृतिञ्च प्रचक्षते ।
तत्त्वानि च चतुर्व्विंशत् परिसंख्याय तत्त्वतः । सांख्याः सह प्रकृत्या तु निस्तत्त्वः पञ्चविंशकः । ११३१०
पञ्चविंशोऽप्रकृत्यात्मा बुध्यमान इति स्मृतः । यदा तु बुध्यतेत्मानं तदा भवति केवलः ।
सम्यग्दर्शनमेतावद्भाषितं तव तत्त्वतः । एवमेतद्विजानन्तः साम्यतां प्रति यान्त्युत ।
सम्यङ्निदर्शनं नाम प्रत्यक्षं प्रकृतेस्तथा । गुणतत्त्वान्यथैतानि निर्गुणोऽन्यस्तथा भवेत् ।
न त्वेवं वर्त्तमानानामावृत्तिर्व्विद्यते पुनः । विद्यतेऽक्षरभावत्वादपरं परमव्ययं ।
पश्येरन्नेकमतयो न सम्यक् तेषु दर्शनं । तेऽव्यक्तं प्रतिपद्यन्ते पुनः पुनररिन्दम । ११३१५
सर्व्वमेतद्विजानन्तो न सर्व्वस्य प्रबोधनात् । व्यक्तीभूता भविष्यन्ति व्यक्तस्य वशवर्त्तिनः ।

सर्व्वमव्यक्तमित्युक्तमसर्व्वः पञ्चविंशकः । य एनमभिजानन्ति न भयं तेषु वर्त्तते ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वशिष्ठकरालजनकसंवादे अष्टाधिकत्रिशतोऽध्यायः ॥ ३०८ ॥

॥ वशिष्ठ उवाच ॥ सांख्यदर्शनमेतावदुक्तं ते नृपसत्तम । विद्याविद्ये त्विदानीं मे त्वं निबोधानुपूर्व्वशः ।
अविद्यामाहुरव्यक्तं सर्गप्रलयधर्म्मि वै । सर्गप्रलयनिर्म्मुक्तां विद्यां वै पञ्चविंशकः ।
परस्परस्य विद्या वै त्वन्निबोधानुपूर्व्वशः । यथोक्तमृषिभिस्तात सांख्यस्याभिनिदर्शनं । ११४२०
कर्म्मेन्द्रियाणां सर्व्वेषां विद्या बुद्धीन्द्रियं स्मृतं । बुद्धीन्द्रियाणाञ्च तथा विशेषा इति नः श्रुतं ।
विशेषाणां मनस्तेषां विद्यामाहुर्मनीषिणः । मनसः पञ्चभूतानि विद्या इत्यभिचक्षते ।
अहङ्कारस्तु भूतानां पञ्चानां नात्र संशयः । अहङ्कारस्य च तथा बुद्धिर्विद्या नरेश्वर ।
विद्याप्रकृतिरव्यक्तं तत्त्वानां परमेश्वरी । विद्या ज्ञेया नरश्रेष्ठ विधिश्च परमः स्मृतः ।
अव्यक्तस्य परं प्राहुर्व्विद्या वै पञ्चविंशकं । सर्व्वस्य सर्व्वमित्युक्तं ज्ञेयं ज्ञानस्य पार्थिव । ११४२५
ज्ञानमव्यक्तमित्युक्तं ज्ञेयो वै पञ्चविंशकः । तथैव ज्ञानमव्यक्तं विज्ञाता पञ्चविंशकः ।
विद्याऽविद्यार्थतत्त्वेन मयोक्ता ते विशेषतः । अक्षरञ्च क्षरञ्चैव यदुक्तं तन्निबोध मे ।
उभावेवाक्षरावुक्तावुभावेतावनक्षरौ । कारणन्तु प्रवक्ष्यामि याथातथ्यन्तु ज्ञानतः ।
अनादिनिधनावेतौ उभावेवेश्वरौ मतौ । तत्त्वसंज्ञावुभावेतौ प्रोच्येते ज्ञानचिन्तकैः ।
सर्गप्रलयधर्म्मित्वादव्यक्तं प्राहुरक्षरं । तदेतद्गुणसर्गाय विकुर्व्वाणं पुनः पुनः । ११४३०
गुणानां महदादीनामुत्पत्तिश्च परस्परं । अधिष्ठानात्क्षेत्रमाहुरेतत्तत्पञ्चविंशकं ।
यदा तु गुणजालन्तदव्यक्तात्मनि संक्षिपेत् । तदा सह गुणैस्तैस्तु पञ्चविंशो विलीयते ।
गुणा गुणेषु लीयन्ते तदैका प्रकृतिर्भवेत् । क्षेत्रज्ञोऽपि यदा तात तत्क्षेत्रे संप्रलीयते ।
तदाक्षरत्वं प्रकृतिर्गच्छते गुणसंश्रिता । निर्गुणत्वञ्च वैदेह गुणेष्वप्रतिवर्त्तनात् ।
एवमेव च क्षेत्रज्ञः क्षेत्रज्ञानपरिक्षये । प्रकृत्या निर्गुणस्त्वेष इत्येवमनुशुश्रुम । ११४३५
क्षरो भवत्येष यदा तदा गुणवतीमथ । प्रकृतिन्त्वभिजानाति निर्गुणत्वं तथात्मनः ।
तदा विशुद्धो भवति प्रकृतेः परिवर्ज्जनात् । अन्योऽहमन्येयमिति यदा बुध्यति बुद्धिमान् ।
तदैष तत्त्वतामेति न चापि मिश्रितां व्रजेत् । प्रकृत्या चैव राजेन्द्र मिश्रो ह्यन्यश्च दृश्यते ।
यदा तु गुणजालन्तत्प्राकृतं वै जुगुप्सते । पश्यते च परं पश्यं तदा पश्यन्न संत्यजेत् ।
किं मया कृतमेतावद्योऽहं कालमिमं जनं । मत्स्यो जालं ह्यविज्ञानादनुवर्त्तितवानिह । ११४४०
अहमेव हि संमोहादन्यमन्यज्जनाज्जनं । मत्स्यो यथोदकज्ञानादनुवर्त्तितवानहं ।
मत्स्योऽन्यत्वं यथाऽज्ञानादुदकान्नाभिमन्यते । आत्मानं तद्वदज्ञानादन्यत्वञ्चैव वेद्म्यहं ।
ममास्तु धिगबुद्धस्य योऽहं मग्नमिमं पुनः । अनुवर्त्तितवान्मोहादन्यमन्यज्जनाज्जनं ।
अयमत्र भवेद्बन्धुरनेन सह मे क्षमं । साम्यमेकत्वमायातो यादृशस्तादृशस्त्वहं ।
तुल्यतामिह पश्यामि सदृशोऽहमनेन वै । अयं हि विमलो व्यक्तमहमीदृशकस्तथा । ११४४५

योऽहमज्ञानसंमोहादज्ञया संप्रवृत्तवान्। ससङ्गयाहं निःसङ्गः स्थितः कालमिमं त्वहं।
अनयाऽहं वशीभूतः कालमेतन्न बुद्धवान्। उच्चमध्यमनीचानां तामहं कथमावसे।
समानयाऽनया चेह सहवासमहं कथं। गच्छाम्यबुद्धभावत्वादेषेदानीं स्थिरो भवे।
सहवासं न यास्यामि कालमेतद्धि वञ्चनात्। वञ्चितोऽस्म्यनया यद्धि निर्विकारो विकारया।
न चायमपराधोऽस्या ह्यपराधो ह्ययं मम। योऽहमत्राभवं सक्तः पराङ्मुखमुपस्थितः। ११४४०
ततोऽस्म्यरूपोरूपासु स्थितो मूर्त्तिष्वमूर्त्तिमान्। अमूर्त्तश्चापि मूर्त्तात्मा ममत्वेन प्रधर्षितः।
प्राकृतेन ममत्वेन तासु तास्विह योनिषु। निर्म्ममस्य ममत्वेन किं कृतं तासु तासु च।
योनीषु वर्त्तमानेन नष्टसंज्ञेन चेतसा। मम नास्त्यनया कार्य्यमहङ्कारकृता त्वया।
आत्मानं बहुधा कृत्वा येयं भूयो युनक्ति मां। इदानीमेष बुद्धोऽस्मि निर्म्ममो निरहङ्कृतः।
ममत्वमनया नित्यमहङ्कारकृतात्मकं। अपेत्याहमिमां हित्वा संश्रयिष्ये निरामयं। ११४४५
अनेन साम्यं यास्यामि नानयाऽहमचेतया। क्षेमं मम सहानेन नैकत्वमनया सह।
एवं परमसम्बोधात् पञ्चविंशोऽनुबुद्धवान्। अक्षरत्वं नियच्छेत त्यक्त्वा क्षरमनामयं।
अव्यक्तं व्यक्तधर्म्माणं सगुणं निर्गुणन्तथा। निर्गुणं प्रथमं दृष्ट्वा तादृग्भवति मैथिल।
अक्षरक्षरयोरेतदुक्तं तव निदर्शनं। मयेह ज्ञानसम्पन्नं यथा श्रुतिनिदर्शनात्।
निःसन्दिग्धञ्च सूक्ष्मञ्च विबुद्धं विमलं यथा। प्रवक्ष्यामि तु ते भूयस्तन्निबोध यथाश्रुतं। ११४५०
सांख्ययोगौ मया प्रोक्तौ शास्त्रद्वयनिदर्शनात्। यदेव शास्त्रं सांख्योक्तं योगदर्शनमेव तत्।
प्रबोधनकरं ज्ञानं सांख्यानामवनीपते। विस्पष्टं प्रोच्यते तत्र शिष्याणां हितकाम्यया।
बृहच्चैवमिदं शास्त्रमित्याहुर्विदुषो जनाः। अस्मिंश्च शास्त्रे योगानां पुनर्व्वेदे पुरःसराः
पञ्चविंशात्परं तत्त्वं पश्यते न नराधिप। सांख्यानान्तु परं तत्त्वं यथावदनुवर्णितं।
बुद्धमप्रतिबुद्धत्वाद्बुध्यमानञ्च तत्त्वतः। बुध्यमानञ्च बुद्धञ्च प्राहुर्योगनिदर्शनं। ११४५५
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वशिष्ठकरालजनकसंवादे नवाधिकत्रिशतोऽध्यायः ॥ ३०९ ॥
॥ वशिष्ठ उवाच ॥ अथ बुद्धमथाबुद्धमिमं गुणविधिं शृणु। आत्मानं बहुधा कृत्वा तान्येव प्रविचक्षते।
एतदेवं विकुर्व्वाणो बुध्यमानो न बुध्यते। गुणान् धारयते ह्येष सृजत्याक्षिपते तदा।
अजस्रं त्विह क्रीडार्थं विकरोति जनाधिप। अव्यक्तबोधनाच्चैव बुध्यमानं वदन्त्यपि।
न त्वेव बुध्यते व्यक्तं सगुणं तात निर्गुणं। कदाचित्त्वेव खल्वेतदाहुरप्रतिबुद्धकं।
बुध्यते यदि वा व्यक्तमेतद्वै पञ्चविंशकं। बुध्यमानो भवत्येव सङ्गात्मक इति श्रुतिः। ११४६०
अनेनाप्रतिबुद्धेति वदन्त्यव्यक्तमच्युतं। अव्यक्तबोधनाच्चापि बुध्यमानं वदन्त्युत।
पञ्चविंशं महात्मानं न चासावपि बुध्यते। षड्विंशं विमलं बुद्धमप्रमेयं सनातनं।
सततं पञ्चविंशञ्च चतुर्विंशञ्च बुध्यते। दृश्यादृश्ये ह्यनुगतं स्वभावेन महाद्युते।
अव्यक्तमत्र तद्ब्रह्म बुध्यते तात केवलं। केवलं पञ्चविंशञ्च चतुर्व्विंशं न पश्यति।

बुध्यमानो यदात्मानमन्योऽहमिति मन्यते । तदा प्रकृतिमानेष भवत्यव्यक्तलोचनः । ११४७५
बुध्यते च परां बुद्धिं विशुद्धाममलां यदा । षड्विंशो राजशार्दूल तदा बुद्धत्वमाव्रजेत् ।
ततस्त्यजति सोऽव्यक्तं सर्गप्रलयधर्म्मि वै । निर्गुणप्रकृतिं वेद गुणयुक्तामचेतनां ।
ततः केवलधर्म्मासौ भवत्यव्यक्तदर्शनात् । केवलेन समागम्य विमुक्तात्मानमाप्नुयात् ।
एतत्तु तत्त्वमित्याहुर्निस्तत्त्वमजरामरं । तत्त्वसंश्रयणादेतत्तत्त्ववन्न च मानद ।
पञ्चविंशतितत्त्वानि प्रवदन्ति मनीषिणः । न चैव तत्त्ववांस्तात निस्तत्त्वस्त्वेव बुद्धिमान् । ११४८०
एष मुञ्चति तत्त्वं हि क्षिप्रं बुद्धस्य लक्षणं । षड्विंशोऽहमिति प्राज्ञो गृह्यमाणोऽजरामरः ।
केवलेन बलेनैव समतां यात्यसंशयं । षड्विंशेन प्रबुद्धेन बुध्यमानोऽप्यबुद्धिमान् ।
एतन्नानात्वमित्युक्तं सांख्यश्रुतिनिदर्शनात् । चेतनेन समेतस्य पञ्चविंशतिकस्य ह ।
एकत्वं वै भवत्यस्य यदा बुद्ध्यानुबुध्यते । बुध्यमानोऽप्रबुद्धेन समतां याति मैथिल ।
सङ्गधर्म्मा भवत्येष निःसङ्गात्मा नराधिप । निःसङ्गात्मानमासाद्य षड्विंशकमजं विभुं । ११४८५
विभुस्त्यजति चाव्यक्तं यदा त्वेतद्विबुध्यते । चतुर्विंशमगाधञ्च षड्विंशस्य प्रबोधनात् ।
एष ह्यप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ । प्रोक्तो बुद्धश्च तत्त्वेन यथा श्रुतिनिदर्शनात् ।
नानात्वैकत्वमेतावद्द्रष्टव्यं शास्त्रदर्शनात् । मशकोदुम्बरे यद्वदन्यत्वं तद्वदेतयोः ।
मत्स्योदके यथा तद्वदन्यत्वमुपलभ्यते । एवमेवावगन्तव्यं नानात्वैकत्वमेतयोः ।
एतद्धि मोक्ष इत्युक्तमव्यक्तज्ञानसंहितं । पञ्चविंशतिकस्यास्य योऽयं देहेषु वर्त्तते । ११४९०
एष मोक्षयितव्येति प्राहुरव्यक्तगोचरात् । सोऽयमेवं प्रमुच्येत नान्यथेति विनिश्चयः ।
परश्च परधर्म्मा च भवत्येष समेत्य वै । विशुद्धधर्म्मा शुद्धेन बुद्धेन च स बुद्धिमान् ।
विमुक्तधर्म्मा मुक्तेन समेत्य पुरुषर्षभ । वियोगधर्म्मिणा चैव विमुक्तात्मा भवत्यथ ।
विमोक्षिणा विमोक्षश्च समेत्येह तथा भवेत् । शुचिकर्म्मा शुचिश्चैव भवत्यमितदीप्तिमान् ।
विमलात्मा च भवति समेत्य विमलात्मना । केवलात्मा तथा चैव केवलेन समेत्य वै । ११४९५
स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमवाप्नुयात् ।

एतावदेतत् कथितं मया ते तथ्यं महाराज यथार्थतत्त्वं । अमत्सरत्वं परिगृह्य चार्थं सनातनं ब्रह्मविशुद्धमाद्यं ।

अवेदनिष्ठस्य जनस्य राजन् प्रदेयमेतत् परमं त्वया भवेत् । विधित्समानाय प्रबोधकारकं प्रबोधहेतोः प्रणतस्य शासनं ।

न देयमेतच्च तथाऽनृतात्मने शठाय क्लीवाय न जिह्मबुद्धये । न पण्डितज्ञानपरोपतापिने देयन्तु देयञ्च निबोध यादृशे ।

श्रद्धान्वितायाथ गुणान्विताय परापवादाद्विरताय नित्यं । विशुद्धयोगाय बुधाय नित्यं क्रियावते च क्षमिणे हिताय । ११५००

विविक्तशीलाय विधिप्रियाय विवादहीनाय बहुश्रुताय । विजानते चैव न चाहितक्षमे दमे च शक्ताय शमे च देयं ।

एतैर्गुणैर्हीनतमे न देयमेतत् परं ब्रह्म विशुद्धमाहुः। न श्रेयसा योक्ष्यति तादृशे कृतं धर्म्मप्रवक्तारमपात्रदानात्।
पृथ्वीमिमां यद्यपि रत्नपूर्णां दद्यान्न देयन्त्विदमव्रताय। जितेन्द्रियायैतदसंशयन्ते भवेत् प्रदेयं परमं नरेन्द्र।
कराल मा ते भयमस्तु किञ्चिदेतत् श्रुतं ब्रह्म परं त्वयाऽद्य। यथावदुक्तं परमं पवित्रं विशोकमत्यन्तमनादिमध्यं।
अगाधजन्मामरणञ्च राजन्निरामयं वीतभयं शिवञ्च। समीक्ष्य मोहं त्यज वाऽद्य सर्व्वं ज्ञानस्य तत्त्वार्थमिदं विदित्वा। ११४०५
अवाप्तमेतद्धि मया सनातनाद्धिरण्यगर्भाद्गदतो नराधिप। प्रसाद्य यत्नेन तमुग्रतेजसं सनातनं ब्रह्म यथाऽद्य वै त्वया।
पृष्टस्त्वया चास्मि यथा नरेन्द्र यथा मयेदं त्वयि चोक्तमद्य। तथाऽवाप्तं ब्रह्मणो मे नरेन्द्र महाज्ञानं मोक्षविदां परायणं।
॥ भीष्म उवाच ॥ एतदुक्तं परं ब्रह्म यस्मान्नावर्त्तते पुनः। पञ्चविंशो महाराज परमर्षिनिदर्शनात्।
पुनरावृत्तिमाप्नोति परं ज्ञानमवाप्य च। नावबुध्यति तत्त्वेन बुध्यमानोऽजरामरं।
एतन्निःश्रेयसकरं ज्ञानन्ते परमं मया। कथितं तत्त्वतस्तात श्रुत्वा देवर्षितो नृप। ११४१०
हिरण्यगर्भादृषिणा वशिष्ठेन महात्मना। वशिष्ठादृषिशार्दूलान्नारदोऽवाप्तवानिदं।
नारदाद्विदितं मह्यमेतद्ब्रह्म सनातनं। मा शुचः कौरवेन्द्र त्वं श्रुत्वैतत् परमं पदं।
येन क्षराक्षरे वित्ते भयं तस्य न विद्यते। विद्यते तु भयं तस्य यो नैतद्वेत्ति पार्थिव।
अविज्ञानाच्च मूढात्मा पुनः पुनरुपाद्रवत्। प्रेत्य जातिसहस्राणि मरणान्तान्युपाश्नुते।
देवलोकं तथा तिर्य्यग्मानुष्यमपि चाश्नुते। यदि शुध्यति कालेन तस्मादज्ञानसागरात्। ११४१५
अज्ञानसागरो घोरो ह्यव्यक्तोऽगाध उच्यते। अहन्यहनि मज्जन्ति यत्र भूतानि भारत।
यस्मादगाधादव्यक्तादुत्तीर्णस्त्वं सनातनात्। तस्मात्त्वं विरजाश्चैव वितमस्कश्च पार्थिव।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वशिष्ठकरालजनकसंवादे दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥

॥ भीष्म उवाच ॥ मृगयां विचरन् कश्चिद्विजने जनकात्मजः। वने ददर्श विप्रेन्द्रमृषिं वंशधरं भृगोः।
उपासीनमुपासीनः प्रणम्य शिरसा मुनिं। पश्चादनुमतस्तेन पप्रच्छ वसुमानिदं।
भगवन् किमिदं श्रेयः प्रेत्य चापीह वा भवेत्। पुरुषस्याध्रुवे देहे कामस्य वशवर्त्तिनः। ११४२०
सत्कृत्य परिपृष्टः स सुमहात्मा महातपाः। निजगाद ततस्तस्मै श्रेयस्करमिदं वचः।
॥ ऋषिरुवाच ॥ मनसोऽप्रतिकूलानि प्रेत्य चेह च वाञ्छसि। भूतानां प्रतिकूलेभ्यो निवर्त्तस्व जितेन्द्रियः।
धर्म्मः सतां हितः पुंसां धर्म्मश्चैवाश्रयः सतां। धर्म्माल्लोकास्त्रयस्तात प्रवृत्ताः सचराचराः।
स्वादुकामुककामानां वैतृष्ण्यं किं न गच्छसि। मधु पश्यसि दुर्ब्बुद्धे प्रपातं नानुपश्यसि।
यथा ज्ञाने परिचयः कर्त्तव्यस्तत्फलार्थिना। तथा धर्म्मे परिचयः कर्त्तव्यस्तत्फलार्थिना। ११४२५
असता धर्म्मकामेन विशुद्धं कर्म्म दुष्करं। सता तु धर्म्मकामेन सुकरं कर्म्म दुष्करं।
वने ग्राम्यसुखाचारो यथा ग्राम्यस्तथैव सः। ग्रामे च न सुखाचारो यथा वनचरस्तथा।
मनोवाक्कायिके धर्म्मे कुरु श्रद्धां समाहितः। निवृत्तौ वा प्रवृत्तौ वा सम्प्रधार्य्य गुणागुणान्।

नित्यञ्च बहु दातव्यं साधुभ्यश्चानसूयता । प्रार्थितं व्रतशौचाभ्यां सत्कृतं देशकालयोः ।
शुभेन विधिना लब्धमर्हाय प्रतिपादयेत् । क्रोधमुत्सृज्य दद्याच्च नानुतप्येन्न कीर्त्तयेत् । ११४२०
अनृशंसः शुचिर्दान्तः सत्यवागार्ज्जवे स्थितः । योनिकर्म्मविशुद्धश्च पात्रं स्याद्वेदविद्द्विजः ।
सत्कृता चैकपत्नी च जात्या योनिरिहेष्यते । ऋग्यजुःसामगो विद्वान् षट्कर्म्मा पात्रमुच्यते ।
स एव धर्म्मः सोऽधर्म्मस्तं तं प्रति नरं भवेत् । पात्रकर्म्मविशेषेण देशकालाववेक्ष्य च ।
लीलयाऽल्पं यथा गात्रात्प्रमृज्याद्रजसः पुमान् । बहुयत्नेन च महत्पापनिर्हरणं तथा ।
विरिक्तस्य यथा सम्यग्घृतं भवति भेषजं । तथा निर्हृतदोषस्य प्रेत्य धर्म्मः सुखावहः । ११४२५
मानसं सर्व्वभूतेषु वर्त्तते वै शुभाशुभं । अशुभेभ्यः समाक्षिप्य शुभेष्वेवावतारयेत् ।
सर्व्वं सर्व्वेण सर्व्वत्र क्रियमाणञ्च पूजयेत् । स्वधर्म्मे यत्र रागस्ते कामं धर्म्मो विधीयतां ।
अधृतात्मन् धृतौ तिष्ठ दुर्ब्बुद्धे बुद्धिमान् भव । अप्रशान्तः प्रशाम्य त्वमप्राज्ञः प्राज्ञवच्चर ।
तेजसा शक्यते प्राप्तुमुपायसहचारिणा । इह च प्रेत्य च श्रेयस्तस्य मूलं धृतिः परा ।
राजर्षिरधृतिः स्वर्गात्पतितो हि महाभिषः । ययातिः क्षीणपुण्योऽपि धृत्या लोकानवाप्तवान् । ११४३०
तपस्विनां धर्म्मवतां विदुषाञ्चोपसेवनात् । प्राप्स्यसे विपुलां बुद्धिं तथा श्रेयोऽभिपत्स्यसे ।
॥ भीष्म उवाच ॥ स तु स्वभावसम्पन्नस्तच्छ्रुत्वा मुनिभाषितं । विनिवर्त्त्य मनः कामाद्धर्म्मे बुद्धिञ्चकार ह ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि जनकानुशासने एकादशाधिकत्रिशततोऽध्यायः ॥ ३११ ॥
॥ युधिष्ठिर उवाच ॥ धर्म्माधर्म्मविमुक्तं यद्विमुक्तं सर्व्वसंश्रयात् । जन्ममृत्युविमुक्तञ्च विमुक्तं पुण्यपापयोः ।
यच्छिवं नित्यमभयं नित्यमक्षरमव्ययं । शुचि नित्यमनायासं तद्भवान् वक्तुमर्हति ।
॥ भीष्म उवाच ॥ अत्र ते वर्त्तयिष्यामि इतिहासं पुरातनं । याज्ञवल्क्यस्य संवादं जनकस्य च भारत । ११४३५
याज्ञवल्क्यमृषिश्रेष्ठं दैवरातिर्महायशाः । पप्रच्छ जनको राजा प्रश्नं प्रश्नविदाम्वरं ।
॥ जनक उवाच ॥ कतीन्द्रियाणि विप्रर्षे कति प्रकृतयः स्मृताः । किमव्यक्तं परं ब्रह्म तस्माच्च परतस्तु किं ।
प्रभवञ्चाप्ययञ्चैव कालसंख्यां तथैव च । वक्तुमर्हसि विप्रेन्द्र त्वदनुग्रहकाङ्क्षिणः ।
अज्ञानात्परिपृच्छामि त्वं हि ज्ञानमयो निधिः । तदहं श्रोतुमिच्छामि सर्व्वमेतदसंशयं ।
॥ याज्ञवल्क्य उवाच ॥ श्रूयतामवनीपाल यदेतदनुपृच्छसि । योगानां परमं ज्ञानं सांख्यानाञ्च विशेषतः । ११४४०
न तवाविदितं किञ्चिन्मान्तु जिज्ञासते भवान् । पृष्टेन चापि वक्तव्यमेष धर्म्मः सनातनः ।
अष्टौ प्रकृतयः प्रोक्ता विकाराश्चापि षोडश । अत्र तु प्रकृतीरष्टौ प्राहुरध्यात्मचिन्तकाः ।
अव्यक्तञ्च महान्तञ्च तथाऽहङ्कारमेव च । पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं ।
एताः प्रकृतयस्त्वष्टौ विकारानपि मे शृणु । श्रोत्रं त्वक् चैव चक्षुश्च जिह्वा घ्राणञ्च पञ्चमं ।
शब्दः स्पर्शश्च रूपञ्च रसो गन्धस्तथैव च । वाक् च हस्तौ च पादौ च पायुर्मेढ्रन्तथैव च । ११४४५
एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु । बुद्धीन्द्रियाण्यथैतानि सविशेषाणि मैथिल ।
मनःषोडशकं प्राहुरध्यात्मगतिचिन्तकाः । त्वञ्चैवान्ये च विद्वांसस्तत्त्वबुद्धिविशारदाः ।

अव्यक्ताच्च महानात्मा समुत्पद्यति पार्थिव। प्रथमं सर्गमित्येतदाहुः प्राधानिकं बुधाः।
महतश्चाप्यहङ्कार उत्पन्नो हि नराधिप। द्वितीयं सर्गमित्याहुरेतद्बुद्ध्यात्मकं स्मृतं।
अहङ्काराच्च सम्भूतं मनो भूतगुणात्मकं। तृतीयः सर्ग इत्येष आहङ्कारिक उच्यते। ११५६०
मनसस्तु समुद्भूता महाभूता नराधिप। चतुर्थं सर्गमित्येतन्मानसं विद्धि मे मतं।
शब्दः स्पर्शश्च रूपञ्च रसो गन्धस्तथैव च। पञ्चमं सर्गमित्याहुर्भौतिकं भूतचिन्तकाः।
श्रोत्रं त्वक् चैव चक्षुश्च जिह्वा घ्राणञ्च पञ्चमं। सर्गन्तु षष्ठमित्याहुर्बहुचिन्तात्मकं स्मृतं।
अधःश्रोत्रेन्द्रियग्राममुत्पद्यति नराधिप। सप्तमं सर्गमित्याहुरेतदैन्द्रियकं स्मृतं।
ऊर्द्ध्वस्रोतस्तथा तिर्य्यगुत्पद्यति नराधिप। अष्टमं सर्गमित्याहुरेतदार्ज्जवकं स्मृतं। ११५६५
तिर्य्यक्स्रोतस्त्वधः स्रोत उत्पद्यति नराधिप। नवमं सर्गमित्याहुरेतदार्ज्जवकं बुधाः।
एतानि नव सर्गाणि तत्त्वानि च नराधिप। चतुर्व्विंशतिरुक्तानि यथा श्रुतिनिदर्शनात्।
अत ऊर्द्ध्वं महाराज गुणमेतस्य तत्त्वतः। महात्मभिरनुप्रोक्तां कालसंख्यां निबोध मे।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि याज्ञवल्क्यजनकसंवादे द्वादशाधिकत्रिशततमोऽध्यायः॥ ३१२ ॥

॥ याज्ञवल्क्य उवाच ॥ अव्यक्तस्य नरश्रेष्ठ कालसंख्यां निबोध मे। पञ्चकल्पसहस्राणि द्विगुणान्यहरुच्यते।
रात्रिरेतावती चास्य प्रतिबुद्धो नराधिप। सृजत्योषधिमेवाग्रे जीवनं सर्व्वदेहिनां। ११५७०
ततो ब्रह्माणमसृजद्धैरण्याण्डसमुद्भवं। सा मूर्त्तिः सर्व्वभूतानामित्येवमनुशुश्रुम।
संवत्सरमुषित्वाऽण्डे निष्क्रम्य च महामुनिः। सन्दधे स महीं कृत्स्नां दिवमूर्द्ध्वं प्रजापतिः।
द्यावापृथिव्योरित्येष राजन् वेदेषु पठ्यते। तयोः शकलयोर्मध्यमाकाशमकरोत् प्रभुः।
एतस्यापि च सङ्ख्यानं वेदवेदाङ्गपारगैः। दशकल्पसहस्राणि पादोनान्यहरुच्यते।
रात्रिमेतावतीञ्चास्य प्राहुरध्यात्मचिन्तकाः। सृजत्यहङ्कारमृषिभूतं दिव्यात्मकं तथा। ११५७५
चतुरश्चापरान् पुत्त्रान् देहात् पूर्व्वं महानृषिः। ते वै पितॄणां पितरः श्रूयन्ते राजसत्तम।
देवाः पितॄणाञ्च सुता देवैर्लोकाः समावृताः। चराचरा नरश्रेष्ठ इत्येवमनुशुश्रुम।
परमेष्ठी त्वहङ्कारः सृजन् भूतानि पञ्चधा। पृथिवीवायुराकाशमापो ज्योतिश्च पञ्चमं।
एतस्यापि निशामाहुस्तृतीयमिह कुर्व्वतः। पञ्च कल्पसहस्राणि तावदेवाहरुच्यते।
शब्दः स्पर्शश्च रूपञ्च रसो गन्धस्तथैव च। एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु। ११५८०
यैराविष्टानि भूतानि अहन्यहनि पार्थिव। अन्योन्यं स्पृहयन्त्येते अन्योन्यस्य हिते रताः।
अन्योन्यमतिवर्त्तन्ते अन्योन्यस्पर्द्धिनस्तथा। ते वध्यमाना ह्यन्योन्यं गुणैर्हारिभिरव्ययैः।
इहैव परिवर्त्तन्ते तिर्य्यग्योनिप्रवेशिनः। त्रीणि कल्पसहस्राणि एतेषामहरुच्यते।
रात्रिरेतावती चैव मनसश्च नराधिप। मनश्चरति राजेन्द्र चारितं सर्व्वमिन्द्रियैः।
न चेन्द्रियाणि पश्यन्ति मन एवानुपश्यति। चक्षुः पश्यति रूपाणि मनसा तु न चक्षुषा। ११५८५
मनसि व्याकुले चक्षुः पश्यन्नपि न पश्यति। तथेन्द्रियाणि सर्व्वाणि पश्यन्तीत्यभिचक्षते।

न चेन्द्रियाणि पश्यन्ति मन एवात्र पश्यति । मनस्युपरते राजन्निन्द्रियोपरमो भवेत् ।
नेन्द्रियेषूपरमं मनस्युपरमो भवेत् । एवं मनःप्रधानानि इन्द्रियाणि प्रभावयेत् ।
इन्द्रियाणान्तु सर्व्वेषामीश्वरं मन उच्यते । एतद्विशन्ति भूतानि सर्व्वाणीह महायशः ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि जनकयाज्ञवल्क्यसंवादे त्रयोदशाधिकत्रिशततमोऽध्यायः ॥ ३१३ ॥

॥ याज्ञवल्क्य उवाच ॥ तत्त्वानां सर्गसंख्या च कालसंख्या तथैव च । मया प्रोक्तानुपूर्व्व्येण संहारमपि मे शृणु । ११५८०
यथा संहरते जन्तून् ससर्ज्ज च पुनः पुनः । अनादिनिधनो ब्रह्मा नित्यश्चाक्षर एव च ।
अहःक्षयमथो बुद्ध्वा निशि स्वप्नमनास्तथा । चोदयामास भगवानव्यक्तोऽहङ्कृतं नरं ।
ततः शतसहस्रांशुरव्यक्तेनाभिचोदितः । कृत्वा द्वादशधात्मानमादित्यो ज्वलदग्निवत् ।
चतुर्व्विधं महीपाल निर्द्दहत्याशु तेजसा । जरायुजाण्डजस्वेदजोद्भिज्जञ्च नराधिप ।
एतदुन्मेषमात्रेण विनष्टं स्थाणुजङ्गमं । कूर्म्मपृष्ठसमा भूमिर्भवत्यथ समन्ततः । ११५८५
जगद्दग्ध्वामितबलः केवलां जगतीं ततः । अम्भसा बलिना क्षिप्रमापूरयति सर्व्वशः ।
ततः कालाग्निमासाद्य तदम्भो याति संक्षयं । विनष्टेऽम्भसि राजेन्द्र जाज्वलत्यनलो महान् ।
तमप्रमेयोऽतिबलं ज्वलमानं विभावसुं । ऊष्माणं सर्व्वभूतानां सप्तार्च्चिषमथाञ्जसा ।
भक्षयामास भगवान् वायुरष्टात्मको बली । विचरन्नमितप्राणस्तिर्य्यगूर्द्ध्वमधस्तथा ।
तमप्रतिबलं भीममाकाशं ग्रसतेत्मना । आकाशमप्यभिनदन्मनो ग्रसति चाधिकं । ११५९०
मनो ग्रसति भूतात्मा सोऽहङ्कारः प्रजापतिः । अहङ्कारं महानात्मा भूतभव्यभविष्यवित् ।
तमप्यनुपमात्मानं विश्वं शम्भुः प्रजापतिः । अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः ।
सर्व्वतः पाणिपादान्तः सर्व्वतोऽक्षिशिरोमुखः । सर्व्वतः श्रुतिमाल्लोके सर्व्वमावृत्य तिष्ठति ।
हृदयं सर्व्वभूतानां पर्व्वणाङ्गुष्ठमात्रकः । अथ ग्रसत्यनन्तो हि महात्मा विश्वमीश्वरः ।
ततः समभवत् सर्व्वमक्षयाव्ययमव्रणं । भूतभव्यभविष्याणां स्रष्टारमनघन्तथा । ११५९५
एषो ऽप्ययस्ते राजेन्द्र यथावत् समुदाहृतः । अध्यात्ममधिभूतञ्च अधिदैवञ्च श्रूयतां ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि याज्ञवल्क्यजनकसंवादे चतुर्द्दशाधिकत्रिशततमोऽध्यायः ॥ ३१४ ॥

॥ याज्ञवल्क्य उवाच ॥ पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्त्वदर्शिनः । गन्तव्यमधिभूतञ्च विष्णुस्तत्राधिदैवतं ।
पायुरध्यात्ममित्याहुर्यथा तत्त्वार्थदर्शिनः । विसर्गमधिभूतञ्च मित्रस्तत्राधिदैवतं ।
उपस्थोऽध्यात्ममित्याहुर्यथा योगप्रदर्शिनः । अधिभूतं तथानन्दो दैवतञ्च प्रजापतिः ।
हस्तावध्यात्ममित्याहुर्यथासंख्यानदर्शिनः । कर्त्तव्यमधिभूतञ्च इन्द्रस्तत्राधिदैवतं । ११६००
वागध्यात्ममिति प्राहुर्यथा श्रुतिनिदर्शिनः । वक्तव्यमधिभूतन्तु वह्निस्तत्राधिदैवतं ।
चक्षुरध्यात्ममित्याहुर्यथा श्रुतिनिदर्शिनः । रूपमत्राधिभूतन्तु सूर्य्यश्चाप्यधिदैवतं ।
श्रोत्रमध्यात्ममित्याहुर्यथा श्रुतिनिदर्शिनः । शब्दस्तत्राधिभूतन्तु दिशस्तत्राधिदैवतं ।
जिह्वामध्यात्ममित्याहुर्यथा श्रुतिनिदर्शिनः । रस एवाधिभूतन्तु आपस्तत्राधिदैवतं ।

घ्राणमध्यात्ममित्याहुर्यथा श्रुतिनिदर्शिनः । गन्ध एवाधिभूतन्तु पृथिवी चाधिदैवतं । ७८१५
त्वगध्यात्ममिति प्राहुस्तत्त्वबुद्धिविशारदाः । स्पर्शमेवाधिभूतन्तु पवनश्चाधिदैवतं ।
मनोऽध्यात्ममिति प्राहुर्यथा शास्त्रविशारदाः । मन्तव्यमधिभूतन्तु चन्द्रमाश्चाधिदैवतं ।
अहङ्कारिकमध्यात्ममाहुस्तत्त्वनिदर्शिनः । अभिमानोऽधिभूतन्तु बुद्धिश्चात्राधिदैवतं ।
बुद्धिरध्यात्ममित्याहुर्यथावदभिदर्शिनः । बोद्धव्यमधिभूतन्तु क्षेत्रज्ञश्चाधिदैवतं ।
एषा ते व्यक्तितो राजन् विभूतिरनुदर्शिता । आदौ मध्ये तथान्ते च यथा तत्त्वेन तत्त्ववित् । ७८२०
प्रकृतिर्गुणान् विकुरुते स्वच्छन्देनात्मकाम्यया । क्रीडार्थन्तु महाराज शतशोऽथ सहस्रशः ।
यथा दीपसहस्राणि दीपान्मर्त्त्याः प्रकुर्व्वते । प्रकृतिस्तथा विकुरुते पुरुषस्य गुणान् बहून् ।
सत्त्वमानन्द उद्रेकः प्रीतिः प्राकाश्यमेव च । सुखं शुद्धित्वमारोग्यं सन्तोषः श्रद्दधानता ।
अकार्पण्यमसंरम्भः क्षमा धृतिरहिंसता । समता सत्यमानृण्यं मार्द्दवं ह्रीरचापलं ।
शौचमार्ज्जवमाचारमलौल्यं हृद्यसम्भ्रमः । इष्टानिष्टवियोगानां कृतानामविकत्थना । ७८२५
दानेन चानुग्रहणमस्पृहत्वं परार्थता । सर्व्वभूतदया चैव सत्त्वस्यैते गुणाः स्मृताः ।
रजोगुणानां संघातो रूपमैश्वर्य्यविग्रहे । अत्यागित्वमकारुण्यं सुखदुःखोपसेवनं ।
परापवादेषु रतिर्विवादानाञ्च सेवनं । अहङ्कारमसत्कारश्चिन्ता वैरोपसेवनं ।
परितापोऽभिहरणं ह्रीनाशोऽनार्ज्जवं तथा । भेदः परुषता चैव कामः क्रोधो मदस्तथा ।
दर्पो द्वेषोऽतिवादश्च एते प्रोक्ता रजोगुणाः । तामसानान्तु संघातं प्रवक्ष्याम्युपधार्य्यतां । ७८३०
मोहोऽप्रकाशस्तामिस्रमन्धतामिस्रसंज्ञितं । मरणञ्चान्धतामिस्रं तामिस्रं क्रोध उच्यते ।
तमसो लक्षणानीह भक्षाणाद्यभिरोचनं । भोजनानामपर्य्याप्तिस्तथा पेयेष्वतृप्तता ।
गन्धवासोविहारेषु शयनेष्वासनेषु च । दिवास्वप्नेऽतिवादे च प्रमादेषु च वै रतिः ।
नृत्यवादित्रगीतानामज्ञानात् श्रद्दधानता । द्वेषो धर्म्मविशेषाणामेते वै तामसा गुणाः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि याज्ञवल्क्यजनकसंवादे पञ्चदशाधिकद्विशततोऽध्यायः ॥ २१५ ॥
॥ याज्ञवल्क्य उवाच ॥ एते प्रधानस्य गुणास्त्रयः पुरुषसत्तम । कृत्स्नस्य चैव जगतस्तिष्ठन्त्यनपगाः सदा । ७८३५
अव्यक्तरूपो भगवान् शतधा च सहस्रधा । शतधा सहस्रधा चैव तथा शतसहस्रधा ।
कोटिशश्च करोत्येष प्रत्यगात्मानमात्मना । सात्त्विकस्योत्तमं स्थानं राजसस्येह मध्यमं ।
तामसस्याधमं स्थानं प्राहुरध्यात्मचिन्तकाः । केवलेनेह पुण्येन गतिमूर्द्ध्वामवाप्नुयात् ।
पुण्यपापेन मानुष्यमधर्म्मेणाप्यधोगतिं । द्वन्द्वमेषां त्रयाणान्तु सन्निपातञ्च तत्त्वतः ।
सत्त्वस्य रजसश्चैव तमसश्च शृणुष्व मे । सत्त्वस्य तु रजो दृष्टं रजसश्च तमस्तथा । ७८४०
तमसश्च तथा सत्त्वं सत्त्वस्याव्यक्तमेव च । अव्यक्तः सत्त्वसंयुक्तो देवलोकमवाप्नुयात् ।
रजःसत्त्वसमायुक्तो मानुष्येषु प्रपद्यते । रजस्तमोभ्यां संयुक्तस्तिर्य्यग्योनिषु जायते ।
राजसैस्तामसैः सत्त्वैर्युक्तो मानुष्यमाप्नुयात् । पुण्यपापवियुक्तानां स्थानमाहुर्महात्मनां ।

शाश्वतञ्चाव्ययञ्चैवमक्षय्यञ्चामृतञ्च तत्। ज्ञानिनां सम्भवं श्रेष्ठं स्थानमव्रणमच्युतं।
अतीन्द्रियमबीजञ्च जन्ममृत्युतमोनुदं। अव्यक्तस्थं परं यत्तत् पृष्टस्तेऽहं नराधिप। ११८०५
स एव प्रकृतिष्ठो हि तत्स्थ इत्यभिधीयते। अचेतना चैव मता प्रकृतिश्चापि पार्थिव।
एतेनाधिष्ठिता चैव सृजते संहरत्यपि।
॥ जनक उवाच ॥ अनादिनिधनावेतावुभावेव महामते। अमूर्त्तिमन्तावचलावप्रकम्पगुणागुणौ।
अग्राह्यावृषिशार्दूल कथमेको ह्यचेतनः। चेतनावांस्तथा चैकः क्षेत्रज्ञ इति भाषितः।
त्वं हि विप्रेन्द्र कार्त्स्न्येन मोक्षधर्ममुपाससे। साकल्यं मोक्षधर्मस्य श्रोतुमिच्छामि तत्त्वतः। ११८१०
अस्तित्वं केवलत्वञ्च विनाभावन्तथैव च। दैवतानि च मे ब्रूहि देहं यान्याश्रितानि वै।
तथैवोत्क्रमिणः स्थानं देहिनो वै विपर्य्ययतः। कालेन यद्धि प्राप्नोति स्थानं तत् प्रब्रवीहि मे।
साङ्ख्यज्ञानञ्च तत्त्वेन पृथग्योगन्तथैव च। अरिष्टानि च तत्त्वानि वक्तुमर्हसि सत्तम।
विदितं सर्व्वमेतत्ते पाणावामलकं यथा।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि याज्ञवल्क्यजनकसंवादे षोडशाधिकत्रिशततमोऽध्यायः ॥ ३१६ ॥

॥ याज्ञवल्क्य उवाच ॥ न शक्यो निर्गुणस्तात गुणीकर्त्तुं विशाम्पते। गुणवांश्चाप्यगुणवान् यथातत्त्वं निबोध मे। ११८१५
गुणैर्हि गुणवानेव निर्गुणश्चागुणस्तथा। प्राहुरेवं महात्मानो मुनयस्तत्त्वदर्शिनः।
गुणस्वभावस्त्वव्यक्तो गुणांश्चैवातिवर्त्तते। उपयुङ्क्ते च तानेव स चैवाज्ञः स्वभावतः।
अव्यक्तस्तु न जानीते पुरुषोऽज्ञः स्वभावतः। न मत्तः परमोऽस्तीति नित्यमेवाभिमन्यते।
अनेन कारणेनैतदव्यक्तं स्यादचेतनं। नित्यत्वाच्चाक्षरत्वाच्च क्षरत्वाच्च तदन्यथा।
यदज्ञानेन कुर्व्वीत गुणसर्गं पुनः पुनः। यदात्मानं न जानीते तदात्माऽपि न मुच्यते। ११८२०
कर्त्तृत्वाच्चापि सर्गाणां सर्गधर्म्मा तथोच्यते। कर्त्तृत्वाच्चापि योगानां योगधर्म्मा तथोच्यते।
कर्त्तृत्वात् प्रकृतीनाञ्च तथा प्रकृतिधर्म्मिता। कर्त्तृत्वाच्चापि बीजानां बीजधर्म्मा तथोच्यते।
गुणानां प्रसवत्वाच्च प्रलयत्वात्तथैव च। उपेक्षत्वादनन्यत्वादभिमानाच्च केवलं।
मन्यन्ते यतयः सिद्धा अध्यात्मज्ञा गतज्वराः। अनित्यं नित्यमव्यक्तं व्यक्तमेतद्धि शुश्रुम।
अव्यक्तैकत्वमित्याहुर्नानात्वं पुरुषास्तथा। सर्व्वभूतदयावन्तः केवलं ज्ञानमास्थिताः। ११८२५
अन्यः स पुरुषो व्यक्तस्त्वध्रुवो ध्रुवसंज्ञकः। यथा मुञ्ज इषीकायां तथैवैतद्धि जायते।
अन्यञ्च मशकं विद्यादन्यच्चोदुम्बरं तथा। न चोदुम्बरसंयोगैर्मशकस्तत्र लिप्यते।
अन्य एव तथा मत्स्यस्तदन्यदुदकं स्मृतं। न चोदकस्य स्पर्शेन मत्स्यो लिप्यति सर्व्वशः।
अन्यो ह्यग्निरुखाऽप्यन्या नित्यमेवमवेहि भोः। न चोपलिप्यते सोऽग्निरुखासंस्पर्शनेन वै।
पुष्करन्त्वन्यदेवात्र तथान्यदुदकं स्मृतं। न चोदकस्य स्पर्शेन लिप्यते तत्र पुष्करं। ११८३०
एतेषां सहवासञ्च निवासञ्चैव नित्यशः। याथातथ्येन पश्यन्ति न नित्यं प्राकृता जनाः।
ये त्वन्यथैव पश्यन्ति न सम्यक् तेषु दर्शनं। ते व्यक्तं निरयं घोरं प्रविशन्ति पुनः पुनः।

साङ्ख्यदर्शनमेतत्ते परिसंख्यानमुत्तमं। एवं हि परिसंख्याय साङ्ख्याः केवलतां गताः।
ये त्वन्ये तत्त्वकुशलास्तेषामेतन्निदर्शनं। अतः परं प्रवक्ष्यामि योगानामनुदर्शनं।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि याज्ञवल्क्यजनकसंवादे सप्तदशाधिकत्रिशततमोऽध्यायः॥ ३१७॥
॥ याज्ञवल्क्य उवाच ॥ साङ्ख्यज्ञानं मया प्रोक्तं योगज्ञानं निबोध मे। यथाश्रुतं यथादृष्टं तत्त्वेन नृप सत्तम। ११९७५
नास्ति साङ्ख्यसमं ज्ञानं नास्ति योगसमं बलं। तावुभावेकचर्य्यौ तु उभावनिधनौ स्मृतौ।
पृथक् पृथक् प्रपश्यन्ति येऽल्पबुद्धिरता नराः। वयन्तु राजन् पश्याम एकमेव तु निश्चयात्।
यदेव योगाः पश्यन्ति तत्साङ्ख्यैरपि दृश्यते। एकं साङ्ख्यञ्च योगञ्च यः पश्यति स तत्त्ववित्।
रुद्रप्रधानानपरान् विद्धि योगानरिन्दम। तेनैव चाथ देहेन विचरन्ति दिशो दश।
यावद्धि प्रलयस्तात सूक्ष्मेणाष्टगुणेन ह। योगेन लोकान् विचरन् सुखं संन्यस्य चानघ। ११९८०
वेदेषु चाष्टगुणिनं योगमाहुर्मनीषिणः। सूक्ष्ममष्टगुणं प्राहुर्नेतरं नृपसत्तम।
द्विगुणं योगकृत्यन्तु योगानां प्राहुरुत्तमं। सगुणं निर्गुणञ्चैव यथा शास्त्रनिदर्शनं।
धारणञ्चैव मनसः प्राणायामश्च पार्थिव। एकाग्रता च मनसः प्राणायामस्तथैव च।
प्राणायामो हि सगुणो निर्गुणं धारयेन्मनः। यद्यदृश्यति मुञ्चन् वै प्राणान्मैथिलसत्तम।
वाताधिक्यं भवत्येव तस्मात्तन्न समाचरेत्। निशायाः प्रथमे यामे चोदना द्वादश स्मृताः। ११९८५
मध्ये स्वप्नात् परे यामे द्वादशैव तु चोदनाः। तदेवमुपशान्तेन दान्तेनैकान्तशीलिना।
आत्मारामेण बुद्धेन योक्तव्यात्मा न संशयः। पञ्चानामिन्द्रियाणान्तु दोषानाक्षिप्य पञ्चधा।
शब्दं रूपं तथा स्पर्शं रसं गन्धन्तथैव च। प्रतिभामपवर्गञ्च प्रतिसंहृत्य मैथिल।
इन्द्रियग्राममखिलं मनस्यभिनिवेश्य ह। मनस्तथैवाहङ्कारे प्रतिष्ठाप्य नराधिप।
अहङ्कारन्तथा बुद्धौ बुद्धिञ्च प्रकृतावपि। एवं हि परिसंख्याय ततो ध्यायन्ति केवलं। ११९९०
विरजस्कमलं नित्यमनन्तं शुद्धमव्रणं। तस्थुषं पुरुषं नित्यमभेद्यमजरामरं।
शाश्वतञ्चाव्ययञ्चैव ईशानं ब्रह्म चाव्ययं। युक्तस्य तु महाराज लक्षणान्युपधारय।
लक्षणन्तु प्रसादस्य यथा तृप्तः सुखं स्वपेत्। निर्व्वाते तु यथा दीपो ज्वलेत्स्नेहसमन्वितः।
निश्चलोर्द्ध्वशिखस्तद्वद्युक्तमाहुर्मनीषिणः। पाषाण इव मेघोत्थैर्यथा विन्दुभिराहतः।
नालञ्चालयितुं शक्यस्तथा युक्तस्य लक्षणं। शङ्खदुन्दुभिनिर्घोषैर्विविधैर्गीतवादितैः। ११९९५
क्रियमाणैर्न कम्पेत युक्तस्यैतन्निदर्शनं। तैलपात्रं यथा पूर्णं कराभ्यां गृह्य पूरुषः।
सोपानमारुहेद्भीतस्तर्ज्यमानोऽसिपाणिभिः। संयतात्मा भयात्तेषां न पात्राद्बिन्दुमुत्सृजेत्।
तथैवोत्तरमागम्य एकाग्रमनसस्तथा। स्थिरत्वादिन्द्रियाणान्तु निश्चलत्वात्तथैव च।
एवं युक्तस्य तु मुनेर्लक्षणान्युपलक्षयेत्। स युक्तः पश्यते ब्रह्म यत्तत् परममव्ययं।
महतस्तमसो मध्ये स्थितं ज्वलनसन्निभं। एतेन केवलं याति त्यक्त्वा देहमसाक्षिकं। १२०००

कालेन महता राजन् श्रुतिरेषा सनातनी । एतद्धि योगं योगानां किमन्यद्योगलक्षणं ।
विज्ञाय तद्धि मन्यन्ते कृतकृत्या मनीषिणः ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि याज्ञवल्क्यजनकसंवादे अष्टादशाधिकत्रिशततोऽध्यायः ॥ ३१८ ॥

॥ याज्ञवल्क्य उवाच ॥ तथैवोत्क्रममाणन्तु शृणुष्वावहितो नृप । पद्भ्यामुत्क्रममाणस्य वैष्णवं स्थानमुच्यते ।
जंघाभ्यान्तु वसून् देवानाप्नुयादिति नः श्रुतं । जानुभ्यान्तु महाभागान् साध्यान्देवानवाप्नुयात् ।
पायुनोत्क्रममाणन्तु मैत्रं स्थानमवाप्नुयात् । पृथिवीं जघनेनाथ ऊरुभ्याञ्च प्रजापतिं । ११३०५
पार्श्वाभ्यां मरुतो देवान्नाभ्यामिन्द्रत्वमेव च । बाहुभ्यामिन्द्रमेवाहुरुरसा रुद्रमेव च ।
ग्रीवयातु मुनिश्रेष्ठं नरमाप्नोत्यनुत्तमं । विश्वेदेवान् मुखेनाथ दिशः श्रोत्रेण चाप्नुयात् ।
घ्राणेन गन्धवहनं नेत्राभ्यामग्निमेव च । भ्रूभ्याञ्चैवाश्विनौ देवौ ललाटेन पितॄनथ ।
ब्रह्माणमाप्नोति विभुमूर्द्ध्ना देवाग्रजं तथा । एतान्युत्क्रमणस्थानान्युक्तानि मिथिलेश्वर ।
अरिष्टानि प्रवक्ष्यामि विहितानि मनीषिभिः । संवत्सरवियोगस्य सम्भवन्ति शरीरिणः । ११३१०
योऽरुन्धतीं न पश्येत दृष्टपूर्व्वां कदाचन । तथैव ध्रुवमित्याहुः पूर्णेन्दुं दीपमेव च ।
खण्डाभासं दक्षिणतस्तेऽपि सम्वत्सरायुषः । परचक्षुषि चात्मानं ये न पश्यन्ति पार्थिव ।
आत्मच्छायाकृतीभूतं तेऽपि संवत्सरायुषः । अतिद्युतिरतिप्रज्ञा अप्रज्ञा चाद्युतिस्तथा ।
प्रकृतेर्व्विक्रियापत्तिः षण्मासान्मृत्युलक्षणं । दैवतान्यवजानाति ब्राह्मणैश्च विरुध्यते ।
कृष्णश्यामच्छविच्छायः षण्मासान्मृत्युलक्षणं । ऊर्णनाभेर्य्यथा चक्रं छिद्रं सोमं प्रपश्यति । ११३१५
तथैव च सहस्रांशुं सप्तरात्रेण मृत्युभाक् । शवगन्धमुपाघ्राति सुरभिं प्राप्य यो नरः ।
देवतायतनस्थस्तु सप्तरात्रेण मृत्युभाक् । कर्णनासावनमनं दन्तदृष्टिविरागिता ।
संज्ञालोपो निरुष्मत्वं सद्यो मृत्युनिदर्शनं । अकस्माच्च स्रवेद्यस्य वाममक्षि नराधिप ।
मूर्द्धतो वोत्पतेद्धूमः सद्यो मृत्युनिदर्शनं । एतावन्ति त्वरिष्टानि विदित्वा मानवोत्मवान् ।
निशि चाहनि चात्मानं योजयेत् परमात्मनि । प्रतीक्षमाणस्तत्कालं यत्कालं प्रेतता भवेत् । ११३२०
अथास्य नेष्टं मरणं स्थातुमिच्छेदिमां क्रियां । सर्व्वगन्धान्रसांश्चैव धारयीत नराधिप ।
सांख्यधारणञ्चैव विदितात्मा नरर्षभ । जयेच्च मृत्युं योगेन तत्परेणान्तरात्मना ।
गच्छेत् प्राप्याक्षयं कृत्स्नमजन्मशिवमव्ययं । शाश्वतं स्थानमचलं दुष्प्रापमकृतात्मभिः ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि याज्ञवल्क्यजनकसंवादे ऊनविंशत्यधिकत्रिशततोऽध्यायः ॥ ३१९ ॥

॥ याज्ञवल्क्य उवाच ॥ अव्यक्तस्थं परं यत्तत् पृष्टस्तेऽहं नराधिप । परं गुह्यमिमं प्रश्नं शृणुष्वावहितो नृप ।
यथार्षेणेह विधिना चरताऽवनतेन ह । मयादित्यादवाप्तानि यजूंषि मिथिलाधिप । ११३२५
महता तपसा देवस्तपिष्णुः सेवितो मया । प्रीतेन चाहं विभुना सूर्य्येणोक्तस्तथाऽनघ ।
वरं वृणीष्व विप्रर्षे यदिष्टं ते सुदुर्लभं । तत्ते दास्यामि प्रीतात्मा मत्प्रसादो हि दुर्लभः ।
ततः प्रणम्य शिरसा मयोक्तस्तपतांवरः । यजूंषि नोपयुक्तानि क्षिप्रमिच्छामि वेदितुं ।

ततो मां भगवानाह वितरिष्यामि ते द्विज। सरस्वतीह वाग्भूता शरीरन्ते प्रवेक्ष्यति।
ततो मामाह भगवानास्यं त्वं विवृतं कुरु। विवृतञ्च ततो मेऽस्यं प्रविष्टा च सरस्वती। ११०३०
ततो विदह्यमानोऽहं प्रविष्टोऽम्भस्तदानघ। अविज्ञानादमर्षाच्च भास्करस्य महात्मनः।
ततो विदह्यमानं मामुवाच भगवान् रविः। मुहूर्त्तं सह्यतां दाहस्ततः शीतीभविष्यसि।
शीतीभूतञ्च मां दृष्ट्वा भगवानाह भास्करः। प्रतिष्ठास्यति ते वेदः सखिलः सोत्तरो द्विज।
कृत्स्नं शतपथञ्चैव प्रणेष्यसि द्विजर्षभ। तस्यान्ते चापुनर्भावे बुद्धिस्तव भविष्यति।
प्राप्स्यसे च यदिष्टं तत् सांख्ययोगेप्सितं पदं। एतावदुक्त्वा भगवानस्तमेवाभ्यवर्त्तत। ११०३५
ततोऽनु व्याहृतं श्रुत्वा गते देवे विभावसौ। गृहमागत्य संहृष्टोऽचिन्तयं वै सरस्वतीं।
ततः प्रवृत्ताऽतिशुभा स्वरव्यञ्जनभूषिता। ॐकारमादितः कृत्वा मम देवी सरस्वती।
ततोऽहमर्घ्यं विधिवत् सरस्वत्यै न्यवेदयं। तपताञ्च वरिष्ठाय निषण्णस्तत्परायणः।
ततः शतपथं कृत्स्नं सरहस्यं ससंग्रहं। चक्रे सपरिशेषञ्च हर्षेण परमेण ह।
कृत्वा चाध्ययनं तेषां शिष्याणां शतमुत्तमं। विप्रियार्थं सशिष्यस्य मातुलस्य महात्मनः। ११०४०
ततः सशिष्येण मया सूर्य्येणेव गभस्तिभिः। व्यस्तो यज्ञो महाराज पितुस्तव महात्मनः।
मिषतो देवलस्यापि ततोऽर्द्धं हृतवानहं। स्ववेददक्षिणायार्थे विमर्द्दे मातुलेन ह।
सुमन्तुनाऽथ पैलेन तथा जैमिनिना च वै। पित्रा ते मुनिभिश्चैव ततोऽहमनुमानितः।
दश पञ्च च प्राप्तानि यजूंष्यर्कान्मयाऽनघ। तथैव रोमहर्षेण पुराणमवधारितं।
बीजमेतत् पुरस्कृत्य देवीञ्चैव सरस्वतीं। सूर्य्यस्य चानुभावेन प्रवृत्तोऽहं नराधिप। ११०४५
कर्त्तुं शतपथञ्चेदमपूर्व्वञ्च कृतं मया। यथाभिलषितं मार्गं तथा तच्चोपपादितं।
शिष्याणामखिलं कृत्स्नमनुज्ञातं ससंग्रहं। सर्व्वे च शिष्याः शुचयो गताः परमहर्षिताः।
शाखाः पञ्चदशेमास्तु विद्याभास्करदर्शिताः। प्रतिष्ठाप्य यथाकामं वेद्यं तदनुचिन्तयेत्।
किमत्र ब्रह्मण्यमृतं किञ्च वेद्यमनुत्तमं। चिन्तयंस्तत्र चागत्य गन्धर्व्वो मामपृच्छत।
विश्वावसुस्ततो राजन् वेदान्तज्ञानकोविदः। चतुर्व्विंशत्ततोऽपृच्छत् प्रश्नान् वेदस्य पार्थिव। ११०५०
पञ्चविंशतिमं प्रश्नं पप्रच्छान्वीक्षिकीं तदा। विश्वाविश्वं तथाऽश्वाश्वं मित्रं वरुणमेव च।
ज्ञानं ज्ञेयं तथाऽज्ञोऽज्ञः कस्तपा अतपास्तथा। सूर्य्यादः सूर्य्य इति च विद्याविद्ये तथैव च।
वेद्यावेद्यन्तथा राजन्नचलं चलमेव च। अपूर्व्वमक्षयं क्षय्यमेतत् प्रश्नमनुत्तमं।
अथोक्तश्च महाराज राज्ञा गन्धर्व्वसत्तमः। पृष्टवाननुपूर्व्वेण प्रश्नमर्थवदुत्तमं।
मुहूर्त्तमृष्यतां तावद्यावदेनं विचिन्तये। वाढमित्येव कृत्वा च तूष्णीं गन्धर्व्व आस्थितः। ११०५५
ततोऽनुचिन्तयमहं भूयो देवीं सरस्वतीं। मनसा स च मे प्रश्नो दध्नो घृतमिवोद्धृतं।
तत्रोपनिषदञ्चैव परिशेषञ्च पार्थिव। मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं परां।
चतुर्थी राजशार्दूल विद्यैषा साम्परायिकी। उदीरिता मया तुभ्यं पञ्चविंशादधिष्ठिता।

अथोक्तस्तु मया राजन् राजा विश्वावसुस्तदा । श्रूयतां यद्भवानस्मान् प्रश्नं संपृष्टवानिह ।
विश्वाविश्वेति यदिदं गन्धर्व्वेन्द्रानुपृच्छसि । विश्वाव्यक्तं परं विद्याद्भूतभव्यभयङ्करं । ११०६०
त्रिगुणं गुणकर्त्तृत्वादविश्वोऽन्यो निष्कलस्तथा । अश्वस्तथैव मिथुनमेवमेवानुदृश्यते ।
अव्यक्तं प्रकृतिं प्राहुः पुरुषेति च निर्गुणं । तथैव मित्रं पुरुषं वरुणं प्रकृतिन्तथा ।
ज्ञानन्तु प्रकृतिं प्राहुर्ज्ञेयं निष्कलमेव च । अज्ञश्च ज्ञश्च पुरुषस्तस्मान्निष्कल उच्यते ।
ऋतपा अनृतपाः प्रोक्तः कोऽसौ पुरुष उच्यते । तपांसि प्रकृतिं प्राहुरतपा निष्कलः स्मृतः ।
तथैवावेद्यमव्यक्तं वेद्यः पुरुष उच्यते । चलाचलमिति प्रोक्तं त्वया तदपि मे शृणु । ११०६५
चलान्तु प्रकृतिं प्राहुः कारणं क्षयसर्गयोः । अक्षेपसर्गयोः कर्त्ता निश्चलः पुरुषः स्मृतः ।
तथैव वेद्यमव्यक्तमवेद्यः पुरुषस्तथा । अज्ञावुभौ ध्रुवौ चैव अक्षयौ चाप्युभावपि ।
अजौ नित्यावुभौ प्राहुरध्यात्मगतिनिश्चयात् । अक्षयत्वात् प्रजनने अजमत्राहुरव्ययं ।
अक्षयं पुरुषं प्राहुःक्षयो ह्यस्य न विद्यते । गुणक्षयत्वात् प्रकृतिः कर्तृत्वादक्षयं बुधाः ।
एषा तेऽऽन्वीक्षिकी विद्या चतुर्थी साम्परायिकी । विद्योपेतं धनं कृत्वा कर्म्मणा नित्यकर्म्मणि । ११०७०
एकान्तदर्शना वेदाः सर्व्वे विश्वावसो स्मृताः । जायन्ते च म्रियन्ते च यस्मिन्नेते यतश्च्युताः ।
वेदार्थं ये न जानन्ति वेद्यं गन्धर्व्वसत्तम । साङ्गोपाङ्गानपि यदि यश्च वेदानधीयते ।
वेदवेद्यं न जानीते वेदभारवहो हि सः । यो घृतार्थी खरीक्षीरं मथेद्गन्धर्व्वसत्तम ।
विष्ठां तत्रानुपश्येत न मण्डं न च वै घृतं । तथा वेद्यमवेद्यञ्च वेदविद्यो न विन्दति ।
स केवलं मूढमतिर्ज्ञानभारवहः स्मृतः । द्रष्टव्यौ नित्यमेवैतौ तत्परेणान्तरात्मना । ११०७५
यथाऽस्य जन्मनिधने न भवेतां पुनः पुनः । अजस्रं जन्मनिधनं चिन्तयित्वा त्रयीमिमां ।
परित्यज्य क्षयमिह अक्षयं धर्म्ममास्थितः । यदानुपश्यतेऽत्यन्तमहन्यहनि काश्यप ।
तदा स केवलीभूतः षड्विंशमनुपश्यति । अन्यश्च शाश्वतोऽव्यक्तस्तथाऽन्यः पञ्चविंशकः ।
तस्य द्वावनुपश्येतां तमेकमिति साधवः । तेनैतन्नाभिनन्दन्ति पञ्चविंशकमच्युतं ।
जन्ममृत्युभयोद्विग्नाः सांख्याश्च परमैषिणः । ११०८०
॥ विश्वावसुरुवाच ॥ पञ्चविंशं यदेतत्ते प्रोक्तं ब्राह्मणसत्तम । तथा तन्न तथा वेति तद्भवान् वक्तुमर्हति ।
जैगीषव्यस्यासितस्य देवलस्य मया श्रुतं । पराशरस्य विप्रर्षेर्व्वार्षगण्यस्य धीमतः ।
भृगोः पञ्चशिखस्याथ कपिलस्य शुकस्य च । गौतमस्यार्ष्टिषेणस्य गर्गस्य च महात्मनः ।
नारदस्यासुरेश्चैव पुलस्त्यस्य च धीमतः । सनत्कुमारस्य ततः शुक्रस्य च महात्मनः ।
कश्यपस्य पितुश्चैव पूर्व्वमेव मया श्रुतं । तदनन्तरञ्च रुद्रस्य विश्वरूपस्य धीमतः । ११०८५
दैवतेभ्यः पितृभ्यश्च दैतेयेभ्यस्ततस्ततः । प्राप्तमेतन्मया कृत्स्नं वेद्यं नित्यं वदन्त्युत ।
तस्मात्तद्वै भवद्बुद्ध्या श्रोतुमिच्छामि ब्राह्मण । भवान् प्रबर्हः शास्त्राणां प्रगल्भश्चातिबुद्धिमान् ।
न तवाविदितं किञ्चिद्भवान् श्रुतिनिधिः स्मृतः । कथ्यते देवलोके च पितृलोके च ब्राह्मण ।

ब्रह्मलोकगताश्चैव कथयन्ति महर्षय: । पठितञ्च तपतां श्रेष्ठादादित्येन च भाषिता ।
सांख्यज्ञानं त्वया ब्रह्मन्नवाप्तं कृत्स्नमेव च । तथैव योगशास्त्रञ्च याज्ञवल्क्य विशेषत: । ११७९०
नि:सन्दिग्धं प्रबुद्धस्त्वं बुध्यमानश्चराचरं । श्रोतुमिच्छामि तज्ज्ञानं घृतं मण्डमयं यथा ।
॥ याज्ञवल्क्य उवाच ॥ कृत्स्नधारिणमेव त्वां मन्ये गन्धर्व्वसत्तम । जिज्ञाससे च मां राजंस्तन्निबोध यथाश्रुतं ।
अबुध्यमानां प्रकृतिं बुध्यते पञ्चविंशक: । न तु बुध्यति गन्धर्व्व प्रकृति: पञ्चविंशकं ।
अनेन प्रतिबोधेन प्रधानं प्रवदन्ति तत् । सांख्ययोगाश्च तत्त्वज्ञा यथाश्रुतिनिदर्शनात् ।
पश्यंस्तथैव चापश्यन् पश्यत्यन्य: सदाऽनघ । षड्विंशं पञ्चविंशञ्च चतुर्व्विंशञ्च पश्यति । ११७९५
न तु पश्यति पश्यंस्तु यश्चैनमनुपश्यति । पञ्चविंशोऽभिमन्येत नान्योऽस्ति परतो मम ।
न चतुर्व्विंशको ग्राह्यो मनुजैर्ज्ञानदर्शिभि: । मत्स्यश्चोदकमन्वेति प्रवर्त्तेत प्रवर्त्तनात् ।
यथैव बुध्यते मत्स्यस्तथैषोऽप्यनुबुध्यते । सस्नेहसहवासाच्च साभिमानाच्च नित्यश: ।
स निमज्जति कालस्य यदैकत्वं न बुध्यते । उन्मज्जति हि कालस्य ममत्वेनाभिसंवृत: ।
यदा तु मन्यतेऽन्योऽहमन्य एष इति द्विज । तदा स केवलीभूत: षड्विंशमनुपश्यति । ११८००
अन्यश्च राजन्यवरस्तथाऽन्य: पञ्चविंशक: । तत्स्थानाच्चानुपश्यन्ति एक एवेति साधव: ।
तेनैतन्नाभिनन्दन्ति पञ्चविंशकमच्युतं । जन्ममृत्युभयाद्भीता योगा: सांख्याश्च काश्यप ।
षड्विंशमनुपश्यन्त: शुचयस्तत्परायणा: । यदा स केवलीभूत: षड्विंशमनुपश्यति ।
तदा स सर्व्वविद्विद्वान् न पुनर्ज्जन्म विन्दति । एवमप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ ।
बुद्धश्चोक्तो यथातत्त्वं मया श्रुतिनिदर्शनात् । पश्यापश्यं यो न पश्येत् क्षेम्यं तत्त्वञ्च काश्यप । ११८०५
केवलाकेवलञ्चाद्यं पञ्चविंशं परञ्च यत् ।

॥ विश्वावसुरुवाच ॥ तथ्यं शुभञ्चैतदुक्तं त्वया विभो सम्यक् क्षेम्यं देवताद्यं यथावत् । स्वस्त्यक्षयं भवतश्चास्तु नित्यं बुद्ध्या सदा बुद्धियुक्तं नमस्ते ।

॥ याज्ञवल्क्य उवाच ॥ एवमुक्त्वा सम्प्रयातो दिवं स विभ्राजन् वै श्रीमता दर्शनेन । तुष्टश्च तुष्ट्या परयाऽभिनन्द्य प्रदक्षिणं मम कृत्वा महात्मा ।

ब्रह्मादीनां खेचराणां क्षितौ च ये चाधस्तात् संवसन्ते नरेन्द्र । तत्रैव तद्दर्शनं दर्शयन् वै सम्यक् क्षेम्यं ये पथं संश्रिता वै ।

सांख्या: सर्व्वे सांख्यधर्म्मे रताश्च तद्वद्योगा योगधर्म्मे रताश्च । ये चाप्यन्ये मोक्षकामा मनुष्यास्तेषामेतद्दर्शनं ज्ञानदृष्टं । ११८१०

ज्ञानान्मोक्षो जायते राजसिंह नास्त्यज्ञानादेवमाहुर्नरेन्द्र । तस्माज्ज्ञानं तत्त्वतोऽन्वेषितव्यं येनात्मानं मोक्षयेज्जन्ममृत्यो: ।

प्राप्य ज्ञानं ब्राह्मणात् क्षत्त्रियाद्वा वैश्याच्छूद्रादपि नीचादभीक्ष्णं । श्रद्धातव्यं श्रद्दधानेन नित्यं न श्रद्धिनं जन्ममृत्यू विशेतां ।

सर्व्वे वर्णा ब्राह्मणा ब्रह्मजाश्च सर्व्वे नित्यं व्याहरन्ते च ब्रह्म । तत्त्वं शास्त्रं ब्रह्मबुद्ध्या ब्रवीमि सर्व्वं विश्वं ब्रह्म चैतत् समस्तं ।

ब्रह्मास्यतो ब्राह्मणाः सम्प्रसूता बाहुभ्यां वै क्षत्रियाः सम्प्रसूताः । नाभ्यां वैश्याः पादतश्चापि शूद्राः सर्व्वे वर्णा नान्यथा वेदितव्याः ।

अज्ञानतः कर्म्मयोनिं भजन्ते तां तां राजंस्ते यथा यान्त्यभावं । तथा वर्णा ज्ञानहीनाः पतन्ते घोरादज्ञानात् प्राकृतं योनिजालं । ११८१५

तस्माज्ज्ञानं सर्व्वतो मार्गितव्यं सर्व्वत्रस्थं चैतदुक्तं मया ते । तत्स्थो ब्रह्मा तस्थिवांश्चापरो यस्तस्मै नित्यं मोक्षमाहुर्नरेन्द्र ।

यत्ते पृष्टं तन्मया चोपदिष्टं याथातथ्यं तद्विशोको भवस्व । राजन् गच्छस्वैतदर्थस्य पारं सम्यक्प्रोक्तं स्वस्ति ते त्वस्तु नित्यं ।

॥ भीष्म उवाच ॥ स एवमनुशास्तस्तु याज्ञवल्क्येन धीमता । प्रीतिमानभवद्राजा मिथिलाधिपतिस्तदा ।

गते मुनिवरे तस्मिन् कृते चापि प्रदक्षिणे । दैवरातिर्नरपतिरासीनस्तत्र मोक्षवित् ।

गोकोटिं स्पर्शयामास हिरण्यन्तु तथैव च । रत्नाञ्जलिमथैकञ्च ब्राह्मणेभ्यो ददौ तदा । ११८२०

विदेहराज्यञ्च तदा प्रतिष्ठाप्य सुतस्य वै । यतिधर्म्ममुपासंश्चाप्यवसन्मिथिलाधिपः ।

सांख्यज्ञानमधीयानो योगशास्त्रञ्च कृत्स्नशः । धर्म्माधर्म्मञ्च राजेन्द्र प्राकृतं परिगर्हयन् ।

अनन्त इति कृत्वा स नित्यं केवलमास्थितः । धर्म्माधर्म्मौ पुण्यपापे सत्यासत्ये तथैव च ।

जन्ममृत्यू च राजेन्द्र प्राकृतं तदचिन्तयत् । व्यक्ताव्यक्तस्य कर्म्मेदमिति नित्यं नराधिप ।

पश्यन्ति योगाः सांख्याश्च स्वशास्त्रकृतलक्षणाः । इष्टानिष्टविमुक्तं हि तस्थौ ब्रह्म परात्परं । ११८२५

नित्यं तदाहुर्विद्वांसः शुचि तस्माच्छुचिर्भव । दीयते यच्च लभते दत्तं यच्चानुमन्यते ।

ददाति च नरश्रेष्ठ प्रतिगृह्णाति यच्च ह । ददात्यव्यक्त इत्येतत् प्रतिगृह्णाति यच्च वै ।

आत्मा ह्येवात्मनो ह्येकः कोऽन्यस्तस्मात् परो भवेत् । एवं मन्यस्व सततमन्यथा मा विचिन्तय ।

यस्याव्यक्तं न विदितं सगुणं निर्गुणं पुनः । तेन तीर्थानि यज्ञाश्च सेवितव्या विपश्चिता ।

न स्वाध्यायैस्तपोभिर्व्वा यज्ञैर्व्वा कुरुनन्दन । लभते व्यक्तिकं स्थानं ज्ञात्वा व्यक्तं महीयते । ११८३०

तथैव महतः स्थानमाहङ्कारिकमेव च । अहङ्कारात् परञ्चापि स्थानानि समवाप्नुयात् ।

ये त्वव्यक्तात् परं नित्यं जानते शास्त्रतत्पराः । जन्ममृत्युविमुक्तञ्च विमुक्तं सदसच्च यत् ।

एतन्मयाप्तं जनकात् पुरस्तात्तेनापि चाप्तं नृप याज्ञवल्क्यात् । ज्ञानं विशिष्टं न तथा हि यज्ञा ज्ञानेन दुर्गं तरते न यज्ञैः ।

दुर्गं जन्मनिधनञ्चापि राजन् न भौतिकं ज्ञानविदो वदन्ति । यज्ञैस्तपोभिर्नियमैर्व्रतैश्च दिवं समासाद्य पतन्ति भूमौ ।

तस्मादुपासस्व परं महच्छुचिः शिवं विमोक्षं विमलं पवित्रं । क्षेत्रं ज्ञात्वा पार्थिव ज्ञानयज्ञमुपास्य वै तत्त्वमृषिर्भविष्यसि । ११८३५

यदुपनिषदमुपाकरोत्तथासौ जनकनृपस्य पुरा हि याज्ञवल्क्यः । यदुपगणितं शाश्वताव्ययं तच्छुभममृतत्वमशोकमृच्छति ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि याज्ञवल्क्यजनकसंवादे विंशत्यधिकशततोऽध्यायः ॥ ३२० ॥

॥ युधिष्ठिर उवाच ॥ ऐश्वर्य्यं वा महत् प्राप्य धनं वा भरतर्षभ । दीर्घमायुरवाप्याथ कथं मृत्युमतिक्रमेत् ।
तपसा वा सुमहता कर्म्मणा वा श्रुतेन वा । रसायनप्रयोगैर्व्वा कैर्न्नाप्नोति जरान्तकौ ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । भिक्षोः पञ्चशिखस्येह संवादं जनकस्य च ।
वैदेहो जनको राजा महर्षिं वेदवित्तमं । पर्य्यपृच्छत् पञ्चशिखं छिन्नधर्म्मार्थसंशयं । ११८४०
केन वृत्तेन भगवन्नतिक्रामेज्जरान्तकौ । तपसा वाथ वा बुद्ध्या कर्म्मणा वा श्रुतेन वा ।
एवमुक्तः स वैदेहं प्रत्युवाचापरोक्षवित् । निवृत्तिर्न तयोरस्ति नानिवृत्तिः कथञ्चन ।
न ह्यहानि निवर्त्तन्ते न मासा न पुनः क्षपाः । सोऽयं प्रपद्यतेऽध्वानं चिराय ध्रुवमध्रुवः ।
सर्व्वभूतसमुच्छेदः स्रोतसेवोह्यते सदा । उह्यमानं निमज्जन्तमप्लवे कालसागरे ।
जरामृत्युमहाग्राहे न कश्चिदभिपद्यते । नैवास्य कश्चिद्भवति नासौ भवति कस्यचित् । ११८४५
पथि सङ्गतमेवेदं दारैरन्यैश्च बन्धुभिः । नायमत्यन्तसंवासो लब्धपूर्व्वो हि केनचित् ।
क्षिप्यन्ते तेन तेनैव निष्टनन्तः पुनः पुनः । कालेन जातायाता हि वायुनेवाभ्रसञ्चयाः ।
जरामृत्यू हि भूतानां खादितारौ वृकाविव । बलिनां दुर्ब्बलानाञ्च ह्रस्वानां महतामपि ।
एवम्भूतेषु भूतात्मा नित्यभूतो ध्रुवेषु च । कथं हि हृष्येज्जातेषु मृतेषु च न संज्वरेत् ।
कुतोऽहमागतः कोऽस्मि क्व गमिष्यामि कस्य वा । कस्मिन् स्थितः क्व भविता कस्मात् किमनुशोचसि । ११८५०
द्रष्टा स्वर्गस्य कोऽन्योऽस्ति तथैव नरकस्य च । आगमांस्त्वनतिक्रम्य दद्याच्चैव यजेत च ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि भिक्षुपञ्चशिखजनकसंवादे एकविंशत्यधिकद्विशततोऽध्यायः ॥२२१ ॥
॥ युधिष्ठिर उवाच ॥ अपरित्यज्य गार्हस्थ्यं कुरुराजर्षिसत्तम । कः प्राप्तो विनयं बुद्ध्या मोक्षतत्त्वं वदस्व मे ।
संन्यस्यते यथात्मायं व्यक्तस्यात्मा यथा च यत् । परं मोक्षस्य यच्चापि तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । जनकस्य च संवादं सुलभायाश्च भारत ।
सन्यासफलिकः कश्चिद्बभूव नृपतिः पुरा । मैथिलो जनकोनाम धर्म्मध्वज इति श्रुतः । ११८५५
स वेदे मोक्षशास्त्रे च स्वे च शास्त्रे कृतागमः । इन्द्रियाणि समाधाय शशास वसुधामिमां ।
तस्य वेदविदः प्राज्ञाः श्रुत्वा तां साधुवृत्ततां । लोकेषु स्पृहयन्त्यन्ये पुरुषाः पुरुषेश्वर ।
अथ धर्म्मयुगे तस्मिन् योगधर्म्ममनुष्ठिता । महीमनुचचारैका सुलभा नाम भिक्षुकी ।
तया जगदिदं कृत्स्नमटन्त्या मिथिलेश्वरः । तत्र तत्र श्रुतो मोक्षे कथ्यमानस्त्रिदण्डिभिः ।
सा तिसूक्ष्मां कथां श्रुत्वा तथ्यं नेति ससंशया । दर्शने जातसङ्कल्पा जनकस्य बभूव ह । ११८६०
तत्र सा विप्रहायाथ पूर्व्वरूपं हि योगतः । अविभ्रदनवद्याङ्गी रूपमन्यदनुत्तमं ।
चक्षुर्निमेषमात्रेण लघ्वस्त्रगतिगामिनी । विदेहानां पुरीं सुभ्रूर्जगाम कमलेक्षणा ।
सा प्राप्य मिथिलां रम्यां प्रभूतजनसंकुलां । भैक्ष्यचर्य्यापदेशेन ददर्श मिथिलेश्वरं ।
राजा तस्याः परं दृष्ट्वा सौकुमार्य्यं वपुस्तदा । केयं कस्य कुतो वेति बभूवागतविस्मयः ।
ततोऽस्याः स्वागतं कृत्वा व्यादिश्य च वरासनं । पूजितां पादशौचेन वरान्नेनाप्यतर्पयत् । ११८६५

अथ भुक्तवती प्रीता राजानं मन्त्रिभिर्वृतं । सर्व्वभाष्यविदां मध्ये चोदयामास भिक्षुकी ।
सुलभा त्वस्य धर्म्मेषु मुक्तो नेति ससंशया । सत्त्वं सत्त्वेन योगज्ञा प्रविवेश महीपतेः ।
नेत्राभ्यां नेत्रयोरस्य रश्मीन् संयम्य रश्मिभिः । सा स्म सञ्चोदयिष्यन्ती योगबन्धैर्बबन्ध ह ।
जनकोऽप्युत्स्मयन्राजा भावमस्या विशेषयन् । प्रतिजग्राह भावेन भावमस्या नृपोत्तम ।
तदेकस्मिन्नधिष्ठाने संवादः श्रूयतामयं । छत्रादिषु विमुक्तस्य मुक्तायाश्च त्रिदण्डके । ११८७०
॥ जनक उवाच ॥ भगवत्याः क्व चर्य्येयं कृता क्व च गमिष्यसि । कस्य च त्वं कुतो वेति पप्रच्छैनां महीपतिः ।
श्रुते वयसि जातौ च सद्भावो नाधिगम्यते । एष्वर्थेषूत्तरं तस्मात् प्रवेद्यं सत्समागमे ।
छत्रादिषु विशेषेषु मुक्तं मां विद्धि तत्त्वतः । स त्वां संमन्तुमिच्छामि मानार्हा हि मतासि मे ।
यस्माच्चैतन्मया प्राप्तं ज्ञानं वैशेषिकं पुरा । यस्य नान्यः प्रवक्तास्ति मोक्षं तमपि मे शृणु ।
पराशरसगोत्रस्य वृद्धस्य सुमहात्मनः । भिक्षोः पञ्चशिखस्याहं शिष्यः परमसंमतः । ११८७५
साङ्ख्यज्ञाने च योगे च महीपालविधौ तथा । त्रिविधे मोक्षधर्म्मेऽस्मिन् गताध्वा छिन्नसंशयः ।
स यथाशास्त्रदृष्टेन मार्गेणेह परिव्रजन् । वार्षिकांश्चतुरो मासान् पुरा मयि सुखोषितः ।
तेनाहं साङ्ख्यमुख्येन सुदृष्टार्थेन तत्त्वतः । श्रावितस्त्रिविधं मोक्षं न च राज्याद्विचालितः ।
सोऽहं तामखिलां वृत्तिं त्रिविधां मोक्षसंहितां । मुक्तरागश्चराम्येकः पदे परमके स्थितः ।
वैराग्यं पुनरेतस्य मोक्षस्य परमो विधिः । ज्ञानादेव च वैराग्यं जायते येन मुच्यते । ११८८०
ज्ञानेन कुरुते यत्नं यत्नेन प्राप्यते महत् । महद्द्वन्द्वप्रमोक्षाय सा सिद्धिर्या वयोतिगा ।
सेयं परमिका बुद्धिः प्राप्ता निर्द्वन्द्वतां मया । इहैव गतमोहेन चरता मुक्तसङ्गिना ।
यथा क्षेत्रं मृदूभूतमद्भिराप्लावितं यथा । जनयत्यङ्कुरं कर्म्म नृणां तद्वत् पुनर्भवं ।
यथा चोत्तापितं बीजं कपाले यत्र तत्र वा । प्राप्याप्यङ्कुरहेतुत्वमबीजत्वान्न जायते ।
तद्वद्भगवतानेन शिखाप्रोक्तेन भिक्षुणा । ज्ञानं कृतमबीजं मे विषयेषु न जायते । ११८८५
नाभिरज्यति कस्मिंश्चिन्नानर्थे न परिग्रहे । नाभिरज्यति चैतेषु व्यर्थत्वाद्रागरोषयोः ।
यश्च मे दक्षिणं बाहुं चन्दनेन समुक्षयेत् । सव्यं वास्यापि यस्तक्षेत् समावेताबुभौ मम ।
सुखी सोऽहमवाप्तार्थः समलोष्टाश्मकाञ्चनः । मुक्तसङ्गः स्थितो राज्ये विशिष्टोऽन्यैस्त्रिदण्डिभिः ।
मोक्षे हि त्रिविधा निष्ठा दृष्टाऽन्यैर्मोक्षवित्तमैः । ज्ञानं लोकोत्तरं यच्च सर्व्वत्यागश्च कर्म्मणां ।
ज्ञाननिष्ठां वदन्त्येके मोक्षशास्त्रविदो जनाः । कर्म्मनिष्ठां तथैवान्ये यतयः सूक्ष्मदर्शिनः । ११८९०
प्रहायोभयमप्येवं ज्ञानं कर्म्म च केवलं । तृतीयेयं समाख्याता निष्ठा तेन महात्मना ।
यमे च नियमे चैव कामे द्वेषे परिग्रहे । माने दम्भे तथा स्नेहे सदृशास्ते कुटुम्बिभिः ।
त्रिदण्डादिषु यद्यस्ति मोक्षो ज्ञानेन कस्यचित् । छत्रादिषु कथं न स्यात्तुल्यहेतौ परिग्रहे ।
येन येन हि यस्यार्थः कारणेनेह कर्म्मणि । तत्तदालम्बते सर्व्वं द्रव्यं स्वार्थपरिग्रहे ।
दोषदर्शी तु गार्हस्थ्ये यो व्रजत्याश्रमान्तरं । उत्सृजन् परिगृह्णंश्च सोऽपि सङ्गान्न मुच्यते । ११८९५

आधिपत्ये तथा तुल्ये निग्रहानुग्रहात्मके । राजभिर्भिक्षुकास्तुल्या मुच्यन्ते केन हेतुना ।
अथ सत्याधिपत्येऽपि ज्ञानेनैवेह केवलं । मुच्यन्ते सर्व्वपापेभ्यो देहे परमके स्थिताः ।
काषायधारणं मौण्ड्यं त्रिविष्टब्धं कमण्डलुः । लिङ्गान्युत्पथभूतानि न मोक्षायेति मे मतिः ।
यदि सत्यपि लिङ्गेऽस्मिन् ज्ञानमेवात्र कारणं । निर्म्मोक्षायेह दुःखस्य लिङ्गमात्रं निरर्थकं ।
अथवा दुःखशैथिल्यं वीक्ष्य लिङ्गे कृता मतिः । किन्तदेवार्थसामान्यं छत्रादिषु न लक्ष्यते । ११९००
आकिञ्चन्येन मोक्षोऽस्ति किञ्चन्ये नास्ति बन्धनं । किञ्चन्ये चेतरे चैव जन्तुर्ज्ञानेन मुच्यते ।
तस्माद्धर्म्मार्थकामेषु तथा राज्यपरिग्रहे । बन्धनायतनेष्वेषु विद्ध्यबन्धे पदे स्थितं ।
राज्यैश्वर्य्यमयः पाशः स्नेहायतनबन्धनः । मोक्षाश्मनि शितेनेह छिन्नस्त्यागासिना मया ।
सोऽहमेवङ्गतो मुक्तो जातार्थस्त्वयि भिक्षुकि । अयथार्थं हि ते वर्णं वक्ष्यामि शृणु तन्मम ।
सौकुमार्य्यं तथारूपं वपुरग्र्यन्तथा वयः । तवैतानि समस्तानि नियमश्चेति संशयः । ११९०५
यच्चाप्यननुरूपन्ते लिङ्गस्यास्य विचेष्टितं । मुक्तोऽयं स्यान्न वेति स्याद्धर्षितो मत्परिग्रहः ।
न च कामसमायुक्ते युक्तेऽप्यस्ति त्रिदण्डकं । न रक्ष्यते त्वया चेदं विमुक्तस्यास्ति गोपना ।
मत्पक्षसंश्रयाच्चायं शृणु यस्ते व्यतिक्रमः । आश्रयन्त्याः स्वभावेन मम पूर्व्वं परिग्रहं ।
प्रवेशस्ते कृतः केन मम राष्ट्रे पुरेऽपि वा । कस्य वा सन्निकर्षात्त्वं प्रविष्टा हृदयं मम ।
वर्णप्रवरमुख्यासि ब्राह्मणी क्षत्रियो ह्यहं । नावयोरेकयोगोऽस्ति मा कृथा वर्णसङ्करं । ११९१०
वर्त्तसे मोक्षधर्म्मेण त्वं गार्हस्थ्ये त्वहमाश्रमे । अयञ्चापि सुकष्टस्ते द्वितीयो श्रमसङ्करः ।
सगोत्रां वाऽसगोत्रां वा न वेद त्वां न वेत्थ मां । सगोत्रमाविशन्त्यास्ते तृतीयो गोत्रसङ्करः ।
अथ जीवति ते भर्त्ता प्रोषितोऽप्यथ वा क्वचित् । अगम्या परभार्य्येति चतुर्थो धर्म्मसङ्करः ।
सा त्वमेतान्यकार्य्याणि कार्य्यापेक्षा व्यवस्यसि । अविज्ञानेन वा युक्ता मिथ्याज्ञानेन वा पुनः ।
अथवापि स्वतन्त्रासि स्वदोषेणेह केनचित् । यदि किञ्चित् श्रुतं तेऽस्ति सर्व्वं कृतमनर्थकं । ११९१५
इदमन्यत्तृतीयन्ते भावस्पर्शविघातकं । दुष्टाया लक्ष्यते लिङ्गं प्रवक्तव्यं प्रकाशितं ।
न मय्येवाभिसन्धिस्ते जयैषिण्या जये कृतः । येयं मत्परिषत् कृत्स्ना जेतुमिच्छसि तामपि ।
तथाह्येवं पुनश्च त्वं दृष्टिं स्वां प्रतिमुञ्चसि । मत्पक्षप्रतिघाताय स्वपक्षोद्भावनाय च ।
सा स्वेनामर्षजेन त्वमृद्धिमोहेन मोहिता । भूयः सृजसि योगास्त्रं विषामृतमिवैकधा ।
इच्छतोरत्र यो लाभः स्त्रीपुंसोरमृतोपमः । अलाभश्चापि रक्तस्य सोऽपि दोषो विषोपमः । ११९२०
मा स्प्राक्षीः साधु जानीष्व स्वशास्त्रमनुपालय । कृतेयं हि विजिज्ञासा मुक्तो नेति त्वया मम ।
एतत् सर्व्वं प्रतिच्छन्नं मयि नार्हसि गूहितुं । सा यदि त्वं स्वकार्य्येण यद्यन्यस्य महीपतेः ।
तत्त्वं सत्प्रतिच्छन्ना मयि नार्हसि गूहितुं । न राजानं मृषा गच्छेन्न द्विजातिं कथञ्चन ।
न स्त्रियं स्त्रीगुणोपेतां हन्युर्ह्येते मृषागताः । राज्ञां हि बलमैश्वर्य्यं ब्रह्म ब्रह्मविदां बलं ।
रूपयौवनसौभाग्यं स्त्रीणां बलमनुत्तमं । अत एतैर्बलैरेव बलिनः स्वार्थमिच्छता । ११९२५

आर्ज्जवेनाभिगन्तव्या विनाशाय ह्यनार्ज्जवं । का त्वं जातिं श्रुतं वृत्तं भावं प्रकृतिमात्मनः ।
कृत्यमागमने चैव वक्तुमर्हसि तत्त्वतः ।
॥ भीष्म उवाच ॥ इत्येतैरसुखैर्वाक्यैरयुक्तैरसमञ्जसैः । प्रत्यादिष्टा नरेन्द्रेण सुलभा न व्यकम्पत ।
उक्तवाक्ये तु नृपतौ सुलभा चारुदर्शना । ततश्चारुतरं वाक्यं प्रचक्रामाथ भाषितुं ।
॥ सुलभोवाच ॥ नवभिर्नवभिश्चैव दोषैर्वाग्बुद्धिदूषणैः । अपेतमुपपन्नार्थमष्टादशगुणान्वितं । ११९३०
सौक्ष्म्यं सांख्यक्रमौ चोभौ निर्णयः सप्रयोजनः । पञ्चैतान्यर्थजातानि वाक्यमित्युच्यते नृप ।
एषामेकैकशोऽर्थानां सौक्ष्म्यादीनां सलक्षणं । शृणु संसार्य्यमाणानां पदार्थपदवाक्यतः ।
ज्ञानं ज्ञेयेषु भिन्नेषु यदा भेदेन वर्त्तते । तत्राधिवासिनी बुद्धिस्तत्सौक्ष्म्यमिति वर्त्तते ।
दोषाणाञ्च गुणानाञ्च प्रमाणं प्रविभागतः । कञ्चिदर्थमभिप्रेत्य सा संख्येत्युपधार्य्यतां ।
इदं पूर्व्वमिदं पश्चाद्वक्तव्यं यद्विवक्षितं । क्रमयोगन्तमप्याहुर्व्वाक्यं वाक्यविदो जनाः । ११९३५
धर्म्मकामार्थमोक्षेषु प्रतिज्ञाय विशेषतः । इदं तदिति वाक्यान्ते प्रोच्यते स विनिर्णयः ।
इच्छाद्वेषभवैर्दुःखैः प्रकर्षो यत्र जायते । तत्र या नृपतेर्वृत्तिस्तत्प्रयोजनमिष्यते ।
तान्येतानि यथोक्तानि सौक्ष्म्यादीनि जनाधिप । एकार्थसमवेतानि वाक्यं मम निशामय ।
उपेतार्थमभिन्नार्थं न्यायवृत्तं न चाधिकं । न श्लक्ष्णं न च सन्दिग्धं वक्ष्यामि परमन्ततः ।
न गुर्व्वक्षरसंयुक्तं पराङ्मुखसुखं न च । नानृतं न त्रिवर्गेण विरुद्धं नाप्यसंस्कृतं । ११९४०
न न्यूनं कष्टशब्दं वा व्युत्क्रमाभिहितं न च । न शेषमनुकल्पेन निष्कारणमहेतुकं ।
कामात् क्रोधाद्भयाल्लोभात् दैन्यादनार्य्यकात्तथा । ह्रीतोऽनुक्रोशतो मानान्न वक्ष्यामि कथञ्चन ।
वक्ता श्रोता च वाक्यञ्च यदा त्वविकलं नृप । सममेति विवक्षायां तदा सोऽर्थः प्रकाशते ।
वक्तव्ये तु यदा वक्ता श्रोतारमवमन्य वै । स्वार्थमाह परार्थं वा तदा वाक्यं न रोहति ।
अथ यः स्वार्थमुत्सृज्य परार्थं प्राह मानवः । विशङ्का जायते तस्मिन् वाक्यन्तदपि दोषवत् । ११९४५
यस्तु वक्ता द्वयोरर्थमविरुद्धं प्रभाषते । श्रोतुश्चैवात्मनश्चैव स वक्ता नेतरो नृप ।
तदर्थवदिदं वाक्यं राजन्नेकमनाः शृणु । यथा जतु च काष्ठञ्च पांशवश्चोदविन्दवः ।
संश्लिष्टानि तथा राजन् प्राणिनामिह सम्भवः । शब्दः स्पर्शो रसो रूपं गन्धः पञ्चेन्द्रियाणि च ।
पृथगात्मान आत्मानं संश्लिष्टा जतुकाष्ठवत् । न चैषां चोदना काचिदस्तीत्येष विनिश्चयः ।
एकैकस्येह विज्ञानं नास्त्यात्मनि तथा परे । न वेद चक्षुश्चक्षुष्ट्वं श्रोत्रं नात्मनि वर्त्तते । ११९५०
तथैव व्यभिचारेण न वर्त्तन्ते परस्परं । संश्लिष्टाश्च न जानन्ति यथाप इव पांशवः ।
बाह्यानन्यानपेक्षन्ते गुणांस्तानपि मे शृणु । रूपं चक्षुः प्रकाशश्च दर्शने हेतवस्त्रयः ।
यथैवात्र तथान्येषु ज्ञानज्ञेयेषु हेतवः । ज्ञानज्ञेयान्तरे तस्मिन् मनो नामापरो गुणः ।
विचारयति येनायं निश्चये साध्वसाधुनी । द्वादशस्त्वपरस्तत्र बुद्धिर्नाम गुणः स्मृतः ।
येन संशयपूर्व्वेषु बोद्धव्येषु व्यवस्यति । अथ द्वादशके तस्मिन् सत्त्वं नामापरो गुणः । ११९५५

महासत्त्वोऽल्पसत्त्वो वा जन्तुर्येनानुमीयते । अहं कर्त्तेति चाप्यन्यो गुणस्तत्र चतुर्द्दशः ।
ममायमिति येनायं मन्यते न ममेति च । अथ पञ्चदशो राजन् गुणस्तत्रापरः स्मृतः ।
पृथक् कलासमूहस्य सामग्र्यन्तदिहोच्यते । गुणस्त्वेवापरस्तत्र सङ्घात इव षोडशः ।
प्रकृतिर्व्यक्तिरित्येतौ गुणौ यस्मिन् समाश्रितौ । सुखासुखे जरामृत्यू लाभालाभौ प्रियाप्रिये ।
इति चैकोनविंशोऽयं द्वन्द्वयोग इति स्मृतः । ऊर्द्ध्वञ्चैकोनविंशत्याः कालो नाम परो गुणः । ११९६०
इतीमं विद्धि विंशत्या भूतानां प्रभवाप्ययं । विंशकश्चैष सङ्घातो महाभूतानि पञ्च च ।
सदसद्भावयोगौ तु गुणावन्यौ प्रकाशकौ । इत्येवं विंशकश्चैव गुणाः सप्त च ये स्मृताः ।
विधिः शुक्रं बलञ्चेति त्रय एते गुणाः परे । विंशतिर्द्दश चैवं हि गुणाः सङ्ख्यातः स्मृताः ।
समग्रा यत्र वर्त्तन्ते तच्छरीरमिति स्मृतं । अव्यक्तं प्रकृतिं त्वासां कलानां कश्चिदिच्छति ।
व्यक्तञ्चासां तथा चान्यः स्थूलदर्शी प्रपश्यति । अव्यक्तं यदि वा व्यक्तं द्वयीमथ चतुष्टयीं । ११९६५
प्रकृतिं सर्व्वभूतानां पश्यन्त्यध्यात्मचिन्तकाः । येयं प्रकृतिरव्यक्ता कलाभिर्व्यक्ततां मताः ।
अहञ्च त्वञ्च राजेन्द्र ये चाप्यन्ये शरीरिणः । बिन्दुन्यासादयोऽवस्थाः शुक्रशोणितसम्भवाः ।
यासामेव निपातेन कललं नाम जायते । कललाद्बुद्बुदोत्पत्तिः पेशी च बुद्बुदात् स्मृता ।
पेश्यास्त्वङ्गाभिनिर्वृत्तिर्नखरोमाणि चाङ्गतः । सम्पूर्णे नवमे मासि जन्तोर्जातस्य मैथिल ।
जायते नामरूपत्वं स्त्री पुमान् वेति लिङ्गतः । जातमात्रन्तु तद्रूपं दृष्ट्वा ताम्रनखाङ्गुलि । ११९७०
कौमारं रूपमापन्नं रूपतो नोपलभ्यते । कौमाराद्यौवनञ्चापि स्थाविर्य्यञ्चापि यौवनात् ।
अनेन क्रमयोगेन पूर्व्वं पूर्व्वं न लभ्यते । कलानां पृथगर्थानां प्रतिभेदः क्षणे क्षणे ।
वर्त्तते सर्व्वभूतेषु सौक्ष्म्यात्तु न विभाव्यते । न चैषामप्ययो राजन् लक्ष्यते प्रभवो न च ।
अवस्थायामवस्थायां दीपस्येवार्च्चिषो गतिः । तस्याप्येवं प्रभावस्य सदश्वस्येव धावतः ।
अजस्रं सर्व्वलोकस्य कः कुतो वा न वा कुतः । कस्येदं कस्य वा नेदं कुतो वेदं न वा कुतः । ११९७५
सम्बन्धः कोऽस्ति भूतानां स्वैरप्यवयवैरिह । यथादित्यान्मणेश्चापि वीरुद्भ्यश्चैव पावकः ।
जायन्त्येवं समुदयात् कलानामिव जन्तवः । आत्मन्येवात्मनात्मानं यथा त्वमनुपश्यसि ।
एवमेवात्मनात्मानं यथा त्वमनुपश्यसि । एवमेवात्मनात्मानमन्यस्मिन् किं न पश्यसि ।
यद्यात्मनि परस्मिंश्च समतामध्यवस्यति । अथ मां कासि कस्येति किमर्थमनुपृच्छसि ।
इदं मे स्यादिदं नेति द्वन्द्वैर्मुक्तस्य मैथिल । कासि कस्य कुतो वेति वचनैः किं प्रयोजनं । ११९८०
रिपौ मित्रेऽथ मध्यस्थे विजये सन्धिविग्रहे । कृतवान् यो महीपालः किं तस्मिन्मुक्तलक्षणं ।
त्रिवर्गं सप्तधा व्यक्तं यो न वेदेह कर्मसु । सङ्गवान् यस्त्रिवर्गेण किं तस्मिन् मुक्तलक्षणं ।
तद्युक्तस्य ते मोक्षे योऽभिमानो भवेन्नृप । सुहृद्भिः स निवार्य्यस्ते ऽविरक्तस्येव भेषजं ।
तानि तानि तु सञ्चिन्त्य सङ्गस्थानान्यरिन्दम । आत्मनात्मनि संपश्येत् किमन्यन्मुक्तलक्षणं ।
इमान्यन्यानि सूक्ष्माणि मोक्षमाश्रित्य कानिचित् । चतुरङ्गप्रवृत्तानि सङ्गस्थानानि मे शृणु । ११९८५

स इमां पृथिवीं कृत्स्नामेकच्छत्रां प्रशास्ति ह । एक एव स वै राजा पुरमध्यावसत्युत ।
तत्पुरे चैकमेवास्य गृहं यदधितिष्ठति । गृहे शयनमप्येकं निशायां यत्र लीयते ।
शय्यार्द्धं तस्य चाप्यत्र स्त्रीपूर्व्वमधितिष्ठति । तदनेन प्रसङ्गेन फलेनैवेह युज्यते ।
एवमेवोपभोगेषु भोजनाच्छादनेषु च । गुणेषु परिमेयेषु निग्रहानुग्रहं प्रति ।
परतन्त्रः सदा राजा स्वल्पे सोऽपि प्रसज्जते । सन्धिविग्रहयोगे च कुतो राज्ञः स्वतन्त्रता । ११९९०
स्त्रीषु क्रीडाविहारेषु नित्यमस्य स्वतन्त्रता । मन्त्रे चामात्यसमितौ कुतस्तस्य स्वतन्त्रता ।
यदा त्वाज्ञापयत्यन्यांस्तदास्योक्ता स्वतन्त्रता । अवशः कार्य्यते तत्र तस्मिन् तस्मिन् क्षणे स्थितः ।
स्वप्नकामो न लभते स्वप्तुं कार्य्यार्थिभिर्जनैः । शयने चाप्यनुज्ञातः सुप्त उत्थाप्यते वशः ।
स्नाह्यालभ पिब प्राश जुहुध्यग्नीन् यजेत्यपि । ब्रवीहि शृणु चापीति विवशः कार्य्यते परैः ।
अभिगम्याभिगम्यैवं याचन्ते सततं नराः । न चाप्युत्सहते दातुं वित्तरक्षी महाजनात् । ११९९५
दाने कोषक्षयोऽप्यस्य वैरं चाप्यप्रयच्छतः । क्षणेनास्योपवर्त्तन्ते दोषा वैराग्यकारकाः ।
प्राज्ञान् शूरांस्तथैवाढ्यानेकस्थानेऽपि शङ्कते । भयमप्यभये राज्ञो यैश्च नित्यमुपास्यते ।
तथा चैते प्रदुष्यन्ति राजन् ये कीर्त्तिता मया । तथैवास्य भयन्तेभ्यो जायते पश्य यादृशं ।
सर्व्वः स्वे स्वे गृहे राजा सर्व्वः स्वे स्वे गृहे गृही । निग्रहानुग्रहान् कुर्व्वन् तुल्यो जनक राजभिः ।
पुत्रदारास्तथैवात्मा कोषो मित्राणि सञ्चयाः । परैः साधारणा ह्येते तैस्तैरेवास्य हेतुभिः । १२०००
हतो देशः पुरं दग्धं प्रधानः कुञ्जरो मृतः । लोकसाधारणेष्वेषु मिथ्याज्ञानेन तप्यते ।
अमुक्तो मानसैर्दुःखैरिच्छाद्वेषभयोद्भवैः । शिरोरोगादिभी रोगैस्तथैवाभिनिमन्त्रिभिः ।
द्वन्द्वैस्तैस्तैरुपहतः सर्व्वतः परिशङ्कितः । बहुप्रत्यर्थिकं राज्यमुपास्ते गणयन्निशाः ।
तदल्पसुखमत्यर्थं बहुदुःखमसारवत् । तृणाग्निज्वलनप्रख्यं फेनबुद्बुदसन्निभं ।
को राज्यमभिपद्येत प्राप्य चोपशमं लभेत् । ममेदमिति यच्चेदं पुरं राष्ट्रञ्च मन्यसे । १२००५
बलं कोषममात्यांश्च कस्यैतानि न वा नृप । मित्रामात्यपुरं राष्ट्रं दण्डः कोषो महीपतिः ।
सप्ताङ्गस्यास्य राज्यस्य त्रिदण्डस्येव तिष्ठतः । अन्योन्यगुणयुक्तस्य कः केन गुणतोऽधिकः ।
तेषु तेषु हि कालेषु तत्तदङ्गं विशिष्यते । येन यत् सिध्यते कार्य्यं तत् प्राधान्याय कल्पते ।
सप्ताङ्गश्चैव संघातस्त्रयश्चान्ये नृपोत्तम । सम्भूय दशवर्गोऽयं भुङ्क्ते राज्यं हि राजवत् ।
यश्च राजा महोत्साहः क्षत्रधर्म्मे रतो भवेत् । स तुष्येद्दशभागेन ततस्त्वन्यो दशावरैः । १२०१०
नास्त्यसाधारणो राजा नास्ति राज्यमराजकं । राज्येऽसति कुतो धर्म्मो धर्म्मेऽसति कुतः परं ।
योऽप्यत्र परमो धर्म्मः पवित्रं राज्यराजयोः । पृथिवी दक्षिणा यस्य सोऽश्वमेधेन युज्यते ।
साऽहमेतानि कर्म्माणि राजदुःखानि मैथिल । समर्था शतशो वक्तुमथवापि सहस्रशः ।
स्वदेहेनाभिषङ्गो मे कुतः परपरिग्रहे । न मामेवं विधां युक्तामीदृशं वक्तुमर्हसि ।
ननु नाम त्वया मोक्षः कृत्स्नः पञ्चशिखाच्छ्रुतः । सोपायः सोपनिषदः सोपासङ्गः सनिश्चयः । १२०१५

तस्य ते मुक्तसंज्ञस्य पाशानाक्रम्य तिष्ठतः । छत्रादिषु विशेषेषु पुनः सङ्गः कथं नृप ।
श्रुतन्ते न श्रुतं मन्ये मृषावापि श्रुतं श्रुतं । अथवा श्रुतसङ्काशं श्रुतमन्यत् श्रुतं त्वया ।
अथापीमासु संज्ञासु लौकिकीषु प्रतिष्ठसे । अभिषङ्गावरोधाभ्यां बद्धस्त्वं प्राकृतो यथा ।
सत्त्वेनानुप्रवेशो हि योऽयं त्वयि कृतो मया । किं तवापकृतं तत्र यदि मुक्तोऽसि सर्व्वशः ।
नियमो ह्येष वर्णेषु यतीनां वन्यवासिता । शून्यमाविशयन्त्या च मया किं कस्य दूषितं ।    ११९१०
न पाणिभ्यां न बाहुभ्यां पादोरुभ्यां न चानघ । न गात्रावयवैरन्यैः स्पृशामि त्वां नराधिप ।
कुले महति जातेन ह्रीमता दीर्घदर्शिना । नैतत् सदसि वक्तव्यं सद्वाऽसद्वा मिथः कृतं ।
ब्राह्मणा गुरवश्चेमे तथा मान्या गुरूत्तमाः । त्वञ्चाथ गुरुरप्येषामेवमन्योन्यगौरवं ।
तदेवमनुसंदृश्य वाच्यावाच्यं परीक्षता । स्त्रीपुंसोः समवायोऽयं त्वया वाच्यो न संसदि ।
यथा पुष्करपर्णस्थं जलं तत्पर्णमस्पृशत् । तिष्ठत्यस्पृशती तद्वत्त्वयि वत्स्यामि मैथिल ।    ११९१५
यदि चाप्य स्पृशन्त्या मे स्पर्शं जानासि किञ्चन । ज्ञानं कृतमवीजन्ते कथन्तेनेह भिक्षुणा ।
स गार्हस्थ्याच्च्युतश्च त्वं मोक्षं चानाप्य दुर्व्विदं । उभयोरन्तराले वै वर्त्तसे मोक्षवार्त्तिकः ।
नहि मुक्तस्य मुक्तेन ज्ञस्यैकत्वपृथक्त्वयोः । भावाभावसमायोगे जायते वर्णसङ्करः ।
वर्णाश्रमाः पृथक्त्वेन दृष्टार्थस्यापृथक्त्विनः । नान्यदन्यदिति ज्ञात्वा नान्यदन्यत्र वर्त्तते ।
पाणौ कुण्डं तथा कुण्डे पयः पयसि मक्षिका । आश्रिताश्रययोगेन पृथक्त्वेनाश्रिताः पुनः ।    ११९२०
न तु कुण्डे पयोभावः पयश्चापि न मक्षिका । स्वयमेवाप्नुवन्त्येते भावाननुपराश्रयं ।
पृथक्त्वादाश्रमाणाञ्च वर्णान्यत्वे तथैव च । परस्परपृथक्त्वाच्च कथन्ते वर्णसङ्करः ।
नास्मि वर्णोत्तमा जात्या न वैश्या नावरा तथा । तव राजन् सवर्णास्मि शुद्धयोनिरविप्लुता ।
प्रधानो नाम राजर्षिर्व्यक्तन्ते श्रोत्रमागतः । कुले तस्य समुत्पन्नां सुलभां नाम विद्धि मां ।
द्रोणश्च शतशृङ्गश्च चक्रद्वारश्च पर्व्वतः । मम सत्रेषु पूर्व्वेषां चिता मघवता सह ।    ११९२५
साऽहं तस्मिन् कुले जाता भर्त्तर्य्यसति मद्विधे । विनीता मोक्षधर्म्मेषु चराम्येका मुनिव्रतं ।
नास्मि सत्रप्रतिच्छन्ना न परस्वापहारिणी । न धर्म्मसङ्करकरी स्वधर्म्मेऽस्मि धृतव्रता ।
नास्थिरा स्वप्रतिज्ञायां नासमीक्ष्य प्रवादिनी । नासमीक्ष्य गता चेह त्वत्सकाशं जनाधिप ।
मोक्षे ते भावितां बुद्धिं श्रुत्वाहं कुशलैषिणी । तव मोक्षस्य चाप्यस्य जिज्ञासार्थमिहागता ।
न वर्गस्था ब्रवीम्येतत् स्वपक्षपरपक्षयोः । मुक्तो व्यायच्छते यस्य शान्तो यस्य न शाम्यति ।    ११९३०
यथा शून्ये पुरागारे भिक्षुरेकां निशां वसेत् । तथाहं त्वच्छरीरेऽस्मिन्निमां वत्स्यामि शर्व्वरीं ।
साऽहं मानप्रदानेन वागातिथ्येन चार्चिता । सुप्तासु शरणं प्रीता श्वो गमिष्यामि मैथिल ।

॥ भीष्म उवाच ॥ इत्येतानि स वाक्यानि हेतुमन्त्यर्थवन्ति च । श्रुत्वा नाधिजगौ राजा किञ्चिदन्यदतः परं ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि सुलभाजनकसंवादे द्वाविंशत्यधिकत्रिशतोऽध्यायः ॥ ३२२ ॥

॥ युधिष्ठिर उवाच ॥ कथं निर्व्वेदमापन्नः शुको वैयासकिः पुरा । एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ।

अथ तत्त्वार्थतत्त्वानां निश्चयं बुद्धिनिश्चयं । वक्तुमर्हसि कौरव्य देवस्यास्य या कृतिः । १२०४५

॥ भीष्म उवाच ॥ प्राकृतेन सुवृत्तेन चरन्तमकुतोभयं । अध्याप्य कृत्स्नं स्वाध्यायमन्वशाद्वै पिता सुतं ।

॥ व्यास उवाच ॥ धर्म्मं पुत्र निषेवस्व सुतीक्ष्णौ च हिमातपौ । क्षुत्पिपासे च वायुञ्च जय नित्यं जितेन्द्रियः ।

सत्यमार्ज्जवमक्रोधमनसूयां दमं तपः । अहिंसाञ्चानृशंस्यञ्च विधिवत् परिपालय ।

सत्ये तिष्ठ रतो धर्म्मे हित्वा सर्व्वमनार्ज्जवं । देवतातिथिशेषेण यात्रां प्राणस्य संलिह ।

फेनमात्रोपमे देहे जीवे शकुनिवत्स्थिते । अनित्ये प्रियसंवासे कथं स्वपिषि पुत्रक । १२०५०

अप्रमत्तेषु जाग्रत्सु नित्ययुक्तेषु शत्रुषु । अन्तरं लिप्समानेषु बालस्त्वं नावबुध्यसे ।

अहःसु गण्यमानेषु क्षीयमाणे तथायुषि । जीविते लिख्यमाने च किमुत्थाय न धावसि ।

ऐहलौकिकमीहन्ते मांसशोणितवर्द्धनं । पारलौकिककार्य्येषु प्रसुप्ता भृशनास्तिकाः ।

धर्म्माय येऽभ्यसूयन्ति बुद्धिमोहान्विता नराः । अपथा गच्छतान्तेषामनुयातापि पीड्यते ।

ये तु तुष्टाः श्रुतिपरा महात्मानो महाबलाः । धर्म्म्यं पन्थानमारूढास्तानुपास्स्व च पृच्छ च । १२०५५

उपधार्य्य मतन्तेषां बुधानां धर्म्मदर्शिनां । नियच्छ परया बुद्ध्या चित्तमुत्पथगामि वै ।

अद्यकालिकया बुद्ध्या दूरे श्व इति निर्भयाः । सर्व्वभक्षा न पश्यन्ति कर्म्मभूमिमचेतसः ।

धर्म्मनिःश्रेणिमास्थाय किञ्चित् किञ्चित् समारुह । कोषकारवदात्मानं वेष्टयन्नावबुध्यसे ।

नास्तिकं भिन्नमर्य्यादं कूलपातमिव स्थितं । वामतः कुरु विस्रब्धो नरं वेणुमिवोद्धृतं ।

कामं क्रोधञ्च मृत्युञ्च पञ्चेन्द्रियजलां नदीं । नावं धृतिमयीं कृत्वा जन्मदुर्गाणि सन्तर । १२०६०

मृत्युनाऽभ्याहते लोके जरया परिपीडिते । अमोघासु पतन्तीषु धर्म्मपोतेन सन्तर ।

तिष्ठन्तञ्च शयानञ्च मृत्युरन्वेषते यदा । निर्वृतिं लभते कस्मादकस्मान्मृत्युनाशितः ।

सञ्चिन्वानकमेवैनं कामानामवितृप्तकं । वृकीवोरणमासाद्य मृत्युरादाय गच्छति ।

क्रमशः सञ्चितशिखो धर्म्मबुद्धिमयो महान् । अन्धकारे प्रवेष्टव्यं दीपो यत्नेन धार्य्यतां ।

सम्पतन् देहजालानि कदाचिदिह मानुषे । ब्राह्मण्यं लभते जन्तुस्तत्पुत्र परिपालय । १२०६५

ब्राह्मणस्य तु देहोऽयं न कामार्थाय जायते । इह क्लेशाय तपसे प्रेत्य त्वनुपमं सुखं ।

ब्राह्मण्यं बहुभिरवाप्यते तपोभिस्तल्लब्ध्वा न रतिपरेण हेलितव्यं । स्वाध्याये तपसि दमे च नित्ययुक्तः क्षेमार्थी कुशलपरः सदा यतस्व ।

अव्यक्तप्रकृतिरयं कलाशरीरः सूक्ष्मात्मा क्षणत्रुटिशो निमेषरोमा । सम्यास्यः समबलशुक्लकृष्णनेत्रो मासाङ्गो द्रवति वयोहयो नराणां ।

तं दृष्ट्वा प्रसृतमजस्रमुग्रवेगं गच्छन्तं सततमिहानवेक्षमाणं । चक्षुस्ते यदि न परप्रणेतृनेयं धर्म्मे ते भवतु मनः परं निशम्य ।

ये चात्र प्रचलितधर्म्मकामवृत्ताः क्रोशन्तः सततमनिष्टसंप्रयोगाः । क्लिश्यन्तः परिगतवेदनाशरीरा बह्वीभिः सुदृशमधर्म्मकारणाभिः । १२०७०

राजा यदा धर्म्मपरः शुभाशुभस्य गोप्ता समीक्ष्य सुकृतिना दधाति लोकान् । बहुविधमपि चरति प्रविशति सुखमनुपगतं निरवद्यं ।

श्वानो भीषणकाया अयोमुखानि वयांसि बलगृध्रकुलपक्षिणाश्च संघाः । नरकदने रुधिरपा गुरुवचननुदमुपरतं विशन्त्यसन्तः ।

मर्य्यादानियता स्वयम्भुवा य इहेमाः प्रभिनत्ति दशगुणा मनोनुगत्वात् । निवसति भृशमसुखं पितृविषयविपिनमवगाह्य स पापः ।

यो लुब्धः सुभृशं प्रियानृतश्च मनुष्यः सततनिकृतिवचनाभिरतिः स्यात् । उपनिधिभिरसुखकृत्सपरमनिरयगोभृशमसुखमनुभवति दुष्कृतकर्म्मा ।

उष्णां वैतरणीं नदीमवगाढोऽसिपत्रवनभिन्नगात्रः । परशुवनशयोनिपतितो वसति च महानिरये भृशार्त्तः ।　　१२०७५

महापदानि कत्थसे न चाप्यवेक्षसे परं । चिरस्य मृत्युकारिकामनागतां न बुध्यसे ।

प्रयायतां किमास्यते समुत्थितं महद्भयं । अतिप्रमाथि दारुणं सुखस्य संविधीयतां ।

पुरामृतः प्रणीयसे यमस्य राजशासनात् । त्वमन्तकायदारुणैः प्रयत्नमार्ज्जवे कुरु ।

पुरा समूलबान्धवं प्रभुर्हरत्यदुःखवित् । तवेह जीवितं यमो न चास्ति तस्य वारकः ।

पुराभिवाति मारुतो यमस्य यः पुरःसरः । पुरैक एव नीयसे कुरुष्व साम्परायिकं ।　　१२०८०

पुरा सहिक एव ते प्रवाति मारुतोऽन्तकः । पुरा च विभ्रमन्ति ते दिशोमहाभयागमे ।

श्रुतिश्च संनिरुध्यते पुरा तवेह पुत्रक । समाकुलस्य गच्छतः समाधिमुत्तमं कुरु ।

शुभाशुभे पुराकृते प्रमादकर्म्मविश्रुते । स्मरन् पुरा न तप्यसे विधित्स्व केवलं निधिं ।

पुरा जरा कलेवरं विजर्ज्जरीकरोति ते । बलाङ्गरूपहारिणी निधत्स्व केवलं निधिं ।

पुरा शरीरमन्तको भिनत्ति रोगसारथिः । प्रसह्य जीवितक्षये तपो महत्समाचर ।　　१२०८५

पुरा वृका भयङ्करा मनुष्यदेहगोचराः । अभिद्रवन्ति सर्व्वतो यतस्व पुण्यशीलने ।

पुरान्धकारमेककोनु पश्यसि त्वरस्व वै । पुरा हिरण्मयान्नगान्निरीक्षसेऽद्रिमूर्द्धनि ।

पुरा कुसङ्गतानि ते सुहृन्मुखाश्च शत्रवः । विचालयन्ति दर्शनात् घटस्व पुत्र यत् परं ।

धनस्य यस्य राजतो भयं नचास्ति चौरतः । मृतञ्च यन्न मुञ्चति समर्ज्जयस्व तद्धनं ।

न तत्र संविभज्यते स्वकर्म्मभिः परस्परं । यदेव यस्य यौतकं तदेव तत्र सोऽश्नुते ।　　१२०९०

परत्र येन जीव्यते तदेव पुत्र दीयतां । धनं यदक्षरं ध्रुवं समर्ज्जयस्व तत्स्वयं ।

न यावदेव पच्यते महाजनस्य यावकं । अपक्व एव यावके पुरा प्रलीयसे त्वर ।

न मातृपुत्रबान्धवा न संस्तुतः प्रियोजनः । अनुव्रजन्ति सङ्कटे व्रजन्तमेकपातिनं ।

यदेव कर्म्म केवलं पुराकृतं शुभाशुभं । तदेव पुत्र सार्थिकं भवत्यमुत्र गच्छतः ।

हिरण्यरत्नसञ्चयाः शुभाशुभेन सञ्चिताः । न तस्य देहसंक्षये भवन्ति कार्य्यसाधकाः ।　　१२०९५

परत्रगामि कस्य ते कृताकृतस्य कर्म्मणः । न साक्षि आत्मना समो नृणामिहास्ति कश्चन ।

मनुष्यदेहशून्यकं भवत्यमुत्र गच्छतः । प्रविश्य बुद्धिचक्षुषा प्रदृश्यते हि सर्व्वशः ।
इहाग्निसूर्य्यवायवः शरीरमाश्रितास्त्रयः । तएव तस्य साक्षिणो भवन्ति धर्म्मदर्शिनः ।
अहर्निशेषु सर्व्वतः स्पृशत्सु सर्व्वचारिषु । प्रकाशगूढवृत्तिषु स्वधर्म्ममेव पालय ।
अनेकपारिपान्थिके विरूपरौद्रमाक्षिके । स्वमेव कर्म्म रक्षतां स्वकर्म्म तत्र गच्छति । १२१००
न तत्र संविभज्यते स्वकर्म्मणा परस्परं । तथा कृतं स्वकर्म्मजं तदेव भुज्यते फलं ।
यथाप्सरोगणाः फलं सुखं महर्षिभिः सह । तथाप्नुवन्ति कर्म्मजं विमानकामगामिनः ।
यथेह यत् कृतं शुभं विपाप्मभिः कृतात्मभिः । तदाप्नुवन्ति मानवास्तथा विशुद्धयोनयः
प्रजापतेः सलोकतां बृहस्पतेः शतक्रतोः । व्रजन्ति ते परां गतिं गृहस्थधर्म्मसेतुभिः ।
सहस्रशोऽप्यनेकशः प्रवक्तुमुत्सहाम ते । अबुद्धिमोहनं पुनः प्रभुर्विनाय पावकः । १२१०५
गता त्रिरष्टवर्षता ध्रुवोऽसि पञ्चविंशकः । कुरुष्व धर्म्मसञ्चयं वयो हि तेऽतिवर्त्तते ।
पुराकरोति सोऽन्तकः प्रमादगोऽसुखां चमूं । यथा गृहीतमुत्थितस्त्वरस्व धर्म्मपालने ।
यथा त्वमेव पृष्ठतस्त्वमग्रतो गमिष्यसि । तथा गतिं गमिष्यतः किमात्मना परेण वा ।
यदेकपातिनां सतां भवत्यमुत्र गच्छतां । भयेषु साम्परायिकं निधत्स्व केवलं निधिं ।
सकूलमूलबान्धवं प्रभुर्हरत्यसङ्गवान् । न सन्ति यस्य वारकाः कुरुष्व धर्म्मसन्निधिं । १२११०
इदं निदर्शनं मया तवेह पुत्र साम्प्रतं । स्वदर्शनानुमानतः प्रवर्णितं कुरुष्व तत् ।
दधाति यः स्वकर्म्मणा ददाति यस्य कस्यचित् । अबुद्धिमोहजैर्गुणैः स एक एव युज्यते ।
श्रुतं समस्तमश्नुते प्रकुर्व्वतः शुभाः क्रियाः । तदेतदर्थदर्शनं कृतज्ञमर्थसंहितं ।
निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः । छित्त्वैतां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ।
किन्ते धनेन किम्बन्धुभिस्ते किन्ते पुत्त्रैः पुत्त्रक यो मरिष्यसि । आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क्व गताश्च
सर्व्वे । १२११५
श्वः कार्य्यमद्य कुर्व्वीत पूर्व्वाह्णे चापराह्णिकं । न हि प्रतीक्षते मृत्युः कृतं वास्य नवाकृतं ।
अनुगम्य विनाशान्ते निवर्त्तन्तीह बान्धवाः । अग्नौ प्रक्षिप्य पुरुषं ज्ञातयः सुहृदस्तथा ।
नास्तिकान् निरनुक्रोशान् नरान् पापमते स्थितान् । वामतः कुरु विस्रब्धं परं प्रेप्सुरतन्द्रितः ।
एवमभ्याहते लोके कालेनोपनिपीडिते । सुमहद्धैर्य्यमालम्ब्य धर्म्मं सर्व्वात्मना कुरु ।
अथेमं दर्शनोपायं सम्यग्यो वेत्ति मानवः । सम्यक् स्वधर्म्मं कृत्वेह परत्र सुखमश्नुते । १२१२०
न देहभेदे मरणं विजानतां न च प्रणाशः स्वनुपालिते पथि । धर्म्मं हि यो वर्द्धयते स पण्डितो य एव धर्म्माच्च्यवते स
मुह्यति ।
प्रयुक्तयोः कर्म्मपथि स्वकर्म्मणोः फलं प्रयोक्ता लभते यथा कृतं । निहीनकर्म्मा निरयं प्रपद्यते त्रिविष्टपं गच्छति धर्म्म
पारगः ।
सोपानभूतं स्वर्गस्य मानुष्यं प्राप्य दुर्लभं । तथात्मानं समादध्यात् भ्रश्यते न पुनर्यथा ।

यस्य नोत्क्रामति मतिः स्वर्गमार्गानुसारिणी। तमाहुः पुण्यकर्म्माणमशोच्यं पुत्रबान्धवैः।

यस्य नोपहता बुद्धिर्निश्चये ह्यवलम्बते। स्वर्गे कृतावकाशस्य नास्ति तस्य महद्भयं। १२१२५

तपोवनेषु ये जातास्तत्रैव निधनङ्गताः। तेषामल्पतरो धर्म्मः कामभोगानजानतां।

यस्तु भोगान् परित्यज्य शरीरेण तपश्चरेत्। न तेन किञ्चिन्न प्राप्तं तन्मे बहुमतं फलं।

मातापितृसहस्राणि पुत्रदारशतानि च। अनागतान्यतीतानि कस्य ते कस्य वा वयं।

अहमेको न मे कश्चिन्नाहमन्यस्य कस्य चित्। न तं पश्यामि यस्याहं तं न पश्यामि यो मम।

न तेषां भवता कार्य्यं न कार्य्यन्तव तैरपि। स्वकृतैस्तानि जातानि भवांश्चैव गमिष्यति। १२१३०

इह लोके हि धनिनां स्वजनः स्वजनायते। स्वजनस्तु दरिद्राणां जीवतामपि नश्यति।

संचिनोत्यशुभं कर्म्म कलत्रापेक्षया नरः। ततः क्लेशमवाप्नोति परत्रेह तथैव च।

पश्यति छिन्नभूतं हि जीवलोकं स्वकर्म्मणा। तत्कुरुष्व तथा पुत्र कृत्स्नं यत्समुदाहृतं।

तदेतत् संप्रदृश्यैव कर्म्मभूमिं प्रपश्यता। शुभान्याचरितव्यानि परलोकमभीप्सता।

मासर्त्तुसंज्ञापरिवर्त्तकेन सूर्य्याग्निना रात्रिदिवेन्धनेन। स्वकर्म्मनिष्ठाफलसाक्षिकेण भूतानि कालः पचति प्रसह्य। १२१३५

धनेन किं यन्न ददाति नाश्नुते बलेन किं येन रिपुं न बाधते। श्रुतेन किं येन न धर्म्ममाचरेत् किमात्मना यो न जितेन्द्रियो वशी।

॥ भीष्म उवाच ॥ इदं द्वैपायनवचो हितमुक्तं निशम्य तु। शुको गतः परित्यज्य पितरं मोक्षदेशिकं।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पावकीनाम त्रयोविंशत्यधिकत्रिशततमोऽध्यायः॥ ३२३ ॥

॥ युधिष्ठिर उवाच ॥ यदस्ति दत्तमिष्टं वा तपस्तप्तं तथैव च। गुरूणां वापि शुश्रूषा तन्मे ब्रूहि पितामह।

॥ भीष्म उवाच ॥ आत्मनानर्थयुक्तेन पापे निविशते मनः। स्वकर्म्म कलुषं कृत्वा कृच्छ्रे महति धीयते।

दुर्भिक्षादेव दुर्भिक्षं क्लेशात् क्लेशं भयाद्भयं। मृतेभ्यः प्रमृता यान्ति दरिद्राः पापकर्म्मिणः। १२१४०

उत्सवादुत्सवं यान्ति स्वर्गात् स्वर्गं सुखात् सुखं। श्रद्दधानाश्च दान्ताश्च धनाढ्याः शुभकारिणः।

व्यालकुञ्जरदुर्गेषु सर्पचौरभयेषु च। हस्तावापेन गच्छन्ति नास्तिकाः किमतः परं।

प्रियदेवातिथेयाश्च वदान्याः प्रियसाधवः। क्षेम्यमात्मवतां मार्गमास्थिता दक्षदक्षिणाः।

पुलाका इव धान्येषु पूत्यण्डा इव पक्षिषु। तद्विधास्ते मनुष्येषु येषां धर्म्मो न कारणं।

सुशीघ्रमपि धावन्तं विधानमनुधावति। शेते सह शयानेन येन येन यथा कृतं। १२१४५

पापं तिष्ठति तिष्ठन्तं धावन्तमनुधावति। करोति कुर्व्वतः कर्म्म छायेवानुविधीयते।

येन येन यथा यद्यत् पुरा कर्म्म सुनिश्चितं। तत्तदेवोत्तरं भुङ्क्ते नित्यं विहितमात्मना।

स्वकर्म्मविक्षेपविधानपरिरक्षणं। भूतग्राममिमं कालः समन्तादपकर्षति।

अचोद्यमानानि यथा पुष्पाणि च फलानि च। स्वं कालं नातिवर्त्तन्ते तथा कर्म्म पुरा कृतं।

सम्मानश्चावमानश्च लाभोऽलाभः क्षयाक्षयौ। प्रवृत्ता न निवर्त्तन्ते निधनान्ताः पदे पदे। १२१५०

आत्मना विहितं दुःखमात्मना विहितं सुखं। गर्भशय्यामुपादाय भुज्यते पूर्व्वदैहिकं।

बालो युवा वा वृद्धो वा यत् करोति शुभाशुभं । तस्यां तस्यामवस्थायां भुङ्क्ते जन्मनि जन्मनि ।
यथा धेनुसहस्रेषु वत्सो विन्दति मातरं । तथा पूर्व्वकृतं कर्म्म कर्त्तारमनुगच्छति ।
मलिनं हि यथा वस्त्रं पश्चात् शुध्यति वारिणा । उपवासैः प्रतप्तानां दीर्घं सुखमनन्तकं ।
दीर्घकालेन तपसा सेवितेन महामते । धर्म्मनिर्धूतपापानां संसिध्यन्ते मनोरथाः । १२१५५
शकुनानामिवाकाशे मत्स्यानामिव चोदके । पदं यथा न दृश्येत तथा पुण्यकृतां गतिः ।
अलमन्यैरुपालम्भैः कीर्त्तितैश्च व्यतिक्रमैः । पेशलञ्चानुरूपञ्च कर्त्तव्यं हितमात्मनः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि धर्म्ममूलिकोनाम चतुर्विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२४ ॥
॥ युधिष्ठिर उवाच ॥ कथं व्यासस्य धर्म्मात्मा शुको जज्ञे महातपाः । सिद्धिञ्च परमां प्राप्तस्तन्मे ब्रूहि पितामह ।
कस्याञ्चोत्पादयामास शुकं व्यासस्तपोधनः । न ह्यस्य जननीं विद्म जन्म चाग्र्यं महात्मनः ।
कथञ्च बालस्य सतः सूक्ष्मज्ञाने गता मतिः । यथा नान्यस्य लोकेऽस्मिन् द्वितीयस्येह कस्यचित् । १२१६०
एतदिच्छाम्यहं श्रोतुं विस्तरेण महामते । नहि मे तृप्तिरस्तीह शृण्वतोऽमृतमुत्तमं ।
माहात्म्यमात्मयोगञ्च विज्ञानञ्च शुकस्य ह । यथावदनुपूर्व्वेण तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ न हायनैर्न्न पलितैर्न्न वित्तैर्न्न च बन्धुभिः । ऋषयश्चक्रिरे धर्म्मं योऽनूचानः स नो महान् ।
तपोमूलमिदं सर्व्वं यन्मां पृच्छसि पाण्डव । तदिन्द्रियाणि संयम्य तपो भवति नान्यथा ।
इन्द्रियाणां प्रसङ्गेन दोषमर्च्छत्यसंशयं । संनियम्य तु तान्येव सिद्धिमाप्नोति मानवः । १२१६५
अश्वमेधसहस्रस्य वाजपेयशतस्य च । योगस्य कलया तात न तुल्यं विद्यते फलं ।
अत्र ते वर्त्तयिष्यामि जन्मयोगफलं यथा । शुकस्याग्र्यां गतिञ्चैव दुर्व्विदामकृतात्मभिः ।
मेरुशृङ्गे किल पुरा कर्णिकारवनायुते । विजहार महादेवो भीमैर्भूतगणैर्वृतः ।
शैलराजसुता चैव देवी तत्राभवत् पुरा । तत्र दिव्यं तपस्तेपे कृष्णद्वैपायनस्तदा ।
योगेनात्मानमाविश्य योगधर्म्मपरायणः । धारयन् स तपस्तेपे पुत्रार्थं कुरुसत्तम । १२१७०
अग्नेर्भूमेरपां वायोरन्तरीक्षस्य वा विभो । धैर्य्येण सम्मितः पुत्रो मम भूयादिति स्म ह ।
सङ्कल्पेनाथ योगेन दुष्प्रापमकृतात्मभिः । वरयामास देवेशमास्थितस्तप उत्तमं ।
अतिष्ठन्मारुताहारः शतं किल समाः प्रभुः । आराधयन्महादेवं बहुरूपमुमापतिं ।
तत्र ब्रह्मर्षयश्चैव सर्व्वे राजर्षयस्तथा । लोकपालाश्च लोकेशं साध्याश्च वसुभिः सह ।
आदित्याश्चैव रुद्राश्च दिवाकरनिशाकरौ । वासवो मरुतश्चैव सागराः सरितस्तथा । १२१७५
अश्विनौ देवगन्धर्व्वास्तथा नारदपर्व्वतौ । विश्वावसुश्च गन्धर्व्वः सिद्धाश्चाप्सरसस्तथा ।
तत्र रुद्रो महादेवः कर्णिकारमयीं शुभां । धारयानः स्रजं भाति ज्योत्स्नामिव निशाकरः ।
तस्मिन् दिव्ये वने रम्ये देवदेवर्षिसङ्कुले । आस्थितः परमं योगमृषिः पुत्रार्थमच्युतः ।
न चास्य हीयते प्राणो न ग्लानिरुपजायते । त्रयाणामपि लोकानां तदद्भुतमिवाभवत् ।
जटाश्च तेजसा तस्य वैश्वानरशिखोपमाः । प्रज्वलन्त्यः स्म दृश्यन्ते युक्तस्यामिततेजसः । १२१८०

मार्कण्डेयो हि भगवानेतदाख्यातवान्मम । स देवचरितानीह कथयामास मे सदा ।
एता अद्यापि कृष्णस्य तपसा तेन दीपिताः । अग्निवर्णा जटास्तात प्रकाशन्ते महात्मनः ।
एवंविधेन तपसा तस्य भक्त्या च भारत । महेश्वरः प्रसन्नात्मा चकार मनसा मतिं ।
उवाच चैवं भगवांस्त्र्यम्बकः प्रहसन्निव । एवंविधस्ते तनयो द्वैपायन भविष्यति ।
यथा ह्यग्निर्यथा वायुर्यथा भूमिर्यथा जलं । यथा च खं तथा शुद्धो भविता ते सुतो महान् ।　　१२१८५
तद्भावभावी तद्बुद्धिस्तदात्मा तदपाश्रयः । तेजसावृत्य लोकांस्त्रीन् यशः प्राप्स्यति ते सुतः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकोत्पत्तौ पञ्चविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२५ ॥
॥ भीष्म उवाच ॥ स लब्ध्वा परमं देवाद्वरं सत्यवतीसुतः । अरणीं सहिते स्थाप्य ममन्थाग्निचिकीर्षया ।
अथ रूपं परं राजन् बिभ्रतीं स्वेन तेजसा । घृताचीं नामाप्सरसमपश्यद्भगवानृषिः ।
ऋषिरप्सरसं दृष्ट्वा सहसा काममोहितः । अभवद्भगवान् व्यासो वने तस्मिन् युधिष्ठिर ।
सा च दृष्ट्वा तदा व्यासं कामसंविग्नमानसं । शुकीभूत्वा महाराज घृताची समुपागमत् ।　　१२१९०
स तामप्सरसं दृष्ट्वा रूपेणान्येन संवृतां । शरीरजेनानुगतः सर्व्वगात्रातिगेन ह ।
स तु धैर्य्येण महता निगृह्णन् हृच्छयं मुनिः । न शशाक नियन्तुं तत् व्यासः प्रविसृतं मनः ।
भावित्वाच्चैव भावस्य घृताच्या वपुषा हृतः । यत्नान्नियच्छतस्तस्य मुनेरग्निचिकीर्षया ।
अरण्यामेव सहसा तस्य शुक्रमवापतत् । सोऽविशङ्केन मनसा तथैव द्विजसत्तमः ।
अरणीं ममन्थ ब्रह्मर्षिस्तस्यां जज्ञे शुको नृप । शुक्रे निर्मथ्यमाने स शुको जज्ञे महातपाः ।　　१२१९५
परमर्षिर्महायोगी अरणीगर्भसम्भवः । यथाऽध्वरे समिद्धोऽग्निर्भाति हव्यमुदावहन् ।
तथारूपः शुको जज्ञे प्रज्वलन्निव तेजसा । बिभ्रत् पितुश्च कौरव्य रूपवर्णमनुत्तमं ।
बभौ तदा भावितात्मा विधूमइव पावकः । तं गङ्गा सरितां श्रेष्ठा मेरुपृष्ठे जनेश्वर ।
स्वरूपिणी तदाभ्येत्य स्नापयामास वारिणा । अन्तरीक्षाच्च कौरव्य दण्डः कृष्णाजिनञ्च ह ।
पपात भूमिं राजेन्द्र शुकस्यार्थे महात्मनः । जेगीयन्ते स्म गन्धर्व्वा ननृतुश्चाप्सरोगणाः ।　　१२२००
देवदुन्दुभयश्चैव प्रावाद्यन्त महास्वनाः । विश्वावसुश्च गन्धर्व्वस्तथा तुम्बुरुनारदौ ।
हाहाहूहूश्च गन्धर्व्वौ तुष्टुवुः शुकसम्भवं । तत्र शक्रपुरोगाश्च लोकपालाः समागताः ।
देवा देवर्षयश्चैव तथा ब्रह्मर्षयोऽपि च । दिव्यानि सर्व्वपुष्पाणि प्रववर्ष च मारुतः ।
जङ्गमाजङ्गमञ्चैव प्रहृष्टमभवज्जगत् । तं महात्मा स्वयं प्रीत्या देव्या सह महाद्युतिः ।
जातमात्रं मुनेः पुत्रं विधिनोपानयत्तदा । तस्य देवेश्वरः शक्रो दिव्यमद्भुतदर्शनं ।　　१२२०५
ददौ कमण्डलुं प्रीत्या देववासांसि वा विभो । हंसाश्च शतपत्राश्च सारसाश्च सहस्रशः ।
प्रदक्षिणमवर्त्तन्त शुकाश्चाषाश्च भारत । आरणेयस्ततो दिव्यं प्राप्य जन्म महाद्युतिः ।
तत्रैवोवास मेधावी व्रतचारी समाहितः । जातमात्रं तं वेदाः सरहस्याः ससंग्रहाः ।
उपतस्थुर्महाराज यथास्य पितरन्तथा । बृहस्पतिञ्च वव्रे स वेदवेदाङ्गभाष्यवित् ।

उपाध्यायं महाराज धर्म्ममेवानुचिन्तयन्। सोऽधीत्य निखिलान् वेदान् सरहस्यान् ससंग्रहान्। १२२१०
इतिहासञ्च कार्त्स्न्येन राजशास्त्राणि चाभिभो। गुरवे दक्षिणां दत्त्वा समावृत्तो महामुनिः।
उग्रन्तपः समारेभे ब्रह्मचारी समाहितः। देवतानामृषीणाञ्च बाल्येऽपि स महातपाः।
सम्मन्त्रणीयो मान्यश्च ज्ञानेन तपसा तथा। न त्वस्य रमते बुद्धिराश्रमेषु नराधिप।
त्रिषु गार्हस्थ्यमूलेषु मोक्षधर्म्मानुदर्शिनः।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकोत्पत्तौ षड्विंशत्यधिकत्रिशततमोऽध्यायः॥ ३२६ ॥

॥ भीष्म उवाच ॥ स मोक्षमनुचिन्त्यैव शुकः पितरमभ्यगात्। प्राहाभिवाद्य च गुरुं श्रेयोऽर्थी विनयान्वितः। १२२१५
मोक्षधर्म्मेषु कुशलो भगवान् प्रब्रवीतु मे। यथा मे मनसः शान्तिः परमा सम्भवेत् प्रभो।
श्रुत्वा पुत्त्रस्य तु वचः परमर्षिरुवाच तं। अधीष्व पुत्त्र मोक्षं वै धर्म्मांश्च विविधानपि।
पितुर्नियोगाज्जग्राह शुको धर्म्मभृतां वरः। योगशास्त्रञ्च निखिलं कापिलञ्चैव भारत।
स तं ब्राह्म्या श्रिया युक्तं ब्रह्मतुल्यपराक्रमं। मेने पुत्त्रं यदा व्यासो मोक्षधर्म्मविशारदं।
उवाच गच्छेति तदा जनकं मिथिलेश्वरं। स ते वक्ष्यति मोक्षार्थं निखिलं मिथिलेश्वरः। १२२२०
पितुर्नियोगमादाय जगाम मिथिलां नृप। प्रष्टुं धर्म्मस्य निष्ठां वै मोक्षस्य च परायणं।
उक्तश्च मानुषेण त्वं पथा गच्छस्वविस्मितः। न प्रभावेण गन्तव्यमन्तरीक्षचरेण वै।
आर्ज्जवेनैव गन्तव्यं न सुखान्वेषिणा तथा। नान्वेष्टव्या विशेषेण विशेषा हि प्रसङ्गिनः।
अहङ्कारो न कर्त्तव्यो याज्ये तस्मिन्नराधिपे। स्थातव्यञ्च वशे तस्य स ते छेत्स्यति संशयं।
स धर्म्मकुशलो राजा मोक्षशास्त्रविशारदः। याज्यो मम स यद्ब्रूयात्तत् कार्य्यमविशङ्कया। १२२२५
एवमुक्तः स धर्म्मात्मा जगाम मिथिलां मुनिः। पद्भ्यां शक्तोऽन्तरीक्षेण क्रान्तुं पृथ्वीं ससागरां।
स गिरींश्चाप्यतिक्रम्य नदीतीर्थसरांसि च। बहुव्यालमृगाकीर्णा अटवीश्च वनानि च।
मेरोर्हरेश्च द्वे वर्षे वर्षं हैमवतन्ततः। क्रमेणैव व्यतिक्रम्य भारतं वर्षमासदत्।
स देशान् विविधान् पश्यंश्चीनहूणनिषेवितान्। आर्य्यावर्त्तमिमं देशमाजगाम महामुनिः।
पितुर्वचनमाज्ञाय तमेवार्थं विचिन्तयन्। अध्वानं सोऽतिचक्राम खचरः खे चरन्निव। १२२३०
पत्तनानि च रम्याणि स्फीतानि नगराणि च। रत्नानि च विचित्राणि पश्यन्नपि न पश्यति।
उद्यानानि च रम्याणि तथैवायतनानि च। पुण्यानि चैव रत्नानि सोऽत्यक्रामदथाध्वगः।
सोऽचिरेणैव कालेन विदेहानाससाद ह। रक्षितान् धर्म्मराजेन जनकेन महात्मना।
तत्र ग्रामान् बहून् पश्यन् बह्वन्नरसभोजनान्। पल्लीघोषान् समृद्धांश्च बहुगोकुलसङ्कुलान्।
स्फीतांश्च शालियवसैर्हंससारससेवितान्। पद्मिनीभिश्च शतशः श्रीमतीभिरलङ्कृतान्। १२२३५
स विदेहानतिक्रम्य समृद्धजनसेवितान्। मिथिलोपवनं रम्यमाससाद समृद्धिमत्।
हस्त्यश्वरथसङ्कीर्णं नरनारीसमाकुलं। पश्यन्नपश्यन्निव तत् समतिक्रामदच्युतः।
मनसा तं वहन् भारं तमेवार्थं विचिन्तयन्। आत्मारामः प्रसन्नात्मा मिथिलामाससाद ह।

तस्या द्वारं समासाद्य निःशङ्कः प्रविवेश ह। तत्रापि द्वारपालास्तमुग्रवाचा न्यषेधयन्।
तथैव च शुकस्तत्र निर्म्मन्युः समतिष्ठत। नचातपाध्वसन्तप्तः क्षुत्पिपासाश्रमान्वितः। १२२१०
प्रताम्यति ग्लायति वा नापैति च तथातपात्। तेषान्तु द्वारपालानामेकः शोकसमन्वितः।
मध्यङ्गतमिवादित्यं दृष्ट्वा शुकमिव स्थितं। पूजयित्वा यथान्यायमभिवाद्य कृताञ्जलिः।
प्रावेशयत्ततः कक्षां द्वितीयां राजवेश्मनः। तत्रासीनः शुकस्तात मोक्षमेवान्वचिन्तयत्।
छायायामातपे चैव समदर्शी समद्युतिः। तं मूहूर्त्तादिवागम्य राज्ञो मन्त्री कृताञ्जलिः।
प्रावेशयत्ततः कक्षां तृतीयां राजवेश्मनः। तत्रान्तःपुरसम्बद्धं महच्चैत्ररथोपमं। १२२१५
सुविभक्तजलाक्रीडं रम्यं पुष्पितपादपं। शुकं प्रावेशयन्मन्त्री प्रमदावनमुत्तमं।
स तस्यासनमादिश्य निश्चक्राम ततः पुनः। तं चारुवेशाः सुश्रोण्यस्तरुण्यः प्रियदर्शनाः।
सूक्ष्मरक्ताम्बरधरास्तप्तकाञ्चनभूषणाः। संलापोल्लापकुशला नृत्यगीतविशारदाः।
स्मितपूर्व्वाभिभाषिण्यो रूपेणाप्सरसां समाः। कामोपचारकुशला भावज्ञाः सर्व्वकोविदाः।
परं पञ्चाशतं नार्य्यो वारमुख्याः समाद्रवन्। पाद्यादीनि प्रतिग्राह्य पूजया परयार्च्चयन्। १२२२०
कालोपपन्नेन तदा स्वाद्वन्नेनाभ्यतर्पयन्। तस्य भुक्तवतस्तात तदन्तःपुरकाननं।
सुरम्यं दर्शयामासुरेकैकश्येन भारत। क्रीडन्त्यश्च हसन्त्यश्च गायन्त्यश्चापि ताः शुभं।
उदारसत्त्वं सत्त्वज्ञाः स्त्रियः पर्य्यचरंस्तथा। आरणेयस्तु शुद्धात्मा निःसन्देहः स्वकर्म्मकृत्।
वश्येन्द्रियो जितक्रोधो न हृष्यति न कुप्यति। तस्मै शय्यासनं दिव्यं देवार्हं रत्नभूषितं।
स्पर्द्ध्यास्तरणसङ्कीर्णं ददुस्ताः परमस्त्रियः। पादशौचन्तु कृत्वैव शुकः सन्ध्यामुपास्य च। १२२२५
निषसादासने पुण्ये तमेवार्थं विचिन्तयन्। पूर्व्वरात्रे तु तत्रासौ भूत्वा ध्यानपरायणः।
मध्यरात्रे यथान्यायं निद्रामाहारयत् प्रभुः। ततो मुहूर्त्तादुत्थाय कृत्वा शौचमनन्तरं।
स्त्रीभिः परिवृतो धीमान् ध्यानमेवान्वपद्यत। अनेन विधिना कार्ष्णिस्तदहःशेषमच्युतः।
ताञ्च रात्रिं नृपकुले वर्त्तयामास भारत।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुककृतौ सप्तविंशत्यधिकत्रिशततमोऽध्यायः॥ ३२७॥

॥ भीष्म उवाच ॥ ततः स राजा जनको मन्त्रिभिः सह भारत। पुरः पुरोहितं कृत्वा सर्व्वाण्यन्तःपुराणि च। १२२३०
आसनञ्च पुरस्कृत्य रत्नानि विविधानि च। शिरसा चार्घ्यमादाय गुरुपुत्रं समभ्यगात्।
स तदासनमादाय बहुरत्नविभूषितं। स्पर्द्ध्यास्तरणसंस्तीर्णं सर्व्वतोभद्रमृद्धिमत्।
पुरोधसा संगृहीतं हस्तेनालभ्य पार्थिवः। प्रददौ गुरुपुत्राय शुकाय परमार्च्चितं।
तत्रोपविष्टं तं कार्ष्णिं शास्त्रतः प्रत्यपूजयत्। पाद्यं निवेद्य प्रथममर्घ्यं गाञ्च न्यवेदयत्।
स च तां मन्त्रवत्पूजां प्रत्यगृह्णात् यथाविधि। प्रतिगृह्य तु तां पूजां जनकात् द्विजसत्तमः। १२२३५
गाञ्चैव समनुज्ञाय राजानमनुमान्य च। पर्य्यपृच्छन्महातेजा राज्ञः कुशलमव्ययं।
अनामयञ्च राजेन्द्र शुकः सानुचरस्य ह। अनुशिष्टस्तु तेनासौ निषसाद सहानुगः।

उदारसत्त्वाभिजनो भूमौ राजा कृताञ्जलिः । कुशलञ्चाव्ययञ्चैव पृष्ट्वा वैयासकिं नृपः ।
किमागमनमित्येव पर्य्यपृच्छत पार्थिवः ।
॥ शुक उवाच ॥ पित्राहमुक्तो भद्रन्ते मोक्षधर्म्मार्थकोविदः । विदेहराजो याज्यो मे जनको नाम विश्रुतः । १२२३०
तत्र गच्छस्व वै तूर्णं यदि ते हृदि संशयः । प्रवृत्तौ वा निवृत्तौ वा स ते छेत्स्यति संशयं ।
सोऽहं पितुर्नियोगात्त्वामुपप्रष्टुमिहागतः । तन्मे धर्म्मभृतां श्रेष्ठ यथावद्वक्तुमर्हसि ।
किं कार्य्यं ब्राह्मणेनेह मोक्षार्थश्च किमात्मकः । कथञ्च मोक्षः प्राप्तव्यो ज्ञानेन तपसाथ वा ।
॥ जनक उवाच ॥ यत् कार्य्यं ब्राह्मणेनेह जन्मप्रभृति तच्छृणु । कृतोपनयनस्तात भवेद्वेदपरायणः ।
तपसा गुरुवृत्त्या च ब्रह्मचर्य्येण वा विभो । देवतानां पितृणाञ्चाप्यनृणो ह्यनसूयकः । १२२३५
वेदानधीत्य नियतो दक्षिणामपवर्ज्य च । अभ्यनुज्ञामथ प्राप्तः समावर्त्तेत वै द्विजः ।
समावृत्तश्च गार्हस्थ्ये स्वदारनिरतो वसेत् । अनसूयो यथान्यायमाहिताग्निस्तथैव च ।
उत्पाद्य पुत्रपौत्रांस्तु वन्याश्रमपदे वसेत् । तानेवाग्नीन् यथा शास्त्रमर्च्चयन्नतिथिप्रियः ।
स वनेऽग्नीन् यथान्यायमात्मन्यारोप्य धर्म्मवित् । निर्द्वन्द्वो वीतरागात्मा ब्रह्माश्रमपदे वसेत् ।
॥ शुक उवाच ॥ उत्पन्ने ज्ञानविज्ञाने निर्द्वन्द्वे हृदि शाश्वते । किमवश्यं निवस्तव्यमाश्रमेषु भवेन्नृषु । १२२४०
एतद्भवन्तं पृच्छामि तद्भवान् वक्तुमर्हति । यथा वेदार्थतत्त्वेन ब्रूहि मे त्वं जनाधिप ।
॥ जनक उवाच ॥ न विना ज्ञानविज्ञाने मोक्षस्याधिगमो भवेत् । न विना गुरुसम्बन्धं ज्ञानस्याधिगमः स्मृतः ।
गुरुः प्लावयिता तस्य ज्ञानं प्लव इहोच्यते । विज्ञाय कृतकृत्यस्तु तीर्णस्तदुभयं त्यजेत् ।
अनुच्छेदाय लोकानामनुच्छेदाय कर्म्मणां । पूर्व्वैराचरितो धर्म्मश्चातुराश्रम्यसङ्कटः ।
अनेन क्रमयोगेन बहुजातिषु कर्म्मणां । हित्वा शुभाशुभं कर्म्म मोक्षो नामेह लभ्यते । १२२४५
भावितैः करणैश्चायं बहुसंसारयोनिषु । आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे ।
तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः । त्रिष्वाश्रमेषु कोऽन्वर्थो भवेत् परमभीप्सतः ।
राजसांस्तामसांश्चैव नित्यं दोषान् विवर्ज्जयेत् । सात्त्विकं मार्गमास्थाय पश्येदात्मानमात्मना ।
सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि । सम्पश्यन्नोपलिप्येत जले वारिचरो यथा ।
पक्षिवत् प्लवनादूर्द्ध्वममुत्रानन्त्यमश्नुते । विहाय देहान्निर्मुक्तो निर्द्वन्द्वः प्रशमङ्गतः । १२२५०
अत्र गाथाः पुरा गीताः शृणु राज्ञा ययातिना । धार्य्यन्ते या द्विजैस्तात मोक्षशास्त्रविशारदैः ।
ज्योतिरात्मनि नान्यत्र सर्व्वजन्तुषु तत्समं । स्वयञ्च शक्यते द्रष्टुं सुसमाहितचेतसा ।
न बिभेति परो यस्मान्न बिभेति पराच्च यः । यश्च नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा ।
यदा भावं न कुरुते सर्व्वभूतेषु पापकं । कर्म्मणा मनसा वाचा ब्रह्म संपद्यते तदा ।
संयोज्य मनसात्मानमीर्ष्यामुत्सृज्य मोहिनीं । त्यक्त्वा कामञ्च मोहञ्च तदा ब्रह्मत्वमश्नुते । १२२५५
यदा श्राव्ये च दृश्ये च सर्व्वभूतेषु चाप्ययं । समो भवति निर्द्वन्द्वो ब्रह्म सम्पद्यते तदा ।
यदा स्तुतिञ्च निन्दाञ्च समत्वेनैव पश्यति । काञ्चनञ्चायसञ्चैव सुखदुःखे तथैव च ।

शीतमुष्णं तथैवार्थमनर्थं प्रियमप्रियं। जीवितं मरणञ्चैव ब्रह्म सम्पद्यते तदा।
प्रसार्य्येह यथाङ्गानि कूर्म्मः संहरते पुनः। तथेन्द्रियाणि मनसा संयन्तव्यानि भिक्षुणा।
तमःपरिगतं वेश्म यथा दीपेन दृश्यते। तथा बुद्धिप्रदीपेन शक्य आत्मा निरीक्षितुं। ११९००
एतत् सर्व्वञ्च पश्यामि त्वयि बुद्धिमताम्वर। यच्चान्यदपि वेत्तव्यं तत्त्वतो वेद तद्भवान्।
ब्रह्मर्षे विदितश्चासि विषयान्तमुपागतः। गुरोस्तव प्रसादेन तव चैवोपशिक्षया।
तस्यैव च प्रसादेन प्रादुर्भूतं महामुने। ज्ञानं दिव्यं ममापीदं तेनासि विदितो मम।
अधिकं तव विज्ञानमधिका च गतिस्तव। अधिकञ्च तवैश्वर्य्यं तच्च त्वं नावबुध्यसे।
बाल्याद्वा संशयाद्वापि भयाद्वाप्यविमोक्षजात्। उत्पन्ने चापि विज्ञाने नाधिगच्छसि तां गतिं। ११९०५
व्यवसायेन शुद्धेन मद्विधैश्छिन्नसंशयः। विमुच्य हृदयग्रन्थीनासादयति तां गतिं।
भवांश्चोत्पन्नविज्ञानः स्थिरबुद्धिरलोलुपः। व्यवसायादृते ब्रह्म नासादयति तत्परं।
नास्ति ते सुखदुःखेषु विशेषो नास्ति लोलुपः। नौत्सुक्यं नृत्यगीतेषु न राग उपजायते।
न बन्धुष्वनुबन्धस्ते न भयेष्वस्ति ते भयं। पश्यामि त्वां महाभाग तुल्यलोष्टाश्मकाञ्चनं।
अहं त्वामनुपश्यामि ये चाप्यन्ये मनीषिणः। आस्थितं परमं मार्गमक्षयं तमनामयं। ११९१०
यत्फलं ब्राह्मणस्येह मोक्षार्थश्च यदात्मकः। तस्मिन् वै वर्त्तसे ब्रह्मन् किमन्यत् परिपृच्छसि।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुककृतौ अष्टाविंशत्यधिकद्विशततमोऽध्यायः॥ २२८॥
॥ भीष्म उवाच॥ एतत् श्रुत्वा तु वचनं कृतात्मा कृतनिश्चयः। आत्मनात्मानमास्थाय दृष्ट्वा चात्मानमात्मना।
कृतकार्य्यः सुखी शान्तस्तूष्णीं प्रायादुदङ्मुखः। शैशिरं गिरिमुद्दिश्य सधर्म्मा मातरिश्वनः।
एतस्मिन्नेव काले तु देवर्षिर्नारदस्तथा। हिमवन्तमियाद्द्रष्टुं सिद्धचारणसेवितं।
तमप्सरोगणाकीर्णं शान्तस्वननिनादितं। किन्नराणां सहस्रैश्च भृङ्गराजैस्तथैव च। ११९१५
मद्गुभिः खञ्जरीटैश्च विचित्रैर्जीवजीवकैः। चित्रवर्णैर्मयूरैश्च केकाशतविराजितैः।
राजहंससमूहैश्च हृष्टैः परभृतैस्तथा। पक्षिराजो गरुत्मांश्च यन्नित्यमधितिष्ठति।
चत्वारो लोकपालाश्च देवाः सर्षिगणास्तथा। तत्र नित्यं समायान्ति लोकस्य हितकाम्यया।
विष्णुना यत्र पुत्रार्थे तपस्तप्तं महात्मना। तत्रैव च कुमारेण बाल्ये क्षिप्ता दिवौकसः।
शक्तिर्न्यस्ता क्षितितले त्रैलोक्यमवमन्य वै। तत्रोवाच जगत् स्कन्दः क्षिपन् वाक्यमिदं तदा। ११९२०
योऽन्योऽस्ति मत्तोऽभ्यधिको विप्रा यस्याधिकं प्रियाः। यो ब्रह्मण्यो द्वितीयोऽस्ति त्रिषु लोकेषु वीर्य्यवान्।
सोऽभ्युद्धरत्विमां शक्तिमथ वा कम्पयत्विति। तत् श्रुत्वा व्यथिता लोकाः क इमामुद्धरेदिति।
अथ देवगणं सर्व्वं सम्भ्रान्तेन्द्रियमानसं। अपश्यद्भगवान् विष्णुः क्षिप्तं सासुरराक्षसं।
किन्त्वत्र सुकृतं कार्य्यं भवेदिति विचिन्तयन्। अनामृष्य ततः क्षेपमवैक्षत च पावकिं।
संप्रेक्ष्य स विशुद्धात्मा शक्तिं प्रज्वलितां तदा। कम्पयामास सव्येन पाणिना पुरुषोत्तमः। ११९२५
शक्त्यान्तु कम्पमानायां विष्णुना बलिना तदा। मेदिनी कम्पिता सर्व्वा सशैलवनकानना।

शक्तेनापि समुद्धर्त्तुं कम्पिता साभवत्तदा । रक्षिता स्कन्दराजस्य धर्षिता प्रभविष्णुना ।
तां कम्पयित्वा भगवान् प्रह्लादमिदमब्रवीत् । पश्य वीर्य्यं कुमारस्य नैतदन्यः करिष्यति ।
सोऽमृष्यमाणस्तद्वाक्यं समुद्धरणनिश्चितः । [illegible] तां तदा शक्तिं नचैनां स व्यकम्पयत् ।
नादं महान्तं मुक्त्वा स मूर्च्छितो गिरिमूर्द्धनि । विह्वलः प्रापतद्भूमौ हिरण्यकशिपोः सुतः । १२३३०
तत्रोत्तरां दिशं गत्वा शैलराजस्य पार्श्वतः । तपोऽतप्यत दुर्द्धर्षं तत्र नित्यं वृषध्वजः ।
पावकेन परिक्षिप्तं दीप्यता यस्य चाश्रमं । आदित्यपर्व्वतं नाम दुर्द्धर्षमकृतात्मभिः ।
न तत्र शक्यते गन्तुं यक्षराक्षसदानवैः । दशयोजनविस्तारमग्निज्वालासमावृतं ।
भगवान् पावकस्तत्र स्वयं तिष्ठति वीर्य्यवान् । सर्व्वान् विघ्नान् प्रशमयन्महादेवस्य धीमतः ।
दिव्यं वर्षसहस्रं हि पादेनैकेन तिष्ठतः । देवान् सन्तापयंस्तत्र महादेवो महाव्रतः । १२३३५
ऐन्द्रीन्तु दिशमास्थाय शैलराजस्य धीमतः । विविक्ते पर्व्वततटे पाराशर्य्यो महातपाः ।
वेदानध्यापयामास व्यासः शिष्यान्महातपाः । सुमन्तुञ्च महाभागं वैशम्पायनमेव च ।
जैमिनिञ्च महाप्राज्ञं पैलञ्चापि तपस्विनं । यत्र शिष्यैः परिवृतो व्यासश्चास्ते महातपाः ।
तत्राश्रमपदं रम्यं ददर्श पितुरुत्तमं । आरणेयो विशुद्धात्मा नभसीव दिवाकरः ।
अथ व्यासः परिक्षिप्तं ज्वलन्तमिव पावकं । ददृशे सुतमायान्तं दिवाकरसमप्रभं । १२३४०
असज्जमानं वृक्षेषु शैलेषु विषयेषु च । योगयुक्तं महात्मानं यथा बाणं गुणच्युतं ।
सोऽभिगम्य पितुः पादावगृह्णादरणीसुतः । यथोपयोगं तैश्चापि समागच्छन्महामुनिः ।
ततो निवेदयामास पित्रे सर्व्वमशेषतः । शुको जनकराजेन संवादं प्रीतमानसः ।
एवमध्यापयञ्छिष्यान् व्यासः पुत्रञ्च वीर्य्यवान् । उवास हिमवत्पृष्ठे पाराशर्य्यो महामुनिः ।
ततः कदाचिच्छिष्यास्तं परिवार्य्यावतस्थिरे । वेदाध्ययनसम्पन्नाः शान्तात्मानो जितेन्द्रियाः । १२३४५
वेदेषु निष्ठां सम्प्राप्य साङ्गेष्वपि तपस्विनः । अथोचुस्ते तदा व्यासं शिष्याः प्राञ्जलयो गुरुं ।
॥ शिष्या ऊचुः ॥ महता तेजसा युक्ता यशसा चापि वर्द्धिताः । एकन्त्विदानीमिच्छामो गुरुणानुग्रहं कृतं ।
इति तेषां वचः श्रुत्वा ब्रह्मर्षिस्तानुवाच ह । उच्यतामिति तद्वत्सा यद्वः कार्य्यं प्रियं मया ।
एतद्वाक्यं गुरोः श्रुत्वा शिष्यास्ते हृष्टमानसाः । पुनः प्राञ्जलयो भूत्वा प्रणम्य शिरसा गुरुं ।
ऊचुस्ते सहिता राजन्निदं वचनमुत्तमं । यदि प्रीत उपाध्यायो धन्याः स्मो मुनिसत्तम । १२३५०
काङ्क्षामस्तु वयं सर्व्वे वरं दातुं महर्षिणा । षष्ठः शिष्यो न ते ख्यातिं गच्छेदत्र प्रसीद नः ।
चत्वारस्ते वयं शिष्या गुरुपुत्रश्च पञ्चमः । इह वेदाः प्रतिष्ठेरन्नेष नः काङ्क्षितो वरः ।
शिष्याणां वचनं श्रुत्वा व्यासो वेदार्थतत्त्ववित । पराशरात्मजो धीमान् परलोकार्थचिन्तकः ।
उवाच शिष्यान् धर्म्मात्मा धर्म्म्यं नैःश्रेयसं वचः । ब्राह्मणाय सदा देयं ब्रह्मशुश्रूषवे तथा ।
ब्रह्मलोके निवासं यो ध्रुवं समभिकाङ्क्षते । भवन्तो बहुलाः सन्तु वेदो विस्तार्य्यतामयं । १२३५५
नाशिष्ये सम्प्रदातव्यो नाव्रते नाकृतात्मनि । एते शिष्यगुणाः सर्व्वे विज्ञातव्या यथार्थतः ।

नापरीक्षितचारित्रे विद्या देया कथञ्चन। यथा हि कनकं शुद्धं तापच्छेदनिघर्षणैः।
परीक्षेत तथा शिष्यानीक्षेत् कुलगुणादिभिः। न नियोज्याश्च वः शिष्या अनियोगे महाभये।
यथामति यथापाठं तथा विद्या फलिष्यति। सर्व्वस्तरतु दुर्गाणि सर्व्वो भद्राणि पश्यतु।
श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः। वेदस्याध्ययनं हीदं तच्च कार्य्यं महत् स्मृतं। १२२६०
स्तुत्यर्थमिह देवानां वेदाः सृष्टाः स्वयम्भुवा। यो निर्व्वदेत सम्मोहात् ब्राह्मणं वेदपारगं।
सोऽभिध्यानाद्ब्राह्मणस्य पराभूयादसंशयं। यश्चाधर्म्मेण विब्रूयाद्यश्चाधर्म्मेण पृच्छति।
तयोरन्यतरः प्रैति विद्वेषञ्चाधिगच्छति। एतद्वः सर्व्वमाख्यातं स्वाध्यायस्य विधिं प्रति।
उपकुर्य्याच्च शिष्याणामेतच्च हृदि वो भवेत्।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुककृत्ये एकोनत्रिंशदधिकत्रिशततोऽध्यायः ॥ ३२९ ॥
॥ भीष्म उवाच ॥ एतच्छ्रुत्वा गुरोर्व्वाक्यं व्यासशिष्या महौजसः। अन्योन्यं हृष्टमनसः परिषस्वजिरे तदा। १२२६५
उक्ताः स्मो यद्भगवता तदात्वायतिसंहितं। तन्नो मनसि संरूढं करिष्यामस्तथा च तत्।
अन्योन्यं संविभाष्यैवं सुप्रीतमनसः पुनः। विज्ञापयन्ति स्म गुरुं पुनर्व्वाक्यविशारदाः।
शैलादस्मान्महीं गन्तुं काङ्क्षितं नो महामुने। वेदाननेकधा कर्त्तुं यदि ते रुचितं प्रभो।
शिष्याणां वचनं श्रुत्वा पराशरसुतः प्रभुः। प्रत्युवाच ततो वाक्यं धर्म्मार्थसहितं हितं।
क्षितिं वा देवलोकं वा गम्यतां यदि रोचते। अप्रमादश्च वः कार्य्यो ब्रह्म हि प्रचुरच्छलं। १२२७०
तेनानुज्ञातास्ततः सर्व्वे गुरुणा सत्यवादिना। जग्मुः प्रदक्षिणं कृत्वा व्यासं मूर्द्धाभिवाद्य च।
अवतीर्य्य महीं तेऽथ चातुर्होत्रमकल्पयन्। संयाजयन्तो विप्रांश्च राजन्यांश्च विशस्तथा।
पूज्यमाना द्विजैर्नित्यं मोदमाना गृहे रताः। याजनाध्यापनरताः श्रीमन्तो लोकविश्रुताः।
अवतीर्णेषु शिष्येषु व्यासः पुत्त्रसहायवान्। तूष्णीं ध्यानपरो धीमानेकान्ते समुपाविशत्।
तं ददर्शाश्रमपदे नारदः सुमहातपाः। अथैनमब्रवीत् काले मधुराक्षरया गिरा। १२२७५
भो भो ब्रह्मर्षिवाशिष्ठ ब्रह्मघोषो न वर्त्तते। एको ध्यानपरस्तूष्णीं किमास्से चिन्तयन्निव।
ब्रह्मघोषैर्व्विरहितः पर्व्वतोऽयं न शोभते। रजसा तमसा चैव सोमः सोपप्लवो यथा।
न भ्राजते यथा पूर्व्वं निषादानामिवालयः। देवर्षिगणजुष्टोऽपि वेदध्वनिनिराकृतः।
ऋषयश्च हि देवाश्च गन्धर्व्वाश्च महौजसः। वियुक्ता ब्रह्मघोषेण न भ्राजन्ते यथा पुरा।
नारदस्य वचः श्रुत्वा कृष्णद्वैपायनोऽब्रवीत्। महर्षे यत्त्वया प्रोक्तं वेदवादविचक्षण। १२२८०
एतन्मनोनुकूलं मे भवानर्हति भाषितुं। सर्व्वज्ञः सर्व्वदर्शी च सर्व्वत्र च कुतूहली।
त्रिषु लोकेषु यद्वृत्तं सर्व्वं तव मते स्थितं। तदाज्ञापय विप्रर्षे ब्रूहि किं करवाणि ते।
यन्मया समनुष्ठेयं ब्रह्मर्षे तदुदाहर। वियुक्तस्येह शिष्यैर्म्मे नातिहृष्टमिदं मनः।
॥ नारद उवाच ॥ अनाम्नायमला वेदा ब्राह्मणस्याव्रतं मलं। मलं पृथिव्या वाहीकाः स्त्रीणां कौतूहलं मलं।
अधीयतां भवान् वेदान् सार्द्धं पुत्त्रेण धीमता। विधुन्वन् ब्रह्मघोषेण रक्षोभयकृतं तमः। १२२८५

॥ भीष्म उवाच ॥ नारदस्य वचः श्रुत्वा व्यासः परमधर्म्मवित्। तथेत्युवाच संहृष्टो वेदाभ्यासदृढव्रतः।
शुकेन सह पुत्रेण वेदाभ्यासमथाकरोत्। स्वरेणोच्चैः स शैक्ष्येण लोकानापूरयन्निव।
तयोरभ्यस्यतोरेव नानाधर्म्मप्रवादिनोः। वातोऽतिमात्रं प्रववौ समुद्रानिलवेजितः।
ततोऽनध्याय इति तं व्यासः पुत्रमवारयत्। शुको वारितमात्रस्तु कौतूहलसमन्वितः।
अपृच्छत् पितरं ब्रह्मन् कुतो वायुरभूदयं। आख्यातुमर्हति भवान् वायोः सर्व्वं विचेष्टितं। १२२९०
शुकस्यैतद्वचः श्रुत्वा व्यासः परमविस्मितः। अनध्यायनिमित्तेऽस्मिन्निदं वचनमब्रवीत्।
दिव्यन्ते चक्षुरुत्पन्नं स्वयं ते निर्म्मलं मनः। तमसा रजसा चापि त्यक्तः सत्त्वे व्यवस्थितः।
आदर्शे स्वामिव च्छायां पश्यस्यात्मानमात्मना। न्यस्यात्मनि स्वयं वेदान् बुद्ध्या समनुचिन्तय।
देवयानचरो विष्णोः पितृयानश्च तामसः। द्वावेतौ प्रेत्य पन्थानौ दिवञ्चाधश्च गच्छतः।
पृथिव्यामन्तरीक्षे च यत्र संवान्ति वायवः। सप्तैते वायुमार्गा वै तान्निबोधानुपूर्व्वशः। १२२९५
तत्र देवगणाः साध्याः महाभूता महाबलाः। तेषामप्यभवत् पुत्रः समानो नाम दुर्ज्जयः।
उदानस्तस्य पुत्रोऽभूद्व्यानस्तस्याभवत्सुतः। अपानश्च ततो ज्ञेयः प्राणश्चापि ततोऽपरः।
अनपत्योऽभवत् प्राणो दुर्द्धर्षः शत्रुतापनः। पृथक्कर्म्माणि तेषान्तु प्रवक्ष्यामि यथातथं।
प्राणिनां सर्व्वतो वायुश्चेष्टां वर्त्तयते पृथक्। प्राणनाच्चैव भूतानां प्राण इत्यभिधीयते।
प्रेरयत्यभ्रसंघातान् धूमजांश्चोष्मजांश्च यः। प्रथमः प्रथमे मार्गे प्रवहो नाम योऽनिलः। १२३००
अम्बरे स्नेहमभ्येत्य तडिद्भ्यश्चोत्तमद्युतिः। आवहो नाम संभाति द्वितीयः श्वसनो नदन्।
उदयं ज्योतिषां शश्वत् सोमादीनां करोति यः। अन्तर्देहेषु चोदानं यं वदन्ति मनीषिणः।
यश्चतुर्भ्यः समुद्रेभ्यो वायुर्धारयते जलं। उद्धृत्याददते चापो जीमूतेभ्योऽम्बरेऽनिलः।
योऽद्भिः संयोज्य जीमूतान् पर्ज्जन्याय प्रयच्छति। उद्वहो नाम वंहिष्ठस्तृतीयः स सदागतिः।
समुह्यमाना बहुधा येन नीताः पृथग् घनाः। वर्षमोक्षकृतारम्भास्ते भवन्ति घनाघनाः। १२३०५
संहता येन चाविद्धा भवन्ति नदतां नदाः। रक्षणार्थाय सम्भूता मेघत्वमुपयान्ति च।
योऽसौ वहति भूतानां विमानानि विहायसा। चतुर्थः संवहो नाम वायुः स गिरिमर्द्दनः।
येन वेगवता रुग्णा रूक्षेणारुजता नगान्। वायुना सहिता मेघास्ते भवन्ति बलाहकाः।
दारुणोत्पातसञ्चारो नभसस्तनयित्नुमान्। पञ्चमः स महावेगो विवहो नाम मारुतः।
यस्मिन् पारिप्लवा दिव्या वहन्त्यापो विहायसा। पुण्यञ्चाकाशगङ्गायास्तोयं विष्टभ्य तिष्ठति। १२३१०
दूरात्प्रतिहतो यस्मिन्नेकरश्मिर्दिवाकरः। योनिरंशुसहस्रस्य येन भाति वसुन्धरा।
यस्मादाप्यायते सोमः क्षीणः सम्पूर्णमण्डलः। षष्ठः परिवहो नाम स वायुर्ज्जयतां वरः।
सर्व्वप्राणभृतां प्राणान् योऽन्तकाले निरस्यति। यस्य वर्त्मानुवर्त्तेते मृत्युवैवस्वतावुभौ।
सम्यगन्वीक्षतां बुद्ध्या शान्तयाध्यात्मचिन्तकाः। ध्यानाभ्यासाभिरामाणां योऽमृतत्वाय कल्पते।
यं समासाद्य वेगेन दिशोऽन्तं प्रतिपेदिरे। दक्षस्य दश पुत्राणां सहस्राणि प्रजापतेः। १२३१५

येन सृष्टः पुरा भूतो यात्येव न निवर्त्तते । परावहो नाम परो वायुः स दुरतिक्रमः ।
एवमेते दितेः पुत्रा मारुताः परमाद्भुताः । अनारतन्ते संवान्ति सर्व्वगाः सर्व्वधारिणः ।
एतत्तु महदाश्चर्य्यं यदयं पर्व्वतोत्तमः । कम्पितः सहसा तेन वायुनातिप्रवायता ।
विष्णोर्निश्वासतो वातो यदा वेगसमीरितः । सहसोदीर्य्यते तात जगत् प्रव्यथते तदा ।
तस्माद्ब्रह्मविदो वेदान्नाधीयन्तेऽतिवायति । वायोर्व्वायुभयं ह्युक्तं ब्रह्म तत् पीडितं भवेत् ।　　१२४८०
एतावदुक्त्वा वचनं पराशरसुतः प्रभुः । उक्त्वा पुत्रमधीष्वेति व्योमगङ्गामगात्तदा ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकक्षत्येत्रिंशदधिकत्रिशततोऽध्यायः || ३३० ||
|| भीष्म उवाच || एतस्मिन्नन्तरे शून्ये नारदः समुपागमत् । शुकं स्वाध्यायनिरतं वेदार्थं प्रष्टुमीप्सया ।
देवर्षिं तं शुको दृष्ट्वा नारदं समुपस्थितं । अर्घ्यपूर्व्वेण विधिना यथोक्तेनाभ्यपूजयत् ।
नारदोऽथाब्रवीत् प्रीतो ब्रूहि धर्म्मभृतांवर । केन त्वां श्रेयसा वत्स योजयामीति हृष्टवत् ।
नारदस्य वचः श्रुत्वा शुकः प्रोवाच भारत । अस्मिन् लोके हितं यत्स्यात्तेन मां योक्तुमर्हसि ।　　१२४८५
|| नारद उवाच || तत्त्वं जिज्ञासतां पूर्व्वमृषीणां भावितात्मनां । सनत्कुमारो भगवानिदं वचनमब्रवीत् ।
नास्ति विद्यासमं चक्षुर्नास्ति सत्यसमं तपः । नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखं ।
निवृत्तिः कर्म्मणः पापात्सततं पुण्यशीलता । सद्वृत्तिः समुदाचारः श्रेय एतदनुत्तमं ।
मानुष्यमसुखं प्राप्य यः सज्जति स मुह्यति । नालं स दुःखमोक्षाय संयोगो दुःखलक्षणं ।
सक्तस्य बुद्धिश्चलति मोहजालविवर्द्धनी । मोहजालावृतो दुःखमिह चामुत्र चाश्नुते ।　　१२४९०
सर्व्वोपायात्तु कामस्य क्रोधस्य च विनिग्रहः । कार्य्यः श्रेयोऽर्थिना तौ हि श्रेयोघातार्थमुद्यतौ ।
नित्यं क्रोधात्तपो रक्षेत् श्रियं रक्षेच्च मत्सरात् । विद्यां मानापमानाभ्यामात्मानन्तु प्रमादतः ।
आनृशंस्यं परो धर्म्मः क्षमा च परमं बलं । आत्मज्ञानं परं ज्ञानं न सत्याद्विद्यते परं ।
सत्यस्य वचनं श्रेयः सत्यादपि हितं वदेत् । यद्भूतहितमत्यन्तमेतत् सत्यं मतं मम ।
सर्व्वारम्भपरित्यागी निराशी निष्परिग्रहः । येन सर्व्वं परित्यक्तं स विद्वान् स च पण्डितः ।　　१२४९५
इन्द्रियैरिन्द्रियार्थान् यश्चरत्यात्मवशैरिह । असज्जमानः शान्तात्मा निर्व्विकारः समाहितः ।
आत्मभूतैरतद्भूतः सह चैव विनैव च । स विमुक्तः परं श्रेयो न चिरेणाधितिष्ठति ।
अदर्शनमसंस्पर्शस्तथासम्भाषणं सदा । यस्य भूतैः सह मुने स श्रेयो विन्दते परं ।
न हिंस्यात् सर्व्वभूतानि मैत्रायणगतश्चरेत् । नेदं जन्म समासाद्य वैरं कुर्व्वीत केनचित् ।
आकिञ्चन्यं सुसन्तोषो निराशीस्त्वमचापलं । एतदाहुः परं श्रेय आत्मज्ञस्य जितात्मनः ।　　१२५००
परिग्रहं परित्यज्य भव तात जितेन्द्रियः । अशोकं स्थानमातिष्ठ इह चामुत्र चाभयं ।
निरामिषा न शोचन्ति त्यजेहामिषमात्मनः । परित्यज्यामिषं सौम्य दुःखतापाद्विमोक्ष्यसे ।
तपोनित्येन दान्तेन मुनिना संयतात्मना । अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना ।
गुणसङ्गेष्वनासक्त एकचर्य्यारतः सदा । ब्राह्मणो न चिरादेव सुखमायात्यनुत्तमं ।

द्वन्द्वारामेषु भूतेषु य एको रमते मुनिः । विद्धि प्रज्ञानतृप्तं तं ज्ञानतृप्तो न शोचति । १२४३५
शुभैर्लभति देवत्वं व्यामिश्रैर्जन्म मानुषं । अशुभैश्चाप्यधोजन्म कर्म्मभिर्लभते वशः ।
तत्र मृत्युजरादुःखैः सततं समभिद्रुतः । संसारे पच्यते जन्तुस्तत् कथं न विबुध्यसे ।
अहिते हितसंज्ञस्त्वमध्रुवे ध्रुवसंज्ञकः । अनर्थे चार्थसंज्ञस्त्वं किमर्थं नावबुध्यसे ।
संवेष्टमानं बहुभिर्मोहात्तन्तुभिरात्मजैः । कोषकार इवात्मानं वेष्टयन्नावबुध्यसे ।
अलं परिग्रहेणेह दोषवान् हि परिग्रहः । कृमिर्हि कोषकारस्तु बध्यते स्वपरिग्रहात् । १२४४०
पुत्रदारकुटुम्बेषु सक्ताः सीदन्ति जन्तवः । सरःपङ्कार्णवे मग्ना जीर्णा वनगजा इव ।
महाजालसमाकृष्टान् स्थले मत्स्यानिवोद्धृतान् । स्नेहजालसमाकृष्टान् पश्य जन्तून् सुदुःखितान् ।
कुटुम्बं पुत्रदारांश्च शरीरं सञ्चयाश्च ये । पारक्यमध्रुवं सर्व्वं किं स्वं सुकृतदुष्कृतं ।
यदा सर्व्वान् परित्यज्य गन्तव्यमवशेन ते । अनर्थे किं प्रसक्तस्त्वं स्वमर्थं नानुतिष्ठसि ।
अविश्रान्तमनालम्बमपाथेयमदैशिकं । तमः कान्तारमध्वानं कथमेको गमिष्यसि । १२४४५
न हि त्वा प्रस्थितं कश्चित् पृष्ठतोऽनुगमिष्यति । सुकृतं दुष्कृतञ्च त्वां यास्यन्तमनुयास्यति ।
विद्या कर्म्म च शौचञ्च ज्ञानञ्च बहुविस्तरं । अर्थार्थमनुसार्य्यन्ते सिद्धार्थश्च विमुच्यते ।
निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः । छित्त्वैतां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ।
रूपकूलां मनःस्रोतां स्पर्शद्वीपां रसावहां । गन्धपङ्कां शब्दजलां स्वर्गमार्गदुरावहां ।
क्षमारित्रां सत्यमयीं धर्म्मस्थैर्य्यवटारकां । त्यागवाताध्वगां शीघ्रां नौतार्य्यां तां नदीं तरेत् । १२४५०
त्यज धर्म्ममधर्म्मञ्च तथा सत्यानृते त्यज । उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ।
त्यज धर्म्ममसङ्कल्पादधर्म्मञ्चाप्यलिप्सया । उभे सत्यानृते बुद्ध्या बुद्धिं परमनिश्चयात् ।
अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनं । चर्म्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ।
जराशोकसमाविष्टं रोगायतनमातुरं । रजस्वलमनित्यञ्च भूतावासमिमं त्यज ।
इदं विश्वं जगत् सर्व्वमजगच्चापि यद्भवेत् । महाभूतात्मकं सर्व्वं महद्यत्परमाश्रयात् । १२४५५
इन्द्रियाणि च पञ्चैव तमः सत्त्वं रजस्तथा । इत्येष सप्तदशको राशिरव्यक्तसंज्ञकः ।
सर्व्वैरिहेन्द्रियार्थैश्च व्यक्ताव्यक्तैर्हि संहितः । चतुर्व्विंशक इत्येष व्यक्ताव्यक्तमयो गुणः ।
एतैः सर्व्वैः समायुक्तः पुमानित्यभिधीयते । त्रिवर्गन्तु सुखं दुःखं जीवितं मरणं तथा ।
य इदं वेद तत्त्वेन स वेद प्रभवाव्ययौ । पारम्पर्य्येण बोद्धव्यं ज्ञानानां यच्च किञ्चन ।
इन्द्रियैर्गृह्यते यद्यत्तत्तद्व्यक्तमिति स्थितिः । अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियं । १२४६०
इन्द्रियैर्नियतैर्देही धाराभिरिव तर्प्यते । लोके विततमात्मानं लोकांश्चात्मनि पश्यति ।
परावरदृशः शक्तिर्ज्ञानमूला न नश्यति । पश्यतः सर्व्वभूतानि सर्व्वावस्थासु सर्व्वदा ।
सर्व्वभूतस्य संयोगो नाशुभेनोपपद्यते । ज्ञानेन विविधान् क्लेशानतिवृत्तस्य मोहजान् ।
लोके बुद्धिप्रकाशेन लोकमार्गो न रिष्यते । अनादिनिधनं जन्तुमात्मनि स्थितमव्ययं ।

अकर्त्तारममूर्त्तञ्च भगवानाह तीर्थवित् । यो जन्तुः स्वकृतैस्तैस्तैः कर्म्मभिर्नित्यदुःखितः । १२४७८
स दुःखप्रतिघातार्थं हन्ति जन्तूननेकधा । ततः कर्म्म समादत्ते पुनरन्यं नवं बहु ।
तप्यतेऽथ पुनस्तेन भुक्त्वा पथ्यमिवातुरः । अजस्रमेव मोहान्धो दुःखेषु सुखसंज्ञितः ।
बध्यते मथ्यते चैव कर्म्मभिर्मन्थवत् सदा । ततो निवृत्तः स्वां योनिं कर्म्मणामुदयादिह ।
परिभ्रमति संसारं चक्रवद्बहुवेदनः । स त्वं निवृत्तबन्धस्तु निवृत्तश्चापि कर्म्मतः ।
सर्व्ववित् सर्व्वजित् सिद्धो भव भावविवर्ज्जितः । संयमेन नवं बन्धं निवर्त्य तपसो बलात् । १२४८०
सम्प्राप्ता बहवः सिद्धिमप्यबाधां सुखोदयां ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकनारदसंवादे एकात्रिंशदधिकत्रिशतोऽध्यायः ॥ ३३१ ॥

॥ नारद उवाच ॥ अशोकं शोकनाशार्थं शास्त्रं शान्तिकरं शिवं । निशम्य लभते बुद्धिं तां लब्ध्वा सुखमेधते ।
शोकस्थानसहस्राणि भयस्थानशतानि च । दिवसे दिवसे मूढमाविशन्ति न पण्डितं ।
तस्मादनिष्टनाशार्थमितिहासं निबोध मे । तिष्ठते चेद्वशे बुद्धिर्लभते शोकनाशनं ।
अनिष्टसम्प्रयोगाच्च विप्रयोगात् प्रियस्य च । मनुष्या मानसैर्दुःखैर्युज्यन्ते स्वल्पबुद्धयः । १२४८५
द्रव्येषु समतीतेषु ये गुणास्तान्न चिन्तयेत् । न तानाद्रियमाणस्य स्नेहबन्धः प्रमुच्यते ।
दोषदर्शी भवेत्तत्र यत्र रागः प्रवर्त्तते । अनिष्टवर्द्धितं पश्येत्तथा क्षिप्रं विरज्यते ।
नार्थो न धर्म्मो न यशो योऽतीतमनुशोचति । अप्यभावेन युज्येत तच्चास्य न निवर्त्तते ।
गुणैर्भूतानि युज्यन्ते वियुज्यन्ते तथैव च । सर्व्वाणि नैतदेकस्य शोकस्थानं हि विद्यते ।
मृतं वा यदि वा नष्टं योऽतीतमनुशोचति । दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते । १२४९०
नाश्रु कुर्व्वन्ति ये बुद्ध्या दृष्ट्वा लोकेषु सन्ततिं । सम्यक् प्रपश्यतः सर्व्वं नाश्रुकर्म्मोपपद्यते ।
दुःखोपघाते शारीरे मानसे चाप्युपस्थिते । यस्मिन् न शक्यते कर्त्तुं यत्नस्तन्नानुचिन्तयेत् ।
भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् । चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्द्धते ।
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः । एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् ।
अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः । आरोग्यं प्रियसंवासो गृध्येत्तत्र न पण्डितः । १२४९५
न जानपदिकं दुःखमेकः शोचितुमर्हति । अशोचन् प्रतिकुर्व्वीत यदि पश्येदुपक्रमं ।
सुखाद्बहुतरं दुःखं जीविते नात्र संशयः । स्निग्धत्वञ्चेन्द्रियार्थेषु मोहान्मरणमप्रियं ।
परित्यजति यो दुःखं सुखञ्चाप्युभयं नरः । अभ्येति ब्रह्म सोऽत्यन्तं न तं शोचन्ति पण्डिताः ।
त्यज्यन्ते दुःखमर्था हि पालने न च ते सुखाः । दुःखेन चाधिगम्यन्ते नाशमेषां न चिन्तयेत् ।
अन्यामन्यां धनावस्थां प्राप्य वैशेषिकीं नराः । अतृप्ता यान्ति विध्वंसं सन्तोषं यान्ति पण्डिताः । १२५००
सर्व्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं हि जीवितं ।
अन्तो नास्ति पिपासायास्तुष्टिस्तु परमं सुखं । तस्मात् सन्तोषमेवेह धनं पश्यन्ति पण्डिताः ।
निमेषमात्रमपि हि वयो गच्छन्न तिष्ठति । स्वशरीरेष्वनित्येषु नित्यं किमनुचिन्तयेत् ।

भूतेषु भावं सञ्चिन्त्य ये बुद्ध्वा मनसः परं । न शोचन्ति गताध्वानः पश्यन्तः परमां गतिं ।
सञ्चिन्वानकमेवैनं कामानामवितृप्तकं । व्याघ्रः पशुमिवासाद्य मृत्युरादाय गच्छति । १२३०५
तथाप्युपायं सम्पश्येद्दुःखस्य परिमोक्षणं । अशोकञ्चारभेथैव मुक्तश्चाव्यसनी भवेत् ।
शब्दे स्पर्शे च रूपे च गन्धेषु च रसेषु च । नोपभोगात् परं किञ्चिद्धनिनो वाऽधनस्य वा ।
प्राक्सम्प्रयोगाद्भूतानां नास्ति दुःखं परायणं । विप्रयोगात्तु सर्व्वस्य न शोचेत् प्रकृतिस्थितः ।
धृत्या शिश्नोदरं रक्षेत् पाणिपादञ्च चक्षुषा । चक्षुः श्रोत्रे च मनसा मनो वाचञ्च विद्यया ।
प्रणयं प्रतिसंहृत्य संस्तुतेष्वितरेषु च । विचरेदसमुन्नद्धः स सुखी स च पण्डितः । १२३१०
अध्यात्मरतिरासीनो निरपेक्षो निरामिषः । आत्मनैव सहायेन यश्चरेत् स सुखी भवेत् ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकाभिपतने द्वात्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३२ ॥
॥ नारद उवाच ॥ सुखदुःखविपर्य्यासो यदा समुपपद्यते । नैनं प्रज्ञा सुनीतं वा त्रायते नापि पौरुषं ।
स्वभावाद्यत्नमातिष्ठेद्यत्नवान्नावसीदति । जरामरणरोगेभ्यः प्रियमात्मानमुद्धरेत् ।
रुजन्ति हि शरीराणि रोगाः शारीरमानसाः । सायका इव तीक्ष्णाग्राः प्रयुक्ता दृढधन्विभिः ।
व्यथितस्य विधित्साभिस्ताम्यतो जीवितैषिणः । अवशस्य विनाशाय शरीरमपकृष्यते । १२३१५
स्रवन्ति न निवर्त्तन्ते स्रोतांसि सरितामिव । आयुरादाय मर्त्यानां रात्र्यहानि पुनः पुनः ।
व्यत्ययो ह्ययमत्यन्तं पक्षयोः शुक्लकृष्णयोः । जातान्मर्त्यान् जरयति निमेषान्नावतिष्ठते ।
सुखदुःखानि भूतानामजरो जरयत्यसौ । आदित्यो ह्यस्तमभ्येति पुनः पुनरुदेति च ।
अदृष्टपूर्व्वानादाय भावानपरिशङ्कितान् । इष्टानिष्टान्मनुष्याणामस्तं गच्छन्ति रात्रयः ।
यो यमिच्छेद्यथाकामं कामानान्तदवाप्नुयात् । यदि स्यान्न पराधीनं पुरुषस्य क्रियाफलं । १२३२०
संयताश्च हि दक्षाश्च मतिमन्तश्च मानवाः । दृश्यन्ते निष्फलाः सन्तः प्रहीणाः सर्व्वकर्म्मभिः ।
अपरे बालिशाः सन्तो निर्गुणाः पुरुषाधमाः । आशीर्भिरप्यसंयुक्ता दृश्यन्ते सर्व्वकामिनः ।
भूतानामपरः कश्चिद्धिंसायां सततोत्थितः । वञ्चनायाञ्च लोकस्य स सुखेष्वेव जीर्य्यते ।
अचेष्टमानमासीनं श्रीः कञ्चिदुपतिष्ठते । कश्चित् कर्म्मानुसृत्यान्यो नप्राप्यमधिगच्छति ।
अपराधं समाचक्ष्व पुरुषस्य स्वभावतः । शुक्रमन्यत्र सम्भूतं पुनरन्यत्र गच्छति । १२३२५
तस्य योनौ प्रयुक्तस्य गर्भो भवति वा न वा । आम्रपुष्पोपमा यस्य निर्वृत्तिरुपलभ्यते ।
केषाञ्चित् पुत्त्रकामानामनुसन्तानमिच्छतां । सिद्धौ प्रयतमानानां न चाण्डमुपजायते ।
गर्भाच्चोद्विजमानानां क्रुद्धादाशीविषादिव । आयुष्मान् जायते पुत्त्रः कथं प्रेत्य इवाभवत् ।
देवानिष्ट्वा तपस्तप्त्वा कृपणैः पुत्त्रगृद्धिभिः । दश मासान् परिधृता जायन्ते कुलपांसनाः ।
अपरे धनधान्यानि भोगांश्च पितृसञ्चितान् । विपुलानभिजायन्ते लब्धास्तैरेव मङ्गलैः । १२३३०
अन्योन्य समभिप्रेत्य मैथुनस्य समागमे । उपद्रव इवाविष्टो योनिर्गर्भः प्रपद्यते ।
शीघ्रं परशरीराणि च्छिन्नबीजं शरीरिणं । प्राणिनां प्राणसंरोधे मांसश्लेष्मविचेष्टितं ।

निर्द्दग्धं परदेहे हि परदेहं चलाचलं। विनश्यन्तं विनाशान्ते नावि नावमिवाहितं।
सङ्गत्या जठरे न्यस्तं रेतोविन्दुमचेतनं। केन यत्नेन जीवन्तं गर्भं त्वमिह पश्यसि।
अन्नपानानि जीर्य्यन्ते यत्र भक्ष्याश्च भक्षिताः। तस्मिन्नेवोदरे गर्भः किं नान्नमिव जीर्य्यते। १२५३५
गर्भे मूत्रपुरीषाणां स्वभावनियता गतिः। धारणे वा विसर्गे वा न कर्त्ता विद्यते वशः।
स्रवन्ति ह्युदराद्गर्भा जायमानास्तथा परे। आगमेन तथान्येषां विनाश उपपद्यते।
एतस्माद्योनिसम्बन्धाद्यो वीजं परिमुच्यते। प्रजाञ्च लभते काञ्चित् पुनर्द्वन्द्वेषु सज्जति।
स तस्य सहजातस्य सप्तमीं नवमीं दशां। प्राप्नुवन्ति ततः पञ्च न भवन्ति गतायुषः।
नाभ्युत्थाने मनुष्याणां योगाः स्युर्नात्र संशयः। व्याधिभिश्च विमथ्यन्ते व्याधैः क्षुद्रमृगा इव। १२५४०
व्याधिभिर्मथ्यमानानां त्यजतां विपुलं धनं। वेदनां नापकर्षन्ति यतमानाश्चिकित्सकाः।
ते चापि निपुणा वैद्याः कुशलाः सम्भृतौषधाः। व्याधिभिः परिकृष्यन्ते मृगा व्याधैरिवार्द्दिताः।
ते पिबन्तः कषायांश्च सर्पींषि विविधानि च। दृश्यन्ते जरया भग्ना नगा नागैरिवोत्तमैः।
के वा भुवि चिकित्सन्ते रोगार्त्तान् मृगपक्षिणः। श्वापदानि दरिद्रांश्च प्रायो नार्त्ता भवन्ति ते।
घोरानपि दुराधर्षान्नृपतीनुग्रतेजसः। आक्रम्याददते रोगाः पशून् पशुगणा इव। १२५४५
इति लोकमनाक्रन्दं मोहशोकपरिप्लुतं। स्रोतसा सहसा क्षिप्तं ह्रियमाणं बलीयसा।
न धनेन न राज्येन नोग्रेण तपसा तथा। स्वभावमतिवर्त्तन्ते ये नियुक्ताः शरीरिणः।
न म्रियेरन्न जीर्य्येरन् सर्व्वे स्युः सर्व्वकामिनः। नाप्रियं प्रतिपश्येयुरुत्थानस्य फले सति।
उपर्य्युपरि लोकस्य सर्व्वो गन्तुं समीहते। यतते च यथाशक्ति न च तत् वर्त्तते तथा।
ऐश्वर्य्यमदमत्तांश्च मत्तान्मद्यमदेन च। अप्रमत्ताः शठाः शूरा विक्रान्ताः पर्य्युपासते। १२५५०
क्लेशाः परिनिवर्त्तन्ते केषाञ्चिदसमीक्षिताः। स्वं स्वञ्च पुनरन्येषां न किञ्चिदधिगम्यते।
महच्च फलवैषम्यं दृश्यते कर्म्मसन्धिषु। वहन्ति शिविकामन्ये यान्त्यन्ये शिविकागताः।
सर्व्वेषामृद्धिकामानामन्ये रथपुरःसराः। मनुष्याश्च गतस्त्रीकाः शतशो विविधाः स्त्रियः।
द्वन्द्वारामेषु भूतेषु गच्छन्त्येकैकशो नराः। इदमन्यत् पदं पश्य मात्र मोहं करिष्यसि।
त्यज धर्म्ममधर्म्मञ्च उभे सत्यानृते त्यज। उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज। १२५५५
एतत्ते परमं गुह्यमाख्यातमृषिसत्तम। येन देवाः परित्यज्य मर्त्यलोकं दिवं गताः।
नारदस्य वचः श्रुत्वा शुकः परमबुद्धिमान्। सञ्चिन्त्य मनसा धीरो निश्चयं नाध्यगच्छत।
पुत्रदारैर्म्महान् क्लेशो विद्याम्नाये महान् श्रमः। किन्नु स्यात् शाश्वतं स्थानमल्पक्लेशं महोदयं।
ततो मुहूर्त्तं सञ्चिन्त्य निश्चितां गतिमात्मनः। परावरज्ञो धर्म्मस्य परां नैःश्रेयसीं गतिं।
कथन्त्वहमसंक्लिष्टो गच्छेयं गतिमुत्तमां। नावर्त्तेयं यथा भूयो योनिसङ्करसागरे। १२५६०
परं भावं हि काङ्क्षामि यत्र नावर्त्तते पुनः। सर्व्वसङ्गान् परित्यज्य निश्चितो मनसा गतिं।
तत्र यास्यामि यत्रात्मा शमं मेऽधिगमिष्यति। अक्षयश्चाव्ययश्चैव यत्र स्थास्यामि शाश्वतः।

न तु योगमृते शक्या प्राप्तुं सा परमा गतिः । अवबन्धो हि मुग्धस्य कर्म्मभिर्नोपपद्यते ।
तस्माद्योगं समास्थाय त्यक्त्वा गृहकलेवरं । वायुभूतः प्रवेक्ष्यामि तेजोराशिं दिवाकरं ।
नह्येष क्षयतां याति सोमः सुरगणैर्यथा । कम्पितः पतते भूमिं पुनश्चैवाधिरोहति । १२५६५
क्षीयते हि सदा सोमः पुनश्चैवाभिपूर्य्यते । नेच्छाम्येवं विदित्वैतद्ध्रासवृद्धी पुनः पुनः ।
रविस्तु संतापयते लोकान् रश्मिभिरुल्बणैः । सर्व्वतस्तेज आदत्ते नित्यमक्षयमण्डलः ।
अतो मे रोचते गन्तुमादित्यं दीप्ततेजसं । अत्र वत्स्यामि दुर्द्धर्षो निःशङ्केनान्तरात्मना ।
सूर्य्यस्य सदने चाहं निक्षिप्येदं कलेवरं । ऋषिभिः सह यास्यामि सौरं तेजोतिदुःसहं ।
आपृच्छामि नगान्नागान् गिरिमुर्व्वीं दिशो दिवं । देवदानवगन्धर्व्वान् पिशाचोरगराक्षसान् । १२५७०
लोकेषु सर्व्वभूतानि प्रवेक्ष्यामि न संशयः । पश्यन्तु योगवीर्य्यं मे सर्व्वे देवाः सहर्षिभिः ।
अथानुज्ञाप्य तमृषिं नारदं लोकविश्रुतं । तस्मादनुज्ञां सम्प्राप्य जगाम पितरं प्रति ।
सोऽभिवाद्य महात्मानं कृष्णद्वैपायनं मुनिं । शुकः प्रदक्षिणं कृत्वा कृष्णमापृष्टवान् मुनिं ।
श्रुत्वा चर्षिस्तद्वचनं शुकस्य प्रीतो महात्मा पुनराह चैनं । भो भो पुत्र स्थीयतां तावदद्य यावच्चक्षुः प्रीणयामि त्वदर्थे ।
निरपेक्षः शुको भूत्वा निःस्नेहो मुक्तसंशयः । मोक्षमेवानुसञ्चिन्त्य गमनाय मनो दधे । १२५७५
पितरं स परित्यज्य जगाम मुनिसत्तमः । कैलासपृष्ठं विपुलं सिद्धसङ्घनिषेवितं ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकाभिपतने द्वात्रिंशदधिकत्रिशततोऽध्यायः ॥ ३३२ ॥
॥ भीष्म उवाच ॥ गिरिशृङ्गं समारुह्य सुतो व्यासस्य भारत । समे देशे विविक्ते स निःशलाक उपाविशत् ।
धारयामास चात्मानं यथाशास्त्रं यथाविधि । पादप्रभृतिगात्रेषु क्रमेण क्रमयोगवित् ।
ततः स प्राङ्मुखो विद्वानादित्येनाचिरोदिते । पाणिपादं समादाय विनीतवदुपाविशत् ।
न तत्र पक्षिसङ्घातो न शब्दो नातिदर्शनं । यत्र वैयासकिर्धीमान् योक्तुं समुपचक्रमे । १२५८०
स ददर्श तदात्मानं सर्व्वसङ्गविनिःसृतं । प्रजहास ततो हासं शुकः सम्प्रेक्ष्य तत्परं ।
स पुनर्य्योगमास्थाय मोक्षमार्गोपलब्धये । महायोगेश्वरो भूत्वा सोऽत्यक्रामद्विहायसा ।
ततः प्रदक्षिणं कृत्वा देवर्षिं नारदं तथा । निवेदयामास च तं स्वं योगं परमर्षये ।
॥ शुक उवाच ॥ दृष्टो मार्गः प्रवृत्तोऽस्मि स्वस्ति तेऽस्तु तपोधन । त्वत्प्रसादाद्गमिष्यामि गतिमिष्टां महाद्युते ।
नारदेनाभ्यनुज्ञातः शुको द्वैपायनात्मजः । अभिवाद्य पुनर्योगमास्थायाकाशमाविशत् । १२५८५
कैलासपृष्ठादुत्पत्य स पपात दिवं तदा । अन्तरीक्षचरः श्रीमान् वायुभूतः सुनिश्चितः ।
तमुद्यन्तं द्विजश्रेष्ठं वैनतेयसमद्युतिं । ददृशुः सर्व्वभूतानि मनोमारुतरंहसं ।
व्यवसायेन लोकांस्त्रीन् सर्व्वान् सोऽथ विचिन्तयन् । आस्थितो दीर्घमध्वानं पावकार्कसमप्रभः ।
तमेकमनसं यान्तमव्यग्रमकुतोभयं । ददृशुः सर्व्वभूतानि स्थावराणि चराणि च ।
यथाशक्ति यथान्यायं पूजां वै चक्रिरे तदा । पुष्पवर्षैश्च दिव्यैस्तमवचक्रुर्दिवौकसः । १२५९०

तं दृष्ट्वा विस्मिताः सर्व्वे गन्धर्व्वाप्सरसाङ्गणाः। ऋषयश्चैव संसिद्धाः परं विस्मयमागताः।
अन्तरीक्षगतः कोऽयं तपसा सिद्धिमागतः। अधःकायोर्द्ध्ववक्त्रश्च नेत्रैः समभिरज्यते।
ततः परमधर्म्मात्मा त्रिषु लोकेषु विश्रुतः। भास्करं समुदीक्षन् स प्राङ्मुखो वाग्यतोऽगमत्।
शब्देनाकाशमखिलं पूरयन्निव सर्व्वशः। तमापतन्तं सहसा दृष्ट्वा सर्व्वाप्सरोगणाः।
सम्भ्रान्तमनसो राजन्नासन् परमविस्मिताः। पञ्चचूडाप्रभृतयो भृशमुत्फुल्ललोचनाः। १२२९९
दैवतं कतमं ह्येतदुत्तमाङ्गतिमास्थितं। सुनिश्चितमिहायाति विमुक्तमिव निस्पृहं।
ततः समभिचक्राम मलयं नाम पर्व्वतं। उर्व्वशी पूर्व्वचित्तिश्च यं नित्यमुपसेवतः।
तस्य ब्रह्मर्षिपुत्रस्य विस्मयं ययतुः परं। अहो बुद्धिसमाधानं वेदाभ्यासरते द्विजे।
अचिरेणैव कालेन नभश्चरति चन्द्रवत्। पितृशुश्रूषया बुद्धिं संप्राप्तोऽयमनुत्तमां।
पितृभक्तो दृढतपाः पितुः सुदयितः सुतः। अनन्यमनसा तेन कथं पित्रा विसर्ज्जितः। १२३००
उर्व्वश्या वचनं श्रुत्वा शुकः परमधर्म्मवित्। उदैक्षत दिशः सर्व्वा वचने गतमानसः।
सोऽन्तरीक्षं महीञ्चैव सशैलवनकाननां। विलोकयामास तदा सरांसि सरितस्तथा।
ततो द्वैपायनसुतं बहुमानात् समन्ततः। कृताञ्जलिपुटाः सर्व्वा निरीक्षन्ते स्म देवताः।
अब्रवीत्तास्तदा वाक्यं शुकः परमधर्म्मवित् पिता यद्यनुगच्छेन्मां क्रोशमानः शुकेति वै।
ततः प्रतिवचो देयं सर्व्वैरेव समाहितैः। एतन्मे स्नेहतः सर्व्वे वचनं कर्त्तुमर्हथ। १२३०५
शुकस्य वचनं श्रुत्वा दिशः सर्व्वाः सकाननाः। समुद्राः सरितः शैलाः प्रत्यूचुस्तं समन्ततः।
यथाज्ञापयसे विप्र बाढमेवं भविष्यति। ऋषेर्व्याहरतो वाक्यं प्रतिवक्ष्यामहे वयं।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकाभिपतने चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३४ ॥
॥ भीष्म उवाच ॥ इत्येवमुक्त्वा वचनं महर्षिः सुमहातपाः। प्रातिष्ठत शुकः सिद्धिं हित्वा दोषांश्चतुर्व्विधान्।
तमो ह्यष्टविधं हित्वा जहौ पञ्चविधं रजः। ततः सत्त्वं जहौ धीमांस्तदद्भुतमिवाभवत्।
ततस्तस्मिन् पदे नित्ये निर्गुणे लिङ्गवर्जिते। ब्रह्मणि प्रत्यतिष्ठत् स विधूमोऽग्निरिव ज्वलन्। १२३१०
उल्कापाता दिशां दाहो भूमिकम्पस्तथैव च। प्रादुर्भूताः क्षणे तस्मिंस्तदद्भुतमिवाभवत्।
द्रुमाः शाखाश्च मुमुचुः शिखराणि च पर्व्वताः। निर्घातशब्दैश्च गिरिर्हिमवान् दीर्य्यतीव ह।
न बभासे सहस्रांशुर्न जज्वाल च पावकः। ह्रदाश्च सरितश्चैव चुक्षुभुः सागरास्तथा।
ववर्ष वासवस्तोयं रसवच्च सुगन्धि च। ववौ समीरणश्चापि दिव्यगन्धवहः शुचिः।
स शृङ्गे प्रथमे दिव्ये हिमवन्मेरुसम्भवे। संश्लिष्टे श्वेतपीते द्वे रुक्मरूप्यमये शुभे। १२३१५
शतयोजनविस्तारे तिर्य्यगूर्द्ध्वञ्च भारत। उदीचीं दिशमास्थाय रुचिरे संददर्श ह।
सोऽविशङ्केन मनसा तथैवाभ्यपतच्छुकः। ततः पर्व्वतशृङ्गे द्वे सहसैव द्विधाकृते।
अदृश्येतां महाराज तदद्भुतमिवाभवत्। ततः पर्व्वतशृङ्गाभ्यां सहसैव विनिःसृतः।

न च प्रतिजघानास्य स गतिं पर्व्वतोत्तमः। ततो महानभूच्छब्दो दिवि सर्व्वदिवौकसां।
गन्धर्व्वाणामृषीणाञ्च ये च शैलनिवासिनः। दृष्ट्वा शुकमतिक्रान्तं पर्व्वतञ्च द्विधाकृतं। १२२३०
साधु साध्विति तत्रासीत् नादः सर्व्वत्र भारत। स पूज्यमानो देवैश्च गन्धर्व्वैरृषिभिस्तथा।
यक्षराक्षससङ्घैश्च विद्याधरगणैस्तथा। दिव्यैः पुष्पैः समाकीर्णमन्तरीक्षं समन्ततः।
आसीत् किल महाराज शुकाभिपतने तदा। ततो मन्दाकिनीं रम्यामुपरिष्टादभिव्रजन्।
शुको ददर्श धर्म्मात्मा पुष्पितद्रुमकाननां। तस्यां क्रीडन्त्यभिरता ते चैवाप्सरसाङ्गणाः।
शून्याकारं निराकाराः शुकं दृष्ट्वा विवाससः। तं प्रक्रामन्तमाज्ञाय पिता स्नेहसमन्वितः। १२२३५
उत्तमाङ्गतिमास्थाय पृष्ठतोऽनुससार ह। शुकस्तु मारुतादूर्द्ध्वं गतिं कृत्वान्तरीक्षगां।
दर्शयित्वा प्रभावं स्वं ब्रह्मभूतोऽभवत्तदा। महायोगगतिं त्वग्र्यां व्यासोत्थाय महातपाः।
निमेषान्तरमात्रेण शुकाभिपतनं ययौ। स ददर्श द्विधा कृत्वा पर्व्वताग्रं शुकं गतं।
शशंसुरृषयस्तस्य कर्म्म पुत्त्रस्य तत्तदा। ततः शुकेति दीर्घेण शब्देनाक्रन्दितस्तदा।
स्वयं पित्रा स्वरेणोच्चैस्त्रींल्लोकाननुनाद्य वै। शुकः सर्व्वगतो भूत्वा सर्व्वात्मा सर्व्वतोमुखः। १२२४०
प्रत्यभाषत धर्म्मात्मा भोः शब्देनानुनादयन्। तत एकाक्षरं नादं भो इत्येव समीरयन्।
प्रत्याहरज्जगत् सर्व्वमुच्चैः स्थावरजङ्गमं। ततः प्रभृति चाद्यापि शब्दानुच्चारितान् पृथक्।
गिरिगह्वरपृष्ठेषु व्याहरन्ति शुकं प्रति। अन्तर्हितः प्रभावन्तु दर्शयित्वा शुकस्तदा।
गुणान् संत्यज्य शब्दादीन् पदमभ्यगमत् परं। महिमानन्तु तं दृष्ट्वा पुत्त्रस्यामिततेजसः।
निषसाद गिरिप्रस्थे पुत्त्रमेवानुचिन्तयन्। ततो मन्दाकिनीतीरे क्रीडन्त्योऽप्सरसाङ्गणाः। १२२४५
आसाद्य तमृषिं सर्व्वाः संभ्रान्ता गतचेतसः। जले निलिल्यिरे काश्चित् काश्चिद्गुल्मान् प्रपेदिरे।
वसनान्याददुः काश्चित् तं दृष्ट्वा मुनिसत्तमं। तां मुक्ततान्तु विज्ञाय मुनिः पुत्त्रस्य वै तदा।
सक्ततामात्मनश्चैव प्रीतोऽभूद्व्रीडितश्च ह। तं देवगन्धर्व्ववृतो महर्षिगणपूजितः।
पिनाकहस्तो भगवानभ्यागच्छत शङ्करः। तमुवाच महादेवः सान्त्वपूर्व्वमिदं वचः।
पुत्त्रशोकाभिसन्तप्तं कृष्णद्वैपायनं तदा। अग्नेर्भूमेरपां वायोरन्तरीक्षस्य चैव ह। १२२५०
वीर्य्येण सदृशः पुत्त्रः पुरा मत्तस्त्वया वृतः। स तथालक्षणो जातस्तपसा तव सम्भृतः।
मम चैव प्रसादेन ब्रह्मतेजोमयः शुचिः। स गतिं परमां प्राप्तो दुष्प्रापामजितेन्द्रियैः।
दैवतैरपि विप्रर्षे त्वं तं किमनुशोचसि। यावत् स्थास्यन्ति गिरयो यावत् स्थास्यन्ति सागराः।
तावत्तवाक्षया कीर्त्तिः सपुत्त्रस्य भविष्यति। छायां स्वपुत्त्रसदृशीं सर्व्वतोऽनपगां सदा।
द्रक्ष्यसे त्वञ्च लोकेऽस्मिन्मत्प्रसादान्महामुने। सोऽनुनीतो भगवता स्वयं रुद्रेण भारत। १२२५५
छायां पश्यन् समावृत्तः स मुनिः परया मुदा। इति जन्म गतिश्चैव शुकस्य भरतर्षभ।
विस्तरेण समाख्याता यन्मां त्वं परिपृच्छसि। एतदाचष्ट मे राजन् देवर्षिर्नारदः पुरा।

व्यासस्यैव महायोगी सन्ध्यासु पदे पदे। इतिहासमिमं पुण्यं मोक्षधर्म्मोपबृंहितं।
धारयेद्यः शमपरः स गच्छेत् परमां गतिं।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकाभिपतने पञ्चत्रिंशदधिकत्रिशततोऽध्यायः॥ ३३५॥

॥ युधिष्ठिर उवाच ॥ गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथ भिक्षुकः। य इच्छेत् सिद्धिमास्थातुं देवतां कां यजेत सः। १२७५०

कुतो ह्यस्य ध्रुवः स्वर्गः कुतो नैःश्रेयसं परं। विधिना केन जुहुयात् दैवं पित्र्यं तथैव च।
मुक्तश्च कां गतिं गच्छेत् मोक्षश्चैव किमात्मकः। स्वर्गतश्चैव किं कुर्य्याद्येन न च्यवते दिवः।
देवतानाञ्च को देवः पितृणाञ्च पिता तथा। तस्मात् परतरं यच्च तन्मे ब्रूहि पितामह।

॥ भीष्म उवाच ॥ गूढं मां प्रश्नवित् प्रश्नं पृच्छसे त्वमिहानघ। न ह्येष तर्कया शक्यो वक्तुं वर्षशतैरपि।
ऋते देवप्रसादाद्वा राजन् ज्ञानागमेन वा। गहनं ह्येतदाख्यानं व्याख्यातव्यं तवारिहन्। १२७५५
अत्राप्युदाहरन्तीममितिहासं पुरातनं। नारदस्य च संवादं ऋषेर्नारायणस्य च।
नारायणो हि विश्वात्मा चतुर्मूर्त्तिः सनातनः। धर्म्मात्मजः सम्बभूव पितैवं मेऽभ्यभाषत।
कृते युगे महाराज पुरा स्वायम्भुवेऽन्तरे। नरनारायणश्चैव हरिः कृष्णः स्वयम्भुवः।
तेषां नारायणनरौ तपस्तेपतुरव्ययौ। वदर्य्याश्रममासाद्य शकटे कनकामये।
अष्टचक्रं हि तद्यानं भूतयुक्तं मनोरमं। तत्राद्यौ लोकनाथौ तौ कृशौ धमनिसन्ततौ। १२७६०
तपसा तेजसा चैव दुर्निरीक्ष्यौ सुरैरपि। यस्य प्रसादं कुर्व्वाते स देवौ द्रष्टुमर्हति।
नूनन्तयोरनुमते हृदि हृच्छयचोदितः। महामेरोर्गिरेः शृङ्गात् प्रच्युतो गन्धमादनं।
नारदः सुमहद्भूतं सर्व्वलोकानचीचरत्। तं देशमगमद्राजन् वदर्य्याश्रममाशुगः।
तयोराह्निकवेलायां तस्य कौतूहलन्त्वभूत्। इदं तदास्पदं कृत्स्नं यस्मिंल्लोकाः प्रतिष्ठिताः।
सदेवासुरगन्धर्व्वाः सकिन्नरमहोरगाः। एका मूर्त्तिरियं पूर्व्वं जाता भूयश्चतुर्व्विधा। १२७६५
धर्म्मस्य कुलसन्ताने धर्म्मादिभिर्व्विवर्द्धितः। अहो ह्यनुगृहीतोऽद्य धर्म्म एभिः सुरैरिह।
नरनारायणाभ्याञ्च कृष्णेन हरिणा तथा। अत्र कृष्णो हरिश्चैव कस्मिंश्चित् कारणान्तरे।
स्थितौ धर्म्मोत्तरौ ह्येतौ तथा तपसि धिष्ठितौ। एतौ हि परमं धाम कानयोराह्निकक्रिया।
पितरौ सर्व्वभूतानां दैवतञ्च यशस्विनौ। कां देवतान्तु यजतः पितॄन् कांस्तान् महामती।
इति सञ्चिन्त्य मनसा भक्त्या नारायणस्य तु। सहसा प्रादुरभवत् समीपे देवयोस्तदा। १२७७०
कृते दैवे च पित्र्ये च ताभ्यां सन्निरीक्षितः। पूजितश्चैव विधिना यथाप्रोक्तेन शास्त्रतः।
तं दृष्ट्वा महदाश्चर्य्यमपूर्व्वं विधिविस्तरं। उपोपविष्टः सुप्रीतो नारदो भगवानृषिः।
नारायणं संनिरीक्ष्य प्रसन्नेनान्तरात्मना। नमस्कृत्य महादेवमिदं वचनमब्रवीत्।

॥ नारद उवाच ॥ वेदेषु सपुराणेषु साङ्गोपाङ्गेषु गीयसे। त्वमजः शाश्वतो धाता मतोऽमृतमनुत्तमं।
प्रतिष्ठितं भूतभव्यं त्वयि सर्व्वमिदं जगत्। चत्वारो ह्याश्रमा देव सर्व्वे गार्हस्थ्यमूलकाः। १२७७५

यजन्ते त्वामहरहर्नानामूर्त्तिसमास्थितं । पिता माता च सर्व्वस्य जगतः शाश्वतो गुरुः ।
कं त्वद्य यजसे देवं पितरं कं न विद्महे ।
॥ श्रीभगवानुवाच ॥ अवाच्यमेतद्वक्तव्यं आत्मगुह्यं सनातनं । तव भक्तिमतो ब्रह्मन् वक्ष्यामि तु यथातथं ।
यत्तत् सूक्ष्ममविज्ञेयमव्यक्तमचलं ध्रुवं । इन्द्रियैरिन्द्रियार्थैश्च सर्व्वभूतैश्च वर्ज्जितं ।
स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते । त्रिगुणव्यतिरिक्तो वै पुरुषश्चेति कल्पितः । १२९८७
तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम । अव्यक्ताव्यक्तभावस्था या सा प्रकृतिरव्यया ।
तां योनिमावयोर्व्विद्धि योऽसौ सदसदात्मकः । आवाभ्यां पूज्यते सो हि दैवे पित्र्ये च कल्पते ।
नास्ति तस्मात् परोऽन्यो हि पिता देवोऽथवा द्विजः । आत्मा हि नः स विज्ञेयस्ततस्तं पूजयावहे ।
तेनैषा प्रथिता ब्रह्मन्मर्य्यादा लोकभाविनी । दैवं पित्र्यञ्च कर्त्तव्यमिति तस्यानुशासनं ।
ब्रह्मा स्थाणुर्म्मनुर्दक्षो भृगुर्धर्म्मस्तथा यमः । मरीचिरङ्गिरात्रिश्च पुलस्त्यः पुलहः क्रतुः । १२९८८
वशिष्ठः परमेष्ठी च विवस्वान् सोम एव च । कर्द्दमश्चापि यः प्रोक्तः क्रोधो विक्रीत एव च ।
एकविंशतिरुत्पन्नास्ते प्रजापतयः स्मृताः । तस्य देवस्य मर्य्यादां पूजयन्तः सनातनीं ।
दैवं पित्र्यञ्च सततं तस्य विज्ञाय तत्त्वतः । आत्मप्राप्तानि च ततः प्राप्नुवन्ति द्विजोत्तमाः ।
स्वर्गस्था अपि ये केचित्तं नमस्यन्ति देहिनः । ते तत्प्रसादात् गच्छन्ति तेनादिष्टफलां गतिं ।
ये हीनाः सप्तदशभिर्गुणैः कर्म्मभिरेव च । कलाः पञ्चदश त्यक्त्वा ते मुक्ता इति निश्चयः । १२९९०
मुक्तानान्तु गतिर्ब्रह्मन् क्षेत्रज्ञ इति कल्पितः । स हि सर्व्वगुणश्चैव निर्गुणश्चैव कथ्यते ।
दृश्यते ज्ञानयोगेन आवाञ्च प्रसृतौ ततः । एवं ज्ञात्वा तमात्मानं पूजयावः सनातनं ।
तं वेदाश्चाश्रमाश्चैव नानामतसमास्थिताः । भक्त्या सम्पूजयन्त्याद्यं गतिञ्चैषां ददाति सः ।
ये तु तद्भाविता लोके एकान्तित्वं समास्थिताः । एतदभ्यधिकं तेषां यत्ते तं प्रविशन्त्युत ।
इति गुह्यसमुद्देशस्तव नारद कीर्त्तितः । भक्त्या प्रेम्णा च विप्रर्षे अस्मद्भक्त्या च ते श्रुतः । १२९९५

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये षट्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३६ ॥

॥ भीष्म उवाच ॥ स एवमुक्तो द्विपदां वरिष्ठो नारायणेनोत्तमपूरुषेण । जगाद वाक्यं द्विपदां वरिष्ठं नारायणं लोकहिताधिवासं ।
॥ नारद उवाच ॥ यदर्थमात्मप्रभवेण जन्म कृतं त्वया धर्म्मगृहे चतुर्द्धा । तत् साध्यतां लोकहितार्थमद्य गच्छामि द्रष्टुं प्रकृतिं तवाद्यां ।
पूजां गुरूणां सततं करोमि परस्य गुह्यं न तु भिन्नपूर्व्वं । वेदाः स्वधीता मम लोकनाथ तप्तं तपो नानृतमुक्तपूर्व्वं ।
गुप्तानि चत्वारि यथागमं मे शत्रौ च मित्रे च समोऽस्मि नित्यं । तञ्चादिदेवं सततं प्रपन्न एकान्तभावेन वृणोम्यजस्रं ।
एभिर्व्विशेषैः परिशुद्धसत्त्वः कस्मान्न पश्येयमनन्तमीशं । तत्पारमेष्ठस्य वचो निशम्य नारायणः शाश्वतधर्म्मगोप्ता । १३०००
गच्छेति तं नारदमुक्तवान् स सम्पूजयित्वात्मविधिक्रियाभिः । ततो विसृष्टः परमेष्ठिपुत्रः सोऽभ्यर्च्चयित्वा तमृषिं पुराणं ।
खमुत्पपातोत्तमवेगयुक्तस्ततोऽधिमेरौ सहसा निलिल्ये । तत्रावतस्थे च मुनिर्म्मुहूर्त्तमेकान्तमासाद्य गिरेः स शृङ्गे ।

आलोकयन्नुत्तरपश्चिमेन ददर्श चाप्यद्भुतमुक्तरूपं । क्षीरोदधेरुत्तरतो हि द्वीपः श्वेतः स नाम्ना प्रथितो विशालः ।
मेरोः सहस्रैः स हि योजनानां द्वात्रिंशतोर्द्धं कविभिर्निरुक्तः । अतीन्द्रियाश्चानशनाश्च तत्र निष्पन्दहीनाः सुसुगन्धिनश्च ।

श्वेताः पुमांसो गतसर्व्वपापाश्चक्षुर्मुषः पापकृतां नराणां । वज्रास्थिकायाः सममानोन्माना दिव्यान्वयरूपाः शुभसारोपेताः । १२७०५

छत्राकृतिशीर्षा मेघौघनिनादाः सममुष्कचतुष्का राजीवशतपादाः । षष्ट्या दन्तैर्युक्ताः शुक्लैरष्टाभिर्दंष्ट्राभिर्ये जिह्वाभिर्ये विष्वग्वक्त्रं लेलिह्यन्ते सूर्य्यप्रख्यं ।

भक्त्या देवं विश्वोत्पन्नं यस्मात् सर्व्वे लोकाः सम्प्रसूताः । वेदा धर्म्मा मुनयः शान्ता देवाः सर्व्वे तस्य निसर्गः ।

॥ युधिष्ठिर उवाच ॥ अतीन्द्रिया निराहारा अनिष्पन्दाः सुगन्धिनः । कथन्ते पुरुषा जाताः का तेषां गतिरुत्तमा ।

ये च मुक्ता भवन्तीह नरा भरतसत्तम । तेषां लक्षणमेतद्धि तच्छ्वेतद्वीपवासिनां ।

तस्मान्मे संशयं छिन्धि परं कौतूहलं हि मे । त्वं हि सर्व्वकथारामस्त्वाञ्चैवोपाश्रिता वयं । १२७१०

॥ भीष्म उवाच ॥ विस्तीर्णैषा कथा राजन् श्रुता मे पितृसन्निधौ । सैषा तव हि वक्तव्या कथासारो हि सा मता ।

राजोपरिचरो नाम बभूवाधिपतिर्भुवः । आखण्डलसखः ख्यातो भक्तो नारायणं हरिं ।

धार्म्मिको नित्यभक्तश्च पितुर्नित्यमतन्द्रितः । साम्राज्यं तेन सम्प्राप्तं नारायणवरात् पुरा ।

सात्वतं विधिमास्थाय प्राक् सूर्य्यमुखनिःसृतं । पूजयामास देवेशं तच्छेषेण पितामहान् ।

पितृशेषेण विप्रांश्च संविभज्याश्रितांश्च सः । शेषान्नभुक् सत्यपरः सर्व्वभूतेष्वहिंसकः । १२७१५

सर्व्वभावेन भक्तः स देवदेवं जनार्द्दनं । अनादिमध्यनिधनं लोककर्त्तारमव्ययं ।

तस्य नारायणे भक्तिं वहतोऽमित्रकर्षिणः । एकशय्यासनं देवो दत्तवान् देवराट् स्वयं ।

आत्मराज्यं धनञ्चैव कलत्रं वाहनन्तथा । यत्तद्भागवतं सर्व्वमिति तत् प्रोक्षितं सदा ।

काम्यनैमित्तिका राजन् यज्ञियाः परमक्रियाः । सर्व्वाः सात्वतमास्थाय विधिञ्चक्रे समाहितः ।

पञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः । प्रायणं भगवत् प्रोक्तं भुञ्जते चाग्रभोजनं । १२७२०

तस्य प्रशासतो राज्यं धर्म्मेणामित्रघातिनः । नानृता वाक् समभवन्मनो दुष्टं न चाभवत् ।

न च कायेन कृतवान् स पापं परमाण्वपि । ये हि ते ऋषयः ख्याताः सप्त चित्रशिखण्डिनः ।

तैरेकमतिभिर्भूत्वा यत् प्रोक्तं शास्त्रमुत्तमं । वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ ।

आस्यैः सप्तभिरुद्गीर्णं लोकधर्म्ममनुत्तमं । मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।

वशिष्ठश्च महातेजास्ते हि चित्रशिखण्डिनः । सप्तप्रकृतयो ह्येतास्तथा स्वायम्भुवोऽष्टमः । १२७२५

एताभिर्धार्य्यते लोकास्ताभ्यः शास्त्रं विनिःसृतं । एकाग्रमनसो दान्ता मुनयः संयमे रताः ।

भूतभव्यभविष्यज्ञाः सत्यधर्म्मपरायणाः । इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमं ।

लोकान् सञ्चिन्त्य मनसा ततः शास्त्रं प्रचक्रिरे । तत्र धर्म्मार्थकामा हि मोक्षः पश्चाच्च कीर्त्तितः ।

मर्य्यादा विविधाश्चैव दिवि भूमौ च संस्थिताः । आराध्य तपसा देवं हरिं नारायणं प्रभुं ।

दिव्यं वर्षसहस्रं वै सर्व्वे ते ऋषिभिः सह । नारायणानुशिष्टा हि तदा देवी सरस्वती । १२७३०

विवेश तानृषीन् सर्व्वान् लोकानां हितकाम्यया। ततः प्रवर्त्तितः सम्यक् तपोविद्भिर्द्विजातिभिः।
शब्दे चार्थे च हेतौ च एषा प्रथमसर्गजा। आदावेव हि तच्छास्त्रमोङ्कारस्वरपूजितं।
ऋषिभिः श्रावितं तत्र यत्र कारुणिको ह्यसौ। ततः प्रसन्नो भगवाननिर्द्दिष्टशरीरगः।
ऋषीनुवाच तान् सर्व्वानदृश्यः पुरुषोत्तमः। कृतं शतसहस्रं हि श्लोकानामिदमुत्तमं।
लोकतन्त्रस्य कृत्स्नस्य यस्माद्धर्म्मः प्रवर्त्तते। प्रवृत्तौ च निवृत्तौ च यस्मादेतद्भविष्यति। १२७३५
यजुरृक्सामभिर्जुष्टमथर्व्वाङ्गिरसैस्तथा। यथा प्रमाणं हि मया कृतो ब्रह्मा प्रसादजः।
रुद्रश्च क्रोधजो विप्रा यूयं प्रकृतयस्तथा। सूर्य्याचन्द्रमसौ वायुर्भूमिरापोऽग्निरेव च।
सर्व्वे च नक्षत्रगणा यच्च भूताभिशब्दितं। अधिकारेषु वर्त्तन्ते यथा स्वं ब्रह्मवादिनः।
सर्व्वे प्रमाणं हि यथा तथा तच्छास्त्रमुत्तमं। भविष्यति प्रमाणं वै एतन्मदनुशासनं।
तस्मात् प्रवक्ष्यते धर्म्मान् मनुः स्वायम्भुवः स्वयं। उशना बृहस्पतिश्चैव यदोत्पन्नौ भविष्यतः। १२७४०
तदा प्रवक्ष्यतः शास्त्रं युष्मन्मतिभिरुद्धृतं। स्वायम्भुवेषु धर्म्मेषु शास्त्रे चोशनसे कृते।
बृहस्पतिमते चैव लोकेषु प्रतिचारिते। युष्मत्कृतमिदं शास्त्रं प्रजापालो वसुस्ततः।
बृहस्पतिसकाशाद्वै प्राप्स्यते द्विजसत्तमाः। स हि मद्भावितो राजा मद्भक्तश्च भविष्यति।
तेन शास्त्रेण लोकेषु क्रियाः सर्व्वाः करिष्यति। एतद्धि युष्मच्छास्त्राणां शास्त्रमुत्तमसंज्ञितं।
एतदर्थञ्च धर्म्म्यञ्च रहस्यञ्चैतदुत्तमं। अस्य प्रवर्त्तनाच्चैव प्रजावन्तो भविष्यथ। १२७४५
स च राजा श्रिया युक्तो भविष्यति महान् वसुः। संस्थिते तु नृपे तस्मिन् शास्त्रमेतत् सनातनं।
अन्तर्द्धास्यति तत् सर्व्वमेतद्वः कथितं मया। एतावदुक्त्वा वचनमदृश्यः पुरुषोत्तमः।
विसृज्य तानृषीन् सर्व्वान् कामपि प्रस्थितो दिशं। ततस्ते लोकपितरः सर्व्वलोकार्थचिन्तकाः।
प्रावर्त्तयन्त तच्छास्त्रं धर्म्मयोनिं सनातनं। उत्पन्नेऽङ्गिरसे चैव युगे प्रथमकल्पिते।
साङ्गोपनिषदं शास्त्रं स्थापयित्वा बृहस्पतौ। जग्मुर्यथेप्सितं देशं तपसे कृतनिश्चयाः। १२७५०
धारणाः सर्व्वलोकानां सर्व्वधर्म्मप्रवर्त्तकाः।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये सप्तत्रिंशदधिकत्रिशततमोऽध्यायः॥ ३३७॥

॥ भीष्म उवाच॥ ततोऽतीते महाकल्पे उत्पन्नेऽङ्गिरसः सुते। बभूवुर्निर्वृता देवा जाते देवपुरोहिते।
बृहद्ब्रह्म महच्चेति शब्दाः पर्य्यायवाचकाः। एभिः समन्वितो राजन् गुणैर्व्विद्वान् बृहस्पतिः।
तस्य शिष्यो बभूवाग्र्यो राजोपरिचरो वसुः। अधीतवांस्तदा शास्त्रं सम्यक् चित्रशिखण्डिजं।
स राजा भावितः पूर्व्वं दैवेन विधिना वसुः। पालयामास पृथिवीं दिवमाखण्डलो यथा। १२७५५
तस्य यज्ञो महानासीदश्वमेधो महात्मनः। बृहस्पतिरुपाध्यायस्तत्र होता बभूव ह।
प्रजापतिसुताश्चात्र सदस्याश्चाभवंस्त्रयः। एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः।
धनुषाख्योऽथ रैभ्यश्च अर्व्वावसुपरावसू। ऋषिर्मेधातिथिश्चैव ताण्ड्यश्चैव महानृषिः।
ऋषिः शान्तिर्म्महाभागस्तथा वेदशिराश्च यः। ऋषिश्रेष्ठश्च कपिलः शालिहोत्रपिता स्मृतः।

आद्यः कठस्तैत्तिरिश्च वैशम्पायनपूर्व्वजः । कण्वोऽथ देवहोत्रश्च एते षोडश कीर्त्तिताः । १२०६०
सम्भूताः सर्व्वसम्भारास्तस्मिन् राजन् महाक्रतौ । न तत्र पशुघातोऽभूत् स राजैवास्थितोऽभवत् ।
अहिंस्रः शुचिरक्षुद्रो निराशीः सर्व्वसंस्तुतः । आरण्यकपदोद्भूता भागास्तत्रोपकल्पिताः ।
प्रीतस्ततोऽस्य भगवान् देवदेवः पुरातनः । साक्षात्तं दर्शयामास सोऽदृश्योऽन्येन केनचित् ।
स्वयं भागमुपाघ्राय पुरोडाशं गृहीतवान् । अदृश्येन हृतो भागो देवेन हरिमेधसा ।
बृहस्पतिस्ततः क्रुद्धः स्रुचमुद्यम्य वेगितः । आकाशं घ्नन् स्रुचः पातै रोषादश्रूण्यवर्त्तयत् । १२०६५
उवाच चोपरिचरं मया भागोऽयमुद्यतः । ग्राह्यः स्वयं हि देवेन मत्प्रत्यक्षं न संशयः ।
॥ युधिष्ठिर उवाच ॥ उद्यता यज्ञभागा हि साक्षात् प्राप्ताः सुरैरिह । किमर्थमिह न प्राप्तो दर्शनं स हरिर्विभुः ।
॥ भीष्म उवाच ॥ ततः स तं समुद्धूतं भूमिपालो महान् वसुः । प्रसादयामास मुनिं सदस्यास्ते च सर्व्वशः ।
ऊचुश्चैनमसम्भ्रान्तं न रोषं कर्त्तुमर्हसि । नैष धर्म्मः कृतयुगे यस्त्वं रोषमचीकृथाः ।
अरोषणो ह्यसौ देवो यस्य भागोऽयमुद्यतः । न शक्यः स त्वया द्रष्टुमस्माभिर्व्वा बृहस्पते । १२०७०
यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति । एकतद्वितत्रिताश्चोचुस्ततश्चित्रशिखण्डिनः ।
वयं हि ब्रह्मणः पुत्त्रा मानसाः परिकीर्त्तिताः । गता निःश्रेयसार्थं हि कदाचिद्दिशमुत्तरां ।
तप्त्वा वर्षसहस्राणि चरित्वा तप उत्तमं । एकपादास्थिताः सम्यक् काष्ठभूताः समाहिताः ।
मेरोरुत्तरभागे तु क्षीरोदस्यानुकूलतः । स देशो यत्र नस्तप्तं तपः परमदारुणं ।
कथं पश्येम हि वयं देवं नारायणात्मकं । वरेण्यं वरदं तं वै देवदेवं सनातनं । १२०७५
कथं पश्येम हि वयं देवं नारायणं त्विति । अथ व्रतस्यावभृथे वागुवाचाशरीरिणी ।
स्निग्धगम्भीरया वाचा प्रहर्षणकरी विभो । सुतप्तं वस्तपो विप्राः प्रसन्नेनान्तरात्मना ।
यूयं जिज्ञासवो भक्ताः कथं द्रक्ष्यथ तं विभुं । क्षीरोदधेरुत्तरतः श्वेतद्वीपो महाप्रभः ।
तत्र नारायणपरा मानवाश्चन्द्रवर्च्चसः । एकान्तभावोपगतास्ते भक्ताः पुरुषोत्तमं ।
ते सहस्रार्च्चिषं देवं प्रविशन्ति सनातनं । अनिन्द्रिया निराहारा अनिष्पन्दाः सुगन्धिनः । १२०८०
एकान्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः । गच्छध्वं तत्र मुनयस्तत्रात्मा मे प्रकाशितः ।
अथ श्रुत्वा वयं सर्व्वे वाचं तामशरीरिणीं । यथाख्यातेन मार्गेण तं देशं प्रतिपेदिरे ।
प्राप्य श्वेतं महाद्वीपं तच्चित्तास्तद्दिदृक्षवः । ततोऽस्मद्दृष्टिविषयस्तदा प्रतिहतोऽभवत् ।
न च पश्याम पुरुषं तत्तेजोहृतदर्शनाः । ततो नः प्रादुरभवद्विज्ञानं देवयोगजं ।
न किलातप्ततपसा शक्यते द्रष्टुमञ्जसा । ततः पुनर्व्वर्षशतं तप्त्वा तात्कालिकं महत् । १२०८५
व्रतावसाने च शुभान्नरान्ददृशिरे वयं । श्वेतांश्चन्द्रप्रतीकाशान् सर्व्वलक्षणलक्षितान् ।
नित्याञ्जलिकृतान् ब्रह्म जपतः प्रागुदङ्मुखान् । मानसो नाम स जपो जप्यते तैर्महात्मभिः ।
तेनैकाग्रमनस्त्वेन प्रीतो भवति वै हरिः । या भवेन्मुनिशार्दूल भाः सूर्य्यस्य युगक्षये ।
एकैकस्य प्रभा तादृक् साभवन्मानवस्य ह । तेजोनिवासः स द्वीप इति वै मेनिरे वयं ।

न तत्राभ्यधिकः कश्चित् सर्व्वे ते समतेजसः। अथ सूर्य्यसहस्रस्य प्रभां युगपदुत्थितां। १२७९०
सहसा दृष्टवन्तः स्म पुनरेव वृहस्पते। सहिताश्चाभ्यधावन्त ततस्ते मानवा द्रुतं।
कृताञ्जलिपुटा हृष्टा नम इत्येव वादिनः। ततो हि वदतां तेषामश्रौष्म विपुलं ध्वनिं।
बलिः किलोपक्रियते तस्य देवस्य तैर्नरैः। वयन्तु तेजसा तस्य सहसा हृतचेतसः।
न किञ्चिदपि पश्यामो हतचक्षुर्बलेन्द्रियाः। एकस्तु शब्दो विततः श्रुतोऽस्माभिरुदीरितः।
जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन। नमस्तेऽस्तु हृषीकेश महापुरुषपूर्व्वज। १२७९५
इति शब्दः श्रुतोऽस्माभिः शिक्षाक्षरसमन्वितः। एतस्मिन्नन्तरे वायुः सर्व्वगन्धवहः शुचिः
दिव्यान्युवाह पुष्पाणि कर्म्मण्याश्चौषधीस्तथा। तैरिष्टः पञ्चकालज्ञैर्हरिरेकान्तिभिर्नरैः।
भक्त्या परमया युक्तैर्मनोवाक्कर्म्मभिस्तदा। नूनन्तत्रागतो देवो यथा तैर्वागुदीरिता।
वयन्त्वेनं न पश्यामो मोहितास्तस्य मायया। मारुते सन्निवृत्ते च बलौ च प्रतिपादिते।
चिन्ताव्याकुलितात्मानो जाताः स्मोऽङ्गिरसाम्बर। मानवानां सहस्रेषु तेषु वै शुद्धयोनिषु। १२८००
अस्मान्न कश्चिन्मनसा चक्षुषा वाप्यपूजयत्। तेऽपि स्वस्था मुनिगणा एकभावमनुव्रताः।
नास्मासु दधिरे भावं ब्रह्मभावमनुष्ठिताः। ततोऽस्मान् सुपरिश्रान्तांस्तपसा चातिकर्शितान्।
उवाच खस्थं किमपि भूतं तत्राशरीरकं।
॥ देव उवाच ॥ द्रष्टारः पुरुषाः श्वेताः सर्व्वेन्द्रियविवर्ज्जिताः। दृष्टो भवति देवेश एभिर्दृष्टैर्द्विजोत्तमैः।
गच्छध्वं मुनयः सर्व्वे यथागतमितोऽचिरात्। न स शक्यस्त्वभक्तेन द्रष्टुं देवः कथञ्चन। १२८०५
कामं कालेन महता एकान्तित्वमुपागतैः। शक्यो द्रष्टुं स भगवान् प्रभामण्डलदुर्दृशः।
महत्कार्य्यञ्च कर्त्तव्यं युष्माभिर्द्विजसत्तमाः। इतः कृतयुगेऽतीते विपर्य्यासङ्गतेऽपि च।
वैवस्वतेऽन्तरे विप्राः प्राप्ते त्रेतायुगे पुनः। सुराणां कार्य्यसिद्ध्यर्थं सहाया वै भविष्यथ।
ततस्तदद्भुतं वाक्यं निशम्यैवामृतोपमं। तस्य प्रसादात् प्राप्ताः स्मो देशमीप्सितमञ्जसा।
एवं सुतपसा चैव हव्यकव्यैस्तथैव च। देवोऽस्माभिर्न दृष्टः स कथं त्वं द्रष्टुमर्हसि। १२८१०
नारायणो महद्भूतं विश्वसृग्घव्यकव्यभुक्। अनादिनिधनोऽव्यक्तो देवदानवपूजितः।
एवमेकतवाक्येन द्वितत्रितमतेन च। अनुनीतः सदस्यैश्च वृहस्पतिरुदारधीः।
समानयत्ततो यज्ञं दैवतं समपूजयत्। समाप्तयज्ञो राजापि प्रजाः पालितवान् वसुः।
ब्रह्मशापाद्दिवो भ्रष्टः प्रविवेश महीं ततः। स राजा राजशार्द्दूल सत्यधर्म्मपरायणः।
अन्तर्भूमिगतश्चैव सततं धर्म्मवत्सलः। नारायणपरो भूत्वा नारायणजपं जपन्। १२८१५
तस्यैव च प्रसादेन पुनरेवोत्थितस्तु सः। महीतलाद्गतः स्थानं ब्रह्मणः समनन्तरं।
परां गतिमनुप्राप्त इति नैष्ठिकमञ्जसा।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये अष्टत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३८ ॥
॥ युधिष्ठिर उवाच ॥ यदा भागवतोऽत्यर्थमासीद्राजा महान् वसुः। किमर्थं स परिभ्रष्टो विवेश विवरं भुवः।

॥ भीष्म उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। ऋषीणाञ्चैव संवादं त्रिदशानाञ्च भारत।
अजेन यष्टव्यमिति प्राहुर्देवा द्विजोत्तमान्। स च च्छागोऽप्यजो ज्ञेयो नान्यः पशुरिति स्थितिः। १२८२०
॥ ऋषय ऊचुः ॥ बीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः। अजसंज्ञानि बीजानि च्छागं नो हन्तुमर्हथ।
नैष धर्म्मः सतां देवा यत्र वध्येत वै पशुः। इदं कृतयुगं श्रेष्ठं कथं वध्येत वै पशुः।
॥ भीष्म उवाच ॥ तेषां संवदतामेवमृषीणां विबुधैः सह। मार्गागतो नृपश्रेष्ठस्तं देशं प्राप्तवान् वसुः।
अन्तरीक्षचरः श्रीमान् समग्रबलवाहनः। तं दृष्ट्वा सहसायान्तं वसुं ते त्वन्तरीक्षगं।
ऊचुर्द्विजातयो देवानेष च्छेत्स्यति संशयं। यज्वा दानपतिः श्रेष्ठः सर्व्वभूतहितप्रियः। १२८२५
कथंस्विदन्यथा ब्रूयादेव वाक्यं महान् वसुः। एवं ते संविदं कृत्वा विबुधा ऋषयस्तथा।
अपृच्छन् सहसाभ्येत्य वसुं राजानमन्तिकात्। भो राजन् केन यष्टव्यमजेनाहोस्विदौषधैः।
एतन्नः संशयं छिन्धि प्रमाणं नो भवान्मतः। स तान् कृताञ्जलिर्भूत्वा परिपप्रच्छ वै वसुः।
कस्य वैको मतः कामो ब्रूत सत्यं द्विजोत्तमाः।
॥ ऋषय ऊचुः ॥ धान्यैर्यष्टव्यमित्येव पक्षोऽस्माकं नराधिप। देवानान्तु पशुः पक्षो मतो राजन् वदस्व नः। १२८३०
॥ भीष्म उवाच ॥ देवानान्तु मतं ज्ञात्वा वसुना पक्षसंश्रयात्। छागेनाजेन यष्टव्यमेवमुक्तं वचस्तदा।
कुपितास्ते ततः सर्व्वे मुनयः सूर्य्यवर्च्चसः। ऊचुर्व्वसुं विमानस्थं देवपक्षार्थवादिनं।
सुरपक्षो गृहीतस्ते यस्मात्तस्माद्दिवः पत। अद्यप्रभृति ते राजन्नाकाशे विहिता गतिः।
अस्मच्छापाभिघातेन महीं भित्त्वा प्रवेक्ष्यसि। ततस्तस्मिन्मुहूर्त्तेऽथ राजोपरिचरस्तदा।
अधो वै सम्बभूवाशु भूमेर्व्विवरगो नृप। स्मृतिस्त्वेवं न विजहौ तदा नारायणाज्ञया। १२८३५
देवास्तु सहिताः सर्व्वे वसोः शापविमोक्षणं। चिन्तयामासुरव्यग्राः सुकृतं हि नृपस्य तत्।
अनेनास्मत्कृते राज्ञा शापः प्राप्तो महात्मना। अस्य प्रतिप्रियं कार्य्यं सहितैर्नो दिवौकसः।
इति बुद्ध्या व्यवस्याशु गत्वा निश्चयमीश्वराः। ऊचुः संहृष्टमनसो राजोपरिचरन्तदा।
ब्रह्मण्यदेवभक्तस्त्वं सुरासुरगुरुर्हरिः। कामं स तव तुष्टात्मा कुर्य्याच्छापविमोक्षणं।
मानना तु द्विजातीनां कर्त्तव्या वै महात्मनां। अवश्यं तपसा तेषां फलितव्यं नृपोत्तम। १२८४०
यतस्त्वं सहसा भ्रष्ट आकाशान्मेदिनीतलं। एकन्त्वनुग्रहं तुभ्यं दद्मो वै नृपसत्तम।
यावत्त्वं शापदोषेण कालमासिष्यसेऽनघ। भूमेर्व्विवरगो भूत्वा तावत्त्वं कालमाप्स्यसि।
यज्ञेषु सुहुतं विप्रैर्व्वसोर्द्धारां समाहितैः। प्राप्स्यसेऽस्मदनुध्यानान्मा च त्वां ग्लानिरस्पृशत्।
न क्षुत्पिपासे राजेन्द्र भूमेश्छिद्रे भविष्यतः। वसोर्द्धाराभिपीतत्वात्तेजसाप्यायितेन च।
स देवोऽस्मद्वरात् प्रीतो ब्रह्मलोकं हि नेष्यति। एवं दत्त्वा वरं राज्ञे सर्व्वे ते च दिवौकसः। १२८४५
गताः स्वभवनं देवा ऋषयश्च तपोधनाः। चक्रे वसुस्ततः पूजां विष्वक्सेनाय भारत।
जप्यं जगौ च सततं नारायणमुखोद्गतं। तत्रापि पञ्चभिर्यज्ञैः पञ्चकालानरिन्दम।
अयजद्धरिं सुरपतिं भूमेर्व्विवरगोऽपि सन्। ततोऽस्य तुष्टो भगवान् भक्त्या नारायणो हरिः।

अनन्यभक्तस्य सततन्तत्परस्य जितात्मनः । वरदो भगवान् विष्णुः समीपस्थं द्विजोत्तमं ।
गरुत्मन्तं महावेगमाबभाषेप्सितं तदा । द्विजोत्तम महाभाग पश्यतां वचनान्मम । १२८५०
सम्राड्राजा वसुर्नाम धर्म्मात्मा संशितव्रतः । ब्राह्मणानां प्रकोपेन प्रविष्टो वसुधातलं ।
मानितास्ते तु विप्रेन्द्रास्त्वन्तु गच्छ द्विजोत्तम । भूमेर्विवरसंगुप्तं गरुडेह ममाज्ञया ।
अधश्चरं नृपश्रेष्ठं खेचरं कुरु मा चिरं । गरुत्मानथ विक्षिप्य पक्षौ मारुतवेगवान् ।
विवेश विवरं भूमेर्यत्रास्ते पार्थिवो वसुः । तत एनं समुत्क्षिप्य सहसा विनतासुतः ।
उत्पपात नभस्तूर्णं तत्र चैनममुञ्चत । तस्मिन्मुहूर्त्ते संजज्ञे राजोपरिचरः पुनः । १२८५५
सशरीरो गतश्चैव ब्रह्मलोकं नृपोत्तमः । एवन्तेनापि कौन्तेय वाग्दोषाद्देवताज्ञया ।
प्राप्ता गतिरधस्तात्तु द्विजशापान्महात्मना । केवलं पुरुषस्तेन सेवितो हरिरीश्वरः ।
ततः शीघ्रं जहौ शापं ब्रह्मलोकमवाप च ।
॥ भीष्म उवाच ॥ एतत्ते सर्व्वमाख्यातं सम्भूता मानवा यथा । नारदोऽपि यथा श्वेतं द्वीपं स गतवानृषिः ।
तत्ते सर्व्वं प्रवक्ष्यामि शृणुष्वैकमना नृप । १२८६०
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये ऊनचत्वारिंशदधिकत्रिशततोऽध्यायः ॥ ३३९ ॥
॥ भीष्म उवाच ॥ प्राप्य श्वेतं महाद्वीपं नारदो भगवानृषिः । ददर्श तानेव नरान् श्वेतांश्चन्द्रसमप्रभान् ।
पूजयामास शिरसा मनसा तैश्च पूजितः । दिदृक्षुर्जप्यपरमः सर्व्वकृच्छ्रगतः स्थितः ।
भूत्वैकाग्रमना विप्र ऊर्द्ध्वबाहुः समाहितः । स्तोत्रं जगौ स विश्वाय निर्गुणाय गुणात्मने ।

॥ नारद उवाच ॥ नमस्ते देवदेवेश निष्क्रिय निर्गुण लोकसाक्षिन् क्षेत्रज्ञ पुरुषोत्तम अनन्त पुरुष महापुरुष पुरुषोत्तम त्रिगुणप्रधान अमृत अमृताख्य अनन्ताख्य व्योम सनातन सदसद्व्यक्ताव्यक्त ऋतधामन् आदिदेव वसुप्रद प्रजापते सुप्रजापते वनस्पते महाप्रजापते ऊर्ज्जस्पते वाचस्पते जगत्पते मनस्पते दिवस्पते मरुत्पते सलिलपते पृथिवीपते दिक्पते पूर्व्वनिवास गुह्य ब्रह्मपुरोहित ब्रह्मकायिक महाराजिक चातुर्महाराजिक आभासुर महाभासुर सप्तमहाभाग याम्य महायाम्य संज्ञासंज्ञ तुषित महातुषित प्रमर्द्दन परिनिर्म्मित अपरिनिर्म्मित वशवर्त्तिन् अपरिनिन्दित अपरिमित वशवर्त्तिन् अवशवर्त्तिन् यज्ञ महायज्ञ यज्ञसम्भव यज्ञयोने यज्ञगर्भ यज्ञहृदय यज्ञस्तुत यज्ञभागहर पञ्चयज्ञ पञ्चकालकर्त्तृपते पञ्चरात्रिक वैकुण्ठ अपराजित मानसिक नामनामिक परस्वामिन् सुस्नात हंस परमहंस महाहंस परमयाज्ञिक साङ्ख्ययोग साङ्ख्यमूर्त्ते अमृतेशय हिरण्येशय देवेशय कुशेशय ब्रह्मेशय पद्मेशय विश्वेश्वर विष्वक्सेन त्वं जगदन्वयः त्वं जगत्प्रकृतिः तवाग्निरास्यं वडवामुखोऽग्निः त्वमाहुतिः सारथिः त्वं वषट्कारः त्वं ओङ्कारः त्वं तपः त्वं मनः त्वं चन्द्रमाः त्वं चक्षुराज्यं त्वं सूर्य्यस्त्वं दिशां गजस्त्वं दिग्भानो विदिग्भानो हयशिरः प्रथमत्रिसौपर्णः वर्णधर पञ्चाग्ने त्रिणाचिकेत षडङ्गनिधान प्राग्ज्योतिषज्येष्ठ सामग सांशितव्रतधर अथर्व्वशिराः पञ्चमहाकल्प फेनपाचार्य्य वालखिल्य वैखानस अभग्नयोग अभग्नपरिसंख्यान युगादे युगमध्य युगनिधन आखण्डल प्राचीनगर्भ कौशिक पुरुष्टुत पुरुहूत विश्वकृत् विश्वरूप अनन्तगते अनन्तभोग अनन्त अनादे अमध्य अव्यक्त अव्यक्तनिधन व्रतावास समुद्राधिवास यशोवास तपोवास दयावास लक्ष्म्यावास विद्यावास कीर्त्त्यावास श्रीवास सर्व्वावास वासुदेव सर्व्वच्छन्दक हरिहय हरिमेध महायज्ञ भागहर वरप्रद सुखप्रद धनप्रद हरिमेध यमनियम महानियम कृच्छ्र अतिकृच्छ्र

महालक्ष्य सर्व्वलक्ष्य नियमधर निवृत्तभ्रम प्रवचन गतप्रवृत्त वेदक्रिय अज सर्व्वगते सर्व्वदर्शिन् अग्राह्य अचल महाविभूते माहात्म्यशरीर पवित्र महापवित्र हिरण्मय बृहत् अप्रतर्क्य अविज्ञेय ब्रह्माग्र्य प्रजासर्गकर प्रजानिधनकर महामायाधर चित्रशिखण्डिन् वरप्रद पुरोडाशभागहर गताध्वर छिन्नतृष्ण छिन्नसंशय सर्व्वतोवृत्त निवृत्तरूप ब्राह्मणरूप ब्राह्मणप्रिय विश्वमूर्त्ते महामूर्त्ते बान्धव भक्तवत्सल ब्रह्मण्यदेव भक्तोऽहं त्वां दिदृक्षुरेकान्तदर्शनाय नमो नमः॥

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये महापुरुषस्तवे चत्वारिंशदधिकत्रिशततमोऽध्यायः॥ ३४० ॥

॥ भीष्म उवाच ॥ एवं स्तुतः स भगवान् गुह्यैस्तथ्यैश्च नामभिः। तं मुनिं दर्शयामास नारदं विश्वरूपधृक्। १२८६५

किञ्चिच्चन्द्राद्विशुद्धात्मा किञ्चिच्चन्द्राद्विशेषवान्। कृशानुवर्णः किञ्चिच्च किञ्चिद्धिष्ण्याकृतिः प्रभुः।

शुकपत्रनिभः किञ्चित् किञ्चित् स्फटिकसन्निभः। नीलाञ्जनचयप्रख्यो जातरूपप्रभः क्वचित्।

प्रवालाङ्कुरवर्णश्च श्वेतवर्णस्तथा क्वचित्। क्वचित् सुवर्णवर्णाभो वैदूर्य्यसदृशः क्वचित्।

नीलवैदूर्य्यसदृशः इन्द्रनीलनिभः क्वचित्। मयूरग्रीववर्णाभो मुक्ताहारनिभः क्वचित्।

एतान् बहुविधान् वर्णान् रूपैर्बिभ्रत् सनातनः। सहस्रनयनः श्रीमान् शतशीर्षः सहस्रपात्। १२८७०

सहस्रोदरबाहुश्च अव्यक्त इति च क्वचित्। ओङ्कारमुद्गिरन् वक्त्रात् सावित्रीञ्च तदन्वयां।

शेषेभ्यश्चैव वक्त्रेभ्यश्चतुर्वेदान् गिरन् बहून्। आरण्यकं जगौ देवो हरिर्नारायणो वशी।

वेदीं कमण्डलुं शुभ्रान् मणीनुपानहौ कुशान्। अजिनं दण्डकाष्ठञ्च ज्वलितञ्च हुताशनं।

धारयामास देवेशो हस्तैर्यज्ञपतिस्तदा। तं प्रसन्नं प्रसन्नात्मा नारदो द्विजसत्तमः।

वाग्यतः प्रणतो भूत्वा ववन्दे परमेश्वरं। तमुवाच नतं मूर्द्ध्ना देवानामादिरव्ययः। १२८७५

॥ श्रीभगवानुवाच ॥ एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः। इमं देशमनुप्राप्ता मम दर्शनलालसाः।

न च मां ते ददृशिरे न च द्रक्ष्यति कश्चन। ऋते ह्येकान्तिकश्रेष्ठात्त्वञ्चैवैकान्तिकोत्तमः।

ममैतास्तनवः श्रेष्ठा जाता धर्म्मगृहे द्विज। तास्त्वं भजस्व सततं साधयस्व यथागतं।

वृणीष्व च वरं विप्र मत्तस्त्वं यदिहेच्छसि। प्रसन्नोऽहं तवाद्येह विश्वमूर्त्तिरिहाव्ययः।

॥ नारद उवाच ॥ अद्य मे तपसो देव यमस्य नियमस्य च। सद्यः फलमवाप्तं वै दृष्टो यद्भगवान्मया। १२८८०

वर एष ममात्यन्तं दृष्टस्त्वं यत्सनातनः। भगवन् विश्वदृक् सिंहः सर्व्वमूर्त्तिर्महान् प्रभुः।

॥ भीष्म उवाच ॥ एवं सन्दर्शयित्वा तु नारदं परमेष्ठिनं। उवाच वचनं भूयो गच्छ नारद मा चिरं।

इमे ह्यनिन्द्रियाहारा मद्भक्ताश्चन्द्रवर्च्चसः। एकाग्राश्चिन्तयेयुर्मां नैषां विघ्नो भवेदिति।

सिद्धा ह्येते महाभागाः पुरा ह्येकान्तिनोऽभवन्। तमोरजोभिर्निर्मुक्ता मां प्रवेक्ष्यन्त्यसंशयं।

न दृश्यश्चक्षुषा योऽसौ न स्पृश्यः स्पर्शनेन च। न घ्रेयश्चैव गन्धेन रसेन च विवर्ज्जितः। १२८८५

सत्त्वं रजस्तमश्चैव न गुणास्तं भजन्ति वै। यश्च सर्व्वगतः साक्षी लोकस्यात्मेति कथ्यते।

भूतग्रामशरीरेषु नश्यत्सु न विनश्यति। अजो नित्यः शाश्वतश्च निर्गुणो निष्कलस्तथा।

द्विर्द्वादशेभ्यस्तत्त्वेभ्यः ख्यातो यः पञ्चविंशकः। पुरुषो निष्क्रियश्चैव ज्ञानदृश्यश्च कथ्यते।

यं प्रविश्य भवन्तीह मुक्ता वै द्विजसत्तमाः। स वासुदेवो विज्ञेयः परमात्मा सनातनः।

पश्य देवस्य माहात्म्यं महिमानञ्च नारद । शुभाशुभैः कर्म्मभिर्यो न लिप्यति कदाचन । १२८९०
सत्त्वं रजस्तमश्चेति गुणानेतान् प्रचक्षते । एते सर्व्वशरीरेषु तिष्ठन्ति विचरन्ति च ।
एतान् गुणांस्तु क्षेत्रज्ञो भुङ्क्ते नैभिः स भुज्यते । निर्गुणो गुणभुक् चैव गुणस्रष्टा गुणाधिकः ।
जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते । ज्योतिष्यापः प्रलीयन्ते ज्योतिर्व्वायौ प्रलीयते ।
खे वायुः प्रलयं याति मनस्याकाशमेव च । मनो हि परमं भूतं तदव्यक्ते प्रलीयते ।
अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये सम्प्रलीयते । नास्ति तस्मात् परतरः पुरुषाद्वै सनातनात् । १२८९५
नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमं । ऋते तमेकं पुरुषं वासुदेवं सनातनं ।
सर्व्वभूतात्मभूतो हि वासुदेवो महाबलः । पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं ।
ते समेता महात्मानः शरीरमिति संज्ञितं । तदा विशति यो ब्रह्मन्नदृश्यो लघुविक्रमः ।
उत्पन्न एव भवति शरीरं चेष्टयन् प्रभुः । न विना धातुसंघातं शरीरं भवति क्वचित् ।
न च जीवं विना ब्रह्मन् वायवश्चेष्टयन्त्युत । स जीवः परिसङ्ख्यातः शेषः सङ्कर्षणः प्रभुः । १२९००
तस्मात् सनत्कुमारत्वं यो लभेत स्वेन कर्म्मणा । यस्मिंश्च सर्व्वभूतानि प्रलयं यान्ति संक्षये ।
स मनः सर्व्वभूतानां प्रद्युम्नः परिपठ्यते । तस्मात् प्रसूतो यः कर्त्ता कारणं कार्य्यमेव च ।
तस्मात् सर्व्वं सम्भवति जगत् स्थावरजङ्गमं । सोऽनिरुद्धः स ईशानो व्यक्तः स सर्व्वकर्म्मसु ।
यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः । ज्ञेयः स एव राजेन्द्र जीवः सङ्कर्षणः प्रभुः ।
सङ्कर्षणाच्च प्रद्युम्नो मनोभूतः स उच्यते । प्रद्युम्नाद्योऽनिरुद्धस्तु सोऽहङ्कारः स ईश्वरः । १२९०५
मत्तः सर्व्वं सम्भवति जगत् स्थावरजङ्गमं । अक्षरञ्च क्षरञ्चैव सच्चासच्चैव नारद ।
मां प्रविश्य भवन्तीह मुक्ता भक्तास्तु ये मम । अहं हि पुरुषो ज्ञेयो निष्क्रियः पञ्चविंशकः ।
निर्गुणो निष्कलश्चैव निर्द्वन्द्वो निष्परिग्रहः । एतत्त्वया न विज्ञेयं रूपवानिति दृश्यते ।
इच्छन्मुहूर्त्तान्नश्येयमीशोऽहं जगतो गुरुः । माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।
सर्व्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि । मयैतत् कथितं सम्यक् तव मूर्त्तिचतुष्टयं । १२९१०
अहं हि जीवसंज्ञातो मयि जीवः समाहितः । नैवं ते बुद्धिरत्राभूद्दृष्टो जीवो मयेति वै ।
अहं सर्व्वत्रगो ब्रह्मन् भूतग्रामान्तरात्मकः । भूतग्रामशरीरेषु नश्यत्सु न नशाम्यहं ।
सिद्धा हि ते महाभागा नरा ह्येकान्तिनोऽभवन् । तमोरजोभ्यां निर्मुक्ताः प्रवेक्ष्यन्ति च मां मुने ।
हिरण्यगर्भो लोकादिश्चतुर्व्वक्त्रो निरुक्तगः । ब्रह्मा सनातनो देवो मम बह्वर्थचिन्तकः ।
ललाटाच्चैव मे रुद्रो देवक्रोधाद्विनिःसृतः । पश्यैकादश मे रुद्रान् दक्षिणं पार्श्वमास्थितान् । १२९१५
द्वादशैव तथादित्यान् वामपार्श्वे समास्थितान् । अग्रतश्चैव मे पश्य वसूनष्टौ सुरोत्तमान् ।
नासत्यञ्चैव दस्रञ्च भिषजौ पश्य पृष्ठतः । सर्व्वान् प्रजापतीन् पश्य पश्य सप्त ऋषींस्तथा ।
वेदान् यज्ञांश्च शतशः पश्यामृतमथौषधीः । तपांसि नियमांश्चैव यमानपि पृथग्विधान् ।
तथाष्टगुणमैश्वर्य्यमेकस्थं पश्य मूर्त्तिमत् । श्रियं लक्ष्मीञ्च कीर्त्तिञ्च पृथिवीञ्च ककुद्मिनीं ।

वेदानां मातरं पश्य मत्स्थां देवीं सरस्वतीं। ध्रुवञ्च ज्योतिषां श्रेष्ठं पश्य नारद खेचरं। १२९६०
अम्भोधरान् समुद्रांश्च सरांसि सरितस्तथा। मूर्त्तिमतः पितृगणांश्चतुरः पश्य सत्तम।
त्रींश्चैवेमान् गुणान् पश्य मत्स्थान् मूर्त्तिविवर्ज्जितान्। देवकार्य्यादपि मुने पितृकार्य्यं विशिष्यते।
देवानाञ्च पितृणाञ्च पिता ह्येकोऽहमादितः। अहं हयशिरा भूत्वा समुद्रे पश्चिमोत्तरे।
पिबामि सुहुतं हव्यं कव्यञ्च श्रद्धयान्वितं। मया सृष्टः पुरा ब्रह्मा मां यज्ञमयजत् स्वयं।
ततस्तस्मिन् वरान् प्रीतो दत्तवानस्म्यनुत्तमान्। मत्पुत्त्रत्वञ्च कल्पादौ लोकाध्यक्षत्वमेव च। १२९६५
अहङ्कारकृतञ्चैव नामपर्य्यायवाचकं। त्वया कृताञ्च मर्य्यादां नातिक्रंस्यति कश्चन।
त्वञ्चैव वरदो ब्रह्मन् वरेप्सूनां भविष्यसि। सुरासुरगणानाञ्च ऋषीणाञ्च तपोधन।
पितृणाञ्च महाभाग सततं संशितव्रत। विविधानाञ्च भूतानां त्वमुपास्यो भविष्यसि।
प्रादुर्भावगतश्चाहं सुरकार्य्येषु नित्यदा। अनुशास्यस्त्वया ब्रह्मन्नियोज्यश्च सुतो यथा।
एतांश्चान्यांश्च रुचिरान् ब्रह्मणेऽमिततेजसे। अहं दत्त्वा वरान् प्रीतो निवृत्तिपरमोऽभवं। १२९७०
निर्व्वाणं सर्व्वधर्म्माणां निवृत्तिः परमा स्मृता। तस्मान्निवृत्तिमापन्नश्चरेत् सर्व्वाङ्गनिर्वृतः।
विद्यासहायवन्तञ्च आदित्यस्थं समाहितं। कपिलं प्राहुराचार्य्याः साङ्ख्यनिश्चितनिश्चयाः।
हिरण्यगर्भो भगवानेष छन्दसि सुष्टुतः। सोऽहं योगरतिर्ब्रह्मन् योगशास्त्रेषु शब्दितः।
एषोऽहं व्यक्तिमागत्य तिष्ठामि दिवि शाश्वतः। ततो युगसहस्रान्ते संहरिष्ये जगत्पुनः।
कृत्वा मत्स्थानि भूतानि स्थावराणि चराणि च। एकाकी विद्यया सार्द्धं विहरिष्ये जगत्पुनः। १२९७५
ततो भूयो जगत् सर्व्वं करिष्यामीह विद्यया। अस्मन्मूर्त्तिश्चतुर्थी या साऽसृजच्छेषमव्ययं।
स हि सङ्कर्षणः प्रोक्तः प्रद्युम्नं सोऽप्यजीजनत्। प्रद्युम्नादनिरुद्धोऽहं सर्गो मम पुनः पुनः।
अनिरुद्धात्तथा ब्रह्मा तन्नाभिकमलोद्भवः। ब्रह्मणः सर्व्वभूतानि चराणि स्थावराणि च।
एतां सृष्टिं विजानीहि कल्पादिषु पुनः पुनः। यथा सूर्य्यस्य गगनादुदयास्तमने इह।
नष्टे पुनर्ब्बलात् काल आनयत्यमितद्युतिः। तथा बलादहं पृथ्वीं सर्व्वभूतहिताय वै। १२९८०
सत्त्वैराक्रान्तसर्व्वाङ्गीं नष्टां सागरमेखलां। आनयिष्यामि स्वस्थानं वाराहं रूपमास्थितः।
हिरण्याक्षं वधिष्यामि दैतेयं बलगर्व्वितं। नारसिंहं वपुः कृत्वा हिरण्यकशिपुं पुनः।
सुरकार्य्ये हनिष्यामि यज्ञघ्नं दितिनन्दनं। विरोचनस्य बलवान् बलिः पुत्त्रो महासुरः।
अवध्यः सर्व्वलोकानां सदेवासुररक्षसां। भविष्यति स शक्रञ्च स्वराज्याच्च्यावयिष्यति।
त्रैलोक्येऽपहृते तेन विमुखे च शचीपतौ। अदित्यां द्वादशादित्यः सम्भविष्यामि कश्यपात्। १२९८५
ततो राज्यं प्रदास्यामि शक्रायामिततेजसे। देवताः स्थापयिष्यामि स्वेषु स्थानेषु नारद।
बलिञ्चैव करिष्यामि पातालतलवासिनं। दानवञ्च बलिं श्रेष्ठमवध्यं सर्व्वदैवतैः।
त्रेतायुगे भविष्यामि रामो भृगुकुलोद्वहः। क्षत्त्रञ्चोत्सादयिष्यामि समृद्धबलवाहनः।
सन्ध्यांशे समनुप्राप्ते त्रेतायां द्वापरस्य च। अहं दाशरथी रामो भविष्यामि जगत्पतिः।

त्रितोपघाताद्वैरूप्यमेकतोऽथ द्वितस्तथा । प्राप्स्यते वानरत्वं हि प्रजापतिसुतावृषी । १२९५०
तयोर्ये त्वन्वये जाता भविष्यन्ति वनौकसः । महाबला महावीर्य्याः शक्रतुल्यपराक्रमाः ।
ते सहाया भविष्यन्ति सुरकार्य्ये मम द्विज । ततो रक्षःपतिं घोरं पुलस्त्यकुलपांसनं ।
हनिष्ये रावणं रौद्रं सगणं लोककण्टकं । द्वापरस्य कलेश्चैव सन्धौ पर्य्यवसानिके ।
प्रादुर्भावः कंसहेतोर्म्मथुरायां भविष्यति । तत्राहं दानवान् हत्वा सुबहून् देवकण्टकान् ।
कुशस्थलीं करिष्यामि निवेशं द्वारकां पुरीं । वसानस्तत्र वै पुर्य्यामदितेर्व्विप्रियङ्करं । १२९५५
हनिष्ये नरकं भौमं मरुं पीठञ्च दानवं । प्राग्ज्योतिषं पुरं रम्यं नानाधनसमन्वितं ।
कुशस्थलीं नयिष्यामि हत्वा वै दानवोत्तमं । महेश्वरमहासेनौ बाणप्रियहितैषिणौ ।
पराजेष्याम्यथोद्युक्तौ देवलोकनमस्कृतौ । ततः सुतं बलेर्ज्जित्वा बाणं बाहुसहस्रिणं ।
विनाशयिष्यामि ततः सर्व्वान् सौभनिवासिनः । यः कालयवनः ख्यातो गार्ग्यतेजोऽभिसंभृतः ।
भविष्यति बधस्तस्य मत्त एव द्विजोत्तम । जरासन्धश्च बलवान् सर्व्वराजविरोधनः । १२९६०
भविष्यत्यसुरः स्फीतो भूमिपालो गिरिव्रजे । मम बुद्धिपरिस्पन्दाद्बधस्तस्य भविष्यति ।
शिशुपालं बधिष्यामि यज्ञे धर्म्मसुतस्य वै । समागतेषु बलिषु पृथिव्यां सर्व्वराजसु ।
वासविः सुसहायो वै मम ह्येको भविष्यति । युधिष्ठिरं स्थापयिष्ये स्वराज्ये भ्रातृभिः सह ।
एवं लोका वदिष्यन्ति नरनारायणावृषी । उद्युक्तौ दहतः क्षत्रं लोककार्य्यार्थमीश्वरौ ।
कृत्वा भारावतरणं वसुधाया यथेप्सितं । सर्व्वसात्वतमुख्यानां द्वारकायाश्च सत्तम । १२९६५
करिष्ये प्रलयं घोरमात्मज्ञातिविनाशकं । कर्म्माण्यपरिमेयाणि चतुर्मूर्त्तिधरो ह्यहं ।
कृत्वा लोकान् गमिष्यामि स्वानहं ब्रह्मसत्कृतान् । हंसः कूर्म्मश्च मत्स्यश्च प्रादुर्भावा द्विजोत्तम ।
वाराहो नरसिंहश्च वामनो राम एव च । रामो दाशरथिश्चैव सात्वतः कल्किरेव च ।
यदा वेदश्रुतिर्नष्टा मया प्रत्याहृता पुनः । सवेदाः सश्रुतीकाश्च कृताः पूर्व्वं कृते युगे ।
अतिक्रान्ताः पुराणेषु श्रुतास्ते यदि वा क्वचित् । अतिक्रान्ताश्च बहवः प्रादुर्भावा ममोत्तमाः । १२९७०
लोककार्य्याणि कृत्वा च पुनः स्वां प्रकृतिं गताः । न ह्येतद्ब्रह्मणा प्राप्तमीदृशं मम दर्शनं ।
यत्त्वया प्राप्तमद्येह एकान्तगतबुद्धिना । एतत्ते सर्व्वमाख्यातं ब्रह्मन् भक्तिमतो मया ।
पुराणञ्च भविष्यञ्च सरहस्यञ्च सत्तम ।
॥ भीष्म उवाच ॥ एवं स भगवान्देवो विश्वमूर्त्तिधरोऽव्ययः । एतावदुक्त्वा वचनं तत्रैवान्तर्दधे पुनः ।
नारदोऽपि महातेजाः प्राप्यानुग्रहमीप्सितं । नरनारायणौ द्रष्टुं बदर्य्याश्रममाद्रवत् । १२९७५
इदं महोपनिषदं चतुर्व्वेदसमन्वितं । साङ्ख्ययोगकृतं तेन पञ्चरात्रानुशब्दितं ।
नारायणमुखोद्गीतं नारदोऽश्रावयत् पुनः । ब्रह्मणः सदने तात यथा दृष्टं यथा श्रुतं ।
॥ युधिष्ठिर उवाच ॥ एतदाश्चर्य्यभूतं हि माहात्म्यं तस्य धीमतः । किं वै ब्रह्मा न जानीते यतः शुश्राव नारदात् ।

पितामहोऽपि भगवांस्तस्माद्देवादनन्तरः । कथं स न विजानीयात् प्रभावममितौजसः ।
|| भीष्म उवाच || महाकल्पसहस्राणि महाकल्पशतानि च । समतीतानि राजेन्द्र सर्गाश्च प्रलयाश्च ह ।　　१२९८०
सर्गस्यादौ स्मृतो ब्रह्मा प्रजासर्गकरः प्रभुः । जानाति देवप्रवरं भूयश्चातोऽधिकं नृप ।
परमात्मानमीशानमात्मनः प्रभवं तथा । ये त्वन्ये ब्रह्मसदने सिद्धसङ्घाः समागताः ।
तेभ्यस्तच्छ्रावयामास पुराणं वेदसम्मितं । तेषां सकाशात् सूर्य्यस्तु श्रुत्वा वै भावितात्मनां ।
आत्मानुगामिनां राजन् श्रावयामास वै ततः । षट्षष्टिर्हि सहस्राणि ऋषीणां भावितात्मनां ।
सूर्य्यस्य तपतो लोकान्निर्म्मिता ये पुरःसराः । तेषामकथयत् सूर्य्यः सर्व्वेषां भावितात्मनां ।　　१२९८५
सूर्य्यानुगामिभिस्तात ऋषिभिस्तैर्महात्मभिः । मेरौ समागता देवाः श्राविताश्चेदमुत्तमं ।
देवानान्तु सकाशाद्वै ततः श्रुत्वासितो द्विजः । श्रावयामास राजेन्द्र पितॄणां मुनिसत्तमः ।
मम चापि पिता तात कथयामास शान्तनुः । ततो मयापि श्रुत्वा च कीर्त्तितं तव भारत ।
सुरैर्व्वा मुनिभिर्व्वापि पुराणं यैरिदं श्रुतं । सर्व्वे ते परमात्मानं पूजयन्ति समन्ततः ।
इदमाख्यानमार्षेयं पारम्पर्य्यागतं नृप । नावासुदेवभक्ताय त्वया देयं कथञ्चन ।　　१२९९०
मत्तोऽन्यानि च ते राजन्नुपाख्यानशतानि वै । यानि श्रुतानि सर्व्वाणि तेषां सारोऽयमुद्धृतः ।
सुरासुरैर्यथा राजन्निर्मथ्यामृतमुद्धृतं । एवमेतत् पुरा विप्रैः कथामृतमिहोद्धृतं ।
यश्चेदं पठते नित्यं यश्चेदं शृणुयान्नरः । एकान्तभावोपगत एकान्तेषु समाहितः ।
प्राप्य श्वेतं महाद्वीपं भूत्वा चन्द्रप्रभो नरः । स सहस्रार्च्चिषं देवं प्रविशेन्नात्र संशयः ।
मुच्येदार्त्तस्तथा रोगाच्छ्रुत्वेमामादितः कथां । जिज्ञासुर्लभते कामान् भक्तो भक्तगतिं व्रजेत् ।　　१२९९५
त्वयापि सततं राजन्नभ्यर्च्च्यः पुरुषोत्तमः । स हि माता पिता चैव कृत्स्नस्य जगतो गुरुः ।
ब्रह्मण्यदेवो भगवान् प्रीयतां ते सनातनः । युधिष्ठिर महाबाहो महाबाहुर्जनार्द्दनः ।
|| वैशम्पायन उवाच || श्रुत्वैतदाख्यानवरं धर्म्मराड्जनमेजय । भ्रातरश्चास्य ते सर्व्वे नारायणपराभवन् ।
जितं भगवता तेन पुरुषेणेति भारत । नित्यं जपपरा भूत्वा सरस्वतीमुदीरयन् ।
यो ह्यस्माकं गुरुः श्रेष्ठः कृष्णद्वैपायनो मुनिः । स जगौ परमं जप्यं नारायणमुदीरयन् ।　　१३०००
गत्वान्तरीक्षात् सततं क्षीरोदममृताशयं । पूजयित्वा च देवेशं पुनरायात् स्वमाश्रमं ।
|| भीष्म उवाच || एतत्ते सर्व्वमाख्यातं नारदोक्तं मयेरितं । पारम्पर्य्यागतं ह्येतत् पित्रा मे कथितं पुरा ।
|| सूतउवाच || एतत्ते सर्व्वमाख्यातं वैशम्पायनकीर्त्तितं । जनमेजयेन तत् श्रुत्वा कृतं सम्यग्यथाविधि ।
यूयं हि तप्ततपसः सर्व्वे च चरितव्रताः । सर्व्वे वेदविदो मुख्या नैमिषारण्यवासिनः ।
शौनकस्य महासत्रं प्राप्ताः सर्व्वे द्विजोत्तमाः । यजध्वं सुहुतैर्यज्ञैः शाश्वतं परमेश्वरं ।　　१३००५
पारम्पर्य्यागतं ह्येतत् पित्रा मे कथितं पुरा ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये एकचत्वारिंशदधिकत्रिशततमोऽध्यायः || ३४१ ||
|| शौनक उवाच || कथं स भगवान् देवो यज्ञेष्वग्रहरः प्रभुः । यज्ञधारी च सततं वेदवेदाङ्गवित्तथा ।

निवृत्तश्चास्थितोधर्म्मे क्षमी भागवतः प्रभुः । निवृत्तिधर्म्मान् विदधे स एव भगवान् प्रभुः ।
कथं प्रवृत्तिधर्म्मेषु भागार्हा देवताः कृताः । कथं निवृत्तिधर्म्माश्च कृता व्यावृत्तबुद्धयः ।
एतन्नः संशयं सूत छिन्धि गुह्यं सनातनं । त्वया नारायणकथाः श्रुता वै धर्म्मसंहिताः । १३०१०
॥ सौतिरुवाच ॥ जनमेजयेन यत् पृष्टः शिष्यो व्यासस्य धीमतः । तत्तेऽहं कथयिष्यामि पौराणां शौनकोत्तम ।
श्रुत्वा माहात्म्यमेतस्य देहिनां परमात्मनः । जनमेजयो महाप्राज्ञो वैशम्पायनमब्रवीत् ।
॥ जनमेजय उवाच ॥ इमे सब्रह्मका लोकाः ससुरासुरमानवाः । क्रियास्वभ्युदयोक्तासु सक्ता दृश्यन्ति सर्व्वशः ।
मोक्षश्चोक्तस्त्वया ब्रह्मन्निर्व्वाणं परमं सुखं । ये तु मुक्ता भवन्तीह पुण्यपापविवर्ज्जिताः ।
ते सहस्रार्च्चिषं देवं प्रविशन्तीह शुश्रुम । अयं हि दुरनुष्ठेयो मोक्षधर्म्मः सनातनः । १३०१५
यं हित्वा देवताः सर्व्वा हव्यकव्यभुजोऽभवन् । किञ्च ब्रह्मा च रुद्रश्च शक्रश्च बलभित् प्रभुः ।
सूर्य्यस्ताराधिपो वायुरग्निर्व्वरुण एव च । आकाशं जगती चैव ये च शेषा दिवौकसः ।
प्रलयं न विजानन्ति आत्मनः परिनिर्म्मितं । ततस्तेनास्थिता मार्गं ध्रुवमक्षरमव्ययं ।
स्मृतिं कालपरीमाणं प्रवृत्तिं ये समास्थिताः । दोषः कालपरीमाणे महानेष क्रियावतां ।
एतन्मे संशयं विप्र हृदि शल्यमिवार्पितं । छिन्धीतिहासकथनात् परं कौतूहलं हि मे । १३०२०
कथं भागहराः प्रोक्ता देवताः क्रतुषु द्विज । किमर्थञ्चाध्वरे ब्रह्मन्निज्यन्ते त्रिदिवौकसः ।
ये च भागं प्रगृह्णन्ति यज्ञेषु द्विजसत्तम । ते यजन्तो महायज्ञैः कस्य भागं ददन्ति वै ।
॥ वैशम्पायन उवाच ॥ अहो गूढतमः प्रश्नस्त्वया पृष्टो जनेश्वर । नातप्ततपसा ह्येष नावेदविदुषा तथा ।
नापुराणविदा चैव शक्यो व्याहर्त्तुमञ्जसा । हन्त ते कथयिष्यामि यन्मे पृष्टः पुरा गुरुः ।
कृष्णद्वैपायनो व्यासो वेदव्यासो महानृषिः । सुमन्तुर्जैमिनिश्चैव पैलश्च सुदृढव्रतः । १३०२५
अहञ्चतुर्थः शिष्यो वै पञ्चमश्च शुकः स्मृतः । एतान् समागतान् सर्व्वान् पञ्च शिष्यान्दमान्वितान् ।
शौचाचारसमायुक्तान् जितक्रोधान् जितेन्द्रियान् । वेदानध्यापयामास महाभारतपञ्चमान् ।
मेरौ गिरिवरे रम्ये सिद्धचारणसेविते । तेषामभ्यस्यतां वेदान् कदाचित् संशयोऽभवत् ।
एष वै यस्त्वया पृष्टस्तेन तेषां प्रकीर्त्तितः । ततः श्रुतो मया चापि तवाख्येयोऽद्य भारत ।
शिष्याणां वचनं श्रुत्वा सर्व्वाज्ञानतमोनुदः । पराशरसुतः श्रीमान् व्यासो वाक्यमथाब्रवीत् । १३०३०
मया हि सुमहत्तप्तं तपः परमदारुणं । भूतं भव्यं भविष्यच्च जानीयामिति सत्तमाः ।
तस्य मे तप्ततपसो निगृहीतेन्द्रियस्य च । नारायणप्रसादेन क्षीरोदस्यानुकूलतः ।
त्रैकालिकमिदं ज्ञानं प्रादुर्भूतं तथेप्सितं । तत् शृणुध्वं यथान्यायं वक्ष्ये संशयमुत्तमं ।
यथावृत्तं हि कल्पादौ दृष्टं मे ज्ञानचक्षुषा । परमात्मेति यं प्राहुः सांख्या योगविदो जनाः ।
महापुरुषसंज्ञां स लभते स्वेन कर्म्मणा । तस्मात् प्रसूतमव्यक्तं प्रधानं तं विदुर्बुधाः । १३०३५
अव्यक्ताद्व्यक्तमुत्पन्नं लोकसृष्ट्यर्थमीश्वरात् । अनिरुद्धो हि लोकेषु महानात्मेति कथ्यते ।
योऽसौ व्यक्तत्वमापन्नो निर्म्ममे च पितामहं । सोऽहङ्कार इति प्रोक्तः सर्व्वतेजोमयो हि सः ।

पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं। अहङ्कारप्रसूतानि महाभूतानि पञ्चधा।
महाभूतानि सृष्ट्वैव तान् गुणान्निर्ममे पुनः। भूतेभ्यश्चैव निष्पन्ना मूर्त्तिमन्तश्च तान् शृणु।
मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः। वशिष्ठश्च महात्मा वै मनुः स्वायम्भुवस्तथा। १३०३०
ज्ञेयाः प्रकृतयोऽष्टौ ता यासु लोकाः प्रतिष्ठिताः। वेदवेदाङ्गसंयुक्तान् यज्ञान् यज्ञाङ्गसंयुतान्।
निर्म्ममे लोकसिद्ध्यर्थं ब्रह्मा लोकपितामहः। अष्टाभ्यः प्रकृतिभ्यश्च जातं विश्वमिदं जगत्।
रुद्रो रोषात्मको जातो दशान्यान् सोऽसृजत् स्वयं। एकादशैते रुद्रास्तु विकाराः पुरुषाः स्मृताः।
ते रुद्राः प्रकृतिश्चैव सर्व्वे चैव सुरर्षयः। उत्पन्ना लोकसिद्ध्यर्थं ब्रह्माणं समुपस्थिताः।
वयं सृष्टा हि भगवंस्त्वया च प्रभविष्णुना। येन यस्मिन्नधीकारे वर्त्तितव्यं पितामह। १३०३५
योऽसौ त्वयाभिनिर्द्दिष्टो ह्यधिकारोऽर्थचिन्तकः। परिपाल्यः कथं तेन साहङ्कारेण कर्त्तृणा।
प्रदिशस्व बलन्तस्य योऽधिकारार्थचिन्तकः। एवमुक्तो महादेवो देवांस्तानिदमब्रवीत्।
॥ ब्रह्मोवाच ॥ साध्वहं ज्ञापितो देवा युष्माभिर्भद्रमस्तु वः। ममाप्येषा समुत्पन्ना चिन्ता या भवतां गता।
लोकत्रयस्य कृत्स्नस्य कथं कार्य्यः परिग्रहः। कथं बलक्षयो न स्याद् युष्माकं ह्यात्मनश्च मे।
इतः सर्व्वेऽपि गच्छामः शरणं लोकसाक्षिणं। महापुरुषमव्यक्तं स नो वक्ष्यति यद्धितं। १३०४०
ततस्ते ब्रह्मणा सार्द्धमृषयो विबुधास्तथा। क्षीरोदस्योत्तरं कूलं जग्मुर्लोकहितार्थिनः।
ते तपः समुपातिष्ठन् ब्रह्मोक्तं वेदकल्पितं। स महानियमो नाम तपश्चर्य्या सुदारुणा।
ऊर्द्ध्वा दृष्टिर्ब्बाहवश्च एकाग्रञ्च मनोऽभवत्। एकपादाः स्थिताः सर्व्वे काष्ठभूताः समाहिताः।
दिव्यं वर्षसहस्रन्ते तपस्तप्त्वा सुदारुणं। शुश्रुवुर्म्मधुरां वाणीं वेदवेदाङ्गभूषितां।
॥ श्रीभगवानुवाच ॥ भो भोः सब्रह्मका देवा ऋषयश्च तपोधनाः। स्वागतेनार्च्च्य वः सर्व्वान् श्रावये वाक्यमुत्तमं। १३०४५
विज्ञातं वो मया कार्य्यं तच्च लोकहितं महत्। प्रवृत्तियुक्तं कर्त्तव्यं युष्मत्प्राणोपबृंहणं।
सुतप्तञ्च तपो देवा ममाराधनकाम्यया। भोक्ष्यथास्य महासत्त्वास्तपसः फलमुत्तमं।
एष ब्रह्मा लोकगुरुर्म्महाल्लोकपितामहः। यूयञ्च विबुधश्रेष्ठा मां यजध्वं समाहिताः।
सर्व्वे भागान् कल्पयध्वं यज्ञेषु मम नित्यशः। तथा श्रेयोऽभिधास्यामि यथाधीकारमीश्वराः।
॥ वैशम्पायन उवाच ॥ श्रुत्वैतद्देवदेवस्य वाक्यं हृष्टतनूरुहाः। ततस्ते विबुधाः सर्व्वे ब्रह्मा ते च महर्षयः। १३०५०
वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन्। तस्मिन् सत्रे सदा ब्रह्मा स्वयं भागमकल्पयत्।
देवा देवर्षयश्चैवं स्वं स्वं भागमकल्पयन्। ते कार्त्तयुगधर्म्माणो भागाः परमसत्कृताः।
प्रापुरादित्यवर्णं तं पुरुषं तमसः परं। बृहन्तं सर्व्वगं देवमीशानं वरदं प्रभुं।
ततोऽथ वरदो देवस्तान् सर्व्वानमरान् स्थितान्। अशरीरो बभाषेदं वाक्यं खस्थो महेश्वरः।
येन यः कल्पितो भागः स तथा मामुपागतः। प्रीतोऽहं प्रदिशाम्यद्य फलमावृत्तिलक्षणं। १३०५५
एतद्वो लक्षणं देवा मत्प्रसादसमुद्भवं। स्वयं यज्ञैर्यजमानाः समाप्तवरदक्षिणैः।
युगे युगे भविष्यध्वं प्रवृत्तिफलभागिनः। यज्ञैर्ये चापि यक्ष्यन्ति सर्व्वलोकेषु वै सुराः।

कल्पयिष्यन्ति वो भागांस्ते नरा वेदकल्पितान् । यो मे यथा कल्पितवान् भागमस्मिन्महाक्रतौ ।
स तथा यज्ञभागार्हो वेदसूत्रे मया कृतः । यूयं लोकान् भावयध्वं यज्ञभागफलोचिताः ।
सर्व्वार्थचिन्तका लोके यथाधीकारनिर्म्मिताः । याः क्रियाः प्रचरिष्यन्ति प्रवृत्तिफलसत्कृताः । १३०७०
ताभिराप्यायितबला लोकान् वै धारयिष्यथ । यूयं हि भाविता यज्ञैः सर्व्वे यज्ञेषु मानवैः ।
मां ततो भावयिष्यध्वमेषा वो भावना मम । इत्यर्थं निर्म्मिता वेदा यज्ञाश्चौषधिभिः सह ।
एभिः सम्यक्प्रयुक्तैर्हि प्रीयन्ते देवताः क्षितौ । निर्म्माणमेतद्युष्माकं प्रवृत्तिगुणकल्पितं ।
मया कृतं सुरश्रेष्ठ यावत्कल्पक्षयादिह । चिन्तयध्वं लोकहितं यथाधीकारमीश्वराः ।
मरीचिरङ्गिरास्त्रात्रिः पुलस्त्यः पुलहः क्रतुः । वशिष्ठ इति सप्तैते मानसा निर्म्मिता हि ते । १३०७५
एते वेदविदो मुख्या वेदाचार्य्याश्च कल्पिताः । प्रवृत्तिधर्म्मिणश्चैव प्राजापत्ये च कल्पिताः ।
अयं क्रियावतां पन्था व्यक्तीभूतः सनातनः । अनिरुद्ध इति प्रोक्तो लोकसर्गकरः प्रभुः ।
सनः सनत्सुजातश्च सनकः ससनन्दनः । सनत्कुमारः कपिलः सप्तमश्च सनातनः ।
सप्तैते मानसाः प्रोक्ता ऋषयो ब्रह्मणः सुताः । स्वयमागतविज्ञाना निवृत्तिं धर्म्ममास्थिताः ।
एते योगविदो मुख्याः साङ्ख्यज्ञानविशारदाः । आचार्य्या धर्म्मशास्त्रेषु मोक्षधर्म्मप्रवर्त्तकाः । १३०८०
यतोऽहं प्रसृतः पूर्व्वमव्यक्तत्रिगुणो महान् । तस्मात् परतरो योऽसौ क्षेत्रज्ञ इति कल्पितः ।
सोऽहं क्रियावतां पन्थाः पुनरावृत्तिदुर्लभः । यो यथा निर्म्मितो जन्तुर्यस्मिन् यस्मिंश्च कर्म्मणि ।
प्रवृत्तौ वा निवृत्तौ वा तत्फलं सोऽश्नुते महत् । एष लोकगुरुर्ब्रह्मा जगदादिकरः प्रभुः ।
एष माता पिता चैव युष्माकञ्च पितामहः । मयानुशिष्टो भविता सर्व्वभूतवरप्रदः ।
अस्य चैवात्मजो रुद्रो ललाटाद्यः समुत्थितः । ब्रह्मानुशिष्टो भविता सर्व्वभूतधरः प्रभुः । १३०८५
गच्छध्वं स्वानधीकारांश्चिन्तयध्वं यथाविधि । प्रवर्त्तन्तां क्रियाः सर्व्वाः सर्व्वलोकेषु मा चिरं ।
प्रदृश्यन्ताञ्च कर्म्माणि प्राणिनां गतयस्तथा । परिनिष्ठितकालानि आयूंषीह सुरोत्तमाः ।
इदं कृतयुगं नाम कालः श्रेष्ठः प्रवर्त्तितः । अहिंस्या यज्ञपशवो युगेऽस्मिन्न तदन्यथा ।
चतुष्पात् सकलो धर्म्मो भविष्यत्यत्र वै सुराः । ततस्त्रेतायुगं नाम त्रयी यत्र भविष्यति ।
प्रोक्षिता यत्र पशवो वधं प्राप्स्यन्ति वै मखे । यत्र पादश्चतुर्थो वै धर्म्मस्य न भविष्यति । १३०९०
ततो वै द्वापरं नाम मिश्रः कालो भविष्यति । द्विपादहीनो धर्म्मश्च युगे तस्मिन् भविष्यति ।
ततस्तिष्येऽथ सम्प्राप्ते युगे कलिपुरस्कृते । एकपादस्थितो धर्म्मो यत्र तत्र भविष्यति ।
देवा देवर्षयश्चोचुस्तमेवंवादिनं गुरुं । एकपादस्थिते धर्म्मे यत्र क्वचन गामिनि ।
कथं कर्त्तव्यमस्माभिर्भगवंस्तद्वदस्व नः ।

॥ श्रीभगवानुवाच ॥ यत्र वेदाश्च यज्ञाश्च तपः सत्यं दमस्तथा । अहिंसा धर्म्मसंयुक्ताः प्रचरेयुः सुरोत्तमाः । १३०९१
स वो देशः सेवितव्यो मा वोऽधर्म्मः पदा स्पृशेत् ।

॥ व्यास उवाच ॥ तेऽनुशिष्टा भगवता देवाः सर्षिगणास्तथा । नमस्कृत्वा भगवते जग्मुर्देशान् यथेप्सितान् ।

गतेषु त्रिदिवौकःसु ब्रह्मा लोकपितामहः । दिदृक्षुर्भगवन्तन्तमनिरुद्धतनौ स्थितं ।
तं देवो दर्शयामास कृत्वा हयशिरो महत् । साङ्गानावर्त्तयन् वेदान् कमण्डलुत्रिदण्डधृक् ।
॥ व्यास उवाच ॥ ततोऽश्वशिरसं दृष्ट्वा तं देवममितौजसं । लोककर्त्ता प्रभुर्ब्रह्मा लोकानां हितकाम्यया । १३१००
मूर्द्ध्ना प्रणम्य वरदं तस्थौ प्राञ्जलिरग्रतः । स परिष्वज्य देवेन वचनं श्रावितस्तदा ।
॥ श्रीभगवानुवाच ॥ लोककार्य्यगतीः सर्व्वास्त्वं चिन्तय यथाविधि । धाता त्वं सर्व्वभूतानां त्वं प्रभुर्जगतो गुरुः ।
त्वय्यावेशितभारोऽहं धृतिं प्राप्स्याम्यथाञ्जसा । यदा च सुरकार्य्यन्ते अविषह्यं भविष्यति ।
प्रादुर्भावं गमिष्यामि तदात्मज्ञानदेशिकं । एवमुक्त्वा हयशिरास्तत्रैवान्तरधीयत ।
तेनानुशिष्टो ब्रह्मापि स्वं लोकमचिरादगतः । एवमेष महाभाग पद्मनाभः सनातनः । १३१०५
यज्ञेष्वग्रहरः प्रोक्तो यज्ञधारी च नित्यदा । निवृत्तिञ्चास्थितो धर्म्मं गतिमक्षयधर्म्मिणां ।
प्रवृत्तिधर्म्मान् विदधे कृत्वा लोकस्य चित्रतां ।
स आदिः स मध्यः सचान्तः प्रजानां स धाता स धेयः स कर्त्ता स कार्य्यं । युगान्ते प्रसुप्तः सुसंक्षिप्य लोकान् युगादौ प्रबुद्धो जगत्युत्ससर्ज्ज ।
तस्मै नमध्वं देवाय निर्गुणाय महात्मने । अजाय विश्वरूपाय धाम्ने सर्व्वदिवौकसां ।
महाभूताधिपतये रुद्राणाम्पतये तथा । आदित्यपतये चैव वसूनां पतये तथा । १३११०
अश्विभ्यां पतये चैव मरुतां पतये तथा । वेदयज्ञाधिपतये वेदाङ्गपतयेऽपि च ।
समुद्रवासिने नित्यं हरये मुञ्जकेशिने । शान्ताय सर्व्वभूतानां मोक्षधर्म्मानुभाषिणे ।
तपसान्तेजसाञ्चैव पतये यशसामपि । वचसां पतये नित्यं सरितां पतये तथा ।
कपर्द्दिने वराहाय एकशृङ्गाय धीमते । विवस्वतेऽश्वशिरसे चतुर्मूर्त्तिधृते सदा ।
गुह्याय ज्ञानदृश्याय अक्षराय क्षराय च । एष देवः सञ्चरति सर्व्वत्र गतिरव्ययः । १३११५
एष चैतत् परं ब्रह्म ज्ञेयो विज्ञानचक्षुषा । एवमेतत् पुरा दृष्टं मया वै ज्ञानचक्षुषा ।
कथितं तच्च वै सर्व्वं मया पृष्टेन तत्त्वतः । क्रियतां मद्वचः शिष्याः सेव्यतां हरिरीश्वरः ।
गीयतां वेदशब्दैश्च पूज्यताञ्च यथाविधि ।
॥ वैशम्पायन उवाच ॥ इत्युक्तास्तु वयन्तेन वेदव्यासेन धीमता । सर्व्वे शिष्याः सुतश्चास्य शुकः परमधर्म्मवित् ।
स चास्माकमुपाध्यायः सहास्माभिर्व्विशाम्पते । चतुर्व्वेदोद्गताभिस्तमृग्भिः समभितुष्टुवे । १३१२०
एतत्ते सर्व्वमाख्यातं यन्मां त्वं परिपृच्छसि । एवं मेऽकथयद्राजन् पुरा द्वैपायनो गुरुः ।
यश्चेदं शृणुयान्नित्यं यश्चैनं परिकीर्त्तयेत् । नमो भगवते कृत्वा समाहितमतिर्नरः ।
भवत्यरोगो मतिमान् बलरूपसमन्वितः । आतुरो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
कामान् कामी लभेत् कामं दीर्घमायुरवाप्नुयात् । ब्राह्मणः सर्व्ववेदी स्यात् क्षत्त्रियो विजयी भवेत् ।
वैश्यो विपुललाभः स्यात् शूद्रः सुखमवाप्नुयात् । अपुत्त्रो लभते पुत्त्रं कन्या चैवेप्सितं पतिं । १३१२५
लग्नगर्भा विमुच्येत गर्भिणी जनयेत् सुतं । बन्ध्या प्रसवमाप्नोति पुत्त्रपौत्त्रसमृद्धिमत् ।

क्षेमेण गच्छेदध्वानमिदं यः पठते पथि । यो यं कामं कामयते स तमाप्नोति च ध्रुवं ।
इदं महर्षेर्व्वचनं विनिश्चितं महात्मनः पुरुषवरस्य कीर्त्तितं । समागमञ्चर्षिदिवौकसामिमं निशम्य भक्ताः सुसुखं लभन्ते ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये द्विचत्वारिंशदधिकत्रिशततोऽध्यायः ॥ ३४२ ॥

॥ जनमेजय उवाच ॥ अस्तौषीद्यैरिदं व्यासः सशिष्यो मधुसूदनं । नामभिर्व्विविधैरेषां निरुक्तं भगवन्मम ।
वक्तुमर्हसि शुश्रूषोः प्रजापतिपतेर्हरेः । श्रुत्वा भवेयं यत्पूतः शरच्चन्द्र इवामलः । १३१२०
॥ वैशम्पायन उवाच ॥ शृणु राजन् यथाचष्ट फाल्गुनस्य हरिः प्रभुः । प्रसन्नात्मात्मनो नाम्नां निरुक्तं गुणकर्म्मजं ।
नामभिः कीर्त्तितैस्तस्य केशवस्य महात्मनः । पृष्टवान् केशवं राजन् फाल्गुनः परवीरहा ।
॥ अर्ज्जुन उवाच ॥ भगवन् भूतभव्येश सर्व्वभूतसृगव्यय । लोकधाम जगन्नाथ लोकानामभयप्रद ।
यानि नामानि ते देव कीर्त्तितानि महर्षिभिः । वेदेषु सपुराणेषु यानि गुह्यानि कर्म्मभिः ।
तेषां निरुक्तं त्वत्तोऽहं श्रोतुमिच्छामि केशव । नह्यन्यो वर्णयेन्नाम्नां निरुक्तं त्वामृते प्रभो । १३१२५
॥ श्रीभगवानुवाच ॥ ऋग्वेदे स यजुर्व्वेदे तथैवाथर्व्वसामसु । पुराणे सोपनिषदे तथैव ज्योतिषेऽर्ज्जुन ।
साङ्ख्ये च योगशास्त्रे च आयुर्व्वेदे तथैव च । बहूनि मम नामानि कीर्त्तितानि महर्षिभिः ।
गौणानि तत्र नामानि कर्म्मजानि च कानिचित् । निरुक्तं कर्म्मजानां त्वं शृणुष्व प्रयतोऽनघ ।
कथ्यमानं मया तात त्वं हि मेऽर्द्धं स्मृतः पुरा । नमोऽतियशसे तस्मै देहिनां परमात्मने ।
नारायणाय विश्वाय निर्गुणाय गुणात्मने । यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसम्भवः । १३१३०
योऽसौ योनिर्हि सर्व्वस्य स्थावरस्य चरस्य च । अष्टादशगुणं यत्तत् सत्त्वं सत्त्ववतांवर ।
प्रकृतिः सा परा मह्यं रोदसी योगधारिणी । ऋता सत्यामराजय्या लोकानामात्मसंस्थिता ।
तस्मात् सर्व्वाः प्रवर्त्तन्ते सर्गप्रलयविक्रियाः । तपो यज्ञश्च यष्टा च पुराणः पुरुषो विराट् ।
अनिरुद्ध इति प्रोक्तो लोकानां प्रभवाव्ययः । ब्राह्मे रात्रिक्षये प्राप्ते तस्य ह्यमिततेजसः ।
प्रसादात् प्रादुरभवत् पद्मं पद्मनिभेक्षण । ततो ब्रह्मा समभवत् स तस्यैव प्रसादजः । १३१३५
अह्नः क्षये ललाटाच्च सुतो देवस्य वै तथा । क्रोधाविष्टस्य संजज्ञे रुद्रः संहारकारकः ।
एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजावुभौ । तदादेशितपन्थानौ सृष्टिसंहारकारकौ ।
निमित्तमात्रं तावत्र सर्व्वप्राणिवरप्रदौ । कपर्द्दी जटिलो मुण्डः श्मशानगृहसेवकः ।
उग्रव्रतधरो रुद्रो योगी परमदारुणः । दक्षक्रतुहरश्चैव भगनेत्रहरस्तथा ।
नारायणात्मको ज्ञेयः पाण्डवेय युगे युगे । तस्मिन् हि पूज्यमाने वै देवदेवे महेश्वरे । १३१४०
सम्पूजितो भवेत् पार्थ देवो नारायणः प्रभुः । अहमात्मा हि लोकानां विश्वेषां पाण्डुनन्दन ।
तस्मादात्मानमेवाग्रे रुद्रं संपूजयाम्यहं । यद्यहं नार्च्चयेयं वै ईशानं वरदं शिवं ।
आत्मानं नार्च्चयेत् कश्चिदिति मे भावितात्मनः । मया प्रमाणं हि कृतं लोकः समनुवर्त्तते ।
प्रमाणानि हि पूज्यानि ततस्तं पूजयाम्यहं । यस्तं वेत्ति स मां वेत्ति यो नु तं स हि मामनु ।
रुद्रो नारायणश्चैव सत्त्वमेकं द्विधाकृतं । लोके चरति कौन्तेय व्यक्तिस्थं सर्व्वकर्म्मसु । १३१४५

न हि मे केनचिद्देयो वरः पाण्डवनन्दन। इति सञ्चिन्त्य मनसा पुराणं रुद्रमीश्वरं।
पुत्रार्थमाराधितवानहमात्मानमात्मना। न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय च।
ऋत आत्मानमेवेति ततो रुद्रं भजाम्यहं। सब्रह्मकाः सरुद्राश्च सेन्द्रा देवाः महर्षिभिः।
अर्च्चयन्ति सुरश्रेष्ठं देवं नारायणं हरिं। भविष्यतां वर्त्तताञ्च भूतानाञ्चैव भारत।
सर्व्वेषामग्रणीर्व्विष्णुः सेव्यः पूज्यश्च नित्यशः। नमस्व हव्यदं विष्णुं तथा शरणदं नमः। १३१६०
वरदं नमस्व कौन्तेय हव्यकव्यभुजं नमः। चतुर्व्विधा मम जना भक्ता एव हि मे श्रुतं।
तेषामेकान्तिनः श्रेष्ठा ये चैवानन्यदेवताः। अहमेव गतिस्तेषां निराशीः कर्म्मकारिणां।
ये च शिष्टास्त्रयो भक्ताः फलकामा हि मे मताः। सर्व्वे च्यवनधर्म्मास्ते प्रतिबुद्धस्तु श्रेष्ठभाक्।
ब्रह्माणं शितिकण्ठञ्च याश्चान्या देवताः स्मृताः। प्रबुद्धचर्य्याः सेवन्तो मामेवैष्यन्ति यत् परं।
भक्तं प्रति विशेषस्ते एष पार्थानुकीर्त्तितः। त्वञ्चैवाहञ्च कौन्तेय नरनारायणौ स्मृतौ। १३१६५
भारावतरणार्थन्तु प्रविष्टौ मानुषीं तनुं। जानाम्यध्यात्मयोगांश्च योऽहं यस्माच्च भारत।
निवृत्तिलक्षणो धर्म्मस्तथाभ्युदयिकोऽपि च। नराणामयनं ख्यातमहमेकः सनातनः।
आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं मम तत्पूर्व्वमतो नारायणो ह्यहं।
छादयामि जगद्विश्वं भूत्वा सूर्य्य इवांशुभिः। सर्व्वभूताधिवासश्च वासुदेवस्ततो ह्यहं।
गतिश्च सर्व्वभूतानां प्रजनश्चापि भारत। व्याप्ता मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम। १३१७०
अधिभूतानि चान्तेषु तदिच्छंश्चास्मि भारत। क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः।
दमात् सिद्धिं परीप्सन्तो मां जनाः कामयन्ति ह। दिवञ्चोर्व्वीञ्च मध्यञ्च तस्माद्दामोदरो ह्यहं।
पृश्निरित्युच्यते चान्नं वेदा आपो मृतं तथा। ममैतानि सदा गर्भः पृश्निगर्भस्ततो ह्यहं।
ऋषयः प्राहुरेवं मां त्रितं कूपनिपातितं। पृश्निगर्भ त्रितं पाहीत्येकतद्वितपातितं।
ततः स ब्रह्मणः पुत्र आद्यो ह्यृषिवरस्त्रितः। उत्ततारोदपानाद्वै पृश्निगर्भानुकीर्त्तनात्। १३१७५
सूर्य्यस्य तपतो लोकानग्नेः सोमस्य चाप्युत। अंशवो यत् प्रकाशन्ते मम ते केशसंज्ञिताः।
सर्व्वज्ञाः केशवं तस्मान्मामाहुर्द्विजसत्तमाः। सपत्न्यामाहिते गर्भे उतथ्येन महात्मना।
उतथ्येऽन्तर्हिते चैव कदाचिद्देवमायया। बृहस्पतिरथाविन्दत् पत्नीन्तस्य महात्मनः।
ततो वै तमृषिश्रेष्ठं मैथुनोपगतन्तथा। उवाच गर्भः कौन्तेय पञ्चभूतसमन्वितः।
पूर्व्वागतोऽहं वरद नार्हस्यम्बां प्रबाधितुं। एतद्बृहस्पतिः श्रुत्वा चुक्रोध च शशाप च। १३१८०
मैथुनायागतो यस्मात्त्वयाहं विनिवारितः। तस्मादन्धो यास्यसि त्वं मच्छापान्नात्र संशयः।
स शापादृषिमुख्यस्य दीर्घन्तम उपेयिवान्। स हि दीर्घतमा नाम नाम्ना ह्यासीदृषिः पुरा।
वेदानवाप्य चतुरः साङ्गोपाङ्गान् सनातनान्। प्रयोजयामास तदा नाम गुह्यमिदं मम।
आनुपूर्व्व्येण विधिना केशवेति पुनः पुनः। स चक्षुष्मान् समभवद्गौतमश्चाभवत् पुनः।
एवं हि वरदं नाम केशवेति ममार्ज्जुन। देवानामथ सर्व्वेषां ऋषीणाञ्च महात्मनां। १३१८५

अग्निः सोमेन संयुक्त एकयोनित्वमागतः । अग्नीषोममयं तस्माज्जगत् कृत्स्नं चराचरं ।

अपि हि पुराणे भवति एकयोन्यात्मकावग्नीषोमौ देवताश्चाग्निमुखा इति । एकयोनित्वाच्च परस्परमर्हन्तो लोकान्धा रयन्त इति ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये द्विचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४२ ॥

॥ अर्ज्जुन उवाच ॥ अग्नीषोमौ कथं पूर्व्वमेकयोनी प्रवर्त्तितौ । एष मे संशयो जातस्तं छिन्धि मधुसूदन ।

॥ श्रीभगवानुवाच ॥ हन्त ते वर्त्तयिष्यामि पुराणं पाण्डुनन्दन । आत्मतेजोद्भवं पार्थ शृणुष्वैकमना मम ।

सम्प्रक्षालनकालेऽतिक्रान्ते चतुर्युगसहस्रान्ते । अव्यक्ते सर्व्वभूतप्रलये सर्व्वभूतस्थावरजङ्गमे ।　　　१३१९०

ज्योतिर्धरणिवायुरहिते अन्धे तमसि जलैकार्णवे लोके । आप इत्येवं ब्रह्मभूतं संज्ञके ऽद्वितीये प्रतिष्ठिते ।

न वै रात्र्यां न दिवसे न सति नासति न व्यक्ते नचाप्यव्यक्ते व्यवस्थिते । एतस्यामवस्थायां नारायणगुणाश्रयादजरा मरादनिन्द्रियादग्राह्यादसम्भवात् सत्यादहिंस्राल्ललामादिविधप्रवृत्तिविशेषादवैरादक्षयादमरादजरादमूर्त्तितः सर्व्वव्या पिनः सर्व्वकर्त्तुः शाश्वतात्तमसः पुरुषः प्रादुर्भूतो हरिरव्ययः ।

निदर्शनमपि चात्र भवति ॥ नासीदहो न रात्रिरासीन्न सदासीन्नासदासीत्तम एव पुरस्तादभवद्विश्वरूपं । सा विश्व रूपस्य रजनी हि एवमस्यार्थोऽनुभाष्यः ।

तस्येदानीं तमसः सम्भवस्य पुरुषस्य ब्रह्मयोनेर्ब्रह्मणः प्रादुर्भावे स पुरुषः प्रजाः सिसृक्षमाणो नेत्राभ्यामग्नीषोमौ सम्सर्ज्ज। ततो भूतसर्गेषु सृष्टेषु प्रजाः क्रमवशाद्ब्रह्मक्षत्रमुपातिष्ठन् । यः सोमस्तद्ब्रह्म यद्ब्रह्म ते ब्राह्मणाः योऽग्निस्तत् क्षत्रं क्षत्राद्ब्रह्म बल वत्तरं कस्मादिति लोकप्रत्यक्षगुणमेतत् तद्यथा ।

ब्राह्मणेभ्यः परं भूतं नोत्पन्नपूर्व्वं दीप्यमानेऽग्नौ जुहोति यो ब्राह्मणमुखे जुहोतीति कृत्वा ब्रवीमि भूतसर्गः कृतो ब्रह्मणा भूतानि च प्रतिष्ठाप्य त्रैलोक्यं धार्य्यत इति मन्त्रवादोऽपि हि भवति । त्वमग्ने यज्ञानां होता विश्वेषां हितो देवानां मानुषाणाञ्च जगत इति । निदर्शनञ्चात्र भवति विश्वेषामग्ने यज्ञानां त्वं होतेति त्वं हितो देवैर्मनुष्यैर्जगत इति ।　　　१३१९५

अग्निर्हि यज्ञानां होता कर्त्ता स चाग्निर्ब्रह्म । नह्यृते मन्त्राणां हवनमस्ति न विना पुरुषं तपः सम्भवति हविर्मन्त्राणां सम्पूजा विद्यते देवमानुषऋषीणामनेन त्वं होतेति नियुक्तः ।

ये च मानुषहोत्राधिकारास्ते च ब्राह्मणस्य हि याजनं विधीयते न क्षत्रवैश्ययोर्द्विजात्योस्तस्माद्ब्राह्मणा ह्यग्निभूता यज्ञानुद्वहन्ति ।

यज्ञास्ते देवांस्तर्पयन्ति देवाः पृथिवीं भावयन्ति शतपथेऽपि हि ब्राह्मणमुखे भवति ।

अग्नौ समिद्धे स जुहोति यो विद्वान् ब्राह्मणमुखेनाहुतिं जुहोति । एवमप्यग्निभूता ब्राह्मणा विद्वांसोऽग्निं भावयन्ति ।

अग्निर्विष्णुः सर्व्वभूतान्यनुप्रविश्य प्राणानधारयन्तीति । अपि चात्र सनत्कुमारगीताः श्लोका भवन्ति ।　　　१३२००

ब्रह्मा विश्वं सृजत् पूर्व्वं सर्व्वादिर्निरवस्कृतं । ब्रह्मघोषैर्दिवं गच्छन्त्यमरा ब्रह्मयोनयः ।

ब्राह्मणानां मतिर्व्वाक्यं कर्म्मश्रद्धातपांसि च । धारयन्ति महीं द्याञ्च शैत्याद्वागमृतं तथा ।

नास्ति सत्यात् परो धर्म्मो नास्ति मातृसमो गुरुः । ब्राह्मणेभ्यः परं नास्ति प्रेत्य चेह च भूतले ।

नैषामुक्षा वहति नोतवाहा न गर्गरो मथ्यति सम्प्रदाने । अपध्वस्ता दस्युभूता भवन्ति येषां राष्ट्रे ब्राह्मणा वृत्तिहीनाः ।

वेदपुराणेतिहासप्रामाण्यान्नारायणमुखोद्गताः सर्व्वकर्त्तारः सर्व्वभावाश्च ब्राह्मणाश्च वाक्संयमकाले हितस्य वरप्रदस्य देवदेवस्य ब्राह्मणाः प्रथमं प्रादुर्भूता ब्राह्मणेभ्यश्च शेषा वर्णाः प्रादुर्भूता इत्यश्च सुरासुरविशिष्टा ब्राह्मणा य एव मया ब्रह्मभूतेन पुरा स्वयमेवोत्पादिताः सुरासुरमहर्षयः भूतविशेषाः स्थापिता निगृहीताश्च अहल्याधर्षणनिमित्तं हि गौतमाद्धरिश्मश्रुतामिन्द्रः प्राप्तः कौशिकनिमित्तञ्चेन्द्रो मुष्कवियोगं मेषवृषणत्वञ्चावाप ॥　　११२०५

अश्विनोर्ग्रहप्रतिषेधोद्यतवज्रस्य पुरन्दरस्य च्यवनेन स्तम्भितौ बाहू क्रतुवधप्राप्तमन्युना च दक्षेण भूयस्तपसा चात्मानं संयोज्य नेत्राकृतिरन्या ललाटे रुद्रस्योत्पादिता त्रिपुरवधार्थं दीक्षामुपगतस्य रुद्रस्य उशनसा जटाः शिरस उत्कृत्य प्रयुक्ताः ततः प्रादुर्भूता भुजगास्तैरस्य भुजगैः पीड्यमानः कण्ठो नीलतामुपगतः पूर्व्वे च मन्वन्तरे स्वायम्भुवे नारायणहस्तग्रहणान्नीलकण्ठत्वमेव च अमृतोत्पादनपुरश्चरणतामुपगतस्याङ्गिरसो बृहस्पतेरुपस्पृशतो न प्रसादं गतवत्यः किलापः अथ बृहस्पतिरपां चुक्रोध यस्मान्ममोपस्पृशतः कलुषीभूता न च प्रसादमुपगतास्तस्मादद्य प्रभृति झषमकरकच्छपजन्तुभिः कलुषीभवितेति ॥

तदाप्रभृत्यापो यादोभिः सङ्कीर्णाः सम्प्रवृत्ताः । विश्वरूपो हि वै त्वाष्ट्रः पुरोहितो देवानामासीत् ।

स्वस्रीयोऽसुराणां स प्रत्यक्षं देवेभ्यो भागमदात् परोक्षमसुरेभ्यः अथ हिरण्यकशिपुं पुरस्कृत्य विश्वरूपमातरं स्वसारमसुरा वरमयाचन्त ।

हे स्वसः अयन्ते पुत्रस्त्वाष्ट्रो विश्वरूपस्त्रिशिरा देवानां पुरोहितः प्रत्यक्षं देवेभ्यो भागमदात् परोक्षमस्माकं ततो देवा वर्द्धन्ते वयं क्षीयामस्तदेनं त्वं वारयितुमर्हसि तथा यथास्मान् भजेदिति अथ विश्वरूपं नन्दनवनमुपगतं माता उवाच पुत्र किं परपक्षवर्द्धनस्त्वं मातुलपक्षं नाशयसि नार्हस्येवं कर्त्तुमिति स विश्वरूपो मातुर्व्वाक्यमनतिक्रमणीयमिति मत्वा सम्पूज्य हिरण्यकशिपुमगात् हैरण्यगर्भाच्च वशिष्ठाद्धिरण्यकशिपुः शापं प्राप्तवान् ।

यस्मात्त्वयान्यो वृतो होता तस्मादसमाप्तयज्ञस्त्वमपूर्व्वात् सत्त्वजाताद्वधं प्राप्स्यसीति तच्छापदानाद्धिरण्यकशिपुः प्राप्तवान् वधं ॥　　११२१०

अथ विश्वरूपो मातृपक्षवर्द्धनोऽत्यर्थं तपस्यभवत्तस्य व्रतभङ्गार्थमिन्द्रो बह्वीः श्रीमत्यो ऽप्सरसो नियोजिताश्च दृष्ट्वा मनः क्षुभितं तस्याभवत् तासु चाप्सरःसु न चिरादेव सक्तोऽभवत् सक्तञ्चैनं ज्ञात्वा अप्सरस ऊचुः ॥ गच्छामहे वयं यथागतमिति तास्त्वाष्ट्र उवाच क्व गमिष्यथास्यतां तावन्मया सह श्रेयो भविष्यतीति तास्तमब्रुवन् वयं देवस्त्रियोऽप्सरसः इन्द्रं देवं वरदं पुराप्रभविष्णुं वृणीमह इति अथ ता विश्वरूपोऽब्रवीदद्यैव सेन्द्रा देवा न भविष्यन्तीति ॥ ततो मन्त्रान् जजाप तैर्मन्त्रैरवर्द्धत त्रिशिराः एकेनास्येन सर्व्वलोकेषु यथावद्द्विजैः क्रियावद्भिर्यज्ञेषु सुहुतं सोमं पपौ ॥ एकेनान्नं एकेन सेन्द्रान्देवानथेन्द्रस्तं विवर्द्धमानं सोमपानाप्यायितसर्व्वगात्रं दृष्ट्वा चिन्तामापेदे सह देवैः ते देवाः सेन्द्रा ब्रह्माणमभिजग्मुः ॥

॥ त ऊचुः ॥ विश्वरूपेण सर्व्वयज्ञेषु सुहुतः सोमः पीयते वयमभागाः संवृत्ता असुरपक्षो वर्द्धते वयं क्षीयामः तदर्हसि नो विधातुं श्रेयोऽनन्तरमिति । तान् ब्रह्मोवाच ऋषिर्भार्गवस्तपस्तप्यते दधीचः स याच्यतां वरः स यथा कलेवरं जह्यात्तथा विधीयतां तस्यास्थिभिर्व्वज्रं क्रियतामिति ततो देवास्तत्रागच्छन् यत्र दधीचो भगवानृषिस्तपस्तेपे सेन्द्रा देवास्तं तथाभिगम्योचुर्भगवंस्तपः सुकुशलमविघ्नञ्चेति ॥

॥ तान्दधीच उवाच ॥ स्वागतं भवद्भ्यः उच्यतां किं क्रियतामिति यद्वक्ष्यथ तत् करिष्यामि ते तमब्रुवन् शरीरपरित्यागं लोकहितार्थं भगवान् कर्त्तुमर्हतीति अथ दधीचस्तथैवाविमनाः सुखदुःखसमो महायोगी आत्मानं समाधाय शरीरपरित्यागं चकार तस्य परमात्मन्यवसृते तान्यस्थीनि धाता संगृह्य वज्रमकरोत् तेन वज्रेणाभेद्येनाप्रधृष्येण ब्रह्मास्थिसम्भूतेन विष्णुप्रविष्टेन इन्द्रो विश्वरूपं जघान शिरसश्चास्य छेदनमकरोत् तस्मादनन्तरं विश्वरूपगात्रमथनसम्भवं त्वाष्ट्रोत्पादितमेवारिं वृत्रमिन्द्रो जघान तस्यां द्वैधीभूतायां ब्रह्मवध्यायां भयादिन्द्रो देवराज्यं पर्य्यत्यजत् ॥ अप्सुसम्भवाञ्च शीतलां मानससरोगतां नलिनीं प्रतिपेदे तत्र चैश्वर्य्ययोगादणुमात्रो भूत्वा बिसग्रन्थिं प्रविवेश ॥

अथ ब्रह्मवध्याभयप्रनष्टे त्रैलोक्यनाथे शचीपतौ जगदनीश्वरं बभूव देवाञ्जस्तमश्चाविवेश मन्त्रा न प्रावर्त्तन्त महर्षीणां रक्षांसि प्रादुरभवन् ब्रह्म चोत्सादनं जगाम अनिन्द्राश्चाबला लोकाः सुप्रधृष्या बभूवुः अथ देवा ऋषयश्चायुषः पुत्रं नहुषं नाम देवराज्येऽभिषिषिचुः नहुषः पञ्चभिः शतैर्ज्योतिषां ललाटे ज्वलद्भिः सर्व्वभूततेजोहरैस्त्रिपिष्टपं पालयाम्बभूव अथ लोकाः प्रकृतिमापेदिरे स्वस्थाश्च हृष्टाश्च बभूवुः अथोवाच नहुषः सर्व्वं मां शक्रोपभुक्तं उपस्थितमृते शचीमिति स एवमुक्त्वा शचीसमीपमगमत् उवाच चैनां सुभगेऽहमिन्द्रो देवानां भजस्व मामिति तं शची प्रत्युवाच प्रकृत्या त्वं धर्म्मवत्सलः सोमवंशोद्भवश्च नार्हसि परपत्नीधर्षणं कर्त्तुमिति तामथोवाच नहुषः ऐन्द्रं पदमध्यास्यते मया अहमिन्द्रस्य राज्यरत्नहरो नात्राधर्म्मः कश्चित् त्वमिन्द्रोपभुक्तेति सा तमुवाचास्ति मम किञ्चिद्व्रतमपर्य्यवसितं तस्यावभृथे त्वामुपगमिष्यामि कैश्चिदेवाहोभिरिति स शच्यैवमभिहितो जगाम ॥ अथ शची दुःखशोकार्त्ता भर्तृदर्शनलालसा नहुषभयगृहीता बृहस्पतिमुपागच्छत् स च तामत्युद्विग्नां दृष्ट्वैव ध्यानं प्रविश्य भर्तृकार्य्यतत्परां ज्ञात्वा बृहस्पतिरुवाच ॥

अनेनैव व्रतेन तपसा चान्विता देवीं वरदामुपश्रुतिमाह्वय तदा सा ते इन्द्रं दर्शयिष्यतीति साथ महानियममास्थिता देवीं वरदामुपश्रुतिं मन्त्रैराह्वयति सोपश्रुतिः शचीसमीपमगादुवाच चैनामियमस्मीति त्वयाहूतोपस्थिता किन्ते प्रियं करवाणीति तां मूर्द्ध्ना प्रणम्योवाच शची भगवत्यर्हसि मे भर्त्तारं दर्शयितुं त्वं सत्या ऋता चेति सैनां मानसं सरोऽनयत्॥ १२१२५

तत्रेन्द्रं बिसग्रन्थिगतमदर्शयत् तामथ पत्नीं कृशां ग्लानाञ्चेन्द्रो दृष्ट्वा चिन्तयाम्बभूव अहो मम दुःखमिदमुपगतं नष्टं हि मामियमन्विष्य यत् पत्न्यभ्यागमद्दुःखार्त्तेति तामिन्द्र उवाच कथं वर्त्तयसीति सा तमुवाच नहुषो मामाह्वयति पत्नीं कर्त्तुं कालश्चास्य मया कृत इति तामिन्द्र उवाच गच्छ नहुषस्त्वया वाच्यः अपूर्व्वेण मामृषियुक्तेन यानेन त्वमधिरूढ उद्वहस्वेति इन्द्रस्य महान्ति वाहनानि सन्ति मनःप्रियाण्यधिरूढानि मया त्वमन्येनोपयातुमर्हसीति सैवमुक्ता हृष्टा जगाम इन्द्रोऽपि बिसग्रन्थिमेवाविवेश भूयः अथेन्द्राणीमभ्यागतां दृष्ट्वा तामुवाच नहुषः पूर्णः स काल इति तं शच्यब्रवीच्छक्रेण यथोक्तं स महर्षियुक्तं वाहनमधिरूढः शचीसमीपमुपागच्छत् अथ मैत्रावरुणिः कुम्भयोनिरगस्त्य ऋषिवरो महर्षीन् धिक्क्रियमाणांस्तान्नहुषेणापश्यत् पद्भ्याञ्च तमस्पृशत् ततः स नहुषमब्रवीत् अकार्य्यप्रवृत्त पाप पतस्व महीं सर्पो भव यावद्भूमिर्गिरयश्च तिष्ठेयुस्तावदिति स महर्षिवाक्यसमकालमेव तस्माद्यानादवापतत् अथानिन्द्रं पुनस्त्रैलोक्यमभवत् ॥

ततो देवाश्च ऋषयश्च भगवन्तं विष्णुं शरणमिन्द्रार्थेऽभिजग्मुः ऊचुश्चैनं भगवन्निन्द्रं ब्रह्महत्याभिभूतं त्रातुमर्हसीति ततः स वरदस्तानब्रवीत् अश्वमेधं यज्ञं वैष्णवं शक्रोऽभियजतां ततः स्वस्थानं प्राप्स्यतीति ततो देवा ऋषयश्चेन्द्रं नापश्यन् यदा तदा शचीमूचुः गच्छ सुभगे इन्द्रमानयस्वेति सा पुनस्तत्सरः समभ्यगच्छदिन्द्रश्च तस्मात् सरसः प्रत्युत्थाय बृहस्पतिमभिजगाम बृहस्पतिश्चाश्वमेधं महाक्रतुं शक्रायाहरत् तत्र कृष्णसारं मेध्यमश्वमुत्सृज्य वाहनं तमेव कृत्वा इन्द्रं मरुत्पतिं बृहस्पतिः

स्वं स्थानं प्रापयामास ततः स देवराट् देवैर्ऋषिभिः स्तूयमानस्त्रिपिष्टपेशो निष्कल्मषो बभूव ब्रह्मवध्याञ्चतुर्षु स्थानेषु वनि ताग्निवनस्पतिगोषु व्यभजत् ॥

एवमिन्द्रो ब्रह्मतेजःप्रभावोपबृंहितः शत्रुवधं कृत्वा स्वं स्थानं प्रापितः आकाशगङ्गागतश्च पुरा भरद्वाजो महर्षि रुपास्पृशत् त्रीन् क्रमान् क्रमता विष्णुनाभ्यासादितः स भरद्वाजेन ससलिलेन पाणिनोरसि ताडितः सलक्षणोरस्कः संवृत्तः भृगुणा महर्षिणा शप्तो ऽग्निः सर्व्वभक्षत्वमुपानीतः अदितिर्व्वै देवानामन्नमपचत् ॥

एतद्भुक्त्वासुरान् हनिष्यन्तीति तत्र बुधो व्रतचर्य्यासमाप्तावागच्छददितिञ्चावोचत् भिक्षां देहीति तत्र देवैः पूर्व्व मेतत् प्राश्यमान्येनेत्यदितिर्भिक्षां नादात् अथ भिक्षाप्रत्याख्यानरुषितेन बुधेन ब्रह्मभूतेन अदितिः शप्ता अदितेरुद रे भविष्यति व्यथा विवस्वतो द्वितीयजन्मन्यण्डसंज्ञितस्य अण्डमातुरदित्याः शापितः स मार्त्तण्डो विवस्वानभवच्छ्राद्ध देवः दक्षस्य या वै दुहितरः षष्टिरासन् ताभ्यः कश्यपाय त्रयोदश प्रादात् दश धर्म्माय दश मनवे सप्तविंशतिमिन्दवे तासु तुल्यासु नक्षत्राख्यां गतासु सोमो रोहिण्यामभ्यधिकं प्रीतिमानभूत्तस्ताः शिष्टाः पत्न्य ईर्षावत्यः पितुः समीपं गत्वा इम मर्थं शशंसुः भगवन्नस्मासु तुल्यप्रभवासु सोमो रोहिणीं अत्यधिकं भजतीति सोऽब्रवीद्यक्ष्मैनमाविक्ष्यत इति दक्षशापात् सोमं राजानं यक्ष्मा विवेश स यक्ष्मणाविष्टो दक्षमगमत् दक्षश्चैनमब्रवीत् न समं वर्त्तयसीति तत्रर्षयः सोममब्रुवन् ।

क्षीयसे यक्ष्मणा पश्चिमस्यां दिशि समुद्रे हिरण्यसरस्तीर्थं तत्र गत्वा आत्मानमभिषेचयस्वेति अथागच्छत् सोमस्तत्र हिरण्यसरस्तीर्थं गत्वा चात्मनः सेचनमकरोत् । ११२८०

स्नात्वा चात्मानं पाप्मनो मोक्षयामास तत्र चावभासितस्तीर्थे यदा सोमस्तदाप्रभृति च तीर्थं तत् प्रभा समिति नाम्ना ख्यातं बभूव ॥ तच्छापादद्यापि सोमः अमावास्यान्तरस्थः पौर्णमासीमात्रेऽधिष्ठितः मेघलेखाप्रतिच्छन्नं वपुर्दर्शयति मेघसदृशं वर्णमगमत् तदस्य शशलक्ष्म विमलमभवत् ॥ स्थूलशिरा महर्षिर्मेरोः प्रागुत्तरे दिग्विभागे तप स्तेपे ततस्तस्य तपस्तप्यमानस्य सर्व्वगन्धवहः शुचिर्व्वायुर्व्विवायमानः शरीरमस्पृशत् स तपसा तापितशरीरः कृशो वायुनो पवीज्यमानो हृदये परितोषमगमत् ॥

तत्र किल तस्यानिलव्यजनकृतपरितोषस्य सद्यो वनस्पतयः पुष्पशोभां निदर्शितवन्त इति स एतान् शशाप न सर्व्व कालं पुष्पवन्तो भविष्यथेति नारायणो लोकहितार्थं वडवामुखो नाम पुरा महर्षिर्ब्बभूव तस्य मेरौ तपस्तप्यतः समुद्र आहूतो नागतस्तेनामर्षितेनात्मगात्रोष्मणा समुद्रस्तिमितजलः कृतः स्वेदप्रस्यन्दनसदृशश्चास्य लवणभावो जनितः उक्तश्चाप्यपेयो भविष्यस्येतच्च ते तोयं वडवामुखसंज्ञितेन पीयमानं मधुरं भविष्यति । तदेतदद्यापि वडवामुखसंज्ञितेना नुवर्त्तिना तोयं समुद्रात् पीयते हिमवतो गिरेर्दुहितरमुमां कन्यां रुद्रश्चकमे ।

भृगुरपि च महर्षिर्हिमवन्तमागत्याब्रवीत् कन्यामिमां मे देहीति तमब्रवीद्धिमवानभिलषितो वरो रुद्र इति तमब्रवीद्भृगुर्यस्मात्त्वयाहं कन्यावरणकृतभावः प्रत्याख्यातस्तस्मान्न रत्नानां भवान् भाजनं भविष्यतीति अद्यप्रभृत्येतदवस्थि तमृषिवचनं तदेवंविधं माहात्म्यं ब्राह्मणानां ॥ क्षत्रमपि च ब्राह्मणप्रसादादेव शाश्वतीमव्ययाञ्च पृथिवीं पत्नीमभिगम्य बुभुजे तदेतद्ब्रह्माग्नीषोमीयं तेन जगद्धार्य्यते ॥

उच्यते । सूर्य्याचन्द्रमसौ चक्षुः केशाश्चैवांशवः स्मृताः । बोधयंस्तापयंश्चैव जगदुत्तिष्ठते पृथक् ।

बोधनात्तपनाच्चैव जगतो हर्षणं भवेत् । अग्नीषोमकृतैरेभिः कर्म्मभिः पाण्डुनन्दन । ११२८१

हृषीकेशोऽहमीशानो वरदो लोकभावनः । इलोपहूतो योगेन हरेर्भागं क्रतुष्वहं ।
वर्णश्च मे हरिश्रेष्ठस्तस्माद्धरिरहं स्मृतः । धामसारो हि भूतानामृतश्चैव विचारितं ।
ऋतधामा ततो विप्रैः सद्यश्चाहं प्रकीर्त्तितः । नष्टाञ्च धरणीं पूर्व्वमविन्दन् वै गुहागतां ।
गोविन्द इति तेनाहं देवैर्व्वाग्भिरभिष्टुतः । शिपिविष्टेति चाख्यायां हीनरोमा च यो भवेत् ।
तेनाविष्टन्तु यत् किञ्चिच्छिपिविष्टेति च स्मृतः । यास्को मामृषिरव्यग्रो नैकयज्ञेषु गीतवान् । १३२१०
शिपिविष्ट इति ह्यस्माद्गुह्यनामधरो ह्यहं । स्तुत्वा मां शिपिविष्टेति यास्कः ऋषिरुदारधीः ।
मत्प्रसादादधो नष्टं निरुक्तमभिजग्मिवान् । न हि जातो न जायेऽहं न जनिष्ये कदाचन ।
क्षेत्रज्ञः सर्व्वभूतानां तस्मादहमजः स्मृतः । नोक्तपूर्व्वं मया क्षुद्रमश्लीलं वा कदाचन ।
ऋता ब्रह्मसुता सा मे सत्या देवी सरस्वती । सच्चासच्चैव कौन्तेय मया वेशितमात्मनि ।
पौष्करे ब्रह्मसदने सत्यं मामृषयो विदुः । सत्त्वान्न च्युतपूर्व्वोऽहं सत्त्वं वै विद्धि मत्कृतं । १३२१५
जन्मनीहाभवत् सत्त्वं पौर्व्विकं मे धनञ्जय । निराशीः कर्म्मसंयुक्तः सात्वतश्चाप्यकल्मषः ।
सात्वतज्ञानदृष्टोऽहं सात्वतामिति सात्वतः । कृषामि मेदिनीं पार्थ भूत्वा कार्ष्णायसो महान् ।
कृष्णो वर्णश्च मे यस्मात्तस्मात् कृष्णोऽहमर्ज्जुन । मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना ।
वायुश्च तेजसा सार्द्धं वैकुण्ठत्वं ततो मम । निर्व्वाणं परमं ब्रह्म धर्म्मोऽसौ पर उच्यते ।
तस्मान्न च्युतपूर्व्वोऽहं अच्युतस्तेन कर्म्मणा । पृथिवी नभसी चोभे विश्रुते विश्वतोमुखे । १३२२०
तयोः सन्धारणार्थं हि मामधोक्षजमञ्जसा । निरुक्तं वेदविदुषो वेदशब्दार्थचिन्तकाः ।
ते मां गायन्ति प्राग्वंशे अधोक्षज इति स्थितिः । शब्द एकपदैरेष व्याहृतः परमर्षिभिः ।
नान्यो ह्यधोक्षजो लोके ऋते नारायणं प्रभुं । घृतं ममार्च्चिषो लोके जन्तूनां प्राणधारणं ।
घृतार्च्चिरहमव्यग्रैर्व्वेदज्ञैः परिकीर्त्तितः । त्रयो हि धातवः ख्याताः कर्म्मजा इति ये स्मृताः ।
पित्तं श्लेष्मा च वायुश्च एष सङ्घात उच्यते । एतैश्च धार्य्यते जन्तुरेतैः क्षीणैश्च क्षीयते । १३२२५
आयुर्व्वेदविदस्तस्मात् त्रिधातुं मां प्रचक्षते । वृषो हि भगवान् धर्म्मः ख्यातो लोकेषु भारत ।
निघण्टुकपदाख्याने विद्धि मां वृषमुत्तमं । कपिर्व्वराहश्रेष्ठश्च धर्म्मश्च वृष उच्यते ।
तस्माद्वृषाकपिं प्राह कश्यपो मां प्रजापतिः ।

न चादिं न मध्यं तथा चैव नान्तं कदाचिद्विदन्ते सुराश्चासुराश्च । अनाद्यो ह्यमध्यस्तथा चाप्यनन्तः प्रगीतोऽहमीशो विभुर्लोकसाक्षी ।

शुचीनि श्रवणीयानि शृणोमीह धनञ्जय । न च पापानि गृह्णामि ततोऽहं वै शुचिश्रवाः । १३२३०
एकशृङ्गः पुरा भूत्वा वराहो नन्दिवर्द्धनः । इमाञ्चोद्धृतवान् भूमिमेकशृङ्गस्ततो ह्यहं ।
तथैवासं त्रिककुदो वाराहं रूपमास्थितः । त्रिककुत्तेन विख्यातः शरीरस्य प्रमापणात् ।
विरिञ्च इति यत् प्रोक्तं कापिलं ज्ञानचिन्तकैः । स प्रजापतिरेवाहं चेतनात् सर्व्वलोककृत् ।
विद्यासहायवन्तं मामादित्यस्थं सनातनं । कपिलं प्राहुराचार्य्याः साङ्ख्या निश्चितनिश्चयाः ।

हिरण्यगर्भो द्युतिमान् य एष च्छन्दसि स्तुतः। योगैः संपूज्यते नित्यं स एवाहं भुवि स्मृतः। १३२५५
एकविंशतिसाहस्रं ऋग्वेदं मां प्रचक्षते। सहस्रशाखं यत् साम ये वै वेदविदो जनाः।
गायन्त्यारण्यके विप्रा मद्भक्तास्ते हि दुर्लभाः। षट्पञ्चाशतमष्टौ च सप्तत्रिंशतमित्युत।
यस्मिञ्छाखा यजुर्वेदे सोऽहमाध्वर्य्यवे स्मृतः। पञ्चकल्पमथर्व्वाणं कृत्याभिः परिवृंहितं।
कल्पयन्ति हि मां विप्रा अथर्व्वाणविदस्तथा। शाखाभेदाश्च ये केचित् याश्च शाखासु गीतयः।
स्वरवर्णसमुच्चाराः सर्व्वांस्तान् विद्धि मत्कृतान्। यत्तद्धयशिरः पार्थ समुदेति वरप्रदं। १३२६०
सोऽहमेवोत्तरे भागे क्रमाक्षरविभागवित्। वामदेवेरितमार्गेण मत्प्रसादान्महात्मना।
पाञ्चालेन क्रमः प्राप्तस्तस्माद्भूतात् सनातनात्। बाभ्रव्यगोत्रः स बभौ प्रथमं क्रमपारगः।
नारायणाद्वरं लब्ध्वा प्राप्य योगमनुत्तमं। क्रमं प्रणीय शिक्षाञ्च प्रणयित्वा स गालवः।
कण्डरीकोऽथ राजा च ब्रह्मदत्तः प्रतापवान्। जातीमरणजं दुःखं स्मृत्वा स्मृत्वा पुनः पुनः।
सप्तजातिषु मुख्यत्वाद्योगानां सम्पदङ्गतः। पुराहमात्मजः पार्थ प्रथितः कारणान्तरे। १३२६५
धर्म्मस्य कुरुशार्दूल ततोऽहं धर्म्मजः स्मृतः। नरनारायणौ पूर्व्वं तपस्तेपतुरव्ययं।
धर्म्मयानं समारूढौ पर्व्वते गन्धमादने। तत्कालसमये चैव दक्षयज्ञो बभूव ह।
नचैवाकल्पयद्भागं दक्षो रुद्रस्य भारत। ततो दधीचिवचनाद्दक्षयज्ञमपाहरत्।
ससर्ज्ज शूलं कोपेन प्रज्वलन्तं मुहुर्मुहुः। तच्छूलं भस्मसात् कृत्वा दक्षयज्ञं सविस्तरं।
आवयोः सहसागच्छद्बदर्य्याश्रममन्तिकात्। वेगेन महता पार्थ पतन्नारायणोरसि। १३२७०
ततस्तत्तेजसाविष्टाः केशा नारायणस्य च। बभूवुर्मुञ्जवर्णास्तु ततोऽहं मुञ्जकेशवान्।
तच्च शूलं विनिर्द्धूतं हुङ्कारेण महात्मना। जगाम शङ्करकरं नारायणसमाहतं।
अथ रुद्र उपाधावत्तावृषी तपसान्वितौ। तत एनं समुद्धूतं कण्ठे जग्राह पाणिना।
नारायणः स विश्वात्मा तेनास्य शितिकण्ठता। अथ रुद्रविघातार्थमिषीकां नर उद्धरत्।
मन्त्रैश्च संयुयोजाशु सोऽभवत् परशुर्महान्। क्षिप्तश्च सहसा तेन खण्डनं प्राप्तवांस्तदा। १३२७५
ततोऽहं खण्डपरशुः स्मृतः परशुखण्डनात्।

॥ अर्ज्जुन उवाच ॥ अस्मिन् युद्धे तु वार्ष्णेय त्रैलोक्यशमने तदा। को जयं प्राप्तवांस्तत्र शंसैतन्मे जनार्द्दन।

॥ श्रीभगवानुवाच ॥ तयोः संलग्नयोर्युद्धे रुद्रनारायणात्मनोः। उद्विग्नाः सहसा कृत्स्नाः सर्व्वलोकास्तदाभवन्।
नागृह्णात् पावकः शुभ्रं मखेषु सुहुतं हविः। वेदा न प्रतिभान्ति स्म ऋषीणां भावितात्मनां।
देवान् रजस्तमश्चैव समाविविशतुस्तदा। वसुधा सञ्चकम्पे च नभश्च विपफाल ह। १३२८०
निष्प्रभाणि च तेजांसि ब्रह्मा चैवासनच्युतः। अगाच्छोषं समुद्रश्च हिमवांश्च व्यशीर्य्यत।
तस्मिन्नेवं समुत्पन्ने निमित्ते पाण्डुनन्दन। ब्रह्मा वृतो देवगणैर्ऋषिभिश्च महात्मभिः।
आजगामाशु तं देशं यत्र युद्धमवर्त्तत। सोऽञ्जलिप्रग्रहो भूत्वा चतुर्व्वक्त्रो निरुक्तगः।
उवाच वचनं रुद्रं लोकानामस्तु वै शिवं। न्यस्यायुधानि विश्वेश जगतो हितकाम्यया।

यदक्षरमथाव्यक्तमीशं लोकस्य भावनं । कूटस्थं कर्त्तनिर्द्वन्द्वमकर्त्तेति च यं विदुः । १३२८८
व्यक्तिभावगतस्यास्य एका मूर्त्तिरियं शुभा । नरोनारायणश्चैव जातौ धर्म्मकुलोद्वहौ ।
तपसा महता युक्तौ देवश्रेष्ठौ महाव्रतौ । अहं प्रसादजस्तस्य कुतश्चित् कारणान्तरे ।
त्वञ्चैव क्रोधजस्तात पूर्व्वसर्गे सनातनः । मया च सार्द्धं वरदं विबुधैश्च महर्षिभिः ।
प्रसादयाशु लोकानां शान्तिर्भवतु मा चिरं । ब्रह्मणा त्वेवमुक्तस्तु रुद्रः क्रोधाग्निमुत्सृजन् ।
प्रसादयामास ततो देवं नारायणं प्रभुं । शरणञ्च जगामाद्यं वरेण्यं वरदं प्रभुं । १३२९०
ततोऽथ वरदो देवो जितक्रोधो जितेन्द्रियः । प्रीतिमानभवत्तत्र रुद्रेण सह सङ्गतः ।
ऋषिभिर्ब्रह्मणा चैव विबुधैश्च सुपूजितः । उवाच देवमीशानमीशः स जगतो हरिः ।
यस्त्वां वेत्ति स मां वेत्ति यस्त्वामनु स मामनु । नावयोरन्तरं किञ्चिन्मा ते भूद्बुद्धिरन्यथा ।
अद्यप्रभृति श्रीवत्सः शूलाङ्को मे भवत्वयं । मम पाण्यङ्कितश्चापि श्रीकण्ठस्त्वं भविष्यसि ।
॥ श्रीभगवानुवाच ॥ एवं लक्षणमुत्पाद्य परस्परकृतं तदा । सख्यञ्चैवातुलं कृत्वा रुद्रेण सहितावृषी । १३२९५
तपस्तेपतुरव्यग्रौ विसृज्य त्रिदिवौकसः । एष ते कथितः पार्थ नारायणजयो मृधे ।
नामानि चैव गुह्यानि निरुक्तानि च भारत । ऋषिभिः कथितानीह यानि सङ्कीर्त्तितानि ते ।
एवं बहुविधैरूपैश्चरामीह वसुन्धरां । ब्रह्मलोकञ्च कौन्तेय गोलोकञ्च सनातनं ।
मया त्वं रक्षितो युद्धे महान्तं प्राप्तवान् जयं । यस्तु ते सोऽग्रतो याति युद्धे सम्प्रत्युपस्थिते ।
तं विद्धि रुद्रं कौन्तेय देवदेवं कपर्द्दिनं । कालः स एव कथितः क्रोधजेति मया तव । १३३००
निहतांस्तेन वै पूर्व्वं हतवानसि यान् रिपून् । अप्रमेयप्रभावं तं देवदेवमुमापतिं ।
नमस्व देवं प्रयतो विश्वेशं हरमव्ययं । यश्च ते कथितः पूर्व्वं क्रोधजेति पुनः पुनः ।
तस्मिन् प्रभावमेवाग्रे यच्छ्रुतन्ते धनञ्जय ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये चतुश्चत्वारिंशदधिकत्रिशततोऽध्यायः ॥ ३४४ ॥
॥ शौनक उवाच ॥ सौते सुमहदाख्यानं भवता परिकीर्त्तितं । यच्छ्रुत्वा मुनयः सर्व्वे विस्मयं परमं गताः ।
सर्व्वाश्रमाभिगमनं सर्व्वतीर्थावगाहनं । न तथा फलदं सौते नारायणकथा यथा । १३३०५
पाविताङ्गाः स्म संवृत्ताः श्रुत्वेमामादितः कथां । नारायणाश्रयां पुण्यां सर्व्वपापप्रमोचनीं ।
दुर्द्दर्शो भगवान्देवः सर्व्वलोकनमस्कृतः । सब्रह्मकैः सुरैः कृत्स्नैरन्यैश्चैव महर्षिभिः ।
दृष्टवान् नारदो यत्तु देवं नारायणं हरिं । नूनमेतद्ध्यनुमतं तस्य देवस्य सूतज ।
यद्दृष्टवान् जगन्नाथमनिरुद्धतनौ स्थितं । यत् प्राद्रवत् पुनर्भूयो नारदो देवसत्तमौ ।
नरनारायणौ द्रष्टुं कारणं तद्ब्रवीहि मे । १३३१०
॥ सूत उवाच ॥ तस्मिन् यज्ञे वर्त्तमाने राज्ञः पारीक्षितस्य वै । कर्म्मान्तरेषु विधिवद्वर्त्तमानेषु शौनक ।
कृष्णद्वैपायनं व्यासमृषिं वेदनिधिं प्रभुं । परिपप्रच्छ राजेन्द्रः पितामहपितामहं ।
॥ जनमेजय उवाच ॥ श्वेतद्वीपान्निवृत्तेन नारदेन सुरर्षिणा । ध्यायता भगवद्वाक्यं चेष्टितं किमतः परं ।

बदर्य्याश्रममागम्य समागम्य च तावृषी । कियन्तं कालमवसत् कां कथां पृष्टवांश्च सः ।
इदं शतसहस्राद्धि भारताख्यानविस्तरात् । आमथ्य मतिमन्थेन ज्ञानोदधिमनुत्तमं । १३११५
नवनीतं यथा दध्नो मलयाच्चन्दनं यथा । आरण्यकञ्च वेदेभ्य ओषधिभ्योऽमृतं यथा ।
समुद्धृतमिदं ब्रह्मन् कथामृतमिदन्तथा । तपोनिधे त्वयोक्तं हि नारायणकथाश्रयं ।
स ईशो भगवान्देवः सर्व्वभूतात्मभावनः । अहो नारायणं तेजो दुर्द्दर्शं द्विजसत्तम ।
यत्राविशन्ति कल्पान्ते सर्व्वे ब्रह्मादयः सुराः । ऋषयश्च सगन्धर्व्वा यच्च किञ्चिच्चराचरं ।
न ततोऽस्ति परं मन्ये पावनं दिवि चेह च । सर्व्वाश्रमाभिगमनं सर्व्वतीर्थावगाहनं । १३१२०
न तथा फलदञ्चापि नारायणकथा यथा । सर्व्वथा पाविताः स्मेह श्रुत्वेमामादितः कथां ।
हरेर्व्विश्वेश्वरस्येह सर्व्वपापप्रणाशनीं । न चित्रं कृतवांस्तत्र यदार्य्यो मे धनञ्जयः ।
वासुदेवसहायो यः प्राप्तवान् जयमुत्तमं । न चास्य किञ्चिदप्राप्यं मन्ये लोकेष्वपि त्रिषु ।
त्रैलोक्यनाथो विष्णुः स यथासीत् साह्यकृत् स वै । धन्याश्च सर्व्व एवासन् ब्रह्मंस्ते मम पूर्व्वजाः ।
हिताय श्रेयसे चैव येषामासीज्जनार्द्दनः । तपसापि सुदृश्यो हि भगवाल्लोकपूजितः । १३१२५
यद्दृष्टवन्तस्ते साक्षात् श्रीवत्साङ्कविभूषणं । तेभ्यो धन्यतरश्चैव नारदः परमेष्ठिजः ।
न चाल्पतेजसमृषिं वेद्मि नारदमव्ययं । श्वेतद्वीपं समासाद्य येन दृष्टः स्वयं हरिः ।
देवप्रसादानुगतं व्यक्तं तत्तस्य दर्शनं । यद्दृष्टवांस्तदा देवमनिरुद्धतनौ स्थितं ।
बदरीमाश्रमं यत्तु नारदः प्राद्रवत् पुनः । नरनारायणौ द्रष्टुं किन्नु तत् कारणं मुने ।
श्वेतद्वीपान्निवृत्तश्च नारदः परमेष्ठिजः । बदरीमाश्रमं प्राप्य समागम्य च तावृषी । १३१३०
कियन्तं कालमवसत् प्रश्नान् कान् पृष्टवांश्च ह । श्वेतद्वीपादुपावृत्ते तस्मिन् वा सुमहात्मनि ।
किमब्रूतां महात्मानौ नरनारायणावृषी । तदेतन्मे यथातत्त्वं सर्व्वमाख्यातुमर्हसि ।
॥ वैशम्पायन उवाच ॥ नमो भगवते तस्मै व्यासायामिततेजसे । यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमां ।
प्राप्य श्वेतं महाद्वीपं दृष्ट्वा च हरिमव्ययं । निवृत्तो नारदो राजंस्तरसा मेरुमागमत् ।
हृदयेनोद्वहन् भारं यदुक्तं परमात्मना । पश्चादस्याभवद्राजन्नात्मनः साध्वसं महत् । १३१३५
यद्गत्वा दूरमध्वानं क्षेमी पुनरिहागतः । मेरोः प्रचक्राम ततः पर्व्वतं गन्धमादनं ।
निपपात च खात्तूर्णं विशालां बदरीमनु । ततः स ददृशे देवौ पुराणावृषिसत्तमौ ।
तपश्चरन्तौ सुमहदात्मनिष्ठौ महाव्रतौ । तेजसाभ्यधिकौ सूर्य्यात् सर्व्वलोकविरोचनात् ।
श्रीवत्सलक्षणौ पूज्यौ जटामण्डलधारिणौ । जालपादभुजौ तौ तु पादयोश्चक्रलक्षणौ ।
व्यूढोरस्कौ दीर्घभुजौ तथा मुष्कचतुष्किणौ । षष्टिदन्तावष्टदंष्ट्रौ मेघौघसदृशस्वनौ । १३१४०
स्वास्यौ पृथुललाटौ च सुभ्रू सुहनुनासिकौ । आतपत्रेण सदृशे शिरसी देवयोस्तयोः ।
एवं लक्षणसम्पन्नौ महापुरुषसंज्ञितौ । तौ दृष्ट्वा नारदो हृष्टस्ताभ्याञ्च प्रतिपूजितः ।
स्वागतेनाभिभाष्याथ पृष्टश्चानामयन्तथा । बभूवान्तर्गतमतिर्न्निरीक्ष्य पुरुषोत्तमौ ।

यदोगतास्तत्र ये वै सर्व्वभूतनमस्कृताः । श्वेतद्वीपे मया दृष्टास्तादृशावृषिसत्तमौ ।
इति सञ्चिन्त्य मनसा कृत्वा चाभिप्रदक्षिणं । स चोपविविशे तत्र पीठे कुशमये शुभे । १३१४८
ततस्तौ तपसां वासौ यशसां तेजसामपि । ऋषी शमदमोपेतौ कृत्वा पूर्व्वाह्णिकं विधिं ।
पश्चान्नारदमव्यग्रौ पाद्यार्घ्याभ्यामथार्चतः । पीठयोश्चोपविष्टौ तौ कृतातिथ्याह्निकौ नृप ।
तेषु तत्रोपविष्टेषु स देशोऽभिव्यराजत । आज्याहुतिमहाज्वालैर्यज्ञवाटो यथाग्निभिः ।
अथ नारायणस्तत्र नारदं वाक्यमब्रवीत् । सुखोपविष्टं विश्रान्तं कृतातिथ्यं सुखस्थितं ।
॥ नरनारायणावूचतुः ॥ अपीदानीं स भगवान् परमात्मा सनातनः । श्वेतद्वीपे त्वया दृष्ट आवयोः प्रकृतिः परा । १३१५०
॥ नारद उवाच ॥ दृष्टो मे पुरुषः श्रीमान् विश्वरूपधरोऽव्ययः । सर्व्वे लोका हि तत्रस्थास्तथा देवाः सहर्षिभिः ।
अद्यापि चैनं पश्यामि युवां पश्यन् सनातनौ । यैर्लक्षणैरुपेतः स हरिरव्यक्तरूपधृक् ।
तैर्लक्षणैरुपेतौ हि व्यक्तरूपधरौ युवां । दृष्टौ युवां मया तत्र तस्य देवस्य पार्श्वतः ।
इहैव चागतोऽस्म्यद्य विसृष्टः परमात्मना । को हि नाम भवेत्तस्य तेजसा यशसा श्रिया ।
सदृशस्त्रिषु लोकेषु ऋते धर्म्मात्मजौ युवां । तेन मे कथितः कृत्स्नो धर्म्मः क्षेत्रज्ञसंज्ञितः । १३१५५
प्रादुर्भावाश्च कथिता भविष्या इह ये यथा । तत्र ये पुरुषाः श्वेताःपञ्चेन्द्रियविवर्ज्जिताः ।
प्रतिबुद्धाश्च ते सर्व्वे भक्ताश्च पुरुषोत्तमं । तेऽर्चयन्ति सदा देवं तैः सार्द्धं रमते च सः ।
प्रियभक्तो हि भगवान् परमात्मा द्विजप्रियः । रमते सोऽर्च्यमानो हि सदा भागवतप्रियः ।
विश्वभुक् सर्व्वगो देवो माधवो भक्तवत्सलः । स कर्त्ता कारणञ्चैव कार्य्यञ्चातिबलद्युतिः ।
हेतुश्चाज्ञाविधानञ्च तत्त्वञ्चैव महायशाः । तपसा योज्य सोऽत्मानं श्वेतद्वीपात्परं हि यत् । १३१६०
तेज इत्यभिविख्यातं स्वयं भासावभासितं । शान्तिः सा त्रिषु लोकेषु विहिता भावितात्मना ।
एतया शुभया बुद्ध्या नैष्ठिकं व्रतमास्थितः । न तत्र सूर्य्यस्तपति न सोमोऽभिविराजते ।
न वायुर्वाति देवेशे तपश्चरति दुश्चरं । वेदीमष्टनलोत्सेधां भूमावास्थाय विश्वकृत् ।
एकपादस्थितो देव ऊर्द्ध्वबाहुरुदङ्मुखः । साङ्गानावर्त्तयन् वेदांस्तपस्तेपे सुदुश्चरं ।
यद्ब्रह्मा ऋषयश्चैव स्वयं पशुपतिश्च यत् । शेषाश्च विबुधश्रेष्ठा दैत्यदानवराक्षसाः । १३१६५
नागाः सुपर्णा गन्धर्व्वाः सिद्धा राजर्षयश्च ये । हव्यं कव्यञ्च सततं विधियुक्तं प्रयुञ्जते ।
कृत्स्नन्तु तस्य देवस्य चरणावुपतिष्ठतः । याः क्रियाः संप्रयुक्ताश्च एकान्तगतबुद्धिभिः ।
ताः सर्व्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयं । न तस्यान्यः प्रियतरः प्रतिबुद्धैर्महात्मभिः ।
विद्यते त्रिषु लोकेषु ततोऽस्म्यैकान्तिकं गतः । इह चैवागतस्तेन विसृष्टः परमात्मना ।
एवं मे भगवान्देवः स्वयमाख्यातवान् हरिः । आसिष्ये तत्परो भूत्वा युवाभ्यां सह नित्यशः । १३१७०

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये पञ्चचत्वारिंशदधिकत्रिशततोऽध्यायः ॥ ३४५ ॥

॥ नरनारायणावूचतुः ॥ धन्योऽस्यनुगृहीतोऽसि यत्ते दृष्टः स्वयं प्रभुः । नहि तं दृष्टवान् कश्चित् पद्मयोनिरपि स्वयं ।

अव्यक्तयोनिर्भगवान् दुर्द्दर्शः पुरुषोत्तमः । नारदैतद्धि नौ सत्यं वचनं समुदाहृतं ।
नास्य भक्तात् प्रियतरो लोके कश्चन विद्यते । ततः स्वयं दर्शितवान् स्वमात्मानं द्विजोत्तम ।
तपो हि तप्यतस्तस्य यत् स्थानं परमात्मनः । न तत् सम्प्राप्नुते कश्चिदृते ह्यावां द्विजोत्तम ।
या हि सूर्य्यसहस्रस्य समस्तस्य भवेद्द्युतिः । स्थानस्य सा भवेत्तस्य स्वयं तेन विराजता । ११११५
तस्मादुत्तिष्ठते विप्र देवाद्विश्वभुवः पतेः । क्षमा क्षमावतां श्रेष्ठ यया भूमिस्तु युज्यते ।
तस्माच्चोत्तिष्ठते देवात्सर्व्वभूतहिताद्रसः । आपो हि तेन युज्यन्ते द्रवत्वं प्राप्नुवन्ति च ।
तस्मादेव समुद्भूतं तेजो रूपगुणात्मकं । येन संयुज्यते सूर्य्यस्ततो लोके विराजते ।
तस्माद्देवात् समुद्भूतः स्पर्शस्तु पुरुषोत्तमात् । येन स्म युज्यते वायुस्ततो लोकान् विवात्यसौ ।
तस्माच्चोत्तिष्ठते शब्दः सर्व्वलोकेश्वरात् प्रभोः । आकाशं युज्यते येन ततस्तिष्ठत्यसंवृतं । १११८०
तस्माच्चोत्तिष्ठते देवात् सर्व्वभूतगतं मनः । चन्द्रमा येन संयुक्तः प्रकाशगुणधारणः ।
सद्भूतोत्पादकं नाम तत् स्थानं वेदसंज्ञितं । विद्यासहायो यत्रास्ते भगवान् हव्यकव्यभुक् ।
ये हि निष्कलुषा लोके पुण्यपापविवर्ज्जिताः । तेषां वै क्षेममध्वानं गच्छतां द्विजसत्तम ।
सर्व्वलोके तमोहन्ता आदित्यो द्वारमुच्यते । आदित्यदग्धसर्व्वाङ्गा अदृश्याः केनचित् क्वचित् ।
परमाणुभूता भूत्वा तु तं देवं प्रविशन्त्युत । तस्मादपि च निर्मुक्ता अनिरुद्धतनौ स्थिताः । १११८५
मनोभूतास्ततो भूत्वा प्रद्युम्नं प्रविशन्त्युत । प्रद्युम्नाच्चापि निर्मुक्ता जीवं सङ्कर्षणन्ततः ।
विशन्ति विप्रप्रवराः साङ्ख्या भागवतैः सह । ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा ।
प्रविशन्ति द्विजश्रेष्ठाः क्षेत्रज्ञं निर्गुणात्मकं । सर्व्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः ।
समाहितमनस्काश्च नियताः संयतेन्द्रियाः । एकान्तभावोपगता वासुदेवं विशन्ति ते ।
आवामपि च धर्म्मस्य गृहे जातौ द्विजोत्तम । रम्यां विशालामाश्रित्य तप उग्रं समास्थितौ । १११९०
ये तु तस्यैव देवस्य प्रादुर्भावाः सुरप्रियाः । भविष्यन्ति त्रिलोकस्थास्तेषां स्वस्तीत्यथो द्विज ।
विधिना स्वेन युक्ताभ्यां यथापूर्व्वं द्विजोत्तम । आश्रिताभ्यां सर्व्वकृच्छ्रं व्रतं सम्यगनुष्ठितं ।
आवाभ्यामपि दृष्टस्त्वं श्वेतद्वीपे तपोधन । समागतो भगवता सङ्कल्पं कृतवांस्तथा ।
सर्व्वं हि नौ संविदितं त्रैलोक्ये सचराचरे । यद्भविष्यति वृत्तं वा वर्त्तते वा शुभाशुभं ।
सर्व्वं स ते कथितवान् देवदेवो महामुने । १११९५
॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा तयोर्व्वाक्यं तपस्युग्रे च वर्त्तते । नारदः प्राञ्जलिर्भूत्वा नारायणपरायणः ।
जजाप विधिवन्मन्त्रान् नारायणगतान् बहून् । दिव्यं वर्षसहस्रं हि नरनारायणाश्रमे ।
अवसत् स महातेजा नारदो भगवानृषिः । तमेवाभ्यर्चयन् देवं नरनारायणौ च तौ ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये षट्चत्वारिंशदधिकत्रिशततोऽध्यायः ॥ ३४६ ॥
॥ वैशम्पायन उवाच ॥ कस्यचित्त्वथ कालस्य नारदः परमेष्ठिजः । दैवं कृत्वा यथान्यायं पित्र्यञ्चक्रे ततः परं ।
ततस्तं वचनं प्राह ज्येष्ठो धर्म्मात्मजः प्रभुः । क इज्यते द्विजश्रेष्ठ दैवे पित्र्ये च कल्पिते । ११२००

त्वया मतिमतां श्रेष्ठ तन्मे शंस यथागमं । किमेतत् क्रियते कर्म्म फलं वास्य किमिष्यते ।
॥ नारद उवाच ॥ त्वयैतत् कथितं पूर्व्वं दैवं कर्त्तव्यमित्यपि । दैवतञ्च परो यज्ञः परमात्मा सनातनः ।
ततस्तद्भाविता नित्यं यजे वैकुण्ठमव्ययं । तस्माच्च प्रसृतः पूर्व्वं ब्रह्मा लोकपितामहः ।
मम वै पितरं प्रीतः परमेष्ठ्यप्यजीजनत् । अहं सङ्कल्पजस्तस्य पुत्रः प्रथमकल्पितः ।
यजामि वै पितॄन् साधो नारायणविधौ कृते । एवं स एव भगवान् पिता माता पितामहः । १३५०५
इज्यते पितृयज्ञेषु तथा नित्यं जगत्पतिः । श्रुतिश्चाप्यपरा देवी पुत्त्रान् हि पितरो यजन् ।
वेदश्रुतिः प्रणष्टा च पुनरध्यापिता सुतैः । ततस्ते मन्त्रदाः पुत्त्राः पितृत्वमुपपेदिरे ।
नूनं सुरैस्तद्विदितं युवयोर्भावितात्मनोः । पुत्त्राश्च पितरश्चैव परस्परमपूजयन् ।
त्रीन् पिण्डान्न्यस्य वै पृथ्व्यां पूर्व्वान्दत्त्वा कुशानिति । कथन्तु पिण्डसंज्ञान्ते पितरो लेभिरे पुरा ।
॥ नरनारायणावूचतुः ॥ इमां हि धरणीं पूर्व्वं नष्टां सागरमेखलां । गोविन्द उज्जहाराशु वाराहं रूपमाश्रितः । १३५१०
स्थापयित्वा तु धरणीं स्वे स्थाने पुरुषोत्तमः । जलकर्द्दमलिप्ताङ्गो लोककार्य्यार्थमुद्यतः ।
प्राप्ते चाह्निककाले तु मध्यदेशगते रवौ । दंष्ट्राविलग्नांस्त्रीन् पिण्डान् विधूय सहसा प्रभुः ।
स्थापयामास वै पृथ्व्यां कुशानास्तीर्य्य नारद । स तेष्वात्मानमुद्दिश्य पित्र्यञ्चक्रे यथाविधि ।
सङ्कल्पयित्वा त्रीन् पिण्डान् स्वेनैव विधिना प्रभुः । आत्मगात्रोष्मसम्भूतैः स्नेहगर्भैस्तिलैरपि ।
प्रोक्ष्यापवर्गं देवेशः प्राङ्मुखः कृतवान् स्वयं । मर्य्यादास्थापनार्थञ्च ततो वचनमुक्तवान् । १३५१५
॥ वृषाकपिरुवाच ॥ अहं हि पितरः स्रष्टुमुद्यतो लोककृत् स्वयं । तस्य चिन्तयतः सद्यः पितृकार्य्यविधीन् परान् ।
दंष्ट्राभ्यां प्रविनिर्धूता ममैते दक्षिणां दिशं । आश्रिता धरणीं पिण्डास्तस्मात् पितर एव ते ।
त्रयो मूर्त्तिविहीना वै पिण्डमूर्त्तिधरास्त्विमे । भवन्तु पितरो लोके मया सृष्टाः सनातनाः ।
पिता पितामहश्चैव तथैव प्रपितामहः । अहमेवात्र विज्ञेयस्त्रिषु पिण्डेषु संस्थितः ।
नास्ति मत्तोऽधिकः कश्चित् को वान्योऽर्च्यो मया स्वयं । को वा मम पिता लोके अहमेव पितामहः । १३५२०
पितामहपिता चैव अहमेवात्र कारणं । इत्येतदुक्त्वा वचनं देवदेवो वृषाकपिः ।
वाराहपर्व्वते विप्र दत्त्वा पिण्डान् सविस्तरान् । आत्मानं पूजयित्वैव तत्रैवादर्शनं गतः ।
एषा तस्य स्थितिर्विप्र पितरः पिण्डसंज्ञिताः । लभन्ते सततं पूजां वृषाकपिवचो यथा ।
ये यजन्ति पितॄन् देवान् गुरूंश्चैवातिथींस्तथा । गाश्चैव द्विजमुख्यांश्च पृथिवीं मातरं तथा ।
कर्म्मणा मनसा वाचा विष्णुमेव यजन्ति ते । अन्तर्गतः स भगवान् सर्व्वसत्त्वशरीरगः । १३५२५
समः सर्व्वेषु भूतेषु ईश्वरः सुखदुःखयोः । महान्महात्मा सर्व्वात्मा नारायण इति स्मृतः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये सप्तचत्वारिंशदधिकत्रिशततोऽध्यायः ॥ ३४७ ॥
॥ वैशम्पायन उवाच ॥ श्रुत्वैतन्नारदो वाक्यं नरनारायणेरितं । अत्यन्तं भक्तिमान्देवे एकान्तित्वमुपेयिवान् ।
प्रोष्य वर्षसहस्रन्तु नरनारायणाश्रमे । श्रुत्वा भगवदाख्यानं दृष्ट्वा च हरिमव्ययं ।
हिमवन्तं जगामाशु यत्रास्य स्वक आश्रमः । तावपि ख्याततपसौ नरनारायणावृषी ।

तस्मिन्नेवाश्रमे रम्ये तेपतुस्तप उत्तमं । त्वमप्यमितविक्रान्तः पाण्डवानां कुलोद्वह । १३४१०

पावितात्माद्य संवृत्तः श्रुत्वेमामादितः कथां । नैव तस्यापरो लोको नायं पार्थिवसत्तम ।

कर्म्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययं । मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः ।

यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं हरिं । कथं नाम भवेद्द्वेष्य आत्मा लोकस्य कस्यचित् ।

आत्मा हि पुरुषव्याघ्र ज्ञेयो विष्णुरिति स्थितिः । य एष गुरुरस्माकं ऋषिर्गन्धवतीसुतः ।

तेनैतत् कथितं तात माहात्म्यं परमव्ययं । तस्माच्छ्रुतं मया चेदं कथितञ्च तवानघ । १३४३५

नारदेन तु संप्राप्तः सरहस्यः ससंग्रहः । एष धर्म्मो जगन्नाथः साक्षान्नारायणान्नृप ।

एवमेष महान् धर्म्मः स ते पूर्व्वं नृपोत्तम । कथितो हरिगीतासु समासविधिकल्पितः ।

कृष्णद्वैपायनं व्यासं विद्धि नारायणं भुवि । को ह्यन्यः पुरुषव्याघ्र महाभारतकृद्भवेत् ।

धर्म्मान्नानाविधांश्चैव को ब्रूयात्तमृते विभुं । वर्त्ततान्ते महायज्ञो यथा सङ्कल्पितस्त्वया ।

संकल्पिताश्वमेधस्त्वं श्रुतधर्म्मश्च तत्त्वतः । १३४४०

॥ सौतिरुवाच ॥ एतत्तु महदाख्यानं श्रुत्वा पार्थिवसत्तमः । ततो यज्ञसमाप्त्यर्थं क्रियाः सर्व्वाः समारभत् ।

नारायणीयमाख्यानं एतत्ते कथितं मया । पृष्टेन शौनकाद्येषु नैमिषारण्यवासिषु ।

नारदेन पुरा यद्वै गुरवे तु निवेदितं । ऋषीणां पाण्डवानाञ्च शृण्वतोः कृष्णभीष्मयोः ।

स हि परमर्षिर्जनभुवनपतिः पृथुधरणिधरः श्रुतिविनयविधिः । शमनियमविधिर्यमनियमपरो द्विजवरसहितस्तव च भवतु गतिः ।

हरिरमरहितो ह्यसुरबधकरस्तपसां निधिः सुमहतां यशसाञ्च भाजनं मधुकैटभहा । कृतधर्म्मविदां गतिदोऽभयदो मखभागहरोऽस्तु शरणं स ते । १३४४५

त्रिगुणो विगुणश्चतुरात्मधरः पूर्त्तेष्टयोश्च फलभागहरः । विदधातु नित्यमजितोऽतिबलो गतिमात्मगां सुकृतिनामृषीणां ।

तं लोकसाक्षिणमजं पुरुषं पुराणं रविवर्णमीश्वरं गतिं बहुशः । प्रणमध्वमेकमनसो यतः सलिलोद्भवोऽपि तमृषिं प्रणतः ।

स हि लोकयोनिरमृतस्य पदं सूक्ष्मं परायणमचलं हि पदं । तत् साङ्ख्ययोगिभिरुदारधृतं बुद्ध्या यतात्मभिरिदं सनातनं ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये अष्टचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४८ ॥

॥ शौनक उवाच ॥ श्रुतं भगवतस्तस्य माहात्म्यं परमात्मनः । जन्म धर्म्मगृहे चैव नरनारायणात्मकं ।

महावराहसृष्टा च पिण्डोत्पत्तिः पुरातनी । प्रवृत्तौ च निवृत्तौ च यो यथा परिकल्पितः । १३४५०

तथा च नः श्रुतो ब्रह्मन् कथ्यमानस्त्वयानघ । यच्च तत् कथितं पूर्व्वं त्वया हयशिरो महत् ।

हव्यकव्यभुजो विष्णोरुदक्पूर्व्वे महोदधौ । तच्च दृष्टं भगवता ब्रह्मणा परमेष्ठिना ।

किन्तदुत्पादितं पूर्व्वं हरिणा लोकधारिणा । रूपं प्रभावं महतामपूर्व्वं धीमतां वर ।

दृष्ट्वा हि विबुधश्रेष्ठमपूर्व्वममितौजसं । तदश्वशिरसं पुण्यं ब्रह्मा किमकरोन्मुने ।

एतन्नः संशयं ब्रह्मन् पुराणं ज्ञानसम्भवं । कथयस्वोत्तममते महापुरुषनिर्म्मितं । १३५५५
पाविताः स्म त्वया ब्रह्मन् पुण्यां कथयता कथां ।
॥ सूत उवाच ॥ कथयिष्यामि ते सर्व्वं पुराणं वेदसम्मितं । जगौ यद्भगवान् व्यासो राज्ञः पारीक्षितस्य वै ।
श्रुत्वाश्वशिरसो मूर्त्तिं देवस्य हरिमेधसः । उत्पन्नसंशयो राजा एतदेवमचोदयत् ।
॥ जनमेजय उवाच ॥ यत्तद्दर्शितवान् ब्रह्मा देवं हयशिरोधरं । किमर्थं तत्समभवत्तन्ममाचक्ष्व सत्तम ।
॥ वैशम्पायन उवाच ॥ यत्किञ्चिदिह लोके वै देहबद्धं विशाम्पते । सर्व्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिभिः । १३५६०
ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट् । भूतान्तरात्मा वरदः सगुणो निर्गुणोऽपि च ।
भूतप्रलयमत्यन्तं शृणुष्व नृपसत्तम । धरण्यामथ लीनायामप्सु चैकार्णवे पुरा ।
ज्योतिर्भूते जले चापि लीने ज्योतिषि चानिले । वायौ चाकाशसंलीने आकाशे च मनोऽनुगे ।
व्यक्ते मनसि संलीने व्यक्ते चाव्यक्ततां गते । अव्यक्ते पुरुषं याते पुंसि सर्व्वगतेऽपि च ।
तम एवाभवत् सर्व्वं न प्राज्ञायत किञ्चन । तमसो ब्रह्मसम्भूतं तमोमूलामृतात्मकं । १३५६५
तद्विश्वभावसंज्ञान्तं पौरुषीं तनुमास्थितं । सोऽनिरुद्ध इति प्रोक्तस्तत् प्रधानं प्रचक्षते ।
तदव्यक्तमिति ज्ञेयं त्रिगुणं नृपसत्तम । विद्यासहायवान्देवो विष्वक्सेनो हरिः प्रभुः ।
अप्स्वेव शयनं चक्रे निद्रायोगमुपागतः । जगतश्चिन्तयन् सृष्टिं चित्रां बहुगुणोद्भवां ।
तस्य चिन्तयतः सृष्टिं महानात्मगुणः स्मृतः । अहङ्कारस्ततो जातो ब्रह्मा स तु चतुर्मुखः ।
हिरण्यगर्भो भगवान् सर्व्वलोकपितामहः । पद्मेऽनिरुद्धात् सम्भूतस्तदा पद्मनिभेक्षणः । १३५७०
सहस्रपत्रे द्युतिमानुपविष्टः सनातनः । ददृशेऽद्भुतसङ्काशो लोकानापोमयान् प्रभुः ।
सत्त्वस्थः परमेष्ठी स ततो भूतगणान् सृजन् । पूर्व्वमेव च पद्मस्य पत्रे सूर्य्यांशुसप्रभे ।
नारायणकृतौ विन्दू अपामास्तां गुणोत्तरौ । तावपश्यत् स भगवाननादिनिधनोऽच्युतः ।
एकस्तत्राभवद्विन्दुर्म्मध्वाभो रुचिरप्रभः । स तामसो मधुर्जातस्तदा नारायणाज्ञया ।
कठिनस्त्वपरो विन्दुः कैटभो राजसस्तु सः । तावभ्यधावतां श्रेष्ठौ तमोरजोगुणान्वितौ । १३५७५
बलवन्तौ गदाहस्तौ पद्मनालानुसारिणौ । ददृशातेऽरविन्दस्थं ब्रह्माणममितप्रभं ।
सृजन्तं प्रथमं वेदांश्चतुरश्चारुविग्रहान् । ततो विग्रहवन्तौ तौ वेदान् दृष्ट्वासुरोत्तमौ ।
सहसा जगृहतुर्व्वेदान् ब्रह्मणः पश्यतस्तदा । अथ तौ दानवश्रेष्ठौ वेदान् गृह्य सनातनान् ।
रसां विविशतुस्तूर्णमुदक्पूर्व्वे महोदधौ । ततो हृतेषु वेदेषु ब्रह्मा कश्मलमाविशत् ।
ततो वचनमीशानं प्राह वेदैर्व्विना कृतः । १३५८०
॥ ब्रह्मोवाच ॥ वेदा मे परमं चक्षुर्व्वेदा मे परमं बलं । वेदा मे परमं धाम वेदा मे ब्रह्म चोत्तरं ।
मम वेदा हृताः सर्व्वे दानवाभ्यां बलादितः । अन्धकारा हि मे लोका जाता वेदैर्व्विनाकृताः ।
वेदानृते हि किं कुर्य्यां लोकानां सृष्टिमुत्तमां । अहो बत महद्दुःखं वेदनाशनजं मम ।
प्राप्तं दुनोति हृदयं तीव्रं शोकपरायणं । को हि शोकार्णवे मग्नं मामितोऽद्य समुद्धरेत् ।

वेदांस्तांश्चानयेन्नष्टान् कस्य चाहं प्रियो भवे। इत्येवं भाषमाणस्य ब्रह्मणो नृपसत्तम। १२४८५
हरेस्तोत्रार्थमुद्भूता बुद्धिर्बुद्धिमताम्वर। ततो जगौ परं जप्यं प्राञ्जलिप्रग्रहः प्रभुः।
॥ ब्रह्मोवाच ॥ ओं नमस्ते ब्रह्महृदय नमस्ते मम पूर्व्वज। लोकाद्य भुवनश्रेष्ठ साङ्ख्ययोगनिधे प्रभो।
व्यक्ताव्यक्तकराचिन्त्य क्षेमं पन्थानमास्थितः। विश्वभुक् सर्व्वभूतानामन्तरात्मन्नयोनिज।
अहं प्रसादजस्तुभ्यं लोकधाम स्वयम्भुवः। त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितं।
चाक्षुषं वै द्वितीयं मे जन्म चासीत् पुरातनं। त्वत्प्रसादात्तु मे जन्म द्वितीयं वाचिकं महत्। १२४९०
त्वत्तः श्रवणजञ्चापि चतुर्थं जन्म मे विभो। नासत्यञ्चापि मे जन्म त्वत्तः परममुच्यते।
अण्डजञ्चापि मे जन्म त्वत्तःषष्ठं विनिर्म्मितं। इदञ्च सप्तमं जन्म पद्मजन्मेति वै विभो।
सर्गे सर्गे ह्यहं पुत्त्रस्तव त्रिगुणवर्ज्जितः। प्रथमः पुण्डरीकाक्ष प्रधानगुणकल्पितः।
त्वमीश्वरस्वभावश्च कर्म्मबन्धः स्वयम्भुवः। त्वया विनिर्म्मितोऽहं वै वेदचक्षुर्व्वयोऽतिगः।
ते मे वेदा हृताश्चक्षुरन्धो जातोऽस्मि जागृहि। ददस्व चक्षूंषि मम प्रियोऽहं ते प्रियोऽसि मे। १२४९५
एवं स्तुतः स भगवान् पुरुषः सर्व्वतोमुखः। जहौ निद्रामथ तदा वेदकार्य्यार्थमुद्यतः।
ऐश्वर्य्येण प्रयोगेण द्वितीयान्तनुमास्थितः। सुनासिकेन कायेन भूत्वा चन्द्रप्रभस्तदा।
कृत्वा हयशिरः शुभ्रं वेदानामालयः प्रभुः। तस्य मूर्द्धा समभवद्द्यौः सनक्षत्रतारका।
केशाश्चास्याभवन्दीर्घा रवेरंशुसमप्रभाः। कर्णावाकाशपाताले ललाटं भूतधारिणी।
गङ्गा सरस्वती श्रोण्यौ भ्रुवावास्तां महोदधी। चक्षुषी सोमसूर्य्यौ ते नासा सन्ध्या पुनः स्मृता। १२५००
ओंकारस्त्वथ संस्कारो विद्युज्जिह्वा च निर्म्मिता। दन्ताश्च पितरो राजन् सोमपा इति विश्रुताः।
गोलोको ब्रह्मलोकश्च ओष्ठावास्तां महात्मनः। ग्रीवा चास्याभवद्राजन् कालरात्रिर्गुणोत्तरा।
एतद्धयशिरः कृत्वा नानामूर्त्तिभिरावृतं। अन्तर्द्दधे स विश्वेशो विवेश च रसां प्रभुः।
रसां पुनः प्रविष्टश्च योगं परममास्थितः। शैक्ष्यं स्वरं समास्थाय उद्गीतं प्रासृजत् स्वरं।
सस्वरः सानुनादी च सर्व्वशः स्निग्ध एव च। बभूवान्तर्महीभूतः सर्व्वभूतगुणो हितः। १२५०५
ततस्तावसुरौ कृत्वा वेदान् समयबन्धनान्। रसातले विनिक्षिप्य यतः शब्दस्ततो द्रुतौ।
एतस्मिन्नन्तरे राजन् देवो हयशिरोधरः। जग्राह वेदानखिलान् रसातलगतो हरिः।
प्रादाच्च ब्रह्मणे भूयस्ततः स्वां प्रकृतिं गतः। स्थापयित्वा हयशिर उदक्पूर्व्वे महोदधौ।
वेदानामालयश्चापि बभूवाश्वशिरास्ततः। अथ किञ्चिदपश्यन्तौ दानवौ मधुकैटभौ।
पुनराजग्मतुस्तत्र वेगितौ पश्यताञ्च तौ। यत्र वेदा विनिक्षिप्तास्तत् स्थानं शून्यमेव च। १२५१०
तत उत्तममास्थाय वेगं बलवतांवरौ। पुनरुत्तस्थतुः शीघ्रं रसानामालयात्तदा।
ददृशाते च पुरुषं तमेवादिकरं प्रभुं। श्वेतं चन्द्रविशुद्धाभमनिरुद्धतनौ स्थितं।
भूयोऽप्यमितविक्रान्तं निद्रायोगमुपागतं। आत्मप्रमाणरचिते अपामुपरि कल्पिते।
शयने नागभोगाढ्ये ज्वालामालासमावृते। निष्कल्मषेण सत्त्वेन सम्पन्नं रुचिरप्रभं।

तं दृष्ट्वा दानवेन्द्रौ तौ महाहासममुञ्चतां । ऊचतुश्च समाविष्टौ रजसा तमसा च तौ । १३५३५

अयं स पुरुषः श्वेतः शेते निद्रामुपागतः । अनेन नूनं वेदानां कृतमाहरणं रसात् ।

कस्यैष को नु खल्वेष किञ्च स्वपिति भोगवान् । इत्युच्चारितवाक्यौ तौ बोधयामासतुर्हरिं ।

युद्धार्थिनौ हि विज्ञाय विबुद्धः पुरुषोत्तमः । निरीक्ष्य चासुरेन्द्रौ तौ ततो युद्धे मनो दधे ।

अथ युद्धं समभवत्तयोर्नारायणस्य वै । रजस्तमोविष्टतनू तावुभौ मधुकैटभौ ।

ब्रह्मणोऽपचितिं कुर्व्वन् जघान मधुसूदनः । ततस्तयोर्व्वधेनाशु वेदापहरणेन च । १३५४०

शोकापनयनञ्चक्रे ब्रह्मणः पुरुषोत्तमः । ततः परिवृतो ब्रह्मा हरिणा वेदसत्कृतः ।

निर्म्ममे स तदा लोकान् कृत्स्नान् स्थावरजङ्गमान् । दत्त्वा पितामहायाग्र्यां मतिं लोकविसर्गिकीं ।

तत्रैवान्तर्द्दधे देवो यत एवागतो हरिः । तौ दानवौ हरिर्हत्वा कृत्वा हयशिरस्तनुं ।

पुनः प्रवृत्तिं धर्म्मार्थं तामेव विदधे तनुं । एवमेव महाभागो बभूवाश्वशिरा हरिः ।

पौराणमेतत् प्रख्यातं रूपं वरदमैश्वरं । यो ह्येतद्ब्राह्मणो नित्यं शृणुयाद्धारयीत वा । १३५४५

न तस्याध्ययनं नाशमुपगच्छेत् कदाचन । आराध्य तपसोग्रेण देवं हयशिरोधरं ।

पाञ्चालेन क्रमः प्राप्तो देवेन पथि देशिते । एतद्धयशिरो राजन्नाख्यानं तव कीर्त्तितं ।

पुराणं वेदसमितं यन्मां त्वं परिपृच्छसि । यां यामिच्छेत्तनुं देवः कर्त्तुं कार्य्यविधौ क्वचित् ।

तां तां कुर्य्याद्धि कुर्व्वाणः स्वयमात्मानमात्मना । एष वेदनिधिः श्रीमानेष वै तपसो निधिः ।

एष योगश्च साङ्ख्यञ्च ब्रह्म चाग्र्यं हरिर्व्विभुः । नारायणपरा वेदा यज्ञा नारायणात्मकाः । १३५५०

तपो नारायणपरं नारायणपरा गतिः । नारायणपरं सत्यमृतं नारायणात्मकं ।

नारायणपरो धर्म्मः पुनरावृत्तिदुर्ल्लभः । प्रवृत्तिलक्षणश्चैव धर्म्मो नारायणात्मकः ।

नारायणात्मको गन्धो भूमौ श्रेष्ठतमः स्मृतः । अपाञ्चापि गुणा राजन् रसा नारायणात्मकाः ।

ज्योतिषाञ्च परं रूपं स्मृतं नारायणात्मकं । नारायणात्मकश्चापि स्पर्शो वायुगुणः स्मृतः ।

नारायणात्मकश्चैव शब्द आकाशसम्भवः । मनश्चापि ततो भूतमव्यक्तगुणलक्षणं । १३५५५

नारायणपरः कालो ज्योतिषामयनञ्च यत् । नारायणपरा कीर्त्तिः श्रीश्च लक्ष्मीश्च देवता ।

नारायणपरं साङ्ख्यं योगो नारायणात्मकः । कारणं पुरुषो ह्येषां प्रधानञ्चापि कारणं ।

स्वभावश्चैव कर्म्माणि दैवं येषाञ्च कारणं । अधिष्ठानं तथा कर्त्ता करणञ्च पृथग्विधं ।

विविधा च तथा चेष्टा दैवञ्चैवात्र पञ्चमं । पञ्चकारणसंख्यातो निष्ठा सर्व्वत्र वै हरिः ।

तत्त्वं जिज्ञासमानानां हेतुभिः सर्व्वतोमुखैः । तत्त्वमेको महायोगी हरिर्नारायणः प्रभुः । १३५६०

ब्रह्मादीनां सलोकानां ऋषीणाञ्च महात्मनां । साङ्ख्यानां योगिनाञ्चापि यतीनामात्मवेदिनां ।

मनीषितं विजानाति केशवो न तु तस्य ते । ये केचित् सर्व्वलोकेषु दैवं पित्र्यञ्च कुर्व्वते ।

दानानि च प्रयच्छन्ति तप्यन्ते च तपो महत् । सर्व्वेषामाश्रयो विष्णुरैश्वरं विधिमास्थितः ।

सर्व्वभूतकृतावासो वासुदेवेति चोच्यते ।

अयं हि नित्यः परमो महर्षिर्महाविभूतिर्गुणवर्ज्जिताख्यः। गुणैश्च संयोगमुपैति शीघ्रं कालो यथर्त्तावृतुसंप्रयुक्तः। १२५४५
नैवास्य विन्दन्ति गतिं महात्मनो न चागतिं कश्चिदिहानुपश्यति। ज्ञानात्मकाः सन्ति हि ये महर्षयः पश्यन्ति नित्यं
पुरुषं गुणाधिकं।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये ऊनपञ्चाशदधिकत्रिशततमोऽध्यायः॥ ३४९ ॥

॥ जनमेजय उवाच ॥ अहो ह्येकान्तिनः सर्व्वान् प्रीणाति भगवान् हरिः। विधिप्रयुक्तां पूजाञ्च गृह्णाति भगवान्
स्वयं।

ये तु दग्धेन्धना लोके पुण्यपापविवर्ज्जिताः। तेषां त्वयाभिनिर्द्दिष्टाः पारम्पर्य्यागता गतिः।
चतुर्थ्याञ्चैव ते गत्यां गच्छन्ति पुरुषोत्तमं। एकान्तिनस्तु पुरुषा गच्छन्ति परमं पदं।
नूनमेकान्तधर्म्मोऽयं श्रेष्ठो नारायणप्रियः। अगत्वा गतयस्तिस्रो यद्गच्छन्त्यव्ययं हरिं। १२५५०
सहोपनिषदान् वेदान् ये विप्राः सम्यगास्थिताः। पठन्ति विधिमास्थाय ये चापि यतिधर्म्मिणः।
तेभ्यो विशिष्टं जानामि गतिमेकान्तिनां नृणां। केनैष धर्म्मः कथितो देवेन ऋषिणापि वा।
एकान्तिनाञ्च का चर्य्या कदा चोत्पादिता विभो। एतन्मे संशयं छिन्धि परं कौतूहलं हि मे।
॥ वैशम्पायन उवाच ॥ समुपोढेष्वनीकेषु कुरुपाण्डवयोर्म्मृधे। अर्ज्जुने विमनस्के च गीता भगवता स्वयं।
आगतिश्च गतिश्चैव पूर्व्वन्ते कथिता मया। गहनो ह्येष धर्म्मो वै दुर्व्विज्ञेयोऽकृतात्मभिः। १२५५५
सम्मितः सामवेदेन पुरैवादियुगे कृतः। धार्य्यते स्वयमीशेन राजन्नारायणेन च।
एतदर्थं महाराज पृष्टः पार्थेन नारदः। ऋषिमध्ये महाभागः शृण्वतोः कृष्णभीष्मयोः।
गुरुणा च ममाप्येष कथितो नृपसत्तम। यथा तत् कथितं तत्र नारदेन तथा शृणु।
यदासीन्मानसं जन्म नारायणमुखोद्गतं। ब्रह्मणः पृथिवीपाल तदा नारायणः स्वयं।
तेन धर्म्मेण कृतवान् दैवं पित्र्यञ्च भारत। फेनपा ऋषयश्चैव तं धर्म्मं प्रतिपेदिरे। १२५६०
वैखानसाः फेनपेभ्यो धर्म्ममेतंप्रपेदिरे। वैखानसेभ्यः सोमस्तु ततः सोऽन्तर्द्दधे पुनः।
यदासीच्चाक्षुषं जन्म द्वितीयं ब्रह्मणो नृप। तदा पितामहेनैव सोमाद्धर्म्मः परिश्रुतः।
नारायणात्मको राजन् रुद्राय प्रददौ च तं। ततो योगस्थितो रुद्रः पुरा कृतयुगे नृप।
वालखिल्यानृषीन् सर्व्वान् धर्म्ममेतदपाठयत्। अन्तर्द्दधे ततो भूयस्तस्य देवस्य मायया।
तृतीयं ब्रह्मणो जन्म यदासीद्वाचिकं महत्। तत्रैव धर्म्मः सम्भूतः स्वयं नारायणान्नृप। १२५६५
सुपर्णो नाम तमृषिः प्राप्तवान् पुरुषोत्तमात्। तपसा वै सुतप्तेन दमेन नियमेन च।
त्रिःपरिक्रान्तवानेतत् सुपर्णो धर्म्ममुत्तमं। यस्मात्तस्माद्व्रतं ह्येतत्त्रिसौपर्णमिहोच्यते।
ऋग्वेदपाठपठितं व्रतमेतद्धि दुश्चरं। सुपर्णाच्चाप्यधिगतो धर्म्म एष सनातनः।
वायुना द्विपदां श्रेष्ठ कथितो जगदायुषा। वायोः सकाशात् प्राप्तश्च ऋषिभिर्व्विघसाशिभिः।
ततो महोदधिश्चैव प्राप्तवान् धर्म्ममुत्तमं। अन्तर्द्दधे ततो भूयो नारायणसमाहितः। १२५७०
यदा भूयः श्रवणजा सृष्टिरासीन्महात्मनः। ब्रह्मणः पुरुषव्याघ्र तत्र कीर्त्तयतः शृणु।

जगत् स्रष्टुमना देवो हरिर्नारायणः स्वयं। चिन्तयामास पुरुषं जगत्सर्गकरं प्रभुं।
अथ चिन्तयतस्तस्य कर्णाभ्यां पुरुषः स्रुतः। प्रजासर्गकरो ब्रह्मा तमुवाच जगत्पतिः।
सृज प्रजाः पुत्र सर्व्वा मुखतः पादतस्तथा। श्रेयस्तव विधास्यामि बलं तेजश्च सुव्रत।
धर्म्मञ्च मत्तो गृह्णीष्व सात्वतं नाम नामतः। तेन सृष्टं कृतयुगं स्थापयस्व यथाविधि। १३१७५
ततो ब्रह्मा नमश्चक्रे देवाय हरिमेधसे। धर्म्मञ्चाग्र्यं स जग्राह सरहस्यं ससंग्रहं।
आरण्यकेन सहितं नारायणमुखोद्भवं। उपदिश्य ततो धर्म्मं ब्रह्मणेऽमिततेजसे।
तं कर्त्ता युगधर्म्माणां निराशीः कर्म्मसंज्ञितं। जगाम तमसः पारं यत्राव्यक्तं व्यवस्थितं।
ततोऽथ वरदो देवो ब्रह्मा लोकपितामहः। असृजत् स ततो लोकान् कृत्स्नान् स्थावरजङ्गमान्।
ततः प्रावर्त्तत तदा आदौ कृतयुगं शुभं। ततो हि सात्वतो धर्म्मो व्याप्य लोकानवस्थितः। १३१८०
तेनैवाद्येन धर्म्मेण ब्रह्मा लोकविसर्गकृत्। पूजयामास देवेशं हरिं नारायणं प्रभुं।
धर्म्मप्रतिष्ठाहेतुश्च मनुं स्वारोचिषन्ततः। अध्यापयामास तदा लोकानां हितकाम्यया।
ततः स्वारोचिषः पुत्रं स्वयं शङ्खपदं नृप। अध्यापयत् पुरा व्यग्रः सर्व्वलोकपतिर्व्विभुः।
ततः शङ्खपदश्चापि पुत्रमात्मजमौरसं। दिशां पालं सुवर्णाभमध्यापयत भारत।
सोऽन्तर्द्दधे ततो भूयः प्राप्ते त्रेतायुगे पुनः। नासत्ये जन्मनि पुरा ब्रह्मणः पार्थिवोत्तम। १३१८५
धर्म्ममेतं स्वयं देवो हरिर्नारायणः प्रभुः। तज्जगादारविन्दाक्षो ब्रह्मणः पश्यतस्तदा।
सनत्कुमारो भगवांस्ततः प्राधीतवान्नृप। सनत्कुमारादपि च वीरणो वै प्रजापतिः।
कृतादौ कुरुशार्दूल धर्म्ममेतदधीतवान्। वीरणश्चाप्यधीत्यैनं रैभ्याय मुनये ददौ।
रैभ्यः पुत्राय शुद्धाय सुव्रताय सुमेधसे। कुक्षिनाम्ने स प्रददौ दिशां पालाय धर्म्मिणे।
ततोऽप्यन्तर्द्दधे भूयो नारायणमुखोद्भवः। अण्डजे जन्मनि पुनर्ब्रह्मणे हरियोनये। १३१९०
एष धर्म्मः समुद्भूतो नारायणमुखात् पुनः। गृहीतो ब्रह्मणा राजन् प्रयुक्तश्च यथाविधि।
अध्यापिताश्च मुनयो नाम्ना बर्हिषदो नृप। बर्हिषद्भ्यश्च सम्प्राप्तः सामवेदान्तगं द्विजं।
ज्येष्ठनामाभिविख्यातं ज्येष्ठसामव्रतो हरिः। ज्येष्ठाच्चाप्यनुसंक्रान्तो राजानमविकम्पनं।
अन्तर्द्दधे ततो राजन्नेष धर्म्मः प्रभोर्हरेः। यदिदं सप्तमं जन्म पद्मजं ब्रह्मणो नृप।
तत्रैष धर्म्मः कथितः स्वयं नारायणेन ह। पितामहाय शुद्धाय युगादौ लोककारिणे। १३१९५
पितामहश्च दक्षाय धर्म्ममेतं पुरा ददौ। ततो ज्येष्ठे तु दौहित्रे प्रादाद्दक्षो नृपोत्तम।
आदित्ये सवितुर्ज्ज्येष्ठे विवस्वान् जगृहे ततः। त्रेतायुगादौ च ततो विवस्वान्मनवे ददौ।
मनुश्च लोकभूत्यर्थं सुतायेक्ष्वाकवे ददौ। इक्ष्वाकुणा च कथितो व्याप्य लोकानवस्थितः।
गमिष्यन्ति क्षयान्ते च पुनर्नारायणं नृप। यतीनाञ्चापि यो धर्म्मः स ते पूर्व्वं नृपोत्तम।
कथितो हरिगीतासु समासविधिकल्पितः। नारदेन सुसंप्राप्तः सरहस्यः ससंग्रहः। १३२००
एष धर्म्मो जगन्नाथात् साक्षान्नारायणान्नृप। एवमेष महान् धर्म्म आद्यो राजन् सनातनः।

दुर्व्विज्ञेयो दुष्करश्च सात्वतैर्धार्य्यते सदा । धर्म्मज्ञानेन चैतेन सुप्रयुक्तेन कर्म्मणा ।
अहिंसाधर्म्मयुक्तेन प्रीयते हरिरीश्वरः । एकव्यूहविभागो वा क्वचिद्‌द्विव्यूहसंज्ञितः ।
त्रिव्यूहश्चापि सङ्ख्यातश्चतुर्व्यूहश्च दृश्यते । हरिरेव हि क्षेत्रज्ञो निर्म्ममो निष्कलस्तथा ।
जीवश्च सर्व्वभूतेषु पञ्चभूतगुणातिगः । मनश्च प्रथितं राजन् पञ्चेन्द्रियसमीरणं । १३२०५
एष लोकविधिर्धीमानेष लोकविसर्गकृत् । अकर्त्ता चैव कर्त्ता च कार्य्यं कारणमेव च ।
यथेच्छति तथा राजन् क्रीडते पुरुषोऽव्ययः । एष एकान्तधर्म्मस्ते कीर्त्तितो नृपसत्तम ।
मया गुरुप्रसादेन दुर्व्विज्ञेयोऽकृतात्मभिः । एकान्तिनो हि पुरुषा दुर्लभा बहवो नृप ।
यद्येकान्तिभिराकीर्णं जगत् स्यात् कुरुनन्दन । अहिंसकैरात्मविद्भिः सर्व्वभूतहिते रतैः ।
भवेत् कृतयुगप्राप्तिराशीःकर्म्मविवर्ज्जिता । एवं स भगवान् व्यासो गुरुर्मम विशाम्पते । १३२१०
कथयामास धर्म्मज्ञो धर्म्मराज्ञे द्विजोत्तमः । ऋषीणां सन्निधौ राजन् शृण्वतोः कृष्णभीष्मयोः ।
तस्याप्यकथयत् पूर्व्वं नारदः सुमहातपाः । देवं परमकं ब्रह्म श्वेतं चन्द्राभमच्युतं ।
यत्र चैकान्तिनो यान्ति नारायणपरायणाः ।
॥ जनमेजय उवाच ॥ एवं बहुविधं धर्म्मं प्रतिबुद्धैर्निषेवितं । न कुर्व्वन्ति कथं विप्रा अन्ये नानाव्रते स्थिताः ।
॥ वैशम्पायन उवाच ॥ तिस्रः प्रकृतयो राजन् देहबन्धेषु निर्म्मिताः । सात्त्विकी राजसी चैव तामसी चैव भारत । १३२१५
देहबन्धेषु पुरुषः श्रेष्ठः कुरुकुलोद्वह । सात्त्विकः पुरुषव्याघ्र भवेन्मोक्षाय निश्चितः ।
अत्रापि स विजानाति पुरुषं ब्रह्मवित्तमं । नारायणपरो मोक्षस्ततो वै सात्त्विकः स्मृतः ।
मनीषितञ्च प्राप्नोति चिन्तयन् पुरुषोत्तमं । एकान्तभक्तिः सततं नारायणपरायणः ।
मनीषिणो हि ये केचिद्यतयो मोक्षधर्म्मिणः । तेषां विच्छिन्नतृष्णानां योगक्षेमवहो हरिः ।
जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकस्तु स विज्ञेयो भवेन्मोक्षे च निश्चितः । १३२२०
साङ्ख्ययोगेन तुल्यो हि धर्म्म एकान्तसेवितः । नारायणात्मके मोक्षे ततो यान्ति परां गतिं ।
नारायणेन दृष्टस्तु प्रतिबुद्धो भवेत् पुमान् । एवमात्मेच्छया राजन् प्रतिबुद्धो न जायते ।
राजसी तामसी चैव व्यामिश्रे प्रकृती स्मृते । तदात्मकं हि पुरुषं जायमानं विशाम्पते ।
प्रवृत्तिलक्षणैर्युक्तं नावेक्षति हरिः स्वयं । पश्यत्येनं जायमानं ब्रह्मा लोकपितामहः ।
रजसा तमसा चैव मानसं समभिप्लुतं । कामं देवाश्च ऋषयश्च सत्त्वस्था नृपसत्तम । १३२२५
हीनाः सत्त्वेन सूक्ष्मेण ततो वैकारिकाः स्मृताः ।
॥ जनमेजय उवाच ॥ कथं वैकारिको गच्छेत् पुरुषः पुरुषोत्तमं । वद सर्व्वं यथादृष्टं प्रवृत्तिञ्च यथाक्रमं ।
॥ वैशम्पायन उवाच ॥ सुसूक्ष्मं सत्त्वसंयुक्तं संयुक्तं त्रिभिरक्षरैः । पुरुषः पुरुषं गच्छेन्निष्क्रियः पञ्चविंशकः ।
एवमेकं साङ्ख्ययोगं वेदारण्यकमेव च । परस्पराङ्गान्येतानि पञ्चरात्रञ्च कथ्यते ।
एष एकान्तिनां धर्म्मो नारायणपरात्मकः । १३२३०
यथा समुद्रात् प्रसृता जलौघास्तमेव राजन् पुनराविशन्ति । इमे तथा ज्ञानमहाजलौघा नारायणं वै पुनराविशन्ति ।

एष ते कथितो धर्म्मः सात्वतः कुरुनन्दन । कुरुष्वैनं यथान्यायं यदि शक्नोऽसि भारत ।
एवं हि स महाभागो नारदो गुरवे मम । श्वेतानां यतिनाञ्चाह एकान्तगतिमव्ययां ।
व्यासश्चाकथयत् प्रीत्या धर्म्मपुत्त्राय धीमते । स एवायं मया तुभ्यमाख्यातः प्रसृतो गुरोः ।
इत्थं हि दुस्तरो धर्म्म एष पार्थिवसत्तम । यथैव त्वं यथैवान्ये भवन्तीह विमोहिताः । १२१३५
कृष्ण एव हि लोकानां भावनो मोहनस्तथा । संहारकारकश्चैव कारणञ्च विशाम्पते ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वण्यैकान्तिभावे पञ्चाशदधिकत्रिशततोऽध्यायः ॥ ३५० ॥
॥ जनमेजय उवाच ॥ साङ्ख्ययोगं पञ्चरात्रं वेदारण्यकमेव च । ज्ञानान्येतानि ब्रह्मर्षे लोकेषु प्रचरन्ति हि ।
किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने । प्रब्रूहि वै मया पृष्टः प्रवृत्तिञ्च यथाक्रमं ।
॥ वैशम्पायन उवाच ॥ जज्ञे बहुज्ञं परमत्युदारं यं द्वीपमध्ये सुतमात्मयोगात् । पराशरात् सत्यवती महर्षिं तस्मै नमोऽज्ञा
नतमोनुदाय ।
पितामहाद्यं प्रवदन्ति षष्ठं महर्षिमार्षेयविभूतियुक्तं । नारायणस्यांशजमेकपुत्त्रं द्वैपायनं वेदमहानिधानं । १२१४०
तमादिकालेषु महाविभूतिर्नारायणो ब्रह्ममहानिधानं । ससर्ज्ज पुत्त्रार्थमुदारतेजा व्यासं महात्मानमजं पुराणं ।
॥ जनमेजय उवाच ॥ त्वयैव कथितः पूर्व्वं सम्भवो द्विजसत्तम । वशिष्ठस्य सुतः शक्तिः शक्तिपुत्त्रः पराशरः ।
पराशरस्य दायादः कृष्णद्वैपायनो मुनिः । भूयो नारायणसुतं त्वमेवैनं प्रभाषसे ।
किमतः पूर्व्वजं जन्म व्यासस्यामिततेजसः । कथयस्वोत्तममते जन्म नारायणोद्भवं ।
॥ वैशम्पायन उवाच ॥ वेदार्थान् वेत्तुकामस्य धर्म्मिष्ठस्य तपोनिधेः । गुरोर्मे ज्ञाननिष्ठस्य हिमवत्पाद आसतः । १२१४५
कृत्वा भारतमाख्यानं तपःश्रान्तस्य धीमतः । शुश्रूषान्तत्परा राजन् कृतवन्तो वयं तदा ।
सुमन्तुर्ज्जैमिनिश्चैव पैलश्च सुदृढव्रतः । अहञ्च तुर्थः शिष्यो वै शुको व्यासात्मजस्तथा ।
एभिः परिवृतो व्यासः शिष्यैः पञ्चभिरुत्तमैः । शुशुभे हिमवत्पादे भूतैर्भूतपतिर्यथा ।
वेदानावर्त्तयन् साङ्गान् भारतार्थांश्च सर्व्वशः । तमेकमनसं दान्तं युक्ता वयमुपास्महे ।
कथान्तरेऽथ कस्मिंश्चित् पृष्टोऽस्माभिर्द्विजोत्तमः । वेदार्थान् भारतार्थांश्च जन्म नारायणात्तथा । १२१५०
स पूर्व्वमुक्त्वा वेदार्थान् भारतार्थांश्च तत्त्ववित् । नारायणादिदं जन्म व्याहर्त्तुमुपचक्रमे ।
॥ व्यास उवाच ॥ शृणुध्वमाख्यानवरमिदमार्षेयमुत्तमं । आदिकालोद्भवं विप्रास्तपसाधिगतं मया ।
प्राप्ते प्रजाविसर्गे वै सप्तमे पद्मसम्भवे । नारायणो महायोगी शुभाशुभविवर्ज्जितः ।
ससृजे नाभितः पूर्व्वं ब्रह्माणममितप्रभः । ततः स प्रादुरभवदथैनं वाक्यमब्रवीत् ।
मम त्वं नाभितो जातः प्रजासर्गकरः प्रभुः । सृज प्रजास्त्वं विविधा ब्रह्मन् सजडपण्डिताः । १२१५५
स एवमुक्तो विमुखश्चिन्ताव्याकुलमानसः । प्रणम्य वरदं देवमुवाच हरिमीश्वरं ।
का शक्तिर्मम देवेश प्रजाः स्रष्टुं नमोऽस्तु ते । अप्रज्ञावानहं देव विधत्स्व यदनन्तरं ।
स एवमुक्तो भगवान् भूत्वाथान्तर्हितस्ततः । चिन्तयामास देवेशो बुद्धिं बुद्धिमतांवरः ।
स्वरूपिणी ततो बुद्धिरुपतस्थे हरिं प्रभुं । योगेन चैनां निर्योगः स्वयं नियुयुजे तदा ।

ततामैश्वर्य्ययोगस्थां बुद्धिं गतिमतीं सतीम्। उवाच वचनं देवो बुद्धिं वै प्रभुरव्ययः। १३१६०

ब्रह्माणं प्रविशस्वेति लोकसृष्ट्यर्थसिद्धये। ततस्तमीश्वरादिष्टा बुद्धिः क्षिप्रं विवेश सा।

अथैनं बुद्धिसंयुक्तं पुनः स ददृशे हरिः। भूयश्चैव वचः प्राह सृजेमा विविधाः प्रजाः।

बाढमित्येव कृत्वासौ यथाज्ञां शिरसा हरेः। एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत।

प्राप चैनं मुहूर्त्तेन स्वस्थानं देवसंज्ञितम्। तां चैव प्रकृतिं प्राप्य एकीभावगतोऽभवत्।

अथास्य बुद्धिरभवत् पुनरन्या तदा किल। सृष्टाः प्रजा इमाः सर्व्वा ब्रह्मणा परमेष्ठिना। १३१६५

दैत्यदानवगन्धर्व्वरक्षोगणसमाकुला। जाता हीयं वसुमती भाराक्रान्ता तपस्विनी।

बहवो बलिनः पृथ्व्यां दैत्यदानवराक्षसाः। भविष्यन्ति तपोयुक्ता वरान् प्राप्स्यन्ति चोत्तमान्।

अवश्यमेव तैः सर्व्वैर्वरदानेन दर्पितैः। बाधितव्याः सुरगणा ऋषयश्च तपोधनाः।

तत्र न्याय्यमिदं कर्त्तुं भारावतरणं मया। अथ नानासमुद्भूतैर्व्वसुधायां यथाक्रमम्।

निग्रहेण च पापानां साधूनां प्रग्रहेण च। इयं तपस्विनी सत्या धारयिष्यति मेदिनी। १३१७०

मया ह्येषा हि ध्रियते पातालस्थेन भोगिना। मया धृता धारयति जगद्विश्वं चराचरम्।

तस्मात् पृथ्व्याः परित्राणं करिष्ये सम्भवं गतः। एवं स चिन्तयित्वा तु भगवान् मधुसूदनः।

रूपाण्यनेकान्यसृजत् प्रादुर्भावे भवाय सः। वाराहं नारसिंहञ्च वामनं मानुषं तथा।

एभिर्मया निहन्तव्या दुर्व्विनीताः सुरारयः। अथ भूयो जगत्स्रष्टा भोःशब्देनानुवादयन्।

सरस्वतीमुच्चचार तत्र सारस्वतोऽभवत्। अपान्तरतमा नाम सुतो वाक्सम्भवः प्रभुः। १३१७५

भूतभव्यभविष्यज्ञः सत्यवादी दृढव्रतः। तमुवाच नतं मूर्द्ध्ना देवानामादिरव्ययः।

वेदाख्याने श्रुतिः कार्य्या त्वया मतिमताम्वर। तस्मात् कुरु यथाज्ञप्तं ममैतद्वचनं मुने।

तेन भिन्नास्तदा वेदा मनोः स्वायम्भुवेऽन्तरे। ततस्तुतोष भगवान् हरिस्तेनास्य कर्म्मणा।

तपसा च सुतप्तेन यमेन नियमेन च। मन्वन्तरेषु पुत्त्र त्वमेवमेवं प्रवर्त्तकः।

भविष्यस्यचलो ब्रह्मन्नप्रधृष्यश्च नित्यशः। पुनस्तिष्ये च सम्प्राप्ते कुरवो नाम भारताः। १३१८०

भविष्यन्ति महात्मानो राजानः प्रथिता भुवि। तेषां त्वत्तः प्रसूतानां कुलभेदो भविष्यति।

परस्परविनाशार्थं त्वामृते द्विजसत्तम। तत्राप्यनेकधा वेदान् भेत्स्यसे तपसान्वितः।

कृष्णो युगे च सम्प्राप्ते कृष्णवर्णो भविष्यसि। धर्म्माणां विविधानाञ्च कर्त्ता ज्ञानकरस्तथा।

भविष्यसि तपोयुक्तो न च रागाद्विमोक्ष्यसे। वीतरागश्च पुत्त्रस्ते परमात्मा भविष्यति।

महेश्वरप्रसादेन नैतद्वचनमन्यथा। १३१८५

यं मानसं वै प्रवदन्ति विप्राः पितामहस्योत्तमबुद्धियुक्तम्। वशिष्ठमग्र्यं तपसो निधानं यश्चातिसूर्य्यं व्यतिरिच्यते भाः।

तस्यान्वये चापि ततो महर्षिः पराशरो नाम महाप्रभावः। पिता स ते वेदनिधिर्व्वरिष्ठो महातपा वै तपसो निवासः।

कानीनगर्भः पितृकन्यकायां तस्मादृषेस्त्वं भविता च पुत्त्रः।

भूतभव्यभविष्याणां छिन्नसर्व्वार्थसंशयः। ये ह्यतिक्रान्तकाः पूर्व्वं सहस्रयुगपर्य्ययाः।

तांश्च सर्व्वांस्तथोद्दिष्टान् द्रक्ष्यसे तपसान्वितः । पुनर्द्रक्ष्यसि चानेकसहस्रयुगपर्य्ययान् । १३१९०

अनादिनिधनं लोके चक्रहस्तञ्च मां मुने । अनुध्यानान्मम मुने नैतद्वचनमन्यथा ।

भविष्यति महासत्त्व ख्यातिश्चाप्यतुला तव । शनैश्चरः सूर्य्यपुत्त्रो भविष्यति मनोर्महान् ।

तस्मिन्मन्वन्तरे चैव मन्वादिगणपूर्व्वकः । त्वमेव भविता वत्स मत्प्रसादान्न संशयः ।

यत्किञ्चिद्विद्यते लोके सर्व्वन्तन्मद्विचेष्टितं । अन्यो ह्यन्यं चिन्तयति स्वच्छन्दं विदधाम्यहं ।

एवं सारस्वतमृषिमपान्तरतमन्तथा । उक्त्वा वचनमीशानः साधयस्वेत्यथाब्रवीत् । १३१९५

सोऽहं तस्य प्रसादेन देवस्य हरिमेधसः । अपान्तरतमा नाम ततो जातोऽऽज्ञया हरेः ।

पुनश्च जातो विख्यातो वशिष्ठकुलनन्दनः । तदेतत् कथितं जन्म मया पूर्व्वकमात्मनः ।

नारायणप्रसादेन तथा नारायणांशजं । मया हि सुमहत्तप्तं तपः परमदारुणं ।

पुरा मतिमतां श्रेष्ठाः परमेण समाधिना । एतद्वः कथितं सर्व्वं यन्मां पृच्छत पुत्त्रकाः ।

पूर्व्वजन्म भविष्यञ्च भक्तानां स्नेहतो मया । १३२००

॥ वैशम्पायन उवाच ॥ एष ते कथितः पूर्व्वं सम्भवोऽस्मद्गुरोर्नृप । व्यासस्याक्लिष्टमनसो यथा पृष्टः पुनः शृणु ।

साङ्ख्यं योगं पञ्चरात्रं वेदाः पाशुपतन्तथा । ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ।

साङ्ख्यस्य वक्ता कपिलः परमर्षिः स उच्यते । हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः ।

अपान्तरतमाश्चैव वेदाचार्य्यः स उच्यते । प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ।

उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः । उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः । १३२०५

पञ्चरात्रस्य कृत्स्नस्य वेत्ता तु भगवान् स्वयं । सर्व्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ।

यथागमं यथाज्ञानं निष्ठा नारायणः प्रभुः । नचैनमेवं जानन्ति तमोभूता विशाम्पते ।

तमेव शास्त्रकर्त्तारः प्रवदन्ति मनीषिणः । निष्ठां नारायणमृषिं नान्योऽस्तीति वचो मम ।

निःसंशयेषु सर्व्वेषु नित्यं वसति वै हरिः । ससंशयान् हेतुबलान्नाध्यावसति माधवः ।

पञ्चरात्रविदो ये तु यथाक्रमपरा नृप । एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै । १३२१०

साङ्ख्यञ्च योगञ्च सनातने द्वे वेदाश्च सर्व्वे निखिलेन राजन् । सर्व्वैः समस्तैरृषिभिर्निरुक्तो नारायणो विश्वमिदं पुराणं ।

शुभाशुभं कर्म्म समीरितं यत् प्रवर्त्तते सर्व्वलोकेषु किञ्चित् । तस्मादृषेस्तद्भवतीति विद्याद्दिव्यन्तरीक्षे भुवि चाप्सु चेति ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये द्वैपायनोत्पत्तौ एकपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५१ ॥

॥ जनमेजय उवाच ॥ बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु । को ह्यत्र पुरुषः श्रेष्ठः को वा योनिरिहोच्यते ।

॥ वैशम्पायन उवाच ॥ बहवः पुरुषा लोके साङ्ख्ययोगविचारिणां । नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।

बहूनां पुरुषाणाञ्च यथैका योनिरुच्यते । तथा तं पुरुषं विश्वं व्याख्यास्यामि गुणाधिकं । १३२१५

नमस्कृत्वा च गुरवे व्यासाय विदितात्मने । तपोयुक्ताय दान्ताय वन्द्याय परमर्षये ।

इदं पुरुषसूक्तं हि सर्व्ववेदेषु पार्थिव । ऋतं सत्यञ्च विख्यातमृषिसिंहेन चिन्तितं ।

उत्सर्गेणापवादेन ऋषिभिः कपिलादिभिः । अध्यात्मचिन्तामाश्रित्य शास्त्राण्युक्तानि भारत ।
समासतस्तु यद्व्यासः पुरुषैकत्वमुक्तवान् । तत्तेऽहं सम्प्रवक्ष्यामि प्रसादादमितौजसः ।
अत्राप्युदाहरन्तीममितिहासं पुरातनं । ब्रह्मणा सह संवादं त्र्यम्बकस्य विशाम्पते । १३७२०
क्षीरोदस्य समुद्रस्य मध्ये हाटकसप्रभः । वैजयन्त इति ख्यातः पर्व्वतः प्रवरो नृप ।
तत्राध्यात्मगतिं देव एकाकी प्रविचिन्तयन् । वैराजसदनान्नित्यं वैजयन्तं निषेवते ।
अथ तत्रासतस्तस्य चतुर्व्वक्त्रस्य धीमतः । ललाटप्रभवः पुत्रः शिव आगाद्यदृच्छया ।
आकाशेन महायोगी पुरा त्रिनयनः प्रभुः । ततः खान्निपपाताशु धरणीधरमूर्द्धनि ।
अग्रतश्चाभवत् प्रीतो ववन्दे चापि पादयोः । तं पादयोर्निपतितं दृष्ट्वा सव्येन पाणिना । १३७२५
उत्थापयामास तदा प्रभुरेकः प्रजापतिः । उवाच चैनं भगवांश्चिरस्यागतमात्मजं ।
॥ पितामह उवाच ॥ स्वागतन्ते महाबाहो दिष्ट्या प्राप्तोऽसि मेऽन्तिकं । कच्चित्ते कुशलं पुत्र स्वाध्यायतपसोः सदा ।
नित्यमुग्रतपास्त्वं हि ततः पृच्छामि ते पुनः ।
॥ रुद्र उवाच ॥ त्वत्प्रसादेन भगवन् स्वाध्यायतपसोर्म्मम । कुशलञ्चाव्ययञ्चैव सर्व्वस्य जगतस्तथा ।
चिरदृष्टो हि भगवान् वैराजसदने मया । ततोऽहं पर्व्वतं प्राप्तस्त्विमं त्वत्पादसेवितं । १३७३०
कौतूहलञ्चापि हि मे एकान्तगमनेन ते । नैतत् कारणमल्पं हि भविष्यति पितामह ।
किन्नु तत् सदनं श्रेष्ठं क्षुत्पिपासाविवर्ज्जितं । सुरासुरैरध्युषितं ऋषिभिश्चामितप्रभैः ।
गन्धर्व्वैरप्सरोभिश्च सततं सन्निषेवितं । उत्सृज्येमं गिरिवरमेकाकी प्राप्तवानसि ।
॥ ब्रह्मोवाच ॥ वैजयन्तो गिरिवरः सततं सेव्यते मया । अत्रैकाग्रेण मनसा पुरुषश्चिन्त्यते विराट् ।
॥ रुद्र उवाच ॥ बहवः पुरुषाः ब्रह्मंस्त्वया सृष्टाः स्वयम्भुवा । सृज्यन्ते चापरे ब्रह्मन् स चैकः पुरुषो विराट् । १३७३५
को ह्यसौ चिन्त्यते ब्रह्मंस्त्वयैकः पुरुषोत्तमः । एतन्मे संशयं ब्रूहि महत् कौतूहलं हि मे ।
॥ ब्रह्मोवाच ॥ बहवः पुरुषाः पुत्र ये त्वया समुदाहृताः । एवमेतदतिक्रान्तं द्रष्टव्यं नैवमित्यपि ।
आधारन्तु प्रवक्ष्यामि एकस्य पुरुषस्य ते । बहूनां पुरुषाणां स यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वं परमं सुमहत्तमं । निर्गुणं निर्गुणा भूत्वा प्रविशन्ति सनातनं ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये द्विपञ्चाशदधिकत्रिशतोऽध्यायः ॥ ३५२ ॥
॥ ब्रह्मोवाच ॥ शृणु पुत्र यथा ह्येष पुरुषः शाश्वतोऽव्ययः । अक्षयश्चाप्रमेयश्च सर्व्वगश्च निरुच्यते । १३७४०
न स शक्यस्त्वया द्रष्टुं मयान्यैर्व्वापि सत्तम । सगुणैर्निर्गुणैर्व्विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः ।
अशरीरः शरीरेषु सर्व्वेषु निवसत्यसौ । वसन्नपि शरीरेषु न स लिप्यति कर्म्मभिः ।
ममान्तरात्मा तव च ये चान्ये देहसंज्ञिताः । सर्व्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् ।
विश्वमूर्द्धा विश्वभुजो विश्वपादाक्षिनासिकः । एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखं ।
क्षेत्राणि हि शरीराणि बीजञ्चापि शुभाशुभं । तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते । १३७४५
नागतिर्न गतिस्तस्य ज्ञेया भूतेषु केनचित् । सांख्येन विधिना चैव योगेन च यथाक्रमं ।

चिन्तयामि गतिञ्चास्य न गतिं वेद्मि चोत्तरां । यथाज्ञानन्तु वक्ष्यामि पुरुषन्तु सनातनं ।

तस्यैकत्वं महत्त्वञ्च स चैकः पुरुषः स्मृतः । महापुरुषशब्दं स बिभर्त्त्येकः सनातनः ।

एको हुताशो बहुधा समिध्यते एकः सूर्य्यस्तपसो योनिरेका । एको वायुर्ब्बहुधा वाति लोके महोदधिश्चाम्भसां योनिरेकः ।

पुरुषश्चैको निर्गुणो विश्वरूपस्तं निर्गुणं पुरुषञ्चाविशन्ति । १२६८०

हित्वा गुणमयं सर्व्वं कर्म्म हित्वा शुभाशुभं । उभे सत्यानृते त्यक्त्वा एवं भवति निर्गुणः ।

अचिन्त्यञ्चापि तं ज्ञात्वा भावसूक्ष्मञ्चतुष्टयं । विचरेद्योऽसमुन्नद्धः स गच्छेत् पुरुषं शुभं ।

एवं हि परमात्मानं केचिदिच्छन्ति पण्डिताः । एकात्मानं तथात्मानमपरे ज्ञानचिन्तकाः ।

तत्र यः परमात्मा हि स नित्यं निर्गुणः स्मृतः । स हि नारायणो ज्ञेयः सर्व्वात्मा पुरुषो हि सः ।

न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा । कर्म्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते । १२६८५

स सप्तदशकेनापि राशिना युज्यते हि सः । एवं बहुविधः प्रोक्तः पुरुषस्ते यथाक्रमं ।

यत्तत् कृत्स्नं लोकतन्त्रस्य धाम वेद्यं परं बोधनीयः स बोद्धा । मन्ता मन्तव्यं प्राशिता प्राशनीयं द्रष्टा द्रष्टव्यं रसिता रसनीयं ।

घ्राता घ्रेयं स्पर्शिता स्पर्शनीयं द्रष्टा द्रष्टव्यं श्राविता श्रावणीयं । ज्ञाता ज्ञेयं सगुणं निर्गुणञ्च यद्वै प्रोक्तं तात सम्यक् प्रधानं ।

नित्यञ्चैतच्छाश्वतञ्चाव्ययञ्च यद्वै सूते धातुराद्यं विधानं । तद्वै विप्राः प्रवदन्तेऽनिरुद्धं यद्वै लोके वैदिकं कर्म्म साधु ।

आशीर्युक्तं तद्धि तस्यैव भाव्यं देवाः सर्व्वे मुनयः साधुदान्तास्तं प्राग्यज्ञैर्यज्ञभागं यजन्ते । १२६९०

अहं ब्रह्मा आद्य ईशः प्रजानां तस्माज्जातस्त्वञ्च मत्तः प्रसूतः । मत्तो जगज्जङ्गमं स्थावरञ्च सर्व्वेवेदाः सरहस्या हि पुत्र ।

चतुर्व्विभक्तः पुरुषः स क्रीडति यथेच्छति । एवं स भगवान् स्वेन ज्ञानेन प्रतिबोधितः ।

एतत्ते कथितं पुत्र यथावदनुपृच्छतः । साङ्ख्यज्ञाने तथायोगे यथावदनुवर्णितं ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये त्रिपञ्चाशदधिकत्रिशततोऽध्यायः ॥ ३५२ ॥

॥ युधिष्ठिर उवाच ॥ धर्म्माः पितामहेनोक्ता मोक्षधर्म्माश्रिताः शुभाः । धर्म्ममाश्रमिणां श्रेष्ठं वक्तुमर्हति मे भवान् ।

॥ भीष्म उवाच ॥ सर्व्वत्र विहितो धर्म्मः स्वर्ग्यः सत्यफलं महत् । बहुद्वारस्य धर्म्मस्य नेहास्ति विफला क्रिया । १२६९५

यस्मिन् यस्मिंश्च विषये यो यो याति विनिश्चितं । स तमेवाभिजानाति नान्यं भरतसत्तम ।

इमाञ्च त्वं नरव्याघ्र श्रोतुमिच्छसि मे कथां । पुरा शक्रस्य कथितां नारदेन महर्षिणा ।

महर्षिर्नारदो राजन् सिद्धस्त्रैलोक्यसम्मतः । पर्य्येति क्रमशो लोकान् वायुरव्याहतो यथा ।

स कदाचिन्महेष्वास देवराजालयङ्गतः । सत्कृतश्च महेन्द्रेण प्रत्यासन्नगतोऽभवत् ।

तं कृतक्षणमासीनं पर्य्यपृच्छच्छचीपतिः । महर्षे किञ्चिदाश्चर्य्यमस्ति दृष्टं त्वयानघ । १२७००

यद्वा त्वमपि विप्रर्षे त्रैलोक्यं सचराचरं । जातकौतूहलो नित्यं सिद्धश्चरसि साक्षिवत् ।

न ह्यस्त्यविदितं लोके देवर्षे तव किञ्चन । श्रुतं वाप्यनुभूतं वा दृष्टं वा कथयस्व मे ।

तस्मै राजन् सुरेन्द्राय नारदो वदताम्वरः। आसीनायोपपन्नाय प्रोक्तवान् विपुलां कथां।
यथा येन च कल्पेन स तस्मै द्विजसत्तमः। कथां कथितवान् पृष्टस्तथा त्वमपि मे शृणु।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वण्युञ्छवृत्त्युपाख्याने चतुःपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५४ ॥

॥ भीष्म उवाच ॥ आसीत् किल नरश्रेष्ठ महापद्मे पुरोत्तमे। गङ्गाया दक्षिणे तीरे कश्चिद्विप्रः समाहितः। १२०७५
सौम्यः सोमान्वये वेदे गताध्वा छिन्नसंशयः। धर्म्मनित्यो जितक्रोधो नित्यतृप्तो जितेन्द्रियः।
तपःस्वाध्यायनिरतः सत्यः सज्जनसम्मतः। न्यायप्राप्तेन वित्तेन स्वेन शीलेन चान्वितः।
ज्ञातिसम्बन्धिविपुले सत्त्वाद्याश्रमसम्मिते। कुले महति विख्याते विशिष्टां वृत्तिमास्थितः।
स पुत्रान् बहुलान् दृष्ट्वा विपुले कर्म्मणि स्थितः। कुलधर्म्माश्रितो राजन् धर्म्मचर्य्यास्थितोऽभवत्।
ततः स्वधर्म्मं वेदोक्तं यथाशास्त्रोक्तमेव च। शिष्टाचीर्णञ्च धर्म्मञ्च त्रिविधं चिन्त्य चेतसा। १२०८०
किन्नु मे स्याच्छुभं कृत्वा किं कृतं किं परायणं। इत्येवं खिद्यते नित्यं न च याति विनिश्चयं।
तस्यैवं खिद्यमानस्य धर्म्मं परममास्थितः। कदाचिदतिथिः प्राप्तो ब्राह्मणः सुसमाहितः।
स तस्मै सत्क्रियाञ्चक्रे क्रियायुक्तेन हेतुना। विश्रान्तं सुखमासीनमिदं वचनमब्रवीत्।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वण्युञ्छवृत्त्युपाख्याने पञ्चपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५५ ॥

॥ ब्राह्मण उवाच ॥ समुत्पन्नाभिधानोऽस्मि वाङ्माधुर्य्येण तेऽनघ। मित्रत्वमभिपन्नस्त्वा किञ्चिद्वक्ष्यामि तच्छृणु।
गृहस्थधर्म्मं विप्रेन्द्र कृत्वा पुत्त्र गतस्त्वहं। धर्म्मं परमकं कुर्य्यां को हि मार्गो भवेद्द्विज। १२०८५
अहमात्मानमास्थाय एक एवात्मनि स्थितः। कर्त्तुं काङ्क्षामि नेच्छामि बद्धः साधारणैर्गुणैः।
यावदेतदतीतं मे वयः पुत्त्र फलाश्रितं। तावदिच्छामि पाथेयमादातुं पारलौकिकं।
अस्मिन् हि लोकसंसारे परम्पारमभीप्सतः। उत्पन्ना मे मतिरियं कुतो धर्म्ममयः प्लवः।
संयुज्यमानानि निशम्य लोके निर्य्यात्यमानानि च सात्त्विकानि। दृष्ट्वा तु धर्म्मध्वजकेतुमालां प्रकीर्य्यमाणामुपरि प्रजानां।
न मे मनो रज्यति भोगकाले दृष्ट्वा यतीन् प्रार्थयतः परत्र। तेनातिथे बुद्धिबलाश्रयेण धर्म्मेण धर्म्मे विनियुङ्क्ष्व मां त्वं। १२०९०
सोऽतिथिर्व्वचनं तस्य श्रुत्वा धर्म्माभिभाषिणः। प्रोवाच वचनं श्लक्ष्णं प्राज्ञो मधुरया गिरा।
॥ अतिथिरुवाच ॥ अहमप्यत्र मुह्यामि ममाप्येष मनोरथः। न च संनिश्चयं यामि बहुद्वारे त्रिपिष्टपे।
केचिन्मोक्षं प्रशंसन्ति केचिद्यज्ञफलं द्विजाः। वानप्रस्थाश्रयाः केचित् गार्हस्थ्यं केचिदास्थिताः।
राजधर्म्माश्रयं केचित् केचिदात्मफलाश्रयं। गुरुधर्म्माश्रयं केचित् केचिद्वाक्संयमाश्रयं।
मातरं पितरं केचित् शुश्रूषन्तो दिवङ्गताः। अहिंसयापरे स्वर्गं सत्येन च तथा परे। १२०९५
आहवेऽभिमुखाः केचिन्निहतास्त्रिदिवङ्गताः। केचिदुञ्छव्रतैः सिद्धाः स्वर्गमार्गं समाश्रिताः।
केचिदध्ययने युक्ता वेदव्रतपराः शुभाः। बुद्धिमन्तो गताः स्वर्गं तुष्टात्मानो जितेन्द्रियाः।
आर्ज्जवेनापरे युक्ता निहता नार्ज्जवैर्ज्जनैः। ऋजवो नाकपृष्ठे वै शुद्धात्मानः प्रतिष्ठिताः।
एवं बहुविधैर्लोके धर्म्मद्वारैरनावृतैः। ममापि मतिराविग्ना मेघलेखेव वायुना।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वण्युञ्छवृत्त्युपाख्याने षट्पञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५६ ॥

॥ अतिथिरुवाच ॥ उपदेशन्तु ते विप्र करिष्येऽहं यथाक्रमं । गुरुणा मे यथाख्यातमर्थतस्तन्तु मे शृणु । १३८००
यत्र पूर्व्वाभिसर्गे वै धर्म्मचक्रं प्रवर्त्तितं । नैमिषे गोमतीतीरे तत्र नागाह्वयं पुरं ।
समग्रैस्त्रिदशैस्तत्र इष्टमासीद्द्विजर्षभ । यत्रेन्द्रातिक्रमञ्चक्रे मान्धाता राजसत्तमः ।
कृताधिवासो धर्म्मात्मा तत्र चक्षुःश्रवा महान् । पद्मनाभो महानागः पद्म इत्येव विश्रुतः ।
स वाचा कर्म्मणा चैव मनसा च द्विजर्षभ । प्रसादयति भूतानि त्रिविधे वर्त्मनि स्थितः ।
साम्ना भेदेन दानेन दण्डेनेति चतुर्व्विधं । विषमस्थं समस्थञ्च चक्षुर्ध्यानेन रक्षति । १३८०५
तमतिक्रम्य विधिना प्रष्टुमर्हसि काङ्क्षितं । स ते परमकं धर्म्मं न मिथ्या दर्शयिष्यति ।
स हि सर्व्वातिथिर्नागो बुद्धिशास्त्रविशारदः । गुणैरनुपमैर्युक्तः समस्तैराभिकामिकैः ।
प्रकृत्या नित्यसलिलो नित्यमध्ययने रतः । तपोदमाभ्यां संयुक्तो वृत्तेनानवरेण च ।
यज्वा दानपतिः क्षान्तो वृत्ते च परमे स्थितः । सत्यवागनसूयुश्च शीलवान्नियतेन्द्रियः ।
शेषान्नभोक्ता वचनानुकूलो हितार्ज्जवोत्कृष्टकृताकृतज्ञः । अवैरकृद्भूतहिते नियुक्तो गङ्गाह्रदाम्भोऽभिजनोपपन्नः । १३८१०
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि उञ्छवृत्त्युपाख्याने सप्तपञ्चाशदधिकत्रिशततोऽध्यायः ॥ ३५७ ॥
॥ ब्राह्मण उवाच ॥ अतिभारोद्यतस्येव भारावतरणं महत् । पराश्वासकरं वाक्यमिदं मे भवतः श्रुतं ।
अध्वक्लान्तस्य शयनं स्थानक्लान्तस्य चासनं । तृषितस्य च पानीयं क्षुधार्त्तस्य च भोजनं ।
ईप्सितस्य च सम्प्राप्तिरन्नस्य समयेऽतिथेः । एषितस्यात्मजः काले वृद्धस्येव सुतो यथा ।
मनसा चिन्तितस्येव प्रीतिस्निग्धस्य दर्शनं । प्रह्लादयति मां वाक्यं भवता यदुदीरितं ।
दत्तचक्षुरिवाकाशे पश्यामि विमृशामि च । प्रज्ञानवचनाद्योऽयमुपदेशो हि मे कृतः । १३८१५
बाढमेवं करिष्यामि यथा मे भाषते भवान् । इमां हि रजनीं साधो निवसस्व मया सह ।
प्रभाते यास्यति भवान् पर्य्याश्वस्तः सुखोषितः । असौ हि भगवान् सूर्य्यो मन्दरश्मिरवाङ्मुखः ।
॥ भीष्म उवाच ॥ ततस्तेन कृतातिथ्यः सोऽतिथिः शत्रुसूदनः । उवास किल तां रात्रिं सह तेन द्विजेन वै ।
चतुर्थधर्म्मसंयुक्तं तयोः कथयतोस्तदा । व्यतीता सा निशा कृत्स्ना सुखेन दिवसोपमा ।
ततः प्रभातसमये सोऽतिथिस्तेन पूजितः । ब्राह्मणेन यथाशक्त्या स्वकार्य्यमभिकाङ्क्षता । १३८२०
ततः स विप्रः कृतकर्म्मनिश्चयः कृताभ्यनुज्ञः स्वजनेन धर्म्मकृत् । यथोपदिष्टं भुजगेन्द्रसंश्रयं जगाम कालेषु कृतैकनिश्चयः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि उञ्छवृत्त्युपाख्याने अष्टपञ्चाशदधिकत्रिशततोऽध्यायः ॥ ३५८ ॥
॥ भीष्म उवाच ॥ स वनानि विचित्राणि तीर्थानि च सरांसि च । अभिगच्छन् क्रमेण स्म कञ्चिन्मुनिमुपस्थितः ।
तं स तेन यथोद्दिष्टं नागं विप्रेण ब्राह्मणः । पर्य्यपृच्छद्यथान्यायं श्रुत्वैव च जगाम सः ।
सोऽभिगम्य यथान्यायं नागायतनमर्थवित् । प्राप्तवानहमस्मीति भोः शब्दालङ्कृतं वचः ।
ततस्तस्य वचनं श्रुत्वा रूपिणी धर्म्मवत्सला । दर्शयामास तं विप्रं नागपत्नी पतिव्रता । १३८२५
सा तस्मै विधिवत् पूजां चक्रे धर्म्मपरायणा । स्वागतेनागतं कृत्वा किं करोमीति चाब्रवीत् ।

॥ ब्राह्मण उवाच ॥ विश्रान्तोऽभ्यर्च्चितश्चास्मि भवत्या श्लक्ष्णया गिरा । द्रष्टुमिच्छामि भवति देवं नागमनुत्तमं ।
एतद्धि परमं कार्य्यमेतन्मे परमेप्सितं । अनेन चार्थेनाद्याहमिह सम्प्राप्तः पन्नगाश्रमं ।
॥ नागभार्य्योवाच ॥ आर्य्य सूर्य्यरथं वोढुं गतोऽसौ माससारिकः । सप्ताष्टभिर्द्दिनैर्व्विप्र दर्शयिष्यत्यसंशयं ।
एतद्विदितमार्य्यस्य विवासकरणं मम । भर्त्तुर्भवतु किञ्चान्यत् क्रियतां तद्वदस्व मे । १३८३०
॥ ब्राह्मण उवाच ॥ अनेन निश्चयेनाहं साध्वि संप्राप्तवानिह । प्रतीक्षन्नागमं देवि वत्स्याम्यस्मिन्महावने ।
सम्प्राप्तस्यैव चाव्यग्रमावेद्योऽहमिहागतः । ममाभिगमनं प्राप्तो वाच्यश्च वचनं त्वया ।
अहमप्यत्र वत्स्यामि गोमत्याः पुलिने शुभे । कालं परिमिताहारो यथोक्तं परिपालयन् ।
ततः स विप्रस्तान्नागीं समाधाय पुनः पुनः । तदेव पुलिनं नद्याः प्रययौ ब्राह्मणर्षभः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वण्युञ्छवृत्त्युपाख्याने ऊनषष्ट्यधिकत्रिशतोऽध्यायः ॥ ३५९ ॥
॥ भीष्म उवाच ॥ अथ तेन नरश्रेष्ठ ब्राह्मणेन तपस्विना । निराहारेण वसता दुःखितास्ते भुजङ्गमाः । १३८३५
सर्व्वे सम्भूय सहितास्तस्य नागस्य बान्धवाः । भ्रातरस्तनया भार्य्या ययुस्तं ब्राह्मणम्प्रति ।
तेऽपश्यन् पुलिने तं वै विविक्ते नियतव्रतं । समासीनं निराहारं द्विजं जप्यपरायणं ।
ते सर्व्वे समतिक्रम्य विप्रमभ्यर्च्च्य चासकृत् । ऊचुर्व्वाक्यमसन्दिग्धमातिथेयस्य बान्धवाः ।
षष्ठो हि दिवसस्तेऽद्य प्राप्तस्येह तपोधन । न चाभिभाषसे किञ्चिदाहारं धर्म्मवत्सल ।
अस्मानभिगतश्चासि वयञ्च त्वामुपस्थिताः । कार्य्यञ्चातिथ्यमस्माभिर्व्वयं सर्व्वे कुटुम्बिनः । १३८४०
मूलं फलं वा पर्णं वा पयो वा द्विजसत्तम । आहारहेतोरन्नं वा भोक्तुमर्हसि ब्राह्मण ।
त्यक्ताहारेण भवता वने निवसता त्वया । बालवृद्धमिदं सर्व्वं पीड्यते धर्म्मसङ्कटात् ।
न हि नो भ्रूणहा कश्चिज्जातापत्योऽनृतोऽपि वा । पूर्व्वाशी वा कुले ह्यस्मिन्देवतातिथिबन्धुषु ।
॥ ब्राह्मण उवाच ॥ उपदेशेन युष्माकमाहारोऽयं कृतो मया । द्विरूनं दशरात्रं वै नागस्यागमनं प्रति ।
यद्यष्टरात्रेऽतिक्रान्ते नागमिष्यति पन्नगः । तदाहारं करिष्यामि तन्निमित्तमिदं व्रतं । १३८४५
कर्त्तव्यो न च सन्तापो गम्यताञ्च यथागतं । तन्निमित्तमिदं सर्व्वं नैतद्भेत्तुमिहार्हथ ।
ते तेन समनुज्ञाता ब्राह्मणेन भुजङ्गमाः । स्वमेव भवनं जग्मुरकृतार्था नरर्षभ ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वण्युञ्छवृत्त्युपाख्याने षष्ट्यधिकत्रिशतोऽध्यायः ॥ ३६० ॥
॥ भीष्म उवाच ॥ अथ काले बहुतिथे पूर्णे प्राप्तो भुजङ्गमः । दत्ताभ्यनुज्ञः स्वं वेश्म कृतकर्म्मा विवस्वतः ।
तं भार्य्याप्युपचक्राम पादशौचादिभिर्गुणैः । उपपन्नाञ्च तां साध्वीं पन्नगः पर्य्यपृच्छत ।
अथ त्वमसि कल्याणि देवतातिथिपूजने । पूर्व्वमुक्तेन विधिना युक्तियुक्तेन तत्समं । १३८५०
न खल्वस्य कृतार्थेन स्त्रीबुद्ध्या मार्द्दवीकृता । मद्वियोगेन सुश्रोणि वियुक्ता धर्म्मसेतुना ।
॥ नागभार्य्योवाच ॥ शिष्याणां गुरुशुश्रूषा विप्राणां वेदधारणं । भृत्यानां स्वामिवचनं राज्ञो लोकानुपालनं ।
सर्व्वभूतपरित्राणं क्षत्रधर्म्म इहोच्यते । वैश्यानां यज्ञसंवृत्तिरातिथेयसमन्विता ।
विप्रक्षत्रियवैश्यानां शुश्रूषा शूद्रकर्म्मकृत् । गृहस्थधर्म्मो नागेन्द्र सर्व्वभूतहितैषिता ।

नियताहारता नित्यं व्रतचर्य्या यथाक्रमं। धर्म्मो हि धर्म्मसम्बन्धादिक्रियाणां विशेषतः। १२८५५

अहं कस्य कुतो वापि कः को मेह भवेदिति। प्रयोजनमतिर्नित्यमेवं मोक्षाश्रमे भवेत्।

पतिव्रतात्वं भार्य्यायाः परमो धर्म्म उच्यते। तवोपदेशान्नागेन्द्र तच्च तत्त्वेन वेद्मि वै।

साहं धर्म्मं विजानन्ती धर्म्मनित्ये त्वयि स्थिते। सत्पथं कथमुत्सृज्य यास्यामि विपथं पथः।

देवतानां महाभाग धर्म्मचर्य्या न हीयते। अतिथीनाञ्च सत्कारे नित्ययुक्ताप्यतन्द्रिता।

सप्ताष्टदिवसांस्त्वद्य विप्रस्येहागतस्य वै। तच्च कार्य्यं न मे ख्याति दर्शनं तव काङ्क्षति। १२८६०

गोमत्यास्त्वेष पुलिने तद्दर्शनसमुत्सुकः। आसीनो वर्त्तयन् ब्रह्म ब्राह्मणः संशितव्रतः।

अहं त्वनेन नागेन्द्र सत्यपूर्व्वं समाहिता। प्रस्थाप्यो मत्सकाशं स सम्प्राप्तो भुजगोत्तमः।

एतच्छ्रुत्वा महाप्राज्ञ तत्र गन्तुं त्वमर्हसि। दातुमर्हसि वा तस्य दर्शनं दर्शनश्रवः।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि उञ्छवृत्त्युपाख्याने एकषष्ट्यधिकत्रिशततोऽध्यायः॥ ३६१ ॥

॥ नाग उवाच ॥ अथ ब्राह्मणरूपेण कं तं समनुपश्यसि। मानुषं केवलं विप्रं देवं वाथ शुचिस्मिते।

को हि मां मानुषः शक्तो द्रष्टुकामो यशस्विनि। सन्दर्शनरुचिर्वाक्यमाज्ञापूर्व्वं वदिष्यति। १२८६५

सुरासुरगणानाञ्च देवर्षीणाञ्च भाविनि। ननु नागा महावीर्य्याः सौरभेयास्तरस्विनः।

वन्दनीयाश्च वरदा वयमप्यनुयायिनः। मनुष्याणां विशेषेण नावेक्ष्या इति मे मतिः।

॥ नागभार्य्योवाच ॥ आर्ज्जवेन विजानामि नासौ देवोऽनिलाशन। एवं त्वस्मिन् विजानामि भक्तिमानतिरो-षणः।

सहि कार्य्यान्तराकाङ्क्षी जलेप्सुः स्तोककौ यथा। वर्षं वर्षप्रियः पक्षी दर्शनन्तव काङ्क्षति।

हित्वा त्वद्दर्शनं किञ्चिद्विघ्नं न प्रतिपालयेत्। तुल्योऽप्यभिजने जातो न कश्चित् पर्य्युपासते। १२८७०

तद्रोषं सहजं त्यक्त्वा त्वमेनं द्रष्टुमर्हसि। आशाच्छेदेन तस्याद्य नात्मानं दग्धुमर्हसि।

आशया ह्यभिपन्नानामकृत्वाश्रुप्रमार्ज्जनं। राजा वा राजपुत्रो वा भ्रूणहत्यैव युज्यते।

मौने ज्ञानफलावाप्तिर्दानेन च यशो महत्। वाग्मित्वं सत्यवाक्येन परत्र च महीयते।

भूप्रदानेन च गतिं लभत्याश्रमसम्मितां। न्याय्यस्यार्थस्य सम्प्राप्तिं कृत्वा फलमुपाश्नुते।

अभिप्रेतामसंक्लिष्टां कृत्वा चात्महितां क्रियां। न याति निरयं कश्चिदिति धर्म्मविदो विदुः। १२८७५

॥ नाग उवाच ॥ अभिमानेन मानो मे जातिदोषेण वै महान्। रोषः सङ्कल्पजः साध्वि दग्धो वागग्निना त्वया।

न च रोषादहं साध्वि पश्येयमधिकं तमः। तस्य वक्तव्यतां यान्ति विशेषेण भुजङ्गमाः।

रोषस्य हि वशं गत्वा दशग्रीवः प्रतापवान्। तथा शक्रप्रतिस्पर्द्धी हतो रामेण संयुगे।

अन्तःपुरगतं वत्सं श्रुत्वा रामेण निर्हृतं। धर्षणारोषसंविग्नाः कार्त्तवीर्य्यसुता हताः।

जामदग्न्येन रामेण सहस्रनयनोपमः। संयुगे निहतो रोषात् कार्त्तवीर्य्यो महाबलः। १२८८०

तदेष तपसां शत्रुः श्रेयसां विनिपातकः। निगृहीतो मया रोषः श्रुत्वैवं वचनं तव।

आत्मानञ्च विशेषेण प्रशंसाम्यनपायिनि। यस्य मे त्वं विशालाक्षि भार्य्या गुणसमन्विता।

एष तत्रैव गच्छामि यत्र तिष्ठत्यसौ द्विजः । सर्व्वथा श्रीमतवान् वाक्यं स कृतार्थः प्रयास्यति ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वण्युञ्छवृत्त्युपाख्याने द्विषष्ट्यधिकत्रिशततमोऽध्यायः ॥३६२ ॥
॥ भीष्म उवाच ॥ स पन्नगपतिस्तत्र प्रययौ ब्राह्मणं प्रति । तमेव मनसा ध्यायन् कार्य्यवत्तां विचारयन् ।
तमतिक्रम्य नागेन्द्रो मतिमान् स नरेश्वरः । प्रोवाच मधुरं वाक्यं प्रकृत्या धर्म्मवत्सलः । १३८८५
भो भोः क्षाम्याभिभाषे त्वां न रोषं कर्त्तुमर्हसि । इह त्वमभिसम्प्राप्तः कस्यार्थे किम्प्रयोजनं ।
आभिमुख्यादतिक्रम्य स्नेहात् पृच्छामि ते द्विज । विविक्ते गोमतीतीरे कं वा त्वं पर्य्युपाससे ।
॥ ब्राह्मण उवाच ॥ धर्म्मारण्यं हि मां विद्धि नागं द्रष्टुमिहागतं । पद्मनाभं द्विजश्रेष्ठं तत्र मे कार्य्यमाहितं ।
तस्य चाहमसान्निध्यं श्रुतवानस्मि तं गतं । स्वजनं तम्प्रतीक्षामि पर्ज्जन्यमिव कर्षकः ।
तस्य चाक्लेशकरणं स्वस्तिकारसमाहितं । आवर्त्तयामि तद्ब्रह्म योगयुक्तो निरामयः । १३८९०
॥ नाग उवाच ॥ अहो कल्याणवृत्तस्त्वं साधुः सज्जनवत्सलः । अवाच्यस्त्वं महाभाग परं स्नेहेन पश्यसि ।
अहं स नागो विप्रर्षे यथा मां विन्दते भवान् । आज्ञापय यथा स्वैरं किं करोमि प्रियन्तव ।
भवन्तं स्वजनादस्मि सम्प्राप्तं श्रुतवानहं । अतस्त्वां स्वयमेवाहं द्रष्टुमभ्यागतो द्विज ।
सम्प्राप्तश्च भवानद्य कृतार्थः प्रतियास्यति । विस्रब्धो मां द्विजश्रेष्ठ विषये योक्तुमर्हसि ।
वयं हि भवता सर्व्वे गुणक्रीता विशेषतः । यस्त्वमात्महितं त्यक्त्वा मामेवेहानुरुध्यसे । १३८९५
॥ ब्राह्मण उवाच ॥ आगतोऽहं महाभाग तव दर्शनलालसः । कञ्चिदर्थमनर्थज्ञः प्रष्टुकामो भुजङ्गम ।
अहमात्मानमात्मस्थो मार्गमाणोऽऽत्मनो गतिं । वासार्थिनं महाप्राज्ञ चलचित्तमुपास्मि ह ।
प्रकाशितस्त्वं स्वगुणैर्यशोगर्भगभस्तिभिः । शशाङ्ककरसंस्पर्शैर्हृद्यैरात्मप्रकाशितैः ।
तस्य मे प्रश्नमुत्पन्नं छिन्धि त्वमनिलाशन । पश्चात् कार्य्यं वदिष्यामि श्रोतुमर्हति तद्भवान् ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वण्युञ्छवृत्त्युपाख्याने त्रिषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६३ ॥
॥ ब्राह्मण उवाच ॥ विवस्वतो गच्छति पर्य्ययेण वोढुं भवांस्तं रथमेकचक्रं । आश्चर्य्यभूतं यदि तत्र किञ्चिद्दृष्टं त्वया शंसितु-
मर्हसि त्वं । १३९००
॥ नाग उवाच ॥ आश्चर्य्याणामनेकानां प्रतिष्ठा भगवान् रविः । यतो भूताः प्रवर्त्तन्ते सर्व्वे त्रैलोक्यसम्मताः ।
यस्य रश्मिसहस्रेषु शाखास्विव विहङ्गमाः । वसन्त्याश्रित्य मुनयः संसिद्धा दैवतैः सह ।
यतो वायुर्व्विनिःसृत्य सूर्य्यरश्म्याश्रितो महान् । विजृम्भत्यम्बरे तत्र किमाश्चर्य्यमतः परं ।
विभज्य तन्तु विप्रर्षे प्रजानां हितकाम्यया । तोयं सृजति वर्षासु किमाश्चर्य्यमतः परं ।
यस्य मण्डलमध्यस्थो महात्मा परमत्विषा । दीप्तः समीक्षते लोकान् किमाश्चर्य्यमतः परं । १३९०५
शुक्रो नामासितः पादो यस्य वारिधरोऽम्बरे । तोयं सृजति वर्षासु किमाश्चर्य्यमतः परं ।
योऽष्टमासांस्तु शुचिना किरणेनोक्षितं पयः । प्रत्यादत्ते पुनः काले किमाश्चर्य्यमतः परं ।
यस्य तेजोविशेषेषु स्वयमात्मा प्रतिष्ठितः । यतो वीजं मही चेयं धार्य्यते सचराचरा ।
यत्र देवो महाबाहुः शाश्वतः पुरुषोत्तमः । अनादिनिधनो विप्र किमाश्चर्य्यमतः परं ।

आश्चर्य्याणामिवाश्चर्य्यं इदमेकन्तु मे शृणु। विमले यन्मया दृष्टमम्बरे सूर्य्यसंश्रयात् । १२९१०

पुरा मध्याह्नसमये लोकांस्तपति भास्करे । प्रत्यादित्यप्रतीकाशः सर्व्वतः समदृश्यत ।

स लोकांस्तेजसा सर्व्वान् स्वभासा निर्व्विभासयन् । आदित्याभिमुखोऽभ्येति गगनं पाटयन्निव ।

हुताहुतिरिव ज्योतिर्व्याप्य तेजोमरीचिभिः । अनिर्द्देश्येन रूपेण द्वितीय इव भास्करः ।

तस्याभिगमनप्राप्तौ हस्तौ दत्तौ विवस्वता । तेनापि दक्षिणो हस्तो दत्तः प्रत्यर्च्चनार्थिना ।

ततो भित्त्वैव गगनं प्रविष्टो रश्मिमण्डलं । एकीभूतञ्च तत्तेजः क्षणेनादित्यतां गतं । १२९१५

तत्र नः संशयो जातस्तयोस्तेजःसमागमे । अनयोः को भवेत् सूर्य्यो रथस्थो योऽयमागतः ।

ते वयं जातसन्देहाः पर्य्यपृच्छामहे रविं । क एष दिवमाक्रम्य गतः सूर्य्य इवापरः ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि उञ्छवृत्त्युपाख्याने चतुःषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४ ॥

॥ सूर्य्य उवाच ॥ नैष देवोऽनिलसखो नासुरो न च पन्नगः । उञ्छवृत्तिव्रते सिद्धो मुनिरेष दिवङ्गतः ।

एष मूलफलाहारः शीर्णपर्णाशनस्तथा । अब्भक्षो वायुभक्षश्च आसीद्विप्रः समाहितः ।

भवश्चानेन विप्रेण संहिताभिरभिष्टुतः । स्वर्गद्वारे कृतोद्योगो येनासौ त्रिदिवङ्गतः । १२९२०

असङ्गतिरनाकाङ्क्षी नित्यमुञ्छशिलाशनः । सर्व्वभूतहिते युक्त एष विप्रो भुजङ्गमाः ।

न हि देवा न गन्धर्व्वा नासुरा न च पन्नगाः । प्रभवन्तीह भूतानां प्राप्तानामुत्तमां गतिं ।

एतदेवंविधं दृष्टमाश्चर्य्यं तत्र मे द्विज । संसिद्धो मानुषः कामं योऽसौ सिद्धिगतिं गतः ।

सूर्य्येण सहितो ब्रह्मन् पृथिवीं परिवर्त्तते ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि उञ्छवृत्त्युपाख्याने पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥

॥ ब्राह्मण उवाच ॥ आश्चर्य्यं नात्र सन्देहः सुप्रीतोऽस्मि भुजङ्गम । अन्वर्थोपगतैर्व्वाक्यैः पन्थानश्चास्मि दर्शितः । १२९२५

स्वस्ति तेऽस्तु गमिष्यामि साधो भुजगसत्तम । स्मरणीयोऽस्मि भवता सम्प्रेषणनियोजनैः ।

॥ नाग उवाच ॥ अनुक्त्वा हृद्गतं कार्य्यं क्वेदानीं प्रस्थितो भवान् । उच्यतां द्विज यत् कार्य्यं यदर्थं त्वमिहागतः ।

उक्तानुक्ते कृते कार्य्ये मामामन्त्र्य द्विजर्षभ । मया प्रत्यभ्यनुज्ञातस्ततो यास्यसि सुव्रत ।

न हि मां केवलं दृष्ट्वा त्यक्त्वा प्रणयवानिह । गन्तुमर्हसि विप्रर्षे वृक्षमूलगतो यथा ।

त्वयि चाहं द्विजश्रेष्ठ भवान्मयि न संशयः । लोकोऽयं भवतः सर्व्वः का चिन्ता मयि तेऽनघ । १२९३०

॥ ब्राह्मण उवाच ॥ एवमेतन्महाप्राज्ञ विदितात्मन् भुजङ्गम । नातिरिक्तास्त्वया देवाः सर्व्वथैव यथायथं ।

य एव त्वं स एवाहं योऽहं स तु भवानपि । अहं भवांश्च भूतानि सर्व्वे यत्र गताः सदा ।

आसीत्तु मे भोगिपते संशयः पुण्यसञ्चये । सोऽहमुञ्छव्रतं साधो चरिष्याम्यर्थसाधनं ।

एष मे निश्चयः साधो कृतं कारणमुत्तमं । आमन्त्रयामि भद्रन्ते कृतार्थोऽस्मि भुजङ्गम ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि उञ्छवृत्त्युपाख्याने षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥

॥ भीष्म उवाच ॥ स चामन्त्र्योरगश्रेष्ठं ब्राह्मणः कृतनिश्चयः । दीक्षाकाङ्क्षी तदा राजंश्च्यवनं भार्गवं श्रितः । १२९३५

स तेन कृतसंस्कारो धर्म्ममेवाभितस्थिवान् । तथैव च कथामेतां राजन् कथितवांस्तदा ।

भार्गवेणापि राजेन्द्र जनकस्य निवेशने । कथैषा कथिता पुण्या नारदाय महात्मने ।
नारदेनापि राजेन्द्र देवेन्द्रस्य निवेशने । कथिता भरतश्रेष्ठ पृष्टेनाक्लिष्टकर्म्मणा ।
देवराजेन च पुरा कथितैषा कथा शुभा । समस्तेभ्यः प्रशस्तेभ्यो विप्रेभ्यो वसुधाधिप ।
यदा च मम रामेण युद्धमासीत् सुदारुणं । वसुभिश्च तदा राजन् कथेयं कथिता मम । १३९१०
पृच्छमानाय तत्त्वेन मया चैवोत्तमा तव । कथेयं कथिता पुण्या धर्म्या धर्म्मभृताम्बर ।
तदयं परमो धर्म्मो यन्मां पृच्छसि भारत । आसीद्वीरो ह्यनाकाङ्क्षी धर्म्मार्थकरणे नृप ।
स च किल कृतनिश्चयो द्विजो भुजगपतिप्रतिदेशितात्मकृत्यः । यमनियमपरो वनान्तरं परिगणितोञ्छशिलाशनः प्रविष्टः ।
इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वण्युञ्छवृत्त्युपाख्याने सप्तषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६७ ॥
समाप्तञ्चेदं शान्तिपर्व्व ॥
यद्यत्र व्यासोक्ताध्यायश्लोकसंख्यान्यूनातिरिक्तं दृष्टं भवेत्तल्लिपिकरप्रमादेन बोध्यमिति ।